अत्र द्रव्याणां प्रतिपर्य्यायशब्दं सर्व्वभाषाणामसन्निवेशनस्य औचित्येऽपि स्थानाभावात् पर्य्यायशब्दानामेकतम एव शब्दे भिन्नभिन्नभाषाणामद्रव्यगुणादीनि विनिवेशितानि न तु सर्व्वत्र। अनेकार्थशब्दानाञ्च भिन्नभिन्नार्थे प्रयोगस्थलानि यथालाभं सप्रमाणोदाहरणं प्रदर्शितानि। प्रमाणीभूतभूरिभूरिप्रयोज्यशब्दानां पुनःपुनरुल्लेखगौरववारणाय सूचीविधानपुरःसरं तत्सूचकवर्णसंक्षेपश्च ग्रन्थादौ विनिवेशितः।

अधुना ये चास्योपादानभूता ग्रन्था वैद्यकसंहितानिघण्टुसंग्रहकोषादयः प्रमाणत्वेन परिगृहीतास्ते यथावकाशं संक्षिप्तसमालोचनेन प्रदर्श्यन्ते। तेषाञ्च वैद्यकग्रन्थानां समालोचनसमारम्भात् पूर्व्वं स्तोकं स्थूलवृत्तान्तो वैद्यकसङ्ग्रहाणामुच्यते। एतद्देशीया वैद्यकसङ्ग्रहग्रन्थाः सिद्धयोग-चक्रदत्त-सङ्ग्रहादयो मुसलमानराजत्वात् पूर्व्वतनहिन्दुराजत्वकाले विरचिता आसन्। यतः तेषु ग्रन्थेषु सर्पादिविषाणां पारदगन्धकलौहानां (कादाचित्कव्यवहारमृते) स्वर्णरजतादीनां विदेशोत्पन्नान्यद्रव्याणाञ्च व्यवहारो नैव दृश्यते। अत इदमेव स्फुटं प्रतिभाति यत् तदा वैदेशिका राजानो भारते न समागच्छन्निति। परं वैद्यकरसग्रन्थाश्च रसकौमुदीरसेन्द्रचिन्तामणिभावप्रकाशादयो मुसलमानराजत्वसमये लब्धजन्मानो मुसलमानचिकित्सकमण्डलीषु रसविषादिचिकित्साभिः परां प्रतिष्ठामलभन्त। तेषु च रसग्रन्थेषु तदाऽऽनीतानि विदेशजाताहिफेनसोहारातीपचिनीप्रभृतिद्रव्याणि तद्गुणपरीक्षया औषधत्वे परिगृहीतानि। तेषु च रोगाणां कषायपाचनौषधादिव्यवस्थापुरःसरं चिकित्साप्रणाली सम्प्रदर्शिता। औषधतैलादिनिर्म्माणञ्च यथा क्रियते तस्य सरला प्रणाली सुखबोधाय दर्शिता। वैद्यकसङ्ग्रहेषु रसग्रन्थेषु च रोगविशेषेण निर्व्वाचितानि प्रायेण बहूनि औषधतैलादीनि अन्तरान्तरा ईषद्वैशिष्ट्यं विना सर्व्वत्र एकनामानि साधारणानि च दृश्यन्ते। अतो रसग्रन्थेषु रसघटितौषधानि ऋते सर्व्वाण्येव तैलघृतौषधानि चरकादिभ्यश्चक्रदत्तादिसङ्ग्रहेभ्यश्च परिगृहीतानि स्वविरचितानि च वर्त्तन्ते। सिद्धयोगादिषु तु औषधादीनि कानिचित् संहितासङ्कलितानि, शिष्टानि च स्वरचितानि।

चरकसंहिता हि कायचिकित्साप्रधाना आत्रेयसम्प्रदायस्य आदिमा संहितासु प्रथमा च। अस्यां भगवान् कृष्णात्रेयो वक्ता, अग्निवेशः श्रोता, चरकमुनिः प्रतिसंस्कर्त्ता च। तस्मादियं गुरुसूत्र-शिष्यसूत्र-प्रतिसंस्कर्तृसूत्र-



मयीत्यर्थतोऽवगन्तव्यम्। पुरा किल कृतयुगान्ते असुरनिपीड़िता आर्य्यास्तत्रैव पञ्चालदेशे पञ्चनदप्रदेशे समापतिता वारिवायुदेशनगनदतरुलताद्यशेषविधप्रकृतिसौन्दर्य्यस्वभावगुणविमोहिताः कृतनिवसतयः क्रमेण समाजबन्धनपुरःसरं तदुपयोगिजीवनोपायभूत-कृषिरीति-नीति-स्वास्थ्यविधानादिषु सन्ततसमालोचनया क्षत्रियादिसम्प्रदायविभक्ताः स्वस्वकार्य्येषु निरता आसन् (ऐतरेयब्राह्मणः)। तेषु चिकित्सासम्प्रदायाध्यक्षेण भरद्वाजमहर्षिणा रोगाक्रान्तायां मेदिन्यां लोकहिताय यजुर्व्वेदाङ्गभूत आयुर्वेदः स्वर्लोकादानीतः स्वशिष्याय कृष्णात्रेयायोपदिष्टः। सोऽपि तमग्निवेशादिशिष्यषट्कायोपदिष्टवान्। अथ ते शिष्याः पृथक् षट् तन्त्राणि चक्रुः। तेषु प्रधानशिष्याग्निवेशकृततन्त्रमुत्कृष्टमुपादेयञ्चाजनि।

अथ कदाचिच्चरकमुनिः पञ्चनददेशे कायचिकित्साप्रधानं तत् सङ्क्षिप्ततन्त्रं प्रतिसंस्करणमुखेन सविस्तरं वर्णयन् स्वनाम्नाभिनवां संहितां प्रचारितवानिति चरकसंहितायामेव लभ्यते। "अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते।" ग्रन्थाद्यष्टाङ्गमयी सा चेयमभिनवा संहिता यथास्थानमष्टभिर्भागैर्विभक्ता। अस्यां च संहितायां खनिजोद्भिज्जप्राणिवाचीनि द्रव्याणि भागत्रयेण विभज्य पुनः प्राणिनो जरायुजादिभागचतुष्टयेन विभक्ताः, उद्भिज्जानि च वनस्पतिवृक्षवीरुधौषधिचतुष्टयेन विभक्तानि। तानि च पुनरुद्भिज्जद्रव्याणि जीवनीयादिपञ्चाशद्गणैः संविभक्तानि। अस्या भाषा न प्राञ्जला, प्राचीनत्वात् विषयरचनाप्रणाली च न मार्ज्जिता परमतीव विक्षिप्ता। एभिः कारणैः गोमांसस्य च व्यवस्थया संहितायाः अस्याः समाजबन्धनस्य बाल्यावस्थायामजातस्मृतिशासनायाम् उत्पत्तिरनुमीयते। अनेन वैदिकब्राह्मणप्रामाण्येन च चरकस्यापि तद्देशवासित्वमसन्दिग्धम्। अस्याः सिद्धिकल्पस्थानद्वयं सप्तदशौषधाध्यायैः संयोज्य सम्पूर्णमकरोत्पञ्चनदपुरवास्तव्यो दृढ़बल इति अस्या एव संहितायाः सिद्धिस्थानपरिसमाप्तावुक्तम्। यथा—

"अखण्डार्थं दृढ़बलो जातः पञ्चनदे पुरे।
कृत्वा बहुभ्यस्तन्त्रेभ्यो विशेषाच्च बलोच्चयम्।
सप्तदशौषधाध्यायैः सिद्धिकल्पैरपूरयत्॥"

यत्तु उदयचन्द्रेणोक्तं वाभटे अग्निवेशभेलहारीतसुश्रुतकवलादीनामिव उल्लेखो दृश्यते न तु चरकस्य, अतः चरकस्य अधस्तनत्वमवश्यं स्वीकार्य्यमिति, तत्तु

रसजारणादिकं सविस्तरं वर्णितम्। रसधारिजातोऽपि रामचन्द्ररचितः। अन्योऽपि रसेन्द्रचिन्तामणिः ढुण्ढुकनाथविरचितो वर्त्तते। परं नास्माभिर्दृष्टः।

अमरकोषोऽमरसिंहविरचितः। अमरसिंहोऽमरदेवो वा विक्रमादित्यस्य समये प्रादुर्बभूवेति निश्चय एव। परं विक्रमादित्यानां त्रयाणां कस्य समये जात इत्यत्र नानामतं दृश्यते। उइल्फोर्डसाहेवमते नव विक्रमादित्याः। सर्व्वेऽपि ते शालिवाहनादिभिर्युद्धमकुर्व्वन्। ( Dr. K. M. B. विद्याकल्पद्रुमे) परमाधुनिकैतिहासिकरहस्यानुसन्धित्सुभिः कारणप्रदर्शनपुरःसरं कदाचिदसौ (खृः पूः ५६ ) प्रथमविक्रमादित्यनरपतेः सभायां नवरत्नेषु* एकतमत्वेन, कदाचित् भोजप्रबन्धं समालोच्य ( A.D. ६६५—७०८ Dr. Mitra and A.D. ५७८ Prof. Wilson ) धारानगराधिपतेः द्वितीयस्य वृद्धभोजस्य सभायां तथाविधरत्नेषु अन्यतमत्वेन चोपस्थाप्यते। परमेषु कल्पत्रयेषु कः कल्पो मुख्य इति विनिश्चेतुं न शक्यते। अस्माकन्तु संवत्प्रवर्त्तयिता विक्रमादित्यः A D. ५६ अब्दे एवासीदिति विश्वासः। अमरसिंहो लोके बौद्धमतावलम्बीति सुप्रसिद्धः। तदीयः कोषः प्राचीनरीत्या छन्दोपनिबद्धः सर्व्वकोषश्रेष्ठः परमोपादेयतया जगति सर्व्वत्रैव समादृतः। स कोषमिमं स्वर्गादिकतिपयैर्वर्गैर्विभज्य वर्गमध्ये चान्तरान्तरा वर्णानुक्रमरीत्या विरचितवान्।

अमरकोषस्य प्रचलितटीकाकृतां मध्ये—

मथुरेशः प्राचीनः शकस्य नरपतेः षष्ठशताब्द्यां प्रादुरासीत्। असौ कस्यचित् मुसलमानवीरस्य साहाय्येन सदैव शास्त्रानुशीलनमकरोत् इति उइल्सनसाहेवमतम्। शब्दरत्नावलीकारश्च स एव।

क्षीरस्वामी काश्मीरपतिललितादित्यस्य राजत्वसमये प्रादुरासीत्। जयापीडो नाम कश्चिन्नृपतिः अस्मादेव शब्दविद्यामधिगत्य अन्ते ललितादित्यपण्डित इति प्रसिद्धिमगात्। (खृः ७०५—७३१) रा.तर.४त.।

रायमुकुटः (१४३० खृः अब्दे) प्रादुरासीत्। रा.तर.।

गौराङ्गमल्लिकात्मजो भरतमल्लिको नातिप्राचीनो ग्रन्थकारष्टीकाकारश्च।

---

* धन्वन्तरिक्षपणकामरसिंहशङ्कुवेतालभट्टघटकर्परकालिदासाः।
ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य॥

काव्यसंग्रहः।



असौ वर्द्धमानप्रदेशस्य पातिलपल्लीग्रामे सुकुलीनवैद्यवंशे न्यूनाधिकसार्द्धशतवर्षपूर्व्वं जातः। कविरयं सुप्रसिद्धः शाब्दिकः, कारकोल्लासस्य रचयिता, रघुवंशभट्टिकाव्यकुमारसम्भवादीनां टीकाकारश्च। तत्कृतयामरकोषस्य टीकयैव तस्य महती कीर्त्तिर्भारते चिरं स्थास्यति।

धन्वन्तरिनिघण्टुरपि अमरसिंहविरचितामरकोषसमसामयिक एवेति प्रमाणतो लभ्यते। असौ तु षट्शतवर्षपूर्व्वतनः इति मधुसूदनगुप्तस्य मतमुदयचन्द्रेण स्वग्रन्थे समुद्धृतम्। तत्प्रणीतो निघण्टुः प्रसिद्धः प्रामाणिकश्च, काशीप्रदेशे च समधिकं समालोचितो भवति।

हेमचन्द्राभिधानमभिधानचिन्तामणिनाम्ना ख्यातं विशिष्टरीत्या भागद्वयेन विभज्य हेमचन्द्राचार्य्येण विरचितम्। तयोः प्रथमः स्वर्गादिभिः षड्भिर्भागैर्विभक्तः, शब्दानां श्रेणीविभागश्च अन्यक्रमेण कृतः। द्वितीयश्च नानार्थघटितः। परं हेमचन्द्रोऽवतरणिकायां स्वाभिधानस्य केवलं प्रथमभागस्य शब्दरचनाप्रणालीमुपवर्ण्य द्वितीयस्य न किमप्युक्तवान्। तथा प्रथमस्यैव द्वितीयस्य टीकापि न दृश्यते। अतो द्वितीयस्य हेमचन्द्रकृतित्वमाशङ्कमानैर्विद्वद्भिर्महेश्वरकृतस्य नानार्थवर्गस्य सन्निवेशनं तर्क्यते।

हेमचन्द्रः हेमाचार्य्ययतिर्वा प्राचीनजैनग्रन्थलेखको जैनधर्म्मावलम्बी चासीत्। असौ संवत्त्रयोदशशताब्द्यां ( खृः द्वादशशताब्द्यां ) प्राटलिपुत्रनगरे स्वजीवनस्यादिमं भागं नानाशास्त्ररचनया यापयित्वा अन्तिमे वयसि गुजराटदेशं गत्वा तत्र जैनधर्म्मसमालोचनया परां प्रतिष्ठामलभत, तत्रत्यञ्च सम्प्रकृतिं नरपतिं जैनधर्म्मं ग्राहयामास। श्रूयते च पार्श्वनाथमतावलम्बी हेमाचार्य्ययतिः अस्मिन्नेव समये रजःपूतनरपतिं गुणमरपालमपि जैनधर्म्मं दीक्षितवान्। एवमपि प्रसिद्धिरस्ति यथासौ हलायुधगुरुः लक्ष्मणसेनस्य सभायामासीत्। (संवत् १२३०) इति उइलसनसाहेबस्य उट्टङ्कनम्।

शब्दमाला—च रामेश्वरशर्म्मकृतातिसंक्षिप्ताभिधानसंग्रहः अमरकोषस्य परिशिष्टभूता वङ्गभाषायां व्याख्याता च। इयं मेदिनीकरस्य पूर्व्वतन इति उइलसन्साहेवमतम्।

नाममाला—धनञ्जयकृता। तत्र श्रेणीविभागस्यासद्भावात् प्राचीनैवेयमित्यनुमीयते। धनञ्जयश्च दशमशताब्द्यां वर्त्तमान आसीत् इति बहुशामतम्।

भूरिप्रयोगो—दामोदरदत्तपुत्रेण सुप्रसिद्धसुपद्मव्याकरणकारेण पद्मनाभ

कोषोऽयमन्त्यादिक्रमेण सुलभगम्यसुप्रशस्तसुष्ठुरीत्या विरचितः। कर इत्युपाधिना वैद्यजातीयोऽयं वङ्गदेशवासी चेत्यनुमीयते। उइल्सनसाहबमतम्।

रत्नावली—नाम द्रव्याभिधानं वङ्गदेशवासिना रसकौमुदीकारेण माधवेन विरचितम्। तस्यां द्रव्यनामानि वङ्गभाषया कथितानि।

राजवल्लभीयद्रव्यगुणः—राजवल्लभकृतः परं श्रीनारायणदासकविराजेन सविस्तरं व्याख्याय प्रतिसंस्कृतश्च। राजवल्लभस्ववैद्यपरम्परागतस्मृत्या अष्टादशशताब्द्यां (१७६०) वर्त्तमान आसीत्। ग्रन्थोऽयं परिच्छेदषट्कैः अतीवसुष्ठुश्रेण्या विभक्तः प्रयोजनोपयोगी च। अयं वङ्गदेशे प्रायेणायुर्वेदपाठार्थिभिः पठ्यते।

रत्नमाला—नाम द्रव्याभिधानं केनापि वङ्गीयग्रन्थकाररचितमिति प्रतीयते। तस्यामुद्भिज्जखनिजद्रव्याणि सपर्य्यायाणि वङ्गभाषया व्याख्यातानि। उइल्सनसाहबस्तु बौद्धग्रन्थकाररचितमित्याह।

उपसंहारसमये मदनुकूल-महाराजाधिराजश्रीश्रीश्रीश्रीश्रीविजयनगराधिपतिमहोदयसमीपे विज्ञप्तिरियम्—

महाराजाधिराज!

सामग्रीषु सुसज्जितास्वपि यथाभीष्टानुकूलासु च
श्रीविष्णोरिव लोकरञ्जनरतेः राजाधिराजस्य ते।
आशास्यो यदि नाघटिष्यत कृपासंयोग एव प्रभोः
सिन्धोरन्तरलेष्यतैव मथनस्याशालता सा चिरम्॥

आशंसमानो देवस्य राजन्वत्तामविच्युताम्।
आयुष्मत्ताञ्च विनयनिवेदनपुरःसरम्।
याचतेऽयं जनो नित्यं कृतज्ञत्वमनुस्मरन्।
देवपादाब्जमूलेषु देहस्यैव विसर्ज्जनम्॥

साधुहृदय-डाक्तार-श्रीमहेन्द्रलालसरकारमहोदयसमीपेऽपि चिरकृतज्ञतापाशेन बद्धोऽस्मि। अत्र चाभिधाने प्रेसिडेन्सिकलेजे संस्कृताध्यापकेन श्रीयुक्त नीलमणिन्यायालङ्कारेण मच्छुभाकाङ्क्षिणा महोपकारः साधितः। तथा तत्रैव सहकारिसंस्कृताध्यापकेन श्रीयुक्तहरिश्चन्द्रकविरत्नेन एतस्य मुद्रणे संशोधने च महान् परिश्रमः कृतः। अतस्तयोरुभयोः सकाशे कृतज्ञोऽस्मि इत्यलं पल्लवितेन।

सङ्कलयितुः
श्रीउमेशचन्द्रगुप्तस्य।

# द्वितीयसंस्करणस्य विज्ञापनम्।

इह खलु जगति "कीर्त्तिर्यस्य स जीवतीति" यदुच्यते तत् सर्व्वथा सत्यमेवानुभावयति अस्मान् महानुभवस्य लोकोत्तरविहारिणो विद्यारत्नोपनामकस्योमेशचन्द्रस्य क्लेशबहुला कृतिः वैद्यकशब्दसिन्धुनामकमभिधानम्। अतीतेष्वपि बहुतिथेषु दिवसेषु एतदेवास्माननिशमनुस्मारयति आयुर्व्वेदे कृतविद्यस्य विद्वद्वरस्य तस्य विद्यारत्नस्य विद्यावत्त्वं गुणगौरवम् पाण्डित्यं ज्ञानगाम्भीर्य्यञ्च। न खल्ववगतमनेन महात्मना यदेकेन एव अवदानेन जगतां कीदृङ्महान् उपकारः कृतः इति मन्ये। पुरा तु अभिधानेन विना आयुर्व्वेदस्य अध्येतॄणामध्यापकानामनुरागिणाञ्च आयुःशास्त्रालोचना नितरामसुखकरी आसीत्। इदानीमुमेशचन्द्रेणायुर्व्वेदमनुशीलयतां दुर्गमं वर्त्म प्रसन्नीकृतम्।

ग्रन्थस्यास्य रचनाकाले श्रीमता उमेशचन्द्रेण कलिकाता-संस्कृतविद्यामन्दिरस्य पुस्तकालयस्याध्यक्षपदमलङ्कृतमासीत्। तत्रस्थ एवायमायुर्व्वेदाध्ययनकाले आबाल्यमनुभूतस्याभावस्य पूरणार्थमभिधानमेकं रचयितुकामः पुस्तकालयस्थान् बहून् आयुर्व्वेदग्रन्थानवलोक्य बहुपरिश्रमेण पाण्डुलिपिं सङ्कलय्य विजयनगराधिपतेरर्थानुकूल्येन मुद्रितवान्। अस्मद्देशीयायुर्व्वेदव्यवसायिनां भाग्यवशाद् वा नियतेरवश्यम्भावित्वात् वा लोकान्तरमुपागते उमेशचन्द्रे अभिधानस्यास्य मुद्रनाशा व्यलुपत्। इदानीं पूर्व्वमुद्रितपुस्तकानामभावात् सर्व्वेषामेवायुर्व्वेदाध्यायिनां महान्तमसुयोगं मन्यमानैरपि च जीवति वङ्गदेशीय-चिकित्सकसम्प्रदाये वङ्गीयजनकीर्त्तिग्रन्थरत्नमिदं बहुमूल्यं विलुप्तं चेत् तर्हि चिकित्सकसम्प्रदायानां वङ्गदेशवासिनाञ्च तत् कलङ्करमिति चिन्तयद्भिरस्माभिरेव तत्पुत्राणां सकाशात् ग्रन्थस्यास्य वैद्यकशब्दसिन्धुनाम्नः स्वत्वं मुद्रनार्थं क्रीतम्।

ततश्चैनं संशोध्य सर्व्वाङ्गसम्पूर्णं कृत्वा पुनर्मुद्रणार्थं यत्ने कृतेऽपि बहुसम्वत्सरा व्यतीताः। कार्य्यबहुलतया अनवकाशत्वात् अभिधानसंस्करणस्य बहुग्रन्थसाध्यत्वात् शरीरस्यापि व्याधिमन्दिरत्वात् सत्वरं प्रकाशयितुं नाशक्यत।

श्रीकण्ठदत्तेन च विरचितः। तत्र द्वयोरेव नामदर्शनात् द्वयोरेव टीकाकर्त्तृत्वमनुमीयते। श्रीकण्ठः वृन्दकृतसिद्धयोगस्यापि टीकाकारः। कुसुमावली नाम्ना च सा प्रसिद्धा।

अर्कप्रकाशो—नाम चिकित्सासंग्रहो रावणेन प्रणीतः। रावणेनात्राभिनवा रोगाणां चिकित्साप्रणाली केवलेनैवार्केण प्रवर्त्तिता।

उणादिकोषः—सिद्धान्तकौमुदीप्रभृतीनामध्यायविशेषः। यत्र शब्दाः 'उण्' इत्यादिप्रत्यययोगेन सिध्यन्ति।

चिकित्साक्रमकल्पवल्ली—काशीनाथद्विवेदिविरचिता ; अयं वैद्यकचिकित्सासंग्रहः पाश्चात्यप्रदेशे प्रचलति।

जयदत्तसूरिर्नातिप्राचीनोऽश्ववैद्यकप्रणेता। जयदत्तः शालिहोत्र-नकुल-भोजराजादिकृताश्वशास्त्रेभ्योऽश्वानां शुभाशुभलक्षणं सरुग्विनिश्चितं चिकित्सितञ्च समाकलय्य स्वग्रन्थं रचितवान्। अस्य प्रादुर्भावसमयनिरूपणमतीव दुरूहमिति न चेष्टा कृता। ग्रन्थोऽयं वाङ्गालादेशस्य आसियाटिकसोसाइटीसभानुमत्या तत्कृतव्ययेन च संक्षिप्तटीकासमेतो मया संस्कृतः।

शार्ङ्गधरसंग्रहः—सुप्रसिद्धशार्ङ्गधरपद्धतिकारेण शार्ङ्गधरेण विरचितः। ग्रन्थोऽयं नातिसङ्क्षिप्तः नातिविस्तरश्च, बहुषु पाश्चात्यप्रदेशेषु प्रचलितः। अयञ्च ग्रन्थकारः विश्वप्रकाशकृन्महेश्वरादधस्तन आसीत्। ( Burnel's catalogue.)

रसेन्द्रसारसंग्रहः—प्रामाणिकरसग्रन्थः गोपालभट्टेन विरचितः। अत्र रसजारणमारणादिपुरःसरं रोगाणामशेषविधरसघटितयोगाः सङ्कलिताः। एतद्ग्रन्थकारः त्रयोदशशताब्द्यां वर्त्तमान आसीत्। (Aufrecht's catalouge.)

डल्वणाचार्य्यो निबन्धसंग्रहाख्यायाः सुश्रुतटीकाया रचयिता। एष श्रीभादालकदेशस्य विश्रुतमथुरानगरीसन्निहिते अङ्कोलानाम्नि वैद्यस्थाने सौरवंशीयद्विजान्वये जातः। असौ गोविन्दपालस्य प्रपौत्रः जयपालस्य पौत्रः नृपालभूपतेः प्रियतमस्य श्रीभरतपालस्य च पुत्र आसीत्। तेन जेज्जटगयदासभास्करश्रीमाधवब्रह्मदेवादीनां टीकापञ्जिकाटिप्पनीः उपजीव्य निबन्धसंग्रहो रचित इति स्वयमेव स्वकृतटीकायामभिहितम्।

परिभाभाप्रदीपः—श्रीकृष्णवल्लभसेनपुत्रश्रीगोविन्ददाससेनविरचितः।

प्रयोगामृतम्—अतिसुविस्तृतो वैद्यकचिकित्साग्रन्थो नृसिंहधन्वन्तरिशिष्य-



वैद्यचिन्तामणिकृतः। अयं ग्रन्थकारः श्रीखण्डसमाजान्तर्गते नौरोलग्रामे शताधिकवर्षपूर्व्वं जातः। अस्मिन् समालोचिते चिकित्सकानां नानायोगादिषु सम्यगधिकारो जायते।

शब्दचन्द्रिका—नाम द्रव्यगुणादिसंग्रहः चक्रपाणिदत्तेन प्रणीतः प्रसिद्धश्च। द्रुयमुद्भिज्जखनिजप्राणिपथ्यापथ्यादीनां कार्य्योपयोगितया समाकलनात् सर्व्वत्र समादरणीया। अत्र द्रव्यनामानि वङ्गभाषया व्याख्यातानि।

भोजराजशेषराजमदनपाला दशमशताब्द्यां वर्त्तमाना आसन् इति प्रमाणतो लभ्यते। एषु आद्यद्वयस्य ग्रन्थावस्माभिर्न दृष्टौ। मदनपालनिघण्टुस्तु सर्व्वत्र प्रसिद्धो विस्तृतः प्रशस्तश्च। निघण्टुरयं मदनपालस्य नरपतेर्विनोदनार्थं केनापि विरचितः। अधुनोत्तरपश्चिमप्रदेशे छात्रैरधिकतरमालोच्यते। अत्र सनामद्रव्यगुणाः सविस्तरं वर्णिताः। द्रव्यनामानि च हिन्दीभाषया कथितानि।

विश्वप्रकाशो—नाम प्राचीनतरकोषो यदा कान्यकुब्जे विद्योत्साहिताया अतीव समादरस्तदा महेश्वरेण खृः द्वादशशताब्द्यां सङ्कलितः (शक १०३३) ( A.D. ११११ ) ( ११५० वडुया )। महेश्वरो गाधिपुरवास्तव्यस्य साहसाङ्कनरपतेः चिकित्साधिकृतस्य श्रीकृष्णस्यान्वये जातः। इति पुरातत्त्वविदुह्ल्मनसाहवमतम्।

अजयपालकृतसंग्रहः—संक्षिप्तः परं बहुप्रमाणभूयिष्ठः। अजयपालो मेदिनीकरादधस्तनो जैनश्चासीत्। उह्ल्सनसाहवमतम्।

धरणिकोषः—कान्यकुब्जदेशीयेन द्विजधरणिदासेन कृतः। स मल्लिनाथादूर्द्ध्वतन आसीत्। उह्ल्सनसाहवमतम्।

त्रिकाण्डशेषः—परमजैनपुरुषोत्तमदेवविरचितः अध्यायत्रयात्मकश्च। ग्रन्थोऽयं अमरादिकोषपरिशिष्टमात्र एवाप्रसिद्धशब्दैः परिपूर्णः।

हारावल्यपि—संक्षिप्ताप्रसिद्धासाधारणशब्दैः ग्रथिता भागद्वयेन विभक्ता च। तयोः प्रथमो भागः पर्य्यायसंग्रहः। द्वितीयश्च नानार्थसंग्रहः (समयः नवमी दशमी वा शताब्दी) इति उह्ल्सनसाहवमतम्।

मेदिनीकोषः—प्राणकरसुतमेदिनीकरप्रणीतः अभिधानरत्नमालेत्यपरनाम्ना लोके विदितः। मेदिनीकरो महेश्वरादधस्तनः चतुर्द्दशशताब्द्या अन्ते महेश्वररायमुकुटयोर्मध्यवर्त्तिसमये ( A.D. IIII—1430 ) प्रादुरासीत्।

दत्तेन विरचितो भागत्रयेन विभक्तश्च। पद्मनाभो मेदिनीकरस्याधस्तनः आसीदिति स्वयमेव स्वग्रन्थे मेदिन्याः उल्लेखात् प्रमाणीकृतम्।

शब्दरत्नावली—मुशखानाभिधेयस्य कस्यचित् मुशलमानवीरस्याश्रयेण अमरटीकाकृन्मथुरेशेनामरकोषस्यैव प्रणाल्या विरचिता। तत्र शब्दानां भिन्न रूपाः पाठाः निर्णीताः।

जटाधरकोषः—चट्टग्रामवासिजटाधरेण विरचितः। जटाधरश्च अमरकोषादर्शेन स्वनाम्ना कोषं प्रणिनाय। अयं नातिप्राचीन इत्यनुमीयते।

अभिधानरत्नमाला—हलायुधप्रणीता। इयं संक्षिप्ता स्वर्गभूनरकवारिमिश्राख्यैः पञ्चभिर्भागैर्विभक्ता। हलायुधो भट्टभास्करशिष्यः केरलदेशीयो ब्राह्मणोऽतिप्राचीनो बौद्धधर्मावलम्बी च खृः द्वादशशताब्द्यां वर्त्तमान आसीत्। तस्य चाभिधाने उद्भिज्जद्रव्यखनिजद्रव्याणां मनोरमा सूचौ वङ्गभाषया व्याख्याता। एवञ्च श्रूयते यथा हलायुधो लक्ष्मणसेनस्य सभापण्डित आसीदिति।

राजनिघण्टुः—अभिधानचूडामण्यपरनामधेयो वैद्यपतिनरहरिपण्डितेन वैद्यकसंहितामरविश्वहलायुध-धन्वन्तरिनिघण्टु-मदनपालनिघण्टुभोजराजशेषराजादिकृतग्रन्थेभ्यः उपादानानि समाकलय्य आनूपभूमिगुडूच्यादिभिस्त्रयोविंशतिवर्गैः संविभज्य महाराष्ट्रकर्णाटादिभाषाभिर्द्रव्यादीनि व्याख्याय च रचितः।

"धन्वन्तरीयमदनादिहलायुधादीन्
विश्वप्रकाशमरकोषसशेषराजान्।
आलोक्य लोकविदितांश्च विचिन्त्य शब्दान
द्रव्याभिधानगणसंग्रह एष सृष्टः॥"

असौ कस्माच्चित् कश्मीरपरिवाराज्जात इति स्वयमेव स्वग्रन्थे स्वीचकार। मतान्तरे त्वसौ दाक्षिणात्यनिवसतिब्राह्मण इत्यभिधीयते। अत्र तेन शारीररोगनामौषधद्रव्यद्रव्यगुणादिकं नानायुर्वेदीयाशेषविषयान् सविस्तरमुपवर्ण्य चिकित्सकानां महानुपकारः साधितः। असौ नरहरिपण्डितो मदनपालादीनामधस्तनो, मदनपालादयश्च तदूर्द्धतना आसन्। तत्प्रादुर्भावसमयः (संवत् १७२५) सार्द्धद्विशतवर्षपूर्व्वं वासीत्। इति उदयचन्द्रः। नघण्टरयं



संस्करणानन्तरमस्मदीये देशे समादरेण परिगृहीतः सर्व्वत्रैवानुशीलितो भवति।

भावप्रकाशो—लटकमिश्रात्मजभावमिश्रविरचितः। अयमतिविस्तृतः सद्विनिश्चयचिकित्सितश्चिकित्सासङ्ग्रहो नानाप्राचीनसंहितासङ्ग्रह-कोष-निघण्टु-समालोचनेन स्वकल्पनया च रोगलक्षणचिकित्सितपथ्यापथ्यद्रव्यद्रव्यगुणरसवीर्य्यविपाकजारणमारणशोधनादीनि समाकलय्य लिखितः। असौ भावमिश्रो वैदेशिकपर्टुगीजदेशीयैरानीतमुपदंशरोगस्यैव प्रकारान्तरलक्षणसम्पन्नं फरङ्गरोगं स्वग्रन्थे सचिकित्सितं वर्णितवान्। अभिनवानि च तोपचीनीसोहारादीनि कतिचित् वैदेशिकद्रव्याणि सगुणानि तत्र सन्निवेशितानि। तेषु उपदंशहरं तोपचीनीमूलं चीनदेशीयैर्भारतवर्षस्य गोयाप्रदेशे शतत्रयाधिकवर्षादूर्द्ध्वं खृः (१५३५) समानीतम्। इति श्रीयादवजसावस्य मतम्। सुतरामेव भावमिश्रस्याविर्भावस्तत्काले तदनन्तरकाले वासीत्। भावप्रकाशसङ्ग्रहः काशीप्रदेशे वङ्गदेशे च चिकित्सकैरधिकं पठ्यते।

माधवनिदानं—माधवकरविरचितम्। अत्र माधवेन विविधप्राचीनतन्त्रवैद्यकसंहितादिभ्यः क्वचिदादर्शोद्धरणेन क्वचिच्च स्वरचितभाषया सारसंग्रहेण पर्य्यायानुक्रमतो विविधरोगनिदानलक्षणादिकं लिपिषु सन्निबध्य भारतस्य चिकित्साशास्त्राध्यायिनां छात्राणां महानुपकारः साधितः। इदं माधवाचार्य्यविरचितमिति केषाञ्चित् मतम्। तन्न साधु, माधवकरः कर इत्युपाधिकोऽतिपुराकालीनो वैद्यजातीयो ग्रन्थकार आसीदिति प्रसिद्धिः। अन्यच्च चक्रपाणिदत्तो माधवीयनिदानस्य रोगानुक्रमणीमनुसृत्य स्वसङ्ग्रहं रचितवानित्यसौ ग्रन्थकारश्चक्रपाणिदत्तस्योर्द्ध्वतन आसीदिति प्रतीयते। तथासौ चक्रपाणिः द्वादशशताब्द्यां गौड़राजस्य पाकशालाध्यक्षत्वं स्वसंग्रहे लिखितवान्। अपिच माधवः स्वग्रन्थोपसंहारे—यो गोविन्दः वृद्धभोजस्य पातञ्जलवृत्तिकारस्य समये (सप्तमशताब्द्यां) वर्त्तमान आसीत् तत्कृतिसूक्तिकर्णामृतनामग्रन्थस्य मुक्तावलीकारं गोविन्दाधस्तनं गुरुमङ्गीकृत्यात्मानं तत् समसामयिकं तदधस्तनं वा प्रतिपादितवान्। तस्य निदानमष्टमशताब्द्यामारवीयभाषयानुवादितमारवीयैश्चिकित्सकैरधीतमिति पुरातत्त्वविद उइल्सनसाहेबस्य मतम्।

व्याख्यामधुकोषो—(माधवीयनिदानस्य टीका) वैद्यवरश्रीविजयरक्षितेन

प्रथमसंस्करणे ग्रन्थकृता द्रव्याणां पर्य्यायाः न प्रदत्ताः। किन्तु चिकित्साशास्त्रे पर्य्यायपरिचयं विना द्रव्याणां सम्यक् ज्ञानं न भवतीत्यऽस्माभिरस्मिन् संस्करणे अतीव प्रयोजनीयतया सन्निवेशिताः पर्य्यायाः। अपिच प्रमादाद-प्रदत्तं शब्दार्थादिकमपि सप्रमाणमस्मिन् संयोजितम्। सर्व्वेषामेव वैद्यकशब्दरत्नानां लाभावबोधार्थं ग्रन्थान्तरस्य साहाय्यमनपेक्ष्यैव यथायुर्व्वेदव्यवसायिनः कुशलिनोविद्यार्थिनश्च वैद्यकशब्दसिन्धुमेवाश्रित्य वर्त्तेरन् तथैनं चिकीर्षुः सर्व्वथा अचेष्टे। साम्प्रतमाशास्महे मनीषिणामयं हृदयहारी ममापि अर्थश्रमसाफल्यकारी भवेदित्यलं संस्कर्त्तुः प्रपञ्चेन।

उपसंहारकाले सकृतज्ञमेतत् अवश्यं स्वीकर्त्तव्यं—मदीयप्रियसुहृदा सर्व्वशास्त्रार्थतत्त्वज्ञेन सुचिकित्सकेन श्रीमता हरिपदसेनशास्त्रिणा पुस्तकस्यास्य संस्करण-संशोधनविषये मे यथोचितं साहाय्यं कृतमतस्तत्सकाशे चिरकृतज्ञता-पाशेन बद्धोऽस्मीति।

कलिकाता
शकाब्दाः १८३५।

सम्पादकस्य—
श्रीनगेन्द्रनाथसेनवैद्यशास्त्रिणः।

# वैद्यकशब्दसिन्धुः।

# VAIDYAKAS ABDASINDHU.

## अ

**अः।** पुं। शिवे। विष्णौ। ए. की.।

**अंशः।** पुं। भुजशिरसि, स्कन्धे। Shoulder. কাঁধ। श्रम·। विभागे च। ভাগ।

**अंशमर्म्म।** क्ली। स्कन्धसन्धिस्थमर्म्मणि। स्कन्धमर्म। सु.शा.६अ.।

**अंशलः।** त्रि। मांसले। स्थूले।

**अंशवान्।** पुं। The moonplant or Acid Sarcostema (S. Viminalis.) सोमलतायाम्। सु.चि. २९अ.। See सोमः।

**अंशुः।** पुं। तृणायाम्। सूर्य्ये। किरणे च। मे. शान्तिकम्।

**अंशुकम्।** क्ली। (The leaf of Laurus cassia.) तेजपत्रे। তেজপাত। हिं तज। मं दालचिनि। गुणाः—लघु मधुरं पिच्छिलं किञ्चित्तीक्ष्णोष्णं कफवातार्शोहृल्लासारुचिपीनसघ्नञ्च। भा. पू.१भ.। विषघ्नं वस्तिशूलघ्नं मुखमस्तकशोधनञ्च। रा.नि.व.६। श्लक्ष्णवस्त्रे। मे. कत्रिकम्।

**अंशुकायः।** पुं। प्रवालादौ।

**अंशुपर्णिका** } स्त्री। शालपर्ण्याम्। শালপাণি।
**अंशुपर्णी** } श.र.। See अंशुमती।

**अंशुमती।** स्त्री। (Hedysarum gangeticum) शालपर्ण्याम्। শালপাণি, ছালানী। हिं सरिवण्। मं सालवण् भूँइशिवगा। तें सप्पाकुपोव। उत् शाल्पणि। गुणाः—कासघ्नी ग्राहिणी कफपित्तघ्नी च। च.द.। रसे तिक्ता गुरुणा वातघ्नी विषमज्वरप्रमेहार्शःशोफसन्तापहरी च। रा. नि व. ४। गुरुः छर्दिज्वरश्वासातिसारघ्नी शोषदोषत्रयहरा रसायनी च। मद.व.१। धातुवर्द्धनी। भा.पू.गु. व। "भेचकं चांशुमत्याः।" चि.क्र.क.वल्ली।

**अंशुमतीफला।** स्त्री। कदलीवृक्षे। কলাগাছ। भा.पू.१भ.फ.व.।

**अंशुमत्फला।** स्त्री। कदलीवृक्षे। रा. नि. व. ११ See कदली।

**अंशुमान्।** पुं। सूर्य्ये। सोमवद्गणे सोमलताविशेषे। সোমলতা। See सोमः।

**अंशूदकम्।** क्ली। हंसोदके। तच्चाहोरात्रं रविचन्द्रकिरणजुष्टत्वात् निर्म्मलं शैत्यगुणयुक्तं भौमं जलं शरदि प्रशस्तम्। "शस्तं शरदि नादेयं नीरमंशूदकं परम्। दिवार्ककिरणैर्जुष्टं निशायामिन्दुरश्मिभिः॥ अरूक्षमनभिष्यन्दि तत्तुल्यं गगनाम्बुना॥" सु. सू. ४६ अ. वारिव.। भा.पू. १भ.। गुणाः—बल्यं रसायनं शीतलं लघुच। मद. व.। श्रमघ्नं पित्तोग्रदाहविषमूर्च्छारक्तमदात्ययेषु हितम्। रा.नि.व.१४।

**अंसः।** पुं, क्ली। स्कन्धे। रा. नि. व.१८ भुजशिरसि। কাঁধ। ग्रीवाया उभयपार्श्वस्थे द्वे स्नायू अंसावुच्येते। "ग्रीवामुभयतः स्नायू ग्रीवाबाहुशिरोऽन्तरे।" वा.शा.४अ.। नि.१५अ.।

**अंसकूटः।** पुं। स्कन्धफलके। वा. शा ४ अ.। ककुदि। ষাঁড়ের ঝুঁটি।

**अंसपारिकः।** पुं। महानिम्बवृक्षे। মহানিম্ব। हिं वकायनि। वै.निघ.।

**अंसफलकम्।** क्ली। स्कन्धफलके। [illegible] स्कन्ध। भुजे। अंसमर्म्मणि। सु.शा.६अ.।

**अंसशोषः।** पुं। तन्नामकवातव्याधिविशेषे। येनांसस्थो वायुः स्कन्धबन्धनभूतकफं विशोष्य तमुत्पादयति। স্কন্ধস্থকফধাতুশোষক বাতরোগ। लक्षणम्—"अंसदेशस्थितो वायुः शोषयेदंसबन्धनम्।" मा.नि.।

**अंहति:** । स्त्री । रोगे । मे तलिकं । पीड़ायाम् । अम. । रा.नि. ।

**अंघ्रि:** । पुं । पादे । तरुमूले । अम. ।

**अंघ्रिप:** । पुं । वृक्षे । हला. ।

**अंघ्रिस्कन्ध:** । पुं । गुल्फे । পায়ের গুল্লে, গুড়মুড়ো । हे.च. ।

**अकच:** । त्रि । केशशून्ये । যার মাথা নেড়া ।

**अकरा** । स्त्री । आमलकीवृक्षे । আমলা গাছ । श.च. । See आमलकी ।

**अकराकरभ:** । पुं । अकर्करे । আকর্‌করা । शार्ङ्ग: अकारादि चू.६अ. ।

**अकराम्भक:** । पुं । अकर्करे । আকর্‌করা । वै. निघ. ।

**अकर्कर:** / **अकल्कर:** } पुं । स्वनामख्याते पण्यद्रव्ये । আকর্‌করা । फा.अकर्करहा । प्र. अकल्करा । गुणा:—वीर्य्योष्णा: बलकर: कटु: प्रतिश्यायशोथवातघ्नश्च । वै निघ.

**अकर्ण:** । त्रि । वधिरे । কালা । हे.च. ।

**अकर्त्तन:** । त्रि । वामन । বাঁওন ।

**अकल्य:** । त्रि । रुग्ने ।

**अकल्ल:** । पुं । अकर्करे । আকর্‌করা । अ.टी. सा. । वै.निघ.२भ.वा.व्या. ।

**अकालकुष्माण्ड:** । पुं । अकालजकुष्माण्डे । অসময়ে জাত কুম্‌ড়া ।

**अकालजम्** । त्रि । असमयोत्पन्ने । Unseasonable. यथा—"अकालजन्तु विरसं न धान्यं गुणवत् स्मृतम् ।" राज.

**अकालभोजनम्** । क्ली । अप्राप्ते काले, अतिप्राक्,कालेऽतीते वा भोजनम् । অসময়ে ভোজন । तच्च गुणैरसामर्थ्यकरं शिर:पीड़ाविसूचिकादिव्याधिजनकम् । यथा "अप्राप्तकाले भुञ्जानो ह्यसमर्थतनुर्नर: । तांस्तान् व्याधीनवाप्नोति मरणञ्चाधिगच्छति ॥" भा. पू. १भ. ।

**अकालशयनम्** । क्ली । न यथायोग्यकाले शयनम् । অসময়ে শয়ন । वा सू. ८अ. । गुणा: "अकालशयनात् श्लेष्मा प्रतिश्याय: प्रपीनस: । क्षय: शोफ: शिरोऽर्त्तिश्च जायते चाग्निमन्दता ॥" हा. अत्रि: १ स्थाने २३ अ. ।

**अकुप्यम्** । क्ली । स्वर्णे । रौप्ये । हला. ।

**अकुल:** । त्रि । निरस्थिद्रवे । वीजशून्य । च. चि १अ । लम्बकर्णजटाहीनमध्यमाश्वे । यथा "लम्बकर्णोऽजटश्चैव अकुल: परिकीर्त्तित: ॥"जयद. ६अ. ।

**अकूट:** । पुं । फलवृक्षविशेषे । आगड फल इति लोके । रत्ना. ।

**अकूपार:** । पुं । कच्छपे । त्रिका ।

**अकृताख्ययूष:** । पुं । लवणस्नेहकट्वादिपदार्थवर्जित-यूषे । स लघुरिति वै.निघ. ।

**अकोट:** । पुं । Areca catechu),(Areca-nut, The betel nut-tree. गुवाकवृक्षे । শুপারিগাছ । हिं उत् गुया, शुपारी छोटी । मं पोफल । त्रिका । फलगुणा:—गुरु हिमं रूक्षं कषायं कफपित्तहरं मोहनं दीपणं रुच्यं सुखवैरस्यहरञ्च । आर्द्रं तत्—गुरु अभिष्यन्दि अग्निघ्नं दृष्टिघ्नञ्च । खिन्न तत्—त्रिदोषघ्नम् । पुष्पं—कषायं मधुरं गुरु च । मद । गुवाकशिर:—भेदनं मदकरञ्च । च.द. । स्वादु तिक्तं कषायं बल्यं शुकलं मूत्ररोगघ्नञ्च । राज. । निर्यास:—हिमो गुरु: विपाके उष्ण: वातघ्न: पित्तकर: क्षार: अम्ल: मोहनश्च । ता. । हिमो गुरु: वातघ्न: क्रमिहृत्पित्तलश्चेति । रा.नि.व.११ । पूगं सङ्कोचकं क्रमिघ्नञ्च । आमं तत्—कषायं मुखकण्ठशोधनं सरम् उदराध्मानहरं श्लेष्मपित्तरक्तामशमनञ्च । शुष्कं पूगं—कण्ठशोधनं रेचनं पाचनं रुचिकरञ्च । पर्णेन विना खादितं—पाण्डुवातशोषादिरोगजनकं भवति । रा, नि.व. ११ । स एव पूगस्याष्टभेदानङ्गीकरोति—शैली-तैलण-गौल्य-घोण्टा-चेउल-वल्लिगुल-चन्द्रापुरीय-चोल्य इति । तेषु शैली—मधुरा रुच्या कटुकषायाम्ला । तैलणं—मधुरं लघु दीपनं रसालञ्च । गौल्यं—कटु कषायं पाचनं द्रावकं लघु च । घोण्टा—कटु-कषायोष्णा दीपनी च । चेउलसंज्ञं कोंकणे प्रसिद्धं—सुगन्धि दीपनं पाचनं पुष्टिकरं रसाढ्यञ्च । वल्लिगुलमपि कोंकण एव प्रसिद्धं—त्रिदोषहरं ग्राम्यं दीपनञ्च । चन्द्रापुरीयं—स्वादुकटु-कषायं रुच्यं दीपनं पाचनञ्च । चोलीपूगं—आन्ध्रदेशीयं कषायमधुरम् ।

**अक्रान्ता** । स्त्री, पुं । Solanum Indicum) The egg-plant वृहतीक्षुपे । বিরুণ্ঠি, ব্যাকুড় । हिं वरहण्टा, भटकटायो । मं कांडोरली पांडरी, वनभण्टी । उत्. अक्रान्ति । ते. व्राकुट-



चेट्टु । र.मा. । गुणा:—उष्णवीर्य्या पाचनी संग्राहिणी च । चक्र.द. । राज. । कटु-तिक्तरसा उष्णा लघु: वातघ्नी ज्वरघ्नी अरोचकामकासघ्नी श्वासहृद्रोगहरी च । रा.नि.व.४ ।

**अक्वथितक्षीरम्** । क्ली । आमदुग्धे । কাঁচা দুধ । तत् श्लेष्मप्रकोपि गुरु च । वै.निघ. ।

**अक्लिका** । स्त्री । The Indigoplant (Indigofera tinctoria). नीलीवृक्षे । श.च. । নীলগাছ । हिं नीली । मं नीलीचे भाड़, कं नीली, तें नल्लचेट्टु गेरिट, पेद्दनीलिचेट्टु । सा द्विधा, नीली महानीली च । गुणा:—कटुतिक्तोष्णा केश्या कासकफामघ्नी लघु: वातविषोदरगुल्मक्रमिज्वरघ्नी । रा.नि.व.४ । रेचनी मोहभ्रमामवातोदावर्त्तघ्नी च । भा.पू.१भ. । मद.१व. । "महानीली गुणाढ्या स्यात् रङ्गश्रेष्ठा सुवीर्य्यदा । पूर्व्वोक्तनीलिका देश्या सगुणा सर्व्वकर्म्मसु ॥" रा.नि.व.४ ।

**अक्लिन्नवर्त्म** । क्ली । नेत्रवर्त्मजरोगविशेषे । अत्र रोगे नेत्रयो: पक्ष्माभावेऽपि धौतमधौतं वा नेत्रं पुन: पुनर्लगति । यथा "यस्य धौतान्यधौतानि सम्बध्यन्ते पुन: पुन: । वर्त्मान्यपरिपक्वानि विद्यादक्लिन्नवर्त्म तत् ॥" मा.नि. ।

**अक्लीका** । स्त्री । नीलीवृक्षे । নীলগাছ । श.च. ।

**अखट्ट:** । पुं । ( Buchanania latifolia. ) पियालवृक्षे । পেয়াশাল, পেয়াল । ইহার বীজকে পেয়ালবীজ ও চারদানা কহে । हिं चिरोञ्जी । मं चारोली । गुणा:—कफपित्तास्रघ्न:, तत्-फलगुणा:—मधुरं स्निग्धं वृंहणं वातपित्तघ्नं गुरु सरं ज्वरदाहतृष्णाहरञ्च । तन्मज्जा—मधुरं हृद्यं वृष्यं वातपित्तहरं दुर्जरं स्निग्धं विष्टम्भि आमवर्द्धनञ्च । अस्य पक्वं फलं—वृष्यं गौल्यं अम्लकं गुरु च । तद्बीजं—मधुरं वृष्यं पित्तदाहघ्नञ्च । रा.नि.व.११ । "चार: पित्तकफास्रघ्नस्तत्-फलं मधुरं गुरु । स्निग्धं सरं मरुत्पित्तदाहज्वरतृषापहम् ॥ पियालमज्जा मधुरो वृष्य: पित्तानिलापह: । हृद्योऽतिदुर्जर: स्निग्धो विष्टम्भी चामवर्द्धन: ॥" भा. आम्रादि-व. ।

**अखल:** । पुं । उत्तमवैद्ये । वै.निघ. ।

**अखातम्** । क्ली । देवखाते । দেবখাদ । हे च.का.४ । पुष्करिण्याम् । अम. ।

**अखिलिका** । स्त्री । A kind of gourd (Momordica charantia.) क्षुद्रकारवेल्यां । উচ্ছে । हिं करेली छोटी । See कारवल्ली ।

**अख्रोट:** । पुं । आखोटे । আখরোট্ ।

**अग:** । पुं । पर्व्वते । हिं पाहाड़ । अगो द्विविध-आग्नेय-सौम्यभेदेन । तयोर्विन्ध्य आग्नेय:, हिमालय: सौम्य: । आग्नेयगिरिजान्यौषधानि अग्निगुणभूयिष्ठानि, सौम्यगिरिजानि च सोमगुणभूयिष्ठानि । "आग्नेया विन्ध्यशैलाद्या: सौम्यो हिमगिरि: स्मृत: । अतस्तदौषधानि स्युरनुरूपाणि हेतुभि: ॥" भा. । वृक्षे । सर्पे । सूर्य्ये । हे.च. ।

**अगज:** । पुं । तुम्बुरौ । आर्द्रधान्ये । কাঁচা ধনে । हिं आर्द्रधनिया । मद. । विशेषस्तुम्बुरुशब्दे द्रष्टव्य: । वन्दायाम् । বান্দ্‌ড়া, পরগাছা ।

**अगजम्** । क्ली । Bitumen. शिलाजतुनि । र,मा. ।

**अगद:** । पुं । रोगे । A medicament. औषधे । रा.नि.व.२० । वा.उ.३५अ. । दद्रुघ्नवृक्षे । দাদ্‌মর্দন । त्रि । रोगमुक्ते । रा.नि.व.२० ।

**अगदम्** । क्ली । आरोग्ये । रा.नि.व.२० । वा. उ.३५ अ. ।

**अगदङ्कर:(ङ्कार:)** । पुं । वैद्ये । रा.नि.व.२० । A physician. চিকিৎসক ।

**अगदतन्त्रम्** । क्ली । विषचिकित्साविषयकतन्त्रे अगदतन्त्रं नाम शल्याद्यष्टविधतन्त्रान्तर्गतवैद्यकाङ्गविशेष: । तच्च सर्पकीटलूतावृश्चिकमूषिकादिदष्टविषव्यञ्जनार्थं विविधविष-संयोगविषोपहतोपशमनार्थम् । सु.सू.१अ. ।

**अगदनस्यम्** । क्ली । सर्पदष्टादौ नस्यविशेषे । सु.कल्प. ।

**अगदाञ्जनम्** । क्ली । विषमूर्च्छितादौ अञ्जने । सु.कल्प. ।

**अगन्धिकम्** । क्ली । Sochal salt. सौवर्चललवणे । সচল লবণ । भा. । मद. । See सौवर्चलम् ।

**अगरा (री)** । स्त्री । A kind of grass, Deotár. देवदाल्याम् । দেয়াতাড়া । अ.टी. भ. । पीतदेवदाल्याम् । भा. । रा.नि.व.३ । See देवदाली ।

**अगरु** । क्ली । अगुरुचन्दने । कृष्णागुरुणि । অগরাই চন্দন । वा.उ.२७ अ. । See अगुरु ।

**अगरुसारः** । पुं । कृष्णागुरौ । Aloe wood, the black variety. কাল অগুরু ।

**अगस्तिः** । पुं । (Sesbana grandiflora.) वकनामकपुष्पशाकवृक्षे । मे, तन्त्रिकं । বকফুলের গাছ । हिं हतिया, वकुल, वृहत् वौलसरी । तै. ललयबिसेचेट्टु । मं अगस्ता हदगा । अगस्तिः श्वेतरक्तनीलपीतभेदेन चतुर्विधः । गुणाः—पित्तकफहारित्वं, शोषशमनत्वं हिमत्वं योनिशूलतृष्णाकुष्ठशोथनाशित्वम् । अन्यच्च—वकोऽतिशिशिरस्तिक्तः मधुरः मदगन्धिः पित्तदाहकफश्वासश्रमघ्नो दीपनश्च । रा.नि.व १० । अपरञ्च "मुनिशिम्बी सरा प्रोक्ता बुद्धिदा रुचिरा लघुः । पाककाले तु मधुरा तिक्ता चैव स्मृतिप्रदा ॥ त्रिदोषशूलकफहृत्पाण्डुरोगविषापनुत् । शोफगुल्महरा प्रोक्ता सा पक्वा रूक्षपित्तला ॥" पर्णन्तु मुनिवृक्षस्य—कटु तिक्तं गुरु मधुरं किञ्चिदुष्णं कृमिकफकण्डूविषरक्तपित्तघ्नञ्च । वै. निघ । पुष्पगुणाः—शीतलं गौल्यं त्रिदोषघ्नं श्रमघ्नं वलासकासवैवर्ण्यभूतहरं बलघ्नञ्च ॥ रा.नि.व. १० । शीतवीर्य्यं चातुर्थकज्वरहरं नक्तान्ध्यघ्नं तिक्तं कषायं कटु पीनसकफपित्तवातघ्नञ्च । भा.पू.१भ. शा. व. ।

**अगस्तिकुसुमः** । पुं । वकपुष्पे । বকফুল । त्रिका. ।

**अगस्तिद्रुः**
**अगस्तिद्रुमः** } पुं । वकवृक्षे । त्रिका. ।

**अगस्त्यः** । पुं । वकवृक्षे । त्रिका. ।

**अगस्त्यरसः** । पुं । उदररोगघ्ने रसे । रसगन्धक-जैपालवीज-लौह-शिलाजतु-ताम्र - हरिद्राणां प्रत्येकं समभागः, एकत्र त्रिकटुभृङ्गराजार्द्रकनिम्बनिर्गुण्डीस्वर्णलीक्वाथैरेकवारं मर्द्यः । अनुपा. गुड़हरीतकी, कम्पिल्लचूर्णं वा. । र.सा.सं. ।

**अगस्त्यहरीतकी** । स्त्री । कासे हिता । तत्पाकविधिः—दशमूलादिक्वाथ्यद्रव्याणि प्र. २ प. यवाः ८ श. हरीतकीशतं । हरीतकीयवान् पोट्टलीकृतान् एकत्र ८०श.जले पक्वा पादशिष्टः क्वाथः कर्त्तव्यः । अथ गुड़ं १२॥श. उक्तक्वाथेन गोलयित्वा कुड़वमितघृततैलभर्ज्जितनिरस्थिहरीतकीसहितं पक्वा च पादशिष्टेऽवसाथ्य शीते पिप्पलीचूर्णं ॥० अर्द्ध श. प्रक्षिपेत् । शीतले मधु ॥०श. मिश्रयेत् । मात्रा—हरीतकीद्वयं लेहस्य च तो. २. प्रत्यहं खादेत् । एतदन्तर्गता चोरपुष्पी—दन्तखड़िका । च. द. कास. । मतान्तरे दशमूलद्रव्यं प्र. ४ तो. । दशमूलीं स्वयंगुप्तां शङ्खपुष्पीं शटीं बलाम् । हस्तिपिप्पल्यपामार्गपिप्पलीमूलचित्रकान् ॥ भार्गी-पुष्करमूलञ्च द्विपलांश यवाढकम् । हरीतकीशतञ्चैकं जलपञ्चाढके पचेत् ॥ यवस्विन्नकषायन्तं पूतं तच्चाभयाशतम् । पचेद्गुड़तुलां दत्त्वा कुड़वञ्च पृथक् घृतात् ॥ तैलात् सपिप्पलीचूर्णात् सिद्धशीते च माक्षिकात् । लिह्याद्द्वे चाभये नित्यं खादेन्नित्यं रसायनात् ॥ इति पाठः । रस.र. । प्रयोगा. हा. अत्रिः ३।९ अ. ।

**अगाधम्** । क्ली । जले । हे.च. ४ का. । छिद्रे । मे ।

**अगारधूमः** । ३ । गृहधूमे । ঝুল । वा. उ. ३८ अ. ।

**अगिरः** । पुं । चित्रकवृक्षे । जटा । See चित्रकः ।

**अगुरु** । क्ली । (Aquilaria agallocha) A fragrant wood स्वनामप्रसिद्धसुगन्धिकाष्ठविशेषे । অগুরুচন্দন । हिं अगर । तें इरुगुडुचेट्टु । मं शिशवाचे झाड़, कृष्णागरु । तत्पर्य्यायाः—वंशिकं, राजार्हं, लोहं, कृमिजं, क्रिमिजं, जोङ्गकं (अ), अनार्य्यजं (हे), वंशकं (हा), लघुः, पिच्छिलं (के), भृङ्गजं, कृष्णं, लोहाख्यं (र), रात्रकं, वर्णप्रसादनं, अनार्य्यकं, असारं, अग्निकाष्ठं, क्रिमिजग्धं, काष्ठकं । तच्च कृष्ण-दाहस्वादु-मङ्गल्य-काष्ठागुरु-भेदेन पञ्चविधम् । रा. नि.व.१२ । तेषां विशेषास्तत्तत्पर्य्याये ज्ञेयाः । अस्य सामान्यगुणाः—तिक्तता, उष्णता, कटुता, लेपे रूक्षता, व्रणकफवायुवान्तिमुखरोगनाशित्वं, त्वच्यं, पित्तलं, लघु, तीक्ष्णं, कर्णाक्षिरोगघ्नञ्च । रा. नि. व १२; वा.चि.४अ. । कृष्णागुरु—गुणाधिकं जले मज्जति च । एतत्स्नेहः—कृष्णागुरुसमगुणः । भा. क.व. ।

**अगुरुः** । पुं । Aloe wood (or agallocha.) अगुरुवृक्षे । অগুরু গাছ । वा.सू. १५अ. एलादि-व. । "अगुरुः श्रीवासकं कुङ्कुमम्" । कपिलशिंशपायाम् । हिं कपिलवर्ण शीसव । भा.पू. १भ. वटादि व. । शिंशपावृक्षे । শিশুগাছ । अं त्रिकम् ।

**अगुरुगन्धम्** । क्ली । हिङ्गुनि । हि [illegible]



**अगुरुसारः** । पुं । कृष्णागुरुवृक्षे । কাল অগুরু । See कृष्णागुरुः । लौहे । रत्ना. एकार्थः ।

**अगुरुसारा** । स्त्री । शिंशपावृक्षे । भा. ।

**अगुरुशिंशपा** । स्त्री । (Dalbergia Sisu.) शिंशपावृक्षे । শিশু । हिं शीसव । अ.टी. स्वामी ।

**अगूढ़ः** । पुं । The castor-oil plant (Ricinus communis.) श्वेतैरण्डे । শ্বেতভেরেন্দা । हिं एरण्ड । वै.निघ. । See एरण्डः ।

**अगूढ़गन्धम्** । क्ली । (Ferula assafœtida.) हिङ्गुनि । रा.नि.व.६ । See हिङ्गु । पलाण्डौ । मृगनाभौ । लशुने ।

**अगृद्धिः** । स्त्री । अभिलाषे । वा. चि. ७ अ. ।

**अगौकाः** । पुं । A fabulous animal with eight legs. शरभे । पक्षिणि । सिंहे । मे. ।

**अग्निः** । पुं । The fire of the stomach. जाठराग्नौ । स चतुर्विधः—मन्दतीक्ष्णविषमसमभेदेन । यथा "मन्दस्तीक्ष्णोऽथ विषमः समश्चेति चतुर्विधः । कफपित्तानिलाधिक्यात् तत्साम्याज्जाठरोऽनलः ॥ विषमो वातजान् रोगान् तीक्ष्णः पित्तनिमित्तकान् । करोत्यग्निस्तथा मन्दो विकारान् कफसम्भवान् ॥ समा समाग्नेरशिता मात्रा सम्यग्विपच्यते । स्वल्पापि नैव मन्दाग्नेर्विषमाग्नेस्तु देहिनः ॥ कदाचित् पच्यते सम्यक् कदाचिच्च न पच्यते । तीक्ष्णाग्निरिति तं विद्यात् समाग्निः श्रेष्ठ उच्यते" ॥ मा.नि. । तल्लक्षणं—"वामपार्श्वाश्रितं नाभेः किञ्चित् सोमस्य मण्डलम् । तन्मध्ये मण्डलं सौर्य्यं तन्मध्येऽग्निर्व्यवस्थितः । जरायुमात्रप्रच्छन्नः काचकोशस्थदीपवत् ॥" भा. । अपरञ्च—"सूर्य्यो दिवि यथा तिष्ठन् तेजोयुक्तैर्गभस्तिभिः । विशोषयति सर्व्वाणि पल्वलानि सरांसि च ॥ तद्वच्छरीरिणां भुक्तं ज्वलनो नाभिमाश्रितः । मयूखैः पच्यते क्षिप्रं नानाव्यञ्जनसंस्कृतम् । स्थूलकायेषु सत्वेषु यवमात्रः प्रमाणतः । कृमिकीटपतङ्गेषु बालमात्रोऽवतिष्ठते ॥" रस. प्र. । "पाचकं रञ्जकञ्चापि साधकालोचके तथा । भ्राजकश्चेति पित्तस्य नामानि स्थानभेदतः ॥ अग्न्याशये यकृत्-प्लीह्नोः हृदये लोचनद्वये । त्वचि सर्व्वशरीरेषु पित्तं निवसति क्रमात् । पाचकं पचते भुक्तमिति ।" निदा. । तेजःपदार्थविशेषे । আগুন । हिं आग । अस्य पर्य्यायाः—वैश्वानरः, वह्निः, वीतिहोत्रः, धनञ्जयः, कृपीटयोनिः, ज्वलनः, जातवेदाः, तनूनपात्, तनूनपाः, वर्हिःशुष्मा, वर्हिः, शुष्मा, कृष्णवर्त्मा, शोचिष्केशः, उषर्वुधः, आश्रयाशः, आशयाशः, वृहद्भानुः, कृशानुः, पावकः, अनलः, रोहिताश्वः, वायुसखा, वायुसखः, शिखावान्, शिखी, आशुशुक्षणिः, हिरण्यरेताः, हुतभुक्, हव्यभुक्, दहनः, हव्यवाहनः, सप्तार्चिः, दमुनाः, शुक्रः, चित्रभानुः, विभावसुः, शुचिः, अप्पित्तं, (अटी), वृषाकपिः, जुहूवानः, कपिलः, पिङ्गलः, अरणिः, अगिरः, पाचनः, विश्वप्साः, छागवाहनः, कृष्णार्चिः, भास्करः, जुहवारः, उदर्चिः, वसुः, शुष्मः, हिमारातिः, तमोनुत्, सुशिखः, सप्तजिह्वः, अपपरिकः, सर्व्वदेवमुखः (ज) । अग्नितापगुणाः—वात-कफ-स्तब्धता-शीत - कम्पघ्नः, आमाशयकरः रक्तपित्तकोपनश्च । राज. भा. । चित्रके, চিতেগাছ । सियो. ग्रहणीचि, विल्वाद्यघृते । वा.सू.१५अ. आरग्वधादि-व. । अग्निजारवृक्षे । रा.नि.व.२३ । पीतवालके । केशरे । पित्ते । अम्ले । निम्बुके । रा.नि.व. २१ । स्वर्णे । रा.नि. व. १३ । भल्लातके । रा.नि.व. ११ । रक्तचित्रके । रा.नि.व.६ । च.द. ग्रहणी-चि.कपित्थाष्टके ।

**अग्निकः** । पुं । An insect of scarlet colour. इन्द्रगोपकीटविशेषे । আষাঢ়েপোকা । सु.मि.अ ; हे.च.४का. । चित्रकवृक्षे । वा.चि.७ अ. । भल्लातकवृक्षे । भा.पू.१भ.ह.व. ।

**अग्निकर्णी** । स्त्री । वृक्षविशेषे । वै. निघ.२भ. अभिन्यास-ज्वर-चि. ।

**अग्निकर्म** । क्ली । ग्रन्थ्यादिरोगेषु दग्धशलाकादिभिः प्रयोज्ये दाहकार्य्ये । तच्च क्षारदाहाद्गरीयः क्रियासु, न गुणेषु । तच्चतुर्व्विधं रोगाधिष्ठानभेदात्, यथा—वलयविन्दुविलेखशुष्कशलाकावघर्षणानि । तस्य च कालः शरद्ग्रीष्माभ्यामन्यत्र सर्व्वर्त्तुषु प्रशस्तः । तस्य पात्रं—दुर्व्वलबालवृद्धभीरुप्रभृतिभिन्नाः । तदुपकरणं—पिप्पल्यजशकृद्गोदन्तशरशलाकाजाम्बवौष्ठेतरलौहाः क्षौद्रगुड़स्नेहाश्च । सु.सू.१२अ. । वा.चि.१५ अ. ।

**अग्निकाष्ठम्** । क्ली । (Agallochum) अगुरौ । "अग्निकाष्ठं करीरे स्यात् । "रा.नि.व.२३ । शमीकाष्ठे । रा.नि.व.१२ ।

**अग्निकीलः** । पुं । अग्निशिखायाम् । অগ্নিজ্বালা ।

**अग्निकुक्कुटः** । पुं । ज्वलदग्नितृणोल्कायाम् । জ্বলন্ত নুড়ো ।

**अग्निकुमारः ।** पुं । अजीर्णाधिकारोक्तरसायनवटीविशेषे । यथा—"टङ्कणं रसगन्धौ च समभागं त्रयं विषात् । कपर्द्दः सर्जिका क्षारी (यवक्षारः) मागधी विश्वभेषजम् ॥ पृथक् पृथक् कर्षमात्रं वसुभागमिदौषधम् । जम्बीराम्लैर्दिनं घृष्टो भवेदग्निकुमारकः । विसूचीशूलवातादिवह्निमान्द्योपशान्तये ॥" रस.प्र. रसेन्द्रचि. । भैष. प्रयोगा.सा. कौ.र.सा.सं. । द्वितीयः ग्रहण्यधिकारे । पटुपञ्चकं पञ्चलवणम् । भृङ्गराजादिना प्रत्येकं त्रिधा मर्द्दनम् । र.सा.सं.१११ योगः । तृतीयो ग्रहण्याम् । अजमोदा वनयमानी । र.सा.सं.१२२योगः, भैष. । चतुर्थः सन्निपातज्वरे हितः । पारदः ४तो. गन्ध.४ तो. हंसपादी (গোয়ালিয়া) रसे दिनैकं मर्द्दयित्वा वटीकरणेन २ तो. विषेण सह काचकूप्यां निधाय मुखमवरुध्य बालुकायन्त्रेण १२ प्रह.दीपशिखावदग्नौ पाच्यः । शीते विषं ॥०तो. मरिचचूर्णं ॥० तो. मिश्रयेत् । मात्रा रक्तिमिता । भा.म.ख. १ भ. । पञ्चमः अजीर्णे, अत्र भागत्रयमिति एकभागापेक्षया, एवं सर्व्वत्र । कपर्द-शङ्खं दग्ध्वा जम्बीररसे शोधनीयम् । षष्ठो बृहदग्निकुमारः । अत्र रसापेक्षया द्विगुणं गन्धं टङ्कणञ्च देयम् । पटूनि लवणानि । द्वादशैतानीति फलत्रयादिपञ्चपट्वन्तानि द्रव्याणि रसतुल्यानि । र. सा. सं. १३८ योगः, प्रयोगा. । सप्तमोऽप्यपरबृहदग्निकुमारः । अत्र जातीफलं जातीफलजातीकोषौ । वराङ्गं = गुड़त्वक् । १३९योगः । अष्टमेऽग्निकुमारे समभागमिति प्रत्येकं भागैकं,वसुभागमिति भागाष्टकम् । र.सा.सं. १५६ योगः । रस.र.उदरे. ।

**अग्निकुमारलौहम् ।** क्ली । प्लीहाधिकारे रसः । रामठं = हिङ्गु । तुल्यहिङ्गुटङ्कणसैन्धव-धान्यजीरकयमानीमरीचशुण्ठीलवङ्गैलाविड़ङ्गानां प्रत्येकं १ तो. लौहं सर्व्वसमं रसस्य ४ तो. गन्धकस्य च ४ तो. । अनु. घृतं मधु च । र. सा. सं. ३३४ योग. ।

**अग्निगर्भः ।** पुं । अग्निजारवृक्षे । रा.नि.व.६ ।

**अग्निगर्भा ।** स्त्री । (Acacia suma.) शमीवृक्षे । শাঁই গাছ । हिं, मं शमी । गुणाः—तिक्ता, कटुः, कषाया, शीता, लघुः, रेचनी, कफकासभ्रमश्वासकुष्ठार्शःक्रिमिघ्नी । भा.पू.१भ. । See शमी । महाज्योतिष्मतीलतायाम् । বড় লতাফট্‌কী । रा.नि. ।

**अग्निघृतम् ।** क्ली । अग्निमान्द्ये घृतम् । घृतं ४ श. पिप्पल्यादिकल्कद्रव्यं प्रत्येकं ४ तो. दधि ४ श. काञ्जिकं ४ श. शुक्तं ४ श. आर्द्रकरसः ४ श. । एभिः यथाविधि घृतं पचेत् । च.द.अग्निमा.चि. पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली । हिङ्गुचव्याजमोदे च पञ्चैव लवणानि च । द्वौ क्षारौ हबुषा चैव दद्यादर्द्धपलोन्मितम् । दधिकाञ्जिकशुक्तानि स्नेहमात्रासमानि च । आर्द्रकस्य रसप्रस्थं घृतप्रस्थं विपाचयेत् ॥ इति पाठः ।

**अग्निचूड़ः ।** पुं । ताम्रचूड़पक्षिणि । কুক্‌ড়া । दा.हिं कोम्ड़ा, हिं मुर्गा । स द्विविधः वन्यग्राम्यभेदेन । तयोर्ग्राम्यः—वृंहणः, वृष्यः, बल्यः, गुरुः, शुक्रकफकृत्, स्निग्धः, उष्णवीर्य्यः, कषायरसश्च । आरण्यः—स्निग्धः, वृंहणः, श्लेष्मलः, गुरुः, वातपित्तक्षतवमिविषमज्वरनाशकश्च । भा. । हृद्यं श्लेष्मघ्नं लघु च । रा नि व ११ । रूक्षं स्वादु कषायं शीतलञ्च । राज. ।

**अग्निजः ।** पुं । अग्निजारवृक्षे । रा. नि. व. ६ । भल्लातके । सुवर्णे । मांसधातौ ।

**अग्निजननी ।** स्त्री । भैषज्यमेतत् अग्निमान्द्योपशमनम् । रस.चि. । पलैकं मूर्च्छितं सूतं मरिचं हिङ्गु जीरकम् । प्रतिकर्षं वचा शुण्ठी तत्सर्व्वं मार्कवद्रवैः । दिनं पिष्टा लिहेन्माषं मधुना वह्निदीप्तये । कर्षैकं भक्षयेच्चानु दाड़िमं नागरं गुड़ैः ॥ मार्कवद्रवैः भृङ्गराजरसैः । प्रयोगा. ।

**अग्निजातः ।** पुं । अग्निजारवृक्षे । रा.नि.व ६ ।

**अग्निजारः ।** पुं । A plant used in medicine of stimulant properties. पश्चिमसमुद्रप्रसिद्धे स्वनामख्याते सागरसम्भूतौषधविशेषे । अस्य पर्य्यायाः,—अग्निनिर्य्यासः, अग्निगर्भः, अग्निजः, वड़वाग्निमलः, जरायुःअर्णवोद्भवः, अग्निजातः, सिन्धुफलः । स चतुर्वर्णः । तेषु लोहितवर्णः श्रेष्ठः । "जाराभो दहनस्पर्शी पिच्छिलः सागरे भवः । जरायुस्तचतुर्वर्णः तेषु श्रेष्ठः सलोहितः" इति तल्लक्षणम् । गुणाः—कटुरसः, उष्णवीर्य्यः, लघुपाकः, कफ-वायु-सन्निपात-शूलरोगघ्नः, पित्तकरश्च । "स्यादग्निजारः कटुरुष्णवीर्य्यः गुदामय-वातकफामयघ्नः । पित्तप्रदः सोऽधिकसन्निपातशूलातिशीतामयनाशकश्च ॥" रा.नि.व.६ ।

**अग्निजालः ।** पुं । अग्निजारे । रा.नि.व. ६ ।



**अग्निजिह्वा (जिह्विका) ।** स्त्री । (Gloriosa Superba.) लाङ्गलीवृक्षे । रत्ना. । ईषलाङ्गुलिया । हिं करिहारी । मं कललावी । गुणाः—सरा, तिक्ता, कटुका, तुवरा, तीक्ष्णा, उष्णा, पित्तला, सक्षारा, गर्भपातिनी, कुष्ठशोफार्शोव्रणशूलश्लेष्मक्रिमिजित्, कफवातघ्नी अन्तःशल्यनिष्कासिनी च । भा.पू.१भ.गु,व ।

**अग्निज्वाला ।** स्त्री । Pothos officinalis. गजपिप्पल्याम् । গজপিপুল । सा चविकायाः फलमिति प्राञ्चः । "चविकायाः फलं प्राज्ञैः कथिता गजपिप्पली ।" भा.पू.१भ. । गुणाः—कटुः, उष्णा, वातश्लेष्महृत्, दीपनी, अतीसारश्वासकण्ठामयक्रिमिघ्नी । लाङ्गलीवृक्षे । अग्निजारे । जलपिप्पल्याम् । কাঁচড়া । मं जलपिप्पली । धातकीवृक्षे । रा नि,व.२३ ।

**अग्नितुण्डीरसः ।** पुं । अजीर्णाधिकारे रसः । "शुद्धसूतं विषं गन्धमजमोदा फलत्रिकम् । सर्जिक्षारं यवक्षारं वह्निसैन्धवजीरकम् ॥ सौवर्चलं विड़ङ्गानि सामुद्रं त्र्यूषणं तथा । विषं मुष्टिममं सर्व्वं जम्बीराम्लेन मर्द्दयेत् । मरिचाभां वटीं खादेत् वह्निमान्द्यप्रशान्तये ॥" अत्र वह्निश्चित्रकः, अजमोदा यमानी । विषमुष्टिः, महानिम्बः, अस्य त्वक् पत्रं वा सर्व्वसमम् । र.सा.सं १३३ योगः । द्वितीयः—अमृतवराटकमरिचैः द्विपञ्चनवभागिकैः क्रमशः । वटिका मुद्गसमाना कफपित्ताग्निमान्द्याजीर्णहरा ॥ अत्र लिम्पाकरसैः वटिका कार्य्या । प्रयोगा अजीर्णे । अमृतवटीति भैष. ।

**अग्निदमनकः** } **अग्निदमनी** } पुं, स्त्री । (Medicinal plant stimulant and stomachic, considered as a small species of Cantacárica) क्षुद्रकण्टकवृक्षविशेषे । गणिकारीति प्रसिद्धा গণিরী । दुरालभाभेदे । দুরালভাভেদ । मं धमासाभेद, अगिदवणा । वै. निघ. । শোলা । इति केचित् । अस्याः पर्य्यायाः—वह्निदमनी, बहुकण्टका, वह्निकण्टकाड़िका, गुच्छफला, क्षुद्रफला, क्षुद्रकण्टकारी, क्षुद्रदुःस्पर्शा, क्षुद्रकण्टकारिका, मत्तेन्द्रमाता, दमनी । गुणाः—कटूष्णरूक्षत्वं, रुचिकरत्वं, अग्निदीपकत्वम् । रा.नि.व. ४ । वातगुल्मकफघ्नत्वं, प्लीहघ्नत्वञ्च । वै.निघ. ।

**अग्निदीपनः ।** पुं । वरुणवृक्षे । বরুণগাছ । [वर्द्धक ।
भा. पू. १भ. ।

**अग्निदीपनी ।** त्रि । अग्निवृद्धिकर्य्याम् । अग्नि-

**अग्निदीप्ता ।** स्त्री । महाज्योतिष्मती-लतायाम् । লতাফট্‌কী । मं थोड़ मालकाङ्गनी । हिं উমিজিনি । रा.नि.व. २। भा. पू. १भ. ।

**अग्निधमनः ।** पुं । कटुनिम्बे । কটুনিম্‌, ঘোড়ানিম্ । मं कडुनिम्ब । See महानिम्बः ।

**अग्निनिर्यासः ।** पुं । अग्निजारवृक्षे । रा.नि. [लोके ।
व ६ ।

**अग्निपत्री ।** स्त्री । अग्निवल्याम् । আগিয়া इति

**अग्निपाली (माली) ।** पुं । चित्रकक्षुपे । চিতে । मद.२व. ।

**अग्निप्रस्तरः ।** पुं । अग्निजनकपाषाणे । চক্‌মকির পাথর । मं गार ।

**अग्निफला ।** स्त्री । महाज्योतिष्मतीलतायाम् । বড় লতাফট্‌কী । मं थोड़ मालकांनी । रा.नि. व.३ ।

**अग्निभः ।** पुं । सुवर्णे । रा. नि व. १३ ।

**अग्निभा ।** स्त्री । ज्योतिष्मतीलतायाम् । লতাফট্‌কী । मं क्षुद्रमालकाङ्गीनी । हिं कवुद्र । See ज्योतिष्मती ।

**अग्निभु ।** क्ली । स्वर्णे । जले । रा.नि.व. १३ ।

**अग्निमणिः ।** पुं । सूर्य्यकान्तमणौ ।

**अग्निमथनः ।** पुं । गणिकारिकायाम् । গণিরী বা আগ্‌গন্ত । रा.नि.व.९ । See गणिकारिका, अग्निमन्थः ।

**अग्निमन्थः ।** पुं । (Premna Seratifolia) स्वनामख्यातवृक्षे । গণিরী, আগ্‌গান্ত । हिं अरणि, अगेथ, गणिआरि । उत् अगिवथ । तें, चिरिनेलु चेट्टु । अस्य पर्य्यायाः,—गणिकारिका, श्रीपर्णं, कर्णिका, जया, तेजोमन्थः, हविर्मन्थः, ज्योतिष्कः, पावकः, अरणिः, वह्निमन्थः, मथनः, (र) जयः, (भा), गिरिकर्णिका (द्रव्याभि), पावकारणिः (शब्दमा), अग्निमथनः, तर्करी, वैजयन्तिका,

अरणीकेतुः श्रीपर्णी, कर्णिका, नादेयी, विजया, अनन्ता, नदीजा। अग्निमन्थो द्विधा क्षुद्रबृहद्भेदेन। तदुभयगुणाः—वीर्य्योष्णः, कटुः, तिक्तः, तुवरः, मधुरः, अग्निदः, श्वयथुपाण्डुकफवातहरः, मलरोधविषाम-मेदोरोगहरश्च। लघुस्तु लेपने उपनाहे शोफे च हितः। वै.निघ.। भा.पू.१भ.ग.व.। च.सू.४अ. २६ दश। अग्निवधू इति पूर्व्वदेशे. इति उ.। सु.सू. ३९ अ। संशोधने। वा उ. २०अ। सर्जवृक्षे।

**अग्निमयः।** पुं। श्वेतवृहद्दारके। শ্বেত বিচ-তাড়ক। मं श्वेत वरधारा। वै निघ.। श्वेतवृद्धा-याम्।

**अग्निमान्द्यम्।** क्ली। मन्दाग्निनामकरोग-विशेषे। মন্দাগ্নি। तस्य कारणमत्यम्बुपानादिसम्भूत-मजीर्णम्। तत्र स्वल्पापि मात्रा न पच्यते, कफज-रोगाश्च विविधा जायन्ते। तत्राग्नेः समानता-स्थापनं, विषमाग्नौ वायोरुपशमः, तीक्ष्णाग्नौ पित्तस्य, मन्दे च श्लेष्मणः शोधनं प्रतीकारः। च.द.। निदानं यथा—“अत्यम्बुपानाद् विषमाशनाच्च संधारणात् स्वप्नविपर्य्ययाच्च। कालेऽपि सात्म्यं लघु चापि भुक्तमन्नं न पाकं भजते नरस्य॥” तच्च अजीर्णं, षट्—कफादामाजीर्णं, पित्ताद्विदग्धाजीर्णं, वाताच्च विष्टब्धाजीर्णं, रसशेषात् रसशेषाजीर्णम्। दिवा-रात्रेण जीर्णात् दिनपाकि। षष्ठञ्च प्राकृतमिति। “तत्रामे गुरुतोत्क्लेदः शोथो गण्डाक्षिकूटगः। उद्गारश्च यथाभुक्तमविदग्धः प्रवर्त्तते॥ विष्टब्धे शूल-माध्मानं विविधा वातवेदनाः। मलवाताप्रवृत्तिश्च स्तम्भो मोहाङ्गपीड़नम्॥ विदग्धे भ्रमतृण्मूर्च्छा पित्ताच्च विविधा रुजः। उद्गारश्च सधूमाम्लः स्वेदो दाहश्च जायते॥ रसशेषेऽन्नविद्वेषः हृदयाशुद्धि-गौरवे। मूर्च्छा प्रलापो वमथुः प्रसेकः सदनं भ्रमः। उपद्रवा भवन्त्येते मरणं वाप्यजीर्णतः॥” मा. नि.। पथ्यं यथा—श्लैष्मिके वमनं पूर्व्वं पैत्तिके मृदु रेचनं। वातिके स्वेदनञ्चाथ यथावस्थं हितञ्च यत्॥ नानाप्रकारो व्यायामो दीपनानि लघूनि च। बहुकालसमुत्पन्नाः सूक्ष्मा लोहितशालयः॥ विलेपी लाजमण्डश्च मण्डो युङ्गरसः सुरा। एणो वर्हौ शशो लावः क्षुद्रमत्स्याश्च सर्व्वशः॥ शालिञ्च-शाकं वेत्राग्रं वास्तूकं बालमूलकं। लशुनं वृद्ध-कुष्माण्डं नवीनकदलीफलम्॥ शोभाञ्जनं पटोलञ्च वार्त्ताकुं नलदम्बु च। कर्कोटकं कारवेल्लं वार्हतञ्च महार्द्रकम्। प्रसारणीं मेषशृङ्गं चाङ्गेरीं सुनिषण्णकं। धात्रीफलं नागरङ्गं दाडिमं यवपर्पटाः॥ अम्लवेतस जम्बीरमातुलुङ्गानि माक्षिकं। नवनीतं घृतं तक्रं सौवीरकतुषोदके॥ धान्याम्लं कटुतैलञ्च रामठं लवणार्द्रकं। यमानी मरिचं मेथी धान्यकं जीरकं दधि॥ ताम्बूलं तप्तसलिलं, कटुतिक्तौ रसावपि। मन्दानलेऽप्यजीर्णेऽपि पथ्यमेतन्नृणां भवेत्॥ अपथ्यमाह। विरेचनानि विण्मूत्रं वायुवेगविधारणं। अतिरिक्तञ्चाध्यशनं जागरो विषमाशनम्। रक्तस्रुतिं शमीधान्यं मत्स्यं मांसमुपोदिकां। जलपानं पिष्ट-कञ्च जाम्बवं सर्व्वमालुकम्॥ कूर्च्चिकां मोरटं क्षीरं किलाटञ्च प्रपानकं। तालास्थि-शस्यं तद्वालं स्नेहनं दुष्टवारि च॥ विरुद्धासात्म्यपानान्नं विष्टम्भीनि गुरूणि च। अग्निमान्द्येऽप्यजीर्णे च सर्व्वाणि परि वर्जयेत्॥

**अग्निमुखम्।** क्ली। कुसुम्भपुष्पे। कुंकुमे।

**अग्निमुखः।** पुं। चित्रकवृक्षे। চিতেগাছ। भल्लातकवृक्षे। ভেলা গাছ। वि.।

**अग्निमुखचूर्णम्।** अग्निमान्द्ये हितम्। हिङ्गु. १भा. वचा १ भा. पिप्पली ३भा. शुण्ठी ४भा. यमानी ५ भा. हरीतकी ६ भा. चित्रकं ७ भा. कुष्ठं ८ भा.। च.द. अग्निमा. चि.। प्रयोगा.। अजीर्णे। भैष.। सा.कौ। अन्यत् स्वल्पं वृहच्च उदरे। सा.कौ.रस.र.।

**अग्निमुखताम्रः।** पुं। रसोऽयमम्लपित्ताधि-कारे। “गन्धकेनाश्वमात्रेण सूततुल्येन निर्म्मिता। कज्जली या तया लेप्यं ताम्रपत्रन्तु तत्समम्॥ अर्ज्जुनत्वग्रसैः सार्द्धं पक्वोदुम्बरपल्लवे। आच्छाद्य कृष्णलवणैश्चूर्णैश्चापि च मृण्मये। अन्धमूषागतं ध्मातं तस्मिन्न भक्षयेन्नरः। शाणकं रक्तिकावृद्ध्या माससमात्रं प्रयोगतः। अम्लपित्तं क्षयं शूलं जरत्पित्तं सुदारुणम्। सप्तरात्रप्रयोगेण शरीरं निर्म्मलं भवेत्॥ रस.र.। पञ्चलवणैरिति प्रयोगा.।

**अग्निमुखमण्डुरम्।** क्ली। शोथाधिकारे। मण्डुरस्य १२प,गोमूत्रस्य १२श.। प्रक्षेपार्थं—पञ्च-कोलं देवदारु मुस्तकं त्रिकटु त्रिफला विड़ङ्गञ्च। प्रत्येकं चूर्णं १प.। मात्रा १तो.। अनु.तक्रम्। भैष.।

**अग्निमुखरसः।** पुं। रसोऽयं शूलरोगोपश-मनः। अत्र पारदगन्धकौ समौ पारदार्द्धं मृत-ताम्रम्, एकत्र शाकपत्ररसैः (সেগুন) क्षीरिणी-रसैश्च दिनैकं मर्द्दयित्वा लघुपुटेन पचेत्। अनुपा. यमान्यादिचूर्णमुष्णोदकेन पेयम्। रस.र.। द्वितीयो-ऽपि शूलाधिकारे। अयञ्च रसरत्नाकरघृतेन प्रायः तुल्य एव। अत्र बलिः गन्धः। गगनम् अभ्रं, अर्कः



ताम्रं। वेतसाम्लम् अम्लवेतसं। सवरमिति त्रिफ-लया सहितम्। भुजगवल्ली पर्णं। सलिलं बालकं (বালা)। कनकः धुस्तूरः। पटुगणः पञ्चलवणानि। वज्री स्नुही। मुष्टिः घण्टापाटलायां कुड़ी वा। र. सा. सं. २८२ योगः। रसरत्नाकरधृते द्वितीये। मुण्डितिका मुण्डीरी। महाराष्ट्री बृह्मयष्टिः বামুনহাটি।

**अग्निमुखलवणम्।** क्ली। अग्निमान्द्ये। अत्र—चित्रकमूलं, त्रिफला, दन्तीमूलं, त्रिवृन्मूलं कुष्ठम्; एषां प्रत्येकं चूर्णं समं, सर्व्वसमं सैन्धवं एकत्र स्नुहीक्षीरैः संभाव्य तत्काण्डमध्ये दत्त्वा पङ्केनालिप्य मृदावग्नौ क्षिपेत्॥ भैष.।

**अग्निमुखलोहः।** पुं, क्ली। अर्शसि हितः। त्रिवृन्मूलादीनां ८ पलम्। वारि द्रोणमितं (३२ श.)। पादावशिष्टः क्राथः कर्त्तव्यः। अथ लौहपात्रे २४प. घृतमुष्णीकृत्य तत्र लौहस्य १२ प. दत्त्वा क्राथेन सह पचेत्। घनीभूते अवतार्य्य विड़ङ्गचूर्णस्य ३प. त्रिकटुचूर्णस्य प्रत्येकं २प. त्रिफलाचूर्णस्य च ५प. शिलाजतोः १प. मधुनः २४प. शर्करायाः २४प. मिश्रयेत्। रसेन्द्र. चि.। चक्रमते त्रिवृता-दीनां प्रत्येकं पलाष्टकं ६४श. जले पक्त्वा पादशिष्टः क्राथो विज्ञेयः। अत्र अजझटा भूम्यामलकी। जटेति पाठे मूलकम्। अथ विड़ङ्गस्य पलत्रयं व्योषस्य च प्रत्येकं षट् तोलकं कल्कीकृत्य तत्, तथा स्वर्णमाक्षिकेण मनःशिलया विकङ्कतेन वा जारितं लौहचूर्णं १२प. घृतञ्च २४ प. तस्मिन् क्राथे दत्त्वा एकत्र पाच्यम्। घनीभूते शीतले च शर्करायाः मधुनश्च शरावत्रयं मिश्रयेत्। घृतेन पेयम्। च.द. अर्शः चि.। अग्निलौहं पश्य।

**अग्निमुखा।** स्त्री। भल्लातक्याम् (अ)। ভেলা। लाङ्गलिकायाम् (वि) ঈশলাঙ্গলীয়া।

**अग्निमुखी।** स्त्री। भल्लातक्याम्। ভেলা। मे. खचतुष्कं। रत्ना.। च.सू. ४अ. भेदनीये। लाङ्गलि-कायां, ঈশলাঙ্গলিয়া। मे.खचतुष्कं। भा. पू. २भ. ब्बी.व.। वाश्वटे। কাঁকড়া। रा. नि.व.४। भा.पू.ह.

**अग्निरजाः** / **अग्निरज्जुः** } पुं। इन्द्रगोपकीटे। আগুন পোকা। हे. च. ४। An insect of scarlet colour.

**अग्निरसः।** पुं। राजयक्ष्मणि हितः। अन्यद् चयकासे हितः। तयोः प्रथमः—वज्रहाटकगगनानां भस्मैकं द्वित्रिषट् क्रमात्। त्रिकण्टकरसैर्भाव्यं दिनान्ते तद्विचूर्णयेत्। गुञ्जामात्रं प्रयोक्तव्यं सज्वरे राजयक्ष्मणि। स्नुहीमूलञ्च जम्बीरद्रवैः स्यादनुपा-नकम्।...खादेत् विनिष्कम्...। हीरकस्य १भा. स्वर्णस्य २भा. रसस्य ३भा. गन्धकस्य च ६भा.। द्वितीयः—शुद्धसूतं द्विधा गन्धं कुर्य्याद्यत्नेन कज्जलीं। तयोः समं तीक्ष्णचूर्णं मर्द्दयेत् कतकद्रवैः। द्विया-मान्ते कृतं गोलं ताम्रपात्रे विनिःक्षिपेत। आच्छाद्यै-रण्डपत्रेण यामार्द्धेऽप्युष्णता भवेत्। धान्यराशौ न्यसेत् पश्चात् द्वियामान्ते समुद्धरेत्। संपेष्य गालयेद्-वस्त्रे सदृशो वारितरं भवेत्। त्रिकटु त्रिफला चैला जातीफललवङ्गकम्। एषाञ्च नवभागानां समं पूर्व्व-रसो भवेत्। संचूर्ण्यालोड़येत् क्षौद्रैर्भक्ष्यं निष्क-द्वयं द्वयम्। अयमग्निरसो नाम्ना क्षयकासनिकृन्तनः। इन्द्रवारुणिकामूलं भङ्गकणातिलैः सह। भक्षयेत् क्षयकासार्त्तो निष्कमात्रं प्रशान्तये॥ पारदस्य १भा. गन्धकस्य २भा.। द्वयोः समं तीक्ष्णलौहचूर्णं निर्म्मलीफलरसेन कन्यारसेन वा प्रहरद्वयं संमर्द्य गोलकङ्कृत्वा एरण्डपत्रैराच्छाद्य ताम्रपात्रे निवेश्य च धान्यराशौ प्रहरद्वयं अष्टरात्रं वा न्यसेत्। अथो-द्धृत्य गोलितं जलवद्भवेत्। त्रिकट्वादिचूर्णं मिलितं पूर्व्वचूर्णसमं (नवद्रव्यस्य ९भा.) ग्राह्यम्। रस.र.॥ भावप्रकाशे, कतकद्रवैः = कन्यकाद्रवैः। तथा द्वियामान्ते = अष्टरात्रात्। नवभागोन्मितैः भा.पाठः।

**अग्निरुहा।** स्त्री। मांसरोहिण्याम्। रा. नि. व. १२।

**अग्निरोहिणी।** स्त्री। मांसरोहिण्याम्। মাংসরোহিণী। वा.उ.३१अ.। तन्नामकक्षुद्ररोग-विशेषे। सा त्रिदोषजा। पित्तोल्बणैर्मलैः ज्वरवतः मांसदारणाः कक्षाप्रदेशेषु येऽग्निसदृशाः स्फोटा जायन्ते साऽग्निरोहिणीत्युच्यते। “मलैः पित्तोल्बणैः स्फोटा ज्वरिणो मांसदारणाः। कक्षाभागेषु जायन्ते येऽग्न्याभाः साऽग्निरोहिणी। पञ्चाहात्सप्तरात्राद्वा पक्षाद्वा हन्ति जीवित मिति”॥ एतस्य चिकित्सितं वा.उ. ३२अ. मृग्यम्।

**अग्निलोहः।** पुं। अग्निमुखापरनामकोऽर्शोघ्नोऽयं रसः। यथा—“त्रिवृच्चित्रकनिर्गुण्डीस्नुहीमुण्डिति-काझटाः। प्रत्येकशोऽष्टपलिका जलद्रोणे विपा-चयेत्॥ पलत्रयं विड़ङ्गस्य व्योषं कर्षत्रयं पृथक्। त्रिफलायाः पलं पञ्च शिलाजतुपलं न्यसेत्॥ दिव्यौषधिहतस्यापि वैकङ्कतहतस्य वा। पलद्वादशकं

देयं रुक्मलौहस्य चूर्णितम् ॥ घृताच्चतुर्विंशतिभिर्मधुशर्करयोरपि। घनीभूते च शीते च दापयेदवतारिते। एतदग्निमुखं नाम दुर्नामान्तकरः परः ॥......मुण्डितिका मुण्डीरी। अश्मटा भूम्यामलकी। चित्रतादीनां रसेनापि पाकव्यवहारः। क्वाथः पादावशिष्टः। पाकावतरणकाले प्रक्षेपार्थं विडङ्गादीनां चूर्णम् त्रिफलायाश्च मिलित्वा पञ्चपलानि। शिलाजतु १प (शिवागुड़िकोक्तरीत्या शोधितम्)। दिव्यौषधिः स्वर्णमाक्षिक-मनःशिले। वैकङ्कती वनपालङ्कः। रुक्मलौहं वज्रपाण्ड्वादि। तच्च रसायनोक्तरीत्या जारणपुटनादिना सूक्ष्मचूर्णितं। घृतात् चतुर्विंशतिपलानि मधुशर्करयोरपि प्रत्येकं चतुर्विंशतिः। तप्तपूते लौहं दत्त्वा पश्चात् शर्करासहितं क्वाथं दत्त्वा पाकः कार्य्यः। अवतारणसमये विड़ङ्गादिचूर्णप्रक्षेपः। शीते पर्य्युषिते च मधु देयं। रस. र. अर्शः-चि.।

**अग्निवक्त्रः** । पुं। भल्लातकवृक्षे। ভেলাগাছ। मद. व. १। चित्रकक्षुपे। চিতেগাছ।

**अग्निवती** । स्त्री। आगिया इति लोकप्रसिद्धौषधिविशेषे।

**अग्निवर्द्धकः (नः)** । त्रि। अग्न्युद्दीपके, मरिचादौ। आग्नेयद्रव्यमात्रे। अग्निवृद्धिकर। राज.।

**अग्निवलवृद्धिः** । स्त्री। जठरानलस्य वृद्धौ। च.द.अर्शः-चि.।

**अग्निवल्लभः** । पुं। Resin. सर्ज्जयोनिशालविशेषे। राले। धुना। हे.च.। रा नि.व. ९१२। मद.व.३। See सर्जः।

**अग्निवल्ली** । स्त्री। लताविशेषे। र. सा. सं. अभिन्यासज्व. स्वच्छन्दनायकरसे।

**अग्निबाहः (हुः)** । पुं। धूमे। हे.च.४का.।

**अग्निविकारः** । पुं। तन्नामकरोगभेदे। स चतुर्भेदः। शार्ङ्ग.पू.७अ.। See अग्निः

**अग्निविवर्द्धनः** । त्रि। यमान्यादौ।

**अग्निविसर्पः** । पुं। See अग्निवीसर्पः।

**अग्निवीजम्** । क्लीं। सुवर्णे। त्रिका.।

**अग्निवीजः** । पुं। अग्निमन्थे।

**अग्निवीर्य्यम्** । क्लीं। स्वर्णे। रा. नि. व. ३।

**अग्निवीसर्पः** । पुं। (Pain from a boil.) विसर्पभेदे—यत्र सर्व्वाङ्गं दीप्ताङ्गाराकीर्णमिव भवति, शरीरे च यं यं देशं प्रति चलति स स देशः शान्ताङ्गारवदसितो नीलो रक्तो वा भवति। तथा झटिति अग्निदग्ध इव स्फोटैराचितो भवति। अङ्गव्यथा संज्ञानाशः निद्रानाशश्च भवति। लक्षणं—वातपित्तज्वरच्छर्दिमूर्च्छातीसारतृड्भ्रमैः। अस्थिभेदाग्निसदनतमकारोचकैर्युतः। करोति सर्व्वमङ्गञ्च दीप्ताङ्गारावकीर्णवत्। यं यं देशं विसर्पश्च विसर्पति भवेत्स सः। शान्ताङ्गारासितो नीलो रक्तो वाशु च चीयते। अग्निदग्ध इव स्फोटैः शीघ्रगत्वाद्द्रुतश्च सः। मर्म्मानुसारी वीसर्पः स्याद्वातोऽतिबलस्ततः। व्यथेताङ्गं हरेत्संज्ञां निद्राञ्च श्वासमीरयेत्। हिक्काञ्च स गतोऽवस्थामीदृशीं लभते न ना। क्वचिच्छमारतिग्रस्तो भूमिशय्यासनादिषु। चेष्टमानस्ततः क्लिष्टो मनोदेहश्रमोद्भवाम्। दुष्प्रबोधोऽश्नुते निद्रां सोऽग्निवीसर्प उच्यते ॥ वा.नि.१३अ।

**अग्निवृद्धिः** । स्त्री। अग्निदीप्तौ। क्षुधावृद्धि।

**अग्निशिखम्** । क्लीं। सुवर्णे। रा.नि.व १३। Safflower (Carthamus tinctorius) कुसुम्भपुष्पे। कुसुमफूल। Saffron (Crocus sativus) कुङ्कुमे। भा.पू.२भ.। मद.व. ३।

**अग्निशिखः** । पुं। कुंकुमवृक्षे। কুঙ্কুমগাছ। रा.नि.व.१२। लाङ्गलिकावृक्षे। বিষলাঙ্গলিয়া গাছ। रत्ना.। कुसुम्भवृक्षे। কুসুম গাছ। श.र.। पूतिकरञ्जे। নাটা। शूरणे। ওল গাছ। प.मु.।

**अग्निशिखा** । स्त्री। (Gloriosa superba). लाङ्गलिकौषधौ। বিষলাঙ্গলিয়া। हिं करिहारी। भा.पू,१भ.गु.व.।

**अग्निशेखरम्** । क्ली. पुं। कुङ्कुमे। रा. नि. व. १२। कुसुम्भपुष्पे। लाङ्गलीवृक्षे। विशल्यानामशाकभेदे।

**अग्निष्टोमः** । पुं। सोमलतायाम्। सु. चि. २९अ,।

**अग्निष्ठः** । पुं। तण्डुलादिभर्ज्जनार्थं लौहमयपात्रे। তাওয়া।

**अग्निसंस्कारः** । पुं। अग्निदाहकर्म्मणि।

**अग्निसंस्पर्शा** । स्त्री। पर्पटीनाम-सुगन्धद्रव्ये। सा च उत्तरदेशे प्रसिद्धा। भा.पू. १भ.क.व.।

**अग्निसन्दीपनः** । त्रि। अग्निवर्द्धके। क्षुधावर्द्धके। Increasing appetite.



**अग्निसन्दीपनरसः** । पुं। अग्निमान्द्ये रसः। यथा—पञ्चकोलं, मरिचं, पञ्चलवणं, यवक्षारः, टङ्कणं, सर्जिक्षारः, जीरकं, कृष्णजीरकं, यमानी, वचा, मधुरिका, हिङ्गु, चित्रकं, जातीफलं, कुष्ठं, जातीकोषः, त्रिजातकं, तिन्तिड़ीत्वग्भस्म, अपामार्गभस्म, विषं, गन्धकं, पारदः, अभ्रं, लौहं, रङ्गं, लवङ्गं, हरीतकी चेत्येषां प्रत्येकमेकैको भागः अम्लवेतसस्य २भा. शंखभस्मनश्च ४भा.। भैष.।

**अग्निसम्भवः** । पुं। (Wild saffron) अरण्यकुसुम्भवृक्षे। वनकुसुम। रा.नि.व. ४। अग्निजारवृक्षे। रा.नि.व. ६।

**अग्निसहायः** । पुं। वन्यपारावते। घुघु। मं होगला पक्षी। रा.नि.व. १९। वायौ।

**अग्निसादः** । पुं। अग्निमान्द्ये। मन्दाग्नि। सा.को.ज्व.चि.।

**अग्निसाध्यः** । त्रि। अग्निदाहसाध्ये। च. द. अर्शः चि.।

**अग्निसारम्** । क्ली। (A sort of collyrium). रसाञ्जने। रा.नि.व. १३।

**अग्निसारा** । स्त्री। फलशून्यशाखायाम्। रा. नि.व. २। मञ्जर्य्याम्।

**अग्निसुन्दररसः** । पुं। अजीर्णाधिकारे रसः। यथा—टङ्कणं भागमेकञ्च मरिचञ्च द्विभागिकम्। आर्द्रकस्य रसेनैव भावना चात्र दीयते ॥ अनु. लवङ्गम्। प्रयोगा.।

**अग्निसेवनम्** । क्ली। अग्निसेवायाम्। আগুন-পোওয়ান। गुणाः—शीतवातस्तम्भकफवेपथुघ्नं रक्तपित्तकरम् आमाभिष्यन्दपाचनञ्च। मद.१३व.।

**अग्निहानिः** । पुं। अग्निमान्द्ये। वा.नि.१३अ.।

**अग्निहोत्रः** । पुं। घृते। अग्नौ च। मे.।

**अग्न्या** । स्त्री। तित्तिरपक्षिणि। गवि। हला.।

**अग्न्याशयः** । पुं। पक्वाशये। পাকাশয়।

**अग्रम्** । क्ली। पलपरिमाणे। "परिमाणे पलस्य च"। मे. रद्विकं। उच्चाग्रये।

**अग्रकाण्डः** । पुं। काण्डाग्रे।

**अग्रजः** । पुं। काकविशेषे। भासपक्षिणि।

**अग्रजङ्घा** । स्त्री। The fore part of the leg. जङ्घाग्रभागे। हे.च.।

**अग्रधान्यम्** । क्लीं। धान्यविशेषे। জনার। বাজরা।

**अग्रपर्णी** । स्त्री। A plant cowhage. शूकशिम्ब्याम्। আলাকুশী। प.मु.। See आत्मगुप्ता। अजलोमा वृक्षे च। र.।

**अग्रपाणिः** । पुं। हस्ताग्रे।

**अग्रपुष्पः** । पुं। वेतसवृक्षे। বেতগাছ। प.मु.।

**अग्रमांसम्** । क्लीं। The heart. हृदये। वुक्कायाम्। हृदयान्तर्गतमांसवृद्धिरूपरोगविशेषे। অগ্রমাস। सु.शा.।

**अग्रलोद्यः** । पुं। चिञ्चोटकक्षुपे। চেঁচ্‌কো, চিঞ্চোড়মূল। गुणाः—गुरुपाकः, शीतलः, अजीर्णकरश्च। राज.।

**अग्रलोहिता** । स्त्री। चिल्लीशाके। रा.नि.व. ७।

**अग्रवीजः** । पुं। वीजाग्रवृक्षमात्रे। यथा कुरण्टादिः। हे. च.। A viviparous plant as the Gomphrœna globosa, &c.

**अग्रव्रीहिः** । स्त्री। प्रसाधिकायाम्। নবান্নের ধান। र. मा.।

**अग्रहायणः** । पुं। मार्गशीर्षमासे। অগ্রহায়ণ মাস।

**अग्रिमा** । स्त्री। लवलीवृक्षे। লোণা গাছ इति गौड़े। श. च.।

**अग्रुः** । स्त्री। अङ्गुली। আঙুল।

**अग्र्या** । स्त्री। त्रिफलायाम्।

**अघनम्** । क्ली। दधनि। দই। हला.।

**अघविषः** । पुं। सर्पे।

**अघाटः** । पुं। अपामार्गे। रा.।

**अघ्ना** । स्त्री। गवि। গরু।

**अघ्न्याः** । स्त्री। स्त्रीगव्यां। গাভী।

**अघोरनृसिंहरसः** । पुं। सान्निपातिकज्वरे रसः। See घोरनृसिंहरसः।

**अङ्कः** । पुं। शरीरावयवे। কোল। रा. नि. व. १८। वा.चि. ७अ.। चिह्ने, रेखायाम्। पापे। दुःखे। मे. कद्विकम्।

**अङ्कतिः** । पुं। वायौ। त्रि। अग्नौ च। वि.।

**अङ्कनः** । पुं। अङ्कोटवृक्षे। আকোড় গাছ।

**अङ्कपादम्** । क्लीं । छागैणाद्यवयवविशेषे । वा. सू. १९अ. ।

**अङ्कपाली** । स्त्री । धात्र्याम् । धात्री । वेदिकाख्यगन्धद्रव्यविशेषे । "धात्रीवेदिकयोरपि ।" मे लचतुष्कं । आलिङ्गने । भ. ।

**अङ्कलेख्यः** । पुं । चिञ्चोड़वृक्षे । চেঁচ্‌কোমূল ।

**अङ्कलोड्यः** । पुं । चिञ्चोटकक्षुपे । চেঁচ্‌কো । See अग्रलोड्यः ।

**अङ्कस्थः** । पुं । क्रोड़स्थ वालके । কোলের ছেলে ।

**अङ्का ( ङ्को )** । स्त्री । मृदङ्गविशेषे । शब्दर. ।

**अङ्कुरः** । पुं । प्ररोहे । পোঁক । वा. उ. ३६ अ । अस्य पर्य्यायाः,—अभिनवोद्भिद् (अ) । उद्भिदः, प्ररोहः, अकुरः, (रा) । रोहः (ह) । जले । रुधिरे । लोम्नि । मुकुले । फले । सर्व्वत्र मे. रत्निकं । अभिनवोद्भिदि । मे. ।

**अङ्कुरकः** । पुं । पक्षिवासस्थाने । পাখীর বাসা ।

**अङ्कुशः** । पुं । सृण्यो । ডাঙশ । हला. ।

**अङ्कूरः** । पुं । अङ्कुरे । हे. च. ४ का. ।

**अङ्कोटः(ठः)** । पुं । अङ्कोटकवृक्षे । र. मा. । (सु.मि.अ. ३६) । भा. पू. १भ. गु.व. ।

**अङ्कोटकः** । पुं । (Alangium Hexapetalum) स्वनामख्यातवृक्षे । আঁকোড় গাছ, ধলা আঁকোঁড় । हिं ढेरा । भा. । रा. नि. व. ९ । अस्य पर्य्यायाः,—निकोचकः (अ), निकोठकः (भ), अङ्कोलकः, वोधः, नेदिष्टः, दीर्घकीलकः (ज), अङ्कोठः, रामठः (र), कङ्कोलः, धलकः दृढ़कण्टकः (श), कोठरः, रेची, गूढ़पत्रः, गुप्तस्नेहः, पीतसारः, मदनः, गूढ़वल्लिका, पीतः, ताम्रफलः, दीर्घकीलः, गुणाढ्यकः, कीलकः, लम्बकर्णः, गन्धपुष्पः, रोचनः, विशालतैलगर्भः । अस्य गुणाः—कटुः, तीक्ष्णः, स्निग्धः, उष्णः, तुवरः, लघुः, रेचनः, क्रिमिशूलामशोफग्रहविषघ्नश्च । तत्फलगुणाः—शीतलं, स्वादु, श्लेष्मलं, वृंहणं, गुरु, वल्यं, विरेचनं, वातपित्तदाहक्षयास्रजित् । मद. व. १ । विषलूतादिदोषनुत् वातकफहरः शुद्धिकृच्च । रा. नि. व. ९ । च.द. ग्र.सा.चि. ।

**अङ्कोठवटकः** । पुं । रक्तातिसारे देय-वटके । यथा—पलमङ्कोठमूलस्य पाठां दार्व्वीञ्च तत्समाम् । पिष्ट्वा तण्डुलतोयेन वटकानक्षसम्मितान् ॥ छायाशुष्कांश्च तान् कुर्य्यात् तेष्वेकं तण्डुलाम्बुना । पेषयित्वा प्रदद्यात्तं पानाय * * * ॥ भा.म.ख. ।

**अङ्कोलः** । पुं । अङ्कोटकवृक्षे । আঁকোড়গাছ । रत्ना. । भा.म.ख. १भ. अतिसा.चि. । "अङ्कोलमूलकल्कः ।" वा. उ. ३८अ. ।

**अङ्कोलकः** । पुं । अङ्कोटवृक्षे । কাঁক্‌রোল । ওকড়া इति च र.सा.सं. ।

**अङ्कोलफलसङ्काशः** ।-पुं । फलविशेषे । পেস্তা इति लोके ।

**अङ्कोलतैलम्** । क्लीं । तन्नामकफलवीजतैले । আঁকোড়বীজের তৈল । गुणाः—"अङ्कोलतैलं वातघ्नमभ्यङ्गात्त्वग्रुजापहं । कफनाशकरं प्रोक्तं पूर्व्ववैद्यैर्महर्षिभिः ॥" वै.निघ. ।

**अङ्कोल्लः** । पुं । देवदारुणि । र.नि.व. २३ । वा. उ. ३८अ. ।

**अङ्कोल्लकः** । पुं । अङ्कोटवृक्षे । আঁকোড়গাছ । मद. व. १ ।

**अङ्कोल्लसारः** । पुं । मालवप्रसिद्ध-स्थावरविषप्रभेदे । A kind of poison. हे.च. ४का. ।

**अङ्गम्** । क्लीं । वोले । সুগন্ধ বোল । रा.नि.व. ६ । शरीरे । शरीरावयवे । रा.नि.व १८ । उपसर्जनभूते । हे.च. नानार्थः । पुं । भूमौ ।

**अङ्गगौरवम्** । क्ली । शरीरगुरुत्वे । গা-ভার । वा.नि. १३ अ. ।

**अङ्गग्रहः** । पुं । अङ्गवेदनायाम् । গা-ব্যথা । वा नि. १६अ. ।

**अङ्गग्लानिः** । स्त्री । Langour. देहजाड्ये । শরীরের জড়তা । वा. चि. २२अ. ।

**अङ्गघातः** । पुं । अङ्गाघाते । গায়েলাগা । Bodily pain.

**अङ्गचयः** । पुं । गुदवृषणयोर्मध्यभागे । वै.निघ. ।

**अङ्गचेष्टा** । स्त्री । अङ्गचालने । অঙ্গচালনা । वा.नि. १५ अ. ।

**अङ्गजम्** । क्लीं । रक्ते । मले । मे. जत्रिकं ।

**अङ्गजः** । पुं । केशे । रोगे । मांसधातौ । मदे । वि. ।

**अङ्गज्वरः** । पुं राजयक्ष्मणि । যক্ষা রোগ ।

**अङ्गणं** । क्लीं । अङ्गनभूमौ । উঠান্, আঙ্গিনা ।

**अङ्गतिः** । पुं । वायौ । अग्नौ । (श) ।



**अङ्गतापः** । पुं । शरीरोष्णतायाम् । গায়ের তাপ ।

**अङ्गदरणम्** । क्लीं । पित्तजन्यपीड़ायाम् ।

**अङ्गदाहः** । पुं । गात्रदाहे । গা-জ্বালা ।

**अङ्गना** । स्त्री । भार्य्या । मे.नत्रिकं । प्रियङ्गौ । भा. ।

**अङ्गनाप्रियः** । पुं । अशोकतरौ । र. मा. । हुमोत्पले । ওলট্-কম্বল । प.मु. ।

**अङ्गनाप्रिया** । स्त्री । प्रियङ्गुनामगन्धद्रव्ये । भा. पू. १भ क. व. ।

**अङ्गपाकता** । स्त्री । पित्तजन्यरोगे । পাকা ফোড়ার ন্যায় গাত্র-বেদনা ।

**अङ्गपीड़ा** । स्त्री । वायुजन्यरोगे । গা-ব্যথা ।

**अङ्गपूजितः** । पुं । अश्वतरे । मद. व. व. १२ ।

**अङ्गप्रसारणम्** । क्लीं । कायविस्तारे । গা-হাত মেলান । वा. नि. ४अ. ।

**अङ्गवली** । स्त्री । त्रिवली । ত্রিবলি ।

**अङ्गभङ्गः** । पुं । शरीरस्य भङ्गे । গা ভাঙা । वा. उ. २अ. । गुदवृषणयोर्मध्यभागे । रोगे । वायुरोगे ।

**अङ्गभेदः** । पुं । वायुरोगे । বায়ুজন্য গাত্রভঙ্গ ।

**अङ्गमर्द्दः** । पुं । गात्रवेदनायाम् । वा.सू.४अ ।

**अङ्गमर्द्दनम्** । क्लीं । गात्रपीटने । গা-কুটনো ।

**अङ्गमेजयत्वम्** । क्लीं । अङ्गकम्पने । গা-কাঁপা ।

**अङ्गरक्तः** । पुं । काम्पिल्लके । কমলাগুঁড়ি । अम. ।

**अङ्गरक्षिणी** । स्त्री । अङ्गत्राणे । সাঁজোয়া ।

**अङ्गरागः** । पुं । अङ्गलेपनद्रव्ये । यथा—कुङ्कुमादि-अनुलेपनद्रव्ये । গাত্ররঞ্জন দ্রব্য ।

**अङ्गरुहम्** । क्ली. । रोम्णि । লোম ।

**अङ्गरुहा** । स्त्री । लोम्नि । केशे । চুল ।

**अङ्गलाघवम्** । क्ली. । कायलघुत्वे । গা-হাল্‌কি । वा उ. १९ अ. ।

**अङ्गलेपः** । पुं । चन्दनादिद्रव्ये ।

**अङ्गलोड्यः** । पुं । Ginger (Amomum zinziber). आर्द्रके । আদা । चिञ्चोटकतृणे ।

**अङ्गवः** । पुं । शुष्कफले । शुष्कफल । श. च. ।

**अङ्गवस्त्रोत्था** । स्त्री । श्वेतयमान्याम् । যোয়ান ।

**अङ्गविकृतिः** । पुं । Apoplexy. अपस्माररोगे । रा. नि. व. २० ।

**अङ्गविभ्रंशः** । पुं । कायशैथिल्यरूप-वायुजरोगे । भा. ।

**अङ्गविक्षेपः** । पुं । अङ्गहारे । अङ्गचालने । वा. उ. २ अ. ।

**अङ्गशूलम्** । क्लीं । गात्रतोदे । গা-শূলন ।

**अङ्गशोथः** । पुं । कायशोफे । গা-ফোলা ।

**अङ्गशोषः** । पुं । वायुजरोगविशेषे ।

**अङ्गशोषणम्** । क्ली । अङ्गस्य शुष्कतायाम् । वा. उ. ३ अ ।

**अङ्गसङ्गम्** । क्लीं । मैथुने ।

**अङ्गसदनम्** । क्लीं । शरीरावसादे । वा. नि. १२ अ. ।

**अङ्गसादः** । पुं । अवसादे । हारा. ।

**अङ्गसुन्दरः** । पुं । दद्रुघ्नवृक्षे । দাদমর্দ্দন । अम. ।

**अङ्गसुप्तिः** । स्त्री । कायस्पर्शाज्ञतायाम् । शरीरस्वापे । গাত্রের অসাড়তা ।

**अङ्गसेनः** । पुं । अगस्तिद्रुमे । বাকস গাছ । रत्ना. ।

**अङ्गहर्षः** । पुं । रोमाञ्चे । वा. नि. ३ अ. ।

**अङ्गहारः** । पुं । अङ्गचालने ।

**अङ्गहीनः** । त्रि । विकलाङ्गे, काणादौ ।

**अङ्गारः** । पुं । निर्धूमाग्निपिण्डे । অঙ্গার । "दंहतः काष्ठसम्भूतोऽङ्गारः ।" वा.सू. ६अ. अरुणः । अङ्गारपूर्णपात्रे । हेमा. । कुरुण्टकवृक्षे । ঝাঁটীবিশেষ । পীতবর্ণ অম্লান বৃক্ষ । रत्ना. ।

**अङ्गारकः** । पुं । Yellow or white amaranth. कुरुण्टके । ঝাঁটীজাতি । अङ्गारे । আঙ্গার । मे.कचतुष्कं । भृङ्गराजे । ভীমরাজ । रा.नि.व. ४ । भा.पू. १भ. गु. व. ।

**अङ्गारकतैलम्** । क्लीं । स्वनामख्यातविषमज्वरघ्नतैलविशेषे । यथा—मूर्व्वा लाक्षा हरिद्रे द्वे मञ्जिष्ठा सेन्द्रवारुणी । वृहती सैन्धवं कुष्ठं वचा मांसी शतावरी । आरनालाढ़केनैव तैलप्रस्थं विपाचयेत् । तैलमङ्गारकं नाम सर्व्वज्वरविमोक्षणम् ॥ इति रस.र. । पाकप्रकारः—तिलतैलं ८ श. मूर्व्वादि १ श. । काञ्जिकं १६ श. । प्रथमं

काञ्जिकेन पक्का पश्चात् कल्कद्रव्यञ्च पक्का समापयेत्। च. द.। इन्द्रवारुणी = राखाल-शशामूल। अन्यत् व्रणशोथे हितम्। मूर्च्छिततिलतैलं ४ श.। वर्व्वरी = वाबुईतुलसी। १२॥ श. वारि. ६४ श. पादशिष्टक्काथेन वर्व्वर्य्यादीनां १श. कल्केन समं पाच्यम्। च. द. व्रणशो. चि.। प्रोष्ठिका = मच्चिका।

**अङ्गारकमणिः**। पुं। Coral. प्रवाले। रा. नि.व १३।

**अङ्गारककर्कटी**। स्त्री। रोटिकायाम्। रुटी। अगाकड़ी रोटी लिटी इति हिन्दी। यथा—शुष्कगोधूमचूर्णन्तु साम्बु गाढ़ं विमर्द्दयेत्। विधाय वटकाकारं निर्धूमेऽग्नौ शनैः पचेत्॥ अङ्गारककर्कटी ह्येषा वृंहणी शुक्रला लघुः। दीपनी कफकृद्बल्या पीनसश्वासकासजित्॥ वैद्य. नि.। भा.।

**अङ्गारकुष्ठका**। स्त्री। हितावल्याम्।

**अङ्गारधानिका**। स्त्री। अङ्गारधारणपात्रे। साँजाल।

**अङ्गारधूपः**। पुं। अङ्गारेण यो धूपः हिङ्ग्वादिना प्रसिद्धः। वा. चि. ८ अ.।

**अङ्गारपरिपाचितम्**। क्ली। (Roasted food.) शूलादिपक्कमांसं। त्रि। अङ्गारपक्के।

**अङ्गारपर्णी**। स्त्री। भार्गी। वामणहाटी। र. सा सं.।

**अङ्गार(क)पुष्पः**। पुं। (Ingua.) जीवपुत्रद्रुमे। इङ्गुदी। जियापुता इति लोके। श. र.।

**अङ्गारपूरिका**। स्त्री। रोटके। रुटी।

**अङ्गारमञ्जरी** } **अङ्गारमञ्जी** स्त्री। A species of Bonduc or Bonducella. करञ्जविशेषे। श. र.। महाकरञ्जे। डहर-करञ्ज। रा नि व. ९।

**अङ्गारमणिः**। पुं। प्रवाले।

**अङ्गारवर्णी**। स्त्री। भार्ग्याम्। वामनहाटी।

**अङ्गारवल्लरी**। स्त्री। (Ovieda verticallata.) करञ्जविशेषे। नाटाकरञ्ज इति भाषा।

**अङ्गारवल्ली**। स्त्री। महाकरञ्जे, रक्तकरञ्जे च। भार्ग्याम्। वा. सू. १५ अ.। सुरसादि। भा पू. १भ। गुञ्जायाम्। कुँच। भा. पू अनेव.। कटुकरञ्जे। करञ्जवल्ल्याम। रक्तगुञ्जायाम्। भा. पू. १भ गु.व.।

**अङ्गारवृक्षः**। पुं। इङ्गुदीवृक्षे। भा. पू. १भ. वटा.। रत्ना.। पूतञ्जिया इति च।

**अङ्गारवेणुः**। पुं। रक्तवर्णवंशविशेषे।

**अङ्गारशकटी**। स्त्री। चुल्ल्याम्। चुलो।

**अङ्गारा**। स्त्री। हितावल्याम्। इङ्गुदीवृक्षे। प. मु.। जियापूता।

**अङ्गारिका**। स्त्री। The stalk of the sugarcane. इक्षुकाण्डे। আকগাছ। (Butea frondosa.) किंशुककोरके। পলাশকলি। मे. कचतुष्कं।

**अङ्गारितम्**। क्लीं। The early blossom of कंशक। पलाशकलिकोद्गमे। हारा.।

**अङ्गारिता**। स्त्री। लतामात्रे। चुल्ल्याम्। मे. तचतुष्कं।

**अङ्गिका**। स्त्री। कञ्चुके। काँचुली।

**अङ्गिरः**। पुं। तित्तिरपक्षिणि।

**अङ्गुणः**। पुं। वार्त्ताकी। বেগুন। श.र.।

**अङ्गुरिः(री)**। स्त्री। अङ्गुल्यां। पाणिपादाङ्गुल्याम्। হাত-পায়ের আঙ্গুল। अ. टी.।

**अङ्गुरीयः**। पुं, क्लीं। अङ्गुरीयके। আঙটি।

**अङ्गुलः** } **अङ्गुलिः** पुं, स्त्री। The thumb. करपादशाखायां। আঙুল। गजकर्णिकावृक्षे। হাতিশুঁড়ে। करिशुण्डाग्रभागे। हे. च.। वृद्धाङ्गुष्ठे। उ.। रा.नि.व. १८। अथाङ्गुष्ठप्रदेशिन्यौ मध्यमानामिका तथा। कनिष्ठा चेति पञ्च स्युः क्रमेणाङ्गुलयः स्मृताः॥ रा.नि.व.१८।

**अङ्गुलिकण्टकः**। पुं। नखे।

**अङ्गुलितोरणं**। क्लीं.। ललाटे चन्दनाद्यङ्कितोऽर्द्ध चन्द्रचिह्नविशेषे। তিলক-বিশেষ।

**अङ्गुलित्राणकम्**। क्ली। तन्नामकयन्त्रे। আঙ্গুস্তান বা আঙটা। वा. सू. २५अ। तस्य लक्षणं यथा, —"अङ्गुलित्राणकं दान्तं वार्चं वा चतुरङ्गुलम्। द्विच्छिद्रं गोस्तनाकारं तद्वक्त्रविवृतौ सुखम्॥" (आ)

**अङ्गुलिपञ्चकम्**। क्लीं। कराङ्गुलिपञ्चकं—यथा, अङ्गुष्ठतर्जनीमध्यमानामिकाकनिष्ठम्।

**अङ्गुलिपर्व्व**। क्ली। अङ्गुलिग्रन्थौ।

**अङ्गुलिफला**। स्त्री। श्वेतनिष्पावे। रा.नि.।



**अङ्गुलिमानम्**। क्लीं। अङ्गुल्या योजनपर्य्यन्तमाने। ८ यवैः = १ अङ्गुलिः। २४ अङ्गुलिभिः = १ हस्तः। ४ हस्तैः = १ दण्डः। २००० दण्डैः = १ क्रोशः। ४ क्रोशैः = १ योजनम्। इति।

**अङ्गुलिमुखं**। क्लीं। अङ्गुल्यग्रभागे।

**अङ्गुलिमोटनम्**। अङ्गुलिमर्द्दनजशब्दे। त्रिका.।

**अङ्गुलिसंज्ञा**। स्त्री। यवाग्वां। याउ।

**अङ्गुलिसम्भूतः**। पुं। नखे। নখ। रा.नि.व.१८।

**अङ्गुली**। स्त्री। गजकर्णिकायाम्। मे. लत्रिकं।

**अङ्गुषः**। पुं। नकुले। নেউল। वाणे। তীর।

**अङ्गुष्ठः**। पुं। वृद्धाङ्गुलौ। বুড়ো আঙুল। रा. नि.व. १८।३।

**अङ्गुष्ठाना**। स्त्री। अङ्गुष्ठे। अङ्गुलित्राणके।

**अङ्घ्रालजी**। स्त्री। अन्धालजीरोगे। See अन्धालजी।

**अङ्घ्रिः**। पुं। द्रुममूले। रा. नि. व. २। अम.। पादे। रा.नि.व.१८।

**अङ्घ्रिग्रन्थिकम्**। क्लीं। पिप्पलीमूले।

**अङ्घ्रिजिह्विकः**। पुं। दमनकवृक्षे।

**अङ्घ्रिनामकः(नामन्)**। पुं। दमनकवृक्षे। वृक्षमूले। रा. नि. व. २। अम.।

**अङ्घ्रिपः**। पुं। वृक्षे। रा.नि.व २। हला.।

**अङ्घ्रिपर्णिका** } **अङ्घ्रिपर्णी** स्त्री। पृश्निपर्ण्याम्। চাকুলিয়া। भा.पू.१.गु.व।

**अङ्घ्रिबला**। स्त्री। पृश्निपर्ण्याम्।

**अङ्घ्रिवल्लिः(का)** } **अङ्घ्रिवल्ली** स्त्री। पृश्निपर्ण्याम्। চাকুলিয়া। अ.टी.र.।

**अङ्घ्रिषः**। पुं। तन्नामकतालुरोगे। See अध्रुषः।

**अङ्घ्रिसन्धिः**। पुं। पादगुल्फे।

**अङ्घ्रिस्कन्धः**। पुं। गुल्फे। পায়ের গোড়ালি। हे च.।

**अङ्घ्रः**। पुं। पादगुल्फे।

**अचरणा**। स्त्री। योनिव्यापद्विशेषे, यत्र योनिः प्रथममेव मैथुनाद्विरता वीजं न गृह्णाति। एवमतिचरणापि योनिरतिमैथुनात् न वीजं गृह्णाति। मैथुनात् पूर्व्वमेव रजोनिःसारणात् अचरणातिचरणयोः वीर्य्यं नावस्थितं भवतीति केचित्। लक्षणम्—मैथुनेऽचरणा पूर्व्वं पुरुषादतिरिच्यते। बहुशश्चातिचरणा तयोर्वीजं न विन्दति। मा. नि.। अन्यच्च,—योन्यामधावनात् कण्डूं जाताः कुर्व्वन्ति जन्तवः। सा स्यादचरणा कण्डूा तयातिनरकाङ्क्षिणी॥ चरकः।

**अचलत्विट्**। पुं। कोकिले। श च।

**अचिकित्स्यः**। त्रि। चिकित्सितुमशक्यं।

**अचिकुरः**। पुं। खालित्ये। টাক্।

**अचिन्त्यजः**। पुं। पारदे। रा. नि. व, १३।

**अचिन्त्यशक्तिरसः**। पुं। रसोऽयं नवज्वरे व्यवस्थेयः। अस्य मात्रा रक्तिद्वयम्। अत्रानुपानं धान्यपिप्पलीक्काथः रसोऽयं बह्निपायां बालुकायन्त्रेण लघुपुटे पाच्यः। अत्र पारदादिस्वर्णपर्य्यन्तानामेकेको भागः, लौहस्यार्द्धो भागः, लौहार्द्धं वैक्रान्तं। द्रव्यसदायं भृङ्गराजरसेन संमर्द्य पर्पटीवत् पचेत्। ततो भावनाद्रव्याणां प्रत्येकं भावनात्रितयं दत्त्वा पचेत्। रसः गन्धकः प्र. २ मा. कज्जली कार्य्या। अथ भृङ्गराज-केशराज-निर्गुण्डी (নিশিন্দা), मण्डूकी (থুলকুড়ি), ग्रीष्मसुन्दरकः (গিমা), अपराजितामूलं, शालिञ्चः, कालमारिषः (কাঁটানটে), सूर्य्यावर्त्तश्चेति द्रव्याणि। एषां प्र. रसं ४ मा. तेन मिश्रयित्वा पश्चात् स्वर्णमाक्षिकं १मा. मरिचचूर्णं १ मा. दत्त्वा च मुद्गाभा वटी कार्य्या। भैष. ज्व. चि।

**अचिन्त्यात्मा**। पुं। परमात्मनि।

**अचिरपल्लवः**। पुं। सप्तपर्णवृक्षे। प. मु.।

**अचिरप्रभा**। स्त्री। चपलायाम्। বিদ্যুৎ।

**अचेतनः**। त्रि। जड़े। सेन्द्रियं चेतनं द्रव्यं निरिन्द्रियमचेतनम्। च.।

**अचेलः**। पुं। वस्त्रहीने। উলঙ্গ।

**अचैतन्यः**। त्रि। चैतन्यरहिते।

**अच्छः**। पुं। गुन्द्रे। ভল্লূকে। स्फटिके। मे. छद्विकम्।

**अच्छभल्ल(ल्लुकः)**। पुं। भल्लूके। ভালুক। रा. नि. व. १९। रत्ना.।

**अच्छर्दिका**। स्त्री। वान्तौ। रा. नि. व. २०।

**अच्छलः**। पुं। तिलकल्के।

**अच्छिन्नपत्रः**। पुं। शाखोटवृक्षे। শেওড়া গাছ। युक्तपत्रवृक्षमात्रे।

**अच्छुकः** । पुं । तन्नामकरञ्जनपुष्पवृक्षे । আচ ফুলের গাছ । तिनिशवृक्षे । प. मु. ।

**अच्युतावासः** । पुं । अश्वत्थवृक्षे । रा. नि व. ११ । उदुम्बरवृक्षे ।

**अजः** । पुं । छागे । भा. पू. । स्वर्णमाक्षिके । हिं. च. । तन्नामकौषधिविशेषे, अजशृङ्गीति ख्याते । अजनामकौषधिरजशृङ्गीति विज्ञायते । च. चि. १अ. ।

**अजकर्णः** } पुं । छागकर्णवत्पत्रशालतरुविशेषे । असन इति र. मा. ।
**अजकर्णकः** }

शालसर्ज इति रत्ना. । पीतशाल इति च नाम्ना प्रसिद्ध । আসনা, পিয়াশাল । हिं आसन् । गुणाः—कटुतिक्तकषायः उष्णवीर्य्यः कफपाण्डुकर्णरोगप्रमेहकुष्ठविषव्रणघ्नश्च । भा. पू. १भा. वटा. व । सर्जवृक्षे । रा. नि. व ९ । महासर्जतरौ शालभेद एव । सु. सू. अ. ३८, ५ गणः ड । /

**अजका** । स्त्री । अजागलस्तने । छागपुरीषे । तन्नामकक्षणगतशोणितजनेत्ररोगविशेषे । आताम्रपिच्छिलास्रस्रदाताम्रपिटिकातिरुक् । अजाविट्सदृशोच्छ्रायका शार्णीविवर्ज्यास्त्वजाजका । वा. उ १०अ. ।

**अजकाजातम्** । क्ली । नेत्रतारकगतरोगविशेषे । तस्मात्र व्यथा, रक्तता, पूयस्रावश्च नेत्रयोर्भवति । लक्षणं—अजापुरीषप्रतिमो रुजावान् सलोहितो लोहितपिच्छिलास्रः । विगृह्य कृष्णं प्रचयोऽभ्युपैति तं चाजकाजातमिति व्यवस्येत् ॥ मा. नि. ।

**अजकेशी** । स्त्री । नीलीवृक्षे । वै. निघ ।

**अजगन्धा** } स्त्री । वनयमान्याम् । नेत्रयमान्यां । अम. । रत्ना. । वन-
**अजगन्धिका** }

यमानी । ( Ocymum gratissimum. ) तत्पर्य्यायाः,—वस्तगन्धा, खरपुष्पा, अविगन्धिका, उग्रगन्धा, ब्रह्मगर्भा, ब्राह्मी, पूतिमयूरिका । गुणाः—कटुः तीक्ष्णा रुच्या हृद्या अग्निवर्द्धनी दृष्टिह्रासकरी लघुः शुक्रवातकफघ्नी च । मद. व. १ । वनतुलस्यां । वनतुलसी । हिं ववरी, ववइ । तिलौणि । मद. । मं रानतुलस, तिलवण । रा. नि. व. ४ । गुणाः—लघुः रुच्या हृद्या वातकफघ्नीच । मद व. १ । वनयमान्यां । च. द. वि. ज्व. । "नीलिनीमजगन्धाञ्च ।" फीफान्दी, वनयमानीति । च. सू. ४अ. च. सू २ शिरोवि. । वा. चि. १५अ. । उ. २२ अ. ।

**अजगन्धिनी** । स्त्री । मेषशृङ्ग्याम् । গাড়লশিঙে । र. मा. ।

**अजगरः** । पुं । ( (Boa constrictor. ) सर्पविशेषे । मद. १२ । १०६ । विलेशय-मृगविशेषे । तत्पर्य्यायः,—शयुः, वाहसः (अ) । अयमर्शसि हितः । सु. सू. ४६अ ।

**अजगल्लिका** } स्त्री । वर्वरीवृक्षे । বাবুই তুলসী । भा. पू १भ. पु ।
**अजगल्ली** । }

क्षुद्ररोगान्तर्गतबालरोगविशेषे । स च कफवातजन्यो भवतीति । वा. उ. ३१ अ. । स्निग्धाः सवर्णाः ग्रथिता नीरुजा मुद्गसन्निभाः । पिटिकाः कफवाताभ्यां बालानामजगल्लिका ॥ मा. नि. क्षुद्ररो. ।

**अजघोषः** । पुं । त्रयोदशविधसन्निपातज्वरान्यतमसन्निपातज्वरे । लक्षणं—छगलकसमानगन्धः स्यात्स्वरुजावान्निकृतगलरन्ध्रः । अजघोषसन्निपातादातामाक्षः पुमान् भवति ॥ भा. म. १भ ।

**अजटा** । स्त्री । (Flacourtia cataphracta.) भूम्यामलक्याम् । ভুঁই আম্‌লা । रसे. चि. अर्शः-अग्निमुख-लौहं ।

**अजड़ा** । स्त्री । भूम्यामलक्याम् । कपिकच्छ्वां । আলাকুশী, শুয়াশুয়া । भा. पू. गु. व. । कुमरिचे । লঙ্কামরিচ । अत्रि. ।

**अजड़ाफलम्** । क्ली । शूकशिम्बीफले । আলাকুশীফল । च. त्रि. २अ. हृष्यक्षीरे ।

**अजथ्या** । स्त्री । A plant, ( Yellow jasmin.) स्वर्णयूथिकायाम् । छागममूत्रे ।

**अजदण्डी** । ब्रह्मदण्डीवृक्षे ।

**अजनामकम्** । क्ली । माक्षिके । हे च. ।

**अजन्तुजग्धः** । त्रि । अकीटभक्षिते । च. द अ. सा. चि. कुटजपुटपाके ।

**अजप्रिया** । स्त्री । वदरीवृक्षे । কুলগাছ । भा. पू. १भ. फ. व ।

**अजबला** । स्त्री । कृष्णतुलस्याम् । কালতুলসী ।

**अजभक्षः** । पुं । बर्बुरीवृक्षे । বাবুই, বাবর । रा. नि. । (क्षा) क्षुद्रदुरालभायां । रा. नि. व. ४ ।

**अजमलः** । पुं । गोधूमे । गम् । प. मु. ।

**अजमांसम्** । क्ली । छागमांसे । See छागमांसम् । वा. सू. ६अ. ।

**अजमोदः** । पुं । दीप्यके । वा. सू. २५ अ. वमकादि.व । "कटुकफलाजमोदः ।"



**अजमोदा(दिका)** । स्त्री । ( Pimpinella Involucrata, Ligusticum ajwaen ; Syn. Apium involucratum.) स्वनामख्यातपण्यद्रव्ये । রাঁধুনী । हिं अज्मद् । अजमोदा इति महाराष्ट्रकर्णाटयोः प्रसिद्धा । तें वामं । तत्पर्य्यायाः,—खराह्वा, वस्तमोदा, उग्रगन्धा, मर्कटी, मोदा, गन्धदला, हस्तिकावरी, गन्धपत्रिका, मायूरी, शिखिमोदा, मोदाढ्या, वह्निदीपिका, ब्रह्मकोशी, विशाली, हयगन्धा, उग्रगन्धिका, मोदिनी, फलमुख्या, विशल्या । गुणाः—कटुरुष्णा रूक्षा कफवातघ्नी रुच्या शूलाध्मानारोचकजठरनाशिनी च । रा. नि. व. ६ । कटुः तीक्ष्णा दीपनी वातकफघ्नी उष्णा विदाहिनी हृद्या वृष्या बद्धमला लघुः नेत्ररोगकृमिच्छर्दिहिक्कावस्तिरुजापहा च । मद. व. २ । कटुः, तीक्ष्णा, आग्नेया, वातकफघ्नी, उष्णा, विदाहिनी, शुक्रवर्द्धनी, बल्या, लघुः, नेत्ररोगकृमिवमिहिक्कावस्तिशूलघ्नी च । भा. पू. १भ. ह. व. । सि. यो. अग्निमान्द्य-चि. । "त्रिकटुकमजमोदा ।" यक्ष्म-चि. एलादिमन्थे । तथा ग्रहणी-चि. चित्रक-गुड़े । च. सू. ४ अ ४५दश । वनयमान्यां । यमान्याम् । सु. सू. ३८अ. पि. व. । ड. । च. संग्रहणी-चि. चित्रकाद्यगुड़िकायां । महाषट्पलकघृते । ग्रहणी-कल्याणगुड़े ।

**अजमोदाख्या** । स्त्री । वनयमान्यां । नेत्रयमान्यां । रत्ना. । वृहल्लवङ्गादिचूर्णे । यमान्यां । रा. नि. ।

**अजमोदाद्यवटकः** । पुं । आमवाते हितः । अत्र यमान्यादिचूर्णं प्रत्येकं १ पलं, शुण्ठ्याः १० पलानि, वृद्धदारकस्य १० पलानि, हरीतक्याः ५ पलानि, सर्व्वचूर्णसमं गुड़ं दत्त्वा एकत्र विमिश्रयेत् । च. द. आ. वा. चि. ।

**अजम्भः** । पुं । भेके । श. र. ।

**अजया** । स्त्री । विजयायाम् । भङ्गा सिद्धिरिति भाषा । रा. नि. । [ रहिते ।

**अजरम्** । क्लीं । स्वर्णे । रा. नि. व. १३ । त्रि. । जरा-

**अजरकम्** । क्लीं । अजीर्णे । सि. यो. कास-चि. वृन्दः । च. द. पाण्डु-चि. योगराजे ।

**अजरा** । स्त्री । गृहगोधिकायां । টিকটিকি । जीर्णफञ्जीलतायां । वृद्धदारके । रा. नि. व. ७ । गृहकन्यायां । घृतकुमारी । रा नि. व ५ । आत्मगुप्ताख्याम् । আলাকুশী । भा. पू. १भ. गु. व. ।

**अजलम्बनम्** । क्लीं । यानुनमीतोऽञ्जने । श. च. । Antimony.

**अजलोमा(मी)** । पुं । शूकशिम्ब्याम् । আলাকুশী । र. मा. । Cowach. See आत्मगुप्ता । महौषधिविशेषे । See औषधिः ।

**अजवल्ली** । स्त्री । मेषशृङ्ग्याम् । মেড়াশিঙে ।

**अजशृङ्गिका** } स्त्री । A plant, described as a milky and thorny plant with a
**अजशृङ्गी** }

front crooked figure like a ram's horn. भा. पू. १भ. गु. व. ३७१ । মেড়াশিঙে, গাড়লশিঙী, ছাগলবেঁটে इति वङ्गभाषा । तिक्तशाकगणीय-स्वनामख्यातवृक्षे । मं मेषसिंग । कं उरियमर । रा. नि. व ९ । छागलविषाणिका उत्तमारणी सेिङ्कृतेति । सु. सू ३८अ. । तत्पर्य्यायाः—मेषवल्ली (भा), विषाणी (अ), विषाणिका, चक्रश्रेणी, अजगन्धिनी, मौर्व्वी, नेत्रौषधी, आवर्त्तिनी (र), मेषशृङ्गी, वर्त्तिका, सर्पदंष्ट्रिका, चक्षुष्या, तिक्तदुग्धा, पुत्रशृङ्गी, कर्णिका । गुणाः—कटुः तिक्ता कफार्शःशूलशोथघ्नी चक्षुष्या श्वासहृद्रोगविषकासकुष्ठघ्नी च । एतत्फलं तिक्तं कटूष्णं कफवातघ्नं जठरानलदीप्तिकृत् हृद्यं रुच्यं लवणरसं अम्लरसञ्च । रा नि. व. ९ । वातला पाके रुक्षा पित्तव्रणश्लेष्मनेत्रशूलघ्नी । मद. व. १ । भा पू. १भ. गु. व. । कर्कटशृङ्गे, स च पुत्रजीवसदृशस्तरुविशेषः । सु. सू. ३७ ड । भा. ४भ. रेवतीग्रह-चि. । मेषशृङ्ग्यां, कर्कटशृङ्ग्यां वा । सु. सू ३८अ. वल्लीपञ्चके । वा. चि. ८अ । "अजशृङ्गी-जटाकल्कम् ।" भा. पू. २भ. अने. व. ।

**अजश्री** । स्त्री । फटिकारिकायाम् । मा. नि. ।

**अजहा** । स्त्री । (Corpopogon pruriens). शूकशिम्ब्याम् । আলকুশী । अ. टी. ।

**अजक्षीरम्** । क्लीं । छागदुग्धे । वा. उ. १६ अ. । See छागदुग्धं ।

**अजक्षीरनाशः** । पुं । शाखोटवृक्षे । শ্যাওড়া গাছ । रा. नि व. ९ ।

**अजा** । स्त्री । छाग्याम् । तन्नामकमहौषधिविशेषे । तदाकृतिर्यथा,—"अजास्तनाभकन्दा तु क्षीरा तु क्षुपरूपिणी । अजा महौषधी ज्ञेया शङ्खकुन्देन्दु-पाण्डुरा ॥" सु. चि. ३०अ । See औषधिः ।

**अजागरः** । पुं । A plant (Eclipta or verbesino prostrata.) भृङ्गराजवृत्ते । भीमराज । श. र. । महासर्पे ।

**अजाघृतम्** । क्लीं । छागीघृते । गुणाः—अजाघृतञ्च चक्षुष्यं दीपनं बलवर्द्धनं । वृष्यं पाकि कटु प्रोक्तं कासश्वासक्षयापहम् । कफार्शोराजयक्ष्मणां नाशनं परमं मतम् ॥ वै. निघ. ।

**अजाजिकः(का)** । पुं । पीतजीरके । रा. नि. व. ६ ।

**अजाजी(जिः)** । स्त्री । (Cuminum cyminum.) Cumin seed. जीरके । कालाजीरा । हिं जीरा, कालाजीरा । स्थूलजीरके । बड़जीरे । रा.नि.व.६ । च.द. संग्रहणी-चि. वृहच्चुक्रे । काकोदुम्बरिकायाम् । यक्कडुमुर । श्वेतजीरके । भा. पू. १भ.ह.व. । च.द. संग्रहणी-चि. आयामकाञ्चिके । र. सा.सं.माणिक्यरसे । कृष्णजीरके । सि. यो. दिवारात्रिज्वरे द्वन्द्वः । "अजाजी गुड़संयुक्ता विषमज्वरनाशिनी ।"

**अजातक्रम्** । क्लीं । छागीतक्रे । गुणाः—अजातक्रं लघु स्निग्धं दाहगुल्मार्शोनाशनं । त्रिदोषशोथग्रहणीपाण्डुरोगहरं परम् ॥ वै. निघ. ।

**अजातदन्तः** । त्रि । मासषट्कातीतेऽपि यस्य शिशोर्दन्तोद्गमो न भवति ।

**अजादनी** । क्लीं । A small species of prickly night-shade. चुद्रदुरालभायाम् । रा.नि व. ४ ।

**अजादुग्धम्** । क्लीं । छागदुग्धे ।

**अजानयः** / **अजानेयः** } पुं । A horse of good breed. उत्तमाश्वे । जयदत्तः ।

**अजान्त्री** । स्त्री । A potherb (Convolvulus argenteus.) नीलवृक्षायाम् । नीलबोना, छागलबँटे । रत्ना. । तत्पर्य्यायाः—नीलवृक्षा, नीलपुष्पी, अतिलोमशा, नीलिनी, छगलान्त्री, अन्तःकोटरपुष्पी (र), वस्त्रान्त्री, वृद्धदारकः (रा) । गुणाः—कटुरसा, कासघ्नी, बीजदा, गर्भजननी च । रा. नि. व. ३ । वृद्धदारके । रा. नि. व. ३ ।

**अजापक्वम्** । क्लीं । पक्वघृतविशेषे ।

**अजापञ्चकम्** । क्लीं । यक्ष्मरोगे घृतम् । छागघृतं ४श. छागविष्ठारसः ४श. छागीदुग्धं ४श. छागदधि ४श. छागमूत्रं ४श. प्रक्षेपः यवक्षारः ८ पलं, यथाविधि पाच्यम् । च.द. यक्ष्म-चि. । भैष. ।

**अजापयः** । क्लीं । छागदुग्धे । वा.उ. १३ अ. ।

**अजाप्रिया** । स्त्री । वदरीवृक्षे । भा. फ. व. ।

**अजामांसम्** । क्लीं । छागमांसे । गुणाः—लघुः स्निग्धं किञ्चिच्छीतं रुचिप्रदं मधुरं पुष्टिकृत् बल्यं वातपित्तघ्नञ्च । वै. निघ. ।

**अजामूत्रम्** । क्लीं । छागीमूत्रे । गुणाः—कटु उष्णं रूक्षं नाड़ीविषघ्नं प्लीहोदरकफश्वासगुल्मशोफहरं लघु च । रा. नि. व. १५ । वा. उ. २४ अ. ।

**अजामेदः** । क्लीं । छागवसायाम् । वा. चि. ३अ. ।

**अजाविट्** । क्लीं । छागविष्ठायाम् । वा.उ. १०अ. ।

**अजाह्वा** । क्लीं । आत्मगुप्तायाम् । आलकुशी । अ.टी.भ. । See अजहा ।

**अजाक्षी** । स्त्री । काकोदुम्बरिकायाम् । काक्डुमुर । मं काला उम्बर । रा.नि.व. ११ ।

**अजाक्षीरम्** । क्लीं । छागीदुग्धे ।

**अजिततैलम्** । क्लीं । नेत्ररोगे हितं तैलम् । तिलतैलं अर्द्धशरावकं, मतान्तरे शरावकम् । आमलकीरसः ४श. दुग्धं ४श. कल्कार्थं यष्टिमधु पलमितम् । च.द नेत्ररोग-चि. । अकल्कोऽपि भवेत् स्नेहः यः साध्यः केवले द्रवे । स्नेहपाकविधौ यत्र प्रमाणं नेरितं क्वचित् । स्नेहस्य कुड़वं तत्र पचेत् कल्कपलेन तु ॥ इति प. प्र. ।

**अजिनम्** । क्लीं । मृगचर्मणि । अम. ।

**अजिनपत्रा** । स्त्री । A bat. चर्मचटयाम् । बाहुड़ा चाम्‌चिकी इति च लोके । रा. नि. व.१९ ।

**अजिनपत्रिका** । स्त्री । चर्मचटयाम् । बाहुड़, चाम्‌चिकी । हे.च. । पिचके ।

**अजिनपत्री** । स्त्री । जतुकायाम् । चाम्‌चिकी । रा. नि. व. १९ ।

**अजिनयोनिः** । पुं । An antelope. हरिणे । प. मु. ।

**अजिरः** । पुं, क्लीं । दर्दुरे । वाते । विषये । तनौ । सर्व्वत्र मे. रत्रिकम् ।

**अजिह्मः** । पुं । भेके । चिका. ।

**अजीगर्त्तः** । पुं । सर्पे ।



**अजीर्णम्** । क्लीं । अपाकरोगविशेषे । आमं विदग्धञ्च यत्तदजीर्णम् । भा.म.ख. १भ.अ.अ.मा. । तत्रात्यम्बुपान-विषमभोजन-वेगविधारण-दिवानिद्रारात्रिजागरणादिभिः कारणैरुत्पद्यते । उत्पन्ने चाजीर्णरोगे यथासमयं देहानुरूपमपि लघु भोजनं न परिपाकमेति । आदौ तत्त्रिविधम्, आम-विदग्धविष्टब्धाजीर्णभेदेन । तथान्नजरसशेषाहाररसजदिनपाकिलाङ्गेदत्रयमपि कल्पितम् । तेषु कफकोपादामाजीर्णं, पित्तकोपाद्विदग्धाजीर्णं, वायुकोपाच्च विष्टब्धाजीर्णं भवति । रसशेषतया रसशेषाजीर्णम् । माधवः । वा. नि. १२अ. । "गोमांसभक्षको मन्दजठराग्निर्भवेन्नरः । प्राजापत्यं चरेत्कृच्छ्रं अतिकृच्छ्रं तथैव च ॥" इत्यादि कर्म्मविपाकः । See अग्निमान्द्यम् ।

**अजीर्णकण्टकरसः** । पुं । रसोऽयं अजीर्णे प्रयोज्यः । रस. र. । र. सा. सं. । सा.कौ. । भा. भैष. । प्रयोगा. ।

**अजीर्णजरणः** । पुं । कर्च्चूरे । See कर्चूर ।

**अजीर्णी** । त्रि । अजीर्णरोगयुक्ते ।

**अजेयः** । पुं । अर्जुनवृक्षे । वै. निघ. ।

**अज्झटा** । स्त्री । भूम्यामलक्याम् । भूँई आमला । हिं भुइ आम्बरा । भा. पू. १भ. गु. व. ।

**अज्झलः** । पुं । कोकिले ।

**अञ्चकम्** । क्लीं । नेत्रे । रा.नि.व. १८ ।

**अञ्जनः** । पुं । गृहगोधिकायाम् । टिक्‌टिकी ।

**अञ्जनम्** / **अञ्जनकर्म** } क्लीं । Anointing or making clear, नेत्रप्रसाधने । काजल, आजनाई, आजन् इति भाषा । सुर्मा इति पश्चिमदेशे । "अञ्जनं क्रियते येन तद्द्रव्यं चाञ्जनं स्मृतम् ।" तत्र पञ्चविधम्—"सौवीरमञ्जनं प्रोक्तं रसाञ्जनमतः परम् । स्रोतोऽञ्जनं तदन्यच्च पुष्पाञ्जनकमेव च । नीलाञ्जनञ्चेति ।" तेषु सौवीरं धूमं रक्तपित्तहरञ्च । रसाञ्जनं विषघ्निक्काच्छिरोगघ्नं व्रणरोपणशोधनञ्च । स्रोतोऽञ्जनं पीताभं, पुष्पाञ्जनं सितं, नीलाञ्जनञ्च नीलवर्णमिति । वा. । तत्र षड्विधमिति कालिकापुराणे; यथा—"सौवीरं जाम्बलं तुत्थं मयूरं श्रीकरं तथा । दर्व्विका मेघनीलञ्च अञ्जनानि भवन्ति षट् ॥ सवद्रपस्तु सौवीरं जाम्बलं प्रस्तरं तथा । मयूरं श्रीकरं रत्नं मेघनीलञ्च तैजसम् ॥ घृततैलादियोगेन ताम्रादौ दीपवह्निना । यदञ्जनं जायते तु दर्व्विका परिकीर्त्तिता ॥" इति । गुणः—नेत्रनैर्मल्यकारित्वमेव । पुनस्त्रिविधं रसौ वटी तथा चूर्णमिति । "यथापूर्व्वं बलं तेषु स्नेहमाहुर्मनीषिणः ॥" इति । तत्र पुनः प्रत्यकं त्रिविधं यथा—"तत्प्रत्येकं त्रिधा प्रोक्तं लेखनं रोपणं तथा स्नेहनञ्चेति लिङ्गानि......। लेखनं क्षारतीक्ष्णाम्लरसैरञ्जनमुच्यते । नेत्रवर्त्मशिराजालश्रोतःशृङ्गाटकस्थितं । मुखनासाक्षिभिर्दोषमुत्क्षिप्य स्रावयेच्च तत् ॥ कषायं तिक्तकं चापि सस्नेहं रोपणं मतम् । स्नेहस्य शैत्याद्वर्ण्यं स्याद्दृष्टेश्च बलवर्द्धनं । मधुरं स्नेहसम्पन्नं तदञ्जनं स्यात्प्रसादनम् ॥ दृष्टि-दोषप्रसादार्थं स्नेहनार्थञ्च तद्धितं । एरण्डमात्रा वर्त्तिस्तु लेखनी स्यात्प्रमाणतः । सार्द्धैकरेणुकमिता रोपणी वर्त्तिरिष्यते । क्रियते स्नेहनीवर्त्तिर्द्विरेणुकमानया ॥ रसाञ्जनस्य मात्रा तु पिष्टा वर्त्तिमिता मता । चूर्णन्तु लेखनं वैद्यैर्द्विशलाकं प्रदीयते । रोपणं त्रिशलाकं स्यात् चतस्रः स्नेहनाञ्जने ॥" हेमन्ते शिशिरे मध्याह्ने ग्रीष्मे शरद्यपराह्ने वर्षासु वसन्ते च सर्व्वदैव काले इति । भा. पू.ख. २भ. । कज्जले । हे. च. । सि. यो. कामलाचि, रक्तपित्तचि. । स्रोतोऽञ्जने । भा. । सु. चि. २५ अ. । रसाञ्जने । च. द. अ. सा. चि. प्रियङ्ग्वादिः । रक्तपित्त-चि. । च. ३अ. प्रदेहषट्के । सम्भनयोगेच । भा. बालचि. । सौवीराञ्जने । वा.सू.१५अ. अञ्जनादिः । सु.सू.३८अ. । See अञ्जनविधिः ।

**अञ्जनः** । पुं । ज्येष्ठी नाम प्राणिविशेषे । टिक्‌टिकि ।

**अञ्जनकेशिका** / **अञ्जनकेशी** } स्त्री । हट्टविलासिनीनाम गन्धद्रव्ये । A vegetable perfume. नलिकानाम-गन्धद्रव्ये उत्तरदेशे प्रसिद्धे । भा.पू.१भ.क.व. ।

**अञ्जनगुड़िका** । स्त्री । विसूचिकायामौषधविशेषे । गुडपुष्परसः, अपामार्गबीजं, अपराजितामूलं, हरिद्रा, त्रिकटु च । अञ्जनं कर्त्तव्यम् । च. द. अग्निमान्द्यचि. ।

**अञ्जनत्रयम्(त्रितयम्)** । क्लीं । कालाञ्जनस्रोतोऽञ्जन-रसाञ्जनेषु । "कालाञ्जनसमायुक्तं स्रोतोऽञ्जनरसाञ्जने ।" रा.नि.व. २२ ।

**अञ्जननामिका** । स्त्री । वर्त्मगतनेत्ररोगभेदे । आञ्जनी, आजनाई । अत्र वर्त्ममध्ये रक्तेन ताम्रा सूक्ष्मप्रमाणा पिड़का भवति । वा.उ.८.१४अ. ।

"दाहतोदवती ताम्रा पिड़का वर्त्मसम्भवा। मृद्वी मन्दरुजा सूक्ष्मा ज्ञेया साञ्जननामिका॥" मा.नि.।

**अञ्जनभैरवः**। पुं। सान्निपातिकज्वरे रसः। यथा,—"सूत-तीक्ष्ण-कणा-गन्धमेकांशं जयपालकं। सर्व्वैस्त्रिगुणितं जम्भवारिणा च सुपेषितं। नेत्राञ्जनेन हन्त्याशु सर्व्वोपद्रवसुद्धतम्॥" भैष.। अत्र एकांशमिति प्रत्येकमेकांशम्। तीक्ष्णं तीक्ष्णलौहम्। र.सा.सं.सान्निपा.ज्व.। अस्याञ्जनं विधिः।

**अञ्जनयुग्मम्**। स्त्री। स्रोतोऽञ्जने रसाञ्जने च। वा. सु. प्रियङ्ग्वादिः।

**अञ्जनरसः**। पुं। सान्निपातिकज्वरे नस्यम्। इह ईशः पारदः। मरिचचूर्णं समम्। र. सा. सं. ज्व. चि.। अन्यः सान्निपातिकज्वरदाहे। तत्र वाह्लिकं हिङ्गु। रसकं स्फटिकारी।

**अञ्जनविधिः**। पुं। नेत्रप्रसाधनभेदे। यथा, "अथ सम्पक्वदोषस्य प्राप्तमञ्जनमाचरेत्। अञ्जनं क्रियते येन तद्द्रव्यं चाञ्जनं मतम्॥ रसो वटी तथा चूर्णमिति त्रिविधमञ्जनम्। यथापूर्व्वं बलं तेषु श्रेष्ठमाहुर्मनीषिणः॥ तत्प्रत्येकं त्रिधा प्रोक्तं लेखनं रोपणं तथा। स्नेहनञ्चेति"। तेषु लेखनं क्षारतीक्ष्णाम्लरसैरञ्जनं नेत्रवर्त्मादिदोषहरम्। रोपणं सस्नेहं कषायं तिक्तं दृष्टिबलवर्द्धनञ्च॥ मधुरं स्नेहसम्पन्नं स्नेहनं नेत्रस्नेहनार्थम्। हरेणुमानां कुर्व्वीत वटीं तीक्ष्णाञ्जने भिषक्। रसक्रियानूत्तमा स्यात् त्रिविड़ङ्गमिता मता। मध्यमा सा द्विविड़ङ्गा हीना त्वेकविड़ङ्गिका॥ शलाका स्नेहने चूर्णे चतस्रः प्राहुरञ्जने। रोपणे तासु तिस्रः स्युस्ते उभे लेखने स्मृते॥ मुखयोः कुञ्चिता श्लक्ष्णा शलाकाष्टाङ्गुलोन्मिता। अश्मजा धातुजा वा स्यात् कलायपरिमण्डला। सुवर्णरजतोद्भूता शलाका स्नेहने स्मृता॥ ताम्रलोहाश्मसञ्जाता शलाका लेखने मता॥ अङ्गुलीतु मृदुत्वेन रोपणे कथिता बुधैः॥ अथानुन्मीलयन् दृष्टौ अन्तःसञ्चारयेच्छनैः। अञ्जिते वर्त्मनी किञ्चित् चालयेच्चैव-मञ्जनं। अपेतौषध-सम्बन्धं निर्वृतं नयनं यदा। व्याधिदोषत्तु योग्याभिरद्भिः प्रक्षालयेत्तदा। दक्षिणाङ्गुष्ठकेनाक्षि ततो कामं सवाससा। ऊर्द्धवर्त्मानि संगृह्य शौध्यं वामेन चेतरत्। निशि स्वप्ने न मध्याह्नपानान्नोष्णागतस्त्रिभिः। अक्षिरोगाय दोषाः स्युर्वर्द्धितोत्पीड़ितद्रुताः। प्रातः सायञ्च तच्छान्तेरभ्रकेऽतोऽञ्जयेत् सदा। कण्डूजाड्येऽञ्जनं तीक्ष्णं धूमं वा योजयेत् पुनः। तीक्ष्णाञ्जनाभितप्ते तु चूर्णं प्रत्यञ्जनं हितं। नाञ्जयेद् भीत-वमित-विरिक्ताशितरोगिणां। क्रुद्धज्वरितभ्रान्ताक्षि-शिरोरुक्शोषजागरे। अदृष्टेऽर्के शिरःस्नाते पीतयोर्धूममद्ययोः। अजीर्णेऽग्न्यर्कसन्तप्ते दिवास्वप्ने पिपासिते। निर्व्वाते तर्पणं योज्यं शुद्धयोर्मूर्द्धकाययोः। काले साधारणे प्रातः सायं वोत्तानशायिनः। यवमाषमयीं पालीं नेत्रकोषाद्बहिः-समां। व्राङ्गुलोच्चां दृढां कृत्वा यथास्वं सिद्धमावपेत्॥ भा.।

**अञ्जनादिगणः**। पुं। अञ्जनफलिनीमांसीपद्मोत्पलरसाञ्जनमधुकनागाह्वरूपो वर्गः। स च विषान्तर्दाहपित्तघ्नः। वा.सू.१५ अ.। सौवीराञ्जनं, रसाञ्जनं, नागकेशरपुष्पं, प्रियङ्गुः, नीलोत्पलं, वीरणमूलं, नलिनं, मधुकं, पुन्नागश्चेति। सु.सू.३८अ.।

**अञ्जनाधिका** }
**अञ्जनिका** } स्त्री। कृष्णकार्पासक्षुपे। See कालाञ्जनी। अञ्जन्याम्। আজনাই। अञ्जनी लेपकारिणी। हारा.। हे.च. ४ का.। क्षुद्रमूषिकायाम्।

**अञ्जनाम्भः**। क्ली। अञ्जनजले। Liquid collyrium.

**अञ्जनिकः**। पुं। गन्धरास्नायाम्।

**अञ्जनी**। स्त्री। कटुकायाम्। कालाञ्जन्यां। रा. नि. व. ४।

**अञ्जलिः**। पुं। प्रसृतिद्वये, ३२ तो प प्र. १ख। कुड़वमाने। रत्ना. नानार्थः। भा. उ. वाजी.। करसम्पुटे। मे. लत्रिकम्।

**अञ्जलिका**। स्त्री। लज्जालुकायाम्। क्षुद्रमूषिकायाम्। जटा.।

**अञ्जलिकारिका**। स्त्री। (Mimosa natans.) लज्जालुकायाम्। रा. नि.व. ५। भा.पू.गु.व। (Lycopodium imbricatum.) वराहक्रान्तायाम्। वराक्रान्ता।

**अञ्जलिनी**। स्त्री। लज्जालुकायाम्।

**अञ्जिष्ठः**। पुं। सूर्य्ये। उ।

**अञ्जीरः**। पुं। Ficus carica, Psidium pomiferum.) स्वनामख्यातवृक्षे। বড় পেয়ারাগাছ। हिं आँजीर। तत्पर्य्यायः,—मञ्जुलं, काकोदुम्बरिकाफलं। फलगुणाः—शीतलं स्वादु, गुरु, रक्तपित्तवातघ्नं क्रिमिशूल-हृत्पीड़ा-कफ-मुखवैरस्य-नाशित्वञ्च। मद. व. ६।



**अटरुषः**। पुं। (Justicia adhatoda.) वासकवृक्षे। र.सा.सं. सूतिकारिरसे, कन्दर्पसारतैले च। वा.चि. २अ.। See वासकः।

**अटरूषः** }
**अटरूषकः** } पुं। वासकवृक्षे। र.मा.। च.द. रक्तपित्तचि.।

**अटवी**। स्त्री। अरण्ये।

**अटवीलता**। स्त्री। कुष्माटवृक्षे। कुम्भाड़ुया इति रत्ना.।

**अटिः**। पुं। शरारिपक्षिणि। हला.।

**अट्टम्**। क्ली। अन्ने। शुष्के च। मे टद्विकं।

**अट्टः**। पुं। क्षौमे। पट्टवस्त्रे। द्वितल-इष्टकगृहे। দোতলা কোটাঘর।

**अट्टनम्**। क्ली। अस्त्रभेदे। त्रिका.।

**अट्टहासः(कः)**। पुं। (Jasminum multiflorum.) कुन्दपुष्पवृक्षे। কুঁদ ফুলের গাছ। रा. नि. व. १०।

**अट्टालकः**। पुं। उपरितल-गृहे। দোতলাঘর।

**अट्टालिका**। स्त्री। राजोचित-गृहे। ভাল কোটাবাড়ী।

**अड़गजः**। पुं। चक्रमर्द्दे। চাকুন্দে। See चक्रमर्द्दः।

**अड़ङ्कः**। पुं। गोधूमे।

**अड़हुः**। पुं। लकुचवृक्षे।

**अणुः**। पुं। सूक्ष्मधान्ये। अणुर्व्रीहिविशेषे स्यात्। मे. णद्विकं। चीनधान्ये।

**अणुज्योतिः**। क्ली। लोकदृष्टौ। वा. शा. ५अ. ६२ श्लो.।

**अणुतैलम्**। क्ली। केशगतरोगे तैलविशेषः। वा. सू. २० अ उ. २२अ.।

**अणुमुष्टिः**। पुं। विषमुष्टौ, महानिम्बे। रा. नि. व. ४।

**अणुरेवती**। स्त्री। (Croton polyandrum). दन्तीवृक्षे। प. मु.। रा. नि. व. ६।

**अणुव्रीहिः**। पुं। सूक्ष्मधान्ये। रा. नि. व. १६। तत्पर्य्यायः—प्रसातिका (र)।

**अण्डम्**। पुं, क्ली। मुष्के। रा. नि. व. १८। डिम्बे। ডিম্, আণ্ডা। तत्पर्य्यायाः,—पेशी, कोषः, (अ)। पेशिः, कोशः, पेशीकोषः, (अ.टी)। डिम्बः मे)। पेषी (के)। गुणाः—कटुपाकि स्वादु रुचिकरं शुक्रकरं वातश्लेष्महरञ्च। गन्धमार्जाराण्डे। খাটাশী। वै निघ. २भ वा. व्या. विषगर्भतैले। मृगनाभौ। वीर्य्ये। वि.।

**अण्डकः**। पुं। अण्डकोषे। हे. च.। क्षुद्रडिम्बे।

**अण्डकोटरपुष्पा**। स्त्री। अजान्त्राम्। नीलवुह्रा इति लोके। रत्ना.।

**अण्डकोषः**। पुं। कुट्मले। वृषणे। অণ্ডকোষ। रा. नि. व. १८। तत्पर्य्यायाः,—मुष्कः, वृषणः, (अ)। अण्डं, पेलं, अण्डकः, (हे। सीमा (ज। फलकोशकः (त्रि)। फलं (के)। बीजपेषिका (रा)। अण्डकोषलक्षणं—रेतः-सूत्रसमाबद्धं कोशगर्भेऽवतिष्ठते। रेतःस्रावाण्डयुगलं ग्रन्थ्याभं चाण्डवर्त्तुलं। भ्रूणस्योदरवेष्टन्याः पण्णा उदरगह्वरे। तिष्ठत्याक्स्पर्शनाङ्गमैः कोषमायाति तद्द्वयम्। दक्षिणस्मात् स्थूलतरं वामाण्डं निम्नलम्बि च। वामं रैतसिकं सूत्रं यतो दीर्घतरं परात्। उपर्य्युपरिसंस्थानस्तरवन्देन निर्म्मितः। कोषो रैतसिके सूत्रे धत्तेऽण्डयुगलं तथा। तयोराभ्यन्तरो रक्तः सङ्कोचनगुणान्वितः। तयोर्वाह्यश्चर्म्ममयो लोमभिः कतिभिश्चन। तयोस्तिरश्चरण्यान्तरेकया भिद्यते द्विधा। तद्गर्भद्वयमध्यान्ते पुंसोऽण्डयुगलं ननु। उदराद्रेतसः सूत्रे पश्चाद्गागमवाण्डयोः। नियतं समनुप्राप्ते धराञ्जायूदिनिर्म्मिते॥ अत्रिरिति कश्चित्।

**अण्डकोषकः**। पुं। अण्डकोषे। श.र.।

**अण्डगः**। पुं। गोधूमे।

**अण्डगजः**। पुं। चक्रमर्द्दक्षुपे। रा. नि व. ४।

**अण्डजः**। पुं। मत्स्ये। पक्षिणि। भा.पू.२भ.।

**अण्डजा**। स्त्री। शरटे। वि.। सर्पे। मत्स्ये। पक्षिणि। मे.जत्रिकं। मृगनाभौ। वा. हेमा.।

**अण्डपर्णः**। पुं। मलाण्डतरौ। अत्रि.।

**अण्डपेशी**। स्त्री। कोषे। मुष्के। हे. च.।

**अण्डस्कन्दः**। पुं। अण्डेषु स्कन्द इव, अश्वस्याण्डरोगविशेषे। तल्लक्षणं यथा—प्रकोपान्मारुतादीनां कारणैः पूर्व्वचोदितैः। अण्डस्कन्दस्तुरङ्गाणां जायते बहुसंज्ञकः। तस्य रूपं चिकित्साञ्च भेदञ्चैव समासतः। प्रवक्ष्यामि यथायोगं वाजिनां हितकाम्यया।

वृषणौ दूषयद्वायुः श्लेष्मणा यस्य संयुतः। तस्य मुष्कश्वसत्य‍कौ रोगो वाताण्डसंज्ञकः॥ यदण्डं कम्पतेऽश्वस्य तेन पादेन खञ्जति। सर्व्वपृष्ठस्य तस्याशु वेदना मुष्कयोर्भवेत्॥ शूनता मुष्कयोश्चैव रक्तता कृष्णतापि वा। भवेत् पित्तेन दुष्टेन पिड़कानाञ्च सम्भवः॥ शूनौ पक्वौ तुरङ्गस्य मुष्कौ यस्य सवेदनौ। त्रिकस्तम्भेन युक्तस्य तस्य पूताण्डमादिशेत्॥ स्पर्शतः कठिनौ रूक्षौ रूपतश्चैव यौ मृदू। वृषणौ यस्य वाहस्य स रक्ताण्डः प्रकीर्त्तितः॥ तस्मिन् सर्व्वाः प्रयोक्तव्याः क्रियाः पीताण्डबोधिताः॥ शूनौ तु कठिनौ रूक्षौ वृषणौ मन्दवेदनौ। कृच्छ्रमूत्रस्य वाहस्य मूत्रकोषश्च शूयते। श्लेष्माण्डः स तु विज्ञेय औपाण्डौ वेधयेच्छिरां। निरूहं कटुतैलेन चाङ्गे स्वेदञ्च कारयेत्॥ जयदत्तः ५० अ.।

**अण्डहस्ती।** पुं। चक्रमर्द्दक्षुपे। रा. नि. व ५।

**अण्डालुः।** पुं। मत्स्ये। श. च.।

**अण्डिका।** स्त्री। यवचतुष्टयपरिमाणे। च।

**अण्डिनी।** स्त्री। सान्निपातिकयोनिरोगविशेषे। लक्षणं—"अतिकाय-गृहीतायास्तरुण्या स्वण्डिनो भवेत्॥" सु. चि.।

**अण्डीरः।** पुं। पुरुषे। मे. रत्रिकं।

**अण्वस्थि।** क्ली। मणिबन्धादिस्थे सूक्ष्मास्थ्नि। सु. शा.।

**अण्वी।** स्त्री। अङ्गुली।

**अतन्द्रा।** स्त्री। काफि इति ख्याते फल। चा इति च लोके। अत्रि।

**अतरुणदारुः**
**अतरुणदारः(कः)** } पुं। वृद्धदारके। विजताड़क। हिं विधारा। "अतरुणदारुरा(क)पुराः।" भा. म. १ भ. सन्धिकज्व. चि.।

**अतलस्पृक्।** क्ली। जले। हे. च ४ का।

**अतसी।** स्त्री। (Linum Usitatissimum) Common flax. क्षुमावृक्षे। মসিনা। हिं तिसि। तें नल्लयगसिचेट्टु। तत्पर्य्यायाः,—चणका, उमा, क्षौमी, रुद्रपत्नी, सुवर्च्चला, (र)। पिच्छिला, देवी, मदगन्धा, मदोत्कटा, क्षुमा, हैमवती, सुनीला, नीलपुष्पिका, पार्व्वती। गुणाः—मधुरा बलकारिका कफवातवर्द्धनी, ईषत्पित्तघ्नी कुष्ठवातघ्नी च। रा. नि. व. १६। शुक्रदृष्टिघ्नी स्निग्धा गुरुः वातासृजित्र। मद. व. १०।

**अतसीतैलम्।** क्ली। अतसीजाततैले। মসিনার তৈল। गुणाः—मधुरं पिच्छिलं वातघ्नं मदगन्धि कषायं कफहरं कासहरञ्च। रा. नि. व. १५। आग्नेयं स्निग्धोष्णं कफपित्तनुत् कटुपाकमचक्षुष्यं बल्यं वातहरं गुरु। मलकृत् रसतः स्वादु ग्राहि त्वग्दोषहृद्घनम्। वस्तौ पाने तथाभ्यङ्गे नस्ये कर्णस्य पूरणे। अनुपानविधौ चापि प्रयोज्यं वातशान्तये॥ भा. पू. तैलव.।

**अतिकटुः।** त्रि। निम्बादिद्रव्ये।

**अतिकण्टः(कः)।** पुं। लघुगोक्षुरके। दुरालभायाम्। मद. व. १।

**अतिकन्दः(कः)।** पुं। हस्तिकन्दनाममहाकन्दशाके। रा. नि. व. ७।

**अतिकायः।** त्रिं। स्थूलदेहे। স্থূল শরীর। "अतिकाय-गृहीताया-स्तरुण्या-स्वण्डिनी भवेत्।" मा. नि.।

**अतिकृशः।** त्रि। अतिदुर्ब्बले।

**अतिकेशरः।** पुं। कुब्जकापुष्पवृक्षे। কোকণ দেশীয় পুষ্পবিশেষ। हिं कूजा। रा. नि. व. १०। भा. पू. पु. व.। कण्टकसेवत्याम्। কাঁটা সেউতি।

**अतिक्रान्तावेक्षणम्।** क्ली। यत्पूर्व्वमभिहितं तत्। यथा चिकित्सितेषु ब्रूयात् "श्लोकस्थाने यदीरितमिति।" सु. उ. ६५अ.।

**अतिगण्डः।** त्रि। वृहद्गण्डे। मे. डचतुष्कं।

**अतिगन्धः।** पुं। A sort of Jasmine (Jasminum zambac.) मुद्गरपुष्पवृक्षे। रा. नि. व. १०। गन्धके। रा. नि. व १३। (Michelia champaca.) चम्पकवृक्षे। रा. नि व १०। भूतृणे। গন্ধতৃণ। रा. नि. व. ८।

**अतिगन्धकः।** पुं। हस्तिकर्णपलाशवृक्षे। चम्पकवृक्षे। रा. नि. व. १०।

**अतिगन्धा(लुः)।** स्त्री। पुत्रदात्रीलतायाम्। रा. नि. व. ४।

**अतिगन्धिका।** स्त्री। पुत्रदात्रीलतायाम्। জিয়াপুতা। रा. नि. व. ४।

**अतिगुहा।** स्त्री। (Uraria logopoedes.) पृश्निपर्ण्याम्। ছোট চাকুলে। र. मा.। शालपर्ण्याम्। मद. व. १। वा. सू. २६ अ.। "लक्ष्मी गुहातिगुहाम्।"



**अतिघूर्णता।** स्त्री। अतिनिद्रा। भा. म. ४भ. मसूरिकानि.। "तृष्णा-दाहातिघूर्णता।"

**अतिचरः।** पुं। पक्षिभेदे। वृक्षविशेषे।

**अतिचरणा।** स्त्री। तन्नामक कफजयोनिरोगविशेषे। अतिव्यवायेन शोथयुक्ता योनिरतिचरणोच्यते। "सैवातिचरणा शोफसंयुक्तातिव्यवायतः।" वा. उ. ३३अ.। See अचरणा।

**अतिचरा(ला)।** स्त्री। पद्मचारिण्याम्। मद. व. ३। (Hibiscus mutabilis.) स्थलपद्मिन्याम्। স্থলপদ্ম। रा. नि. व. ५। भा. पू. १म. See स्थलपद्मम्। भूतृणे।

**अतिच्छत्रः।** पुं। रक्तकोकिलाक्षे। তালমাখনা। রক্ত কুলেখাড়া। प. मु। रत्ना.। छत्रायाम्। Mushroom. কাটছাতু, পোয়ালছাতু। स्थूलतृणविशेषे।

**अतिच्छत्रकः।** पुं। भूतृणे। प. मु.। भूतृणे। গন্ধতৃণ। रा. नि व. ८। तृणसाधारणे। वृक्षविशेषे। यस्य मूले पत्रं वा वचाकारः कटुरसश्च। रा. नि.। सप्तपर्णवृक्षे।

**अतिच्छत्रा**
**अतिच्छत्रिका** } स्त्री। शताह्वायाम्। শুল্‌ফা। रा. नि व. ४। मद व. २। वा. उ. ६अ.। "अतिच्छत्रा पलङ्कषा।" सि. यो. उन्मादचि. महापैशाचघृते। मधुरिकायां। মৌরী। च चि. अ.। छत्रवृक्षे। यस्य मूले पत्रे वा वचाकारः कटुरसश्च। भूतृणे। रा. नि.। विषाणिकायाम्। वा. सू. २९अ.। तन्नामकमहौषधौ। See ओषधिः।

**अतिजागरः।** पुं। नीलक्रौञ्चे। रा. नि. व. १९।

**अतिजृम्भः।** पुं। वायुरोगविशेषे। वै. निघ.।

**अतितपस्विनी।** स्त्री। गोरक्षमुण्ड्याम्। গোরক্ষ চাকুলিয়া। भा. पू. १भ. गु. व.।

**अतितर्पणम्।** क्ली। अतितृप्तौ। वा. सू. ८अ.।

**अतितीव्रा।** स्त्री। गण्डदुर्व्वायाम्। रा. नि. व. ८।

**अतितीक्ष्णः।** त्रि। मरिचादौ। पुं। शोभाञ्जनवृक्षे। क्ली। अजमोदायाम्।

**अतितृप्तिः।** पुं। पित्तजन्यरोगविशेषे। वै. निघ.।

**अतितेजिनी।** स्त्री। त्रिपर्ण्याम्। তেজবল, তেজবতী। मद. व १।

**अतिदग्धम्।** क्ली। अग्निदग्धरोगे। अतिदग्ध मांसावलम्बनं गात्रविश्लेषः शिरास्नायुसन्ध्यस्थिव्यापादनमतिमात्रं, ज्वरदाहपिपासामूर्च्छाश्चोपद्रवा भवन्ति। व्रणश्चास्य चिरेण रोहति रूढश्च विवर्णो भवति। प्लुष्टस्याग्निप्रतपनं कार्य्यमुष्णं तथौषधम्। इत्यादि। सु. सू १२अ.।

**अतिदाहः।** पुं। अतिसन्तापे। वै. निघ.।

**अतिदीप्तिः।** स्त्री। श्वेतसुरसायाम्। শ্বেত বাবুই তুলসী। वै. निघ.।

**अतिदीप्यः(कः)।** पुं। रक्तचित्रके। रा. नि. व६।

**अतिदुष्टः।** पुं। गोक्षुरके। वै. निघ.।

**अतिदेशः।** पुं। प्रकृतस्यानागतेन साधनम्। यथा—अनेनास्य वायुरूर्द्ध्वमुपतिष्ठते तेनोदावर्त्तः स्यादिति। सु. उ. ६५ अ.।

**अतिनिद्रता।** स्त्री। कफवृद्धिजन्यरोगविशेषे। सु. सू. १५ अ।

**अतिपक्वमांसम्।** क्ली। पाकाधिकसिद्धमांसे। गुणाः—अतिपक्वन्तु यन्मांसं विरसं वातलं गुरु। वै. निघ.।

**अतिपक्वक्षीरम्।** क्ली। अतिशृतघनदुग्धे। ঘনাবৃত দুগ্ধ। इदम् अतिगुरु। "भवेद्गरीयोऽतिशृतम्।" वा. टी. हेमाद्रौ चारपाणिः।

**अतिपत्रः(कः)।** पुं। शाकतरौ। শেগুন গাছ। रा. नि. व. ९। उन्माद-चि. महापैशाचघृते। हस्तिकन्दनाममहाकन्दे। रा. नि. व. ७।

**अतिपत्रा।** स्त्री। (Sida cordifolia.) बलायाम्। বেড়েলা। हिं खरेती।

**अतिपातितम्।** क्ली। अस्थिभङ्गविशेषे। तेनास्थि निःशेषेण भिन्नं भवति। सु. नि. १५ अ.।

**अतिपिच्छः।** पुं। श्वेतरक्तालुके। वै. निघ.।

**अतिपिच्छला।** स्त्री। कुमार्य्याम्। घृतकुमारी। वै. निघ।

**अतिपिञ्जरः**
**अतिपीड़कः** } पुं। दुष्टव्रणे। च.।

**अतिबला।** स्त्री। (Sida rhombifolia.) पीतबलायाम्। পীতবর্ণ বেড়েলা, পীত-বাকুলি। हिं ककहिया। मं पिटारिणी। तत्पर्य्यायाः,—बलिका, बल्या, विकङ्कता, वाट्यपुष्पिका, घण्टा-

शीता, शीतपुष्पा, भूरिबला, वृष्यगन्धिका। गुणाः—तिक्ता कटुः वातघ्नी क्रमिघ्नी दाहतृष्णाविषच्छर्द्दिक्लेदोपशमनी च। रा. नि. व. ४। शीतला मधुरा बलकान्तिकृत्। स्निग्धा ग्राहिणी वातरक्तरक्तपित्तक्षतघ्नी च। मद. व. १। हरेन्महाबला कृच्छ्रं भवेद्वातानुलोमनी। हन्यादतिबला मेहं पयसा सितया समम्॥ भा. पू. १भ. गु. व.। सु. सू. ३९ संशमने। च. सू. ४अ.। सु. सू. क्रमिचि.। चि. क्र. क. वल्ली स्त्रीरोगचि.। वा. उ. ४० अ.। श्वेतवाट्यालके। गोरक्षतण्डुलायां। গোরক্ষ চাকুলিয়া, কালিয়া ঝিটকী। विष्णु-नारायणतैले। शतावरीयो. सा. कौ.। चि. क्र. क. वल्ली-केतक्यादितैले।

**अतिबलिका** } **अतिबली** } स्त्री। वाट्यालके। रा. नि. व. ४।

**अतिभारगः**। पुं। अश्वतरे। थच्चर इति लोके।

**अतिभो**। स्त्रीं। क्षणप्रभायां। विद्युत्।

**अतिभोजनम्**। क्ली। अतिमात्रया भोजने। गुणाः—आलस्यगौरवाटोपसादांश्च कुरुतेऽधिकम्। सु. सू. ४६अ कृतान्नव.।

**अतिमङ्गल्यः**। पुं। (Aegle or cratoeva marmeloes.) विल्ववृक्षे। रा. नि. व. ११।

**अतिमञ्जुला**। स्त्री। कण्टकसेवतीवृक्षे। हिं सेवती गुलाब। গোলাপ, রক্ত গোলাপ। भा. पू. १भ. पु व.। मद व. ३। See सेवती।

**अतिमण्डलः**। पुं। भूधामनवृक्षे। वै. निघ.।

**अतिमन्थः(कः)**। पुं। अग्निमन्थक्षुपे।

**अतिमुक्तः(कः)** } **अतिमुक्तका** } पुं। Mountain eboney. तिनिशवृक्षे। अम। तिन्दुकवृक्षे। তেঁদ, গাব। तत्पर्य्यायाः—पुण्ड्रकः, मल्लिनी, भ्रमरानन्दा, कामुककान्ता। नवमल्लिकाभेदे। मं. तें. रायविर। রায়বেল। (Goertnera rocemosa.) माधवीलतायाम्। प. मु.। "अतिमुक्तकमिच्छन्ति वासन्तीं माधवीलताम्।" हला. ५४। अतिमुक्तस्तु निःसङ्गे वासन्त्यां तिनिशेऽपि च। मे. तचतुष्कं। वा. उ. १३अ.। "तथातिमुक्तकैरण्ड।" भा. पू. १भ.। गुणाः—कषायः शीतलः श्रमघ्नः पित्तदाहज्वरोन्मादहिक्काच्छर्दिघ्नश्च। रा. नि व. १०। See तिनिशः। माधवी मधुरा शीता लघ्वी दोषत्रयापहा। भा. पू. १भ. पु. व.। (कः) हरिमन्थे। हारा.।

**अतिमुक्ततैलम्**। क्ली। अतिमुक्तकवीजतैले। गुणाः—वातपित्तघ्नं केश्यं श्लेष्मलं गुरु शीतलञ्च। वा. टी. हेमा।

**अतिमुक्ता**। स्त्री। अतिमुक्तकायाम्। रा. नि. व. १०।

**अतिमोदनी(दिनी)**। स्त्री। नवमल्लिकायां। रा. नि. व. १०।

**अतिमोदा**। स्त्री। (Jasmimum arboreum.) नवमल्लिकायां। সেউতি। रा. नि व. १०। गणिकारीवृक्षे स्वनाम्ना कोंकणदेशे ख्याते। গণিরি। रा. नि. व. १०।

**अतियवः**। पुं। निःशूकयवे। कृष्णवर्णे यवे। मद. व. १०। निःशूकोऽतियवः स्मृतः। यवादतियवो न्यूनः। भा. पू १भ. धान्यव.।

**अतियुक्तः**। त्रि। वारंवारं प्रयुक्ते। भा. म. ख. १भ. अ सा.। "स्नेहाद्यैरतियुक्तैः।"

**अतियोगः**। पुं। अतिशयितप्रयोगे। वा. सू. १७ अ.।

**अतिरक्तः**। पुं। हिङ्गुले। वै. निघ.।

**अतिरक्ता**। स्त्री। जवापुष्पवृक्षे। वै. निघ.।

**अतिरसः**। पुं। पौण्ड्रके। श. मा.।

**अतिरसा**। स्त्री। मूर्व्वायाम्। मुरगा। वै. निघ. २भ. अप. चि. पलङ्कषातैले। रास्नायाम्। मद. व. १। वल्लीयष्टिमधुनि। रा. नि. व. ६। शतमूल्याम्। च. सू. ४।

**अतिरुहा**। स्त्री। मांसरोहिण्याम्। रा. नि. व. १२। भा. पू. १भ.। मद. व. १।

**अतिरूक्षः**। त्रि। स्नेहशून्ये, कङ्गुकोद्रवादौ।

**अतिरेचकः**। पुं। काकोल्याम्। কাঁকলা। वै. निघ.।

**अतिरोगः**। पुं। क्षयरोगे। राजयक्ष्मणि। रा. नि. व. २०।

**अतिरोमशः**। पुं। वन्यछागे। हारा.।

**अतिरोमशा**। स्त्री। नीलवुह्नायाम्। ছাগল-বেঁটে। प. मु.।

**अतिलङ्घितम्**। क्ली। अत्युपवासे। तल्लक्षणं—पर्व्वभेदोऽङ्गमर्द्दश्च कासः शोषो मुखस्य च। क्षुत्प्रणाशोऽरुचिस्तृष्णा दौर्ब्बल्यं श्रोत्रनेत्रयोः। मनसः सम्भ्रमोऽभीक्ष्णमूर्द्ध्ववातस्तमो हृदि। देहाग्निबलहानिश्च लङ्घनेऽतिकृते भवेत्॥ च. द.।



**अतिलम्बी**। स्त्री। शताह्वायाम्। भा पू. १भ.।

**अतिलोहितगन्धः**। पुं। दमनकवृक्षे। দনা। प. मु.।

**अतिवर्त्तुलः**। पुं। (Sida rhombifolia.) कलायविशेषे। মটর, বাটুনা, কড়াই। र. मा।

**अतिविदाही**। त्रि। राजसर्षपादौ।

**अतिविद्धा**। स्त्री। दुष्टव्यधनविशेषे। प्रमाणातिरिक्तविद्धायाम्। सु. शा. ८।

**अतिविषः(षा)**। स्त्री। (A conitum heterophyllum.) स्वनामख्यातोपविषजातीयपण्यद्रव्ये। আতইচ্। हिं आतइष। अतिविषा सर्व्वत्र भाषा। तें अतिवसचेट्टु। तत्पर्य्यायाः,—घुणवल्लभा (भा.)। शृङ्गिका (शब्दर.) विश्वा विषा प्रतिविषा उपविषा अरुणा शृङ्गी महौषधं (अ) काश्मीरा श्वेता (र) प्रविषा (के) श्वेतकन्दा भृङ्गा भङ्गुरा विरूपा श्यामकन्दा विषरूपा वीरा माद्री श्वेतवचा अमृता। अतिविषा शुक्लकृष्णारुणभेदात् त्रिधा रसवीर्य्यविपाकेषु तुल्या। गुणाः—कटूष्णा तिक्ता कफपित्तज्वरघ्नी आमातीसारकासघ्नी विषघ्नी छर्द्दिघ्नी च। रा. नि. व. ६। वा. सू. १५अ. वचादि.। नागरातिविषाभयाः। च. द. ज्व. चि. पिप्पल्याद्यघृते। मदनपालस्तु श्यामकन्दोपविषयोश्चतुर्भेदानाह श्वेत-रक्त-कृष्ण-पीतत्वात् ते तासां यथापूर्व्वं श्रेष्ठा गुणोत्तमा सर्व्वदोषहरा शोथघ्नी श्लैष्मिक-रोगघ्नी रसायनी च। मद. व. १। अतिविषाकटुकी-प्रभृतीनां गुणगोमयजलेन शुद्धिर्ज्ञातव्या। सा. कौ.।

**अतिवीजः**। पुं। वव्वूलकवृक्षे। বাব্লাগাছ। वै. निघ.।

**अतिवृहत्फलः**। पुं। पनसवृक्षे। কাঁটাল গাছ। भा. पू. १भ.।

**अतिव्यथा**। स्त्री। अतिशयितयन्त्रणायाम्। पीड़ायाम्।

**अतिव्यायामः**। पुं। व्यायामाधिक्ये। अधिक कुश्ति करा। अतिव्यायामी न पथ्यः। अतिव्यायामतः कासो ज्वरश्छर्द्दिः श्रमः क्लमः। तृष्णा क्षय प्रतमकः रक्तपित्तञ्च जायते॥ भा. पू. १म.।

**अतिशष्कुली**। स्त्री। तिलकृतरोटिकायाम्। गुणाः—रुच्या श्लेष्मपित्तास्रघ्नी गुरुः विष्टम्भिनी न चक्षुष्या च। भा. पू. कृतान्नव.।

**अतिशारिवा**। स्त्री। अनन्तायाम्। অনন্ত-মূল। र. मा.।

**अतिशूकः**। पुं। यवे। यव। प. मु.।

**अतिशूकजः**। पुं। गोधूमे। गम। Wheat.

**अतिशृतक्षीरम्**। क्ली। अतिक्वथिते दुग्धे कवलभोज्यवत् सञ्जाते। ডেলা ক্ষীর। तद्गुरुतरम्। स्यान्निर्जलं शृतं तद्विचिचतुरष्टांशशेषितम्। तथा शृततमं सारं गुरु बल्यतमं पयः॥ वा. सू. ५अ. अरु. टी. खरनादः।

**अतिशोषः**। पुं। क्षयरोगे। See क्षयः।

**अतिसख्या**। स्त्री। वल्लीयष्टिमधुनि।

**अतिसर्जनम्**। क्ली। वेधे। मे. नपञ्चकं।

**अतिसान्द्रः**। पुं। राजमाषे। বাঞ্জাশী, বরবটী। रत्ना.।

**अतिसाम्या**। स्त्री। कृष्णमुखगुञ्जावल्ल्याम्। लतायष्टिमधुनि।

**अतिसारः**। पुं। पर्पटके। मद. व. १। हिं पापड़ा। उदरामयरोगविशेषे। See अतीसारः।

**अतिसारकी**। त्रि। अतिसाररोगिणि।

**अतिसारघ्नः**। पुं। क्षेत्रपर्पटके। ক্ষেৎপাপড়া। वै. निघ.।

**अतिसारघ्नी**। स्त्री। अतिविषायाम्। वै. निघ.।

**अतिसारभेषजम्**। क्ली। लोध्रे। तद्रोगनिवारके औषधे।

**अतिसारवारणरसः**। पुं। अतिसारे रसः। "दरदं कृतकर्पूरं कुस्तुम्बुरुयवसंयुतम्। सर्व्वातिसारशमनं खाखसीक्षीरभावितम्॥" भै.। अत्र कृतकर्पूरं पक्वकर्पूरम्। खाखसीक्षीरं अहिफेनम्। र. सा. सं.।

**अतिसारस्या**। स्त्री। रास्नायाम्। वै. निघ.।

**अतिसूक्ष्मः**। त्रि। अतिशयसूक्ष्मे।

**अतिसेवनम्**। क्ली। अधिकमात्रया सेवने।

**अतिसौम्या**। स्त्री। वल्लीयष्टिमधुके। रा. नि. व. ६।

**अतिसौरभः** । पुं । आम्रवृक्षे । भा॰ पू॰ फ॰ व॰ ।

**अतिस्कन्धा** । स्त्री । रक्तकुलत्थके । वै॰ निघ॰ ।

**अतिस्थूलवर्त्मा** । पुं । दुष्टव्रणविशेषे । च॰ ।

**अतिस्निग्धः** । त्रि । अत्यन्तस्निग्धे । तस्य लक्षणम् —कफप्रसेकः शिरसो गुरुतेन्द्रियविभ्रमः । लक्षणं तदतिस्निग्धे रूक्षं तत्र प्रदापयेत् ॥ वै॰ निघ॰ । नस्यचि॰ ।

**अतिस्रवा** । स्त्री । मयूरवल्ल्याम् । मूर्व्वा । वै॰ निघ॰ ।

**अतिक्षिप्तसन्धिः** । पुं । सन्धेरतिशयविश्लेषे । सन्धिच्युतं सदुच्चैरवस्थानं । तेन सन्ध्यस्थ्नोरुभयोरेवातिक्रान्तता वेदना च । सु॰ नि॰ १५अ । See भग्नः ।

**अतीसारः** । पुं । Diarrhœa or dysentry. अतीव सरति, प्रकृतिमतिक्रम्य गुदमार्गेण सरतीति अतीसारः । स्वनामख्यातोदरामयरोगे, बहुद्रवमलनिःसरणरोगे । तस्य निदानं गुरुभोजनादिकम् । तस्य निरुक्तिः—रसादिद्रवधातूनामग्निं मन्दीकृत्य मलेन सह मिश्रितानां वायुना चाधः-प्रणुन्नानां अतिनिःसरणादतीसार उच्यते । तस्य च पूर्व्वरूपं —हृदयनाभिगुह्योदरादिस्थानेषु सूचीविद्धवद्वेदना, कायावसादवायुमलविबन्धतोदोदराध्मानापरिपाकादिकञ्च । स षड्विधः वातपित्तकफसन्निपातशोकापरिपाकजभेदाद्भवति । तत्र वातजे मलस्यारुणता फेनिलता रूक्षता पक्वता तथा गुदे सशब्दवेदनमल्पशो मुहुर्निःसरणञ्च लक्षणं भवति । पित्तजे च मलस्य हरितपीतलोहितवर्णता तृष्णामूर्च्छादाहाः मलद्वारे ज्वाला क्षतञ्च लक्षणम् ; कफजे च शुक्लगाढसकफामगन्धिशीतलमला निःसरन्ति, रोगी सरोमाञ्चश्च भवति । सान्निपातिके च वातजादि-लक्षणानि दृश्यन्ते, प्रायशश्चात्र मलाः शूकरवसा-मांसधावनवारिवद्भवन्ति । शोकजे च गुञ्जाफलसदृशशोणितं केवलं मलमिश्रितं मलरहितं वा सरति, तत्र मलसहितं चेत् दुर्गन्धं मलरहितं चेन्निर्गन्धं भवति । आमातिसारे च नानावर्णं वारंवारञ्चातिसार्य्यते, तथा तत्रोदरशूलमतीव जायते । अतीसारस्य चासाध्यलक्षणं—मलस्य कृष्ण-स्निग्धता, यकृत्खण्डवत् कृष्ण-रक्तवर्णता, घृततैलवसामज्जदधिदुग्धमांसधावनवारिसदृशता, कृष्ण-नीलवर्णता, ईषत्कृष्णरूक्षचिक्कणता, शिखिपुच्छवत् विविधवर्णचन्द्रकयुक्तता, घनशवगन्धिमस्तिष्काभता, सुगन्धपूतिगन्धबहुलता च, तथा तृष्णादाहान्धकारदर्शनं, हिक्काश्वासपार्श्वशूलेन्द्रियचित्तमोहाः गुह्याभ्यन्तरवलिपाकः प्रलापश्च, तथा गुदसंवरणाक्षमता बलमांसहीनता अतीवोदराध्मानं शोथः, मलद्वारस्य पक्वता सत्त्वेऽपि गात्रस्य शीतलता उपद्रवाश्च । चिकित्सा-स्वरूपञ्चौषधे प्रदर्शनीया । अतीसारे नानाविधद्रवधातुनिःसरणम् अन्यच्च केवलमेव कफनिःसरणमित्यतिसारप्रवाहिकयोर्भेदः । इति माधवकरसंग्रहादतीसारसंग्रहः । शार्ङ्गधरस्तु भयजमुक्त्वा सप्तविधमाह । तत्र सम्प्राप्तिः संशम्यापां धातुरन्तःकृशानुं वर्चोमिश्रो मारुतेन प्रणुन्नः । वृद्धोऽतीवाधः सरत्येव यस्माद्व्याधिं घोरं तं त्वतीसारमाहुः ॥ हृन्नाभिपायूदरकुक्षितोदगात्रावसादानिलसन्निरोधाः । विट्सङ्ग आध्मानमथाविपाको भविष्यतस्तस्य पुरःसराणि ॥ तस्य निदानम्—गुर्व्वतिस्निग्धरूक्षोष्णद्रवस्थूलातिशीतलैः । विरुद्धाध्यशनाजीर्णैरसात्म्यैश्चापि भोजनैः ॥ स्नेहाद्यैरतियुक्तैश्च मिथ्यायुक्तैर्विषाद्भयात् । शोकाद्दुष्टाम्बुमद्यातिपानात् सात्म्यर्त्तुपर्य्ययात् ॥ जलाभिरमणैर्वेगविघातैः कृमिदोषतः । नृणां भवत्यतीसारो लक्षणं तस्य वक्ष्यते ॥ सु॰ उ॰ ४०अ । स च वातपित्तकफसन्निपातशोकामजभेदात् षड्विध इति । अश्वातिसार-लक्षणम्—अनिलेनाथ पित्तेन श्लेष्मणा चापि वाजिनः । अतीसारस्तथा चान्यः सन्निपातेन जायते ॥ सङ्कोचिताङ्गः स्वानेन सकफं योऽतिसार्य्यते । अल्पं तनु सशब्दञ्च पुरीषं बहु वा हयः ॥ तस्य वातात्मकं विद्यादतीसारं विचक्षणः । पित्तजञ्चैव वक्ष्यामि श्लेष्मजञ्च समासतः । स्वेददाहपरीतानां लक्षयेन्मतिमान् भिषक् । स्रावेण नीलरक्तेन विस्रगन्धेन पित्तजम् ॥ मन्दाहारस्तथा वाहो हृष्टरोमातिपीड़ितः । श्यामैः सपिच्छिलैर्भिन्नैर्विद्यात् श्लेष्मसमुद्भवम् ॥ सन्निपातात्मकञ्चैव सर्व्वेषां लक्षणैर्युतम् । द्विरूपं द्वन्द्वजं ज्ञेयमतीसारं विचक्षणैः । अतीसाराः समुद्दिष्टाः शालिहोत्रादिभिः पुरा ॥ ज॰ द॰ ४२अ॰ ।

**अतुलः** । पुं । कफे । तिलकवृक्षे । श॰ च॰ ।

**अतृप्तिः** । स्त्री । तृप्तिशून्यत्वे । अपरितोषे ।

**अतेजाः** । स्त्री । छायायाम् । रा॰ नि॰ व॰ २१ ।

**अत्कः** । पुं । अङ्गे । उणा॰ ।

**अतः** । पुं । सूर्य्ये । वै॰ निघ॰ ।

**अत्यः** । पुं । अश्वे ।

**अत्यग्निः** । पुं । क्षुधाधिक्ये । च॰ द॰ अग्निमा॰ चि॰ । भस्मके । विज॰ र॰ ।



**अत्यन्तपद्मा** । स्त्री । कमलिन्याम् । वै॰ निघ॰ ।

**अत्यन्तशोणितः** । त्रि॰ । अतिरक्ते । क्ली॰ । सुवर्णगैरिके । वै निघ॰ ।

**अत्यन्तसुकुमारः** । पुं । (Panicum Italicum.) कन्दलीवृक्षे । कङ्गुण्याम् । रा॰ नि॰ व॰ १६ ।

**अत्यम्बुपानम्** । क्ली॰ । मात्रातिरिक्तवारिपाने । तद्दोषो यथा—अत्यम्बुपानान्न विपच्यतेऽन्नं अनम्बुपानाच्च स एव दोषः । तस्मान्नरो वह्निविवर्द्धनार्थं मुहुर्मुहुर्वारि पिबेदभूरि ॥ इति जलपानलक्षणम् । रा॰ नि॰ व॰ १४ ।

**अत्यम्लः** । पुं, क्ली॰ । (Spondias mangifera.) वृक्षाम्ले । তেঁতুল । रा॰ नि॰ व॰ ६ । See तिन्तिड़ी । वनमातुलुङ्गे । मातुलुङ्गे । त्रि॰ अत्यन्ताम्लरसयुक्ते ।

**अत्यम्ला** । स्त्री । मातुलुङ्गावृक्षे । वनवीजपूरे । मधूरलेबू, मधुटाबा वा मधुलेबू । रा॰ नि॰ व॰ ११ । महाकाँकड़ी । रत्ना॰ तिन्तिड्याम् । श॰ र॰ ।

**अत्यम्लपर्णी** । स्त्री । वह्निशूरणे लताविशेषे । कड़वड़वेनि । हैंग्गोलि । रा॰ नि॰ व॰ ३ । तत्पर्य्यायः, —तीक्ष्णा, कण्डूरा, वह्निशूरणः, करवड़वल्ली, वनस्था, अरण्यवासिनी । अम्ललोण्याम् । আমরুল । गुणाः—अत्यम्लपर्णी तीक्ष्णाम्ला प्लीहशूलविनाशिनी । वातहृद्दीपनी रुच्या गुल्मश्लेष्मामयापहा ॥ रा॰ नि॰ व॰ ३ । मात्रा॰ ३ माषा ।

**अत्ययः** । पुं । नाशे, दोषे, कृच्छ्रे । रत्ना॰ अने॰ व॰ । मे॰ यत्रिकं ।

**अत्यर्कः** । पुं । शुक्लार्कवृक्षे । শ্বেত আকন্দ গাছ । रा॰ नि॰ व॰ १० ।

**अत्यानन्दा** । स्त्री । कफजन्ययोनिरोगविशेषे, येन स्त्री ग्राम्यधर्मेण सन्तोषं न लभते । अत्यानन्दा न सन्तोषं ग्राम्यधर्मेण विन्दति । भा॰ म॰ ख॰ ४भ॰ योनिरोगचि॰ ।

**अत्यारक्ता** । स्त्री । जवापुष्पवृक्षे ।

**अत्यालः** । पुं । रक्तचित्रक-वृक्षे । रा॰ ।

**अत्युग्रम्** । क्ली॰ । हिङ्गुनि । मद॰ व॰ २ ।

**अत्युग्रगन्धा** । स्त्री । कृष्णगोकर्ण्याम् । कृष्णापराजितायाम् । अजमोदायाम् । मद॰ व॰ २ ।

**अत्युदीर्णा** । स्त्री । दुष्टव्यधनविशेषे । यत्र तीक्ष्णमहामुखशस्त्रेण वेधो भवति । सु॰ शा॰ ८अ॰ ।

**अत्यूहः** । पुं । कालकण्ठपक्षिणि । दात्यूहे । मे॰ हत्रिकं ।

**अत्यूहा** । स्त्री । नीलशेफालिकायाम् । नीलिकायाम् । मे॰ हत्रिकं ।

**अत्रिः** । पुं । ऋषिविशेषे ।

**अत्रिग्जातः** । पुं । चन्द्रे । हे॰ ।

**अदनम्** । क्ली॰ । भक्षणे ।

**अदन्तः** । त्रि॰ । दन्तहीने ।

**अदलः** । पुं । हिज्जलवृक्षे । श॰ च॰ । घृते ।

**अदला** । स्त्री । घृतकुमार्य्याम् । रा॰ नि॰ ।

**अदंशः** । पुं । महामूलके । বড় মূলা ।

**अदारिका** । स्त्री । वृक्षकमले, वृक्षोत्पले । ওলট্ কম্বল । वै॰ निघ॰ ।

**अदितिः** । स्त्री । गवि । के॰ ।

**अदृक्** । त्रि॰ । अन्धे ।

**अदृग्** । पुं । घृते । उ॰ ।

**अदृढ़ः** । त्रि॰ । अस्थिरे । क्ली॰ । तृणविशेषे । वै॰ निघ॰ ।

**अद्भुतसारः** । पुं । खदिरसारे । रा॰ नि॰ व॰ ८ ।

**अद्यम्** । क्ली । धान्ये ।

**अद्यतनः** । त्रि । अद्यभवे । আজিকার ।

**अद्यनिः** । पुं । अग्नौ । उ॰ ।

**अद्यश्विना**
**अद्यश्वीना** } स्त्री । आसन्नप्रसवायां गवि ।

**अद्रकः** । पुं । महानिम्बवृक्षे । वै॰ निघ॰ ।

**अद्रिः** । पुं । पर्व्वते । शैलवृक्षे । मे॰ रद्विकं । परिमाणविशेषे ।

**अद्रिकर्णी** । स्त्री । अपराजितायाम् । श्वेतापराजितायाम् । रा॰ नि॰ व॰ २३ ।

**अद्रिका** । स्त्री । धान्यके । ধনে । महानिम्बे । भा॰ पू॰ १गु॰ व॰ ।

**अद्रिजः** । त्रि । गिरिजाते । क्ली । शिलाजतुनि । र॰ मा॰ रत्ना॰ । तुम्बुरुवृक्षे । रा॰ नि॰ व॰ ११ । गैरिके ।

**अद्रिजतु** । क्ली । शिलाजतुनि । हेमा॰ । भा॰ ।

**अद्रिजा** । स्त्री । सैंहलपिप्पलीक्षुपे । रा॰ नि॰ व॰ ६ ।

**अद्रिभूः** । क्ली । आखुकर्णीलतायाम् । रा. नि. व. ३ । पार्व्वतीय-लतायाम् ।

**अद्रिमाषा** । स्त्री । वनमाषे । गायाणी । वै. निघ. ।

**अद्रिसानुजा** । स्त्री । त्रायमाणायाम् बला-डुमूर । वै. निघ. ।

**अद्रिसारः** । पुं । लौहे । रत्ना. ।

**अद्रेष्कः(ष्का)** । पुं, स्त्री । निम्बविशेषे । हिं बकाइननिम्ब । পাহাড়ে নিম্ । भैष. कुष्ठचि. ।

**अधः** । अव्ययं । अधोभागे । योनौ । वै. निघ. ।

**अधःकुन्तलः** । पुं । अन्तर्लोम्नि ।

**अधःपातनम्** । क्ली । पारदस्य यन्त्रमार्गेणाधःक्षेपणे । यथा—नवनीताह्वयगन्धकं (লাউয়া গন্ধক) सूतञ्च समभागं गृहीत्वा जम्बीररसेन मर्द्दयित्वा, शुकशिम्बीमूलं शिग्रूमूलापामार्गश्वेत-सर्षपसन्धवकल्केन समभागेन संमिश्र्य यन्त्रस्योर्द्ध-भाण्डाभ्यन्तरतले कल्कमिश्रितं तं सूतं लेपयेत् । अथ जलयुक्तमधोभाण्डं भुवि पूरयित्वा तस्य मुखे रसयुक्तं भाण्डमधोमुखं संस्थाप्य च द्वयोः सन्धिमुखं लेपयेत् । अथ उपरिष्टात् पुटे दत्ते पारदो जले पतति । इत्यधःपातनं । "नवनीताह्वयं सूत"मित्यादि । र. सा. सं. ।

**अधःपुटः** । पुं । चारोलीवृक्षे । वै. निघ. ।

**अधःपुष्पी** । स्त्री । (Hicracinm.) गोजिह्वा क्षुपे । रा. नि. व. ४ । चोरपुष्पीतृणविशेषे । तत्-पर्य्यायः,—अवाक्पुष्पी, मङ्गल्या, अमरपुष्पिका । रा. । চোর কাঁটকী চোরথড়িকা, ভাঁটুই, উক্ণে, বাটিয়া, লেঙরা। हेटाहलीति गौड़ीयाः । सततज्व. ब्रह्मदण्डी

**अधःप्रस्तरः** । पुं । तृणासने । वै. निघ. ।

**अधःशल्यः** । पुं । अपामार्गक्षुपे । रा. नि. व. ४ । भा. पू. १भ. । श्वेतापामार्गे ।

**अधःशाखः** । पुं । संसाराश्वत्थवृक्षे ।

**अधःशेखरः** । पुं । श्वेतापामार्गे ।

**अधमः** । पुं । अम्लवेतसे ।

**अधमाङ्गम्** । क्ली । चरणे । श. च. ।

**अधरः** । पुं । ओष्ठे । ঠোঁট । रा. नि. व. १८ । क्ली । स्त्रीयोनौ ।

**अधरकण्टकः** । पुं । दुरालभायाम् । वै. निघ. ।

**अधरकण्टिका** । स्त्री । क्षुद्रशतावर्य्यां । वै. निघ. ।

**अधरा** । स्त्री । नीचदिशि । वै. निघ. ।

**अधामार्गः**<br>**अधामार्गवः** } पुं. । अपामार्गे । धामार्गववृक्ष । গড়গণ্ড । हिं काइँच । अ. टी. ।

**अधिकण्टकः** । पुं । यासक्षुपे । দুরালভা-বিশেষ । रा. नि. व. ४ ।

**अधिकप्रियम्** । क्ली । त्वचि । দারচিনি । वै. निघ. ।

**अधिकरणम्** । क्ली । यत्र कुर्व्वन्ति तदधिकरणम् । सु. सू. ४१ अ. । 'यमर्थमधिकृत्योच्यते ।' यथा रसं दोषं वा । सु. उ. ६५अ. ।

**अधिकारी** । पुं । पुरुषे । वै. निघ. ।

**अधिजिह्वः** । पुं । A tumour on the tongue. कण्ठगतमुखरोगे । सु. नि. १६अ. । अयं द्विजिह्वोऽप्युच्यते । तल्लक्षणं यथा,—जिह्वाग्ररूपः श्वयथुः कफात्तु जिह्वाप्रबन्धोपरि रक्तमिश्रः । ज्ञेयोऽधिजिह्वः खलु रोग एष विवर्जयेदागत-पाकमेनम् ॥ सुश्रुः ।

**अधिजिह्वकः** । पुं । जिह्वागतरोगविशेषे । See अधिजिह्वा ।

**अधिजिह्वा**<br>**अधिजिह्विका** } स्त्री । जिह्वारोगविशेषे कफशोणितजे । अत्र जिह्वोपरि जिह्वाग्रवत् शोथो जायते । पक्वश्चेदसाध्यः । उपजिह्वा निम्नतो भवतीत्यनयोर्भेदः । लक्षणम्—जिह्वाग्ररूपः श्वयथुः कफात्तु जिह्वाप्रबन्धोपरि रक्तमिश्रः । सु. नि. १६ अ. । अश्वस्य जिह्वागतरोगे जिह्वोपरि शोफरूपे । लक्षणम्—"अधिजिह्वाभिधानन्तु उपरिष्टाद्विनिर्द्दिशेत् ॥" ज. द. २९अ. ।

**अधिदन्तः (कः)** । पुं । A tooth growing over another. दन्तमूलगतरोगविशेषे । गजदन्ते । গজদাঁত । अश्वस्य दन्तोपरि षड़धिकदन्तनिर्गमरूपरोगे । तेन चाश्वस्य ग्रासग्रहणेऽनिच्छा भवति । सप्तदन्तविशिष्टोऽष्टदन्तविशिष्टश्चाश्वोऽधिदन्त इत्युच्यते । "सप्तभिश्चाष्टभिर्दन्तैः ख्यातश्चाधिकदन्तकः ।" ज. द. ३अ ।

**अधिदैवतम्** । क्ली । अधिदेवतायाम् । आधिदैविकरोगे । सु. शा. १अ. ।

**अधिपतिः** । पुं । मर्म्मस्थानविशेषे । तच्च रोमावर्त्तस्थानं मस्तकाभ्यन्तरे सर्व्वशिरासम्मिलन-स्थानञ्च । सु. शा. ६ह. ।

**अधिभूतः** । पुं । यमधिकृत्य योवर्त्तते स एव तस्याधिभूतो नाम । यथा यस्य नामेन्द्रियस्य यत् कार्य्यभूतं तदेव कार्य्यं तस्येन्द्रियस्याधिभूतविषयः । सु. शा. १अ. ।

**अधिमन्थः** । पुं । Acute pains in the balls of the eyes with pain and swelling of one side of the head. अभिष्यन्दोत्थनेत्ररोगविशेषे । स च वातजपित्तजकफजरक्तजभेदेन चतुर्विधः । सर्व्वत्रैव लक्षणं तीव्रवेदना । अभिष्यन्दे (চোক উঠা বা নেত্রশূল) उपेक्षिते अधिमन्थो जायते । लक्षणम्—वृद्धैरेतैरभिष्यन्दैर्नराणामक्रियावताम् । तावन्तस्त्वधिमन्थाः स्युर्नयने तीव्रवेदनाः ॥ उत्पाट्यत इवात्यर्थं नेत्रं निर्मथ्यते तथा । शिरसोऽर्द्धञ्च तं विद्यादधिमन्थं स्वलक्षणैः । हन्याद्दृष्टिं श्लैष्मिकः सप्तरात्रादधिमन्थो रक्तजः पञ्चरात्रात् । षड्रात्राद्वा वातिको वै निहन्यात् मिथ्याचारात् पैत्तिकः सद्य एव ॥ अधिमन्थेषु सर्व्वेषु ललाटे वेधयेच्छिरां । अशान्ते सर्व्वथा मन्थे भ्रुवोस्तु परिदाहयेत् ॥ सु. उ. ६अ ।

**अधिमांसम्** । क्ली, पुं । नेत्ररोगविशेषे । मा. ने. रो. । See नेत्रमांसार्म्म ।

**अधिमांसकः** । पुं । Inflammation of the tonsils. कफजन्यदन्तवेष्टजरोगविशेषे । हनुभवान्त्यदन्ते अतिवेदनमहाशोथो लालास्रावश्च भवति । हान्व्ये पश्चिमे दन्ते महाशोथोमहारुजः । लालास्रावी कफकृतो विज्ञेयः सोऽधिमांसकः । भा. म. ख. ४भ. मु. रो. चि. । मा. नि. । सु. नि. १६ अ. ।

**अधिमांसार्म्म** । क्ली, पुं । Fleshy excrescence on the eye, cancer of the eye. दृष्टिशुक्लगतरोगविशेषे मांसवृद्धीति-ख्याते । लक्षणम्—पद्माभं मृदु रक्तार्म्म यन्मांसं चीयते सिते । पृथु मृद्वधिमांसार्म्म बहुलञ्च यकृन्निभम् ॥ मा. नि. ।

**अधिमुक्तकः** । पुं । माधवीलतायाम् । वै. निघ. ।

**अधिमुक्तिका** । स्त्री । मुक्तागृहे, शुक्तौ । মুক্তাঝিনুক । वै. निघ. ।

**अधिरूढ़ा** । स्त्री । प्रौढ़ायाम् । প্রোঢ়া স্ত্রী ।

**अधिरोहिणी** । स्त्री । वंशकाष्ठादि-निर्म्मित-रोहणमार्गे । সিঁড়ি, মই । तत्पर्य्यायः,—निःश्रेणी (अ. टी.), निःश्रेनिः (अ) ।

**अधिश्रयणी** । स्त्री । चुल्ल्याम् । চুলো, উনুন ।

**अधिष्ठानम्** । क्ली । स्थाने । ग्रामे । नगरे ।

**अधीरः** । पुं । धीरताहीने । अयोग्यवैद्ये । वै. निघ. ।

**अधोऽंशुकम्** । क्ली । परिधेयवस्त्रे । अम. ।

**अधोगतः** । पुं । अस्थिभङ्गरोगे । वै. निघ. ।

**अधोघण्टा** । स्त्री । अपामार्गे । আপাঙ্ । रत्ना. ।

**अधोऽङ्गम्** । क्ली । मलद्वारे । योनौ ।

**अधोजिह्विका** । स्त्री । तालुमूलस्थक्षुद्रजिह्वायाम् । আলজিব । हारा. । जिह्वाधःशोथरोगे । कफादधस्तादधिजिह्विका चेति । च. ।

**अधोद्वारम्** । क्ली । मलद्वारे । योनौ । हे. च. ।

**अधोभागहरः** । त्रि । विरेचनकर्म्मणि हित करे । च ।

**अधोमर्म्म** । क्ली । गुदे । गुह्यद्वारे । हे. च. ।

**अधोमुखा** । स्त्री । गोजिह्वायाम् । रा. नि. व. ४ ।

**अधोयन्त्रम्** । क्ली । वकयन्त्रे ।

**अधोवायुः** । पुं । अपानवायौ ।

**अधोरेचनः** । पुं । आरग्बधवृक्षे ।

**अधोऽस्रपित्तम्** । क्ली । अधोगतरक्तपित्तरोगे । See रक्तपित्तम् ।

**अध्यण्डा (व्यण्डा)** । स्त्री । कपिकच्छुलतायाम् । আলকুশী । See आत्मगुप्ता । भूम्यामलक्याम् । रत्ना. । कोकिलाक्षे । তালমাখনা । मद. व. १ । भा. पू. । प. मु. ।

**अध्यर्वुदम्** । क्ली । अर्व्वुदोपरि जातार्व्वुदरोगे । আবের উপর আব । लक्षणं—यज्जायतेऽन्यत् खलु-पूर्व्वजाते ज्ञेयं तदध्यर्व्वुदमर्व्वुदज्ञैः । सु. नि. ११अ. ।

**अध्यशनम्** । क्ली । अजीर्णोपरि भोजने । लक्षणम्—"अजीर्णे भुज्यते यत्तु तदध्यशनमुच्यते । प्राग्भुक्ते त्वनले मन्दे द्विरन्नो न समाहरेत् । प्रातराशे त्वजीर्णे तु सायमाशो न दूष्यति । पूर्व्वभुक्ते विदग्धेऽन्ने भुञ्जानो हन्ति पावकम् । सायमाशे त्वजीर्णे तु प्रातर्भुक्तं विषोपमम्" । वै. निघ. दिन-चर्य्या । भुक्तस्योपरि भूयोभोजने । भा. म. ख. १भ.

अती. सा. चि.। विरुद्धाध्यशनाजीर्णैः।" वा. सू. ८ अ.।

**अधरञ्चः**। पुं। चोरिकावृक्षे। श. र.। महार्कवृक्षे। त्रि। प्रत्येकं कर्षार्द्धमाने। सि.य. र.पि-चि. एलादि-गुटिकायां द्वन्दः।

**अधूरूढ़ा**। स्त्री। विवाहितायां स्त्रियाम्। विवाहिता स्त्री।

**अधुरुषितः**। पुं। सर्व्वाञ्चिरोगे। त्रि। उपविष्टे।

**अध्रुषः**। पुं। तन्नामकतालुगतमुखरोगे। अत्र तालुदेशे रक्तदोषजन्यलोहितानतिस्थूलशोथः, तेन च ज्वरस्तीव्रवेदना च भवति। मा. नि.। तल्लक्षणं —शोफस्त्वधो लोहितस्तालुदेशे रक्ताज्ज्ञेयः सोऽध्रुषो रुग्ज्वराढ्यः। सु.नि. १६ अ.।

**अध्वः**। पुं। वर्त्मनि। पथ।

**अध्वगः**। पुं। उष्ट्रे। अश्वतरे। हे. च.।

**अध्वगभोज्यः(ग्यः)**। पुं। आम्रातकवृक्षे। त्रिका.।

**अध्वगवृक्षः**। पुं। आम्रातकवृक्षे।

**अध्वगच्छमी**। पुं। खेचरे, पक्षिणि। वै. निघ.।

**अध्वजा**। स्त्री। स्वर्णुलीक्षुपे। रा. नि. व. ४।

**अध्वनिषेवणम्**। क्ली। अध्वचलने। वै. निघ.। See चंक्रमणं।

**अध्वरा**। स्त्री। मेदायाम्। भा. पू. १ ह. व.।

**अध्वशल्यः**। पुं।। अपामार्गे। रा.।

**अध्वशोषः**। पुं। पथिश्रमजन्यशोषरोगे अध्वप्रशोषी स्रस्ताङ्गः संभ्रष्टपरुषच्छविः। प्रसुप्तगात्रावयवः शुष्कक्लोमगलाननः॥ नि.।

**अध्वसिद्धकः**। पुं। सिन्धुवारवृक्षे। रा.नि.व.४।

**अध्वाण्डशाश्चवः**। पुं। श्योणाकवृक्षे। শোণা গাছ। हिं नाउया श्योणाल। श. च.।

**अध्वान्तं**। क्लीं। सायंकाले।

**अनंशुमत्फला**। स्त्री। कदलीवृक्षे। जटा.।

**अनः**। क्ली। अन्ने। उणा.

**अनग्ना**। स्त्री। कार्पासाम्। কাপাস। वै.।

**अनघः**। पुं। गौरसर्षपे। रा. नि. व. १६।

**अनघ्नः**। पुं। गौरसर्षपे। वै निघ.।

**अनङ्गम् (कम्)**। क्ली। मनसि। श. र.।

**अनङ्गसुन्दररसः**। पुं। वाजीकरणाधिकारे रसः। सूतस्य पलं गन्धकस्य च पलं रक्तकुमुदरसैः दिनत्रयं भावयेत्। ततो बालुकायन्त्रे प्रहरमात्रं पचेत्। अवतार्य्य रक्तवकपुष्पश्वेतपद्मरसेन दिनैकं भावयेत्। र. सा. सं.।

**अनडुज्जिह्वा**। स्त्री। गोजिह्वायाम्। গোজিয়া-শাক। रा. नि. व. ४।

**अनडुही**। स्त्री। स्त्रीगवि। See अनड्वाही।

**अनड्वान्**। पुं। वृषे। भा. पू.। रत्ना.।

**अनड्वाही**। स्त्री-गवि। গাই। हला.।

**अनणुः**। पुं, क्ली। सूक्ष्मधान्ये। সরুধান। वै.निघ.

**अनद्यः**। पुं। गौरसर्षपे। रा.।

**अनन्तः**। पुं। दुरालभायाम्। वै. निघ. २भ. अनन्तादिचूर्णे, सर्व्वज्वरे। सिन्धुवारवृक्षे। अभ्रकधातौ। रा. नि. व. १३।

**अनन्तकः**। पुं। मूलके। नलतृणे। हिं नरकट। मद. व. १।

**अनन्तमूलम्**। क्ली। करालाख्यौषधे। सुगन्धायां। वचाभेदे। श. चि.। अनन्तायाम्।

**अनन्तमूली**। स्त्री। दुरालभायाम्। रक्तदुरालभायाम्। वै. निघ.।

**अनन्तरम्भूका**। स्त्री। खर्परपीलिकायाम्। আস্কে পিটে। वै. निघ.।

**अनन्तवातः**। पुं। तन्नामकशिरोरोगविशेषे। लक्षणं—दोषास्तु दुष्टास्त्रय एव मन्यां सम्पीड्य घाटासु रुजां सुतीव्राम्। कुर्व्वन्ति योऽक्षिभ्रुवि शङ्खदेशे स्थितिं करोत्याशु विशेषतस्तु॥ गण्डस्य पार्श्वे तु करोति कम्पं हनुग्रहं लोचनजांश्च रोगान्। अनन्तवातं तमुदाहरन्ति दोषत्रयोत्थं शिरसो विकारम्॥ मा. नि.।

**अनन्ता**। स्त्री। स्वनामख्यातलतायां। अनन्तमूल। हिं अनन्तमूल। सु. मिश्र. अ.। शारिवेति उत्तरापथे प्रसिद्धा। रा. नि. व. १२। See सारिवा। च. द. पि. ज्व. चि. शिरोलेपे। "कालेयचन्दनानन्ता।" भा. म. ख. ४ भ. गर्भ-चि.। "अनन्ता शारिवा रास्ना"। भा. म. ख. १भ. ज्वरे शारिवादौ। "अनन्ता बालकं मुस्तम्"। च. सू. ४. ३१ दश.। दूर्व्वायां। हे. च. ४। स्वर्णक्षीर्य्यां। प. मु.। लाङ्गल्यां। प. मु.। भा. पू. १गु. व.। दुरालभायां। प. मु.। भा. म. ख. ४भ.



सु. रो. चि.। "कल्कैरनन्ता खदिरारिमेद......।" वा. १५अ. प्रियङ्ग्वादि-व.। प्रियङ्ग्वादि-दूर्व्वादि-व. हेमा. अरुणश्च। "दूर्व्वानन्ता निम्बवासात्मगुप्ता पद्माद्रजो योजनवल्ल्यनन्ता।" नीलदुर्व्वायाम्। भा. पू. १। रा. नि. व. २३। गोलोम्यां। শ্বেতদূর্ব্বা। रा. नि. व. ८। यवासायाम्। भा. म. ४भ. काकोल्यादिव., "अनन्तां कुक्कुटीं विम्बीम्।" दुरालभाभावे यवासा ग्राह्या। अग्निमन्थवृक्षे। गुडूच्याम्।

**अनभिलाषः**। पुं। अन्नविद्वेषे। अरोचके। रा. नि. व. २०।

**अनलः**। पुं। चित्रकक्षुपे। रा.नि.व.६। भा. पू. १भ. ह व.। च. द. संग्रहणी-चि. पाठाद्यचूर्णे। रक्तचित्रके। र. सा. सं.। भल्लातकवृक्षे। रा.नि.व.११। पित्ते। रा. नि. व. २१। देवधान्ये। मद. व.१०। अग्नौ।

**अनलम्**। क्ली। भल्लातकवीजे। "अनलमरिचदूर्व्वा।" भैष. कुष्ठ-चि.।

**अनलनामा**। पुं। चित्रकवृक्षे।

**अनलप्रभा**। स्त्री। ज्योतिष्मतीलतायाम्। रा. नि. व. ३।

**अनलविवर्द्धनो**। स्त्री। कर्कटिकायाम्। কাঁকুড়গাছ।

**अनलो (लिन्) लिः**। पुं। वकवृक्षे। त्रिका.।

**अनवस्थानः**। पुं। वायौ। रा.।

**अनवस्थितचित्तत्वम्**। क्ली। वायुरोगे। वै.निघ.। चित्तचाञ्चल्ये।

**अनशनम्**। क्ली। लङ्घने। मा.नि.। উপবাস।

**अनक्षः**। त्रि। अन्ध।

**अनक्षि**। क्ली। कुचक्षुषि। কুৎসিত চক্ষু।

**अनाक्रान्ता**। स्त्री। कण्टकार्य्याम्। र. मा.।

**अनागतार्त्तवा**। स्त्री। कन्यायाम्। अजातरजस्कायाम्। रा. नि. व १८। तत्पर्य्यायः,—अरजस्का, गौरी, नग्निका। (अ)।

**अनागताविक्षणम्**। क्ली। एतत् वक्ष्यतीत्यर्थे। सु. उ. ६५ अ.।

**अनाचारः**। पुं। असत्कर्म्मणि। वै. निघ.।

**अनातङ्कः**। त्रि। अरोगिणि।

**अनातपः**। पुं। आतपाभावे। छाया।

**अनातुरः**। त्रि। अरोगिणि।

**अनामकम्**। क्ली। अर्शोरोगे। श. र.।

**अनामयम्**। क्ली। आरोग्ये। रा.नि. व. २०।

**अनामा**। पुं। अनामिकाङ्गुली। श. र.।

**अनामिका**। स्त्री। तन्नामकाङ्गुलौ, अङ्गुष्ठाच्चतुर्थाङ्गुलौ। रा. नि. व. १८।

**अनार्जवः**। पुं। रोगे। रा. नि. व. २०।

**अनार्त्तः**। त्रिं। अकालजे।

**अनार्त्तवजलम्**। क्ली। पौषादिमासचतुष्टयभवे वृष्टिजले। तच्च वातादिदोषत्रयकोपनं। यथा —अनार्त्तवं प्रमुञ्चन्ति वारि वारिधरास्तु यत्। तत्त्रिदोषाय सर्व्वेषां देहिनां परिकीर्त्तितं। भा. पू. वारिव.।

**अनार्त्तवा** स्त्री। रजःशून्यायां। तन्नामकयोनिव्यापदि रोगे। अनार्त्तवास्तनी षण्ढी खरस्पर्शा च मैथुने। मा. नि.।

**अनार्य्यकम्**। क्ली। Aloe wood. अगुरुकाष्ठे। हला.। काष्ठागुरुणि। रा. नि. व. १२। भा.पू. १भ. क. व।

**अनार्य्यजम्**। क्ली। Aloe wood. अगुरुणि। रा. नि.।

**अनार्य्यतिक्तः (कः)**। पुं। (Gentiana cherayta Rox.) भूनिम्बे। চিরাতা। अम.।

**अनावंशः**। पुं। मर्म्मविशेषे। के।

**अनाविलः**। त्रिं। निर्म्मले।

**अनासिकः**। त्रि। नासिकाहीने।

**अनाहः**। पुं। आनाहरोगे। See आनाहः।

**अनाहतम्**। त्रि। नूतन-वस्त्रे। अ।

**अनाहारः**। पुं। आहाराभावे।

**अनिच्छः**। त्रि। तृप्ते। वै. निघ.।

**अनिमिषः** } पुं। मत्स्ये। त्रिका.मे.षचतुष्कं।
**अनिमेषः** } त्रि। निमेषशून्ये।

**अनिरुद्धम्**। क्ली। पश्वादिबन्धन-रज्जुविशेषे। দড়া।

**अनिरुद्धपथम्**। क्लीं। आकाशे। श.।

**अनिर्माल्या**। स्त्री। (Medicago esculenta Rox.) पिच्छिकायाम्। पृक्कायाम्। পিড়িং। रत्ना.।

**अनिर्वाणः** । पुं । कफे । वै· निघ· ।

**अनिलः** । पुं । वायौ । शाकतरौ । শেগুন গাছ । रा· नि· व· २३ ।

**अनिलकपित्थकः** । पुं । स्थूलाम्रातके । वै· निघ· ।

**अनिलकारकः** । पुं । काञ्जिकभेदे । वै· निघ· ।

**अनिलघ्न:(कः)** । पुं ।(Terminalia belerica.) विभीतकवृक्षे । रा· नि· व· ११ ।

**अनिलज्वरः** । पुं । वातिकज्वरे । स च सामनिरामभेदात् द्विविधः । च· द· । See ज्वरः ।

**अनिलनिर्यासः** । पुं । पियालवृक्षे । পিয়াশাল । मं विवला । वै· निघ· ।

**अनिलपर्य्ययः** । पुं । वायुरोगे ।

**अनिलभुक्** । पुं । सर्पे । वै· निघ· ।

**अनिलरसः** । पुं । रसोऽयं पाण्डुरोगे हितः । रस· र· ।

**अनिलरिपुः** । पुं । एरण्डवृक्षे । वै· निघ· २भ· सन्धि-ज्व· चि· रास्नादिः ।

**अनिलहरम्** । क्ली । कृष्णागुरुणि । वै· निघ· ।

**अनिला** । स्त्री । नद्याम् । खटिकायाम् । ফুলখড়ি । र· ना· ।

**अनीलाजीर्णम्** । क्ली । वाताजीर्णे । वा· सू· ८अ· ।

**अनिलाटिका** । स्त्री । रक्तपुनर्नवायाम् ।

**अनिलान्तकः** । पुं । इङ्गुदीवृक्षे । জিয়াপুতী । हिं इङ्गोट् । रा· नि· व· ८ ।

**अनिलापहा** । पुं । रक्तकुलत्थके । লালকর্ত্তি । वै· निघ· ।

**अनिलामयः** । पुं । वायुरोगे । वातव्याधौ ।

**अनिलारिरसः** । पुं । वातव्याध्यधिकारे रसः । "रसेन गन्धं द्विगुणं विमर्द्य वातारिनिर्गुण्डिरसैर्दिनैकं । निवेशयेत्ताम्रमये पुटे तत् सर्व्वं सदावेष्ट्य च बालुकाख्ये । यत्ने पुटे गोमयचूर्णवह्नौ स्वभावशीते तु समुद्धरेत्तत् ॥ निर्गुण्डिकावातहराग्नितोयैः संचूर्ण्य यत्नेन विभावयेत्तत् ॥" अत्र वातारिरसैः एरण्डमूलरसैः । अग्निः चित्रकः । तोयैः क्वाथैः । र· सा· सं·

**अनिलोचितः** । पुं । नीलमाषके । वै· निघ· ।

**अनिष्टा (ष्ठा)** । स्त्री । नागबला । रा· नि· ।

**अनिःसारा** । स्त्री । कदलीवृक्षे । কলাগাছ । रा· नि· व· ११ । वै· निघ· ।

**अनिक्षुः** । पुं । (Chaccharum spontaneus.) इक्षुविशेषे । থাগড়া । र· मा· । আনাখো । रत्ना·

**अनीकस्थः** । त्रि । हस्तिशिक्षाविचक्षणे । मे· थचतुष्कं ।

**अनीली** । स्त्री । काशतृणे । र· मा· ।

**अनुकः** । पुं । कामुके । अ· ।

**अनुकदली** । स्त्री । कदलीविशेषे । मं लीकंडीकेल ।

**अनुकर्णम्** । क्ली । कर्णसमीपे । वा· शा· ४अ· ।

**अनुकर्षणम्** । क्ली । पानपात्रे । हारा· ।

**अनुकल्पः** । पुं । An alternative. अभावे तद्गुणद्रव्यान्तरग्रहणे ।

**अनुकूलका** । स्त्री । लघुदन्त्याम् । वै· निघ· ।

**अनुकूला** । स्त्री । क्षुद्रदन्तीवृक्षे । रा· नि· व·६ ।

**अनुकूलिनी** । स्त्री । क्षुद्रदन्त्याम् ।

**अनुगः** । पुं । परिचारके । रत्ना· ।

**अनुच्छ्वासः** । पुं । श्वासरोधे ।

**अनुजम्** । स्त्री । प्रपौण्डरीक-नाम-गन्धद्रव्यविशेषे পুণ্ডরিয়া । रा· नि व· १२ ।

**अनुजा** । स्त्री । त्रायमाणलतायाम् । গোওয়ালিয়া লতা । रा· नि· व· ५ । বলা-ডুমুর । भा·पू· १भ· गु· व ।

**अनुतर्कम्** । क्ली । तक्रानुपाने । जग्ध्वा तक्रं पिबेदनु । सि· यो· पाण्डु·चि· वृन्दः ।

**अनुतर्षः** । पुं । तृष्णा । सुरापानपात्रे । भेष· मे· षचतुष्कं ।

**अनुत्क्लेशः** । पुं । उत्क्लेशाभावे । च·सं·विमू·चौ·।

**अनुत्थितविद्धा (शिरा)** । स्त्री । दुःस्थानबन्धनात् वेपमानायाः यस्याः शिरायाः शोणितसम्मोहो भवति । सु· शा ·८ अ· ।

**अनुपजः** । त्रि । अनुपदेशजाते । ते च कुलीचरकौषस्थमत्स्यप्लवपादिनो भवन्ति । See अनूपवर्गः ।

**अनुपदीना** । स्त्री । उपानहि । জুতা, থড়ম ইত্যাদি । हला· ।



**अनुपशयः** । पुं । What increases the disease. उपशयविपरीते व्याध्यसात्म्यौषधान्नविहारादौ । यथा—हेत्वव्याधिविपर्य्यस्तविपर्य्यस्तार्थकारिणां । औषधान्नविहाराणामुपयोगं सुखावहं । विद्यादुपशयं व्याधेः स हि सात्म्यमिति स्मृतः ॥ विपरीतोऽनुपशयो व्याध्यसात्म्याभिसंज्ञितः । मा· नि· पञ्चनिदाने ।

**अनुपानम्** । क्ली । औषधाङ्गपेयविशेषे । অনুপান । तत्र औषधपानानन्तरं विलम्ब्य प्रयोज्यं, रात्रौ पुनः पाचनमेव व्यवस्थेयम् । "विलम्ब्य च क्रामणमेतदीरितं रात्रौ पुनः पाचनमेतदूचिरे ।" रा· नि· व· २० । वातेऽनुपानं स्निग्धोष्णं, श्लेष्मणि रूक्षोष्णं, पित्ते स्निग्धं, स्वेहपाने उष्णोदकमित्यादि । मद· व· १३ । "चूर्णावलेहगुड़िकाकल्कानामनुपानकं । वातपित्तकफोद्रेके त्रिद्व्येकपलमाहरेत्" । शार्ङ्ग· म· ख· ६ अ· ।

**अनुपालुः** । पुं । पानीयालुके । বন আলু । रा· नि· व ७ ।

**अनुपुष्पः** । पुं । (Saccharum sara.) शरतृणे । श· च· । खड़्गतृणे । वेतसे ।

**अनुबन्धी** । स्त्री । तृष्णायां । हिक्कायां । मे· ।

**अनुभासः** । पुं । काकविशेषे । वै· निघ· ।

**अनुभूतिः** । स्त्री । चिरतायाम् । তেউড়ী । हिं निसोत्तर । See त्रिवृत् ।

**अनुमतम्** । क्ली । "परमतमप्रतिषिद्धम् । यथान्यो ब्रूयात् सप्तरसा" इति सु· उ· ६५ अ· ।

**अनुयवः** । पुं । यवाद्यूनोऽनुयवः । वा· । निःशूकयवे । हेमा· । गुणाः—वृष्यः स्थैर्य्यकरः मूत्रमेदः-पित्तकफघ्नः पीनसश्वासकासोरुस्तम्भकण्ठरोगघ्नश्च । वा· शूकधान्यवर्गे ।

**अनुरुहा** । स्त्री । नागरमुस्तायां । নাগরমুতা ।

**अनुरेवती** । स्त्री । क्षुद्रदन्त्याम् । रा· नि· व· ६ ।

**अनुलासः** । पुं । मयूरपक्षिणि । मयूर ।

**अनुलास्यः** । पुं । मयूरपक्षिणि ।

**अनुलेपः** } पुं, क्ली । चन्दनादौ । गन्धद्रव्यादिलेपने । চন্দনাদি-লেপন ।
**अनुलेपनम्** }

गुणाः — अनुलेपस्तृषामूर्च्छादौर्गन्ध्यश्रमवातजित् । सौभाग्यतेजस्त्वग्वर्णप्रीत्योजोबलवर्द्धनः ॥ मद·व· १३ । अपिच—अनुलेपनकं बल्यं तेजःसौभाग्यदायकम् । लच्यं प्रीतिप्रदं प्रोक्तं तृण्मूर्च्छाश्रमनाशनं । दौर्गन्ध्यवातहं प्रोक्तं पूर्व्वाचार्य्यैरिदं स्मृतम् ॥ वै· निघ· । प्रीतिकरं, ओजस्करं, शुक्रवर्द्धनं, दौर्गन्ध्यहरं, श्रमपापतन्द्राहरञ्च । राज· ।

**अनुलोमनम्** । क्ली । अनुलोमकरणे । मलादिधातूनां यथामार्गं गमनोपाये । মলাদি ধাতুর যথাপথে গমনোপায় । यथा—कृत्वा पाकं मलानाञ्च भित्त्वा बन्धमधो नयेत् । तच्चानुलोमनं प्रोक्तं यथा प्रोक्ता हरीतकी ॥ भा· ।

**अनुल्की** । स्त्री । हिक्कायाम् । तृष्णायाम् । मे· ।

**अनुवासः** } पुं, क्ली सौरभ्ये । स्नेहवस्तौ । स्नेहने । धूपने । मे· । "यः स्नेहो दीयते सः स्यादनुवासननामकः" । तस्य मात्रा च पलद्वयं तदर्द्धं वेति । भा· ।
**अनुवासनः** }
**अनुवासनकः** }

**अनुवासनवस्तिः** । पुं । स्नेहवस्तौ । मात्रावस्तौ । "अनुवासनभेदश्च मात्रावस्तिरुदीरितः" । भा· । स च तैलादिस्नेहोपकरणैः स्नेहक्वाथादिना वा साध्यते गोपुच्छाकारेण स्वर्णादि-निर्म्मितेन गजदन्तादिकृतेन वा नेत्रेण (পিচকারী বা নল) । नेत्र-परिमाणं वयोभेदेन विविधम् । एकवर्षीयात् षड्वर्षपर्य्यन्तं षडङ्गुलं । अष्टवर्षे अष्टाङ्गुलं । षोड़शवर्षे द्वादशाङ्गुलं । प्रत्येकञ्च परिणाही यथाक्रमं कनिष्ठिकानामिकामध्यमाङ्गुलि-परिमितः । एतेषाञ्च प्रत्येकं यथाक्रमं सार्द्धाङ्गुलं सार्द्धद्व्यङ्गुलं सार्द्धत्र्यङ्गुलञ्च वस्तिमुखे सन्निवेश्यम् । वस्तिद्वारप्रवेशनीयनेत्रमुखञ्च यथाक्रमं कङ्कश्येनमयूरपुच्छमध्यनाड़ीवत् स्थूलं भाव्यम् । येन च द्रव्येणास्थापनं तत्परिमाणं पूर्व्वोक्तवयोऽनुरूपमेव यथाक्रमं रोगिणो द्व्यञ्जलिपरिमाणं चतुरञ्जलिमितमष्टाञ्जलिमितञ्च भाव्यम् । एवमुत्तरोत्तरं वयोऽनुरूपं नेत्रादिमानं वर्द्धनीयम् । द्वितीयञ्च—पञ्चविंशतेरूर्द्ध्वं नेत्रदैर्घ्यं द्वादशाङ्गुलं मूलपरिणाहश्च अङ्गुष्ठोदरसन्निभो भाव्यः । स्थविनोपवनाड़िकाववहागभागः, वदरास्थिमितं वा कलायपरिमितं वा छिद्रवत्मं भाव्यम् । वस्तिसम्बन्धनार्थञ्च नेत्रमूले कर्णिकाद्वयं (কাণি) कार्य्यम् । द्रव्यमानञ्च रोगिणो द्वादशाञ्जलि । अत्र कल्पे माधकतैलं ग्राह्यम् । सु· चि· ३८अ· । एतत्प्रकरणं सु· चि· ३५।३६।३७ अ· स्मर्य्यं । विरेचनात्सप्तरात्रे गते जातबलाय च । भुक्तान्नायानुवास्याय वस्तिर्देयोऽनुवासनः ॥ अथानुवास्यं स्वभ्यक्तं उष्णाम्बु-

स्विदितं शनैः। भोजयित्वा यथाशास्त्रं कृतचंक्रमणं ततः। उत्सृष्टानिलविण्मूत्रं योजयेत् स्नेहवस्तिना। सुप्तस्य वामपार्श्वेन वामजङ्घाप्रसारिणः। कुञ्चितापरजङ्घस्य नेत्रं स्निग्धे गुदे न्यसेत्। बद्धा वस्तिमुखे सूत्रं वामहस्तेन धारयेत्। पीड़येद्दक्षिणेनैव मध्यवेगेन धीरधीः। जृम्भाकासक्षवादींश्च वस्तिकाले न कारयेत्॥ वै. निघ. वस्तिविधिः। अथास्य यथा—अथानुवासनविधेस्तथैवास्थापनस्य च। प्रवक्ष्यामि यथायोगं शास्त्रदृष्टेन वर्त्मना॥ काष्ठैर्दण्डैरयोभिश्च शृङ्गवंशनलादिभिः। द्वादशाङ्गुलदीर्घन्तु परिणाहे षडङ्गुलम्॥ कोलास्थिमात्रच्छिद्रन्तु कुर्य्यान्नेत्रं विचक्षणः। मूलादनुक्रमश्लक्ष्णमस्त्राणन्तु विशेषतः। त्यक्ताङ्गुलानि चत्वारि कर्णिकान्तस्य कारयेत्। पुटकस्य प्रबन्धाय मूले द्वे चापि कर्णिके॥ अनेनास्थापनं कुर्य्यादनुवासनमेव च। यथायोग्यं भिषक् प्राज्ञः सर्व्वरोगोपशान्तये॥ अनुवासनविवरणम्—त्रिरात्रं पञ्चरात्रं वा सप्तरात्रमथापि वा। भोजयित्वा हयं प्राज्ञो रसक्षीरेहभोजनैः॥ भोजितं भोजनीयेन दिनान्ते चानुवासयेत्। निरूहं दिनाह्वारमपराह्ले विचक्षणः॥ त्रिभिर्योरैः प्रदातव्यो निरूहः शास्त्रकोविदैः। ईषत्तीक्ष्णः प्रयोक्तव्यः प्रथमं पुटकोविदैः॥ द्वितीयश्च तृतीयश्च तीक्ष्णौ चैव प्रकोर्त्तितौ॥ ज. द १६ अ।

**अनुवासनोपगवर्गः**। पुं। षड्विंशदशकनाम-कषायवर्गे। यथा—रास्नासुरदारुविल्वमदनशतपुष्पवृश्चीरपुनर्नवाश्वदंष्ट्राग्निमन्थश्योणाका इति दशेमानि...॥ वृश्चीरः श्वेतपुनर्नवा। च. सू. ४अ.।

**अनुवासाख्यः**। पुं। अनुवासने। वै. निघ.।

**अनुवेल्लितम्**। क्ली। शाखासु व्रणबन्धनभेदे। सु. सू. १८अ।

**अनुशयी**। स्त्री। क्षुद्ररोगान्तर्गत-पादरोगविशेषे। तल्लक्षणं यथा—गम्भीरामल्पशोथाञ्च सवर्णामुपरिस्थिताम्। पादस्यानुशयीं तान्तु विद्यादन्तःप्रपाकिनीम्॥ चि—हरेदनुशयीं वैद्यः क्रियया श्लेष्मविद्रधेः। भा. पाद. रो चि.।

**अनुशस्त्रम्**। क्ली। त्वक्सारस्फटिककाचजलौकाग्निक्षारनखादिरूपशस्त्रेषु। तानि च शिशुभीरुप्रभृत्यर्थम्। सु. सू. ८अ.।

**अनुष्णम्**। क्ली। उत्पले। नीलपद्मे। रा. नि।

**अनुष्णवल्लिका**
**अनुष्णवल्ली** } स्त्री। नीलदूर्व्वायाम्। रा. नि. व. ८।

**अनुसार्य्यकम्**। क्ली। सुगन्धद्रव्यविशेषे। मं छड़ीला।

**अनूचानः**। पुं। उत्तमवैद्ये साङ्गवेदाध्यायिनि।

**अनूपः**। पुं। महिषे। मे. पतिकं। अम्बुप्रायदेशे। मे.। तल्लक्षणं यथा—"बह्वम्बुर्बहुवृक्षश्च वातश्लेष्मामयान्वितः। देशोऽनूप इति ख्यातः॥ तथा नदीपल्वलशैलाढ्यफुल्लोत्पलकुलैर्युतः। हंससारसकारण्डचक्रवाकादिसेवितः। सरो वराहमहिषरुरुरोहिकुलाकुलः। प्रभूतद्रुममुख्याढ्यो नानाशस्यफलान्वितः। अनेकशालिकेदारकदलीक्षुविभूषितः। अनूपदेशो ज्ञातव्यो वातश्लेष्मामयार्त्तिमान्"। भा.। गुणाः—गुरुः, सान्द्रः, पिच्छिलः, मधुरः, श्लेष्मलः, स्निग्धः, प्रमेहगलगण्डश्लीपदच्छर्द्दिकरश्च। रा नि.। राजवल्लभस्तु स्निग्धं शीतलं वातश्लेष्मलं गुरुञ्चाह।

**अनूपजम्**। क्ली। आर्द्रके। रा, नि. व ६। त्रि। अनूपदेशोत्पन्नद्रव्यमात्रे। पुं। वृक्षविशेषे। आनारस गाछ। वै. निघ.।

**अनूपदेशः**। पुं। अनूपलक्षणयुक्तप्रदेशे। See अनूपः।

**अनूपमांसम्**। क्ली। अनूपदेशस्थजन्तुमांसे। See आनूपमांसम्।

**अनूष्णम्**। क्ली। उत्पले। শুন্দিফুল, শালা। रा. नि. व. १०।

**अनृजुः**। त्रि। शठे। असरले। पुं। तगरपुष्पवृक्षे।

**अनेकदिग्वायुः**। पुं। नानादिग्भवविसंष्ठुलवाते। এলো মেলো বাতাস।

**अनेकपः**। पुं। गजे। হাতী। मद. व. ११।

**अनेकान्तः**। पुं। क्वचित्तथा क्वचिदन्यथेति यः सः। सु. उ. ६५ अ।

**अनेड़मूकः**। त्रि। वाक्श्रुतिरहिते। मे.। अन्धे।

**अनोकहः**। पुं। वृक्षे। गाछ।

**अन्तःकण्ठशस्त्रावलोकिनी**। स्त्री। नाड़ीयन्त्रविशेषे। सा च दशाङ्गुला भवति। अत्रिः।

**अन्तःकरणम्**। क्ली। अन्तरिन्द्रिये, मनसि।

**अन्तःकुटिलः**। पुं। शङ्खे। शाँक।

**अन्तःकोटरपुष्पी (ष्पिका)**। स्त्री। नीलवुह्नायाम्। छागलबांटे। फ. मु.। रता।



**अन्तःपदवी**। स्त्री। सुषुम्नाख्यनाड़िकायाम्।

**अन्तःसत्त्वा**। स्त्री। भल्लातकवृक्षे। गर्भिण्याम्। श. च.।

**अन्तकः**। पुं। काञ्चनारवृक्षे। रक्तकाञ्चन। भा. गु. व.। यमे। सन्निपातज्वरविशेषे। तल्लक्षणं—यथा—दाहं करोति परितापनमातनोति, मोहं ददाति विदधाति शिरःप्रकम्पं। हिक्कां करोति कसनञ्च समाजुहोति, जानीहि तं विबुधवर्जितमन्तकाख्यम्। भा म १भ.।

**अन्तरम्**। क्ली। अवकाशे। छिद्रे। मध्ये। मे. रत्रिकं।

**अन्तरापत्या**। स्त्री। गर्भिण्याम्।

**अन्तरायामः**। पुं। आक्षेपकभेदे। लक्षणं यथा—अङ्गुलीगुल्फजठरहृद्वक्षोगलसंश्रितः। स्नायुप्रतानमनिलस्त्वभः क्षिपति वेगवान्॥ विष्टब्धाक्षः स्तब्धहनुर्भग्नपार्श्वः कफं वमन्। अभ्यन्तरं धनुरिव यदा नमति मानवः। तदा सोऽभ्यन्तरायामं कुरुते मारुतो बली॥ भा। मा. नि.।

**अन्तरि(री)क्षम्**। क्ली। आकाशे। रा. नि. व. १२।

**अन्तरिक्षजलम्**
**अन्तरीक्षजलम्** } क्ली। आकाशजले। বৃষ্টির জল। See गगनाम्बु।

**अन्तरुहा**। स्त्री। श्वेतदूर्व्वायाम्।

**अन्तर्जठरम्**। क्ली। कोष्ठे। कुक्षिमध्ये। अम.।

**अन्तर्दधनम्**। क्ली। सुरावीजे। श. च.।

**अन्तर्दाहः**। पुं। शरीराभ्यन्तरदाहे। গায়ের ভিতরে জ্বালা। कोष्ठसन्तापे। रा. नि. व. २०। सन्निपातज्वरविशेषे। लक्षणं यथा—अन्तर्दाहः शैत्यं वहिः श्वयथुररतिरपि श्वासः। अङ्गमपि दग्धकल्पं सोऽन्तर्दाहार्दितः कथितः॥ भा. म. १भ।

**अन्तर्धूमः**। त्रि। बद्धमुखहण्डिकाभ्यन्तरे अग्निदग्धे। च. द. ग्रहणी-चि. चित्रकक्षारे।

**अन्तर्मलः**। पुं। मलान्तवृक्षे। कश्चिदत्रिः।

**अन्तर्महानादः**। पुं। शङ्खे।

**अन्तर्मुखम्**। क्ली। व्रणविस्रावणास्त्रविशेषे। लक्षणं यथा—तद्वदन्तर्मुखं तस्य मध्यमध्यर्द्धमङ्गुलम्। अर्द्धचन्द्राननं चैतत् तथाध्यर्द्धाङ्गुलं फलं॥ कश्चिदत्रिः।

**अन्तर्मुखी**। स्त्री। स्त्रीयोनिरोगविशेषे। तल्लक्षणं—व्यवायमतितृप्ताया भजन्त्यास्तत्र पीड़ितः। वायुर्मिथ्यास्थिताङ्गाया योनिस्रोतसि संस्थितः॥ वक्रयत्याननं योन्याः सास्थिमांसानिलार्त्तिभिः। भृशार्त्तिर्मैथुनासक्ता योनिरन्तर्मुखी मता॥ च. चि.।

**अन्तर्वत्नी**। स्त्री। गर्भिण्याम्। अम.।

**अन्तर्वमिः**। स्त्री। अपरिपाके। त्रिका.।

**अन्तर्विद्रधिः**। पुं। जठरान्तरस्थविद्रधिरोगे। लक्षणं यथा—पृथक् सम्भूय वा दोषाः कुपिता गुल्मरूपिणं। वल्मीकवत् समुन्नद्धमन्तः कुर्व्वन्ति विद्रधिम्॥ गुदे वस्तिमुखे नाभ्यां कुक्षौ वङ्क्षणयोस्तथा। वृक्कयोः प्लीह्नि यकृति हृदि वा क्लोम्नि चाप्यथ। एषां लिङ्गानि जानीयाद्बाह्यविद्रधिलक्षणैः॥ भा.।

**अन्तर्वृद्धिः**। पुं। अन्त्रवृद्धिरोगे॥ See अन्त्रवृद्धिः।

**अन्तर्वेधः**। पुं। मर्म्मवेधे। मर्म्मपीड़ायाम्।

**अन्तशय्या**। स्त्री। मरणे। मे.।

**अन्तस्नेहफला**। स्त्री। श्वेतकण्टकार्य्याम्।

**अन्तावसायी**। (इन्)। पुं। नापिते। मे.।

**अन्तिका**। स्त्री। सातलायाम्। চাগরকষা। चुल्ल्याम्। मे. कत्रिकं।

**अन्त्यः**। पुं। मुस्तायाम्। मे।

**अन्त्यपुष्पा**। स्त्री। धातकीवृक्षे। वै. निघ.।

**अन्त्रम्**। क्ली। पुरीतति। नाड़ीभूँड़ि। रा. नि. व. १८। उक्ताः सार्द्धास्त्रयो व्यामाः पुंसामन्त्राणि सूरिभिः। अर्द्धव्यामेन हीनानि योषितोऽन्त्राणि निर्द्दिशेत्॥ सार्द्धत्रिव्यामान्यन्त्राणि पुंसां स्त्रीणामर्द्धव्यामहीनानि। सु. शा. ५अ.। असृजः श्लेष्मणश्चापि यः प्रसादः परो मतः। तं पच्यमानं पित्तेन वायुश्चाप्यनुधावति। ततोऽस्यान्त्राणि जायन्ते गुदं वस्तिश्च देहिनः॥ इति तदुत्पत्तिः। सु. शा. ४अ।

**अन्त्रकूजः**। पुं। वायुरोगविशेषे। नाड़ीशब्दे। सु. नि. १अ.।

**अन्त्रकूजनम्**। क्ली। अन्त्रध्वनौ। আঁৎডাকা, বাক্ষেধরা इति भाषा। नि.।

**अन्त्रपाचम्**। क्ली। स्थावरविषान्तर्गतत्वक्सारनिर्यासविशेषे। सु. कल्प. २अ.।

**अन्त्रवल्लिका**। स्त्री। महिषवल्ल्यां। रा. नि. व.३।

**अन्त्रवल्ली**। स्त्री। सोमवल्लीलतायाम्।

**अन्त्रवृद्धिः** । स्त्री । Hernia. स्वनामख्यात-रोगविशेषे । तल्लक्षणं यथा—वातकोपिभिराहारैः शीततोयावगाहनैः । धारणे रणभाराध्वविषमाङ्ग-प्रवर्त्तनैः ॥ क्षोभणैः क्षोभितोऽन्यैश्च क्षुद्रान्त्रावयवं यदा । पवनो विगुणीकृत्य स्वनिवेशादधो नयेत् । कुर्य्याद्वङ्क्षणसन्धिस्थो ग्रन्थ्याभं श्वयथुं तदा ॥ उपे-क्ष्यमाणस्य च मुष्कवृद्धिम् आध्मानरुक्स्तम्भवतीं स वायुः । प्रपीड़ितोऽन्तः स्वनवान् प्रयाति प्रध्मापय-न्नेति पुनश्च मुक्तः ॥ अन्त्रवृद्धिरसाध्योऽयं वातवृद्धि समाकृतिः । मा. नि. ।

**अन्त्रादः** । पुं । आभ्यन्तरकृमौ । मा. नि. । शार्ङ्ग. ७ अ. । See कृमिः ।

**अन्त्रालजी** (मा.)
**अन्ध्रालजी** (सु.) } स्त्री । वातश्लेष्मजन्यक्षुद्र-रोगविशेषे । तल्लक्षणं—घनामवक्त्रां पिड़कामुन्नतां परिमण्डलां । अन्त्रालजी-मल्पपूयां तां विद्यात्कफवातजाम् ॥ मा. नि. ।

**अन्त्री** । स्त्री । वृद्धदारकलतायाम् । अ. टी. ।

**अन्थकम्** । क्ली । अङ्गारे । रत्ना. ।

**अन्दिका** । स्त्री । चुल्लयाम् । अ. टी. ।

**अन्धः** । त्रि । नेत्रहीने । क्ली । तिमिरे । मे. धद्विकं । (न्धस्) अन्ने । रा. नि. व. २० । जले । भरतः ।

**अन्धकः** । पुं । तुम्बुरौ । কাঁচাধনে । भा. पू. १भ. ह. व. ।

**अन्धकाकः** । पुं । काकाकारे पक्षिणि । পাণ-কৌড়ি । मं भेदजुया । त्रिका. ।

**अन्धकारः** । पुं । आलोकाभावे । तत्पर्य्यायः,—ध्वान्तं तमिस्रं तिमिरं तमः (अ), भूच्छायं (रा), अन्धतमासं अन्धतामसं सन्तमसं अवतमसं । गुणाः—भयदृष्टितेजोऽवरोधकरः रोगजनकश्च । राज. ।

**अन्धकूपः** । पुं । मोहे ।

**अन्धता** । स्त्री । पित्तरोगे । वै. निघ. ।

**अन्धपूतना** । स्त्री । बालकग्रहपीड़ाविशेषे । लक्षणम्—यो द्वेष्टि स्तनमतिसारकासहिक्काच्छर्द्दी-भिर्ज्वरसहिताभिरर्द्यमानः । दुर्वर्णः सततमधःशयो-ऽम्लगन्धिस्तं ब्रूयुर्भिषजोऽन्धपूतनार्त्तम् ॥ चि.—तिक्तद्रुमपत्रसिद्धजलैः स्नानं । सुरादिसाधिततैलम् । पिप्पल्यादिसिद्धघृतादिकञ्च । सु. उ. २७।३३ अ. ।

**अन्धमूषा** । स्त्री । वज्रमूषापरनामके औषध-पाकार्थं यन्त्रविशेषे । तस्य लक्षणं यथा—अन्धमूषा तु कर्त्तव्या गोस्तनाकारसन्निभा । सैव च्छिद्रान्विता मध्ये गम्भीरा सारणोचिता ॥ द्वौ भागौ तुषदग्धस्य एका वल्मीकमृत्तिका । लौहकिट्टस्य भागैकं श्वेत-पाषाणभागिकम् । नरकेशसमं किञ्चित् छागीक्षीरेण पेषयेत् ॥ यामद्वयं दृढ़ं मर्द्द्य तेन मूषां सुसम्पुटाम् । शोषयित्वा रसं क्षिप्त्वा तत्कल्कैः संनिरोधयेत् । वज्र-मूषा समाख्याता सम्यक्पारदसाधिका । र. सा. सं. । कश्चिदन्तिः. ।

**अन्धमूषिका** । स्त्री । देवताड़वृक्षे । দেয়াতাড়া । तृणविशेषे । श. च. ।

**अन्धाहिः** । पुं । कुँचिया-मीने । কুঁচেমাছ, জলঢেটে । त्रिका. ।

**अन्धाहुली** । स्त्री । आहुल्यनामकशिम्बीफल-वनस्पतिविशेषे ।

**अन्धिका** । स्त्री । सर्षप्यां । स्त्रीविशेषे । मे कत्रिकं । नेत्ररोगविशेषे । श. र. ।

**अन्धुः** । पुं । कूपे । त्रिका. ।

**अन्धुलः** । पुं । शिरीषवृक्षे । श. च ।

**अन्नम्** । क्ली । शस्ये । व्रीहियवादौ खाद्यद्रव्य-मात्रे । चर्व्यचोष्यलेह्यपेयभेदेन अन्नं चतुर्विधम् । केऽपि च निष्पेयचर्व्वणचोष्यखाद्यभेदेनाष्टधा वदन्ति । राजनिघण्टुकारोऽपि अन्नमष्टविधमाह चर्व्यादिभेदेन । व. २० । भक्ते । ভাত । तत्पर्य्यायः,—भक्तं अन्धः भिस्सा (अटी), अट्टं कसिपुः जीवातुः (ज), क्रूरं (रा), जीवनकं (हे), कूरं आपूष्टिकं जीवन्ति प्रसादनं (शब्द. र.) । तत्र तण्डुलपरिमाणापेक्षया पञ्चगुणजले सिद्धम् । अन्नं पञ्चगुणे साध्यम् । च. द. ज्व. चि । प. प्र. २ख । स्विन्नतण्डुले यथा—शस्यक्षेत्रगतं प्राहुः सतुषं धान्यमुच्यते । आमं वितुषमित्युक्तं स्विन्नमन्नमुदाहृतम् ॥ वशिष्ठः । तथा जलदानप्रमाणतोऽन्नं चतुर्विधम् । चतुर्विधं भवेद्भक्तं जलदानप्रमाणतः । तत्र भक्तं विलेपी च यवागूः पेयया सह ॥ प्रयोगरत्नाकरः । अन्नगुणाः—अग्निकरं पथ्यं तर्पणं मूत्रलं लघु च । तत्र अधौतमन्नमस्रुतञ्चान्नं—शीतलं गुरु वृष्यं कफजनकं । सुधौतमन्नं उष्णं विशदं गुणकरञ्च । भृष्टतण्डुलज-मन्नं—रुच्यं सुगन्धि कफघ्नं लघु च । अतिक्लिन्नं—ग्लानिकरं, तण्डुलान्वितं—दुर्जरम् । मद व. ११।९ । धान्याम्ले पाचितं भक्तं लघु अग्निप्रदी-पकं रुचिप्रदञ्च ॥ वै. निघ. । मथितयुक्तं भक्तं—



स्वादु शीतलं रुच्यं अग्निदीपनं पाचकं पुष्टिकरं ग्रहण्यर्शःशूलघ्नं । रात्रौ भक्षितं—रुच्यं तृप्तिकरं दीपनमर्शोघ्नञ्च । मुद्गयूषयुक्तं—कफज्वरे, शर्करा-मिश्रितं—पित्तज्वरे हितम् । लाजभक्तं—लघु शीतल-मग्निकरं मधुरं वृष्य निद्रारुचिकरं व्रणशोधनञ्च । यावकान्न—गुरु स्वादु वृष्यं स्निग्धं गुल्मज्वरकण्ठ-रोगकासमेहघ्नञ्च । खेचरान्नं—तर्पणं गुरु वृष्यं धातुवर्द्धकम् । यौगन्धरान्नं—गुरु घनं कासश्वास-घ्नञ्च । कोद्रवान्नं—रुचिकरं मधुरं प्रमेहघ्नं मूत्र-दोषघ्नं तृष्णाघ्नं छर्दिकफवातामदाहघ्नञ्च । श्यामा-कान्नं—रुच्यं लघु रुक्षं दीपनं बल्यं वातकरं मेह-गलरोगमूत्रकृच्छ्रघ्नञ्च । नीवारान्नं—रुचिदं लघु दीपनं गुरुवातकृत् यकृत्प्लीहश्वासव्रणघ्नञ्च । कुल-त्थान्नं—मधुरं रुक्षम् उष्णं लघु कटुपाकि दीपनं कफवातकृमिश्वासहरञ्च । माषान्नं—दुर्जरं मांस-वृद्धिकरं गुरुवातघ्नं वृष्यञ्च । शिम्ब्यन्नं—मधुरं रुक्षं वातपित्तकोपनञ्च । वैदलान्नं—गुरु रुचिकरं । आढ़क्यन्नं—गुरु कफपित्तघ्नञ्च । मत्स्यौदनं—कफ-करं त्रिदोषकरं अग्निमान्द्यकरञ्च । शाकान्नं—लेखनं रुक्षमुष्णं दोषद्रावकञ्च । मांसौदनं—धातु-वर्द्धकं स्निग्धं गुरु च । फलान्नं (फलान्नं)—रुच्यं गुरु फलसमगुणञ्च । षष्टिक-साधारणशाल्यन्नं—दीपनं बल्यं पाचनं त्रिदोषघ्नं क्षयविषघ्नञ्च । नवान्नं मधुरं स्निग्धं गुरु मलस्तम्भनं रक्तपित्तघ्नञ्च । उष्णान्नं—दीपनं लघु श्रमकरं मदात्ययरक्तपित्त-प्रमेहवातकरं कासश्वासकृम्याध्मानगुल्मजाड्यक्षत-कासहरञ्च । शीतान्नं—शीतलं लालास्रावकम् अग्निमान्द्यमेहमूर्च्छादिहरञ्च । वै. निघ. । क्लिन्नान्नं—दुर्जरं ग्लानिकरञ्च ।

**अन्नकालः** । पुं । भोजनसमये । तल्लक्षणं,—"क्षुत् सम्भवति पक्वेषु रसदोषमलेषु च । काले वा यदिवाकाले सोऽन्नकाल उदाहृतः ॥" भा. ।

**अन्नकोष्ठः** । पुं । तण्डुलधान्यादिरक्षणाधारे । গোলা, মরাই ।

**अन्नगन्धिः** । पुं । अतिसाररोगे । त्रिका. । মলভেদ । मं हगवण ।

**अन्नजम्** । क्ली । त्रैदिवसिकान्नमण्डे । मं तिन-दिवसाचों शिलोदेज ।

**अन्नजा** । स्त्री । हिक्काभेदे । पलान्नैरतिसंयुक्तैः सहसा पीड़ितोऽनिलः । हिक्कयत्यूर्द्धगो भूत्वा तां विद्यादन्नजां भिषक् ॥ भा. ।

**अन्नद्रवशूलः** । पुं, क्ली । परिणामशूले । तल्ल-क्षणं यथा,—यदा जीर्य्यत्यजीर्णे वा यच्छूलमुप-जायते । पथ्यापथ्यप्रयोगेन भोजनाभोजनेन च । न शमं याति नियमात् सोऽन्नद्रव उदाहृतः ॥ मा. नि. See पक्तिशूलम् ।

**अन्नद्रवाख्यः** । पुं । अन्नद्रवशूले । मा. नि. ।

**अन्ननाड़ी** । स्त्री । अन्नपाकनाड्याम् । सा च २० हस्तमिता कलापेशीनिर्म्मिता । तदुक्तं—हस्त-विंशतिप्रमाणा कलापेशीविनिर्म्मिता । अन्नपाक-क्रियार्था च पाकनाड़ी प्रकीर्त्तिता ॥ ऊर्द्ध्वांशो मुखनामास्य अधोऽंशो गुदनामकः । कण्ठादामा-शयं यावदन्ननाड़ी तु कथ्यते ॥ ततश्चामाशयस्तस्मात् स्थूलान्तः स्थूलमस्तकः । आमाशयात् समारभ्य भागः प्रथम आन्त्रिकः । ग्रहणी चाग्न्यधिष्ठानं बुधैराद्यैः प्रकीर्त्तितः । ततः पक्वाशयः प्रोक्तः पक्वान्न-परिधारणात् ॥ स्थूलान्त्रस्याप्यधोभागः सरलो-गुदसंज्ञकः । अन्नकिट्टं मलं सर्व्वं वहिर्निःसारयत्ययम् ॥ श्वासनाड्याः स्थिता पश्चादन्ननाड्यन्नवाहिनी । अध-स्तात् कुण्डलीभूता नाड़ी चोदरमध्यगा ॥ कण्ठा-दधोगतिर्नाड़ी भित्त्वा वक्षःस्थलाश्रयां । पेशीमुख-द्वयवतीं प्रविष्टेयमधोगुह्याम् । इत्यादि । आत्रेयः ।

**अन्नप्राशनम्** । क्ली । षष्ठे अष्टमे वा मासि बालस्यान्नभोजने । भा. ।

**अन्नमण्डः** । पुं । भक्तमण्डे । ভাতের মাড় । गुणाः—क्षुद्बोधनी वस्तिविशोधनश्च प्राणप्रदः शोणित-वर्द्धनश्च । ज्वरापहारी कफपित्तहन्ता वायुञ्जये-दष्टगुणो हि मण्डः ॥ च. द. अग्निमा. चि. ।

**अन्नमयः** । पुं । स्थूलशरीरे ।

**अन्नमयकोशः** । पुं । शरीरे ।

**अन्नमलम्** । क्ली । पुरीषे । मद्ये ।

**अन्नरसः** । पुं । भक्तमण्डे ।

**अन्नलिप्सा** । स्त्री । अन्नभोजनेच्छायाम् । क्षुधा-याम् । वै. निघ. । प्रकृतिगामिमनोऽन्नलिप्सा । च. द. ।

**अन्नवहा** । स्त्री । धमनीद्वयले । याभ्यां भुक्त-मन्नमुदरं नीयते । सु. शा. ९अ. । तयोर्मूलमामा-शयः, अन्नवाहिधमन्यश्च ।

**अन्नवाहिस्रोतः** । क्ली । गलनाड्याम् । গলার নলী ।

**अन्नविकार:** । पुं । Seminal secretion. भक्तविकृतौ ।

**अन्नविपाकनाड़ी** । स्त्री । अन्ननाड्याम् । यथा—विचित्रविधिना पक्वमन्नं सत्त्वानि जीवयेत् । अन्नग्रासो रसै: पिष्टो लालाक्लिन्नोऽन्ननाड़िकाम् ॥ श्वासरन्ध्रं नासारन्ध्रञ्चातिक्रम्य सुखं विशेत् ॥ निरुणद्धुपजिह्वा सा सर्व्वथा श्वासनाड़िकां । जिह्वा प्रयाति पश्चाच्च पाकनाड़ीं ततोऽभित: ॥ किञ्चिदूर्द्धमुखी भूत्वा पिण्डं ग्रसति यत्नत: । आदारन्ध्रप्रविष्टं चेदन्नं कासैर्विनि:सरेत् ॥ द्वितीयगं चवथुना चयेन प्रकृतेर्बलात् । अतो नैवातित्वरणं श्रेय: पानान्नकर्म्मणि ॥ आत्रेय: ।

**अन्नशेष:** । उच्छिष्टान्ने । এটো ভাত ।

**अन्नाजीर्णम्** । क्ली । अन्नं भुक्तं तदजीर्णञ्चेति अन्नाजीर्णम् । भा· म· १भ. आमातीसा. । "अन्नाजीर्णात्प्रद्रुता: क्षोभयन्त: ।" तन्नामकशूलरोगे ।

**अन्नाद्यम्** । क्ली । अन्ने । ভাত । रा· नि. व· २० । धान्ये ।

**अन्नाशय:** । पुं । उदरे ।

**अन्यकारुका** । स्त्री । शकृत्कीटे । हारा· ।

**अन्यतोवात:** । पुं । सर्व्वाक्षिगतरोगे । अन्यत्र वा अन्यत्रावस्थितस्य वायोरन्यत्र वेदनोत्पादकत्वात्तथाभिधानम् । लक्षणं यथा—"यस्यावटूकर्णशिरोहनुस्थ: मन्यागतो वाप्यनिलोऽन्यतो वा । कुर्य्याद्रुजं वै भ्रुवि लोचने च तमन्यतोवातमुदाहरन्ति ॥" मा. नि· ।

**अन्यपुष्ट:** । पुं । कोकिले । কোকিল ।

**अन्यभृत्** । पुं । कोकिले । हला· । काके । हं· च·

**अन्यभृत:** । पुं । कोकिले । रत्ना· ।

**अन्यलोहम्** । क्ली । कांस्यधातौ । वै· निघ· ।

**अन्या** । स्त्री । हरीतक्याम् । वै· निघ. ।

**अन्येद्युष्क:** । पुं । उर:स्थश्लेष्मजन्ये विषमज्वरविशेषे । तल्लक्षणं—"अन्येद्युष्कस्त्वहोरात्रादेककालं प्रवर्त्तते" इति । मा· नि. ।

**अन्वाशनम्** । क्ली । धर्म्मशालायाम् । हला· । स्नेहवस्तौ ।

**अन्वासनम्** । क्ली । अनुवासने । স্নেহবস্তি ।

**अन्वाह्निक:** । त्रिं । प्रात्याह्निक ।

**अप्** । स्त्री । जले ।

**अप:(स्)** । क्ली । जले ।

**अपक्व:** । त्रि । आमे, अशृते । কাঁচা । तत्पर्य्याय:,—असिद्धं आम अशृतं (र) । तैले विपर्य्ययं विद्यात् पक्वे चापक्व एव च । प· प्र. ।

**अपक्वकदली** । स्त्री । अपक्वरम्भायाम् কাঁচা কলা । मं जुण केलें । गुणा:—अपक्वकदलञ्चैव मलस्तम्भकरं मतम् । तिक्तं कषायं रूक्षञ्च रक्तपित्ततृषाहरं । मेहाग्निरोगरक्तातिसारज्वरविनाशकृत् ॥ वै. निघ· ।

**अपक्वमांसम्** । क्ली । असिद्धमांसे । কাঁচা মাংস । गुणा:—अपक्वन्तु भवेन्मांसं रक्तदोषकरं मतम् । वातादिदोषजनकमिति मांसविदां मतम् ॥ वै· निघ· ।

**अपक्ववस्तु** । क्ली । असिद्धे अशृते च वस्तुनि । र· मा. ।

**अपक्वक्षीरम्** । क्ली । अपक्वदुग्धे । কাঁচা দুধ । गुणा:—अभिष्यन्दि गुरु च ।

**अपघन:** । पुं । शरीरावयवे । अङ्गे । अम· ।

**अपघात:** । पुं । अस्वाभाविक-मरणे ।

**अपचायित:** । पुं । रोगे ।

**अपचार:** । पुं । अजीर्णे ।

**अपची** । स्त्री । गण्डमालाख्यगलरोगविशेषे । तस्या लक्षणम्—हन्वस्थिकक्षाक्षकबाहुसन्धिमन्यागलेषूपचितन्तु मेद: । ग्रन्थिं स्थिरं वृत्तमथायतं वा स्निग्धं कफश्चाल्परुजं करोति ॥ तं ग्रन्थिभिश्चामलकास्थिमात्रैर्मत्स्याण्डजालप्रतिमैस्तथान्यै: । अनन्यवर्णैरुपचीयमानं चयप्रकर्षादपचीं वदन्ति ॥ कण्डूयुतास्तेऽल्परुज: प्रभिन्ना: स्रवन्ति नश्यन्ति भवन्ति चान्ये । मेद:कफाभ्यां खलु रोग एष सुदुस्तरो वर्षगणानुबन्धी ॥ सु· नि ११अ. ।

**अपटु:** । त्रि । रोगिणि । रा· नि· व· २० ।

**अपतन्त्र:** } **अपतन्त्रक:** } पुं । स्वनामख्यातवातव्याधिरोगे । अत्र कुपितो वायुरूर्द्धं चरन् हृदयशिर:शङ्खमभिप्रपन्नस्तत्स्थानं पीड़यन् देहं धनुरिव नतमाक्षिपत्येव करोति । तेन मूर्च्छा क्लम्यात्वता नि:संज्ञता श्वासकाठिन्य कपोतवत्कूजनं च जायते । लक्षणं—स्वै: कोपनैर्वायु: स्थानादूर्द्धं प्रपद्यते । पीड़यन् हृदयं गत्वा शिर:शङ्खौ च पीड़यन् ॥ धनुर्वन्नमयेद्गात्राण्याक्षिपेन्मोहयेत्तदा । स कृच्छ्रादुच्छ्वसेच्चापि स्तब्धाक्षोऽथ निमीलक: । कपोत इव कूजेच्च नि:सञ्ज्ञ: सोऽपतन्त्रक: । मा· नि: वा. व्या. । अथापतन्त्रकेनार्त्तमातुरं नापतर्पयेत् । निरूहवस्तिं वमनं सेवयेन्न कदाचन ॥ इत्यादि चिकित्सा ।



**अपतर्पणम्** । क्ली । तृप्त्यभावे । लङ्घने । हारा· च· द· रक्तपित्त-चि । व्रणोत्क्षायोपशान्त्यर्थमाद्ये उपक्रमे । सु· चि, १अ. ।

**अपतान:** } **अपतानक:** } पुं । वातव्याधिविशेषे । अत्र दृष्टिनाश: संज्ञानाशश्च भवति ; कण्ठस्थानमव्यक्तं कूजति ; वायुर्यदा हृदयमाक्रामति तदा मूर्च्छा, यदा च हृदयाच्चलति तदा स्वास्थ्यं जायते । लक्षणम्—दृष्टिं संस्तभ्य संज्ञाञ्च हत्वा कण्ठेन कूजति । हृदि मुक्ते नर: स्वास्थ्यं याति मोहं वृते पुन: । वायुना दारुणं प्राहुरेके तमपतानकम् । मा, नि· वा· व्या. । गर्भपातादिनिमित्त: स: न सिध्यति । अपतानकिने शस्तं दशमूलीशृतं जलम् । तैलेन मर्द्दनं स्वेद: तथा तीक्ष्णेण नावनम् । स्रोतोविशोधनं पश्चात् सर्पि:पानं हितं स्मृतम् ॥ साधारणचि. ।

**अपत्यम्** । क्ली । पुत्रे ।

**अपत्यजीव:** । पुं । पुत्रजीववृक्षे । জিয়াপুতা গাছ । रा· नि· व· ९ ।

**अपत्यदा** । स्त्री । पुत्रदालतायाम् । रा· नि व.४ ।

**अपत्यपथ:** । पुं । योनौ । हे· च· ।

**अपत्यशत्रु:** । पुं । कर्कटे । श च ।

**अपत्यसिद्धिकृत्** । पुं । पुत्रजीववृक्षे । वै· निघ. ।

**अपत्रवल्लिका** । स्त्री । महिषवल्ल्यां । সোমলতাবিশেষ । मं लतुसीमवल्ली । रा· नि· व. ३ ।

**अपत्रा** । स्त्री । पुष्पवृक्षविशेषे । नेवतीति महाराष्ट्रादौ ख्याते ॥ वै. निघ· ।

**अपथम्** । क्ली । योनौ । श· र· ।

**अपथ्यम** । क्ली । अहिते वस्तुनि ।

**अपथ्यज्वर:** । पुं । कुपथ्यजन्यज्वरे । अपथ्यजे मद्यभवे च हेतुर्हेतुर्ज्वरे पित्तमुदाहरन्ति । दाहश्च प्रत्यञ्च शिरोव्यथा च कोष्ठाभिवृद्धि: कथितोदकण्डूमलातिपातस्त्वतिबद्धता च अपथ्यदोषेण भवेज्ज्वरे च ॥ वै. निघ· २भा· ज्व· ।

**अपद:** । त्रि । पादहीने, पङ्गौ । पुं । सर्पे ।

**अपदरुहा** } **अपदरोहिणी** } स्त्री । वन्दायाम् । বান্দরা । मं वादांगुल । वै· निघ· ।

**अपदेवता** । स्त्री । पिशाचादौ ।

**अपदेश:** । पुं । अनेन कारणेनेत्यपदेश: । यथोपदिश्यते मधुरेण श्लेष्माभिवर्द्धते । सु· उ· ६५ अ. ।

**अपबाहुक:** । पुं । वातकफजे अंसगतवातव्याधिविशेषे । लक्षणम्—अंसदेशस्थितो वायु: शोषयेदंशबन्धनं । शिराश्चाकुञ्च्य तत्रस्थो जनयेदपबाहुकम् ॥ मा. नि ।

**अपरम्** । क्ली । गजपश्चादर्द्धे । मे· रत्रिकं ।

**अपरा** । स्त्री । जरायौ । हिं आंवर् । भा· म· ४भ· प्रसूतोपद्रवचि· । जठरादपरा यदि । पञ्चतन्मात्रमनोबुद्ध्यहङ्कारा एत्रापरेत्युच्यते, तेषामेव प्रकृते रूपत्वात् ।

**अपराजितधूप:** । पुं । धूपोऽयं सर्व्वज्वरघ्न: । स च गुग्गुलुगन्धतृणवचासर्जनिम्बार्कागुरुदेवदारुकृत: । पुरध्यामवचासर्जेत्यादि । च. द ज्व· चि· ।

**अपराजिता** ! स्त्री । स्वनामख्यातलतायाम् । Clitoria Ternatea.) অপরাজিতা । हिं विष्णुक्रान्ति । तें नल्लनेलगुम्मिरि । विष्णुक्रान्त । नल्लविष्णुक्रान्त । तत्पर्य्याय:,—आस्फोता, गिरिकर्णी विष्णुक्रान्ता (अ), गिरिशालिनी (के), दुर्गा (श), अस्फोटा (अ. टी. ), गवाक्षी अश्वखुरी श्वेता श्वेतभण्टा गवादनी (र), अद्रिकर्णी कटभी दधिपुष्पिका गर्द्दभी सितपुष्पी श्वेतस्पन्दा भद्रा सुपुत्री विषहन्त्री नगपर्य्यायकर्णी अश्वाह्वादिखुरी । गुणा: —कटु: तिक्ता कफवातघ्नी शोथघ्नी कासघ्नी कण्ठ्या च । राज· । त्रिदोषशमनी चक्षुष्या विषदोषघ्नी पित्तघ्नी हिमा तिक्ता च । रा· नि· व· ५ । भा· पू· १भ· गु· व· । एषा श्वेतनीलभेदेन द्विधा, तयोर्विशेषा: श्वेतनीलापराजिताशब्दे मृग्या: । पीतनिर्गुण्ड्याम् । जयन्तीवृक्षे । श्वेतापराजितायाम् । रा· नि· व· २३ । शालपर्ण्याम् । भा· पू· २भ· । श्वेतसिन्धुवारे । শ্বেতনিশিন্দা । ब्राह्म्यां । शमीभेदे । रा· नि व· ८ । जयन्तीवृक्षे । रा, नि· व· ४ । शेफालिकायां । रा, नि· व· ४ । शङ्खिन्यां । त्रपुषभेदे । हपुषाभेदे । रा· नि· व. ४ ।

**अपराह्ण:** । पुं । दिवसशेषभागे । अयञ्च प्रालक्षण: । सु· सू· ६ ।

**अपरिम्लानः** । पुं । रक्ताम्लानपुष्पवृक्षे । रा. नि. व. १० ।

**अपरेद्युः** । अव्ययं । परदिने ।

**अपर्व्वदण्डः** । पुं । रामशरे । রাংবাণ । रा. नि. व. ८ ।

**अपलापः** । पुं । तन्नामकशिरामर्म्मणि । अंस-कूटाधोभागे पार्श्वोपरि च तस्य स्थानं । सु. शा. ६अ. ।

**अपलाषिका** । स्त्री । पिपासायाम् । हे च ।

**अपवनम्** । क्ली । कृत्रिमवने । हे. च. ।

**अपवरकः** । पुं । गर्भगृहे । हला. ।

**अपवर्गः** । पुं । अभिव्याप्यापकर्षणे । यथा—स्नेह्या विषोपसृष्टा अन्यत्र कीटविषादिति । सु. उ. ६५ अ. ।

**अपविषा** । स्त्री । निर्विषतृणे । रा. नि. ।

**अपशोकः** । पुं । अशोकवृक्षे । रा. नि. व. १० ।

**अपसव्यः** । त्रि । दक्षिणे । प्रतिकूले । मे. ।

**अपस्करः** । पुं । मलद्वारे । पुरीषे । धर. ।

**अपस्तम्भ(म्ब)मर्म्म** । क्ली । तन्नामकशिरा-मर्म्मणि । तस्य स्थानं वक्षस उभयत्र वायुवाहिन्यौ नाड्यौ । "उभयतोरसो नाड्यौ वातवहे अपस्तम्भौ नाम ।" सु. शा. ६अ. ।

**अपस्तम्भिनी** । स्त्री । शिवलिङ्गिनीलताविशेषे । वै. निघ ।

**अपस्वरम्** । अव्ययं । स्वभावस्वरादपगते । हीनस्वरे । वा. शा. ५अ. ४० श्ल. ।

**अपस्मारः (-स्मृतिः)** । पुं । Epilepsy. स्वनामप्रसिद्धवातव्याधौ । অপস্মার, মৃগী । मं फेफरे । स चतुर्विधः वातपित्तकफसन्निपातैः । अस्य च साधारणलक्षणं ज्ञानाभावसंरम्भादिकम् । यथा—तमःप्रवेशः संरम्भो दोषोद्रेकहतस्मृतेः । अपस्मार इति ज्ञेयो गदो घोरश्चतुर्विधः ॥ तस्य सनिदान-सम्प्राप्तिः—चिन्ताशोकादिभिः क्रुद्धा दोषा हृत्-स्रोतसि स्थिताः । कृत्वा स्मृतेरपध्वंसमपस्मारं प्रकुर्व्वते । [illegible] शून्यता स्वेदो ध्यानं मूर्च्छा प्रमूढता । निद्रानाशश्च तस्मिंश्च भविष्यति भवत्यथ ॥ इति [illegible] पूर्व्वरूपम् । वातिकरूपम्—कम्पते प्रदशे-द्दन्तान् फेणोद्वामी श्वसित्यपि । परुषारुणकृष्णानि पश्येद्रूपाणि चानिलात् ॥ पीतफेनाङ्गवक्त्राक्षः पीता-सृग्रूपदर्शनः । सतृष्णोष्णानलव्याप्तलोकदर्शी च पैत्तिकः । शुक्लफेनाङ्गवक्त्राक्षः शीतहृष्टाङ्गजो गुरुः । पश्यन् शुक्लानि रूपाणि श्लैष्मिको मुच्यते चिरात् ॥ सर्व्वैरेभिः समस्तैश्च लिङ्गैर्ज्ञेयस्त्रिदोषजः । स चासाध्योमतो यः स्यात् क्षीणस्यानवकश्च यः इत्यादि । मा. नि. । पथ्यापथ्यं यथा—वस्तिर्वातोद्भवे पूर्व्वं पैत्तिके च विरेचनम् । वमनं श्लैष्मिके चापि परं धूपनमञ्ज-नम् ॥ नस्यं शिराव्यधोदानं त्रासनं बन्धनं भयम् । तर्जनं ताड़नं हर्षो धूमपानञ्च विस्मयः । धीधैर्य्ये-त्यादि विज्ञानं स्नानमभ्यञ्जनानि च । लोहिताः शालयो मुद्गा गोधूमाः प्रतनं हविः । कूर्म्मामिषं धन्वरसा दुग्धं ब्रह्मीदलं वचा । पटोलं वृद्धकुष्माण्डं वास्तुकं स्वादु दाड़िमम् । शोभाञ्जनं पयःपेटी द्राक्षा धात्री परूषकम् । तैलं खराश्वमूत्रञ्च गगनाम्बु हरीतकी । अपस्मारगदे नृणां पथ्यमेतदुदीरितम् । चिन्तां शोकं भयं क्रोधमशुचीन्यशनानि च । समं मत्स्यं विरुद्धान्नं तीक्ष्णोष्णं गुरु भोजनं । अस्यापस्मारे जयदत्तः यथा—"पतत्यकस्माद्यो भूमौ लब्धाक्षो गतचेतनः । स्वस्थाशयोऽपि यः शीघ्रं सोऽपस्मारीति कीर्त्तितः ॥ उन्मादोक्तक्रियां सर्व्वां ततः कुर्य्याद्विचक्षणः । घृतस्यातिपुराणस्य तस्य पानञ्च शस्यते ॥"

**अपांधातुः** । पुं । रसजलमूत्रस्वेदमेदःकफ-पित्तरक्तादौ । भा. म. १भ. अतिसा. चि. । "संशम्यापांधातुरग्निः प्रवृद्धः ।"

**अपांपित्तम्** । क्ली । चित्रकवृक्षे । अम. ।

**अपाकः** । पुं । अजीर्णे । पाकाभावे । उदरामये ।

**अपाकशाकम्** । क्ली । आर्द्रके । আদা । मं आलें । रा. नि. व. ६ ।

**अपाङ्गः** । त्रि । अङ्गहीने । मे । पुं । नेत्रप्रान्ते । रा. नि. व १८ । तिलके । मे. गतिकम् । तन्नामक-मर्म्मणि । तत्रस्थवैकल्यकरमर्म्मान्धतममर्म्मद्वये वा । सु. सा. ६अ ।

**अपाङ्गकः** । पुं । अपामार्गक्षुपे । আপাঙ্ । श. र. ।

**अपाटवम्** । क्ली । रोगे । जाड्ये । रा. नि. व २० ।

**अपानः** । पुं । गुदापानवायौ । अम. । अपान पवनो मन्यापृष्ठपृष्ठान्तपार्ष्णिगः । हे. च. ४ । वृषणौ वस्तिमेढ्रञ्च नाभ्यूरुवङ्क्षणौ गुदं । अपानस्थान-मन्त्रस्थः शुक्रमूत्रशकृन्ति सः । [illegible] युक्ताः स्थानस्थिताश्च ये । स्वकर्म्म कुर्व्वते देहो धार्य्यते तेरनामयः ॥ च. । क्ली । गुदे । मलद्वारे । रा. नि. व. १८ । वा. सू. ११ अ. ।

**अपानदेशः** । पुं । गुददेशे । वै. निघ. ।

**अपामार्गः** । पुं । (Achyranthis aspera; Bidentata.) स्वनामख्यातक्षुपे । আপাঙ্ । हिं लट्जीरा, चिरचिरा । अम्बकुड़का इति । सु. सू. ३९ । शिरो. चि. । तें उत्तरेणी । मं आघाड़ा । तत्-पर्य्यायः,—शैखरिका धामार्गवः मयूरकः प्रत्यक्पर्णी कीशपर्णी किणिही खरमञ्जरी (अ), अपाङ्गकः किणिः कीशपर्णः चमत्कारः (शब्दर), शैखरेयः अधामार्गवः केशपर्णी (अ. टी.), स्थलमञ्जरी प्रत्यपुष्पी क्षारमध्यः अधोघण्टा शिखरी (र), दुर्ग्रहा (भा), दुर्ग्रहः अध्वशल्यः कान्तीरकः मर्कटी दुरभिग्रहः वासिरः पराक्पुष्पी कण्टी कर्कटपिप्पली कटुमञ्जरिका अघाटः क्षरकः पाण्डुकण्टकः नाला-कण्टः क्रूरः मालाकण्टः आघाटः । स द्विधा—श्वेतकृष्णरक्तभेदात् भिन्नोऽपि गुणैः समश्च । गुणाः तिक्तोष्णः कटुः कफघ्नः अर्शःकण्डूदुरामघ्नो रक्तघ्नः ग्राही वान्तिकृत् । रा. नि. व. ४ । सरस्तीक्ष्णो । वा. सू. १५ अ. । शिरोविरेचने । च द. सन्नि-पातज्वरचि. । "पृश्निपर्णी त्वपामार्गः ।" दीपनः तिक्तः कटुः पाचको रोचनः छर्दिकफमेदोवातघ्नः हृद्रोगाध्मानार्शःकण्ड्वादिकं हन्ति । भा. पू. १भ. । तत्पत्रं रक्तपित्तघ्नम् । मद. व ११ श्वेतश्चापामार्ग-कस्तु तिक्तोष्णो ग्राहकः सरः । किञ्चित्कटुः कान्ति-करो पाचकोऽग्निप्रदीपकः । नस्ये वान्तौ प्रशस्तः स्यात्कफकण्डूदरापहः । दुर्नामानं रक्तरुजं मेदो-रुगुदरे तथा । वातसिध्मापचो-दद्रुवान्त्यामानां विनाशकः । रक्तापामार्गकः किञ्चित्कटुकः शीतलः स्मृतः । मन्यावष्टम्भवमिकृद्वातविष्टम्भकारकः । रुक्षो व्रणं विषं वातं कफं कण्डूञ्च नाशयेत् । वीजमस्य रसे पाके दुर्जरं स्वादु शीतलं । मलावष्टम्भकं रुच्यं वान्तिकृत् रक्तपित्तजित् । तोयापामार्गकस्तीक्ष्णः कटुः शोथकफापहः । कासं वातञ्च शोषञ्च नाशये-दिति च स्मृतः । वै. निघ. ।

**अपामार्गजटा** । स्त्री । अपामार्गमूले । सि. यो. तृतीयकज्वर. श्रीकण्ठः । "अपामार्गजटाकट्या ॥" च. द सन्निपातज्व. चि. । एतद्बन्धनं तृतीयकज्वरे हितम् । अपामार्गस्य मूलञ्च सम्यगक्षालितामनः । बध्नीयाद्वामहस्तेन सर्व्वज्वरविमोक्षणम् ॥ वैद्यकम् ।

**अपामार्गतण्डुलः** । पुं । अपामार्गवीजे । च. सू. ४ अ. । See अपामार्गः ।

**अपामार्गतैलम्** । क्ली । शिरोरोगे । अस्य पाठः—अपामार्गफलव्योषनिशाक्षवकरामठैः । सवि-ड़ङ्गैः शृतं मूत्रे तैलं नस्यं क्रमीन् जयेत् ॥ अत्र क्षवकः = হেঁচেতা । तैलं ४ श. कल्कः १ श. । प्रयोगा. । च. द. ।

**अपामार्गक्षारः** । पुं । अष्टविधक्षारान्यतम-क्षारे । एष गुल्मशूलघ्नः । भा. पू. १भ. ह. व. ।

**अपामार्गक्षारतैलम्** । क्ली । कर्णरोगे । तिलतैलं ४श. अपामार्गक्षारः २श. वारि १६श. एकविंशतिवारान् परिस्राव्य क्षारवारि कुर्य्यात् । (मतान्तरे तु क्षारपरिमाणं २६प. वारि च १९श. । कल्कद्रव्यं शरावमितं । च. द. भैष. कर्ण-रो. चि. । अपामार्गक्षारजले तत्कृतकल्केन साधितं तिलजं । अपहरति कर्णनादं वाधिर्य्यञ्चापि पूरणतः ॥ अपा-मार्गक्षारस्य १६ श. जलस्य २४ श. एकविंशति-वारान् परिस्राव्य तैः १६ श. तैलशोषभयात् जले-नालोड्यापामार्गक्षारकल्को देयः, पिण्डीभूतात् कल्कात् पृथग्भूतं तैलं ग्राह्यं न तु गालनीयम् । इति प्रयोगा. ।

**अपालापमर्म्म** । क्ली । पृष्ठवंशवक्षःस्थलयो-रन्तरालभागे । तथा तयोरेव च पृष्ठोरसोर्ये पार्श्वे, तयोरुपरिभागयोरंसकूटयोरधोऽपालापाख्ये द्वे मर्म्म-णीति ज्ञेयम् । वा. शा. ४अ. ।

**अपासनम्** । क्ली । मारणे । अम. ।

**अपीनसः** । पुं । नासारोगविशेषे । পীনসরোগ । लक्षणं यथा—"आनह्यते यस्य विधूप्यते च प्रप-च्यते क्लिद्यति चापि नासा । न वेत्ति यो गन्धरसांश्च जन्तुर्जुष्टं व्यवस्येत् तमपीनसेन ॥ तञ्चानिलश्लेष्मभवं विकारं ब्रूयात् प्रतिश्यायसमानलिङ्ग" मिति । सु. चि. २अ. । तथा "यो मस्तुलुङ्गाद्घनपीतपक्वं कफं स्रवेद्गाढ़मपीनसः सः ।" च. चि. ।

**अपुच्छा** । स्त्री । शिंशपावृक्षे । श. र. ।

**अपुष्टः** । त्रि । अपरिपक्वे । कचि ।

**अपुष्पः** । पुं । उदुम्बरवृक्षे । যজ্ঞডুমুর গাছ ।

**अपुष्पफलदः** । पुं । पनसवृक्षे । কাঁঠালগাছ । मं फणस । रा. नि. व. ११ । अपुष्पजातफलवृक्ष-मात्रे । रा. नि. ।

**अपूपः** । पुं । पिष्टके । हला । পুলি পিটে । मं घारगे । गोधूमसूक्ष्मपिष्टं गुड़ेन युक्तं जलेन संमर्द्दितं । तद्वेल्यो वर्त्तुलनिभा घृते विपक्वा भवन्ति चापूपाः । बल्या हृद्या रुचिदा गुरवो वृष्याश्च तुष्टिदाः प्रोक्ताः । पित्तानिलशमनकरा मधुराः प्रोक्ताः...... । वै. निघ. । পাঁউরুটী । इति च केचिदाहुः । गोधूमे । रा. नि. व. १६ ।

**अपूप्यः** । पुं । गोधूमे । गोधूमचूर्णे । शब्दा ।

**अपूरणी** । स्त्री । शाल्मलीवृक्षे । শিমুলগাছ । श. च. । कार्पासवृक्षे ।

**अपेकः** । पुं । दुरालभायाम् ।

**अपेतराक्षसी** । स्त्री । तुलसीक्षुपे । रा. नि. व. १० । कृष्णतुलस्यां । কাল তুলসী । मं काली-तुलस । भा. पू. १भ. गु. व. वर्वर्य्यां । বাবুই । र. मा. ।

**अपोगण्डः** । त्रि । वलिभे । विकलाङ्गे । पुं । शिशौ । मे. डचतुष्कं ।

**अप्फादिका** । स्त्री । पूतिकाशाके । পুই । अ.ट्टी ।

**अप्नम् (स्)** । क्ली । जले ।

**अप्पित्तम्** । क्ली । चित्रकवृक्षे । अम. ।

**अप्रकाण्डः** । पुं । काण्डरहितवृक्षे, झिण्टि-कादौ । अम. ।

**अप्रकृष्टः** । पुं । काके । श. र. । त्रि । अधमे ।

**अप्रतिकार्य्यः** । त्रि । दुश्चिकित्स्ये ।

**अप्रसवधर्म्मी** । त्रि । यः पुरुषः प्रसवधर्म्मी न भवति । "बह्वस्तु पुरुषाश्चेतनावन्तोऽगुणा अवीज-धर्म्मिणोऽप्रसवधर्म्मिणो मध्यस्थधर्म्मिणश्चेति" सु. शा. १अ. ।

**अप्रहतः** । त्रि । मालक्षेत्रे । কেদার ভূমি । मं मालभूमि । खिलभूमौ । रा. नि. व. २ ।

**अप्रिया** । स्त्री । शृङ्गीमत्स्ये । শিঙী মাছ । बोदालिमत्स्ये । বোওয়াল মাছ ।

**अप्रेतराक्षसी** । स्त्री । तुलसीवृक्षे । र. मा. ।

**अप्रोटः** । पुं । भारद्वाजाख्यपक्षिणि । वै. निघ. ।

**अफलः** । पुं । फलहीनवृक्षे । ঝাউ গাছ । मं वांझवृक्ष । हे. च. ४का. । त्रि । यो न फलति । श. च. ।

**अफला** । स्त्री । भूम्यामलक्यां । काष्ठधात्रीवृक्षे । भा. रा. नि. व. ११ । लघुकारवेल्लके । आमलकी-वृक्षे । भा. पू. १भ. । कुमार्य्याम । घृतकुमारी । श. च. ।

**अफेनम्** । क्ली । अहिफेने ।

**अफेनफलम्** । क्ली । अहिफेनफले । পোস্তর ঢেঁড়ি । भैष. स्त्री-रोग चि. ।

**अफेलम्** । क्ली । आफूके । আফিং । मं अफू-कड़ी । फा. कफफून । हिं अफीम । आं लव्नुल स्खास् । वै. निघ. । See अहिफेनम् ।

**अबरम्** । क्ली । अन्तर्वस्त्रे । मे. रत्रिकं ।

**अबलः** । पुं । वरुणवृक्षे । श. च. ।

**अबालुकः** । पुं । पानीयालुके । रा. नि. व. ७ ।

**अबिला** । स्त्री । मेष्याम् । ভেড়ী ।

**अबेद्यः** । पुं । मत्स्ये ।

**अब्जः** । पुं । निचुलवृक्षे । शङ्खे । धन्वन्तरौ । हिज्जलवृक्षे । सर्व्वत्र मे. जद्विकं ।

**अब्जम्** । क्ली । पद्मे । प. मु. । रा. नि. व. १० । See कमलम् ।

**अब्जकर्णिका** । स्त्री । कमलवीजकोषे । वै. निघ ।

**अब्जकेशरः** । पुं । पद्मकेशरे । च. द. ।

**अब्जभोगः** । पुं । कमलकन्दे । श. च. ।

**अब्जवीजभृत्** । पुं । श्वेतकरवीरवृक्षे । वै. निघ. ।

**अब्जाह्वम्** । क्ली । बालके । বালা । मं बाला । वै. निघ. ।

**अब्जिनी** । स्त्री । पद्मिन्यां । পদ্মের ঝাড় । रा. नि. व. १० । पद्मसमूहे ।

**अब्दः** । पुं । मुस्तायां । सि. यो. ज्वर. किराताादि. । च. द. वातज्व. चि. । "किराताब्दामृतोदीच्या ।" नागरमुस्तायां । নাগরমুতা । मं नागरमोथ । भद्र-मुस्तायां । मं भद्रमोथ । मद. १व. । मेघे । मे. दद्विकं । क्ली । अभ्रके । र. मा. ।

**अब्दनादः** । पुं । मेघनादक्षुपे । কাঁটানটে । स्त्री । शङ्खिन्यां, भेक्यां । मं तान्दुजल । वै. निघ. ।

**अब्दसारः** । पुं । कर्पूरभेदे । रा नि. ।

**अब्धिः** । पुं । समुद्रे । रत्ना. ।

**अब्धिकफः** । पुं । समुद्रफेने । সমুদ্রের ফেনা । भा. पू. १भ. ह. व. । गुणाः—रुचिकरः लेखन-



स्तुवरो लघुः ।" "चक्षुष्यः शीतलश्चैव पटलादिरुजा-हरः । सरश्च विषदोषघ्नः कर्णशूलहरः परः । कफघ्न कण्ठरोगघ्न पित्तघ्नैव विनाशयेत् ॥" वै. निघ. ।

**अब्धिजः** । पुं । समुद्रफेने । रत्ना. (-जौ) । अश्विनीकुमारौ ।

**अब्धिजा** । स्त्री । सुरायां । हे. च ।

**अब्धिडिण्डीरः** । पुं । समुद्रफेने । वै. निघ. ।

**अब्धिफलम्** । क्ली । समुद्रजातफले । महा-राष्ट्रादौ ख्याते औषधविशेषे । समुद्रफल इति लोके । गुणाः—फलं समुद्रस्य कटूष्णकारि वाता-पहं भूतनिरोधकारि । त्रिदोषदावानलदोषहारि कफामयभ्रान्तिविरोधकारि । रा. नि ।

**अब्धिफेनः** । पुं । समुद्रफेने । रा. नि. ।

**अब्धिमण्डुकी** । स्त्री । मुक्तास्फोटे, शुक्तिकायां । ঝিনুক । मद. व. ४ । मं मोतीसीप । हे. च. ४ का. ।

**अब्धिवृक्षः** । पुं । शाखिमूलवृक्षे । काकाती-दालोति लोके ।

**अब्धिसारः** । पुं । रत्ने । व. निघ. ।

**अब्धिहिण्डीरः** । पुं । समुद्रफेने । रा. नि. ।

**अभ्रम्** । क्ली । अभ्रधातौ । मुस्तायाम् । रा. नि.

**अब्रह्मचर्य्यकम्** । क्ली । मैथुने । त्रिका. ।

**अभक्तच्छन्दः** । पुं । अरोचकभेदे । यत्र नान्ने भवेच्छ्रद्धा सोऽभक्तच्छन्द उच्यते । See अरोचकः ।

**अभयम्** । क्ली । उशीरे । वीरणमूले । বেণার মূল । रा. नि. व. १२ । मद. व. ३ । अम. । भैष. कुष्ठचि. कन्दर्पसारतैले ।

**अभयदा** । स्त्री । भूम्यामलक्यां । ভুঁই আমলা । मं भूम आंवली । वै. निघ. ।

**अभयनृसिंहरसः** । पुं । रसोऽयं अतीसार-ग्रहणीगदयोर्हितः । मात्रा १ गुञ्जा । अनुपानं जीरकचूर्णं मधु च । द्रव्याणि हिङ्गुलत्रिकटुविष-जीरक-टङ्कण-रसगन्धकाभ्राणि प्रत्येकं समभागानि सर्व्वसममहिफेनम् । निम्बुकरसेन मर्द्दनं । भैष. ।

**अभया** । स्त्री । (Terminalia chebula ; chebulic myrobalan.) हरीतकीभेदे । प. म. । "पञ्चास्त्रा चाभया ज्ञेया ।" रा. नि. व. ११ । इयं बाहुल्येन चम्पायां जायते । गुणाः—चक्षुष्या । भा. पू. १भ. । अमृतापरनाम्नीति अरुणः, वा. सू. ३५ अ. वचादिव. । "नागरातिविषाभया ।" च. द. कफज्व. चि. आम्लकादिः । "आमलका-भया कृष्णा ।" See हरीतकी । श्वेतनिर्गुण्ड्यां । मञ्जिष्ठायां । जयन्त्यां । जयायां । सिद्धि । मृणाले । काञ्जिके । काञ्चनवृक्षद्वये । रा. नि. व. १७ ।

**अभयाद्यमोदकः** । पुं । विरेचनाधिकारे । अत्र हरीतक्यादीनां चूर्णं प्रत्येकं पलमितं दन्त्याः ६ तोलकानि, शर्करा १२ पलानि, त्रिवृतायाश्च पल-द्वयमेकत्र मधुना मोदकं कुर्य्यात् । च. द. विरेचना-धिकारे ।

**अभयारिष्टः** । पुं । अर्शोऽधिकारे अरिष्टः । अत्र हरीतकी १२॥० श. द्राक्षा ६।० श. मधूकपुष्पं १० प. विड़ङ्गञ्च १० प. वारि २५६ श. शेषः ६४ श. गुड़ः १२॥० श. । गोक्षुरादीनां प्र. चूर्णं २प. प्रक्षेपः । भैष. ।

**अभयालवणम्** । क्ली । औषधमिदं यकृत्प्लीहा-धिकारे देयम् । পালিধা, পলাশ, আকন্দ, সিজু, আপাং, বরুণ, আগ্‌গন্ত, বাসক, গোক্ষুর, বৃহতী, কণ্টকারী, নাটাকরঞ্জ বা গন্ধভাড়ালি, হাপরমালী, কুড়চি, ঘোষা, পুনর্ণবা, एषां प्रत्येकं समूलपत्रशाखं समभागं कुट्टयित्वा हण्डिकाभ्यन्तरे स्थापयित्वा च तिलनालाग्निना दहेत् । ततो भस्म १६ प. जलं ६४ श. शेषः १६ श. क्षारविधिना एकविंशतिवारं निःस्राव्य क्षारः कार्य्यः । ततः स क्षारः, गोमूत्रं १६ श. सैन्धवं १६ प. हरीतकीचूर्णं ८ प. सर्व्वमेकीकृत्य पक्तव्यं । पाकसिद्धौ घनीभूते च प्रक्षेपः—कृष्णजीरकं हिङ्गु त्रिकटु यमानी कुष्ठं शटी च, एषां प्रति ४ तो. । भा. कौ. रस. र. । भैष. प्रयोगा. ।

**अभयावटी** । स्त्री । गुल्माधिकारे । "अभया-मरिचं कृष्णा टङ्कनञ्च समांशिकम् । सर्व्वचूर्णसमं भागं दद्यात् कानकजं फलम् ॥ स्नुहीक्षीरेण संकुर्य्याद्वटीं खिन्नकलायवत् । वटीद्वयं शिवामेकां पिष्ट्वा तण्डुलवारिणा ॥" अत्र कानकजं फलं जैपालम् । शिवा हरीतकी । र. सा सं. । एषा वटी भैषज्यरत्नावल्यामुदरे धृता ।

**अभयाष्टकम्** । क्ली । अष्टहरीतकीभक्षणे । यथा—"द्वे पूर्व्वमद्यादशनादितो द्वे द्वे चापि भुक्त्वा तु तथा स्वपन्तु । अस्य प्रयोगादभयाष्टकस्य त्रिसप्त-

रात्रेण पुनर्युवा स्यात् ॥" इत्यादि प्रयोगा रसायन. ।

**अभावः** । पुं । मरणे । असत्त्वे । मे वत्रिकं ।

**अभिघातः** । पुं । आघाते । शस्त्रमुष्टिलगुड़ादिभिर्हनने । भा. म १भ. आगन्तु-ज्वर-लक्षणे । "अभिघाताभिषङ्गाभ्याम् ।"

**अभिघातज्वरः** । पुं । आघातजन्यागन्तुकज्वरे । "अभिघाताभिचाराभ्यां—आगन्तुर्जायते ·।" मा. नि. ज्व. । अपिच—"तत्राभिघातजो वायुः प्रायो रक्तं प्रदूष्य च । सव्यथाशोफवैवर्ण्यं करोति सरुजं ज्वरमिति ॥" च. । अत्र ज्वरे दोषा नारम्भकाः परन्तु पश्चादनुबन्धिनः स्युः ।

**अभिघारः** । पुं । घृते । सं तूप । रा. नि. व. १५ ।

**अभिचारः** । पुं । मन्त्रादिना मारणादिप्रयोगे । मन्त्रादिद्वारा पीड़ायां वा । र. मा. । कृत्याद्युत्पादने वा । भा. म. १भ. आगन्तुज्व । "अभिचाराभिशापतः ।" यन्त्रमन्त्राद्यपीड़ने । "अभिचाराभिशापोत्थैः ।" रत्ना । श्येनादियागकृतज्वरे । "अभिचाराभिशापाभ्यां मोहस्तृष्णा च जायते ।" मा. नि. ज्व. ।

**अभिज्ञः** । त्रि । कुशले ।

**अभितापः** । पुं । सर्व्वाङ्गतापे । अश्वज्वरे । गज. वै. ।

**अभिनवकामेश्वरः** । पुं । वाजीकरणमिदं भेषजम् । "तोलकैकं समादाय पृथग्गन्धकसूतयोः । रक्तोत्पलदलाम्भोभिर्मर्द्दयेत् दिवसत्रयं । मर्दयित्वा पुनर्देयं गन्धं माषचतुष्टयम् । तस्यैव पत्रतोयेन पुनर्दत्वा च गन्धकम् । शङ्खिन्याश्चापि तोयेन रुद्ध्वा काचघटे दृढ़े । ततस्तु बालुकायन्त्रे पचेद्यामत्रयं ततः । काचकूप्याः समाकृष्य सिद्धसूतमतःपरं ॥" रक्तिकापञ्चकं खादेत् । रस. र. ।

**अभिन्यासः (कः)** । पुं । सन्निपातज्वरविशेषे । तल्लक्षणम्—"त्रयः प्रकुपिता दोषा उरःस्रोतोऽनुगामिनः । आमाभिवृद्धा ग्रथिता बुद्धीन्द्रियमनोगताः । जनयन्ति महाघोरमभिन्यासं ज्वरं दृढ़म् ॥ श्रुतौ नेत्रे प्रसुप्तिः स्यान्न चेष्टां काञ्चिदीहते । न च दृष्टिर्भवेत्तस्य समर्था रूपदर्शने । न घ्राणं न च संस्पर्शं शब्दं वा नैव बुध्यते । शिरो लोठयतेऽभीक्ष्णमाहारं नाभिनन्दति । कूजति तुद्यते चैव परिवर्त्तनमीहते । अल्पं प्रभाषते किञ्चिदभिन्यासः स उच्यते ॥ प्रत्याख्यातः स भूयिष्ठः कश्चिदेव प्रमुच्यते ॥ मा. नि. ज्व. । अस्य तन्त्रान्तरोक्तलक्षणं भावप्रकाशे मृग्यम् ।

**अभिपीड़नम्** । क्ली । अभिचारे ।

**अभिमन्थः (मन्युः)** । पुं । नेत्ररोगे । त्रिका । See अधिमन्थः ।

**अभिमर्दः** । पुं । अवमर्द्दे ।

**अभिमर्षणम्** । क्ली । यक्षपिशाचादिभूतकृतपीड़ायां । र. मा. ।

**अभिमानितम्** । क्ली । मैथुने । त्रिका. ।

**अभिरूपः** । पुं । बुधे । रम्ये । मे. पचतुष्कं ।

**अभिलकपित्थः** । पुं । आम्रातकवृक्षे । আমড়া গাছ ।

**अभिलावः** । पुं । छेदे । अम. ।

**अभिलाषः** । पुं । रमणेच्छायाम् । रत. र. ।

**अभिशापः** । पुं । द्विजातिभिः क्रोधाद्दुःखातिभारधारणे । र. मा. । ब्राह्मणगुरुवृद्धसिद्धादिदत्तशापे । भा. म. १भ. । तज्जातागन्तुज्वरलक्षणं—"अभिचाराभिशापाभ्यां मोहस्तृष्णा च जायते ।" मा. नि. ज्व. ।

**अभिशापज्वरः** । पुं । तज्जन्यज्वरे । See ज्वरनिदानम् ।

**अभिषङ्गः** । पुं । भूतविषादिसम्बन्धे । यक्षपिशाचादिकर्त्तृकपीड़ायां । र. मा. । कामशोकभयक्रोधभूतादीनाम् आवेशे । भा. म. १भ. आगन्तुज्व. लक्षणं । रक्षःप्रभृतिभिरभिधर्षणे । रत्ना. ।

**अभिषङ्गज्वरः** । पुं । ज्वरविशेषे । स च भूताद्यावेशतो भवति । स कामादिजभेदेन षड्विधः । शार्ङ्ग. । लक्षणं यथा—"अभिघाताभिचाराभ्यामभिषङ्गाभिशापतः । आगन्तुर्जायते दोषैर्यथास्वं तं विभावयेत् ॥" मा. नि. ज्व. । कामशोकभयक्रोधैरभिषक्तस्य यो ज्वरः । सोऽभिषङ्गज्वरो ज्ञेयः यश्च भूताभिषङ्गजः । च. ज्व. नि. ।

**अभिषवम्** । क्ली । काञ्जिके । रा नि. व. १५ । ताड़ीनामसुरायाम् । তাড়ী । मं ताड़ाचीदारु । पुं । स्नाने । मद्यसन्धाने । मे. वचतुष्कं ।

**अभिषुकम्** । क्ली । कावेलादौ प्रसिद्धे फलविशेषे । পেস্তা । च. चि. च्यवनप्राशः । पुं । तद्वृक्षे । सु. ।



**अभिषुतम्** । क्ली । षण्डाक्याम् । शंड़ाकीकाञ्जिके । अम. ।

**अभिषुविक्रान्तम्** । पुं । माधवी-सुरायाम् । वै. निघ. ।

**अभिषेकः पुं**
**अभिषेचनम् क्ली** } स्नाने ।

**अभिष्यन्दः** । पुं । नेत्रशूलरोगे । চোক ওঠা । स चतुर्विधो वातादिभेदेन । See नेत्राभिष्यन्दः । अतिवृद्धौ । अस्रावे । मे. दचतुष्कं ।

**अभिष्यन्दी** । त्रि । दोषधातुमलस्रोतसां क्लेदजनने । कुसुमा. टी. ज्वरे । स्रोतःस्राविद्रव्ये । वा. टी. हेमा. । कफकृत्पदार्थे दध्यादिके । तल्लक्षणं यथा,—पैच्छिल्याद् गौरवाद् द्रव्यं रुद्ध्वा रसवहाः शिराः । धत्ते यद् गौरवं तत् स्यादभिष्यन्दि यथा दधि । भा मि. ।

**अभिसरः** । परिचारके । रत्ना । प्राणाभिसर- उच्यते । च. सू. ९अ ।

**अभिसारः** । पुं । शकुलीमत्स्ये । শাল গাছ । मद. व. १२ । बले । বল । धर. । मत्स्ये ।

**अभिहिता** । स्त्री । जलपिप्पल्यां । वै. निघ. ।

**अभीकः** । पुं । कामुके । मे. कत्रिकं ।

**अभीरणी** । स्त्री । दुन्दुभसर्पे । वै. निघ. ।

**अभीरुः** । स्त्री । Asparagus racemosus. शतमूल्याम् । हिं शतावर । वा. सू. १५ अ. । दूर्व्वादिव. । गुन्द्रा भीरुः शतपाकी प्रियङ्गु । अश्वगन्धाष्टताभीरुः । सि यो. यक्ष्म-चि. त्रयोदशाङ्गे । महाशतावर्य्याम् । रसे. चि. ८अ. । "प्रलम्बाभीरुवेत्राग्रम् ।"

**अभीरुपत्नी(त्रिका)** । स्त्री । शतावर्य्याम् । अम. ।

**अभीशुः (षुः)** । पुं । प्रग्रहे । লাগাম । मे. ।

**अभीषङ्गः** । पुं । आक्रोशे ।

**अभीष्टः** । पुं । तिलकक्षुपे । তিল গাছ । रा. नि. व. १० ।

**अभीष्टगन्धकः** । पुं । माधवीलतायाम् । मद. व. ३ ।

**अभीष्टा** । स्त्री । रेणुक-गन्धद्रव्ये । রেণুক । श. च. ।

**अभुक्तः** । त्रि । कृतोपवासे । अभुक्तस्य दिवा निद्रा पाषाणमपि जीर्य्यति । वै. निघ. ।

**अभुग्णः** । त्रि । अरोगिणि ।

**अभेद्यम्** । क्ली । हीरके । रा. नि. व. १३ । See वज्रम् ।

**अभेषजम्** । क्ली । विपरीतौषधे । উল্টো ঔষধ । तच्च द्विविधं बाधनं सानुबाधनञ्च । "अभेषजमिति ज्ञेयं विपरीतं यदौषधम् ।" च चि. १अ. ।

**अभोजनम्** । क्ली । उपवासे अमात्रभोजने वा উপোষ বা অমাত্র আহার । "अजीर्णे भोजनं येषां जीर्णे येषामभोजनम् । रात्रावभोजनं येषां तेषां नश्यन्ति धातवः ॥" संग्रहः ।

**अभ्यङ्कः** । पुं । तिलकल्के ।

**अभ्यङ्गः** । पुं । तैलादिमर्द्दने । আভ্যং করে' তেল মাথা । "मूर्ध्नि दत्तं यदा तैलं भवेत्सर्व्वाङ्गसङ्गतम् । स्रोतोभिस्तर्पयेद्वाहू अभ्यङ्गः स उदाहृतः" । च द. ज्व. चि. । गुणाः—जलसिक्तस्य वर्द्धन्ते यथामूलेऽङ्कुरास्तरोः । तथा धातुविवृद्धिर्हि स्नेहसिक्तस्य जायते । शिरामुखै रोमकूपैर्धमनीभिश्च तर्पणम् ॥ सुश्रु. । स जराश्रमवातहा । दृष्टिप्रसादपुष्ट्यायुःस्वप्नसुत्वक्त्वदार्ढ्यकृत् । वा. सू. १अ. । स च शिरःश्रवणपादेषु विशेषेणानुशीलनीयः । र. मा. । अभ्यङ्गो वातरोगघ्नः धातुसाम्यं बलं सुखं । निद्रावर्णमृदुत्वानि कुरुते दृष्टिपुष्टिकृत् । शिरोऽभ्यङ्गः शिरस्तृप्तिकेशदार्ढ्यचिपुष्टिकृत् । केशप्रसाधनः केश्यः रजोजन्यमलापहा । मद. व. ३ । तैलेन शिरोमर्द्दने । भा. । सदोषस्य व्रणस्य दोषोपशमनार्थं मार्द्दवार्थञ्च उपक्रमविशेषे । सु. चि. १अ. ।

**अभ्यञ्जनम्** । क्ली । तैले । हे. च. । तैलमर्द्दने । रा. नि. व १५ ।

**अभ्यन्तः** । त्रि । आतुरे । अम. ।

**अभ्यन्तरायामः** । पुं । तन्नामकधनुस्तम्भरोगविशेषे, अन्तरायामे । येन कुपितोबलवान् वायुः अङ्गुलिवक्षोहृदयगलदेशादिकमभिप्रपन्नः स्नायुसमूहमाकर्षन् मानवं क्रोड़ानतं करोति । तत्र चाक्षिस्तब्धता हनुस्तम्भादि च जायते । लक्षणम्—"अङ्गुलीगुल्फजठरहृद्वक्षोगलसंश्रितः । स्नायुप्रतानमनिलो यदाक्षिपति वेगवान् । विष्टब्धाक्षस्तब्धहनुर्भग्नपार्श्वः कफं वमन् । अभ्यन्तरं धनुरिव यदा

नमति मानवः। तदास्याभ्यन्तरायामं कुरुते मारुती बली॥" मा॰ नि॰ वा, व्या॰।

**अभ्यमितः।** त्रि। आतुरे। अम॰।

**अभ्यवकर्षणम्।** क्ली। शल्याद्युत्पाटने। শেল তোলা, কাঁটা তোলা। अम॰।

**अभ्यवहरणम्।** क्ली। भोजने।

**अभ्यवहारः।** पुं। आहारे। रत्ना॰।

**अभ्यान्तः।** त्रि। रोगिणि। अम॰।

**अभ्याहारः।** पुं। भक्षणे। स च चर्व्यचोष्य-लेह्यपेयभेदेन चतुर्विधः। सु॰।

**अभ्यूषः।** पुं। ईषत्पक्वकलायादौ। तत्पर्य्यायः—अभ्योषः। (अटी॰ भ॰) अम।

**अभ्रम्।** क्ली। मुस्तायां। मेघे। रा॰ नि, व॰ ६। अभ्रकधातौ। रा॰ नि, व, १३।

**अभ्रकम्।** स्त्री। भद्रमुस्तायाम्। कर्पूरे। सुवर्णे। वेवे। Talc. स्वनामख्यातधातौ। অভ্ভর। हिं आभ्। तत्पर्य्यायः—गिरिजं अमलं (अ), गिरिजामलं गौर्य्यामलं (स्वामी), गिरिजाबीजं गरजध्वजं (के), निर्म्मलं मे), शुभ्रं (ज), घनं व्योम अब्दं (र), अभ्रं भृङ्गं अम्बरं अन्तरीक्षं आकाशं वहुपत्रं खं अनन्तं गौरीजं गौरीजेयं (रा)। गुणाः—गुरु हिमं बल्यं कुष्ठमेहविदोषघ्नञ्च। मद॰ व॰ ४। रसायनं स्निग्धं बलवर्णाग्निवर्द्धकत्वञ्च। राजः। अभ्रकं चतुर्विधं—श्वेतपीतलोहितनील-भेदात् भिन्नभिन्नक्रियायां प्रयुज्यते। यथा—श्वेतं तारे, पीतरक्ते काञ्चने, नीलञ्च व्याधौ प्रजोज्यं यथोत्तरं गुणाढ्यञ्च। तेषु नीलाभ्रं दर्दुरनागपिनाक-वज्रभेदेन चतुर्भेदम्। परीक्षा गुणाश्च यथा—अग्नौ क्षिप्तं दर्दुरं भेकरवं नागं फूत्कारं पिनाकं धनुःस्वनं वज्रञ्च न विकारं धत्ते। एषां सेवनेन गुल्मी व्रणी कुष्ठी च नीरोगो भवति। रा, नि व, १३। कुष्ठ-प्रदं पिनाकं स्यात् दर्दुरं मरणप्रदं। नागं देहगतं नित्यं व्याधिं कुर्य्याद्भगन्दरम्। रसे रसायने चैव योज्यं वज्राभ्रकं प्रिये। तस्माद्वज्राभ्रकं ग्राह्यम्। र, सा, सं,। अशोधिताभ्रदोषाः,—पीड़ां विधत्ते विविधां नराणां कुष्ठं क्षयं पाण्डुगदञ्च शोथं। हृत्पार्श्व-पीड़ाञ्च करोत्यशुद्धमभ्रं ह्यसिद्धं गुरुता-गदं स्यात्॥ अभ्रशोधनम्—१। नकपुष्परसेन पिष्ट-मभ्रकं वन्यशूरणकन्दमध्ये निरुध्य गोगृहभूमितले मासं स्थाप्यम्। २। त्रिफलाक्वाथगोमूत्रदुग्ध-काञ्जिकेषु भस्त्राग्नौ पुनः पुनः तप्तं तप्तं सेचितं शुद्धं भवति। ३। अभ्रं सप्तवारं तप्तं तप्तं वदरीक्वाथे निःक्षिप्तं शुद्धं भवति। र, सा, सं,। अभ्रपलानि पृथक्कृत्य चूर्णयित्वा चूर्णयेत् दिनैकं तानि काञ्जिक-पर्य्युषितानि काञ्जिकेन पुनः पेषयेत्। ततो माण-कादिरसेन प्रत्येकमेकञ्च च पुनः पुनर्भावयित्वा संपिष्य च पुटपाकेन पुनः पुनः दहेत् यावन्न निश्च-न्द्रतामागच्छन्ति इति। विशेषशुद्धिः अम्लपित्ते। "आम्र-भक्तोदकैः पिष्टमभ्रकं तत्र संस्थितम्। कन्द-माणास्थिसंहार-खण्डकर्ण-रसैस्तथा॥ तण्डु-लीयञ्च शालिञ्च कालमारीषजेन च। वृश्चीर-वृहती-भृङ्ग-लक्ष्मणा-केशराजजैः॥ पेषणं भावनं कुर्य्यात् पुटञ्चानेकशो भिषक्। यावन्नि-श्चन्द्रकं तत् स्यात् शुद्धिरेवं विहायसः॥" च, द॰। अस्य पाठे कन्दं ওল্। कालमारिषः वृहৎপত্র চাঁপানটে। अभ्रमारणं—१। अभ्रकं स्थालिकामध्ये संस्थाप्य कदलीक्षारेण गोमयाग्निना तावत् पचेत् यावत् स्थालीबहिः सिन्दूरं न भवेत्। तत अवतार्य्य दुग्धैः संसिच्य सूक्ष्मं चूर्णयेत्। २। मुस्ता-क्वाथेन, पुनर्णवाक्वाथेन, कासमर्द्दक्वाथेन, पर्णरसेन, अर्कक्षीरेण च प्रत्येकं मर्द्दयित्वा प्रत्येकं पुटत्रयं देयम्। तथा वटजटाक्वाथेन संमर्द्य पुटत्रयं देयं। ततो मूषलीक्वाथेन त्रिः पुटेत्। ततो गोक्षुर-क्वाथेन त्रिः, शूकशिम्बीक्वाथेन त्रिः पचेत्। ततः मुचुकुन्दकोकिलाक्षक्वाथेन प्रत्येकं त्रिरात्रं पचेत्। ततः लोध्रक्वाथेन दुग्धेन दध्ना घृतेन मधुना शर्करया च प्रत्येकमेकैकं पुटं दत्त्वाभ्रं मारयेत्। ३। रम्भादि-क्षारजलेन पिष्ट्वा चक्रीकृतं कदलीदलमध्ये संस्थाप्य व्यजनानिलेन ज्वालितेषु दग्धेन्धनेषु स्नुह्यर्कमूला-जलेन पुटेत्। र॰ सा॰ सं॰। अथ विविधाधिकारे अभ्रकविधिः यथा—कृष्णाभ्रपत्राणि पृथक्कृत्य चूर्ण-येत्। अथ तच्चूर्णं शिलायां पिष्ट्वा वस्त्रपूतं कार्य्यम्। ततो भेकपर्णी (থুলকুড়ি) रसे आपोथ्य दिनत्रयं स्थापयेत्। अथ तदुद्धृत्य हैमन्तिकधान्यकाञ्जि-केन संपिष्य पुनर्भेकपर्णीरसेनालोड्य स्थाल्यां पचेत्। अथ तदुद्धृत्य पिण्डङ्कृत्वा तालादिपत्रमध्ये निधाय भस्त्राग्नौ दहेत् यावदग्निर्नीलवर्णो न लक्ष्येत। अथ दुग्धे निर्वाप्य दुग्धेन तदनन्तरं जलेन धावयेत्। धावनानन्तरं सुपेषितं निश्चन्द्रकं कुर्य्यात्। च, द, रसायने।

**अभ्रङ्कषः।** पुं। वायौ। पाणिः।

**अभ्रनामकः।** पुं। मुस्तायाम्। श, र,।



**अभ्रपटलः।** पुं, क्ली। अभ्रके। অভ্ভর। वै, निघ॰।

**अभ्रपुष्पः।** पुं। वेतसलतायाम्। भा॰ पू॰ १भ॰ गु॰ व॰। वारिवेतसे। अम॰। क्ली। जले।

**अभ्रमांसी।** स्त्री। आकाशमांसीलतायाम्। সূক্ষ্ম জটামাংসী। रा॰ नि॰।

**अभ्ररोहः।** पुं, क्ली। वैदूर्य्यमणौ। रा॰ नि॰ व॰ १३।

**अभ्रवटिका।** स्त्री। रसविशेषोऽयं ज्वरातिसार-गदे प्रयोज्यः। अत्र व्योषचूर्णं कर्षमानम्। केश-राजादीनां स्वरसः सुतोन्मितो देयः। ग्रीष्म-सुन्दरकः (গীমা শাক,। मण्डूकपर्णी (থুলকুড়ি)। तस्यायं पाठः—"अथ सूतस्य शुद्धस्य गन्धकस्याभ्रकस्य च। प्रत्येकं कर्षमेकन्तु ग्राह्यं रसगुणैषिणा।" ततः कज्जलिकाङ्कृत्वा व्योषचूर्णं प्रदापयेत्। "केश-राजस्य भृङ्गस्य निर्गुण्ड्याश्चित्रकस्य च। ग्रीष्मसुन्दर-कस्याथ जयन्त्याः स्वरसं तथा। मण्डूकपर्ण्याः स्वरसं तथा शक्राशनस्य च। श्वेतापराजितायाश्च स्वरसं पर्णसम्भवं। दापयेत्तत्र तुल्यञ्च विधिज्ञः कुशलो भिषक्। रसतुल्यं प्रदातव्यं चूर्णं मरिच-सम्भवं। देयं रसार्द्धभागेन चूर्णं टङ्कणसम्भवम्॥" मर्द्दयित्वा कलायप्रमाणा वटी कार्य्या। रस॰ र॰ र॰ सा॰ सं॰। भैषज्यरत्नावल्यामियमेव ग्रहण्यां महाभ्रवटिका उक्ता। इयमेव प्रयोगामृते ग्रहण्यां रसाभ्रवटी। शुद्धरसः २ तो, शुद्धगन्धः २ तो॰ कज्जलीं कृत्वा जारिताभ्रं २ तो॰ मरिचचूर्णं २ तो॰ टङ्कणं १ तो॰ केशराजादिरसस्य प्रत्येकं १ तो॰, वटी कार्य्या। अन्या ग्रहण्याम्—पक्वेष्टकाहरिद्राभ्या-मगारधूमकेन च। शोधितं पारदञ्चैव कर्षार्द्धं तुलया धृतम्॥ भृङ्गराजरसैः शुद्धं गन्धकं रस-सम्मितम्। द्वाभ्यां कज्वलिकां कृत्वा भावयेत्तत्तु भेषजैः। सिन्दुवारदलरसे मण्डूकपर्णिकारसे। केशराजरसे चैव ग्रीष्मसुन्दरजे रसे। रसेऽपरा-जितायाश्च सोमराजीरसे तथा। रक्तचित्रक-पत्रोत्थे रसे च परिभावितं। रसमानसमानेन छायायां शोषयेद्भिषक्॥ वटी सर्षपमिता। হরিদ্রা, ইষ্টকচূর্ণ ও গৃহধূমশোধিত রস ১ তোলা, ভীমরাজ-শোধিত গন্ধক ১ তোলা, কজ্জলি কর। নিশিন্দা, থুলকুড়ি, শিমা, কেশুর, অপরাজিতা, সোমরাজ, লালচিতের রসে ভাবনা। भैष, ग्रहणी। प्रयो-गामृतोक्ताभ्रवटिकायामभ्रकस्यैको भागः पारदसम इति विशेषः।

**अभ्रवाटकः।** पुं। आम्रातकवृक्षे। আগড়া গাছ। रा॰ नि, व, ११।

**अभ्रवाटिकः।** पुं। आम्रातके। जटा॰।

**अभ्रसारः।** पुं। भीमसेनीकर्पूरे। वै, निघ॰।

**अभ्राह्वम्।** क्ली। कुङ्कुमे। मद॰ व॰ ३।

**अभ्रूषः।** पुं। तालुरोगविशेषे। तेन स्तब्ध-लोहितः शोणितोत्थः शोथः ज्वरतीव्रवेदनायुक्तो भवति। तदुक्तं शोथस्तब्धो लोहितः शोणितोत्थो ज्ञेयोऽभ्रूषः सज्वरस्तीव्ररुक् च। भा, म॰ ४भ॰ मुखरो॰ चि॰।

**अमः।** पुं। रोगे। त्रि। पक्वफलादौ। श, र॰।

**अमङ्गलः।** पुं। एरण्डवृक्षे। श॰ च॰।

**अमण्डः।** पुं। एरण्डवृक्षे। प॰ मु॰। हारा॰।

**अमन्दः।** पुं। वृक्षे। श॰।

**अमध्यस्थधर्म्मिणी।** त्रि। या चेतनजड़ो-भयधर्म्ममध्यवर्त्तिनी न भवति। तस्याः केवलं जड़मयत्वात् पुरुषस्य च तथात्वात्। सु॰ शा॰ १अ॰।

**अमरः।** पुं। अस्थिसंहारे। হাড়ভাঙা। रत्ना॰। वज्रीद्रुमे। सिञ्जु। मे, रविकं। रुद्राक्षे। श॰ र॰। पारदे। रा॰ नि॰ व॰ १३। हस्तिनि। क्ली। सुवर्णे। वे निघ,।

**अमरकणा।** स्त्री। गजपिप्पल्याम्। वै, निघ,। २भ, पाण्डु-चि॰ भूनिम्बादिगुटी।

**अमरकण्टिका।** स्त्री। शतावर्य्याम्। रा॰ नि, व॰ ४।

**अमरकन्दः।** पुं। कन्दविशेषे। वै॰ निघ॰।

**अमरकालिकः।** पुं। वृश्चिकाल्याम। বিছাতী। भैष॰ वा॰ व्या, सिंहना॰ गुग्गुलौ।

**अमरकाष्ठम्।** क्ली। देवकाष्ठे। দেবদারু।

**अमरकुसुमम्।** क्ली। लवङ्गे। वै निघ॰ ज्वरे त्रैलोक्य-चि रसे।

**अमरजः।** पुं। दुष्खदिरवृक्षे। গুয়েবাব্লা। रा, नि॰। देवदारुणि। नदीवटे। वै, निघ॰ २भ, ग्रन्थ्यादिः ज्व।

**अमरतरुः।** पुं। देवदारौ। वै, निघ॰ सा, ज्व, अर्कादिः। "किराताऽमरतरुरस्ना।"

**अमरदारु** । पुं, क्ली । तैलदेवदारुणि । रा. नि. व. १२ । चि. क्र. क. वल्ली-क्षीरी, चि. । तैलदेवदारुवृक्षे । মলঙ্গাদেবদারু ।

**अमरद्रुः** । पुं । विट्खदिरवृक्षे । গুয়েবাব্লা ।

**अमरपुष्पम्** । पुं, क्ली । पूगफले । काशतृणे । आम्रे । केतके । मे. पपञ्चकं ।

**अमरपुष्पकः** । पुं । काशतृणे । কেশে । प. मु. । काशभेदे । र. मा. ।

**अमरपुष्पिका** } **अमरपुष्पी** स्त्री । चोरपुष्पीतृणे । চোর কাচকী, চোর খড়িকা । रमा. । काशतृणे ।

**अमर(ल)रत्नम्** । क्ली । स्फटिके । रा. नि. । काचे ।

**अमरवल्ली** । स्त्री । आकाशवल्ल्याम् । मं अमरवेल । हिं अमरवेलि । আলোকলতা । भा. पू. १भ. गु. व. । मद. व. ९ । सालशेतिख्यातलतायां । गुणाः—वृष्यवल्ली बलकरी परं वृष्या रसायनी । मूलकृत् खेदजननी पुष्टिदा कार्श्यवारिणी । औपदंशिकरोगांश्च रक्तदोषं हरेदियम् ॥ वैद्यकम् ।

**अमरसर्षपः** । पुं । देवसर्षपे । রাই । वै. निघ. ।

**अमरसुन्दरी** । स्त्री । ज्वराधिकारे रसः । पाठो यथा—त्रिकटु त्रिफला चैव ग्रन्थिकं रेणुकानलम् । चातुर्जातं मृतं लौहं पारदो विषगन्धकम् । समभागमिदं चूर्णं तस्माच्च द्विगुणो गुडः । कोलप्रमाणां गुड़िकां प्रातरुत्थाय सेवयेत् ॥ इत्यादि । प्रयोगा. ।

**अमरा** । स्त्री । दूर्व्वायाम् । मे. रत्रिकं । गुडूच्यां । र. मा. । इन्द्रवारुणीलतायां । রাখালশশা । रा. नि. व. ३ । नीलदूर्व्वायां । गृहकन्यायाम् । रा. नि. व. ५ । नीलीवृक्षे । मेषशृङ्ग्याम् । वृश्चिकाल्यां । বিছাতি গাছ । रा. नि. व. ९ । नदीवटे । रा. नि. व. ११ । जरायौ । मे. रत्रिकं । गर्भनाड्याम् । ফুল । भेष. स्त्रीरो. । नाभिनालायाम् ।

**अमराह्वम्** । क्ली । देवदारुकाष्ठे । वा. सू. १५. एलादि. अरुणः । "शुक्तिर्व्याघ्रनखोऽमराह्वमगुरुः ।"

**अमरी** । स्त्री । नीलदूर्व्वायाम् । कृष्णनिर्गुण्ड्यां । मूर्व्वायाम् । মূর্গা । वै. निघ. ।

**अमरुफलम्** । क्ली । उत्तरदेशप्रसिद्धफले । गुणाः—अमरोश्च फलं शीतं मलद्रवकरं मतम् । सरं दाहं रक्तपित्तं कामलां मूत्रकृच्छ्रकम् । मूत्राश्मरीञ्च हन्तीति ऋषिभिः परिकीर्त्तितम् । वै. निघ. ।

**अमरेन्द्रतरुः** । पुं । देवदारुवृक्षे । वै. निघ. २भ. ज्व. निर्गुण्डीधूपे ।

**अमलम्** । क्ली । अभ्रके । मे. लत्रिकं । समुद्रफेने । र. मा. । कर्पूरे । वै. निघ. २भ. अपस्मा चि. । रौप्यमाक्षिके । पित्ते । कतकवृक्षे । गन्धद्रव्यविशेषे ।

**अमलदीप्तिः** । पुं । कर्पूरे । च. द. ।

**अमलपतत्री** । (इन्) पुं । हंसे ।

**अमलमणिः** । पुं । स्फटिके । रा. नि. व. १३ । कर्पूरमणौ । কর্পূরগন্ধমণিবিশেষ ।

**अमलरत्नम्** । क्ली । स्फटिके । रा. नि. व. १३ ।

**अमला** । स्त्री । महानील्याम् । বড় নীল । रा. नि. व. ४ । सेहुण्डभेदे । रा. नि. । भूम्यामलक्याम् । अम. । नाभिनालायाम् । आमलक्याम् । আম্লা । प्रयोगा. क्षुद्ररोग-चि. ।

**अमलाज्झटा** । स्त्री । भूधात्र्याम् । ভূঁই আম্লা । अ. टी. भ. ।

**अमसः** । पुं । रोगे । उ. ।

**अमानस्यम्** । क्ली । पीड़ायाम् । दुःखे ।

**अमिलातकम्** । क्ली । वेलाख्ये पुष्पे । हला.

**अमिलातका** । स्त्री । महाराजतरुणीपुष्पवृक्षे বেল । रा. नि. व. १० ।

**अमूला** । स्त्री । अग्निशिखावृक्षे । ইষ্‌লাঙুলিয়া वै. निघ. । अर्कपत्र्याम् । के. ।

**अमृणालम्** । क्ली । लामज्जके । শ্বেত-উশীর । रा. नि. व. १२ । भा. पू. १भ. क. व. । मद व. ३ । उशीरे । বেণার মূল । रत्ना. । रा. नि. व. १२ । च. द. अर्शश्चि. प्राणदागुड़िका ।

**अमृतः** । पुं । पारदे । रा. नि. व. १३ । वनमुद्गे । रा. नि. व. १६ । See मकुष्ठकः । अत्रि. २ स्थानं, २ अ. । धन्वन्तरौ । ना धन्वन्तरिदेवयोः । मे. तत्रिकं । वाराहीनाममहाकन्दशाके । শুয়ার আলু রা. नि. व. ७ । क्ली । पीयूषे । सलिले । रा. नि व. १४ । घृते । मे. रा. नि. व. १५ । वै. निघ वा. व्या, भुजङ्गीगुटी. । "अमृतं यज्ञशेषे स्यात् पीयूषे सलिले घृते ।" मे । विषसामान्ये । दुग्धे । रा नि. व. १५ । अन्ने । हे. च. । औषधे । रा. नि. व. २० । शृङ्गीविषे । स्वर्णे । भक्ष्यद्रव्ये । हं च. ।

**अमृतकन्दा** । स्त्री । कन्दगुडूच्याम् । मं कन्दगुलवेल । वै. निघ. । See कन्दगुडूची ।

**अमृतकल्परसः** । पुं । अजीर्णाधिकारे रसः । शुद्धौ पारदगन्धौ च समानौ कज्जलीकृतौ । तयोरर्द्धं विषं शुद्धं तत्समं टङ्कणं भवेत् । भृङ्गराजद्रवैर्भाव्यं त्रिदिनं यत्नतः पुनः ॥ मात्रा मुद्गमाना । अत्र तत्सममिति विषसमम् । र. सा. सं. ।

**अमृतगुड़िका** । स्त्री । भैषज्यमिदं अजीर्णे हितम् । कुर्य्याद्गन्धविषव्योषत्रिफलापारदैः समैः । भृङ्गाम्बुमर्दितैर्मुद्गमात्रामृतवटीं शुभाम् ॥ रसे. चि. ।

**अमृतजटा** । स्त्री । जटामांस्याम् । रा. ।

**अमृतजा** । स्त्री । हरीतक्याम् । वै. निघ. ।

**अमृतप्राशघृतम्** । क्ली । राजयक्ष्मणि प्रशस्तम् । "जीवकर्षभकौ वीरां जीवन्तीं नागरं शटीं । चतस्रः पर्णिनीर्मेदे काकोल्यौ द्वे निदिग्धिकाम् । पुनर्णवे द्वे मधुकमात्मगुप्तां शतावरीम् । ऋद्धिं परूषकं भार्गीं मृद्वीकां बृहतीं तथा । शृङ्गाटकमामलकीं पयस्यां पिप्पलीं बलाम् । बदराक्षोड़वाताटखर्ज्जूराभिषुकाणि च । फलानि चैवमादीनि कल्कान् कुर्व्वीत कार्षिकान् । धात्रीफलविदारीक्षुच्छागमांसरसान् पयः । दत्त्वा प्रस्थोन्मितान् भागान् घृतप्रस्थं विपाचयेत् । प्रसृतिं मधुनः शीते शर्कराद्धतुलां तथा । पलार्द्धकञ्च मरिचत्वगेलापत्रकेशरम् । विनीय चूर्णयेत् तस्माल्लिह्यान्मात्रां यथाबलम् । अमृतप्राश इत्येष नराणाममृतोपमः । सुराघृतमयं पथ्यं क्षीरमांसरसाशिनः । नष्टशुक्रक्षतक्षीणदुर्ब्बलव्याधिपीड़ितान् । स्त्रीप्रसक्तानकृशलान् स्वरहीनांश्च वृंहयेत् । कासहिक्काज्वरश्वासदाहतृष्णास्रपित्तनुत् । पुत्रदो वृद्धि...दाहशूलक्षयापहः ॥" अस्य पत्री यथा, मूर्च्छितगव्यघृतं ४ श. । कल्कार्थद्रव्याणि प्रत्येकं कर्षमितान्येकत्र कल्कीकृत्य तैः धात्र्यादिरसैः प्रत्येकं प्रस्थमितैश्च घृतं यथाविधि पाच्यम् । पाकसिद्धौ छानयित्वा मधुनः प्रसृतिं शर्करायाः ५० पलानि, मरिचस्य गुड़त्वचः एलायाः तेजपत्रस्य नागकेशरस्य च प्रत्येकं चूर्णमर्द्धपलं (४तो.) मिश्रणीयम् । कल्कद्रव्यानि यथा—जीवकर्षकौ (अभावे गुड़ूची, वंशलोचना) क्षीरविदारी (ভূঁইকুমড়া) महाबला वा जीवन्ती शुण्ठी शटी शालपर्णी पृश्निपर्णी मुद्गपर्णी माषपर्णी मेदा ( अभावे अश्वगन्धा ) महामेदा ( अभावे शारिवा ) काकोली क्षीरकाकोली कण्टकारी बृहती रक्तपुनर्णवा श्वेतपुनर्णवा यष्टीमधु कपिकच्छुः (আলকুশী-মূল) शतावरी ऋद्धिः ( अभावे बला বেড়েলা) परूषकफलं भार्गी मृद्वीका शृङ्गाटकं भूम्यामलकी शुक्लभूमिकुष्माण्ड पिप्पली वाच्यालकं बदरफलं अक्षोटफलं वाताटं ( বাদাম ) खर्जूरं अभिषुकं ( পেস্তা ) च । एवंविधानि अन्यानि फलानि च । रसाश्च यथा—आमलकीरसः भूमिकुष्माण्डरसः इक्षुरसः छागमांसरसः दुग्धञ्च । प्रयोगा. यक्ष्म-चि. । अन्यत् ध्वजभङ्गाधिकारे । तस्यायं पाठः—"छागमांसं बलाञ्चैव वाजिगन्धां तथैव च । जलद्रोणे विपक्तव्य कुर्य्यात् पादावशेषितं । घृतप्रस्थं पचेत्तेन अजाक्षीरं चतुर्गुणं । मूर्च्छनार्थे प्रदातव्यं कुङ्कुमञ्च द्विकार्षिकं । बलामूलञ्च गोधूमं चाश्वगन्धा तथामृता । गोक्षुरञ्च कशेरुश्च त्रिकटुश्च सधान्यकः । तालाङ्कुरस्तैफलञ्च कस्तुरी वीजवानरी । मेदे द्वे च तथा कुष्ठं जीवकर्षभकौ शटी । दार्व्वीं प्रियङ्गुर्मञ्जिष्ठा नतं तालीशपत्रकं । एलापत्रत्वचं नागं जातीकुसुमरेणुकं । सरलं जातिकोषञ्च सूक्ष्मैलोत्पलसारिवे । मूलं विल्वस्य जीवन्तीं ऋद्धिवृद्धी उडुम्बरम् । प्रत्येकं कर्षमात्रन्तु पेषयित्वा विनिक्षिपेत् । वस्त्रपूते सुशीते च सितां दद्याच्छरावकम् ॥ भेष. । हा. अत्रि. ३स्था. ९अ. ।

**अमृतप्राशावलेहः** । पुं । अयं राजयक्ष्माधिकारे उक्तः । तस्य पाठः—"क्षीरे धात्री च मञ्जिष्ठा क्षीरिणाञ्च तथा रसैः । पचेत्समैर्घृतप्रस्थं मधुरैः कर्षसम्मितैः । द्राक्षाद्विचन्दनोशीरैः शर्करोत्पलपद्मकैः । मधूककुसुमानन्ताकाश्मरीतृणसंज्ञकैः । प्रस्थार्द्धं मधुनः शीते शर्करार्द्धतुलां तथा । पलार्द्धिकांश्च संचूर्ण्य त्वगेलापत्रकेशरान् । विनीय तत्र संलिह्यान्मात्रां नित्यं सुयन्त्रितः । अमृतप्राशमित्येतदश्विभ्यां परिकीर्त्तितम् ॥ भा. म. ख. २भ. । क्षीरे काकोलीक्षीरकाकोल्यौ । क्षीरिणः वटाश्वत्थोदुम्बरप्लक्षपारीशाः तेषां त्वक् । तृणं गन्धतृणं । क्षीरादीनां क्वाथैः द्राक्षादीनाञ्च कल्कैः पचेत् ।

**अमृतफलम्** । क्ली । (Nák. Pyrus communis.) The pear tree. लघुविल्वफला-

कृतौ नास्पातीति प्रसिद्धं काबुलदेशजफलविशेषे । पञ्जावे च नाक् इति ख्याते । गुणाः—गुरु वातघ्न स्वाद्वम्लं रुचिकृत् शुक्रकृच्च । मद. व. ६ । अमृतस्य फलं धातुवर्द्धकं मधुरं गुरु । रुच्यञ्चाम्लं वातहरं त्रिदोषस्य च शामकम् ॥ वै. निघ. । लघु वृष्यं स्वादु त्रिदोषहरञ्च । इदञ्च मुद्गलदेशे प्रचुरं लभ्यते । भावमिश्रः । पुं । पारदे । वृद्धिनामकौषधे । पटोलवृक्षे । रा. नि. व. ३ । धात्रीवृक्षे । आमलागाछ । मद. ।

**अमृतफला** । स्त्री । द्राक्षायाम् । किस्मिस् । हिं किस्मिस् । आमलक्याम् । रा. नि. व. ११ । लघुखर्ज्जूरीवृक्षे । ছোট খেজুরের গাছ । श्वेतद्राक्षायां । कौङ्कणे उत्तरा उत्तरीति च ख्याता ।

**अमृतबन्धुः** । पुं । अश्वे । वै. निघ. ।

**अमृतभल्लातकावलेहः** । पुं । कुष्ठाधिकारेऽवलेहः । यथा भल्लातकप्रस्थयुगं (४श.) छित्वा द्रोणजले (६४श.) क्षिपेत् । प्रस्थद्वयं गुडूच्याश्च (४ श.) क्षुण्णं तत्राम्भसि क्षिपेत् । अर्गावसानक सर्पिः (१ श.) दुग्धं स्यादाढकं (१६ श.) तथा । सितां प्रस्थमितां (२ श.) दद्यात्प्रस्थार्द्धं (१ श.) माक्षिकं क्षिपेत् । सर्व्वाण्येकत्र भाण्डे तु पचेन्मृद्वग्निना शनैः । सर्व्वद्रवे घनीभूते पावकादवतारयेत् । तत्र क्षेप्याणि चूर्णानि क्रमी विस्वविषामृताः । वाकुची चाथ दद्रुघ्नः पिचुमर्दो हरीतकी । अक्षी धात्री च मञ्जिष्ठा मरिचं नागरं कणा । यमानी सैन्धवं मुस्तं त्वगेला नागकेशरम् । पर्पटं पत्रकं बालमुशीरं चन्दनं तथा । गोक्षुरस्य च वीजानि कच्छुरी रक्तचन्दनं । पृथक् पलार्द्धमानानां (प्र. ४तो) चूर्णमेषामिह क्षिपेत् । पलमात्रमिदं प्रातः समश्नीयाज्ज्वलनहि ॥ विषा अतिविषा, अमृता गुडूची । वाकुची = सोमराजी । अक्षः विभीतकं । पत्रकं = तेजपत्रम् । बालं (बाला) । कर्चूरः शटी एकाङ्गी वा । भा. म. ४भ. कुष्ठ चि. ।

**अमृतभल्लातकी** । स्त्री । रसायनोऽयं योगः । रस. र. । अत्र पक्वभल्लातकफलं, विदलमिष्टकाचूर्णघृष्टं प्रक्षालितञ्च शुष्कं कृत्वा पुनस्तद्विदलीकृत्य ६४ प. वारि ५१२ प. शेषः १२८ प. शीतले क्षीरं १२८ प तत्पादशेषे शीते च घृतं ३२प. ततश्च मुद्रापाकेऽवतार्य्य, खण्डस्य १६प. मिश्रयित्वा दिनसप्तकं स्थापयेत् । भल्लातकानां पवनोद्धतानां त्वल्पाम्लाङ्कुर तानाञ्च यदाढकं स्यात् । तद्वेष्टका-चूर्णकणैर्विघृष्य प्रक्षालयित्वा विसृजेत्प्रवाते । शुष्कं पुनस्तद्विदलीकृतञ्च ततः पचेदप्सु चतुर्गुणासु । तत्पादशेषं परिपूतशीतं क्षीरेण तुल्येन पुनः पचेत्तम् । तत्पादशेषं पुनरेव शीतं घृतेन तुल्येन पुनः पचेत्तम् । तदर्द्धया शर्करया विमिश्रं ततः खजेनोन्मथितं विधाय । तत्सप्तरात्रादुपजातवीर्य्यं सुधामृतादप्यधिकत्वमेति । रस. र. रसायन. । सां कौ. । भैष. कुष्ठाधिकारे । अन्या च विविधाधिकारे—सुपक्वभल्लातकफलं द्विखण्डितं ८श. वारि ३२श. (जले द्वैगुण्याभावात्) पादशेषः ८श. क्वाथो ग्राह्यः । अथ दुग्धं ३२ श. घृतञ्च शरावद्वयं (४ श.) दत्त्वा तावत्पचेत् यावद्घनतां न गच्छेत् । घनीभूते शर्करायाः १६ पलानि मिश्रयित्वा दिनसप्तकं स्थापयेत् । च. द. रसायने । पाठो यथा—सुपक्वभल्लातफलानि सम्यक् द्विधा विदार्य्याढकसम्मितानि । विपाच्य तोयेन चतुर्गुणेन चतुर्थशेषं व्यपनीय तानि । पुनः पचेत् क्षीरचतुर्गुणेन घृतांशयुक्तेन घनं यथा स्यात् । शितोपलाषोड़शभिः पलैस्तं विमिश्र्य संस्थाप्य दिनानि सप्त इत्यादि । घृताच्चतुर्गुणं क्षीरं घृतस्य प्रस्थद्व्यते इति । च. द. विविधाधिकारे ।

**अमृतमञ्जरी** । स्त्री । गोरक्षदुग्धीक्षुपे । रा. नि. व. ५ । सामान्यज्वरे रसविशेषः । "हिङ्गुलं मरिचं टङ्गं पिप्पलीं विषमेव च । जातीकोषं समं सर्व्वं जम्बीराद्भिर्विमर्द्दयेत् ॥ मात्रा २ वा ३ गुञ्जा । अत्र जातीकोषं (जयित्री) । अन्या कासाधिकारे, पाठस्तुल्य एव । र. सा. सं. ।

**अमृतमण्डुरः** । पुं । परिणामशूले देयः । पाठः—"मण्डुरस्य पलान्यष्टौ शतावर्य्यारसस्तथा । क्षीराज्यं दधि प्रत्येकं पिष्टा चतुःपलं पचेत् ।" इत्यादि । लौह ८प. शतावर्य्यादीनां प्रत्येकं चतुःपलञ्च एकत्र पचेत् । रस. र. ।

**अमृतमन्थः** । पुं । दुग्धादिपरिगोलिते मन्थे । प. सु. २० व. ।

**अमृतयोगः** । पुं । नक्षत्रयोगविशेषे दिनकरकरयुक्तः सोमसौम्येन वापि तुरगसहितभौमः सोमपुत्रोऽनुराधा । सुरगुरुरपि पुष्य रेवती शुक्रवारे दिनकरसुतयुक्ता रोहिणी सौख्यहेतुः । अत्रि. २ स्था. ६अ ।

**अमृतरसा** । स्त्री । कपिलद्राक्षायाम् । आङ्गूर । इति लोके । मं कालेद्राख । रा.नि. व. ११ ।



**अमृतलता** । स्त्री । गुड़ूच्याम् । रा. नि. व. ३ । हा. अत्रि. ।

**अमृतलतादिघृतम्** । क्ली । पाण्डुरोगाधिकारे घृतम् । तस्य पाठः—अमृतलतारसकल्कं प्रसाधितं तुरगविद्विषः सर्पिः । क्षीरं चतुर्गुणमेतद्धितरञ्च हलीमकार्त्तेभ्यः ॥ भा. म. २भ. ।

**अमृतवटकः** । पुं । सन्निपातातिसारे हितः । हा. अत्रि. ३ स्था. ३ अ. । पाण्डु-चि ।

**अमृतवटी** । स्त्री । अग्निमान्द्ये रसविशेषः । अमृतवराटकमरिचैः द्विपञ्चनवभागिकैः क्रमशः । विष २ कड़ि ५ मरिच ९ तो. । जलेन मुद्गसमाना वटी कार्य्या । भैष. ।

**अमृतवर्त्तिका** । स्त्री । मृत्युञ्जयतन्त्रोक्तरसायनवर्त्तौ । तत्साधनं यथा—त्रिकटु-त्रिफला-ब्राह्मी-गुड़ूची-चित्रक-नागकेशर-शुण्ठी-भृङ्गराज-निर्गुण्डी-हरिद्रा-दारुहरिद्रा-शक्राशन (सिद्धि) त्वगेला-गाम्भारीत्वक्-विड़ङ्ग-वचानां चूर्णं प्रत्येकं २प. कामरूपदेशीयगुड़स्य च ५० प्र. एकत्र संमर्द्य ३६० वर्त्तिकाः कार्य्याः । प्रत्यहं भोजनात् प्राक् सन्ध्यायां वा शीतलजलेन एकैकं सेव्यम् । भैष. ।

**अमृतवल्लरी** । स्त्री । गुड़ूच्याम् । भा. पू. १भ. गु. व. । उपोदक्याम् । बड़ पूँइ ।

**अमृतवल्लिका** } स्त्री । चित्रकूटप्रसिद्ध गुड़ूच्याम् । र. मा. । रा. नि.
**अमृतवल्ली** } व. ३ । अत्रि. २ स्था. २ अ । अमृतस्य च वल्ली सा हितकारिणी विषापहा । किञ्चित्तिक्ता जराव्याधिहरी कुष्टामनाशिनी । कामलव्रणशोथघ्नी ऋषिभिः परिकीर्त्तिता । वै. निघ. जीर्णज्व. हरीतकीपाके ।

**अमृतसङ्गमः** । पुं । खर्परिकायाम् । थापर । मं कलखापरी । वै. निघ. ।

**अमृतसञ्जीवनी** । स्त्री । गोरक्षदुग्धीनामक्षुपे । रा. नि व. ५ ।

**अमृतसम्भवा** । स्त्री । गुड़ूच्याम् । रा.नि. व. ५ ।

**अमृतसहोदरः** । पुं । घोटके । जयद. ।

**अमृतसारजः** । पुं । गुड़े । গুড় । मं काकवी । रा नि. व. १४ । तवराजखण्डे । नवात । रा नि. व १४ । तृष्णाज्वरदाहरक्तपित्तघ्न ।

**अमृतसारजा** । स्त्री । शर्करायाम् । चिनि मं खड़साकर ।

**अमृतसारताम्रम्** । क्ली । रसायनाधिकारे ।

**अमृतसोदरः** । पुं । घोटके । रा. नि. व. १९

**अमृतस्रवा** । स्त्री । चित्रकूटदेशे स्वनामप्रसिद्धलतायां । रुदन्ती लता । अमृतवल्ली । तत्पर्य्यायः,—हृत्प्ररुहा उपवल्लिका घनवल्ली सितलता । गुणाः—ईषत्तिक्तरसायनी, विषघ्नी, व्रणकुष्ठामकामलाशोफजित् । रा. नि. व. ३ । त्रायमाणायाम् । रा. नि. व. ५ । मात्रा ३ माषा ।

**अमृतहरीतकी** । स्त्री । अजीर्णे । यथा—"धान्यकं जीरकञ्चैव मुस्तकं पटुपञ्चकं । यमान्या मठपत्रञ्च लवङ्गं त्रिकटुस्तथा । प्रत्येकं समभागन्तु श्लक्ष्णचूर्णानि कारयेत् । सर्व्वचूर्णसमं दद्यादभयाचूर्णसंस्कृतम् ॥" सा. कौ. । तक्रे सम्यक्स्विन्नशिवाशतानि तद्बीजमुद्धृत्य च कौशलेन । षड्डूषणं पञ्चपटूनि हिङ्गुक्षारावजाजीमजमोदकञ्च । चुक्रेण सम्भाव्य त्वचा समानं क्षिपेत् शिवाबीजनिवासमध्ये ॥ प्रयोगा. ।

**अमृतक्षारः** । पुं । नवसागरे । वै. निघ. ।

**अमृता** । स्त्री । गुड़ूच्याम् । रा. नि. व. ३ । र. मा. । आमलक्यां । रा. नि. व. ११ । हरीतक्यां । प. सु । "स्थूलमांसामृता स्मृता ।" इयं चम्पाजाता । रा. नि. व. ११ । तुलस्यां । काष्ठधात्रीवृक्षे । भा. । मदिरायां । रा. नि. व. १४ । इन्द्रवारुण्यां । रा. नि. व. ३ । पारावतपद्यां । लता फट्की । रा. नि. व. ३ । गोरक्षदुग्धायां । कृष्णातिविषायाम् । रक्तत्रिवृतायां । रा. नि. व. ६ । दूर्व्वायां । पिप्पल्याम् । मे. । लिङ्गिन्यां । रा. नि. व. ३ । नीलदूर्व्वायां । रा. नि. व. ८ । श्वेतदूर्व्वायाम् । नागवल्ल्याम् । পান । रास्नायाम् । गरुड़वल्ल्याम् । वै. निघ. क्षय. चि. । सूर्य्यप्रभायाम् । खर्वूजेतिख्यातलतायाम् । कन्दगुड़ूच्याम् । स्फटिकारिकायाम् । मद. व. ४ । प्रयोगा । गुड़ूचीति चित्रकगुड़े । वा. सू. १५, आरग्वधादिः । निम्बामृता मधुरसा श्रुवव्रक्षपाटाः, पद्मकादौ अरुणः । शृङ्ग्यमृता दश जीवनसंज्ञाः । चि. १ अ. किरातादिः । किराततिक्तममृता । च. द. वातज्व चि. । किराताब्दामृतोदीच्य— । च. द. पित्तज्व. लोध्रादिः । च. सू. ४ अ. ।

**अमृताख्यगुग्गुलुः** । पुं । वातरक्ते । गुड़ूची २ श. गुग्गुलुः १ श. त्रिफला प्रत्येकं १ श. वारि ६४ श. सङ्क्षुद्य पाच्यम् । पादशिष्टे क्वाथयित्वा

तावत्पुन: पाच्यं यावत् न घनीभूतं भवति। घनीभूते दन्त्यादिचूर्णं प्रत्येकं ४ तो. चित्रचूर्णञ्च २ तो. ईषदुष्णतासत्त्वे प्रक्षिप्य मर्द्दयेत्। बलाबलं वीक्ष्य मात्रा देया। चं. द. वातरो चि.।

**अमृताख्यलौहः**। पुं, क्ली। रक्तपित्ताधिकारे लौहः। पाठो यथा—अमृता त्रिवृता दन्ती श्रावणी खदिरो वृषं। चित्रको भृङ्गराजश्च कोकिलाक्षः सपुष्करः। पुनर्णवा बलाकाग्गशिग्रुमोरटदारकाः। गवाक्षी पीवरी कन्दश्चविका तालमूलिका। नागबला कणामूलं कुष्ठं ब्राह्मणयष्टिका। पलोन्मितानि चैतानि जलद्रोणेः विपाचयेत्। अष्टभागावशेषन्तु कषायमवतारयेत्। त्रिफलायास्तथा प्रस्थं जलाष्टगुणपाचितं। तस्मादष्टावशेषन्तु कषायं सुपरिस्रुतम्। माक्षिकेण हतस्यापि पुटितस्य यथाविधि। अयसश्चूर्णितं पूतं पलषोड़शसम्मितम्। पलान्यभ्रस्य तावन्ति तावन्ति गन्धकस्य च। द्वे द्वे पले रसस्यापि खल्लितस्य विधानतः। गुड़स्य च पलान्यष्टौ सिताया वाथ पैत्तिके। रक्तपित्ते तु खण्डेन मत्स्यण्ड्या वापि कासवे। गुग्गुलोर्द्विपलं दत्त्वा प्रस्थमेकन्तु सर्पिषः। एवं पाकविधिज्ञस्तु पचेल्लौहं समाहितः। शीतेऽवतार्य्य मधुनः क्षिपेदष्टपलं भिषक्। माक्षिकस्य विशुद्धस्य द्विपलं रजसः क्षिपेत्। शिलाजतोस्तथा चूर्णं पलार्द्धसम्मितं भिषक्। तथैषां प्रक्षिपेच्चूर्णं पलमात्रं पृथक् पृथक्॥ इत्यादि। अमृतादिब्राह्मणयष्ट्यन्तानां प्रत्येकं पलमितं, वारि ३२ श. शेषः ८ श.। त्रिफला मि. २ श. वारि. ३२ श. शेषः ८ श। शोधितलौहं १६ प. अभ्रं ४ प. रसगन्धकौ ४ प. खण्डः ८ प. गुग्गुलुः २ प. घृतं २ श.। एकत्र लौहपाकः कार्य्यः। शीतले प्रक्षे. मधु ८ प. स्वर्णमाक्षिकं २प. शिलाजतु ४ तो.। अत्र श्रावणी मुण्डितिका। मोरटमिक्षुमूलं। दारको वृद्धदारकः। दर्भ उलुमूलं। पीवरी शतावरी। गवाक्षी गोरक्षकर्कटी। नागबला गोरक्षचाकुलिया। कुष्ठपुष्कराभ्यां काण्डग्रन्थिभेदेन ग्रहणम्। अथवा भागद्वयग्रहणम्। माक्षिकेण हतस्य निरुत्थमारितस्येत्यर्थः। पुटितस्य सामान्यविशेषपुटितस्य। पलान्यभ्रस्येत्यत्रापि पुटितस्येति सम्बध्यते। तेन प्रथमपरिच्छेदोक्तक्रमेण रसायनाधिकारे वक्ष्यमाण-वृहदमृतसारोक्त-लौहाभ्रसमभिहत-विधिनैव वा चूर्णितपुटितस्येत्यर्थः। तावन्ति गन्धकस्येति चत्वारि पलानीत्यर्थः। गन्धकशुद्धिविधिश्च यथा—गन्धकन्तु समानीय नवनीतामलच्छवि। तत्सर्पिषि विपक्तव्यं यावत्तैलनिभं भवेत्। वस्त्रेणान्तरितङ्कृत्वा ढालयेत्त्रिफलाम्भसि। एवं गन्धाश्मसंशुद्धं तत्तत्कर्म्मसु योजयेत्। अथ रसस्येति पारदरसस्य पलद्वयं। खल्लितस्य मूर्च्छितस्येत्यर्थः। मूर्च्छनं खल्लशिलादिषु औषधचूर्णं रसं वा दत्त्वा विमर्द्य निर्म्मलीकरणमभिधीयते। तत्र तावत् पारदे सिद्धदोषत्रयनिवारणार्थं त्रिभिर्द्रवैः प्रत्येकं सप्तधा मूर्च्छनं कार्य्यम्। पटु लवणं अलम्बुषः कुलाहलं किण्वं सुराबीजं। माक्षिकस्य विशुद्धस्येति स्वरूपतः शोधितया ज्ञेयम्। चित्रकाण्डचूर्णानि प्रत्येकं पलमात्राणि। चतुर्जातकादीनां प्रत्येकमर्द्धपलम्। रस. र. रक्तपि. चि.।

**अमृतागुग्गुलुः**। पुं। राजयक्ष्मणि हितः। प्रस्थं गुड़ूच्याः प्रस्थार्द्धं प्रत्येकं त्रिफलापुरं। पक्त्वा द्रोणेऽम्भसः शिष्टे पाकांहने ततः क्षिपेत्। कोषो दन्त्यमृताव्योषविड़ङ्गत्रिफलारजः। प्रत्येकमर्द्धपलिकं त्वक्चूर्णञ्च कार्षिकम्॥ रस. र. वा. र, चि.। चक्रपाणिमते तु गुड़ूची ४ श. गुग्गुलुः २ श. आमलकी २ श. विभीतकः २ श. पुनर्णवा २ श. हरीतकी २ श. एकत्र कुट्टयित्वा ६४ शरावबारिणि पक्त्वा १६ शरावावशिष्टः क्वाथः कार्य्यः। अथ गालयित्वा पुनः पक्त्वा घनीभूते तत्र दन्त्यादिचूर्णं प्रत्येकं ४ तो. त्वक्तः २ तो. प्रक्षेप्यम्। प्रक्षेपश्च ईषदुष्णतायां देयः। मात्रा च यथाग्निबलं देया। च. द. वा. र. चि.। पाठो यथा—अमृतायाश्च द्विप्रस्थं प्रस्थमेकन्तु गुग्गुलोः। प्रत्येकं त्रिफलाप्रस्थं वर्षाभूप्रस्थमेव च। सर्व्वमेकत्र सङ्कुट्य क्वाथयेन्नल्वणेऽम्भसि। पुनः पचेत्पादशेषं यावत्सान्द्रत्वमागतं। दन्ती-चित्रकमूलानां कणा-विश्वफलत्रिकं। गुड़ूचीत्वग्विड़ङ्गानां प्रत्येकार्द्धपलोन्मितं। त्वक्तः कर्षमेकन्तु सर्व्वमेकत्र चूर्णयेत्। सिद्धे कोष्णे क्षिपेत्तत्र अमृतागुग्गुलोः परमिति॥ च. द.। अयं भावप्रकाशेऽपि वातरक्ते उक्तः। पाठस्य मर्म्मार्थस्तुल्य एवेति पाठो न लिखितः। भा. म. ३भ.।

**अमृताङ्कुरलौहः**। पुं, क्ली। उपदंशे लौहविशेषः। तत्रायं पाठः—"पारदं गन्धकं लौहमभ्रं ताम्रं सगुग्गुलुं। भल्लातं पलिकं सर्व्वं धात्र्याः सार्द्धं षड़क्षकं। द्व्यक्षं पथ्याहरीतक्योर्लौहात् षोड़शिकं हविः। पचेत्प्रस्थ वराक्वाथे लौहपात्रे विधानवित्। सुसिद्धं तत्समश्नीयात् सम्पूज्य गुरुदेवतां। संमर्द्य मधुसर्पिर्भ्यां गुञ्जावृद्ध्या



दिने दिने। अत्रानुपानं पयसा नारिकेलोदकेन वा। कुष्ठोक्तामृताङ्कुरलौहादस्य त्रिफलाभागभेदः, अतः पाठद्वयम्। प्रयोगा. उ. द चि.। भैषजमिदं कुष्ठरोगे हितम्। अत्र पलमेकं रसस्येति रससिन्दूरमिति केचित्। अपरे हिङ्गुलोत्थपारदं व्यवहरन्ति। वृद्धास्तु रससिन्दूरमेव व्यवहरन्ति। रसादिसर्व्वमेकीकृत्य लौहपात्रे त्रिफलाक्वाथेन पचेत्। पाकशेषे त्रिफलाचूर्णं देयम्। र. सा. सं. रस. र.। कुष्ठोक्तो यथा—"हुताशमुखसंशुद्धं पलमेकं रसस्य वै। पलं लौहस्य ताम्रस्य पलं भल्लातकस्य च। गन्धकस्य पलञ्चैकमभ्रकस्य च गुग्गुलोः। हरीतकीविभीतक्योश्चूर्णं कर्षद्वयं द्वयोः। अष्टमाषाधिकं तत्र धात्र्याः पाणितलानि षट्। घृतं द्व्यष्टगुणं लौहात् द्वात्रिंशत्त्रिफलाजलम्। एकीकृत्य पचेत्पात्रे लौहे तद्विधिपूर्व्वकम्। पाकमेतस्य जानीयात् पाकज्ञः कुशलो भिषक्"। इत्यादि। हुताशमुखसंशुद्धिः यथा रसार्णवे—रसस्य पञ्चमांशेन गन्धेन लौहपात्रके। लौहदण्डेन च तथा दत्त्वैषन्नवनीतकं। मर्द्दनात्कज्जलिङ्कृत्वा पिष्टं शालिञ्चिकाद्रवे। वृहद्योच्यास्तु पित्तेन वेष्टयित्वा निधापयेत्। हण्डिकाया मुखं लिप्त्वा शनैर्मृद्वग्निना पचेत्। गन्धगन्धश्च यावत्स्यात् तद्धुताशमुखं विदुः॥ कश्चित्तु हुताशमुखसंशुद्धमिति गुग्गुलुपर्य्यन्तं संबध्नाति। तेन शोधनजारणादिक्रमेण सर्व्वेषामग्नौ शोधनमाह हरीतकीविभीतक्योः सार्द्ध र्षद्वयं पृथगिति वचनात्। हरीतक्यास्तु ५ तो. विभीतक्याश्च आमलक्याः षट् पाणितलं १२ तो। मिलितत्रिफला १६ प. पाकार्थंजलं १६ श. शेषः ४श. घृतं १६ प. लौहपात्रे पाच्यम्। वस्त्रपीड़ितं यदा न निःसरति मुद्रा च भवति तदावतार्य्य चूर्णप्रक्षेपः। अस्य पाके सावधानेन भाव्यम्। अमृतसारलौहवदस्य क्रिया ज्ञेया। वृहदपि अमृताङ्कुरलौहं कुष्ठे उक्तम् यथा—सूतं हिङ्गुलसम्भूतं ताम्रं तद्द्विगुणं भवेत्। सुजीर्णलौहं तत्तुल्यमभ्रं भल्लातकं तथा। ताम्रद्विगुणगन्धश्च गुग्गुलुस्तद्द्विधा मतः। त्रिफलायास्तथा चूर्णं प्रत्येकं सूततुल्यकं। ताम्राच्चतुर्गुणं सर्पिः तैलमेरण्डजं द्विधा। रसाञ्जनञ्चाभ्रतुल्यं पक्त्वा चैवामृतद्रवैः। चतुर्गुणैर्घृतात्तैलान्निस्तोयमवतारयेत्"। इत्यादि। भैष. प्रयोगा कुष्ठचि.। अस्य रसेन्द्रसारसंग्रहोक्तः पाठः प्रायेण तुल्य एव। केवलं गन्धकस्य पलञ्चैकमित्यत्र—"अभ्रकस्य पलञ्चैकं गन्धकस्य चतुःपलमिति।" कर्षद्वयं द्वयोरिति प्रत्येकं कर्षद्वयमिति। घृतं द्व्यष्टगुणमित्यत्र—"घृतञ्चाष्टगुण"मितिभेदः। अभ्रकस्य पलञ्चैव गन्धकस्य चतुःपलमित्यत्र प्रयोगामृतपाठं न साधु मन्यन्ते भट्टादयो विशिष्टवैद्याश्चेति। र.सा.सं.टी.। रसरत्नाकरः प्रयोगामृतेन तुल्य एव केवलं द्व्यष्टमाषाधिकमित्यत्र अष्टमाषाधिकमिति भेदः। रसेन्द्रचिन्तामणौ च "अष्टमाषाधिकानि" घृतं त्वष्टगुणमिति पाठभिन्नतास्ति। रसे.चि,कुष्ठ.। सा.कौ.। अन्यदम्लपित्ते उक्तम्।

**अमृतादिः**। पुं। कषायद्रव्यसमूहे यथा—अमृतवृषपटोलं मुस्तकं सप्तपर्णं खदिरमसितवेत्रं निम्बकं द्वे हरिद्रे" इत्यादि। अयं विसर्पविस्फोटके हितः। असितवेत्रं श्यामा लता। रस.र.। च.द.विसर्प-चि.। सा.कौ.। प्रयोगा.। अपरः मूत्रकृच्छ्रे यथा—अमृतं नागरं धात्री वाजिगन्धा त्रिकण्टकं। प्रपिबेद्वातरोगार्त्तः सशूलो मूत्रकृच्छ्रवान्॥ भैष.।

**अमृतादिवटी**। स्त्री। विषं २ भा. कपर्द्दभस्म ५ भा. मरिचं ९ भा. जलेन मुद्गमाना वटी कार्य्या। इयं कफे त्रिदोषेऽग्निमान्द्ये च हिता। भा.म.१भ ज्वरचि.।

**अमृताद्यगुग्गुलुः**। पुं। अयं मेदोरोगे हितः। यथा—"अमृता त्रुटिवेल्लवत्सकं कलिपथ्यामलकानि गुग्गुलुम्। क्रमवृद्धमिदं मधुप्लुतं पिड़कास्थौल्यभगन्दरं जयेत्।" अत्र त्रुटिः सूक्ष्मैला। वेल्लं विड़ङ्गं। वत्सकं कुटजत्वक्। एषां क्रमवृद्ध्या भागो ग्राह्यः। भैष.मेद.। भा.म.३भ.मेदचि.।

**अमृताद्यघृतम्**। क्ली। वातरक्ते हितं। घृत ४ श. कल्कद्रव्यं १ श.। पाककाले आमलकीरसं ४ श. वारि १२ श. दत्त्वा पाच्यम्। आरग्वधः शोणालुफलमज्जा। वृश्चीरः श्वेतपुनर्णवा। क्षुरकः कोकिलाक्षमूलम्। गन्धर्व्वः एरण्डमूलं। घनः मुस्ता। च.द.वातरोग-चि.। भा.म २भ.।

**अमृताद्यचूर्णम्**। क्ली। आमवाते। गुड़ूचीनागरगोक्षुरमुण्डितिकावरुणचूर्णानि प्रत्येकं समभागानि। भा.म.२भ.।

**अमृताद्यतैलम्**। क्ली। गलगण्डादौ हितम्। मूर्च्छिततिलतैलं ४ श. गुड़ूच्यादीनां शतपलं वारि ६४ श शेषः १६ श.। उक्तद्रव्याणां मिलितकल्कः १श.। तैलपाकविधिना पाच्यम् च.द गलगण्ड-चि.। अथवा गुड़ूच्यादीनां प्रत्येकं १ प. वारि १२८ प.। तैलं पिबेच्चामृतवल्लिनिम्बहिंस्राद्वयीवत्सक-

पिप्पलीभिः। सिद्धं बलावेतसदेवदारु हिताय नित्यं गलगण्डरोगी॥ तैल ४ श. कल्कार्थं—'গুলঞ্চ, নিমছাল, গুড়কাউলী, কেলেকড়া, কুটজত্বক্, পিপুল, বেড়েলা, বেতস, দেবদারু। মিলিত ১ শ.। भैष.। सिद्धं बलाभ्यामिति। च.द.।

**अमृतफलः**। पुं, क्ली। पटोले। भा. पू.१भ.। काबेलप्रसिद्धफलवृक्षविशेषे, रुचिफले वा, नास्पाती इति लोके। मद.व.७।

**अमृतारिष्टम्**। क्ली। अरिष्टमिदं विषमज्वरादौ हितं। अत्र गुड़ूच्याः पलशतं दशमूलस्य तथा एकत्र द्रोणचतुष्टयजले पक्का पादशेषं ग्राह्यं। अथ तत्र क्वाथे गुड़स्य तुलात्रयं (৩৭॥০ সের) शोलयित्वा, कृष्णजीरस्य १६ प. पर्पटस्य २ प.। तथा सप्तपर्ण-त्रिकटु-मुस्तक - नागकेशर-कटुक्यतिविषेन्द्रयवादीनाञ्च प्रत्येकं चूर्णपलं निक्षिप्य आवृतपात्रे माससमात्रं स्थापयेत्। तेनान्तकृतसेकेनारिष्टं जायते। भैष.।

**अमृतार्णवः**। पुं। रसोऽयं अतिसारे ज्वरातिसारे च हितः। मात्रा १ मा.। अनुपानं धान्यजीरक-शालवीजानां यथालाभं देयम्। द्रव्याणि यथा हिङ्गुलोत्थरस - लौह - गन्धक - टङ्कण- शटी -धान्यकह्रीवेर-मुस्तकाम्बष्ठाजीरकातिविषाजीरकाणि छागीक्षीरेण मर्द्दयेत्। भैष.। रस.र.। अजाजी जीरकम्। घुणप्रिया अतिविषा। धान्यजीरकयूषेणेति यूषः प्रतरतरं सुदां ज्ञेयम्। र.सा.सं.अतिसा.चि.।

**अमृतार्णवरसः**। पुं। कासहरोऽयं रसः। अत्र अमृता गुड़ूची। पद्मकं पद्मकाष्ठं। र.सा.सं. कासचि.। रस र.। भैष.। द्वितीयो रसः वाजीकरणाधिकारे। अत्र सूतभस्म रससिन्दूरम्। र. सा.सं.। अन्यः कासे—"रास्ना-विड़ङ्ग-त्रिफला-रसगन्धकटुत्रिकं। अमृता पद्मकं क्षौद्रं विषतुल्यं सुचूर्णितम्॥" मात्रा २ गुञ्जा। रस.र.कासचि.। अन्यः राजयक्ष्मणि—"पारदं गन्धकं शुद्धं मृतलौहञ्च टङ्कणं। रास्ना विड़ङ्ग-त्रिफला-देवदारु-कटुत्रयम्। अमृता पद्मकं तुल्यं विषञ्चापि विचूर्णयेत्। मधुनाच वटी कार्य्या।" प्रयोगा.। अन्यः रसेन्द्रसारधृते रसायनाधिकारे। "सूतभस्म चतुर्भागं लौहभस्म तथाष्टकं। अभ्रभस्म च षड़्भागं गन्धकस्य च पञ्चमं। भावयेत्त्रिफलाक्वाथैस्तत्सर्व्वं भृङ्गजद्रवैः। शिग्रुवह्निकटुक्वाथैर्भावयेत् सप्तधा पृथक्। सर्व्वतुल्या कणा योज्या गुड़ैर्मिश्रं पुरातनैः॥" मात्रा निष्कमिता। र.सा.सं. प्रयोगा.रसायने।

**अमृतार्णवलौहम्**। क्ली। कुष्ठाधिकारे। "त्रिकटुत्रिफलालौहं समभागं विचूर्णितं। सर्व्वेषामपि चूर्णानामर्द्धभागं शिलाजतु। गुड़ूचीस्वरसैर्देया भावना रविरश्मिभिः। वारत्रयं ततः शुष्कं घृतेन सह मर्द्दयेत्॥" मात्रा १ मा.मधुना लेह्या। रस र. प्रयोगा। अयम् अमृतार्णवरस इति मेहेऽप्युक्तः। प्रयोगाः।

**अमृतावटिका (गुग्गुलुः)**। स्त्री। सद्यो व्रणघ्नी वटिका। व्रणशोथे इति च द.। "अमृता-पटोलमूलत्रिफलात्रिकटुकृमिघ्नानाम्। समभागानां चूर्णं सर्व्वसमो गुग्गुलोर्भागः॥ प्रतिदिवसमेकैकां गुड़िकां खादेदक्षप्रमाणाम्। रस.र.।" अक्षमानादधिकं न कर्त्तव्यं कोष्ठादिकवृद्ध्याल्पमपि। प्रयोगा.। द्वितीया वृहदभिधाना व्रणे हिता। यथा—"अमृतायाः पलशतं दशमूलशतं तथा। पाठा मूर्व्वा बला द्वे च तथा गन्धर्व्वहस्तकः॥ पृथग्दशपलानेतानभयानां शतं तथा। विभीतकशते द्वे च धात्रीशतचतुष्टयं॥ गुग्गुलोः प्रस्थसंयुक्तं जलद्रोणद्वये निशाम्। एकां पर्य्युषितां पक्का चतुर्थांशावशेषिते॥ क्वाथे गुग्गुलुमालोड्य लौहपात्रे पचेद्घनं। शीते चैतानि संचूर्ण्य प्रक्षिपेत्पलिकानि तु॥ त्रिफलात्रिवृतादन्तीव्योषच्छिन्नाश्वगन्धकान्। विड़ङ्गं त्रिवकं चोचं सूक्ष्मैलां नागकेशरम्॥" इत्यादि। पोट्टलिबद्धगुग्गुलुना सह पर्य्युषितं कर्त्तव्यं। ततोऽपरदिने क्वाथकरणम्। कैशोरगुग्गुलुवत् सर्व्वमपरं ज्ञेयम्। प्रयोगा. व्रणचि.। रसरत्नाकरधृतपाठस्तुल्यएव। तत्र अस्य पत्री यथा—घृतपिष्टितगुग्गुलुः १६ प क्वाथार्थं गुड़ूची १०० प. दशमूलं १०० प. আকনাদী, মূর্ব্বা, বাড়িয়ালা, শ্বেতবাড়িয়ালামূলং, एरण्डमूलं, प्रत्येकं १० प. सास्थिहरीतकी १००, বহেড়া १००, आमलकी ४००, पाकार्थं देयं जलं द्रोणत्रयमितं (१९२श.) अत्रैव पोट्टलीबद्ध गुग्गुलुं दत्त्वा पाकशेषजलं ४८ श. कर्त्तव्यम्। अत्रैव क्वाथे क्वाथस्थापितगुग्गुलुं पिष्टा पाचनीयम्। सिद्धे प्रक्षेपार्थं त्रिफला त्वृन्मूलं त्रिकटु दन्तीमूलं गुड़ूची अश्वगन्धा विड़ङ्गं तेजपत्रं गुड़त्वक् सूक्ष्मैला नागेश्वरः গুড়া, एषां प्रत्येकं १ प एकीकृत्य स्निग्धभाण्डे स्थाप्यम्। मात्रा ८ माषा। उष्णोदकमनुपेयम्। रस र. व्रणशोथचि.। भा.२भ। अन्या कुष्ठरोगे वातरक्ते च हिता। तस्या अयं पाठः—अमृतायाः पलशतं दशमूल्यास्तथाशतं। पाठा मूर्व्वा बला तिक्ता



दार्वी गन्धर्व्वहस्तकाः। एषां दशपलान् भागान् विभीतक्याः शतं हरेत्। द्वे शते च हरीतक्याः आमलक्यास्तथा शतम्। जलद्रोणत्रये पक्का अष्टभागावशेषितं। प्रस्थं गुग्गुलुमाहृत्य प्रस्थार्द्धञ्च घृतं पचेत्। पाकसिद्धौ प्रदातव्यं गुड़ूच्याः सत्त्वमेव च पलद्वयं तथा शुण्ठ्याः पिप्पल्याश्च पलद्वयम्॥ इत्यादि। भैष.कुष्ठ-चि.।

**अमृताष्टकः**। पुं, क्ली। गुड़ूच्याद्यष्टद्रव्यसिद्धकषाये। एष पित्तश्लेष्मज्वरे हितः। च.द.चि.। "गुड़ूचीन्द्रयवारिष्टपटोलं कटुरोहिणी। नागरं चन्दनं मुस्तं पिप्पलीचूर्णसंयुतम्। अमृताष्टक इत्येष पित्तश्लेष्मज्वरापहः॥" अरिष्टं निम्बत्वक्। रोहिणी कटुकी। एषां प्रति २० रतिकं वारि ३२ तो. शेषः ८ तो.। प्रक्षेपार्थं पिप्पलीचूर्णं ॥० तो.। सा.कौ.। [व ४।

**अमृतासङ्गम्**। क्ली। खर्परिकातुल्ये। तत्पर्य्यायः,—कर्परिकातुल्यं, अञ्जनं (हे)। मद.।

**अमृतासङ्गमः**। पु। खर्परीतुल्ये। তুঁতে। मं मोरचूत। .वैनिघ।

**अमृताह्वम्**। क्ली। अमृतफले, नास्पातीति लोके। हिं अपो। मद.व.६। गुणाः—गुरु वातघ्नं स्वादु त्रिदोषघ्नञ्च। 'नास्पाती' मुद्गलदेशे प्रचुरं लभ्यते। भा.। खर्वूजे। मद व.६।

**अमृताह्वयतैलम्**। क्ली। वातरक्ते तैलम्। पाठो यथा—"गुड़ूची मधुकं ह्रस्वपञ्चमूलं पुनर्णवा। रास्ना सैरण्डमूला च जीवनीयानि लाभतः। पलानां शतिकैर्भागैर्बला पञ्चशतं भवेत्। कोलं विल्वं यवान् माषान् कुलत्थांश्चाढ़कोन्मितान्। काश्मर्य्याश्च शुष्कानां द्रोणं द्रोणशतेऽम्भसः। साधयेज्जर्जरं पूतं चतुर्द्रोणञ्च शेषयेत्। तैलद्रोणं पचेत्तेन दत्त्वा पञ्चगुणं पयः। पिष्टा त्रिफलिकञ्चैव चन्दनोशीरकेशरम्। पत्रैलागुरुकुष्ठानि तगरं मधुयष्टिकां। मञ्जिष्ठार्द्धपलञ्चैव तत्सिद्धं सर्व्वयोगिकम्॥" भा.म.२भ.वातरोगचि.।

**अमृतिः**। स्त्री। जलपात्र-विशेषे।

**अमृतेश्वररसः**। पुं। अयं रसो यक्ष्मणि हितः। रसभस्मामृतासत्वं लौहं मधुघृतान्वितम्। अमृतेश्वरनामायं षड़्गुञ्जो राजयक्ष्मणि॥ भा.म.२भ। रसेन्द्रचि.। प्रयोगा।

**अमृतोत्था**। स्त्री। सुधामूलायाम्, सालम्मिछरीति भाषा। अत्रि.।

**अमृतोत्पन्नम्**। क्ली। तुत्थे। खर्परीतुल्ये। খাপর। मं कालखापरी। रा.नि.व.१३। [नि.व.।

**अमृतोत्पन्ना**। स्त्र। गृहमक्षिकायाम्। रा.

**अमृतोद्भवः**। पुं। धन्वन्तरौ। रत्ना.। क्ली। तुत्थे। रा.नि.व.१३। खर्परीतुल्ये। খাপর। रा. नि व.। आमलक्याम्।

**अमृतोपमम्**। क्ली। खर्परीतुल्ये। তুঁতে। मं मोरचूत। वै.निघ। द्रव्ये। वै.निघ.।

**अमृतोपहिता**। स्त्री। तोपचिनी इति ख्याते

**अमेध्यम्**। क्ली। पुरीषे। श.र.।

**अमोघा**। स्त्री। पाटलावृक्षे। भा.। श्वेतपाटलायाम्। हरीतक्याम्। विड़ङ्गे। मे.। श्वेतपाटलायाम्। पद्मभेदे। रा.नि व.२३।

**अम्बकः**। पुं। वकुलवृक्षे। जटा.। क्ली। नेत्रे। हे.च.। ताम्रे। रा.नि व.१३।

**अम्बरम्**। क्ली। कार्पासे। কাপাস। र.मा.। अभ्रधातौ। অভ্র। रा.नि व.१३। भैष.। वसन्तकुसुमाकरे। तन्नामकगन्धद्रव्ये। विश्वः।

**अम्बरदः**। पुं। कार्पासवृक्षे। वै निघ.।

**अम्बरा**। स्त्री। कार्पासवृक्षे। प.सु.।

**अम्बरातकः (रोयः)**। पुं। आम्रातकवृक्षे। আমড়া গাছ। जटा.।

**अम्बरि(रोषः)**। पुं, क्ली। आम्रातकवृक्षे। भर्जनपात्रे। अम।

**अम्बष्ठः**। पुं। देशविशेषे। स्त्रोढ़ायां वैश्यकन्यायां ब्राह्मणाज्जाते ब्राह्मणविशेषे।

**अम्बष्ठका (को)** } **अम्बष्ठा (ष्ठिका)** } स्त्री। (Stephania hernandifolia, Syn cissampelas hexandra.) पाठायां। निमूका। আকনাদি। रा.नि.व ६। पटाङ् इति हिमालये। भार्ग्यां। र.मा। लक्ष्मणामूले। भैष. स्त्रीरोग.चि.पुष्यानुगचूर्णे। अम्ललोण्याम्। আম্রুল। रा.नि.व ५। भा.पू.१भ। यूथिकायाम्। যুঁই। प मु.। मयूरशिखायाम्। वा,सू प्रियङ्ग्वादिः। "अम्बष्ठामधुकं नमस्कारी।" आम्रातके। আমড়া। क्षुद्रक्षुपविशेषे। अम्बाड़ा, अम्बरी इति च दक्षिणापथे। हिं मोहुया। माचिका, साकुरुण्ड इति च पश्चिमदेशे ख्याता। पूदिना। तत्-

पर्य्यायः,—वालिका वाला शठाम्बा अम्बालिका अम्बिका अम्बा माचिका दृढवल्का मयूरिका गन्धपर्णी चित्रपुष्पी श्रेयसी सुखयाचिका छिन्नपत्री भूरिमल्ली। सु. सू. ३८अ.। रस.र. पुष्यानुगचूर्णे। गुणाः—कषायाम्ला कफघ्नी कण्ठरोगघ्नी वातरोगहरी रुच्या दीपनी च। रा.नि.व.४।

**अम्बष्ठादिः**। पुं। पाठादिगणविशेषे। यथा—अम्बष्ठा-धातकीकुसुमसमङ्गाकट्वङ्गमधुकविल्वपेशी-रोध्रसावररोध्रपलाशनन्दीवृक्षपद्मकेशराणीति।गुणाः "गणौ प्रियङ्ग्वम्बष्ठादी पक्वातिसारनाशनौ। सन्धानीयौ हितौ पित्ते व्रणानाञ्चापि रोपणौ॥" सु.सू. ३८अ।

**अम्बष्ठी**। स्त्री। कटुकाभेदे। कट्की विशेष। यथा—"रक्ताकाण्डेहाम्बष्ठी कटुका चापराम्मृता।" द्रव्याभि.।

**अम्बा (लिका)**। स्त्री। अम्बष्ठायाम्। पूदिना। पाठायाम्। आकनादि। रा.नि,व.४।

**अम्बिका**। स्त्री। अम्बष्ठायाम्। पूदिना। भा पू.१भ.। मायाफलवृक्षे। हिं मयनफल। मद व ४। कटुक्याम्। श.च.

**अम्बु**। क्ली। जले। रा.नि,व.१४। बालके। च. द.ज्वरातिसार-चि.। "किराताम्बुयवासकम्।" भैष ग्रीष-चि.पुनर्णवातैले।

**अम्बुकः**। पुं। श्वेतार्कमन्दारे। रक्तैरण्डे।

**अम्बुकण्टकः**। पुं। नक्रे। विका.।

**अम्बुकन्दः**। पुं। शृङ्गाटके। वै.निघ।

**अम्बुकिरातः (टः)**। पुं। नक्रे। विका.।

**अम्बुकोशः**। पुं। गोधायाम्। शिशुमारे। विका.।

**अम्बुकुक्कुटी (टिका)**। स्त्री। जलकुक्कुट्याम्। पानकउड़ी। मं पानकोंबड़ी। See प्लवः।

**अम्बुकूर्म्मः**। पुं। गोधायाम्। वै निघ।

**अम्बुकृष्णा**। स्त्री। जलपिप्पल्याम्। कँचड़ादाम्। वै.निघ।

**अम्बुकेशरः**। पुं। कोलङ्गवृक्षे। लेवू। र. सा.सं.।

**अम्बुचरः**। पुं। जलचरे। कच्छटे। वै.निघ.।

**अम्बुचामरम्**। क्ली। शैवाले। जटा.।

**अम्बुचारिणी**। स्त्री। स्थलपद्मिन्याम्। हिं थलपद्म। वै.निघ.।

**अम्बुजः**। पुं। हिज्जलवृक्षे। अम.। मल्यादौ। भा.। जलवेतसे। कच्छटे। वै.निघ.। वि। जलजातमात्रे। क्ली। कमले। मे.जत्रिकं। [वै.निघ।

**अम्बुजः**। पुं। हिज्जलवृक्षे। अम.। मल्यादौ। भा.। जलवेतसे। कच्छटे। वै.निघ.। ति जलजातमात्रे। क्ली। कमले। मे.जत्रिकं।

**अम्बुजामलकी**। स्त्री। पानीयामलके।

**अम्बुटः**। पुं। अश्मन्तकवृक्षे। आवुटा। मं अपटा। रा नि.व ९।

**अम्बुतालः**। पुं। शैवाले। विका.।

**अम्बुदः**। पुं। मुस्तायां। सि.यो.कामला-चि, मूर्च्छाधृतं वृन्दः। "पटोलाम्बुदद.वभिः।"

**अम्बुधरः**। पुं। नागरमुस्तायां। भद्रमुस्तायां। वै.निघ.।

**अम्बुधिः**। पु। सागरे।

**अम्बुधिफेनः**। पुं।समुद्रफेने। भा.।

**अम्बुधिस्रवा**। स्त्री। गृहकन्यायाम्। घृतकुमारी। मं कोड़फल। रा नि.व.५।

**अम्बुनाम**। क्ली। ह्रीवेरे। वाला। भा। बालके।

**अम्बुपः**। पुं। चक्रमर्द्दे। चाकुन्दे। (वां) श.। कच्छटे। के.।

**अम्बुपत्रा (त्रिका) (पत्री)**। स्त्री। उच्चटायाम्। र.मा.।

**अम्बुप्रसादः**<br>**अम्बुप्रसादनः** } पुं। निर्म्मलीफलवृक्षे। रा. नि. व.११। See कतकः।

**अम्बुप्रसादनफलम्**। क्ली। निर्म्मलीफले। वै निघ.।

**अम्बुभृत्**। पुं। मेघे। मुस्तके। ञ.। समुद्रे। के.।

**अम्बुमयूरकः**। पुं। जलापामार्गे। वै निघ।

**अम्बुमात्रजः**। पुं। शम्बूके। हे.च.।

**अम्बुमुक् (च्)**। पुं। मुस्तके। मेघे। के।

**अम्बुयष्टिका**। स्त्री। भार्ग्याम्। बामणहाटी। र.मा.।

**अम्बुरः**। पुं। द्वाराधःकाष्ठे। गोवराट्। (कां)

**अम्बुरु (रो) हः**। पुं, क्ली। पद्मे। रा.।

**अम्बुरुहा**। स्त्री। पद्मिन्यां। स्थलपद्मिन्याम्। वै.निघ.।



**अम्बुवल्लिका**। स्त्री। कारवेल्लायाम्। वै.निघ.।

**अम्बुवल्ली**। स्त्री। क्षुद्रकारवेल्लयां। जलपिप्पल्यां। वै.निघ.।

**अम्बुवासिनी**। स्त्री। स्थलकमलिन्याम्। वै.निघ.।

**अम्बुवासिनी**। स्त्री। रक्तपाटले।

**अम्बुवासी**। पुं। रक्तपाटले। वै.निघ।

**अम्बुवाहः**। पुं। मुस्तके। चि.क्र.क.वल्ली प्रदर-चि.।

**अम्बुवेतसः**। पुं। जलवेतसे। मं लव्हाला तत्पर्य्याय;,—परिव्याधः विदुलः नादेयी (अ)।

**अम्बुशिरीषिका**<br>**अम्बुशिरीषी** } स्त्री। जलशिरीषे। वै. निघ.। तत्पर्य्यायः,—शिरीषिका टिण्टिनिका दुर्बला वारिशिरीषिका। अस्या गुणाः,—त्रिदोषविषकुष्ठार्शोनाशिनी। भा.।

**अम्बुशुक्तिः**। स्त्री। जलशुक्तौ। झिनूक। मं जलशिंपी। वै. निघ.।

**अम्बुसर्पिणी**। स्त्री। जलौकसि। जोँक।

**अम्बुसादनम्**। क्ली। निर्म्मलीवीजे। वै. निघ.।

**अम्बुसारा**। स्त्री। कदलीवृक्षे। भा. पू.१भ.फ.व।

**अम्बुसाह्वः**। पुं। कुन्दपुष्पक्षुपे। वै.निघ.।

**अम्बूकः**। पुं। लकुचवृक्षे। के.।

**अम्भः**। पुं। जले। रा.नि.व.१४। बालनामौषधविशेषे। अ.।

**अम्भःपा**। पुं। चातकपक्षिणि।

**अम्भःसारः**। पुं। मुक्तायां। वै.निघ.।

**अम्भःसूः**। स्त्री। शम्बूके। मं धुके। धूमे। हे।

**अम्भोजम्**। क्ली। पद्मे। वारिवेतसे। पुं। पुष्कराह्वये। सारसपक्षिणि। के.।

**अम्भोजनालः**। पुं। पद्मनाले। वै.निघ.।

**अम्भोजा**। स्त्री। वल्लीयष्टीमधुनि। वै.निघ.।

**अम्भोदः**। पुं। भद्रमुस्तायाम्। रा. नि. व. ६। च. द. यक्ष्म-चि. एलादिमन्थे। प्रपौण्डरीके। प.मु.। क्ली। कांस्ये।

**अम्भोधरः**। पुं। मुस्तके। मेघे। समुद्रे। शब्दर.।

**अम्भोधिपल्लवः**। पुं। प्रवाले। मं पोंवलें। रा.नि.व.१३।

**अम्भोरुहम्**। क्ली। पद्मे। च.द.र.पि,चि.। पुं। सारसपक्षिणि। अ.।

**अम्भोरुहकेशरम्**। क्ली। पद्मकेशरे। च. द. र.पि.चि.।

**अम्रः**। पुं। आम्रवृक्षे। आम्गाछ। रा. नि.। See आम्रः। माचिकायां। पूदिना। हिं मोहुया। अम्लवेतसे। रा.नि.।

**अम्रम्**। क्ली। आम्रफले।

**अम्रगन्धहरिद्रा**। स्त्री। (Curcuma reclinata.) आम्रहरिद्रायाम्। आमहलुद। हिं आमहल्दी।

**अम्रवेतसः**। पुं। अम्लवेतसे।

**अम्रसारः**। पुं। अम्लवेतसे। रा. नि.।

**अम्रातः (कः)**। पुं। (Spandias mangifera) Hogplum. आम्रातकवृक्षे। आमड़ागाछ। हिं अम्बाड़ा। मं अंवाडाचे झाड़। श. मा.। विका.। See आम्रातकः।

**अम्लः**। पुं। षड्रसान्यतमरसे। अम्ल रस। स च जम्बीरमातुलुङ्गफलादिषु व्यक्तः। गुणाः—लघुः उष्णः, रुचिकरः, दीप्तिकरः, हृदयतर्पणः, वातानुलोमनः, बल्यः, कण्ठदाहकरश्च। रा.नि.व.२०। तद्विपाकोऽम्लः तद्विपाकगुणास्तु पित्तकृत् वातश्लेष्मरोगघ्नश्च। सु.सू.। प्रीतिकरः पाचनः मार्दवकरश्च। अतिसेवनात् भ्रान्तिकुष्ठकफपाण्डुकार्श्यकासजनकः। रा.नि,व १२। पाचनः रुचिकरः पित्तलः कफजनकः रक्तवर्द्धकः लघुः लेखनः उष्णवीर्य्यः स्पर्शशीतलः सङ्कोचनः क्लेदनो वातघ्नः स्निग्धः तीक्ष्णः सारकः शुक्रविबन्धानाहदष्टिघ्नः हर्षणश्च। अतिसेवने—भ्रमतड्दाहतिमिरज्वरघ्नः,शोथविस्फोटकुष्ठपाण्डुलक्षणश्च। भा. पू. १भ.। लघुलं पाचकलं पित्तश्लेष्मवान्तिक्लेदलमुष्णत्वं व.तघ्नत्वञ्च। राज.।

**अम्लम्**। क्ली। अम्लवेतसफले। काञ्जिके। घोले। रा. नि.। बदरफले। सि. यो. अरोचक-चि.। वर्वरचन्दने रा. नि. व. १२।

**अम्लकः**। पुं। लकुचवृक्षे। श.र.।

**अम्लकरञ्जः**। पुं। करञ्जविशेषे। टककरञ्जा। तत्फलगुणाः—पिपासाघ्नं गुरु रुचिकरं पित्तकरञ्च। राज.।

**अम्लका ।** स्त्री । पालङ्कशाके । পালং শাক । प.मु. । पलाशीलतायाम् । रा. नि. व. ४ ।

**अम्लकाञ्जिकम् ।** क्ली । काञ्जिके । কাঁজি । च.द.ग्रहणी-चि.महाषट्पलघृते ।

**अम्लकाण्ड: ।** पुं । शुक्लरसोने । वै.निघ. । क्ली । लवणतृणे । লোণা ঘাস । रा.नि.व.८ ।

**अम्लकूचि: ।** पुं । वृक्षविशेषे ।

**अम्लकेशर: ।** पुं । मातुलुङ्गे । টাবালেবু-গাছ । प.मु. । दाड़िम्बवृक्षे ।

**अम्लकेशरी ।** पुं । अम्लरसनिम्बुकवृक्षे । গোঁড়া-লেবু । वै.निघ. ।

**अम्लकोश: (शाक:) ।** पुं । तिन्तिड़ीवृक्षे । मद.व.६ ।

**अम्लगोरस: ।** पुं । अम्लतक्रे । টক্ ঘোল । मं अंवटताक । वै.निघ.

**अम्लचाङ्गेरी ।** स्त्री । चाङ्गेरीभेदे । টক্ আমরুল । च.चि.२अ.अगु.तैलि. ।

**अम्लचुक्रिका ।** स्त्री । चिञ्चाम्ले । তেঁতুলের অম্বল । रा.नि.व.११ । See चिञ्चासार: ।

**अम्लचूड़: ।** पुं । शाकाम्ले । चिञ्चासारे । তেঁতুলের অম্বল । रा.नि.व.११ । अम्लशाके । চুকা পালঙ । रा.नि. ।

**अम्लजम्बीर: ।** पुं । अम्लरसनिम्बूकवृक्षे । টক্ লেবু গাছ । मं इडनिंबू । रा.नि.व.११ । See निम्बूक: ।

**अम्लटक: ।** पुं । अश्मन्तकवृक्षे । অম্ল কুচাই ।

**अम्लत्वक् ।** पुं । प्रियालवृक्षे । मं चारोली ।

**अम्लदोलक: ।** पुं । चुक्रे । চুকা পালঙ । मं चंवोती । वै.निघ. ।

**अम्लद्रव: ।** पुं । वीजपूरादिरसे । भा.म. १भ.जिह्मकज्व.चि. । "अम्लद्रव: संशमयेद्रसज्ञां ।"

**अम्लद्रव्यम् ।** क्ली । अम्लवेतसे । থৈকল । मं आम्लवेतस । रा.नि.व.६ ।

**अम्लनिम्बूक: ।** पुं । महाम्लनिम्बुके । গোঁড়া লেবু । मं मीटें इरनिम्बू । वै.निघ. ।

**अम्लनिशा ।** स्त्री । शट्याम् । শটী । रा.नि. ।

**अम्लपञ्चकम् ।** क्ली । १ कोलदाड़िमवृक्षाम्लचुक्रिकाम्लवेतसेषु । २ जम्बीरनारङ्गाम्लवेतसतिन्तिड़ीवीजपूरेषु । रा.नि.व.२१ । See पञ्चाम्लम् ।

**अम्लपत्र: ।** पुं । दण्डालुके । থাম্ আলু । वै. निघ. । अश्मन्तकवृक्षे । रा.नि.व.९ । क्षुद्रपत्रतुलसीवृक्षे । र. मा. ।

**अम्लपत्रम् ।** क्ली । चुक्रशाके । रा.नि.व ७ ।

**अम्लपत्रक: ।** पुं । भेण्डायाम् । अश्मन्तकवृक्षे । অম্ল কুচাই, আবুটা । रा.नि.व ९ । मद.व.१ । अम्ललोणिकायाम् । আমরুল । भा. पू.१व. ।

**अम्लपत्रा ।** स्त्री । शुक्लायां । ওকড়া । प.मु. ।

**अम्लपत्रिका ।** स्त्री । चाङ्गेर्य्याम् । क्षुदे नुनी । नुनी इति लोके । आवेता इति हिन्दी । रा.नि.व.५ ।

**अम्लपत्री ।** स्त्री । पलाशीलतायाम् । रा.नि.व. ४ । चाङ्गेर्य्यां । रा नि.व.५ । क्षुद्राम्लिकायाम् । खुदे नुनी ।

**अम्लपनस: ।** पुं । लिकुचवृक्षे । ডেলো, মান্দার গাছ । मं ओटीचे झाड़ । वै.निघ. ।

**अम्लपर्णिका**
**अम्लपर्णी** } स्त्री । वृक्षविशेषे । सुरपर्ण्याम् । भा. । गुणा:—अम्लपर्णी वातकफशूलस्य च विनाशिका । वै.निघ. ।

**अम्लपादप: ।** पुं । वृक्षाम्ले । তেঁতুল গাছ । मं कोवंवी । वै.निघ. ।

**अम्लपित्तम् ।** क्ली । रोगविशेषे । तल्लक्षणम्—विरुद्ध - दुष्टाम्लविदाहि - पित्तप्रकोपि - पानान्नभुजो विदग्धं पित्तं स्वहेतूपचितं पुरा यत्तदम्लपित्तं प्रवदन्ति सन्त: ॥ अविपाक: क्लमोत्क्लेश: तिक्ताम्लोद्गारगौरवै: । हृत्कण्ठदाहारुचिभिरम्लपित्तं वदेद्भिषक् ॥ तच्च द्विधा—अधोगमूर्द्धगञ्चेति । मा नि. ।

**अम्लपित्तान्तकमोदक: ।** पुं । अम्लपित्ते योगविशेष: । अत्र शुण्ठी ८ प. पिप्पली ८ प. गुवाकचूर्णं ८ प. घृतं ४श. एकत्र पाक: । पाकसिद्धौ एषां प्रक्षेप: यथा लवङ्गचूर्णं वचाचूर्णं कुष्ठचूर्णं नागकेशरचूर्णं यमानीचूर्णं रक्तचन्दनचूर्णं रास्नाचूर्णं कृष्णजीरकचूर्णं यष्टिमधुचूर्णं देवदारुचूर्णं त्रिफलाचूर्णं तेजपत्रत्वगेलाचूर्णं सैन्धवं हवुषाफलचूर्णं शटीमदनकट्फलचूर्णं जटामांसीचूर्णं अभ्रं रङ्गं रौप्यं तालीशचूर्णं पद्मकाष्ठचूर्णं मूर्व्वाचूर्णं वराहक्रान्ताचूर्णं वंशलोचनं पिप्पलीमूलचूर्णं शतावरीचूर्णं जातीफलचूर्णं काकोलीमुस्तकपिप्पली-कर्पूर-विड़ङ्ग-वनयमानीनां चूर्णं बलागुड़ूच्यपामार्गवीजगोक्षुरवीजचन्दनदेवताड़ानां चूर्णं लौहं कांस्यञ्चेति द्रव्यजातं प्रत्येकं २ तो. स्वर्णं १ तो. । भैष. ।



**अम्लपित्तान्तकरस: ।** पुं । रसोऽयमम्लपित्तघ्न: । रसे.चि. । अत्र तुल्यां पथ्यामिति सर्व्वचूर्णसमां हरीतकीम् । र.सा.सं. । मृतसूतार्कलौहानां तुल्यां पथ्यां विमर्द्दयेत् । माषमात्र लिहेत् क्षौद्रैरम्लपित्तप्रशान्तये ॥ भैष. ।

**अम्लपूरम् ।** क्ली । वृक्षाम्ले । रा.नि.व.६ ।

**अम्लपुष्पिका ।** स्त्री । आरण्यशणवृक्षे । বন্য শণ । मं रानताग । वै.निघ ।

**अम्लपूरम ।** क्ली । तिन्तिड्याम् । তেঁতুল । सं कोकम्बी । रा.नि.व.६ ।

**अम्लफल: ।** पुं । आम्रवृक्षे । रा.नि.व.११ ।

**अम्लफलम् ।** क्ली । वृक्षाम्ले । তেঁতুল । रा. नि.व.६ ।

**अम्लफला ।** स्त्री । कण्टारिकायाम् । मं लघुकान्थारी । वै.निघ. ।

**अम्लवदर: ।** पुं । अम्लकोलिकायाम् । টক কুল । च.सू.४अ ।

**अम्लभेदन: ।** पुं । अम्लवेतसे । रा.नि. । चुक्रे ।

**अम्लमारोष: ।** पुं । अम्लशाकविशेषे । অম্বল নটিয়া । हिं सारा । गुणा:—"अम्लमारीषको दोषकोपनो मधुर: पटु: ।" वै.निघ. ।

**अम्लमूलकम् ।** क्ली । व्युषितकाञ्जिकपक्वमूलके , "काञ्जिकं व्युषितं पक्वं मूलकं त्वम्लमूलकम् ।" प.प्र.२ख । च.द.संग्रहणी-चि.वृहद्गुक्र. ।

**अम्लमेह: ।** पुं । पित्तजन्यमेहरोगभेदे । अत्र रोगी अम्लरसगन्धं मेहति । सु.नि. ६अ. ।

**अम्लरुहा ।** स्त्री । मालवदेशप्रसिद्धनागवल्लीभेदे । गुणा:—रुचिकरी दाहघ्नी गुल्महरी मदकरी अग्निबलवर्द्धिनी आध्मानहरी च । रा.नि. ।

**अम्ललोणिका**
**अम्ललोणी** } स्त्री । (Oxalis corniculata.) चाङ्गेर्य्यां । আমরুল-শাক । म चुका । अ.टी. । तत्पर्य्याय:—चाङ्गेरी चुक्रिका दन्तशठा अम्बष्ठा (अ) । गुणा:—दीपनी रुच्या रुक्षोष्णा कफवातघ्नी पित्तला अम्ला ग्रहण्यर्श:कुष्ठातीसारघ्नी च । भा. पू. १ म. । मात्रा २—३ माषा । पालङ्कविशेषे । চুকা-পালঙ । र.मा. ।

**अम्लवती ।** स्त्री । चाङ्गेर्य्याम् । আমরুল । रा.नि.व.५ । क्षुद्राम्लिकायां । খুদে নুনী ।

**अम्लवर्ग: ।** पुं । चाङ्गेरी-लकुचा-अम्लवेतस-जम्बीरक- वीजपूरक - नागरङ्ग-दाड़िम-कपित्थाम्लवीजाम्लकाम्बष्ठाकरमर्द्दकतिन्दुककोलतिन्तिड़ीषु । अम्बष्ठासहितं द्विरेतदुदितं पञ्चाम्लकं तद्द्वयं, विज्ञेयं करमर्द्दनिम्बुकयुतं स्यादम्लवर्गाह्वयम् । रा.नि.व. २२ । अम्लवेतसजम्बीरलुङ्गाम्लचणकाम्लका: । नागरङ्गं तिन्तिड़ी च चिञ्चाफलञ्च निम्बुकम् । चाङ्गेरी दाड़िमञ्चैव करमर्द्दं तथैव च । एष चाम्लगण: प्रोक्तो वेतसाम्लसमायुत: ॥ र.सा.सं. ।

**अम्लवल्ली (ल्लिका) ।** स्त्री । त्रिपर्णीकन्दे ।

**अम्लवाटक: ।** पुं । आम्रातकवृक्षे । मं आंवाटा । वै.निघ. ।

**अम्लवाटा**
**अम्लवाटिका**
**अम्लवाटी** } स्त्री । अम्लरसयुक्त-नागवल्लीभेदे । অম্লরসবিশিষ্ট পান-বিশেষ । मं अंवाडे पर्णं । रा.नि.व.११ । अस्या गुणा:,—अम्ल-तिक्त-कटुरसा-रुक्षा-उष्णा मुखपाककारिणी विदाहिनी रक्तपित्तप्रकोपकरी विष्टम्भिनी वायुनाशिनी । रा. See नागवल्ली ।

**अम्लवातक: (वाड़क:) ।** पुं । आम्रातकवृक्षे । আম্ড়া গাছ ।

**अम्लवाष्प: ।** पुं । चाङ्गेर्य्याम् । আম্রুল । मं चुका । वै.निघ. ।

**अम्लवास्तु(स्तू)कम् ।** क्ली । चुक्रनामपत्रशाके । অম্লবেতুয়া টাঙ্গাবেতো इति भाषा । रा. नि. व ७ ।

**अम्लविदुल: ।** पुं । अम्लवेतसे । वै.निघ. ।

**अम्लवीजम् ।** क्ली । वृक्षाम्ले । তেঁতুল । रा. नि. व. ६ । See तिन्तिड़ी ।

**अम्लवृक्षं (कम्) ।** क्ली,पुं । वृक्षाम्ले । তেঁতুল । भा. पू. १भ. ।

**अम्लवेतस: (क:) ।** पुं, क्ली । (Ruxem vesicarius) country sorrel. स्वनामख्यातक्षुपे । अम्लवेतस । हिं आमलटास् । थैकल

इति च.द. । च.द.ज्व.चि. । सिन्धुचूर्णैः साम्लवेतसैः । च.सू.२अ. । तत्पर्य्यायः,—अम्लः वीधिः रसाम्लः आम्लवेतसः वेतसाम्लः अम्लसारः शतवेधी वेधकः भीमः भेदनः अम्लाङ्कुशः भेदी राजाम्लः अम्लभेदनः रक्तसारः फलाम्लः अम्लनायकः सहस्रवेधी वीराम्लः गुल्मकेतुः वराभिधः शङ्खद्रावी मांसद्रावी (रा), वराङ्गी (र), चुक्रः (अ) । गुणाः—अत्यम्लः कषायोष्णः वातघ्नः कफार्शोगुल्मारोचकहरश्च । भोटदेशे प्रसिद्धः । रा. नि. व. ६ । लघु दीपनमत्यम्लं भेदनं हृद्रोगशूलगुल्मघ्नं पित्तलं लोमहर्षणं रूक्षं विशुद्धं तद्दोषहरं प्लीहोदावर्त्तघ्नं हिक्कानाहारुचि-श्वास-कासाजीर्ण-वान्तिहरं वातकफजरोगघ्नं छागमांसद्रवकरं चणकाम्लतुल्यगुणं लौहसूचीद्रावकञ्च । भा.पू. १भ. । तत्पक्वफलगुणाः—दोषघ्नं गुरु दारकञ्च । राज. । चुक्रे । চুকা পালঙ্ । हिं चुकेका शाक । प. मु. । अम्ललोण्याम् । च.द. काङ्काय, गु. ।

**अम्लशाकम्** । क्ली । वृक्षाम्ले । তেঁতুল । रा. नि. व. ६ । पुं । चुक्रनामपत्रशाके । অম্লকুচাই, টক পালঙ্, চুকা পালঙ্ । तत्पर्य्यायः,—शाकाम्लं शुक्लाम्लः अम्लचूक्रिका चिवाम्लं अम्लचूड़ः चिञ्चासारः । गुणाः—अत्यम्लं वातघ्नं दाहश्लेष्मघ्नञ्च । सशर्करस्य तस्य गुणः—दाहपित्तकफहरत्वम् । रा नि, व. ७ ।

**अम्लशाकाख्यम्** । क्ली । चुक्रनामकपत्रशाके । টক পালঙ্ । मं थोरचुका । रा. नि. व. ७ ।

**अम्लष्टा** । स्त्री । चाङ्गेर्य्याम् । मं आंबोती ।

**अम्लसरा** । स्त्री । नागवल्लीभेदे । रा.नि.व.६ ।

**अम्लसारः** । पुं । अम्लवेतसे । रा. नि. व. ६ । निम्बुके । रा. नि. व. ११ । हिन्तालवृक्षे । रा. नि. व. ९ ।

**अम्लसारं (कम्)** । क्ली । काञ्जिके । चुक्रनामककाञ्जिकभेदे । रा.नि.व.१५ ।

**अम्लस्कन्धः** । पुं । अम्लरसान्वित-द्रव्यसमूहे । "अम्लो धात्रीफलाम्लीका मातुलुङ्गाम्लवेतसम् । दाड़िमं रजतं तक्रं चुक्रं पारेवतं दधि ॥ आम्रमाम्रातकं भव्यं कपित्थं करमर्द्दकम् ।" वा. सू. १०।२२५ ।

**अम्लस्तम्भनिका** । स्त्री । तिन्तिड्यां । वै.निघ. ।

**अम्लहरिद्रा** । स्त्री । शठ्याम् । रा. नि. व. ६ ।

**अम्ला** । स्त्री । चाङ्गेर्य्यां । আমরুল । रा. नि. व.५ । वनमातुलुङ्गे । अम्लवेतसे । रा. नि. व. ६ । शीवल्लीवृक्षे । वर्षागन्निका । रा. नि. व. ८ । तिन्तिड्यां । रा. नि. व. ११ । भा. पू. १भ. फलव. ।

**अम्लाङ्कुशः** । पुं । अम्लवेतसे । रा.नि.व.६ ।

**अम्लाटनः** । पुं । महासहावृक्षे । মে ঝাঁটি বিশেষ । আয়না इति च भाषा । हिं कट्सरय्या लालगुलमख्खन । आघनाद् इति दक्षिणदेशे । বাণপুষ্প इति च गौड़े ख्यातः । गुणाः—कषायो मधुरस्तिक्त उष्णवीर्य्यः स्निग्धश्च । भा.पू.१भ.पु.व. । ४ख,स.भ.योनिरो.चि. । चि.क्र.क.वल्ली.गर्भवेदनाहरयोगे ।

**अम्लाढ्यः** । पुं । करुणनिम्बुके । নারাঙ্গা-লেবুর গাছ । प.मु. ।

**अम्लातः (कः)** । पुं । अम्लाटनवृक्षे । भा.पू. १भ.पु.व. ।

**अम्लातकी** । स्त्र । पलाशीलतायां । रा.नि.व. ।

**अम्लादानः** । पुं । कुरण्टकवृक्षे । पीयावांसा इति प्रसिद्धे । वाणपुष्प इति गौड़े ।

**अम्लादिः** । पुं । तिन्तिड्याम् । रा. नि. व. ६ । चुक्रनामकपत्रशाके । रा.नि.व.७ ।

**अम्लाध्युषितः** । पुं, क्ली । सर्व्वगताक्षिरोगे । लक्षणम्—"श्यावं लोहितपर्य्यन्तं सर्व्वञ्चाक्षि प्रपच्यते । सदाहशोथं सास्रानमम्लाध्युषितमम्लतः ॥" मा.नि. । करुणनिम्बुके ।

**अम्लानः** । पुं । (Gomphrena globosa.) बन्धुजीवकवृक्षे । वाङ्कुलीवृक्ष । त्रिका. । झिण्टिकाभेदे । अम्लानो झिण्टिकाभेदे । विश्व. । अम्लाटनवृक्षे । আয়না इति भाषा । भा.म.४भ. योनिरो. चि. । "अदंष्ट्रमधुकक्षुद्राम्लाणैः ।" महासहायाम् । मे.नत्रिकं । महाराजतरणीवृक्षे । रा. नि. व. १० ।

**अम्लानम्** । क्ली । पद्मे । श. र. ।

**अम्लाना** । स्त्री । महासेवतीपुष्पवृक्षे । বড় বনসেউতী । मं थोर राणशेवंती । वै.निघ. ।

**अम्लानिनी** । स्त्री । पद्मसमूहे । पद्मिन्याम् । त्रिका. ।

**अम्लाम्ला** । स्त्री । चाङ्गेर्य्यां । আমরুল শাক ।



**अम्लायनी** । स्त्री । मल्लिकाभेदे । मं नेवाली । वै.निघ ।

**अम्लिका** । स्त्री । तिन्तिड़ीवृक्षे । प. मु. रा. नि. व ११ । आम्रे । रा.नि.व. ३ । पलाशीलतायां । माक्षिकायाम् । पूदिना । रा नि.व. २३ । श्वेताम्लिकायाम् । चाङ्गेर्य्याम् । रा.नि व.२३ । अम्लोद्गारे । मे. । अर्शोरोगे तिन्तिड्यर्थे, एवं सर्व्वत्र दीपनयोगे । पुरीषसंग्रहणादौ पुनरम्लिका श्यामच्छदवृद्धदारके । सि.यो. अग्निमुखचूर्णे वृन्दः । सि. यो. अरोच,चि. ।

**अम्लिकाकन्दः** । पुं । मं अम्लनालिकायाम् । वै निघ. ।

**अम्लिकापानम्** । क्ली । तिन्तिड़ीपानके । তেঁতুলপানা । पक्वतिन्तिड़ीकं वारिमर्द्दितं शर्करामरिचलवङ्गकर्पूरमिश्रितं पानकमुच्यते । "अम्लिकायाः फलं पक्वं मर्द्दितं वारिणा दृढ़म् । शर्करामरिचे मिश्रं लवङ्गेन्दुसुवासितम् । अम्लिकाफलसम्भूतं पानकम् वातनाशनम् ।" भा.पू.पानकवर्गः ।

**अम्लिकावटकः** । वटकविशेषे । অম্লবড়া । भीतीवरा इति लोके । "अम्लिकां स्वेदयित्वा तु जलेन सह मर्द्दयेत् । तन्नीरे कृतसंस्कारे वटकान् मज्जयेज्जनः । अम्लिकावटकास्ते तु रुच्या वह्निप्रदीपनाः ॥" भा. ।

**अम्ली** । स्त्री । जलवेतसे । वै.निघ. २भ. मदात्यय-चि. खर्जूरादिमन्थे । चुक्रिकायां । টকপালঙ্ । तिन्तिड्याम् । रा.नि.व.११ । भा.पू १भ.फलव. । चाङ्गेर्य्याम् । मे.लत्रिकं ।

**अम्लीका** । स्त्री । तिन्तिड्याम् । अ.टी । "अम्लोद्गारे । सु. नि. ६ अ ।

**अम्लीकाफलम्** । क्ली । तिन्तिड़ीफले । तद्गुणाः—शुष्कं सन्दीपनं भेदनं तृष्णाघ्नं लघु कफवातयोः पथ्यञ्च । वा.सू.६अ. । "अम्ली हि चाम्लफलमविपक्वं तदस्रपित्तामकरं विदाहि । वातामये शूलगदे प्रशस्तं पक्वं तथा शीतगुणोपपन्नं ॥" अत्रि. १७अ. ।

**अम्लीयः** । पुं । अम्लवेतसे । वै. निघ. ।

**अम्लोटकः** । पुं । अश्मन्तकवृक्षे स्वनामैव प्रसिद्धे । हिं आमरोडा । অম্লকুচাই । रत्ना. ।

**अम्लोटजः** । पुं । चाङ्गेर्य्याम् । আমরুলপাতা । च.द.चातुर्थ-ज्व चि. । "अम्लोटजसहस्रेण दलेन ।"

**अम्लोत्तमम्** । क्ली । दाड़िमे । प.मु. ।

**अयनम्** । क्ली । माषषट्कं व्याप्य भानोरुदग्दक्षिणतो वा गतौ । मे.नत्रिकं । तच्च द्विविधम्—उत्तरायणं दक्षिणायनञ्च । तयोराद्यं वर्षाशरद्धेमन्तात्मकं, तत्र भगवानाप्याययते सोमोऽम्ललवणमधुराश्च रसा बलवन्तो भवन्त्युत्तरोत्तरञ्च सर्व्वप्राणिनां बलमभिवर्द्धते । द्वितीयञ्च शिशिरवसन्तग्रीष्मात्मकं तत्र भगवानाप्याययतेऽर्कः तिक्तकषायकटुकाश्च रसा बलवन्तो भवन्त्युत्तरोत्तरञ्च सर्व्वप्राणिनां बलमपहीयते । सु. सू. ।

**अयस्** } **अयसम्** } क्ली । लौहमात्रे । रत्ना. । च. द. पाण्डु-चि. । कान्तलौहे । प. मु. । मुण्डलौहे । रा.नि.व.१३ ।

**अयस्कान्तः** । पुं । कान्तलौहे । रा.नि.व.१२ । लौहचुम्बुके । कान्तपाषाणे । চুম্বক পাথর । गुणाः—लेखनः शीतो मेदोविषघ्नश्च । मद.व ४ ।

**अयस्कान्तशिला** । स्त्री । लौहचुम्बुके । চুম্বুক-পাথর । वै निघ.

**अयस्कारः** । पुं । जङ्घाग्रभागे । त्रिका. ।

**अयस्कोटः** । पुं । लौहकिट्टे । वै.निघ. ।

**अयानम्** । क्ली । स्वभावे । हारा. ।

**अयास्त्रम्** । क्ली । कांस्यधातौ । কাঁসা । वै.निघ. ।

**अयुक्छदः** । पुं । सप्तपर्णवृक्षे । ছাতিম গাছ । हे.च. ।

**अयुग्मकः** । पुं । सप्तपर्णवृक्षे । वै. निघ. ।

**अयुग्मच्छदः** । पुं । सप्तपर्णवृक्षे । ছাতিম গাছ । अ.टी. ।

**अयुग्मपत्रः** } **अयुग्मपर्णः** } पुं । सप्तपर्णवृक्षे । वै.निघ. ।

**अयोगः** । पुं । विश्लेषे । कठिनोद्यमे । कूटे । मे.गत्रिकं ।

**अयोगुड़ः** । पुं । लौहगुड़िकायां । "वत्सनाभी-विषविषं कथितं ताम्रमेव वा । पीतमत्यग्निसन्तप्तो भक्षितो वाप्ययोगुड़ः ॥" च. ।

**अयोग्रम्** । क्ली । मूषले । वाणादौ । अस्त्रे

**अयोघनः** । पुं । एकीभूत-लौहपुञ्जे । হাতুড়ী । तत्पर्य्यायः—लौहकूटम् ।

**अयोच्छिष्टम्** । क्ली । लौहकिट्टे । মণ্ডূর । वै. निघ. ।

**अयोमलम्** । क्ली । लौहमले । লোহার গু বা মণ্ডূর । प.मु. । "अयोमलन्तु सन्तप्तं ।" सि.यो. पाण्डु-चि. वृन्दः । च. द. पाण्डु-चि. ।

**अयोरजः** । क्ली । लौहकिट्टे । মণ্ডূর । लौह चूर्णे । च. द. पाण्डु-चि, नवायसचूर्णे ।

**अयोवस्तिः** । पुं, स्त्री । वस्तिकर्म्मविशेषे । यथा—एरण्डमूलं निःक्वाथ्य मधुतैलं ससैन्धवम् । एष युक्त अयोवस्तिः सवचापिप्पलीफलः ॥" भा ।

**अरकः** । पुं, क्ली । शैवाले । ছারা । वै.निघ । चेलपर्पटे । रा. ।

**अरक्तः** । पुं । लाक्षायाम् । ला । रा.नि. व. ६ । See अलक्तः ।

**अरग्वधः** । पुं । (Cassiafistula.) महाकर्णिकारवृक्षे । বড় সোন্দালি, লড়িয়া শোণাল, রাখাল নড়ী, বানর নড়ী इति । मं वड़िलु वाहव्याचे झाड़ । कं हेग्गके । तें रेल्लचेट्टु । उत्. सुनारि । हिं आमलटा, धनवहेड़ा । गुणाः—अतिमधुरः शीतलः शूलघ्नः ज्वरकण्डूकुष्ठमेहकफविष्टम्भघ्नश्च । रा.नि.व.९ । स्रंसनः गुरुः हृद्रोगतोदोदावर्त्तघ्नश्च । एतत्फलं स्रंसनगुणयुक्तं रुच्यं पित्तकुष्ठकफघ्नं कोष्ठशुद्धिकरं ज्वरे हितञ्च । भा.पू. १भ. । "पर्णानि रेचकानि स्युः कफमेदोहराणि च । पुष्पाणि स्वादुशीतानि तिक्तानि ग्राहकाणि च । तुवराणि विजानीयात्...। मज्जा च मधुरा पाके स्निग्धा चाग्निविवर्द्धनी । रेचका पित्तवातानां नाशका सहृदाहृता ।" द्रव्य.गु.वै.निघ. । See आरग्वधः ।

**अरग्वधम्** । क्ली । स्वर्णालुफले । सि.यो.वृहदग्निमुखचूर्णे ।

**अरङ्गः (गा) (गी)** । पुं, स्त्री । मत्स्यविशेषे । वै.निघ. । मधुशिग्रुः । रत्ना. ।

**अरङ्गरः** । पुं । कृमिविषे । वै.निघ. ।

**अरङ्गदी** । स्त्री । माधवीलतायाम् । वै.निघ. ।

**अरजा** । स्त्री । घृतकुमार्य्याम् ।

**अरटः** । पुं । अरलुवृक्षे । শ্যোণা গাছ । अ.टी. ।

**अरणः** । पुं । चित्रकवृक्षे । वे.निघ. ।

**अरणिः** । पुं । क्षुद्राग्निमन्थवृक्षे । ছোট গণিরি । वा.टी.१५अ. । हेमा. वीरतर्वादौ । अरणिर्वह्निमन्थे ना द्वयोर्निर्मथ्यदारुणि । मे.णत्रिकं । श्योणाकवृक्षे । चित्रकवृक्षे । सूर्य्ये । अग्न्युत्पादक-काष्ठयन्त्रे ।

**अरणिका** । स्त्री । अग्निमन्थवृक्षे । वा.सू. १५अ. वेल्लन्तरादिव. । "वेल्लन्तरारणिरुवूकवृषाश्मभेद...।"

**अरणी** । स्त्री । क्षुद्राग्निमन्थे । ছোট গণিরি । मं लघुऐरण । रा. नि. व. ९ ।

**अरणीकेतुः** । पुं । महाग्निमन्थवृक्षे । বড় গণিরি । मं थोरऐरण । रा.नि.व.९ ।

**अरण्यः** । पुं । कट्फलवृक्षे । কট্‌ফলের গাছ । श.च. । शालभेदे । वै.निघ. ।

**अरण्यम्** । क्ली । कानने । वन । मं राण । कं अटवि । उद्यान-महावनोपवन-प्रमदवनभेदात् तच्चतुर्विधम् । तत्रोद्यानं यत्र रागिणः क्रीड़न्ति । नृपालयेषु अन्तःपुरोचितं वनं प्रमदवनम् । उपवनं पुरः प्रान्तस्थवनम् । रा.नि.व.२ । पुं । कट्फलवृक्षे ।

**अरण्यकः** । पुं । महानिम्बे । মহানিম্ । मं वकाननिम्ब । वै.निघ. ।

**अरण्यकणा** । स्त्री । कटुजीरके । জীরা বিশেষ । वै. निघ. । वनपिप्पल्याम् ।

**अरण्यकदली** । स्त्री । गिरिकदल्याम् । वनकदल्याम् । বীচেকলা, বুনো কলা, দয়া কলা इति च भाषा । म राणकेल । रा.नि.व.११ । गुणाः—शीतला मधुरा बल्या वीर्य्यवर्द्धनी रुच्या दुर्जरा गुरुः दाहशोषपित्तनाशिनी । तत्फलं तुवरं मधुरं गुरु च । वै.निघ. ।

**अरण्यकर्कटी** । स्त्री । वनजातकर्कट्याम् । বুনো কাঁকুড় । मं राणतवसे । गुणाः—"अरण्यकर्कटी चोष्णा रसे तिक्ता च भेदका । पाके कट्वी कफक्रमीपित्तकण्डूज्वरापहा । वै.निघ. ।

**अरण्यकाकः** । पुं वनकाके । দাঁড়কাক । मं राणकावला । द्रव्य. गु. वै. निघ. ।

**अरण्यकार्पासी** । स्त्री । The wild cotton. वनकार्पासे । বনকাপাসী । मं राणकापासी । तें पत्ति । गुणाः—व्रणघ्नी शस्त्रक्षतघ्नी रुच्या च । रा. नि. व. ४ ।



**अरण्यकुक्कुटः** । पुं । वनकुक्कुटे । বনকুক্‌ড়ো । हिं कोम्ड़ा वनमोर्गा । मं राणकोंवड़े । तन्मांसगुणाः—हृद्यं लघु श्लेष्महरञ्च । रा. नि. व. १७ । वृंहणं स्निग्धं वीर्य्योष्णं वातघ्नं गुरु च । मद व.१२ ।

**अरण्यकुलित्थिका (त्था) (त्थी)** । स्त्री । कुलत्थायाम् । বন কুর্ত্তিকলায় । रा.नि व.५ । A blue stone used as a collyrium. कुलत्थाञ्जने । কৃত্রিমাঞ্জনবিশেষ । रा.नि.व १३ । हिं कालसुर्मा । See कुलत्थाञ्जनं ।

**अरण्यकुसुम्भः** । पुं । वनकुसुम्भक्षुपे । বন কুসুম । मं राणकर्डई, राणकुसुम्भ । गुणाः—पाककटुः श्लेष्मघ्नः दीपनश्च । रा.नि.व.४ ।

**अरण्यकोलिः** । स्त्री । वनवदरे । বনকুল

**अरण्यगवयः** । पुं । वनगवये । अयं कूलचरजातीयः । सु सू.४६अ. । कूलेचरशब्दं पश्य ।

**अरण्यघोली (लिका)** । स्त्री । वनघोलीति प्रसिद्धपत्रशाकविशेषे । घोलीशाके । रा.नि.व ६ । मन्थनदण्डे ।

**अरण्यचटकः** । पुं । वनचटकपक्षिणि । বন চটা পাখি, গুড়গুড়ে, নাগরভড়ুই, ছাতার इति च । तत्पर्य्यायः—धूसरः भूमिशयः । तन्मांसं—लघु हितावहं शीतलं शुक्रवृद्धिकारि बलप्रदं चटकसमगुणञ्च । वै.निघ. द्रव्यगु. ।

**अरण्यचम्पकः** । पुं । वनचम्पके । বনচাঁপা । गुणाः—शीतलं लघु शुक्रवृद्धिकरं बलकरञ्च । रा. नि. व १० ।

**अरण्यछागः** । पुं । वनछागे । বুনো ছাগল ।

**अरण्यजः** । पुं । तिलकक्षुपे । हे.च. ।

**अरण्यजार्द्रका** । स्त्री । Wild ginger. वनार्द्रके । বন আদা । मं राणआले । गुणाः—कटु अम्लं रुचिकरं बल्यं आग्नेयञ्च । रा.नि.व ६ ।

**अरण्यजीरम् (कम्)** । क्ली । वनजीरके, कटुजीरके । বনজীরা । मं कडुजीरें । तें जीरकत्र गुणाः—"अरण्यजीरकञ्चोष्णं तुवरं कटुकं मतम् । स्तम्भवातं कफञ्च व व्रणञ्चैव विनाशयेत् ।" वे.निघ. द्रव्य. गु. ।

**अरण्यतुलसी** । स्त्री । वनतुलस्यां, कृष्णवर्व्वर्य्याम् । বনতুলসী । हिं कालावावरी । मं राणतुलस, वैजयन्ती-तुलसी । सा द्विधा ह्रस्व-दीर्घभेदात् । गुणाः—"आरण्यतुलसी चोष्णा कटुका च सुगन्धिका । वात-त्वग्दोष वीसर्प-विषञ्चैव विनाशयेत् ॥ आरण्यतुलसी क्षुद्रा कट्वी चोष्णा च तिक्तका । रुच्याग्निदीपनी हृद्या विदाही लघुपित्तला । रुच्या कण्डूविषच्छर्दिकुष्ठज्वरविनाशिनी । वातं क्रमीन् कफं दद्रुं रक्तदोषञ्च नाशयेत् । वीजञ्चास्या दाहशोषनाशकं परिकीर्त्तितम् ।" वै. निघ. । द्रव्य.गु. ।

**अरण्यत्रपुसकः** । पुं । वन्यत्रपुषे । বনকাঁকুড়, বনশশা । मं गोड़शेंदनी । वै.निघ. ।

**अरण्यत्रपुसी** । स्त्री । इन्द्रवारुण्याम् । রাখালশশা । महाकाललतायाम् । মাকালফল । वै. निघ. अपस्मा. चि, नस्ये ।

**अरण्यदमनः** । पुं । वनदमन-वृक्षे । के ।

**अरण्यधान्यम्** । क्ली । नीवारे । উড়িধান । मं देवभात । रा. नि. व. १६ ।

**अरण्यधेनुः** । वनजातायां गवि ।

**अरण्यपलाण्डुः** । पुं । वनजातपलाण्डौ । বনপেঁয়াজ । गुणाः—मूत्रवैरेचनः श्लेष्महरणोऽत्युग्र एव च । मात्रातिरेकाद्भवति वान्तिकृन्मलभेदनः । अतिमात्रं प्रयुक्तोऽसौ विषवन्मारयेन्नरं । शोथे श्वासे च कासेच मूत्रसङ्गे प्रयुज्यते ॥ अत्रिः ।

**अरण्यपिप्पली** । स्त्र । वनपिप्पलीनामक्षुपे । বনপিপুল । रा.नि.व ६ ।

**अरण्यमक्षिका** । स्त्री । Gad fly. वनमक्षिकायाम् । ডাঁশমাছি । श.र. ।

**अरण्यमुद्गः** । पुं । वनमुद्गे । ঘোড়ামুগ । रा. नि.व.१६ । See मकुष्ठकः । मुद्गपर्ण्याम् ।

**अरण्यमुद्गा** । स्त्री । मुद्गपर्ण्याम् । মুগানি । रा. नि.व.२ ।

**अरण्यमेथी** । स्त्री । वनमेथिकायाम् । বনমেতি । मं राणमेथि । वै.निघ. ।

**अरण्यरजनी** । स्त्री । वनहरिद्रायां । বনহলুদ । मं राणहलदें । व.निघ. ।

**अरण्यवायसः** । पुं । Raven. अरण्यकाके । ডোমকাক । मं डोमकावला । रा.नि.व.१९ ।

**अरण्यवासिनी** । स्त्री । अत्यम्लपर्णीलतायां । অমর বেল इति लोके । रा.नि.व.२ ।

**अरण्यवास्तुकः** । पुं । कुणञ्जरक्षुपे । वन-বেতো । मं राणचाकवत । रा. नि. व.५ । See कुणञ्जरः ।

**अरण्यशालिः** । पुं । Wild rice. नीवार-धान्ये । উড়িধান । मं देवभात । रा.नि.व.२३ ।

**अरण्यशुनः** । पुं । वनकुक्कुरे । নেকড়েবাঘ । वै.निघ ।

**अरण्यशूरणः** । पुं । वनजशूरणे । বুনো ওল । मं गोड़ासूरण । रा.नि व. ७ ।

**अरण्यश्वा** । पुं । कपौ । বানর । हिं.च । चित्रकव्याघ्रे ।

**अरण्यसम्भूतः** । पुं । कर्कटके । কাঁকরোল ।

**अरण्यहलदीकन्दः** } पुं । वनहरिद्रायाम् ।
**अरण्यहरिद्रा** (स्त्री, } বনহলুদ । हिं वन-हर्दि । गुणाः—कुष्ठघ्नः वातरक्तघ्नश्च । भा.पू.१भ. ह. व. । कटुः मधुरा रुच्या अग्निदीपनी तिक्ता कुष्ठवातहा रक्तदोषविषश्वासकासहिक्काश्च नाशयेत् । वै. निघ. ।

**अरतिः** । स्त्री । अनिच्छायाम् । अस्वास्थ्य चिन्तयात्यर्थमरतिः कथ्यते बुधैः । भा.। औदासीन्ये । पित्तरोगे ।

**अरत्निः** । पुं । निष्कनिष्ठमुष्टौ । বিতত কনিষ্ঠা-ङ्गुलि मुष्टि । रा. नि. व. १८ ।

**अरमः** । पुं । नेत्ररोगविशेषे । वै.निघ. । अर्म्म शब्द पश्य ।

**अरलः** । पुं । श्योणाकवृक्षे । শোণা গাছ । अम ।

**अरला** । स्त्री । हंसपत्राम् ।

**अरलुः (कः)** । पुं । श्योणाकवृक्षे । শোণা গাছ । हिं अर्लु । मं टेंटु दिंड़ा । श्योणापाठा इति भा.म.१भ.अतिसा.चि.गङ्गाधरचूर्णे । "नागर-पाठारलुधातकीकुसुमैः ।" च. द. गर्भज्वरे । वै. निघ. अतिसा. चि. अम्बष्ठादिः । वेतसवृक्षे ।

**अरलुपुटपाकः** । पुं । श्योणाकत्वक्पुटपाके । साधनविधिः कुटजपुटपाकवत् । "अरलुत्वक्तथैव पुटपाकोऽग्निदीपनः । मधुमोचरसाभ्याञ्च युक्तः सर्व्वातिसारजित् ॥" शार्ङ्ग.म.ख.१अ. ।

**अरविन्दम्** । क्ली । पद्मे । प.मु. । रा.नि.व. १० । ताम्रे । रा.नि.व.१३। कोकनदे । রক্তকমল। नीलोत्पले । रा.नि.व.१० । पुं । सारसपक्षिणि । अम ।

**अरविन्ददलप्रभम्** । क्ली । ताम्रे । তামা । वै. निघ. ।

**अरविन्दिनी** । स्त्री । पद्मसमूहे । र. मा. ।

**अरालः** । पुं । Resin. सर्जरसे । ধুনা । हिं धुना । मं राल । शालवृक्षे । मत्तहस्तिनि । मे. ।

**अरिः** । स्त्री । स्वनामख्यातखदिरे। খদিরবিশেষ। मं आरि । क शोगुरि । तत्पर्य्यायः,—सन्दानिका, दाली, खदिरपत्रिका । गुणाः—कषाया कटुका तिक्ता रक्तपित्तघ्नी च । रा नि. व. ८

**अरिपूरिमः** । पुं । विट्खदिरे । গুয়েবাব্লা । मं गंधीहिंवर । वे. निघ. ।

**अरिमः** । पु । विट्खदिरे । গুয়েবাব্লা । रत्ना. । भैष.मुखरो.चि. ।

**अरिमर्द्दः** । पुं । कासमर्द्दक्षुपे। কালকাশন্দা । मं कासविंदा । रा. नि. व. ४ । एतत्पत्रं रुचिकरं वृष्यं विषकासरक्तघ्नं मधुरं वातकफघ्नं पाचकं कण्ठ-शोधनं विशेषेण कासहरं विषघ्नं धारकं लघु च। भा. पू.१भ. ।

**अरिमेदः (कः)** । पुं । (Accacia farne-siana, syn. mimosa.) विट्खदिरवृक्षे । বিট্ খয়ের, গুয়েবাব্লা, দুর্গন্ধখদির । मं गन्धीहिम्बर ।कं करर्यवेलु । हिं गन्धाबुल । प.मु. । तत्पर्य्यायः,—इरिमेदः, रिमेदः, गोधास्कन्धः, अरिमेदकः, अहिमारः, पूतिमेदः, अहिमेदः, विट्खदिरः । गुणाः—कषायः उष्णः तिक्तः भूतघ्नः शोफातिसारकासघ्नः विसर्पघ्नश्च । रा. नि. व. ८ । मुखदन्तरोगघ्नः कण्डूविषश्लेष्मक्रिमिकुष्ठव्रणघ्नश्च । मद. व. ५ । कषायः उष्णः तिक्तः भूतविनाशी मुख-रोगदन्तरोगरक्तदोषकण्डूक्रिमिकफशोथातिसारकास-विसर्प-विषकुष्ठव्रणघ्नश्च । भा.पू.१भ.वटादिः । भैष. मुखरो. चि. । च.सू.४अ. । मात्रा १ तो. ।

**अरिमेदाद्यतैलम्** । क्ली । मुखरोगे हितम् । मूर्च्छिततिलतैलं ६४ श क्वाथार्थं खण्डीकृतारिमेदत्वक् (বিট্খদির, কাঁটানাগেশ্বর বা গুয়েবাব্লা) १२॥ श. वारि ६४ श. पादशेषः १६ श. । कल्क-द्रव्याणां मञ्जिष्ठादीनां प्रत्येकं २ तो । ततो क्वथ-



पूतक्वाथकल्काभ्यां तैलपाकविधिना तैलं पचेत् । च.द.मुखरो.चि. ।

**अरिष्टः** । पुं । Soapberry plant. (Sapindus trifoliatus.) रीठावृक्षे । रीठाकरञ्जे । रा.नि.व.९ । রিটে গাছ । मे. । गुणाः—"अरिष्टः कटुकः पाके तीक्ष्णश्चोष्णश्च लेखनः । गर्भपातकरः प्रोक्तो लघुः स्निग्धस्त्रिदोषहा । ग्रहपीड़ादाहशूलनाशनश्च प्रकीर्त्तितः । वै.निघ. । लसुने । । प.मु. । रा.नि.व.२३ । प.मु वा.सू.१भ. । निम्बवृक्षे । रा.नि.व.२३ । प.मु. वा.सू. १५ अ. गुड़ूच्यादिः । "गुड़ूची पद्मकारिष्ट—।" च.द.पित्त-श्लेष्मज्व. अमृताष्टके—। "गुड़ूचीन्द्रयवारिष्ट—।" सु.सू. ४३अ संशोधने । काके । हारा. । कङ्क-पक्षिणि । मे. । सुराविशेषे । "औषधयुक्तैर्मद्या-कारैः कृतं मद्यमासवः । स एव क्वथितौषधैररिष्टः ।" वा.टी.हेमाद्रिः । क्वाथसिद्धो वारिष्टः । शार्ङ्गः । अरिष्टः क्वाथसिद्धः स्यात् । प.प्र ३ । तद्गुणाः—यथाद्रव्यगुणोऽरिष्टः सद्यो मद्यगुणाधिकः । ग्रहणी-पाण्डुकुष्ठार्शःशोषशोफोदरज्वरघ्नः । गुल्मक्रिमिघ्नः कषायः कटुवातलश्च । वा. मद्यव. । इक्षुविकार-सहिताभया-चित्रक-दन्ती-पिप्पल्यादि - भूरिभेषज-क्वाथादिसंस्कारवानरिष्टोऽभिधीयते । गुणः—अर्शःशोथग्रहणीश्लेष्मरोगहरत्वम् । राज. । आप्लाव्य सुरयासम्यक् द्रव्याणि विविधानि च । सप्ताहान्ते परिस्राव्य रसं वस्त्रेण गालयेत् । एषोऽरिष्टोऽभि-धानेन भिषग्भिः परिकीर्त्तितः ॥ अत्रि. । पक्वौषधाम्बु-सिद्धं यत् मद्यं तत्स्यादरिष्टकम् त्रिदोषघ्नं गर्भ-स्रावकं ग्रहदोषघ्नञ्च । भा.पू.मद्य.व. । क्ली । पाद-जलेन त्रिभागदधिकृते तक्रे । ঘোল । रा.नि.व.१५। सूतिकागारे । रत्ना. । आसवे । मरणचिह्ने । त्रि । अशुभे । सर्व्वत्र मे. । मद्यसामान्ये । रा. नि. व. १४ ।

**अरिष्टकः** । पुं । फेनिलवृक्षे । सि.यो.दाहज्वरे, श्रीकण्ठः । "फेनेनारिष्टकस्य च ।" निम्बवृक्षे । अत्र निम्बकोमलपल्लवः । च. द. पित्त-ज्व. शिरोलेपे । रीठाकरञ्जे । मद.व.५ । सरलद्रुमे । रत्ना. । क्ली । मद्ये । भ. ।

**अरिष्टत्रयम्** । क्ली । खस्थारिष्टं वेधारिष्टं कीटारिष्टञ्चेति अश्वारिष्टत्रये । तत्र खस्थारिष्टं पञ्चविधं तद्यथा—भोजनारिष्ट-छायाद्यरिष्ट-दर्श-नेन्द्रियाद्यरिष्ट-श्रवणेन्द्रियारिष्ट - रसनेन्द्रियारिष्टाः । तत्र प्रथमे रोगं विना हीनवर्णता दुर्मनस्कता भोजनानिच्छा च भवति । द्वितीये छाया-पराङ्मुखता द्विगता सच्छिद्रता वा भवति । तृतीयादौ नासामेढ्राक्षिपायुभ्योऽकस्मात् रक्तस्रावः, श्रवणादिबाधिर्य्यं जिह्वा कठिना स्तब्धा च भवति । वेधारिष्टः वेधाख्योपसर्गजः । स च शरदि रवि-तापेन, प्रावृषि शालाभावाच्च जायते । तस्मिंश्च जाते सज्वरता अधोमुखता श्वासकासौ स्तब्धा-ङ्गतादि भवति । कीटारिष्टे वाजिनां जठरे कीट-गुच्छा जायन्ते, तेन, वाजिनः सीदन्ति । जय-दत्तः २३-२५ अ. ।

**अरिष्टफलः** । पुं । कटुनिम्बवृक्षे । रा.नि.व.९ ।

**अरिष्टलक्षणम्** । क्ली । मृत्युलक्षणे । "रोगिणो मरणं यस्मादवश्यम्भावि लक्ष्यते । तल्लक्षणमरिष्टं स्यादिष्टञ्चापि तदुच्यते ।" भा. ।

**अरिष्टा** । स्त्री । कटुकायाम् । रा.नि.व.६ । च. सू.४अ. । प.मु. । र.मा. । वै.निघ.२भ. । विषमज्व. पटोलादौ । नागबलायां । रा.नि.व.४ । मद्ये ।

**अरिष्टाह्वः** । रीठाकरञ्जे । রীটে । वै. निघ. २भ. उन्मा. चि. ।

**अरुः (स्)** । पुं । आरग्वधवृक्षे । সোন্দাল-গাছ । रक्तखदिरे । क्षतव्रणे । मर्म्मणि । सन्धि-स्थाने । उ. ।

**अरुक्** । त्रि । सुस्थे ।

**अरुग्णः** । त्रि । सुस्थे ।

**अरुङ्निमेषः** । स्त्री । नेत्ररोगविशेषे ।

**अरुचिः** । स्त्री । स्वनामख्यातरोगे । অরুচি, অরোচক রোগ। सत्यामपि बुभुक्षायां भोजना-सामर्थ्य । भोजनानिच्छायाम् । भा.म. १म. श्लेष्मज्व.। See अरोचकः ।

**अरुजः** । पुं । आरग्वधवृक्षे । বড় সোণালু । रा.नि.व.९ । क्ली । कुङ्कुमे । सिन्दूरे ।

**अरुणः** । पुं । कोकिलाक्षभेदे । কুলেখাড়া । अतिविषायाम् । श्योणाकवृक्षे । प.मु. । मञ्जिष्ठायां । अर्कवृक्षे । मे. । पुन्नागवृक्षे । रा.नि.व.१० । गुड़े । रा.नि.व.१४ । चित्रकक्षुपे । मद.व.२ । रक्तापामार्गे । रक्तकरवीरे । वै. निघ. । कुष्ठभेदे । लक्षणम्—वातेनारुणाभानि तनूनि विसर्पीणि तोदभेदस्वाप-युक्तानि अरुणानि । सु.नि.५अ. । त्रि । रक्तवर्णे ।

**अरुणम्** । क्ली । अहिफेने । वै.निघ. । रक्तोत्पले । रक्तत्रिवृतायाम् । वा.टी. हेमाद्रिः । कुङ्कुमे । रा.नि.व. १२ । सिन्दूरे । रा.नि.व.१२ । माणिक्यभेदे । वै.निघ.२भ. क्षयरोग. त्रैलोक्य-चिन्तामणिरसे ।

**अरुणकपिशः** । पुं । द्राक्षाभेदे । किस्मिस्-विशेष । मं फकीरीद्राक्ष । वै. निघ. ।

**अरुणकमलम्** । क्ली । कोकनदे । रक्तकमल । रा.नि.व. १० ।

**अरुणचूडः** । पुं । ताम्रचूडपक्षिणि । कुकुड़ा । वै. निघ. ।

**अरुणतण्डुलीयम्** । क्ली । रक्ततण्डुलीयशाके । रांगा नटे । च. द. ।

**अरुणनागः** । पुं । क्षुद्राम्रके । अत्रि. ।

**अरुणनेत्रः** । पुं पारावते । पायरा । कोकिले । वै. निघ. ।

**अरुणपुष्पी** । स्त्री । बन्धुजीवकवृक्षे । बान्धुलि फूल । मं रक्तदुपारी । वै. निघ. ।

**अरुणमल्लिका** । स्त्री । रक्तमल्लिकायाम् । लाल माचि । वै. निघ. ।

**अरुणलोचनः** । पु. । पारावते । पायरा । हिं कबूतर । रा.नि.व.१२ । कोकिले । वै. निघ. ।

**अरुणसर्पः** । पुं । तक्षकसर्पे । वै. निघ. ।

**अरुणसारः** । पुं । हिङ्गुले । वै. निघ. ।

**अरुणा** । स्त्री । अतिविषायाम् । मे. । रा.नि व. ६ । भा.४भ. बाल. ज्व.चि.महाभल्ला. गुड़े । "घन-कणाकणाभ्रश्नी ।" भैष. प्रदरारिरसे । कुष्ठ चि । मञ्जिष्ठायां । मे. । रा.नि.व.६ । भा.म.१भ ज्व. चि.लाक्षादितैले । "लाक्षा द्राक्षा अरुणा मधुका ।" प्रपौण्डरीके । प.मु. । त्रिवृतायां । मे. । जयायाम् । मद.व.२ । अरुणातिविषा श्यामा मञ्जिष्ठा त्रिवृता च । श्यामालतायाम् । मे. । इन्द्रवारुणीलतायाम् । गुञ्जालतायाम् । रा.नि.व ३ । पुनर्णवायां । मुण्डीर्याम् । रत्ना. ।

**अरुणात्मिका** । स्त्री । कुमरिचे । लङ्कामरिच । मं लांक । वै. निघ. ।

**अरुणाभम्** । क्ली । वज्रलौहे ।

**अरुणार्कः** । पुं । रक्तार्के । प. मु । मं मन्दार । अ मन्दार अर्क । रा.नि.व.१० । गुणाः—सरः वातकुष्ठकण्डूविषव्रणघ्नः प्लीहगुल्मार्शःकफोदरमल-कृमिहरश्च । कटुतिक्तोष्णः कफघ्नो मेदघ्नो विषघ्नः वातकुष्ठव्रणघ्नः शोथकण्डूविसर्पहरश्च । पुष्पं मधुरं तिक्तं धारकं कृमिकुष्ठकफार्शोविषरक्तपित्तघ्नं गुल्म-शोथहरञ्च । भा. पू. १भ. ।

**अरुणोपलः** । पुं । अरुणवर्णमणिविशेषे । चुनि इति भाषा । पद्मरागमणौ । हे.च. ।

**अरुन्धती** । स्त्री । जिह्वाग्रे । वै. निघ. ।

**अरुषः** । पुं । व्रणे । घोटके । वै. निघ. ।

**अरुंषिका** । स्त्री । क्षुद्ररोगान्यतमकपालरोगे । शिरोव्रणे । अयं कफरक्तकृमिकोपतो भवति । "अरूंषि बहुवक्त्राणि बहुक्लेदीनि मूर्द्धनि तु । कफासृक्कृमिकोपेन नृणां विद्यादरूंषिकाम्" ॥ मा. नि. ।

**अरुष्कः** । पुं । भल्लातकवृक्षे । भेलागाछ । मं बिबबा । भा. पू. १भ. । रा. नि व. ११ ।

**अरुष्करः** । पुं । भल्लातकवृक्षे । प. मु. । रा. नि. व. ११ । भा. पू. १भ. । मद. व. १ । अरुंषिकायाम् । त्रि । व्रणकृति । मे. रचतुष्कं ।

**अरुष्करम्** । क्ली । भल्लातकफले । च. द. अर्शश्चि । भैष. कुष्ठ-चि. पञ्चतिक्तघृते । "सना-गरारुष्करवत्सकदारकम्" । सि. यो. चतुःसमलौहे । च. सू. ४अ. कुष्ठघ्न. ।

**अरुषा (टा)** । स्त्री । भूम्यामलक्याम् । भूँई-आमला । रा. नि. व. ५ ।

**अरोकदन्तः** । त्रि । कृष्णदन्ते । व. निघ. ।

**अरोचकः** । पुं । अरुचिरोगे । तत्पर्य्यायः,—अरुचिः, अश्रद्धा, अनभिलाषः । रा. । स पञ्च-विधः—वातपित्तकफसन्निपातागन्तुभेदेन । मा. नि. मनस्तापज आगन्तुक इति शार्ङ्ग पू. ७अ. । लक्षणं यथा—प्रक्षिप्तन्तु मुखे चान्नं जन्तोर्न स्वदते मुहुः । अरोचकः स विज्ञेयो भक्त-द्वेषमथो शृणु ॥ चिन्तयित्वा तु मनसा दृष्ट्वा श्रुत्वा तु भोजनं । द्वेषमायाति यो जन्तुर्भक्तद्वेषः स उच्यते ॥ यस्यान्ने न भवेच्छ्रद्धा स भक्तच्छन्द उच्यते । विजयरक्षिते भोजः । एते त्रिविधा अपि रोगा चरकसुश्रुताभ्यां एक एव धृताः । वातादिभिः शोकभयातिलोभक्रोधैर्मनोघ्नाशनरूप-गन्धैः । अरोचकाः स्युः परिहृष्टदन्तः कषायवक्त्रश्च मतोऽनिलेन ॥ मा. नि. । पथ्यं यथा—बस्तिः



समीरणे पित्ते विरेको वमनं कफे । सर्व्वजे सर्व्वकामार्थं हर्षणं स्यादरोचके ॥ भा. । बस्तिर्वि-रेको वमनं यथाबलं धूमोपसेवाकवलग्रहस्तथा । तिक्तानि काष्ठानि च दन्तघर्षणं चित्रान्नपानानि हितैः कृतानि । गोधूममुद्गारुणशालिषष्टिका मांसं वराहैणशशैणसम्भवं । चेङ्गी झषाश्च मधुरालि-कोलिशः प्रोष्ठी खलिशः कवयी च रोहितः । कर्का-रुवेत्राग्रनवीनमूलकं वार्त्ताकुशोभाञ्जनमोचदाडिमं । भव्यं पटोलं रुचकं घृतं पयो बालानि तालानि रसोनशूरणम् । द्राक्षा रसालं मलदश्चकाञ्जिकं मद्यं रसाला दधितक्रमार्द्रकम् । कङ्कोलखर्जूर-पियालतिन्दुकं पक्वं कपित्थं बदरं विकङ्कतम् । तालास्थिमज्जा हिमबालुका सिता पथ्या यमानी मरिचानि रामठम् । स्वादम्लतिक्तानि च दैव-मार्ज्जना वर्गोऽयमुक्तोऽरुचिरोगिणो हितः । इति पथ्यम् । कासोद्गारक्षुधानेत्रवायुवेगविधारणम् । अहृद्यान्नमलक्षोभं क्रोधं लोभं भयं शुचम् । दुर्गन्धरूपसेवा च न कुर्य्यादरुचौ नरः ॥ इति अपथ्यम् ।

**अर्कः** । पुं (Calotropis gigantea, Syn, Asclepias gigantea.) स्वनामख्यातोपविष-जातीयक्षुपे । आकन्द गाछ । हिं मान्दार । मं रुइ । कं अक्के । तें जिल्लेडुचेट्टु । अर्कः श्वेतरक्तभेदेन द्विविधः । तयोर्विशेषास्तत्पर्य्यायैर्ज्ञेयाः । गुणाः—कटुः उष्णः वातजित् दीपनीयः शोफघ्नः व्रणघ्नः कण्डूकुष्ठकृमिघ्नश्च । रा नि. व. १० । सारकः वातघ्नः कुष्ठकण्डूव्रणप्लीहगुल्मार्शः-कफोदरमलकृमिघ्नश्च । पुष्पं—मधुरं तिक्तं धारकं कुष्ठकृमिकफार्शोविषरक्तपित्तगुल्मशोथघ्नञ्च । भा. पू. १भ. । अर्कद्वयं शुक्रवातकुष्ठकण्डूविषव्रणान् । निहन्ति प्लीहगुल्मार्शोयकृत्श्लेष्मोदरकृमीन् । मद. व. १ । मात्रा २-३ रत्तिः । इति राजवल्लभ-चिकित्साशास्त्रे । ताम्रे । मे, कडिकं । त्रैलोक्य-डम्बररसे । वै. निघ. बा. व्या. चि. चिन्तामणि-रसे । स्फाटिके । मे, कविकं । अरुणार्के । प. मु. भा. पू. १भ. । आदित्यपत्रक्षुपे । रा. नि. व. ४ । "अर्कोरक्तपुष्पः प्रसिद्धः । सु. सू. ३० अ. अर्कादिव । ३९ अ. शिरो. चि. । यन्त्र-निष्काशिते द्रव्याणां सारभागे । आरक् ।

**अर्ककान्ता** । स्त्री । आदित्यभक्तायाम् । हुड़-हुड़िया । रा. नि. व. ४ । मद. व. १ ।

**अर्कगन्धिका** । स्त्री । क्षीरविदार्य्याम् । कुमः भूमिकुष्माण्ड । प. मु. ।

**अर्कचन्दनम्** । क्ली । रक्तचन्दने । रा. नि. व. १२ ।

**अर्कच्छदम्** । क्ली । अर्कमूले ।

**अर्कतैलम्** । क्ली । कुष्ठाधिकारे । अत्र कटुतैलं पलाष्टकं अर्कपत्ररसस्य पलाष्टकं निशायाः पलं मनःशिलायाश्च पलम् । च.द. कुष्ठ-चि. । सा. कौ. ।

**अर्कदलः** । पुं । आदित्यपत्रक्षुपे । रा. नि. व. ४ । अर्कपत्रे ।

**अर्कनामा** । पुं । रक्तार्के । लाल आकन्द । भा. ।

**अर्कपत्रः** । पुं । आदित्यपत्रक्षुपे । रा. नि. व. ४ । च. द. । अर्कपत्रे ।

**अर्कपत्रा (त्री) (त्रिका)** । स्त्री । ईश्वर-मूलवृक्षे । ईशेर मूल । प. मु. र. मा. ।

**अर्कपर्णः** । पुं । रक्तार्कवृक्षे । लाल आकन्द । मं सूर्य्यमन्दार । भा. पू. १भ. ।

**अर्कपर्णिका (र्णी)** । स्त्री । माषपर्ण्याम् । माषाणी ।

**अर्कपादः** । पुं । सूर्य्यकान्तमणौ । निम्बवृक्षे । वै. निघ. ।

**अर्कपादपः** । पुं । निम्बवृक्षे । त्रिका. । अर्क-क्षुपे ।

**अर्कपुष्पा** । स्त्री । क्षीरकाकोल्याम् । क्षीर-काँकला । See क्षीरकाकोली ।

**अर्कपुष्पिका** } **अर्कपुष्पी** } स्त्री । ( Gygandropsis centa-phylla, Syn, Cleome pentaphyl!a.) सूर्य्यवल्ल्याम् । श्वेत हुड़हुड़िया । अर्कहुलीति भाषा । अर्कसहस्रपुष्पी-लता । हिं अन्धाहुली दधियार् क्षीरकम् । मं शिरदोड़ी । तत्पर्य्यायः,—पयस्या, सूर्य्यवल्ली, सितपर्णी, शीतपर्णी । र. । भा. ४भ. बालरोग-चि. । गुणाः—अर्कपुष्पी कृमिश्लेष्म-मेहपित्तविकारनुत् । मद. व. १ । कृमिकफमेहमनोविकारघ्नी । भा. पू. १भ. । रक्तापराजितायाम् । रत्ना. । क्षीर-काकोल्यां । र. मा. ।

**अर्कप्रभागुडिका** । स्त्री । रसायनाधिकारे । अस्याः पाठः यथा—रसं निष्कद्वयं गुडं निष्कैकं

ताम्रचूर्णकं। चित्रामूलफलक्वाथे यामं खल्ले विमर्द्दयेत्। तद्गोलं बन्धयेद्वस्त्रे दोलायन्त्रेषु तक्रके। चित्राफलयुते पच्चाच्चतुर्य्यामात् समुद्धरेत्। वटिकार्कप्रभा नाम जरामृत्युविनाशिनी। संवत्सरप्रयोगेषु सूर्य्यतुल्यो भवेन्नरः। पलाशवीजतैलञ्च कर्षमेकं गवां पयः। अनुपानमिदं पाता दशनागबली भवेत्॥ प्रयोगा. रसायना.।

**अर्कप्रिया**। स्त्री। आदित्यभक्तायाम्। हुड़हुड़िया गाछ। जवायाम्। रा. नि. व. १०।

**अर्कभक्ता**। स्त्री। ब्राह्म्यां। ब्राह्मीशाक। आदित्यभक्तायाम्। हुड़हुड़िया, शुन्टे इति च भाषा। हिं हुलहुल। मं सूर्य्यफुलवल्ली। रा. नि. व. ४। र. मा.।

**अर्कभूतिः**। स्त्री। ताम्रभस्मनि। वै. निघ. २भ. चौरताम्ररसे, संग्रहणी-चि.।

**अर्कमूर्त्तिरसः**। पुं। रसोऽयं सान्निपातिकज्वरे प्रयोज्यः। द्रव्याणि चास्य रसगन्धकलौहविषाणि। अत्र लौहस्याष्टौ भागाः पारदस्य भागद्वयं, गन्धको द्विगुणः, विषस्य च षोड़शांशो ग्राह्यः। अयमेव त्रिदोषदावानलः कथ्यते यदायं ताम्रपात्रस्थापितः पुनः निम्बुकरसपित्तवर्गकण्टकार्य्यार्द्रकरसैर्भाव्यते। भैष. ज्व. चि.।

**अर्कमूलम्**। क्ली। तन्नामकवृक्षमूले। च. द. अग्निमा. चि. क्षारगुड़े।

**अर्कमूला**। स्त्री। (Aristolochia Indica.) ईश्वरमूल्याम्। ঈশের মূল। रत्ना.।

**अर्कलवणम्**। क्ली। अर्कक्षारे। वै. निघ.।

**अर्कवल्लभः**। पुं। बन्धुजीववृक्षे। बान्धुलिवृक्ष, দুপুরে চণ্ডী। मं दुपारी। रा. नि. व. १०।

**अर्कवल्ली**। स्त्री। आदित्यभक्तायां। হুড়হুড়ে। वै. निघ.।

**अर्कवेदम् (धम्)**। क्ली। तालीशपत्रे। प सु.। रा. नि. व. ६।

**अर्कसुता**। स्त्री। कृष्णापराजितायां। वै. निघ.।

**अर्कसुधा**। स्त्री। अर्कोत्थसुधायाम्। আকন্দের চূণ। गुणः—गुल्मरोगस्य नाशिनी। वै. निघ.।

**अर्कहिता**। स्त्री। आदित्यभक्तायाम्। হুড়হুড়িয়া। मं सूर्य्यफुलवल्ली। रा. नि. व. ४।

**अर्कक्षीरम्**। क्ली। अर्कवृक्षनिर्यासे। আকন্দের আটা। गुणाः—कृमिघ्नं व्रणघ्नं कुष्ठार्शोदरेषु च हितम्। राज.। तिक्तलवणमुष्णवीर्य्यं लघु स्निग्धं गुल्मोदरकुष्ठहरं विरेचने हितञ्च। भा. पू. १भ.। च. द अर्श-चि.।

**अर्कादिगणः**। पुं। अर्कालर्कनागदन्तीविशल्याभार्गी-रास्नावृश्चिकालीप्रकीर्य्या - प्रत्यक्पुष्पी - पीततैलोदकीर्य्याश्वेतायुग्मतापसवृक्षा इति। अर्कालर्ककरञ्जद्वयनागदन्तीमयूरकभार्गीरास्नेन्द्रपुष्पीक्षुद्रश्वेतामहाश्वेतावृश्चिकाल्यलवणास्तापसवृक्षश्चेति॥ सु. सू. ३८अ.। गुणाः—कफमेदोविषघ्नः कृमिकुष्ठघ्नः विशेषाद्व्रणशोधनश्च। वा. सू. १५ अ.।

**अर्काश्मा**। पुं। सूर्य्यकान्तमणौ। চুনী, পান্না इति च लोके। हला.।

**अर्काह्वः**। पुं। तालीशपत्रे। सूर्य्यकान्तमणौ। अर्कवृक्षे। अम.।

**अर्की**। पुं। मयूरे। ময়ূর। मं मोरी। वै निघ.।

**अर्केश्वररसः**। पुं। रसोऽयं वातव्याध्युपशमनो द्विविधश्च। तृतीयो रक्तपित्ते, चतुर्थश्च कुष्ठाधिकारे। "रसस्य भागाश्चत्वारो गन्धकस्य दशैव तु। ताम्रस्य वाटिकायाञ्च दत्त्वा चैनामधोमुखीम्। सम्यक् निरुध्य तस्याञ्च दद्यादूर्द्धं शरावकं। भाण्डे निरुध्य यत्नेन भस्मनापूर्य्य भाण्डकम्। अग्निं प्रज्वालयेद्यामं मुखं तस्य निरुध्य च। स्वाङ्गशीतं समुद्धृत्य तत्ताम्रं चूर्णयेच्छ्रमम्। भावयेदर्कदुग्धेन पुटित्वा दशधा पुनः॥" रसे. चि.। रसेन्द्रसारसंग्रहे अयमेव कुष्ठे धृतः। विशेषस्तु—तत्र गन्धकस्य ताम्रचक्रिकायाश्च १२ भागा उक्ताः इति प्रथमः॥ रसेन गन्धं द्विगुणं विमर्द्य ताम्रस्य चक्रेण सुतापितेन। आच्छादयित्वाथ ततः प्रयत्नात् चक्रे विलग्नञ्च ततः प्रगृह्य। सच्चूर्ण्य च द्वादशधार्कदुग्धैः पुटेत वह्नित्रिफलाजलैश्च।" मात्रा २र.। इति द्वितीयः॥ रसे. चि.। "सूतार्कं मृतताम्रञ्च मृताभ्रञ्च समांशिकम्। अमृताम्बुरसैर्भाव्यं त्रिसप्तकपुटे पचेत्। वासाक्षीरविदारीभ्यां चतुर्गुञ्जाप्रमाणतः। भक्षणम्।" अत्र अर्कः ताम्रम्। अमृता गुड़ूची। माक्षिकं स्वर्णमाक्षिकम्। र.सा.सं.रक्तपित्तचि.। इति तृतीयः॥ चतुर्थः कुष्ठाधिकारे। "पलानीशस्य चत्वारि बलेर्द्दादश तावती। ताम्रस्य चक्रिका देया रसस्योर्द्ध्वं शरावकं। दत्त्वा विबद्धभाण्डस्थं पूरयेद्भस्मना दृढं। अग्निं प्रज्वालयेद्याम-



द्वयं शीतं विचूर्णयेत्। पुटेद्द्वादशधा सूर्य्यदुग्धेनालोड़ितं पुनः। वरापावकभृङ्गानां द्रवैस्त्रिभिर्विभावयेत्। अयमर्केश्वरो नाम्ना रक्तमण्डलकुष्ठजित्॥" अत्र ईशः पारदः, तस्य चत्वारि पलानि। बलेर्गन्धकस्य च द्वादशपलानि। र. सा. सं.।

**अर्कोत्तमा**। स्त्री। वर्व्वर्य्याम्। বাবুইতুলসী।

**अर्कोपलः**। पुं। सूर्य्यकान्तमणौ। আতস-পাথর इति लोके। रा. नि. व. १३।

**अर्गटः**। पुं। आर्त्तगल इति प्रसिद्धे कण्टकवृक्षविशेषे। নীলঝাঁটী। हिं आर्त्तगल। मं एरवणी। गुणाः—शीतं व्रणशोधनरोपणश्च। मद. व. ५। तथा। "अर्गटस्तुवरः शीतवीर्य्यो व्रणविशोधनः। व्रणरोपणकश्चैव पुष्पमस्य मधु स्मृतम्। तिक्तञ्च ज्वरपित्तघ्नं कफरक्तरुजापहम्।" वै. निघ.।

**अर्गलम्**। क्ली। मांसे। वै. निघ.।

**अर्घटम्**। क्ली। भस्मनि। हारा.।

**अर्घ्यम्**। क्ली। आर्घ्यमधुनि। See मधु।

**अर्घ्याटः (ल:)**। पुं। शृङ्गलायाम्। ওকড়া, চেঁচ্কো। शृङ्गला चालुपत्रः स्यादर्घ्यतोऽर्घ्याटलो मतः, इति द्रव्याभि.।

**अर्घ्यातः**। पुं। अर्घ्याटे। ওকড়া। द्रव्याभि.।

**अर्घ्यार्हः**। पुं। मुचुकुन्द[illegible]वृक्षे। रा. नि. व १०।

**अर्चिः**। स्त्री, क्ली। का[illegible]। अग्निज्वालायाम्।

**अर्जकः**। पुं। क्षुद्र[illegible]सीवृक्षभेदे। বাবুই তুলসী। हिं बावरी। अज्वला। कं गर्गेर। तें तेल्लगग्गेरचेट्टु। तत्[illegible]र्य्यः,—श्वेतच्छदः गन्धपत्रः पाता कुठेरकः। "वर्व्वरिकाकारी लघुमञ्जरीकः सूक्ष्मपत्रः निर्गन्धः श्वेतकुठेरकः (বাবুই)।" सु. सू. ३८अ. सुरसादौ ड.। श्वेतवर्व्वर्य्याम्। শাদা বাবুই। भा.पू.१भ.। श्वेतपर्णासः তোকমারী इति लोके। सि.यो. विसूची-चि.वमनशान्तौ। अर्जकः श्वेतकृष्णरक्तभेदात्त्रिभेदः तुल्यगुणश्च। गुणाः—कटूष्णः वालकफरोगघ्नः नेत्ररोगहरः रुच्यः सुखप्रसवकरश्च। रा. नि. व. १०। श्वेतपलाशवृक्षे। See वर्व्वरी।

**अर्जकजः**। पुं। असनवृक्षे। আসনা, পিয়াশাল।

**अर्जुनः**। पुं। (Tarminalia Arjuna, or Pentaptera arjuna.) स्वनामख्यातवृक्षे। অর্জ্জুন গাছ। हिं कहू, कौह। मं अर्जुनसादड़ा। कं सारढ़ोल। तें मद्दिचेट्ट। तत्पर्य्यायः,—नदीसर्ज्जः वीरतरुः इन्द्रद्रुः ककुभः (अ), इन्द्रद्रुमः (शब्दर.), शम्बरः, पार्थः चित्रयोधी धनञ्जयः वैरातङ्कः किरीटी गाण्डीवी कर्णारिः करवीरकः कौन्तेयः इन्द्रसूनुः गाण्डीरी शिवमल्लकः सव्यसाची वीरद्रुः कृष्णसारथिः पृथाजः फाल्गुनः धन्वी। गुणाः—कषायोष्णः कफघ्नः व्रणशोधनः पित्तश्रमतृष्णाहरः वातकोपनश्च। रा. नि. व. ९। शीतलः हृद्यः क्षतक्षयविषरक्तहरः मेदोमेहव्रणघ्नः तुवरः कफपित्तघ्नश्च। भा. पू. १भ. वटादिव.। वा. सू. १५ अ. न्यग्रोधादिः। "जम्ब्वृद्वयार्जुनकपीतनसोमवल्कः।" मात्रा २ तो.। नेत्रशुक्लगतरोगे। लक्षणम्—"एको यः शशरुधिरोपमश्च विन्दुः शुक्लस्थो भवति तमर्जुनं वदन्ति।" मा. नि.। मयूरे। मे. तन्त्रिकं। त्रि.। श्वेतवर्णे।

**अर्जुनम्**। क्ली। तृणमात्र। हला.। सुवर्णे मे. नत्रिकं। कासतृणे। र. मा.। दर्भभेदे।

**अर्जुनघृतम्**। क्ली। हृद्रोगे हितम्। अत्र क्वाथार्थमर्जुनत्वक् ६४ प. पाकार्थं जलं ६४ श. शेषः १६श. कल्क[illegible] श. घृतं ४ श.। मूर्च्छितघृतं ४श. अर्ज[illegible]रसः १६श. अर्जुनत्वक्कल्कः १श. एकत्र [illegible]म्। च. द. हृद्रोग-चि.। "पार्थस्य कल्कस्वरसेन सिद्धं शस्तं घृतं सर्व्वहृदामयेषु।" घृतं ४ श. अर्जुनस्वरसः ४ श. कल्कार्थं अर्ज्जुनत्वक् १ श.। सा. कौ.। भैष. भा रस. र.।

**अर्जुनत्वक्**।::स्त्री। अर्जुनवल्कले। অর্জ্জুন-ছাল। च. द. अ. सा. चि. शल्लक्यादिः।

**अर्जुननामाख्यः**। पुं। अर्जुनवृक्षे। भा.।

**अर्जुनसुधा**। स्त्री। अर्जुनोत्थसुधायां। অর্জ্জুন-কাঠের চূণ। गुणाः—"सुधा ह्यर्जुनजा प्रोक्ता कफस्य च विनाशिनी।" वै. निघ.। द्रव्यगुणे।

**अर्जुनाख्यः**। पुं। काशतृणे। र. मा.। अर्जुनवृक्षे।

**अर्जुनादः**। त्रि। दर्भकाशखादके। च. चि. २ अ.।

**अर्जुनाद्यघृतम्**। क्ली। प्रमेहे घृतम्। यथा—"अर्जुनपटोलनिम्बैः सवचादीप्यकरसासमञ्जिष्ठैः। भल्लातकागुरुघनैः सगदानलचन्दनोशीरैः। गोक्षुरकसोमवल्कैः नवपटोलैर्हरिद्रया त्रिफलाः। अश्मन्तकार्जुनाभ्यां दीप्यकयुक्तेन चैव लोध्रेण। मञ्जिष्ठा-

तिविनाभ्यां काक्कर्कषायैः पचेत्तैलम्। वातवातोत्थे मेढ्रे पित्तकृते साधयेत्सर्पिः ॥” भा. म. ३भ. मेढ्र-चि.।

**अर्जुनी।** स्त्री। गवि। गाई। मे. नत्रिकं।

**अर्जुनोपमः।** पुं। शाकद्रुमे। সেগুন-গাছ। र. मा.। शालवृक्षे। रत्ना.।

**अर्णः।** पुं। शाकवृक्षे। সেগুন। श. च.।

**अर्णः (स्)।** क्ली। जले। रा. नि. व. १४।

**अर्णोभवः।** पुं। शङ्खे। वै. निघ.।

**अर्णवः।** पुं। समुद्रे। रत्ना.।

**अर्णवजः**
**अर्णवजमलः** } पुं। समुद्रफेने। रत्ना.।

**अर्णवफेनः।** पुं। समुद्रफेने। रत्ना.।

**अर्णवमलः।** पुं। समुद्रफेने। रत्ना.।

**अर्णवोद्भवः।** पुं। अग्निजारवृक्षे। रा. नि. व. ६।

**अर्णोदः।** पुं। मुस्तके। रा. नि. व. ६।

**अर्णोभवः।** पुं। शङ्खे। रा. नि. व. १३।

**अर्त्तगलः।** पुं। नीलझिण्ट्याम्। নীলঝাঁটী। सु. द्रव्यसं. अ.। भागड़ इति ख्याते फलवृक्षे। रत्ना.।

**अर्त्तिः।** स्त्री। रोगे। रा. नि. व. २०।

**अर्थः।** पुं। विषये। धने। याचने। कारणे। वस्तुनि। अभिधेये। निवृत्तौ। प्रयोजने। मे. थद्विकं।

**अर्थचम्पिका।** स्त्री। कर्कटश्रृङ्ग्याम्। কাঁকড়া-শৃঙ্গী। वै. निघ.।

**अर्थप्रसादनी।** स्त्री। वामनवृक्षे। वै. निघ.।

**अर्थसाधकः।** पुं। पुत्रजीववृक्षे। পুত্রজীবা। मद. व. १भा.।

**अर्थसाधनः।** पुं। पुत्रजीववृक्षे। मद. व. १। रोठाकरक्षे। मद. व. ५।

**अर्थसिद्धः (कः)।** पुं। पुत्रजीववृक्षे। श्वेत-निर्गुण्ड्यां। कृष्णनिर्गुण्ड्याम्। रा. नि. व. ४।

**अर्थापत्तिः।** स्त्री। ‘यदकीर्त्तितमर्थादापद्यते।’ सा. सु. उ. ६५अ.।

**अर्थ्यम्।** क्ली। शिलाजतुनि। मे. यद्विकं।

**अर्दनिः।** पुं। अग्निरोगे। श. टी.।

**अर्द्दितम्।** क्ली। तन्नामकवातव्याधौ। पक्षाघातविशेषः। तस्य लक्षणम्—“उच्चैर्व्याहरतोऽत्यर्थं खादतः कठिनानि च। हसतो जृम्भतो भाराद्विषमाच्छयनाशनात्। शिरोनासौष्ठचिबुकललाटेक्षणसन्धिगः। अर्दयत्यनिलो वक्त्रमर्दितं जनयेत्ततः॥ वक्रीभवति वक्त्रार्द्धं ग्रीवा चाप्यपवर्त्तते। शिरश्चलति वाक्सङ्गो नेत्रादीनाञ्च वैकृतम्। ग्रीवाचिबुकदन्तानां तस्मिन् पार्श्वे च वेदना। तमर्दितमिति प्राहुः।” मा. नि.। अत्र रोगे यस्मिन् पार्श्वे अर्दितं तस्मिन्नेव पार्श्वे ग्रीवादीनां वेदना भवतीति बोध्यम्। त्रिवर्षातीते अतिजीर्णे निमेषशून्ये च रोगिणि तदसाध्यं भवति। अत्रौषधं—तिलवाल्कयुक्तरशोनकल्कादिकम्। “स्नेहपानानि नस्यञ्च भोज्यान्यनिलहन्ति च। उपनाहाश्च शस्यन्ते स्वेदनञ्च तथार्दिते॥” “तन्नामकामरोगविशेषे। लक्षणं—हनुद्वयस्य विक्षेपात् श्रीणश्चैदाच्च बुद्धिमान्। नासापुटविकाराच्च अर्द्दितं रोगमादिशेत्॥” जयद. ५५अ.।

**अर्द्धम्।** क्ली। समांशे। पुं। खण्डे। श.।

**अर्द्धकः।** पुं। जलसर्पे। वै. निघ.।

**अर्द्धकपाटसन्धिकः।** पुं। आश्चूलतैलकपालीतरास्यपालि कर्णबन्धनाकृतिविशेषे। सु. सू. १६ अ.।

**अर्द्धकोशिकी।** स्त्री। छेदनार्थं शस्त्रधाराविशेषे। सु. सू. ८अ.।

**अर्द्धखारी।** स्त्री। खारीमानार्द्धे। १८ अ.।

**अर्द्धचन्द्रः।** पुं। मयूरपिच्छे। मयूरपुच्छचन्द्र চাঁদ। हे. च.।

**अर्द्धचन्द्रम्।** क्ली। अङ्गुलित्रसे। हारा.।

**अर्द्धचन्द्रा।** स्त्री। त्रिवृति। रा. नि. व. ६। कृष्णत्रिवृति। কানতেউড়ী। भा. पू. १भ.।

**अर्द्धचन्द्राननः।** पुं। अर्द्धमुखशलाकाविशेषबाणे। अम.।

**अर्द्धचन्द्रिका।** स्त्री। कर्णस्फोटालतायां। रा. नि. व. ३। कृष्णत्रिवृति। मद. व. १।

**अर्द्धचोलकः।** पुं। कूर्पासे। কাঁচুলী। हारा.।

**अर्द्धतिक्तः।** पुं। किराततिक्तके। नेपालदेशजनिम्बविशेषे। रा.। भा. पू. १भ.।

**अर्द्धधारकम्।** क्ली। शस्त्रविशेषे। तच्च छेदनभेदनार्थम्। सु. सू. ८अ.।



**अर्द्धनारीश्वररसः।** पुं। रसोऽयं सान्निपातिकज्वरे गुह्यानाञ्च नस्यकर्म्मणि योज्यः। अपरे जीर्णविषमज्वरे नस्यमित्याहुः। तेन तद्दक्षणमेव वामाङ्गज्वरो नश्यति। अस्य द्रव्यादि रसगन्धकविषटङ्कणानि समभागानि कज्जलीवत् कृत्वा कृष्णसर्पमुखाभ्यन्तरे स्थापयित्वा तन्मुखं मृदा संलिप्य मृद्भाण्डे स्थापयेत्। ऊर्द्धाधो लवणदानपूर्व्वकं ततो भाण्डमाच्छाद्य तीव्राग्नौ ४ प्रहरं पचेत्। भैष.। अत्र “हिङ्कं ग्राह्यञ्च तत्समं” मिति मिलितरसगन्धकयोः समम्। “नैपालं तत्सममिति” विषतुल्यं नैपालं देयम्। “मरिचञ्च चतुर्गुणमिति” एकभागापेक्षया मरिचस्य चातुर्गुण्यम्। श्रीकण्ठः। सोमेश्वरस्तु मिलितरसगन्धकापेक्षया चातुर्गुण्यमित्याह। व्यवहारोऽप्यनेनैव। “रसगन्धौ समौ शुद्धौ विषं ग्राह्यञ्च तत्समं। नैपालं तत्समं ग्राह्यं मरिचञ्च चतुर्गुणम्। त्रिफलाया रसैर्मर्द्द्य भावना पञ्चधा स्मृता॥” र. सा. सं. जीर्ण-विषम-ज्व. चि.। अन्यः पाठः शुद्धसूतं तथा गन्धं विषं ताम्रञ्च भस्म च। समभागेन संगृह्य वारिणा पेषयेद्दृढ़ं। चक्राकारं समं कृत्वा सर्पतुण्डेन संन्यसेत्। तत् खल्लिपनं कृत्वा रौद्रे दद्याद्दिवत्रयः। स्थाल्यन्ते लवणं किञ्चित् तस्योपरि च गोलकं। ततो लवणकं दत्त्वा सिकताभिः प्रपूरयेत्। चतुर्भिः प्रहरैर्ज्वालामन्दमध्यखरक्रमात्। शीते तद्गोलकं नीत्वा दूरीकृत्य च खेपरं। भस्म संगृह्य यत्नेन खल्ले कुर्य्याद्विमर्द्दनं। यवमात्रन्तु तच्चूर्णं नस्ये दद्यात् सुरेश्वरि॥” प्रयोगा. ज्व. चि.।

**अर्द्धपलम्।** क्ली। कर्षद्वये। ४ तो.। स्यात्कर्षाभ्यामर्द्धपलम्। प. प्र. १ख.।

**अर्द्धपादा।** स्त्री। भूम्यामलकाम्। वै. निघ.।

**अर्द्धपारावतः।** पुं। वनकुक्कुटे। चित्रकण्ठपारावते। মুক্তিপায়রা। तित्तिरपक्षिणि। अत्रि.।

**अर्द्धपुष्पा।** स्त्री। महाबलायाम्। পীতবেড়েলা। वै. निघ.।

**अर्द्धभोजनम्।** क्ली। अर्द्धाशने। আদ্পেটা খাওয়া।

**अर्द्धमात्रिकः।** पुं। निरूहणाधिकारे तन्नामकवस्तौ। “दशमूलीकषायेण शताह्वाञ्च प्रदेयम्। सैन्धवाञ्च मधुनो द्विपलं द्विपलं तथा। तैलस्य पलमेकन्तु फलमेकेन योजयेत्। अर्द्धमात्रिकसंज्ञोऽयं बस्तिर्दोषनिरूहवत्। न च खेदो न च स्वेदः परिहारविधिर्न च। आवेशानुमतो ह्येष सर्व्वरोगनिबर्हणः। इति च. द.।

**अर्द्धमासूरी।** स्त्री। छेदनार्थमस्त्रधाराविशेषे। सु. सू. ८ अ.।

**अर्द्धरात्रः।** पुं। रात्र्यर्द्धभागे। দুপুর রাত্রি।

**अर्द्धवीरच्छा।** स्त्री। कृष्णदूर्व्वायाम्।

**अर्द्धश्र(स)फरः।** पुं। दक्षपालाख्यक्षुद्रमत्स्यविशेषे। ঢাঁড়িকা বা ডানকোণা মাছ। हारा.।

**अर्द्धशरावः (कः)।** पुं। प्रस्थद्वये। ३२ तो.। प. प्र. १ख.। भा.।

**अर्द्धसहः।** पुं। पेचके। পেঁচা। मं हुवड़।

**अर्द्धांशोनजलम्।** क्ली। अर्द्धांशेन हीने पक्वजले। इदं वातपित्तघ्नम्। रा. नि. व. १४।

**अर्द्धालिगः।** पुं। जलसर्पे। वै. निघ.।

**अर्द्धावभेदकः।** पुं। शिरोरोगभेदे। আধ্-কপালে ধরা। निदानलक्षणे—“रूक्षाशनात्यध्यशनप्राग्वातावश्यायमैथुनैः। वेगसन्धारणायासव्यायामैः कुपितोऽनिलः। केवलः सकफो वार्द्धं गृहीत्वा शिरसो बली। मन्याभ्रूशङ्खकर्णाक्षिललाटार्द्धेऽसिवेदनां। शस्त्रारणिनिभां कुर्य्यात्तीव्रां सोऽर्द्धावभेदकः॥” मा. नि.। अपिच यस्योत्तमाङ्गार्द्धमतीव जन्तोः सम्भेदतोदभ्रमशूलजुष्टं। पक्षाद्दशाहादथवाप्यकस्मात्तस्यार्द्धभेदं त्रितयाद्व्यवस्येत्॥ सु. उ. २५ अ.।

**अर्द्धाशनम्।** क्ली। अर्द्धभोजने। श. च.।

**अर्द्धेन्दुः।** पुं। नखचिह्ने। अतिप्रौढस्त्रीयोनौ अङ्गुलियोजने। मे. दत्रिकं।

**अर्द्धेन्दुशकला।** स्त्री। नासारोगविशेषे। कपालरोगभेदे। ओष्ठरोगे। अर्व्वुदरोगे। गलरोगे। तालुरोगे। कर्णरोगे। वै. निघ.।

**अर्द्धोदकक्षीरम्।** क्ली। अर्द्धोदकश्रृतदुग्धे। অর্দ্ধজলে সিদ্ধ দুগ্ধ। “अर्द्धोदकं पयः शिष्टमामाल्लघुतरं स्मृतम्।” हेमाद्रौ चारपाणिः।

**अर्भः (कः)।** पुं। बालके। रा. नि. व. १८। कृशे। मे. कत्रिकं। पक्षजातशिशौ। रा. नि. व. १८।

**अर्भा।** स्त्री। गुग्गुलौ। গুগ্‌গুল। “अर्भाचूर्णं मधुयुतम्।” प्रयोगा. अप-चि.।

**अर्मण:** । पुं । द्रोणपरिमाणे ( ३२ सेर )। प. प्र. १ख. । च. द अ. सा. चि. कुटजावलेहे ।

**अर्म्मन्** । क्ली । नेत्ररोगविशेषे । চক্ষুরোগ । तच्च पञ्चविधम्—प्रस्तार्य्यर्म्म, शुक्लार्म्म, रक्तार्म्म, मांसार्म्म, स्नाय्वर्म्म चेति । लक्षणं स्वस्वपर्य्याये मृग्यम् ।

**अर्यमा** । पुं । अर्कवृक्षे । रा. नि. व. १० । सूर्य्ये ।

**अर्व्वण:**
**अर्व्वा (न्)** } पुं । अश्वे । भा. पू. ।

**अर्व्वती** । स्त्री । वड़वायाम् । कुम्भदास्याम् । मे. तत्रिकं ।

**अर्व्वुद:** । पुं, क्ली । पुरुषे । दशकोटिपरिमाणे । मे. दत्रिकं । मांसकीलकाकाररोगविशेषे । আব্ । हिं रसौली । वातजपित्तजकफजरक्तजमांसजमेदोजाद्यर्व्वुदद्विरर्व्वुदभेदेनाष्टौ । लक्षणं—गात्रप्रदेशे क्वचिदेव दोषा: संमूर्च्छिता मांसमसृक् प्रदूष्य । वृत्तं स्थिरं मन्दरुजं महान्तमनल्पमूलं चिरवृद्ध्यपाकं । कुर्व्वन्ति मांसोच्छ्रयमत्यगाधं तदर्व्वुदं शास्त्रविदो वदन्ति । वातेन पित्तेन कफेन चापि रक्तेन मांसेन च मेदसा वा तज्जायते तस्य च लक्षणानि ग्रन्थे: समानानि तदा भवन्ति ॥ मा. नि. । सु. नि. ११ अ. । "दोष: प्रदुष्टो रुधिरं शिरास्तु सम्पीड्य सङ्कोच्य गतस्तु पाकम् । संस्रावमुन्नाह्यति मांसपिण्डं मांसाङ्कुरैराचितमाशु वृद्धिं । स्रवत्यजस्रं रुधिरं प्रदुष्टमसाध्यमेतद्रुधिरात्मकं स्यात् ॥" इति दन्तरोगभेदे । नेत्ररोगभेदे । तालुरोगे तल्लक्षणं—तालुमध्ये रक्तजं पित्तलक्षणं पद्मकर्णिकावत्केसरैरिव पार्श्वतो दीर्घमांसाङ्कुरैर्वेष्टितं शोथं अर्व्वुदं विद्यात् । "पद्माकारं तालुमध्ये तु शोथं विद्याद्रक्तादर्व्वुदं पित्तलिङ्गम् ।" भा. म. ४भ. मुखरो. चि. ।

**अर्व्वुदाकार:** । पुं । बहुवारवृक्षे । চালিতা গাছ । वै. निघ ।

**अर्व्वुदाद्रिज:** । पुं । मेषशृङ्गग्राम् । ভেড়াশিঙা । मं सुरदारशिंग । वै. निघ. ।

**अर्व्वूरम्** । क्ली । आहुल्यनामक्षुपे । काश्मीरे तड़वड़ इति प्रसिद्धे । म, तड़वड़ । वै. निघ. २भ. संग्रहणी-चि. तालीशादिचूर्णे ।

**अर्श: (स्)** । क्ली । The piles or hoemorrnoids. स्वनामख्यातगुदरोगविशेषे । तत्पर्य्याय:,—दुर्नामकं (अ), दुर्नाम, गुदकील:, गुदाङ्कुर: (रा), अनामकं (शब्दर.) । लक्षणम्—दोषात्वङ्मांसगुदमुखादभ्यन्तरत: सार्द्धचतुरङ्गुलिमिता या नाड़ी गुदमिति कथ्यते, सा गुदनाड़ी शङ्खावर्त्तनिभवलित्रययुक्ता । तस्या: सार्द्धाङ्गुलि-मितांशो गुदौष्ठ: । गुदौष्ठादङ्गुलिमितोऽंश: सम्वरणी नाम प्रथमा वलि: तदुपरि सार्द्धाङ्गुलिमितोऽंशो विसर्ज्जनीनाम द्वितीया, तदूर्द्ध्वं सार्द्धाङ्गुलि-मितोऽंश: प्रवाहनीनाम तृतीया वलिरुच्यते । तास्वेव मांसाङ्कुरा जायन्ते । तच्चार्श: षड्विधं वातजादिभेदात् । प्रकरणमिदं गुदार्श:परं बोध्यम् । तन्निदानं यथा—"दोषास्त्वङ्मांसमेदांसि सन्दूष्य विविधाकृतीन् । मांसाङ्कुरानपानादौ कुर्व्वन्त्यर्शांसि तां जगु: ।" इति । "पृथग्दोषै: समस्तैश्च शोणितात् सहजानि च । अर्शांसि षट्प्रकाराणि विद्याद्गुदवलित्रये ।" साधारणचिकित्सा—अत्र तथान्नपानौषधादिकं सेव्यं येन वायोरनुलोम: अग्निबलवृद्धिश्च जायते । "दत्त्वाथ वेतनं योऽध्येत्यादायापि च वेतनं । अध्यापयेच्च जुहुयाज्जपेद्वार्शोयुतो भवेत् ॥" इति कर्म्मविपाक: । पथ्यं—"विरेचनं लेपनमस्रमोक्ष: क्षाराग्निशस्त्राचरितञ्च कर्म्म । पुरातना लोहितशालयश्च सषष्टिकाश्चापि यवा: कुलत्था: । गोधाखुसर्पानगजोष्ट्रकूर्म्म-श्वावित्-कुलिङ्गाजखरोतुकोशा: । तरक्षुचाषाश्वशृगालकाका येऽन्येऽपि मांसा: प्रसहाश्च तेऽपि ॥ पटोलपत्तूररसोनवह्निपुनर्णवाशूरणवास्तुकानि । जीवन्तिका दन्तशठा सुरा च त्रुटिर्वयस्थानवनीततक्रं । कक्कोलधात्रीरुचकं कपित्थमौष्ट्रादिमूत्रादग्रपयांसि चापि । भल्लातकं सर्षपजञ्च तैलं गोमूत्रसौवीरतुषोदकानि । वातापहं यच्च यदग्निकारि तदन्नपानं हितमर्शसेभ्य: ॥" इति । अपथ्यं—आनूपमामिषं मत्स्यं पिण्याकं दधि पिष्टकं । माषान् करीरं निष्पावं विल्वं तुम्बीमुपोदिकां । पक्वाम्रं शालुकं सर्व्वं विष्टम्भीनि गुरुणि च । आतपं जलपानानि वमनं वस्तिकर्म्म च । विरुजानि च सर्व्वाणि मारुतं पूर्व्वदिग्भवम् । वेगरोधं स्त्रियं पृष्ट्यानमुत्कटूकासनं । यथास्वं दोषलञ्चान्नमर्शस: परिवर्ज्जयेत् । यत्पथ्यं यदपथ्यञ्च वक्ष्यते रक्तपित्तिनां । रक्तार्शोरोगिणां तत्तदपि विद्याद्विशेषत: ॥" इति ।

**अर्श:कुठाररस:** । पुं । रसोऽयं अर्शसि हित: । पाठ:—"शुद्धसूतं पलञ्चैकं द्विपलं शुद्धगन्धकं । मृतताम्रञ्च लौहञ्च प्रत्येकञ्च पलत्रयम् । त्रिकटु लाङ्गलीं दन्तीं चित्रकं पुष्करं तथा । प्रत्येकं द्विपलं योज्यं यवक्षारञ्च टङ्कणं । उभौ पञ्चपलौ



योज्यौ सैन्धवं पलपञ्चकं । द्वात्रिंशच्च गवां मूत्र स्नुहीक्षीरं तदर्द्धकं । सर्व्वं मृद्वग्निना पाच्यं यावन्नायाति पिण्डताम् ॥" इति मात्रा माषद्वयम् रस. र. प्रयोगा. । रसेन्द्रचिन्तामणौ रसगन्धौ न धृतौ । स्नुहीक्षीरञ्च गोमूत्रसमं दत्तम् । पुष्करस्थाने पिलुकमिति उक्तम् । अन्य:—"शुद्धसूतं द्विधा गन्धं मृतलौहञ्च ताम्रकं । प्रत्येकं द्विपलं दन्तो त्र्यूषणं शूरणं तथा । शुभाटङ्कयवक्षारसैन्धवं पलपञ्चकं । पलाष्टकं स्नुहीक्षीरं द्वात्रिंशच्च गवां जलै: । आपिण्डितं पचेदग्नौ खादेन्माषद्वयं तत: ॥" र सा. स. । शुभा वंशलोचना ।

**अर्श:सूदन:** । पुं । शूरणे । ওল ।

**अर्शम्** । क्ली । अर्शोरोगे । श, र. ।

**अर्शस:** । त्रि । अर्शोयुक्ते ।

**अर्शो** । त्रि । अर्शोयुक्ते । श. र. ।

**अर्शोघ्न:** । पुं । शूरणे । ওল । रा. नि. व ७ । भल्लातके । ভেলা । सर्जिक्षारे । সাজিমাটী । तेजवले । তেজবল । श्वेतसर्षपे । শ্বেত সরিষা । कटुशूरणे । বুনো ওল । वै. निघ. ।

**अर्शोघ्नवर्ग:** । पुं । कुटजविल्वचित्रकनागरातिविषाभयाधन्वयासकदारुहरिद्रावचाचव्यानीति । अयं द्वादशदशक: प्रभावादर्शोघ्न: । च. सु. ४ ।

**अर्शोघ्नवल्कला** । स्त्री । तेजवले । তেজবল । वै. निघ. ।

**अर्शोघ्नी** । स्त्री । ताजमूल्याम् । रत्ना. । मे. नत्रिकं । भल्लातके । वै. निघ ।

**अर्शोज:** । पुं । भगन्दररोगे ।

**अर्शोयन्त्रम्** । क्ली । अर्शोदर्शनाय गोस्तनाकारयन्त्रे । "अर्शसां गोस्तनाकारं यन्त्रकं चतुरङ्गुलं । नाहे पञ्चाङ्गुलं पुंसां प्रमदानां षड़ङ्गुलं । द्विच्छिद्रं दर्शने व्याधे: कैश्चिच्छिद्रन्तु कर्म्मणि ।" अत्रि. । जयद. ५३ अ. ।

**अर्शोवर्त्मन्** । क्ली । नेत्रवर्त्मगतरोगविशेषे । नेत्रवर्त्मनि कर्कटीवीजवत् मन्दवेदनमसृणतीक्ष्णा या पिड़का भवति तत् । "एर्वारुवीजप्रतिमा: पिड़का मन्दवेदना: । श्लक्ष्णा: खराश्च वर्त्मस्थास्तदर्शोवर्त्म कीर्त्यते ॥" एषा सन्निपातजा । मा. नि. । तदुक्तं—पिड़का सन्निपातेन तदर्शोवर्त्म निर्द्दिशेत् । इति विजयरक्षिते—निमि: ।

**अर्शोहररस:** । पुं । रसोऽयं अर्शसि हित: । पाठो यथा—"रसवैक्रान्तशुद्धाभ्रकान्तभस्म सगन्धकं । तुल्यांशं मर्द्दयेच्चार्द्रदाड़िमोत्थै: रसैस्तत: । भक्षयेन्माषमेकन्तु अर्शसां नाशने रस: ॥" रस. र. ।

**अर्शोहित:** । पुं । भल्लातकवृक्षे । त्रिका. ।

**अर्हम्** । क्ली । सुवर्णे । সোণা । वै निघ. ।

**अर्हा** । स्त्री । वायमाणालतायाम् । বলালতা । वै. निघ. ।

**अलम् (कम्)** । क्ली । हरितालके । रा. नि. व. १३ । सि. यो. कास-चि. मन:शिलादिधूमपाने. वृन्द. । "मन:शिलाले मरिच" इति । वृश्चिकपुच्छकण्टके । বিছের হুল । हे. च. । कल्लोल । वै. निघ. २भ. वा. व्या. प्रत्यष्ठीला. चि. । भल्लीयुक्तकेश ।

**अलर्क:** । पुं । क्षिप्त-कुक्कुरे । পাগলা কুকুর । चूर्णकुन्तले ।

**अलर्कप्रिय:** । पुं । कृष्णभल्लातके । কাল ভেলা । मं बिब्बाजटा । वीजकवृक्षे । हिं विजयसार । मद. व. ५ ।

**अलर्का** । स्त्री । वसायाम् । চর্ব্বি । वै. निघ. ।

**अलर्काह्वय:** । पुं । कटुनिम्बे । কটু নিম্ । वै. निघ. ।

**अलक्त: (क:)** । पुं, क्ली । Lac, the red animal dye so called. लाक्षायाम् । আল্‌তা, লাহা, জৌ, গালা । हि लाहो । मं अलिता । कं अलतगे । तत्पर्य्याय:,—राक्षा याव: द्रुमामय: रक्षा अरक्त: जतुकं यावक: अलक्तक: रक्त: ( शब्दर ), पलङ्कषा क्रिमि: वरवर्णिनी । गुणा:—"तिक्तोष्ण: कफवातामयघ्न: रूक्षो व्रणघ्नश्च । रा. नि. व. ६ । वर्णकर: हिम: बल्य: स्निग्ध: लघुस्तुवर: अनुष्ण: कफ-पित्त-रक्त-हिक्का-कास-ज्वरघ्न: व्रणोर:क्षतवीसर्पकृमिकुष्ठहर: । अलक्तको विशेषेण व्यङ्गघ्न: ।" भा. पू. १भ. । अलक्तको रक्तरोधी रक्तपित्तक्षयापह: । प्रदरञ्चाप्यतीसारं सरक्तं क्षपयेद्ध्रुवम् ॥" अत्रि. ।

**अलगण:** । पुं । नेत्ररोगविशेषे । वै. निघ. ।

**अलगर्द:** । पुं । सर्पविशेषे । জলঢোড়া, জলবোড়া ।

**अलगर्द्दा** । स्त्री । सविषजलायुकायाम त्रिशाङ्क

জোঁক। सा रीमशा महापार्श्वा कृष्णमुखी च। See जलायुका। सु. सू. १३अ.।

**अलगर्ध:**। पुं। अलगर्दे। अम.।

**अलङ्कारसुवर्णम्**। क्ली। शृङ्गीकनके। हारा.।

**अलजी**। स्त्री। प्रमेहपिड़कारोगे। लक्षणम्—"रक्ता सिता स्फोटवती दारुणा त्वलजी भवेत्। सु. नि. प्रमेहचि. ६अ.। नेत्रसन्धिजरोगे। स च नेत्रसन्धौ प्रमेहाधिकारोक्तालजीलक्षण: शोथ:। लक्षणम्—"जाता सन्धौ कृष्णशुक्लेऽलजी स्यात् तस्मिन्नेव ख्यापिता पूर्व्वलिङ्गै:।" मा. नि.। शूकदोषविशेषे। एषापि प्रमेहपिड़काया लक्षणयुक्ता। "अलजीलक्षणैर्युक्तामलजीञ्च विनिर्दिशेत् ॥" सु. नि. शू. दो. चि. १४ अ.।

**अलञ्जर:**। पुं। बहुजलधर-मृण्मयपात्रे। জালা। तत्पर्य्याय:—अलिञ्जर: माणिकं (अटीभ.)।

**अलम्बमुष्कक:**। पुं। मुष्ककवृक्षे। ঘণ্টাপারুল।

**अलम्बा**। स्त्री। तिक्तालाब्वाम्। তিৎলাউ। स्थावरविषान्तर्गतपत्रविषे। सु. कल्प. २अ.। See पत्रविषम्।

**अलम्बुजा**। स्त्री। गोरक्षमुण्ड्यां। वै. निघ।

**अलम्बुदम्**। क्ली। बालके। বালা। वै. निघ. ज्वर. चि. शिवगुटी.।

**अलम्बुष:**। पुं। वान्तिरोगे। मं. षचतुष्कं। भूकदम्बे। কুকশিমা গাছ। र. मा. रत्ना।

**अलम्बुषा (सा)**। स्त्री। A sort of sensitive plant. लज्जालुकाभेदे। ফুল শোলা। तत्पर्य्याय:,—खरत्वक् मेद: गला। गुणा:—मधुरा लघु: कृमिकफपित्तघ्नी च। भा. पू. १भ. गु. व.। अलम्बुषाया: स्वरस: पीतो द्विपलमात्रया। अपचीगण्डमालानां कामलायाश्च नाशन:। भूकदम्बे। কুকশিমে। महाश्रावण्याम्। বড় থুলকুড়ি। रा. नि. व. ५। वै. निघ. २भ. वा. व्या. षड़शीति-गुग्गुलौ, तृणपञ्चमूलादिलौहे च। लौहमले। মণ্ডুর। च. द. १भ. आमवाते अलम्बुषाद्यचूर्णे।

**अलम्बुषाद्यचूर्णम्**। क्ली। आमवातघ्नचूर्णमिदम्।—"अलम्बुषां गोक्षुरकं गुड़ूचीं वृद्धदारकम्। पिप्पलीं त्रिवृतां मुस्तं वरुणं सपुनर्णवम्। त्रिफलां नागरञ्चैव सूक्ष्मचूर्णानि कारयेत् ॥" मण्डूरादिचूर्णं प्रत्येकं समभागमादाय एकत्र संमिश्रणीयं। अनुपानं—दधिमण्डं काञ्जिकं दुग्धं तक्रं मांसरसं वा यथालाभं दद्यात्। च. द. आमवा. चि.। द्वितीयं यथा—अलम्बुषा गोक्षुरकं त्रिफलानागरामृता:। यथोत्तरं भागवृद्ध्या श्यामाचूर्णञ्च तत्समम्। इति। अलम्बुषा लौहमलं। मतान्तरे मुण्डीरी। श्यामाचूर्णं वृद्धदारकमूलचूर्णम्। च. द. भा.। तृतीयमपि आमवाते। अलम्बुषा गोक्षुरकं मूलं वरुणकस्य च। गुड़ूची नागरञ्चेति समभागानि कारयेत् ॥" भा.। रस. र.।

**अलम्बोर्द्धस्तनी**। त्रि। यस्या: स्तनौ न लम्बौ नोर्द्ध्वमुखौ च। सु. शा. १० अ.।

**अलम्बोष्ठी**। त्रि। यस्या: ओष्ठौ लम्बमानौ न भवति। सु. शा. १० अ.।

**अलमोस:**। पुं। मत्स्यभेदे। वै. निघ.।

**अलर्क:**। पुं। (Calotropis gigantea or Procera; अर्क of white flowers.) श्वेतार्के। শ্বেত আকন্দ। हिं मादार। भा. पू. १भ.। मे. कत्रिकं। मन्दार इति हेमा. अलर्कादिव.। मन्दारार्के। रा. नि. व. १०। अलर्कोमन्दारार्क: यस्य क्षीरं न विनश्यति। सु. सू. ३८अ अर्कादि. ड.। मन्दाराख्य: श्वेतपुष्प:। वा. सू. १५अ. अर्कादिव. अरुण:। "अर्कालर्कौ नागदन्ती विशल्या।" योगोन्मादितकुक्कुरे। मे. कत्रिकं। कुक्कुरज्वरे। हा. अत्रि. २स्था. २अ.।

**अलवणा**। स्त्री। ज्योतिष्मत्यां। লতাফট্কী। वर्त्तुलपक्वरक्तफला पीततैला काकमर्दनिका। सु. सू. ३८ अर्कादिव. ड.। गुणा:—तीव्रा चालवणा सा स्यात् कफ-मेद:-कृमिप्रणुत्। अत्रि.। हरीतक्याम्। मद. व. १।

**अलस: (क:)**। पुं। पादरोगविशेषे। পাঁকুই तल्लक्षणं—"क्लिन्नाङ्गुल्यन्तरौ पादौ कण्डूदाहरुगन्वितौ। दुष्टकर्द्दमसंस्पर्शादलसं तं विनिर्दिशेत् ॥" सु. नि. १३अ.। विसूचिकाया अवस्थाभेदे। स त्रिधा—विषाजीर्णं रसादिकं दोषै: स्यादलसस्त्रिधा। शार्ङ्ग:। प्रयाति नोर्द्ध्वं नाधस्तात् आहारो न विपच्यते। आमाशयेऽलसीभूत: तेनासौ अलसको मत: ॥ इति निरुक्ति:। वा. सू. ८। तल्लक्षणं यथा—"कुक्षिरानह्यतेऽत्यर्थं प्रताम्येत् परिकूजति। निरुद्धो मारुतश्चैव कुक्षावुपरि धावति ॥" See



अश्मिमा.। क्ली। क्षुद्रकुष्ठरोगभेदे। लक्षणम्—कण्डूमद्भि: सरागैश्च गण्डै रलसकं चितम्।" मा. नि.। व्यालजातिज्वरे। गज-वै.। जिह्वारोगे। वै. निघ.। वृक्षभेदे।

**अलसा**। स्त्री। हंसपदीलतायाम्। গোয়ালেলতা। मे. सत्रिकं।

**अलसी**। स्त्री। अतस्याम्। তিসি, মসিনা। वै. निघ.।

**अलसेलुका**। स्त्री। रक्तलज्जालुकायाम्। ফুল সোলা। वै. निघ.।

**अलातम्**। क्ली। अङ्गारे। কয়লা। रत्ना.।

**अलाबु**। क्ली। (बु:,बू:)। स्त्री। (Cagenaria vulgaris, Syn, Cucurbita lagenaria.) स्वनामख्यातफलशाकलतायाम्। লাউ গাছ। हिं लौका, मिठितुम्बी, लवलौआ, गदहलौआ। मं दुध्याभोपला। सा द्विधा दीर्घा वर्त्तुला च तत्पर्य्याय:,—तुम्ब: तुम्बक: तुम्बा तुम्बी पिण्डफला महाफला आलाबू: एलाबू: लाबु: लावुका (अटी), तुम्बिका आलावु: तुम्ब: अलाबु: तुम्बुक: (शब्दर:)। तत्फलगुणा:—मिष्टं हृद्यं पित्तश्लेष्मघ्नं वृष्यं रुचिकरं धातुपुष्टिविवर्द्धनम्। भा. पू. १भ.। मिष्टतुम्बीफलं हृद्यं पित्तश्लेष्मापहं गुरु। वृष्यं रुचिकरं प्रोक्तमिति च। द्रव्यगु.। गुरु मधुरं मलभेदकं वातश्लेष्मकारि रुक्षं शीतलं पित्तनाशित्वञ्च (राज:)। कटुतुम्ब्यां। তিৎলাউ। श. र.।

**अलाबुक:**। पुं। अश्वस्य मुखरोगे। अत्र मुखदौर्गन्ध्यं तालुशोफ: ग्रासग्रहणे विद्वेषश्च भवति। ज. द.।

**अलाबुका**। स्त्री। कटुदुग्धालाबुनि। भा.।

**अलाबुनी**। स्त्री। कटुदुग्धालाबुनि। তেঁত শ্বেতলাউ। कटुतुम्ब्याम्। তিৎলাউ। मिष्टतुम्बीलतायाम्। মিষ্টলাউ গাছ। हिं मीठितुम्बी। मद. व. ७।

**अलाबुविधि:**। पुं। अलाब्वा रक्तमोक्षणे। "अलाबु कटुकं रुक्षं तीक्ष्णञ्च परिकीर्त्तितम्। तस्मात् श्लेष्मोपसृष्टे तु हितं तदवसेचने।" सु. सू. १३अ.।

**अलाबुसुहृत्**। पुं। अम्लवेतसे। वै. निघ.।

**अलाबूयन्त्रम्**। क्ली। यन्त्रविशेषे। लक्षणं—"स्याद्द्वादशाङ्गुलाऽलाबुर्नाहे त्वष्टादशाङ्गुला। चतुस्त्र्यङ्गुलवक्त्रा स्याद्दीप्तान्त:श्लेष्मरक्तहृत् ॥" कश्चित् अधि.।

**अलास:**। पुं। जिह्वास्फोटे। जिह्वागतमुखरोगे। अत्र दुष्टकफशोणितेन जिह्वातले दारुण: शोथो भवति। वृद्धिं गते जिह्वास्तम्भो जिह्वामूले पाकश्च भवति। लक्षणं जिह्वातले य: श्वयथु: प्रगाढ सोऽलाससंज्ञ: कफरक्तमूर्त्ति:। जिह्वां स तु स्तम्भयति प्रवृद्धो मूले तु जिह्वा भृशमेति पाकम् ॥ सु. नि. १६ अ.।

**अलि:**। पुं। भ्रमरे। रत्ना.। मद्ये। मे. लद्विकं। वृश्चिके। हारा.। काके। कोकिले। श. र.।

**अलिक:**। पुं, क्ली। कपोले रा. नि. व. १८। ललाटे। रत्ना।

**अलिका**। स्त्री। पाटल्याम्।

**अलिकमत्स्य:**। पुं। अङ्गारे। भिन्नतिले। तैलभ्रष्टमांसे। पिष्टकविशेषे।

**अलिकुलप्रिया**। स्त्री। काष्ठशेवत्यां। কাঁঠ গোলাপ। वै निघ.।

**अलिकुलसङ्कुला**। स्त्री। कण्टकशेवत्यां। কাঁটাশেউতী। कुब्जकावृक्षे। কোকণদেশীয় পুষ্পবৃক্ষ। रा. नि. व. १०। भा. पू. १भ.।

**अलिगर्द्द:**। पुं। जलसर्पे। আলাধ, ধরা, গেঁড়িভাঙ্গা इति च लोके। श. र.।

**अलिजिह्वा (ह्विका)**। स्त्री। क्षुद्रजिह्विकायाम्। আল্‌জিব इति लोके। श. र.।

**अलिञ्जरम्**। क्ली। फलविशेषे। फूटीविशेष। चिरफोटीति महाराष्ट्रे। गुणा:—अलिञ्जरं तु रुक्षं स्याच्छीतलं भेदकं मतं। तुवरं मधुरं क्षारं तिक्तं पाके कटु स्मृतम्। स्वादिष्ठं वातकृच्छ्वासकासश्लेष्मविनाशनम् ॥ वै. निघ.। बहुजलधर-मृण्मयपात्रविशेषे।

**अलिता**। स्त्री। अलक्तके। আলতা। गुणा:—अलितोष्णा तिक्तका स्यात्कफवातव्रणापहा। व्यङ्गारुचीकण्ठरुजं व्रणदोषञ्च नाशयेत्। अन्ये गुणाश्च लाक्षावत्प्रोक्ता: पूर्व्वमहर्षिभि:।" वै. निघ.।

**अलिदूर्व्वा**। स्त्री। मालादूर्व्वायां। रा. नि. व. ८।

**अलिपकः** । पुं । भ्रमरे । कोकिले । कुक्कुरे । सर्व्वत्र मे. कचतुष्कं ।

**अलिपत्रिका** । स्त्री । वृश्चिकाल्यां । विछाती । रा. नि. व. ५ ।

**अलिपर्णिका (र्णी)** । स्त्री । वृश्चिकाल्यां । विछाति, विछुटी । रा. नि. व. ६ ।

**अलिप्रियम्** । क्ली । रक्तोत्पले । त्रिका. । पुं । धाराकदम्बवृक्षे । आम्रवृक्षे । श. र. । कदम्बवृक्षे । भा पू. भ ।

**अलिप्रिया** । स्त्री । पाटलावृक्षे । पारुल गाछ । प. मु. । भूजम्बूवृक्षे । वै. निघ. ।

**अलिप्सा** । स्त्री । अनिच्छायाम् ।

**अलिमकः** । पुं । भेके । कोकिले । भ्रमरे । पद्मकेशरे । मधूकवृक्षे । मे. कचतुष्कं ।

**अलिमोदा** । स्त्री । गणिकारिकायां । गणिरि । रा नि. व. ९ ।

**अलिमोहिनी** । स्त्री । केविकापुष्पवृक्षे । रा. नि. व १० । केविका पश्य ।

**अलिम्पकः (म्बकः)** । पुं । कोकिले । मधुमक्षिकायाम् । कुक्कुरे । पद्मकेशरे । वै. निघ. ।

**अलिवल्लभा** । स्त्री । रक्तपाटलायां । भा. पू. १ भ. ।

**अलिवाहिनी** । स्त्री । कोकणदेशप्रसिद्धे केविकावृक्षे । केवेर इति भाषा । रा. नि. व. १० ।

**अलिसमाकुलः** । पुं । पुष्पवृक्षविशेषे । दवणसेवन्तीति महाराष्ट्रादौ । वै. निघ. ।

**अली (इन्)** । पुं । वृश्चिके । भ्रमरे । मे. ।

**अलीकम्** । क्ली । ललाटे । हे. च. ।

**अलीकमत्स्यः** । पुं । अङ्गारस्विन्नतिलतैलभृष्टमाषपिष्टके । यथा—"माषपिष्टिकया लिप्तं नागवल्लीदलैर्महत् । तत्तु संस्वेदयेद्युक्त्या स्थाल्यामङ्गारकोपरि । ततो निष्कासितं खण्डं तिलतैलेन भर्जयेत् । अलीकमत्स्य उक्तोऽयं प्रकारः पाकपण्डितैः । तं वृन्ताकभटित्रेण वास्तुकेन च भक्षयेत् ॥ भा. पू. २भ. ।

**अलीनकम्** । क्ली । वङ्गे । हे. च. ।

**अलीष्टः** । पुं । तिलकवृक्षे । तिल गाछ । वै. निघ. ।

**अलुः** । पुं स्त्री । गलन्तिकायाम् । आली । तुलसीवृक्षे । क्ली । मूले । मे. कद्विकं ।

**अलुकम्** । क्ली । आलुकसाधारणे । आलु । गुणाः—आलुकं शीतलं आग्नेयं मलस्तम्भनं मधुरं जड़ं रूक्षं वृष्यं दुर्ज्जरं बलवर्द्धनं स्तन्यवर्द्धनं मलमूत्रश्लेष्मवातवृद्धिकरं रक्तपित्तघ्नञ्च । वै. निघ. । एतच्च राजारक्तराजालुश्वेतकाष्ठवन्यकाष्ठालुभेदेन बहुविधम् । विशेषः पर्य्याये द्रष्टव्यः । आलुवोखार इति प्रसिद्धे काबिलदेशीयफले । आमिषे ।

**अलोमशः** । पुं । मत्स्यविशेषे । तल्लक्षणम्—वितस्तिपरिमितः श्वेताङ्गः सूक्ष्मशल्कश्च । तन्मांसं बलकरं वीर्य्यकरं पुष्टिकरञ्च । रा नि. व १७ ।

**अलोमशा** । स्त्री । वृक्षविशेषे । मं कांगभाड़ । वै. निघ. ।

**अलोहितम्** । क्ली । रक्तपद्मे । ईषद्रक्तपद्मे ।

**अल्कः** । पुं । वृक्षविशेषे । शरीरावयवे । वै. निघ. ।

**अल्पकः** । पुं । यासक्षुपे, दुरालभायाम् । रा. ।

**अल्पकेशिका** } **अल्पकेशी** } स्त्री । भूतकेश्यां । चामरकषा । प. मु. । र. मा. रत्ना. ।

**अल्पगन्धम्** । क्ली । रक्तकैरवे । रक्तकमले । वै निघ ।

**अल्पगोधूमः** । पुं । तृणगोधूमे । प. मु. । मद. व. १० ।

**अल्पघण्टिका** । क्ली । ह्रस्वशणपुष्प्याम् । लघु शणगाछ । मं ल ताग ।

**अल्पतनुः** । त्रि । खर्व्वे । अम ।

**अल्पनायिकाचूर्णम्** । क्ली । औषधमिदं ग्रहण्यां हितम् । पाठः—"त्रिशाण पञ्चलवणं प्रत्येकं त्र्यूषणं पिचु । गन्धकान्माषकानष्टौ चतुरो माषकान् रसात् । इन्द्राशनात्पलं शाणचित्रकाधिकमिश्रितं । खादेन्मिश्रीकृतात्क्षाणमनुपेयञ्च काञ्जिकं ॥" र. चि. ।

**अल्पनिद्रता** । स्त्री । पित्तजन्यनिद्राल्पतारोगे । वै. निघ. ।

**अल्पपत्रः** । पुं । क्षुद्रपत्रतुलसीक्षुपे । र. मा. । क्ली । रक्तपद्मे । र. मा. ।

**अल्पपत्रकः** । पुं । गिरिजमधूकवृक्षे । पाहाड़े मोल गाछ । रत्ना. ।



**अल्पपत्रिका** । स्त्री । रक्तापामार्गक्षुपे । रा नि व ४ ।

**अल्पपत्रा** । स्त्री । मिश्रेयायाम् । हुषल्याम् । তালমলী । वै निघ ।

**अल्पपद्मम्** । क्ली । रक्तपद्मे, रक्तोत्पले । वै. निघ द्रव्यगु. ।

**अल्पपर्णिका** } **अल्पपर्णी** } स्त्री । मुद्गपर्ण्याम् । मुगानी । वै. निघ ।

**अल्पपुष्पिका** । स्त्री । पीतकरवीरे । पीत-पुष्प करवी । वै. निघ. ।

**अल्पप्रमाणकः** । पुं । लतापनसे । र मा. । चेलानके । চেলা তরমুজ থরমুজ इति भाषा । वै. निघ. ।

**अल्पमस्तकः** । पुं । चित्रकक्षुपे । वै. निघ. ।

**अल्पमक्षिका** । स्त्री । मक्षिकाविशेषे । ছোট মাছী । वै निघ ।

**अल्पमानकः** । पुं । विल्वगन्धतुलस्याम् । र. ।

**अल्पमारिषः** । पुं । क्षुद्रमारिषे । কাঁটানটিয়া, চাপানটিয়া । हिं अल्पमरषा । मं थोरताण्डुलजा । अम । तच्छाकगुणाः—लघु शीतवीर्य्यं रूक्षं पित्तघ्नं कफनाशनं । मलमूत्रनिःसारकं रुच्यं दीपनं विषघ्नञ्च । भा. पू. १भ. । See तण्डुलीयं ।

**अल्परसा** । स्त्री । श्वेतवचायाम् । रा. नि व. २३ ।

**अल्पवर्त्तकः** । पुं । तित्तिरपक्षिणि । मद व. १२ ।

**अल्पशुक्रता** । स्त्री । पित्तजन्यशुक्राल्पतारोगे । वै. निघ. ।

**अल्पशोफः** । पुं । सर्व्वाक्षिरोगे । वै. निघ. ।

**अल्पक्षुपा** । स्त्री । ह्रस्वलज्जालुकायां । वै. निघ. ।

**अल्पायुः** । पुं । छागे । त्रि. । छागल ।

**अल्पास्थि** । क्ली । परूषकफले । फलसा । रा. नि. व ११ । भा. पू. १भ ।

**अल्पिका** । स्त्री । वनमक्षिकाजाती । हे. च ४ । मुद्गपर्ण्याम् । भा. पू. १भ. ।

**अल्लकः** । पुं । कक्कोलविशेषे । ककुथल । धान्यके । धने' । वै. निघ ।

**अल्लका** । स्त्री । धान्यके । धने' । वै. निघ. ।

**अल्ला** । स्त्री । मातरि । धान्यके । धने' ।

**अल्लु** । क्ली । आलुके । আলুবোখারা इति लोके । मद व ६ ।

**अवकरः** । पुं । सम्मार्ज्जनादिनिक्षिप्त-धूल्यादौ । জঞ্জাল । तत्पर्य्यायः—सङ्करः (अ), अवस्करः (अटो) सङ्कारः (शब्द) ।

**अवकुन्थनम्** । क्ली । आकुनादे ।

**अवकुशः** । पुं । गोलाङ्गूलवानरे । अयं पर्णमृग जातीयः । सु सू. ४६ अ. ।

**अवकूलनम्** । क्ली । अग्नावुष्णीकरणे । च. द अतिसा. चि. । "अङ्गारेष्ववकूलयेत् ।"

**अवकेशी** । त्रि । अफलवृक्षे । हे. च. ।

**अवक्रः** । पुं । सरलवृक्षे । সরল গাছ ।

**अवगण्डः** । पुं । गण्डदेशस्थव्रणे । বয়েসফোঁড়া । मं पुटकुली । त्रिका. ।

**अवगथः** । पुं । प्रातःस्नाने ।

**अवगाहः** । पुं । स्नाने । स्नानगृहे ।

**अवगाहनम्** । क्ली । स्नाने । मज्जनपूर्व्वकस्नाने । तत्पर्य्यायः,—अवगाहः वगाहः निमज्जनं शिरःस्नानं अम्भसि मज्जन (के. ) ।

**अवगाहस्वेदः** । पुं । अवगाहनेन स्वेदे । वा. सू. १७अ ।

**अवगीर्णः** । पुं । अपानान्निर्गते द्रव्ये ।

**अवगुण्ठनम्** । क्ली । योषित्शिरःप्रावरणे, स्त्रीमुखाच्छादने ।

**अवगुण्ठितम्** । क्ली । चूर्णिते । গুঁড়া । त्रिका.

**अवग्रहः** । पुं । गजललाटदेशे । हारा. ।

**अवग्राहः** । पुं अवहारके । হাঙ্গর इति लोके ।

**अपघातः** । पुं । आघात-विशेषे । तण्डुलादिकण्डने, हे. । চালকাঁড়া । अवघात ।

**अवचूर्णम्** । क्ली । स्थूलचूर्णे । মোটা গুঁড়া ।

**अवचूर्णितः** । त्रि । चूर्णिते । तत्पर्य्यायः—अवध्वस्तः अपध्वस्तः । अटो ।

**अवचूलकम्** । क्ली । चामरे । त्रि ।

**अवच्छकः** । पुं । भक्तिमति रोगिणि । वै. निघ. ।

**अवटः (टी)** । पुं । नाडीव्रणे । कूपे । मे. ।

**अवटीट:** । त्रि । नतनासिके । थान्दा । अम. । तत्पर्य्याय:,—अवनाट: अवभ्रट: । अ. ।

**अवटु:** । स्त्री । स्त्री । ग्रीवापश्चाद्भागे । रत्ना. रा. नि. व. १८ । पुं । वृक्षविशेषे । उ. । रन्ध्रे । कूपे । हे. ।

**अवड:** । पुं । मन्यापृष्ठभागे । वै. निघ. ।

**अवतंस:** । पुं, क्ली । कर्णभूषणे । अ. ।

**अवतमसम्** । क्ली । अल्पान्धकारे । अ. ।

**अवतानम्** । क्ली । चन्द्रातपे । চাঁদোয়া ।

**अवताप:** । पुं । अजाविज्वरे । गजवे. ।

**अवतारणम्** । क्ली । भूतादिग्रहे । वस्त्राञ्चले । मे. यापन्नकं ।

**अवतारणिका** । स्त्री । नौकायाम् ।

**अवतोका (दा)** । स्त्री । स्रवद्गर्भायां गवि, पतितगर्भायां गवि । हला. ।

**अवदन्त:** । पुं । बालके । বালা । वै. निघ. ।

**अवदंश:** । पुं । सुरापानरुचिजनकभक्ष्यद्रव्ये । চাট । हला. । शिग्रुवृक्षे । कृष्णशिग्रौ । সজিনা । वै. निघ. ।

**अवदलनम्** । क्ली । मर्द्दनक्रियायाम् ।

**अवदात:** । पुं । श्वेतवर्णे । पीतवर्णे च । अ. ।

**अवदानम्** । क्ली । उशीरे । अ. टी. । खनित्रे । খোন্তা ।

**अवदान्त:** । पुं । शिग्रुवृक्षे । वै निघ ।

**अवदारणम्** । क्ली । खनित्रे ।

**अवदाहं (कम्)** । क्ली । लामज्जकतृणे । বেণার ন্যায় শাদা তৃণ । भा पू. १व. । वीरण-मूले । গন্ধবেণা । मं पिंवलावाला । वै. निघ. ।

**अवदाहेष्टम्** । क्ली । वीरणमूले । গন্ধবেণা । अ. टी ।

**अवदाहेष्टकापथम्** । क्ली । उशीरे । अ. टी. भ. ।

**अवदीर्णम्** । त्रि । द्रवीभूत घृतादौ । विदारिते । ফাটা ।

**अवदोह:** । पुं । दुग्धे । त्रिका. ।

**अवध्वंस:** । पुं । अवचूर्णने । গুঁড়া করণ । मे. ।

**अवध्वस्त:** । त्रि । अवचूर्णिते । मे. तचतुष्कं ।

**अवनम्** । क्ली । प्रीणने । अ ।

**अवना (नी)** । स्त्री । त्रायमाणायां । গোও-য়ালিয়া, বলা লতা । रा. नि. व. ५ ।

**अवनाट:** । त्रि । नतनासिके । থান্দা । अम. ।

**अवनीसारा** । स्त्री । कदल्याम् । वै. निघ. ।

**अवन्ति(न्ती)सोमम्** । क्ली । काञ्जिके । प. मु. । हारा. । रा. नि. व. १५ ।

**अवपाटिका** । स्त्री । क्षुद्ररोगान्तर्गतशूकरोगे । "अल्पीय:खां यदा हर्षाद्बलाद्गच्छेत् स्त्रियं नर: । हस्ताभिघातादथवा चर्म्मण्युद्वर्त्तिते बलात् । यस्या-वपाट्यते चर्म्म तां विद्यादवपाटिकाम्" ॥ मा. नि. ।

**अवपीड:** । पुं । पञ्चविधनस्यकर्म्मान्यतमे शिरो-नस्ये । स च शोधनस्तम्भनभेदेन द्विविध: । अव-पीड्यते यस्मात् स अवपीड इति । "वपीड्य दीयते यस्मात् अवपीडस्तत: स्मृत: । कल्कीकृतादौषधाद्य: पीडितो निसृतोरस: । सोऽवपीड: समुद्दिष्ट: तीक्ष्णद्रव्यसमुद्भव: । स गलरोगादौ शस्त: ।" प. प. ४ख. । "गलरोगे सन्निपाते निद्रायां विषमज्वरे । मनोविकारे कृमिषु युज्यते चावपीडनम् ॥" वै. निघ. नस्यवि. ।

**अवबाहुक:** । पुं । See अपबाहुक: ।

**अवभासिका (नी)** । स्त्री । वर्णच्छायाप्रका-शिकायां त्वचि । सा च व्रीहेरष्टादशभागप्रमाणा । শরীরের বাহিরের চর্ম্ম । सु. शा. ५अ. ।

**अवभ्रट:** । त्रि । नतनासिके । থাঁদা । इति लोके । अम. ।

**अवमन्थ: (क:)** । पुं । शूकरोगभेदे । लक्ष-णम्—"दीर्घा बह्वस्तु पिडका दीर्य्यन्ते मध्यतस्तु या: । सोऽवमन्थ: कफासृग्भ्यां वेदना रोमहर्ष-कृत् ॥ सु. नि. १४अ. । कर्णपालीरोगभेदे । सु. सू. १६ अ. ।

**अवमर्द्द: (नम्)** । पुं, क्ली । पीडने । अम. ।

**अवमोटनम्** । क्ली । आमोटने । মোচ্‌ড়া-ওন । मा. नि. वा. व्या. ।

**अवयव:** । पुं । शरीरावयवे । रा. नि व. १८ ।

**अवयवस्थानम्** । क्ली । शरीरे । वै. निघ. ।

**अवयवी** । पुं । पक्षिणि । वै. निघ. ।

**अवरम्** । क्ली । गजपश्चाज्जङ्घादौ । अम. ।



**अवरदारुकम्** । क्ली । तन्नामकस्थावरविषा-न्तर्गतपत्रविषे । सु. कल्प २अ. । See पत्रविषम् ।

**अवरिका** । स्त्री । धन्याके । ধনে । रा. नि व, ६ ।

**अवरोह:** । पुं । वटादिवृक्षस्याधोविलम्बि-काण्डा-कारावयवविशेषे । বটাদির নামাল্ ।

**अवरोहक:** । पुं । अश्वगन्धायां । मद. व. १ ।

**अवरोहशाखी** । पुं । प्लक्षवृक्षे । পাকুড় গাছ । रा. नि. व ११ ।

**अवरोहिका** । स्त्री । अश्वगन्धायां । रा. नि. ।

**अवरोही (इन्)** । पुं । वटवृक्षे । বটগাছ । रा नि व ११ ।

**अवलग्न:** । पुं । मध्यप्रदेशे । মাজা ।

**अवलम्बन: (क:)** । पुं । श्लेष्मविशेषे । तस्य स्थानं हृदयं, तत्कर्म्म च स्वशक्त्या हृदयालम्बनं त्रिकसन्धारणञ्च । भा. ।

**अवलक्ष:** । पुं । श्वेतवर्णे । स्वामिनि ।

**अवला** । स्त्री । नार्य्याम् । रत्ना. । प्रियङ्गौ । प्रयोगा. गलगण्डे । "मधुलीध्रावलासर्ज ।"

**अवलुञ्चनम्** । क्ली । मुण्डने । शैथिल्ये । सु. सू. २५ अ. ।

**अवलेप:** । पुं । गर्व्वे । लेपने । भूषणे । मे. पचतुष्कं ।

**अवलेपनम्** । क्ली । लेपने । म्रक्षणे । লেপা, মাথান ।

**अवलेह:**
**अवलेहिका** } पुं. स्त्री । लेह्यौषधे । চাটিবার ঔষধ । जिह्वया आस्वादने । सायं स्यादवलेहिका । च. द ज्वर-चि. । क्वाथादे: पुन: पाकात् घनत्वमवलेह: । "क्वाथादीयं: पुन: पाकाद्घनत्वं सा रसक्रिया ।" प प्र. १अ. । मात्रा च तस्य पलमिता । "सोऽवलेहश्च लेह: स्यात्त-न्मात्रा स्यात्पलोन्मिता । सिता चतुर्गुणा कार्य्या चूर्णाच्च द्विगुणो गुड: । द्रवं चतुर्गुणं दद्यात्... । सुपक्वे तन्तुमत्त्वं स्यादवलेहोऽप्सु मज्जति । दुग्धमिक्षुरसं यूषं पञ्चमूलकषायजं । वासाक्वाथं यथायोग्यमनुपानं प्रशस्यते ।" भा. । अयमूर्द्ध्वजत्रुगदहर: सायञ्च प्रयोज्य: । ऊर्द्ध्वजत्रुगदघ्नी या सा सायमव-लेहिका । च. ।

**अवलेहनम्** । क्ली । लेहने । চাটা ।

**अवल्क:** । पुं । मेषशृङ्ग्याम् । মেড়াশিঙে, গাড়লশিঙে । वै. निघ. ।

**अवल्गुजा** । स्त्री । कृष्णसोमराज्याम् । হাকুচ । भैष भल्ला. गुडे. ।

**अवल्गुज: (जा)** । पुं, स्त्री । कृष्णसोमराज्यां । सु. चि. २५ अ. । सोमराज्याम् । হাকুচ । भा. पू १ भ. भैष. कुष्ठ-चि. ।

**अवल्गुजवीजम्** । क्ली । सोमराजीवीजे ।

**अवल्गुजीजम्** । क्ली । सोमराजीवीजे ।

**अवशकुथिका** । स्त्री । जानुदेशे । पदबन्धन-वस्त्रविशेषे ।

**अवश्य:**
**अवश्या** } पुं, स्त्री । तुषारे । भा. म, ४भं. शिरोरोग-अ विभेदके । प्राग्वा-तावश्यायमैथुनै: । भल्ला. गुडे. ।

**अवश्याय:** । पुं । शिशिरे । च द. पि. ज्व-रह्नीकादि. । "अवश्यायस्थित पाकम ।" तुषारे । भा. म. ४भ. नासारो. । "अवश्यायकमैथुनवास्य-सेकै: ।"

**अवश्याया** । स्त्री । कुज्झटिकायाम् ।

**अवष्टम्भ:** । पुं । स्वर्णे । मे. ।

**अवष्वाणम्** । क्ली । भक्षणे । हे. च ।

**अवसक्थिका** । स्त्री । खट्वायाम् । থাট । तत्पर्य्याय:,—पर्य्यस्तिका परिकर: पर्य्यङ्क: । हे ।

**अवसाद:** । पुं । अवसन्नतायाम् ।

**अवसादनम्** । क्ली । उन्नतव्रणस्य निम्नीकरणे । सु. चि १अ ।

**अवसादनी** । स्त्री । महाकरञ्जे ।

**अवसितम्** । क्ली । मर्दितधान्ये ।

**अवसेक:** । पुं । रक्तमोक्षणे । च चि. ३अ. ।

**अवसेकिम:** । पुं । वटके । বড়া । व. निघ. ।

**अवसेचनम्** क्ली । जलसेचने । सु. ।

**अवस्कन्द:** । पुं । अवगाहनस्नाने ।

**अवस्कयनी** । स्त्री । बहुदिनानन्तरप्रसूतायां गवि । কেলেন গাই ।

**अवस्कर:** । पुं । विष्ठायाम् । गुह्यदेशे । मे,

रचतुष्क । सम्मार्ज्जनादि-निचित-धूल्यादौ । आवर्ज्जन। ।

**अवस्करकः** । पुं । सम्मार्ज्जन्याम् । ঝাঁটা ।

**अवहस्तः** । पुं । हस्तपृष्ठे । হস্তোপরিভাগ । हे च ।

**अवहारः (कः)** । पुं । ग्राहाख्यजलजन्तौ । হাঙ্গর, জলহস্তী । मे. रचतुष्क ।

**अवहालिका** । स्त्री । प्राचीरे । পাঁচির ।

**अवक्षिप्तसन्धिः** । पुं । सन्धिविश्लेषे । सन्धिच्युतं सा्नीचत्वेनावस्थानम् । सन्ध्यस्थ्नोरतिक्रान्तता वेदना च । सु. नि १५ अ. ।

**अवक्षेपणी** । स्त्री । वल्गायाम् । লাগাম । हे च ।

**अवाक्पुष्पी** । स्त्री । हेमपुष्प्यां । र. मा. । मधुरिकायाम् । মৌরী । रत्ना. । रा नि व. ४ । शतपुष्पायाम् । শুল্‌ফা । मं वडीशोंफ । रा नि व ४ । च. द. अर्श-चि. सुनिषण्ण-चाङ्गेरीघृते । चोरपुष्प्याम् । চোরহুলী চোরখড়্‌কী । रत्ना. ।

**अवाक्शिराः (स्)** । पुं । निम्नशिरस्के ।

**अवाचीनः** । त्रि । विपर्य्यस्त । मे. नचतुष्क ।

**अवाच्यदेशः** । पुं । योनौ । त्रिका ।

**अवानम्** । क्लीं । शुष्कफलादौ । श. र. ।

**अवारम्** । क्लीं । नद्यादेः पूर्व्वपारे । ওপার ।

**अवारपारः** । पुं । समुद्रे ।

**अविः** । पुं । मेषे । भा. पू. । मूषिके । कम्बले । मे. । मत्स्यभेदे । प्राचीरे । वायौ । स्त्री । कुलत्थिकायां । वनकुलथ । अविः कुलाली चक्षुष्या कुम्भकारी कुलत्थिका । र मा. । मेष्याम् । त्रिका. । ऋतुमत्यां । अम. ।

**अविकम्** । क्लीं । हीरके । रा. नि. ।

**अविकमांसम्** । क्लीं । मेषमांसे । वै. निघ. ।

**अविगन्धनी**
**अविगन्धिका**
**अविगन्धी**
} स्त्री । अजगन्धायाम् । वनयमान । तिलोणीवर्व्वरीति च लोके रा. नि. व ४ ।

**अविग्नः (घः)** । पुं । पानीयामलके । सा. सु. । करमर्द्दवृक्षे । করম্চা গাছ । मं करवंद । अम. ।

**अवितक्रम्** । क्लीं । मेषीतक्रे । ভেড়ার দুধের ঘোল । गुणाः—अवितक्रमपथ्यं स्यादम्लं दुर्गन्धकारकं । दीपनं कटुकं ग्राहि लेखनं च पित्तजित् । रक्तदोषकरञ्चैव कफवातविनाशकम् ॥ द्रव्यगु. ।

**अवित्यजः** । पुं । पारदे । शब्दकल्पद्रुमः । रा. नि. व. १३ । अत्र अवित्यज इत्येवं पाठो राजनिघण्टौ दृश्यते ।

**अविदग्धः** । त्रि । अनम्ले । বিজয়র अजीर्णचि. ।

**अविदग्धम्**
**अविदुग्धम्**
} क्लीं । मेषीदुग्धे । हला । See आविकक्षीरम् ।

**अविदु(दू)ष्यम्** । क्लीं । मेषीदुग्धे । ভেড়ার দুধ । हला. ।

**अविद्धकर्णा** । स्त्री । पाठायाम् । আকনাদি । अ टी. । सा. कौ. । जातीफलावर्त्याम् । भृङ्गराजे । ভীমরাজ । अ टी. ।

**अविद्धकर्णिका (र्णी)** । स्त्री । पाठायाम् । আকনাদি । अ टी. । जातीफलावर्त्याम् ।

**अविद्धा** । स्त्री । दुष्टशिराव्यधने । "बहुशःचता क्षीनशस्त्रप्रणिधानेनोपविद्धा ।" सु. शा. ८ अ. ।

**अविन्धनः** । पुं । वाड़वानले ।

**अविपत्ति (त्ति) करचूर्णम्** । क्लीं । अम्लपित्ताधिकारे हितकरं चूर्णम् । पाठः—"त्रिकटु त्रिफला मुस्तं वीजञ्चैव विड़ङ्गजम् । एलापत्रं सर्व्वञ्च समभागं विचूर्णयेत् । यावन्त्येतानि चूर्णानि लवङ्गं तत्समं भवेत् । सर्व्वचूर्णद्विगुणितं त्रिवृच्चूर्णञ्च दापयेत् । सर्व्वमेकीकृतं यावत्तावच्छर्करयान्वितम् । सर्व्वमेकीकृतं पात्रे स्निग्धभाण्डे निधापयेत् । भोजनादौ ततोऽन्ते च मध्वाज्याभ्यामिदं शुभम् ॥" र. सा सं. । भैष. । प्रयोगा. सा कौ. । त्रिकट्वादि प्रत्येकं १ तो. लवङ्गचूर्णं ११ तो. त्रिवृन्मूलचूर्णं ४४ तो. शर्करा ६६ तो. ।

**अविपटः** । पुं । ऊर्णामयवस्त्रे, कम्बलादौ ।

**अविपाकः** । पुं । अपरिपाके ।

**अविप्रियः** । पुं । श्यामाकतृणे । শামা ঘাস । रा. नि. व १६ ।

**अविप्रिया** । स्त्री । श्यामालतायाम । रा. नि. । श्वेतालताचुपे । रा. नि. व. ५ ।

**अविभुक्** । पुं । व्याघ्रे । मं लांड़गा । वै. निघ. ।



**अविमरोष(स)म्** । क्लीं । आविक्षीरे । ভেড়ীর দুধ্ । हला. है. च. ।

**अविमुक्तकः** । पुं । माधवीलतायां । वै. निघ ।

**अविमुक्तका** । स्त्री । तिन्दुकवृक्षे । তেঁদ । हिं केंदु । मं टेंभुरणी । काकतिन्दुके । वै. निघ. ।

**अविमोचम्** । क्लीं । आविकक्षीरे । र. मा. ।

**अविला** । स्त्री । मेष्याम् । हे. च. ।

**अविवृक्षः** । पुं । मेषशृङ्ग्याम् । মেড়াশিঙে ।

**अविशिरम्** । क्लीं । सूर्य्यावर्त्तफले । হুড়হুড়ের ফল । वै. निघ. ।

**अविश्वासा** । स्त्री । चिरप्रसूतगवि । श. च ।

**अविषः** । पुं । समुद्रे । आकाशे ।

**अविषा** । स्त्री । अतिविषायाम् । रा. नि. व. ६ । निर्व्विषतृणे । निर्व्विषी घास । वै. निघ ।

**अविसोढम्** । क्लीं । अविक्षीरे । ভেড়ীর দুধ্ ।

**अविस्रम्** । त्रि । पूतिगन्धरहिते । च. चि. २अ. ।

**अवी** । स्त्री । वनकुलत्थे । र. मा. । ऋतुमत्यां स्त्रियाम् । हे. च. ।

**अवीजधर्म्मी** । त्रि । यो वीजधर्म्मी न भवति । सु. शा. १अ. ।

**अवीजा** । स्त्री । गोस्तनीसदृशगुणद्राक्षायाम् । কিস্‌মিস্ বেদানা इति लोके । "अवीजान्या स्वल्पगुणा गोस्तनीसदृशी गुणैः ।" भा. ।

**अवीदुग्धम्** । क्लीं । मेषीदुग्धे । अ. द. ।

**अवीमूत्रम्** । क्लीं । मेषीमूत्रे । च. द. ।

**अवुकः** । पुं । छागे । श र. ।

**अवुद्धः** । पुं । पुष्पवृक्षभेदे । मं पत्थरफुल । वै. निघ. ।

**अवेद्यः** । पुं । गोवत्से । श. र. ।

**अवेला** । स्त्री । पूगचर्व्विते । চিবন গুপারি ।

**अवोदम्** । क्लीं । आर्द्रके । जटा. ।

**अब्दः** । पुं । वत्सरे । मुस्तके । मेघे । ( अटीरा ) । क्लीं । अभ्रे ।

**अब्दसारः** । पुं । कर्पूरभेदे । रा. ।

**अव्यक्तम्** । क्लीं । प्रकृतौ । "अखिलस्य जगतः सम्भवहेतुरव्यक्तं नाम ।" सु. शा. १अ । आत्मनि । हे च. ।

**अव्यक्तरागः** । पुं । ईषल्लोहितवर्णे । तत्पर्य्यायः,—अरुणः (अ) ताम्रः गौरः । (ज) ।

**अव्यक्ता** । स्त्री । कृष्णगोकर्ण्याम् । কাল অপরাজিতা । मं काली गोकर्णी । वै. निघ. ।

**अव्यङ्गः** । अविकलाङ्गे । स्त्री । शूकशिम्ब्याम् । আলাকুশী ।

**अव्यञ्जनः** । त्रि । शृङ्गहीने । हला. ।

**अव्यण्डः (ण्डा)** । पुं, स्त्री । भूम्यामलक्याम् । ভূঁই আমলা । कपिकच्छौ । আলাকুশী । च. चि. ३अ. ।

**अव्यथा** । स्त्री । स्थलकमलिन्याम् । স্থলপদ্ম । भा. पू. १भ. । रा. नि. व. ११ । हरीतक्याम् । महाश्रावण्यां । মুণ্ডিরী । भा. पू. १भ. गु. व. । आमलक्यां । लक्षणायां । লক্ষণামূল ।

**अव्यथिः (थी)** । पुं । अश्वे । वा. सू. ४अ प्रजास्था. ।

**अव्यथिषः** । पुं । समुद्रे । सूर्य्ये । सि. कौ. ।

**अव्यथिषी** । स्त्री । पृथिव्याम् । अर्द्धरात्रे ।

**अव्यथ्या** । स्त्री । हरीतक्याम् । भा. पू. १भ. ।

**अव्यधा** । स्त्री । दुष्टशिरावेधने । "अशस्त्रकृता अव्यधा ।" सु. शा. ८अ. ।

**अव्यया** । स्त्री । गोरक्षमुण्ड्यां । গোরক্ষচাকুলি । मं. गोरखमुंडी । वै. निघ. ।

**अव्रणशुक्रः** । पुं । नेत्रस्य कृष्णभागगतरोगविशेषे । अयमभिष्यन्दजः ज्वालायुक्तः शङ्खेन्दुकुन्दसदृशवर्णः नभस्थतनुमेघाकृतिश्च सुसाध्यः । लक्षणम्—दृष्टेः समीपे न भवेत्तु यच्च न चावगाढं न संस्रवेद्धि । न वेदनावन्न च युग्मशुक्रं तत्सिद्धिमाप्नोति कदाचिदेव । सितं यदा भात्यसितप्रदेशे स्यन्दात्मकं नातिरुगस्रुयुक्तं । विहायसीवाभ्रदलानुकारि तदव्रणं साध्यतमं वदन्ति ॥ सु. उ. ५ अ. । स्यन्दात्मकं कृष्णगतं सचोषं शङ्खेन्दुकुन्दप्रतिमावभासं । वैहायसाभ्रप्रतनुप्रकाशमथाव्रणं साध्यतमं वदन्ति । गम्भीरजातं बहुलञ्च शुक्रं चिरोत्थितञ्चापि वदन्ति कृच्छ्रम् । विच्छिन्नमध्यं पिशितावृतं वा चलं शिरासूक्ष्ममदृष्टिकृच्च । द्वित्वागतं लोहितमन्ततश्च चिरोत्थितञ्चापि विवर्ज्जनीयम् ॥ मा. नि. ।

**अशकुम्भी** । स्त्री । पानीयीपरिजवृक्षे । পাম । र. मा ।

**अशनम्।** क्ली। भोजने। अन्ने। र॰ नि॰ व॰ २०। पुं। पीतशालि। च॰ सू॰ ४अ॰ ४३ दशकं। चित्रक-वृक्षे। भल्लातकवृक्षे। वै॰ निघ॰।

**अश(स)नकः।** पुं। असनपुष्पाकारधान्यविशेषे। सु॰ सू॰ ४६ अ॰।

**अशनपर्णी।** पुं, स्त्री। विजयसार इति प्रसिद्धे वृक्षे। माराटी इति च पश्चिमदेशे। तत्पर्य्यायः,—वातकः शीतलः शीतलवातकः असनपर्णी सनपर्णी शणपर्णी शीतः शीतकः। गोकर्णीलतायां। অপরাজিতা। अम॰।

**अशनपुष्पः।** पुं। अशनपुष्पाकारशालौ। षष्टिक-धान्यविशेष। सु॰ सू॰ ४६अ॰।

**अशनमल्लिका।** स्त्री। आस्फोतायाम्। হাপর-মালী। च॰ द॰।

**अशना (या)।** स्त्री। क्षुधायाम्। हला॰। शुक्लनिष्पावे। শ্বেত বর্বটি বা শ্বেত শিম্। रा॰ नि॰ व॰ ७।

**अशनिः।** पुं, स्त्री। हीरके। হীরে। वै निघ।

**अशाका (खा)।** स्त्री। शूलीतृणे। शाखा-शून्यलतायाम्। रा. नि॰ व॰ ८।

**अशान्तगन्धाढ्या।** स्त्री। आम्रहरिद्रायाम्। আম-আদা। मं आंबेहलद। वै. निघ॰।

**अशितम्।** क्ली। भक्षणे। खादने। हे॰ च॰।

**अशितम्भवः।** पुं। अन्ने। ভাত।

**अशितलता।** स्त्री। नीलदूर्व्वायाम्। নীল-দূর্বা। वै॰ निघ॰।

**अशिरम्।** क्ली। हीरके। रा. नि॰ व १३। See वज्रम्।

**अशिशिम्बी।** स्त्री। स्वनामख्यातशिम्बीविशेषे। শ্বেত শিম্। मं थोरश्वेतवावे। गुणाः—मधुरा कषाया श्लेष्मपित्तघ्नी व्रणदोषघ्नी शीतला रुचिकरी च। रा. नि॰ व॰ ७।

**अशिश्विका।** स्त्री। अनपत्यायाम्। যে স্ত্রীর সন্তান নাই। श॰ र॰।

**अशीता**
**अशुक्ला** } स्त्री। भूमिकुष्माण्डे। वै. निघ॰।

**अशुक्लजा।** स्त्री। वीरीधान्ये। वै. निघ.।

**अशुचिः।** त्रि। अपवित्रे।

**अशूकजः (कः)।** पुं। मुण्डशाली। रा. नि॰ व. १६।

**अशृतम्।** क्ली। अपक्वे।

**अशोकः।** पुं। (Saraca Indica, Jonesia As´oka.) स्वनामख्यातवृक्षे। অশোকগাছ। मे.। हिं अशोगी। स लोहितकुसुम इति। सु॰ सू॰ ३८ लोध्रादिः। तत्पर्य्यायः,—अङ्गनाप्रियः वीतशोकः। शब्द, मा॰ शोकनाशः विशोकः वञ्जुलद्रुमः वञ्जुलः मधुपुष्पः अपशोकः कङ्केल्लिः केलिकः रक्तपल्लवः चित्रः विचित्रः कर्णपूरः सुभगः दोहली ताम्रपल्लवः रोगितरुः हेमपुष्पः वामाङ्घ्रि-घातनः पिण्डीपुष्पः नटः रामा पल्लवद्रुः (रा), कान्ताङ्घ्रिदोहदः (त्रि), चक्रगुच्छः (श)। अशोकवृक्षगुणाः—शीतलः हृद्यः पित्तदाहघ्नः गुल्म-शूलोदराध्मानघ्नं रक्तरोधकः क्रिमिघ्नश्च। रा॰ नि. व. १०। तिक्तः ग्राही वर्ण्यः कषायः अपची-तृष्णादाहक्रिमिशोषविषरक्तघ्नश्च। भा॰ पू॰ १भ॰। मात्रा २ तो.। वेतसे। तिनिशे। वै. निघ॰। क्ली। पारदे। मे॰।

**अशोकघृतम्।** क्ली। प्रदराधिकारे प्रयोज्यं। पाठः—अशोकवल्कलप्रस्थं तोयाढ़कविपाचितम्। पादस्थेन घृतप्रस्थं जीरकक्वाथसंयुतम्। तण्डुलाम्बु त्वजाक्षीरं घृततुल्यं प्रदापयेत्। तथैव केशराजस्य प्रस्थमेकं भिषग्वरः। जीवनीयैः पियालैस्तु परुषैः सरसाञ्जनैः। यष्ट्याह्वाशोकमूलञ्च मृद्वीका च शतावरी। तण्डुलीयकमूलञ्च कल्कैरेभिः पला-र्द्धकैः। शर्करायाः पलान्यष्टौ सिद्धशीते प्रदा-पयेत्। जीवकर्षभकौ मेदे काकोल्यौ सूर्पपर्णिके। जीवन्ती मधुकञ्चेति दशको जीवनो गणः॥ भैष॰। प्रयोगा॰ असृग्दर-चि॰। गव्यघृतं ४ श॰ क्वाथार्थम् अशोकमूलत्वक् २ श. जलं १६ श, शेषः ४ श.। तथा जीरकं २ श॰ जलं १६ श॰ शेषः ४ श. केश॰ राजरसः ४श. तण्डुलोदक ४श. छागदुग्धं ४ श.। कल्कार्थं जीवकऋषभक मेदा महामेदा काकोली क्षीरकाकोली मुद्गपर्णी माषपर्णी जीवन्ती यष्टि-मधु पियालबीजं परुषकफलं रसाञ्जनं यष्टिमधु अशोकमूलं द्राक्षा शतावरी तण्डुलीयकमूलञ्चेत्येषां प्रत्येकं ४ तो.। पाकान्ते शर्करा मिश्रणीया। भैष॰। सा को॰।

**अशोकरोहिणी।** स्त्री। कटुतिक्तायाम्। कट्की। रा. नि॰ व. ६। च॰ सू॰ ४अ॰ संज्ञा-स्थापने। See कटुकी। लताशोके, स च अशोक-दलसदृशदलः। रत्ना॰।

**अशोका।** स्त्री। कटुरोहिण्याम्। कट्की। मे.। भा॰ पू. १भ॰।

**अशोकारिः।** पुं। कदम्बवृक्षे। কদমগাছ। मं कलम्ब। श॰ च.।

**अशोथनेत्रपाकः।** पुं। विनाशोथं नेत्रपाके। लक्षणम्—शोथहीनानि लिङ्गानि नेत्रपाके त्वशो-थजे। मा नि॰। कण्डूपदेहाश्रुयुक्तः पक्वोदुम्बरनिभः संरम्भी च भवति।

**अश्म।** क्ली। स्वर्णमाक्षिके। वै॰ निघ।

**अश्मकदली।** स्त्री। कदलीविशेषे। পাহাড়ে কলা। मं लोखंडकेल। रा॰ नि. व॰ ११।

**अश्मकरम्।** क्ली। स्वर्णे। रत्ना॰।

**अश्मकच्छूहा।** स्त्री। वेल्लन्तरवृक्षे। मं वेल-तूर। वै. निघ॰।

**अश्मकेतुः।** स्त्री। क्षुद्रपाषाणभेदक्षुपे। পাথর-চূর। रा. नि. व॰ ५।

**अश्मगर्भः।** पुं। हरिन्मणौ। पान्ना इति लोके। भा पू॰ १भ॰। क्ली। मरकतमणौ। हे॰ च॰।

**अश्मगर्भकः।** पुं। तिनिशवृक्षे। मद॰ व. ५।

**अश्मगर्भजम्।** क्ली। मरकतमणौ। पान्ना। रा॰ नि॰ व॰ १३।

**अश्मघ्नः।** पुं। पाषाणभेदक्षुपे। পাথরকুচা। रा॰ नि॰ व॰ ५। भा. पू॰ १भ॰।

**अश्मजम्।** क्ली। मुण्डलौहे। रा॰ नि॰ व॰ १३। च॰ द॰ पाण्डु-चि॰। शिलाजतुनि। मद॰ व॰ ४। हैमा॰। प॰ मु॰। र॰ मा॰। रा॰ नि॰ व॰ १३। गैरिके।

**अश्मजतु (कम्)।** क्ली। शिलाजतुनि। च.। द. पाण्डु-चि, योगराजे। रा. नि. व॰ १३। सि. यो॰ र. पि॰ चि खण्डखाद्ये। "शुभाश्मजतुकं त्वचम्।"

**अश्मन्।** पुं। प्रस्तरे।

**अश्मन्तः (कः)।** पुं। पाषाणभेदे। च॰ सू॰ १अ॰। कोविदारवृक्षसदृशोऽम्लपत्रे अम्लोट इति लोकप्रसिद्धे वृक्षे। भा म॰ ४भ. गर्भ-चि॰। "अश्मन्तकस्तिला: कृष्णाः।" च. सू॰ ४ अ॰। उद्दालकवृक्षे। भा॰ पू. १भ.। कोविदारवृक्षे। भा॰ पू॰ २भ॰। चुके। চুকা। र॰ मा॰। तृण-विशेषे। অম্লকুচাই। सु॰ चि २५अ। स्वनाम-ख्यातवृक्षे। আবুটা इति च लोके प्रसिद्धे। मं अस्मर। तत्पर्य्यायः,—इन्दुकः कुवाली अम्ल-पत्रः स्लक्ष्णत्वक् नीलपत्रः यमलपत्रकः। गुणाः—मधुरकषायः शीतलः पित्तघ्नः भूतनिवारणश्च। रा॰ नि॰ व. ९।

**अश्मन्त(क)म्।** क्ली। चुल्ल्याम्। मे॰ नान्तकं। दीपाधारच्छादने। আঙ্কারিয়া। मे.।

**अश्मपुष्पम्।** क्ली। शैलजे। শিলারস। अम.।

**अश्मभाण्डम्।** क्ली। लौहभाण्डविशेषे। হামামদিস্তা। श॰ च॰। खल्ले। खल इति भाषा।

**अश्मभित्।** पुं। पाषाणभेदे। পাথরকুচা। प॰ मु॰ रत्ना॰। कवाटवक्रवृक्षे। করাড়িয়া इति लोके। र॰ मा॰। कवाटचक्रमिति। रत्ना॰।

**अश्मभेदः (कः)।** पुं। (Coleusamboinicus, Syn, Coleus aromaticus.) क्षुप-विशेषे। পাথরকুচা, হিমসাগর, হাতাজো इति भाषा। सु॰ सू॰ ३८, ३९ अ॰। हिं पाथरचुर। तत्पर्य्यायः,—अश्मभेदः अश्मभित् (र), अश्मघ्नः शिलाभेदः अश्मभेदकः श्वेता उपलभेदी उपलभित् शिलागर्भज नगभित्। संशोधनः। वा॰ सू॰ १५, ३६ अ॰। "वल्लन्तरारणिक-वृकवृषाश्मभेदः।" गुणाः—शीतलः तुवरः वस्तिशोधनः सारकः तिक्तः प्रमेहार्शःकृच्छ्राश्मरीघ्नश्च। मद॰ व॰ १। मधुरस्तिक्तः मेहतृष्णादाहमूत्रकृच्छ्राश्मरीहरः शीतलश्च। रा. नि व. ५।

**अश्मयोनिः (नी)।** पुं, स्त्री। नीलमणौ। अ॰ टी॰। अश्मन्तकवृक्षे। আপটা। मद॰ व॰ १०।

**अश्मरी।** स्त्री। Stone or Gravel. वस्ति-पाषाणरोगे। ঝিলে, পাথুরী। मं मुतखड़ा। सा चतुर्विधा श्लेष्माधिष्ठाना च—श्लेष्मणा वातेन पित्तेन शुक्रेण चेति। ततासंशोधनशीलस्यापथ्य-कारिणः प्रकुपितः श्लेष्मा मूत्रसंपृक्तोऽनुप्रविश्य वस्तिमश्मरीं जनयति। तासां पूर्व्वरूपाणि वस्ति-पीड़ारोचकौ मूत्रकृच्छ्रं वस्तिशिरोमुष्कशेफसां वेदना कृच्छ्रा ज्वरावसादौ वस्तगन्धित्वं मूत्रस्येति। जातासु नाभिवस्तिसेवनीमेहनेष्वन्यतमस्मिन् मेहतो वेदना मूत्रधारासङ्ग सरुधिरमूत्रता मूत्रविकिरणञ्च

गोमेदकप्रकाशमनाविलं ससिकतं विसृजति। धावनलङ्घनप्लवनपृष्ठयानाध्वगमनैश्चास्य वेदना भवति। अत श्लेष्माश्मरी श्लेष्मलमन्नमभ्यवहरतोऽत्यर्थमुपलिप्याधः परिवृद्धिं प्राप्य वस्तिमुखमधिष्ठाय स्रोतो निरुणद्धि। तस्य मूत्रप्रतीघाताद्दाल्यते भिद्यते निस्तुद्यत इव च वस्तिर्गुरुः शीतश्च भवति। अश्मरी चात्र श्वेता स्निग्धा महती कुक्कुटाण्डाभा मधूकपुष्पवर्णाभा च भवति। पित्ताश्मरी सरक्ता पीतावभासा कृष्णा भल्लातकास्थिप्रतिमा। वाताश्मरी श्यामा परुषा विषमा खरा कदम्बपुष्पवत्कण्टकाचिता च भवति। शुक्राश्मरी शुक्रनिमित्ता भवति तेन सा मूत्रकृच्छ्रं वस्तिवेदनां वृषणयोश्च श्वयथुमापादयति पीड़ितमात्रश्च तत्रैव विलयं गच्छति। प्रतिक्रिया, अश्मरी दारुणो व्याधिरन्तकप्रतिमो मतः। तरुणो भेषजैः साध्यः प्रवृद्धश्छेदमर्हति। तस्य पूर्व्वेषु रूपेषु स्नेहादिक्रम इष्यते। सु. नि. ३ अ.।

**अश्मरीकृच्छ्रः।** पुं। मूत्रकृच्छ्रे। वै. निघ.।

**अश्मरीघ्नः।** पुं। वरुणवृक्षे। বরুণ গাছ। मं वायवरणा। त्रिका.।

**अश्मरीप्रियः।** पुं। महाशालिधान्ये। प. मु.।

**अश्मरीभेदः।** पुं। पाषाणभेदवृक्षे। मद. व. १।

**अश्मरीभेदनः।** पुं। पाषाणभेदके। পাথরকুচী। वै. निघ.।

**अश्मरीरिपुः।** पुं। बृहच्चणके। বড় চণা। रत्ना.। चेतेची। जनार। हिं भुट्टा।

**अश्मरीशर्करा।** स्त्री। तन्नामकरोगविशेषे। शर्करा सिकता मेहो भस्माख्योऽश्मरीवैकृतम्। अश्मर्याः शर्करा ज्ञेया तुल्यव्यञ्जनवेदना। पवनेऽनुगुणे सा तु निरेत्यल्पा विशेषतः। सा भिन्नमूर्त्तिर्वातेन शर्करेत्यभिधीयते। हृत्पीड़ासक्थिसदनं कुक्षिशूलः सवेपथुः। तृष्णोर्द्ध्वगोऽनिलः कार्ष्ण्यं दौर्ब्बल्यं पाण्डुगात्रता। अरोचकाविपाकौ तु शर्करार्त्ते भवन्ति च। मूत्रमार्गप्रवृत्ता सा सक्ता कुर्य्यादुपद्रवान्॥ दौर्ब्बल्यं सदनं कार्श्यं कुक्षिशूलमरोचकं। इत्यादि। सु. नि. ३ अ।

**अश्मरीहरः।** पुं। देवधान्ये। দেধান। वरुणवृक्षे। मं वायवरणा। र. मा.।

**अश्मर्य्याहरणयन्त्रम्।** क्ली। तदाहरणयन्त्रे। अश्मर्य्याहरणं सर्पफणावद्यन्त्रमग्रतः। कङ्किदतिः।

**अश्मलाक्षं (क्षा)।** क्ली, स्त्री। शिलाजतुनि। रा. नि. व. १३।

**अश्मसम्भवम्।** क्ली। शिलाजतुनि। र. सा. सं।

**अश्मसारः।** पुं, क्ली। लौहे। अम। लौहादिधातौ। सारलौह। ইস্পাৎ।

**अश्मसारा।** स्त्री। काष्ठकदल्याम्। পাহাড়ে কলা। वै. निघ.।

**अश्मसुता।** स्त्री। पाठायाम्। আকনাদি। मं पहाड़मूल। वै. निघ.।

**अश्महा (हन्)।** पुं। पाषाणभेदके। পাথরকুচী।

**अश्महृत्।** पुं, क्ली। कवाटवक्रच्छदे। করাড়িয়া। रत्ना.। शिलाजतुनि।

**अश्मीरः।** पुं। मूत्रकृच्छ्रे। ভণা।

**अश्मोत्थम्।** क्ली। शिलाजतुनि। रा. नि. व. १३।

**अश्यामा।** स्त्री। श्वेतत्रिवृतायाम्।

**अस्रम्।** क्ली। रुधिरे। रक्ते। अ. टी.। नेत्रोदके।

**अस्रज्ञा।** स्त्री। अरोचके। रा. नि. व. २०।

**अस्रु।** क्ली। नेत्रजले। চক্ষের জল। अम.। तत्पर्य्यायः,—नेत्राम्बु रोदनं अस्रं अस्र अस्रु, वास्पं (अ), लोचं (ज)।

**अस्रुनाली।** स्त्री। भगन्दररोगे। वै निघ.।

**अस्रुपातः।** पुं। अश्वस्य चक्षुषोरधःप्रदेशे। "अस्रुपातः स दिष्टः प्रदेशश्चक्षुषोरधः। तत्रावर्त्तो भवेद्भीमः स्वामिनः कुलनाशनः।" जयद. ३ अ.।

**अश्वः।** पुं। घोटके। ঘোড়া। तन्मांसगुणाः—उष्णं वातघ्नं लघु बलकरं पित्तदाहजनकमतिसेवनाद्भवति। रा. नि. व. १७। लवणं वह्निकफपित्तकरं वातहृत् बृंहणं बल्यं चक्षुष्यं लघु मधुरञ्च। भा. पू.। अश्वेन भ्रमणगुणाः—वातकोपनाङ्गस्थैर्य्यबलाग्निकारित्वम्। राज.। "वाग्मी लुब्धो दयालुश्च विप्रः स परिकीर्त्तितः। शूरश्च दृढ़मन्युश्च क्षत्त्रियस्तुरगः स्मृतः॥ पापिनः कलुषाः रुक्षा दुष्टा वैश्याः प्रकीर्त्तिताः। विरूपा विषमाश्चैव शूद्राश्चण्डा उदाहृताः॥" उत्तमा मध्यमा नीचाः कनीयांसस्तथापरे। चतुर्धा वाजिनो भूमौ जायन्ते



देशसंश्रयात्॥ ताजिकाः खरशाणाश्च उत्तराश्चोत्तमा हयाः। गोजिकाणाश्च केकाणाः प्रौढ़ाहाराश्च मध्यमाः॥ भाण्डजाश्चोत्तमांसाश्च राजशूलाश्च मध्यमाः। गोह्वराः शावराश्चैव सिन्धुपाराः कनीयसः॥ अन्यदेशोद्भवा ये च नीचनीचाश्च ते स्मृताः। वाजिनो जलजाः केचिद्वह्निजातास्तथापरे॥ समीरप्रभवाश्चान्ये उलूकमृगजास्तथा। जलोद्भवा द्विजातीयाः क्षत्त्रिया वह्निसम्भवाः॥ समीरप्रभवा वैश्या एणोलूकाश्च शूद्रजाः। विवेकी सघृणो विप्रस्तेजस्वी क्षत्त्रियो बली॥ दुष्टभावस्तथा वैश्यः शूद्रो निःसत्त्वकातरः। ब्राह्मणः सामवाही च भद्रवाही च क्षत्त्रियः॥ उपादानेन वैश्यः स्याच्छूद्रो दण्डेन ताड़ितः। पुष्पगन्धः सदा विप्रः क्षत्त्रियोऽगुरुगन्धकः॥ घृतगन्धः सदा वैश्यो मीनामोदी च शूद्रकः। विप्राह्वा वाजिनः सर्व्वे क्षत्त्रियो भूपतेः सदा॥ द्वौ वैश्यस्याथ शूद्रस्य शूद्र एव सुखावहः। केचिदिच्छन्ति भूपानां सर्वेऽश्वा वाहनोचिताः॥ तदर्थं भूतले यस्माच्छालिहोत्रेण निर्म्मिताः। ब्राह्मणाः क्षेमकृत्येषु सिद्धिं गच्छन्ति वाजिनः॥ क्षत्त्रिया युद्धकार्य्येषु वैश्या वित्तार्ज्जने सदा। शूद्राश्चान्येषु कृत्येषु ज्ञात्वैवं वाजिनः सदा॥ आरोहेत् सर्व्वकार्य्येषु यदीच्छेच्छाश्वतीं श्रियम्।" इति अश्वजातिः। नकुल. २ अ.। "सप्त वर्णा भवन्तीह सर्व्वेषां वाजिनां ध्रुवं। तानहं कीर्त्तयिष्यामि भेदैर्जातानेकधा॥ सितोऽरुणस्तथा पीतः सारङ्गः पिङ्ग एव च। नीलः कृष्णोऽथ सर्व्वेषां श्वेतः श्रेष्ठतमः स्मृतः। पट्टार्हो भूपतेर्वाजी सर्व्वश्वेतः प्रशस्यते। तदभावे यथा प्रोक्तास्तथा श्रेष्ठाः क्रमेण च॥ श्वेतः प्रालेयसङ्काशो रक्तः कुङ्कुमसन्निभः। हरिद्रासदृशः पीतः सारङ्गः कर्व्वुरः स्मृतः॥ पिङ्गः कपिलकाकारो नीलो दूर्व्वाग्रसन्निभः। कृष्णो जम्बूफलाकारः शास्त्रज्ञैः समुदाहृतः॥ पीताभः श्वेतपादो यस्तथा स्यादसितलोचनः। चक्रवाकः स विज्ञेयो राजार्हो वाजिसत्तमः॥ सर्व्वश्वेतो हयो यस्तु भवेन्मेचककर्णकः। स वाजी वाजिमेधार्हः श्यामकर्णः प्रकीर्त्तितः॥ मुखे चन्द्रकसम्बीतो जम्बूफलसमाकृतिः। श्वेतपादः स विज्ञेयो मल्लिकाख्यः स पूजितः॥" नकुल. ३ अ.। "सार्द्धं यवत्रयं प्रोक्तमङ्गुलस्य तपोधनैः। प्रमाणं शालिहोत्राद्यैर्वाजिशास्त्रविशारदैः॥ हस्तोऽङ्गुलानां विंशत्या चतुरुत्तरया स्मृतः। चतुर्हस्तैस्तु विख्यातः शास्त्रोक्त उत्तमो हयः॥ अर्द्धहस्तेन हीनस्तु भवेन्मध्यस्तुरङ्गमः। मुष्टिशून्येन हस्तेन हीनश्चाप्यधमः स्मृतः॥ ऊर्द्धमानप्रमाणन्तु परिणाहं विनिर्द्दिशेत्। उत्तमाणां च मध्यानां हीनानाञ्च वाजिनाम्॥ अर्द्धसप्तमहस्तन्तु श्रेष्ठं दैर्घ्येण निर्द्दिशेत्। षड्भिर्मुष्टिविहीनैश्च मध्यमञ्च विचक्षणः॥ पञ्चहस्तप्रमाणन्तु जघन्यः समुदाहृतः। द्वात्रिंशदङ्गुलं वक्त्रमुत्तमाश्वस्य कीर्त्तितम्॥ पृष्ठं वक्षः कटिश्चैव मुखतुल्यं समादिशेत्। अङ्गुलद्वयहीनन्तु मुखादि मध्यमाधमम्॥ निर्द्दिशेन्मतिमांश्चैव वाजिशास्त्रविशारदः। सप्ताङ्गुलखरश्चैव उत्तमाश्वस्य कीर्त्तितं॥ षड़ङ्गुलो भवेन्मध्यो जघन्यश्चतुरङ्गुलः। षोड़शाङ्गुलदीर्घा तु जङ्घा चैवोत्तमा स्मृता॥ चतुर्द्दशः तथा मध्ये हीने च द्वादशाङ्गुलः। एवंविधप्रमाणन्तु निर्द्दिष्टं शास्त्रशालिभिः॥ अपाङ्गात्पुच्छमूलन्तु दैर्घ्येणाश्वं प्रमाणयेत्। खुरान्तात्ककुदं यावदूर्द्धमानेन बुद्धिमान्॥" इति परिमाणादि। जयद. ३ अ.। "अश्वानां जन्मदेशांस्तु प्रवक्ष्याम्यनुपूर्व्वशः। उत्तमानाञ्च मध्यानां हीनानां यत्र सम्भवः॥ उत्तमास्ताजिकाः प्रोक्तास्तथा पारसिकाश्च ये। केकाणाश्चैव ये वाह्लाः पृष्ठजा ये च कीर्त्तिताः॥ तुरौजाताश्च कोराश्च भूरुष्टामाण्डजाश्च ये। पार्व्वताः सैन्धवा मध्यास्तथा सारस्वता हयाः॥ सम्भलाश्चाकुलाश्चैव जटदेशोद्भवाश्च ये। अधमाष्टङ्गणैः सार्द्धं ह्रये प्राग्दक्षिणोद्भवाः॥ वृत्तदीर्घाञ्चितग्रीवा ह्रस्वकर्णा महाजवाः। महाकाया महोरस्का निस्त्रासास्ताजिका मताः॥ अत्यन्तविनतं येषां निर्मांसञ्च मुखं भवेत्। पीनेन कटिदेशेन मुखराश्च भवन्ति ते॥ अश्वन्याश्च महासाराः संग्रामे चैव पूजिताः। अपि शस्त्रहताङ्गाश्च नैव मुञ्चन्ति सादिनम्॥ पारसीकाः ताजिकाभाः केकाणाः केचिदुन्नताः। स्थूलाः स्थूलशरीराश्च प्रधाना दीर्घपृष्ठकाः॥ केकाणदेशजातानां मध्यमानाञ्च वाजिनाम्। ताजिकैः सदृशं वक्तुं बाहुल्येन विनिर्द्दिशेत्॥ सुवृत्तदेहस्तीक्ष्णाश्च सप्रमाणेन मध्यमः। तुरुजातः समुद्दिष्टः किञ्चित्स्थूलो मनाग्जवः॥ अतिस्थूलोऽतितीक्ष्णश्च ह्रस्वग्रीवस्तुरुस्तथा। तुरुष्कः कीर्त्तितो वाजी स्थूलवक्त्रमुखश्च यः॥ केकाणाकारदेहस्तु भवेन्माण्डविको हयः। शान्त्या चैव प्रमाणेन केवलं नैव तत्समः॥ सिन्धुदेशोद्भवो वाजी पृष्ठन्यस्तारुकोरकः। आननञ्चापि दीर्घञ्च तस्य पृष्ठं प्रकीर्त्तितम्॥ शान्त्या चैव जवेनापि रणशूरस्त्वजाघनः। सादिभक्तो गच्छतो

याति ताजिकादधिकस्तथा ॥ परिमण्डलदेहास्तु तीक्ष्णकर्णमुखा हयाः। पक्वदेशोद्भवा दृष्टास्तथा सारस्वताश्च ये ॥ लम्बकर्णोऽजटश्चैव श्राकुलः परिकीर्त्तितः। सांभ्रलः श्लिष्टजानुश्च जटालश्चा कुलीपमः ॥ वर्त्तुलश्चापि ऊस्वश्च टङ्कणः परिकीर्त्तितः। दाक्षिणात्यो भवेद्गुण्ठो सोऽधन्यः सर्व्ववाजिनाम् ॥ जवहीना महादुष्टाः पूर्व्वदेशसमुद्भवाः। वाजिवद्देशराणाञ्च देशं विन्द्याद्विचक्षणः ॥" इति जन्मदेशः। "काकुदी कृष्णजिह्वश्च कृष्णशिफाण्डतालुकः। कराली हीनदन्तश्च शृङ्गी चाधिकदन्तकः ॥ एकाण्डश्चैव जाताण्डः कञ्चुकी त्रिसरी तथा। मार्जारपादी व्याघ्राभस्त्रिकर्णो द्विखुरी स्तनी ॥ यमजो वामनश्चैव कुक्कुत्तित्तिरसन्निभः। (काकतित्तिरसन्निभः। इति वा पाठः)। वानराक्षो विड़ालाक्षो मुषली चन्द्रवृद्धकः ॥ येषां पृष्ठे हतो भर्त्ता जातदन्तस्तथैव च। एते दोषान्विता वाहा न ग्राह्या भूतिमिच्छता ॥ धनप्राणहरा ह्येते बन्धुविग्रहकारकाः। एषां चिह्नं प्रवक्ष्यामि येन जानन्ति सादिनः ॥ पूर्व्वशास्त्रानुसारेण मुनीनां वचनं यथा। आवर्त्तो यस्य ककुदि काकुदी स उदाहृतः ॥ कराली चाधरे दन्तौ जायेते यस्य चोत्तरा। चतुर्भिः पञ्चभिश्चैव हीनदन्तः प्रकीर्त्तितः ॥ सप्तभिश्चाष्टभिर्दन्तैः ख्यातश्चाधिकदन्तकः। अङ्गुष्ठपर्व्वसङ्काशः छागशृङ्गोपमस्तथा ॥ जम्बूवदररूपश्च तथाचामलकोपमः। आम्रास्थिसदृशश्चापि हरीतक्याः फलोपमः ॥ दग्धचर्म्मनिभश्चापि बालुसंस्थान एव च। कील: कर्णान्तरे यस्य केशान्ते चापि दृश्यते ॥ धौरेयः सर्व्वपापानां शृङ्गी वाहः स कीर्त्तितः। एवंविधेन शृङ्गेन शृङ्गी राष्ट्रेन वासयेत् ॥ एकेन लम्बमानेन मुष्केणैकाण्डसंज्ञकः। अत्यन्तरोमशाभ्यान्तु ताभ्यां जाताण्ड उच्यते ॥ स्कन्धे वक्षसि बाह्वोश्च अंसदेशे तथैव च। अन्यवर्णो भवेद्राजी कञ्चुकी स प्रकीर्त्तितः ॥ यस्यान्यवर्णरेखा स्यात् पादे कूर्चे च वाजिनः। मार्जारपादः प्रोक्तोऽसौ न धन्यः कुलनाशनः ॥ अन्यवर्णस्य वाहस्य शिरः कृष्णं यदा भवेत्। त्रिसरी नाम स प्रोक्तो भर्त्तुः कुलविनाशनः ॥" इत्यादि। मुखरोगोऽक्षिरोगश्च लिङ्गितः। कर्णरोगश्च कासश्च श्वासो हिक्का व्रणस्तथा ॥ ज. द. ३अ.।

**अश्वकः**। पुं। कुलिङ्गपक्षिणि। वै. निघ.।

**अश्वकन्दकः**। पुं। अश्वगन्धायाम्। रत्ना.।

**अश्वकन्दिका**। स्त्री। वनस्पतिविशेषे। अश्वगन्धायाम्। र. मा.।

**अश्वकर्णः (कः) (र्णिका)**। पुं, स्त्री। Shorea robusta.) शालवृक्षे। শাল গাছ। सु. सू. ३८अ.। च. सू. ४अ.। सर्जरसभेदे। সজশাল—বিশেষ। रा. नि. व. २३। शाखु इति च लोके। तत्पर्य्यायः,—जरणद्रुमः ताम्रप्रसवः शस्यसम्बरणः धन्यः दीर्घपर्णः कुशिकः कौशिकः। भा. म. ४भ. रेवतीचि.। धवाश्वकर्णककुभः। गुणाः—कटुः तिक्तः स्निग्धः रक्तपित्तघ्नः ऊरोविस्फोटकण्डूघ्नः। रा. नि. व. ९। कषायः व्रणस्वेदकफकृमिघ्नः व्रध्नविद्रधिवाधिर्य्ययोनिकर्णरोगघ्नश्च। भा. पू. १भ. वटादिव.। मात्रा २ माशा। पलाशभेदे। सु. सू. ३६अ.। शरीरे। लताशाले। শিয়াড়ি লতা। प. मु.।

**अश्वकर्णम्**। क्ली। काण्डभग्ननामास्थिभङ्गविशेषे। यत्रास्थि अश्वकर्णवदुन्नतं तिष्ठति। सु. नि. १५अ.। See भग्नम्।

**अश्वकातरा (रिका)**
**अश्वकाथरिका** } स्त्री। हयकातरायाम्। ঘোড়া কাথরা। मं घोड़ेकाथर। गुणाः—तिक्ता वातघ्नी दीपनी। काथरा हयपर्य्यायैः काथरा वै प्रकीर्त्तिता। रा. नि.।

**अश्वखरजः**। पुं। अश्वतरे। খচ্চোর। रा. नि.।

**अश्वखुरः**। पुं। नखीनामगन्धद्रव्ये। नखी। रत्ना.। घोटकखुरे। रा. नि.।

**अश्वखुरा (री)**। स्त्री। श्वेतापराजितायाम्। रा. नि. व. ३।

**अश्वगन्धा (न्धिका)**। स्त्री। (Withania somnifera or physalis flexuosa.) स्वनामख्यातक्षुपविशेषे। অশ্বগন্ধা। हिं असगन्ध, वाराहीगेठी। मं आसंध, आसांदु, अंगुर, आसंधिका। रा. नि. व. ४। तत्पर्य्यायः,—अश्वकन्दिका काम्बुका अश्वावरोहकः (र, अश्वारोहा (हिं), हयगन्धा वाजिगन्धा अश्वगन्धिका बल्या तुरगगन्धा कम्बुका अश्वावरोहिका तुरगी बलजा वाजिनी अवरोहिका वराहकर्णी हया पुष्टिदा बलदा पुष्टिः पीवरा पलाशपर्णी वातघ्नी श्यामला कामरूपिणी काला प्रियकरी गन्धपत्री वराप्रिया



वाराहपत्री वाराहकर्णी। गुणाः—सा शुक्रवृद्धिकरत्वात् शुक्रला। तथा कटूष्णा तिक्ता बल्या वातहरी कासश्वासक्षयव्रणघ्नी च। रा. नि. व. ४। रसायनो वातश्लेष्मश्वित्रशोथघ्नी च। भा. म. ख. १भ.। अश्वगन्धानिलश्लेष्मशोफश्वित्रक्षयापहा। बल्या रसायनी तिक्ता कषायोष्णातिशुक्रला ॥ मद. व. १। वातकफघ्नी श्वित्रशोथक्षयरोगघ्नी बल्या रसायना तिक्ता कषाया उष्णा अतिशुक्रला च। भा. पू. १भ.। मात्रा २ तो.। तत्शोधनं यथा प्रयोगा,—पञ्चपल्लवतोयेन गन्धानां क्षालनं तथा। शोषणञ्चापि संस्कारो विशेषश्चात्र वक्ष्यते ॥

**अश्वगन्धाघृतम्**। क्ली। प्रथमं बालरोगाधिकारे। पाठः—"पादकल्कोऽश्वगन्धाया क्षीरे दशगुणे पचेत्। "घृतं ४श. अश्वगन्धाकल्कः १श. दुग्धं ४श. जलं १६ श.। सा कौ.। मतान्तरे दुग्धं ४० श.। भैष.। द्वितीयं वातव्याधौ—"अश्वगन्धाकषाये च कल्के क्षीरे चतुर्गुणे। घृतं पक्वन्तु वातघ्नं।" अश्वगन्धा ६।० श. वारि ६४ श. शेषः १६ श. घृतं ४ श. दुग्धं १६ श. यथाविधि पाच्यम्। च. द. वा. व्या. चि.। मतान्तरे घृतं ४श. आर्द्राश्वगन्धामूलं ६४ प जलं ६४श. शेषः १६श. दुग्धं १६श. अश्वगन्धाकल्कः ८ प.। प्रयोगा. वा. व्या. चि.। तृतीयचतुर्थे वृहदभिधाने वातव्याधौ वृष्ये च उक्ते। पाठौ—"अश्वगन्धापलशतं जलद्रोणे विपाचयेत्। अष्टांशशेषं गृह्णीयात् सुपूतं तं रसं तथा। जलद्रोणद्वये छागमांसात्पलशतद्वयं। पक्वं काहेन कर्त्तव्यः क्वाथः पाकावशेषितः। क्वाथद्वये तथा गव्यक्षीरप्रस्थचतुष्टये। काकोल्यौ मधुकं मेदे जीवन्ती जीवकं बला। एला शतावरी द्राक्षा विदारी कृष्णजीरकं। मुद्गपर्णी शूकशिम्बी पिप्पल्यृषभकं तथा। एतेषां कार्षिकैर्भागैः घृतप्रस्थं विपाचयेत्। सिता चतुष्पलं शीते क्षिपेन्मधु पलाष्टकम् ॥" प्रयोगा.। "अश्वगन्धापलशतं शुभदेशसमुत्थितं। पुण्येऽह्नि समुद्धृत्य साधयेत् श्लक्ष्णकुट्टितम्। द्रोणेऽम्भसि शनैस्तावत् यावत्पादावशेषितं। सर्पिःप्रस्थं पचेत्तेन गव्यं क्षीरं चतुर्गुणम्। कषायं छागमांसस्य दद्याच्छतद्वयस्य च। कल्कानि श्लक्ष्णपिष्टानि कर्षमात्राणि दापयेत्। काकोलीयुग्मऋद्धी द्वे द्वे मेदे द्व च जीरके। स्वयंगुप्ता ऋषभको एला मधुकमेव च। मृद्वीकाशूर्पपर्ण्यौ च जीवन्ती चपला बला। नारायणी विदारी च दत्त्वा सम्यग्विपाचयेत्। सिता-माक्षिकयोः शीते गृह्णीयात् कुड़वे पृथक्। लिह्यात्पाणितलम्......॥ अत्र छागमांसशतद्वये जलद्रोणद्वयं, तुलाद्रव्ये जलद्रोण इति वचनात्। घृतं ४ श. अश्वगन्धा १२॥० श. जलं ६४ श. पादशेषः १६ श. छागमांसं २५ श. जलं १२८ श. पादशेषः ३२ श. गव्यदुग्धं १६ श.। कल्कार्थं काकोल्यादिकस्य मिलितस्य शरावः। शूर्पपर्ण्यौ मुद्गपर्णी माषपर्णी च। पाकसिद्धौ शीते च शर्करा ॥० श. मधुनश्च शरावो देयः। रस. र.। भैष.।

**अश्वगन्धातैलम्**। क्ली। प्रथमं वातव्याधौ हितम्। तिलतैलं ४श. क्वाथार्थमश्वगन्धा १२॥० श. वारि ६४श. शेषः १६श. दुग्धं १६श. मृणालादिकल्कद्रव्याणां मिलित्वा १श. यथाविधि पाच्यम्। च. द. प्रयोगा.। मिश्रभावेनेदं कार्श्याधिकारे उक्तम्। द्वितीय रसायनाधिकारे—अत्र कल्कार्थाश्वगन्धादीनां मिलितशरावमितं, दुग्धं १६ श. तिलतैलं ४ श.। "अश्वगन्धावरीकुष्ठमांसीसिंहीफलान्वितं। चतुर्गुणेन दुग्धेन तिलतैलं विपाचयेत् ॥ च. द.।

**अश्वगन्धाद्यचूर्णम्**। क्ली। स्वरभङ्गनाशनमिदं। यथा—"अश्वगन्धाजमोदा च पाठा त्रिकटुकं त्रिकं। शतपुष्पं ब्रह्मबीजं सैन्धवञ्च समं समम्। एतदर्द्धं वचा चैव चूर्णितं मधुसर्पिषा। भक्षयेत्कर्षमात्रन्तु जीर्णे क्षीरभोजनम् ॥" अत्र ब्रह्मबीजं पलाशबीजं सर्व्वचूर्णार्द्धं ग्राह्यम्। रस. र.।

**अश्वगन्धिका**। स्त्री। अश्वगन्धा। रा.।

**अश्वगोष्ठम्**। क्ली। वाजिशालायाम्। আস্তাবল।

**अश्वघ्नः**। पुं। श्वेतकरवीरवृक्षे। শ্বেতকরবী গাছ। रा. नि. व. १०।

**अश्वजीवनः**। पुं। चणके। ছোলা। हिं चना। वै. निघ.।

**अश्वतरः**। पुं। अश्वखरजे। स च अश्वायां गर्द्दभाज्जातः। খচ্চোর ঘোড়া। तन्मांसं बल्यं बृंहणं कफपित्तकरञ्च। मद. व. १२।

**अश्वत्थः**। पुं। (Ficus religiosa, Syn, Urustigmareligiosum.) स्वनामख्यातवृक्षे। অশোথ গাছ। हिं पिपर। मं पिंपल। ताबिचेट्ट। तें कुलुजुव्विचेट्टु। प. मु.। सु. सू. ३८अ. न्यग्रोधादिव.। तत्पर्य्यायः,—केशवालयः चैत्यद्रुः

(त्रि), बोधितरुः कृष्णावासः ( हे ) चैत्यवृक्षः (र), नागबन्धुः, देवात्मा महाद्रुमः ( श ), कपीतनः ( मे ), बोधिद्रुमः चलदलः पिप्पलः कुञ्जराशनः ( अ ), अच्युतावासः चलपत्रः पवित्रकः शुभदः बोधिवृक्षः याज्ञिकः गजभक्षकः श्रीमान् क्षीरद्रुमः विप्रः मङ्गल्यः श्यामलः गुह्यपुष्पः सेव्यः सत्यः शुचिद्रुमः धनुर्वृक्षः । गुणाः—मधुरः कषायः शीतलः कफपित्तघ्नः रक्तदाहशमनः योनिदोषघ्नः अश्वत्थवृक्षस्य फलानि पक्वान्यतीव हृद्यानि च शीतलानि। कुर्व्वन्ति पित्तास्रविषार्त्तिदाहं विच्छर्द्दिं शोषारुचिदोषनाशम् ॥ रा. नि व. ११ । दुर्जरः शीतः । मद. व. ५ । पित्तश्लेष्मव्रणास्रजित् गुरुः तुवरक योनिशोधनः वर्ण्यश्च । भा. पू. १भ वटादिव. ।

**अश्वत्थकम्** । क्ली । मल्लिकापुष्पदले । मल्लिकाफুলের পাপড়ী । वै. निघ. ।

**अश्वत्थफलका (ला)** । स्त्री । हवुषायां । हवुष वृक्ष । हिं होहवेर । मं लवुशिरणी । भा पू. १भ. ।

**अश्वत्थभित् (भेदः)** । पुं । नन्दीवृक्षे । हिं वालियापीपर । भा. पू. १भ. वटादिव. ।

**अश्वत्थसन्निभा** । स्त्री । अश्वत्थिकायाम् । गया अश्वथ । रा. नि. व. ११ ।

**अश्वत्था (त्थी)** । स्त्री । क्षुद्राश्वत्थवृक्षे । गया अश्वथ । रा. नि व. १ । श्रीवल्लीवृक्षे । रा. नि. व. ८ ।

**अश्वत्थिका (त्थी)** । स्त्री । क्षुद्रपत्राश्वत्थवृक्षे । गया अश्वथ । हिं पिप्ली । मं अश्वथी । कं हेनरलि । तत्पर्य्यायः,—लघुपत्री पवित्रा ह्रस्वपत्रिका पिप्पलीका वनस्था । गुणाः—मधुरा कषाया रक्तपित्तघ्नी विषघ्नी दाहघ्नी गर्भिण्यां हिता च । रा. नि. व. ११ ।

**अश्वदंष्ट्रकः** । पुं । गोक्षुरवृक्षे । वै. निघ । हिंस्रजन्तुविशेषे । सु. ।

**अश्वदंष्ट्रा** । स्त्री । गोक्षुरके । भा. पू. १भ. ।

**अश्वनाला** । स्त्री । ब्रह्मसर्पनामक-सर्पविशेषे । त्रि ।

**अश्वनाशः (कः) (नः)** । पुं । श्वेतकरवीरे । रा. नि. व. १० ।

**अश्वपर्णिका (र्णी)** । स्त्री । भूतकेशीलतायाम् ।

**अश्वपालः** । पुं । अश्वरक्षके । सहिष इति भाषा ।

**अश्वपुच्छकः** । पुं । खड्गलतायाम् । श. च. । তরবালের থাপ ।

**अश्वपुच्छा** । स्त्री । पृश्निपर्ण्यां । চাকুলিয়া । माषपर्ण्याम् । रा. नि. व. ।

**अश्वपुच्छिका (च्छी)** । स्त्री । माषपर्णीलतायाम् । माषाणी । रा. नि. व. ४ ।

**अश्वपुटभावना** । स्त्री । द्वात्रिंशत्पलपरिमितद्रव्यस्य भावनायाम् । वै. निघ ।

**अश्वपुत्री** । स्त्री । सल्लकीवृक्षे । रत्ना. । द्रवन्त्यां । ইন্দুরকাণী । वै. निघ. ।

**अश्वबला** । स्त्री । मेथिकायाम् । नारीशाके । নারীশাক । गुणाः—शाकमाश्वबलं रूक्षं बहुविण्मूत्रमारुतम् । सु । See नारी ।

**अश्ववालः** । पुं । काशतृणे । त्रिका. ।

**अश्वभा** । स्त्री । सौदामन्याम् । বিদ্যুৎ ।

**अश्वमारकः** । पुं । श्वेतकरवीरे । শ্বেত করবী । उपोदिकायां । পূঁই । पालङ्कशाके । सु. चि. १अ. । करवीरे । सु सू. ३८ । लाक्षादिव. । भा पू १भ । श्वेतकरवीरमूले । इदञ्च स्थावरविषान्तर्गतमूलविषम् । एवं सुगन्धरोहिषमपि । सु. कल्प. २अ. । See मूलविषम् ।

**अश्वमाराख्यः** । पुं । (Nerium odorum.) श्वेतकरवीरवृक्षे । শ্বেতকরবী গাছ । रा. नि. व. १० ।

**अश्वमालः** । पुं । सर्पविशेषे । वै. निघ. ।

**अश्वमूत्रम्** । क्ली । घोटकमूत्रे । ঘোড়ার মুৎ । गुणाः—तिक्तोष्णं तीक्ष्णं विषघ्नं वातकोपशमनं पित्तकरं दीपनञ्च । रा. नि. व. १५ । भेदि कफदद्रुक्रिमिघ्नञ्च । मद व. ८ ।

**अश्वमूत्रिका (त्री)** । स्त्री । शल्लकीवृक्षे । जटा ।

**अश्वमोहकः** । पुं । श्वेतकरवीरे । वै. निघ. ।

**अश्वयानम्** । क्ली । अश्वेन भ्रमणे । ঘোড়ায় চড়া । गुणाः—घोटकारोहणं वातपित्ताग्निश्रमकृन्मतं । मेदोवर्णकफघ्नञ्च हितं तन्नलिनां वरम् ॥ दिनचर्य्या ।



**अश्वयुजः** । पुं । आश्विनमासि । सु. सू. ६अ. ।

**अश्वरक्षकः** । पुं । अश्वपाल । ঘোড়ার সহিষ ।

**अश्वरिपुः** । पुं । करवीरवृक्षे । महिषे । भा. ।

**अश्वरोधकः** । पुं । श्वेतकरवीर-वृक्षे । শ্বেতকরবী গাছ । रा. नि. व. १० ।

**अश्वरोहका (हा)** । स्त्री । अश्वगन्धायां ।

**अश्वलम्** । क्ली । क्षुद्रतृणविशेषे । ঘোড়েসর । "अश्वलञ्च तृणं बल्यं रुच्यं पशुहितावहम् ।" वै. निघ. ।

**अश्वलोमा** । पुं । सर्पविशेष । त्रिका. ।

**अश्ववराहः** । पुं । वाराहीकन्दे । वै. निघ. ।

**अश्ववर्च्चः (स्)** । क्ली । अश्वविष्ठायाम् । ঘোড়ার নাদ ।

**अश्ववहः (वाहः)** । पुं । अश्ववाहके । जटा. ।

**अश्ववारणः** । पुं । गवये । हे. च. । [हीरादौ ।

**अश्ववैद्यः** । पुं । अश्वशास्त्र-प्रणेतरि शालि-

**अश्ववैद्यकम्** । क्ली । अश्वचिकित्साशास्त्रे । तच्च बहुविधं शालिहोत्रनकुलभोजजयदत्तादिप्रणीतम् ।

**अश्वशाला** । स्त्री । मन्दुरायाम् । हला. ।

**अश्वहनः** । पुं । करवीरवृक्षे । रत्ना. । भैष. भग्न. चि. निशाद्यतैले ।

**अश्वहा** । पुं । श्वेतकरवीरवृक्षे । मद. व. । ।

**अश्वक्षुरा (रिका) (री)** । स्त्री । श्वेतापराजितायाम् । कृष्णापराजितायाम् । वै. निघ. । नखीनामगन्धद्रव्यविशेषे ।

**अश्वा** । स्त्री । अजमोदायां । अश्वगन्धायां । अपामार्गे । इन्द्रवारुण्यां । রাখালশশা । घोटक्यां ।

**अश्वातक्रम्** । क्ली । घोटकीतक्रे । ঘোড়ার দুধের ঘোল । गुणाः—अश्वातक्रन्तु तुवरं किञ्चिद्वातकरं मतं । अग्निदीप्तिकरं रूक्षं नेत्र्यं मूर्च्छाकफापहम् ॥ वै. निघ. ।

**अश्वान्तकः** । पुं । श्वेतकरवीरे । रा नि.व. १० ।

**अश्वारिः** । पुं । करवीरवृक्षे । भैष. कुष्ठ-चि. । मरिचाद्यतैले । महिषे । जटा. ।

**अश्वारोहः (कः)** । पुं । अश्वगन्धायां । रत्ना. ।

**अश्वारोहा** । स्त्री । इन्द्रवारुण्यां । রাখালশশা । अश्वगन्धायां । मे. ।

**अश्वालः** । पुं । उशीरे । क्षुद्रकाशतृणे । रा. नि. व. ८ ।

**अश्वावरोहकः (हिका)** । पुं, स्त्री । अश्वगन्धायां । र. मा. ।

**अश्वासना** । स्त्री । ऋद्धौ । घोटक्याम् । वै. निघ. ।

**अश्वाह्वा** । स्त्री । अश्वगन्धायाम् । व. निघ, वा. व्या. शतावरीतैले, नारायणतैले ।

**अश्वाह्वादिखुरा (री)** । स्त्री । श्वेतापराजितायाम् । रा. नि, व. ३ ।

**अश्वाक्षः** । पुं । देवसर्षपवृक्षे । अम. । वृक्षभेदे । रा. नि. ।

**अश्विजौ** । पुं । अश्विनीकुमारौ ।

**अश्विनी** । स्त्री । जटामांस्याम् । वै. निघ. ।

**अश्विनौ** । पुं । अश्विनीकुमारद्वये । रत्ना. ।

**अश्विभेषजम्** । क्ली । लघुमेषशृङ्ग्यां । মেড়াশিঙে । वै. निघ. ।

**अश्वीघृतम्** । क्ली । घोटकीक्षीरोत्थनवनीतजघृते । गुणाः— कटु मधुरं कषायम् ईषद्दीपनं गुरु मूर्च्छाहरं वाताल्पकरञ्च । रा. नि. व. १५ ।

**अश्वीदधि** । क्ली । घोटकीदुग्धजातदध्नि । ঘোড়ীর দই । मं घोड़िचेदहि । कं कुदिरेयसोसरु । गुणाः—"मधुरकषायरूक्षं कफरोगमूर्च्छाहरं ईषद्वातलं दीपनं नेत्रदोषघ्नञ्च ।" रा. नि. व. १५ ।

**अश्वीनवनीतम्** । क्ली । घोटकीदुग्धजातनवनीते । ঘোড়ার দুধের ননী । गुणाः—कषायं वात-कफघ्नं चक्षुष्यं कटु उष्णं ईषद्वातलञ्च । रा. नि. व. १५ ।

**अश्वीयम्** । क्ली । अश्वसमूहे । त्रि । अश्वहिते ; मे. यत्रिकं ।

**अश्वीक्षीरम्** । क्ली । घोटकीदुग्धे । गुणाः—उष्णं रूक्षं बल्यं वात-कफघ्नं—एकशफक्षीरमात्रं लवणाम्लं लघु स्वादु च । मद. व. ८ ।

**अश्वेता** । स्त्री । कृष्णापराजितायाम् । कृष्णातिविषायाम् । वै. निघ. । गाम्भारीवृक्षे । रा. नि. ।

**अष्टकट्वरतैलम्** । क्ली । तैलमिदं वातरक्ते ऊरुस्तम्भे च हितम् । तैलं ४ श. दधि ४श. तक्रं ३२ श. पिप्पलीशुण्ठी: प्रत्येकं पलद्वयं ( समाकृ

मिलितपलद्वयम्)। यथाविधि पाच्यम्। च. द. ऊ. स्त. चि.। अस्नेहदधि अघृततक्रं ग्राह्यम्। रस. र.।

**अष्टकर्म्म।** क्ली। अष्टादश रसकर्म्मणां मध्ये स्वेदनादि-दीपनपर्य्यन्ते कृतस्याष्टविधसंस्कारे। स्वेदनं मर्द्दनञ्चैव मूर्च्छनोत्थापनन्तथा। पातनं बोधनञ्चैव नियामनमतःपरम्। दीपनञ्चेति संस्काराः सूतस्याष्टौ प्रकीर्त्तिताः॥ र. सा. सं.। त्रिकटु-त्रिफला चित्रककन्यायुक्ते काञ्जिके चतुर्गुणवस्त्रेण दिनं स्वेदनम्। गृहधूमेष्टकाजाजीदग्धोर्णागुड़सैन्धवैः षोड़शांशैः सकाञ्जिकैः त्रिदिनं मर्द्दयेत्। त्रिफला चित्रककन्या वा मूर्च्छना। इत्यादि।

**अष्टका।** स्त्री। वृक्षभेदे। हे. च.।

**अष्टगाधः।** पुं। ऊर्णनाभे। माकड़शा। शरभे।

**अष्टगुणमण्डः।** पुं। भृष्टमुद्गतण्डुलान् चतुर्द्दशगुणे तोये पक्वा, तत्र हिङ्गुसैन्धवधान्यशुण्ठी-मरिचपिप्पलीचूर्णानि संमिश्र्य असिक्थके गृह्णीते मण्डे। गुणाः—क्षुधावर्द्धनः बलकरः वस्तिशोधनश्च। वै. निघ.। अत्र तण्डुलस्याष्टभागाः मुद्गस्य च चत्वारः।

**अष्टधातुः।** पुं। स्वर्णरौप्यताम्रशीषपित्तलरङ्ग-कान्तलौहमुण्डलौहतीक्ष्णलौहेषु। र. सा. सं. टी.।

**अष्टपदी।** स्त्री। वेल इति ख्याते पुष्पक्षुपे। বেলফুলের গাছ। गुणाः—शीता लघु कफपित्त-विषघ्नौ च। मद. व. ३।

**अष्टपलम्।** क्ली। शरावमाने। এক সের। भा.।

**अष्टपलघृतम्।** क्ली। ग्रहणीरोगे। पाकविधिः—मरिचादि १ प. गुड़ १ प. घृतं ८ प. वारि ३२ प. एकत्र पाच्यम्। च. द.।

**अष्टपात् (दः)।** पुं। काश्मीरदेशीयशरभे। मद. व. १२। ऊर्णनाभे। हे. च. ४का.।

**अष्टपादपः।** पुं। वृक्षभेदे। वै. निघ.।

**अष्टपादिका।** स्त्री। शारदमल्लिकायाम्। काष्ठमल्लिका। रत्ना.। आस्फोतायां। হাপর-মালী। प. मु. व. ११।

**अष्टभावः।** पुं। स्तम्भ-स्वेद-रोमाञ्च-स्वरभङ्ग-वैस्वर्य्य-कम्प-वैवर्ण्याश्रुपातेषु। वै. निघ.।

**अष्टमङ्गलः।** पुं। पुच्छोरःखुरकेशास्यैः शुक्ले वाजिनि। हे. च.। यस्य पादाः सिताः सर्व्वे पुच्छं वक्षो मुखं तथा। मूर्द्धजाश्च सिता यस्य तं विद्यादष्टमङ्गलम्॥ ज. द. ३अ.। क्ली। ब्राह्मणगवाग्नि-स्वर्णघृतसूर्य्याश्वनृपचारुचर्य्यासु। वै. निघ.।

**अष्टमङ्गलघृतम्।** क्ली। बालरोगशमने सर्पिषि। तत्राष्टौषधिपक्वं बालानां हितम्। वचाकुष्ठ-ब्राह्मीसर्षपशारिवासैन्धवपिप्पलीकल्केनाष्टमं घृतं घृतपाकविधिना पाच्यम्। घृतं ४ श. कल्कद्रव्य-वचादीनां मिलितशरावं दत्त्वा जलाढकेन पाच्यं। च. द. बाल. चि.। भा. रस. र.।

**अष्टमधुजातिः।** स्त्री। माक्षिक-भ्रामर-क्षौद्र-पौत्तिक-छात्रकार्घ्यौद्दालदालेषु। वै. निघ.।

**अष्टमानम्।** क्ली। प्रसृतिद्वये, ३२ तो.। অর্দ্ধ সের। प. प्र. १ख.।

**अष्टमिका।** स्त्री। तोलचतुष्टयपरिमाणे। प.।

**अष्टमी।** स्त्री। क्षीरकाकोल्याम्। वै. निघ.।

**अष्टमूत्रम्।** क्ली। गोच्छागमेषमहिषाश्वहस्त्युष्ट्र-गर्द्दभीमूत्रेषु। वै. निघ.।

**अष्टमूलम्।** त्रि। त्वङ्मांसशिरास्नाय्वस्थिसन्धि-कोष्ठामर्म्ममूलेषु। सु. चि. १अ।

**अष्टमौक्तिकस्थानम्।** क्ली। शङ्खहस्तिसर्प-मत्स्यमेघवंशशूकरशुक्तिषु। वै निघ।

**अष्टलौहकम्।** क्ली। स्वर्णराप्यताम्ररङ्गशीष-पित्तलकान्तलौहमुण्डलौहतीक्ष्णलौहेषु। पञ्चलौह-समायुक्तं कान्तमुण्डकतीक्ष्णकम्। कल्पितः कथितो धीरैरष्टलौहाभिधो गणः॥ रा. नि. व. २२।

**अष्टवर्गः।** पुं। A class of eight principal medicaments, Rishabhaka &c. मेदाद्यष्टौषधिगणे। यथा—मेदामहामेदाजीवकर्षभकऋद्धिवृद्धिकाकोलीक्षीरकाकोलीषु। प. मु.। जीवकर्षभकौ मेदे काकोल्यावृद्धिवृद्धिकौ। एकत्र मिलितैरेतैरष्टवर्गः प्रकीर्त्तितः॥ रा. नि. व. २२। गुणाः—"शीतलोऽतिशुक्रलः बृंहणः दाहपित्तरक्त-शोषघ्नः स्तन्यकृत् गर्भदायकः।" मद. व. १। "रक्तपित्तव्रणवायुपित्तनाशकश्च।" राज.। "हिमः स्वादुः बृंहणः गुरुः भग्नसन्धानकृत् कामबलासबल-वर्द्धनः तृष्णादाहज्वरमेहक्षयहरश्च।" भा. पू. १भ.।

**अष्टवर्गप्रतिनिधिः।** पुं। मेदादीनामभावे तत्तुल्यगुणद्रव्यग्रहणे। तत्र मेदामहामेदाभावे शतावरी, जीवकर्षभकस्थाने भूमिकुष्माण्डमूलं, काकोलीक्षीरकाकोल्यभावे अश्वगन्धामूलं, ऋद्धि-



वृद्धिस्थाने वाराहीकन्दं तत्तुल्यगुणं क्षिपेत्। भा. पू. १भ.। "मेदाभावे अश्वगन्धा महामेदे च शारिवा। जीवकर्षभकाभावे गुड़ूची वंशलोचना। ऋद्धाभावे बला देया वृद्धाभावे महाबला।" इति च मतान्तरम्।

**अष्टविधान्नम्।** क्ली। चर्व्यचोष्यलेह्यपेयखाद्य-भोज्यभक्ष्यनिष्पेयरूपे भोजनद्रव्ये।

**अष्टाङ्गम्।** क्ली। आयुर्व्वेदस्य स्थानाष्टके। तद्यथा—शल्यं, शालाक्यं, कायचिकित्सा, भूतविद्या कौमारभृत्यं, अगदतन्त्रं, रसायन, वाजीकरणञ्चेति। कायबालग्रहोर्द्ध्वाङ्गशल्यदंष्ट्राजरा-वृषान्। अष्टावङ्गानि तस्याहुः। वा. सू. १ अ। द्रव्याभिधान-गदनिश्चय-शल्य-काय-भूतनिग्रह विष--निग्रह-रसायन-बालचिकित्सासु च। वैद्यकम्।

**अष्टाङ्गघृतम्।** क्ली। वाजीकरणमिदं घृतम्।

**अष्टाङ्गधूपः।** पुं। ज्वरघ्नोऽयं धूपः गुग्गुलु-निम्बपत्र-वचा-कुष्ठ-हरीतकी-यव-श्वेतसर्षप-घृतकृतः। पलङ्कषा निम्बपत्रं वचा कुष्ठं हरीतकी। सर्षपाः सयवाः सर्पिर्धूपनं ज्वरनाशनम्॥ च. द.।

**अष्टाङ्गयोगः।** पुं। योगविशेषे। तद्यथा--कट्फलं पौष्करं शृङ्गी व्योषं यासश्च कारवी। इति संग्रहः।

**अष्टाङ्गरसः।** पुं। अर्शोऽधिकारे। लौहकिट्टं मण्डूरं फलत्रयं त्रिफला। र. सा. सं.। गन्धं रसेन्द्रं मृतलौहकिट्टं फलत्रयं त्र्यूषणवह्निभङ्गम्। कृत्वा समं शाल्मलिकागुडूचीरसेन यामत्रितयं विमर्द्यः॥ माला निष्कमिता। र. सा. सं.।

**अष्टाङ्गलवणम्।** क्ली। कफजन्यमदात्यये योगविशेषे। यथा—"सौवर्चलमजाजी च वृक्षाम्लं साम्लवेतसं। त्वगेलामरिचार्द्धांशं शर्कराभागयोजितम्। एतल्लवणमष्टाङ्गमग्निसन्दीपनं परं। मदात्यये कफप्राये दद्यात्स्रोतोविशोधनम्॥" चर. मदात्यय-चि.। अजाजी जीरकं वृक्षाम्लं महार्द्रकम्। र. सा. सं.। सौवर्चलकृष्णजीरकाम्लवेतसाम्ललोणिकानां प्र. चूर्णं समं त्वगेलामरिचानां प्रत्येकमर्द्धभागः। शर्कराया भागैकं एकत्र मिश्रयेत्। च. द. मदात्यय-चि.।

**अष्टाङ्गवैद्यकम्।** क्ली। शालाक्यकायभूताऽगदबालविषवाजीरसायनेषु अष्टाङ्गवैद्यकेषु।

**अष्टाङ्गहृदयम्।** क्ली। वाभट-विरचिते वैद्यकग्रन्थे। षष्टौ च तानि अङ्गानि तेषां प्रत्येकं हृदयं सारतरसंग्रहणात्। 'क्रियतेऽष्टाङ्गहृदयम्।' वा. सू. १अ.।

**अष्टाङ्गावलेहः (हिका)** पुं. स्त्री। सन्निपातज्वरहिक्काश्वासादौ हितः। कट्फलं कुष्ठ कर्कटशृङ्गी शुण्ठी पिप्पली मरिचं दुरालभा कृष्ण-जीरकं; एषां समभागचूर्णं आर्द्रकरसेन लेह्यं। भैष. ज्वर. चि.। लेहो न मधुना तस्य शीतापचारित्वात्। "सन्निपातेषु सर्व्वेषु न क्षौद्रमवचारयेत्। शीतोपचारि क्षौद्रं स्याच्छीतञ्चात्र विरुध्यते॥" भा. म. १ भ.। सा. कौ.। च. द.।

**अष्टादशधान्यम्।** क्ली। कलायगोधूमाढ़की-यवयावनालशालिचणकमसूरातसीमुद्गतिलकुलत्थ--श्यामाकमाषराजमाषवर्त्तुलहरिककङ्गुतरगीषु। वै. निघ.।

**अष्टादशमूलम्।** क्ली। विल्वाग्निमन्थश्योणाक-गाम्भारीपाठापुनर्णवावाट्यालकमाषपर्णीजीवकैरण्ड़-र्षभक-जीवन्ती-शतावरी-शरेक्षुदर्भकास-शालिधान्य-मूलेषु। वे निघ.।

**अष्टादशशतिकमहाप्रसारणीतैलम्।** क्ली। वातव्याधौ हितं। समूलपत्रप्रसारणी ३७॥० श. शतावरी १२॥० श. अश्वगन्धा १२॥० श. केतकी १२॥० श. दशमूलं प्रत्येकं १२॥० श. वाट्यालकं १२॥० श. भिण्टी १२॥० श. एकत्र शतद्रोणे जले पक्वा द्रोणावशेषे क्वाथोऽवतार्य्यः। काञ्जिकस्य द्रोणद्वयं। दधिदुग्धशुक्तेक्षुरसच्छागमांसरसानां प्रत्येकं ८ श. एकत्र कल्केन सह तैलद्रोणं ३२ श. पाच्यम्। कल्कद्रव्यं प्रत्येकं पलद्वयम्। श्रीवासो नवनीत-खोटी। कुन्दुरुः कुन्दुरुखोटी। च. द. वा. व्या. चि.।

**अष्टादशाङ्गः।** पुं। सन्निपातज्वरे कषाय-विशेषे। स चतुर्विधः—दशमूल्यादिः भूनिम्बादिः द्राक्षादिः मूलकादिश्चेति। तत्र प्रथमः—"दशमूली शटी शृङ्गी पौष्करं सदुरालभः। भार्गी कुटजबीजञ्च पटोलं कटुरोहिणी। अष्टादशाङ्ग इत्येषः सन्निपातज्वरापहः—॥" द्वितीयो यथा—"भूनिम्ब-दारुदशमूलमहौषधाब्द-तिक्तेन्द्रबीज-धनिकेभकणा--कषायः। तन्द्राप्रलापकसनारुचिदाहमोहश्वासादि रक्तमखिलं ज्वरमाशु हन्ति॥" तृतीयो यथा—"द्राक्षामृता शटी शृङ्गी मुस्तकं रक्तचन्दनं। नागरं कटुका पाठा भूनिम्बं सदुरालभम्। उशीरं पद्मक धान्यं बालकं कण्टकारिका। पुष्करं पिचुमर्दश्च सद्यो जीर्णज्वरापहः॥" चतुर्थो यथा—"मुस्ता पर्पटकोशीरदेवदारुमहौषधं। त्रिफला धन्वयासक

नीली कम्पिल्लकं त्रिवृत्। किराततिक्तकं पाठा वचा कटुकरोहिणी। मधूकपिप्पलीमूलं मुस्ताद्यो गण उच्यते॥" च.द.। भैष.।

**अष्टादशाङ्गलौहम्**। क्ली। पाण्ड्वधिकारे लौहं। तस्य पाठः—"किराततिक्ता सुरदारु दार्व्वी मुस्ता गुड़ूची कटुका पटोलम्। दुरालभा पर्पटकं सनिम्बं कटुत्रिकं वह्नि फलत्रिकञ्च। फलं विड़ङ्गस्य समांशिकानि सर्व्वैः समं चूर्णमथायसञ्च। सर्पिर्मधुभ्यां वटिका विधेया तक्रानुपानाद्भिषजा प्रयोज्या। निहन्ति पाण्डुत्वे"त्यादि। भा.म.२भ.।

**अष्टापदः**। पुं। शरभे। मर्कटे। महासिंहे। धुस्तूरे। रा.नि.व. १९। क्ली। सुवर्णे। रा.नि.व. १३। स्त्री (दी)। चन्द्रमल्लिकायां।

**अष्टावक्ररसः**। पुं। रसायनाधिकारे रसः—पारदस्य १ भ. गन्धकस्य २ भ. स्वर्णस्य १ भ. रौप्यस्य ॥० भ, शीषकस्य ।० भ. रङ्गस्य ।० भ. ताम्रस्य ।० भ. खर्परस्य च ।० भ. वटाङ्कुररसेन कुमारीरसेन च प्रहरं मर्द्दयित्वा रससिन्दूरवत् साध्यं। मात्रा २ र. नागवल्लीरसेन सेव्यम्। भैष.।

**अष्ठिः (ष्ठिः)**। स्त्री। अष्ठ्यां। আঁটী।

**अष्टौषधिः**। स्त्री। ब्रह्मसुवर्च्चलादित्यपर्णीनारीकाष्ठगोधासर्पासोमपद्माजनील्य इत्यष्टौ। च.चि. १अ.। इत्यासामष्टानामोषधीनां यां यामेवौषधिं लभेत तस्यास्तस्याः स्वरसस्य सौहित्यं गत्वा स्नेहभावितायामार्द्रपलाशद्रोण्यां सपिधानायां शयीत। तत्र प्रलीयते षण्मासेन पुनः पुनः सम्भवति। तस्यान्नं पयः प्रत्यवस्थापनम्। षण्मासेन देवतानुकारी भवति वयोवर्णस्वराकृतिबलप्रभाभिः। स्वयं चास्य सर्व्ववाचोगतानि प्रादुर्भवन्ति। दिव्यञ्चास्य चक्षुः श्रोत्रं भवति योजनसहस्रगति दशवर्षसहस्राण्यायुरनुपद्रवञ्च। च.चि.१अ.।

**अष्ठिला** } **अष्ठीला** } **अष्ठीलिका** } स्त्री। वायुरोगविशेषे। उत्तरापथप्रसिद्धे वर्त्तुलाकारपाषाणखण्डे (जेज्वरः)। कर्म्मकारादिर লোশদাণ্ডি वा (गयदासः)। नाभेरधस्तदाकारग्रन्थिभूतरोगे। स च चलो वाचलो वा ऊर्द्ध्वं विस्तृतोन्नतश्च। तेन च वातादिरोधो भवति। लक्षणम्—"नाभेरधस्तात्सञ्जातः सञ्चारी यदि वाचलः। अष्ठीलावद्घनो ग्रन्थिरूर्द्ध्वमायत उन्नतः। वाताष्ठीलां विजानीयाद्बहिर्मार्गानुरोधिनीम्॥" मा.नि.वा.व्या.।

**अष्ठि(ष्ठी)वान्**। पुं। शूकरोगविशेषे। लक्षणं यथा—"कठिना विषमैरण्डैर्मारुतस्य प्रकोपतः। शूकैश्च विषसंयुक्तैः पिड़काष्ठीलिका भवेत्॥" सु.नि.१४अ.। जानुनि। रा.नि.व.१८।

**असंक्लिन्नः**। त्रि। न सम्यगार्द्रे। भा. पू.१भ.। "पिण्डीकृतमसंक्लिन्नम्।"

**असनः**। पुं। (Termenalia tomentosa Syn. Pentaptera tomentosa.) छागकर्णवत्पत्रशालवृक्षविशेषे। पीतशाल इति प्रसिद्धे। प.मु.। विजयसार इति प्रसिद्धे। भा.पू.१भ, वटादिव.। असन इति प्रसिद्धे। र.मा.रत्ना.। পিয়াশাল। हिं असना। मं असणा, वड़िलुरिया। तत्पर्य्यायः,—परमायुधः (श) महासर्ज्जः सौरिः वधूकपुष्पः प्रियकः वीजवृक्षः नीलकः प्रियसालकः अजकर्णः वनेसर्ज्जः। "असनोवीजकः कटाख्यः स्वनामख्यातः।" सु.सू ३८अ.। गुणाः—कटुरुष्णः तिक्तः वातघ्नः सारकः गलदोषघ्नश्च। रा.नि.व.९।२३। कुष्ठ-विसर्प-श्वित्र-प्रमेह-गुदक्रिमि-कफरक्तपित्तघ्नः त्वच्यः केश्यः रसायनश्च। भा.पू.१भ.वटादिव.। सि.यो.रा.य.चि.एलादिमन्थे. वृन्दः। "निम्बासनशालसारान्। वा.सू.१५अ.असनादिव.। "असनतिनिशभूर्जं।" भा.म.४भ.योनिरोग-चि.। "स्वर्जिकोग्रासनं त्र्यहम्।" जीवकद्रुमे। मे. नत्रिकं। वकवृक्षे। वीरतर्व्वादौ। क्ली। चेपर्णे मे. नत्रिकं।

**असनपर्णिका (र्णी)**। स्त्री। अपराजितायाम्। অপরাজিতা। मारटोति अ.टी.भः।

**असनपुष्पः (कः)**। पुं। षष्टिकधान्यजातिभेदे। सु.सू.४६अ.।

**असनादिगणः**। पुं। असनतिनिशभूर्जश्वेतवाहप्रकीर्य्यखदिरकदरभण्डी-शिंशपामेषशृङ्गीचन्दनत्रयतालपलाशजोङ्गशाकशालक्रमुकधवकलिङ्गछागकर्णाश्वकर्णात्मको गणः। स श्वित्रकुष्ठकफक्रिमिहरः पाण्डुप्रमेहमेदोघ्नश्च। वा.सू.१५अ.।

**असरुः**। पुं। भूकदम्बे। কুকুরশোঁঙা। श.च.।

**असलम्**। क्ली। लौहे। अस्त्रे। वै.निघ.।

**असात्म्यः**। त्रि। प्रकृत्यसुखावहे। क्ली। सात्म्यवैपरीत्ये।

**असारम्**। पुं, क्ली। काष्ठागुरुणि। रा. नि.व १२। अगुरुणि। जेपाल। एरण्डवृक्षे। श.च.।



**असारदधि**। क्ली। गृहीतनवनीत-दधनि। गुणाः—असारदधि संग्राहि शीतलं वातलं लघु। विष्टम्भि दीपनं रुच्यं ग्रहणीरोगनाशनम्॥ भा.पू. दधिव.।

**असारा**। स्त्री। कदलीवृक्षे। वै.निघ.।

**असिकम्**। क्ली। चिबुकोष्ठमध्यभागे। हे.च.।

**असिक्निका (क्नी)**। स्त्री। अवृद्धान्तःपुरप्रेष्यायाम्। मे. नत्रिकं। दास्याम्। जटा.।

**असिगण्डः**। पुं। क्षुद्रोपाधाने। ছোট বালিশ। जटा.

**असितः**। पुं। धववृक्षे। ধাওয়া গাছ। र.मा.। रत्ना.। क्ली। काष्ठागुरुणि। वै.निघ.। त्रि। कृष्णवर्णे।

**असितजफलः**। पुं। नारिकेलवृक्षे। वै.निघ.।

**असिततिलः**। पुं। कृष्णतिले। च.द. अर्शचि.।

**असितद्रुमः**। पुं। कृष्णताले। वै. निघ.।

**असितपल्लवा**। स्त्री। भूमिजम्बुाम्। नदीजम्बूवृक्षे।

**असितफलः**। पुं। मधुनारिकेले।

**असितवल्ली**। स्त्री। नीलदूर्व्वायां। वै.निघ.।

**असितवेत्रम्**। क्ली। श्यामालतायाम्। वा.र. अमृतादिकषाये। [তেঁদ গাছ। वै.निघ.।

**असितसारः (कः)**। पुं। तिन्दुकवृक्षे।

**असिता**। स्त्री। ह्रस्वनीलीवृक्षे। रा.नि.व.४। See अश्निका। कालातिविषायाम्।

**असिताञ्जनी**। स्त्री। कृष्णकार्पास्याम्। रा.नि.व.४। See कालाञ्जनी।

**असिताननः**। पुं। कपौ। हे.च.।

**असिताबलमोटा**। स्त्री। कृष्णजयन्त्याम्। কাল জয়ন্তী। गुणाः—असिताबलमोटातु रसायनकरी मता। गुणाश्चान्ये जयन्तीवत्। वै.निघ.।

**असिताभ्रशेखरः**। पुं। नीलीवृक्षे। त्रिका.।

**असितालया**। स्त्री। नीलदूर्व्वायाम्। श्यामालतायाम्। वै.निघ.।

**असितालुः**। पुं। नीलालौ। रा.नि.व.७।

**असितोत्पलम्**। क्ली। नीलोत्पले। शुन्दि। रा.नि.व.१०।

**असिदंष्ट्रः (कः)**। पुं। मकरे। त्रिका.।

**असिदन्तः**। पुं। मकरे। कुम्भीरे। वै.निघ.।

**असिद्धः**। त्रि। आमे। কাঁচা। अपक्वे। সিদ্ধ করা নয়। रत्ना. [हे.च.।

**असिधेनुः (का)**। स्त्री। छुरिकायां। हला.

**असिपत्रः**। पुं। सेहुण्डवृक्षे। মনসা গাছ। मद.व.१। इक्षौ। আখ্। प. मु.। त्रिका.। गुण्डतृणविशेषे। रा.नि.व.८। (क) श्वेतदर्भे। रा.नि १४।

**असिपत्रतृणम्**। क्ली। गुण्डातृणे। তৃণবিশেষ। मं गुण्डागवत। रा.नि.व.८। गुणाः—शीतं मधुरं कफवातनुत्। रक्तदोषातिसाराणां नाशकं दाहनुत्परं। द्विप्रकारं दीर्घलघुभेदैः दीर्घं गुणाधिकम्॥ वै. निघ.।

**असिपुच्छः (कः)**। पुं। जलचरविशेषे। শুশুক। हारा.।

**असिमेदः**। पुं। खदिरक्षुपे। विट्खदिरे। গুয়েবাবলা। मं खैराचेझाड़। श.र.।

**असितकम्**। क्ली। काष्ठागुरुणि। भा.म.२भ. आ.वा.।

**असितका**। स्त्री। कृष्णापराजितायाम्। নীল অপরাজিতা। मं कालीगोकर्णी। वै.निघ.।

**असितकादिचूर्णम्**। क्ली। आमवातघ्नं चूर्णं। पाठः—"असीतकं मागधिका गुड़ूची श्यामा वराही गजकर्णशुण्ठ्यौ। समा घृताः कृत्स्नमिदं तु चूर्णं पिबेत्तदुष्णोदकमण्डयूषैः॥" मा.नि.म २भ.।

**असुः**। पुं। प्राणे। अम.। क्ली। चित्ते। उणा.।

**असुखम्**। क्ली। दुःखे। हे.च.। [अम.।

**असुधारणम्**। क्ली। जीवने, जीवनधारणे।

**असुभृत्**। पुं। प्राणिमात्रे।

**असुरम्**। क्ली। सामुद्रलवणे मद.व.२। पुं। देवदारुवृक्षे। वै.निघ.। जीर्णज्व. लवङ्गादि.।

**असुरग्रहः**। पुं। भूतग्रहविशेषे। मा. नि.। तदावेशलक्षणं यथा—"संस्वेदी द्विजगुरुदेवदोषवक्ता जिह्माक्षो विगतभयो विमार्गदृष्टिः। सन्तुष्टो न भवति चान्नपानजातैर्दुष्टात्मा भवति स देवशत्रुजुष्टः॥ मा.नि.। [र.मा.।

**असुरसा**। स्त्री। वर्वर्य्याम्। বাবুই তুলসী।

**असुरा।** स्त्री। रजन्याम्। রাত্রি। हरिद्रायां। मे, रत्निकं।

**असुराह्वम् (ह्वा)।** क्ली, स्त्री। कांस्ये। हे·च.।

**असुराह्वपतङ्गः।** पुं। तैलपायिपतङ्गे। তেলাপোকা আর্শোলা। "असुराह्वपतङ्गस्य विट्चूर्णं मधुसंयुतम्।" वैद्यकम्।

**असुराह्वविट्।** पुं। कांस्यमले। वै·निघ २भ. ज्व: असुराद्यञ्जने। [अ.टी·भ·।

**असुरी।** स्त्री। राजिकायां। রাইসরিষা।

**असुस्थः।** त्रि। रोगयुक्ते।

**असृक्।** क्ली। स्पृक्कानामगन्धद्रव्ये। कुङ्कुमे। रा. नि व १२। रक्ते। रा.नि.व.१८।

**असृक्करः।** पुं। शरीरस्थरसधातौ। हे·च.।

**असृक्पः(पा)।** पुं, स्त्री। जलौकायाम्। अ टी.भ.।

**असृगुत्थः।** पुं, क्ली। केशरे।

**असृग्गदः।** पुं। कोष्ठे। वै.निघ।

**असृग्दरः।** पुं। असृग्दार्य्यते च्यव्यते अनेनेति भा.रक्तप्रदरे। প্রদররোগ। हिं परदोला। लक्षणं "विरुद्धमद्याध्यशनादजीर्णाद्गर्भप्रपातादतिमैथुनाच्च। यानाध्वशोकादतिकर्षणाच्च भाराभिघाताच्छयनाद्दिवा च॥ असृग्दरं भवेत्सर्व्वं साङ्गमर्द्दं सवेदनम्। तस्यातिवृत्तौ दौर्ब्बल्यं भ्रमो मूर्च्छा मदस्तृषा। दाहः प्रलापः पाण्डुत्वं तन्द्रा रोगाश्च वातजाः।" भा.नि.। वातजादिभेदात् स चतुर्व्विधः। ऋतुकालभिन्नान्यकालेऽपि अधिकार्त्तवस्रावोऽसृग्दर एव। सु.शा.२अ। यत्पथ्यं यदपथ्यं वा रक्तपित्तेषु कीर्त्तितं। प्रदरेऽपि तथा दोषं तत्तन्नारी भजेत्त्यजेत्॥ इति पथ्यापथ्यम्।

**असृग्दरशैलेन्द्ररसः (सर्व्वाङ्गसुन्दरः)।** पुं। रक्तप्रदरोक्तरसे। पाठो यथा—गगनं शोधितं ग्राह्यं पलैकमिष्टकासमं। टङ्कणं स्याच्चतुर्थांशं शाणार्द्धं विसुगन्धिकं। कर्पूरनलदञ्चैव जातीकोषं फलं घनं। नागेश्वरं लवङ्गञ्च कुष्ठं सचिफलं तथा। जलेन वटिका कार्य्या छायायां शोषयेत्तु ताम्। ...प्रदरस्य विनाशाय दृष्टः सर्व्वाङ्गसुन्दरः॥ प्रयोगा. अ,दर-चि.।

**असृग्ध(ग्धा)रा।** स्त्री। चर्म्मणि। अ.टी.भ.।

**असृणम्।** क्ली। स्वर्णगैरिके। স্বর্ণ গিরিমাটী। हि सोनगेरु। वै.निघ.।

**असृतम्।** त्रि। असिद्धे। अपक्वे। रत्ना.।

**असृपाटो।** स्त्री। रक्तधारायाम्। अ·टी·सा·।

**अस्तम्।** क्ली। मृत्यौ। हे·च.।

**अस्तमती।** स्त्री। शालपर्ण्याम्। श.र.।

**अस्त्रम्।** क्ली। आयुधे, चापे। करवाले। मे. रत्निकं। व्याघ्रनखे।

**अस्त्रचिकित्सकः।** पुं। अस्त्रवैद्ये। सु.।

**अस्त्रचिकित्सा।** स्त्री। अस्त्रादिना व्रणक्षतादिप्रतिकारे। सु। [इति भाषा। रत्ना।

**अस्त्रजित्।** पुं। कवाटवक्रवृक्षे। কবাটবেটু

**अस्त्रवैद्यः।** पुं। अस्त्रचिकित्सके। वै·निघ.।

**अस्त्राघातः।** पुं। अस्त्रप्रयोगे। অস্ত্রকরা। वै·निघ.।

**अस्थि (कम्)।** क्ली। वीजे। मेदोजधातौ। হাড়। रा·नि व.१८। अस्थिस्वरूपं—"मेदो यत् स्वाग्निना पक्वं वायुना चातिशोषितम्। तदस्थिसंज्ञां लभते स सारः सर्वविग्रहे॥" तत्कर्म्म च धारणं। तत्संख्या च मानवदेहे ३००। तेषां १२० शाखासु, ११७ श्रोणिपार्श्वपृष्ठोदरोरःसु, ६३ ग्रीवायां प्रत्यूर्द्धञ्चेति। एकैकस्याम्पादाङ्गुल्यां त्रीणि त्रीणि तानि पञ्चदश। तलकूर्चगुल्फसंश्रितानि दश। पाष्ण्र्यामेकं, जङ्घायां द्वे, जानुन्येकं, एकमूराविति। त्रिंशदेवमेकस्मिन् सक्थिनि भवन्ति। एतेनेतरसक्थिबाहू च व्याख्यातौ। श्रोण्यां पञ्च तेषां गुदभगनितम्बेषु चत्वारि त्रिकसंस्थितमेकं, पार्श्वे षट्त्रिंशत्, एवमेकस्मिन्; द्वितीयेऽप्येवं। पृष्ठे त्रिंशत्। अष्टावुरसि। द्वे अक्षकसंज्ञे। ग्रीवायां नवकं। कण्ठनाड्यां चत्वारि, द्वे हन्वोः, दन्ता द्वात्रिंशत्, नासायां त्रीणि, एकं तालुनि, गण्डकर्णशङ्खेषु एकैकं, षट् शिरसि। तच्च पञ्चविधम्—कपाल-रुचक-तरुण-वलय-नलकभेदेन। तत्र जानुनितम्बस्कन्धतालुशङ्खमस्तकास्थीनि कपालपदवाच्यानि। दन्तास्थि रुचकमिति, नासाग्रीवाकर्णनेत्रास्थीनि तरुणमिति, हस्तपादपार्श्वपृष्ठोदरवक्षोऽस्थीनि वलयमिति, अवशिष्टानि च नलकमिति उच्यते। सु.शा.५अ.।

**अस्थिकृत्।** पुं। मेदोधातौ। हे.च.।

**अस्थिगतज्वरः।** पुं। तदाश्रितज्वरे। लक्षणं यथा—"भेदोऽस्थ्नां कूजनं श्वासो विरेकश्छर्दिरेव च। विक्षेपणञ्च गात्राणां विद्यादस्थिगते ज्वरे॥" वै.निघ। वान्तिश्चौषधं, वस्तिकर्म्म, अभ्यङ्गोद्वर्त्तने च प्रतीकारः।

**अस्थिग्रन्थिः।** पुं, स्त्री। ग्रन्थिरोगे।

**अस्थिच्छलितम्।** क्ली। तन्नामककाण्डभग्नास्थिविशेषे। वृहदस्थ्नः क्षुद्रखण्डच्युतौ। 'पार्श्वयोरस्थि हीनाङ्गतम्।' सु·नि·१५अ.। See भग्नम्।

**अस्थिजः।** पुं। मज्जायाम्। रा·नि व.१८।

**अस्थिजननी।** स्त्री। वसाधातौ। मेदोधातौ। वै. निघ.।

**अस्थितुण्डः।** पुं। पक्षिविशेषे। श मा.।

**अस्थितोदः।** पुं। अस्थनि सूचीविद्धवद्वेदनायाम्। अस्थिपीड़ायाम्। वै·निघ।

**अस्थिपञ्जरः।** पुं। कङ्काले। रा नि व.१८।

**अस्थिफलः।** पुं। पनसवृक्षे।

**अस्थिभङ्गः।** पुं, क्ली। तन्नामधेयरोगे। अस्थिविश्लेषे। स द्विविधः सन्धिमुक्तकाण्डभग्नभेदेन। तयोः सन्धिमुक्तः षड्विधः। काण्डभग्नश्च द्वादशविधः। सु·चि·३अ·। विशेषाः स्वस्वपर्य्याये मृग्याः। अस्थिसंहारे। হাড়ভাঙ্গা। See भग्नम्।

**अस्थिभक्षः।** पुं। कुक्कुरे। शृगाले। हारा.।

**अस्थिभक्षा।** स्त्री। औषधिविशेषे। घायमारी इति महाराष्ट्रादौ। वै.निघ.।

**अस्थिमर्म्म।** क्ली। तदष्टसंख्यकम्। तत्र कटीतरुणसंज्ञके द्वे, नितम्बे द्वे, अंसफलके द्वे, शङ्खयोश्च द्वे इति। सु· शा· ५अ·।

**अस्थिराङ्कुकः।** पुं। हिन्तालवृक्षे।

**अस्थिशृङ्खला (लिका)।** स्त्री। अस्थिसंहारे। হাড়জোড়া। हिं अस्थिशृङ्खल। गुणाः—वृष्या ग्लेष्मला मधुरा पित्तरक्तानिलघ्नी च। मद·व·७.१।

**अस्थिसङ्घातः।** पुं। अस्थिमेलनस्थलेषु। तानि अष्टादश—"गुल्फे पञ्च जान्वेकम् वङ्क्षणे कटिदेशे मस्तके चैकैकम्। चतुर्दशास्थ्नां सङ्घाताः। तेषां त्रयो गुल्फजानुवङ्क्षणेषु। एतेनेतरसक्थिबाहू च व्याख्यातौ। त्रिकशिरसोरेकैकः।" सु·शा.५अ.।

**अस्थिसन्धानकरः।** पुं। लशुने। वै.निघ.।

**अस्थिसन्धानजननी।** स्त्री। अस्थिसंहारे। হাড়জোড়া। वै.निघ.।

**अस्थिसन्धिः।** पुं। अस्थिसंमेलनस्थाने। मर्म्मस्थानेषु। ते द्विधा स्थिरा अचलाश्चेति। सु· शा. ५अ.। See सन्धिः।

**अस्थिसन्धिकः।** पुं। अस्थिसंहारे। भैष.।

**अस्थिसमुद्भवः।** पुं। मज्जनि। वै. निघ.।

**अस्थिसम्बन्धनः।** पुं। रास्ने। धुनो। वै. निघ.।

**अस्थिसम्भवः।** पुं, क्ली। मज्जनि। शुक्रधातौ। वै. निघ.।

**अस्थिसम्भवस्नेहः।** पुं। मज्जनि। वै.निघ.।

**अस्थिसंहतिः।** पुं। अस्थिसंहारे। मद·व·७।

**अस्थिसंहारः (कः)।** पुं। Vitis quadrangularis, Syn. Cissusquadrangularis.) स्वनामख्यातवृक्षे। হাড়োচ, হাড়জোড়া, হাড়ভাঙ্গা हिं हरसङ्करी. हरजोड़ी. हरसङ्घारि। तत्पर्य्यायः—वज्रवल्ली ग्रन्थिमान् कुलिशं अमर (र), शिरालकः (श), अस्थिसंहारी वज्राङ्गी अस्थिशृङ्खला। गुणाः—शीतलः वृष्यः वातघ्नः अस्थिसन्धानकृच्च। मद व·१। अस्थियोजनः वातश्लेष्महरः उष्णः सरः कृमिघ्नः नेत्ररोगघ्नः रूक्षः स्वादुः वृष्यः लघुः पित्तलश्च। भा.पू. म.। काण्डत्वग्विरहितमस्थिशृङ्खलायाः माषार्द्धं द्विदलमकञ्चुकं तदर्द्धम् सम्पिष्टं तदनु ततस्तिलस्य तैले सम्पक्वं वटकमतीव वातहारि॥ भा·। च·द.अ.पि.अभ ग्नौ। मात्रा शुष्कचूर्णं १८ र.। हस्तिशुण्ड्याम्। হাতীশুঁড়ে। इति लोके।

**अस्थिसंहारिका (री)।** स्त्री। अस्थिसंहारे। भ. पू· १म.।

**अस्थिसंहृत्।** पुं। अस्थिसंहारे। च.द.। भैष भग्न.चि.।

**अस्थिसारः।** पुं। मज्जायाम्। रा.नि.व.१८।

**अस्थिसारस्थिता।** स्त्री। मज्जायां।

**अस्थिस्नेहः।** पुं। मज्जनि। रा.नि.व.१८।

**अस्थिस्नेहसंज्ञः।** पुं। मज्जायाम्। মগজ इति लोके। रा.नि.व.१७।

**अस्थिस्नेहसञ्चारः।** पुं। मज्जनि। मज्जा.।

**अस्निग्धदारु (कम्)।** क्ली। देवदारुणि। देवदारुविशेषे। रा.नि.व.१२।

**अस्रघ्नी** । स्त्री । आकाशवल्ल्यां । আলোক-লতা । रा.नि.व.२ ।

**अस्रकोत:** । पुं । काञ्चनवृक्षे । वै.निघ. ।

**अस्रकान्तम्** । क्ली । चुल्ल्याम् । উনন, আকা । इति लोके । मं चुल । अ.टी.भ. ।

**अस्रमित:** । त्रि । विकसिते । फুटন্ত । वै.निघ. ।

**अस्रम्** । क्ली । शोणिते । रा.नि.व.१८ । केशरे । কুম্কুম্ । च.द । नयनजले । रत्ना. । पुं । आस्रावे । विज.र. । कोणे । केशे । मे. ।

**अस्रकण्ट:** । पुं । वाणे । हे. । বাণ ।

**अस्रखदिर:** । पुं । रक्तखदिरवृक्षे । লাল খয়ের । मं रक्तखैर । रा.नि.व.८ ।

**अस्रघ्न:** । पुं । तेजवल्ले । তেজবল । वै.निघ.

**अस्रजम्** । क्ली । मांसे । रा. नि. व. १७ ।

**अस्रजित्** । पुं । वनस्पतिविशेषे । কপাট-বেটু इति भाषा । र.मा. ।

**अस्रप:** । पुं । जलौकायाम् । জোঁক । मत्कुणे । ছারপোকা, উকুন । रा.नि.व.२३ ।

**अस्रपत्र: (क:)** । पुं । भेण्डावृक्षे । रा.नि.व.४ ।

**अस्रपा** । स्त्री । जलौकायाम् । জোঁক । मे. ।

**अस्रफला (ली)** । स्त्री । शल्लकीवृक्षे । শালুই গাছ । रा.नि.व.११ ।

**अस्रमातृका** । स्त्री । रसधातौ । रा.नि.व.१८ ।

**अस्ररेणु:** । पुं । सिन्दूरे । मे. ।

**अस्ररोधिका (नी)** । स्त्री । लज्जालुका-लतायाम् । লজ্জাবতী লতা । रा.नि.व.५ ।

**अस्रविन्दुच्छदा** । स्त्री । लक्ष्मणाकन्दे । रा. नि.व.५ । [ वै.निघ. ।

**अस्रशिम्बी** । स्त्री । रक्तशिम्ब्यां । রাঙাশিম্ ।

**अस्रसायक:** । पुं । नाराचास्त्रे । লোহার বাণ ।

**अस्रस्रुती** । स्त्री । रक्तस्रावे । वै.निघ. ।

**अस्राजक:** । पुं । रक्ततुलसीवृक्षे । রাঙা-তুলসী । श्वेततुलस्याम् । শাদা তুলসী । मं पांढरी तुलस । वै.निघ. ।

**अस्राह्व:** । पुं, क्ली । कुङ्कुमे । मद.व.३ ।

**अस्रु** । क्ली । नेत्रवारिणि । अस्रुनिरोधात् पीनसा द्युत्पत्ति: । वा.सू.४अ. ।

**अस्रुक:** । पुं । अचोरवृक्षे । আউচ গাছ । रत्ना. ।

**अस्रुवाहिनी** । स्त्री । अश्रुवाहके धमनीद्वये । सु.शा.९अ. ।

**अस्वन्त:** । पुं । चुल्ल्याम् । উনন ।

**अस्वास्थ्यम्** । क्ली । पीड़ायाम् ।

**अह:** । क्ली । दिवसे । अम. ।

**अहङ्कार:** । पुं । चेतनपुरुषस्य चेतने, इन्द्रि-यादिनिखिलशरीरव्यापी योऽहंभावस्तद्विशिष्टप्रवृत्ति-रेव । स च त्रिविध: वैकारिकतैजसभूतभेदेन । "तल्लिङ्गाच्च महतस्तल्लिङ्ग एवाहङ्कार उत्पद्यते । तत्र वैकारिकादहङ्कारात् तैजससहायात्तल्लक्षणा-न्येव एकादशेन्द्रियाणि उत्पद्यन्ते । भूतादेरपि-तैजससहायात्तल्लक्षणान्येव पञ्चतन्मात्राणि उत्प-द्यन्ते ।" सु.शा.१अ. ।

**अहतम्** । क्ली । नूतनवस्त्रे । हला. ।

**अहरट्टक्** । पुं । गृध्रे । शकुनि । वै.निघ. ।

**अहर्ज्जव:** । पुं । सम्वत्सरे । के. ।

**अहर्पण:** । पुं । मांसे । हारा. ।

**अहर्बान्धव:** । पुं । अर्कवृक्षे । हे.च. । [हे.च. ।

**अहर्मणि:** । पुं । अर्कवृक्षे । আকন্দ গাছ ।

**अहर्मुखम्** । क्ली । प्रात:काले ।

**अहल्य:** । त्रि । अनाकृष्ट-भूमौ ।

**अहस्कर:** । पुं । अर्कवृक्षे । हे.च. ।

**अहस्पति:** । पुं । अर्कवृक्षे । सूर्य्ये । अम. ।

**अहि:** । पुं । शीषके । शीसा । प्रयोगा, वसन्त-कुसुमाकररसे । र.सा.सं. । सर्पे । मद.व.२२ । उद-रावर्त्ते । हारा. । वज्रीवृक्षे । মনশা শিজু । हे.च.

**अहिंस्रा** । स्त्री । ( Capparis sepiaria ) कण्टकपालीवृक्षे । কাঁটা গুড়কাঁটলী । रत्ना. । आमवातप्रलेपे । गुणा:—विषशोथहरत्वं । राज. ।

**अहिक: (का)** । पुं, स्त्री । शाल्मलीवृक्षे । শিমূল গাছ । मं सांवरी । श.च. ।

**अहिकान्त:** । पुं । वायौ । हे.च. ।

**अहिकुटी** । पुं । भारद्वाजपक्षिणि । वै.निघ. ।

**अहिगन्धफला** । स्त्री । सल्लकीवृक्षे । रा.नि. व.११ । [ मं सापगंध । वै.निघ. ।

**अहिगन्धा** । स्त्री । सर्पगन्धायाम् । রাস্নাবিশেষ ।



**अहिच्छत्र:** । पुं । मेषशृङ्ग्यां । মেড়াশিঙে । हे.च. ।

**अहिच्छत्रा** । स्त्री । शताह्वाक्षुपे । মৌরী । শুল্ফা । रा. नि. व. ४ । शर्करायाम् । চিনি । रा.नि.व.१४ । [वै.निघ. ।

**अहिजाहक:** । पुं । कृकलासे । কাঁকলাস ।

**अहिजिह्विका** । स्त्री । महाशतावर्य्याम् । বড় শতমূলী । वै.निघ. ।

**अहितद्रव्यम्** । क्ली । स्वभावत एवाहित-द्रव्येषु । यथा—शिम्बीधान्येषु शीम्बे माषकलाय: फलेषु डहुक:, शाकेषु सर्षपशाकम्, मांसेषु गोमांसं, वसासु माहिषी, दुग्धेषु मेषीदुग्धं, तैलेषु कुसुम्भतैलं, इक्षुविकारेषु फाणितञ्च । भा.पू.१भ. ।

**अहितपदार्थ:** । पुं । वृद्धरमण्यां, पूतिमांसे, प्रभातनिद्रायां, मैथुने, दधनि चेत्यादौ ।

**अहिताहार:** । पुं । अहितकरद्रव्यभक्षणे । गुणा:—पीड़ाजनकत्वम् । वा.सू.७अ. ।

**अहित्थ:** । पुं । वनमेथिकायाम् । বনমেথি । अहित्थोऽल्पगुणस्तद्वद्वाजिनां स तु पूजित: । मद. व.२ ।

**अहिद्विट्** । पुं । नकुले । मयूरे । मं, षचतुष्कं ।

**अहिनिर्म्मोक:** । पुं । सर्पनिर्मोके । भा. ।

**अहिपत्रक:** । पुं । निर्विष-सर्पविशेषे ।

**अहिपुत्रक:** । पुं । तरालौ । हारा. । নৌকাবিশেষ ।

**अहिपुष्पम्** । क्ली । नागकेशरपुष्पे । च.द. । कुम्भीकातैले । सु.चि.२७अ. ।

**अहिपूतन: (ना)** । पुं, स्त्री । बालरोगान्य-तमे रोगविशेषे । শিশুর গুহ্যক্ষত । যথা— "शकृन्मूत्रसमायुक्तेऽधौतेऽपाने शिशोर्भवेत् । स्विन्ने वास्नाप्यमाने वा कण्डूरक्तकफोद्भवा ॥ कण्डूयना-त्तत: क्षिप्रं स्फोट: स्रावश्च जायते । एकीभूतं व्रणं घोरं तं विद्यादहिपूतनं ॥" मा.नि. क्षुद्ररोग: ।

**अहिफल: (ला)** । पुं, स्त्री । दीर्घकर्कटिका-याम् । লম্বা কাঁকুড় । म टरकांकड़ी ।

**अहिफेनम् (कम्)** । पुं, क्ली । Opium poppy, Papaver somniferum. स्वनाम-ख्यातसारजवर्गीयोपविषे । प. स. । আফিম্ । हिं अफिम् । मं अफूकाड़री, अफून । आफन इति मालवे प्रसिद्ध । तै नलमंडु । "उक्तं खसफलक्षीर-माफूकमहिफेनकम् ।" भा.पू.१भ. । अहिफेनं चतुर्व्विधं जारण-मारण-धारण-सारणभेदात् । तत्र श्वेतवर्णं जारणं, कृष्णवर्णं मारणं, पीतवर्णं धारणं, कर्व्वूरं सारणञ्च । जारणमन्नं जारयेत्, मारणं मृत्युं कारयेत्, धारणं वयस्तम्भं, सारणं मलसार-णञ्च करोति । सामान्यतो गुणा:—सन्निपातघ्नं वृष्यं बल्यं मोहदञ्च । रा.नि.६ । आफूकं शोषणं ग्राहि श्लेष्मघ्नं वातपित्तकरञ्च । मद.व.१ ।

**अहिफेनवटिका** । स्त्री । योगोऽयं रक्तातिसारे । खर्ज्जूरं पिण्डखर्ज्जूरम् । र.सा.सं. । [थाक्रि ।

**अहिफेनवीजम्** । क्ली । खस्खसे । পোস্ত,

**अहिफेनासव:** । पुं । आसवोऽयमतीसार-विसूच्योर्हित: । मात्राऽर्द्धमाषकमिता । अत्र मधूक-मद्यस्य (মউয়ার মদ) पलशतं (১২৷৷০ সের) । अहिफेनं ४ प. मुस्तकं जातीफलेन्द्रयवैलानां प्रत्येकं पलमेकञ्चावृतपात्रे मासमेकं स्थापयेत् । भैष. ।

**अहिभयदा** । स्त्री । भूम्यामलक्याम् । ভুঁই আম্লা । रा.नि.व.५ ।

**अहिभुक्** । पुं । मयूरे । रा.नि.व.१९ । तार्क्ष्ये । मे. । क्षुद्रसापसंद इति प्रसिद्धे वृक्षे । नाकुलीनाम-महाकन्दशाके । रा.नि.व.७ । गन्धनाकुल्याम् । रा.नि.व.७ । See नाकुली ।

**अहिमर्द्दनी** । स्त्री । गन्धनाकुल्याम् । রাস্না-বিশেষ । अहिलताविशेषे । सापसंद इति पाश्चात्ये । रा.नि.व.७ । See नाकुली ।

**अहिमार: (क:)** । पुं । विट्खदिरे । গুয়ে বাব্লা । मं गन्धीहिंवर । रा.नि.व.८ ।

**अहिमेद: (क:)** । पुं । विट्खदिरे । গুয়ে বাব্লা । मं गन्धीहिंवर । रा.नि.व.८ ।

**अहिरिपु:** । पुं । मयूरे । रत्ना. ।

**अहिलता** । स्त्री । सापसंद इति ख्यातलता-याम् । गन्धनाकुल्याम् । रा.नि.व.७ । See नाकुली । ताम्बूल्याम् । পান গাছ । रा.नि.व.११

**अहिलोकिका** । स्त्री । भूम्यामलक्याम् । ভুঁই আম্লা । वै.निघ. । [वै.निघ. ।

**अहिल्या** । स्त्री । वनमेथिकायां । বনমেতি ।

**अहिवल्ली** । स्त्री । नागवल्ल्यां । भैष.ध्व.भ.चि. ।

**अहिविषापहा।** स्त्री। अहिलतायाम्। सासंद। वै.निघ.।

**अहिस्कन्धः।** पुं। गुल्फे। পায়ের গুল্লে।

**अही।** स्त्री। गवि। গাভী।

**अहीन्द्रः।** पुं। शारिवायाम्। অনন্তমূল। च.द.यक्ष्म.चि. लवङ्गादिचूर्णे।

**अहीरणिः।** पुं। द्विमुखसर्पे। शङ्खिनी इति लोके। हारा.।

**अहीरुहः।** पुं। शाकवृक्षे।

**अहेरुः।** स्त्री। शतमूल्याम्। अम.।

**अहोरात्रम्।** क्ली। दिवारात्रे।

**अक्ष्याटः।** पुं। ওকড়া इति प्रासङ्गे क्षुपे। प.मु.।

**अक्ष्ल्लला।** स्त्री। भल्लातकवृक्षे। ভেলা গাছ। श.च.।

**अक्षः।** पुं। (Teminalia belerica.) A tree bearing medicinal fruit. विभीतकवृक्षे। বয়ড়া গাছ। हिं तिनाश। रा.नि.व.६। भा.म.४भ. अञ्जने, "जग्ध्वाक्षकाष्ठैर्मलमायसन्तु।" सि.यो. सिद्धमतयोगे कु.काम.वृन्द.। र ग, एलादिमन्थे वृन्द.। कर्षपरिमाणे। प.प्र.। इन्द्राक्षे। सर्पे॥ मे.। रुद्राक्षवृक्षे। भा.भ्रने.व.। भ्रासे। ऋषभके। देवशिरीषवृक्षे। शिरीषविशेष। रा.नि.व.९। क्ली। विषयेन्द्रिये। रा.नि.व.१८। वा.शा.३भ्र.। सौवर्चललवणे। तुत्थके। তুঁতে। मे.षत्रिकं। पद्मबीजे। विभीतकफले। रा.नि.व.११।

**अक्षकः।** पुं। विभीतकवृक्षे। भा.पू.१भ.। तिनिशवृक्षे। र.मा.। "विश्वमक्षसमं पिबेत्।" च.द.ज्वरातिसा.चि.। रुद्राक्षवृक्षे। श.र.। इन्द्राक्षवृक्षे। सर्पे। तोलकद्वयपरिमाणे। मे.षत्रिकं।

**अक्षकारका।** स्त्री। घृतकुमार्य्याम्। घृतकुमारी। वै.निघ.। [पाण्डु.चि.।

**अक्षकाष्ठम्।** क्ली। विभीतककाष्ठे। च.द.

**अक्षगणः।** पुं। श्रोत्रादीन्द्रियसङ्घाते।

**अक्षगन्धिनी।** स्त्री। अतिबलायां। वै.निघ.।

**अक्षतः।** पुं। यवे। (बहु.) आतपतण्डुले। रा.नि.व.१६। शस्यमात्रे। भ्र.टी.भानुः। क्ली। लाजेषु। थई। मे.। यवे। प.मु.। "लाजेषु क्षिप्वहिंसिते। यवेऽपि क्वचित्।" मे.तत्रिकं। केचित्तु अखण्डतण्डुला अक्षतमित्याहुः। त्रि। अव्रणे। अहिंसिते। मे.। अखण्डिते। श.र.। [व.४।

**अक्षतण्डुला।** स्त्री। महासमङ्गाक्षुपे। रा.नि.

**अक्षतरोगः।** पुं। उपनखरोगे। আঙুলহাড়া। लक्षणं—"कुर्य्यात्पित्तानिलं पाकं नखमांसे सरुग्ज्वरं। चिप्पमक्षतरोगञ्च विद्यादुपनखञ्च तम्॥" वा.उ.३१भ्र.। [श.च.।

**अक्षता।** स्त्री। कर्कटशृङ्ग्यां। কাঁকড়াশৃঙ্গী।

**अक्षतैलम्।** क्ली। विभीतकतैले। বয়ড়া-বীজের তৈল। वा.उ.१३भ्र.। See विभीतकतैलम्।

**अक्षधरः।** पुं। (Trophis aspera.) शाखोटवृक्षे। শেওড়া গাছ। भूरिप्र.।

**अक्षधूर्त्तः (र्त्तिलः)।** पुं। षाँड़। हिं बैल। हारा.।

**अक्षपाकः।** पुं। सचललवणे। वै.निघ.।

**अक्षपिण्डः।** पुं। शङ्खपुष्प्याम्। वै. निघ.।

**अक्षपीड़ः।** पुं। श्वेतबुह्मायां। श्वेतबुह्मामूल। रसेन्द्र.चि.९भ्र.। दुरालभायां। सु.चि.९भ्र.।

**अक्षपीड़का (ड़ा)।** स्त्री। श्वेतबुह्मायां। प.मु.। यवतिक्तलतायाम्। रा.नि.व.३।

**अक्षमः।** पुं। स्थूलमूलके। वनचटके। वै.निघ.। स्त्री (मा)। अक्षान्तौ। ईर्ष्यायाम्। श.र.।

**अक्षरः।** पुं। अपामार्गे। हे.च.। क्ली। जले।

**अक्षरुचकम्।** क्ली। मृत्तिकालवणे। সোরা। मं सोरमिट। वै.निघ.।

**अक्षवीर्य्यवान्।** पुं। श्वेतकरवीरे। वै.निघ.।

**अक्षशिरोधिजा।** स्त्री। मन्यास्थशिरायां। वै.निघ.।

**अक्षसस्यम्।** क्ली। कपित्थफले। मं क्वंविठ। वै.निघ.।

**अक्षारलवणम्।** क्ली। प्रकृतिमसैन्धवादौ। यथा—"सौवीरं गोघृतञ्चैव धान्यं मुद्गास्तिला यवाः। सामुद्रं सैन्धवञ्चैव अक्षारलवणं स्मृतम्।" हारलता।

**अक्षि।** क्ली। नेत्रे। रा.नि.व.१८।

**अक्षिकः।** पुं। (Dalbergia oujeinensis.) रञ्जनवृक्षे। আউচ গাছ। रत्ना।



**अक्षिकूटः (कः)।** पुं। Eye ball. ईषिकायां। চক্ষের তারা। वा.सू.२भ्र.। गजाक्षिपुटके। हे.च.।

**अक्षिकूणितम्।** क्ली। अपाङ्गदृष्टौ।

**अक्षिगोलः।** पुं। The ball or globe of the eye. नेत्रतारके।

**अक्षिच्छादनम्।** क्ली। अक्षिवर्त्मनि। रत्ना.।

**अक्षिपञ्चकम्।** क्ली। श्रोत्रं त्वक् रसना नेत्रं नासा चेति। रा.नि.व.१८।

**अक्षिपटलम्।** क्ली। A coat of the eye. नेत्रपटले।

**अक्षिपक्ष्म।** क्ली। The eye-lash. नेत्रलोम्नि। চক্ষের পাতার লোম।

**अक्षिपाकात्ययः।** पुं। कृष्णगते अक्षिरोगविशेषे। लक्षणम्—"उष्णाश्रुपातः पिड़का च नेत्रे यस्मिन् भवेत् मुद्गनिभञ्च शुक्लम्। तदप्यसाध्यं प्रवदन्ति केचित् अन्यच्च यत्तित्तिरपक्षतुल्यम्। श्वेतं समाक्रामति सर्व्वतो हि दोषेण यश्चासितमण्डलञ्च। तमक्षिपाकात्ययमक्षिरोगं सर्व्वात्मकं वर्ज्जयितव्यमाहुः॥" मा.नि.।

**अक्षिपीलुः।** पुं। महानिम्बे। वै.निघ.।

**अक्षिभेषजम्।** क्ली। श्वेतलोध्रे। मद.व.१। पट्टिकारोध्रे। रा.नि.व.६।

**अक्षिरोगः।** पुं। नेत्ररोगे। See नेत्ररोग।

**अक्षिवः।** पुं। (Guilandina or Hyper anthera morunga.) शोभाञ्जनवृक्षे। শজনা। हिं शिग्रु। मरिचे। रा.नि.व.७। क्ली। सामुद्रलवणे। भ्र.टी.भ.।

**अक्षिविचूर्णितम्।** क्ली। अपाङ्गदृष्टौ। हे.च.।

**अक्षिवैराग्यम्।** क्ली। नेत्रविरक्ततायां। "चकोरस्याक्षिवैराग्यम्।" वा.सू.७भ्र.। [भ्र.।

**अक्षिसेचनम्।** क्ली। नेत्रनिर्लोटे। वा.सू.२३

**अक्षिहुण्डनम्।** क्ली। नेत्रव्युदासे। मा.नि.विज.र.। [रत्ना.।

**अक्षीकः।** पुं। वृक्षविशेषे। আউচ। इति लोके।

**अक्षीवः।** पुं। वक्षिरे। বক। शोभाञ्जनवृक्षे। সজিনা। मे. वत्रिकं। च.सू.४भ्र. क्रिमिघ्न.व.। चि.३भ्र.। महानिम्बे। भा.पू.१भ.। त्रि। अमत्ते। मे.। क्ली। सामुद्रलवणे। পাঙা। भा.पू.१भ.। मरिचे।

**अक्षेयः।** पुं। रक्तार्के। अर्कमन्दारे। वै.निघ.।

**अक्षोटः (कः) (की)।** पुं, स्त्री। (Juglans regia.) गिरिजपीलौ। আকরোট্ इति लोके। आखोट इति हिमवति प्रसिद्धः। प्रा. अक्रोड़। कों अखोड़। हिं खरोटनासपाती। तत्पर्य्यायः,—अक्षोटः, अक्षोटकः, आखेटः, पर्व्वतपीलुः, कर्परालः कन्दरालः आक्षोड़ः (ख), आस्फोठकः (श.र.)। गुणाः—मधुरः बल्यः स्निग्धोष्णः वातपित्तघ्नः रक्तदोषहरः शीतलः कफकोपनश्च। रा.नि.व.११। मधुरं बल्यं गुरु उष्णं सारकं वातघ्नञ्च। मद.व.६। अक्षोटकोऽपि वातादसदृशः कफपित्तकृत्। भा.मि.।

**अक्षोटतैलम्।** क्ली। अक्षोटफलोत्थतैले। আকরোটের তেল। गुणाः मूलकतैलवत्।

**अक्षोड़कः।** पुं। अक्षोटवृक्षे। र.मा.।

**अक्षोहारः।** पुं। मधुखर्जूर्य्याम्। वै. निघ.।

**अक्ष्यम्।** क्ली। सौवर्चललवणे।

---

## आ।

**आकरः।** पुं। खनौ। খনি। अम.।

**आकरजम्।** क्ली। रत्ने। वै.निघ.।

**आकर्णनम्।** क्ली। श्रवणे। কাণ, শোনা।

**आकर्षः।** पुं। इन्द्रिये। मे, षत्रिकं।

**आकर्षकः।** पुं। शिलाभेदे। চুম্বুক-পাথর। श.मा.।

**आकली।** स्त्री। चटकायां। চড়াই। वै निघ.।

**आकल्पः।** पुं। रोगे। हे.च.।

**आकल्पकः।** पुं। तमसि। मोहे। ग्रन्थौ। उत्कलिकायाम्। मे, कचतुष्कं।

**आकल्लः (कः)।** पुं। अककरायां। আকরকরা। वै.निघ.२भ.भ्ररो.चि.आकल्लकादिचूर्णे।

**आकष:** । पं । निकषप्रस्तरे । श.र. ।

**आकार:** । पुं । आकृतौ । मूर्त्तौ । अम. ।

**आकारकरभ: (भा)** । पं, स्त्री । अकराभके । আকরকরা । भा.म.१भ. ज्वरघ्नौवटी. (शार्ङ्ग.) ।

**आकाश:** । पुं, क्ली । अभ्रधातौ । रा.नि.व. १३ । पञ्चभूतान्यतमभूते । শূন্য, আকাশ । तत्पर्य्याय:—द्यौ: द्यौ: अभ्रं व्योम पुष्करं अम्बरं नभ: अनन्तं सुरवर्त्म अन्तरीक्षं अन्तरिक्षं गगनं खं वियत् विष्णुपदं विहाय: (स), नाक: अनन्तं नभसं मेघवेश्म महाविलं (ज), मरुद्वर्त्मन् मेघवर्त्म त्रिपिष्टं (शब्दर.) । अस्य विशेषगुण: शब्द:, स नित्य: अशरीरो च, तस्येन्द्रियं कर्ण: ।

**आकाशपटलम्** । क्ली । अभ्रधातौ । वै.निघ. ।

**आकाशमांसी** । स्त्री । Small veriety of जटामांसी produced in Kedára mountain. सूक्ष्मजटामांस्याम् । আকাশজটামাংসী । तत्पर्य्याय:,—निरालम्बा खसम्भवा सूक्ष्मपत्री गौरी पर्व्वतवासिनी अभ्रमांसी । अस्या उत्पत्ति: केदारभूमौ । गुणा:—शीतला शोफघ्नी व्रणनाड़ीघ्नी लूतागर्द्दभजालादिरोगघ्नी वर्णकरी च । रा.नि.व.१२ । प.मु. ।

**आकाशमूली** । स्त्री । जलौषधौ । পানা । हारा. ।

**आकाशवल्लरी (ल्लिका) (ल्ली)** । स्त्री । Cassayta filiformis. खवल्लीविशेषे । আলোক লতা, আকাশবেল । कौं अमरवेल् । आकाशवेलि, नलहुदवेलि इति च पाश्चात्ये । खवल्ली दु:स्पर्शा व्योमवल्लिका अमरवल्लरी । गुणा:—ग्राहिणी तिक्ता पिच्छिला नेत्ररोगघ्नी अग्निवर्द्धनी हृद्या पित्तश्लेष्मामनाशिनी च । भा.पु. १भ. । मद.व.१ ॥ मधुरा कटु: पित्तघ्नी शुक्रवृद्धिकरी रसायनी बल्या । रा.नि.व.३ ।

**आकाशसलिलम्** । क्ली । आन्तरीक्षजले । वर्षोदके । বৃষ্টির জল । मं पावसाचेपाणी । गुणा: —मधुरं रुच्यं दीपनं पथ्यदं तृणाघ्नं श्रमघ्नं मेहघ्नञ्च । तथा "सद्यो वृष्टाम्बु भूमिस्थं कलुषं दोषदायकं । चिरस्थितं लघु स्वच्छं पथ्यं स्वादु सुखावहम् ।" रा.नि.व १४ ।

**आकुञ्चनम्** । क्ली । सङ्कोचने । सु.सू.२५अ. ।

**आकुल:** । पुं । अश्वभेदे । See अश्व: ।

**आकुलकृत्** । स्त्री । अककर्करायाम् । আকরকরা । भा.म.१भ. त्रिभकज्व.चि. । "किराततिक्ताकुलकृत्-कुलिञ्ज ।"

**आकुला** । स्त्री । तक्षापक्वगोधूमादौ । হরা-পোড়া । इति भाषा । "तक्षेरपक्वगोधूमराकुला परिकीर्त्तिता । आकुला गुरवो वृष्या मधुरा बलकारिण: ।" रा नि.व.१६ ।

**आकृति:** । स्त्री । रूपे । शरीरे । लक्षणे । मे. तत्रिकं ।

**आकृतिच्छत्रा (त्री)** । स्त्री । जलौषधौ । পানা । कोषातकीलतायां । শ্বেত ঘোষা । र.मा. ।

**आक्रन्द:** । पं । क्रन्दने । आह्वाने । मे.दत्रिकं ।

**आक्रीड़:** । पं । ग्रामान्तोद्याने । अम. ।

**आक्रोष: (नम्)** । पुं, क्ली । अभिषङ्गे । शापे । हे.च. । अम. ।

**आक्लेदिभाव:** । पं । आर्द्रकारित्वगुणहेतौ । च.द.विदग्धाजीर्ण-चि. ।

**आखनिक:** । पुं । शूकरे । मूषिके । मे. ।

**आखुक:** । पुं । मूषिके । रत्ना. । वन्यमूषिके । मद.व.१२ । शूकरे । हे.च. । देवताड़वृक्षे । र मा. ।

**आखुकर्णपर्णिका** । स्त्री । क्षुद्रमूषिककर्ण्यां । ইন্দুরকাণী, মূষাকাণী । मं लघुउंदीरकाणी । वै.निघ. ।

**आखुकर्णी** । स्त्री । Salvinia cucullata. जलजमूषिककर्ण्याम् । ইন্দুরকাণী পানা, मूषाकाणी इति भाषा । हिं मं भोपली । वं वल्लीहरुहे । तत्पर्य्याय:,—क्षविका द्रवन्ती उन्दुरुकर्णी न्यग्रोधी मूषिकपर्णी वृश्चिकर्णी बहुकर्णिका माता भूमीचरी चण्डा शम्बरी बहुपादिका प्रत्यक्श्रेणी वृषा प्रत्यक्श्रेणी अद्रिभू: चित्रा सुवर्णी शतमूलिका आखुकर्णिका मूषिकपर्णी प्रतिपर्णशिफा सहस्रमूषी विक्रान्ता पत्रश्रेणी । सा द्विधा ह्रस्वा दीर्घा च । ह्रस्वगुणा:—कटूष्णा कफपित्तहरी आनाहज्वरशूलार्त्तिहरी पाचनी च । रा.नि.व.३ । द्रवन्तीक्षुपे । কালদন্তী । रा.नि.व.५ । दन्तीभेदे বড়দন্তী । गुणा:—कटुतिक्तकषाया शीता लघु: कटुविपाका मूत्रकफकृमिघ्नी च । भा.पू.१भ. । कटुका तिक्ता उष्णा शीतला रसायनी सरा लघु: कषाया कृमिग्रन्थिमूत्रकृच्छ्रप्रमेह कुष्ठघ्नी च । वृहती शीतला मधुरा रसबन्धनी चक्षुष्या रसायन शूलघ्नी ज्वर



कृमित्रणाखुविषघ्नी च । वै निघ. । राज. । सि. यो.कृमि.चि. कृमिघ्नपूपिकायां श्रीकण्ठ. ।

**आखुगन्धो** । स्त्री । कर्पूरहरिद्रायां । वै निघ. ।

**आखुजित्** । स्त्री । भूम्यामलक्याम् ।

**आखुपर्णा (र्णिका) (र्णी)** । स्त्री । स्थूलमूषिककर्ण्यां । বড় ইন্দুরকাণী । हिं मूषाकाणी वा उन्दुरकन्नी । रत्ना. । ह्रस्वदन्त्यां । क्षुद्र दन्ती । कृष्णदन्त्यां । কাল দন্তী । र.मा. । वृहद्दन्त्याम् । भा.पू.१भ. । मण्डूकपर्ण्याम् (থুলকুড়ি) । च.द. कृमि.चि. ।

**आखुपाषाण: (क:)** । पुं । A kind of mineral, loadstone. लौहचुम्बुके । চুম্বক-পাথর । आखुपाषाणनामाऽयं लौहसङ्करकारक: । रा.नि.व.१३ गुणा:—स्निग्ध: पारदस्य नियामक: । लौहभेदकरश्चैव वीर्य्यकृत् कान्तिवर्द्धन: । त्रिदोषसर्व्वव्याधीनां नाशक: परिकीर्त्तित: । अशुद्ध: स तु विज्ञेय: सप्तधातुविनाशकृत् । दाहं चित्तभयञ्चैव लालास्रावं तथा भ्रतिं । अनेकवेदनाश्चैव बहुव्याधिं तृषां तथा । करोत्यतो मूर्खहस्ते न दातव्य: कदाचन । तत्समीपे नैव वाच्य: प्राणघातकरो ह्यसौ ॥ वै.निघ. ।

**आखुफला** । स्त्री । ह्रस्वदन्त्याम् । वै.निघ. ।

**आखुभुक्** । पुं । रक्तापामार्गे । विड़ाले । मद. व १२ । [ मूषिक: ।

**आखुमांसम्** । क्ली । मूषिकमांसे । See

**आखुविषम्** । क्ली । दारुमोचे । দারমুজ । प.मु. ।

**आखुविषजित्** । पुं । सप्तपर्णवृक्षे ।

**आखुविषहा (षापेहा)** । पुं । देवताड़वृक्षे । प.मु. । पीतदेवदालीलतायां । रा.नि.व.३ ।

**आखुश्रुति:** । स्त्री । क्षुद्रमूषिककर्ण्यां । ছোট ইন্দুরকাণী । रा.नि.व.३ ।

**आखेट: (क)** । पुं । मृगयायां । अम. । श.र. ।

**आखेटशीर्षकं** । क्ली । कुट्टिमभेदे । সুড়ঙ্গ ।

**आखोट: (ड़:)** । पुं । अक्षोटवृक्षे । আক্রোট । रा.नि.व.११ । See अक्षोट: ।

**आखोटक:** । पुं । मृगयाकुशल-कुक्कुरे । শিকারী কুকুর । तत्पर्य्याय:—विश्वकद्रु: । हा. ।

**आगति:** । स्त्री । सम्प्राप्तौ । मा.नि. ।

**आगन्तु: (क:)** । त्रि । आगमनशीले । अम. ।

**आगन्तुकज्वर:** । पुं । अभिघाताद्युत्पन्ने ज्वरे । "एवं गणित आगन्तुज इति । आगन्तुजशब्देनाभिघातादयो हेतव उच्यन्ते । कुतश्चिद्व्याधय: कार्य्यकारणयोरभेदोपचारादागन्तुजा अभिघाताद्यनेककारणयोगादनेके भवन्ति । तथाप्यागन्तुजत्वेन साम्यादागन्तुकोऽप्यत्रैक एव गणित: । अभिघाताभिषङ्गाभ्यामभिचाराभिशापत: । आगन्तुर्जायते दोषैर्यथा स्वं तं विभावयेत् ॥ ये भूतविषवाय्वग्निक्षतभङ्गादिसम्भवा: । रागद्वेषभयाद्याश्च ते स्युरागन्तवो गदा: ॥ भा.म.१भ.ज्व.चि । आगन्तुर्हि व्यथापूर्व्वो जायते पश्चान्निजैर्दोषैरनुबध्यते इति । चर. ।

**आगन्तुव्रण:** । पुं । सद्योव्रणे ।

**आगम:** । पुं । शास्त्रे । "आगमनादागम: शास्त्रम् ।" सु.सू.४०अ. ।

**आगमावर्त्ता** । स्त्री । वृश्चिकालीक्षुपे । বিছাতি গাছ । रा.नि.व.४ । क्षुद्रमेषशृङ्ग्याम् । वै.निघ. ।

**आगस्त्यम्** । क्ली । वकपुष्पे ।

**आगारम्** । क्ली । गृहे । अ.टी. । [सु.चि,१अ. ।

**आगारगोधिका** । स्त्री । गृहगोधिकायां ।

**आगारधूम:** । पुं । गृहधूमे । ঝুল । वै.निघ. २भ,वा.व्या.त्वक्सुप्ततायाम् ।

**आगारधूमाद्यतैलम्** । क्ली । उपदंशे हितं । गृहधूम: १भ. हरिद्रा २भ. सुराकिट्टं ( মদের ছাঁকা ) ३भ. एभि: पलत्रयं तैलं पचेत् । च.द. उ.द.चि. । [বামুনহাটী । सु.चि.१अ.भ. ।

**आगारलोमिका** । स्त्री । गृहलोमिकायां ।

**आग्नेयम्** । क्ली । सुवर्णे । रा.नि.व.१३ । घृते । पाणिनि: । रक्ते । हे.च. । पुं । वासायां । वै.निघ. ज्व.लाक्षातैले । त्रि । पित्तोद्दीपके, क्षुधाजनने । तच्च कट्वम्ललवणम् । सु.सू. ।

**आग्नेयवायु:** । पुं । अग्निकोणस्थसमीरणे । অগ্নিকোণের বায়ু । "आग्नेयदाहकृद्रुक्ष: ।" भा. ।

**आग्नेयी** । स्त्री । अश्वस्य शुभसूचकच्छायायाम् । "पद्मरागारुणा चैवसाग्नेयी परिकीर्त्तिता ।" ज.द. ।

**आग्रमास:** । पुं । चित्रकवृक्षे । [अम. ।

**आग्रहायणिक:** । पुं । अग्रहायणमासे ।

**आघट्टक:** । पुं । रक्तापामार्गक्षुपे । रा,नि.व ३ ।

**आघाटः** । पुं । अपामार्गे । रा.नि.व.४ ।

**आघातः** । पुं । हनने । छेदने । চোট্ লাগা ।

**आघातज्वरः** । पुं । अभिघातजन्यज्वरे । See आगन्तुकज्वरः ।

**आघारः** । पुं । घृते । हला. ।

**आघ्राणम्** । क्ली । नासया घ्राणग्रहणे । সোঁকা । तृप्तौ । है.च. ।

**आघ्रातः** । त्रि । शिङ्घिते । मे. । तृप्ते । हे च. ।

**आङ्गम्** । त्रि । कोमलाङ्गे । त्रिका. ।

**आङ्गारम्** । क्ली । अङ्गारसमूहे । अ.टी.रा. ।

**आङ्गिकः** । पुं । अश्वत्थवृक्षे । रा.नि.व.११ ।

**आङ्गुष्ठिः** । स्त्री । अङ्गुरीयके । আংটী ।

**आचः** । पुं । आच्छुक-पुष्पवृक्षे ।

**आचमनम्** । क्ली । ह्रीवेरे । বালা । भोजनान्त-मुखक्षालने । আঁচান । मद.व.३ ।

**आचमनकः** । पुं । निष्ठीवनपात्रे । পিক্‌দানি, ডাবর ।

**आचान्तः** । त्रि । कृताचमने ।

**आचामः** । पुं । आचमने । श.र. । भक्तमण्डे । रत्ना ।

**आचामनकः** । पुं । कटकोलि । পিক্‌দানি । तत्पर्य्यायः,—प्रोण्यः कठकोलः पतद्ग्रहः, (हा) । हारा. ।

**आचारः** । पुं । सदाचरणे । "मैत्री सद्भिः समं कुर्य्यात् स्नेहं सत्सु च सर्व्वथा । संसर्गं साधुभिः कुर्य्या-दित्यादि ।" भा. ।

**आचारी** । स्त्री । हिलमोचिकायाम् । হিঞ্চে-শাক । हुरहुर इति लोके । गुणाः—शोथकुष्ठ-कफपित्तघ्नी । भा.पू.१भ. ।

**आचितम्** । क्ली । दशभारमितमानविशेषे । २৫ মণ । अम । द्व्ययुतपले । "पलानामयुतद्वये ।" मे. त्रिकं ।

**आचुः** । पुं । आच्छुकवृक्षे । আচফুলের গাছ । भैष. कन्दर्पसारतैलि । [र.मा.

**आच्छुकः** । पुं । रञ्जकद्रुमे । আচফুলের গাছ ।

**आच्छादः** । पुं । वस्त्रे । কাপড় ।

**आच्छादनम्** । क्ली । कार्पासि । वस्त्रे । रत्ना. । पिधाने । मेनचतुष्कं ।

**आच्छादनफला** । स्त्री । रक्तकार्पासि ।

**आच्छादनी** । स्त्री । कार्पास्याम् ।

**आच्छुकः** । पुं । (Morinda letrofolia, and morinda citrifolia, and morinda tinctoria.) स्वनामख्यातवृक्षे । আচ্, আউচ্ গাছ । हिं आल । र.मा. ।

**आच्छोदनम्** । क्ली । मृगयायाम् । अम. ।

**आजम् (कम्)** । क्ली । घृते । जटा. । छाग-घृते । च.चि.र.पि. ।

**आजनवनीतम्** । क्ली । छागदुग्धजातनवनीते । गुणाः—मधुरं कषायं त्रिदोषघ्नं चक्षुष्यं दीपनं बल्यञ्च । रा.नि.व.१५ । नवोत्थं नवनीतं क्षय कासघ्नं बल्यं नेत्ररोगघ्नं कफघ्न दीपनञ्च । अत्रि. ८म. । See छागनवनीतम् ।

**आजन्मसुरभिपत्रः (त्रा)** । पुं,स्त्री । मरुवक-वृक्षे । गन्धतुलसी । नागदना इति च लोके । रा.नि.व.१० ।

**आजमूत्रम्** । क्ली । छागमूत्रे । मद.व.८ ।

**आजरसः** । पुं । छागमांसक्वाथे । च.द.यक्ष्म. ।

**आजवल्लः** । पुं । वनतुलस्याम् । বনতুলসী । हि श्वेतवर्वरी । मं रानतुलसभेद । प्रा आजवला । गुणाः—"आजवल्लः कटूष्णः शीतो दाहकरः प्रियः । रुच्यो रुच्यो दीपकः स्याल्लघुः पाके च पित्तलः । तिक्तश्च मधुरश्चैव सुखप्रसवकारकः । व्रणो वातहरश्चैव कफनेत्ररुजापहः । मूत्रकृच्छ्रारुचिविष-कामलाकुम्भकामलाः । आनाहवातशूलाग्निमान्द्य-रुग्विषरुक्क्रिमीन् । रक्तदोषश्वासकासदद्रुहृत्पार्श्व रुग्-ज्वरान् । कण्डूकुष्ठवमींश्चैव नाशयेदिति कीर्त्तितः । सुगन्धाजवल्लः शीतः कटुश्चोष्णश्च तृभित्कृत् । सुगन्धः पित्तकृन्निद्राजननो वान्तिवातनुत् । ग्रहबाधा-पार्श्वशूल-कासश्वास-कफाञ्जयेत् । शोथञ्चाङ्गस्य दौर्गन्ध्यं नाशयेदिति कीर्त्तितः ॥" वै.निघ. ।

**आजक्षीरम्** । स्त्री । छागदुग्धे । गुणाः—आजं गव्यगुणं ग्राही दीपनं लघु क्षयार्शोऽतीसारप्रदरास्त्र-भ्रमज्वरघ्नं । एतच्च दुग्धं सर्व्वरोगघ्नम् । मद.व.९ । छागं कषायं मधुरञ्च शीतं ग्राहि लघु पित्त-क्षयापहारि । कासज्वराणां रुधिरातिसारे हितं पयश्छागलजं त्रिदोषजित् । अत्रि.८म. । वा.टी. हेमा ।

**आजानेयः** । पुं । कुलीनाश्वे । हे.च । तदुक्तं—"शक्तिभिर्भिन्नहृदयाः स्खलन्तोऽपि पदे पदे । आजानन्ति यतः संज्ञामाजानेयास्ततः स्मृताः ।" शालिहोत्रः ।

**आज्यम्** । क्ली । घृते । रा.नि.व.५ । श्रीवासे । টার্পিন তৈল इति कश्चित् । शब्दकल्प. ।

**आञ्जिनेयः** । पुं । जन्तुविशेषे । আজ্‌নাই, আঞ্জুনি । श.मा. ।

**आटरुषः**<br>**आटरुषः (षकः)** } पुं । (Justicia adhatoda. Adhatoda vasica) वासकक्षुपे । ছোট বাসক, মধু বাসক বা বাসন্তী । हिं. अरुषा । मं. अडुलसा । रा.नि.व.४भा.पू.१भ. । सि यो. र.पि.चि.सन्धान योगे । "अटरूषकनिर्य्यूहे ।" "राजवृक्षाटरूषकैः ।" सि.यो.ज्वरे । See वासकः ।

**आटिः (टी)** । पुं, स्त्री । (Turdus ginginianus) शरारिपक्षिणि । শরাল-পাখি । मं बगलीपक्षीण । मद.व.१३ । See आड़ी ।

**आटीकरः** । पुं । वृषे । वै.निघ. ।

**आठोमुखम् (वदनम्)** । क्ली । व्रणविस्रा-वणाय अस्त्रविशेषे । सु.सू.८क. । शरारिचञ्चुवदा-कारत्वात् तथाभिधीयते । "कुशाटीवदने स्याव्ये द्व्यङ्गुलं स्यात्तयोः फलम् ।" अत्रिः ।

**आटोपः** । पुं । उदरमध्ये सवेदनगुड़गुड़ाशब्दे । स च वायुजन्यो भवति । मा.नि. । "आटोपो गुड़-गुड़ाशब्दः प्रोक्तो जठरसम्भवः ।" भा. ।

**आड़म्बरः** । पु । Eyelid. नेत्रच्छदे । চ'কের পাতা ।

**आड़िः** । पुं । शरारिपक्षिणि । শরাল-পাখী । मद.व.१२ । मत्स्यविशेषे । আড় মাছ । गुणाः—गुरुः स्निग्धः वातश्लेष्मकोपनः बलकरः शुक्रमेधा-ग्निवर्द्धकश्च । राज. ।

**आड़िका (ड़ी) (ड़ीको)** । स्त्री । शरालि-पक्षिणि । मद.व.१२ । गुणाः—"आड़ी वात-विकारकासहननी बल्या वृषा दीपनी ।" अत्रि. २२अ. ।

**आढ़कः** । पुं, क्ली । शमीधान्यविशेषे । অড়হর । हिं टोर । प.मु. । अष्टशरावमिते धान्यमानविशेषे । আড়ি । मं पायली । प्रस्थचतुष्टये । "चतुः-प्रस्थमथाढकम्" पुष्कलचतुष्टयमिते माने । पुष्क-लानि तु चत्वारि आढकः परिकीर्त्तितः । तत्-पर्य्यायः,—भाजनं पात्रं कांसपात्रं चतुःषष्टिपलम् भा.) ।

**आढ़का** । स्त्री । सुराष्ट्रज-आढ़कीविशेषे । টুমুর । तत्पर्य्यायः—कांसोद्भवा । द्रवद्रोणचतुर्थ-भागे ( ৮ বা ১৬ সের ) । See आढ़की ।

**आढ़किकः (कीनः)** । त्रि । आढ़कमित-वपनयोग्यक्षेत्रे । अम. ।

**आढ़किका** । स्त्री । आड़क्यां । वै.निघ. ।

**आढकी** । स्त्री । ( Cajanus indicus, syn. cytisus cajan.) शिम्बीधान्यविशेषे । অড়র, আইরি । हिं रहर, टर, तुवरी, टुमुर । हेमा. । तत्पर्य्यायः,—तुवरीवर्ध्या करवीरभूजा वृत्तवीजा पीतपुष्पा (रा), मृत्स्नालं (शब्दर.), काक्षी मृत्स्ना तुवरिका मृतालकं सुराष्ट्रजं (अ), मृत्स्नालकं (अ.टी.) । सा श्वेतरक्तपीतभेदात्त्रिधा । तत्र साधा-रणाढकीगुणाः—कषाया मधुरा कफपित्तजित् ईष-द्वातकरी रुच्या गुरुः ग्राहिणी च । इति त्रिदला-ढकीगुणाः । रा.नि.व.१६ । "आढ़की तुवरा रुच्या मधुरा शीतला लघुः । ग्राहिणी वातजननी वर्ण्या-पित्तकफास्त्रजित् ॥" भा.पू.१भ. । "मृदुः कषाया च सरक्तपित्तं क्षतं कफं हन्ति मुखव्रणञ्च । गुल्म-ज्वरारोचककासकृच्छ्रहृद्रोगदुर्नामहराढकी स्यात्" । अत्रि.१५अ. । श्वेताढ़की दोषकरी । रक्ता—बल्या रुच्या पित्ततापघ्नी च । पीता—दीपनी पित्त-दाहघ्नी च । रा.नि.व.१६ । परिमाणभेदे । আড়ি । मे. कत्रिकं । सौराष्ट्रमृत्तिकायाम् । हे.च. । गोपी-चन्दने । तन्नामकगन्धद्रव्ये । अ.टी. ।

**आढ़कीयूषः** । पुं, क्ली । तुवरीयूषे । অড়-রের-ঝোল । गुणाः—बल्यम् । रा.नि.व.१६ । "भवेदाढ़क्या मधुरञ्च यूषं विशोषणं वातनिवा-रणञ्च । श्लेष्मापहं पित्तहरं नराणां ॥" अत्रि. १३अ. । [हरिद्रादौ ।

**आढ्यपवनः** । पुं । ऊरुस्तम्भरोगे, वा वचा-

**आढ्यवातः** । पुं । वातरक्त, वातरोगभेदे । लक्षणं—"चलः स्निग्धे मृदुः शीते शोफोऽङ्गेषु मृदुस्तथा । आढ्यवात इति ज्ञेयः सकृच्छ्रो मेदसा-वृतः ॥ च. ।

**आढ्या** । स्त्री । अजमोदायाम् । शाकुनी । वै. निघ. ।

**आणि:।** पुं, स्त्री। तन्नामकाममर्मस्थाने। इदं क्षायुमर्म्म। तस्य च स्थानम् जानूर्द्ध्वमुभयपार्श्वतो ऽङ्गुलित्रयमितम्। सु.शा.६अ.।

**आतङ्क:।** पुं। ज्वरे। रोगे। रत्ना.। सन्तापे। शङ्कायाम्। मे.कत्रिकं।

**आतञ्चनम्।** क्ली। तर्पणे। अम.। उपद्रवे। निक्षेपे। सु.प्रतीवापे।

**आतनम्।** क्ली। दर्शने।

**आतप:।** पुं। रौद्रे। तत्पर्य्याय:,—किरण तेज: (नि.), रौद्र प्रकाश: द्योत: (ख), दिनज्योति: सूर्य्यालोक: दिनप्रभा रविप्रकाश: प्रद्योत: तमारि: तापन: द्युति:। एतत्सेवनं स्वेदमूर्च्छारक्तत्वणा-दाहश्रमकरं पित्तवैवर्ण्य करञ्च। मद.व.१२। कटु: रूक्ष: नेत्ररोगप्रकोपनश्च। रा.नि.।

**आतपतण्डुल:।** पुं। असिद्धतण्डुले। आलो चाल।

**आतपत्रम् (कम्)।** क्ली। छत्रे। रत्ना.।

**आतपर्णिका (र्णी)।** स्त्री। क्षीरिकायाम्।

**आतर्पणम्।** क्ली। तृप्तौ। मे.।

**आतपशुष्क:।** त्रि। रौद्रशुष्के।

**आतपाभाव:।** पुं। छायायाम्।

**आतापि: (पी)।** पुं। चिल्लपक्षिणि। चिल-पक्षी। मं शशमारी। हला ॥

**आतायी।** पुं। चिल्लपक्षिणि। चिल। अम.।

**आति:।** पुं। शरारि-पक्षिणि। हला.।

**आतु:।** पुं। उडुपे। भेला, मार।

**आतुर:।** त्रि। रोगिणि। रा.नि.व.२०। स्मृति-निर्देशकारित्वमभीरुत्वमथापि वा। ज्ञापकत्वञ्च रोगाणामातुरस्य गुणा मता:॥ भेष.।

**आत्ण्य:।** पुं। (Annona reticulata.) The custard apple tree आता इति प्रसिद्धफलवृक्षे। आता गाछ। हिं सरीफा। मं सिताफलीचेझाड़। क्ली। तत्फले। फलगुणा: —तृप्तिजनकं रक्तवर्द्धकं स्वादु शीतलं हृद्यं बल्यं मांसकरं दाहरक्तपित्तवातघ्नञ्च। राज.।

**आत्मगन्धक:।** पुं। गन्धवोलि। मं रत्यावोल। वै.निघ.।

**आत्मगन्धिहरिद्रा।** स्त्री। कर्पूरहरिद्रा-याम्। मं कापूरहलदी। वै. निघ.।

**आत्मगुप्ता।** स्त्री। (Mucuna pruriens, Carpopogon prurieus.) कपिकच्छौ। आलाकुशी, दया, धुनार गुड़, शुयाशिशी इति च। हिं कोंच। मं कुहिरी। तें दुलगुड़ि।। गुणा: —शुक्रवर्द्धनी मधुरतिक्ता मांसवर्द्धका गुरु: वातघ्नी बल्या कफपित्तरक्तघ्नी च। तद्दीजं—वात-घ्नम् अतिशुक्रवर्द्धकञ्च। भा.पू.१भ मद.व.१। तत् फलं स्त्रीषु हर्षजनकत्वात् वाजीकरणम्। वा.सू. १५अ, दूर्व्वादिव.। स्वादु: तृष्णा वातघ्नी शीतपित्ता-सघ्नी व्रणघ्नी च। रा.नि.व.३। दूर्व्वानन्तानिम्बवासा-त्मगुप्ता। शतावर्य्याम्। रा.नि.व.३।

**आत्मग्राही।** त्रि। कुक्षिम्भरी, स्वोदरपूरके।

**आत्मघोष: (षा)।** पुं, स्त्री। काके। हारा.।

**आत्मज:।** कुक्कुटे। श.च.।

**आत्मजा।** स्त्री। कन्यायाम्। शुकशिम्ब्याम्। च.चि.३अ.।

**आत्मनीन:।** पुं। पथ्ये। रा.नि.व.३०। पुं। प्राणधारे। पुत्रे।

**आत्ममूली।** स्त्री। दुरालभायां। मं धामासा। श.मा.।

**आत्मम्भरि:।** त्रि। आत्यूने। अम.।

**आत्मरक्षा।** स्त्री। महेन्द्रवारुणीलतायां। वड़ माकाल फल लता। रा.नि.व. ३। मद.द्र.व.१।

**आत्मवत्।** त्रि। यत्नवति, धृतिमति।

**आत्माविज्ञानम्।** क्ली। योगाभ्याससमाधिना परमात्मस्वरूपविज्ञाने। वा.सू.१अ.।

**आत्मशल्या।** स्त्री। शतावर्य्यां। शतमूली। रा.नि.व.४।

**आत्महत्या।** स्त्री। स्वेनैव स्वकीयप्राणनाशे। आत्मघाते।

**आत्मा।** पुं। शरीरे। मे.मत्रिकं। जीवे। वायौ। अग्नौ। हे.च.। मनसि। मे.।

**आत्माशी (श्न्)।** पुं। मत्स्यविशेषे। त्रिका.।

**आत्मोद्भवा।** स्त्री। (Glycine debilis.) माषपर्ण्यां। माषाणी। वनमुद्गे। रा.नि.व.३। कन्यायाम्।

**आत्यूक:।** पुं। वज्रे।



**आत्यूह:।** पुं। Gallinule. दात्यूहपक्षिणि।

**आत्रेय:।** पुं। An essential juice of the body. शरीरस्थ रसधातौ। हे.च.।

**आत्रेयिका (यी)।** स्त्री। ऋतुमत्यां स्त्रियां। हला.। मे. यत्रिकं।

**आदर्श:।** पुं। दर्पणे। टीकायां। प्रतिपुस्तके। मे. शत्रिकं।

**आदर्शमण्डल:।** पुं। मण्डलिजातीयसर्प-विशेषे। सु.कल्प.४अ.। See सर्प:।

**आदानम्।** क्ली। अश्वालङ्कारविशेषे। हे.च.। निदाने। रोगलक्षणे। रा.नि.व.२०।

**आदाना (नी)।** स्त्री। हस्तिघोषायाम्। धुन्दूल। हिं लोया नतुवा। र.मा.। भेष.,चुद्री, त्रि,महानीलतैले।

**आदिकारणम्।** क्ली। निदाने। अम.।

**आदित्य:।** पुं। अर्कक्षुपे। श्वेतार्कक्षुपे। आकन्द गाछ। सूर्य्ये। अम.।

**आदित्यकान्ता।** स्त्री। आदित्यभक्तायाम्। हुड़हुड़िया। वै.निघ.

**आदित्यतेजा।** स्त्री। आदित्यभक्तायां। ब्राह्मी-शाके।

**आदित्यपत्र: (क:) (त्रा)।** पुं, स्त्री। आदित्यभक्ताभेदे। हुड़हुड़िया भेद। गुणा:—कटु: उष्णवीर्य्य: कफघ्न: वातरोगघ्न: दीपन: जाठर-गुल्मघ्न: अरोचकघ्नश्च। रा.नि.व.४। अर्कवृक्षे।

**आदित्यपर्णिका (नी) (र्णी)।** स्त्री। आदित्यभक्तायाम्। हुड़हुड़िया। तन्नामकौषधि-विशेषे। राधापद्म। "या सूर्य्यकान्तेति भण्यते, चीरञ्च यस्या: सुवर्णाभं, पुष्पाणि च सूर्य्यमण्डलाका-राणि।" च.चि.१अ.सु.चि.१५अ.। तथा "सपत्र-कोमलदलहिमात्ययजमूलप्रधानक्षुपे। सूर्य्यंहुखीति लोके।" सूर्य्यमुखीलक्षणं यथा—"मूलिनी पञ्चभि: पत्रै: सुरक्ताशुककोमलै:। आदित्यपर्णिनी ज्ञेया सदादित्यानुवर्त्तिनी। आदित्यपर्णिनी ज्ञेया तथैव हि हिमक्षये॥" सु.चि.३०अ.।

**आदित्यपाक (गुड़ूची) तैलम्।** क्ली। एतत्तैलं कुष्ठहरं। मञ्जिष्ठा लाक्षा-त्रिफला-हरिद्रा-मन:शिला-हरिताल-गन्धकचूर्णै: समभागै: तैलं पाच्यम्। अत्र जलं विना पाकानुपपत्ते: तैलसमं जलं दत्त्वा जलशोषपर्य्यन्तं सचूर्णं तैलमातपे स्थाप्यम्। तैलं १श. द्रव्यं।० शरावाश:। च.द.चुद्र-रो.चि.। अन्यत् केशरोपणे हितम्। तैलमिदं वटाङ्कुर-भृङ्गीकेशोचूर्णेन गुड़ूचीस्वरसेन रौद्रपक्वं करणीयम्। रस.र.चुद्ररो चि.।

**आदित्यपुष्पा।** स्त्री। धातकीपुष्पक्षुपे। धाई-फूल। चीरकाकोल्यां।

**आदित्यपुष्पिका (ष्पी)।** स्त्री। अर्कवृक्षे। लोहितार्कक्षुपे। रक्ताकन्द। मं अर्कपुष्पी। र.म.।

**आदित्यबन्धु: (न्धवा)।** पुं, स्त्री। पद्मे। सूर्य्यावर्त्ते। हुड़हुड़े।

**आदित्यभक्ता।** स्त्री। (Cleome viscosa, Polanisia icosandra.) स्वनामख्यातक्षुपे। वन शल्ते शुल्टे, हुड़हुड़े इति भाषा। हिं हुलहुल्। मं सूर्य्यफुलवल्ली। आदिता आदित्यभक्ति इति च देशविशेषभाषा। तत्पर्य्याय:,—वरदा अर्क-भक्ता सुवर्चला सूर्य्यलता सूर्य्यावर्त्ता अर्ककान्ता मण्डूकपर्णी सुरसम्भवा सौरि सुतेजा अर्कहिता वरिष्ठा मण्डूकी सप्तनामा देवी मार्त्तण्डवल्लभा विक्रान्ता भास्करेष्टा। सा श्वेतपीतभेदेन द्विधा। गुणा:—शीतला तिक्ता कटु: कफघ्नी त्वग्दोषकण्डू-व्रण-कुष्ठ-भूतग्रह-शीतज्वरघ्नी च। रा.नि.व.४। तथा स्वादुपाकरसत्वं गुरुत्वं चाररसत्वं अपित्त-वर्द्धकत्वं विष्टम्भित्वं वातहरत्वञ्च। कर्णशूलघ्नी च. द.। हिमा रूक्षा स्वादुपाका सरा गुरु: कटु रपित्तला चारा विष्टम्भकफवातघ्नी। अपरा च तिक्ता कषाया उष्णा सरा रूक्षा लघु: कटु: कफ-पित्तरक्तश्वासकासारुचिज्वरघ्नी। विस्फोटकुष्ठमेहा-स्रयोनिरोगकृमिपाण्डुघ्नी च। भा.।

**आदित्यवल्लभा (ल्लिका) (ल्ली)।** स्त्री। आदित्यभक्तायाम्। वै. निघ.।

**आदिवलप्रवृत्त:।** त्रि। शुक्रशोणितान्वयजे। ये रोगा: शुक्रशोणितान्वया: कुष्ठार्श:प्रभृतय:। तेऽपि पुनर्द्विविधा मातृजा: पितृजाश्चेति। सु.सू. २४अ.। एते आध्यात्मिका: इति कथ्यन्ते।

**आदिमा।** स्त्री। भूमौ।

**आदिवृक्ष:।** पुं। अश्मन्तकवृक्षे। मं आपटा। वै.निघ.।

**आदीनव:।** पुं। दोषे। हारा.। क्लेशे। अम.।

**आद्य:** । पुं । अङ्गुष्ठे । रत्ना. । क्ली । धान्ये । रा. नि.व.१६ । त्रि । भक्षणीयद्रव्ये ।

**आद्यधातु:** । पुं । शरीरस्थरसधातौ । वै.निघ. ।

**आद्यपुष्पम्** । क्ली । त्रिभागकुङ्कुमोपेतक्रौवेर-चन्दने । "त्रिभागकुङ्कुमोपेतं तदुक्तञ्चाद्यपुष्पकम् ।" रा.नि,व,२२ ।

**आद्यमाषक:** । पुं । पञ्चगुञ्जापरिमितमाष-माणे । ५ रत्ति । अम. । ८० गुञ्जायां । वै.निघ. ।

**आद्यमाषा** । स्त्री । माषपर्णीलतायाम् । माषाणी ।

**आद्या** । स्त्री । भूमौ । वै.निघ. ।

**आद्यून:** । त्रि । औदरीके । अम. ।

**आर्द्र (कम्)** । क्ली । (Zingiber officinale.) Common ginger. मूलविशेषे । আদা । हिं अदरख् । ते. अल्ल । गुणा:—"कफ-वातघ्नं स्वरकरं विबन्धानाहशूलघ्नं कटूष्णं रुच्यं हृद्यं वृष्यञ्च ।" सु.सू.४५अ. । पुं । शलमार्जारे ।

**आधमनम्** । क्ली । स्फीतौ ।

**आधानम्** । क्ली । गर्भाधाने । [का. ।

**आधानिकम्** । क्ली । गर्भधारणसंस्कारे । त्रि.

**आधार:** । पुं । अधिकरणे । आलवाले । मे. ।

**आधि:** । पुं । मनोव्यथायां । प्रत्याशायां । मे. ।

**आधिदैविक:** । त्रि । दैवताधिकृते ।

**आधिभोग:** । पुं । अश्वगवादुग्रपभोगे ।

**आधिभौतिक:** । त्रि । क्षित्यादिसम्भूते ।

**आधिमन्यव:** । पुं । ज्वराग्नौ । हारा. ।

**आधिशमी** । स्त्री । शमीभेदे । वै.निघ. ।

**आधोरण** : पु पुं । हस्तिपके । हला. ।

**आध्मात:** । पुं । वायुरोगभेदे । मे.तत्रिकं । क्ली । उदरस्फीतौ । च.द.अग्निमा.चि.पथ्यात्रिके । त्रि । दग्धे । स्फीते ।

**आध्मान:** । पुं,क्ली । वातव्याधिविशेषे । आनाहे उदरस्फीतौ । পেট ফাঁপা । स्वरूपं यथा—साटोपमत्युग्ररुजमाध्मातमुदरं भृशम् । आध्मान-मिति जानीयाद्घोरं वातनिरोधजम् । आध्माने लङ्घनं पूर्व्वं दीपनं पाचनं तत: । फलवर्त्तिक्रियां कुर्य्याद्वस्तिकर्म्म च शोधनम् ॥ सु.नि.१अ. ।

**आध्मानी** । स्त्री । नलिकानामवणिग्द्रव्ये । रा. नि.व.१२ ।

**आध्या (नम्)** । स्त्री, क्ली । स्मृतौ । चिन्तायाम् । अम.श.र. ।

**आध्यात्मिक:** । त्रि । आत्मसम्बन्धीये ।

**आन:** । पुं । अन्तर्मुखश्वासे । उच्छ्वासे । वहि-र्मुखश्वासे । हे.च. । [भा. ।

**आनन्द:** । पुं । सम्मदे । मद्ये । राजजम्बूवृक्षे ।

**आनन्दपटम्** । क्ली । नवोढ़ावस्त्रे । हारा. ।

**आनन्दप्रभवम्** । क्ली । रेतसि । वीर्य्ये । हे.च. ।

**आनन्दभैरव:** । पुं । शीताङ्गसन्निपाते रस: । व्योषं त्रिकटु, पिप्पल्या मरिचस्य च पृथग्भागद्वयम् ग्राह्यम् । "हिङ्गुलञ्च विषं व्योषं मरिचं टङ्गणं तथा । जातीकोषं समं चूर्णं जम्बीरद्रवमर्द्दितम् । रक्तिमानां वटीं कुर्य्यात्...।" द्वितीय: ज्वराति-सारे । "हिङ्गुलञ्च विषं व्योषं टङ्गणं गन्धकं सम । जम्बीररससंयुक्तं मर्द्दयेद्यामकद्वयम् ॥" माचा १र. । तृतीय: प्रमेहाधिकारे । अत्र रस: पारदभस्म । "वङ्गभस्म मृतं स्वर्णं रसं चौद्रे विमर्द्दयेत् । द्विगुञ्जं भक्षयेन्नित्यम्...।" र सा सं. ।

**आदन्दभैरवी (वटी)** । स्त्री । शीताङ्गसन्नि-पाते रस: । हिङ्गुलं विषं त्रिकटु मरिचं टङ्गणं (সোহাগা) पिप्पली जातीकोषं (জয়িত্রী) द्रव्याणि समभागानि । विषं त्रिकटुकं गन्धं टङ्गणं मृत-शुल्वकं । धुस्तूरस्य च वीजानि हिङ्गुलं नवमं स्मृतम् । एतानि समभागानि दिनैकं विजयाद्रवै: मर्द्दये-च्चणकाभान्तु वटीञ्चानन्दभैरवीं । भक्षयेच्च पिबेच्चानु वरीमूलकषायकं ॥" र.सा.सं. ।

**आनन्दमयकोष:** । पुं । कारणशरीरे । सुषुप्तौ ।

**आनन्दा** । स्त्री । विजयायां । सिद्धि । हिं भाङ् । वार्षिकीपुष्पवृक्षे । বেলফুল । हिं वेला । भा.पू.१भ.पुव. । आरामशीतलायाम् । रा.नि.व. १० । मुद्गपर्ण्याम् । वै.निघ. ।

**आनन्दी** । स्त्री । আকন পাতা इति प्रसिद्धे वृक्षे । श.च. । आरामशीतलायाम् । रा.नि.व.१० ।

**आनन्दोदयरस:** । पुं । पाण्डुरोगे रस: । "पारदं गन्धकं लौहमभ्रकं विषमेव च । समांशं मरिचं चाष्ट टङ्गणञ्च चतुर्गुणम । भृङ्गराजरसै: सप्त भावनाश्चाम्लदाड़िमै: । गुञ्जाद्वयं पर्णखण्डे खादेत्सायं ।" भैष पाण्डु.चि. ।



**आननम्** । क्ली । मुखे । रा.नि.व.१८ ।

**आनय:** । पुं । उपनयने ।

**आनर्त्त:** । पुं । जले । मे.तत्रिकं ।

**आनाखु:** । पुं । इक्षुतुल्यायाम् । प.मु. ।

**आनाह:** । पुं । विण्मूत्ररोधकव्याधौ । মুদো । तस्य लक्षणं—"आमं शकृद्वा निचितं क्रमेण भूयो विबद्धं विगुणानिलेन । प्रवर्त्तमानं न यथास्वमेनं विकारमानाहमुदाहरन्ति ।" भा. । मा. नि ।

**आनील:** । पुं । नीलवर्णाश्वे । रङ्गे । मं कथिल । हे.च. । त्रि । ईषन्नीलवर्णे ।

**आनुलोमन:** । त्रि । अनुलोमकारिणि । च. द.अर्श.चि. ।

**आनुलोम्यम्** । क्ली । सारल्ये । च.द.अर्श: ।

**आनुवासनिकम्** । क्ली । अनुवासनवस्तौ । च. चि.३अ. । See अनुवासनवस्ति: ।

**आनूप:** । पुं । महिषे । जटा । अनारस इति ख्याते वृक्षे । हिज्जलवृक्षे । হেজলগাছ । प.मु. । अनूपदेशवासिप्राणिमात्रे । देशविशेषे । क्ली । भौम-जलविशेषे । तन्निरुक्तिगुणा:—"हम्बुवहुवृक्षश्च वातश्लेष्मामयान्वित: । देशोऽनूप इति ख्यात: आनूपं तद्भव जलम् ॥ इति । See अनूप: ।जले । रा.नि.व.१४ । See जलम् ।

**आनूपजलम्** । क्ली । अनूपदेशस्थजले । तद्गुणा: —स्वादु स्निग्धं गुरु पित्तहरं पामाकण्डूवात-कफज्वरकरञ्च । रा.नि.व.१४ ।

**आनूप-जाङ्गल-साधारणमांसम्** । क्ली । रुरु-हरिण-मृगक्रोड़ सारङ्गाणां मांसेषु । तच्च लघु स्वादु बल्यं वृष्य रुच्यञ्च । रा.नि.व.१७ ।

**आनूपपक्षिमांसम्** । क्ली । सारसहंसचक्र-वाकादिमांसे । गुणा:—शीतलं स्निग्ध वात-कफघ्न गुरुच । रा.नि.व. १७ ।

**आमूपभूमि:** । स्त्री । सजलभूमौ । See अनूप: ।

**आनूपमांसम्** । क्ली । कूलेचर-प्लव-कोशस्थ-पादिमत्स्यानां मांसेषु । ते च गवय रुरु-च्छागक्रोड़-गण्डकादय: । रा.नि.व.१७ । गुणा:—मधुरं स्निग्धं गुरु अग्निमान्द्यकरं कफकरं मांसपोषकं अभिष्यन्दि प्रायेण हितञ्च । भा.पू.१भ. । सि. यो. वा.व्या शाल्वण-स्वेद: ।

**आनूपवर्ग:** । पुं । तद्देशस्थप्राणिवर्गे । आनूप-वर्गस्तु पञ्चविध: । तद्यथा—कूलचरा: प्लवा: कोशस्था: पादिनो मत्स्याश्चेति । तत्र गजगवयादय: कूलचरा: पशव: । तन्मांसं वातहरं वृष्य मधुर-मित्यादिगुणयुक्तम् । हंससारसादय: प्लवा: सङ्घात-चारिणश्च—तन्मांसं रक्तपित्तादिहरम् । शङ्ख-शङ्खनखादय: कोशस्था:—तन्मांसं स्वादुरसपाक-त्वादिगुणम् । कूर्म्मकुम्भीरादय: पादिनश्च । सु. सू.४६अ. । आनूपास्तेषु विज्ञेया: श्लेष्मला वात-कोपना: । अत्रि.२०अ. ।

**आन्तरि (री) क्षजलम्** । क्ली । आकाश-सलिले । तच्चतुर्विधं भवति धार-कार-तौषार-हैम-भेदात् । तेषु धारं वर्षोद्भवं, वर्षोपलोद्भवं कारम्, नीहारतोयं तौषारं, तथा प्रातर्हिमोद्भवं हैममिति । धारमपि द्विविधं सामुद्रगाङ्गभेदात्—तयोर्गाङ्गं गुणाढ्यमदोषं पाचनञ्च । तदुक्तं आश्विने स्वाति-विशाखस्थे रवौ मेघो यद्वर्षति वारि तद्गाङ्गं, तथा मार्गशिर्षादिनक्षत्रेषु मेघो यद्वर्षति तोयं तत्सामुद्रं ज्ञेयम् । तत्परीक्षा दधिलिप्ते रौप्यपात्रे शाल्यो-दनपिण्डं विन्यस्य वर्षायां धृते न विकारमेति मुहू-र्त्तेन तदा गाङ्गं ज्ञेयम् । तच्च जलं गाङ्गं स्वादु शीतलं रुचिप्रदं कफ-पित्तघ्नं निर्दोषं स्वच्छं लघु नित्यगुणाधिकञ्च । तथा सामुद्रजलं शीतं गुरु कफवातकरं । यथा चित्रानक्षत्रे पतितं तद्गुणाढ्यं गाङ्गवद्भवति, तथोभयविधमेव वारि रसाश्रय-वशाद्भुवि पतितं नानारसत्वं याति । रा.नि.व.१४ । See गगनाम्बु ।

**आन्त्रम्** । क्ली । अन्त्रे ।

**आन्त्रिक:** । त्रि । अन्त्रसम्बन्धीये ।

**आन्दोलनम्** । क्ली । कम्पे ।

**आन्धसिक:** । त्रि । पाचके । अम. ।

**आन्ध्रदेशपूगम्** । क्ली । तद्देशीयपूगफले । गुणा:—पाके मधुरं किञ्चिदम्ल तुवरं वातकफघ्नं मुखजाड्यकरञ्च । वै.निघ. ।

**आप:** । (स) क्ली । जलसमूहे । पुं । अष्टवस्वन्य-तमे । स्त्री । आलकी । বালা । अम. ।

**आपक्कम्।** त्रि। ईषत्पक्वे कलायादौ। अम.। रोटिका इति केचित्।

**आपगाजलं (वारि) (सलिलम्)।** क्ली। नदीजले। गुणाः—"नादेयं दीपनं रुच्यं वातलं लघु लेखनं"। मद.व.८। See नदी।

**आपणः।** पुं। हट्टे। पण्यविक्रयस्थाने। अम.।

**आपतिकः।** पुं। श्येनपक्षिणि। बाजपक्षी।

**आपनम्।** क्ली। मरिचे। श.च.।

**आपनिकः।** पुं। इन्द्रनीलमणौ।

**आपन्नसत्वा।** स्त्री। गर्भवतीनार्य्याम्। रा.नि व१८।

**आपस्तम्भिनी।** स्त्री। लिङ्गिनीलतायाम्। रा नि.व.३।

**आपाकः।** पुं। पाँयान् इति कुम्भकारस्य आर्द्र-शुष्कमृत्पात्रदाहस्थाने। जटा.।

**आपानम्।** क्ली। पानभूमौ। हला.।

**आपालिः।** पुं। केशकीटे। উকুণ। अम.।

**आपिञ्जरम्।** क्ली। स्वर्णे। সোণা। रा नि. व.१३।

**आपीतः।** पुं। तूणीवृक्षे। তুঁদ গাছ। गुणाः—कटुः कषायो मधुरः लघुः तिक्तः ग्राही हिमो वृष्यः व्रण-कुष्ठ-रक्तपित्तघ्नश्च। भा.पू.१भ.। क्ली। रौप्यमाक्षिकधातौ। स्वर्णमाक्षिके। रा.नि. व.१३। पद्मकेशरे। मद.व.३।

**आपीनम्।** क्ली। ऊधसि। हला.। सुवर्ण-मुख्याम्। সোণামুখী। अम.। पुं। कूपे।

**आपुपः (पूपः)।** पुं। पिष्टके। रत्ना.। आनूपजन्तुमात्रे। राज.।

**आपूप्यः।** पुं। शक्तुके। चूर्णके। ছাতু, ময়দা, বেশম্। त्रिका।

**आपूर्य्यमाणः।** पुं। शुक्लपक्षे।

**आपूषम्।** क्ली। रङ्गे। রাং, রঙ্গ। रा.नि.व.१३।

**आप्तः।** त्रि। विश्वस्तवाचि। "रजस्तमोभ्यां निर्मुक्ता तपोज्ञानबलेन ये। येषां त्रिकालममलं ज्ञानमव्याहतं सदा। आप्ताः शिष्टा विबुधास्ते तेषां वाक्यमसंशयम्॥" चर.।

**आप्ता।** स्त्री। जटायाम्। हारा.।

**आप्यम्।** क्ली। कुष्ठौषधौ। कुड़। श.टी.। भा.पू.१भ.। त्रि। जलविकारजे फेनादौ।

**आप्यायनम्।** क्ली। तर्पणे। प्रीणने। रा.नि.।

**आप्ल(प्ला)वः (प्लुतम्)।** पुं, क्ली। स्नाने। अम.। हे. च.।

**आफिङ्गम्।** क्ली। अहिफेने। श.चि.।

**आफीनम्।** क्ली। अहिफेने। वै.निघ.।

**आफु(फू) कम्।** क्ली। अहिफेने। আফিম্। भा.पू.१भ.।

**आबाधा।** स्त्री। पीड़ायाम्।

**आब्दिका।** स्त्री। तिन्तिड्याम्। श.र.।

**आभा।** स्त्री। वव्वूले। বাবলা। मं बाभूल। भा.पू.१भ.वटादिव.। च.द भग्न.चि.वा.व्या.एरण्ड-पाके। भा.चिकशूल-चि.। महाशतावर्य्याम्। See वर्वूरः।

**आभागुग्गुलुः।** पुं। भग्नाधिकारे, भग्नसन्धाने च हितकरः। आभावव्वूले। বাবলা। "आभा-फलत्रिकव्योषैः सर्व्वैरेभिः समीकृतैः। तुल्यो गुग्गुलुरायोज्यो भग्नसन्धिप्रसाधकः॥ च.द.भग्न.चि.।

**आभीलम्।** क्ली। शरीरपीड़ायाम्। वै.निघ.।

**आमः।** पुं। व्याधिमात्रे। मे.। मलवैषम्यरोगे। रा.नि.व.२०। अपक्वान्नजरसे। सि.यो.अजी.चि. वृन्दः। तल्लक्षणं यथा—"आहारस्य रसः सारो यो न पक्वोऽग्निलाघवात्। आमसंज्ञां स लभते बहु-व्याधिसमाश्रयः। आममन्नरसं केचित् केचित्तु मल-सञ्चयम्। प्रथमां दोषदुष्टिं वा केचिदामं प्रचक्षते॥ उष्मणोऽल्पबलत्वेन धातुमाद्यमपाचितम्। दुष्ट-मामाशयगतं रसमामं प्रचक्षते॥" इति। विज.र.। षट्प्रकाराजीर्णरोगेषु। See अजीर्णम्।

**आमकः।** पुं। कुष्माण्डे।

**आमगन्धिः।** त्रि। विस्रगन्धयुक्ते। আঁস্টে গন্ধযুক্ত। अम.।

**आमगन्धिहरिद्रा।** स्त्री। (Curcuma reclinata.) আম আদা। हिं आमहलदी। वै.निघ.।

**आमघ्नी।** स्त्री। कटुकायाम्। रा.नि.व.६।

**आमचनकः।** पुं। अपक्वचणके। কাঁচা ছোলা। मं कच्चे चीरे, चोलेहरभरे। वं रहिला,



हसियवकले। गुणाः—शीतलः रुच्यः सन्तर्पणः तृष्णादाहहरः गौल्यः अश्मरीशोषघ्नः कषायः ईष-त्कटुवीर्य्यश्च। रा.नि.व.१६।

**आमज्वरः।** पुं। अपक्वज्वरे। কাঁচা জ্বর। "लालाप्रसेको हृल्लासहृदयाशुद्ध्यरोचकम्। तन्द्रा-लस्याविपाकाश्च वैरस्यं गुरुगात्रता"...इत्यादि आमज्वरस्य लिङ्गम्॥ मा.नि.।

**आमण्डः (कः)।** पुं। एरण्डवृक्षे। प.मु.। शुक्लैरण्डे। रा.नि.व.८। भा.पू.१भ.।

**आमण्डवासः।** पुं। आसवे। वै.निघ.।

**आमतिन्तिड़िः (ड़ी)।** स्त्री। अपक्वतिन्ति-ड्याम्। কাঁচা তেঁতুল।

**आमनस्यम्।** क्ली। वैमनस्ये। दुःखे, पीड़ा-याम्। अम.।

**आमपत्रिका।** स्त्री। चिल्लीशाके। मं चिविल। वै.निघ.।

**आमपीनसम्।** क्ली। कफे। कफाक्रमणे। সর্দ্দি হওন।

**आमयः।** पुं, क्ली। कृष्णागुरुणि। र मा.। कुष्ठे। कुड़। रा.नि.व.११। सि.यो.अप.चि। "शिरीष-लशुनामयैः।" भा.म.१भ.ज्व.चि. शालूरपर्ण्यादि-मूलामयमधुप्लुता। रोगे। उष्ट्रे। रा.नि व.२०।

**आमयव्याप्तः।** त्रि। रोगिणि।

**आमयावी।** त्रि। रोगिणि। रा.नि.व.२०।

**आमरक्तम्।** क्ली। रक्तामाशयरोगे। मा.नि.। See अतिसारः।

**आमरसः।** पुं। अपक्वरसे। सि.यो.अजी.चि. श्रीकण्ठः।

**आमलः (कः)।** स्त्री। आमलक्याम्। আমলা-গাছ। वासकवृक्षे। বাসক গাছ। श.च.। काष्ठ-धात्रीफले। কাঠ আমলা। See काष्ठधात्री-फलम्। पद्मकाष्ठे।

**आमलकचूर्णम्।** क्ली। रसायनाधिकारे। च.चि.१अ.।

**आमलकशुण्ठः।** पुं। काष्ठामलके। "सुद्गाम-लकशुण्ठयोः।" अ.द.ज्व.पञ्चमुष्टिः।

**आमलका (की)।** स्त्री। (Phyleanthus emblica. Syn. Emblica officinalis.) स्वनामख्यातवृक्षे। আমলা-গাছ। हिं अमोरा। मं आंवले। कं नेल्लि। उत्, अंड़ा। तत्-पर्य्यायः,—तिष्यफला अमृता वयस्था वयःस्था कायस्था (अ), अकरा (श), बहुफली (मे), श्रीफली धात्रिका शिवा शान्ता धात्री अमृतफला वृष्या वृत्तफला रोचनी (रा), पञ्चरसा (शब्दमा.), कर्षफला तिष्या (र)। आमलकी-गुणाः हरीतकीतुल्याः। विशेषस्तु रक्तपित्त-प्रमेहशान्तिकरी स्वास्थ्यकरी रसायनी अम्लरसा च। मद.व.१। भा.पू.१भ.। कषायाम्ला मधुरा शीतला लघुः दाह-पित्त-वमि-मेह-शोषघ्नी रसायनी च। रा.नि.व.११। अस्याः फलमपि अम्लत्वाद्वायुं माधुर्य्येण पित्तं रुक्ष-कषायत्वात् कफञ्च हन्ति इति त्रिदोषघ्नं। मद.व.१। आम-लस्य फलं शुष्कं तिक्तमम्लं कटु स्मृतम्। मधुरं तुवरं केश्यं भग्नसन्धानकारकम्। तथा आमलक्यास्तु वृक्षस्य मज्जा तु तुवरा मधुः। वमिकृद्वातपित्तघ्नी चान्ये तु फलवद्गुणाः। वै.निघ.। अम्लमामलकं मृदुशीतवीर्य्यत्वात् पित्तं शमयति। सु.सू.४५अ.। तान् गुणांस्तानि कर्म्माणि विद्यादामलकीष्वपि। यान्युक्तानि हरीतक्यां वीर्य्यस्य तु विपर्य्ययः॥ च.चि.१अ.। काष्ठधात्रीफलं स्वादे कषायं कटु, शीतपित्तास्रदोषघ्नञ्च। भूम्यामलक्याम्।

**आमलकायसम्।** क्ली। रसायनविशेषे। इदं ब्रह्मरसायनमपि कथ्यते। आमलकं निरस्थि यथोक्त-विधिना शुष्कं दश, जीवनीयादिकं मिलितं दश, दशगुणवारिणा क्वाथयित्वा पादशेषे पूतं क्वाथं ग्राह्यम्। तेन चूर्णं यथाविहिताग्निना साध्यम्। च.चि.१अ.।

**आमलकावलेहः।** पुं। रसायनविशेषे। च चि.१अ. रसायनाधिकारे।

**आमलकीपत्रम्।** क्ली। तालीशपत्रे। वै.निघ.।

**आमलक्यादिः।** पुं। तदादिवर्गे। आमलकी हरीतकी पिप्पली विभीतकश्चेति। आमलक्यादि-रित्येष गणः सर्व्वज्वरापहः। चक्षुष्यो दीपनो वृष्यः कफारोचकनाशनः॥ सु.सू.३८अ.।

**आमलक्यादिचूर्णम्।** क्ली। सर्व्वज्वरे हितं भेदि दीपनञ्च। आमलं चित्रकं पथ्या पिप्पली सैन्धवं तथा। चूर्णितोऽयं गणो ज्ञेयः सर्व्वज्वरहरः परः॥ भा.म.२भ.ज्व.चि.।

**आमलच्छदः।** पुं। तालीशपत्रे। वै.निघ.।

**उत्क्लेशकः ।** पुं । अग्निप्रकृतिकीटविशेषे । तेन दष्टे पित्तजन्यरोगा भवन्ति । सु. कल्प. ८अ. ।

**उत्क्लेशनवस्तिः ।** पुं, स्त्री । वस्तिभेदे । यः पूर्व्वम् एरण्डवीजादिकल्केन उत्क्लेशनार्थं दीयते । "दद्यादुत्क्लेशनं पूर्व्वम्—एरण्डवीजं मधुकं पिप्पली सैन्धवं वचा । हवुषाफलकल्कश्च वस्तिरुत्क्लेशनः स्मृतः ॥" वै. निघ. वस्तिविधिः ।

**उत्खला ।** स्त्री । मुरानामगन्धद्रव्ये । মুরামাংসী । श. च. ।

**उत्तः ।** त्रि । आर्द्रद्रव्ये । ভিজা দ্রব্য । अम. ।

**उत्तमम् ।** क्ली । शुष्कमांसे । त्रि । तप्ते । स्नाते । मे. ।

**उत्तमः ।** त्रि । उत्कृष्टे । पुं । अश्वविशेषे । लक्षणं—"अधन्याश्च महासाराः संग्रामे चैव पूजिताः । अपि शस्त्रहताङ्गाश्च नैव मुञ्चन्ति सादिनं ॥' ज. द. ३अ. ।

**उत्तमफलिनी ।** स्त्री । (Acleplas rasea.) दुग्धिकायाम् । ছোট থিরুই । प. सु. ।

**उत्तमवारि ।** क्ली । तण्डुलोदके । च द. मधुकादौ । उत्कृष्टजले ।

**उत्तमवैद्यः ।** पुं । कृतसाङ्गवेदाध्ययने वैद्ये ।

**उत्तमा ।** स्त्री । दुग्धिकायाम् । ছোটথিরুই । प. सु, रत्ना. । मनःशिलायाम् । प. सु. । भूम्यामलक्याम् । वै. निघ. । त्रिफलायां । भा. म. १भ. सन्धिकज्व. चि. । "शटीमुरतहृत्तमा ।" मुस्तायां । हे. च. । तन्नामकशूकदोषविशेषे । "मुद्गमाषोपमा रक्ता पिड़का रक्तपित्तजा । उत्तमैषा तु विज्ञेया शूकाजीर्णनिमित्तजा ॥" सु. नि. शू. दो. चि. १४अ. ।

**उत्तमाङ्गम् ।** क्ली । मस्तके । रा. नि. व. १८ । त्रि । उत्कृष्टाङ्गे ।

**उत्तमारणी ।** स्त्री । इन्दीवरालतायाम् । इन्द्रचिर्भिटयां । रा. नि. व. ३ । इन्द्रवारुण्याम् । वा. उ. ३७अ. । योधामल्लिकायां । যুঁই । सु. चि. ६अ. ।

**उत्तरकालः ।** पुं । भाविकाले ।

**उत्तरङ्गम् ।** क्ली । द्वारस्योपरितिर्य्यक्काष्ठविशेषे । "उत्तरङ्गं मतं तिर्य्यक् द्वारस्योपरि दारु यत् ।" हला. ।

**उत्तरच्छदः ।** पुं । उत्तरीये । आच्छादनवस्त्रे ।

**उत्तरवस्तिः ।** स्त्री । निरूहोत्तरदेयवस्तौ । নিরূহের পর দেয় পিচ্কিরি । निरूहादुत्तरं दानादुत्तरवस्तिसंज्ञा । तत्र नेत्रपरिमाणं १२ अङ्गुलम् । तच्छिद्रं मालतीवृन्तच्छिद्रपरिमितं । स्नेहमात्रा पञ्चवर्षीये बाले अर्द्ध प. तदूर्द्धं १ प. । स्त्रीणाञ्च कनिष्ठिकास्थूलं दशाङ्गुलं नेत्रं । स्नेहमात्रा च. २ प. । तदुक्तं—"द्वादशाङ्गुलकं नेत्रं मध्ये च कृतकर्णिकं । मालतीपुष्पवृन्ताभं छिद्रं सर्षपनिर्गमं । बालानां पञ्चवर्षाणामर्थो मात्राऽर्द्धपालिकी । तदूर्द्ध्व पलमात्रा च स्नेहस्योक्ता भिषग्वरैः । अथास्थापनशुद्धस्य तस्य स्नानभोजनैः । स्थितस्य जानुमात्रेण चापि स्निग्धशलाकया । स्निग्धया मेढ्रमार्गञ्च ततो नेत्रं नियोजयेत् । शनैः शनैर्घृताभ्यक्तं मेढ्ररन्ध्राङ्गुलानि षट् । ततश्च पीड़येद्वस्तिं शनैर्नेत्रञ्च निर्हरेत् । ततः प्रत्यागते स्नेहे स्नेहवस्तिक्रमो हितः । स्त्रीणां कनिष्ठिकास्थूलं नेत्रं कुर्य्याद्दशाङ्गुलं । शनैर्निष्कम्पमाधेयं सूक्ष्मं नेत्रं विचक्षणैः । योनिमार्गेषु नारीणां स्नेहमात्रां द्विपालिकीं । उत्तानायै स्त्रियै दद्यादूर्द्ध्वजान्वै विचक्षणः । अप्रत्यागच्छति भिषक् वस्तावुत्तरसंज्ञिते । भूयो वस्तिर्विधातव्यः संयुक्तैः शोधनैर्गणैः । फलवर्त्तिं निदध्याद्वा योनिमार्गे दृढां भिषक् । मूत्रैर्विनिःसृतां स्निग्धां शोधनद्रव्यसंयुताम् । दह्यमाने तथा वस्तौ दद्याद्वस्तिविशारदः ॥" शार्ङ्गः । पलार्द्धमुत्तरो वस्तिः मात्रावस्तिः पलद्वयं । यापनास्नेहवस्तौ च द्वावेतौ षट्पलान्वितौ । पिच्छावस्तिर्भवेत्प्रस्थः पादोनः कीर्त्तितोऽपरः ॥ आनन्दखानः ।

**उत्तरवायुः ।** पुं । तद्दिग्भवमारुते । स च शीतः स्निग्धः दोषप्रकोपकरः क्लेदनः प्रकृतिस्थानां बलदः मृदुः क्षतक्षीणविषार्त्तानां विशेषेण गुणकरश्च । मद. व. २३ ।

**उत्तरवारुणी ।** स्त्री । इन्द्रवारुण्याम् । রাখালশশা । र. सा. सं. वैक्रान्तमारणे । भैष. कुष्ठ चि. । "शिला चोत्तरवारुणी ।" ज्व. चि. कुलवधूरसे । उत्तमारणीति वा. उ. ३७ अ., वै. निघ. २भ. कास-चि. वारुणीपत्रधूमे ।

**उत्तरायणम् ।** क्ली । मकरसंक्रान्तितो मिथुनसंक्रान्तिसमाप्तिपर्य्यन्तकाले, सवितुरुत्तरमार्गगतिरूपे वा काले । तदादानं जानीयात्, यतस्तदा नृणां प्रतिदिनं सारमादत्ते, आदित्यपवनयोः भुवः सौम्यगुणहरत्वात् । वा. सू. ३अ. ।

**उत्तरासङ्गः ।** पुं । उत्तरीयवस्त्रे । উড়ুনি । अम । तत्पर्य्यायः,—उत्तरीयं प्रावारः उत्तरासङ्गः वृहतिका संव्यानं (अ), कञ्चर (त) ।



**उत्तरिणी ।** स्त्री । उत्तमारण्याम् । गुणाः—"उत्तरिणी तु कटुका शीता नेत्र्या लघुः स्मृता । उष्णा स्निग्धा सारका च तुवरा व्रणरोपणी । कासव्रणकृमिश्वासज्वरपित्तप्रमेहकान् । कफकुष्ठप्रलापांश्च वातं तन्द्राञ्च दद्रुकं । क्षयकासं मूत्रकृच्छ्रं योनिरोगञ्च शोथकं । नाशयेदिति सम्प्रोक्ता सुखप्रसवकारिणी । शाकास्तस्याश्चोष्णवीर्य्या तिक्ता कृम्यर्शःकुष्ठहृत् । कफवातहरा प्रोक्ता फलं तस्याः पटु स्मृतं । तिक्तमुष्णञ्च कटुकं लघु चाग्निप्रदीपकं । पित्तकोपकरञ्चैव शिवदं विषनाशनम् ॥" वै. निघ. ।

**उत्तानः ।** त्रि । ऊर्द्ध्वास्यशयिते । চিৎ হইয়া শোয়া । मे. नत्रिकं । क्ली । जले । हे. च. ।

**उत्तानकः ।** पुं । (Cyperus.) मुस्ताभेदे । नागरमुस्ता । उच्चटायां । চেঁচুয়া, নির্বিষী । र. मा. । रत्ना. ।

**उत्तानपत्रः (कः) ।** पुं । रक्तैरण्डे । रा. नि. व. ८ । भा. पू. १भ. गु. व. । मद. व. १ । श्वेतैरण्डे । वै. निघ. ।

**उत्तानशयः ।** पुं । स्तन्यपायिशिशौ । अतिशिशौ । अम. ।

**उत्तानशायी ।** त्रि । उत्तानशायिनि । वै. निघ. ।

**उत्तापः ।** पुं । तेजसि । उष्णतायाम् ।

**उत्तापनम् ।** क्ली । उष्णताकरणे ।

**उत्तारः ।** पुं । वमने ।

**उत्तालः ।** पुं । मर्कटे । मे. लत्रिकं । त्रि । उत्कटे ।

**उत्तुङ्गः ।** त्रि । उच्चे ।

**उत्तुण्डकी ।** स्त्री । करञ्जके । वै. निघ. ।

**उत्तुण्डितः ।** त्रि । निर्गते । सु. चि. २अ. ।

**उत्तुषः ।** पुं । लाजायाम् । খই । हारा. ।

**उत्तेजि(रि)तम् ।** क्ली । अश्वस्य मध्यवेगगतिविशेषे । इयं चतुर्थपञ्चमगतिः । "उत्प्लुत्योत्प्लुत्यगमनं कोपादिवाखिलैः पदैः ।" हे. च. ।

**उत्तोलनम् ।** क्ली । उत्क्षेपणे ।

**उत्थानम् ।** क्ली । मलोत्सर्गे । रत्ना. । मलरोगे । पौरुषे । हर्षे । हे. च. मे. नत्रिकं ।

**उत्थितः ।** पुं । सरलवृक्षे । रा. नि. व. १२ । त्रि । उत्पन्ने । मे. तत्रिकं ।

**उत्थिताङ्गुलिः ।** पुं । चपटे । চাপড় । श. च. ।

**उत्पतः ।** पुं । पक्षिणि । त्रिका. ।

**उत्पतनम् (पत्तिः) ।** क्ली, स्त्री । उत्पत्तौ । ऊर्द्ध्वगमने । मे. नचतुष्कं । जन्मनि ।

**उत्पल(क)म् ।** क्ली । Blue lotus. नीलकमले । নীলপদ্ম । रा. नि. व. १० । सु. सू. ३८अ. उत्पलादौ उ. । च. सू. ४अ. । च. द. र. पि. चि. । कुष्ठे । কুড় । तैं चेंगलिकोष्टु । प. सु. विश्व. । प्र. कस्तूरीमोदके । र. सा. सं. । च. द. पि. ज्व. लोध्रादिः । "लोध्रोत्पलाम्रतापत्र ।" लाक्षादितैले । वै. निघ. अर्शः-चि, क्षीवेरघृते । शालूके । प. सु. । स्वनामख्यातकमलजातीयपुष्पे । শুন্দি ফুল, হেলা ফুল । हिं कोञि । मं उत्पल । सु. चि. ३अ । गुणाः—कषायं मधुरं शीतलं पित्तकफरक्तघ्नञ्च । राज. । शीतलं स्वादु रक्तपित्तघ्नं दाहश्रमवमिभ्रान्तिकृमिहरञ्च । रा. नि. व. १० । सामान्ये नीलोत्पलं शीतं स्वादु दाहहरं मतं । रक्तदोषं श्रमं वान्तिं भ्रान्तिं जूर्त्तिं कृमीन् जयेत् । द्रव्यगुणः । नीलोत्पले । নীলশুন্দি । सि. यो. र. पि. चि. सिद्धतमयोगे, श्रीकण्ठः । "वासा कषायोत्पलमृत्प्रियङ्गु ।" सि. यो. यक्ष्म-चि. च्यवनप्राशे । वा. सू. १५ अ., अञ्जनादि । पद्मकाष्ठे । "पथ्योत्पलधान्यरोहिणीविश्वैः ।" च. द. ज्वराती. चि. घनजलादि. । पुष्पे । मे. । जलजातपुष्पमात्रे । अम. ।

**उत्पलः ।** त्रि । मांसशून्ये । हे. च. ।

**उत्पलकः ।** पुं । चेत्रकरीषे । বনঘুঁটে । प्र. र. सा. सं. कृष्यमारणे । नीलोत्पले । নীলশুন্দি । रा. नि. व. १० ।

**उत्पलकन्दः ।** पुं । शालूके । रत्ना. ।

**उत्पलकुष्ठकः ।** पुं । कुष्ठौषधौ । वै. निघ. ।

**उत्पलकेसरम् ।** क्ली । पद्मकेशरे । भैष. क्षुद्ररो. चि. कनकतैले ।

**उत्पलगन्धिकम् ।** क्ली । अतिसुरभिचन्दनविशेषे । श. मा. ।

**उत्पलगोपा ।** स्त्री । श्वेतशारिवायाम् । শ্বেত শ্যামালতা । वै. निघ. ।

**उत्पलदलम् ।** क्ली । तन्नामकास्त्रविशेषे । तच्च छेदने भेदने च प्रयुज्यते । लक्षणं यथा—"उत्पलाध्यर्द्धधाराख्ये भेदने छेदने तथा ।" भाति. ।

**उत्पलपत्र(क)म् ।** क्ली । वैद्यकास्त्रविशेषे छेदने भेदने च । तत्परिमाणं षड़ङ्गुलम् । सु. सू. ८ अ. ।

मद. व. १४ अ. । तिलके। धरणि:। कुवलयपत्रे। हे. च.।

**उत्पलभेद्यक:**। पुं। वृत्तायतसमोभयपालि-कर्णबन्धनाकृतिविशेषे। सु. सू. १६ अ.।

**उत्पलमृत्**। स्त्री। सौराष्ट्रमृत्तिकायां। च. द. र. पि. चि.।

**उत्पलशारिवा**। स्त्री। श्यामालतायाम्। प. सु.। र. मा.। अनन्तमूले। अम.। भैष. ध्व. भ. चि.।

**उत्पलषट्कम्**। क्ली। योगविशेषे। "उत्पलं धान्यकं शुण्ठी पृश्निपर्णी बलायुतं। बालविल्वं गवां तक्रेणात्युष्णेन च पेषयेत्। तेन लाजकृतं मण्डं देयमानीय शीतलम्। ज्वरातिसारशमनं हुताशन-बलप्रदम्॥" हा. अत्रि. ३स्था. ३अ.।

**उत्पलादि:**। पुं। कषायवर्गविशेषे। उत्पल-रक्तोत्पलकुमुदसौगन्धिककुवलयपुण्डरीकानि मधुक-ञ्चेति। गुणा:—"उत्पलादिरयं दाहपित्तरक्तप्रशा-शन:। पिपासाविषहृद्रोगच्छर्द्दिमूर्च्छाहरो गण" इति॥ सु. सू. ३८ अ.। भावप्रकाशे त्वन्यविध:। यथा—"उत्पलं नीलमारक्तं कह्लारं कुमुदं तथा। श्वेताम्भोजञ्च मधुकञ्चोत्पलादिरयं गण:॥ सुशीतलो हरत्येवं दाहं तृष्णां हृदामयम्। रक्तपित्तञ्च मूर्च्छाञ्च तथा छर्द्दिमरोचकम्॥" इति।

**उत्पलिनी**। स्त्री। कुमुदषण्डे। শুন্দিফুলের ঝাড়। लघुकमलिन्यां। हिं कोञिकोटी। गुणा: —हिमा तिक्ता रक्तामयघ्नी पित्तघ्नी तापकफकास-तृष्णाश्रमवमिघ्नी च। तस्या वीजगुणा:—स्वादु रूक्षं हिमं गुरु च। रा. नि. व. १०।

**उत्पली**। स्त्री। तुषचर्पट्याम्। তুষের চাপড়া। मे. लत्रिकं।

**उत्पाट: (त:)**। पुं। कर्णपालीगतरोगे। तल्ल-क्षणं—"गुर्व्वाभरणसंयोगात्ताड़नाद्घर्षणादति। शोथ: पाल्यां भवेच्छ्याव: दाहपाकरुजान्वित:। रक्तो वा रक्तपित्ताभ्यामुत्पात: स गदो मत:॥" मा. नि.। कर्णपाल्या उपद्रवे:। सु. उ. २० अ.।

**उत्पाठनम्**। क्ली। वायुजन्यव्रणवेदनाविशेषे। उन्मूलने:। सु. सू. २२ अ.।

**उत्पादक:**। पुं। शरभे। हे. च.।

**उत्पादशयन:**। पुं। टिट्टिभपक्षिणि। हे. च.।

**उत्पादिका**। स्त्री। उपजिह्विकायाम्। हारा.। हिलमोचिकायाम्। शिञ्चे। उपोदिकायां। পূঁই। त्रिका.। देहिकानामकीटविशेषे। श. च.।

**उत्पार:**। पुं। शुद्रघृते।

**उत्पाली**। स्त्री। आरोग्ये। श. च.।

**उत्पिञ्जल:**। त्रि। भृशमाकुले। हे. च.।

**उत्पिष्टसन्धि:**। पुं। सन्धेरुत्पेषणे, अस्थिसन्धौ घर्षणे। तेन सन्धावुभयत: शोफो वेदना च भवति। सु. नि. १५ अ.। See भग्नम्।

**उत्पोड़:**। पुं। सुरामण्डे। फेने।

**उत्पुटक:**। पुं। कर्णपालीगतरोगविशेषे। सु. सू. १६ अ.। कर्णपालीवेधोपद्रवे। सु.।

**उत्प्राण:**। पुं। श्वासे। वै. निघ.।

**उत्प्लवनं**। क्ली। उल्लङ्घने। लाफान।

**उत्फाल:**। पुं। उल्लम्फने।

**उत्फुल्ल:**। त्रि। विकसिते। हे. च.। क्ली। स्त्रीन्द्रिये। मे.।

**उत्स:**। पुं। प्रस्रवणे।

**उत्सङ्ग:**। पुं। क्रोड़े। रा. नि. व. १८। "क्रोड़-मङ्कस्तथोत्सङ्ग: प्राग्भागो वपुष: स्मृत:।" राज.। व्रणवस्तुप्रदेशे। सु. चि. १अ.। पर्व्वतमध्यदेशाकार-व्रणबन्धविशेषे। वा. सू. २८ अ.।

**उत्सङ्गपिड़का**। स्त्री। लक्षणं—नेत्रवर्त्मगत-रोगविशेषे। नवाधोवर्त्मनि सञ्जातपिड़कायां। सा च स्थूला कण्डूमती, अधोवर्त्मनि सोत्सङ्गा वर्त्मा-भ्यन्तरमुखी, वहिस्ताम्रान्त:पूया च। "अभ्यन्तर-मुखी ताम्रा बाह्यतो वर्त्मनश्च या। सोत्सङ्गोत्सङ्ग-पिड़का सर्व्वं स्थूलकण्डुरा॥" मा. नि.।

**उत्सङ्गी**। पुं। नाड़ीव्रणविशेषे। नाली घा। सु.।

**उत्सर्ग:**। पुं। त्यागे, दाने। वर्ज्जने। हे.।

**उत्सर्जनम्**। क्ली। दाने। अम.।

**उत्सर्जनी**। स्त्री। गुदस्य द्वितीयवलौ। लक्षणं यथा—"उत्सर्जनी तु तदध: सा सार्द्धाङ्गुल-सम्मिता।" भा.।

**उत्सर्य्या**। स्त्री। प्राप्तप्रजननकालायां गवि। পাল লইবার যোগ্য গাভী। जटा.।

**उत्सव:**। पुं। इच्छाप्रसवे। उत्सेके। उत्साहे। क्रोधे। मे वत्रिकं।



**उत्सादनम्**। क्ली। उद्वर्त्तने। भा. म. ४भ. ने.-रो. चि.। "ता: प्रोक्षणोत्सादनलेपनादीन्।" "उत्सादनाद्भवेत् स्त्रीणां विशेषात्कान्तिमद्वपु:।" सु. चि. २४ अ.। उत्सवे। रत्ना. अने.। समुल्लेखने। मे. तचतुष्कं। निम्नस्य व्रणस्य उन्नतीकरणे। सु. चि. १अ.।

**उत्सादित:**। त्रि। निर्म्मलीकृते।

**उत्साह:**। पुं। मनस उल्लासे। अम.।

**उत्साहयुक्त:**। पुं। शरभे। मद. व. १२।

**उत्साही**। पुं। भक्तरोगिणि।

**उत्सिंहनम्**। क्ली। नासया ऊर्द्ध्वश्वासधारणे। वा. सू.।

**उत्सुक:**। त्रि। उत्कण्ठिते। व्यग्रे।

**उत्सूर:**। पुं। सन्ध्याकाले, दिनावसाने। हे. च.।

**उत्सृष्ट:**। त्रि। त्यक्ते। अम.।

**उत्सेचनं**। क्ली। ऊर्द्ध्वसेके। উপচান।

**उत्सेध:**। पुं। शरीरोन्नत्ये। देहे। अम.।

**उत्स्मय:**। पुं। मन्दहास्ये। वै. निघ.।

**उत्च्चिम:**। पुं। धुस्तूरफले। श. च.।

**उत्च्चिमिका**। स्त्री। आतङ्कविशेषे। हे. च.।

**उत्क्षेपणम्**। क्ली। व्यजने। धान्यमर्द्दनवस्तुनि। हे. च.।

**उत्क्षेपमर्म्म**। क्ली। शङ्खद्वयोपरिकेशप्रान्तस्थ-मर्म्मणि। तत्र विशल्यमर्म्मणां युगलं तन्नाम्नैव तिष्ठति। सु. शा. ६अ.।

**उद(क)म्**। क्ली। जले। श. र., रा. नि. व. १४। पुं। करिशृङ्खलायाम्। हला.।

**उदकप्रक्षेपणम्**। क्ली। जलप्रक्षेपेण जलस्य शीतीकरणोपाये। सु. सू. ४५ अ.।

**उदकमञ्चिका**। स्त्री। जलप्रसाधनार्थमाधार-विशेषे। सु. स. ४५ अ.।

**उदकमञ्जरीरस:**। पुं। रसोऽयं निरामज्वरे देय:। मात्रा २ र. अनुपानं आर्द्रकरस:। अत्र ऊषणं मरिचं शर्करा विषं। मतान्तरे शर्करा सर्व्वद्रव्यसमा। त्रिरात्रं २४ प्रहरपर्य्यन्तम्। पाठ: —"सूतो गन्धष्टङ्कण: सोषण: स्यादेतैस्तुल्या शर्करा मत्स्यपित्तै:। भूयो भूयो भावयेच्च त्रिरात्रं वल्लो देय: शृङ्गवेरस्य वारा॥" পারা ১ ভ গন্ধক ১ ভ. সোহাগার খৈ ১ ভ. মরিচ ১ ভ. বিষ ৪ ভ.। কেহ কেহ চিনি ৪ ভাগ বলেন। अत्र शर्करास्थाने मन:शिलादानेन चन्द्रशेखररसो भवति। र. सा. सं.।

**उदकमेह:**। पुं। कफोत्थमेहविशेषे। लक्षणं —"अच्छं बहु सितं शीतं निर्गन्धमुदकोपमं। मेह-त्युदकमेहेन किञ्चिदाविलपिच्छिलम्।" मा. नि.।

**उदकवहस्रोत:**। क्ली। जलवहनाड्यां। ते च द्वे तयोर्मूलं तालु क्लोम च। सु. शा. ९ अ.।

**उदकवहा**। स्त्री। मूत्रवस्तिमभिप्रपन्ने धमनी-द्वये। तयोर्मलं तालु क्लोम च। सु. शा. ९।

**उदकषट्पल(घृत)म्**। क्ली। अर्शोरोगे। तिल-तैलं ४ श. वारि १२ श. दुग्धं ४ श. यवक्षारादीनां प्रत्येकं पलं कल्कं दत्त्वा पचेत्। पाठ:—"सक्षारै: पञ्चकोलैस्तु पालिकैस्त्रिगुणोदके। समक्षीरं घृत-प्रस्थं ज्वरार्श:प्लीहकासहृत्॥" ঘৃত ৪ শ. জল ১২ শ. দুগ্ধ ৪ শ. পঞ্চকোল, যবক্ষার প্রত্যেক ১প. (৮ তো.)। ইহা কল্ক। च. द. अर्श:-चि.।

**उदकिका**। स्त्री। बलानामक्षुपे। বেড়েলা। रा. नि. व. ४।

**उदकी**। स्त्री। पाठायाम्। আকনাদি। वै. निघ ग्रह चि. २ अतिविषादि:।

**उदकीर्ण: (र्य्य:)**। पुं। महाकरञ्जे। ডহর-করঞ্জ। हिं अरारि। रा. नि. व. ९। र. मा. भा. पू. १भ. गु. व.।

**उदकीर्य्या**। स्त्री। पूतीकरञ्जे। নাটাকরঞ্জ। वा. टी. हेमा.। वा. सू. १५ अ. अर्कादि:। "प्रत्यक्पुष्पीपीततैलोदकीर्य्या।" च. सू. २अ. वमने, फलिनीव. १अ.। सु. सू. ३९ अ. कफशमने।

**उदकोदरम्**। क्ली। जलोदरनामरोगे। See दकोदरम्।

**उदक्या**। स्त्री। रज:स्वलायाम्। अम.।

**उदगयनम्**। क्ली। उत्तरायणे। अम.।

**उदग्रदन्**। त्रि। महादन्तकरिणि। हे. च.।

**उदङ्मुख:**। त्रि। उत्तरमुखे।

**उदञ्चनम्**। क्ली। पिधाने। ঢাকনী। हला।

**उदण्डपाल:**। पुं। मत्स्यविशेषे। ডানকোণা মাছ। मे. लपञ्चकं।

**उदद्या।** स्त्री। तैलपिपीलिकायाम्। লাল-পিপড়ে। रा. नि. व. १९।

**उदधिः।** पुं। समुद्रे। रत्ना.। [ अब्धिकफः।

**उदधिकफः।** पुं। समुद्रफेने। च. द.। See

**उदधिफलम्।** क्ली। समुद्रफेने। वै. निघ.।

**उदधिफेनः।** पुं। समुद्रफेने। च. द. रस. र. बाल. चि.। See अब्धिकफः।

**उदधिमलः।** पुं। समुद्रफेने। राज.।

**उदधिलवणम्।** क्ली। सामुद्रलवणे। भा.।

**उदधिशुक्तिः।** स्त्री। मुक्तास्फोटे। সমুদ্রের ঝিণুক।

**उदधिसम्भवम्।** क्ली। सामुद्रलवणे। পাঙ্গা লবণ। भा. पू. १भ.।

**उदन्तिका।** स्त्री। तृप्तौ। हारा.।

**उदन्या।** स्त्री। पिपासायाम्। रा. नि. व. २०। See तृष्णा।

**उदपर्णी।** पुं। क्षुधान्यविशेषे। सु. सू. ३८ अ.।

**उदपानः।** पुं, क्ली। कूपे। अम.।

**उदमन्थः।** पुं। उदकप्रधानमन्थे। च. सू. ६ अ.। जलालोड़ितसघृतशक्तौ। स च ग्रीष्मे सेव्यः। भा. प. सु.।

**उदमानम्।** क्ली। वारिमानाढ़के।

**उदम्बरः।** पुं। शरीरजकृमिभेदे। शार्ङ्ग. ७अ.। See कृमिः। क्ली। ताम्रे। তামা। अ. टी.।

**उदयः।** पुं। उत्पत्तौ।

**उदयभास्करकर्पूरः।** पुं। स्वनामख्यात-कर्पूरे। स च पक्वः। सदलनिर्दलभेदेन द्विभेदः। गुणाः —"पीतः सरः स्वच्छकः सम्मीतः कठिनः कटुः समुदितः स्याद्दीपकोऽग्नेस्तुः। शीतः पित्तकरः कफकृमिविषान् वातञ्च नाशाश्रुतिं लालास्रावगलग्रहौ च शमयेत् जिह्वाजड़त्वापहः।" वै. निघ.।

**उदयभास्कररसः।** पुं। कुष्ठाधिकारे रसः। अत्र केवलं गन्धकेन मृतं ताम्रं दशभागम्। अमृतं विषं, तस्य द्वौ भागौ। र. सा. सं.। पाठः— "गन्धकेन मृतं ताम्रं दशभागं समुद्धरेत्। उषणं (षा) पञ्चभागं (गा) स्यादमृतञ्च द्विभागिकं। श्लक्ष्ण-चूर्णीकृतं सर्व्वं रक्तिकैकप्रमाणतः। दातव्यं कुष्ठिने ......॥ उषणं स्थाने त्र्यूषणमिति। रसे. चि.। "पिप्पली पञ्चभागा स्यादिति।" सा. कौ.। তামা ১০ তো. পিপুল ৫ তো. শৃঙ্গীবিষ ২ তো. जलेन पिष्ट्वा रक्तिप्रमाणा वटी कार्य्या। মতান্তরে পিপুলমূল ৫ তো. অন্যমতে ত্রিকটু ৫ তো.। अन्यः हिक्काश्वासे। पाठः—"धान्याभ्रं सूतकं गन्धं श्वेतापामार्गजद्रवैः। तुल्यांशं मर्द्दयेच्चाग्नियन्त्रे पातालके पचेत्। ऊर्द्धलग्नन्तु संग्राह्यो रसो ह्युदयभास्करः। श्वासं पञ्चविधं हन्ति त्रिगुञ्जमनुपानतः॥ रस. र.। অভ্র পারা, গন্ধক সমানভাগে শ্বেত আপাংরসে মাড়িয়া পাতালযন্ত্রে পাক করিলে যন্ত্রের ঊর্দ্ধভাগে যে বস্তু লাগে, তাহা উদয়ভাস্কর-রস।

**उदरम्।** क्ली। नाभिस्तनमध्यभागे। পেট। तत्पर्य्यायः,—पिचिण्डः कुक्षिः कुक्षी जठरः तुन्दः तुन्दं (अ)। रा. नि. व. १८। तन्नामकरोगे। উদরি রোগ। तदष्टविधम्—वातपित्तकफसन्निपातैः चतुर्विधं प्लीहजन्यं मलसञ्चयजन्यं क्षतजन्यं जलसञ्चयजन्यञ्चेति। अस्य निदानं—अग्निमान्द्याजीर्णमलसञ्चयादिकम्। कुपितवातादिभिः स्वेदवहाम्बुवहस्रोतसि रुद्धे, तथा प्राणापानाभ्यामग्नौ दूषिते तदुत्पद्यते। साधारणलक्षणं—"आध्मानं गमनेऽशक्तिर्दौर्ब्बल्यं दुर्ब्बलाग्निता। शोफः सदनमङ्गानां सङ्गो वातपुरीषयोः। दाहतृष्णा च सर्व्वेषु जठरेषु भवन्ति हि॥" सु. नि. ७अ.। "सर्व्वमेवोदरं प्रायो दोषसंहतिजं मतं। अतो वातादिशमनी क्रिया सर्व्वा प्रशस्यते॥ वह्निर्मन्दत्वमायाति कुक्षौ दोषप्रपूरिते। अजीर्णमलिनैश्चान्नैर्मन्दाग्नौ मलसञ्चयात्॥ रुद्धाः स्वेदाम्बुवाहिन्यो जनयन्त्युदरं नृणां। आध्मानमामताल्पत्वं गतिरल्पा कृशाङ्गता॥ शोथः सदनमङ्गानां दाहस्तन्द्रा विवर्णता। विड्वातसङ्गः पादाभ्यां शोथश्चाशुभलक्षणम्। पूर्व्वरूपम्। औदकानूपजं मांसं शाकं पिष्टकृतं तिलाः। व्यायामाध्वदिवास्वप्नताम्नपानं विवर्ज्जयेत्॥ तथोष्णलवणाम्लानि विदाहीनि गुरूणि च। नाद्यादन्नानि जठरी तोयपानं विवर्ज्जयेत्॥ रस. र.।

**उदरग्रन्थिः।** पुं। अश्मरीरोगे। गुल्मरोगे। हे. च.। अन्त्रे। আঁৎড়ী। प्लीह्नि। Wil.

**उदरत्राणं।** क्ली। उदरबन्धन-वस्त्रादौ। हे.।

**उदरथिः।** पुं। समुद्रे। सूर्य्ये। हे.।



**उदरनाड़ी।** स्त्री। अन्त्रनाड्याम्।

**उदरपरीक्षा।** स्त्री। जठरपरीक्षायाम्।

**उदरपिशाचः।** पुं। सर्व्वान्नभक्षके। हे. च.।

**उदरपीड़ा।** स्त्री। उदरामये।

**उदरभङ्गः।** पुं। अतिसाररोगे।

**उदररसः।** पुं। उदरस्थपाचकरसे।

**उदरव्याधिः।** पुं। उदरामये।

**उदरस्फुटा।** स्त्री। नागवल्ल्याम्। वै. निघ.।

**उदराग्निः।** पुं। जठराग्नौ।

**उदरानलपत्रकः।** पुं। लघुतालीशपत्रे। वै. निघ.।

**उदरामयः।** पुं। अतिसाररोगे। See अतीसारः।

**उदरामयकुम्भकेशरी।** पुं। प्लीहाधिकारे रसः। अत्र शुल्वं ताम्रं, कटुकं त्रिकटुकम्, लवणानि पञ्चलवणानि, कणामूलं पिप्पलीमूलम्। अत्र वृद्धाः चव्यं चित्रकचूर्णञ्च न प्रयच्छन्ति। पाठः—"रसगन्धकभस्मताम्रकं कटुकक्षारयुतं सटङ्कणं। कणामूलकचव्यचित्रकं सयमानि लवणानि रामठं। समभागमिदं विभावयेत् खरताप्ते त्वथ जम्बुवारिणा। उदरामयकुम्भकेशरी रस एष प्रथितोऽस्य माषकः॥ सुरवारुर्यनु दापयेद्भिषक्......। र. सा. सं.। পারা, গন্ধক, তামা, ত্রিকটু, যবক্ষার, সোহাগার খৈ, পিপুলমূল, চই, চিতার মূল, পঞ্চলবণ, যমান এবং হিং -প্রত্যেক সমান ভাগ। লেবুর রসে মর্দ্দন। মাত্রা ১ মাষা।

**उदरारिरसः।** पुं। उदराधिकारे रसः। वज्रीक्षीरेण स्नुहीक्षीरेण। पाठः—"पारदं शुक्तितुल्यञ्च जैपालं पिप्पलीसमं। आरग्वधफलान्मज्जा वज्रीक्षीरेण मर्द्दयेत्॥ माषमात्रां वटीं खादेत् स्त्रीणां जलोदरं जयेत्। चिञ्चाकस्वरसञ्चानु पथ्यं दध्योदनं हितम्॥" र. सा. सं.।

**उदरावर्त्तः।** पुं। नाभौ। रा. नि. व. १८।

**उदरावेष्टः।** पुं। शारीरकृमिभेदे। পাটাকৃমি। शार्ङ्ग. ७अ। See कृमिः।

**उदरिणी।** स्त्री। गर्भवत्यां। हे. च.।

**उदरिलः।** त्रि। महोदरयुक्ते। ভুঁড়ীযুক্ত। हे. च.।

**उदरी।** त्रि। उदरिले। हे. च.।

**उदर्कः।** पुं। धुस्तूरवृक्षे। मदनकण्टके। ময়না কাঁটা। मे. कलिकं।

**उदर्च्चिः।** पुं। अग्नौ। मे.।

**उदर्दः।** पुं। Erysipelas. रोगविशेषे। तल्लक्षणं यथा—"वरटीदष्टसंस्थानः शोथः सञ्जायते वहिः। सकण्डूस्तोदबहुलः छर्द्दिज्वरविदाहवान्। उदर्द्दमिति तं विद्याच्छीतपित्तमथापरे। वाताधिकं शीतपित्तमुदर्द्दञ्च कफाधिकम्॥" मा. नि.।

**उदर्दप्रशमनवर्गः।** पुं। उदर्दशमनयोगविशेषे। यथा—तिन्दुक-पियाल-बदर-खदिर-कदर-सप्तपर्णाश्वकर्णार्जुनासनारिमेदा इति दश। তেঁদ, পিয়াল, কুল, খদির, শ্বেতখদির, ছাতিম, শাল, অর্জ্জুন, পীতশাল বিট্‌খদির। च. सू. ४अ.।

**उदर्द्धः।** पुं। Scarlet fever. ज्वरविशेषे। Wil.

**उदलावणिकः।** त्रि। लवणोदकसिद्धव्यञ्जने। हला.।

**उदश्वित्।** क्ली। अर्द्धजलतक्रे। অর্দ্ধেক জলযুক্ত ঘোল। र. मा. अम। "दध्यम्भसी यदि समे तदुदश्विदाहुः।" रा. नि. व. १५। प. प्र. ३ ख.। गुणाः—लेपेन कुष्ठनाशनं तृष्णादाहसुखशोषघ्नञ्च। राज। पित्तश्लेष्मघ्नम्। रा. नि. व. १५।

**उदात्यूहः।** पुं। जलकाके। পানকৌড়ী। वै. निघ.।

**उदानः।** पुं। कण्ठस्थवायौ। "उदानः कण्ठदेशस्थः।" भा.। "उदानस्य पुनः स्थानं नाभ्युरःकण्ठ एव च। वाक्प्रवृत्तिः प्रयत्नोर्ज्जोबलवर्णादिकर्म्म च॥" च.। "उदानो नाम यस्तूर्द्धमुपैति पवनोत्तमः। तेन भाषितगीतादिविशेषोऽभिप्रवर्त्तते। ऊर्द्धजत्रुगतान् रोगान् करोति च विशेषतः॥" सु. नि. १अ.। "तत्कर्म्म ऊर्द्धनयनम्।" वा. सू. ११ अ.। उदरावर्त्ते। सर्पे। नाभौ। मे. नविकं। पञ्चाग्नि-। श. र.।

**उदारः।** पुं। दीर्घशालौ। শস্যবিশেষ।

**उदावर्त्तः।** पुं। नाभौ। सर्पविशेषे। Dis-

ease of the bowells, iliac passion. रोगविशेषे। মুদো। मे.। हे, च.। रोगेणानेन मलमूत्रवायूरोधो भवति। तस्य निदानं सम्प्राप्तिश्च। "वातविण्मूत्रजृम्भाश्रुक्षवोद्गारवमीन्द्रियक्षुत्तृष्णोच्छ्वासनिद्राणां धृत्योदावर्त्तसम्भवः॥" क्रमेण लक्षणं यथा—वातमूत्रपुरीषाणां सङ्गोध्मानं क्लमोरुजा। जठरे वातजाश्चान्ये रोगाः स्युः वातनिग्रहात्॥ आटोपशूलौ परिकर्त्तिका च सङ्गः पुरीषस्य तथोर्द्ध्ववातः। पुरीषमास्यादथवा निरेति पुरीषवेगेऽभिहते नरस्य॥ वस्तिमेहनयोः शूलं मूत्रकृच्छ्रं शिरोरुजा। विनामो वङ्क्षणानाहः स्याल्लिङ्गं मूत्रनिग्रहे॥ मन्यागलस्तम्भशिरोविकारा जृम्भोपघातात् पवनात्मकाः स्युः। तथाक्षिनासावदनामयाश्च भवन्ति तीव्राः सहकर्णरोगैः। आनन्दजं वाप्यथ शोकजं वा नेत्रोदकं प्राप्तमुञ्चतो हि। शिरोगुरुत्वं नयनामयाश्च भवन्ति तीव्राः सह पीनसेन॥ मन्यास्तम्भः शिरःशूलं आर्दितार्द्धावभेदकौ। इन्द्रियाणाञ्च दौर्ब्बल्यं क्षवथोः स्याद्विधारणात्॥ कण्ठास्यपूर्णत्वमतीव तोदः कूजश्च वायोरथवाप्रवृत्तिः। उद्गारवेगेऽभिहते भवन्ति घोरा विकाराः पवनप्रसूताः॥ कण्डू-कोठारु च व्यङ्ग-शोथ-पाण्ड्वामयज्वराः। कुष्ठवीसर्पहृल्लासाः छर्द्दिर्निग्रहजा गदाः॥ मूत्राशये वै गुदमुष्कयोश्च शोथोरुजा मूत्रविनिग्रहश्च। शुक्राश्मरी तत्स्रवणं भवेच्च ते ते विकारा विहते च शुक्रे॥ तन्द्राङ्गमर्द्दावरुचिः श्रमश्च क्षुधाभिघातात् कृशता च दृष्टेः। कण्ठास्यशोषः श्रवणावरोधः तृष्णाभिघातात् हृदये व्यथा च॥ श्रान्तस्य निश्वासविनिग्रहेण हृद्रोगमोहावथवापि गुल्मः। जृम्भाङ्गमर्द्दोऽक्षिशिरोऽतिजाड्यं निद्राभिघातादथवापि तन्द्रा॥ वायुः कोष्ठानुगो रुक्षैः कषायकटुतिक्तकैः। भोजनैः कुपितः सद्य उदावर्त्तं करोति च॥ वातमूत्रपुरीषासृक्कफमेदोवहानि वै। स्रोतांस्युदावर्त्तयति पुरीषं चातिवर्त्तयेत्॥ ततो हृद्वस्तिशूलार्त्तः हृल्लासारतिपीड़ितः। वातमूत्रपुरीषाणि कृच्छ्रेण लभते नरः॥ इति। मा. नि.। "त्रिवृत् सुधापत्रतिलादिशाकग्राम्यौदकानूपरसैर्यवान्नं। अन्यैश्च सृष्टानिलविडभिरद्यात् तथा प्रसन्ना-गुड़शीधुपायी॥ रस, र।

**उदावर्त्ता ( वृत्ता )।** स्त्री। Difficult menstruation. वायुजन्यस्त्रीयोनिरोगविशेषे। सा कष्टेन सफेनिलं रजो मुञ्चति। "सफेनिलमुदावृत्ता रजः कृच्छ्रेण मुञ्चति।" भा. म. ४भ. यो रो. चि.।

**उदितः।** पुं। नीवारे। উড়িধান। प. मु.।

**उदीच्यम्।** क्ली। ह्रीवेरे। सुगन्ध বালা। प. मु.। रा. नि. व. १०। तें कुरुवेरु। सि. यो. ज्व. चि. षड़ङ्गपानीये। "चन्दनोदीच्यनागरैः।" सि. यो. ज्व. चि. किरातादौ। "चन्दनोदीच्यवत्सकैः।"

**उदीच्यकाष्ठम्।** क्ली। तोपचिनीतिख्यातद्रव्ये। वै. निघ.।

**उदीक्षणम्।** क्ली। दमने।

**उदु(दू)खलम्।** क्ली। गुग्गुलौ। मे.। लौहभाण्डे। হাগামদিস্তে इति लोके। तण्डुलकण्डनार्थपात्रे। উখ্‌লী इति च लोके। अम.।

**उदुम्बरः।** पुं। Glomerous fig tree, (Ficus glomerata.) यज्ञाङ्गवृक्षे। तत्पर्य्यायः,—क्षीरवृक्षः हेमदुग्धः सदाफलः कालस्कन्धः यज्ञयोग्यः यज्ञीयः सुप्रतिष्ठितः शीतवल्कः यज्ञसारः जन्तुफलः पुष्पशून्यः पवित्रकः सौम्यः शीतफलः क्रमिकण्टकं क्रमिकण्टकं क्रिमिकण्टकं (मे), पाणिभुक् यज्ञाङ्गः ब्रह्मवृक्षः यज्ञोडम्बरः ( शब्दर ) सुचक्षुः श्वेतवल्कलः ( ज )। যজ্ঞডুমুর গাছ। गुर्ज, हिं गुलार। मं उम्बराचेझाड़। उत्, उदुम्बर। ज. द.। सु. मृ. ३८ अ. न्यग्रोधादिः। गुणाः—"उदुम्बरः शीतलः स्याद्भग्नसन्धानकारकः। व्रणरोपणकृद्रूक्षो मधुरस्तुवरो गुरुः। अस्थिसन्धानकृद्वर्ण्यो कफपित्तातिसारकान्। योनिरोगं नाशयति वल्कश्चैवास्य शीतलं। दुग्धदं तुवरं गर्भ्यं व्रणनाशकरं स्मृतं। कोमलञ्चास्य च फलं स्तम्भकृत्तुवरं मतं। हितकारि तृषापित्तकफरक्तरुजापहं। मध्यमं कोमलं स्वादु शीतलं तुवरं मतम्। पित्ततृषामोदकरं रक्तस्रुतिवमोहरम्॥ वै. निघ.। व्रण्यः गुरुः कफपित्तघ्नश्च। हिमः रुक्षः पित्तकफास्रजित्। मधुरः वर्ण्यः व्रणशोधनरोपणश्च। मद. व. ५। भा. पू. १भ. वटादिव। तथा अस्य पक्वफलगुणाः मधुरं हिमं क्रमिकरं रक्तपित्ततृणादाहमूर्च्छाघ्नञ्च। सुपक्वफलगुणाः—अतिशीतलं मधुरं पित्तश्रमशोषघ्नञ्च। अपक्वफलगुणाः—कषायत्वं दीपनत्वं रुचिकरत्वं मांसकरत्वं शोणितविकारजनकत्वञ्च अस्य वल्कलगुणाः—शीतं कषायं व्रणघ्नं गर्भसंरक्षणं स्तन्यजनकञ्च। रा. नि. व. ११। कुष्ठविशेषे। ताम्रे। रा. नि. व. १३। जन्तुफले। भा. पू. अने.। क्ली। कर्षे, २ तो.। प. प्र. १ ख.। ताम्रे। मद. व ४। तोलमात्रे। वै निघ. पाना. चि. त्रिफलादिलेहे। मेढ्रे। त्रिका.।



**उदुम्बरच्छदा।** स्त्री। ह्रस्वदन्तीवृक्षे। मद. व. १.।

**उदुम्बरदला।** स्त्री। ह्रस्वदन्तीवृक्षे। रा. नि. व. ६।

**उदुम्बरपर्णी।** स्त्री। दन्तीवृक्षे। प. मु.। र. मा.। लघुदन्तीवृक्षे। भा. पू. १ भ.।

**उदुम्बरमशकः।** पुं। मूषिके। वै. निघ.।

**उदुम्बरो।** स्त्री। काकोदुम्बरिकायाम्। मं कालाडंवर। रा. नि. व. ११।

**उदूखलम्।** क्ली। तण्डुलादि कण्डनार्थं काष्ठपात्रे। উখ্‌লি। गुग्गुलौ। मे. त्रिकं।

**उदूखलसन्धिः।** पुं। उदूखलाकार-ग्रीवोर्द्ध्वगत सन्धौ। भा.। कक्षावङ्क्षणदशनसन्धिः। सु. शा. ५ अ.।

**उद्दृढ़ः।** त्रि। स्थूले। मे.।

**उद्गमः।** पुं। वान्तौ। वमि। वै. निघ.।

**उद्गमनीयम्।** क्ली। धौतवस्त्रे। अम। ধোয়া কাপড়।

**उद्गारः।** पुं। उद्वमने। कण्ठगर्ज्जने। ঢেকুর इति भाषा। जटा.। "ग्लानेरोजःक्षयाद्दुःखादजीर्णाच्च श्रमोद्भवात्। उदानकोपादाहारस्यास्थिरत्वाच्च यद् भवेत्। पवनस्योर्द्ध्वगमनं तमुद्गारं प्रचक्षते॥" शार्ङ्ग. २५ अ.। छर्द्याम्। रा. नि. व. २०।

**उद्गारकमणिः।** पुं। प्रवाले। পলা। मं पोंवले। रा. नि. व. १३।

**उद्गारणम्।** क्ली। उद्गारकरणे।

**उद्गारशुद्धिः।** स्त्री। उद्गारानवरोधे, सधूमाम्लोद्गाराभावे।

**उद्गारशोधनः।** पुं, क्ली। श्वेतजीरके। कृष्णजीरके। भा. पू. १भ.।

**उद्गारशोधिनो।** स्त्री। जीरके। वै. निघ.।

**उद्गोरणम्।** क्ली। उद्गारे। वमने। विज. र.।

**उद्गाहः।** पुं। उद्गारे। ঢেকুর। वै. निघ।

**उद्घः।** पु। देहस्थ वायौ। मे. घट्टिके। हस्तपुटे। हे. च.।

**उद्घटम्।** क्ली। वार्त्ताकुपुष्पे। वै निघ.।

**उद्घर्षणम्।** पावादिघर्षणे। इष्टकखण्डेनोद्घर्षणे कण्डुकोठनाशः शिरासुखकारकत्वञ्च। राज।

**उद्घसम्।** क्ली। मांसे। हारा.।

**उद्घाटक(न)म्।** क्ली। कूपाज्जलोत्तोलनार्थं सरज्जुघटे। तत्पर्य्यायः—घटीयन्त्रम्। अ.।

**उद्घातः।** पुं। पादस्खलने। कालभेदे। मे. तत्रि। पवनाभ्यासयोगाय कुम्भकादित्रये। विश्व. तन्त्रिकम्। अस्त्रे। त्रिका.।

**उद्दंशः।** पुं। मत्कुणे। উকুণ। हे. च.।

**उद्दण्डपालः।** पुं। मत्स्यविशेषे। দাঁড়িকা-মাছ। सर्पविशेषे मे.।

**उद्दानकः।** पुं। शिरीषवृक्षे। रा. नि. व. ९। तें कोंडगोगुपुव्वु। चुल्लग्राम्। विश्व.।

**उद्दानम्।** क्लीं। चुल्लीविशेषे। उद्यमे। वाड़वाग्नौ।

**उद्दन्तुरः।** त्रि। उत्कटदन्त, करालदन्ते। मे.।

**उद्दारदा।** स्त्री। शाकतरौ। শেগুন। मं साग। वै. निघ.।

**उद्दारा (रो)।** स्त्री। गुड़ूच्याम्। श. च.।

**उद्दालः (कः)।** पुं। ( Cordia myxa or Latifalia. ) बहुवारवृक्षे। চালিতা গাছ। हिं बहु आरि, लसोड़ा। प. मु.। अम. रा. नि. व. ११। See बहुवारः। आरण्यकोद्रवे। मद. व १०।

**उद्दाला।** स्त्री। आरो इति महाराष्ट्रे।

**उद्दिष्टः।** पुं। वदरवृक्षे।

**उद्दोपः (प्रः)।** पुं। गुग्गुलौ। अ. टी. भ.।

**उद्दोपकः।** त्रि.। शोभाकारिणि।

**उद्देशः।** पुं। गिरिगण्डकूपे। हारा.। समासकथने। "समासकथनमुद्देशः, यथाशल्यमिति।" सु. उ. ६५ अः। उपदेशे। हारा.।

**उद्देहिका।** स्त्री। उत्पादिकायां। वालवी इति ख्याते महाराष्ट्रीयकीटविशेषे। পেদো পোকা। हारा।

**उद्धमः।** पुं। कष्टश्वासे।

**उद्धर्षणम्।** क्ली। रोमाञ्चे।

**उद्दानम्** । क्ली । चुल्ल्याम् । अ. टी. भ. ।

**उद्दान्तः** । पुं । निर्मदकरिणि । अम. ।

**उद्दारा** । स्त्री । गुडूच्याम् । श. च. ।

**उद्दूलनम्** । क्ली । सतैललवङ्गकर्पूरकस्तूरीमरिच-लक्चूर्णेषु । पाकराजः ।

**उद्दूषणम्** । क्ली । रोमाञ्चे । हला. ।

**उद्धृतः** । त्रि । परिभुक्तोज्झिते । मे. तत्रिकं ।

**उद्दढः** । त्रि । विकसिते । हे ।

**उद्भटः** । पुं । कच्छपे । शूर्पे । मे. टत्रिकं ।

**उद्भवः** । पुं । उत्पत्तौ । अम. ।

**उद्भावः** । पुं । उष्मणि ।

**उद्भिजः** । त्रि । उद्भिज्जे । अ. टी. र. ।

**उद्भिज्जः** । त्रि । उद्भिदी जाते । इन्द्रगोप-मण्डू-कादौ । अम. ।

**उद्भित् (द्)** । त्रि । गुल्मादौ । तच्च पञ्चधा— तरुः गुल्मः लता वल्ली तृणञ्च । अम. ।

**उद्भिदम्** । क्ली । भूमिमुद्भिद्य उद्गमज्जलस्थाने । वा. टी. हेमा. । सामुद्रलवणे । পাঙা লবণ । र. मा. । Culinary salt साम्बरलवणे । रस. र. अर्शः-चि. । त्रि । तर्वादौ ।

**उद्भूतः** । त्रि । उत्पन्ने, जाते ।

**उद्भेदः** । पुं । अङ्कुरे । रा. नि. व. २ ।

**उद्भ्रमः** । पुं । उद्वेगे । अम. ।

**उद्यमः** । पुं । उद्योगे ।

**उद्यानम्** । क्ली । उपवने । उद्यानं स्वयमपरैः समन्तु लोकैरन्येषां विभवतवताञ्च पुष्पवाटी । हला. ।

**उद्यावः** । पुं । मिश्रणे । संयोजने ।

**उद्योगः** । पुं । चेष्टायाम् ।

**उद्योतः** । पुं । ज्योतिषि, आलोके । ह. ।

**उद्रः** । पुं । जलमार्जारे । উদ্বিড়াল । हारा. । जलनकुले । ধেড়ে इति भाषा । त्रिका. ।

**उद्रथः** । पुं । वृक्षविशेषे । কুকুরশোঁকা । ताम्रचूड़े । कुकड़ा । मे. । पाचके ।

**उद्राङ्कः** । पुं । रक्तचित्रके । वै. निघ. ।

**उद्रिक्तचित्तता** । स्त्री । पानात्ययरोगे । मत्त-तायाम् । रा. नि. व. २० ।

**उद्रेकः** । पुं । रजोगुणे । रा. नि. व. २१ । महा-निम्बे । भा. म. १भ. ।

**उद्वत्सरः** । पुं । संवत्सरे । हे. च. ।

**उद्वमनम्** । क्ली । उद्गिरणे, वान्तौ । वमिकरा ।

**उद्वर्त्तनम्** । क्ली । विलेपने । घर्षणे । मे. नच-तुष्कं । तद्गुणाः—"उद्वर्त्तनं वातहरं कफमेदोऽनि-लापहम् । स्थिरीकरणमङ्गानां त्वक्प्रसादकरं परं । उद्वर्त्तनं हरिद्राद्यैः कण्डूवैवर्ण्यरौक्ष्यजित् । तिलिनीहर्त्तनं कण्डूरौचत्वग्दोषनाशनम् ॥" राज. । "उद्वर्त्तनं कफहरं मेदसः प्रविलापनम् । स्थिरी-करणमङ्गानां त्वक्प्रसादकरं परम् ।" वा.सू.२अ. । "उद्वर्त्तनं वातहरं भ्राजकानलदीपनं । गात्रस्थिर-त्वसुखितात्वक्प्रसादमृदुत्वकृत् ॥" मद. व. १३ । मर्द्दने । च. द. विसूचि. ।

**उद्वहः** । पुं । पुत्रे । उदानवायौ । स्त्री । कन्या-याम् ।

**उद्वान्तः** । पुं । निर्मदगजे । त्रि । उद्वमिते । मे. तत्रिकं ।

**उद्वासनम्** । क्ली । मारणे, बधे । अ. ।

**उद्वाहनी** । स्त्री । वराटके ।

**उद्विड़ालः** । पुं । जलविडाले । उद्वेताल इति भाषा । ধেঁড়ে इत्यपि क्वचित् ।

**उद्वृत्तः** । त्रि । उत्थिते ।

**उद्वेगम्** । क्ली । गुवाकफले । रा. नि. व. ११ । पुं । आशङ्कायाम् । त्रिका. । चाञ्चल्ये ।

**उधस्** । क्ली । आपीने । গাভীর পালান । हला. ।

**उधस्यं** । क्लीं । दुग्धे ।

**उध्मान(र)म्** । क्ली । चुल्ल्याम् । अ. टी. भ. ।

**उन्दकः** । पुं । धवलयावनाले । শাদা জনার, यओआरा । रा. नि. व. १६ ।

**उन्दरः** । पुं । मूषिके ।

**उन्दिरमारी** । स्त्री । मूषिकार्य्यां, तन्नाम्ना कोङ्कणे प्रसिद्धायां । इन्दूरमारी । गुणाः—"मूषि-कारी तु कटुका नेत्र्या चाखुविषापहा । व्रणदोषं नेत्ररोगं नाशयेदिति च स्मृतम् ॥" रा. नि. व. ४. ।

**उन्दुकः** । पुं । शरीरैकदेशे । भा. ।

**उन्दुरः** । पुं । मूषिके ।



**उन्दुरु: (कः)** । पुं । मूषिके । वन्यमूषिके । रत्ना. ।

**उन्दुरुकर्णा (र्णिका) (र्णी)** । स्त्री । आखु-कर्णीलतायाम् । इन्दूरकाणी । रा. नि. व. ३ । दन्तीभेदे । उन्दुरुकर्णा द्रवन्तीति ड. ।

**उन्दुरुपर्णी** । स्त्री । आखुकर्णी । रा.नि.व ३ ।

**उन्दूवरम्** । क्ली । ताम्रे । भा. ।

**उन्द्रः** । पुं । कूलचरपशुभेदे । উদ্বিড়াল । सु. शा. ३८ अ. । See कूलेचरः ।

**उन्नम्** । क्ली । सुरते । त्रि । क्लिन्ने । मे. नद्विकं ।

**उन्नाहम्** । क्ली । काञ्जिके । अम. ।

**उन्मत्तः** । पुं । श्वेतधुस्तूरे । শ্বেত ধুতূরা । धुस्तूर-वृक्षे । प. मु. । र. मा., रा. नि. व. १० । मुचु-कुन्दवृक्षे । त्रि । उन्मादविशिष्टे । मे. ।

**उन्मत्तकारिणी** } स्त्री । दुग्धिकायाम् । हिं
**उन्मत्ता** } दुधियार ।

**उन्मत्तरसः** । पुं । शीताङ्गसन्निपाते रसः "रस-गन्धकतुल्यांशं धुस्तूरफलजद्रवैः । मर्द्दयेद्दिनमेकन्तु तुल्यांशं त्रिकटुं क्षिपेत् ॥" त्रिकटुमिति त्रिकटुचूर्णं प्रत्येकं रसतुल्यं ॥ र.सा.सं शीताङ्ग. सान्निपात-ज्व. ।

**उन्मनः** । पुं । उन्मादवायौ । द्रोणपरिमाणे (१६ श.) । प. प्र. १भ. ।

**उन्मनायितम्** । क्ली । उन्मादे । रा.नि.व. २० ।

**उन्मन्थकः** । पुं । कर्णपालीगतरोगविशेषे । तल्ल-क्षणं—"कर्णं बलाद्वर्द्धयतः पाल्यां वायुः प्रकु-प्यति । कफं संगृह्य कुरुते शोथं स्तम्भवेदनम् । उन्मन्थकः सकण्डूको विकारः कफवातजः ॥ मा. नि. । सु. चि. २५ अ. ।

**उन्माथः** । पुं । मृगादिबन्धोपयुक्त-कूटयन्त्र-विशेषे । ফাঁদ । अ. ।

**उन्मादः** । पुं । (Mania.) वायुरोगे । পাগল রোগ । स च मानसिको व्याधिः षड्विधश्च वात-पित्तकफसन्निपातदुःखविषसेवनाद्भवति । सम्प्राप्तिः —मदयन्त्युन्मदा दोषा यस्मादुन्मार्गगामिनः । मानसोऽयमतो व्याधिरुन्माद इति कीर्त्तितः ॥ एकैकशः सर्व्वशश्च दोषैरत्यर्थमूर्च्छितैः । मान सेन च दुःखेन स पञ्चविध उच्यते ॥ विषाद्भवति षष्ठश्च यथास्वं तत्र भेषजं । स चाप्रवृद्धस्तरुणो मदसंज्ञां बिभर्त्ति च ॥ रुद्धदुष्टाशुचिभोजनानि प्रधर्षणं देवगुरुद्विजानां । उन्मादहेतुर्भयहर्षपूर्व्वो मनोविघातो विषमाश्च चेष्टाः ॥ इति तद्धेतुनिदा-नम् । मा. नि. । यद्युन्मादः समुद्दिष्टः श्लेष्मपित्त-समुद्भवः । तथापि न विना वातादुन्मादो जायते ध्रुवम् ॥ पथ्यं यथा—अभ्यञ्जनं स्नापनमासनञ्च निद्रा सुशीतान्यनुलेपनानि । गोधमसुद्गारुण-शालयश्च धारोष्णदुग्धं शतधौतसर्पिः ॥ घृतं नवी-नञ्च पुरातनञ्च कूर्म्मामिषं धन्वरसा रसालं । पुराणकुष्माण्डफलं पटोलं ब्राह्मीदलं वास्तुकतण्डु-लीयं ॥ खराश्वमूत्रं गगनाम्बु पथ्या सुवर्णचूर्णानि च नारिकेलं । द्राक्षा कपित्थं पनसञ्च वैद्यैः विधेयमुन्मादगदेषु पथ्यम् ॥ राज. । अश्वस्योन्माद-रोगे । लक्षणं यथा—"प्रकोपकारणैः प्रोक्तैः कुपिते मातरिश्वनि । उन्मादो जायतेऽश्वस्य तस्य रूपञ्च वक्ष्यते । यातुमिच्छति यः स्थित्वा रज्जुं दन्तैश्च खादति । खादत्यकस्माद्यवसं पुनश्चैव न खादति । कदाचिद्बुध्यते संज्ञां कदाचिन्न न बुध्यते ॥" ज. द. ५६ अ. । उन्मादवत्ते । अ. टी. ।

**उन्मादगजाङ्कुशः** । पुं । उन्मादाधिकारे रसः । अत्र महाराष्ट्री ब्रह्मयष्टिः । বামুনহাটী । विषमुष्टिः । কুচিলা । अर्कचक्रिका, ताम्रचक्रि-कायां । पाठः—त्रिदिनं कनकद्रावैः महाराष्ट्रीद्रवैः पुनः । विषमुष्टिजलैः सूतं समुत्थाप्यार्कचक्रिकां । कृत्वा तत्रां सगन्धां तां युक्त्या बन्धनमाचरेत् ॥ तत्समं कानकं वीजमभ्रकं गन्धकं विषं । मर्द्दयेत्त्रि-दिनं सर्व्वं वल्लमात्रं प्रयोजयेत् ॥......। পারা যথেচ্ছ পরিমাণে লইয়া ধুতুরা, বামনহাটী এবং কুচিলার রসে এক এক দিন উর্দ্ধপাতন করিবে। পরে তাহার সহিত সমভাগ গন্ধক মিশাইয়া বন্ধনার্থ অর্কচক্রিকায় রাখিয়া অল্প পুট দিবে। পরে উহার সহিত সমভাগ ধুতুরাবীজ, অভ্র, গন্ধক এবং বিষ দিয়া একত্র জলে মর্দ্দন করিবে। र. सा. सं. ।

**उन्मादपर्पटीरसः** । पुं । उन्मादाधिकारे रसः । अत्र पर्पटीरसः त्रिचपर्पटीरसः । ক্ষেৎ-পাপড়ার রস । "कृष्णधुस्तूरजैर्वीजैः पञ्चभिः पर्पटीरसः । सम्प्रयोज्यः प्रशान्त्यर्थमुन्मादं भूत-सम्भवम् ॥" र. सा. सं. ।

**उन्मादभञ्जनरसः** । पुं । उन्मादाधिकारे । अत्र किरातं भूनिम्बं । इन्द्रवारुणी गोरक्षकर्कटी । রাখালশসা । पाठः—त्रिकटु त्रिफला चैव गज-

पिप्पलिका तथा। विड़ङ्गञ्च देवदारु किरातं कटुकी तथा। कण्टकारी च यष्टीन्द्रयवं चित्रकमेव च। बला च पिप्पलीमूलं मूलञ्च वीरणस्य च। शोभाञ्जनस्य वीजानि त्रिवृता चेन्द्रवारुणी। वङ्गं रूप्यमभ्रकञ्च प्रवालं समभागिकं। सर्व्वचूर्णसमं लौहं सलिलेन विमर्द्दयेत् ॥......। र.सा.सं.।

**उन्मादभञ्जिनी**। स्त्री। उन्मादाधिकारे रसविशेषे। अत्र कटुरोहिणी कटुकी। गिरिमल्लीवीजं कुटजवीजं। पाठः—"शुद्धं मनःशिलाचूर्णं सैन्धवं कटुरोहिणी। वचा शिरीषवीजञ्च हिङ्गु च श्वेतसर्षपं। करञ्जवीजं त्रिकटु मलं पारावतस्य च। एतानि समभागानि गोमूत्रैर्वटिकां कुरु। गिरिमल्लीवीजसमां छायाशुष्काञ्च कारयेत्। प्रातःसन्ध्यानिशाकाले चक्षुषोरञ्जनं हितम्। मधुरादिरसे चाञ्जं रात्रावपि जलेन च॥"......। र.सा.सं.।

**उन्मादाङ्कुशरसः**। पुं। उन्मादे रसः। पाठः—त्रिदिनं कनकद्रावैर्महाराष्ट्रीरसैः पुनः। विषमुष्टिद्रवैः सूतं समुत्थाप्यार्कचक्रिकां। कृत्वा तस्यां सगन्धान्तां युक्त्या बन्धनमाचरेत्। तत्समं कानकं वीजमभ्रकं गन्धक विषं। मर्द्दयेत्त्रिदिनं सर्व्वं वल्लमात्रं प्रयोजयेत्। कनकं धुस्तूरवीजं। महाराष्ट्री जलपिप्पली भार्गी वा। विषमुष्टिः कुचेलकं। एभिरूर्द्धपातनं कार्य्यं। पारदादिकं समभागं ग्राह्यम्। उन्मादगजाङ्कुश इति नामान्तरम्। भैष. रसे. चि.।

**उन्मादिनी**। विजयायाम्। सिद्धि।

**उन्मानम्**। क्ली। द्रव्यतोलकपरिमाणे। पुं। द्रोणपरिमाणे। प. प्र. १ख.।

**उन्मार्गी**। पु। पञ्चविधभगन्दरान्यतमभगन्दररोगविशेषे। अर्शभगन्दर। तस्य लक्षणम्—"मूढ़ेन मांसलुब्धेन यदस्थिशल्यमन्नेन सहाभ्यवहृतं यदावगाढ़पुरीषोन्मिश्रमपानेनाधःप्रेरितं असम्यगागतं गुदं क्षिणोति, तदा क्षतनिमित्तः कोथ उपजायते। तस्मिंश्च क्षते पूयरुधिरावकीर्णमांसकोथं भूमाविव जलप्रक्लिन्नायां क्रिमयः सञ्जायन्ते। ते भक्षयन्तो गुदमनेकधा पार्श्वतो दारयन्ति, तस्य तैर्मार्गैः क्रमिकृतैः वातमूत्रपुरीषरेतांसि अतिनिःसरन्ति तं भगन्दरं उन्मार्गिणमित्याचक्षते।" सु. नि. ४ अ.।

**उन्मीलनम्**। क्ली। उन्मेषे। हे. च.।

**उन्मुखः**। त्रि। ऊर्द्धमुखे।

**उन्मूलितं**। त्रि.। उत्पाटिते। हे.।

**उन्मेषः**। पुं। नेत्रोन्मीलने। हे. च.।

**उपकण्ठम्**। क्ली। अश्वस्यास्कन्दिते। कण्ठसमीपे। हे. च.।

**उपकरणम्**। क्ली। उपादाने।

**उपकर्णिका**। स्त्री। मूषकर्णिकायाम्। वै. निघ. २भ. अर्श चि. विड़ङ्गादिचूर्णलेहे।

**उपकारः**। पुं। विकीर्णपुष्पादौ। हे.।

**उपकारिका**। स्त्री। पिष्टकभेदे। मे कपञ्चकं।

**उपकारी**। स्त्री। राजगृहे। भरत. द्वि. को.। त्रि। उपकारके।

**उपकार्य्या**। स्त्री। राजगृहे। अ.। धान्यरक्षणस्थाने। গোলা।

**उपकालिका**। स्त्री। जीरकभेदे। श्वेतजीरके। कलोञ्जीजीरके। मद. व. २। कृष्णजीरके। भा. पू. १भ.। पिप्पल्याम्।

**उपकुञ्चः (कः)**। पुं। कृष्णजीरके। वै. निघ.।

**उपकुञ्चिः (का) (ञ्ची)**। स्त्री। कलोञ्जीजीरके। वृहज्जीरके। सूक्ष्मैलायाम्। अम.। कृष्णजीरके। स्वल्पजीरके। ছোট জীরা। भा. पू. १भ. रत्ना.। गुणाः—"तिक्ता कट्वी चोष्णा च दीपनी। वृष्या चाजीर्णशमनी गर्भाशयविशोधिनी। आध्मानवातगुल्मञ्च रक्तपित्त क्रमींस्तथा। कफं पित्तं चामदोषं वातं शूलञ्च नाशयेत्॥" वै. निघ.।

**उपकुम्भा**। स्त्री। दन्तीवृक्षे। वै. निघ.।

**उपकुल्या (का)**। स्त्री। दन्तीवृक्षे। वै. निघ.। सु., रा. नि. व. ६। च. द. अश्म. चि. एलादौ।

**उपकुशः**। पुं। Gum boil. तन्नामकदन्तवेष्टजपित्तरक्तजरोगविशेषे। तत्र वेष्टदाहपाकदन्तचलनं आघट्टिते रक्तस्राववेदने, स्रुते च रक्ते स्फीतिर्मुखपूतिता च जायन्ते। लक्षणं—"वेष्टेषु दाहः पाकश्च ताभ्यां दन्ताश्चलन्ति च। आघट्टिताः प्रस्रवन्ति शोणितं मन्दवेदनं। आध्मायन्ते स्रुते रक्ते मुखं पूति च जायते। भा. म. ४भ. मु. रो. चि.। अश्वमुखरोगे, तत्र दन्तमांसाद्रुधिरस्रावः दन्तचलनञ्च भवति। ज. द.।

**उपकूपः**। पुं। दीर्घिकायाम्। हे च।

**उपकोलिका**। स्त्री। कृष्णजीरके। भा.।



**उपक्रमः**। पुं। चिकित्सायाम्। रा. नि. व. २०। आरम्भे। मे. मचतुष्कं।

**उपक्रोष्टा**। पुं, स्त्री। गर्द्दभे।

**उपगूढ़ं**। क्ली। आलिङ्गने। अ.।

**उपघातः**। पुं। रोगे। रा. नि. व. २०।

**उपघातकः**। पुं। आरग्वधवृक्षे। वै. निघ.।

**उपघ्नः**। पुं। निकटाश्रये। अम.।

**उपचक्रः**। पुं। हंसविशेषे। চকোর। "चक्रोरानुपचक्रकान्।" च. चि. ३अ.। तन्मांसगुणाः—"कषायः स्वादुलवणस्त्वच्यः केश्यो रुचिप्रदः।" सु.सू. ४६ अ.। हृद्यं लघु उष्णवीर्य्यं कटुपाकि बलाग्निवर्द्धकञ्च। राज.। See चक्रवाकः।

**उपचर्य्या**। स्त्री। चिकित्सायाम्। सेवायाम्। रा. नि. व. २०। हला.।

**उपचक्षुः**। क्ली। चक्षुःप्रतिनिधौ। चश्मा इति भाषा।

**उपचारः**। पुं। चिकित्सायां। सेवायाम्। रा. नि व. २०। हे. च.।

**उपचार्य्यः**। पुं। चिकित्सायाम्। हे. च.।

**उपचितः**। त्रि। दग्धे। मे.। पुष्टे।

**उपचित्रः (त्रा)**। पुं, स्त्री। उपचित्रः इति मद. व. १। पृश्निपर्णीक्षुपे। চাকুলিয়া। रा. नि. व. ४। दन्तीवृक्षे। प. मु.। र. मा.। आखुकर्ण्याम्। ইন্দুরকাণী পানা। मे.। वृहद्दन्त्यां। भा. पू. १भ.। वै. निघ. वा. व्या. विषगर्भतैले।

**उपचित्रका**। स्त्री। क्षुद्रदन्त्याम्।

**उपचिल्ली**। स्त्री। श्वेतचिल्लीशाके। শ্বেতচিল্লী (বেতোশাক)। रा. नि. व. ७।

**उपजिह्वा (ह्विका)**। स्त्री। जिह्वागतमुखरोगे। दुष्टकफरक्ते जिह्वामूलमध्ये निम्नतो लालास्रावकण्डूदाहशोथानुत्पादयतः। मा. नि.। लक्षणम्—"जिह्वाग्ररूपः श्वयथुर्हि जिह्वामूलस्य जातः कफरक्तयोनिः। प्रसेककण्डूपरिदाहयुक्ता प्रकथ्यतेऽसावुपजिह्विकेति॥" सु. नि. १६ अ.। कीटविशेषे। পেদো পোকা। हे. च.। मूलजिह्वायाम्। আলজিব। रा. नि. व. १८। अश्वस्य मुखरोगभेदे। अत्र जिह्वाधःस्फीतिः। लक्षणम्—"अधस्तादथ जिह्वायाः श्वयथुर्यस्य जायते। तं विन्द्यादुपजिह्वाख्यं मुखरोगन्तु वाजिनाम्॥" ज. द २९ अ.।

**उपतप्ता**। पुं। रोगे। अ. टी. भ.।

**उपतापः**। पुं। रोगे। उत्तापे। मे. पचतुष्कं।

**उपदग्धः**। त्रि। ईषद्दग्धे। আঁকা। सु. सू. ४६ अ.।

**उपदन्तः**। पुं। कुस्तुम्बुरौ। কাঁচা ধনে'।

**उपदंशः**। पुं। The venereal disease. समष्ठीलक्षुपे। रा. नि. व. ४। शिग्रु वृक्षे। সজিনা গাছ। रा. नि. व. ७। चर्वणे। চাট্। हला.। सि. यो. मदा चि.। "स्रग्वी सभक्तां पिशितोपदंशाम्।" व्यञ्जने। रा. नि. व. २०। मेढ्ररोगे। বাও রোগ। निदानादि—"हस्ताभिघातान्नखदन्तपातादधावनादत्युपसेवनाद्वा। योनिप्रदोषाच्च भवन्ति शिश्ने पञ्चोपदंशा विविधापचारैः॥" स च वातादिभेदात्पञ्चधा। तल्लक्षणं—"सतोदभेदैः स्फुरणैः सकृष्णैः स्फोटैर्व्यवस्येत्पवनोपदंशं। पीतैर्बहुक्लेदयुतैः सदाहैः पित्तेन रक्तात्पिशितावभासैः। स्फोटैः सकृष्णै रुधिरं स्रवन्तं रक्तात्मकं पित्तसमानलिङ्गं। सकण्डुरैः शोथयुतैर्महद्भिः शुक्लैर्घनैः स्रावयुतैः कफेन। नानाविधस्रावरुजोपपन्नमसाध्यमाहुस्त्रिमलोपदंशम्॥" मा. नि.। "अतिमैथुनादतिब्रह्मचर्य्याद्वा तथा ब्रह्मचारिणीं चिरोत्सृष्टां रजस्वलां दीर्घरोमां कर्कशरोमां सङ्कीर्णरोमां निगूढ़रोमामल्पद्वारां महाद्वारामप्रियामकामां अचौक्ष्यसलिलप्रक्षालितयोनिमशालितयोनिं योनिरोगोपसृष्टां स्वभावतो वा दुष्टयोनिं वियोनिं वा नारीमत्यर्थमुपसेवमानस्य तथा करजदशनविषशूकनिपातनाद्दर्द्दनाद्धस्ताभिघाताच्चतुष्पदी-गमनादचौक्ष्यसलिलप्रक्षालनादवपीड़नाच्छुक्रमूत्रवेगविधारणान्मैथुनान्ते वाप्रक्षालनादिभिर्मेढ्रमार्गस्य प्रकुपिता दोषाः क्षतेऽक्षते वा श्वयथुमुपजनयन्ति तमुपदंशमाचक्षते।" सु नि. १२। असाध्यलक्षणं। विशीर्णमांसं क्रमिभिः प्रजग्धं मुष्कावशेषं परिवर्ज्जयेत्तम्......। पथ्यं यथा—छर्द्दिर्विरेको ध्वजमध्यनाड़ीवेधो जलौका-परिपातनञ्च। सेकः प्रलेपो यवशालयश्च धन्वामिषं मुद्गरसो घृतानि। करिल्लकं शिग्रुफलं पटोलं शालिञ्चशाकं वनमूलकञ्च। तिक्तं कषायं मधु कूपवारि तैलञ्च हन्यादुपदंशरोगम्" इति। अपथ्यं यथा—"दिवानिद्रां मूत्रवेगं गुर्व्वन्नं मैथुनं

गुड़म्। आयासमन्न' तक्रञ्च वर्ज्जयेदुपदंशवान् ॥" पथ्यापथ्यम्।

**उपदंशघ्नम:**। पुं। शिग्रुवृच्चे। वै. निघ.।

**उपदलम्**। क्ली। पुष्पदले। ফুলের পাপড়ী।

**उपदी**। स्त्री। वन्दाके। মান্দড়া। मं वादांगुल। रा. नि. व. ५।

**उपदीका**। स्त्री। उपजिह्वाख्यकीटे। हे. च.।

**उपदेवता**। स्त्री। यच्चभूतपिशाचादौ।

**उपदेश:**। पुं। रुसके। हे. च.। स्थितकथने। एवमित्युपदेश: यथा—"तथा न जागयाद्रात्रौ दिवास्वप्नञ्च वर्ज्जयेत्।" सु. उ. ६५ अ.।

**उपदेह:**। पुं। उपलेपे। প্রলেপ, মলম্। वै. निघ.।

**उपदेहिका**। स्त्री। उपजिह्वाकीटे। हे. च.।

**उपद्रव:**। पुं। उपसर्गे। तल्लचणम्—"रोगारम्भकदोषस्य प्रकोपादुपजायते। योऽन्यो विकार: स बुधैरुपद्रव इहोदित: ॥" भा.।

**उपधातु:**। पुं। Secondary secretion. देहस्थसप्तविधधातुषु। यथा—'स्तन्य' रजो वसा स्वेदो दन्ता: केशास्तथैव च। ओजश्च सप्तधातूनां क्रमात्सप्तोपधातव: ॥" भा.। स्तन्यरजोवसास्वेददन्तकेशौजांसि धातूनां सप्तोपधातव इति शार्ङ्ग:। A semi-metal. स्वर्णमाच्चिकादिगौणधातुषु। ते च सप्तविधा:—स्वर्णमाच्चिकं, तारमाच्चिकं, तुत्थं, कांस्य', पित्तलं, सिन्दूरं, शिलाजतु चेति। तत्र स्वर्णमाच्चिकं स्वर्णस्य, तारमाच्चिकं रौप्यस्य, तुत्थ' ताम्रस्य, कांस्य' ताम्र-रङ्गयो:, पित्तलं ताम्र-यशदयो:, सिन्दूरं शीषकस्य, शिलाजतु च लौहस्योपधातु:। मतान्तरे तु माच्चिकतुत्थकाभ्रनीलाञ्जनरसाञ्जनमन:शिलाहरितालेषु। गुणा:—"उपधातुषु सर्व्वेषु तत्तद्धातुगुणा अपि। सन्ति किं तेषु तेऽतीनास्तत्तदंशाल्पभावत: ॥" भा. म. १भ. धातुव.।

**उपधानम्**। क्ली। विषे। उपवर्हे। বালিশ। मे. नचतुष्कं।

**उपधानीयं**। क्ली। उपधाने। शब्दर.।

**उपधूपित:**। त्रि। आसन्नास्तमये। हारा.। आसन्नमरणे। मे.।

**उपनखम्**। क्ली। चिप्पतुल्यरोगे। আঙুলহাড়া। लचणं—"नखमांसमधिष्ठाय पित्तं वातश्च वेदनां। करोति दाहपाकौ च तं व्याधिं चिप्पमादिशेत्। तदेव चतरोगाख्य' तथोपनखमित्यपि ॥ सु. नि. १३ अ.।

**उपन (ना) य:**। पुं। उपनयने। हे.।

**उपनयनम्**। क्ली। वर्णत्रयाणां यज्ञसूत्रधारणरूपसंस्कारविशेषे। পৈতে দেওয়া। त्रिका.।

**उपनाह:**। पुं। स्वेदविशेषे (शाल्वणादौ)। সেক। वचाकिखशताह्वादेवदार्व्वादिभि: य: क्रियते स्वेद: स उपनाह:। वा. टी. हेमा.। लेपे। विश्व. हचतुष्कं। नेत्रसन्धिरोगे। कृष्णमण्डलदृष्टिमण्डलसन्धौ ईषत्पाकी स्वल्पवेदन: कण्डूबहलो ग्रन्थिर्जायते ॥ लचणम्—"ग्रन्थिर्नाल्पो दृष्टिसन्धावपाकी कण्डूप्रायो नीरुजस्तूपनाह: ॥" मा. नि.। हरिद्रायाम्। विश्व:।

**उपनाहनम्**। क्ली। लेपने। च. द. वा. व्या. चि।

**उपनाहस्वेद:**। पुं। उपनाहजन्यघर्म्मे। वातकफजन्यशोफयोरुपक्रमभेदे। "अथोपनाहस्वेदञ्च कुर्य्याद्वातहरौषधै:। प्रदिह्य देहं वातार्त्तं चीरमांसरसान्वितै: ॥ आम्लपिष्टै: सलवणै: सुखोष्णै: स्नेहसंयुतै:।" एवमेव महाशाल्वणादिर्ज्ञेय:। सु. चि. १ अ.।

**उपपुष्पिका**। स्त्री। हाफिकायाम्। হাই। हारा.।

**उपप्लव:**। पुं। विप्लवे। উৎপাত।

**उपप्लुता**। स्त्री। Morbid sensibility of the uterus. योनिरोगे। लचणं यथा—"गर्भिण्या: श्लेष्मलाभ्यासात् छर्द्दिश्वासविनिग्रहात्। वायु: क्रुद्ध: कफं योनिमुपनीय प्रदूषयेत् ॥ पाण्डु सतोदमास्रावं श्वेतं स्रवति वा कफम्। कफवातामयव्याप्ता सा स्याद्योनिरुपप्लुता ॥" चर.।

**उपभृती**। स्त्री। महानील्यां। वै. निघ.।

**उपभोग:**। पुं। भोगे। भोजनाधिकभोगे। अम.।

**उपमाता**। स्त्री। धात्र्यां। ধাই।

**उपमेत:**। पुं। शालवृच्चे। श. च.।

**उपयन्त्रम्**। क्ली। पञ्चविंशतिविधशल्याहरणोपाययन्त्रभेदेषु। तानि प्रायशो लौहानि भवन्ति। तानि च रज्जुवेणिकापट्टचर्म्मान्तवल्कललतावस्त्राष्ठीलाश्ममुद्गरपाणिपादतलाङ्गुलिजिह्वादन्तनखमुखबालाश्वकटकशाखाष्ठीवनंप्रवाहणहर्षायस्कान्तमयानि चाराग्निभेषजानि। सु सू ७अ.।



**उपय(या)म:**। पुं। विवाहे। अ.।

**उपरक्त:**। त्रि। पीड़ायुक्ते।

**उपयोग:**। पुं। औषधक्रियायां। औषधसेवने। आनुकूल्ये।

**उपरत्नम्**। क्ली। गौणरत्ने। भा.। गोमेद-पद्मराग-वैदूर्य्यप्रवालेषु। प. मु.। काच-स्फटिक-शुक्ति-शङ्खेषु। "उपरत्नानि काचश्च कर्पूराश्मा तथैव च। मुक्ता शुक्तिस्तथा शङ्ख: इत्यादीनि बहून्यपि ॥" गुणा: —रत्नतुल्या: किन्तु किञ्चिद्धीना:। भा. पू. १भ.।

**उपरन्ध्रम्**। क्ली। अश्वस्य उदरगह्वरोपरिभागे। ज. द. २अ.।

**उपरस:**। पुं। A secondary mineral. गौणरसेषु, उपधातुगणे। ते च हिङ्गुलाभ्रतालकशिलास्रोतोऽञ्जन-टङ्कण-राजावर्त्तक-चुम्बुक-स्फटिक-शङ्ख-खटी-गैरिक-कासीस-रसक-कपर्द्द-सिकता-बोला: कङ्कुष्ठकं सौराष्ट्री च। गुणै: सूतस्य किञ्चिद्गुणयुता:। भा. पू. १भ. धातुव.। यथा—"खेचराञ्जनकङ्कुष्ठगन्धालं गैरिकं चिति:। शैलयाञ्जनसंमिश्रा: शंसन्त्युपरसा बुधा: ॥ कम्पिल्लगौरीचपलाकपर्द्दसशैलसिन्दूरकवह्निजारान्। पाषाणिनोवादरशङ्खयुक्तानित्यष्टकं सूतसमानमाहु: ॥ रा. नि. व. २२। गन्धकं वज्रवैक्रान्तं। हीरकं दग्धहीरकञ्च) वज्राभं तालकं शिला। खर्परं शिखितुण्डञ्च विमलं हेममाच्चिकम्। काशीशं कान्तपाषाणं वराटाञ्जनहिङ्गुलम् ॥ गैरिकं शङ्खभूनागं टङ्कणञ्च शिलाजतु। एते चोपरसा: प्रोक्ता:...। र. सा. सं.।

**उपरोधकम्**। क्ली। गर्भगृहे। श. च.।

**उपल:**। पुं। पाषाणे। रत्ना.। मे.।

**उपलभित्**। पुं। पाषाणभेदके। रा. नि. व. ५।

**उपलभेद: (दो)**। पुं। करज्योड़िपाषाणभेदके। रा. नि. व. ५।

**उपलवीरुत्**। स्त्री। गुल्मिन्याम्। हे. च.।

**उपला**। स्त्री। शर्करायां। बालुकायाम्। मे.।

**उपलाख्यक:**। पुं। दद्रुघ्नवृचे। দাদমর্দ্দনী।

**उपलालिका**। स्त्री। तृष्णायाम्। वै. निघ.।

**उपलासिता**। स्त्री। खटीशर्करायां। वै. निघ.।

**उपलिङ्गम्**। क्ली। उपद्रवे। अरिष्टे। हे. च.।

**उपलेप:**। पुं। चन्दनादिलेपने। मुखलिप्ततायाम्। सु. चि. ३३अ.।

**उपलेपनम्**। क्ली। गोमयादिलेपने। त्रिका.।

**उपलोहम्**। क्ली। स्वर्णादिधातुविशेषेषु। यथा—"स्वर्णं तारं ताम्रनागं रसं कान्तञ्च तीक्ष्णकं। मुण्डान्तमष्टधा लौहं कांस्यारं घोषकं तथा। उपलौहा: समाख्याता:... ॥ वै. संग्रहे।

**उपवट:**। पुं। पियालवृचे। चारवृचे। रा. नि. व. ११। See अखट:।

**उपवनम्**। क्ली। वहिरुद्याने। अम.।

**उपवनस्थ:**। पुं। तुरुष्के।

**उपवल्लिका (ल्ली)**। स्त्री। अमृतस्रवालतायाम्। रा. नि. व. ३।

**उपवर्ह: (र्हम्)**। पुं, क्ली। उपधाने। বালিশ, তাকিয়া। हला.।

**उपवस्तम्**। क्ली। उपवासे। अम.।

**उपवास:**। पुं। लङ्घने। क्रोधादिपरित्यागे। "उपावृत्तस्य पापेभ्य: सहवासो गुणैर्हि य:। उपवास: स विज्ञेयो न शरीरस्य शोषणं ॥" च. सू. १अ.।

**उपवाह्य:**। पुं। राजवाहकहस्तिनि। हे. च.।

**उपविषम्**। क्ली। कृत्रिमविषे। हे. च.। गौणविषमिति। भा.। तत्पर्य्याय:,—चारं, गर: (हे.)। एकं सविषं दूषीविषसंज्ञं अपरं अविषं तदेव गरसंज्ञकं। तच्च अष्टविधं।

**उपविषपञ्चकम्**। क्ली। स्नुह्यर्ककरवीरलाङ्गलीकुचेलकेषु। रा. नि. व. १२। करवीरान्धुस्तूरलाङ्गलीगुञ्जाहिफेनं वज्रञ्च। प. मु.। अर्कचीरं स्नुहीचीरं लाङ्गली करवीरक:। गुञ्जाहिफेनधुस्तूरश्चेति सप्त। भा.। दुग्धपूर्णपात्रे दोलायन्त्रेण पाचितं तत्सर्व्वं शोधितं भवति। र. सा. सं.।

**उपविषा**। स्त्री। रक्तातिविषायाम्। अतिविषायाम्। रा. नि. व. ६।

**उपविषाणिका**। स्त्री। कृष्णातिविषायाम्। मद. व.।

**उपविष्ट:**। त्रि। आसीने। বসা।

**उपविष्टक:**। पुं। गर्भजरोगे।

**उपवीतम्** । क्ली । यज्ञसूत्रे । अम. ।
**उपवेदः** । पुं । आयुर्व्वेदे ।
**उपवेशः** । पुं । उपवेशने ।
**उपवेशनम्** । क्ली । स्थितौ । वसौ । गुणाः— मेदोदीप्तिश्लेष्मसौकुमार्य्यसुखकरम् । राज. ।
**उपव्याघ्रः** । पुं । चित्रके । চিতে বাঘ । रा नि. व. १९ ।
**उपशमः** । पुं । शान्तौ । हे. च. ।
**उपशमक्रमः** । पुं । साधारणौषधे । वै निघ. ।
**उपशयः** । पुं । व्याधिज्ञानहेतौ । लक्षणं— "हेतुव्याधिविपर्य्यस्त-विपर्य्यस्तार्थकारिणाम् । औषधान्न-विहाराणामुपयोगं सुखावहं । नृणामुपशयं विद्यात् स हि सात्म्यमिति स्मृतः ॥" मा. नि. ।
**उपशान्तिः** । स्त्री । आरोग्ये ।
**उपशायिता** । स्त्री । रोगमुक्तिसाधनभूतपथ्ये ।
**उपशीर्षकः** । पुं । बालरोगे । कपालरोगे ।
**उपसन्नवर्त्तनम्** । क्ली । दुष्टव्रणविशेषे । चर ।
**उपसम्पन्नम्** । क्ली । हृतौ । हला. । त्रि । निहते । सुसंस्कृते । "उपसम्पन्नमुद्दिष्टं निहते च सुसंस्कृते ।" मे. नत्रिकं ।
**उपसंव्यानम्** । क्ली । परिधानवस्त्रे । अम. ।
**उपसत्तिः** । स्त्री । सेवायाम् । मे. तचतुष्कं ।
**उपसरः** । पुं । प्रथमगर्भधारणे ।
**उपसर्गः** । पुं । पिशाचादिबाधायां । मिश्ररोगे । मे. गचतुष्कं ।
**उपसर्य्या** । स्त्री । वर्षप्रसविन्यां गवि । বছর-বিউনী গাভী । हला. ।
**उपसूर्य्यकः** । पुं । खद्योते । জ্যোৎস্না পোকা । क्लीं । चन्द्रसूर्य्यमण्डले । अ. ।
**उपसृष्टम्** । क्ली । मैथुने । त्रिका ।
**उपसेकः** । पुं । व्यञ्जने । येनान्नं भुज्यते । वा ।
**उपस्करः** । पुं । वेसवारे । বাটনা । हला. ।
**उपस्थः** । पुं । शिश्ने । योनौ । रा. नि. व. १८ । मलद्वारे । श. र. । क्रोड़े । मे. ।
**उपस्थपत्रम्** । क्ली । अश्वत्थपत्रके । "पित्तश्लेष्मणि शस्यन्ते सूपे वा प्रलेपेषु चेति ।" चर. ।
**उपस्थाता** । पुं । परिचारके । रत्ना ।

**उपस्नेहः** । पुं । उपलेपे । स्नेहयुक्ततायां । स्नेहयुक्तान्नरसे । सु. नि. ६, ७अ. ।
**उपस्पर्शः** । पुं । स्नाने । आचमने । मे शचतुष्कं ।
**उपहतः** । त्रि । नष्टे । अशुद्धद्रव्ये ।
**उपह्वरं** । क्ली । निर्ज्जनस्थाने । निकटे । पुं । रथे । अ ।
**उपाकृतः** । पुं । उपद्रवे । हे. । यज्ञे मृतपशौ
**उपाङ्गः** । पुं । चित्रके । जटा. । तिलके ।
**उपाङ्गचिकित्सा** । स्त्री । छिन्नादिप्रतीकारे । यथा—"छिन्नं भिन्नं तथा भग्नं क्षतं पिच्चितमेव च । तेषां दग्धप्रतीकारः प्रोक्तश्चोपाङ्गसंज्ञकः ॥" वै. निघ. । अचि. १स्था. २अ. ।
**उपाञ्जनम्** । क्ली । अनुलेपने ।
**उपात्तः** । पुं । अमदगजे । हला. ।
**उपाधानम्** । क्ली । उपधाने । बालिश ।
**उपानद्धारणम्** । क्ली । चर्म्मादिपादुकाधारणे । জুতো পরা । गुणाः—"उपानद्धारणं नेत्र्यमायुष्यं पादरोगहृत् । सुखप्रचारमोजस्यं वृष्यञ्च परिकीर्त्तितम् । पादाभ्यामनुपानद्भ्यां सदा चङ्क्रमणं नृणां । अनारोग्यमनायुष्यमिन्द्रियघ्नमदृष्टिदम् ॥" वै निघ ।
**उपाश्रयः** । पुं । मत्तहस्तिनि । हला. ।
**उपासः** । पुं । उपवासे ।
**उपासनम्** । क्ली । शुश्रूषायाम् । अम. । आसने । मे ।
**उपासना** । स्त्री । सेवायां । अम. ।
**उपास्तिः** । स्त्री । सेवायां । हे. च. ।
**उपास्थि** । क्ली । कोमलास्थिनि । কচি হাড় । अम. ।
**उपेक्षा** । स्त्री । त्यागे । अनादरे ।
**उपोती (दका) (दकी)** । स्त्री । A pot-herb. Basella rubra or lucida.) पूतीकायाम् । বড় পুঁই শাক । सं राजगिरा, माड़वी, रुदवेलि, मयाला खण्डपालकेति च ख्याता । तत्पर्य्यायः,—उपोदिका ( राज. ) उपोदीका (भ.) उपोतौ (शब्दर.) हस्तिकप्रिया (शब्दमा.) अपोदिका ( अ. टी. खा. ), पूतीका ( अ. टी. भ ) कलम्बी पिच्छिला पिच्छिलच्छदा मोहनी



मदशाकः विशाला बलिपोदकी पूतिका । गुणाः—गुर्व्वी सरा मदघ्नी च । वा. सू. ६अ. । कषायोष्णा कटुका मधुरा निद्रालस्यकरी रुच्या विष्टम्भश्लेष्मकरी च । रा. नि. व. ७ । स्वादुपाकरसा हृद्या वातपित्तमदापहा । उपोदिका सरा स्निग्धा बल्या श्लेष्मकरी हिमा ॥ सु. सू. ४५ अ । उपोदकी द्विधा सामान्या क्षुद्रपत्रा वनजा चेति । द्वितीया रसवीर्य्यविपाकेषु पूर्व्वसमा । तृतीया तिक्ता कटूष्णा रोचनी च । रा. नि. व. ७ । "सारकत्वं स्निग्धत्वं बल्यत्वं श्लेष्मकरत्वं हिमत्वञ्च ।" राज. ।
**उपोदि(दी)का** । स्त्री । उपोदकायाम् । বড় পুঁই । पुदिनेति च ख्याता । च. सू. २अ. । See उपोदकी ।
**उपोदिकातैलम्** । क्ली । क्षुद्ररोगे हितं । उपोदकीनां क्षारः २श. वारि १६ श. एकविंशतिवारं विस्राव्य क्षारोदकं कार्य्यम् । तैलं ४ श. लवणं १श. एकत्र पाच्यम् । च. द. क्षुद्ररो. चि. ।
**उपोषः** । पुं । उपवासे ।
**उपोषणम्** । क्ली । उपवासे ।
**उप्तः** । त्रि । कृतवपने ।
**उप्यम्** । क्ली । वपनक्षेत्रे । रा. नि. व. २ । [ भा. ।
**उभयकण्टका** । स्त्री । वदरवृक्षे । কুলগাছ ।
**उभयभागहरम्** । क्ली । ऊर्द्धाधोभागहरौषधे । বামক ও রেচক ঔষধ । सु. सू. ४१ अ. ।
**उभयलिङ्गिनी** । स्त्री । लिङ्गिन्याम् । पञ्चगुड़िकेति लोके प्रसिद्धा । चि. क्र. क. बन्ध्या. चि. ।
**उमा** । स्त्री । अतस्याम् । शशिनां । रा. नि. व. १६ । हरिद्रायाम् । कान्तौ । मे. मद्विकं ।
**उमाकटः** । पुं । उमाधूलौ । শশিনার ধূলি ।
**उम्या(म्यिका)(शालिः)** । स्त्री । शालिधान्यविशेषे । गुणाः—मधुरा स्निग्धा सुगन्धा कषाया पित्तश्लेष्मघ्नी रुच्या वातघ्नी च । रा. नि. व. १६ ।
**उम्बरः** । पुं । उदुम्बरवृक्षे । যজ্ঞডুমুর গাছ । हे. च. । गुणाः—स्निग्धः स्वाद्वादिगुणयुक्तः उष्णवीर्य्यः कफपित्तकरो गुरुश्च । वा. ।
**उम्बिका (म्बी)** । स्त्री । यमान्याम् । अर्द्धपक्व-तृणाग्निसंभृष्ट-यवगोधूमशस्याम् । गुणाः—"कफकरत्वं बलकरत्वं लघुत्वं पित्तानिलापहारित्वञ्च । भा. ।

**उम्यम्** । क्ली । Field of linseed. (Linum utila tissimum) अतसीक्षेत्रे । हरिद्राक्षेत्रे । भ. द्विरूपाचरकोषश्च ।
**उरः** । क्ली । वक्षसि । अम. । "नाभिर्वितस्तिमात्रञ्च कण्ठदेशात् षड़ङ्गुलं । उरसस्तद् विजानीयात् शिरस्तु हृदयं मतम् ।" भा. । त्रि. । श्रेष्ठे । मे. ।
**उरःक्षतम्** । क्ली । उरोव्रणे । क्षयरोगे ।
**उरःक्षतकासः** । पुं । क्षयकासरोगे । হৃদয়ে ক্ষত কাস । "अतिव्यवाय-भाराध्व-युद्धाश्वगजनिग्रहैः । रुक्षस्योरःक्षतं वायुर्गृहीत्वा कासमावहेत ॥" निदानम् ।
**उरगः ( ङ्गः ) ( ङ्गमः )** । पुं । सर्पे । क्ली । शीसके । मद. व. १४ । रस. र. ह. चि. एकादशाध्याये । नागकेशरवृक्षे ।
**उरगगृहम्** । क्ली । सर्पगृहे ।
**उरगारिः** । पुं । क्रौञ्चपक्षिणि ।
**उरगाशनः** । पुं । गरुड़े । जटा. ।
**उरगेन्द्रसुमनः** । क्ली । नागकेशरे । भा. म. ४ भ. । "व्योषाम्भोददलोरगेन्द्रसुमनः ।"
**उरङ्गः (मः)** । पुं । सर्पे । ब. टी. रा. ।
**उरच्छः** । पुं । गुन्द्रे । গেঁদপটের इति पाश्चात्य भाषा । भा. पू. १भ. ।
**उरणः** । पुं । मेषे । अम. । क्ली । रौप्ये ।
**उरणा** । स्त्री । मेष्याम् । ভেড়ী ।
**उरणाख्यः(क्षः) कः** । पुं । दद्रुघ्नवृक्षे । दाद्रुमर्द्दन । हिं एड़ाचि । চাকন্দা গাছ इति च केचित् । अ. टी. खा. । श. र. । आरग्वधवृक्षे ।
**उरभ्रः** । पुं । मेषपशौ । प. मु. ।
**उरभ्रमारिका** । स्त्री । वातप्रकृतिकीटविशेषे । तद्दष्टे वातजरोगा भवन्ति । सु. कल्प. ८अ. ।
**उरसिजः** । पुं । स्तने । रा. नि. व. १८ ।
**उराहः** । पुं । कृष्णजान्वीषत्पाण्डुवर्णाश्वे । लक्षणं —"उराहः कृष्णजानुस्तु मनाक्पाण्डुस्तु यो भवेत् ।" ज. द. ३अ. ।
**उरोहा** । स्त्री । कारवेल्लिके । করলা, উচ্ছে ।
**उरुकालः (कः)** । पुं । महाकाललतायाम् । মাকালফলের গাছ । त्रिका. ।
**उरुमालः** । पुं । फलशाकविशेषे । मार्गेफल

इति पाश्चात्यभाषा। तत्पर्य्याय:—स्निग्धफल:। फलगुणा:—"उरुमालं पियालञ्च बृंहणं गुरुशीतलं। स्वादुपाकरसं स्निग्धं विष्टम्भि कफशुक्रकृत्॥" वा.।

**उरुवुक:** **उरुवूक:** **उरूवुक:** } पुं। श्वेतैरण्डे। एरण्डवृक्षे। अम। र.सा.सं.। उदरवृद्धौ। रक्तैरण्डे। रा. नि. व. ८।

**उरुस्तम्भा।** स्त्री। कदलीवृक्षे।

**उरोग्रह:।** पुं। हृदयरोगविशेषे। অগ্রগাস इति भाषा। लक्षणं यथा—"अत्यभिष्यन्दिगुर्व्वम्बुशुष्कपूत्यामिषाशनात्। साम्लं मांसं यकृत्प्लीहौ: सद्यो वृद्धिर्यदा भवेत्। उरोग्रहं तदा कुक्षौ कुरुत: कफमारुतौ॥ न वामपार्श्वे न च दक्षिणांशे वुक्कस्य मध्ये परिवृद्धिमेति। उरोग्रहं तं प्रवदन्ति रोगं वुक्काग्रतस्तस्य शिरातनुत्वं॥ दौर्ब्बल्यं दुर्ब्बलाग्निश्च कार्श्यं मांसाभिकाङ्क्षितम्। जायते कृष्णवर्णत्वं पीतकश्चापि जायते। द्विजिह्वसदृश: कश्चित् कश्चित्कच्छपसन्निभ:। ज्वरोऽरुचि: पिपासा च शोथश्चातिप्रकोपने॥" नि.। हृदयवेदनायां।

**उरोज:।** पुं। स्तने। हे. च.।

**उरोघात:।** पुं। हृद्रोगे। च. द।

**उर्णनाभ:।** पुं। See ऊर्णनाभ:।

**उर्णा।** स्त्री। See ऊर्णा।

**उर्णायु:।** पुं। See ऊर्णायु:।

**उद्र:।** पुं। जलविड़ाले। উদ্বিড়াল। श. र.।

**उर्म्मिकफ:।** पुं। समुद्रफेने।

**उर्व्वा।** स्त्री। शोषके।

**उर्व्वारु:।** पुं। इर्व्वारुके। কাঁকুড়। भरत: द्विरूपकोषस्य। भा. म. ३भ. अश्म. चि. वरुणगुड़े।

**उर्व्वी।** स्त्री। तन्नामकमर्म्मस्थाने। तच्च स्थानमूरुमध्यदेश:। सु. शा. ६अ.। वैकल्यकरमर्म्मान्यतममर्म्मद्वये। सु. शा. ५अ.।

**उल(लु)प:।** पुं। प्रतानवत्यां लतायां। सा तु त्रपुषीद्राक्षाताम्बुलीप्रभृति:। तत्पर्य्याय:—वीरुत् गुल्मिनी (अ.) प्रताना (ज.) प्रतानिनी वीरुधा वरुत् (शब्दर.) अ. टी. सा.। क्ली। तृणविशेषे। উলুথড়। विश्व.। मे.।

**उलु(लू)पी।** पुं। शिशुके। শুযোক। अम.। तदाकारमीने। श. र.। उपल इति ख्याते मत्स्ये। शिशुमाराकृतिमत्स्यभेदे, स कलिङ्गादिदेशेषु दृश्यते। शीशु इति ख्यातमत्स्ये। भाँगल इति च केचित्। शिशुमार इति सर्व्वस्वे। "चुलप: शिशुमार: स्यात् उलुपी शिश्यकस्तथा।" अ. टी. भ.।

**उलुम्बा।** स्त्री। यमान्याम्। वै. निघ.।

**उलूक:।** पुं। पेचके। পেঁচা। मे. कत्रिकं। प. मु.। र मा.। तन्मांसं—"उलूकजन्तु यन्मांसं पित्तलं भ्रान्तिकारकं। वातप्रकोपनञ्चैव......।" वै. निघ.। क्ली। स्वनामख्याततृणे। উলুথড়। तत्पर्य्याय:,—सूच्यग्र: स्थूलक: दर्भ: जूर्णाख्य: खरच्छद: उलप: उलूप:। रा.।

**उलूकपाद:।** पुं। अश्वस्य पादरोगविशेषे। लक्षणं—"कूर्चमावृत्य य: शोथो जङ्घायामुपजायते। उलूकपादो विज्ञेय:।" ज. द. ३९ अ.।

**उलूखल(क)म्।** क्ली। उदूखले। भर.। गुग्गुलौ। अम.।

**उलूखलसन्धि:।** पुं। कक्षावङ्क्षणदशनसन्धिषु। सु. शा. ५अ.।

**उलूत:।** पुं। अजगर सर्पे। त्रि.।

**उल्कामुखी।** स्त्री। शृगालीविशेषे। हारा.। খ্যাঁখশেয়াল। तत्पर्य्याय:,—शृगालिका लोमालिका दीप्तजिह्वा किखि:। त्रि.।

**उल्मुकम्।** क्ली। ज्वलदङ्गारे। हारा.। उल्कायां। के.।

**उल्लङ्घनं।** क्ली। अतिक्रमणे। ডিঙ্গান।

**उल्लस: (नकम्)।** पुं, क्ली। रोमाञ्चे। हे. च.।

**उल्लाघ:।** पुं। रोगमुक्ते। रा. नि. व. २०। मरिचे।

**उल्लाप:।** पुं। कातरध्वनौ।

**उल्लो।** स्त्री। पलाण्डौ। रा. नि. व. ७।

**उल्लुप्तम्।** त्रि। निरन्तरं छेदनातिशयेनानुपच्छिन्नत्वात् पिष्टमिवोल्लुप्तपिष्टम्। सु. उ. ६४ अ.।

**उल्लेखनम्।** क्ली। वमने। र. मा. खनने।

**उल्लोच:।** पुं। चन्द्रातपे। हला.।

**उल्लोल:।** पुं। महातरङ्गे। বড় ঢেউ। तत्पर्य्याय:,—कल्लोल:।

**उल्वम्।** क्ली। जरायौ। अम. कलले। सु. शा १० अ.।



**उल्वणम्।** क्ली। वातादिजन्यविकारे।

**उशिक्।** पुं। घृते।

**उशी।** स्त्री। वाञ्छायां। उ.।

**उशीर: (क:)।** पुं, क्ली। The root of a fragrant grass. (Andropogon muricatum.) स्वनामख्यातसुगन्धतृणमूले। वीरणमूले। खस् वा लामज्जक इति पाश्चात्ये। গন্ধবেণার মূল। मं वाला। तें वट्टिवेलु। च. सू.। तत्पर्य्याय:,—अभयं नलदं सेव्यं अमृणालं जलाशयं लामज्जकं लघुमयं अवदाहं इष्टकापथं उषीरं मृणालं लघु लयं अवदानं इष्टं कापथं अवदाहेष्टकापथं इन्द्रगुप्तं (अ. टी.), उशीरकं (र.), जलवासं हरिप्रियं वीरं वीरणं समगन्धिकं रणप्रियं वीरतरु: शिशिरं शीतमूलकं वितान-मूलकं जलामोदं सुगन्धिकं सुगन्धिमूलकं सुगन्धिमूलं कम्बु (रा.)। गुणा:—शीतलं तिक्तं दाहहरं श्रमघ्नं पित्तज्वरघ्नं जलसौगन्ध्यकरञ्च। रा. नि, व. १२। उशीरं स्वेददौर्गन्ध्य-दाहपित्तास्ररोगजित्। राज.। पाचनं शीतलं स्तम्भनं तिक्तं मधुरं ज्वरघ्न वान्तिघ्नं उन्मत्तताहरं कफपित्ततृष्णाघ्नं रक्तघ्नं वीसर्पदाहमूत्रकृच्छ्रघ्नञ्च। भा. पू, १भ.। मद. व. ३। वालके। বালা। मुस्ताद्यष्टादशाङ्गे।

**उशीरादि:।** पुं। तृतीयकज्वरे कषाय:। "उशीरं चन्दनं मुस्तं गुड़ूचीधान्यनागरं। अम्भसा क्वथितं पेयं शर्करामधुयोजितं॥ भैष. जीर्णज्व. चि.। द्वितीय: ज्वरातीसारे। तस्य द्रव्याणि—उशीरं वालकं मुस्तं धन्याकं शुण्ठी वराहक्रान्ता धातकी रोध्रं विल्वपेशी च। सा. कौ।

**उशीरी।** स्त्री। क्षुद्रकाशतृणे। ছোট কেশে। तत्पर्य्याय:,—मिषि: गुड़ा अश्वाल. नीरुज: शर:। गुणा:—मधुरशीता पित्तदाहक्षयघ्नीच। रा. नि. व. ८।

**उष:।** पुं। गुग्गुलौ। रात्रिशेषे। मे. षद्विकं। क्षारमृत्तिकायाम्। श. र.। क्ली। पांशुजलवणे। পাঙা ফুলা লবণ। प. मु.।

**उषक:।** पुं। टङ्कणक्षारे। সোহাগা। रत्ना.। मृत्तिकालवणे। प. मु.।

**उषणम्।** क्ली। शुण्ठ्याम्। मरिचे.। रत्ना.। भा. पू १भ.। उदकमञ्जरी। च. द. अ. सा. चि.। "त्रिव्योषणादि:।" शि. यो. अग्निमा. चि. वृह. चुक्रसन्धाने। पिप्पलीमूले। रा नि. व. ६। "वचोषणकणा: समा.।" त्रिकटुके.। वै. नि. घ. २भ. ज्व. चि. सैन्धवाद्यञ्जने।

**उषणा।** स्त्री। पिप्पल्याम्। कणावाचुषणा स्त्रियाम्। मे. णत्रिकं। शुण्ठ्याम्। चविकायाम्। र. मा.। गजपिप्पलीमूले। अम.। भा. पू. १भ.। कट्फले। मरिचे। सन्निपातज्व. चणकाद्युद्धूलने। गजपिप्पल्याम्। वै. निघ. २भ. जिह्वकसन्निपा ज्व. चि.।

**उषप:।** पुं। सूर्य्ये। अग्नौ। उ.।

**उषप्रसूतं।** क्ली, पुं। क्षारविशेषे। के.।

**उषरा।** स्त्री। क्षारमृत्तिकायाम्। ক্ষারিমাটি। रत्ना.।

**उषर्बुध:।** पुं। रक्तचित्रके। রাংচিতে। श. च.।

**उषस्।** क्ली, स्त्री। प्रत्यूषे। मे. सत्रिकं।

**उषसी।** स्त्री। सन्ध्याकाले। मे.।

**उषा।** स्त्री। गवि। গাই। हे. च.। रात्रौ। मे. रात्रिशेषे। अ.। स्थाल्याम्। अ. टी. रा.।

**उषाकल:।** पुं। कुक्कुटे। त्रिका.।

**उषाक्षार:।** पुं। टङ्कणे। সোহাগা। क्षारमृत्तिकायाम्। रत्ना.।

**उषित:।** त्रि। दग्धे। व्युषिते। मे. तत्रिकं।

**उषोर:।** पुं, क्ली। वीरणमूले। अ. टी. रा.। च. द. र. पि. चि. दूर्व्वाद्यतैले।

**उष्ट्र:।** पुं। स्वनामख्यातपशुविशेषे। উট। हिं ऊँट्। तत्पर्य्याय:,—क्रमेलक: मय: महाङ्ग: (अ.), दीर्घगति: वली करभ: दासेरक: धूसर: लम्बोष्ठ: वरण: महाजङ्घ: जवी जाङ्घिक: दीर्घ: शृङ्खलक: महान् महाग्रीव: महानद: महाध्वग: महापृष्ठ: बलिष्ठ: (रा), दीर्घजङ्घ: ग्रीवी धूम्रक: शरभ: (ज), क्रमेल: कण्टकाशन: भोलि: बहुकर: अध्वग: मरुद्विप: वक्रग्रीव: (शब्दर.), वासन्त: कुलनाश: कुशनामा मरुप्रिय: द्विककृत् दुर्गलङ्घन: भूतघ्न: दासेर: दीर्घग्रीव: केलिकीर्ण: (हे.) कुवाहुल: वणिग्वह: (श), दीर्घाध्वग: (मे.)। तन्मांसगुणा:—त्रिदोषशमनं बलपुष्टिप्रदं रुच्यं मधुरं वीर्य्यवर्द्धनञ्च। रा. नि. व. १७। शीतलत्वं लघुत्वं त्रिदोषहरत्वं पुष्टिकरत्वं रुच्यं वीर्य्यवर्द्धनत्वञ्च। रा. नि. म. १५। कटु शोषक्रिमिविषहरं दीपनं वातकफघ्नं कुष्ठगुल्मोदरघ्नञ्च। भा. पू. १ भ।

**उष्ट्रकण्टकः ।** पुं। सकण्टकगुल्मविशेषे। ठाकुर-काँटा। च. द.। गोक्षुरे। भैष. मसूवा. चि. "उष्ट्र-कण्टकमूलं।"

**उष्ट्रकाण्डिका (ण्डी) ।** स्त्री। पुष्पवृक्षविशेषे। ऊँटाटी इति भाषा। मं उट्कटारा, उटांटी। तत्पर्य्यायः,—रक्तपुष्पी करभकाण्डिका रक्ता लोहितपुष्पी वर्णपुष्पी। गुणाः—तिक्ता उष्णा रूच्या हृद्रोगहरी। तद्बीजं मधुरं शीतं वृष्य सन्तर्पणञ्च। रा. नि. व. १०।

**उष्ट्रग्रीवः ।** पुं, क्ली। पित्तजन्यभगन्दररोगभेदे। "पित्तन्तु प्रकुपितं अनिलेनाधःप्रणुन्न' पूर्व्ववदवस्थितं रक्तां तन्वीं,च्छ्रितामुष्ट्रग्रीवाकारां पिड़कां जनयति। सास्य कण्ड्वादीन् वेदनाविशेषान् जनयति। अप्रतिक्रियमाणा च पाक पैति। व्रणश्च कठिनः संरम्भी कण्डूप्रायः पिच्छिलमजस्रमास्रावं स्रवति। उपेक्षितश्च वातमूत्रपुरीषरेतांसि विरुजति। तं भगन्दरं परिस्राविणमित्याचक्षते।" सु. नि. ४ अ.। प्रकोपणैः पित्तमतिप्रकोपितं करोति रक्तां पिड़कां गुदागताम्। तदाशुपाकां हिमपूतिवाहिनीं भगन्दरं तूष्ट्रशिरोधरं वदेत ॥ नि.।

**उष्ट्रधूसरपुच्छिका ।** स्त्री। वृश्चिकाल्याम्। বিছাতি। र. मा.।

**उष्ट्रपादिका ।** स्त्री। मदनमालत्याम्। मदन-माली, शापरमाली च इति लोके। र. मा.। तत्पर्य्यायः,—शीतभीरुः भद्रवल्ली भूमिमत्ता अष्ट-पादिका (रा.)।

**उष्ट्रप्रमाणः ।** पुं। काश्मीरदेशीयशरभे। मद. व. १२।

**उष्ट्रप्रियः ।** पुं। मरुभूमिजातकण्टकवृक्षविशेषे। ঠাকুরকাঁটা গাছ। हिं करील, टाउर। गुणाः करीरशब्दे मृग्याः। भा. पू. १भ.।

**उष्ट्रभाक्षिका ।** स्त्री। क्षुद्रदुरालभायां। रा. नि. व. ४।

**उष्ट्रभक्ष्यः ।** पुं। वंशकरीरे। বাঁশের কোঁড়। प. मु.।

**उष्ट्रमूत्रम् ।** क्ली। उष्ट्रस्य मूत्रे। गुणाः—कटु तिक्तोष्ण' लवणं पित्तकोपनं बल्यम् उदररोगघ्नं वातदोषघ्नञ्च। रा. नि. व. १५।

**उष्ट्रशिरोधरम् ।** क्ली। उष्ट्रग्रीवभगन्दर।

**उष्ट्रिका (ष्ट्री) ।** स्त्री। वृश्चिकालिक्षुपे। বিছাতি। रा. नि. व. ९। मृन्नाण्डविशेषे। हारा। उष्ट्र-भार्य्यायाम्। ঊটিনী। मे. कत्रिकं। तत्क्षीर-गुणाः—कुष्ठशोथपित्तार्शःकफाटोपानाहोदरस्थजन्तु-गुल्मश्वासनाशित्वम्, ईषद्रूक्षोष्णलवणं, कुष्ठशोफघ्नं पित्तघ्नं अर्शोघ्नं कफाटोपघ्नं आनाहहरं क्रमिगुल्मो-दरश्वासघ्नञ्च। रा. नि. व. १५। लघु स्वादु लवणं दीपनं तथा क्रमिकुष्ठकफानाहशोथोदरहरं परम्। भा. पू. भ.। रूक्षं तथोष्णं लवणं कफस्य निवारणं वातविकारहारि। लघु प्रशस्तं कटुकं। दधिगुणाः—अर्शः-कुष्ठ-क्रमि-शूलोदररोगनाशित्वं कटुत्वं स्वादुत्वञ्च। नवनीतगुणाः—विपाके शीतलत्वं लघुत्वं व्रणक्रमिकफकासवातविषघ्नत्वञ्च। घृतगुणाः—शीतमधुरत्वं विपाके कटुत्वं क्रमिकुष्ठगुल्मोदर-नाशित्वञ्च। पाके कटु शोषक्रमिविषघ्नं दीपनं वातकफघ्नं कुष्ठगुल्मोदरघ्नञ्च। अत्रि. ८अ.।

**उष्ट्रीक्षीरम् ।** क्ली। उष्ट्रीदुग्धे। See उष्ट्री।

**उष्णः ।** पुं। ग्रीष्मे। त्रि। उष्णस्पर्शे। उष्णवीर्य्ये। पलाण्डौ। रा. नि. व.। क्ली। शूरणविशेषे। उष्णं वातकफौ हन्यात्। भा.।

**उष्णकः ।** पुं। पूगवृक्षे। ज्वरे। ग्रीष्मर्त्तौ। त्रि। आतुरे। धर.। मे.।

**उष्णगणः ।** पुं। भद्रदार्व्वादौ। पिप्पल्यादौ। सु. चि. १७ अ.।

**उष्णगन्धा ।** स्त्री। कलिङ्गनवक्षे। गन्धभरी वच। वै निघ.।

**उष्णजलम् ।** क्ली। See उष्णोदकं।

**उष्णफला ।** स्त्री। लताविशेषे। কুন্দুরুকী। मं गोड़ितोंडली। वै. निघ.।

**उष्णमल(मूत्र)त्वम् ।** क्ली। पित्तजन्यरोगे।

**उष्णरश्मिः ।** पुं। अर्कवृक्षे। अम.। सूर्य्ये।

**उष्णवल्ली ।** स्त्री। सारिवायाम्। অনন্তমূল।

**उष्णवातः ।** पुं। मूत्राघातविशेषे। लक्षणं यथा—"व्यायामाध्वातपैः पित्तं वस्तिं प्राप्यानिलावृतं। वस्तिं मेढ्रं गुदञ्चैव प्रदहन् स्रावयेदधः। मूत्रं हारिद्रमथवा सरक्तं रक्तमेव वा। कृच्छ्रात्पुनः पुनर्जन्तोरुष्णवातं वदन्ति तम् ॥" भा.।

**उष्णवारणम् ।** क्ली। छत्रे। हारा.।

**उष्णवाष्पः ।** पुं। नेत्रजले। स्वेदे। वै. निघ.।



**उष्णविदग्धदृष्टिः ।** पुं। दृष्टिगतरोगविशेषे।

**उष्णवीर्य्यः ।** पुं। शिशुमारे। हे. च.। क्ली। कट्वम्लद्रव्याश्रयधर्म्म। गुणाः—"लघु कफवातघ्न पित्त-करं-वृष्यं भ्रमतृड्ग्लानिस्वेददाहाशुपाकतां करोति। सु. सू. ४१ अ.। त्रि। तीक्ष्णवीर्य्ये।

**उष्णसुन्दरः ।** पुं, क्ली। विभीतकवृक्षे। विभीतके।

**उष्णस्निग्धः ।** त्रि। तत् यद्वातघ्नं वस्तु। सु. सू. ४१ अ.।

**उष्णा(ष्मा) ।** स्त्री। क्षयरोगे। सन्तापे। पित्ते। वै. निघ.। रा. नि. व. २०।

**उष्णा(भि)गमः ।** पुं। ग्रीष्मकाले। अम.।

**उष्णाङ्गत्वम् ।** क्ली। पित्तजन्यरोगे।

**उष्णान्नम् ।** क्ली। उष्णभक्ते। See अन्नम्।

**उष्णाम्बु ।** क्ली। सुखोदके। "उष्णाम्बु च सुखोदकम्।" प. प्र. ३ख.। See उष्णोदकम्।

**उष्णासहः ।** पुं। शरत्काले।

**उष्णिका ।** स्त्री। यवाग्वाम्। যাউ। रत्ना.।

**उष्णोषः ।** पुं, क्ली। शिरस्त्राणे। পাগ্‌ড়ী। हिं पाग। धारणगुणाः—शुचिदं केश्यं रजोवातातप-घ्नञ्च। मद. व. १३। चक्षुष्यमायुर्वर्द्धकत्वं शीतोष्णादि-निवारणञ्च ॥ राज.।

**उष्णोदकम् ।** क्ली। अष्टमांशावशिष्टे, चतुर्भागावशिष्टे, अर्द्धशिष्टे वा पक्वजले। प. प्र. १ख.। तच्च त्रिविधं पादहीनार्द्धहीनत्रिभागहीनत्वात्। "तत्पादहीनं वातघ्नमर्द्धहीनन्तु पित्तनुत्। कफघ्नं पादशेषस्थं पानीय लघु दीपनम् ॥" पादहीनं हेमन्ते, पादार्द्धोनं शरदि, तथार्द्धावशेषितं प्रावृड्-वसन्तग्रीष्मेषु हितं पथ्यञ्च। विशेषाः स्वस्वपर्य्यायेषु मृग्याः। गुणाः—सदापथ्यं कासज्वरविबन्धकफ-वातघ्नं दीपनं वस्तिशोधनञ्च। रात्रौ तत्र श्लेष्मघ्नत्वं वातकर्षित्वं अजीर्णजारकत्वञ्च। दिवातप्तं वारि नक्तं जाड्यं गच्छति अतस्तन्न रात्रौ पेयं। एवं रात्रि-तप्तमपि दिवा गुरु स्यात्, अतस्तदपि दिवा न पेयं। तदात्वमेव तप्तं जलं सदा पेयम्। रा. नि. ब. १४। "कफमेदोऽनिलामघ्नं दीपनं वस्तिशोधनं। श्वास-कासज्वरहरं पथ्यमुष्णोदकं सदा ॥ यत् क्वाथ्यमानं निर्व्वेगं निष्फेनं निर्म्मलं लघु। चतुर्भागावशेषन्तु तत्तोयं गुणवत् स्मृतम् ॥ नच पर्य्युषितं देयं कदाचिद् वारि जानता। अम्लीभूतं कफोत्क्लेशि न हितं तत् पिपासवे ॥ मद्यपानात् समुद्भूते रोगे पित्तोत्थिते तथा। सन्निपात-समुत्थे च शृतशीतं प्रशस्यते ॥ सुश्रु. ॥"

**उष्णोपगमः ।** पुं। ग्रीष्मकाले। अम.।

**उष्मः (कः) ।** पुं। नारे। र. मा.। क्षयरोगे। रा. नि. व. २०। ग्रीष्मर्त्तौ। अम.। वसन्तकाले। उष्णतायां। आतुरे। मे. कत्रिकं।

**उष्मजम् ।** क्ली। लवणसाधारणे। रत्ना.।

**उष्मभ्यः ।** पुं। सूर्य्ये।

**उष्मस्वेदः ।** पुं। उष्मजन्यघर्म्मे। यथा—"उष्म-स्वेदः प्रयोक्तव्यः लौहपिण्डेष्टिकादिभिः। प्रतप्तै-रम्लसिक्तैश्च काये रल्लकवेष्टिते ॥ अथवा वातजि-द्द्रव्यक्वाथरसादिभिः। उष्णैर्घटं पूरयित्वा पार्श्वे छिद्रं निधाय च। विसृद्यास्य त्रिखण्डाञ्च धातुजां काष्ठवंशजाम्। ......। सुखोपविष्टं स्वभ्यक्तं गुरुप्रावरणावृतं। हस्तिशुण्डिकया नाड्या स्वेदयेद्वातरोगिणम् ॥ अत्र वातघ्नद्रव्यभागाः—शालपर्णी १ भ. पृश्निपर्णी २ भ. कण्टकारी ३ भ. वृहती ४ भ. गोक्षुरं ५ भ. विल्वं ६ भ. गणिकारी ७ भ. श्योणाकः ८ भ. पाटलिः ९ भ. गाम्भारी १० भ.। वै. निघ. स्वेद.।

**उष्मा (ष्मन्) ।** पुं। सन्तापे। पित्ते। क्षयव्याधौ। रा. नि. व. २०। ग्रीष्मर्त्तौ। अ. टी. नीलकण्ठः।

**उष्मागमः ।** पुं। ग्रीष्मकाले। उत्तापे।

**उस्रः (स्रा) ।** पुं, स्त्री। वृषे। अर्ज्जुन्यां। গাই। उपचित्रायाम्। आखुकर्ण्याम्। ইন্দুরকাণী। मे. रत्रिकं।

**उस्रोया ।** स्त्री। गवि। के।

**उक्षः ।** त्रि। धौते। सिक्ते।

**उक्षणम् ।** क्ली। सेचने।

**उक्षतरः ।** पुं। महावृषे। हे. च.।

**उक्षा (न्) ।** पुं। वृषभे। भा. पू. १भ.। ऋषभकौषधे। रा. नि. व. ५।

**उक्षाभद्रः ।** पुं। वृषे। वै. निघ.।

**उक्षालः ।** पुं। वानरे। वै. निघ.।

## ऊ

**ऊची** । स्त्री । भृष्टद्रव्यविशेषे । हराপোড় इति लोके । See ऊम्बी ।

**ऊज्ज:** । पुं । बले । चन. ।

**ऊध:** । क्ली । आपीने । अम. ।

**ऊधस्यम्** । क्ली । दुग्धे । रा. नि. व. १५ ।

**ऊम्बी** । स्त्री । यवगोधूमयोरर्द्धपक्वमञ्जरी तृणाग्निना भर्जिता ऊम्बीत्युच्यते । "मञ्जरी त्वर्द्धपक्वा या यवगोधूमयोर्भवेत् । तृणानलेन संभृष्टा बुधैरूम्बीति सा स्मृता ॥ गुणा:—कफदा बल्या लघ्वी पित्तानिलघ्नी च । भा. पू. १भ. ।

**ऊरण:** । पुं । मेषे । प. मु. ।

**ऊरु:** । पुं । जानूपरिभागे । ঊরু । रा. नि. व. १८ ।

**ऊरुपर्व्वा** । पुं. क्ली । जानौ । হাঁটু । अम. ।

**ऊरुमाण:** । पुं । मायोफले । सु. सू. ४६ अ. । See उरुमाल: ।

**ऊरुसन्धि:** । पुं । जानूपरिस्थसन्धिस्थाने । सु. ।

**ऊरुस्तम्भ:** । पुं । Paralysis of the lower extremities. वातकफजन्यरोगविशेषे । आढ्यवात इति केचित् । निदानं सम्प्राप्ति: तथा—"शीतोष्णद्रवसंशुष्कगुरुस्निग्धै: निषेवितै: । जीर्णाजीर्णे तथायाससङ्क्षोभस्वप्नजागरै: ।—सश्लेष्ममेद: पवन: साममत्यर्थसञ्चितम् । अभिभूयेतरं दोषमूरू चेत्प्रतिपद्यते । सक्थ्यस्थिनी प्रपूर्य्यान्त: श्लेष्मणा स्तिमितेन च । तदा स्तभ्नाति तेनोरू स्तब्धौ शीतावचेतनौ ॥ इति । परकीयाविव गुरू स्यातामतिभृशव्यथौ । ध्यानाङ्गमर्द्दस्तैमित्यतन्द्राछर्द्दरुचिज्वरै: । संयुक्तौ पादसदनकृच्छ्रोद्धरणसुप्तिभि । तमूरुस्तम्भमित्याहुराढ्यवातमथापरे ॥" इति रूपम् । मा. नि. । ऊरुस्तम्भे विधि: कार्य्यो वातकोपी कफापह: । युक्त्या जित्वा कफं रुक्षै: पश्चाद्वातं जयेद्भिषक् । पुराणशालिश्यामाकयवकोद्रवभोदनं । अघृतैर्जाङ्गलैर्मांसै: तथाचालवणैर्हितम् । वास्तूकवायसीभिम्ववेत्राग्रकुलकादिभि: । शुष्कमूलकयूषेण पटोलस्य रसेन वा । कफक्षयार्थं व्यायामेष्वेनं शक्येषु योजयेत् । स्थानान्याक्रामयेत् प्रात: प्रति स्रोती नदीन्तरेत् ॥ पथ्यम् । रस. र. ।

**ऊरुस्तम्भा** । स्त्री । कदलीवृक्षे । रा. नि. व. ११ ।

**ऊर्ज्ज: (क:)** । पुं । बले । कार्त्तिकमासे । हे. च. । क्ली । जले । श. र. ।

**ऊर्ज्जा:** । पुं । उत्साहे । वा. सू. २अ. ।

**ऊर्णनाभ:** । पुं । मर्कटके । মাকড়শা । अम. ।

**ऊर्णनाभि:** । पुं । ऊर्णनाभे । श. र. ।

**ऊर्णा** । स्त्री । मेषलोम्नि । "ऊर्णा मेषादिलोम्नि स्यात् ।" भ्रूमध्यावर्त्ते । "अन्तरावर्त्तके भ्रुवो: ।" मे. णद्विकं ।

**ऊर्णायु:** । पुं । कम्बले । मेषे । प. मु. । ऊर्णनाभौ । हे. च. ।

**ऊर्द्ध्वकण्टा (ण्टिका) (ण्टी)** । स्त्री । महाशतावर्य्याम् । रा. नि. व. ४ ।

**ऊर्द्धका** । स्त्री । वायुजन्यरोगविशेषे । উর্দ্ধক্ ।

**ऊर्द्धग:** । पुं । अस्थिभङ्गरोगे ।

**ऊर्द्धगुणभूयिष्ठ:** । त्रि । वमनद्रव्यमात्रे । सु. सू. ४१ अ. ।

**ऊर्द्धगुद:** । पुं । गुदोर्द्धगरोगे ।

**ऊर्द्धग्रह:** । पुं । अश्वस्य ग्रहदोषजन्यरोगविशेषे । तस्य लक्षणं—जिह्वास्यकृष्णत्वं दर्शनस्मरणनाशश्चेति । "श्यामं जिह्वामुखं यस्य नष्टदृष्टिस्मृतिर्भवेत् । ऊर्द्धग्रहकृतं दोषं तस्य दीनस्य निर्द्दिशेत् ॥" ज. ५७ अ. ।

**ऊर्द्धजत्रु** । क्ली । स्कन्धसन्धेरूर्द्धभाग: । স্কন্ধসন্ধির ঊর্দ্ধভাগ । "ऊर्द्धजत्रुरोगघ्नी । तच्च रोगेषु ।" च. द. ज्व. ।

**ऊर्द्धजानु:** । त्रि । ऊर्द्धज्ञौ । उपरिस्थजानुके । भा. ।

**ऊर्द्धज्ञु:** । त्रि । ऊर्द्धजानौ ।

**ऊर्द्धतिक्त: (क:)** । पुं । नेपालनिम्बे ।

**ऊर्द्धनाड़ी** । स्त्री । नाड़ीविशेषे ।

**ऊर्द्धपातनम्** । क्ली । रसस्योर्द्धोत्क्षेपणकर्म्मणि यथा—रस ३भ. ताम्र १भ. जम्बीररसेन तावन्मर्द्दयेत्, यावन्न पिण्डतां गच्छति । अथ ऊर्द्धपातनायन्त्रं विद्याधरयन्त्रं वा परिकल्प्य तं पिण्डं तलस्थभाण्डे संस्थाप्य तदुपरिस्थभाण्डे जलं दत्त्वा



यन्त्रसन्धिं सम्यक् निरोधयेत् । अथ तदध: वह्निं ज्वालयेत् । "स्थालीनृर्द्ध्वं जलं दत्त्वा वह्निं प्रज्वालयेदध: । एतद्विद्याधरं यन्त्रं पातनायन्त्रमित्यपि ॥" पातनायन्त्रमित्यूर्द्धपातनायन्त्रम् । "हण्डिकोपरितलभागेऽन्यां हण्डिकाञ्चोर्द्ध्वमुखीं विन्यस्याधोहण्डिकाभ्यन्तरे पाच्यसूतादिकं निवेश्य च द्वयो: सन्धिं निरोधयेत् । तत उपरितलस्थाल्यां जलं दत्त्वा अधो वह्निं प्रज्वालयेदिति । र. सा. सं. । একটী হাঁড়ির ভিতর পিণ্ডিত সতাম্র রস রাখিয়া তাহার মুখে আর একটী হাঁড়ি বসাইয়া উভয়ের সন্ধিমুখ উত্তমরূপে লেপিয়া শুষ্ক করিবে। পরে উপরিস্থ হণ্ডিকায় জল পূরণ করিয়া জ্বাল দিবে। সিদ্ধ হইলে নামাইয়া হাঁড়ির গায়ে যে ভূষা লাগিয়াছে, তাহা যত্নে লইয়া তাহা হইতে পারা বাহির করিবে।

**ऊर्द्धपाद:** । पुं । काश्मीरदेशीयशरभमृगे । अष्टपादपशुविशेषे ।

**ऊर्द्धभागहर:** । त्रि । वमनद्रव्ये । सु. सू. १अ. । See वमनं ।

**ऊर्द्धरेता: (स्)** । पुं । अस्खलित-शुक्रविशिष्टे । मैथुनादौ यस्य शुक्रस्खलनं न भवति ।

**ऊर्द्धवर्त्ति:** । पुं । तन्नामकाश्वशूलरोगे । लक्षणं यथा—"यवसङ्खादनञ्चैव यो वाजी ग्रासितं पुन: । मुखेन प्रोद्गिरत्याशु तं विद्यादूर्द्धवर्त्तिनम् ॥" ज. द. ४३ अ. ।

**ऊर्द्धवात:** । पुं । वायुरोगभेदे । उद्गारे । ঢেকুর । लक्षणं—"अध:प्रतिहतो वायु: श्लेष्मणा मारुतेन च । करोत्युद्गारबाहुल्यमूर्द्धवात: स उच्यते ॥" निदानम् ।

**ऊर्द्धवायु:** । पुं । ऊर्द्धगतवायौ । उद्गारबाहुल्ये । श्वासरोगे । भा. ज्व. चि. ।

**ऊर्द्धशोधनम्** । क्ली । अरिष्टकफले । রীঠা ফল । वमने ।

**ऊर्द्धश्वास:** । पुं । श्वासरोगभेदे । ऊर्द्धं श्वसिति यो दीर्घं न च प्रत्याहरत्यध: । श्लेष्मावृतमुखस्रोता क्रुद्धगन्धवहार्दित: ॥ ऊर्द्धदृष्टिर्विपश्यंश्च विभ्रान्ताक्ष इतस्तत: । प्रमुह्यन् वेदनार्त्तश्च शुष्कास्योऽरतिपीड़ित: । ऊर्द्धश्वासे प्रकुपिते ह्यध:श्वासो निरुध्यते । मुह्यतस्ताम्यतश्चोर्द्धं श्वासस्तस्यैव हन्त्यसून् ॥" भा. नि. । See श्वास: ।

**ऊर्द्धस्थिति:** । पुं । अश्वस्योर्द्धावर्त्ते । त्रिका. ।

**ऊर्द्धासित:** । पुं । कारवेल्ले । করলা উচ্ছে । त्रिका. ।

**ऊर्म्माण:** । पुं । द्रोणपरिमाणे । —

**ऊर्म्मि:** । पुं, स्त्री । तरङ्गे । दु:खे । वेदनायां । पीड़ायां । वेगे । भङ्गे । मे. मद्विकं ।

**ऊर्म्मिक:** । पुं । अश्वस्य पादरोगभेदे । लक्षणं —"ऊर्म्मिकश्चोर्म्मिसंस्थानैर्वलिभि: खुरसम्भवै: ।" ज. द. ३९ अ. ।

**ऊर्म्मिका** । स्त्री । उत्कण्ठायां । तरङ्गे । भृङ्गनादे । वस्त्रभङ्गे । अङ्गुलीयके । हे. ।

**ऊर्व्व:** । पुं । वाड़वाग्नौ ।

**ऊर्व्वरा** । स्त्री । सर्व्वशस्याढ्यायां भूमौ । शब्द र. ।

**ऊर्व्वी** । स्त्री । ऊरुस्थमर्म्मभेदे । सु. ।

**ऊर्व्वङ्गम्** । क्ली । गोमयच्छत्रिकायाम् । গুবরে ছাতা । हारा. ।

**ऊर्षा** । स्त्री । देवताड़कवृक्षे । श. च. ।

**ऊलुपी** । पुं । शिशुमारे । अ. टी. ।

**ऊलूक:** । पुं । पेचके । अयं प्रसहजातीय: । एतन्मांसम् उष्णवीर्य्यम् । एतद्भक्षणात् शोषभस्मकोन्मादा: क्षीणशुक्रता च जायन्ते । भा. पू. १भ. । "उलूकपललं भ्रान्तिकरं वातप्रकोपकरञ्च" मद. व. ।

**ऊष:** । पुं क्षारमृत्तिकायां । अम. । सन्ध्यायां रन्ध्रे । मे. । क्ली । प्रभाते । श. र. ।

**ऊषक:** । पुं । कल्लर इति प्रसिद्धे द्रव्यकन्दे । वा. सू. १५ अ. ऊषकादि. । "ऊषकस्तुत्थकं हिङ्गु ।" क्षारमृत्तिकायाम् । "ऊषक: क्षारमृत्तिका, वाराणसीसमीपे वभदरदेशे बाहुल्येन भवति । अन्ये तद्भवं द्रव्यान्तरमाहु: ।" सु. सू. ३८ अ. ड. । क्ली । प्रत्यूषे । श. र. ।

**ऊषकादिगण:** । पुं । ऊषकतुत्थकहिङ्गुकासीसद्वयसैन्धवशिलाजतूनीति गण: । गुणा:—मूत्रकृच्छ्राश्मरीगुल्ममेद:कफघ्न: । "ऊषकस्तुत्थको हिङ्गुकाशीशद्वयसैन्धवं सशिलाजतु ।" वा. सू. १५ अ. । च. द. कषायघृते ।

**ऊषणम्** । क्ली । मरिचे । "ऊषणं मरिचे क्लीवम् ।" मे, णत्रिकं । प. मु. । भा. प. १भ. ह. व. । पिप्

पल्यां। च. द. कफज्व. चि. सिन्दुवारादिः। "सिन्दुवारदलक्वाथः सोषणः कफजे ज्वरे।" शुण्ठ्याम्। भा. पू. १भ. ह. व.। पिप्पलीमूले। भा. पू. १भ. ह. व.। पुं। चित्रकत्वचे। भा. पू. १भ. ह. व.।

**ऊषणा**। स्त्री। पिप्पल्याम्। रा. नि. व. ६। भा. पू. १भ. ह. व.। चविकायाम्। प. मु.। See चव्यम्। शुण्ठ्यां। वै. निघ।

**ऊषरः**। पुं। क्षारभूमौ। रा. नि. व. २।

**ऊषरक(ज)म्**। क्ली। औषरके। पांशुलवणे। औषरलवणे। रोमकनामायस्कान्तभेदे। रा. नि. व. १३।

**ऊषरतृणम्**। क्ली। स्वनामख्याततृणे, घास विशेषे। गुणाः—बलदं रुच्यं पशूनां हितञ्च। रा. नि व. ८।

**ऊषवान्**। त्रि। ऊषरे। अम.।

**ऊषसूतम्**। क्ली। मृत्तिकालवणे। "ऊषसूतं वालुकैलं शैलमूलाकरोद्भवं। लवणं कटुकं छेदि विहितं कटु चोच्यते॥" सु. सू. ४६ अ.।

**ऊषक्षारः**। पुं। क्षारमृत्तिकायाम्। লোণা-মাটী। गुणाः—"उष्णोऽनिलघ्नः प्रक्लेदी ऊषक्षारो बलापहः।" सु. सू. ४६ अ.।

**ऊषाकरः**। पुं। कुक्कुटे। श. र.।

**ऊषापानम्**। क्ली। प्रत्यूषजलपाने। तस्य विधिगुणाः— अम्भसः प्रसृतीरष्टौ रवावनुदिते पिबेत्। वातपित्तकफान् जित्वा जीवेद्वर्षशतं सुखीति॥ तथा—अर्शःशोथग्रहण्यो ज्वरजठरजरा-कुष्ठमेदोविकाराः मूत्राघातास्तु पित्तश्रवणगलशिरः-श्रोणिशूलाक्षिरोगाः। ये चान्ये वातपित्तक्षतज-कफकृता व्याधयः सन्ति जन्तोस्तांस्तानभ्यासयो-गादपहरति पयः पीतमन्ते निशायाः॥ विगतघन-निशीथे प्रातरुत्थाय नित्यं पिबति खलु नरो यो नासरन्ध्रेण वारि। स भवति मतिपूर्णश्चक्षुषा तार्क्ष्यतुल्यो बलिपलितविहीनः सर्व्वरोगैर्विमुक्तः॥" भा.।

**ऊष्मकः**। पुं। पित्ते। रा. नि. व.। ग्रीष्मऋतौ। ज्यैष्ठाषाढ़ौ ग्रीष्मऋतुः।

**ऊष्मा**। पुं। उष्णतायाम्। क्षयरोगे। वै. निघ.।

**ऊष्मापहः**। पुं। हेमन्तऋतौ। वै. निघ.।

**ऊहः**। पुं। तर्के।

**ऊहिनी**। स्त्री। सम्मार्ज्जन्याम्। ঝাঁটা।

**ऊह्यम्**। क्ली। "यदनिर्द्दिष्टं बुद्धिमता तदूह्य।" सु. उ. ६५ अ.।

## ऋ

**ऋक्थम्**। क्ली। स्वर्णे। धने। अम.। सु. सू ३८ अ.।

**ऋक्थः**। पुं। धने।

**ऋचो(जो)षम्**। क्ली। भ्राष्टे। তাওয়া। हे. च.।

**ऋजीकः**। पुं। धूमे।

**ऋजुश्रेणी**। स्त्री। मूर्वायां। रत्ना.।

**ऋजुसर्पः**। पुं। सर्पविशेषे। दर्व्वीकरसर्पे। सु. कल्प. ४ अ.। See सर्पः।

**ऋज्वासनः**। पुं। मेघे। सिद्धा कौ।

**ऋतम्**। क्ली। जले। मे.। उञ्छशीले।

**ऋतुः**। पुं। वसन्तादिषड्विधकाले। रवे राशि-संक्रमात् यत्र दोषाणां चयकोपशमा भवन्ति ते ऋतव उच्यन्ते। "चयकोपशमा यस्मिन् दोषाणां सम्भवन्ति हि। ऋतुषट्कं तदाख्यातं रवे राशिषु संक्रमात्॥" भा. पू. १ भ. ऋतुचर्य्या। ते च शिशिर - वसन्त-ग्रीष्म - वर्षा-शरद्धेमन्तसंज्ञाः दोषो-पचयप्रकोपोपशमननिमित्तानि भवन्ति। तदुक्तं —"माघादयो द्वादशमासा द्विमासिकमृतुङ्कृत्वा षड़ृतवो भवन्ति। ते शिशिरवसन्तग्रीष्मवर्षा-शरद्धेमन्ताः। तेषां तपस्तपस्यौ शिशिरः, मधुमाधवौ वसन्तः, शुचिशुक्रौ ग्रीष्मः, नभो-नभस्यौ वर्षाः, इषोर्जौ शरत्, सहःसहस्यौ हेमन्त इति। भाद्रपदाश्वयुजौ शरत्, कार्त्तिक मार्गशीर्षौ हेमन्तः, पौषमाघौ शीतः, फाल्गुनचैत्रौ



वसन्तः, वैशाखज्यैष्ठौ ग्रीष्मः, आषाढ़श्रावणौ प्रावृड़िति" च मतान्तरं। सु. सू. ६अ.। ग्रीष्मो मेषवृषौ प्रोक्तः प्रावृण्मिथुनकर्कटौ। सिंहकन्ये स्मृता वर्षाः तुला-वृश्चिकयोः शरत्। धनुर्ग्राहौ च हेमन्तो वसन्तः कुम्भमीनयोः। भा.। स्मृतौ तु तस्य भेदत्रय स्वीकुर्व्वन्ति यथा--शीत-ग्रीष्मवर्षाः। तत्र फाल्गुनादिज्यैष्ठान्ताः ग्रीष्मः, आषाढ़ाद्याश्विनान्ता वर्षाः, कार्त्तिकादिमाघान्ताः शीत इति। ऋतुलक्षणादिकं यथा— तत्र वर्षा-स्वोषधयस्तरुण्योऽल्पवीर्य्या आपश्चाप्रसन्नाः क्षिति-मलप्रायास्ता उपयुज्यमाना नभसि मेघावतते जल-प्रक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां शीतवात विष्टम्भाग्नीनां विदह्यन्ते, विदाहात्पित्तसञ्चयमापा-दयन्ति, स सञ्चयः शरदि प्रविरलमेघे वियत्युप-शुष्यति पङ्केऽर्ककिरणप्रविलापितः पैत्तिकान् व्याधीन् जनयति। ता एवौषधयः कालपरिणामात्परि-णतवीर्य्या बलवत्यो हेमन्ते भवन्त्यापश्च प्रसन्नाः स्निग्धा अत्यर्थं गुर्व्यस्ता उपयुज्यमाना मन्दकिरण-त्वाद्भानोः सतुषारपवनोपस्तम्भितदेहानां देहिना-मविदग्धाः स्नेहाच्छैत्याद्गौरवादुपलेपाच्च श्लेष्मणः सञ्चयमापादयति, स सञ्चयो वसन्तेऽर्करश्मिप्रविला-पित ईषत् स्तब्धदेहानां देहिनां श्लैष्मिकान् व्याधीन् जनयति। ता एवौषधयो निदाघे निःसारा रूक्षा अतिमात्रं लघ्वो भवन्त्यापश्च ता उपयुज्यमानाः सूर्य्यप्रतापोपशोषितदेहानां देहिनां रौक्ष्याल्लघुत्वा-द्वैशद्याच्च वायोः सञ्चयमापादयन्ति, स सञ्चयः प्रावृषि चात्यर्थं जलोपक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां शीतवातवर्षेरितो वातिकान् व्याधीन् जनयति।...तत्र पूर्व्वाह्णे वसन्तस्य लिङ्गं मध्याह्ने ग्रीष्मस्यापराह्णे प्रावृषः प्रदोषे वार्षिकं शारदमर्द्ध-रात्रे प्रत्यूषसि हैमन्तमुपलक्षयेत्। एवमहोरात्र मपि वर्षमिव शीतोष्णलक्षणं दोषोपचयप्रकोपोप-शमैर्जानीयात्। ऋतूनामत ऊर्द्धमव्यापन्नानां लक्ष-णानि यथा—वायुर्व्वात्युत्तरः शीतो रजोधूमा-कुला दिशः। छन्नस्तुषारैः सविता हिमानद्धा जलाशयाः॥ दर्पिता ध्वाङ्क्ष-खड्गाह्व-महिषोरभ्र-कुञ्जराः। रोध्रप्रियङ्गुपुन्नागाः पुष्पिता हिमसाह्वये॥ शिशिरे शीतमधिकं वातवृष्ट्याकुला दिशः। शेषं हेमन्तवत्सर्व्वं विज्ञेयं लक्षणं बुधैः॥ दिशो वसन्ते विमलाः काननैरुपशोभिताः। किंशुकाम्भोजवकुल-चूताशोकादिपुष्पितैः॥ कोकिलाषट्पदगणैरुप-गीता मनोहराः। दक्षिणानिलसंवीताः सुमुखाः पल्लवोज्ज्वलाः॥ ग्रीष्मे तीक्ष्णांशुरादित्यो मारुतो नैरृतोऽसुखः। भूस्तप्ता सरितस्तन्व्यो दिशः प्रज्व-लिता इव॥ भ्रान्तचक्राह्वयुगलाः पयःपानाकुला मृगाः॥ ध्वस्तवीरुत्तृणलता विपर्णाङ्कितपादपाः॥ प्रावृष्यम्बरमानद्धं पश्चिमानिलकर्षितैः। अम्बुदै-र्विद्युदुद्योतप्रस्रुतैस्तुमुलस्वनैः॥ कोमलश्यामशस्याढ्या शक्रगोपोज्ज्वला मही। कदम्बनीपकुटजसर्ज्जकेतकि-भूषिता॥ तत्र वर्षासु नद्यम्भःपूरोद्भग्नतटद्रुमाः। वाप्यः प्रोत्फुल्लकुमुदनीलोत्पलविराजिताः॥ भूर-व्यक्तस्थलश्वभ्रा बहुशस्योपशोभिता। नातिगर्जत्-स्रवन्मेघनिरुद्धार्कग्रहं नभः॥ बभ्रुरुष्णः शरद्यर्कः श्वेताभ्रविमलं नभः। तथा सरांस्यम्बुरुहैर्भान्ति हंसांसघट्टितः॥ पङ्कशुष्कद्रुमाकीर्णा निम्नोन्नतसमेषु भूः। बाणसप्ताह्वबन्धूककाशासनविराजिता॥ स्वगुणै-रतियुक्तेषु विपरीतेषु वा पुनः। विषमेष्वपि वा दोषाः कुप्यन्त्यृतुषु देहिनां॥ हरेद्वसन्ते श्लेष्माणं पित्तं शरदि निर्हरेत्। वर्षासु शमयेद्वायुं प्राग्वि-कारसमुच्छ्रयात्॥" सु. सू. ६अ.। स्त्रीकुसुमे अम। See पुष्पं, आर्त्तवञ्च।

**ऋतुजन्मा**। स्त्री। पुनर्नवायाम्।

**ऋतुपरोक्षा**। स्त्री। आर्त्तवपरीक्षायाम्। तद्यथा —"ऋतौ कण्डूयनं योनौ क्वचिदङ्गे च वेदना। बाहुल्यं स्वल्पता वापि चानुबन्धित्वमस्य वा। संरोधः सर्व्वथा वापि वेद्यान्येतानि यत्नतः। आमयेष्व-खिलेष्वेव भिषग्भिर्योषितां सदा॥" अत्रि.।

**ऋतुमती**। त्रि। रजःस्वलायां स्त्रियाम्। तत्-पर्य्यायः,—रजस्वला स्त्रीधर्म्मिणी अवी आत्रेयी मलिनी पुष्पवती उदक्या। अ.। तल्लक्षणं यथा —"पीनप्रसन्नवदनां प्रक्लिन्नात्ममुखद्विजां। नरकामां प्रियकथां स्रस्तकुक्ष्यक्षिमूर्द्धजाम्॥ स्फुरद्भुजकुच-श्रोणिनाभ्यूरुजघनस्फिचं। हर्षौत्सुक्यपराञ्चापि विद्यादृतुमतीमिति॥ नियते दिवसेऽतीते सङ्कुच-त्यम्बुजं यथा। ऋतौ व्यतीते नार्य्यास्तु योनिः संव्रियते तथा॥ मासेनोपचितं काले धमनीभ्यां तदार्त्तवम्। ईषत्कृष्णं विदग्धञ्च वायुर्योनिमुखं नयेत्॥ यद्वर्षाद्द्वादशात्काले वर्त्तमानमसृक् पुनः। जरापक्वशरीराणां याति पञ्चाशतः क्षयम्॥" सु. शा. ३।३ अ.।

**ऋतुराजः**। पुं। वसन्तऋतौ। रा. नि. व. २१।

**ऋतुविपर्य्ययः**। पुं। ऋतुव्यापदि। वसन्तादि-स्थाने शरदादिधर्म्मप्रवृत्तौ।

**ऋतुवृत्तिः**। पुं। वत्सरे। त्रि।

**ऋतुवैषम्यम्** । क्ली । ऋतुचर्य्याविपरीताचरणे । भा. म. ४भ. । "कौधत्तुवैषम्यशिरोभितापैः ।"

**ऋतुशूलम्** । क्ली । ऋतुकाले रजोरोधजन्य-शूलरोगे । "पुष्पस्य वातादिभिर्हतत्वं तस्य कारणं । बहुलं पिच्छिलं स्निग्धं घनं स्रवति शोणितं । योनौ नाभौ तु शूलानि ऋतौ परमदारुणम् ।" रस. र. यो. व्या. चि. ।

**ऋतुषट्कम्** । क्ली । हिमशिशिरवसन्तग्रीष्मवर्षा-शरत्सु । "चयकोपसमा यस्मिन् दोषाणां सम्भवन्ति हि । ऋतुषट्कं तदाख्यातं रवेराशिषु संक्रमात् ॥" भा. ।

**ऋतुसन्धिः** । पुं । ऋतुद्वयसंश्लेषसमये । स च ऋतुद्वयस्याद्यन्तसप्ताहरूपः । तदुक्तं "ऋत्वोरन्त्यादिसप्ताहावृतुसन्धिरिति स्मृतः । तत्र पूर्व्वोविधिस्त्याज्यः सेवनीयः परो विधिरिति ॥" वा. ।

**ऋतुसम्मिता** । स्त्री । मुनिखर्जूरिकायाम् । वै. निघ. ।

**ऋतुस्नाता** । स्त्री । रजोदर्शनाच्चतुर्थेऽह्नि स्नातायाम् । "पूर्व्वं पश्येदृतुस्नाता यादृशं नरमङ्गना । तादृशं जनयेत् पुत्रं ततः पश्येत्पतिं प्रियं ॥" सु. शा. २ अ. ।

**ऋतुहरीतकी** । स्त्री । ऋतौ ऋतौ हरीतकी-भक्षणविधौ । यथा— सिन्धूत्थशर्कराशुण्ठीकणामधुगुडैः क्रमात् । वर्षादिष्वभया सेव्या रसायनगुणैषिणा ॥" च. द. । भट्टारस्तु ग्रीष्ममधिकृत्याह । ग्रीष्मे तुल्यगुडां सुसैन्धवयुतां मेघावनद्धाम्बरे सार्द्धं शर्करया शरद्यमलया शुण्ठ्या तुषारागमे । पिप्पल्या शिशिरे वसन्तसमये क्षौद्रेण संयोजितामित्थं प्राश्य हरीतकीमिव रुजो नश्यन्तु ते शत्रवः ॥ प्रयोगा वाजी ।

**ऋद्धम्** । क्ली । सम्पक्वधान्ये । अम । पक्वमर्द्दित-धान्ये । निर्बुषीकृतधान्ये । अ. टी. ।

**ऋद्धिः** । स्त्री । कोशयामलप्रसिद्धे ऋद्धिवृद्धीति च गौड़प्रसिद्धे स्वनामख्यातलताकन्दे । तदुक्तं "ऋद्धिर्वृद्धिश्च द्वौ कन्दौ भवतः कोशयामले । श्वेत-रोमान्वितः कन्दो लताजातः सरन्ध्रकः । तूलग्रन्थिसमा ऋद्धिर्वामावर्त्तफला च सा । प्रयोगेऽनयोरेकं यथालाभं प्रयोजयेत् ॥ रा.नि.व.५ । तत्पर्य्यायः,— योग्यं सिद्धिः लक्ष्मीः(अ),प्राणप्रदा हृष्टा (र.),प्राणदा जीवदात्री सिद्धा योग्या चेतनीया रथाङ्गी मङ्गल्या लोककान्ता जीवश्रेष्ठा यशस्या । गुणाः—वृद्धिगुणतुल्या बल्या त्रिदोषघ्नी शुक्रला मधुरा गुरु बलैश्वर्य्यकरी मूर्च्छारक्तपित्तहरी च । भा. पू. १भ. । महाश्रावण्यां । वा. सू. १५ अ. पद्मकादौ अरुणः । "पद्मकपुण्ड्रौवृद्धितुगर्द्ध्यः एतदभावे वाराही योज्या ।"

**ऋद्धिजा** । स्त्री । सर्पगन्धायां । गन्धरास्नायां । प. सु. । अस्याः कन्दोयाद्यः । भा. म.॰१म. ।

**ऋभुक्षः** । पुं । वज्रे । स्वर्गे । रायमु. ।

**ऋश्यः (ष्यः)** । मृगे । रुरुमृगे । "ऋष्यो नीलाण्डको लोके स रोरु इति कीर्त्तितः ।" भा. म १भ. । तन्मांसगुणाः—कषायं मधुरं वातघ्नं पित्तघ्नं हृद्यं तीक्ष्णं वस्तिशोधनञ्च । सु. सू. ४६ अ. ।

**ऋषभः** । पुं । ऋषभके । कर्णरन्ध्रे । कुम्भीरपुच्छे । मे. । सु. चि. १७अ. बलीवर्द्दे । वृष । मांसगुणाः—अतिगुरु स्निग्धं पित्तश्लेष्मवर्द्धनं वृंहणं वातघ्नं बल्यं पीनसघ्नञ्च । भा. पू १भ. ।

**ऋषभकः** । पुं । One of the eight medicaments, carpopogon pruriens. स्वनामख्यातौषधे । ऋषभ इति गौड़े काश्मीरे च प्रसिद्धः । ঋষভক । तत्पर्य्यायः,— वृषः ऋषभः वीरः (र.), पृथिवीपतिः (मे.) । गोपतिः धीरः विषाणी दुर्द्धरः ककुद्मान् पुङ्गवः वोढ़ा शृङ्गी वृषभः धूर्य्यः भूपतिः कामी रुक्षप्रियः उक्षा लाङ्गली गौः वन्धुरः वन्धूरः गोरक्षः वनवासी । जीवकर्षभकयोरुत्पत्तिमाह मिश्रभावः—"जीवकर्षभकौ ज्ञेयौ हिमाद्रिशिखरोद्भवौ । रसोनकन्दवत्कन्दौ निःसारौ सूक्ष्मपत्रकौ । जीवकः कूर्चकाकारः ऋषभो वृषशृङ्गवत् ॥" गुणाः—जीवकर्षभकौ बल्यौ शीतौ शुक्रकफप्रदौ । एतदभावे विदारीमूलं प्रयोज्यम् । भा. प. १ भ । मधुरः शीतः पित्तरक्तविरेकनुत् । शुक्रश्लेष्मकरो दाहक्षयज्वरहरश्च सः । रा. नि. व. ५ । "ऋषभको वृषभकः ।" सु. चि. ८अ ।

**ऋषभी** । स्त्री । कपिकच्छुलतायाम् । আলকুশী । र. मा. । नराकारयोषिति । शिरालायाम् । विधवायाम् । मे. भत्रिकं ।

**ऋषिः** । पुं । गोरचनायां । वै. निघ. ।

**ऋषिकम्** । क्ली । लताविशेषे । सियाड़िलता । प. सु ।



**ऋषिकुल्या** । स्त्री । नद्यां । हे. ।

**ऋषिजाङ्गलकः (ला) (लिका, की)** । स्त्री । ऋक्षगन्धायाम् । सर्पगन्धा । रत्ना. ।

**ऋषिपुत्रकः** । पुं । दमनकवृक्षे । वै. निघ. ।

**ऋषिप्रोक्ता** । स्त्री । माषपर्णीलतायां । प. सु. ।

**ऋषिश्रेष्ठः** । पुं । पुण्डरीकवृक्षे । ऋद्धौ ।

**ऋषिश्रेष्ठा** । स्त्री । ऋद्धौ । वृद्धौ । वै. निघ. ।

**ऋषिसृष्टा** । स्त्री । ऋद्धौ । मद. व. १ ।

**ऋषीकः** । पुं । काशतृणे । मद. व. १ ।

**ऋष्यः** । पुं । हरिणे । श्वेतकुष्ठे । गवयमृगे । नीलहरिणे । एतन्मांसं कफघ्नं पित्तघ्नं किञ्चिद्वातवर्द्धकं लघु बल्यञ्च । भा. पू. १भ. ।

**ऋष्यगता** । स्त्री । माषपर्ण्यां । মাষাণী । श.र ।

**ऋष्यगन्धा (न्धिका)** । स्त्री । ऋषिजाङ्गलायां । र. मा. । तत्पर्य्यायः—ऋक्षगन्धा ऋषिजाङ्गलिकी वृद्धदारकः । अतिबलायाम् । क्षीरविदार्य्यां । श. र. । श्वेतशर्करकन्दे, रक्तशर्करकन्दे । वै. निघ. ।

**ऋष्यजिह्व(क)म्** । क्ली । महाकुष्ठभेदे । तस्य लक्षणम्—"ऋष्यजिह्वा-प्रकाशखरत्वानि ऋष्यजिह्वानि ।" सु. नि. ५अ. ।

**ऋष्यपुष्पी** । स्त्री । अतिबलायाम् । वै. निघ. ।

**ऋष्यप्रोक्ता** । स्त्री । श्वेतवाट्यालके । प. सु. । शतमूल्याम् । महाशतावर्य्याम् । महाबलायाम् । कपिकच्छुलतायाम् । भा. पू. १भ. गु. व. । पीतवाट्यालके । रभा. । माषपर्ण्याम् । च. सू. ४अ. । "ऋष्यप्रोक्ताशतावर्य्यतिबलाशुकशिम्बिषु ।" मे. तच्चतुष्कं ।

**ऋष्याह्वा** । स्त्री । नागबलायाम् । बलायाम् । বেড়েলা । वै. निघ ।

**ऋक्षः** । पुं । भल्लूके । रा. नि. व. १९ । तन्मांसगुणाः—स्निग्धं गुरु वृष्यं स्वादु उष्णं वातघ्नम् । मद. व. १२ । हरिणे । हला. । क्षतवेधने । ঘোষালতা । मे. षद्विकं । श्योणाकवृक्षे । रा. नि. व. ९ ।

**ऋक्षगन्धा** । स्त्री । वृद्धदारकवृक्षे । বীজতাড়ক । ऋषिजाङ्गलायां । र. मा. च. सू. ४अ. वृंहणे । श्वेतभूमिकुष्माण्डे । वै. निघ. ।

**ऋक्षगन्धिका** । स्त्री । कृष्णभूमिकुष्माण्डे । वृद्धदारकलतायां । वै. निघ. ।

**ऋक्षप्रियः** । पुं । ऋषभकक्षुपे । रा. नि. व. ५ ।

**ऋक्षमुखयन्त्रम्** । क्ली । सन्दंशतुल्ये यन्त्रविशेषे । अलि. ।

**ऋक्षरं** । क्ली । वारिधारायाम् । मे. ।

**ऋक्षविट्** । स्त्री । तैलपायिविष्ठायाम् । আর্শোলার নাদি । वै. निघ. २भ. अर्शः चि. कृष्णशिरीषलेपे ।

**ऋक्षाह्वा** । स्त्री । महामेदालताक्षुपे । रा. नि. व. ५ ।

**ऋक्षेपः** । पुं । चन्द्रे । ह. ।

# ए

**एककन्दः** । पुं । पानीयालुके । পাণশারু इति प्रसिद्धे कन्दशाके । শোলাকচু । प. सु. ।

**एककुष्ठम्** । क्ली । क्षुद्रकुष्ठभेदे । लक्षणम्— अस्वेदनं महावास्तु यन्मत्स्यशकलोपमं । तदेककुष्ठम् । मा. नि. । एककुष्ठं चर्म्मदलमिति केचित् । कृष्णारुणं येन भवेच्छरीरं । तदेककुष्ठं प्रवदन्त्यसाध्यम् । सु. नि. ५अ. ।

**एकचरः** । पुं । गण्डके । গণ্ডার । त्रिका. ।

**एकदृक् (ष्टिः)** । पुं । काके । हला । त्रि । काणे । কাণা । हे. च. ।

**एकपत्रः (कः)** । पुं । चण्डालकन्दविशेषे । रा. नि. व. ७ । श्वेततुलस्यां । र. मा. ।

**एकपत्रा (त्रिका)** । स्त्री । सुगन्धशट्याम् । गन्धशटी । मालवे पलाश इति ख्याते गन्धपत्रवृक्षे । रा. नि. व. ६ । पाण्डुरतुलसीवृक्षे ।

**एकपत्री** । स्त्री । नागवल्लीलतायाम् । वै. निघ. ।

**एकभक्तव्रतं।** क्ली। रात्रिभोजनाभाव-विशिष्ट-दिवाभोजने। "दिनार्द्धसमयेऽतीते भुज्यते नियमेन यत्। एकभक्तमितिप्रोक्तं रात्रौ तन्न कदाचन।" स्कान्द पु.।

**एकमूलः।** पुं। पुण्डरीकवृक्षे। পুণ্ডরিয়া।

**एकमूला।** स्त्री। शालपर्ण्याम्। अतस्याम्। মশিনা। संग्रहः।

**एकरजः।** पुं। भृङ्गराजवृक्षे। ভীমরাজ; ভেঙ্গরাজ। जटा.।

**एकरन्ध्रः।** पुं। नदीवटे। वै. निघ.।

**एकवर्णी।** स्त्री। वाद्यभेदे। तत्पर्य्यायः—करताली। कङ्कमाला कलङ्कषा। शब्दर.।

**एकवर्षीया।** स्त्री। एकहायन्यां गवि। এক বছরের বাছুর। हे. च.।

**एकवाद्यः।** पुं। डिण्डिम-वाद्ये। शब्दर.।

**एकविंशतिगुग्गुलुः।** पुं। कुष्ठरोगे। च. द. कुष्ठ-चि.। चित्रकं त्रिफलां व्योषमजाजीं कारवीं वचाम्। सैन्धवातिविषे कुष्ठं चव्यैलायावशूकजम्। विड़ङ्गान्यजमोदाञ्च मुस्तान्यमरदारु च। यावन्त्येतानि चूर्णानि तावन्मात्रन्तु गुग्गुलुं। सङ्क्षुभ्य सर्पिषा सार्द्धं गुड़िकां कारयेद्भिषक्। प्रातर्भोजनकाले च भक्षयेत्तु यथाबलम्......। চিতামূল, ত্রিফলা, ত্রিকটু, জীরে, কৃষ্ণজীরে, বচ, সৈন্ধব, আতইচ, কুড়, চই, এলাইচ, যবক্ষার, বিড়ঙ্গ, যমানী, মুতা, দেবদারু প্রত্যেক সমভাগ। সর্ব্বচূর্ণসমান গুগ্গুল ঘৃতের সহিত মর্দ্দন পূর্ব্বক গুড়িকা করিবে।

**एकवीरः।** पुं। स्वनामख्यातवृक्षविशेषे। একবীর। গঁড়ুবিকিক। तत्पर्य्यायः,—महावीरः सक्तवीरः सुवीरकः। गुणाः—कटुकः तीव्रवातघ्नः उष्णः गृध्रसीकटिशूलाभिघातघ्नः। रा. नि. व. ८।

**एकवीरा।** स्त्री। बन्ध्याकर्कोट्याम्। गुणाः—"एकवीरा स्मृता तिक्ता चात्युष्णा वातहा स्मृता। पक्षाघातं पृष्ठकटीशूलञ्चैव विनाशयेत्॥" वै. निघ.।

**एकवृन्दः।** पुं। तन्नामककण्ठरोगविशेषे। येन दुष्टकफशोणिताभ्यां कण्ठे दाहकण्डूमदोषत्पाकोषञ्च मृदुरून्नतो वृत्तश्च शोथो जायते। लक्षणं—"वृत्तोन्नतो यः श्वयथुः सदाहः कण्ड्वन्वितोऽपाक्यमृदुर्गुरुश्च। नाम्नैकवृन्दः परिकल्पितोऽसौ व्याधिर्बलासक्षतजप्रसूतः॥" सु. नि. १६अ.। मा. नि.।

**एकवृक्षः।** पुं। गलरोगे। वै. निघ.। स्थानभेदे। चतुःक्रोशान्तरे—यत्र वृक्षान्तरं नेक्ष्यते।

**एकशफः।** पुं। घोटके। त्रिका.। एकखुरजन्तुमात्रे। यथा—"खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा। एते चैकशफाः ख्याताः।" भा.।

**एकशफक्षीरम्।** क्ली। अद्विभागखुरपशुदुग्धे। খুরযোড়া পশুমাত্রের দুধ। गुणाः—उष्णं त्वेकशफं लघु शाखावातहरं साम्लमीषल्लवणं जड़ताकरमिति। वा. टी. हेमा.। "बल्यमेकशफं पयः" इति चरकः।

**एकशिखा।** स्त्री। पाठायाम्। আকনাদি। प. मु.।

**एकशृङ्गः।** पुं। गण्डके। গণ্ডার। वै. निघ.।

**एकसूलः।** पुं। डमरु-वाद्ये। शब्दर.।

**एकहस्ती।** स्त्री। अश्वस्य शोभनवल्गाभेदे। "द्विहस्ती चैकहस्ती च शुभगा शोभना मता।" ज. द. ७अ.।

**एकहायनी।** स्त्री। एकवर्षीयायां गवि। अम.।

**एकाङ्गम्।** क्ली। चन्दने। हारा.।

**एकाङ्गवातः।** पुं। पक्षवधरोगे। পক্ষাঘাত। मा. नि.। See पक्षवधः। अश्वस्य वातव्याधिरोगविशेषे। "एकः प्रलम्बते कर्णः शरीरार्द्धञ्च शुष्यति। शूनो भवति चाश्वस्य रोगे एकाङ्गसंज्ञके॥" ज. द. ५५ अ.।

**एकाङ्गी।** स्त्री। मुरामांस्यां। মুরামাংসী নামক গন্ধদ্রব্যবিশেষ। गुणाः—तिक्ता हिमा स्वाद्वी लघुः वातपित्तघ्नी ज्वरभूतरक्तरक्षोघ्नी कुष्ठकासघ्नी च। भा. पू. १भ.। कटुः कषाया भ्रममूर्च्छातृष्णाविषदाहघ्नी च। रा. नि. व. १२।

**एकाण्डः।** पुं। तन्नामकदोषान्विताश्वे। "एकेन लम्बमानेन मुष्केणैकाण्डसंज्ञकः। ज. द. २ अ.।

**एकादशशतिकमहाप्रसारणीतैलम्।** क्ली। वातव्याधौ। "शाखामूलदलैः प्रसारणितुलाश्चित्रैः कुरण्टोतुलेच्छिन्नायाश्च तुले तुले रुबुकतो रास्नाशिरीषात्तुलां। देवाह्वाच्च सकेतकाद्दशतो निःक्वाथ्य कुम्भांशिके, तोये तैलघटं तुषाम्बुकलसौ दत्त्वाढ़कं मस्तुनः॥ शुक्ताच्छागरसाद्दधेक्षुरसतः क्षीराच्च दत्त्वाढ़कं, पृक्काकर्कटजीवकाद्यविकषा काकोलिकाकच्छुराः। सूक्ष्मैला-घनसारकुन्दुसरला-काश्मीरमांसीनखैः, कालीयोत्पलपद्मकाह्वयनिशा-कङ्कोलकग्रन्थिकैः॥ चाम्पेयाभयचोचपूगकटुकाजातीफलाभीरुभिः, श्रीवासामरदारुचन्दनवचाशैलेयसिन्धूद्भवैः। तैलाम्भोदकटम्भराङ्घ्रिनलिनावृश्चीरकक्षीरकैः, कस्तूरी-दशमूल-कैतक-नत-श्यामाश्वगन्धाम्बुभिः। कौन्ती-नाखजशल्लकीफल-श्य्यामा शताह्वामयैः, भल्लात-त्रिफलाब्ज-केशर-महाश्यामा-लवङ्गान्वितैः। सर्व्वोषैस्त्रिपलैर्महौषसि पचेन्मन्देन पावेऽग्निना॥" তিলতৈল ৬৪শ. কাথার্থ সমূলপত্রশাখ গন্ধভাদুলিয়া ৩৭॥০শ. নীলঝাঁটী গুলঞ্চ, এরণ্ডমূল প্রত্যেক ২৫ শ. রাস্না, শিরীষছাল, দেবদারু, কেয়ার মূল প্রত্যেকে ৬।০শ. জল ৬৪০০শ. শেষ ৬৪শ. কাঁজি ৬৪শ দধিমণ্ড ১৬শ. শুক্ত ১৬শ. ছাগমাংস ৮শ. জল ৬৪শ. শেষ ১৬ শ. ইক্ষুরস ১৬ শ. দুগ্ধ ১৬ শ.। কল্কার্থ পিড়িংফল, কাঁকড়াশৃঙ্গী, জীবনীয় দশক বা অষ্টবর্গ, কাকোলী, মঞ্জিষ্ঠা, ক্ষীরকাকোলী, আলাকুশীর মূল, ছোট এলাইচ, কর্পূর, কুন্দুরুখোটী, সরলকাষ্ঠ, কুঙ্কুম, জটামাংসী, নখী, কৃষ্ণাগুরু, নীলোৎপল, পদ্মকাষ্ঠ, হরিদ্রা, কক্কোল, গেঁঠেলা, চাঁপাকলি বা নাগেশ্বর, বেণার মূল, গুড়ত্বক্, শুপারি, জায়ফল, লতাকস্তুরী, শতমূলী, লবণখোটী, দেবদারু, শ্বেতচন্দন, বচ, শৈলজ, সৈন্ধব, শিলারস, মুতা, গন্ধভাদুলিমূল, পুনর্নবা, নালুকা, গন্ধশটী, মৃগনাভি, দশমূল, ময়নাফল, প্রিয়ঙ্গু, শাল, কেয়া, তগরমূল, অশ্বগন্ধা, বালা, রেণুকা, রসাঞ্জন, শিমুলমূল, কট্ফল, অগুরু, শ্যামালতা বা অনন্তমূল, কুড়, ভেলার মুটী, ত্রিফলা, শুল্‌ফা পদ্ম, নাগেশ্বর, লবঙ্গ, ত্রিকটু প্রত্যেক ৩ পল। प्रयोगा. भैष.। श्यामसिति पाठे गन्धतृणम्।



**एकादशायसः।** पुं। व्रणवृद्ध्यधिकारे पाठः—"मृताय: पुरुषः शुल्वं खगो दरदगन्धकौ। गगनं पुष्पराजञ्च शोणितञ्चेश्वरौरगौ। विड़ङ्गत्रिफला-हिङ्गुयमानीजीरकद्वयं। सर्जीफलवचाशृङ्गी मरिचं पिप्पलीद्वयं। चवी दुरालभा वह्निः शुण्ठीद्रावैर्विमर्द्दयेत्॥" पुरुषः रसः। खगः स्वर्णमाक्षिकम्। पुष्परागः तन्नामकमणिः रसाञ्जनं वा। शोणितं कुङ्कुमं। ईश्वरः पित्तलं। रस र व्रण-चि.। प्रयोगामृते तु शुल्वस्थाने शुद्धः, शुण्ठीद्रावैर्विमर्द्दयेदित्यत्र "भावयेदार्द्रकद्रवैः" इति पाठान्तरं। प्रयोगामृते पुरुषः गुग्गुलुः। पुष्परागं रसाञ्जनं। शोणितं ताम्रं। ईश्वरः रसः। जारितलौहं पारदः गन्धः ताम्रं स्वर्णमाक्षिकं अभ्रं हिङ्गुलं कुङ्कुमं पोखुराजमणिः शीषं पित्तलं विड़ङ्गं त्रिफला हिङ्गु यमानी जीरकं कृष्णजीरकं पियालफलं वचा कर्कटशृङ्गी मरिचं पिप्पली गजपिप्पली चवी दुरालभा चित्रकमूल एषां प्रति-समभागः। आर्द्रकरसेन भाव्यं।

**एकादशेन्द्रियम्।** क्ली। श्रोत्रत्वक्चक्षूरसनाघ्राणवाक्पाणिपायूपस्थपादमनःसु। एषु प्रथमं पञ्चज्ञानेन्द्रियं, अन्यच्च कर्म्मेन्द्रियं। सु. शा. १अ।

**एकादिवीरः।** पुं। एकवीरवृक्षे। वै. निघ।

**एकान्तः।** पुं। यदवधारणोच्यते। यथा—"त्रिवृद् विरेचयति मदनफलं वामयतीति।" सु. उ ६५ अ.।

**एकाष्ठी।** स्त्री। कार्पास्यां। कार्पासबीजकोषे। वै निघ.।

**एकाष्ठीका।** स्त्री। पाठायाम्। আকনাদি, নিমুকা। वै. निघ.।

**एकाष्ठीलः (ला)।** पुं, स्त्री। वकवृक्षे। अम.। हि वृहदील, सगी। भा. पू. १भ.। (ला) पाठायां। र. मा.। रा. नि. व. ६। वनतिक्तिकायाम्। मे. लचतुष्कं। पुष्पवृक्षभेदे। भा. पू. १भ.। See अगस्त्यः।

**एकाह्वा।** स्त्री। एकवर्षीयां गवि। अम.।

**एकाक्षः।** पुं। काके। त्रि। एकनेत्रे। কাণা। श. च.।

**एकैषिकतैलम्।** क्ली। तन्नामकतैले। गुणाः—हिमं पित्तघ्नं वातश्लेष्मकरञ्च। मद.।

**एकैषि(कोशि)का।** स्त्री। वकपुष्पवृक्षे। पाठायाम्। আকনাদি। त्रिवृतायाम्। "एकैशिकाजशृङ्गी च"। सु सू. ३६ अ. चि. १७, १८अ.। तत्तैलं मधुरम् अतिशीतं पित्तहरं वातकोपनं श्लेष्मवर्द्धनञ्च। सु. सू. ४५ अ.।

**एकैषी।** स्त्री। पाठायां। আকনাদি। मं पहाड़मूल। वै. निघ.।

**एकोशि(षि)का।** स्त्री। पाठायाम्। আকনাদি। र. मा.। वकवृक्षे इति केचित्।

**एड़ः** । त्रि । बधिरे । কালা । अम. ।

**एड़कः (काख्यः)** । पुं । पृथुशृङ्गमेषे । ভেড়া । प. मु. । वनच्छगले । त्रिका. । "एड़कः पृथुशृङ्गः स्यान्मेदःपुच्छस्तु दुम्बकः । एड़कस्य पलं ज्ञेयं मेषामिषसमं गुणैः । मेदःपुच्छोद्भवं मांसं हृद्यं वृष्यं श्रमापहम् । पित्तश्लेष्मकरं किञ्चिद्वातव्याधिविनाशनम् । भा. पू. १भ. मांसव. । तृणविशेषे । হোগলা । सु. चि. ७अ. । मञ्जिष्ठायां च. ।

**एड़कघृतम्** । क्ली । एडकनवनीतोत्थघृते । गुणाः—अतिगुरुत्वाद्वर्ज्यं सुकुमाराणाम्, बुद्धिपाटवकरं बलकरञ्च । रा. नि. व. १५ ।

**एड़का** । स्त्री । मेष्यां । ভেড়ী । अ. टी. रा. ।

**एड़गजः (जा)** । पुं, स्त्री । चक्रमर्द्दक्षुपे । চাকন্দা গাছ, চাটাকাটা इति च भाषा । रा. नि. व. ५ । भा. पू. १भ. सोमराजतैले । च. सू. ३ अ. । वन्यैलायां । বন এলাচ । च. द. कुष्ठ-चि. ।

**एड़मूकः** । त्रि । बधिरे । वाक्श्रुतिवर्ज्जिते । কালা বোবা । मे. कचतुष्कं ।

**एड़हस्ती** । पुं । चक्रमर्द्दे । চাকন্দা গাছ ।

**एड़ुकः** । त्रि । बधिरे । मे. ।

**एणः** । पुं । हरिणे । रा. नि. व. १९ । कृष्णमृगविशेषे । কৃষ্ণসার হরিণ । हिं करीसाइलहरिण । अयं जङ्गालजातीयः । अस्य मांसगुणाः—कषायं मधुरं हृद्यं रक्तपित्तकफवातघ्नं रुचिकरं धारकं बल्यं । सु. सू. ४६ अ. । भा. पू. १भ. । विशेषतो ज्वरे प्रशस्तमिति चक्रपाणिः । लघु शीतलं वृष्यं त्रिदोषहरं षड्रसजं रुच्यञ्च । रा. नि. व. १७ । "शृङ्गिनां हरिणः श्रेष्ठः बल्यो रोचनदीपनः । त्रिदोषघ्नो लघुः पाके मधुरो ज्वरिणां हितः ॥ च क्षयार्शसोः पाण्डुवरोचकनिपीड़िते । कासश्वासातुराणाञ्च एणमांसं सुखावहम् ॥" अत्रि. २० अ. ।

**एणकः** । पुं । हरिणे । श. र. । कृष्णसारे ।

**एणीदाहः** । पुं । सन्निपातज्वरविशेषे । लक्षणं —"परिधावतीव गात्रे रुक्पात्रे भुजङ्गपतङ्गहरिणगणः । वेपथुमतः सदाहस्यैणीदाहज्वरार्त्तस्य ।" भा. म. १भ. । रुक्पात्रे पीड़ाभाजने, गात्रस्य विशेषणमेतत् ।

**एणीपदः** । पुं । मण्डलिसर्पे । सु. कल्प. ४अ. । See सर्पः ।

**एणीपदी** । स्त्री । असाध्यलूताभेदे । सु. कल्प ८अ । See लूता ।

**एतः** । पुं । हरिणे । श. र. । घोटके ।

**एतनः** । पुं । निश्वासे । हे. च. ।

**एतशः** । पुं । घोटके ।

**एता** । स्त्री । हरिण्याम् । वै. निघ. ।

**एधतुः** । पुं । पुरुषे ।

**एरकम्** । क्ली । होगलतृणे । হোগলা । वै. निघ. । See एरका ।

**एरका** । स्त्री । गुन्द्रातृणे । तृणविशेषे । হোগলা । मं मोथीतृण । च. सू. २ अ. । तत्पर्य्यायः,—गुन्द्रमूला शिम्बी गुन्द्रा शरी । गुणाः—हिमा शुक्रवृद्धिकरी चक्षुष्या वातकोपना । मूत्रकृच्छ्राश्मरीदाहपित्तशोणितघ्नी च । रा. नि. व. ८ । शीता वृष्या चक्षुष्या वातकोपनी मूत्रकृच्छ्राश्मरीदाहपित्तशोणितघ्नी च । भा. पू. १भ. ।

**एरङ्गः (ङ्गी)** । पुं, स्त्री । मत्स्यभेदे । অরঙ্গা মাছ, এলেং মাছ, রামকড়া । हिं अरङ्गा । गुणाः—मधुरः स्निग्धः विष्टम्भी शीतलः गुरुश्च । भा. पू. १भ. मत्स्यव. । मञ्जिष्ठायाम् । च. ।

**एरण्डः** । पुं । Castor oil plant. ( Ricinus communis. ) स्वनामख्यातवृक्षविशेषे । ভেরেণ্ডা গাছ । हिं एरण्ड, रेड़ि । ते आमिदपुचेट्टु । तत्पर्य्यायः,—त्रिपुटी-फलः ( हा ), रुवूक् (र.), व्याघ्रपुच्छः गन्धर्व्वहस्तकः उरुवुकः रुवुकः चित्रकः चञ्चुः पञ्चाङ्गुलः मण्डः वर्द्धमानः व्यड़म्बकः (अ.), एरण्डकः (भ.), हस्तः अमङ्गलः तुच्छद्रुः व्रणहः शूलशत्रुः (श.), त्रिपुटी व्याघ्रदलः (शब्द...), उरुवूकः रुचकः रुवुकः रुवकः वुद अमण्डः आमण्डः व्यडम्बनः ( अटी. भ. ), दीर्घदन्तकः (ज. ), कान्तः तरुणः शुक्लः वातारिः दीर्घपत्रकः । एरण्डः त्रिविधः स्थूलशुक्लरक्तभेदेन गुणाः—मधुरोष्णः गुरुः शूलशोथकटिशूलवस्तिशूलशिरःशूलोदरज्वरव्रध्नश्वासकफानाहकासकुष्ठामदोषवातहरश्च । तत्कोमलपत्र गुल्मवस्तिशूलकफवायुकृमिवृद्धिघ्नम् । तन्मज्जगुणाः—मलभेदकः वातकफोदरघ्नश्च । भा. पू. १भ. गु. व. । श्वेतैरण्डस्य मूलगुणाः—शूलवायुकफनाशित्वं शुक्रजनकत्वं । आमवातनाशित्वं अतिदीपनत्वं पित्तकोपनत्वञ्च । राज. । श्वेतादीनां गुणाः स्वस्वपर्य्याये मृग्याः ।



**एरण्डकः** । पुं । एरण्डे । भरत. ।

**एरण्डजम्** । क्ली । एरण्डतैले । वा ।

**एरण्डतैलम्** । क्ली । Castor oil. एरण्डबीजोद्भवतैले । प्रा. एरंतेल । ভেরেণ্ডার তৈল । हिं रेड़िका तेल । गुणाः—मधुरगुरुश्लेष्मवर्द्धकत्वं वातरक्तगुल्महृद्रोगाजीर्णज्वरघ्नत्वञ्च । राज. । ईषत्तिक्तं ईषत्कटुकं रेचकं गुल्मानिलकफोदरमुष्कवृद्धिविषमज्वरकन्यादिशोथरुजश्च जयेत् । तीक्ष्णोष्णं पिच्छिलं विस्रञ्चेति रक्तैरण्डजतैलगुणाः । वा. टी. हेमा. तैलव. । एरण्डतैलं कृमिदोषनाशन वातामयघ्नं सर्व्वाङ्गशूलघ्नं । कुष्टघ्नं स्वादु रसायने श्रेष्ठं पित्तकोपनं अतिदीपनञ्च । रा. नि. व. १५ । "एरण्डजं घनञ्चापि शीतमेव मृदु स्मृतं । हृद्वस्तिजङ्घाकट्यूरुशूलानाहविबन्धनुत् ॥ तैलमेरण्डजं बल्यं गुरूष्णं मधुरं तथा । तीक्ष्णोष्ण पिच्छिल विस्ररक्तमेरण्डसम्भवम् ॥ अत्रि. १४ अ. ।

**एरण्डतैलमूर्च्छा** । स्त्री । मूर्च्छाद्रव्याणि—मञ्जिष्ठा मुस्तकं धान्यं त्रिफला जयन्तीपत्रं बालकं वनखर्ज्जूरी वटशुङ्गा हरिद्रा दारुहरिद्रा नलिका केतकी ( কেয়ার নামাল ) दधि काञ्जिकञ्च । हरिद्रादिपर्य्यायेन पूर्व्ववत् मूर्च्छा कार्य्या ।

**एरण्डपत्रविटपा (त्रिका) (त्री)** । स्त्री । ह्रस्वदन्तीवृक्षे । रा. नि. व. ६ ।

**एरण्डफला** । स्त्री । ह्रस्वदन्तीवृक्षे । रा. नि. व. ६ । भा. पू. १भ. ।

**एरण्डमूलम्** । क्ली । एरण्डशिफायां । च. द. विषमज्व. चि. "एरण्डमूलसिद्धं वा ।"

**एरण्डबीजम्** । क्ली । एरण्डफले ।

**एरण्डशिफा** । स्त्री । एरण्डमूले । भा. वा. व्या. ।

**एरण्डसप्त(द्वादश)कः** । पुं । शूलरोगे । अत्र क्षारादीनां माषचतुष्टयं प्रक्षेप्यम् । पाचनादिद्रव्यात्कर्षादिकः । प्रक्षेपः पादिकः क्वाथ्यात् । तथा माषिकं हिङ्गुसिन्धूत्थं जरणाद्यास्तु शाणिकाः । इति परिभाषानियमात् । पृश्निपर्णीद्वयस्यैका चाकुलिया, अन्या कलम्बीपत्रतुल्यदीर्घपत्रा च । च. द. शूल. चि. । এরণ্ডমূল, বেলছাল, চাকুলিয়া, সিংহপুচ্ছীচাকুলিয়া, ছোলঙ্গমূল, পাথরকুচি, গোক্ষুর প্রত্যেকে ২৩ রতি । যবক্ষার, হিঙ্গু, সৈন্ধব, এরণ্ডতৈল প্রত্যেকে ১ মাষা । इति एरण्डसप्तकः । এরণ্ডবীজ, এরণ্ডমূল, বৃহতী, কণ্টিকারী, গোক্ষুর, শালপাণি, চাকুলিয়া, মুগানী, মাষাণী, ডানকুনী, সিংহপুচ্ছীচাকুলিয়া, থাগড়ামূল প্রত্যেক ১৩।০র. । প্রক্ষেপ যবক্ষার ৪ মা. । एरण्डद्वादशकः ।

**एरण्डा** । स्त्री । वृहद्दन्तीवृक्षे । मद. व. १ । पिप्पल्याम् । श. च. ।

**एरण्डादिः** । पुं । तदादिद्रव्यवर्गे । यथा—"एरण्डशारिवाद्राक्षा शिरीषश्च प्रसारणी । माषमुद्गाख्यपर्णिन्यौ विदारीकन्दकेतकी । एरण्डादिगणो ह्येष वातपित्तविकारनुत् ॥" ॥ रसचन्द्रिका । এরণ্ডমূল, অনন্তমূল, কিস্‌মিস্‌, শিরীষ, গন্ধভাদুলিয়া, মুগানী, মাষাণী, ভূঁইকুম্‌ড়া, কেতকীমূল প্রত্যেকে ১৮ র. ।

**एर्व्वारुः (रुका)** । पुं, स्त्री । कर्कटीलतायां । কাঁকুড় বা ফুটী গাছ । हिं फुट । ते नक्कदोस । ग्रीष्मकर्कटी । विज. र. । तत्पर्य्यायः,—व्यालपत्रा लोमशा स्थूला तोयफला हस्तिदन्तफला कर्कटी । सा महत्-क्षुद्रभेदेन द्विविधा । गुणाः—पित्तहरी शीतला मधुरा मूत्रदोषघ्नी रुचिकरी सन्तापमूर्च्छाहरी च । अतिसेवनात् वातकोपकारी च । रा. नि. व. ७ । शीतला रूक्षा मधुरा ग्राहिणी गुरुः । आमा सा रुच्या पित्तघ्नी च । पक्वा तृष्णाग्निपित्तकरी च । भा. पू. १भ. शा. व. । कोमलैर्व्वारुकं तिक्तं लघु स्वाद्वतिमूत्रलम् । शीतं रुच्यं रक्तपित्तमूत्रकृच्छ्रास्रदोषजं । तत्पक्व पित्तलं चाग्निदीपनञ्च तृषापहं । उष्णं त्रिदोषशमनं कृमिदाहहर मतम् । गृहे जीर्णन्तु तज्ज्ञेयमुष्ण पित्तकरं मतं । कफवाय्वोर्नाशकर प्रोक्तमायुर्व्विदेर्जनैः । क्षुद्रमेर्व्वारुकं शीतं मधुरं रुचिकारकं । कासपीनसकारि स्यात् पाचकं श्रमपित्तहं । आध्मानवाय्वोः शमनं । वै. निघ. । विलेशयमृगे ।

**एर्व्वारुकम्** । क्ली । कर्कटिकफले । কাঁকুড় ।

**एर्व्वारुतैलम्** । क्ली । कर्कटीबीजतैले । কাঁকুড়বীজের তৈল । गुणाः—विभीतकतैलगुणम् । वातपित्तघ्नं केश्यं श्लेष्मकरं गुरु शीतलञ्च । वा. तैलव. ।

**एलः** । पुं । एलायां । एलबालुके । सि. यो. अरोच. चि. श्रीकण्ठः । "रास्नैलहिङ्गुलवणोत्तमानां ।" च. द. पात. ज्व रास्नादिः ।

**एलकः** । पुं । मेषे । रा. नि. व. १९ ।

**एलङ्कः**। पुं। मत्स्यविशेषे। रायकड़ा। বাস্ন-থাঁড়া, এলঙ্গা। गुणाः—मधुरो वष्यः ग्राही कफवातघ्नः मेधाग्निपुष्टिकरः शीतलः गुरुश्च। रा. नि. व. १९।

**एलवालम्**। क्ली। एलवालुके। भा म ४भ. ने. रो चि, सामान्याञ्जने। "सैन्धवं चैलवालम्।"

**एलवालु (कम्)**। क्ली। Name of a perfume, a red powder sold under thyse names, seed of some plant. स्वनामप्रसिद्धगन्धद्रव्यविशेषे। अम.। श. र.। काङ्गीलसदृशं कुष्टगन्धि। भा.-म. १भ.। এলা-বালুক। हिं एल्वा। मं कालगड़ली। -ते कुंतुरु-वुड़मचेट्टु। तत्पर्य्यायः,—वालुः (उ) ऐलेयं सुगन्धि हरिवालुकं वालकं (अ.), हरिवासुकं (अ. टी.), ऐलवालुकं ऐलवालु (शब्द. र), आलुकं एल्वबालुकं कपित्थत्वक् गन्धत्वक् कुष्ठान्धी कपित्थ-गन्धात्वक्। गुणाः—कटुपाकं कषायं लघु शीतलं कण्डूकुष्ठकृमिघ्नं तृषाच्छर्द्दि कफपित्तरक्तमूत्रहरं। भा पू. १भ.। मद. व. ३। अत्युग्रं कषायं कफ वातनुत् मूर्च्छाज्वरदाहघ्न रोचनञ्च। रा. नि. व. ४। वा. सू. १५ अ. रोधादि। कुष्ठघ्नं कृमिघ्नं विषघ्नं हृद्रोगहरञ्च। प. सु.। सैल-वालुपरिपेलवमोचाः।" তেজবল इति च सू ४अ.। बालुके। বালা। वै. निघ २भ र. पि चि. दूर्व्वाद्यघृते।

**एला**। स्त्री। Cardamom, the seed of Elettaria cardamomum. स्वनामख्यात-पण्यद्रव्ये। এলাইচ। हिं इलाँचीपूरवी। मं एलची। ते यवडुलकि, एलुकचेट्टु। तत्पर्य्यायः,—निष्कुटी (अ. टी.), चर्म्मसम्भवा (हा.) दिवोद्भवा (के बहुलगन्धा ऐन्द्री द्राविड़ी कपोतपर्णी बाला बलवती हिमा चन्द्रिका सागरगामिनी गन्धालीगर्भः एलीका कायस्था। एला द्विधा—सूक्ष्मा स्थूला च। सूक्ष्मा गुजराटी, स्थूला च वड़एलाचि इति भाषा। एतदुभयगुणाः—शीतलतिक्तोष्ण-सुगन्धि पित्तघ्नं कफघ्नं हृद्रोगकरं मलाग्निवान्तिपुंस्त्वघ्नं। रा. नि. व. ६। पित्तकफनाशित्वं शूलकोष्ठवद्धता-तृष्णाच्छर्द्दिवायुनाशित्वम्। राज.। सूक्ष्मैला-विशेषगुणाः—मूत्रकृच्छ्रनाशित्व कफश्वासकासार्शो-हरत्वञ्च। स्थूलैला कटुका पाके रसे चानल-कृल्लघुः। रूक्षोष्णा श्लेष्मपित्तास्रकण्डूश्वासतृषा-घ्ना। हृल्लासविषवस्त्यास्यशिरोरुग्वमिकासनुत्॥ भा. पू १भ.। नील्याम्।

**एलागन्धिकम्**। क्ली। एलवालुके। रा नि. व. ४।

**एलादिगुड़िका**। स्त्री। रक्तपित्ते हिता। मधुना तोलकद्वयं भक्ष्यं। एलापत्रत्वचोऽर्द्धाक्षाः पिप्पल्यर्द्धपलं तथा। सितामधुकखर्ज्जूरमृद्वीकाश्च पलोन्मिताः। सञ्चूर्ण्य मधुना युक्तां गुड़िकां कारये-द्भिषक्॥ च.द.। रस. र.। এলাবীজ, তেজপত্র, গুড়ত্বক্ প্রত্যেক ১ তো. পিপুল ৪ তো. শর্করা যষ্টিমধু, পিণ্ডথেজুর, দ্রাক্ষা প্রত্যেক ৮ তো সঞ্চূর্ণ্য মধুনা গুড়ী কার্য্যা। सा. कौ।

**एलादिगणः**। पुं। एलादिद्रव्यवर्गे। स च एलायुग्मतुरुष्क-कुष्ठफलिनी-मांसी-जल-ध्यामकस्पृक्का-चोरक-चोच-पत्र - तगर - स्थौणेय-जातीरस - शुक्ति-व्याघ्रनखामराह्वगुरुश्रीवासककुङ्कुमचण्डा - गुग्गुलु-देवधूपखपुरपुन्नागनागाह्वयात्मकः। गुणाः—वात-कफघ्नो विषघ्नो वर्णप्रसादनः कण्डूपिटिकाकोठ-घ्नश्च। वा. सू. २५ अ। वा टी. हेमा.।

**एलादिचूर्णम्**। क्ली। छर्द्यधिकारे। च. द. भैष। पाठः—"एलात्वक् मरिचं शुण्ठी पिप्पली नागकेशरं। यथोत्तरं भागवृद्ध्या चूर्णन्तु सितया समं॥" रस. र. राजयक्ष्म. चि.।

**एलादितैलम्**। क्ली। वातव्याधौ। तिलतैलं ४ श. एलादीनां कल्कः मिलितशरावमितः दुग्धं १६ श. दधि १६ श. वाञ्चालकक्वाथः १६ श. वाञ्चालकं १२॥० श. जल ६४ श. शेष १६ श. एला मुरामांसी सरलकाष्ठं शैलजं देवदारु रेणुकं चोरपुष्पी शटी जटामांसी चम्पककली नागकेशरं ग्रन्थिपर्णं गन्धरसः खट्टासी तेजपत्रम् उशीरमूलं चन्दनं कुन्दुरुखोटी नखी वालकं गुड़त्वक् कुष्ठं कालागुरु मुस्तकं सामुद्रकर्कटः श्वेतचन्दनं मञ्जिष्ठा जातीफलं कुङ्कुमं पिड़िङ्गपुष्पं शिलारसः अगुरु एषां प्रति २ तो.। च. द.।

**एलादिमन्थः**। पुं। यक्ष्मरोगे। एलादीनां (एला यमानी आमलकं हरीतकी विभीतकं खदिरसारः निम्बः पीतशालः शालः विड़ङ्गं भल्ला-तकास्थि चित्रकमूलं त्रिकटुक मुस्तकं पङ्कपर्पटी प्रत्येकं ८ प. एकत्र १५ श. जलेन साधयित्वा ३॥० शरावावशिष्टे क्वाथं वस्त्रपूतं ग्राह्य। तेन घृतं (३२प.) विपाच्य पाकशेषे शर्करायाः ३० प, वंशलोचनायाः ६ प. मधुनः ३२प. प्रक्षिप्य सम्यक् दण्डेनालोड़येत्। च. द. रा. य. चि। वृद्ध-वाभटोक्ता प्रक्रिया ज्ञेया। मतान्तरे तु एलादीनां प्रत्येकं ३ प. ६ तो. ९ र. जलं ६४ श.।



**एलानम्**। क्ली। फलविशेषे। নারেঙ্গা লেবু। मं हिरंवेपाल। गुणाः—"आममेलानमम्लं स्यात्मरं चोष्णं गुरु स्मृतम्। वातघ्नञ्च सम्यक् पक्वं तच्छीतलं मधु। बलकृद्वातपित्तघ्नमृषिभिः परिकीर्त्ति-तम्॥ रा: नि. व. ११।

**एलापत्रः**। पुं। सर्पविशेषे।

**एलापर्णी**। स्त्री। वृक्षविशेषे। কাঁটা আম-রুলী, এলানি। रास्नायाम्। भा. पू. १भ.।

**एलाफलम्**। क्ली। एलवालुके। रा. नि. व. ४। पुं। मधूकवृक्षे। গড়ুল গাছ। वै. निघ.।

**एलावालुकम्**। क्ली। एलवालुके। रा. नि. व. ४। कुष्ठगन्धिफलसदृशं। কট্‌ফলসদৃশ। सु सू. ३७ अ.।

**एलावूः**। स्त्री। अलाबुम्। লাউ। अ. टी.।

**एलायुग्मम्**। क्ली। एका सूक्ष्मा अन्या स्थूला च। ছোট এলাচ, বড় এলাচ। वा सू. १५ अ. एलादिः। 'एलायुग्मतुरुष्ककुष्ठफलिनी।"

**एलालु (कम्)**। क्ली। एलवालुके। रा. नि व. ६। भा. पू. १भ.।

**एलाह्वम्**। क्ली। एलवालुके। रा. नि व. ४।

**एलीका**। स्त्री। सूक्ष्मैलायाम्। रा. नि. व. ६।

**एलीयः**। पुं। एलवालुके। वै. निघ.।

**एलुकम् (काख्या)**। क्ली, स्त्री। एलवालुके। सु. चि. १९ अ.।

**एल्वम्**। क्ली। एलवालुके। सु. चि. १९ अ.।

**एल्वबालु(ल्वालु)कम्**। क्ली। एलाबालुके। रा. नि. व. ४। मद. व. ३।

**एल्वालु**। क्ली। एलबालुकायाम्। भा.।

**एषणः**। पुं। सल्लकीवृक्षे। वै. निघ.।

**एषणिका**। स्त्री। स्वर्णादिपरिमाणतुलायाम्। निक्ति। अम.।

**एषणी**। स्त्री। Probe. व्रणमार्गानुसारिशला-कायाम्। सा च गण्डूपदाकारमुखी। गतिरन्वेषणे शस्ता गण्डूपदमुखैषिणी। भेदनार्थेऽपरा सूची-मुखा मूलनिविष्टखा। इति॥ सु. सू. ८अ.। तुला-भिदि। निक्ति। "एषणीव्रणमार्गानुसारिण्याञ्च तुलाभिदि।" मे. णत्रिकं।

**एष्यः**। त्रि। एषणार्हे। नाड्यादौ रोगे।

**एष्या**। स्त्री। आमलकीवृक्षे। रत्ना.।

## ऐ

**ऐकशफम्**। क्ली। गर्द्दभीघृते। सु.। See गर्द्दभीघृतम्। त्रि। एकखुरसम्बन्धीये। [ भवे।

**ऐकाहिकः**। त्रि। एकदिनसम्पन्ने। एकदिनान्तर-

**ऐकाहिकज्वरः**। पुं। एकदिनान्तरगतज्वरे। See अन्येद्युष्कः। [ अम.। भैष.।

**ऐङ्गुदः**। पुं। इङ्गुदीवृक्षे। क्ली। इङ्गुदीफले।

**ऐडुकं**। क्ली। एडुके। ছিটেবেড়া।

**ऐणः(णेयः)**। त्रि। एणमृगचर्म्मादौ।

**ऐणिकः**। त्रि। एण-मृगघातके। व्याक.।

**ऐणेयकम्**। क्ली। एलवालुके।

**ऐन्दवी**। स्त्री। सोमराज्याम्। रा. नि. व. ४।

**ऐन्द्रः**। पुं। देवसर्षपवृक्षे। क्ली। मूलविशेषे। वन आदा। गुणाः—कट्वम्लं रुचिवल्लाग्निकरञ्च। रा. नि. व. ९।

**ऐन्द्रयवः**। पुं। इन्द्रयवे। मद. व. १।

**ऐन्द्रलुप्तिकः**। त्रि। इन्द्रलुप्तरोगविशिष्टे। টেকো।

**ऐन्द्रवारुणी**। स्त्री। इन्द्रवारुणीलतायाम्। রাখালশশা। मद. व. १।

**ऐन्द्रिः**। पुं। काके। मे. रद्विकं।

**ऐन्द्री**। स्त्री। स्थूलैलायाम्। सूक्ष्मैलायाम्। रा. नि. व. ६। वै. निघ. २भ. तालीशादिचूर्णे। इन्द्र-वारुण्यां। রাখালশশা। प. सु. रा. नि. व. ३, च. सू. ४अ.। गोरक्षकर्कट्यां। च. सू. ४अ. प्रजा-स्थापने। भा. अनि.।

**ऐन्द्रीफलम्**। क्ली। इन्द्रवारुणीफले। রাখালশশা ফল। च. द. ज. सा. वि.। "पक्वैन्द्रीफलमूलजम्।"

**ऐन्द्रीरसायनम्**। क्ली। रसायनविशेषे। अत्र ऐन्द्री (গোরক্ষচাকুলে), मत्स्याक्षी (তণ্ডুলীয়-

मूल), ब्रह्मसुवर्च्चला (সুবর্চলা ভেদ), शङ्खपुष्पी (ডানকুনী), ऐन्द्र्यादिविषान्तानां प्रत्येकं यवत्रयं केवलं स्वर्णं यवद्वयं विषस्य तिलं घृतस्य च पलं। च. चि. १अ.।

**ऐभी**। स्त्री। हस्तिघोषालतायाम्। रा.नि.व. ३।

**ऐरावतः**। पुं। लकुचवृक्षे। মান্দার। नागरङ्गे। নারাঙ্গা লেবু। मे. तचतुष्कं। रा. नि. व. ११, प. मु.। क्षुद्रद्वीपान्तरखर्ज्जूरे। क्ली। एलाकरवीरे। रत्ना.। ऐरावतफले। तत्फलं अम्लरक्तपित्तकृद्दन्तशठञ्च। सु. सू. ४६ अ.।

**ऐरावतकः**। पुं। हस्तिशुण्ड्यां। হাতিশুঁড়ে। च. चि. ३अ.। नागरङ्गवृक्षे। वै. निघ.।

**ऐरावतपदी**। स्त्री। काकजङ्घायाम्। महाज्योतिष्मतीलतायाम्। বড় লতাফট্‌কী।

**ऐरावती**। स्त्री। वटपत्रपाषाणभिद्क्षुपे। বড় পাথরকুচি। रा. नि. व. ५। नागरङ्गवृक्षे। भा.। गुणाः—"ऐरावती रसे पाके त्वम्लोष्णा च सुगन्धिका। वातं कासं श्वासरुजं नाशयेदिति कीर्त्तिता॥" वै. निघ.।

**ऐरिणम्**। क्ली। सैन्धवलवणे, पांशु-लवणे। रा. नि व. ५।

**ऐरेयम्**। क्ली। मद्ये। वै. निघ.। एलबालुके। अम.।

**ऐर्व्वारुः**। पुं। कर्कटीविशेष। বড় কাঁকুড়। मद. व. ७। च. द. प्रदर. चि.। See एर्व्वारुः, कर्कटी।

**ऐलबालुकम्**। एलबालुके। श. र.।

**ऐलेय(क)म्**। क्ली। नलुकायाम्। एलबालुके। अम.। "ऐलेयविश्वधान्याकम्।" सि. यो., च. द. र. पि. चि, वासाखण्डकुष्माण्डे।

**ऐल्वालु**। क्ली। एलबालुके। मद. व. ३।

**ऐशमूलम्**। क्ली। लाङ्गलीमूले। ঈশ্‌লাঙ্গুলিয়ার মূল। रस. र. बाल. चि.।

**ऐशानः**। पुं। ईशानकोणभववायौ। स च. कटुकः शीतलश्च। भा.।

**ऐश्वर्य्यम्**। क्ली। श्वेतधुस्तूरके। व. निघ।

**ऐषिका**। स्त्री। पाठायाम्। तिक्ततायाम्। वै निघ.।

**ऐक्षवम्**। क्ली। इक्षुविकारे, गुड़ादौ। इक्षुमद्ये। जटा.।

**ऐक्षवी(सुरा)**। स्त्री। इक्षुरसकृतमद्ये। तन्मद्यगुणाः—शीतलं अतिमादकञ्च। रा. नि. व. १५।

## ओ

**ओकः**। पुं, क्ली (कम्)। गृहे। आश्रये। अम.।

**ओकणः**। पु। केशकीटे। উকুণ। श. र.।

**ओकणिः (नी)**। पुं, स्त्री। उकुणे। श. र.।

**ओकुलः**। पुं। गोधमकृत-तप्तापक्वे खाद्यविशेषे। तद्गुणाः—गुरुः वृष्यः मधुरः बलकारी रक्त-वातापहः स्निग्धः हृद्यः मदविवर्द्धनश्च। रा.।

**ओकोदनी**। स्त्री। यूके। উকুণ। श. र.।

**ओक्कणी**। स्त्री। उकुणे। श. र.।

**ओजः (स्)**। क्ली। बले। मे सचिकं। तेजसि। रसादिसर्व्वधातुसारभागधातुविशेषे। गुणाः—सर्व्वशरीरस्थितत्वं स्निग्धत्वं शीतलत्वं स्थिरत्वं शुक्लवर्णत्वं कफात्मकत्वं शरीरबलपुष्टिकारित्वञ्च। हृदि तिष्ठति यच्छुद्धं रक्तमीषत्सपीतकं। ओजः शरीरे सङ्ख्यातं तन्नाशान्नाशमृच्छति। निव.। अष्टबिन्दु प्रमाणं तदीषद्रक्तं सपीतकं। अग्निसोमात्मकत्वेन द्विरूपं वर्णितञ्च तत्॥ चर.। ओजश्च तेजोधातुनां शुक्रान्तानां परं स्मृतम्। हृदयस्थमपि व्यापि देहस्थितिनिबन्धनम्॥ वा.। दीप्तौ। मे.।

**ओजस्करः**। वि। ओजोधातुवर्द्धके।

**ओड़िका (ड़ी)**। स्त्री। नीवारे। উড়িধান্য। प. मु.। तत्पर्य्यायः—नीवारः ओड़ी (र.)। गुणाः—शोषणी रुक्षा कफवायुवृद्धिकरी पित्तनाशिनी च। राज.। See नीवारः।

**ओड्रः (ड्रकः)**। पुं। The China rose. ( Flibiscus mutabilis. ) जवाकुसुमवृक्षे। জবাফুলের গাছ। हिं वोड़हुल। मं जासविन्द। रा. नि. व. १०। गुणाः—संग्राही केशहितश्च। भा



पू. १म. पुष्पव.। मलमूत्रस्तम्भनरञ्जनश्च। राज.। कटुरुष्णः इन्द्रलुप्तहरः विच्छर्द्दिजन्तुजनकः सूर्य्याराधनश्च। रा. नि. व. १०। माता ३मा.।

**ओड्र(ड्रा)काख्या**। स्त्री। जवापुष्पवृक्षे। रा. नि. व. १०।

**ओड्रपर्य्यायः**। पुं। सूर्य्यकान्तपुष्पवृक्षे स्वनामख्याते। जवा। अम.।

**ओड्रपुष्पम्**। क्ली। जवाकुसुमे। রক্তজবাফুল। प. मु.। See ओड्रः।

**ओड्रपुष्पा**। स्त्री। जवावृक्षे। वै. निघ.।

**ओढ़ापलङ्कषा**। स्त्री। गोरक्षतुण्ड्याम्। वै. निघ.।

**ओतुः**। पुं, स्त्री। बिड़ाले। বিড়াল। अम.। वनविड़ाले। वै. निघ.।

**ओदः**। पुं। अन्ने।

**ओदनः**। पुं। अद्रवे सिक्थे। स च मण्डादिभ्यो गुरुः। वा. टी. हेमा.। क्ली। भक्ते। प. मु.। अन्ने। रा. नि. व. २०। পিটুলি। स्वा. कौ. ज्व. वलिः।

**ओदनपाकी**। पुं। नीलझिण्ट्याम्। च. चि. ३अ. चन्द. तैले।

**ओदना (निका) (नी)**। स्त्री। महासमङ्गायाम्। বেড়েলাবিশেষ। বা... । বেলেড়া। रा. नि. व. ४।

**ओदनाह्वया (ह्वा)**। स्त्री। महासमङ्गायां। रा. नि. व. ४। बाट्यालके। हिं खिरिहिटी। मद. व. १।

**ओलः (ल्लः)**। पुं। स्वनामख्यातकन्दशाके। ওল গাছ। र. मा., भा. पू. १भ.। गुणाः—अग्निकरः कफघ्नः रुचिकरः लघुः अर्शसि पथ्य। ग्राम्यकन्दस्तु दोषल इति। राज.। See शूरणः। वि। आर्द्रे। मे. लहिकं।

**ओल(ल्ल)कन्दः**। पुं। शूरणे। ওল। र. मा.। वनोल्ले। বুনো ওল। पानीयभक्तावक्याम्।

**ओषः**। पुं। दाहे। प्रोषः प्लोषः इति पर्य्यायशब्दः। अम. भरतः।

**ओषणः (णिः)**। पुं। कटुकरसे। ঝাল। हे. च.। (णी) पुरातिशाके। পুরতিশাক। गुणः—कफवायुनाशित्वम्। राज.। पुनर्नवायाम्।

**ओषधम्**। क्ली। औषधे।

**ओषधिः**। स्त्री। फलपाकान्तवृक्षादौ, कदलीधान्यादिके। हे. च.। द्रव्येषु। तानि पुनरौषधयः। ताश्च द्विविधाः स्थावराः जङ्गमाश्च। तासां स्थावराः चतुर्धा यथा—वनस्पतिः, वृक्षः, वीरुत्, ओषधिश्चेति। तासु अपुष्पफलवान् वनस्पतिः, पुष्पफलवान् वृक्षः, प्रतानवती लता, फलपाकनिष्ठा च ओषधिः। जङ्गमा अपि चतुर्धा जरायुजाण्डजस्वेदजोद्भिज्जभेदेन। तत्र पशुमनुष्यव्यालादयो जरायुजाः। खगसर्पसरीसृपप्रभृतयोऽण्डजाः। कृमिकीटप्रभृतयः स्वेदजाः। मण्डूकादयः उद्भिज्जा इति सु. सू. १अ.।

**ओषधिगणः**। पुं। रासायनिकौषधिगणे। ताः सोमसमवीर्य्या महौषधय इति ख्याताः। तासाञ्च सोमवत्क्रियाशीःस्तुतयः शास्त्रे कथिताः। ताश्चाष्टादशधा—अजगरी श्वेतकापोती कृष्णकापोती गोनसी वाराही कन्या छत्रा अतिच्छत्रा करेणुः अजा चक्रका आदित्यपर्णिनी ब्रह्मसुवर्च्चला श्रावणी महाश्रावणी गोलोमी अजलोमी महावेगवती चेति। एताश्चार्ब्बुदगिर्य्यादिषु लभ्याः—"आसाञ्च याः क्षीरवत्यस्तासां क्षीरं कुड़वमितं सकृदेव उपभुञ्जीत। यास्तु अक्षीरा मूलवत्यः तासां प्रदेशिनीप्रमाणानि त्रीणि काण्डानि प्रमाणमुपयोगे। श्वेतकापोती समूलपत्रा भक्षयितव्या। गोनस्यजगरीकृष्णकापोतीनां सनखमुष्टिं खण्डशः कल्पयित्वा क्षीरेण विपाच्य परिस्रावितमभिहुतञ्च सकृदेवोपभुञ्जीत। चक्रकायाः पयः सकृदेव। ब्रह्मसुवर्च्चलाः सप्तरात्रमुपभोक्तव्याः। भक्ष्यकल्पेन शेषाणां पञ्चपलानि क्षीराढ़कक्वथितानि प्रस्थेऽवशिष्टेऽवताय्यं परिस्राव्य सकृदेवोपयुञ्जीत। सोमवदाहारविहारौ व्याख्यातौ, केवलन्तु नवनीतमभ्यङ्गार्थे शेषं सोमवदानिर्गमादिति। अथासां पृथग्विज्ञानमुच्यते—मण्डलैः कपिलैश्चित्रैः सर्पाभा पञ्चपर्णिनी। पञ्चारत्निप्रमाणा वा विज्ञेयाजगरी बुधैः॥ निष्पत्रा कनकाभासा मूले द्व्यङ्गुलसम्मिता। सर्पाकारा लोहितान्ता श्वेतकापोतिरुच्यते॥ द्विपर्णिनीं मूलभवामरुणां कृष्णमण्डलां। द्व्यरत्निमात्रां जानीयाद्गोनसीं गोनसाकृतिं॥ सक्षीरां रोमशां मृद्वीं रसेनेक्षुसमीपगां। एवं रूपरसाञ्चापि कृष्णकापोतिमादिशेत्॥ कृष्णसर्पस्वरूपेन वाराही कन्दसम्भवा। एकपत्रा महावीर्य्या भिन्नाञ्जनसमप्रभा॥ छत्रातिच्छत्रके विद्यात् रक्षोघ्ने कन्दसम्भवे। जरामृत्यु-

निवारिण्यौ श्वेतकापोतिसंस्थिते ॥ कान्तैर्द्वादशभिः पत्रैर्मयूराङ्गरुहोपमैः । कन्दजा काञ्चनक्षीरी कन्यानाम महौषधी ॥ करेणुः सुबहुक्षीरा कन्देन गजरूपिणी । हस्तिकर्णपलाशस्य तुल्यपर्णा द्विपर्णिनी ॥ अजास्तनाभकन्दा तु सक्षीरा क्षुपरूपिणी । अजा महौषधी ज्ञेया शङ्खकुन्देन्दुपाण्डुरा ॥ श्वेतां विचित्रकुसुमां काकादन्याः समां क्षुपां । चक्रकामौषधिं विद्याज्जरामृत्युनिवारिणीम् ॥ मूलिनी पञ्चभिः पत्रैः सुरक्तां शुककमलैः । आदित्यपर्णिनी ज्ञेया सदादित्यानुवर्त्तिनी ॥ कनकाभा जलान्तेषु सर्व्वतः परिसर्पति । सक्षीरा पद्मिनीप्रख्या देवी ब्रह्मसुवर्चला ॥ अरत्निमात्रक्षुपका पत्रैर्द्वाङ्गुलसम्मितैः । पुष्पैर्नीलोत्पलाकारैः फलैश्चाञ्जनसन्निभैः । श्रावणी महती ज्ञेया कनकाभा पयस्विनी ॥ श्रावणी पाण्डुराभासा महाश्रावणिलक्षणा । गोलोमी चाजलोमी च रोमशे कन्दसम्भवे ॥ हंसपादीव विच्छिन्नैः पत्रैर्मूलसमुद्भवैः । अथवा शङ्खपुष्पी च समाना सर्व्वरूपतः ॥ वेगेन महताविष्टा सर्पनिर्म्मोकसन्निभा । एषा वेगवतीनाम जायते ह्यम्बुदक्षये ॥...देवसुन्दे ह्रदवरे तथा सिन्धौ महानदे । दृश्यते च जलान्तेषु मध्ये ब्रह्मसुवर्चला ॥ आदित्यपर्णिनी ज्ञेया तथैव हि हिमक्षये । दृश्यतेऽजगरी नित्यं गोनसी चाम्बुदागमे ॥ काश्मीरेषु सरो दिव्यं नाम्ना क्षुद्रकमानसम् । करेणुस्तत्र कन्या च छत्रातिच्छत्रिके तथा ॥ गोलोमी चाजलोमी च महती श्रावणी तथा । वसन्ते कृष्णसर्पाख्या गोनसी च प्रदृश्यते ॥ काश्मिकीं सरितं तीर्त्वा सञ्जयन्त्यास्तु पूर्व्वतः । क्षितिप्रदेशो वल्मीकैराचितो योजनत्रयं ॥ विज्ञेया तत्र कापोता श्वेता वल्मीकमूर्द्धसु । मलये नलसेतौ च वेगवत्योषधी ध्रुवा ॥ कार्त्तिक्यां पौर्णमास्याञ्च भक्षयेत्तानुपोषितः । सोमवत्तावत् वर्त्तते फलं तावच्च कीर्त्तितम् ॥" इत्यादि । गुणाः—युवानं सिंहविक्रान्तं कान्तं श्रुतनिगादिनं । कुर्य्युरेताः क्रमेणैव द्विशतवर्षायुषं नरम् ॥ अङ्गदी कुण्डली मौली दिव्यस्रक्चन्दनाम्बरः । चरत्यमोघसङ्कल्पो नभस्यम्बुददुर्गमे ॥ व्रजन्ति पक्षिणो येन जलदाश्च तोयदाः । गतः सौषधिसिद्धस्य सोमसिद्धगतिः परा ॥ सु. चि. ३० अ. ।

**ओषधी** । स्त्री । ओषधी । भरतः । लज्जुहुचि । वै. निघ. ।

**ओषधीपतिः** । पुं । कर्पूरे । हे. च. ।

**ओषधीशः** । पुं । कर्पूरे । अम. ।

**ओष्ठः** । पुं । दन्तच्छदे । উপরঠোঁট । रा. नि. व. १८ ।

**ओष्ठधरः** । पुं । ओष्ठे । ঠোঁট । तत्पर्य्यायः,—रदनच्छदः दशनवासः (अ.), दन्तवासः दन्तवस्त्रं रदच्छदः (रा.) ।

**ओष्ठपाकः** । पुं । तन्नामकरोगविशेषे । ওষ্ঠব্রণ । मा. नि. ।

**ओष्ठपुष्पः** । पुं । बन्धुजीवपुष्पवृक्षे । বান্ধুলী গাছ । रा. नि. व. १० । See बन्धुजीवः ।

**ओष्ठप्रान्तः** । पुं । सृक्कभागे । रत्ना. ।

**ओष्ठफला (भा)** । स्त्री । बिम्बीलतायाम् । তেলাকুচা । भं गीड़तोंडली । वै. निघ. ।

**ओष्ठरञ्जनी** । स्त्री । ताम्बूले । পাণ । प. मु. ।

**ओष्ठरोगः** । पुं । ओष्ठाश्रगतरोगविशेषे, ओष्ठव्रणादौ । वातजपित्तजश्लेष्मिकसान्निपातिकरक्तजमांसजमेदोजाभिघातजभेदादष्टविधः । तत्र कर्कशत्वादिलक्षणा वातजाः, पिड़काचितत्वादिलक्षणा पित्तजाः, कण्डूमत्वादिलक्षणा कफजाः, कृष्णपीतश्वेतत्वादिसर्व्वलक्षणयुताः सन्निपातजाः स्रवद्रक्तखर्ज्जूरफलवर्णत्वादिलिङ्गा रक्तजाः, गुरुस्थूलत्वादिलक्षणा मांसजाः, दर्पणमण्डसवर्णत्वादिलक्षणा मेदोजाः, क्षतजातत्वादिलक्षणा अभिघातजा इति । भा. म ४भ. मुखरो. चि. । "आनूपपिशितक्षीरदधिमत्स्यातिसेवनात् । मुखमध्ये गदान् कुर्य्युः क्रुद्धा दोषा कफोत्तराः ॥ इति । मा. नि. ।

**ओष्ठा (ष्ठी)** । स्त्री । बिम्बायां । তেলাকুচা । प. मु. ।

**ओष्ठाधरो (रं)** । पुं क्ली । ओष्ठद्वयं ।

**ओष्ठी** । स्त्री । बिम्बीफले । তেলাকুচা ।

**ओष्ठोपमफला (लिका)** । स्त्री । बिम्बिकायां । তেলাকুচা গাছ । हिं कुन्दरू । भा. पू. १भ. ।



# औ

**औख्यं** । त्रि । स्थालीपक्वे अन्नादौ ।

**औड़(ड़ु)म्बरम्** । क्ली । कुष्ठरोगविशेषे मे. । तस्य लक्षणं—"रुग्दाहरागकण्डूभिः परीतं रोमपिञ्जरं । औदुम्बरफलाभासं कुष्ठमौड़म्बरं वदेत् ॥" मा. नि. । ताम्रे । जटा. । उदुम्बरफले । त्रि । उदुम्बरसम्बन्धिनि ।

**औड़्रपुष्पम्** । क्ली । जबापुष्प । हे. च. ।

**औत्सुक्यम्** । क्ली । उत्कण्ठायाम् । हे. च. ।

**औदनिकः** । पुं । सूपकारे । अम. । [ पेटुके ।

**औदरिकः** । त्रि । क्षुधिते । उदरमात्रपोषके ।

**औदर्य्यम्** । क्ली । ताम्रे । मदनफले । उदुम्बरफले । [ हे. च. ।

**औदश्वित(त्क)म्** । क्ली । अर्द्धजलयुक्तघोले ।

**औदुम्बरम्** । क्ली । ताम्रे । हारा. । महाकुष्ठरोगविशेषे । गुणाः—"पित्तेन पक्वोदुम्बरफलाकृतिवर्णानि औदुम्बराणि ।" सु. नि. ५अ. । उदुम्बर फले । त्रि । उदुम्बरसम्बन्धिनि ।

**औदुम्बरच्छदः** । पुं । दन्तीवृक्षे । वै. निघ. ।

**औदुम्बरी** । स्त्री । कृमिभेदे ।

**औद्दाल(क)म्** । क्ली । स्वर्णवर्णं वल्मीककारिकीटकृतमधुनि । উইমধু । रा. नि. व. १४ । गुणाः—कषायम् उष्ण कटु कुष्ठविषनाशि च । राज. । राजनिघण्टुस्तु भूमेः उद्दलनात् औद्दालकाभिधाः कपिलकीटाः तैः वल्मीकसमीपे सञ्चितं मधु । औद्दालाः कपिला कीटा भूमेरुद्दलनात् स्मृताः वल्मीकान्तस्तदुत्पन्नमौद्दालकमुदीर्य्यते । कुष्ठादिदोषघ्नं सर्व्वसिद्धिदञ्चेति ।" रा. नि. व. १४ । "प्रायोवल्मीकमध्यस्थाः कपिलाः स्वल्पकीटकाः । कुर्व्वन्ति कपिलं स्वल्पं तत्स्यादौद्दालकं मधु ॥" रुच्यं स्वर्य्यं कुष्ठविषघ्नं कषायं उष्णमम्लं कटुपाकं पित्तकरञ्च । भा. पू. २भ. मधुव. ।

**औद्दालकशर्करा** । स्त्री । औद्दालमधुकृतशर्करायां । सा गुणैरौद्दालमधुसदृशी । रा. नि. व. १४ ।

**औद्भिज्जम्** । क्ली । पांशुलवणे । সোরা । रा. नि. व. ६ । शाम्भरिलवणे । [ राज. ।

**औद्भिदम्** । क्ली । औद्भिदलवणे সোরা ।

**औद्भिदजलम्** । क्ली । उद्भिदो जाते जले । प्रस्रवसलिले । तस्य गुणाः—मधुरं पित्तशमनं अविदाहि च । राज. । लघु । रा. नि. व. १४ । "विदार्य्य भूमिं निम्नां यत् महत्यां धारया स्रवेत् । तत्तोयमौद्भिदं नाम वदन्तीति महर्षयः ॥ औद्भिदं वारि पित्तघ्नं अविदाह्यतिशीतलं । प्रीणनं मधुरं बल्यमीषद्वातकरं लघु ॥" भा. पू. १भ. वारि । वर्षासु औद्भिदं पथ्यम् । मद. ।

**औद्भिदद्रव्यम्** । क्ली । उद्भिद्य पृथिवीं जायते इत्युद्भित् । तत्र वनस्पतिलतावानस्पत्यौषधात्मकम् । See च. सू. १अ. वनस्पत्यादिः ।

**औद्भिदलवणम्** । क्ली । पांशुलवणापरनामधेयलवणे, यद्भूगर्भतः स्वयमुत्पद्यते । সোরা । सि यो. ग्रह. चि. बिल्वगुड़िकायां । च. द. महाषट्पलघृते । गुणाः—क्षारयुक्तं गुरु कटु स्निग्धं शीतं वातघ्नञ्च । भा. पू. १भ. ए. व. । रक्तत्वं सूक्ष्मं लघु वातानुलोमनञ्च । सु. द. व. २ । तीक्ष्णं उत्क्लेदजनकं क्षारयुक्तं कटु तिक्तं कोष्ठबद्धतानाहशूलघ्नञ्च । राज. ।

**औधस्यम्** । क्ली । पशुदुग्धे ।

**औनीतम्** । क्ली । अश्वरोगविशेषे । गुरुभोजनाभिष्यन्दिग्रासग्रहणाश्वीसेवावर्ज्जनात् शुक्रं स्वस्थानच्युतं मेहने प्रतिहन्यते, तेन मूत्रकृच्छ्रं भवेत् । ततः शोणितं कुपितं मेहने शूलं जनयति । मेहनञ्च क्लिन्नं पक्वं कण्डूमत्पिड़कायुक्तं मक्षिकावृतं भवति, स्वस्थानञ्च न प्रविशति । ज. द. ५१ अ. ।

**औन्दूवरम्** । क्ली । ताम्रे । भा. म. १भ. ।

**औपधेयम्** । क्ली । रथचक्रे ।

**औपरोधिकः** । पुं । पीलुदण्डे । हे. ।

**औपवस्तम्** । क्ली । उपवासे । लङ्घने । हे. च. ।

**औपसर्गिकः** । पुं । सन्निपातादिरोगविशेषे । तस्य लक्षणं—"कफोऽनुलोमवातेन यदि पित्तानुगो भवेत् । स्वेदश्वेत्यादिभिर्जुष्टस्तदा भवति मानवः । प्रतिलोमः पुनस्तेन स्वास्थ्यमायाति तत्क्षणात् । औपसर्गिक एवान्यः सन्निपात उदाहृतः ॥" वैद्यशास्त्रं ।

**औपस्थ्यम्** । क्ली । उपस्थेन्द्रियसुखे ।

**औपीनम्** । क्ली । उप्यक्षेत्रे । रा. नि. व. २ ।

**औमीनम्** । क्ली । अतसीक्षेत्रे । মশিনার ক্ষেত ।

**औरभ्रः (कः)** । पुं । कम्बलभेदे । तत्पर्य्यायः,

—ऊर्णायुः आविकः रल्लकः । हे. । मेषे । हे. च. । क्ली । मेषमांसे । ভ্যাড়ার মাংস । मं मेढ़ी-करमांस । गुणाः—मधुरं शीतलं गुरु विष्टम्भि बृंहणञ्च । मेषसमूहे । ऊर्णावस्त्रे । रा. नि. व. १७ ।

**औरिणम्** । क्ली । मृत्तिकालवण । यवक्षारे । সোরা । वै निघ. ।

**औरुवुकम्** । क्ली । एरण्डतैले । च. द. ।

**और्व्वम्** । क्ली । मृत्तिकालवणे । यवक्षारे । पांशुलवणे । रा. नि. व. ६ ।

**औलम्** । क्ली । श्वेतशूरणे । वै. निघ ।

**औलूकम्** । क्ली । उलूकसमूहे । जटा. ।

**औशीरम्** । क्ली, पुं । बालके । বালা । चामरदण्डे । आसने । चि । उशीरजे । मे. रत्निकं ।

**औषणम्** । क्ली । कटुरसे ।

**औषधम्** । क्ली । शुण्ठ्याम् । रा. सा. सं. औषधमारणगणे । रोगघ्नद्रव्ये । ঔষধ । तत्पर्य्यायः,—भेषजं भैषज्य अगदः जायुः (अ.) जैत्रं आयुर्योगः गदारातिः अमृतं आयुर्द्रव्यं (वै.) । "वैद्यो व्याधिं हरेद्येन तद्द्रव्यं प्रोक्तमौषधम्" । अत्रि. । औषधं पञ्चविधम् । यथा—रसचूर्णकषायावलेहकल्काः । "तच्च पञ्चविधं प्रोक्तं स्वसंयोगविशेषतः । रसश्चूर्णं कषायश्चावलेहः कल्क इत्यपि ॥" तच्च पुनः द्विविधं शोधनशमनलक्षणं । तयोः शोधनरूपं वस्तिविरेकवमनम् । कुपितदोषान् वहिर्निःसार्य्य रोगोपशमनं करोति । शमनरूपं तैलघृतमधुरूपं स्वस्थानस्थितानामेव साम्यहेतुः । वा. टी. अरुणः । तत्र वातस्य वस्तिः (गुदप्रणिधेयस्नेहादि) । पित्तस्य विरेकः (मुखपीतं गुदमार्गेणान्तः स्थितस्य निःसारणं) । कफस्य वमनं (मुखेन पीतं तेनैव दोषस्य निःसारणम्) । शमनं—वातस्य तैलं, पित्तस्य घृतं, कफस्य च मधु । विन्ध्यशैलजानि औषधानि क्रियाविधौ प्रशस्तानि तथा वनोपवनजानि । वल्मीकश्मशानादिजानि न ग्राह्याणि । औषधाङ्गरणमन्त्रोऽप्यस्ति स्थानाभावान्नोक्तः । औषधद्रव्याङ्गग्रहणं यथा—खदिरादीनां सारः, निम्बादीनां त्वक्, दाड़िमादीनां फलं, पटोलादेश्च छदः ग्राह्यः । सारः स्यात् खदिरादीनामित्यादि । शार्ङ्गधरमते न्यग्रोधादेः त्वक् बीजकादेः सारः तालीशादेः पत्र त्रिफलादेश्च फलं ग्राह्यमिति । काष्ठगर्भमहामूलानां वल्कलं ह्रस्वमूलानां सर्व्वशो ग्राह्यमिति । अतिस्थूलजटायास्त्वचः तथा सूक्ष्ममूलानि सर्व्वशो ग्राह्याणि । यत्र द्रव्याङ्गावयवो यादृशो निर्द्दिष्टः, तत्र तादृश एव ग्राह्यः । यथामृतादिकषाये अमृतादीनां पत्रमेव ग्राह्यम् । अङ्गसामान्योक्तौ मूलवल्कलम्, "अङ्गेऽप्यनुक्ते विहितन्तु मूल" मिति वचनात् । विषयभेदे ऋतुद्रव्यग्रहणम्—शरदि स्वरसौषधं सर्व्वकार्य्यार्थं, विरेकवमनार्थं वसन्ते । शिशिरे मूलं, ग्रीष्मे पत्रं, वर्षावसन्तयोः त्वक्कन्दौ, शरदि क्षीरं यथर्त्तुपुष्प फलञ्च हेमन्ते सारञ्च ग्राह्यम् । सामान्योक्तौ—मूत्राचं, उत्पले नीलोत्पलं, शकृद्रसे गोमयरसः, चन्दने रक्तचन्दनं, सर्षपे सिद्धार्थः, लवणे सैन्धवं मूत्रे गोमूत्रं, घृतदुग्धेषु गव्यमेव, चतुष्पदे स्त्रीः, पक्षिणि पुमान्, वयस्थजाङ्गलानां चर्म्मादि हित्वा ग्राह्यम् । मांसे कथिते आजं क्लीवञ्च गृह्णीयात् । अनुक्ते ग्रहणं यथा—कालेऽनुक्ते प्रभातं, अङ्गेऽनुक्ते जटा, भागेऽनुक्ते साम्यं, द्रवेऽनुक्ते जलं । प. प्र. १ख. । चूर्णलेहासवकार्य्ये तु श्वेतचन्दनं क्वाथप्रलेपे रक्तचन्दनं ग्राह्यम् । भक्षणीयौषधविधाने—अजमोदीक्तौ यमानी, वाह्यप्रलेपे तु वचा ग्राह्या । भा. ।

**औषधकालः** । पुं । औषधसेवनस्य समये । स च दशविधः—"निर्भक्तं प्रागभक्तमधोभक्तं मध्येभक्तमन्तराभक्तं सभक्तं सामुद्गं मुहुर्मुहुर्ग्रासं ग्रासान्तरञ्चेति । तत्र निर्भक्तं केवलमौषधमुपयुज्यते । प्राग्भक्तं तत्तु प्राग्भक्तस्योपयुज्यते । अधोभक्तं यद्भक्तान्ते पीयते । मध्येभक्तं यन्मध्ये भक्तस्य पीयते । अन्तराभक्तं नाम यदन्तरा पीयते पूर्व्वापरयोर्भक्तयोः । सभक्तं औषधेषु यत्साध्यते भक्तम् । सामुद्गं नाम यद्भक्तस्यादावन्ते च पीयते । मुहुर्मुहुर्ग्रासं सभक्तमभक्तं वा यदौषधं मुहुर्मुहुरुपयुज्यते । ग्रासान्तरं यत्पिण्डव्यामिश्रम् ।" तत्र निर्भक्तगुणाः—"वीर्य्याधिकं भवति भेषजमन्नहीन" मित्यादि । प्राग्भक्तस्य यथा—"शीघ्रं विपाकमुपयाति बलं न हिंस्यादित्यादि ।" अधोभक्तस्य यथा—"पीतं यदन्नमुपभुज्य तदूर्द्ध्वकाये हन्यादृदान् बहुविधांश्च बलं दधाति ।" मध्येभक्तस्य यथा—"मध्ये तु पीतमुपहन्त्यविसारि भावाद् ये मध्यदेहमभिभूय भवन्ति रोगाः ।" अन्तराभक्तस्य यथा—"हृद्यं मनोबलकरन्त्वतिदीपनीयम् ।" सभक्तस्य यथा—"पथ्यं सभक्तमबलाबलयोर्हि नित्यमित्यादि ।" सु. उ ६४ अ. ।

**औषधालयः** । पुं । औषधगृहे । ঔষধের ঘর ।



**औषधिः (धी)** । स्त्री । गुड़ूच्यां । रास्नायां । दूर्व्वायाम् । श्वेतदूर्व्वायाम् । हरीतक्याम् । मद्ये । औषधे । रत्ना. । फलपाकान्तवृक्षादौ । हे. च. ।

**औषधिगन्धः** । पुं । आघ्राणेन ज्वरादिकरौषधीनां गन्धे । च. द. ज्वरातिसार-चि. ।

**औषधिप्रतिनिधिः** । पुं । यदौषधं न लभ्यते तस्य स्थाने तत्समगुणद्रव्यान्तरग्रहणे । यथा—मेदाभावे ह्यश्वगन्धा महामेदे च शारिवा । जीवकर्षभकाभावे गुड़ूची वंशलोचना इत्यादि । चित्रकाभावे दन्ती अपामार्गक्षारो वा, धन्वयासाभावे दुरालभा, तगराभावे कुष्ठं. मूर्वाभावे जिङ्गिनीत्वक्, अहिंसालक्षणाभावे मानकमयूरपुच्छग्रहणं वकुलाभावे कह्लारोत्पलपद्मग्रहणम् । नीलोत्पलाभावे लवङ्गं, अर्कादिक्षीराभावे तत्पत्ररसः, पुष्करमूलाभावे कुष्ठं, लाङ्गलकीग्रन्थिपर्णाभावे कुष्ठञ्च ग्राह्यं । भा. पू. १भ. । चविकाभावे गजपिप्पली, पिप्पलीमूलम्, सोमराज्यभावे चक्रमर्द्दफलम्, दार्व्यभावे हरिद्रा, रसाञ्जनस्याभावे दार्व्वीक्वाथः, सौराष्ट्र्यदभावे फटिकारी, तालीशाभावे स्वर्णताली, भार्ग्यभावे तालीशं कण्टकारीमूलं वा, रुचकस्याभावे पांशुलवणं, यष्टीमध्वभावे धातकीपुष्पम्, अम्लवेतसाभावे चुक्रं द्राक्षाभावे गाम्भारीफलम्, तदभावे पीतशालपुष्पं, नखाभावे लवङ्गम्, कस्तुर्य्यभावे काकोली, तदभावे जातीपुष्पम्, कर्पूराभावे ग्रन्थिपर्णौ (গাঁঠিয়ালা) सुगन्धिमुस्तकं वा, कुङ्कुमाभावे कुसुम्भ, श्रीखण्डचन्दनाभावे कर्पूरम् तदुभयाभावे रक्तचन्दनं ग्राह्यं । मध्वभावे जीर्णगुड़ः, पुरातनाभावे यामचतुष्टयशुष्कः गुड़ः, क्षीराभावे मौद्गो मासुरश्च रसः, शर्कराभावे खण्डं, शाल्यभावे षष्टिकं, दाड़िमाभावे वृक्षाम्ल, सौराष्ट्रमृदभावे पङ्कपर्पटी, लौहाभावे तन्मलं, चव्यगजपिप्पल्यभावे पिप्पलीमूलं, मुञ्जातिकाभावे तालमस्तं ग्राह्यम् । माजुफलमिति केचित् । प. प्र. १ख. ।

**औषधिवीर्य्यम्** । क्ली । शीतोष्णादिरूपे । तच्च शीतमुष्णं रूक्षं स्निग्धं तीक्ष्णं मृदु पिच्छिलं तीव्रं विशदञ्चेति । तदुक्तं "वीर्य्यं द्विविधमुष्णं शीतञ्चाग्निसौमीयत्वाज्जगतः । केचिदष्टविधमाहुरुष्णं शीतं स्निग्धं रूक्षं विशदं पिच्छिलं मृदु तीक्ष्णञ्चेत्येतानि वीर्य्याणि स्वबलगुणोत्कर्षादसमभिभूयात्मकर्म्म कुर्व्वन्तीति ।" सु. सू. ४० अ. ।

**औषधीपञ्चामृतम्** । क्ली । गुड़ूचीगोक्षुरमुषलीमुण्डीशतावरीषु ।

**औषर(क)म्** । क्ली । अयस्कान्तभेदे । पांशुलवणे । मृत्तिकालवणे । খারী নুন । तत्पर्य्यायः,—सार्व्वगुणं सर्व्वरसं सर्व्वसंसर्गलवणं ऊषरजं ऊषरकं साम्बरं बहुलवणं मेलकलवणं मिश्रकं । सैन्धवलवणे । ऊषरदेशजलवणे । गुणाः—क्षारं तिक्तं वातकफघ्नं विदाहि पित्तकृत् ग्राहि मूत्रशोषकञ्च । रा. नि. व. ६ । क्षारे । मद. व. २ ।

**औष्ट्रकम्** । क्ली । उष्ट्रसमूहे ।

**औष्ट्रतक्रम्** । क्ली । उष्ट्रीदुग्धजातघोले । गुणाः "औष्ट्रं तक्रन्तु विरसं गुरु हृद्यञ्च दीपनम् । पीनसश्वासकासेषु शस्तमुक्तम् ।" वै. निघ. ।

**औष्ट्रनवनीतम्** । क्ली । उष्ट्रीदुग्धजातनवनीते । गुणाः—लघुपाकं शीतलं व्रणहृत्क्रिमिकफरक्तदोषघ्नं वातघ्नं विषघ्नञ्च । रा. नि व. १५ ।

**औष्ट्रमूत्रम्** । क्ली । उष्ट्रमूत्रे । गुणाः—उन्मादशोफार्शःक्रिमिशूलोदरघ्नञ्च । मद. व. ८ ।

**औष्ट्रक्षीरम्** । क्ली । उष्ट्रीदुग्धे । See उष्ट्री ।

**औष्ट्रीघृतम्** । क्ली । उष्ट्रीनवनीतजघृते । गुणाः—मधुरं पाके कटु शीतलं क्रिमिकुष्ठहरं वातकफगुल्मोदरघ्नञ्च । रा. नि. व. १५ ।

**औष्मरम्** । क्ली । उष्णतायाम् ।

---

## क

**कम्** । क्ली । जले । रा. नि. व. १४ । सुखे । मे. । केशे । धर । पुं । अग्नौ । वायौ । यमे । सूर्य्ये । आत्मनि । मयूरे । मे. । मनसि । शरीरे । काले । धने । शब्दे । इति अनेकार्थकोषः ।

**कंसः** । पुं, क्ली । कांसमाक्षिके (महाद्रावके) । पानपात्रे । अ. टी. ।

**कंसम्** । क्ली, पुं । ताम्रवङ्गयोरुपधातौ, कांस-

धाती। काँसा। प. स.। आढ़कपरिमाणे (८श)। भा.। तैजसपात्रमात्रे। त्रिका.।

**कंसकम्।** क्ली। पुष्पकाशीशे। इदं श्वेतवर्णम्। हे. च.। कांस्ये।

**कंसहरीतकी।** स्त्री। शोथाधिकारे। हरीतकी १०० शतं, दशमूलं प्रत्येकं ८प ३तो. १॥० माशा मिलितं ६४प. वारि ५१२ प. (६४श) शे. १२८ प. (१६ श.) पुरातनगुड़: १०० प.। पक्वा लेहवन्नूते, शुण्ठीचूर्णं ८ तो मरिचचूर्णं ८ तो. पिप्पलीचूर्णं ८ तो. यवक्षार: ८ तो. गुडत्वक् २ तो. तेजपत्रं २तो. एलाचूर्णञ्च २ तो. प्रक्षेपी देय:। मधु २ श. वा १६ प.। मतान्तरे क्वाथ: ८ श.। पाठ:—"द्विपञ्चमूलस्य पचेत्कषाये कंसेऽभयानाञ्च शतं गुडाच्च। लेहे सुसिद्धे च विनीय चूर्णं व्योषं त्रिसौगन्ध्यमुपस्थिते च। प्रस्थार्द्धमानं मधुन: सुशीते किञ्चिच्च चूर्णादपि यावशूकात्. एकान्तत: प्राश्य ततश्च लेहात् शुक्तिं निहन्ति श्वयथुं प्रवृद्ध" मित्यादि। सा. कौ.।

**कंसास्थि।** क्ली। कांस्यधातौ। काँसा। "कंसं तु कांस्यं कंसास्थि"। त्रिका.।

**कंसोद्भवा।** स्त्री। सौराष्ट्रमृत्तिकायाम्। हे. च.।

**ककन्द:।** पुं। स्वर्णे। उणा.।

**ककरीमुख:।** पुं। कैशे। रा. नि. व. १८।

**ककारपूर्व्वद्रव्यम्।** क्ली। ककारपूर्व्वकद्रव्येषु। तानि यथा—कटुक:, कालशाक, कुष्माण्डं, कर्कटी, कर्कन्धु:, कर्कोटक:, कलिङ्ग:, करमर्द्द:, करीर:, कतक: कशेरु,- काञ्जिकञ्चेति रक्तपित्ते वर्ज्यम्। भा. म. र. पि. चि.।

**ककुङ्गिनी।** स्त्री। ज्योतिष्मतीलतायाम्। लताफटकी। भा. म १भ.।

**ककुञ्जल: (ला)।** पुं स्त्री। चातकपक्षिणि। राज.।

**ककुण(न)क:।** पुं, क्ली। बालरोगविशेषे। See ककूणक:।

**ककुत् (द:)।** स्त्री, पुं, क्ली। वृषाङ्गे। षाँड़ेर झुँटि। प्राधान्ये। अम.। ध्वजे। मे। दर्व्वीकरसर्पभेदे। सु. कल्प, ४अ.। See सर्प:।

**ककुद्मती।** स्त्री। कटौ। पाछा, नितम्ब। अम.। त्रि.। ककुद्विशिष्टे।

**ककुद्मान्।** पुं। ऋषभकाख्ये। रा. नि. व. ५। वृषे। हे. च.।

**ककुन्दरम्।** क्ली। नितम्बगर्त्ताधिष्ठाने वैकल्यकरे पृष्ठसन्धिमर्म्मद्वये। मेरुदण्डोभयत: पार्श्वजघनबहिर्भागे ईषदधस्तस्य स्थानम्। तत्र स्पर्शाज्ञानमध:काये चेष्टोपघातश्च। सु. शा. ६अ। ककुन्दरौ तु सर्व्वेषां स्यातां जघनकूपकौ। रा. नि. व १८। पुं। वृक्षविशेषे। गुणा:—"ककुन्दर: कटुस्तिक्त: ज्वरघ्नश्चोष्णकृन्मत:। रक्तरुक्कफदाहानां तृषायाश्च विनाशन:॥" अस्यार्द्रमूलञ्च मुखे धारितं मुखदोषनुत्। वै. निघ.।

**ककुप्।** स्त्री। चम्पकमालायां। प्रवेण्याम्। मे. भत्रिकं।

**ककुभ:।** पुं। अर्ज्जुनवृक्षे। प. मु.। वृषे।

**ककुभत्वक्।** स्त्री। अर्ज्जुनवृक्षवल्कले। च. द.। सि. यो. यक्ष्म. चि ककुभादौ।

**ककुभशाखा।** स्त्री। भार्य्याम्। रत्ना

**ककुभादनी।** स्त्री। नलीनामकगन्धद्रव्ये। श. च.।

**ककूणक:।** पुं, क्ली। शिशोर्नेत्रवर्त्मजरोगे। কেতো। हिं कोथुआह। लक्षणं यथा—"ककूणकक्षीरदोषाक्षिशूनामक्षिवर्त्मनि। जायते तेन तन्नेत्रं कण्डूरञ्च स्रवेन्मुहु:। शिशु: कुर्य्याल्ललाटाक्षिकूटनासावघर्षणं। शक्तो नार्कप्रभां द्रष्टुं न वर्त्मोन्मीलनक्षम:॥ मा. बालरो. नि.। ककूणकं क्षीरदोषाक्षिशूनामक्षिवर्त्मनि। जायते सरुजं नेत्रं कण्डूरञ्च स्रवेन्मुहु:॥ भा. म. ४भ.।

**ककूल (क) म्।** क्ली, पुं। गोशकृदादिचूर्णसन्तापे। वा. टी. भरत:। अपूपपचनार्थं मृण्मयपात्रे। "ककूलं शङ्कुभि: कीर्णे स्वभ्रे ना तु तुषानल:। तेन च मृण्मयमुत्तानमपूपपचनपात्रं लक्ष्यते"। वा. टी. हेमा।

**ककेरुक:।** पुं। कृमिभेदे। See कृमि:।

**कक्कोल: (क:)।** पुं, क्ली। (Possibly the fruit of cocculus indicus.) काकोलीतिख्याते सुगन्धद्रव्यभेदे। काँकला। हिं शीतलचिनि। तत्पर्य्याय:,—कक्कोल: (राज.), कोशफलं कोलकं कोषफलं फलं (अ.), कोरक (मे), काकोलं गन्धव्याकुलं तैलसाधनं (श), कृतफलं कटुकफलं द्वेष्य स्थूलमरिचं कक्कोलं माधवोचितं



कट्फलं कालं मरिचं। गुणा:—"कक्कोल: कटुकी हृद्य: सुगन्धि: कफवातजित्।" राज. अनुलिपे.। कटुतिक्तोष्णं मुखजाड्यहरं दीपनं पाचनं रुच्यञ्च। रा. नि. व. १२। "कक्कोलं कोलकं प्रोक्तं तथा कोषफलं स्मृतं। कक्कोलं लघु तीक्ष्णोष्णं तिक्तं हृद्यं रुचिप्रदं। आस्यदौर्गन्ध्यहृद्रोगकफवातामयान्ध्यहृत्।" भा. म.। च. द. यक्ष्म. चि. लवङ्गादौ, माता ३ रति:। गन्धशट्यां। च. द. वा. व्या. एकादशशतिकप्रसारणीतैले।

**कक्खट:।** त्रि। कठिने। पुं। खटिकायाम्। थड़ीगाटी, फुलथड़ि। अम.।

**कक्खटपत्रक:।** पुं। (Corchorus olitorius.) वृक्षविशेषे। পাট গাছ, কোষ্টা। तत्पर्य्याय:,—पट्ट: राजशण: शाणि: चिमि:। शब्दमा.। तच्छाकगुणा:—मधुरं दुर्जरं गुरुपाकि च। राज. शा. व.।

**कक्खटी।** स्त्री। खटिकायाम्। थड़ि। त्रिका. शैलव.।

**कगित्थ:।** पुं। कपित्थके। अ. टी.।

**काङ्क:।** पुं। महाराजचूते। रा. नि. व. १९। चन्दने। पक्षिविशेषे। কাঁক পাখি, হাড়গেলা। मे. कद्विकं। हारा.। तत्पर्य्याय:,—लोहपृष्ठ: (अ), सन्दंशवदन: खर: रणालङ्करण: क्रूर: आमिषप्रिय: (रा), अरिष्ट: कालपृष्ठ: किंसारु: लोहपृष्ठक: (ज), दीर्घपाद: दीर्घपात् (शब्दर.) कमलच्छद: कोलपुच्छ: (हे.) महाराजचूत: (रा.)। गुणा:—वृष्यो वीर्य्यविवर्द्धन: कफहर: कङ्कस्तथा भासक:। अत्रि. २२ अ.।

**कङ्कट: (क:)।** पुं। कदरे। खदिर। हारा।

**कङ्कटेरी।** स्त्री। हरिद्रायाम्। वै. निघ.।

**कङ्कणम्।** क्ली। हस्तभूषणे। तत्पर्य्याय:,—करभूषणं (अ.), कौन्तकं (शब्दर.), हस्तसूत्रं मण्डनं शेखर (वि.)। वै. निघ.।

**कङ्कत:।** पुं। वृक्षविशेषे। শেয়াকুল, বঁইচী। वै. निघ. २भ. अतिसा. पथ्ये। क्ली। केशमार्ज्जने। কাঁকুই। हला.। तत्पर्य्याय:,—प्रसाधनी (अ.), कङ्कती कङ्कतं प्रसाधनं (अ. टी.) केशमार्ज्जनं (ज.) फणि: फणिका (शब्दर.)। गुणा:—धूलीजन्तुमलकण्डूशिरोरोगघ्नम्। "कङ्कती कान्तिजननी कण्डूघ्नी मूर्द्धरोगजित्। केशप्रसादनी केश्या रजोजन्यमलापहा॥" राज.।

**कङ्कति(ती)का।** स्त्री। केशप্রসाधनार्थद्रव्ये। চিরুণি। কাঁকুই। अम.। अतिबलायाम्। नागबलायां। গোরক্ষচাকুলিয়া। भा. पू. १भ. गु. व.।

**कङ्कलोट: (टि:)।** पुं। स्वनामख्यातमत्स्ये। কাঁকিলা মাছ। त्रिका.। हारा.। जटा.। खलिशमत्स्ये। খলিশা মাছ। श. र.। तत्पर्य्याय:, जलव्याध: (त्रि) जलसूचि:। (ज.)

**कङ्कदम्।** क्ली। सुवर्णे। वै. निघ.

**कङ्कपुरीषम्।** क्ली। कङ्कविष्ठायां। इदं व्रणदारणम्। सु. सू. ३६ अ.।

**कङ्कभोजन:।** पुं। अर्जुनवृक्षे।

**कङ्कमुख:।** पुं, क्ली। सन्दंशे। সাঁড়াশী। हे. च.। "शल्यं प्रगृह्योद्धरते च यस्मात् यन्त्रेष्वत: कङ्कमुखं प्रधानम्।" सु. सू. ७अ.।

**कङ्करम्।** क्ली। कञ्जरे। তক্রবিশেষ। हे. च.। त्रि। कुत्सिते।

**कङ्कराल:।** पुं। पिस्ता इति प्रसिद्धे वृक्षे। পেস্তা গাছ। वै. निघ.।

**कङ्करोल:।** पुं। (Alangium hexapetalum.) निकोचकवृक्षे। আঁকোড় গাছ। अ. च.। लताविशेषे। কাঁকরোল।

**कङ्कलोद्यम्।** क्ली। चिञ्चोटकमूले। চেঁচ্কো চিঞ্চোড়মূল। राज.।

**कङ्कशत्रु:।** पुं। पृश्निपर्ण्याम्। श. च.।

**कङ्कशाय:।** पुं। कुक्कुरे। श. मा.।

**कङ्का।** स्त्री। गोशीर्षचन्दने, पद्मगन्धे। "गोशीर्षचन्दनं कृष्णताम्रमुत्पलगन्धिकम्। कङ्का" श. मा.।

**कङ्काल:।** पुं। शरीरास्थिनि। समुदितशरीरास्थिसङ्घाते तन्मांसरहिते। अ. टी. भ। तत्पर्य्याय:—करङ्क: अस्थिपञ्जर:। (वै.)।

**कङ्कावीजम्।** क्ली। गोशीर्षचन्दनवीजे। योग. रत्न. उ. ख. केशरपाके।

**कङ्किरातम्।** क्ली। कुरुण्टके। বক্তঝাঁটী। हला.।

**कङ्कु:।** पुं। कङ्गुतृणे। द्विरूपकोष:।

**कङ्कुष्ठ(क)म्।** क्ली। हिमवत्पादशिखरजे हरितालवत्पाषाणविशेषे। वुषिम इति। र. सा. सं.। पार्व्वतीयमृत्तिकाविशेषे। तत्पर्य्यायः,—कालकुष्ठं विरङ्गं रङ्गदायकं रेचकं पुलकं शोधिकं कालपालकं। भेदगुणाः—"कङ्कुष्ठञ्च द्विधा प्रोक्तं तारहेमाभकन्तथा। कटूष्णं कफवातघ्नं रेचकं व्रणशूलहृत्॥" रा. नि. व. १३। तथा हिमवत्पादशिखरे कङ्कुष्ठमुपजायते। तत्रैकं रक्तकालं स्यात्तदन्यदण्डकं स्मृतम्॥ पीतप्रभं गुरु स्निग्धं श्रेष्ठं कङ्कुष्ठमादिशेत्। श्यामं पीतं लघु त्यक्तसत्वं नेष्टं तथाण्डकं।" शोधनं शङ्खशब्दे मृग्यम्। भा. पू. १भ.।

**कङ्केरुः।** पुं। काकविशेषे। वकपक्षिणि त्रिका.।

**कङ्केलः (लिः)(ल्लिः)।** पुं। अशोके। हला.। रा. नि. व. १०। त्रिका.।

**कङ्केल्लः।** पुं। वास्तूकशाके। श. मा.।

**कङ्केल्लिः।** पुं। अशोकवृक्षे। हे. च.।

**कङ्कोल(क)म्।** क्ली। स्वनामख्यातसुगन्धपण्यद्रव्ये। शीतलचिनीति लोके। भा.। गुणाः—कटुतिक्तोष्णं मुखजाड्यहरं दीपनं पाचनं रुच्यं कफवातघ्नं। रा. नि. व. १२। लघु तीक्ष्णं हृद्यं हृद्रोगान्ध्यताहरञ्च। भा. पू. १भ.। "कङ्कोलकफलं पृक्का"। अभावे जातीपुष्पं, तदभावे लवङ्गम्। भा. म. ४भ. कर्णारी. चि. सामान्याञ्जने। "शुण्ठी कङ्कोलकास्य...।"

**कङ्कोलकी (तिक्ता)।** स्त्री। कङ्कोलवृक्षे। कड़वी कङ्कोलीति पश्चिमदेशे। गुणाः—"तिक्तकङ्कोलकी ग्राहिण्युष्णा रुचिकरी मता। मलावष्टम्भकरणी पित्तला चाग्निदीपनी। कफ प्रमेहं कुष्ठञ्च जन्तूंश्चैव विनाशयेत्॥ वै. निघ.।

**कङ्गः (कः)।** पुं। क्लोम्नि। हे. च.।

**कङ्गुः।** पुं, स्त्री। (Panicum Italicum.) प्रियङ्ग्वपरनामधेये तृणधान्यविशेषे। कांनि धान वा दाना। तैं फ्रेंकणयुचेट्टु, कोद्रलु। प. मु.। तत्पर्य्यायः,—प्रियङ्गुः (अ.) कङ्गूः प्रियङ्गूः (अ. टी.)। श्वेतपीतकृष्णरक्तभेदाच्चतुर्धा। भग्नसन्धानी वृंहणी गुरुश्च। वा. टी. हे. धान्यव.। धातुशोधनी पित्तश्लेष्मघ्नी रूक्षा वातवर्द्धकापुष्टिकरी गुरुः भग्नसन्धानकरी च। राज.। मधुरः रूक्षः कषायः स्वादुः शीतलः वातकृत्पित्तदाहघ्नः रूक्षः भग्नसन्धानकृच्च। रा. नि. व. १६। "कङ्गुधान्यं धातुवृद्धिकरं वातकरं गुरु। अस्थिसन्धानकृद्रूक्षमश्वानाञ्च हितावहम्। कफघ्नञ्च गुणाधिक्यं पीतं मुनिभिरीरितम्॥" वै. निघ.। "स्त्रियां कङ्गूः प्रियङ्गू द्वे कृष्णा रक्ता सिता तथा। पीता चतुर्व्विधा कङ्गूस्तासां पीता वरा स्मृता। कङ्गुस्तु भग्नसन्धानवातकृद्वृंहणी गुरुः। रूक्षा श्लेष्महरातीव वाजीनां गुणकृद्भृशम्॥" भा.।

**कङ्गुका।** स्त्री। कङ्गौ। प्रियङ्गौ। रत्ना.।

**कङ्गुणिका (णी)।** स्त्री। महाज्योतिष्मतीलतायां। रा. नि. व. ३। कङ्गुणीनामतृणधान्ये। कामिनी धान। रा. नि. व. १६।

**कङ्गुणीपत्रः (त्रा)।** पुं, स्त्री। पण्यन्धानामतृणविशेषे। रा. नि. व. ८।

**कङ्गुनी।** स्त्री। प्रियङ्गौ। कङ्गुणीधान्ये। रा. नि. व. १६।

**कङ्गुनीका।** स्त्री। कङ्गुनीधान्ये। चक्र।

**कङ्गुलः।** पुं। हस्ते। श. च.।

**कङ्गूः।** स्त्री। कङ्गुधान्ये। अ. टी.।

**कचः।** पुं। बालके। वाला। भा. म. १भ. तन्द्रिक. ज्व. चि.। "मरिचकचपचम्पचावचारुक्।" रा. नि. व. १८। केशे। अम.। शुष्कव्रणे। मे. चद्विकं। वर्स्मे। जटा.।

**कचङ्गलः।** पुं। समुद्रे। त्रिका.।

**कचटम्।** क्ली। कच्चटशाके। भा. पू. १भ.। तृणे। पत्रे। उणा.।

**कचदग्धिका।** स्त्री। अलाब्वाम्। लाउ।

**कचद्रावी।** पुं। अम्लवेतसे। प. मु.।

**कचपक्षः।** पुं। केशसमूहे। अम.।

**कचमालः।** पुं। धूमे। हारा.।

**कचरिपुफला।** स्त्री। महाशमीवृक्षे। बड़ शाँइ गाछ। रा. नि. व. ८।

**कचहस्तः।** पुं। केशसमूहे। अम.।

**कचा।** स्त्री। हस्तिन्याम्। मे. चद्विकं।

**कचाकुः।** पुं। विलेशये। सर्पे। मे. कत्रिकं।

**कचाटुरः।** पुं। पक्षिविशेषे। डहुक। दात्यूहपक्षिणि। त्रिका.।



**कचामोदम्।** क्ली। ह्रीवेरे। वाला। रा. नि. व. १०।

**कची।** स्त्री। कुचायिवीजे। रस. र. बाल. चि.।

**कचुः।** स्त्री। An esculent root, (Arum colocasia and other kinds.) स्वनामख्यातवृक्षे। कचु गाछ।

**कचूरकम्।** क्ली। कच्चूरे। कचु। वै. निघ. २भ. अर्श. चि. पिपीलिकातैले।

**कचेरुकः।** पुं। कशेरौ। केशुर। र. मा.।

**कचोरः।** पुं। कर्चूरे। वे. निघ. २भ. अर्श. चि. भल्लातक-हरीतक्यां।

**कचोरा।** स्त्री। शालिधान्यविशेषे। सा पित्तघ्नी। भलि. १५ अ.।

**कच्चटम्।** क्ली। जलपिप्पल्याम्। कँाचड़ा।

**कच्चरम्।** क्ली। तक्रे। मे. रत्रिकं। त्रि। मलिने।

**कच्चूरः।** पुं। कचुनामककन्दशाके। कचुगाछ।

**कच्चोरम्।** क्ली। शट्याम्। प. मु.।

**कच्चोरकः।** पुं। गन्धशट्याम्। चक्र.।

**कच्छः (कः)।** पुं। जलप्रायदेशे। काछाड़। See अनूपः। तुन्नकद्रुमे। तून् गाछ। मे. छद्विकं। नन्दीवृक्षे। परिधानाञ्चले। काँचा। हे. च.। जलप्रान्ते। अम.।

**कच्छकाण्डनः।** पुं। अश्वत्थभेदे। गय्ना अश्वथ।

**कच्छ(च्छा, च्छो)टिका।** स्त्री। कच्छे। काछा, कोँचा। श. र.।

**कच्छपः।** पुं। स्वनामख्यातजन्तुविशेषे। काछिम शुन्दि, काठा, वारकोल। मं कांसव। तत्पर्य्यायः,—कूर्म्मः कमठः (अ.), क्रोड़पादः चतुर्गतिः दौलेयः (हे.), गूढ़ाङ्गः धरणीधरः कच्छेष्टः पल्वलावासः कठिनपृष्ठकः (रा.) माषादः पञ्चगुप्तः क्रोड़ाङ्गः (शब्दर.), जलविल्वः (च.), उङ्गटः (मे.), क्रोड़ाङ्घ्रिः पञ्चाङ्गगुप्तः (त्रि.), पञ्चनखः गुह्यः पीवरः जलगुल्मः (ज.)। एतन्मांसगुणाः—वातहरं शुक्रदं चक्षुष्यं बल्यं मेधास्मृतिकरं पथ्यं शोषघ्नञ्च। तच्चर्म्म पित्तहरं। तत्पादः कफघ्नः। तदण्ड स्वादु वाजीकरञ्च। रा. नि. व. १९। "कच्छपी मधुरः स्वादुः शुक्रवृद्धिकरी मतः। वातश्लेष्मप्रशमनी वृंहणी रूक्ष एव च।" अत्रि. २२अ.। नन्दीवृक्षे। तुँद गाछ। रा. नि. व. १२। मदिरायन्त्रे। श. च.। श्लेष्मजन्यतालुरोगविशेषे। तत्र कूर्म्मवदुत्सन्नोऽवेदनः नातिशीघ्रोऽतिशीघ्र जायते। "कूर्म्मोत्सन्नोऽवेदनोऽशीघ्रजन्मा रोगो ज्ञेयः कच्छपः श्लेष्मलः स्यात्।" भा. म. ख. ४भ. मुखरो. चि.।

**कच्छपयन्त्रम्।** क्ली। औषधपाकयन्त्रविशेषे। लक्षणं—"जलपूर्णपात्रमध्ये दत्त्वा खर्परन्तु विस्तीर्णं। तदुपरि रसविह्निः स्थाप्यः सूतो मृदः कुण्ड्याम्॥ लवुलौहकोटरिकया कृतपटुमृत्सन्धिलेपमास्थाय। देया तदुपरि सिकता चैकाङ्गुलिपरिमाणापि॥ तत् खर्परं पूर्य्यं चाङ्गारकवनोपलैनोपचितम्॥" अत्रि.। "जलपूर्णपात्रमध्ये कृत्वा पुटकर्परं सुविस्तीर्णं। तदुपरि विड़मध्यगतः सूतः स्थाप्यः कोष्ठ्यां॥ लघुलौहकटोरिकया कृतपटुमृत्सन्धिमाच्छाद्य। पूर्णान्तरपुटखर्परमध्ये अङ्गारैः खदिरकाष्ठभवैः॥ स्वेदनतो मर्द्दनतः कच्छपयन्त्रस्थितो रसो जयति।" इदमेव कच्छपयन्त्रं आकण्ठभूनिवेशितं जलपत्तनिकामुखस्थितशरावे दत्त्वा रसमन्येन प्रक्षीणवदनेन सर्व्वमाच्छाद्य उपरि सिकताभिरङ्गुलिमानेनाच्छाद्य भूमिभागैः कुक्कुटपुटादधः कच्छपयन्त्रोऽयमीरिता।

**कच्छपिः।** पुं। क्षुद्ररोगे। तालुरोगे।

**कच्छपिका।** स्त्री। विषमुष्टी। महानिम्बे। रा. नि. व. ४। कृष्णनिर्गुण्ड्याम्। वै. निघ.। वातश्लेष्मजन्य - प्रमेहपिटकानाम - क्षुद्ररोगविशेषे। ग्रन्थयः पञ्च वा षड् वा दारुणाः कच्छपोन्नताः। कफानिलाभ्यां पिड़का ज्ञेया कच्छपिका बुधैः॥" इति। निदा.।

**कच्छपी।** स्त्री। क्षुद्ररोगे। मे. पत्रिकं। कच्छपिकायाम्। मादि काछिम्। अम.।

**कच्छपोलिः (का)।** स्त्री। जलवेतसे। वै. निघ.।

**कच्छरा।** स्त्री। दुरालभायाम्। के.।

**कच्छरुहा।** स्त्री। दूर्व्वायाम्। जटा.। नागरमुस्तायां। "नागरोत्था कच्छरुहा।" रा. नि. व. १३।

**कच्छलकारकः।** पुं। काशतृणे।

**कच्छा।** स्त्री। भद्रमुस्तायाम् श्वेतदूर्व्वायाम्। चीरि (ड़ि) कायां। झिँझिँ पोका। वाराहीकन्दे। मे छद्विक।

**कर्षु:** । पुं । करीषाग्नौ । जीविकायाम् । मे. षद्विकं ।

**कर्षू:** । स्त्री । अभ्यन्तरप्रमसेसङ्कीर्णमुखे स्वाव-विशेषे । च.सू.१४अ. । करीषाग्नौ । वै.निघ. । नदीमात्रे । र. ।

**कर्षूस्वेद:** । स्वेदविशेषे । लक्षणं यथा—"स्वान-वेच्छयनस्याधः कर्षूं स्थानविभागवित् । दीप्तैर-धूमैरङ्गारैः तां कर्षूं पूरयेत्ततः । तस्यामुपरि शय्यायां स्वपन् स्विद्यति ना सुखम् ॥" च. सू. १४अ. ।

**कल:** । पुं । शालवृक्षे । শালগাছ । रा.नि. व.९ । क्ली । शुक्रे, रेतसि । मे. लद्विकं । बदरीगुल्मे । वै.निघ.२भ.संग्रहणी- चि. व्योषादि-चूर्णे । त्रि । अजीर्णे । मे. ।

**कलक:** । पुं । शकुलमत्स्ये । हे.च. । वेतसवृक्षे ।

**कलकण्ठ:** । पुं । हंसे । पारावते । कोकिले । मे.ठचतुष्कं । शुकपक्षिणि । টেঁয়া পাখী । प.मु. । हंसे । कलध्वनौ ।

**कलकफल:** । पुं । दाडिमवृक्षे ।

**कलकल:** । पुं । सर्ज्जनिर्यासे । धुनो । मे. लचतुष्कं ।

**कलघण्टा** । स्त्री । श्यामालतायाम् ।

**कलघण्टिका** । स्त्री । कृष्णशारिवायाम् । শ্যামালতা । भा.पू.१भ. । See अनन्ता ।

**कलघोष:** । पुं । कोकिले । श.र. ।

**कलङ्क:** । पुं । लौहमले । কীট । अपवादे । मे.कत्रिकं । मत्स्यभेदे । वै.निघ. । चिह्ने । দাগ ।

**कलङ्कष:** । पुं । सिंहे । श.मा. ।

**कलङ्की** । त्रि । लौहमलयुक्ते ।

**कलङ्कुर:** । पुं । आवर्त्ते । त्रि. ।

**कलज:** । पुं । कुक्कुटे । वै.निघ. ।

**कलजात:** । पुं । कलमशालौ । কলমা ধান ।

**कलञ्ज:** । पुं । ताम्रकूटे । দোক্তা তামাক, খর্ষান তামাক । हिं तामाकू, सुरती । धूमपर्णी-धूमपानगुणाः—"कलञ्जसंवेष्टनधूमपानात् स्याद्दन्त-शक्तिस्स्वरोगहानिः । कफघ्नमामज्वरहानिकृच्च नाऽर्ज्जसिद्धापचरेण कर्त्तव्यम् ॥ इति विष्णुसिद्धान्त-सारावल्यां । संख्याविशेषे यथा—"सपादो मोष्यते गुञ्जा सा तिस्रोरूपकं भवेत् । रूपकैश्चतुर्भिः प्रोक्तः कलञ्जो नाम नामतः ।" युक्तिकल्पद्रुमः । वेत-लतायाम् । विषास्त्रहतमृगपक्षिणोः ।.त्रिका. ।

**कलटम्** । क्ली । गृहाच्छादने । চাল ।

**कलतूलिका** । स्त्री । कामुकायाम् । त्रि. ।

**कलत्रम्** । क्ली । श्रोण्यौ । रा.नि.व.१८ । भार्य्यायाम् । मे. रत्रिकं । भगे । त्रिका. ।

**कलधूतम्** । क्ली । रौप्ये । रूपा । रा.नि. व.१३ ।

**कलधौतम्** । क्ली । रजते । রূপা । स्वर्णे । সোণা । रा.नि.व.१२ ।

**कलध्वनि:** । पुं । मयूरे । पारावते । कोकिले । मे. नचतुष्कं ।

**कलन:** । पुं । वेतसे । বেতগাছ । । रा.नि.व. ९ । क्ली । एकमासिकगर्भे । गर्भवेष्टने । हला. ।

**कलनाद:** । पुं । कलहंसे । वै.निघ. ।

**कलन्धु:** । पुं । घोलीशाके । रा.नि.व.७ ।

**कलभ:** । पुं । पञ्चवर्षपर्य्यन्तकरिशावके । उष्ट्रे । हला. । धुस्तूरवृक्षे । रा.नि.व.१० ।

**कलभवल्लभ:** । पुं । पीलुवृक्षे । रा.नि.व.११ ।

**कलभवल्लभा** । स्त्री । पिक्यां । रा.नि.व.२३ ।

**कलभी** । स्त्री । चञ्चुचुपे । रा.नि.व.४ ।

**कलम: (शालि:)** । पुं । शालिधान्यविशेषे । বোওয়া ধান । रा.नि.व.१६ । मगधादिषु प्रसिद्धे धान्यविशेषे । কলমা ধান । स एव महातण्डुल इति काश्मीरदेशे ख्यातः । "कलमः कालविख्यातः जायते स बृहद्वने । काश्मीरदेश एवोक्तो महा-तण्डुल एव च ॥" भा. । कलमकः । के. । कलामकः । हे. । गुणाः—अयं महती शीत-गुणाः स्वादुपाकरसत्वादियुक्तश्च । वा.सू.६अ. । हेमाद्रि· धान्यवर्गे । पित्तघ्न श्कारः वृष्यः मधुरश्च । रा.नि.व. १६ । कलमोऽस्रक्त्रिदोषघ्नश्च चुष्यश्च कषायवान् । राज. ३प. ।

**कलमा** । स्त्री । शालिधान्ये । सा च श्लेष्मपित्त-हा । अन्या च लघुः पथ्या वातश्लेष्मवर्द्धिनी च । अत्रि.१६अ. ।

**कलमोत्तम: (मा)** । पुं. स्त्री । सुगन्धशाली । रा. नि. व, १६ ।



**कलम्ब: (क:)** । पुं । कदम्बवृक्षे । विश्वः । शाक-नाडिकायाम् । अम. । शरे । मे. बत्रिकं । सर्षपे । धाराकदम्बे । কেলিকদম্ । रा.नि.व.९ ।

**कलम्बकम्** । क्ली । कालीयके । পীতচন্দন । কলম্বা ।

**कलम्बशालि:** । पुं । शालिधान्यविशेषे । কলমা ধান ।

**कलम्बिक:** । पुं । पक्षिविशेषे । চটক পক্ষী । वै.निघ. ।

**कलम्बिका** । स्त्री । कलम्बीशाके । কলমী-শাক । श.र. । ग्रीवापश्चान्नाड्याम् । हे.च. ।

**कलम्बिकी** । स्त्री । पक्षिणीभेदे ।

**कलम्बी** । स्त्री । Convolvulus repens. स्वनामख्यातजलजशाकविशेषे । কলমীশাক । हिं करेंवु । तें तीमेबच्चलिचेट्टु । प.मु. । तत्-पर्य्याय;,—कलम्बी कलम्बूः कलम्बिका । शब्दर. । गुणाः—स्तन्यदुग्धशुक्रश्लेष्मकरत्वं मधुरत्वं कषायत्वं गुरुतरत्वञ्च । राज.३प. । "कलम्बी स्तन्यदा प्रोक्ता मधुरा शुक्रकारिणी ॥" भा. । उपोदक्याम् । পুঁইশাক । रा.नि.व. ७ ।

**कलम्बु: (म्बू:)** । पुं, स्त्री । कलम्बीशाके । श. र. । See कलम्बी ।

**कलम्बुका** । स्त्री । जलजशाकविशेषे । কলমী-শাক । भैष.शूलचि, शम्बुकादिगुडी ।

**कलम्बुटम्** । क्ली । हैयङ्गवीने । नवनीते । हारा. ।

**कलम्बू:** । स्त्री । कलम्ब्याम् । श. ।

**कलयञ्ज:** । पुं । सर्जरसे । धुनो । वै.निघ. ।

**कलरव:** । पुं । गृहपारावते । अम. । कोकिले । रा.नि.व.१९ । वनकपोते । वै.निघ. ।

**कलल:** । पुं । जरायौ । क्ली । मिश्रित-शुक्र-शोणितरूपगर्भे ।

**कललज:** । पुं । राले । धुना । रा.नि.व.१२ ।

**कललजोद्भव:** । पुं । शालवृक्षे । रा.नि.व.९ ।

**कलविङ्क:** । पुं । चटकपक्षिणि । अम. रत्ना.९ । कलिङ्गकवृक्षे । पारावते । ग्राम्यचटके । मे. कचतुष्कं । कृष्णचटके । सु.सू.४६अ. । श्वेत-चामरे

**कलश: (स:)** । पुं । द्रोणपरिमाणे । ৩২সের । जलपात्रविशेषे । घटे । प.प्र.१ख. । तत्पर्य्याय:— घटः, कूटः, निपः (अः), कलसं, कलसिः, कलशी, कलशं (भ.टी.), कुम्भः करीरः (हे.) ।

**कलशि: (शी)** । स्त्री । पृश्निपर्ण्याम् । চাকু-লিয়া । रत्ना. ।

**कलसि: (सी)** । स्त्री । Hemionitis cordifolia. पृश्निपर्ण्याम् । চাকুলিয়া । प.मु. । रा.नि.व.४। सु.सू.३८अ. सि.यो । च.द.ज्व.चि.किरा-तादौ । यक्ष्म.चि.बलाद्यघृते । वा.चि.१अ. । "कोल-सूक्ष्माम्लकलसी ।"

**कलसिका** । स्त्री । पृश्निपर्ण्याम् । भे. । कलसे । के. ।

**कलह:** । पुं । मुष्कग्राम् । हिं मुष्कीरी । वा.सू. सुरसादिव. ।

**कलहंस:** । पुं । राजहंसे । कादम्बे । বালি-হাঁস । रत्ना. । "पक्षैराधूसरैर्हंसाः कलहंसा इति स्मृताः ।" हला. । पीतवर्णहंसे । जलकुक्कुटे । वै.निघ. । तत्पर्य्याय;,—कादम्बः (ख), कलनादः मरालकः (रा.) ।

**कलहंसकम्** । क्ली । अरोचकाधिकारे कवल-मानम् । अस्य कवले धृते मुखवैशद्यं रुचिश्च भवति । च.द.अरो.चि. । "अष्टादशशिग्रुपलानि दश मरिचानि विंशतिश्च पिप्पल्यः । आर्द्रकपलं गुड़पलं प्रस्थत्रयमारनालस्य । विड़लवणार्द्धपलमेतत् खजाहतं सुरभिगन्धाढ्यं । व्यञ्जनसहस्रघाति ज्ञेयं श्लेष्मघ्नं मुखशुद्धिकृत् ।" रस.र. ।

**कलह:** । पुं । खड्गे । मे. ।

**कलहनाशन:** । पुं । कुटजवृक्षे । पूतीकरञ्जे । নাটা । श.मा. ।

**कलहप्रिया** । स्त्री । सारिकायां । শালিক পাখী । रा.नि.व.१९ ।

**कलहाकुला** । स्त्री । शारिकायाम् । वै.निघ. ।

**कला** । स्त्री । त्रिंशत्काष्ठात्मके कालपरिमाणे । सु.सू.६अ. । क्षीरजसि । Cellular tissue and fascia of the body. शरीरप्रत्यङ्ग-विशेषे । ताः सप्त—मांसधरा (शिरास्नाय्वादि-स्थाने), रक्तधरा (मांसान्तःशिराः यकृत्प्लीहानौ च), मेदोधरा (सूक्ष्मास्थिपरिसरक्तपिच्छिलपदार्थ),

श्लेष्मधरा (सन्धिस्थानेषु श्लेष्मवत्पिच्छिलपदार्थेषु), पुरीषधरा (या पक्वाशयस्थाहारजन्यमलरचिणी), पित्तधरा (यत्र भुक्तद्रव्याणि आमाशयात्पक्वाशयं प्राप्य तिष्ठति), शुक्रधरा (सर्व्वकायव्यापिनी)। सु.शा.५अ.। कलास्वरूपं—"स्नायुभिश्च प्रतिच्छन्नान् सन्ततांश्च जरायुना। श्लेष्मणा वेष्टितांश्चापि कलाभागांस्तु तान् विदुः। धात्वाशयान्तरे धातोर्यः क्लेदस्त्वधितिष्ठति। देहोष्मणाभिपक्वश्च सा कलेत्यभिधीयते॥" भा.म.१भ.। वाजिनो जङ्घापार्श्वभागे। ज.द.२अ.। मनःशिलायाम्। चन्द्रपोड़शांशे। वृद्धौ। त्रिका.। अंशे। मे.लद्विकं।

**कलाकरः**। पुं। वृक्षविशेषे।

**कलाकुलम्**। क्ली। विषे। रा.नि.व.६।

**कलाङ्कुरः**। पुं। The bird Ardea Sibirica. सारसपक्षिणि। त्रिका.।

**कलाङ्गुलिः**। पुं। शालिधान्यविशेषे। च.सू. २७अ.।

**कलाचिका (ची)**। स्त्री। प्रकोष्ठे। कफोणेरधो मणिबन्धपर्य्यन्ते। हे.च.। अश्वस्य जानुनोऽधिमे भागे। ज.द.२अ.।

**कलाजाजी**। स्त्री। कारव्याम्। कृष्णजीरके। कालजीरे। हिं कलौंजी मङ्गरैला।

**कलाटकः**। पुं। गरुड़शाली। रा.नि.व.१६।

**कलाटीनः**। पुं। The white water-wagtail. खञ्जनपक्षिणि। हारा.।

**कलादः**। पुं। स्वर्णकारे। त्रिका.।

**कलाधिकः**। पुं। कुक्कुटे।

**कलानुनादी (न्)**। पुं। कलविङ्के। चटके। चातके। भ्रमरे। मे.नत्रिकं।

**कलापः**। पुं। मयूरपुच्छे। हला.। संहतौ। काञ्च्याम्। मे.पत्रिकं। क्ली। पद्मवीजे। वंशवीजे। वै.निघ.।

**कलापकः**। पुं। करिकण्ठबन्धे। हे.च.।

**कलापिन् (पी)**। पुं। मयूरे। हला.। कोकिले। प्लक्षवृक्षे। पाकुड़ गाछ। मे.नचतुष्कं।

**कलापिनी**। स्त्री। नागरमुस्तायाम्। नागर मूथा। रा.नि.व.६। र.मा.।

**कलामकः**। पुं। कलमधान्ये। हे.च.।

**कलायः**। पुं। (Pisum sativum.) Name of various leguminous seeds. मटर इति ख्याते शिम्बीधान्ये। र.मा.। माषकापरनामधेये शिम्बीधान्यविशेषे। वाँटुला मटर, তেওড়া মটর। हि. केराव। तें पेद्दचर्व्व। तत्पर्य्यायः,—सतीलकः, हरेणुः खण्डिकः (क), त्रिपुटः, अतिवर्त्तुलः (र), मुण्डचणकः, शमनः, नीलकः, कण्टी, सतीलः, सतीनः हरेणुकः, सतीनकः। स द्विविधः—त्रिपुटो वर्त्तुलश्च। गुणाः—अतिवातलः। वा. सू. शिम्बीधान्यव.। पित्तकफघ्नः शीतः कषायः रुचिपुष्टिप्रदः आमदोषकरश्च। रा.नि.व.१६।

**कलायकः**। पुं। कलमशाली। कलमा धान। रा.नि.व.१६। गुणाः—"किञ्चित्कषाया मधुराः प्रदिष्टा रक्तप्रशान्तिं जनयन्ति बल्याः। किञ्चित् सवातं विनिघ्नन्ति पित्तं कलायका मुद्गसमानरूपाः।" अत्रि.१५अ.।

**कलायका**। स्त्री। मत्स्याक्ष्यां। हिञ्चे। गण्डदूर्व्वायां। वै.निघ.।

**कलायखञ्जः (खण्डः)**। पुं। वायुरोगभेदे। लक्षणम्—"कम्पते गमनारम्भे खञ्जन्निव च लक्ष्यते। कलायखञ्जं तं विद्यान्मुक्तसन्धिप्रबन्धनम्॥" सु.नि.१अ.। "क्रमः कलायखञ्जस्य खञ्जपङ्गोरिव स्मृतः। विशेषात् स्नेहनं कर्म्म कार्य्यमत्र विचक्षणैः॥"

**कलायशाकम्**। क्ली। शाकविशेषे। हिं केराउशाक। गुणाः—"कलायशाकं भेदि स्याल्लघु तिक्तं त्रिदोषजित्"। भा.पू.१भ.शाकव.। "कलायशाकं पित्तघ्नं कफघ्नं वातलं गुरु। कषायानुरसञ्चैव विपाके मधुरञ्च तत्॥" सु. सू. ४६अ.।

**कलायसूपः**। पुं। कलायकृतयूषे। गुणाः—"कलायसूपः कथितो लघु ग्राही सुशीतलः। रूक्षो मेध्यः पाककाले स्वादुस्तगदपित्तजित्। अरोचकहरश्चासौ कफनाशकरो मतः॥ वै.निघ.।

**कलाया**। स्त्री। गण्डदूर्व्वायाम्। श्वेतदूर्व्वायाम्। শ্বেতদূর্ব্বা। रा.नि.व.८। कृष्णचणके। কাল ছোলা। प.मु.।

**कलारुहा**। स्त्री। स्वर्णकेतकीवृक्षे। रा.नि.व.१०।

**कलालापः**। पुं। भ्रमरे। रा.नि.व. ९।

**कलाविकः**। पुं। कुक्कुटे। त्रिका.।



**कलाविकलः**। पुं। चटके। श.र.।

**कलाविङ्कः**। पुं। कलविङ्कपक्षिणि। के.।

**कलिः**। पुं। विभीतकवृक्षे। भा.म.३भ.मेद.चि.। स्त्री। कलिकायाम्। मे.लद्विकं। श्वेतधुस्तूरके। भल्लातकवृक्षे। वै.निघ.।

**कलिकः**। पुं। क्रौञ्चपक्षिणि। কোঁচবক। वंशधान्यभेदे। বাঁশের ধান।

**कलिका**। स्त्री। वृश्चिकाल्याम्। বিছাতিগাছ। रा. नि. व. ९। शरपुङ्खायाम्। पुष्पकोरके। कृष्णनीलिकायाम्। वै. निघ.। पुष्पविशेषे। কলকে ফুল।

**कलिकारः**। पुं। धूम्याटपक्षिणि। ফিঙে। पीतमस्तकपक्षिणि। करञ्जवृक्षे। मे.। जलपिप्पल्याम्। वै. निघ.।

**कलिकारकः**। पुं। पूतिकरञ्जे। लट्वाकरञ्जे। নাটাকরঞ্জ। अम.।

**कलिकारिका**। स्त्री। लाङ्गलीवृक्षे। विषलाङ्गलिया। वै. निघ.। तत्पर्य्यायः,—वह्निवक्त्रा (भा), लाङ्गली हलिनी गर्भपातिनी दीप्ता विशल्या अग्निमुखी हली नक्ता इन्द्रपुष्पिका विद्युज्ज्वाला अग्निजिह्वा व्रणहृत् पुष्पसौरभा स्वर्णपुष्पा वह्निशिखा इन्दुपुष्पिका।

**कलिकाशितम्**। क्ली। अशोके। कै.।

**कलिकोत्तमः**। क्ली, पुं। लवङ्गे। गन्धशाली।

**कलिङ्ग(क)म्**। क्ली। इन्द्रयवे। च. द. पि. ज्व. कलिङ्गादि.। कलिङ्गं कट्फलं मुस्तं पाठा तिक्तकरोहिणी" च.द. ज्वराति. चि.। श.र.। "दारुपाठाकलिङ्गकम्।"

**कलिङ्गः(कः)**। पुं। प्लक्षवृक्षे। পাকুড় গাছ। कुटजवृक्षे। কুড়চি গাছ। शिरीषवृक्षे। रा. नि. व. ९। इन्द्रयवे। रत्ना. ९। र. सा. सं. शि. यो. रात्रिज्वरे। कलिङ्गकस्तामलकी। शि. यो. पिप्पल्यादिघृते। पूतिकरञ्जे। पक्षिविशेषे। ফিঙা। मे. गत्रिकं। वा. चि. १अ.। तरम्बुजे। তরমুজ। गुणाः—मधुरः शीतलो वृष्यो बल्यः पित्तदाहघ्नः सन्तर्पणः, वीर्य्यकरश्च। रा. नि. व. ७। चातकपक्षिणि। हला.। विभीतकवृक्षे। त्रिका.।

**कलिङ्गजः**। पुं। इन्द्रयवे। वै. निघ.।

**कलिङ्गद्रुः**। पुं। कुटजवृक्षे। भा. म. १भ. कास. चि.। "कलिङ्गद्रुफलं रजः।"

**कलिङ्गयवः**। पुं। इन्द्रयवे। च. द.। शि. यो. लवणोत्तमाद्यचूर्णे।

**कलिङ्गवीजम्**। क्ली। इन्द्रयवे। रा. नि. व.९।

**कलिङ्गशुण्ठी**। स्त्री। तद्देशज-शुण्ठीविशेषे। गुणाः—तिक्ता बलकरी अग्निदीपनी अजीर्णहरी बालकातिसारघ्नी। सा यवक्षारयुक्ता गर्भिण्या वान्तिं हरेत्। अत्रि.।

**कलिङ्गा**। स्त्री। कर्कटशृङ्ग्याम्। र. मा.। श्वेतत्रिवृतायाम्। श. च.।

**कलिङ्गादिकषायः**। पुं। "कलिङ्गकाः पटोलस्य पत्रं कटुकरोहिणी" इत्येतद्द्रव्यकृतकषाये। स च सन्ततादीनां शमनः। वा. चि. १अ.। कषायोऽयं पित्तज्वरघ्नः। च. द. पित्तज्व. चि.।

**कलिङ्गाद्यगुड़िका**। स्त्री। ज्वरातिसारे। पाठः—"कलिङ्गविल्व(निम्ब)जम्ब्वाम्रकपित्थं सरसाञ्जनं। लाक्षा हरिद्रे ह्रीवेरं कट्फलं शुकनासिका। लोध्रं मोचरसं शङ्खं धातकी वटशुङ्गकं। पिष्ट्वा तण्डुलतोयेन वटकानक्षसम्मितान्। छायाशुष्कान् पिबेत्...॥ इन्द्रयवादीनां प्रत्येकं समभागं गृहीत्वा तण्डुलोदकेन विमर्द्य वटी कार्य्या छायायां शोषणीया च। शुकनासिका श्योणाकत्वक्। च. द. भैष.। चर्म्मकषेति केचित्। "जलमष्टगुणं दत्त्वा पलं कण्डिततण्डुलात्। भावयित्वा ततो ग्राह्यं तण्डुलोदककर्म्मणि॥" प. प्र. ३प.।

**कलिञ्जः**। पुं। कुलिञ्जने। वै. निघ. २भ. जिह्वकज्व. चि.। कटे। মাদুর।

**कलितरुः**। पुं। विभीतकवृक्षे। वै. निघ. स्वरभेदचि.।

**कलिद्रुः(मः)**। पुं। सरलदेवदारौ। भल्लातकवृक्षे। विभीतकवृक्षे। रा. नि. व.११, भा.म.१भ. कण्ठकुब्ज. ज्व. चि.। "किरातकटुकाकणाः कुटजकण्टकारीशटीकलिद्रुकलिमाभयाः।"

**कलिन्दः**। पुं। सूर्य्ये। विभीतकवृक्षे। रा. नि. व. २३। भेलकवृक्षे। सरलदेवदारौ। वै. निघ.।

**कलिन्दकः**। पुं। कर्कारौ। तरम्बुजे। वै निघ.।

**कलिप्रदः**। पुं। मद्यशालायाम्। व. निघ.।

**कलिप्रियः** । पुं । वानरे । श. र. ।

**कलिफलम्** । क्ली । विभीतकफले । च. द. ।

**कलिमः** । पुं । शिरीषवृक्षे । वै. निघ. ।

**कलिमारः (कः)** । पुं । पूतिकरञ्जे । काण्टकवति करञ्जे । अ. टी. र. ।

**कलिमालः (ल्यः)कः** । पुं । पूतीकरञ्जे । नाटाकरञ्ज । रा. नि. व. ९ ।

**कलियुगालयः** । पुं । विभीतकवृक्षे । भा. पू. १भ. ।

**कलियुगावासः** । पुं । विभीतकतरौ । भा. ।

**कलिवृक्षः** । पुं । विभीतकवृक्षे । हे. च. ।

**कलिसोदरा** । स्त्री । अस्थिसंहारिणी नाम लतायाम् । हाड़योड़ा ।

**कलिहारी** । स्त्री । लाङ्गल्याम् । विषलाङ्गलिन्नां । हिं करिहारी । भा. पू. १भ. । वै. निघ. वा. व्या. महाविषगर्भतैले ।

**कली** । स्त्री । कलिकायाम् । अ. टी. भ. ।

**कलुः** । पुं । गरुड़शालौ । पक्षिराज धान्य । रा. नि. व. १६ ।

**कलुक्का** । स्त्री । उल्कायाम् । मदिरागृहे ।

**कलुषः(षा)** । पुं, स्त्री । महिषे । रा. नि. व. १९ । मण्डलिसर्पे । सु. कल्प. ४अ. । See सर्पः ।

**कलुषमञ्जरी** । स्त्री । जिङ्गिन्याम् । वै. निघ. ।

**कलेवरम्** । क्ली । शरीरे । रा. नि. व. १८ ।

**कलोद्भवः** । पुं । कलमशालौ । कलमा धान । रा. नि. व. १६ ।

**कल्कः (ल्कम्)** । पुं, क्ली । रसपिष्टद्रव्यपिण्डे । जले बाटा द्रव्य । यत्पिण्डं रसपिष्टानां तत्कल्कं परिकीर्त्तितम् । च । मध्वादिपेषितद्रव्ये । "कल्को मध्वादिपेषितैः ।" रा. नि. व. २० । तस्य मात्रा कर्षमिता । तत्र मधुघृततैलमात्रा द्विगुणा, सिता-गुड़ं समं, द्रवाश्च चतुर्गुणाः ग्राह्याः । प. प्र. १ ख. । घृततैलादिशेषे । मे. कद्विकं । घृततैलादिपाके दृषदि पेषिते देयद्रव्ये । "द्रव्यमार्द्रं शिलापिष्टं शुष्कं वा जलमिश्रितं । तदेव सुरिभिः पूर्व्वैः कल्क इत्यभिधीयते ॥" प. प्र. १ख. । द्रव्यमार्द्रं शिलापिष्टं शुष्कं वा सजलम्भवेत् । प्रक्षिप्य गालयेद्वस्त्रे तन्मात्रकर्षसम्मितम् ॥ भा. । "यः पिण्डश्चार्द्रपिष्टानां स कल्क इति कीर्त्तितः । तद्वैवार्द्रः साक्षात्कल्को दृषदि पेषितः ॥ मात्रा पिचुमिता तत्र द्विगुणं माक्षिकादिकम् । सितां गुड़ं समं दद्याद्द्रवा देयाश्चतुर्गुणाः ॥" इति कल्कविधिः । कर्णमले । श. र. । तुरुष्कनामगन्धद्रव्ये । शिलारस । रा. नि. व. १२ । See सिह्लकः । विष्ठायाम् । किट्टे । मे. कद्विकं । करिदन्ते । वै. निघ. ।

**कल्कफलः** । पुं । दाड़िमवृक्षे । रा. नि. व. ११ ।

**कल्करोधः** । पुं । पट्टिकारोध्रे । रा. नि. व. ६ ।

**कल्किवृक्षः (धर्म्मघ्नः)** । पुं । विभीतकवृक्षे । रा. नि. व. ११ ।

**कल्पः** । पुं । विधौ । रोगमुक्तौ । कल्पवृक्षे । रा. नि. व. २० । क्ली । मद्ये ।

**कल्पकः** । पुं । नापिते । श. मा. । नर्च्चूरे । भा. पू. १भ. ।

**कल्पतरुः** । पुं । कल्पवृक्षे । क्रमुकवृक्षे । रा. नि.व.११ । तन्नामकज्वरघ्नरसे । पाठः—"रसं गन्धं विषं ताम्रं समभागं विचूर्णयेत् । भावयेत् पञ्चभिः पित्तैः क्रमशः पञ्चवासरम् ॥ निर्गुण्डी-स्वरसेनैव मर्द्दयेत्सप्तवासरम् । आर्द्रकस्य रसेनैव भावयेच्च त्रिधा पुनः ॥ सर्षपाभा वटी कार्य्या छायया परिशोषिता ।" जीर्णज्वरे विषमज्वरे च २१ वट्यः प्रयोज्याः । कज्जलीपिप्पलीयुतमुष्ण-जलं पाययेत् । शर्करया दधि देयं स्नापयेच्च । भैष. ज्व.चि. ।

**कल्पद्रुः (मः)** । पुं । कल्पतरौ । कृतमालारग्वध वृक्षे । সোণালু গাছ । वै.निघ. ।

**कल्पनम्** । क्ली । कृप्तौ । कर्त्तने । त्रिका. ।

**कल्पना** । स्त्री । हस्तिसज्जायाम् । अम. । रचनायाम् ।

**कल्पनी** । स्त्री । कर्त्तर्य्याम् । কাঁচি । हे.च. ।

**कल्पपादपः** । पुं । कल्पवृक्षे । विभीतकवृक्षे ।

**कल्पवृक्षः** । पुं । विभीतकवृक्षे । कल्पपादपे । अम. । रत्ना. ।

**कल्पा** । स्त्री । श्वेतमालतीवृक्षे । শ্বেতচামেলী । मद्ये । वै.निघ.

**कल्पाङ्गः** । पुं । पर्पटे ।

**कल्पान्तः** । पुं । प्रलयकाले । अम. ।

**कल्पितः** । पुं । सज्जित-हस्तिनि । मे. ।



**कल्यपम्** । क्ली । धापे । करपुच्छे । त्रिका. ।

**कल्माषः** । पुं । सुगन्धशालौ । रा.नि.व.१६ । कृष्णपाण्डुरवर्णे । कृष्णवर्णे । राक्षसे ।

**कल्यम्** । क्ली । सुरायाम् । रत्ना. । प्रभाते । मे. यद्विकं । मधुनि । हे.च. । त्रि । वाक्श्रुतिरहिते । नीरोगे । सु.चि.२६अ. । "कल्यसौदयवयसः ।" दक्षे । मे. यद्विकं ।

**कल्यजग्धिः** । स्त्री । प्रातर्भोजने । जटा. ।

**कल्यत्वम्** । क्ली । आरोग्ये । अ. ।

**कल्यद्रुमः** । पुं । विभीतकवृक्षे । वै.निघ. ।

**कल्यपत्रिका (त्री)** । स्त्री । रक्तापामार्गे । मे. । লাল আপাং ।

**कल्यवर्त्तः** । पुं । प्रातराशे । त्रिका. ।

**कल्या** । स्त्री । मद्ये । मे.यद्विकं । हरीतक्याम् । श.र. ।

**कल्याङ्गः** । पुं । पर्पटक्षुपे । ক্ষেৎপাপড়া । रा.नि.व.५

**कल्याणम्** । क्ली । सुवर्णे । सुखे । रा.नि.व. १२ । पुं । खर्जुरकुञ्जवृक्षे । শাল গাছ ।

**कल्याणकः** । पुं । पर्पटके । ক্ষেৎপাপড়া । वै.निघ. ।

**कल्याणगुड़ः** । पुं । यक्ष्माधिकारे । पाठः—"प्रस्थत्रयेणामलकीरसस्य शुद्धस्य दत्त्वार्द्धतुलां गुड़स्य । चूर्णीकृतैर्ग्रन्थिकजीरचव्यव्योषेभकृष्णा-हपुषाजमोदैः । विड़ङ्गसिन्धुत्रिफलायमानीपाठाग्नि-धान्यैश्च पलप्रमाणैः । दत्त्वा त्रिवृच्चूर्णपलानि चाष्टावष्टौ च तैलस्य पचेद् यथावत् । तं भक्षये-दक्षफलप्रमाणं यथेष्टचेष्टं त्रिसुगन्धियुक्तम् ।" पाकनियमः—आमलकीस्वरसाः १२श. इक्षुगुड़ाः ६।०श. यथाविधि एकत्र पचेत् । श्लिष्टप्राये पाके पिप्पलीमूलादीनां प्रत्येकं पलं (८तो.), त्रिवृच्चूर्णस्य शराव ८प.) तैलस्य च शरावं (८प.) प्रक्षिपेत् । तथा त्रिसुगन्धस्य पृथक् पलं मिश्रयेत् । तथा त्रिवृता तैलभर्ज्जिता देया इति वृद्धाः । प्रक्षेप-द्रव्याणि—पिप्पलीमूलं जीरकं चव्यं त्रिकटु गजपिप्पली हपुषा वनयमानी विड़ङ्गं सैन्धवं त्रिफला यमानी पाठा चित्रकमूलं धान्यकञ्च । च. द.यक्ष्म.चि. । रस.र. । भैष. ।

**कल्याणघृत(पानीय)म्** । क्ली । विषमघृते उन्मादे च । पाठः—"विड़ङ्गत्रिफलाव्यक्तानीदद्राव-हरेणवः । तालीशपत्रमञ्जिष्ठाकेशरोत्पलपद्मक । दाड़िम मालतीपुष्प रजन्यौ शारिवे स्थिरे । प्रियङ्गु-तगरं कुष्ठं बृहत्यौ चैलवालुकं । सचन्दनमवाक्षीभि-रेतैः सिद्धं विषापहं । सर्पिः कल्याणक । রাখালশশা, ত্রিফলা, রেণুক, দেবদারু, এলবালুক, শালপাণি, তগরপাদুকা, হরিদ্রা, দারুহরিদ্রা, অনন্তমূল, শ্যামালতা, প্রিয়ঙ্গু, নীলোৎপল, এলাচ, মঞ্জিষ্ঠা, দন্তী, দাড়িম, নাগেশ্বর, তালীশপত্র, বৃহতী, মালতীপুষ্প, বিড়ঙ্গ, চাকুলিয়া, কুড়, রক্তচন্দন, পদ্মকাষ্ঠ; প্রত্যেক ২ তো. ঘৃত ৩২ প. জল ১৬ শ. । एतच्च घृतं द्विगुणं जलं चतुर्गुणञ्च दुग्धं दत्त्वा यदा पचेत् तदा क्षीरकल्याणमुच्यते । सा.को.उन्मा. चि. । सु.कल्प.७अ. । भैष. । अन्यत् दाह्याधिकारे महत् कल्याणकं घृतम् । पाठः—"चतुर्गुणे शता-वर्य्या रसे क्षीरं चतुर्गुणं । सर्पिः प्रस्थं श्वाजाजी मञ्जिष्ठा पीवरी निशा । काकोल्यौ मधु मेदे । द्वे ऋद्धी द्वे देवदारु च । एषामष्टपलैः कल्कैः पचेत्कल्याणकं महत् ॥ ঘৃত ৪ শ. শতমূলীরস ১৬শ.দুগ্ধ ১৬শ । কল্ক—জীরা,শ্বেত বেলেড়া, মঞ্জিষ্ঠা, অশ্বগন্ধা, হরিদ্রা, কাকোলী, ক্ষীর-কাকোলী, যষ্টিমধু, মেদা, মহামেদা, ঋদ্ধি, বৃদ্ধি, দেবদারু । প্রত্যেকে ৮ তো. । रस.र. ।

**कल्याणलेहः** । पुं । वातव्याध्यधिकारे हिक्का-श्वासे च । पाठः—"सहरिद्रा वचा कुष्ठं पिप्पली विश्वभेषजं । अजाजी चाजमोदा च यष्टीमधुक-सैन्धवम् । एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत् । तच्चूर्णं सर्पिषालोड्य प्रत्यहं भक्षये-न्नरः । एकविंशतिरात्रेण भवेच्छ्रुतिधरो नरः ॥" अजाजी जीरके, अजमोदा यमान्याम्, यष्टी यष्टी-मधु, मधुकं मधुकपुष्पं । মউলফুল । च.द.वा. व्या. चि. । रस. र. । भैष. ।

**कल्याणबीजः** । पुं । मसूरवृक्षे । रा.नि.व.१६ ।

**कल्याणसुन्दराभ्रम्** । क्ली । राजयक्ष्मणि रसः । पाठः—"वज्राभ्रमेकपलिकं पुटनैः सुजीर्णं धात्री-पयोद-बृहती-शतमूलकैश्च । बिल्वाग्निमन्थ-जलवासक-कण्टकारी-श्योनाक-पाटलिबलाश्च रसै-रमीषाम् । सम्मर्द्दितं पलमितैः पृथगेकशश्च । गुञ्जासमा सुवलिता वटिका कृता च ।"..... জারিত অভ্র তোলা, আমলা, মুতা,

বৃহতী, শতমূলী, ইক্ষু, বিল্বপত্র, গণিরি, বালা, বাসকপত্র, কণ্টিকারী, শোণা, পারুল, বেলেড়া, প্রত্যেকের ১ পলমিত রসে মর্দ্দন। भैष.।

**काव्यायिका**। स्त्री। मनःशिलायाम्। रा.नि. व.१२।

**काव्यायिनी**। स्त्री। बलानामक्षुपे। বেলেড়া। रा.नि.व.४।

**काव्याणी**। स्त्री। रालवृक्षे। सर्जवृक्षे। वै. निघ.। गवि। रा. नि. व. १९। माषपर्ण्याम्। रा नि. व. ३। स्वर्णपत्रिकायाम्। সোণাপাতা। সোণামুখী।

**कल्लः**। त्रि। बधिरे। त्रिका.।

**कल्लता (त्वम्)**। क्ली। बाधिर्य्ये। स्वरभेदे। हे. च.।

**कवकः**। पुं। ग्रासे। कवले। हे. च.। क्ली.। छत्राके।

**कवचः**। पुं, क्ली। पर्पटके। "कवचः स्यात् पर्पटके।" रा. नि.व. ५। २३। वचा कवच-कच्छुरा ...।" गर्द्दभाण्डवृक्षे। गाञ्जीभाँट इति लोके। त्वचि। দারচিনি। भूर्जवृक्षे। नन्दी-वृक्षे। मे. चर्चिके।

**कवचनामकः**। पुं। पर्पटके।

**कवचपत्रम्**। क्ली। भूर्जपत्रे। श. च.।

**कवचाख्यः**। पुं। अश्वखुरे। नखीनामगन्धद्रव्ये।

**कवचीयन्त्रम्**। क्ली। औषधपाकार्थं यन्त्र-विशेषे। तद्यथा—"नातिक्रस्वां काचकूपीं न चातिमहतीं दृढ़ाम्। वाससा कर्द्दमाक्तेन परिवृत्य समन्ततः। संलिप्य मृद्धस्तत्राभिः शोषयेद्भानु-रश्मिना। निधाय भेषजं तत्र मुखमाच्छादयेत्ततः। कठिन्या दृढ़या वापि पचेद्यन्त्रे विधानतः। कवची-यन्त्रमेतद्धि रसादिपचने मतम्॥" आत्रेयः।

**कवटी**। स्त्री। कवाटे।

**कवड़ः**। पुं। कवले। गण्डूष। रत्ना.।

**कवड़ग्रहः**। पुं। कर्षे। २ দুই তোলা। प. प्र. १ख.। च. द. खदिरवटी।

**कवयिः (यी)**। स्त्री। (Coius coboius.) मत्स्यविशेषे। কই মাছ। तत्पर्य्यायः,—क्रकच-पृष्ठी (त्रि.)। कविका (भा.)। कवची (कै.)। गुणाः—मधुरा स्निग्धा कषाया रुच्या ईषत्पित्तकरी बल्या वातघ्नी च। भा.। हारा.।

**कवरः**। पुं, क्ली। कवर्य्याम्। वनतुलसी। त्रिका.। लवणे। अम्ले। मे.। हे. च.। सामुद्र-लवणे। र. मा.।

**कवरा (री)**। स्त्री। वर्व्वरायाम्। বাবুই। इति भाषा। श. र.। वनतुलस्याम्। अम.। वर्व्वरकवृक्षे। বাবনা গাছ। रक्तकरवीरे। मनःशिलायाम्। हिङ्गुपत्र्याम्। रा. नि. व. ६। केशविन्यासे।

**कवरीकः**। पुं। सुगन्धपत्रवृक्षविशेषे। দুলাল তুলসী। यथा—"कस्तूरिकाख्ये ड़गन्धः कवरीकः स्वनामकः।" इति द्रव्याभिधानम्। शब्दचन्द्रि। कै.। কাবরী ছোলা।

**कवरीकला**। स्त्री। मनःशिलायाम्।

**कवरीकूटकः**। पुं। कवर्य्याम्। त्रिका.।

**कवलः**। पुं। चिलिचिममत्स्ये। বেলে মাছ। श. च.। ग्रासे। रत्ना.। गण्डूषग्रहणे। কুলকুচা, কুল্ল করা। सा मात्रा या मुखे धृता सुखं सञ्चा-र्य्यते। "सुखं सञ्चार्य्यते या तु सा मात्रा कवले हिता॥" भैष.। See गण्डूषः।

**कवलग्रहः**। पुं। कर्षपरिमाणे। सु.। मुखे कवलस्य ग्रहो धारणम्। तस्य विधिर्यथा—"तत्र त्रिकटुकवचासर्षपहरीतकीकल्कमालोड्य तैलयुक्त-सुरामूत्रक्षारमधूनामन्यतमेन सलवणमभिप्रतप्तमुप-स्विन्नमर्दितं गलकपोलललाटप्रदेशे धारयेत्। तावच्च धारयितव्योऽनन्यमनसोन्नतदेहेन यावद्दोष-परिपूर्णकपोलत्वं नासास्रोतोनयनपरिस्रावश्च भवति, तदा विमोक्तव्यः पुनश्चान्यो गृहीतव्यः" इति। सु. चि. ४० अ.। गुणाः—"कवलः कुरुते काङ्क्षां भक्तेषु हरते कफम्। तृषां शोषञ्च वैरस्यं दन्तचालञ्च नाशयेत्॥" वै. निघ.। स चतुर्विधः—स्नेही प्रसादी शोधी रोपणश्चेति। तत्र वाते स्नेही स्निग्धोष्णैर्द्रव्यैः, प्रसादनो पित्ते स्वादुशीतैः। शोधनः कफे कट्वम्ललवणैः रूक्षोष्णैश्च। रोपणो व्रणे कषायतिक्तमधुरैः कटूष्णैश्च। तस्य मात्रा सा या सुखसञ्चारिणी भवेत्। "चतुर्धा कवलः स्नेही प्रसादी शोधिरोपणौ। स्निग्धोष्णैः स्नैहिको वाते स्वादुशीतैः प्रसादनः। पित्ते कट्वम्ललवणैः रूक्षोष्णैः



शोधनः कफे। कषायतिक्तमधुरैः कटूष्णैः रोपणो व्रणे। तथा, सुखं सञ्चार्य्यते या तु मात्रा सा कवले स्मृता॥" सु. चि. ४० अ.।

**कवलिका**। स्त्री। Bandage. व्रणबन्धना-र्थम् उदुम्बरादिवल्कले। सु. सू. १८अ.। चि. २अ.।

**कवलितः**। त्रि। वदरीवृक्षे। हला.।

**कवली**। स्त्री। भुक्ते। ज.।

**कवसः**। पुं। कण्टकगुल्मे।

**कवाटच(व)क्रम्**। क्ली। स्वनामख्यातवृक्षे। तें করাড়িয়া, কবাটবেটু। বেণ্টুআ इति च भाषा। र. मा.। तत्पर्य्यायः,—वक्रायं कपीत-वक्रः। अस्रजित्। र.।

**कवारम्**। क्ली। पद्मे। त्रिका.। पुं। (Tantalus falcinellus.) पक्षिविशेषे। করার পাখী। वै. निघ.।

**कविः (कम्)**। स्त्री, क्ली। खलीने। লাগাম।

**कविका**। स्त्री। केविकापुष्पवृक्षे। केरव इति कोङ्कणदेशे प्रसिद्धे। रा. नि. व. १०। तें पुष्प-विशेषम्, खलिने। हिं कड़िआली। লাগাম। कवयीमत्स्ये। तें मत्स्यविशेषम्। त्रिका.।

**कविञ्जुकः**। पुं। पक्षिविशेषे।

**कवि(गि)त्थः**। पुं। कपित्थवृक्षे। अ. टी.।

**कवियम्**। क्ली। खलीने।

**कविराजः**। पुं। वैद्ये। कविश्रेष्ठे।

**कवेलम्**। क्ली। उत्पले। नीलपद्मे। श. च.।

**कवोड़वक्रः**। पुं। कवाटवक्रवृक्षे। र. मा.।

**कवोष्णम्**। त्रि। ईषदुष्णे। अम.। क्ली। उष्ण-तायाम्।

**कशा**। स्त्री। अश्वादिताड़न्याम्। हे. च.। मांस-रोहिण्याम्। भा. पू. १भ. गु. व.।

**कशिका**। स्त्री। चर्म्मकषायाम्। চামরকশা। च. द. शू. वि. लौहामृते।

**कशिपुः**। पुं। भक्ते। वस्त्रे। रा. नि. व. २०।

**कशेरुः(रूः)कः**। पुं, क्ली। पृष्ठकीकसे। पृष्ठा-स्थिनि। পিঠের দাঁড়া। हला.। स्त्री। स्वनाम-ख्यातघासे। কেশুর। र. मा.। See कसेरुः।

**कशेरु(रू)कम्**। क्ली। कशेरुणि। কেশুর। प. मु.।

**कशेरु(रू)का**। स्त्री। पृष्ठास्थिनि। पृष्ठवंशे। रत्ना.। वै. निघ.। कशेरौ। কেশুর। अम.।

**कश्मलम्**। क्ली। मूर्च्छायाम्। मोहे। अम.। पापे। शब्दर.।

**कश्मीरजम् (न्म)**। क्ली, पुं। कुङ्कुमे। अ. टी. रा.।

**कश्यम्**। क्ली। मद्ये। पुं। अश्वे। मे. यद्विकं। कषार्हेऽश्वे। हे. च.। अश्वमध्यभागे। वै. निघ.।

**कश्यपः**। पुं। मत्स्यभेदे। विश्वः। मृगविशेषे। मे.।

**कषः**। पुं। कषपट्टिकायाम्। কষ্টিপাথর।

**कषणः**। पुं। शलाटौ। क्ली। कण्डूयने। त्रि। अपक्के। श. च.।

**कषपाषाणः**। पुं। स्वर्णमणौ।

**कषायः**। पुं। कपित्थवृक्षे। महासर्जवृक्षे। वै. निघ.। मण्डलिसर्पे। सु. कल्प. ४अ। Decoction of infusion. क्वथितैर्वस्तुभिः कृते क्वाथमात्रे। षोड़शगुणाम्भसा पक्वः चतुर्भागावशिष्टक्वाथः कषाय उच्यते। र. मा.। "पादशिष्टः कषायः स्याद् यः षोडशगुणाम्भसा।" भा.। अष्टभागावशिष्ट इति। शार्ङ्गः १अ.। कषायाः पञ्चविधाः स्वरसकल्क-क्वाथहिमफाण्टभेदेन यथोत्तरं लघवश्च भवन्ति। श्योणाकवृक्षे। শোণা গাছ। धरणिः। धववृक्षे। ধাওয়া গাছ। लकुचवृक्षे। ডেলো গাছ। रा. नि. व. ९। निर्यासे। विलेपने। अङ्गरागे। मे.। पुं, क्ली। An astringent flavour. षड्सा-न्यतमरसविशेषे। কষা। स पूगीफलादौ स्वाद्यः। रा. नि. व. २०। स च भूम्यग्निगुणबहुलः हिमगुरु-रूक्षः स्तम्भी शमनः ग्राही सुखशुद्धिजिह्वास्तम्भादि-कृत् तद्विपाकोऽपि कटुः, तद्विपाकगुणश्च वातकृत् कफपित्तघ्नश्च। दीपनः पाचनः शोफरोधकः शैथिल्यकरः अतिसेवितः पाण्डुं करोति च। यो वक्त्रं शोधयति जिह्वां स्तम्भयति कण्ठं बध्नाति हृदयं कर्षति पीड़यति स कषायकः। सु. सू. ४२अ.। अन्यच्च। कषायः शोषणः स्तम्भी व्रणपाकार्त्ति-नाशनः। कफशोणितपित्तघ्नो रूक्षः शीतो गुरु-स्तथा॥ राज.। वैषद्यं स्तम्भजाड्यैर्यो रसनं योजये-द्रसः। बध्नातीव च यः कण्ठं कषायः स विज्ञा-

शपि ॥ च. । अतियुक्तस्य तस्य गुणः—सोऽतियुक्तः शूलाध्मानहृत्पीड़ाक्षेपणादिकृत् । भा. । कषायस्य कल्पनं पञ्चविधम्—स्वरसकल्कशृतशीतफाण्टभेदेन एषाञ्च तथापूर्व्वं बलाधिक्यम् । च. सू. ४अ. । "क्षीरसः स्वरसः प्रोक्तः कल्को दृषदि पेषितः । क्वथितस्तु शृतः शीतः शर्व्वरीमुषितो मतः । क्षिप्तोष्णतोये मृदितः फाण्ट इत्यभिधीयते । पञ्चैतास्तु समुद्दिष्टाः कषायाणां प्रकल्पनाः ॥" प. प्र. १ख. । कषायपाकविधिः । "तत्र केचिदाहुः त्वक्पत्रमूलादीनां भागस्तच्चतुर्गुणजलमावाप्य चतुर्भागावशेषं निःक्वाथ्यापहरेत् । अथवा तत्रोदकद्रोणे त्वक्पत्रमूलादीनां तुलामावाप्य चतुर्भागावशिष्टं निःक्वाथ्यापहरेत् ।" सु. चि. ३१ अ. । त्रि । सुगन्ध । त्रिका. ।

**कषायकृत्** । पुं । रक्तलोध्रे । जटा. ।

**कषायजलम्** । क्ली । प्लक्षाश्वत्थोदुम्बरशिरीषवटसिद्धे जले ।

**कषायदन्तः (दशनः)** । पुं । मूषिकभेदे । अस्य शुक्रं यत्र पतति तत्र शोफकोथादयो जायन्ते । वा. उ. ३८अ. । सु. कल्प. ६अ. ।

**कषायनित्यः** । त्रि । नित्यमतिमात्रकषायरससेविनि । च. ।

**कषायफलम्** । क्ली । पूगफले । वै. निघ. ।

**कषाययावनालः** । पुं । तुवरयावनालधान्ये । जनारविशेष । रा. नि. व/ १६ ।

**कषाययोनिः** । स्त्री । कषायाधिकरणे । सा. च पञ्चधा—मधुरकषायः अम्लकषायः कटुकषायः तिक्तकषायः कषायकषायश्चेति । च. सू. ४अ. ।

**कषायवर्गः** । पुं । कषायरसद्रव्यगणे । कषा जिनिषेर वर्ग । त्रिफला शल्लकी जम्ब्वाम्रवकुलतिन्दुकफलानि न्यग्रोधादयम्बष्ठादिप्रियङ्ग्वादिलोध्रादिशालसारादीनि कतकशाकपाषाणभेदकवनस्पतिफलानि कुरवककोविदारकजीवन्तीचिल्लीपालङ्क्यासुनिषण्णादिनीवारकादयः मुद्गादयश्च समासेन कषायवर्गः । सु. सू. ४२ अ. ।

**कषायवृक्षः** । पुं । वटामलकादिकषायत्वक्फलवृक्षे । च. चि. ४अ. ।

**कषायस्कन्धः** । पुं । प्रियङ्ग्वादिकषायद्रव्यकृतास्थापनविशेषे । च. चि. ८अ. ।

**कषाया** । स्त्री । रक्तदुरालभायाम् । क्षुद्रदुरालभायाम् । रा. नि. व. ४ । कामातकैखर्ज्जूरीवृक्षे । वै. निघ. ।

**कषायी (इन्)** । पुं । सर्जवृक्षे । धूनार गाछ शालवृक्षे । रा. नि. व. ९ । जटा. । खर्ज्जूरीवृक्षे । খেজুর গাছ । लकुचवृक्षे । रा. नि. व. ११ । शाकवृक्षे । क्षुद्रपनसे । वै. निघ. ।

**कषिका** । स्त्री । पक्षिजातौ । उणा. ।

**कषेरुका** । स्त्री । कशेरुकायाम् । पृष्ठास्थि । च टी. रा. ।

**कष्टम्** । क्ली । पीड़ायाम् । हे. च. ।

**कष्टकारकः** । त्रि । पीड़ाकरे । त्रिका. ।

**कष्टस्थानम्** । क्ली । पीड़ाजनकस्थाने । हारा. ।

**कष्टिः** । स्त्री । पीड़ायाम् । वै. निघ. । कषपट्टिकायाम् । कै. ।

**कष्ठीरम्** । क्ली । रङ्गे । वङ्ग । रत्ना. ।

**कसका** । स्त्री । कासमर्द्दे । वै. निघ. २भ. कुलत्थाद्यघृते ।

**कसनम्** । क्ली । कासे । वेदनाविशेषे । च. द. र. पि. चि. ।

**कसनमर्द्दनः** । पुं । कासमर्द्दवृक्षे । कालकासन्दा । वै. निघ. ।

**कसना** । स्त्री । कृच्छ्रसाध्यलूताविशेषे । See लूता ।

**कसनोत्पाटनः** । पुं । वासकवृक्षे । বাকস গাছ । श. च. ।

**कसिपुः** । पुं । अन्ने । जटा. ।

**कसेरुः** । पुं, स्त्री । Back bone. पृष्ठास्थिनि । মেরুদণ্ড । रा. नि. व. १८ । मुस्तायाम् । 'कसेरुभद्रमुस्तके । रा. नि. व. ६।२३ । (Scirpus kysoor.) स्वनामख्यातवृक्षविशेषे । কেশুর । मं कं कसेरुवा । सेकिनगड्डे । तंगगड्डु । तें दुंपि, कौति । तत्र द्विविधं राजकसेरुकं चिञ्चोड़ञ्च । तयोः चिञ्चोड़ं मुस्ताकृति लघु च । सा. गुणाः—"कसेरुकद्वयं शीतं मधुरं तुवरं गुरु । पित्तशोणितदाहघ्नं नयनामयनाशनम् ॥" भा. । कषायः अल्पमधुरः कटुतिक्तकः रक्तपित्तघ्नः शीतः दाहश्रमघ्नः । रा. नि. व. ८ । पुष्पञ्चास्य कामवर्द्धकं पित्तनाशकरञ्च । वै. निघ. । गुरु विष्टम्भि शीतलञ्च । राज. ३ष. । च. क्र. ।



**कसेरुकः** । पुं । कसेरौ । नागरमुस्तके । सु. चि. ३७ अ. ।

**कसेरुका** । स्त्री । कसेरौ । কেশুর । रा. नि. व. ८ । पृष्ठास्थिनि । पृष्ठदण्ड । रा. नि. व. १८ ।

**कस्तीरम्** । क्ली । पिच्चटे । পিচুটি । वङ्गे । हे. च. ।

**कस्तीर्णम्** । क्ली । रङ्गे । राङ् । प. मु. ।

**कस्तु(स्तू)रिका (री)** । स्त्री । मृगनाभौ । মৃগনাভি । हिं कस्तूरी । तें कस्तूरिपिल्लि । तत्पर्य्यायः,—मदाढ्यः (त्रि.) । मृगनाभिजा । गन्धधूलिः (हे.) । मृगमदः । कस्तूरी (अ.) । मृगः । मृगी । नाभिः । मदः (भ) । अण्डजा (वि.) । कस्तुरिका । नाभि । लता । योजनगन्धा । मर्गः । गन्धबोधिका । कालाङ्गी । धूपसञ्चारी । त्रिशा । गन्धपिशाचिका (शब्दर.) वातामोदः । योजनगन्धिका (रभसः) । मदनी । गन्धकेलिका । वेधमुख्या । मार्ज्जारी । सुभगा । बहुगन्धदा । सहस्रवेधी । श्यामा । कामान्धा । मृगाण्डजा । कुरङ्गनाभिः । ललिता । श्यामला । मोदिनी । सा त्रिधा—कामरूपोद्भवा, नेपाली, काश्मीरी च । तत्र प्रथमा कृष्णा श्रेष्ठा च, द्वितीया नीलवर्णा मध्यमा च, शेषा अधमा । भा. । गुणाः—"कस्तूरी छर्द्दिदौर्गन्ध्यरक्तपित्तकफापहा । राज कटुः तिक्ता उष्णा शुक्रला गुरुः शीतघ्नी वातशोषहा सक्षारा चेति ।" भा । "चक्षुष्या मुखदोषघ्नी किलासकुष्ठघ्नी च ।" मद. । तथा "कपिला पिङ्गला कृष्णा कस्तूरी त्रिविधा क्रमात् । नेपालेऽपि च काश्मीरे कामरूपे च जायते ॥ साप्येका खरिका ततश्च तिलका ज्ञेया कुलित्थापरा पिण्डान्यापि च नायिकेति च परा या पञ्चभेदाश्रिता । सा शुद्धा मृगनाभितः क्रमवशादेषा क्षितौशोषिता पञ्चेत्यादिदिनत्रयेषु जनिता कस्तूरिका सूयते ॥ चूर्णाकृतिस्तु खरिका तिलकाभिलाभा कौलित्थबीजसदृशी च कुलित्थिका च । स्थूला ततः कियदियं किल पिण्डिकाख्या तस्याश्च किञ्चिदधिका यदि नायिका सा ॥" इति कस्तूरीनिकरलक्षणं । "स्वादे तिक्ता पिञ्जरा केतकीनां गन्धं धत्ते लाघवं तोलने च । यास्तु न्यस्ता नैव वैवर्ण्यमीयात् कस्तूरी सा राजभोग्या प्रशस्ता । अपि च या गन्धं केतकीनामपहरति मदं सिन्दुराणाञ्च वर्णं स्वादे तिक्ता कटुर्वा मधुरच तुलिता मर्द्दिता चिक्कणा स्यात् । दाहं वा नैति वह्नौ शिमिशिमिति चिरं चर्म्मगन्धा हुताशे सा कस्तूरी प्रशस्ता वरमृगतनुजा राजते राजभोग्या ।" इति कस्तूरीपरीक्षालक्षणम् । अन्यश्च "बाले जरति च हरिणे क्षीणे रोगिणि च मन्दगन्धयुता । कामातुरे च तरुणे कस्तूरी बहुलपरिमला भवति ।" कस्तूरीमृगलक्षणम् । या स्निग्धा धूमगन्धा बहलिविनिहिता पीततां पावकेऽन्तर्निःशेषं या निविष्टा भवति हुतवहे भस्मसादेव सद्यः । या च न्यस्ता तुलायां कलयति गुरुतां मर्द्दिता रूक्षताञ्च ज्ञेया कस्तूरिकेयं खलु कृतमतिभिः कृत्रिमा नैव सेव्या ॥" कृत्रिमकस्तूरीलक्षणम् । रा. नि. व. १२ । (री) धुस्तूरवृक्षे । वै. निघ. ।

**कस्तूरि(री)कः** । पुं । करवीरवृक्षे ।

**कस्तूरिमृगाण्डजः** । पुं । मृगनाभौ । रत्ना. ।

**कस्तूरीभैरवरसः** । पुं । शीताङ्गसन्निपाते रसः । "हिङ्गुलञ्च विषं टङ्कं जातीकोषफलं तथा । मरिचं पिप्पली चैव कस्तूरी च समांशिका… ॥ रत्तिद्वयं खादेत् ।" হিঙ্গুল, বিষ, সোহাগার খৈ, জায়ফল, জয়িত্রী, মরিচ, পিপুল, মৃগনাভি সমভাগ । জলে মর্দ্দন । र. सा. सं. । भैष. ज्व. चि. । बृहत् यथा—"मृगमदशशिसूर्य्यौ धातकी शूकशिम्बी रजतकनकमुक्ता विद्रुमौ लोहपाठाः । कृमिरिपुघनविश्वा वारितालाभ्रधात्र्यः रविदलरसपिष्टं कस्तूरीभैरवोऽयम् । आर्द्रकस्य रसैः पेयो विषमज्वरनाशनः । মৃগনাভি, কর্পূর, তামা, ধাইফুল, আলাকুশীবীজ, রূপা, সোণা, মুক্তা, প্রবাল, লোহ, আকনাদিমূল, বিড়ঙ্গ, মুতা, শুঁঠ, বালা, হরিতাল, অভ্র এবং আমলা সমভাগ । আকন্দপত্ররসে মর্দ্দন । মাত্রা ১ রতি । रस. र. ज्व. चि. । भैष. ।

**कस्तूरीमल्लिका** । स्त्री । मृगनाभौ । वै निघ. । मल्लिकापुष्पवृक्षभेदे (या मृगमदवासा भवति) । गुणैः वार्षिकादितुल्या । रा. नि. व. १० ।

**कस्तूरीमृगः** । पुं । Musk deer. मृगविशेषे । यस्याण्डे कस्तुरी जायते । वै. निघ. ।

**कस्तूरीमोदकः** । पुं । प्रमेहाधिकारे । पाठः —"कस्तूरी वनिता चन्द्रा त्रिफला जीरकद्वयम् । कदलीनां फले पक्व खर्ज्जूरं लवणीलकं । कोकि-

लाक्षस्य वीजञ्च माषमात्रं समं समं। यावन्त्येतानि चूर्णानि द्विगुणा सितशर्करा। धात्रीरसेन पयसा कुष्माण्डस्वरसेन च। विपचेत् पाकविद्वैद्यो मन्दमन्देन वह्निना।········। मात्रा अक्षमिता। अत्र वनिता प्रियङ्गुः, क्षुद्रा कण्टकारी, जीरकद्वयं जीरकं कृष्णजीरकं। सर्व्वचूर्णात् चतुर्गुणेन धात्र्यादि रसेन पचेत्। र. सा. सं.।

**कस्तूरीहरिणः**। पुं। मृगनाभिहरिणे। वै. निघ.।

**कस्यम्**। क्ली। सुरायाम्। हला.।

**कह्लवाम्**। क्ली। कह्लारे। শুন্দিফুল। भा. पू. १भ. गु. व.।

**कह्लारम्**। क्ली। (Nymphaea lotus.) कुमुदपुष्पे। শ্বেতশুন্দি, শাদা নাল, নীলশুন্দি, লালশুন্দি। तें कोद्दिगाएरगावुंड़ि वासनगलकलुव। तत्पर्य्यायः,—सौगन्धिकं (अ.)। रा. नि. व. १०। चि. क्रि. क. केशरपाके। "कह्लारपद्मोत्पलचन्दनाम्बु।" गुणाः—शीतलं ग्राहि विष्टम्भि गुरु रूक्षञ्च। भा. पू. १भ. पु. व.। कषायमधुरं शीतलं कफपित्तरक्तघ्नञ्च। राज.। "कह्लारं ग्राहि विष्टम्भि चातिशीतं तथा मतं। गुरु रूक्षं समुद्दिष्टम्।" वै. निघ.। रक्तोत्पले वृहत्पत्रके इति लोके। अन्ये तु सौगन्धिकोत्पलमाहुः। सु. क. ३९ अ.। ईषत् श्वेतरक्तकमले। कमलसाधारणे। वै. निघ.।

**कह्लाराद्यघृतम्**। क्ली। हृद्रोगाधिकारे। पाठः—"कह्लारमुत्पलं पद्मं कुमुदं मधुयष्टिका। पक्त्वाम्बुनाथ तत्क्वाथे जीवनीयोपकल्पिते। घृतं पक्वं नवं पीतं रक्तपित्तासगुल्मनुत्।" रस. र.।

**कह्वः**। पुं। वकपक्षिणि। अम.।

**कक्षः**। पुं। अङ्गाधःकोटरे। কাঁকবগল্। रत्ना.। सहिषे। लतायाम्। अम.। मे. षद्विकं। गुग्गुलौ। वै. निघ.। शुष्कतृणे। ध.। शुष्कवने। पापे। हे.। कच्छे। अरण्ये। गृहप्रकोष्ठे। पार्श्वे।

**कक्षधरमर्म्म**। क्ली। मर्म्मस्थानविशेषे। यत्र वैकल्यकारमर्म्मणां द्वयमधिवसति। यस्य च स्थानं वक्षःकक्षयोर्मध्यभागः। सु. शा. ६अ.।

**कक्षरुहा (क्षोत्था)**। स्त्री। नागरमुस्तायाम्। रा. नि. व. ६।

**कक्षाशयः**। पुं। कुक्कुरे। वै. निघ.।

**कक्षा**। स्त्री। वाह्लीमूले। रा. नि. व. १८। पित्तकोपजन्यक्षुद्ररोगविशेषे। কাঁক্‌বিড়ালি। लक्षणम्—"बाहुपार्श्वांसकक्षेषु कृष्णस्फोटां सवेदनां। पित्तप्रकोपसम्भूतां कक्षामित्यभिनिर्द्दिशेत्।" मा. नि. क्षुद्ररोग. चि.। तथा यज्ञोपवीतप्रतिमाः प्रभूताः पित्तानिलाल्लाजनिभास्तु कक्षाः।" च.। कक्षेति कक्षासन्नेषु प्रायोदेशेषु सामिलात्। वा. उ. ३१ अ.।

**कक्षान्तरे**। क्ली। अन्तर्गृहे। गर्भागारे।

**कक्षापटः**। पुं। कौपीने। हला.।

**कक्षोत्था**। स्त्री। भद्रमुस्तायाम्। हे.।

**कक्षाफलुः**। पुं। कृष्णोदुम्बरफले। কাকডুমুর। वै. निघ.।

**कक्ष्या**। स्त्री। वृहतिकायां। हे. च.। काञ्च्यां। हर्म्यप्रकोष्ठे। अम.। मध्ये। करिबन्धने। अ. टी. भ.। मे. यद्विकं। गुञ्जालतायाम्।

**कांश्य(स्य)नीलः**। पुं। मूषातुत्थे। हे. च.। तुत्थे। তুঁতে। प. मु.। तुत्थाञ्जने।

**कांसपात्रम्**। क्ली। आढ़कपरिमाणे। भा.।

**कांसिका**। स्त्री। मुद्गपर्ण्याम्। रा. नि. व. ३।

**कांसी**। स्त्री। सौराष्ट्रमृत्तिकायां। प. मु.। कांस्यधातौ।

**कांसीयम्**। क्ली। कांस्यधातौ। रा. नि. व. १३।

**कांस्य(क)म्**। क्ली। पानपात्रे। मे यद्विकं। White copper or brass, Queen's metal. ताम्ररङ्गयोरुपधातौ। কাঁসা। हिं कांसा। मं कं कंसे कंचु। भा.। तत्पर्य्यायः,—कंसं। कंसास्थि। ताम्रार्द्धं (त्रि.)। प्रकाशं। वङ्गशुल्वजं। विद्युत्प्रियं। घण्टाशब्दं। असुराह्वं (हे)। सौराष्टकं। घोषं। घोरघुष्यं। घोरपुष्पं। दीप्तिः। कांसं। "ताम्रं त्रपुजमाख्यातं कांस्यं घोषञ्च कंसकम्। उपधातुर्भवेत्कांस्यं द्वयोस्तरणिरङ्गयोः। कांस्यस्य तु गुणाः ज्ञेयाः स्वयोनिसदृशा जनैः। संयोगजप्रभावेन तस्यान्येऽपि गुणाः स्मृताः। कांस्यं कषायं तिक्तोष्णं लेखनं विशदं सरं। गुरु नेत्रहितं रुच्यं कफपित्तहरं परं॥" तच्छोधनम्—"पत्तलीकृत्य पत्राणि कांस्यस्याग्नौ प्रतापयेत्। निषिञ्चेत्तप्ततप्तानि तैले तक्रे च काञ्जिके। गोमूत्रे



च कुलत्थानां कषाये च त्रिधा त्रिधा। एवं कांस्यस्य रीतेश्च विशुद्धिः सम्प्रजायते॥" मारणविधिः—"अर्कक्षीरेण सम्पिष्टो गन्धकस्तेन लेपयेत्। समेन कांस्यपत्राणि शुद्धान्यम्लद्रवैर्मुहुः। ततो मूषापुटे धृत्वा पचेद्गजपुटेन च। एवं पुटद्वयात्कांस्यं रीतिश्च म्रियते ध्रुवम्॥" भा. पू. १भ.। शुद्धस्य गुणाः—"कांस्यन्तु तिक्तमुष्णञ्च चक्षुष्यं वातकफविकारघ्नं। रूक्षं कषायरुच्यं लघुदीपनपाचनं पथ्यम्॥ श्वेतं दीप्तं मृदुज्योतिः शब्दाढ्यं स्निग्धनिर्म्मलं। घनाग्निसहसूताङ्गं कांस्यमुत्तममीरितम्॥" रा. नि. व. १३।

**कांस्यनीलः**। पुं। नीलतुत्थे। तत्पर्य्यायः—मूषातुत्थं। हेमतारं। वितुन्नकं। हे.।

**कांस्यपात्रम्**। क्ली। आढ़कपरिमाणे। भा.। আটসের। कांस्यनिर्म्मित-पात्रसमूहे।

**कांस्यपिष्टीरसः**। पुं। पाण्डुधिकारे। पाठः—"सूतात्पञ्चार्कतश्चैकं कृत्वा पिष्टिं सगन्धकां। सूताम्रैः नागवल्ल्याश्च द्रवैः पिष्ट्वा प्रलेपयेत्। ताम्रपत्रौ प्रलिप्यैतां रुद्ध्वा गजपुटे पचेत्।" द्विगुञ्जं चूर्णेन सेव्यम्। र. चि. ९ अ.। পারা ৫ ভ. তামা ১৫. গন্ধক ৫ ভ.।

**कांस्यालुकम्**। क्ली। कासालुके। See कासालु।

**काकः**। पुं। वायसे। वायसभेदे। ডোমকাক। तत्पर्य्यायः,—करटः। अरिष्टः। बलिपुष्टः। सकृत्प्रजः। ध्वाङ्क्षः। आत्मघोषः। परभृत्। बलिभुक्। वायसः। वातजवः। बलः। दीर्घायुः। सूचकः। कृष्णः। ग्रामीनः। पिशुनः। कटखादकः। द्विकः। कागः (ज.)। गृहबलिभुक् (के.)। एकदृक्। अन्यभृत्। घूकारिः (हे.)। एकाक्षः (श.)। काणूकः (उ.)। कारवः। नगरीकः। परमृत्युः। शक्रजः। सत्यवाक् (त्रि.)। काणः। धूलिजङ्घः। निमित्तकृत्। कौशिकारिः। कौशिकारातिः। चिरायुः। मुखरः। खरः। महालोलः। चिरञ्जीवी। चलाचलः (रा.)। करटकः। नागवीरकः। गूढ़मैथुनः। लुण्टाकः। श्रावकः। सरः। शक्रजातः। यमदूतकः। मलभुक्। द्विककारः। अप्रहृष्टः। वातज्वरः (शब्दर.)। काटखदिरः (मे.)। एतौ प्रसहजातीयौ। तन्मांसगुणाः—क्षयहरं चक्षुष्यं वृंहणं लघु दीपनञ्च। रा. नि. व. ७। शोषरोगे हितः रसवीर्य्यविपाकेषु सिंहादिभिः समः। सु. सू. ४६ अ.। काकजङ्घायां। কাঁটাগুড়কাঁউনী। ज्योतिष्मत्याम्। লতাফট্‌কী। काकोल्यां। गुञ्जायाम्। कोकिले। वै. निघ.। पीठसर्पिणि। খোঁড়া। परिमाणभेदे। शिरःचालने। काकोदुम्बरवृक्षे। क्ली। काकसमूहे। मे. कद्विकं। काकमांसन्तु चक्षुष्यं लघु चाग्निप्रदीपनम्। धातुवृद्धिकरं बल्यं क्षतरोगं क्षयं हरेत्। कृष्णकाकस्य मांसन्तु ज्ञेयं काकसमं गुणैः॥ वै. निघ.।

**काककङ्गुः**। पुं। चीनक इति प्रसिद्धधान्ये। हे. च.। सर्ज्जरसे। वै. निघ.।

**काककर्कटी**। स्त्री। खर्जूरीवृक्षे। भा.।

**काककण्टकः**। पुं। जलचरपक्षिविशेषे। পানকৌড়ি। वै. निघ.।

**काककला**। स्त्री। काकजङ्घावृक्षे। কেউয়াঠেঙা। जटा.।

**काककुड्मलम्**। क्ली। नीलपद्मे। वै. निघ.।

**काककुष्ठम्**। क्ली। कङ्कुष्ठे।

**काकघ्नी**। स्त्री। महाकरञ्जवृक्षे। रा. नि. व. ९।

**काकचिञ्चा (ञ्चिः, ञ्ची)**। स्त्री। गुञ्जायां। কুঁচ। त्रिका.। रक्तगुञ्जायां। भा. प. १भ. गु. व.।

**काकच्छदः (दिः, र्दिः)**। पुं। खञ्जनपक्षिणि। श. र.। चाषपक्षिणि। নীলকণ্ঠপাখী। त्रिका.।

**काकजङ्घा**। स्त्री। गुञ्जायां। र. मा.। (Leea hirta.) स्वनामख्यातक्षुपे। কেউয়াঠেঙা, কাঁটা গুড়কাঁউনী। मसीति पाश्चात्ये। र. मा.। तत्पर्य्यायः,—काकाङ्गी। काकाञ्ची। काकनासिका (शब्दर.)। काका (मे.)। काकनासा। काकफला (ज.)। कृषीवलः (र.)। काकाङ्गा (अ. टी.) ध्वाङ्क्षजङ्घा। काकाह्वा। सुलोमशा। पारावतपदी। दासी। नदीकान्ता। सा चतोपयोगिनी च। गुणाः—तिक्तोष्णा कृमिव्रणकफापहा बाधिर्य्यघ्नी अजीर्णघ्नी जीर्णविषमज्वरनाशिनी। रा. नि. व. ४। "काकजङ्घाजटा निद्रां जनयेच्छिरसि स्थिता। हिमा कषाया तिक्ता कफपित्तघ्नी ज्वरपित्तास्रव्रणकण्डूविषकृमिघ्नी च।" भा. पू. १भ.। "एतद्बन्धनं एकाहिकज्वरे हितम्।" च. द. ज्व. चि.।

लाचस्य वीजस्य माषमात्रं समं समं। यावन्त्येतानि चूर्णानि द्विगुणा सितशर्करा। धात्रीरसेन पयसा कुष्माण्डस्वरसेन च। विपचेत् पाकविद्वैद्यो मन्दमन्देन वह्निना।········। मात्रा अचमिता। अत्र वनिता प्रियङ्गुः, चुद्रा कण्टकारी, जीरकद्वयं जीरकं कृष्णजीरकं। सर्व्वचूर्णात् चतुर्गुणेन धात्र्यादि रसेन पचेत्। र. सा. सं.।

**कस्तूरीहरिणः**। पुं। मृगनाभिहरिणे। वै. निघ.।

**कस्यम्**। क्ली। सुरायाम्। हला.।

**काह्लवाम्**। क्ली। कह्लारे। शुन्दिफूल। भा. पू. १भ. गु. व.।

**कह्लारम्**। क्ली। (Nymphaea lotus.) कुमुदपुष्पे। শ্বেতশুন্দি, শাদা নাল, নীলশুন্দি, লালশুন্দি। ते कोट्टिगाएरगावुड़ि वासनगलकलुव। तत्पर्य्यायः,—सौगन्धिकं (अ.)। रा. नि. व. १०। चि. क्रा. क. केशरपाके। "कह्लारपद्मोत्पलचन्दनाम्बु।" गुणाः—शीतलं ग्राहि विष्टम्भि गुरु रूचञ्च। भा. पू. १भ. पु. व.। कषायमधुरं शीतलं कफपित्तरक्तघ्नञ्च। राज.। "कह्लारं ग्राहि विष्टम्भि चातिशीतं तथा मतं। गुरु रूचं समुद्दिष्टम्।" वे. निघ.। रक्तोत्पले वृहत्पत्रके इति लोके। अन्य तु सौगन्धिकोत्पलमाहुः। सु. रु. ३९ अ.। ईषत् श्वेतरक्तकमले। कमलसाधारणे। वै. निघ.।

**कह्लाराद्यघृतम्**। क्ली। हृद्रोगाधिकारे। पाठः—"कह्लारमुत्पलं पद्मं कुमुदं मधुयष्टिका। पक्काम्बुनाथ तत्क्वाथे जीवनीयोपकल्पिते। घृतं पक्वं नवं पीतं रक्तपित्तासृगुल्मनुत्।" रस. र.।

**काह्वः**। पुं। वकपक्षिणि। अम.।

**कक्षः**। पुं। अङ्गाधःकोटरे। কাঁকবগল্। रत्ना.। सहिषे। लतायाम्। अम.। मे. षट्कं। गुग्गुल्नौ। वै. निघ.। शुष्कतृणे। ध.। शुष्कवने। पापे। हे.। कच्छे। अरण्ये। गृहप्रकोष्ठे। पार्श्वे।

**कक्षधरमर्म्म**। क्ली। मर्म्मस्थानविशेषे। यत्र वैकल्यकारमर्म्मणां द्वयमधिवसति। यस्य च स्थानं वक्षःकक्षयोर्मध्यभागः। सु. शा. ६अ.।

**कक्षरुहा (क्षोत्था)**। स्त्री। नागरमुस्तायाम्। रा. नि. व. ६।

**कक्षशय**ः। पुं। कुक्कुरे। वै. निघ.।

**कक्षा**। स्त्री। वाह्नीमूले। रा. नि. व. १८। पित्तकोपजन्यक्षुद्ररोगविशेषे। কাঁকবিড়ালি। लक्षणम्—"बाहुपार्श्वांसकक्षेषु कृष्णस्फोटां सवेदनां। पित्तप्रकोपसम्भूतां कक्षामित्यभिनिर्द्दिशेत्।" मा. नि. क्षुद्ररोग. चि.। तथा यज्ञोपवीतप्रतिमाः प्रभूताः पित्तानिलाल्लाजनिभास्तु कक्षाः।" च.। कक्षेति कक्षासन्नेषु प्रायोदेशेषु सम्भवात्। वा. उ. ३१ अ.।

**कक्षान्तरे**। क्ली। अन्तर्गृहे। गर्भागारे।

**कक्षापटः**। पुं। कौपीने। हला.।

**कक्षोत्था**। स्त्री। भद्रमुस्तायाम्। हे.।

**कक्षाफलुः**। पुं। कृष्णोदुम्बरफले। কাকডুমুর। वै. निघ.।

**कक्ष्या**। स्त्री। वृहतिकायां। हे. च.। काञ्च्यां। हर्म्यप्रकोष्ठे। अम.। मध्ये। करिबन्धने। अ. टी. भ.। मे. षट्कं। गुञ्जालतायाम्।

**कांश्य(स्य)नील**ः। पुं। मृषातुत्थे। हे. च.। तुत्थे। তুঁতে। प. मु.। तुत्थाञ्जने।

**कांसपात्रम्**। क्ली। आढ़कपरिमाणे। भा.।

**कांसिका**। स्त्री। मुद्गपर्ण्याम्। रा. नि. व. ३।

**कांसी**। स्त्री। सौराष्ट्रमृत्तिकायां। प. मु.। कांस्यधातौ।

**कांसीयम्**। क्ली। कांस्यधातौ। रा. नि. व. १३।

**कांस्य(क)म्**। क्ली। पानपात्रे। मे यद्विकं। White copper or brass, Queen's metal. ताम्ररङ्गयोरुपधातौ। কাঁসা। हिं कांसा। म. कं कंसे कंचु। भा.। तत्पर्य्यायः,—कंसं। कंसास्थि। ताम्रार्द्धं (वि.)। प्रकाशं। वङ्गशुल्वजं। विद्युत्प्रियं। घण्टाशब्दं। असूराह्वं (हे)। सौराष्टकं। घोषं। घोरघुष्यं। घोरपुष्पं दीप्तिः। कांसं। "ताम्रं त्रपुजमाख्यातं कांस्यं घोषञ्च कंसकम्। उपधातुर्भवेत्कांस्यं द्वयोस्तरणिरङ्गयोः। कांस्यस्य तु गुणाः ज्ञेयाः स्वयोनिसदृशा जनैः। संयोगजप्रभावेन तस्यान्येऽपि गुणाः स्मृताः। कांस्यं कषायं तिक्तोष्णं लेखनं विशदं सरं। गुरु नेत्रहितं रुचं कफपित्तहरं परं॥" तच्छोधनम्—"पत्तलीकृत्य पत्राणि कांस्यस्याग्नौ प्रतापयेत्। निषिञ्चेत्तप्ततप्तानि तैले तक्रे च काञ्जिके। गोमूत्रे



च कुलत्थानां कषाये च त्रिधा त्रिधा। एवं कांस्यस्य रीतेश्च विशुद्धिः सम्प्रजायते॥" मारणविधिः—"अर्कक्षीरेण सम्पिष्टो गन्धकस्तेन लेपयेत्। समेन कांस्यपत्राणि शुद्धान्यम्लद्रवैर्मुहुः। ततो मूषापुटे धृत्वा पचेद्गजपुटेन च। एवं पुटद्वयात्कांस्यं रीतिश्च म्रियते ध्रुवम्॥" भा. पू. १भ.। शुद्धस्य गुणाः—"कांस्यन्तु तिक्तमुष्णञ्चचुष्यं वातकफविकारघ्नं। रुचं कषायरुच्यं लघुदीपनपाचनं पथ्यम्॥ श्वेतं दीप्तं मृदुज्योतिः शब्दाढ्यं स्निग्धनिर्म्मलं। घनाग्निसहसूताङ्गं कांस्यमुत्तममीरितम्॥" रा. नि. व. १३।

**कांस्यनीलः**। पुं। नीलतुत्थे। तत्पर्य्यायः—मृषातुत्थं। हेमतारं। वितुन्नकं। हे.।

**कांस्यपात्रम्**। क्ली। आढ़कपरिमाणे। भा.। আটসের। कांस्यनिर्म्मित-पात्रसमूहे।

**कांस्यपिष्टीरसः**। पुं। पाण्डुधिकारे। पाठः—"सूतात्पञ्चार्कतश्चैकं कृत्वा पिष्टिं सगन्धकां। सूताश्मैः नागवल्लग्राश्च द्रवैः पिष्ट्वा प्रलेपयेत्। ताम्रपत्रौ प्रलिप्यैतां रुद्ध्वा गजपुटे पचेत्।" द्विगुञ्जं चूषणेन सेव्यम्। र. चि. ९ अ.। পারা ৫ ভ. তামা ১৫. গন্ধক ৫ ভ.।

**कांस्यालुकम्**। क्ली। कासालुके। See कासालु।

**काकः**। पुं। वायसे। वायसभेदे। ডোমকাক। तत्पर्य्यायः,—करटः। अरिष्टः। बलिपुष्टः। सकृत्प्रजः। ध्वाङ्क्षः। आत्मघोषः। परभृत्। बलिभुक्। वायसः। वातजवः। बलः। दीर्घायुः। सूचकः। कृष्णः। ग्रामीनः। पिशुनः। कटखादकः। द्विकः। कागः (ज.)। गृहबलिभुक् (के.)। एकदृक्। अन्यभृत्। घूकारिः (हे.)। एकाक्षः (श.)। काणूकः (उ.)। कारवः। नगरीकः। परभृत्युः। शक्रजः। सत्यवाक् (त्रि.)। काणः। धूलिजङ्घः। निमित्तकृत्। कौशिकारिः। कौशिकारातिः। चिरायुः। मुखरः। खरः। महालोलः। चिरञ्जीवी। चलाचलः (रा.)। करटकः। नागवीरकः। गूढ़मैथुनः। लुण्टाकः। श्रावकः। सरः। शक्रजातः। यमदूतकः। मलभुक्। द्विककारः। अप्रकृष्टः। वातज्वरः (शब्दर.)। काटखदिरः (मे.)। एतौ प्रसहजातीयौ। तन्मांसगुणाः—चयहरं चक्षुष्यं वृंहणं लघु दीपनञ्च। रा. नि. व. ७। शोषरोगे हितः रसवीर्य्यविपाकेषु सिंहादिभिः समः। सु. सू. ४६ अ.। काकजङ्घायां। কাঁটাগুড়কাঁউলী। ज्योतिष्मत्याम्। লতাফট্‌কী काकोल्यां। गुञ्जायाम्। कोकिले। वै. निघ.। पीठसर्पिणि। খোঁড়া। परिमाणभेदे। शिरःचालने। काकोदुम्बरवृक्षे। क्ली। काकसमूहे। मे. कद्विकं। काकमांसन्तु चक्षुष्यं लघु चाग्निप्रदीपनम्। धातुवृद्धिकरं बल्यं क्षतरोगं क्षयं हरेत्। कृष्णकाकस्य मांसन्तु ज्ञेयं काकसमं गुणैः॥ वै. निघ.।

**काककङ्गुः**। पुं। चीनक इति प्रसिद्धधान्ये। हे. च.। सर्ज्जरसे। वै. निघ.।

**काककर्कटी**। स्त्री। खर्जूरीवृक्षे। भा.।

**काककण्टकः**। पुं। जलचरपक्षिविशेषे। পানকৌড়ি। वै. निघ.।

**काककला**। स्त्री। काकजङ्घावृक्षे। কেউয়াঠেঙা। जटा.।

**काककुड्मलम्**। क्ली। नीलपद्मे। वै. निघ.।

**काककुष्ठम्**। क्ली। कङ्कुष्ठे।

**काकघ्नी**। स्त्री। महाकरञ्जवृक्षे। रा. नि. व. ९।

**काकचिञ्चा (ञ्चिः, ञ्ची)**। स्त्री। गुञ्जायां। কুঁচ। त्रिका.। रक्तगुञ्जायां। भा. प. १भ. गु. व.।

**काकच्छदः (दिः, र्दिः)**। पुं। खञ्जनपक्षिणि। श. र.। चाषपक्षिणि। নীলকণ্ঠপাখী। त्रिका.।

**काकजङ्घा**। स्त्री। गुञ्जायां। र. मा.। (Leea hirta.) स्वनामख्यातक्षुपे। কেউয়াঠেঙা, কাঁটা গুড়কাঁউলী। मसीति पाश्चात्ये। र. मा.। तत्पर्य्यायः,—काकाङ्गी। काकाञ्ची। काकनासिका (शब्दर.)। काका (मे.)। काकनासा। काकफला (ज.)। कृषीबलः (र.)। काकाङ्गा (अ. टी.) ध्वाङ्क्षजङ्घा। काकाह्वा। सुलोमशा। पारावतपदी। दासी। नदीकान्ता। सा चतोपयोगिनी च। गुणाः—तिक्तोष्णा कृमिव्रणकफापहा वाधिर्य्यघ्नी अजीर्णघ्नी जीर्णविषमज्वरनाशिनी। रा. नि. व. ४। "काकजङ्घाजटा निद्रां जनयेच्छिरसि स्थिता। हिमा कषाया तिक्ता कफपित्तघ्नी ज्वरपित्तास्रव्रणकण्डूविषकृमिघ्नी च।" भा. पू. १भ.। "एतद्बन्धनं एकाहिकज्वरे हितम्।" च द. ज्व. चि.।

एव च। भार्गी हरीतकी वासा कार्षिकैः पचजैः रसैः। वटिकां कारयेद्वैद्यः पञ्चगुञ्जाप्रमाणकाम्। ........। वासाशुण्ठीकण्टकारीक्वाथेन पाचयेद्बुधः॥" रस. र.। अत्र भेकपर्ण्यादीनां स्वरसः प्रत्येकं कर्षपरिमितः। भेकपर्णी—থানকুনি, থূলকুড়ি। र. सा. सं.।

**कासहरवर्गः**। पुं। द्राक्षाभयामलकपिप्पली-दुरालभाशृङ्गीकण्टकारिकावृश्चीरपुनर्नवातामलक्य-इति दशद्रव्ये। च. सू. ४अ.।

**कासहा**। पुं। कण्टकारीकृते पिप्पलीचूर्ण-सहिते कासहरक्वाथे। तन्नामकधूमपाने। तत्र धूम-नाड़ी १६ अङ्गुलिमिता। धूमद्रव्यञ्च क्षुद्रकोषणं भाव्यम्। भा.।

**कासान्तकरसः**। पुं। कासाधिकारे। पारद गन्धक-शुद्धविष-शालपर्णी धान्यकानां चूर्णं प्रत्येकं समभागं, सर्व्वचूर्णसमं मरिचचूर्णम्। ४ गुञ्जा मधुना सेव्यम्। र. सा. सं.।

**कासारम्**। क्ली। स्वनामख्यातपक्वान्नविशेषे। पुं। सरोवरे। वै. निघ.।

**कासारिः**। पुं। कासमर्द्दक्षुपे। रा. नि. व. ४।

**कासालुः**। पुं, क्ली। An esculent root a sort of yam, खंवरे इति कोङ्कणदेशप्रसिद्ध आलुकविशेषे। अस्मद्देशे च खाम्‌आलु इति कथ्यते। मं कांसालु। तत्पर्य्यायः—कासकन्दः, कन्दालुः, आलूकः, आलुः, विशालपत्रः, पत्रालुः। गुणाः—कण्डूघ्नः विषघ्नः श्लेष्मघ्नः अरोचकघ्नः स्वादुः पथ्यः दीपनश्च। रा. नि. व. ७।

**कासिका**। स्त्री। कफे। वनमुद्गे। वै. निघ.।

**कासी**। त्रि। कासरोगवति। वै. निघ.।

**कासीमृत्तिका**। स्त्री। सौराष्ट्रमृत्तिकायाम्। पङ्कपर्पटी। रा. नि. व. १३।

**कासीयम्**। क्ली। कांस्ये। কাঁসা। वै.निघ.।

**कासीसम्**। क्ली। काशीसे। हिराकस। माक्षिकसुराविशेषे। तुत्थके। वै.निघ.। कासीसं भस्मसदृशं किञ्चिदम्लं लवणरसं। ड.। See काशीशम्।

**कासीसद्वयम्**। क्ली। धातुकासीसपुष्पकासी-सयोः। ধাতুকাসীস ও পুষ্পকাসীস। वा.सू. १५अ.। एकं पाण्डुधातुसंज्ञं, अपरं पुष्पकासीसा-ख्यम् एकं भस्मसदृशं किञ्चिदम्लं लवणरसं, द्वितीयं पुष्पकासीसमीषत्पीतं तुवररसम्। ड.।

**कासु(स्क)न्दः**। पुं। कासमर्द्दे। কালকাসন্দা। भैष. कुष्ठचि. कन्दर्पसारतैले।

**कासुम्भी**। पुं। कौसुम्भीशाली। रा.नि.व.१६।

**कासुरः**। पुं। महिषे। हला.।

**कासूः**। स्त्री। विकलवाक्ये। मे.सहिकं। रोगे।

**कासेक्षुः**। पुं। ह्रस्वकासतृणे। वै.निघ.।

**कासोली**। स्त्री। अतिबलायाम्। গোরক্ষ-চাকুলে। वै.निघ.।

**कास्तीरम्**। क्ली। तीक्ष्णलौहे। তীক্ষ্ণ। र.मा.।

**काहलः**। पुं। कुक्कुटे। हारा.। विड़ाले। श.मा.। क्ली। अव्यक्तवाक्ये। हे.च.। त्रि। शुष्के। मे.।

**काहलापुष्पः**। पुं। श्वेतधुस्तूरवृक्षे। रा.नि. व.१०।

**काह्री**। स्त्री। कुटजवृक्षे। रा.नि.व.९।

**काक्षः**। पुं, क्ली। अपाङ्गदर्शने। त्रिका.।

**काक्षी**। स्त्री। गोपीचन्दने। सौराष्ट्रमृत्तिका-याम्। र.मा.। तुवरिकायाम्। ব্রহ্ম। हे.च.।

**काक्षीरी**। स्त्री। वंशलोचनाभेदे। रत्ना.।

**काक्षीवः (कः)**। पुं। शोभाञ्जनवृक्षे। अम.। श.र.।

**किंशा(सा)रुः**। पुं, क्ली। शस्यशूके। শুঁয়া। अम.। रोटके। वाणे। कङ्कपक्षिणि। मे.रत्रिकं।

**किंशुकः**। पुं, क्ली। (Butea frondosa.) पलाशवृक्षे। পলাশ গাছ। हिं ढाक। तें मोडुग। रा.नि.व.१०। च.द.गुल्म.चि.। "व्याघ्रीकिंशुक-पारिभद्र।" नन्दीवृक्षे। रा.नि.व.१०। शाल्मली-वृक्षे। प.मु.।

**किंशुकतैलम्**। क्ली। पित्तश्लेष्मघ्ने पलाश-वीजतैले। পলাশবীজের তৈল। वा.।

**किंशुकक्षारः**। पुं। पलाशक्षारे। च.चि.१अ.।

**किंशुका**। स्त्री। पलाशवृक्षे। ज्योतिष्मत्याम्। नन्दीवृक्षे। रा.नि.व.२३।

**किंशुकादिगणः**। पुं। त्रिदोषहरद्रव्यसमूहे। यथा—"किंशुकः काश्मरी विश्वमग्निमन्थं त्रिक-ण्टकः। श्योनाकः शालपर्णी च सिंहपुच्छी



द्वयं स्थिरा। पाटला कण्टकारी च बृहती बिल्व एव च॥" र.सा. सं.।

**किंशुलुकः**। पुं। हस्तिकर्णपलाशे। श.र.। नीलकण्ठपक्षिणि। वै निघ.।

**किकिः**। पुं। Blue Jay. चाषपक्षिणि। श.मा.। नारिकेलवृक्षे रा.नि.व.११।

**किकि(की)दि(दी)वः (विः)**। पुं। चाष-पक्षिणि। सुवर्णचातके। সোণা চড়া, নীলকণ্ঠ পক্ষী। भरत.। श.मा.। अम.।

**किकिदीधितिः**। पुं। कुक्कुटे। हला.।

**किकिरः**। पुं। कोकिले। पक्षिणि। अश्वे। वै.निघ.।

**किकी (इन्)**। चाषपक्षिणि। वै.निघ.।

**किक्किशः (सः)**। पुं। केशादिघ्नकीटविशेषे। টাক্‌পোকা, দাঁতের পোকা প্রভৃতি। मांस-दारणरोगे। च.शा.८अ.।

**किक्किसादः**। पुं। राजिमत्सर्पविशेषे। सु. कल्प.४अ.। See सर्पः।

**किखिः**। पुं। वानरे। स्त्री। लघुशृगाले। খ্যাকশিয়ালী। हे.च.। त्रिका.।

**किङ्किनिः (नी)**। पुं, स्त्री। विकङ्कतवृक्षे। বঁইচি গাছ। रा.नि.व.९। भैष.शिरोरोग.चि. किङ्किनीतैले। अम्लद्राक्षायाम्। वै.निघ.।

**किङ्किरः**। पुं। विकङ्कतवृक्षे। বঁইচি গাছ। रा.नि.व.९। कोकिले। घोटके। क्ली। करि-कुम्भे। बृहत्कृष्णमक्षिकायाम्। भ्रमरे। शब्द-कल्प.।

**किङ्किरा (री)**। स्त्री। रक्ते। सारस्वतः। विकङ्कतवृक्षे। বঁইচি গাছ।

**किङ्किराटः**। पुं। वर्व्वूरकवृक्षे। বাবলা গাছ। गुणाः—"किङ्किराटो भवेच्छीतो भेदको ग्राहको मतः। कफकुष्ठकृमिविषनाशकः समुदाहृतः।" वै.निघ.।

**किङ्किरातः**। पुं। (Barleria prionites) Lin, A species of Amaranth. स-कण्टक पीतपुष्पारक्तझिण्टीक्षुपे। পীতঝাঁটী, কাঁটা ঝাঁটী। हे.च.। वाणपुष्प इति गौडे। हिं कटसरैया। मं पीवलाकोरण्टा। कं [illegible]-गोरटे। तें कोंड्गोगु। गुणाः—कषायोष्णः तिक्तः कफवातघ्नः दीपनः शोफकण्डूत्वग्दोषरक्तघ्नश्च। रा नि.व.१०। हिमः तिक्तः कषायः कफपित्तघ्नः रक्त-दोषवमिकृमीन्हन्ति। भा.पू.१भ.। रक्ताम्लाने। লালঝাঁটী। जटा.। वर्व्वूरकवृक्षे। বাবলাগাছ। भा.। अशोकवृक्षे। অশোক গাছ। रक्तमृत्ति-कायाम्। লাল মাটী। कोकिले। शुकपक्षिणि। টেয়া পাখী। सारस्वतः।

**किङ्किरालः (यः)**। पुं। वर्व्वूरवृक्षे।

**किङ्किरी**। पुं। विकङ्कतवृक्षे। বঁইচি গাছ। जटा.।

**किङ्किलासः**। पुं। अशोकवृक्षे। प.मु.।

**किञ्चनः**। पुं। हस्तिकर्णपलाशे। श.र.। व्य.। वस्तुनि। वै.निघ.।

**किञ्चिच्चोरितपत्रिका**। स्त्री। शाकवृक्ष-विशेषे। পালংশাক। वै.निघ.।

**किञ्चित्**। त्रि। चतुर्थांशे। वै.निघ.।

**किञ्चित्पाणिः**। पुं। कर्षमितमाने। २ तोला। प.प्र.१ख.।

**किञ्चिदुष्णः**। त्रि। ईषदुष्णे।

**किञ्चिलिकः**
**किञ्चुलिकः**
**किञ्चुलुकः**
} पुं। Earth worm. गण्डूपदे। কেঁচো। त्रिका.।

**किञ्जम्**। क्ली। किञ्जल्के। रा.नि.व.१०। मृणाले। नागकेसरपुष्पे। पद्मकेशरे। वै.निघ.।

**किञ्जलः**। पुं। पद्मकेसरे। श.च.। किञ्जल्क-मात्रे।

**किञ्जल्कः**। पुं, क्ली। कुष्ठे। नागकेशरवृक्षे तत्पुष्पे च। वै.निघ.। च.द.अर्शः.चि, चाङ्गेरी-घृते। हे.च.। पद्मकेशरे। "किञ्जल्कः केसरः प्रोक्तः।" केशाकारस्वर्णाभवेष्टने, पद्मवराटे। च. द.वा.वा.व्या. अश्वगन्धाद्यतैले। गुणाः—शीतलो वृष्यः कषायी ग्राही कफपित्ततृष्णादाहरक्तार्शो-विषशोथघ्नश्च। भा.पू.१भ.। मधुरः रूक्षः कटुः मस्तव्रणहरः शीतलो रुच्यः पित्ततृष्णादाहहरश्च। रा.नि.व. १०।

**किञ्जवालकाम्**। क्ली। काङ्क्षे, पार्श्वीय-वर्त्तिकाविशेषे। वै.निघ.।

**किटि: (टी)** । पुं । वनशूकरे । अम. । वाराही कन्दे । वै.निघ. ।

**किटिदंष्ट्रा** । स्त्री । शूकरदंष्ट्रायां । वै.निघ. ।

**किटिभ:** । पुं । केशकीटे । निधि । हे.च. । कुष्ठरोगभेदे । क्ली । तुत्थके । वै.निघ. ।

**किटिम:** । पुं । सौम्यकीटविशेषे । तेन दष्टे श्लेष्मजन्यरोगा भवन्ति । सु.कल्प.८अ. । क्ली । क्षुद्रकुष्ठभेदे । तल्लक्षणम्—"श्यावङ्किणखरस्पर्शं परुषं किटिमं स्मृतम् ।" मा.नि. । "यत् स्रावि वृत्तं घनमुग्रकण्डु तत् स्निग्धकृष्णं किटिमं वदन्ति ।" सु. नि.५अ. ।

**किटिमूलक: (वाम:)** । पुं । वाराहीकन्दे, शूकरकन्दे । वै. निघ. ।

**किट्ट(क)म्** । क्ली । पुरीषे । रा.नि.व.१८ । कर्णमले । शुक्रे । लौहमले । मण्डूर । तत्र किट्टं शतवर्षीयमुत्तमं अशीतिवार्षिकं मध्यमं षष्टिवार्षिकमधमं ततो हीनं विषतुल्यम् । "ध्मायमानस्य लौहस्य मलं मण्डूरमुच्यते । यल्लौहं यद्गुणम्प्रोक्तं तत्किट्टमपि तद्गुणम् ॥" भा.पू.१भ. धातुव. । तस्य शोधनं यथा—किट्टं विभीतककाष्ठानलै: दग्धव्यं । यदाग्निवर्णं भवति तदा गोमूत्रे निर्व्वापयेत् । एवं सप्तवारङ्कृत्वा शोधयेत् । "अथाङ्गारैर्ध्मेत्किट्टं लौहजं तद्गवां जलै: । खेदयेत्तप्ततप्तञ्च सप्तवारं पुन: पुन: ॥ चूर्णयित्वा तत: क्वाथे द्विगुणे त्रैफलोद्भवे । आलोड्य भर्ज्जयेद्वह्नौ मण्डूरं जायते वरम् ॥" सा.कौ. । गुणा:—"ये गुणा मारिते लौहे ते गुणा मुण्डकिट्टके । तस्मात्सर्व्वत्र मण्डूरं रोगशान्त्यै प्रयोजयेत् ॥ विचूर्ण्य लीढं मधुना चिरेण कुम्भाह्वयं पाण्डुगदं निहन्ति ।" र.सा.सं. । मधुरं कटु रूक्षं कृमिवातघ्नं पक्तिशूलवायुशूलमेहगुल्मशोफघ्नञ्च । रा. नि.व.१३ ।

**किट्टवर्ज्जितम्** । क्ली । शुक्रे । हे.च. ।

**किट्टाल:** । पुं । लौहगूथे । मण्डूर । ताम्रकलस । मे.लत्रिकं । क्ली । ताम्रे । वै.निघ. ।

**किट्टिमम्** । क्ली । द्रवद्रव्यविशेषे ।

**किण:** । पुं । मांसग्रन्थौ कड़ा, घेँटा । अम. घृणे । घृणौ । कीटे । कीशाङ्के । हारा. । मषितीपरिस्थफेनाभवस्तुनि । वा.उ.२०अ. । योनिकन्दरोगे । वै.निघ. । चिका. ।

**किणि:** । स्त्री । अपमार्गवृक्षे । श.र. ।

**किणिहि: (ही)** । स्त्री । Achyranthes aspeaa. श्वेतापमार्ग, अपामार्ग । हिं चिरचटा । रा.नि.व.४ । च.सू.४अ. । कृष्णकटभीवृक्षे । रा.नि.व.९ । सु.सू.२९अ. । श्वेतगोकर्णाम । শ্বেতাপরাজিতা । वै.निघ. ।

**किण्व(क)म्** । क्ली, पुं । सुराबीजे । मदेर মেতা । प.प्र.३ख. । पक्वौषधसार: मेदक: किण्व: । सु.सू.२६अ. । भा.म.४भ. योनिरोगे । तस्यावशिष्टं तत् प्रोक्तं सुराबीजन्तु किण्वकम् ॥ वैद्यकम् । पिण्याके । रत्ना. ।

**किण्वमूलक:** । पुं । वकुलवृक्षे । वै.निघ. ।

**किण्वी** । पुं । अश्वे ।

**कितव:** । पुं । रोचनानामगन्धद्रव्ये । रा.नि व.१२।२३ । धुस्तूरवृक्षे । रा. नि. व. १०।२३ । ग्रन्थिपर्णे । वै.निघ. ।

**कितवराज:** । पुं । धुस्तूरवृक्षे । वै. नि. २भ. तृष्णा.चि. ।

**किन्नी** । स्त्री । ह्रस्ववल्ल्यां । वै.निघ. ।

**किन्तनु:** । पुं । ऊर्णनाभे । মাকড়শা । विका. ।

**किन्दी(न्धी)** (इन्) । पुं । घोटके । चिका. ।

**किम्पाक:** । पुं । महाकाललतायां । মাকাল লতা । र.मा. । विषतिन्दुकवृक्षे । কুচিলা । रा. नि.व.९ । See कारस्कर: । रोगे । ज्वरे । मलादिनिर्गमे । रत्ना. । त्रि । अपक्वे । क्ली । महाकालफले ।

**किम्भरा** । स्त्री । नलीनामगन्धद्रव्ये । श.च. ।

**कियाह:** । पुं । शृगाले । रक्तवर्णाश्वे । "पक्वतालनिभो वाजी कियाह: परिकीर्त्तित: ।" ज. द.३अ. । हे.च. ।

**किर:** । पुं । वराहे । अम. ।

**किरटा** । स्त्री । कुसुम्भबीजे । वै.निघ. ।

**किरमाल:** । पुं । आरग्वधवृक्षे । सु.चि.९अ. ।

**किराटिका** । स्त्री । सारिकापक्षिणि ।

**किरात: (क:)** } पुं, क्ली । The plant Agathotes chirayta. भूनिम्ब । চিরেতা । हिं चिरायता । तें नेलवेमु । तत्पर्याया:,—भूनिम्ब:,
**किराततिक्त: (क:)** }



अनार्य्यतिक्त:, किरातक:, चिरतिक्त:, चिरातिक्त:, तिक्तक:, सुतिक्तक: (शब्दच.), चिराटिका (वै.), कटुतिक्त: रामसेनक: (ज.), किरातम्, कैरातम्, काण्डतिक्तक: (र.), (मे.), कैरात:, हैम:, काण्डतिक्त: । "किराततिक्तममृता ।" चक्र. पि. ज्व. चि. । गुणा:—वातिक: तिक्त: कफपित्तज्वरघ्न: व्रणरोपण: पथ्य: कुष्ठकण्डूशोषघ्नश्च । रा.नि.व.९ । सारक: रूक्ष: शीतलिक्त: लघु: सन्निपातज्वरश्वास-कफपित्तरक्तदाहकासशोथतृष्णा-कुष्ठज्वरव्रणकृमिघ्नश्च । भा.पू.१भ. । सि.यो.,च.द. ज्व.चि. । "किराताब्दामृतोदीच्य ।" हारीत. । "किरातं विश्वभेषजम् ।" त्रि । अल्पशरीरे । "स्यात्किरातस्तु भूनिम्बे म्लेच्छे चाल्पतनावपि ।" विश्व. । अश्वरक्षके ।

**किरातकान्तम्** । क्ली । कोङ्कणप्रसिद्धे शवरचन्दने । रा.नि व १२ ।

**किराततिक्तादि:** } पुं । वातपित्तज्वरे कषायविशेषे । "किराततिक्तममृता-द्राक्षामामलकीं शटीं । निष्क्वाथ्य पित्तानिलजे क्वाथन्तं सगुड़म्पिबेत् । अयं चतुर्भद्रकोऽप्युच्यते ।" भा.म.१भ. । अपिच—"किरातको महानिम्ब: कुस्तुम्बुरु: शतावरी । पटोलं चन्दनं पद्मं शाल्मल्यौदुम्बरी जटा ॥" रस.च. । अन्य:—"किरातं नागरं मुस्ता गुड़ूची चेति ।" सि.यो.सा. ज्व.चि. । भा. । "किराताब्दामृतोदीच्यबृहतीद्वयगोक्षुरं । शालपर्णी पृश्निपर्णी शुण्ठीति ।" क्वाथोऽयं वातज्वरे—চিরাতা, মুতা, গুলঞ্চ, বালা, বৃহতী, কণ্টকারী, গোক্ষুর, শালপানি, চাকুলে, শুঁট্ প্রত্যেকে ১৬ রতি, জল ৩২ তোলা, শেষ ৮ তোলা । अन्यच्च कण्ठकुब्जसन्निपाते हित: । चिरायिताकटुकीपिप्पलीकुटजकण्टकारीशटीविभीतक-देवदारुहरीतकी-मरिचमुस्ता-कट्फलातिविषामलकी-पुष्करमूल-चित्रक-कर्कटशृङ्गीवासानां तोलकद्वयं कषायं कृत्वा शुण्ठीचूर्णं ॥० तो. प्रक्षिप्य भक्षयेत् । भा.म.२भ.ज्व.चि. ।
**किरातादि:** }

**किरातादिचूर्णम्** । क्ली । दुर्जलदोषजज्वरे हितम् । चिरायिता त्रिवृता वाह्यालकं पिप्पली विड़ङ्गं कटुकी शुण्ठी चेति द्रव्याणि । एषां समभागचूर्णं मधुना लेह्यम् । भा. मा. १भ, १भ. ज्व चि. ।

**किरातादितैलम्** । क्ली । ज्वरे सन्ततसततादौ हितम् । मूर्च्छितकटुतैलं ४ श. दधिमस्तु ४ श. काञ्जिकं ४ श. किराततिक्तक्वाथ: (চিরাতার কাথ) ४ श. । कल्कार्थं—मूर्व्वामूल लाक्षा हरिद्रा दारुहरिद्रा मञ्जिष्ठा इन्द्रवारुणी (রাখালশশার মূল) कुष्ठं बालकं (বালা) रास्ना गजपिप्पली त्रिकटु पाठा इन्द्रयव: सैन्धवं सचललवणं विट्लवणं वासात्वक् श्वेतार्कमूलत्वक् श्यामालता देवदारु महाकालफलञ्च (মাকাল ফল) मिलितं १ श. । भैष.ज्व.चि. ।

**किरातिनी** । स्त्री । जटामांस्याम् । श.र. ।

**किरि:** । पुं । शूकरे । रत्ना. । वाराहीकन्दे । वै.निघ. ।

**किरिटि: (टी** । पुं । अर्ज्जुनवृक्षे । रा.नि. व.९ । खर्ज्जूरवृक्षे । शङ्खपुष्प्याम् । অপরাজিতা । क्ली । हिन्तालफले । त्रिका. ।

**किरीट:** । पुं । कुसुम्भवृक्षे । वै.निघ. ।

**किर्म्मी** । स्त्री । पलाशवृक्षे । मे. मदिकं ।

**किर्म्मीर: (त्मक)** । पुं । कर्वूरे । नागरङ्गवृक्षे । লেবু গাছ । मे., चिका. ।

**किर्य्याणी** । स्त्री । वनशूकरे ।

**किलपादिका** । स्त्री । क्षुद्रलज्जालुकायाम् । वै.निघ. ।

**किलाट:** । पुं । Inspissatted milk. नष्टदुग्धस्य पिण्डे । हारा. । ছানা । गिजरी इति प्रसिद्धे दुग्धविकारे । र. मा. । कूर्चिकाक्षीरशाकयोर्घनभाग: पृथग्भूत: किलाट: । वा. क्षीरव. । तथा "नष्टदुग्धस्य पक्वस्य पिण्ड: प्रोक्त: किलाटक: । अपक्वमेव यन्नष्टं क्षीरशाकं हि तत्पय: ॥" भा । "पक्वं दध्ना समं क्षीरं विज्ञेया दधिकूर्चिका । तक्रेण तक्रकूर्चा स्यात्तयो: पिण्ड: किलाटक: । गुरु: किलाटोऽनिलहा पुंस्त्वनिद्राप्रद: स्मृत: ॥"

**किलाटी** (इन) । पुं । वंशे । বাঁশ । एरण्डवृक्षे । हारा. । स्त्री । क्षीरविकृतौ । हे.च. ।

**किलात:** । त्रि । वामने, ह्रस्वे ।

**किलालम्** । क्ली । गोमूत्रे । वै.निघ. ।

**किलासम्** । क्ली, पुं । A blotch, a white leprous spot. क्षुद्रकुष्ठरोगविशेषे । छूली,

धवल, লালপাকড়। रा. नि. व. २०। तच्चिविधं वातादिभेदेन। लक्षणम्—"कुष्ठैक-सम्भवं श्वित्रं किलासं दारुणं भवेत्। निर्द्दिष्टमपरिस्रावि त्रिधातूद्भवसंश्रयं। वाताद्रुचारुणं पित्तात्ताम्रं कमलपत्रवत्। सदाहं रोमविध्वंसि कफाच्छ्वेतं घनं गुरु॥" मा.नि.।

**किलासघ्नः**। पुं। कर्कोटके। কাঁকরোল। हे. च.।

**किलासनाशनः**। त्रि। किलासघ्ने।

**किलासी** (इन्)। त्रि। किलासरोगिणि। अम।

**किलि**। व्य। कण्ठकूजिते।

**किलिञ्जम्**। क्ली। सूक्ष्मकाष्ठे। जटा.।

**किलिञ्जनः**। पुं। राले। রজন। मीनभेदे। वै. निघ.।

**किलिञ्जः (कः)**। पुं, क्ली। वीरणादिकटे। सूक्ष्मकाष्ठे। त्रिका.। सु. चि. १० अ. महाकुष्ठे।

**किलिमः**। पुं, क्ली। A kind of Fir or Pine. देवदारुवृक्षे। দেবদারু গাছ। भा. म. १भ. ज्व. चि.। च. शा. ८अ.। "कलिद्रु किलिमाभया।" धूनके। वै निघ.। तैलदेवदारुणि। च. द. वा. व्या. प्रसारणीतैले।

**किल्विषम्**। क्ली। रोगे। पापे। मे. षत्रिकं।

**किल्वी**। पुं। घोटके। त्रिका.।

**किशरा**। स्त्री। कशरायाम्। द्विरूपकोषः।

**किशरोमा**। पुं। शूकशिम्ब्याम्। वै.निघ.।

**किशलम्**। क्ली। कोमलपल्लवे। शब्दर.।

**किशलयः**। पुं, क्ली। कोमलपल्लवे। त्रिका.।

**किशोरः**। पुं। घोटकशिशौ। तैलपर्ण्यां। मे. रत्रिकं। सूर्य्ये।

**किष्कुः**। पु, स्त्री। (Arundo Tibialis.) द्वादशाङ्गुलपरिमाणे। हस्ते। वितस्तौ। रत्ना.। प्रकोष्ठे.। मे.कद्विकं। शालवृक्षे। वंशे। इक्षुभेदे।

**किष्कुपर्व्वा**। पुं। इक्षौ। वंशे। नले। मे.।

**किसरम्**। क्ली। सुगन्धिद्रव्यविशेषे।

**किसलः (यः)**। पुं, क्ली। कोमलपल्लवे। अम.।

**कीकटः(कः)**। पुं। घोटके। विश्व.। तद्देशाख्ये। विश्व.।

**कीकटी** (इन्)। पुं। वन्यवराहे। वै.निघ.।

**कीकशः (सः)**। पुं, क्ली। कृमिजातौ। मे.। अस्थनि। रा.नि.व.१८।

**कीकसमुखः (सास्यः)**। पुं। पक्षिविशेषे। हारा.।

**कीकिः**। पुं। चाषपक्षिणि। शब्दरी.।

**कीचकः (काह्वयः)**। पुं। रन्ध्रवंशे। ফাঁপা বাঁশ। नले। নলখাগড়া। रा. नि. व. ७।८।

**कीटः (कः)**। पुं। लौहकिट्टे। विष्ठायाम्। कृमिजातौ। शब्द.। ते सर्पाणां शुक्रविण्मूत्रशवपूत्यण्डसम्भवत्वाद्दिविधाः वायव्याग्नेयप्रकृतयः। तत्र चतुर्विधाः सुघोराः। "कुम्भीनसस्तुण्डिकेरी शृङ्गी शतकुलीरकः। उच्चिटिङ्गोऽग्निनामा च चिच्चिटिङ्गो मयूरिका। आवर्त्तकस्तथोरभ्रसारिका मुखवदलौ। शरावकुर्द्दोऽभीराजी परुषश्चित्रशीर्षकः। शतबाहुश्च यश्चापि रक्तराजिः प्रकीर्त्तितः। अष्टादशेति वायव्याः कीटाः पवनकोपनाः। इति। कौण्डिल्यकः कणभको वरटी पत्रवृश्चिकः। विनासिका ब्रह्मणिका बिन्दुलो भ्रमरस्तथा। वाह्यकी पिच्चिटः कुम्भी वर्च्चःकीटोऽरिमेदकः। पद्मकीटो दुन्दुभिको मकरः शतपादकः। पञ्चालकः पाकमत्स्यः कृष्णतुण्डोऽथ गर्द्दभी। क्लीतः कृमिसरारी च यश्चाप्युत्क्लेशकः स्मृतः। एते ह्यग्निप्रकृतयः चतुर्विंशः प्रकीर्त्तिताः। तैर्भवन्तीह दष्टानां रोगाः पित्तनिमित्तजाः॥ इति। विश्वम्भरः पञ्चशुक्लः पञ्चकृष्णोऽथ कोकिलः। सैरेयकः प्रचलकी वलभः किटिभस्तथा। सूचीमुखः कृष्णगोधा यश्च काषायवासिकः। कीटगर्द्दभकश्चैव तथा चोटक एव च। त्रयोदशैते सौम्याः स्युः कीटाः श्लेष्मप्रकोपणाः। तैर्भवन्तीह दष्टानां रोगाः कफनिमित्तजाः। इति। तुङ्गीनासो विचिलकस्तालको वाहकस्तथा। कोष्ठागारी कृमिकरो यश्च मण्डलपुच्छकः। तुङ्गनाभः सर्षपिकोऽवल्गुली शम्बुकस्तथा। अग्निकीटश्च घोराः स्युः द्वादश प्राणनाशकाः। तैर्भवन्तीह दष्टानां वेगज्ञानानि सर्पवत्। सामान्यतो दष्टलिङ्गैः साध्यासाध्यक्रमेण च।...इति। त्रिकण्टकः कुणी चापि हस्तिकक्षोऽपराजितः। चत्वार एते कणभा व्याख्यातास्तीव्रवेदनाः। दंष्टस्य श्वयथुरङ्गमर्द्दो गुरुता गात्राणां दंशः कृष्णश्च भवति। प्रतिसूर्य्यः पिङ्गभासो बहुवर्णो महाशिराः। तथा



निरुपमश्चापि पञ्च गौनेरकाः स्मृताः॥" इत्यादि। सु. कल्प. ८अ.।

**कीटकः**। पुं। निम्बे। ज.।

**कीटगर्द्दभकः**। पुं। सौम्यकीटविशेषे। तेन दष्टे श्लेष्मजन्यरोगा जायन्ते। सु. कल्प. ८अ.।

**कीटघ्नः**। पुं। गन्धके। रा.नि.व.१३।

**कीटजम्**। क्ली। রেশম্, তসর इति ख्याते द्रव्ये।

**कीटजा**। स्त्री। लाक्षायाम्। লাহা। र. मा.।

**कीटनामा**। स्त्री। रक्तलज्जालुकायाम्। वै. निघ.।

**कीटपादिका (दी)**। स्त्री। The plant (Cissus Pedata.) हंसपादीलतायाम्। গোয়ালে লতা रा. नि. व. ५। रक्तलज्जालुकायाम्। वै. निघ.।

**कीटमणिः**। पुं। Butterfly. पतङ्गभेदे। প্রজাপতি। खद्योते।

**कीटमर्द्दरसः**। पुं। कृम्यधिकारे रसः। अत्र ब्रह्मदण्डी भार्गी तद्बीजम्। र. सा. सं.। विषमुष्टिः कुचिला। "शुद्धसूतं शुद्धगन्धमजमोदा विडङ्गकं। विषमुष्टी ब्रह्मदण्डी यथाक्रममगुणोत्तरं। चूर्णयेत् मधुना मिश्रं निष्कैकं कृमिजिद्भवेत्॥ मुस्ताक्वाथमनुपिबेत्......।" भैष.।

**कीटमाता (री)**। स्त्री। हंसपादीलतायाम्। भा.। रा. नि. व. ५। (री) रक्तलज्जालुकायाम्। वै. निघ.।

**कीटमेषः**। पुं। मृगचिरा इति प्रसिद्धे कीटे। अयं नदीतीरे सिकतामध्ये जायते।

**कीटवामः**। पुं। मज्जफले। মাজুফল। के.।

**कीटरिपुः (शत्रुः) (हारिः) (टारिः)**। पुं, क्ली। विडङ्गे। वै. निघ.। संग्रहणी। चि। कल्याणगुडे।

**कीटारिः**। पुं। दद्रुमर्द्दवृक्षे। भा.।

**कीटारिरसः**। पुं। कृमिघ्नौषधे। पाठः—"शुद्धसूतमिन्द्रयवञ्चाजमोदा मनःशिला। पलाशबीजं गन्धञ्च देवदाल्या द्रवैर्दिनं। मर्द्दयं भक्षयेन्नित्य मुद्गपर्णीरसैः सह। सितायुक्तं पिबेच्चानु कृमिपातो भवत्यलम्॥" भैष।

**कीटारिष्टम्**। क्ली। अश्वस्य कीटवेधरोगे। "कीटवध प्रवक्ष्यामि यथाशास्त्रं समासतः। शरन्निदाघयोश्चैव वाहानां घर्मसेवनात्॥ वाजिनां कीटवेधस्तु भवेन्निरुपचारतः। घनकाले च तोयानां सेवनाच्चालथा विना॥ कीटकाण्डास्तदाश्वानां भवन्ति जठरे स्थिराः। ज्यैष्ठशुक्लद्वितीयायां तेभ्यः कीटा भवन्ति च॥" ज. द २५अ.।

**कीडेरः**। पुं। तण्डुलीयशाके। কাঁটানটিয়া।

**कीतनिका**। स्त्री। यष्टीमधुनि। वै. निघ.।

**कीनम्**। क्ली। मांसधातौ। निघ.।

**कीनाशः**। पुं। वानरविशेषे। अ. टी. स्वा.।

**कीरम्**। क्ली। मांसे। रा. नि. व. १६। पुं। शुकपक्षिणि। हला.।

**कीरकः**। पुं। वृक्षभेदे। धरणिः।

**कीरटः (टा)**। पुं, स्त्री। बङ्गधात्यां। वै. निघ.।

**कीरतनूफला**। स्त्री। तूलकवृक्षे। আকন্দ। निघ.।

**कीरनासा**। स्त्री। शुकनासायाम्। वै. निघ.।

**कीरपर्णम्**। क्ली। स्थौणेयके। গেঁটেলা। हिं थुनियार। के.।

**कीरमणिः**। पुं। धूम्याटपक्षिणि। ফিঙে। वै. निघ.।

**कीरवर्णकम्**। क्ली। स्थौणेयकनामगन्धद्रव्ये। গাঁঠিয়ালা रा. नि. व. १२।

**कीरेष्टः**। पुं। निम्बवृक्षे। रा. नि. व. ९। आम्रवृक्षे। आखोटवृक्षे। जलमधूके। रा. नि. व. ११।

**कीर्णपुष्पः**। पुं। क्षीरमोरटे। লতাকড়ার। रा. नि. व. ३।

**कीर्त्तनी**। नीलीवृक्षे। वै. निघ.।

**कीर्त्तिः**। स्त्री। यशसि। पङ्के। विश्वः।

**कीर्त्तिशेषः**। पुं। मरणे। जटा.।

**कीलः (काख्यः)**। पुं। योनौ संसक्ते मूढगर्भविशेषे। भा. म. ४भ. गर्भ. चि.। "सङ्गी च यो भवति कीलकवत् स कीलः।" मा. नि.। शस्त्रज्वालायाम्। कफोणौ। शङ्कौ। मे.। भग्नसन्धानार्थे काष्ठफलके।

**कोलकः**। पुं। कक्कोलि। वै. निघ.।

**कोलपादिका**। स्त्री। हंसपादीक्षुपे। रा. नि. व. ५।

**कोलशायो**। पुं। कुक्कुरे। हे. च.।

**कोलसंस्पर्शः**। पुं। तिन्दुकवृक्षे। গাব গাছ। श. च.।

**कोलाटः**। पुं। नष्टक्षीरपिण्डे। हारा.।

**कोलालम्**। क्ली, पुं। शल्लकीरसे। "कुन्दुरुस्तीक्ष्णगन्धः स्यात्कीलालः शल्लकीरस" इति शब्दार्णवः। मधुनि। श. र.। जले। रक्ते। रा. नि. व. १८।

**कोलालधिः**। पुं। समुद्रे। शब्दर.।

**कोशः**। पुं। वानरे। हला.। पक्षिणि। श. र.। सूर्य्ये। वै. निघ.।

**कोशपर्णः (र्णी)**। पुं, स्त्री। अपामार्गवृक्षे। श. र.। अम.।

**कोशफलम्**। क्ली। कक्कोलि। वै. निघ.।

**कोशरोमा**। स्त्री। कपिकच्छौ। আলাকুশী। रा. नि. व. ३।

**कुकः**। पुं। चक्रवाकपक्षिणि। वै. निघ.।

**कुकभम्**। क्ली। मद्यविशेषे। श. च.।

**कुक(कु)रः**। पुं। ग्रन्थिपर्णीलतायाम्। त्रि। रोगादिना कुञ्चितहस्ते। त्रिका.। अन.। पुं। (कुरः)। कुक्कुरे। उणा.।

**कुकाञ्चनम्**। क्ली। पित्तले। प. मु.।

**कुक्कुटः**। पुं। (Marsilea quadrifolia.) सितावरक्षुपे। শুষণিশাক। शाल्मलीवृक्षे। रा. नि. व. ४।

**कुकु(कू)टी**। स्त्री। ऋषभके। शाल्मलीवृक्षे। रा. नि. व. ८।

**कुकु(र)द्रुः**। पुं। कुकुरद्रुमे। কুকুরশোঁকা। वै. निघ.।

**कुकुन्दः (रः)**। पुं। कुक्कुरद्रुमे। কুকুরশোঁকা, কুকুরমুতা। हिं कुकुरौंदा। भा. पू. १भ.। क्ली। The cavities of the loins. पार्श्वजघनयोः वहिर्भागे पृष्ठवंशमुभयतो नातिमिस्ने मर्म्मद्वये, नितम्बस्थकूपकद्वये, पृष्ठवंशाधोगर्त्तद्वये। सु. शा. ६अ.। अम.।

**कुकुन्दनी**। स्त्री। ज्योतिष्मतीलतायाम्। वै निघ.।

**कुकुन्दरमेचकः**। पुं। गौरचतण्डुल्याम्। গোরক্ষচাকুলিয়া। रस. र. स्तनरोग. चि.।

**कुकुभः**। पुं। कुक्कुभपक्षिणि। वै. निघ.।

**कुकुरजिह्वा**। स्त्री। Acheiris Kookor zibha. मत्स्यविशेषे।

**कुकुरुन्दः**। पुं। कुक्कुरद्रुमे। কুকুরশোঁকা। वै. निघ.।

**कुकुवाक्**। पुं। कुक्कुभपक्षिणि। वै. निघ.।

**कुकूटम्**। क्ली। मयूरपुच्छे। वै. निघ.।

**कुकूणकः**। पुं। Weakness of the eyes in infants. शिशूनां नेत्रवर्त्मगतरोगे। কেতো। हिं कोथआइ। भा. म. ४भ.। "कुकूणकः क्षीरदोषाच्छिशूनामक्षिवर्त्मनि जायते सरुजं नेत्रं कण्डूरं प्रस्रवेद्दहु। शिशुः कुर्य्याल्ललाटाक्षिकूटनासाप्रघर्षणं। शक्तो नार्कप्रभां द्रष्टुं न चाक्ष्युन्मीलनक्षमः॥" मा.नि.। पादरोगभेदे।

**कुकूलः**। पुं। तुषानले। रत्ना.। क्ली। श्वभ्रे। हारा.।

**कुकोलम्**। क्ली। कोलीवृक्षे। কুল গাছ। श.च.।

**कुक्कुटः (कः)**। पुं। ताम्रचूड़पक्षिणि। কুকড়া। মুর্গী। तें कोडि, कुक्क। भा.पू.१भ.। तत्पर्य्यायः,—काहकः(त्रि), कुहकस्वनः, निशावेदी, विहताक्षः(हे.), कुहनस्वरः (हा.), निशाकरः (शब्दर.), प्रकाशकज्ञाता (श.), यामघोषः (शब्दमा.), कृकवाकुः, ताम्रचूड़ः, चरणायुधः (अ.), कलाविकः रात्रिवेदी (त्रि), कालज्ञः, निषोद्धा, विष्किरः, नखरायुधः, दक्षः, यामनादी, शिखण्डिकः (रा), ताम्रशिखी (ज.), रात्रिवेदः, ऊषाकरः, हताक्षः, काहनः (शब्दर)। See अग्निचूड़ः। कुक्कुभपक्षिणि.। কুকো পাখী। मे.। श. र.। अग्निकणे। हे. च.। (कः) सुनिषण्णशाके। भा. पू. १भ. शाकव.। সুষণিশাক इति कोङ्कणे। प्रा. कुरुडु, देवकुरुडु। गुणा.—"कुक्कुटश्शीतस्तुवरो ग्राहकोऽणरसायनः। मेधारुचिकरः शीतः रुक्षश्चाग्निप्रदीपकः। अविदाही लघुः स्वादुः हृद्यो वृष्यस्त्रिदोषजित्। ज्वरमेहश्वासदाहभेदःकुष्ठभ्रमापहः। अरोचकं नाशय-



त्येवमुक्तं पुरातनैः॥" वै.निघ.। See शुनिषण्णः। शाल्मलिवृक्षे।

**कुक्कुटपादपः (पादी)**। पुं,स्त्री। देवसर्षपे। गुणाः—"सरा कुक्कुटपाद्युक्ता मूले रक्ता च रुक्षदा। गन्धे चोग्रा सन्निपात-कफ-वात-विनाशिनी॥" वै.निघ.। कटूष्णः कफघ्नः रुच्यः मुखरोगघ्नश्च। रा.नि.व.९।

**कुक्कुठपुटः**। पुं। हस्तप्रमाणखाते दशवनकरीषकृतौषधपुटे। मतान्तरे लक्षणं यथा—"वितस्तिमात्रके खाते कथितङ्कौक्कुटं पुटम्।" मतान्तरे तु, "षोड़शाङ्गुलके खाते कस्यचित् कौक्कुटं पुटम्" इति भा.। अपरे तु, "अधः षड़ङ्गुलं खातं चतुर्द्दिक्षु च तादृशं। एतत् कुक्कुटनामानं पुटं विद्याद्भिषग्वरैः॥" वैद्यकान्तरं।

**कुक्कुटपुटभावना**। स्त्री। मिलितपलद्वयरसेन भावनां दत्त्वा कुक्कुटपुटेन शोषणे। वैद्यकम्।

**कुक्कुटपेटकः**। पुं। कुक्कुटपिच्छे। वै निघ.।

**कुक्कुटमञ्जरो**। स्त्री। चविकायाम्। চই। रा.नि.व.६।

**कुक्कुटमर्द्दका**। स्त्री। आरामशीतलायाम्। वै.निघ.।

**कुक्कुटमस्तकम्**। क्ली। चव्ये। रा.नि.व.६। मारिचभेदे। वै.निघ.।

**कुक्कुटशिखः**। पुं। कुसुम्भवृक्षे। श. च.।

**कुक्कुटा**। स्त्री। पीतझिण्ट्याम्। वै. निघ.।

**कुक्कुटाण्डः (कः)**। पुं। तदण्डतुल्यतण्डुले व्रीहिधान्ये। कुक्कुटाण्डाकृतिव्रीहिः कुक्कुटाण्डक उच्यते। भा. पू. १भ. धान्यव.। क्ली। कुक्कुटडिम्बे।

**कुक्कुटाण्डकपालम**। क्ली। कुक्कुटाण्डावरणे। কুকড়ার ডিমের খোলা। सुश्रु.।

**कुक्कुटाण्डदलम्**। क्ली। कुक्कुटाण्डावरणे। सुश्रु.।

**कुक्कुटाण्डसमः**। पुं। तदाकारवर्णवार्त्ताकौ। वै. निघ.।

**कुक्कुटाभः (हिः)**। पुं। कुक्कुटसदृशवर्णचरणसर्पभेदे। कुक्कुटाहिरिति लोके।; हे. च.। क्ली। कुक्कुटडिम्बकपाले। কুকড়ার ডিমের খোলা। व्रणोन्मादने हितम्। सु. सू. २१ अ.।

**कुक्कुटिका**। स्त्री। प्लवचर-पक्षिविशेषे। सश्रु.।

**कुक्कुटी** इन्)। पुं। कुक्कुटे। कुक्कुभपक्षिणि। तदण्डाकारकन्दे। मे.। स्त्री। Silk cotton tree. शाल्मलिवृक्षे। रा. नि. व. ८, भा. पू. ४भ. सूत्राष्टकतैले। शितिवारके। वा. उ. ५अ.। स्त्री। कुक्कुटे। মুরগী। क्षुद्रगृहगोधिकायाम्। টিকটিকি। श. र.। उत्कटवृक्षे। শ্বেত ওকড়া, কালিশাবিষর। प. मु.। उच्चटामूले। "उच्चटा बहुलिङ्गी स्यात्सैवोक्ता कुक्कुटी क्वचित्।" रत्ना.।

**कुक्कुटीमूलम्**। क्ली। शाल्मलिमूले। ज. द.।

**कुक्कुटोरगः**। पुं। गोणससर्पे।

**कुक्कुभः**। पुं। A wild cock. (Phasianus Gallus.) पक्षिविशेषे। কুকো পাখী বা পাৎকুকা। अम.। वनकुक्कुटे। हारा.।

**कुक्कुरः**। पुं। सारमेये। কুকুর। हि कुत्ता। रत्ना.। क्ली। ग्रन्थिपर्णे। গেঁঠেলা। मे.।

**कुक्कुरद्रुः**। पुं। वृक्षविशेषे। কুকুরশোঁকা। हिं. कुकुरौंदा। तत्पर्य्यायः,—कुकुन्दरः, ताम्रचूड़ः, सूक्ष्मपत्रः, मृदुच्छदः। गुणाः—कटुत्वं तिक्तत्वं ज्वरशोणितकफघ्नत्वं। मद.। तन्मूलमार्द्रं मुखे धृतं मुखशोषहृच्च। भा.।

**कुक्कुरमेचुका (चक:)**। स्त्री। गौरचतण्डुलायाम्। গোরক্ষচাকুলিয়া। भैष. स्त्रीरोग. चि.। "कुक्कुरमेण्डुकमूलम्।"

**कुक्कुरी**। स्त्री। कुक्कुरपत्न्याम्। श. र.।

**कुक्कुवाक्**। पुं। सारङ्गमृगे। रा. नि. व. १९।

**कुग्रामः**। पुं। कुत्सितग्रामे। "धनिनः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः। पञ्च यत्र न विद्यन्ते तत्र वासं न कारयेत्॥"

**कुङ्कुमम्**। क्ली। Saffron. (Crocus sativus.) तन्नामकवृक्षे। स्वनामख्यातगन्धद्रव्ये। কুঙ্কুম। हिं जाफरान्। मं कुम्कुम्केसर। तें कुंकुम। तत्पर्य्यायः,—कुसुमात्मकं (हा)। शोणिताह्वयम् (र.), पीतकं, घस्रं, रक्तसंज्ञं (त्रि.), सङ्कोचपिशुनं (भा.), हरिचन्दनं, खलं, रजं, दीपकं, लोहितं, सौरभं, चन्दनं (शब्दच.),

काश्मीरजन्म, अग्निशिखं, वरं, वाह्लीकं, रक्तचन्दनं (भ. टी.), अग्निशेखरं, असृक्, काश्मीरजं, पीतकं, काश्मीरं, रुधिरं, शठं, शोणितं, रक्तं, वरेण्यं, अरुणं, कालेयकं, जागुड़, कान्तं, वह्निशिखं, केसरवरं, गौरं, केशरं। कुङ्कुमं काश्मीरजमेव सूक्ष्मकेशरं रक्तवर्णं पद्मगन्धि श्रेष्ठम्। यच्च वाह्लीकदेशजातं तत् पाण्डुवर्णं केतकीगन्धं सुगन्धञ्च तन्मध्यमम्। पारस्यजञ्च मधुगन्धमीषत्-पाण्डुवर्णं स्थूलकेशरञ्च तदधमम्। गुणाः— कटुकं तिक्तं स्निग्धं शिरोरोगव्रणक्रिमिहरं वर्णकरं वमिहरं व्यङ्गघ्नं त्रिदोषघ्नञ्च। भा. प्र. १भ.। रेचकं वैवर्ण्यकण्डूघ्नञ्च। राज.। हास्यकरमुष्णं बल्यञ्च। मद. व. ३। सुरभि तिक्तकटूष्णं कासवातकफकण्ठरोगघ्नं। शिरःशूलविषदोषघ्नं रोचनं कान्तिकरञ्च। रा. नि. व. १२।

**कुङ्कुमरेणुः।** पुं, स्त्री। कुङ्कुमगुण्डके।

**कुङ्कुमशालिः।** पुं। स्वनामख्यातशालिधान्यविशेषे। गुणाः—मधुरः शीतलः रक्तपित्तातिसारघ्नश्च। रा. नि. व. १६।

**कुङ्कुमा।** स्त्री। शाल्मलिवृक्षे। वै. निघ.।

**कुङ्कुमागुरुकः।** पुं। पीतरक्ते हरिचन्दने। गुणाः— शीतस्निग्धः पित्तश्रमापहः। शोषञ्च दवथुञ्चैव नाशयेदिति कीर्त्तितः। स्वर्गभोग्यो मनुष्याणां दुर्लभः परिकीर्त्तितः।" वै. निघ।

**कुङ्कुमाद्यतैलम्।** क्ली। नीलिकापिड़कादौ हितम्। तैलं १ श.। क्वाथार्थं—कुङ्कुम-रक्तचन्दन-लाक्षा-मञ्जिष्ठा-यष्टिमधु-कृष्णागुरु-वीरणमूल पद्मकाष्ठ-नीलोत्पल-वटाङ्कुर-पर्कटीशुङ्गा पद्मकेशरदशमूलानां प्रत्येकं पल, वारि १६ श. शे. ४ श., क्वाथेन, मञ्जिष्ठायष्टिमधुमधुकलाक्षारक्तचन्दनानां प्रत्येकं कर्षमितेन कल्केन छागदुग्धेन शरावद्वयेन च पचेत्। कषायोक्तमपि कुङ्कुमं पाकसिद्धे प्रक्षिपन्ति केचित्। अन्यद्यथा—"कुङ्कुमं किंशुकं लाक्षा मञ्जिष्ठा रक्तचन्दनं। कालीयकं पद्मकञ्च मातुलुङ्गस्य केशरम्। कुसुम्भं मधुयष्टी च फलिनी मदयन्तिका। निशे गोरोचना पद्ममुत्पलञ्च मनःशिला। काकोल्यादिसमायुक्तैरेतैश्चापि भिषक्। लाक्षारसपयोभ्याञ्च तैलप्रस्थं विपाचयेत्। कुङ्कुमाद्यमिदं तैलमभ्यङ्गात्काञ्चनोपमं। करोति...॥" च. द.। रस. र.।

**कुङ्कुमारुणः।** त्रि। रक्तवर्णे।

**कुङ्गनी।** स्त्री। महाज्योतिष्मतीलतायाम्। बड़ लता फटकी। रा. नि. व. ३।

**कुचः।** पुं। स्तने। स्तनाग्रभागे, चूचुके। रा. नि. व. १८।

**कुचखण्डिका (ण्डी)।** स्त्री। मूर्वायाम्। मूर्गा। श. च.।

**कुचतटाग्रम्।** क्ली। चूचुके।

**कुचन्दनम्।** क्ली। (Pterocarpus santalinus. रक्तचन्दनविशेषे। र. मा.। Sappan or loeg wood. पत्राङ्गे। बकम् काठ। कुङ्कुमे। श. च.। Leguminus Pavonina. मलेन्द्रीचन्दने। सु. सू. ३८ अ.। प्रियङ्ग्वादि।

**कुचफलः।** पुं। Pomegranate. कपित्थवृक्षे। दाड़िमवृक्षे। रा. नि. व. ११। तत्फले।

**कुचमुखम्।** क्ली। चूचुके। अम.।

**कुचाग्रम्।** क्ली। स्तनाग्रभागे। স্তনের বোঁটা।

**कुचाङ्गेरी।** स्त्री। A kind of wood sorrel (Rumex Vesicarius.) चुक्रे। চুকাপালং। र. मा.

**कुचिः।** पुं। अष्टमुष्टिपरिमितमाने। वै. निघ.।

**कुचिकः।** पुं। (Unibranchapertura cuchiya.) मत्स्यविशेषे। কুঁচিয়া মাছ। एतद्दृष्टगौरवमयने।

**कुचिकर्णः।** पुं। तन्नामकर्णरोगभेदे। तत्र वातादभ्यन्तरे शष्कुली सङ्कुचिता भवति। वा. उ. १७ अ.।

**कुचिका।** स्त्री। रिपुघातिन्याम्। কুচুই কাঁটা।

**कुचिचा।** स्त्री। सूर्य्यावर्त्ते।

**कुचिलम्।** क्ली। कुचेले। কুঁচলে। वै. निघ.।

**कुचिला।** स्त्री। तगरपादिकायाम्। विषतिन्दुके।

**कुचोका।** स्त्री। भूमिशयजन्तुविशेषे।

**कुचला।** स्त्री। पाठायाम्। मे.।

**कुचुटकः।** पुं। जलशाकविशेषे। वै. निघ.।



**कुचेलः (ला)।** पुं, स्त्री। कनकफलवृक्षे। কুঁচলে গাছ। कुष्ठ. चि. कन्दर्पसारतैले। त्रि। कुत्सितवस्त्रे। मे.।

**कुचेलिका (ली)।** स्त्री। पाठायाम्। आकनादि। प. मु.। रा. नि. व. ६।

**कुच्छम्।** क्ली। कुमुदे। श. च.। श्वेतपद्मे।

**कुच्छायम्।** क्ली। शरीरे। वै. निघ।

**कुच्छुटः।** पुं। वञ्जुलकवृक्षे। वै. निघ.।

**कुजः।** पुं। वृक्षे। रा. नि. व. २। क्ली। पद्मे।

**कुञ्ज(ञ्झ)शः।** पुं। कुड़िशमत्स्ये। কুড়চী মাছ। See कुड़िशः।

**कुज्झटिः (का) (टी)** } स्त्री। कुज्झटिकायाम्।
**कुज्झिका (ज्झी)** } कुश्रा, कुश्रासा। श. र.।

**कुञ्चनम्।** क्ली। नेत्रवर्त्मजरोगविशेषे। तस्य लक्षणं यथा—"वाताद्या वर्त्मसङ्कोचं जनयन्ति यदा मलाः। तदा द्रष्टुं न शक्नोति कुञ्चनं नाम तद्विदुः॥" मा. नि.। पादरोगभेदे।

**कुञ्चफला।** स्त्री। कुष्माण्डिकायाम्। কুম্ড়া।

**कुञ्चिः।** पुं। अष्टमुष्टिपरिमाणे। "अष्टमुष्टिर्भवेत् कुञ्चिः।" प. प्र.।

**कुञ्चिका।** स्त्री। मेथिकायाम्। रा. नि. व. ६। वै. निघ. अर्श. चि. हवुषा. तक्रारिष्टे। कृष्णजीरके। जटा.। गुञ्जायाम्। कण्टकुचाइ इतिख्याते वृक्षविशेषे। कञ्चिकायाम्। काञ्चे। श. च.। वचायाम्। मत्स्यभेदे। কুঁচে মাছ।

**कुञ्चितम्।** क्ली। तगरपुष्पे। তগরপাদুকা। रा. नि. व. १०। पिण्डीतगरे। त्रि। वक्रे। अम.।

**कुञ्ची।** स्त्री। जीरके। वृहज्जीरके। भा. पू. १भ.।

**कुञ्जः।** पुं, क्ली। निकुञ्जे। हनुदेशे। हस्तिदन्ते। मे. जादिकं।

**कुञ्जप्रियः।** पुं। जवावृक्षे। वै. निघ.।

**कुञ्जरः।** पुं। हस्तिनि। कण्टकुचाइ इति विख्याते वृक्षे। रत्ना.। अश्वत्थवृक्षे। त्रिकां.। केशे। मे.।

**कुञ्जरकणा।** स्त्री। गजपिप्पल्याम्।

**कुञ्जरपादपः।** पुं। [illegible]। वै. निघ.।

**कुञ्जरपिप्पली।** स्त्री। गजपिप्पल्यां। श. मा

**कुञ्जरपुटः।** पुं। गजपुटे। र. सा. सं.।

**कुञ्जरक्षारमूलम्।** क्ली। मूलके। মূলো। रा. नि. व. ७।

**कुञ्जरा (री)।** स्त्री। धातकीवृक्षे। ধাইফুল গাছ। र. सा.। पाटलवृक्षे। পারুল গাছ। मे. रन्तिकं। (री) हस्तिन्याम्। श. च.।

**कुञ्जरारातिः।** पुं। शरभे। हे. च.।

**कुञ्जरालुकम्।** क्ली। आलुकविशेषे। হস্ত্যালু। श. च.।

**कुञ्जराशनः।** पुं। अश्वत्थवृक्षे। अम.।

**कुञ्जरिका।** स्त्री। खञ्जकीवृक्षे। वै. निघ.।

**कुञ्जलः।** पुं। रसुनभेदे। क्ली। काञ्जिके। प. मु.।

**कुञ्जवल्ली।** स्त्री। निकुञ्जिकाम्लवृक्षे। रा. नि. व. ८।

**कुञ्जिका।** स्त्री। कृष्णजीरके। जटा.। निकुञ्जिकाम्लवृक्षे। रा. नि. व. ८।

**कुटः।** पुं, क्ली। कोटे। गड़। घटे। मे.। चिरवकवृक्षे। हे. च.। शिलाकुट्टे। পাতরভাঙ্গা। पर्व्वते। हा.। आलये। शृङ्गे। के.।

**कुटकः।** पुं। कुटजवृक्षे।

**कुटङ्कः (ङ्ककः)।** पुं। गृहाच्छादने। চাল। (कः) कुटीरे। কুঁড়ে। तरुलतागहने। भ. टी.।

**कुटचः (जः)।** पुं। (Wrightia antr-dysenterica,) (Holarrhena antidysenterica,) (Echites antidysenterica) स्वनामख्यातवृक्षे। কুড়চি গাছ। हिं मं करैया, कुड़ा। क कोड़सिगेयमरनु। तें अंकुड़ुचेट्टु, अगिसचेट्टु, तुम्मिकचट्टु। उत्, कुडिया। श. र.। तत्पर्य्यायः,—शक्रः, वत्सकः गिरिमल्लिका (अ.), पाण्डुरः (शब्दर.), कटुकः, शक्राशनः (श), कौटजः (भ. टी.), तिक्तकः, रक्तनाशकः (द्रव्याभि.), वृक्षकः, शक्राह्वयः, शक्रपर्य्यायः र.), कूटजः, काही, कालिङ्गः, मल्लिकापुष्पः; प्रावृष्यः, शक्रपादपः, वरतिक्तः, यवफलः, संग्राही, पाण्डुरद्रुमः, प्रावृषेण्यः, महागन्धः, इन्द्रद्रुः। स तु द्विविधः सितासितभेदेन। गुणाः— —कटुतिक्तोष्णः कषायः अतिसारघ्नः। तच्च अश्विवः पित्तघ्नः अर्शोघ्नोऽपि च। रा. नि. व. ९। [illegible]

इति। राज.। "कुटजः कटुको रूचो दीपनस्तुवरो हिमः। अर्शोऽतीसारपित्तास्रकफतृष्णामकुष्ठनुत्। तत्पुष्पं वातलं शीतं तिक्तं पित्तातिसारजित्।" भा. पू. १भ.। तथा, "पुष्पन्तु वत्सकस्योक्तं तुवरञ्चाग्निदीपनम्। तिक्तं शीतं वातलञ्च लघु पित्तातिसारनुत्। रक्तदोषङ्कफं पित्तं कुष्ठञ्चवातिसारकं। क्रमींश्च हरेदेतदुक्तं पूर्व्वैश्च सूरिभिः॥ कृष्णस्तु कुटजश्चोक्तो रक्तदोषार्शनाशनः। त्वग्दोषपित्तशमनो गुणास्त्वन्ये तु पूर्व्ववत्॥" वै. निघ.। तैलं मूलकतैलगुणं। क्ली। इन्द्रयवे। सि. यो. अतिसा. चि.। कमले। वै. निघ.।

**कुटजत्वक् (फलम्)**। स्त्री, क्ली। कुटजमूलत्वचि। কুড়চির মূলের ছাল। ২. द. ज्वरातिसा. चि.। "कुटजत्वक्फलैः सृतम्।" इन्द्रयवे। सि. यो. अर्श. चि. कुटजाद्यघृते।

**कुटजपुटपाकः**। पुं। सन्निपातरक्तातीसारे हितः। कुटजमूलत्वक् ३२ तो. तण्डुलोदकेन सम्पिष्य तद्गोलकं जम्बूपत्रेणावेष्ट्य सूत्रेणावेष्टयेत्। अथ तत्पिष्टगोधूमेनालिप्य तदुपरि मृत्तिकालेपनं दत्त्वा करीषाग्नौ पचेत्। यावल्लेपो रक्तवर्णः तावदवतार्य्य रसं गालयेत् मधुना च पलमितो रसो हितः। भा म. १भ. रक्तातिसा. चि.। सा. कौ.। भैष.। "स्निग्धं घनं कुटजवल्कमजन्तुजग्धमादाय तत्क्षणमतीव च पोथयित्वा। जम्बूपलाशपटतण्डुलतोयसिक्तं बद्धं कुशेन च बहिर्घनपङ्कलिप्तम्। सुस्विन्नमेतदवपीड्य रसं गृहीत्वा क्षौद्रेण युक्तमतिसारवते प्रदद्यात्। তাজা কুড়চির মূলের ছাল কুটিয়া চেলুনীর জলে মাখিয়া জামপাতায় কুশ দ্বারা বান্ধিয়া মৃত্তিকা লেপনপূর্ব্বক পাক করিবে। লেপনমৃত্তিকা লাল হইলে পাক শেষ হইবে।

**कुटजमल्ली**। स्त्री। वृक्षविशेषे। কুড়চিমল্লিকা।

**कुटजरसक्रिया**। स्त्री। अर्शोरोगघ्नी। कुटजत्वक् १०९ प. आकाशवारि (अभावे भौमवारि) ६४ श. शे. १६ श. (मतान्तरे अष्टभागशिष्टः)। क्वाथे पुनः पक्वा लेहीभूते तत्र मोचरस-वराहक्रान्ता-प्रियङ्गिन्द्रयवानां प्रत्येकं चूर्णं त्रिपलिकं दत्त्वा पुनः पचेत्, पक्वा च दर्व्वीलेपियोग्ये सञ्जाते पाकशेषकृत्वावतारयेत्। কুড়চিছাল ১০৯॥০ শ. জল ৬৪ শ. শেষ ১৬ শ বা ৮শ.। পাক করিয়া লেহবৎ হইলে, মোচরস, বরাক্রান্তা, প্রিয়ঙ্গু, ইন্দ্রযব প্রত্যেকে ৩ পল প্রক্ষেপ দিবে।

**कुटजलेहः**। पुं। अर्शोरोगघ्नः। कुटजत्वक् १२॥० श. वारि ६४ श. शे. क्वाथः ८ श.। वस्त्रपूत क्वाथं सपुराणगुड़ (२ प) पक्वा लेहीभूत, अवतार्य्य तत्र भेलकादीनां चूर्णं प्रत्येकं १ प. प्रक्षिप्य यथाविधि पाकशेषं कुर्य्यात्। चूर्णानि यथा—रक्तचन्दनं विड़ङ्गं त्रिकटु त्रिफला रसाञ्जन चित्रकमूलं इन्द्रयवः वचा अतिविषा विल्वपेशी च। च. द. अर्श. चि.।

**कुटजवीजम्**। क्ली। इन्द्रयवे। रा. नि. व. ९।

**कुटजसुधा**। स्त्री। कुटजचूर्णे। কুড়চির চূর্ণ। "कौटजा शोषनाशिनी।" वै निघ.।

**कुटजक्षीरम्**। क्ली। रक्तातीसारे प्रशस्तम्। कुट्टितकुटजमूलत्वक १६ तो. वारि ४ श. शे. १ श. छानयित्वा तत्र क्वाथे छागीपयः पलद्वयं दत्त्वा पक्वा च क्षीरशेषमवतारयेत्। भा. म. १भ. अतिसा चि।

**कुटजा (भिधम्)**। स्त्री, क्ली। इन्द्रयवे। रा. नि. व. ९।

**कुटजादिक्वाथः**। पुं। रक्तातीसारे हितः। "कुटजातिविषा मुस्ता बालकं लोध्रचन्दनं। धातकी दाड़िमं पाठा क्वाथमेषां समाक्षिकं। पिबेद्रक्तातिसारेषु दाहशूलप्रशान्तये।" भा. म. १भ. रक्तातिसार.। द्वितीयः—"कुटजं दाडिमं मुस्तं धातकी विल्वबालकं। लोध्रचन्दनपाठाश्च कषायं मधुना पिबेत्॥" কুড়চিছাল, আতইচ, মুতা, বালা, লোধ, রক্তচন্দন, ধাইফুল দাড়িমছাল, আকনাদিমূল প্রত্যেকে ১৭৫০ রতি। জল ॥০ শ. শে. ৵ অর্দ্ধ পোওয়া। দ্বিতীয় পূর্ব্ববৎ কেবল আতইচ স্থানে বেলশুঁট। भैष.।

**कुटजाद्यघृतम्**। क्ली। अर्शोरोगे हितम्। घृतं ४ श. कल्कद्रव्याणां समष्टिरष्टपलं, वारि ४ श. एकत्र पचेत्। द्रवानुक्तौ जलदानविधानात्। अनुक्ते द्रवकार्य्ये तु सर्व्वत्र सलिलं मतम्। प. प्र.। ঘৃত ৪ শ. জল ৪ শ.। কল্কদ্রব্য কুড়চির ছাল, ইন্দ্রযব, নাগেশ্বর, নীলোৎপল, লোধকাষ্ঠ, ধাইফুল প্রত্যেকে ১০॥৵ তো. একত্র পাক করিবে। च. द. अर्श. चि.।



**कुटजावलेहः**। पुं। अतीसारे हितः। कुटजमूलत्वक् पलशतं वारि ६४ श. शे. १६ श. पादशिष्टक्वाथः पुनर्लेहवत् पाच्यः पाकशेषे जाते अवतार्य्य सौवर्चलादीनां चूर्णं पलद्वयं प्रक्षेप्यम्। "शतं कुटजमूलस्य क्षुण्णं तोयार्मणे पचेत्। क्वाथे पादावशेषेऽस्मिन् लेहं पूते पुनः पचेत्। सौवर्चलयवक्षारविड़सैन्धवपिप्पली। धातकीन्द्रयवाजाजीचूर्णं दत्त्वा पलद्वयं। लिह्याद्वदरमात्रन्तु शीतं क्षौद्रेण संयुतम्॥" কুটজত্বক্ ১২॥০ শ. জল ৬৪ শ. শে. ১৬ শ.। ছাঁকিয়া ঐ ক্বাথ পুনঃ পাক করিয়া লেহের মত হইলে, তাহাতে সচল, বিট্, সৈন্ধব, যবক্ষার, পিপুল, ধাইফুল, ইন্দ্রযব ও জীরা উহাদের চূর্ণ একত্র ১৬ তোলা দিয়া নামাইবে। মাত্রা ১ তোলা, মধুর সহিত। च. द. अतीसा. चि.।

**कुटजाष्टकम्**। क्ली। अतिसारघ्नमौषधम्। कुटजमूलत्वक् १०० प. वारि ६४ श. शे. १६ श.। अथ शाल्मल्यादीनां प्रत्येकं पलं गृहीत्वा एकत्र सम्पिष्य तत्र क्वाथे दापयेत्। अथ पुनः पक्वा पाकशेषः कार्य्यः। केचित् शाल्मल्यादीना चूर्णम्प्रक्षिपन्ति। अन्ये च पाठादिकं दत्त्वा यावद्दर्व्वीलग्नं न भवति तावत्पचन्ति। पाकशेषे मोचरसचूर्णं प्रक्षिपन्ति। प्रक्षेप्यद्रव्यं यथा—আকনাদি, বরাক্রান্তা, আতইচ, মুতা, বেলশুঁঠ, ধাইফুল, মোচরস প্রত্যেকে ৮ তোলা। च. द.।

**कुटजाष्टकावलेहः**। पुं। अतिसारे हितः। कुटजत्वक् ५० प. वारि ६४ श. शे. १६ श.। अथ क्वाथं वस्त्रपूतङ्कृत्वा पुनः पचेत्। पाकशेषप्राये अवतार्य्य लज्जालुका धातकी विल्वशलाटुः पाठा (আকনাদি) मुस्तकमोचरसौ अतिविषा चेति द्रव्याणां चूर्णं प्रत्येकं पलं प्रक्षेप्तव्यम्। भा. म. १भ.।

**कुटजीवः**। पुं। पुत्रजीववृक्षे। वै. निघ.।

**कुटजोद्भवः (वा)**। पुं, स्त्री। इन्द्रयवे। वा. टी.। हे. च.।

**कुटनी**। स्त्री। महाज्योतिष्मतीलतायाम्। मे.।

**कुटन्नक(ट)म्**। क्ली, पुं। भद्रमुस्तायाम्। नागरमुता। प. म.। कैवर्त्तिमुस्तके। কেশুর। भ. टी.। पुं। विकङ्कतवृक्षे। বঁইচি গাছ। श्योणाकवृक्षे। रा. नि. व. ९। सु. सू. ३८ अ.। कैवर्त्तमुस्तके। वितुन्नकनाम्नो वृक्षविशेषस्य त्वचि (गड़नजो इति लोके)। भा.।

**कुटन्नटा**। स्त्री। पालङ्कशाके। सु. चि. २० अ.।

**कुटपः**। पुं। कुड़वमानभेदे। गृहसमीपोद्याने कुड़वाद्यमाने। हे. च.। क्ली। पद्मे। रा. नि. व. १०।

**कुटपिनी**। स्त्री। पद्मिन्याम्। পদ্মের ঝাড়। रा. नि. व. १०।

**कुटम्बकम्**। क्ली। सुगन्धरोहिषतृणे। वै. निघ.।

**कुटर(रि)(रु)णा (र(रि)णी)**। स्त्री। त्रिवृतायाम्। তেউড়ী। प. मु.। अरुणमूलत्रिवृति। शुक्लत्रिवृति। वा. सू. १५ अ.। "क्रमुककुटरणी शङ्खिनी चर्मसाह्वा।"

**कुटरवाहिनी**। स्त्री। श्वेतत्रिवृति। वै. निघ.।

**कुटरुः**। पुं। पटगृहे। कानात्। उणा.।

**कुटलम्**। क्ली। पटलं। ঘরের চাল। हारा.।

**कुटशाल्मलिः**। पुं। रोहितकवृक्षे। के.।

**कुटामोदः**। पुं। गन्धमार्जाराण्डे। वै. निघ.।

**कुटारः**। पुं। वृत्ते। शब्दर.।

**कुटिः**। पुं। वृक्षे। श. र.। शरीरे। उणा. स्त्री। सुरामांस्याम्। मद. व. ३। गृहे। अ. टी. भ.।

**कुटिकः**। पुं। स्तन्फल्यां, कुष्ठे। কুড়। हारा.।

**कुटिचरः**। पुं। जलशूकरे। শুশুক। श. र.।

**कुटि(ठि)ञ्जरः**। पुं। पत्रशाकविशेषे, वनवास्तुके। गुणाः—"कुटिञ्जरः स्वादुपाकः क्षारो रूक्षश्च शीतलः। गुरुर्मलस्तम्भकरो दोषोत्पादनकारकः" वै. निघ.।

**कुटि(टी)रम्**। क्ली। क्षुद्रगृहे। जटा.।

**कुटिलम्**। क्ली। वनवास्तूके। वै. निघ.। पिण्डीतगरे, तगरपादिकायाम्। তগরপাদুকা। प. मु.। पुं। शङ्खे। अश्मके। रा. नि. व. १३। ति। वक्रे। शब्दर.।

**कुटिलपुष्पिका**। स्त्री। तगरपादिके। प. मु.। स्पृक्कानामगन्धद्रव्ये। रा. नि. व. १२।

**कुटिलसप्तकम्**। क्ली। चव्ये। मे.।

**कुटिला**। स्त्री। स्पृक्कानाम-गन्धद्रव्ये। See कुटिलपुष्पिका।

**कुटी**। मुरानामगन्धद्रव्ये। मुरामांसी। रा. नि. व. १२। अग्न्यादिरहितसिक्थकी। प. प्र. २ ख.। श्वेतकटभीवृक्षे। मरुवकवृक्षे। वै. निघ.।

**कुटीका**। स्त्री। भूशयमृगे। च. सू. ४अ.।

**कुटीप्रावेशिकम्**। क्ली। कुटी गृहं, तत्प्रवेशयोग्ये (द्विविधरसायनान्यतमे)। च. चि. १अ.। सु. चि. ४ अ.। वा. उ. ३९अ.।

**कुटीस्वेदः**। पुं। स्वेदविशेषे। च. सू. १४अ.।

**कुटङ्गकः**। पुं। वृक्षलतागहने। गृहाच्छादने। कुटीरे। अ. टी. सा.।

**कुटुम्बकः**। पुं। भूतृणे। गन्धतृणविशेष। रा. नि. व. ८।

**कुटुम्बिनी**। स्त्री। क्षीरनामख्यातमहाक्षुपे। तत्पर्य्यायः,—पयस्या, क्षीरिणी, अलकामुका, वक्रशल्या, दुराधर्षा, क्रूरकर्म्मा, सिरिसिटिका, शीता, प्रहरकुटवी, शीतला, जलरुहा। गुणाः—मधुरा ग्राहिणी कफ-पित्तघ्नी व्रण-रक्तदोष-कण्डूघ्नी रसायनी च। रा. नि. व. ५।

**कुटेरः**। पुं। कुटीरे।

**कुट्टकः**। पुं। पानीयकाके। पानकोड़ी। वै निघ.।

**कुट्टनम्**। क्ली। छेदने। कोटा। कम्पने। तापने।

**कुट्टमलः**। पुं, क्ली। पुष्पकोरके।

**कुट्टल(क)म्**। क्ली। नीलोत्पले। नीलशुण्डि। रा. नि. व. १०।

**कुट्टारम्**। क्ली। सुरते। मे.। कम्बले। त्रि.।

**कुट्टितमांसम्**। क्ली। मांसव्यञ्जनभेदे। मांस-काबाब्। प्र. चि.।

**कुट्टिमः**। पुं। दाड़िम्बवृक्षे। दाड़िम गाछ। रा. नि. व. ११। बद्धभूमौ। बान्धान मेजे। हला.।

**कुड्मलः**। पुं। मकुले। अम.। कोषे। जटा.।

**कुठः**। पुं। चित्रकक्षुपे। रा. नि. व. ६। वृक्षे। अम.।

**कुठरः**। पुं। दधिविघ्नस्तम्भे। अम.।

**कुठरिणी**। स्त्री। श्वेतलताख्याम्।

**कुठाकुः**। पुं। Wild pecker. पक्षिविशेषे। काठ्ठोकुरा। हिं खुटक्वदैया। उज्ज्वा., विश्व.।

**कुठाटङ्कः**। पुं। कुठारे। जटा.।

**कुठारः**। पुं। कुठेरकवृक्षे। र. सा. सं.। अस्त्रविशेषे।

**कुठारकतैलम्**। क्ली। शारीरव्रणघ्ने तैले। पाठः—"कुठारकात्पलशतं क्वाथयेद्दलशोऽम्भसि। तेन पादावशेषेण तैलप्रस्थं विपाचयेत्। कल्कैः कुठारापामार्गशोभिकामञ्जिष्ठाभिश्च। एतत् कुठारकं नाम व्रणशोधनरोपणम्। नाड़ीषु परमोऽभ्यङ्गः......।" अत्र मचिकेत्यत्र चिङ्गड़ीमत्स्य इति केचिद्वदन्ति। कुम्भाचिकामत्स्य इति। श्रीकण्ठ.। रस. र.।

**कुठारच्छिन्ना**। स्त्री। कन्दगुड़ूच्याम्। हिं कुरेया। वै. निघ. क्षयरोग. लौहरसायने।

**कुठारिका (री)**। स्त्री। कुठारे। कुड़ूल। हिं कुलहाड़ी। शस्त्रकर्म्मयोग्यव्यधनास्त्रविशेषे। यथा—"पृथुः कुठारी गोदन्तसदृशार्द्धाङ्गुलानना। तयोर्द्दन्तया विध्येदुपर्य्यस्थ्नां शिरां स्थिताम्॥" सु. शा., सू. ८ अ.।

**कुठारुः**। पुं। कुठेरकवृक्षे। कीशे। मे.।

**कुठिः**। पुं। वृते। उणा.।

**कुठिकः**। पुं। कुष्ठौषधी। कुड़। हारा.।

**कुठिल्लकः**। पुं। रक्तपुनर्नवायाम्। वै. निघ।

**कुठेरः (कः)**। पुं। A kind of Basilicum. सितार्ज्जकवृक्षे। क्षुद्रपत्र-श्वेततुलसी, बाबुई-तुलसी। रा. नि. व. १०। भैष अग्निदग्ध. चि. रुद्रतैले। पर्णासे। काल बाबुई, काल तुलसी। रा. नि. व. १०। च. सू. २अ.। भानन्दीवृक्षे। रा. नि. व. २३। तुलसीवृक्षे। उज्ज्वा.। अम.।

**कुठेरजः**। पुं। (Ocimum Gratissicum.) श्वेततुलस्याम्। बाबुई तुलसी। श. र.।

**कुठेरुः**। पुं। चामरवाते। चामरेर बातास।

**कुड़पः (वः)**। पुं। परिमाणविशेषे। द्वात्रिंशत्तोलके ८ वा ४ प.। प्रसृतिभ्यामञ्जलिः स्यात् कुड़वोऽर्द्धशरावकः। प. प्र. १ ख.। मृद्दारुवेणुलौहादिभाण्डं यच्चतुरङ्गुलं। विस्तीर्णञ्च तथोच्चञ्च तन्मानं कुड़वं स्मृतम्॥ कुड़वादूर्द्ध्वं शरावादिमानानां द्वैगुण्यम् ग्राह्यम्। निश्चलकरमते तु कुड़वस्यापि द्वैगुण्यम्। तत्र दन्तीघृते कुड़ुमाद्यतैले दृश्यते न नारिकेलखण्डे। "आर्द्रद्रव्यस्य कुड़वः पलैरष्टाभिरेव च। शुष्कद्रव्यचतुष्केण कुड़वः समुदाहृतः॥" हारीतः।

**कुड़ली**। पुं। काञ्चनारभेदे। मद. व. १।

**कुड़िः**। पुं। देहे। उणा.।

**कुड़िशः**। पुं। Cyprinus curchius.) मत्स्यविशेषे। कुड़ची गाछ, बाटा माछ। गुणाः—मधुरो हृद्यः कषायोऽग्निदीपनः लघुः स्निग्धः वाते पथ्यः रोचनो बल्यः कोष्ठबन्धकरश्च। राज.।

**कुड़ुहुञ्ची**। स्त्री। क्षुद्रकारवेल्लके। छोट उच्छे। लताफलगुणाः—कटुः उष्णातिरुच्या दीपनी वातरक्तकरी च। तत्कन्दः अर्शोहरः मलशोधनः योनिदोषघ्नश्च। रा. नि. व. ७।

**कुड्मलः**। पुं। मुकुले। मे.। क्ली। नीलोत्पले।

**कुड्मलकम्**। क्ली। नीलोत्पले। रा.।

**कुड्यम्**। क्ली। विलेपने। मे.। गृहभित्तौ।

**कुड्यकीटकः** / **कुड्यमत्सी (त्स्यः)** } पुं,स्त्री। गृहगोधिकायाम्। टिकटिकी। हे. च.। श. र.। च. शा. ८ अ.।

**कुणः**। पु.। प्रावारकीटे। ज.।

**कुणकः**। पुं। बालके, सद्योजातशिशौ। श. चि.।

**कुण(णि)ञ्जः (रः)**। पुं। A kind of chenopodium.) अरण्यवास्तुकविशेषे। बनबेतुया। मं कुणजिरु, गोरजे। तत्पर्य्यायः,—कुणञ्जा, कुणञ्जः, अरण्यवास्तूकः। गुणाः—मधुरः रुच्यः दीपनः पाचनश्च। रा. नि. व. ५। तच्छाकं त्रिदोषघ्नं मधुरं रुच्यं दीपनं ईषत्कषायं संग्राहि लघु। रा. नि. व. ७।

**कुणञ्जा (ञ्जी)**। स्त्री। कुणञ्जरक्षुपे। रा. नि. व. ५।

**कुणटी**। स्त्री। मनःशिलाविशेषे। मन्छालविशेष। कुणटी तु मनःशिला। रा. नि. व. १३।२३। धानके। भा. पु. १भ.।

**कुणपः**। त्रि। शवगन्धी। 'मज्जप्रकाशङ्कुणपं त्रिदोषम्।' भा. म. ४ भ.। दुर्गन्धे। पुं, क्ली। शुक्रदोषे, आर्त्तवदोषे। मृतशरीरे। अम.।

**कुणपगन्धः**। पुं। शवगन्धे।

**कुणपा (पी)**। स्त्री। विट्शारिकायाम्। गुयेशालिक, गुयेल्याकुड़ा। हारा.।

**कुणारी**। स्त्री। कुष्ठरोगविहितभक्ष्यद्रव्ये, यवपर्पटीति ख्याते। सु. चि. १० अ.। कोणाड़िकेति कश्चित्पठति।

**कुणालः**। पुं। पक्षिविशेषे।

**कुणिः**। पुं। The tree cedrela Toona. तुन्नवृक्षे। तूँद गाछ। अम.। मे.। त्रि। कुण्ठितकरे। "कुणिस्तुन्नकवृक्षे। कुकरे।" मे.। तन्नामकमर्म्मस्थाने, कूर्परे। सु. शा. ६अ.।

**कुणी**। पुं। कणभजातीयकीटे। सु. कल्प. ८अ.। See कणभः।

**कुण्टम्**। क्ली। अञ्जके। गुण्ठनी। वै. निघ.।

**कुण्टकः**। त्रि। स्थूले। मोटा। श. मा.।

**कुण्टकुरण्टः**। पुं। झिण्ट्याम्। झाँटी। वै निघ.।

**कुण्डम्**। क्ली। मानभेदे। हला.। जलाशयविशेषे। इन्दारा. चोवाच्चा। जलगुणाः—रूक्षमग्निकरं कफकरं मधुरं लघु च। रा. नि. व. १४। स्थाल्याम्। थाली। अम.। पुं। कौञ्चे। हला.। जारजपुत्रे। वारिपात्रे।

**कुण्डगोलकम्**। क्ली। काञ्जिके। काञ्जि। हे. च.।

**कुण्डङ्गः (कः)**। पुं। कुञ्जे। हे. च.।

**कुण्डलः**। पुं। रक्तकाञ्चनवृक्षे। र. मा.। क्ली। कर्णभूषणे। पाशे। वलये। मे. लचिके।

**कुण्डलपत्रः**। पुं। दना इति ख्यातवृक्षे। वै. निघ.।

**कुण्डलिका (नी)**। स्त्री। जिलिपी इति ख्याते मिष्टान्ने। तन्निर्म्माणविधिः यथा—"शीधुसम्प्रयुक्तस्य कृत्वा सूक्ष्माः कणाः प्रशस्ता: सुनिस्तुषाः। दुग्धेन क्लिन्नास्तु तथैव भाण्डे वासनसदम्लत्वसुपेयुरीषत्। उद्धृत्य दुग्धेन द्रवं सुघृष्य सच्छिद्रपात्रेण च श्रीफलस्य। धारां घृते कुण्डलिकाकृतिं सृजन् पचेद्द्धीयोद्धृत्य सुधार्द्धदाया:। पाके निमज्जितासाद्भः अन्नं कुण्डलिकाभिधाम्। सा पुष्कला हृद्यतमा इन्द्रियाणां तुष्टिदा।

पुष्टि-कान्तिकरी वल्या द्वितीयाप्याकृतिर्मता ॥” वै. निघ. । गुडूच्याम् । रा. नि. व. ३ ।

**कुण्डलिनायकः** । पुं । पिङ्गलसर्पे ।

**कुण्डली** (इन्) । पुं । सर्पे । हारा. । वरुणे । मयूरे । मे. । मृगविशेषे । इति अजयपालः । आरग्वधवृक्षे । स्त्री (ला, ली) । गुडूच्याम् । भा. म. १भ. कर्णकल्प. चि. । “कटुविकोग्राघनकुण्डलीभिः ।” काञ्चनवृक्षे । मे. । सर्पिण्यावृक्षे । গড়গড়ে শাক । रा. नि. व. ५ । कपिकच्छौ । रा. नि. व. ३ । कुमार्य्याम् । घृतकुमारी । कुण्डलिकायाम् । জিলেবী । भा. ।

**कुण्डलोचालनः** । पुं । सर्पिणीवृक्षे ।

**कुण्डिका** । स्त्री । कमण्डलौ । हे. च. । पिठरे । श. च. ।

**कुण्डी** । स्त्री । शुक्लयूथिकायाम् । वै. निघ. । कमण्डलौ । अ. । स्थाल्याम् । अ. टी. भ. । (इन्) पुं । अश्वे ।

**कुण्डोरः** । पुं । मनुष्ये । धरणी ।

**कुतकम्** । क्ली । रसाञ्जने । प. मु. ।

**कुतपः** । पुं, क्ली । Poa Cynosuroides. दर्भविशेषे । কুশ । छागकम्बले । मे. । वृषे । अग्नौ । सूर्य्ये । हे. च. । दिवसस्याष्टममुहूर्त्ते । त्रि । ईषदुष्णे ।

**कुतपकालः** । पुं । मध्याह्नकाले । अत्यूष्णकाले । के. ।

**कुतपसप्तकम्** । क्ली । कृष्णतिले । रौप्ये । दर्भे । ऊर्णावस्त्रे । वै. निघ. ।

**कुतित्तिरिः** । पुं । तित्तिरपक्षिविशेषे । सु. सू. ४६ अ. ।

**कुतुः (पः)** । पुं, क्ली । चर्म्मपात्रे । কুপো । अम. ।

**कुतुम्बा (म्बिका)** । स्त्री । द्रोणपुष्पीक्षुपे । रा. नि. व. ६ ।

**कुतुम्बुरु** । क्ली । कुत्सिततिन्दुकीफले । গেঁদ । श. च. ।

**कुतूणकः** । पुं । बालरोगविशेषे । See कुकूणकः ।

**कुतृणम्** । क्ली । कात्तृणे । गन्धतृण । रा. नि. व. ८ । कुम्भिकायाम् । हारा. ।

**कुत्सम्** । क्ली, पुं । कुष्ठौषधौ । रा. नि. व. १२ । स्तवके । हारे । त्रिका. ।

**कुत्सला** । स्त्री । नीलीवृक्षे । নীল গাছ ।

**कुत्सशिम्बी, कुत्सा** । स्त्री । शिम्बीभेदे । রক্তশিম্বী । वै. निघ. ।

**कुत्सितम्** । क्ली । दीर्घरोहिषे । বড় গন্ধতৃণ । वै. निघ. । कुष्ठौषधौ । रा. नि. व. १२ ।

**कुत्सितशाल्मली** । स्त्री । कृष्णशाल्मल्याम् ।

**कुत्सिताम्बः** । पुं । कदम्बवृक्षे । वा. सू. १५ अ. ।

**कुथः (था)** । पुं, स्त्री । कुशतृणे । কুশ । प. मु. । शुक्लदर्भे । वै. निघ. । (था) हस्तिपृष्ठस्थकम्बले । হাতির পিঠের ঝুল । अम. ।

**कुथितः** । त्रि । पूतियुक्ते । পচা । सु. चि. १९ अ. ।

**कुदलिः**<br>**कुदारः (लः)** } पुं । अश्मन्तकवृक्षे । চালিতা । कोविदारवृक्षे । রক্তকাঞ্চন । र. मा. । रा. नि. व. ९।१० । आरग्वधवृक्षे । वै. निघ. । कोद्रवधान्ये । কোদো ধান । प. मु. ।

**कुदेहः (कः)** । पुं । कुत्सितदेहे । महाशालवृक्षे । वै. निघ. ।

**कुद्दालः** । पुं । गिरिकाञ्चने ।

**कुद्यम्** । क्ली । कुड्ये, भित्तौ । अ. टी. ।

**कुद्रवः (वलः)** । पुं । कोद्रवे । কোদো ধান । वै. निघ. ।

**कुद्रङ्गः** । पुं । मञ्चोपरिस्थ-मण्डपे । तत्पर्य्यायः,—উদ্ঘাটঃ, পিঠরঃ । त्रि. ।

**कुद्रङ्कः** । पुं । गृहविशेषे । मञ्चोपरिस्थ-मण्डपे ।

**कुधरः** । पुं । पर्व्वते । रा. नि. व. २ ।

**कुधान्यम्** । क्ली । तृणधान्ये, क्षुद्रधान्ये । कोरदूषकश्यामाकनीवार-शान्तनु-तुवरकोद्दालकप्रियङ्गु-मधुलिका-नन्दीमुख-कुरुविन्दगवेधुक-वरुकोदपर्णी-सुकुन्द-वेणुज-प्रभृतयस्तद्वर्गाः । गुणाः—कषाया मधुरा रूक्षाः कटुपाकाः श्लेष्मघ्नाः स्तावरोधकाः वातपित्तप्रकोपकराश्च । सु. सू. ४६ अ. । वातात्मकाः शीतलाश्च । रा. नि. व. १५ ।

**कुध्रः** । पुं । पर्व्वते । हे. ।

**कुनखः** । पुं, क्ली । क्षुद्ररोगविशेषे । तल्लक्षणं



यथा—“नखमांसमधिष्ठाय वातः पित्तञ्च देहिनां । कुर्व्वाते दाहपाकौ च तं व्याधिं चिप्पमादिशेत् । तदेवाल्पतरैर्दोषैः परुषं कुनखं वदेदिति ॥” मा. नि. । त्रि । कुत्सितनखयुक्ते ।

**कुनखी** । त्रि । कुनखरोगयुक्ते । सङ्कुचितनखे ।

**कुनटः** । पुं । पृथुशिम्ब-श्योणाकवृक्षे । বড় শোঁটা শ্যোণা গাছ । रा. नि. व. ९ । पीतलोध्रे । वै. निघ. ।

**कुनटी** । स्त्री । Red arsenic (Coriandrum Sativum.) मनःशिलायाम् । মনছাল । र. मा. । धान्याके । भा. पू. १भ । नेपालदेशजमनःशिलायाम् । भरत. ।

**कुनली** (इन्) । पुं । वकवृक्षे । বড় বাকসগাছ । त्रिका. ।

**कुनाभिः** । पुं । निधौ । हे. च. । वातमण्डल्याम् । त्रिका. ।

**कुनालः**<br>**कुनालिकः** } पुं । कोकिले ।

**कुनाशकः** । पुं । दुरालभायाम्, रक्तयवासे । अम. ।

**कुनासः** । पुं । उष्ट्रे । वै. निघ. ।

**कुनोली** । स्त्री । तेरणे । रा. नि. व. ४ ।

**कुन्तः** । पुं । Coix Barbata.) गवेधुकायां । গড়গড়ে । मे. । क्षुद्रजन्तौ । विश्व. ।

**कुन्तलः** । पुं । केशे । रा. नि. व. १८ । चषके । यवे । मे. लत्रिकं । ह्रीवेरे । বালা । अम. । लाङ्गले । त्रि. ।

**कुन्तलवर्द्धनः** । पुं । भृङ्गराजवृक्षे । ভীমরাজ । रा. नि. व. ४ ।

**कुन्तलिका (ली)** । स्त्री । दध्यादिच्छेदन्याम् । দৈ কাটা ছুরী । हारा. । वृक्षभेदे । আবুটা । वै. निघ. ।

**कुन्तलोशीरम्** । क्ली । ह्रीवेरे । বালা । रा. नि. व. १० ।

**कुन्ती** । स्त्री । गुग्गुलुवृक्षे । “गुग्गुलुपृथयोश्च शालुक्याम् ।” मे. तद्धिकं । शल्लकीवृक्षे ।

**कुन्दः (कः)** । पुं । (Jasminum Multiflorum.) स्वनामख्यातपुष्पवृक्षे । কুন্দফুলের গাছ । मं कुन्दे । क. मुरगि । तें मोल्ल । मे. । क्ली । तत्पर्य्यायः,—माघ्य' (अ) शुक्लपुष्पः (रा.) दलकोषः (शब्दमा.), वरटं, वीरटं (शब्दर.), मकरन्दः, महामोदः, मनोहरः, मुक्तापुष्पः, सदापुष्पः, तारपुष्पः, अट्टपुष्पकः, दमनः, वनहासः, मनोज्ञः । गुणाः—अतिमधुरः शीतः कषायः केशभावनः कफपित्तहरः सरः दीपनः पाचनश्च । रा. नि. व. १० । तत्पुष्पे । पुष्पं शीतं लघु श्लेष्म-शिरोवेदना-विष-पित्तघ्नञ्च । भा. पू. १भ. । श्लेष्मलं ग्राहि च । राज. । कुन्दुरुखोट्यां । भा. पू. १भ. । रा. नि. व. १२ । श्वेतकरवीरवृक्षे रा. नि. व. १० । मदनवृक्षविशेषे । কাঁটা ময়না । प. मु. । See पिचुकः । निधिविशेषे । यन्त्रभेदे । मे. । (कः) कुन्दुरुके । रा. नि. व. ८ ।

**कुन्दमः** । पुं । मार्जारे । त्रिका. ।

**कुन्दरः** । पुं । तन्नामकतृणे । কুন্দরা । तत्पर्य्यायः,—कण्डूरः, झिण्टी, दीर्घपत्रः, खरच्छदः, रसालः, चेत्रसम्भूतः, सुतृणः, मृगवल्लभः । गुणाः—“गोल्यकुन्दरमूलञ्च शीतं पित्तातिसारनुत् । प्रशस्तं शोधनानाञ्च बलपुष्टिविवर्द्धनम् ॥” रा. नि. व. ८ ।

**कुन्दरिका** । स्त्री । सल्लक्याम् । रा. नि. व. ११ ।

**कुन्दसाह्वा, कुन्दा** । स्त्री । श्वेतयूथिकायाम् । वै. निघ. ।

**कुन्दालः** । पुं । महारग्वधवृक्षे । वै. निघ. ।

**कुन्दिनी** । स्त्री । पद्मसमूहे । त्रिका. ।

**कुन्दुः** । स्त्री । कुन्दुरुखोट्याम्, कुन्दुरुनामगन्धद्रव्ये । रा. नि. व. १२ । च. द. वा. व्या. एकादशशतीप्रसारणीतैले । पुं । मूषिके । श. र. ।

**कुन्दुकुन्दुकः** । पुं । कुन्दुरुखोट्याम् । रा. नि. व. १२ ॥

**कुन्दुखोटी** । स्त्री । कुन्दुरुखोट्यां । भैष. बृहद्विष्णुतैले ।

**कुन्दुरः (रुः, कः)** । पुं, स्त्री (की) । सल्लक्याम् । धूपभेदे, गुग्गुलुभेदे । हिं वेरोजा । वै. निघ. । कुन्दरतृणे । रा. नि. व. २३ । The resin of the plant (Boswellia thurifera.) स्वनामख्यातगन्धद्रव्ये, शल्लकीनिर्यासे । কুন্দুরুখোটী । तत्पर्य्यायः,—पालङ्का, मुकुन्दः, कुन्दः

(अ.), पालङ्की, मुकुन्दः, कुन्दुः, कुन्दुरः (अ. टी. भ.), तीक्ष्णगन्धः, बली (न), कुन्दुरुकः, सौराष्ट्रः, शिखरी, कुन्दकः, तीक्ष्णः, गोपुरकः, बहुगन्धः, पालिन्दः, भीषणः। गुणाः—मधुरः तिक्तः कफ-पित्त-दाहघ्नः प्रदरघ्नः पाने लेपे च शीतलः। मधुर-तिक्ततीक्ष्णकटुकः त्वच्यः ज्वरस्वेद ग्रहदोष-मुखरोग-कफ-वातघ्नश्च। भा. पू. १भ.। रा. नि. व. १२। स्वेदवातश्लेष्मश्रमज्वरहरः। मद. व. २।

**कुन्दुरुकी**। स्त्री। शल्लकीवृक्षे। अम.। शल्लकी-निर्यासे। वै. निघ.। स्वनामख्यात-फललता-विशेषे।

**कुन्दुरुखोटी**। स्त्री। स्वनामख्यातगन्धद्रव्ये, कुन्दुरौ। प. मु.। सा. कौ. शतावरीमोदके।

**कुपः**। पुं। भारद्वाजपक्षिणि। वै. निघ.।

**कुपथ्यम्**। क्ली। अस्वास्थ्यकरे पथ्ये।

**कुपनसः**। पुं। पनसवृक्षे। কাঁটাল গাছ। प. मु.।

**कुपाकः**। पुं। कुपीलौ। वै. निघ.।

**कुपाणिः**। त्रि। कुकरे, वक्रहस्ते। কোপা। हिं टुण्डा। जटा.।

**कुपिनी**। स्त्री। खालुइ इति गौड़भाषाप्रसिद्धायां स्वल्पमत्स्यधान्याम्। श. र.।

**कुपिन्दः**। पुं। वस्त्रनिर्मातरि। वै. निघ.।

**कुपि(पी)लुः**। पुं। काकपीलौ, कारस्करवृक्षे। মাকড়া গাব, মধুর গাব, কুচিলা। रा. नि. व. ९। तत्पर्य्यायः,—जलजः, दीर्घपत्रः, कुलकः, कालतिन्दुकः, दीर्घपत्रकः, कालपीलुकः, काकेन्दुः, विषतिन्दुः, मर्कटतिन्दुकः। गुणाः—शीतलत्वं, तिक्तत्वं, लघुत्वं, वात-मदकारित्वं, लघुत्वं व्यथा-हरत्वं, ग्राहित्वं, कफपित्तास्रनाशित्वञ्च। See कारस्करः।

**कुप्य(क)म्**। क्ली। Tutenag. सीसरङ्गमिश्र-धातौ, अष्टधातुमध्ये दस्ता इति ख्याते धातौ। सुवर्णरजतभिन्नधातौ। रत्ना.।

**कुप्यधौतम्**। क्ली। रौप्ये। रा. नि. व. १३।

**कुप्यलवणम्**। क्ली। लवणविशेषे। च. वि. ८अ.।

**कुप्यशाला**। स्त्री। धातुद्रव्यनिर्म्माणशालायां।

**कुबाहुलः**। पुं। उष्ट्रे। श. च।

**कुबे(वे)रः (कः)**। पुं। नन्दिवृक्षे, तूनवृक्षे। তূণ বা গন্ধা অশ্বথ। अम.। प. मु.। वै. निघ. २भ. वा. व्या. कुबेरपाके। त्रि। कुशरीरे। त्रिका.।

**कुबेरनेत्रः (राक्षः)**। पुं। पाटलवृक्षे। लता-करञ्जे। वै. निघ.।

**कुबेराह्वयः**। पुं। नन्दीवृक्षे। वै. निघ. २भ. ग्रहणी. चि.।

**कुबेराक्षी**। स्त्री। पाटलावृक्षे। प. मु.। काष्ठ-पाटलायाम्। सितपाटलायाम्। শ্বেত পারুল। रा. नि. व. १०। पेटिकायाम्। পেটারি। रत्ना.। सु. सू. ३९ अ.। भा. म. ४भ. बाल. चि.। "कुबेराक्षी च योज्याः स्युः।" लताकरञ्जे। वै. निघ.।

**कुब्जः**। पुं। वनचटके। (Bola cuja.) मत्स्य-विशेषे। अपामार्गे। रा. नि. व. ४। तन्नामक-वातव्याधिविशेषे। কুঁজ। लक्षणं—"हृदयं यदि वा पृष्ठमुन्नतं क्रमशः सरुक्। क्रुद्धोवायुर्यदा कुर्य्यात्तदा तं कुब्जमादिशेत्॥" मा. नि.। "वातघ्ने-र्दशमूल्या च नरं कुब्जमुपाचरेत्। स्नेहैर्मांसरसै-श्चापि प्रवृद्धं तं विवर्ज्जयेत्॥" त्रि। उन्नतपृष्ठे। কুঁজো। है. च.।

**कुब्जकः**। पुं। An aquatic plant, (Trapa bispinosa.) कोङ्कणदेशख्यातपुष्पवृक्ष-विशेषे। শ্বেত গোলাপ। हिं कूजा। मं काटे-शेवती। तत्पर्य्यायः,—वारिकण्टकः (त्रि), भद्रतरुणी, वृत्तपुष्पः, अतिकेशरः महासहः, कण्टकाढ्यः, खर्व्वः, अलिकुलसङ्कुलः। गुणाः—सुरभिः शीतलः रक्तपित्तहरश्च। पुष्पं शीतलं बल्यं दाहघ्नं वातपित्तघ्नञ्च। रा. नि. व. १०। "कुब्जकः सुरभिः स्वादुः कषायः सुरसः सरः। त्रिदोषशमनो वृष्यः शीतहर्त्ता च स स्मृतः॥" भा.। शृङ्गाटके। त्रिका.। पीतझिण्ट्याम्। र. मा.।

**कुब्जकण्टकः**। पुं। White mimosa. श्वेतखदिरे। रा. नि. व. ८।

**कुब्जका**। स्त्री। कुब्जकवृक्षे। हिं गुल्लाव। रा. नि. व. १०। मद.।

**कुब्जकिरातः** }
**कुब्जवामनः** } पुं। कुब्जे।

**कुब्जत्वम्**। क्ली। वायुरोगभेदे। কুঁজ।



**कुब्जपुष्पः**। पुं। पीतझिण्टीक्षुपे। পীতপুষ্প ঝাঁটী। र. मा.।

**कुब्जप्रसारणीतैलम्**। क्ली। वातव्याध्यधि-कारे। तिलतैलम् १६ श. क्वाथार्थं—प्रसारणी-क्वाथः १०० प. जलं ६४ श. शे. १६ श.। दधि १६ श. काञ्जिकं १६ श. दुग्धं ३२ श.। कल्कार्थं —चित्रकमूलपिप्पलीमूलयष्टिमधुसैन्धववचाशतपुष्पा-देवदारुरास्ना-गजपिप्पलीगन्धभादुलिमूलजटामांसी-भेलक (अभावे) रक्तचन्दनानां प्रत्येकं २ प.। गन्धद्रव्यं यथालाभं देयम्। च. द.।

**कुब्जा**। स्त्री। वनचटकायाम्। वै. निघ.।

**कुब्रम्**। क्ली। वने। उ.। कुण्डे। कुण्डले। तन्तौ। शकटे। संक्षिप्तसा.।

**कुभुक्तम्**। क्ली। कदर्य्यान्ने।

**कुमरिचः**। पुं। (Capsicum) मरिचवृक्ष-विशेषे। লঙ্কামরিচ। हिं लालमिरिच। उत्. नोकीमरिच।

**कुमरीयकः**। पुं। दग्धाहवृक्षे। के.।

**कुमारः (कः)**। पुं। सप्तदशाब्दः त्रिंशद्वर्षपर्य्यन्तं पुरुषे। रा. नि. व. १८। पञ्चवर्षीयबालके। हे. च.। (कः) वरुणवृक्षे। বরুণ গাছ। रा. नि. व. ९। समुद्रवृक्षे। মহাসমুদ্রা। रत्ना। शुक-पक्षिणि। अश्ववारके। मे.। क्ली। जात्यकाञ्चने। থাঁটিসোণা। मे.। नेत्रतारके।

**कुमारकल्याणघृतम्**। क्ली। बालरोगाधि-कारे। पाठः—"शङ्खपुष्पी वचा ब्राह्मी कुष्ठं त्रिफलया सह। द्राक्षा सशर्करा शुण्ठी जीवन्ती जीरकं बला। शटी दुरालभा विल्वं दाड़िमं सुरसः स्थिरा। मुस्तं पुष्करमूलञ्च सूक्ष्मैला गजपिप्पली। एषां कर्षसमैर्भागैर्घृतप्रस्थं विपाचयेत्। कषाये कण्टकार्य्याश्च क्षीरे तस्माच्चतुर्गुणे। एतत् कुमारकल्याणम्॥ घृतं ४ श. कल्कानां शङ्ख-पुष्प्यादीनां प्रत्येकं २ तो.। कण्टकारी १२॥० श. जलं ६४ श. शे. क्वाथः १६ श. दुग्धं १६ श.। च. द.।

**कुमारजीवः (जीवसंज्ञः)**। पुं। पुत्रञ्जीवक-वृक्षे। পুতজিয়া গাছ। र. मा.।

**कुमारतन्त्रम्**। क्ली। रावणकृते बालरोग-प्रबन्धे। प्रथमे दिवसे मासि वर्षे वा नन्दा मातृका, द्वितीये दिवसे मासि वर्षे वा सुनन्दा, तृतीये दिवसे मासि वर्षे वा पूतना, चतुर्थे दिवसे मासि वर्षे वा मुखमुण्डितिका, पञ्चमे···कटपूतना, षष्ठे ...शकुनिका, सप्तमे...शुष्करेवती, अष्टमे... आर्य्यका, नवमे···सूतिका, दशमे...निर्ऋता, एकादशे...पिलिपिच्छिका, द्वादशे च दिने मासि वर्षे वा कामुका नाम मातृका शिशुं गृह्णाति। सर्व्वाभिरेव गृहीतमात्रस्य च ज्वरोदयो भवति। च. द.।

**कुमारभृत्या**। स्त्री। गर्भिण्याः परिचर्य्यायाम्, बालतन्त्रे। त्रिका.।

**कुमारललिता**। स्त्री। शिशुक्रीड़ायाम्।

**कुमारवाही (हिन्)**। पुं। मयूरे। श. र.।

**कुमारा**। स्त्री। त्रिसन्धिपुष्पवृक्षे। वै. निघ.।

**कुमारिका (री)**। स्त्री। अनागतार्त्तवायां कन्यायाम्। रा. नि. व. १८। घृतकुमार्य्याम्। ঘৃতকুমারী, ঘীকাঞ্চন। हिं घिउकुमारी। मं कं कुवारि, नीयिसर, घिकुवार। ते पिन्नगीरि-गटकलवद। विरजाजितोगे। गुणाः—हिमा तिक्ता कफघ्नी पित्तकास-विष-श्वास-कुष्ठघ्नी रसायनी च। रा. नि. व. ५। भेदिनी शीतला तिक्त-मधुरा चक्षुष्या रसायनी बृंहणी वातविषघ्नी गुल्मप्लीहयकृ-द्वृद्धि कफज्वर-ग्रन्थि-विस्फोटाग्निदग्ध-रक्तपित्त-चर्म्म-रोगघ्नी च। भा. पू. १भ.। (री) जियत्षष्ठीति ख्याते वृक्षे। प. मु.। तरुणीपुष्पवृक्षे। গোলাপ। रा. नि. व. १०। अपराजितायाम्। मे.। कृष्ण-चटकायाम्। শ্যামা পাখী। रा. नि. व. १९। वाराहीकन्दे। स्थूलैलायाम्। वन्ध्याकर्कोट्याम्। रा. नि. व. २३। नवमल्लिकायाम्। प. मु.। वटपत्रीमल्लिकायाम्। বেল ফুল। सप्तपर्णवृक्षे। महाजम्बूवृक्षे। वै. निघ.। पतङ्गविशेषे। কুমীরে পোকা। नेत्रप्रतिफलिते दृष्टवस्तुनः प्रतिविम्बे। च. इन्द्रिय, ७ अ.।

**कुमारिकावर्त्तिः**। पुं। नेत्ररोगे रोपणीवर्त्तौ। "अशीतिस्तिलपुष्पाणि षष्टिः पिप्पलितण्डुलाः। जातीकुसुमपञ्चाशत् मरिचानि च षोड़श। एषा कुमारिकावर्त्तिर्गतं चक्षुर्निवर्त्तयेत्॥" तिलपुष्पं ८० पिप्पलीरोंआ ६० जातीपुष्पं ५० मरिचं १६।

**कुमारीकन्दः**। पुं। कुमार्य्याः कन्दे। ঘৃতকুমারীমূল। वै. निघ. २भ. कामला. चि. नस्ये।

**कुमारीपुत्त्रः ।** पुं । [त्री] स्त्री । पुत्त्रञ्जीववृक्षे । জিয়াপুতা ।

**कुमारीरससम्भवः ।** पुं । वीरासावे । मूस-ववर ।

**कुमुखः ।** पुं । शूकरे ।

**कुमुत् (दम्) ।** क्ली । (Nymphaea Esculenta) (Nymphaea Lotus.) चन्द्रविकाशिनि स्वनामख्यातपुष्पे । সেহলা ফুল, নালি ফুল, শ্বেত শুন্দি । हिं कोइ । मं पांढ़रे उत्पल । तें बिलियनेइदिलु । च. सू. ४ अ. । तत्पर्य्यायः,—कैरवं (अ), कन्दोत्थ: (त्रि), कच्छं (श), कुवं (हे.), गन्धसोमं (शब्दर.), चन्द्रकान्तं, गर्द्दभं, कुमुत् (र.), धवलोत्पल:, कह्लारं, शीतलकं, शशिकान्तं, इन्दुकमलं, चन्द्रिकाम्बुजम् । गुणाः—शीतलं स्वादु पाके तिक्तं कफघ्नं रक्तदोषहरं दाह-श्रमपित्तघ्नञ्च । रा. नि. व. १० । पिच्छिलं स्निग्धं मधुरं शीतवीर्य्यं ह्लादनञ्च । भा. पू. १भ. (Nymphaea Rubra,) रक्तपद्मे । मे. । रक्तोत्पले । त्रिका. । रौप्ये । हे. च. । पुं । गाम्भारीवृक्षे । शाखामृगे । मे. । अत्रि. २० अ. । कुमुदकन्दे । गुग्गुलौ । सर्पभेदे । श्वेतोत्पले । हे. च. । कर्पूरे । रा. नि. व. १२ । कुम्भिकायाम् । পানা । कट्फलवृक्षे । वै. निघ. ।

**कुमुदकः ।** पुं । प्रपौण्डरीके । পুণ্ডরিয়া । हिं पुण्डरिया । वै. निघ. ।

**कुमुदघ्नी ।** स्त्री । तन्नामकस्थावरविषे । यस्य क्षीरे विषं वर्त्तते । सु. कल्प. २अ. ।

**कुमुदप्रियः**
**कुमुदबान्धवः** } पुं । कर्पूरे । चन्द्रे । वै. निघ. ।
**कुमुदसुहृत्**

**कुमुदरागा ।** स्त्री । धातकीवृक्षे । वै. निघ. ।

**कुमुदवीजम् ।** क्ली । कुमुद्वतीवीजे । ভেলে বিচি । हिं भेटवेरा । गुणाः—स्वादु गुरु रूक्षं हिमञ्च । भा. ।

**कुमुदा ।** स्त्री । कुम्भिकायाम् । পানা । गाम्भारी-वृक्षे । हे. च. । शालपर्ण्याम् । धातक्याम् । ধাই-ফুল । कट्फलवृक्षे । रा. नि. व. ४।६।९ ।

**कुमुदाभिख्यम् ।** क्ली । रूप्ये । हे. च. ।

**कुमुदावासः ।** पुं । कुमुदप्रायदेशे । हे. ।

**कुमुदिका ।** स्त्री । कुमुदिन्याम् । अम. । कट्-फलवृक्षे । भा. पू. १भ. ।

**कुमुदिनी ।** स्त्री । चन्द्रप्रियायाम् । জ্যোৎস্না । उत्पलिन्याम् । শুন্দীঝাড়, ছোট শুন্দী । कुमुद-लतायाम् । কুমুদঝাড় । तें कलुवलंडे कोलिनु । कलुवपुव्वुलु । रा. नि. व. १० । इयं कमलिनी-गुणयुक्ता ज्ञेया । भा. पू. १भ. । कमलिन्याम् ।

**कुमुदिनीवीजम् ।** क्ली । कुमुदवीजे । वै. निघ. ।

**कुमुदी ।** स्त्री । कट्फलवृक्षे । मद. व. १ । गाम्भारीवृक्षे । रा. नि. व. ९ ।

**कुमुदेश्वररसः ।** पुं । यक्ष्माधिकारे । पाठः—"हेमभस्मरसभस्मतुल्यकं मौक्तिकन्तु रसपादटङ्कणं । गन्धकं कुरुत सर्व्वतुल्यकं काञ्जिकेन परिमर्द्य गोलके । मृत्स्नया च परिवेष्ट्य शोषितं भाण्डके सलवणे यथा पचेत् ।" द्वितीयसूत्राधिकारे । मृतताम्रं २भ. वङ्गभस्म १ भ. यष्टीमधुक्वाथेन भाव-यित्वा शोषयित्वा च माषार्द्धं सेव्यम् । र. सा. सं. ।

**कुमुद्वती ।** स्त्री । कुमुदिन्याम् । শুন্দী বা কুমুদফুলের ঝাড় । रा. नि. व. १० । कुमुद्-लतेति प्रसिद्धस्थावरविषान्तर्गतफलविषे । सु. कल्प. २अ. । See फलविषम् ।

**कुमुद्वतीवीजम् ।** क्ली । कुमुदवीजे । "भवेत्-कुमुद्वतीवीजं स्वादु रूक्षं हिमं गुरु ।" वैद्यकम् ।

**कुमुद्वान् ।** त्रि । कुमुदविशिष्टे (देशे) । मे. ।

**कुम्पः ।** पुं । बाहुकुण्डे । কোপা । जटा. ।

**कुम्भम् ।** क्ली, पुं । त्रिवृतायां । हे. च. । गुग्-गुलौ । अम. । "निकुम्भकुम्भत्रिफला गवाक्षी ।" चन्द्रप्रभावट्यां ।) पुं । सूर्पमाने । ৬৪ সের । प. प्र. १ ख. । जयपालवृक्षे । कट्फलवृक्षे । पृश्नि-पर्ण्याम् । पाटलावृक्षे । मे. । कलसे । करिशिरःस्थ-पिण्डयोः । "मूर्ध्नि पिण्डौ स्मृतौ कुम्भौ कुम्भयो-रन्तरं विदुः ।" हला. ।

**कुम्भकः ।** पुं । जयपाले । के. ।

**कुम्भकरेचना ।** स्त्री । नैपालवृक्षे । वै. निघ. ।

**कुम्भकामला (पादः) ।** स्त्री । A sort of Jaundice. कामलाभेदे । कालाधिक्येन कामला खरीभूता कुम्भकामलाख्यां परिणमति । वम्यरोचकज्वरादिकं तदसाध्यलक्षणम् । मा. नि. ।

**कुम्भकारः ।** पुं । कुम्भपचिणि । हे. च. ।

**कुम्भकारकुक्कुटः ।** पुं । (Phasianus Gallus.) क्षुद्रकुक्कुटविशेषे ।

**कुम्भकारिका (री) ।** स्त्री । कुलत्थाञ्जने । रा. नि. व. १३ । वनकुलत्थायाम् । प. मु. । मनः-शिलायाम् । जटा. ।

**कुम्भकालुकम् ।** क्ली । घोले । वै. निघ. ।

**कुम्भजः ।** पुं । वकवृक्षे । বকফুলের গাছ । प. मु. ।

**कुम्भड़िका ।** स्त्री । कुष्माण्डशाली । रा. नि. व. १६ ।

**कुम्भतुम्बी ।** स्त्री । वृत्ततुम्ब्यां । গোল লাউ तत्पर्य्यायः,—कुम्भालाबूः, गोरक्षतुम्बी, गोरक्षा, नागालाबूः, घटाभिधा, घटालाबूः । गुणा.—"कुम्भतुम्बी तु मधुरा शीतला तर्पणी गुरुः । रुच्या पुष्टिकरी शुक्रवर्द्धिनी तु बलप्रदा । पित्त-नाशकरी गर्भपोषणी पित्तनाशिनी । फल तु वल्लीवत् पात्रा गुणाश्च ।" वै. नित. । शीतपित्त-श्वासकफास्रज्वरकासनाशिका बल्या च । रा. नि. व. ७ ।

**कुम्भपर्णी ।** स्त्री । कुष्माण्डीलतायाम् । प. मु. ।

**कुम्भपुटा ।** स्त्री । श्वेतत्रिवृतायाम् । वै. निघ. ।

**कुम्भपुष्पी ।** स्त्री । रक्तपाटलवृक्षे । वै. निघ. ।

**कुम्भफला ।** स्त्री । महाकुष्माण्ड्याम् । रा. नि. व. ७ ।

**कुम्भयोनिः (का) ।** स्त्री । द्रोणपुष्पीक्षुपे । হলকষা । रा. नि. व. ६ । वकवृक्षे । वै. निघ. ।

**कुम्भरेताः ।** पुं । अग्नौ ।

**कुम्भला ।** स्त्री । मुण्डिर्य्यां । মুণ্ডীরী । र. मा. ।

**कुम्भवारुणी ।** स्त्री । मुण्डिरीभेदे । प. मु. ।

**कुम्भवीजः (कः) ।** पुं । अरिष्टफलवृक्षे । রীঠা গাছ । रा. नि. व. ९ ।

**कुम्भशालिः ।** पुं । स्वनामख्यातशालिधान्य-विशेषे । गुणाः—मधुरा स्निग्धा वात-पित्तघ्नी च । रा. नि. व. १६ ।

**कुम्भसन्धिः ।** पुं । करिकुम्भद्वयमध्यभागे । त्रिका. ।

**कुम्भसर्पिः ।** क्ली । एकादशोत्तरशतवार्षिके पुराणघृते । गुणाः—रक्षोघ्नम् । सु. सू. ४५अ. ।

**कुम्भा ।** स्त्री । वेश्यायाम् । कट्फलवृक्षे । पृश्नि-पर्ण्याम् । पाटलावृक्षे । मे. । द्रोणपुष्प्याम् । वै. निघ. । श्वेतत्रिवृतायाम् । तुम्ब्याम् । वै. निघ. ।

**कुम्भाख्या ।** स्त्री । रक्तपाटले । वै. निघ. ।

**कुम्भाटः ।** पुं । कुम्भाडुया इति ख्याते वृक्षे । रत्ना. ।

**कुम्भाण्डः ।** पुं । कुष्माण्डे । रा. ।

**कुम्भाण्डी ।** स्त्री । Pumpkin Gourd कुष्माण्ड्याम् । কুমড়া গাছ । रा. नि. व. ७ ।

**कुम्भारी (द्री, द्रौ) ।** स्त्री । कुष्माण्ड्याम् । वै. निघ. ।

**कुम्भालाबुः ।** स्त्री । महादुग्धालाबाम् । वै. निघ. ।

**कुम्भाह्वयः ।** पुं । कुम्भकामलायाम् । च. द. पाण्डु. चि. ।

**कुम्भि(म्भी)कः ।** पुं । पुन्नागवृक्षे । र. मा. । भैष. नाड़ीव्रण चि. कुम्भाद्यतैले । कटफलवृक्षे । प. मु. । वारिपर्ण्याम् । পানা । भूर्जवृक्षे । ভূর্জপত্র গাছ । "रोमशः श्लक्ष्णत्वक् कुम्भीनामा वृक्षो यस्य त्वक् वस्त्राकारा भवति ।" सु. सू. ३८ अ. प्रियङ्ग्वादि । सु. । See भूर्जः । पाटलवृक्षे । षण्डविशेषे । হিজড়ে । लक्षणं यथा—"स्वे गुदे ब्रह्मचर्य्याद्यः स्त्रीषु पुं प्रवर्त्तते । कुम्भीकः स च विज्ञेयः ॥" सु. चि. १७. ।

**कुम्भि(म्भी)का ।** स्त्री । (Pistia stratiotes.) वारिपर्ण्याम् । টোকা পানা । रत्ना. । भा. उ. ८अ. । रक्तपाटलायाम् । रा. नि. व. १० । तन्नामकनेत्रवर्त्मजरोगविशेषे । कुम्भीका-वीजसदृशाकारत्वात्तथोच्यते । एषा प्रान्तजा विदीर्णा च स्रवति पुनश्च पूर्णा भवति । लक्षणं यथा—"वर्त्मान्ते पिड़का ध्माता भिद्यन्ते च स्रवन्ति च । कुम्भीकवीजसदृशा कुम्भिका सन्निपातजा ॥" मा. नि. । कट्फलवृक्षे । वै. निघ. । पाटल-वृक्षे । प. मु. । द्रोणपुष्प्याम् । হলকষা । रा. नि. व. ६ । गग्गलौ । शूकदोषविशेषे । लक्षणम्—"कुम्भीका रक्तपित्तोत्था जाम्बवास्थिनिभा शुभा ।" सु. नि. शू. दो. १४ अ. ।

**कुम्भिकाद्यतैलम् ।** क्ली । नाड़ीव्रणाधिकारे । तैलं ४ श. । क्वाथार्थं—कुम्भीका (পানার মূল)

खर्ज्जूरीकपित्थविल्वानां तथा उदुम्बराद्यपुष्पफलवृक्षाणां फलशलाटुकल्कं ४ श. वारि ३२ श. शे. ८ श. । उक्तक्वाथेन मुस्तादीनां कल्कं शरावं (१ श.) दत्त्वा तैलं पाच्यम् । कल्कद्रव्याणि—मुस्तकसरलकाष्टप्रियङ्गु-त्वगेलापत्रनागकेशरमोचरसजातीकोष-लोध्रधातकीपुष्पाणि । "कुम्भीकखर्ज्जूरकपित्थविल्ववनस्पतीनान्तु शलाटुवर्गे। क्षत्वा कषायं विपचेच्च तैलमावाप्य मुस्तासरलप्रियङ्गू ॥ सौगन्धिकामोचरसाहिपुष्पलोध्राणि दत्त्वा खलु धातकीञ्च ।" अत्र कुम्भी पह्नी, दुरालभा वा । वनस्पतयो वटाद्याः सर्व्वेषां शलाटु आमफलम् । रस. र ।

**कुम्भितित्तिरः** । पुं । तित्तिरपक्षिभेदे । वै. निघ. ।

**कुम्भिनी** । स्त्री । मृगेर्व्वारुलतायाम् । रा. । राथालशशा ।

**कुम्भिनीफल(वीज)म्** । क्ली । जैपाले । रा. नि. व. ६ ।

**कुम्भिपाकी** । स्त्री । कट्फलवृक्षे । भा. ।

**कुम्भिमदः** । पुं । हस्तिमदे ।

**कुम्भिलः** । पुं । शालमत्स्ये । मे. लत्रिकं ।

**कुम्भी** (इन्) । पुं । हस्तिनि । हला. । गुग्गुलुवृक्षे । जटा. । सविषपतङ्गभेदे । कुमीरके । मत्स्यभेदे । बालग्रहविशेषे । कुम्भीरे । हे. च. । स्त्री । पृश्निपर्ण्याम् । पाटलायां । मे. । कट्फले । रा. नि. व. ९ । वारिपर्ण्याम् । टोका पाना । रा. नि. व. ६ । दन्तीवृक्षे । रा. नि. व. ५ । पुष्पवृक्षविशेषे कोङ्कणदेशे प्रसिद्धे । तत्पर्य्यायः,—रोमालुविटपी, रोमशः पर्पटद्रुमः । गुणाः—कटुः कषाया उष्णा वातकफघ्नी संग्राही च । रा. नि. व. ९ । वातपित्तज्वरदाहकफरक्तातिसारघ्नी योनिदोषविषघ्नी च । वै. निघ. । अग्निप्रकृतिकीटभेदे । तेन दष्टे पित्तजा रोगा भवन्ति । सु. कल्प. ८ अ । श्वेतनिवृति । जैपालवृक्षे । वै. निघ. अन्तकसन्निपात चि. ।

**कुम्भीनसः** । पुं । क्रूरसर्पे । मे. । वातप्रकृतिकीटभेदे । तेन दष्टे वातनिमित्तजा रोगा जायन्ते । सु. कल्प. ८अ. ।

**कुम्भीपाकः** । पुं । सन्निपातज्वरभेदे । लक्षणं —"घोणाविवरजभारवहुशोणासितलोहितं सान्द्रं । विलुण्ठन्मस्तकमभितः कुम्भीपाकेन पीड़ितं विद्यात् ॥" भा. म. १भ. ।

**कुम्भीपुटः** । पुं । गजपुटे । र. सा. सं. ।

**कुम्भीफलः** } पुं । जैपालवृक्षे । कुम्भीवृक्षे वै.
**कुम्भीवीजः** } निघ. । क्ली । जैपालवीजे । रा. नि. व. ६. ।

**कुम्भीमुखः** । क्ली । दुष्टव्रणविशेषे ।

**कुम्भीरः (लः)** । पुं । The crocodile of Ganges. जलजन्तुविशेषे । कुमीर । रत्ना. । अ. टी. । तत्पर्य्यायः,—कुम्भी, जलशूकरः, तालुजिह्वः, द्विधागतिः, पिङ्गचक्षुः, महामुखः, पङ्कमुखः (हे.), जलजिह्वः (हा.), नक्रः (अ), कुम्भीलः (अ. टी.) गिलग्राहः, महाबलः (रा), वाउटः, अम्बुकिरातः, अम्बुकण्टकः (शब्दर) । तन्मांसं पाके स्वादु वातघ्नं स्निग्ध शीतलं पित्तरोगे हितं मलवर्द्धनं श्लेष्मकरञ्च । सु. । कुम्भीवृक्षे । वै. निघ. ।

**कुम्भीरमक्षिका** । स्त्री । मक्षिकाविशेषे । कुमीरा पोका । हारा. ।

**कुम्भीरवल्कः** । पुं । कायफलवृक्षे । वै. निघ. ।

**कुम्भीरुः** । पुं । सुरपुन्नागे ।

**कुम्भीवीजम्** । क्ली । जयपाले । रा. ।

**कुम्भीवृक्षफलम्** । क्ली । कायफले । वै. निघ. ।

**कुम्भीस्वेदः** । पुं । वातहरक्वाथादिभिः काञ्जिकादिभिर्व्वा घटस्थितैः स्वेदे । भानुदासः । च. सू. १४ अ. ।

**कुम्भोद्भवतरुः** । पुं । अगस्तिवृक्षे । वकफूलेर गाछ । भा. म. १भ, चित्तविभ्रम. ज्व. चि. ।

**कुम्भोलुः (लूकः)** । पुं । पेचकभेदे ।

**कुम्भोलूखलकः** । पुं । गुग्गुलौ । वै निघ. ।

**कुयवः** । पुं । कुत्सितयवे ।

**कुरका** । स्त्री । सल्लकीवृक्षे । रा. नि. व. ११ ।

**कुरङ्क(ङ्कु)रः** । पुं । The Indian crane. सारसपक्षिणि । हे. च. । हारा. । क्रौञ्चपक्षिणि । वै. निघ. ।

**कुरङ्गः (कः)** । पुं । Indian antilope. स्वल्पहरिणे । रत्ना. । "न कृष्णे न च ताम्रे हरिणविशेषे ।" सु. सू. ४६ अ. । च. चि. ३ अ. । (का:) अर्कशर्करायाम् । वै. निघ. ।



**कुरङ्गनाभिः** । पुं । मृगनाभौ । रा. नि. व. १२ ।

**कुरङ्गमः** । पुं । हरिणविशेषे । कुरङ्ग । त्रिका. ।

**कुरङ्गमांसम्** । क्ली । मृगविशेषस्य मांसे । एतन्मांसं रक्तपित्ते हितम् । तथा कफघ्नं मधुरं पित्तघ्न मांसवर्द्धकञ्च । सि. यो. र. पि चि. खण्डकाद्यघृते ।

**कुरङ्गिका (नी)** । स्त्री । मुद्गपर्ण्याम् । मृगानी । रा. नि. व. ३ ।

**कुरङ्गी** । स्त्री । कुरङ्गपत्न्याम् । हरिणी ।

**कुरचिल्लः** । पुं । कर्कटे । हे. च. ।

**कुरण्टः** । पुं । सितिवारवृक्षे । शुशुनि शाक । वा. सू. १५ । "मल्लूकमोरटकुरण्टकरम्भपार्थाः ।" श्वेतझिण्ट्याम् । रा. नि. व १० । कुटजवृक्षे । वै. निघ. ।

**कुरण्टकः** । पुं । पीतझिण्टीक्षुपे । पीतपुष्प झाँटी गाछ । र. मा. । "पीतपुष्पः कण्टाशिलुया इति प्रसिद्धः ।" सु. सू. ३८ अ. । ड. । पीतपुष्पाम्लाने, रक्तझिण्ट्याम् । मे. । वै. निघ. ।

**कुरण्टमूलम्** । क्ली । पीतपुष्पझिण्टीमूले । भा. म. ४ भ योनिरो. चि. ।

**कुरण्टिका** । कुटजवृक्षे । साकुरुण्डवृक्षे । रा नि व. १० । सुनिषण्णकशाके । वै. निघ. ।

**कुरण्टी** । स्त्री । सिंहपिप्पल्याम् । वै. निघ. ।

**कुरण्डः** । पुं । Hydrocele. मुष्कवृद्धिरोगे । कोरन्द, पोता । हे. च. । तस्य सम्प्राप्तिपूर्व्वकं लक्षणं यथा—"क्रुद्धोऽनूर्द्ध्वगतिर्वायुः शोथशूलकरश्चरन् । मुष्कौ वङ्क्षणतः प्राप्य फलकोषाभिवाहिनीः ॥ प्रपीड्य धमनीर्वृद्धिं करोति फलकोषयोः । दोषास्रमेदोमूत्रान्त्रैः स वृद्धिः सप्तधा गदः ॥" भा. नि. ॥ अक्षोटवृक्षे । वै. निघ. । गुर्ज्जरदेशख्याते साकुरुण्डवृक्षे । रा. नि. व. ६ ।

**कुरण्डकः** । पुं । मदनवृक्षे, श्वेतमदने । वै. निघ. । कुरण्टकवृक्षे । अ. टी. । च. द. माषतैले ।

**कुरण्ड(ण्डि)का** । स्त्री । वृक्षविशेषे । गुणाः —"सरा रुक्षा गुर्व्वी चाग्निप्रदीपनी । नाशिनी कफवातानां वैद्यैस्तु परिकीर्त्तिता ॥ वृहत्कुरण्डिका शीता पाके स्वाद्वी कटुः स्मृता । तिक्ता चारा च रुक्षा च सरा हृद्या जड़ा मता ॥ वातला पित्तला वल्ली वातकारी कफापहा । रक्तदोषं मूत्रकृच्छ्रं नाशयेदिति कीर्त्तिता ॥" वै. निघ. ।

**कुरबाहुकः** । पुं । पक्षिविशेषे । कुरकुरा पाखी । अयं लघुशीतकषायः । सु. सू. ४६ अ. ।

**कुररः** । पुं । An osprey. मृद्जातीयपक्षिविशेषे कुनामख्याते, उत्क्रोशपक्षिणि । कुरर, कर्कटिया । हला. । तन्मांसगुणाः—रक्तपित्तघ्नं शीतल स्निग्धं वृष्यं वातघ्नं रसे पाके च मधुरम् । सु. सू. ४६ अ. ।

**कुररवः** । पुं । पारावते । वै. निघ. ।

**कुरराङ्घ्रिः** । पुं । देवसर्षपे । रा. नि. व. ९ । रक्तमूलके ।

**कुररी (वी)** । स्त्री । मेष्यां । भेड़ी । हे. च. । कुररपक्षिस्त्रियां । अम. । (वी) सिंहपिप्पल्याम् । हे च ।

**कुरलः** । पुं । उत्क्रोशपक्षिणि । हला. । चूर्णकुन्तले । धरणी ।

**कुरवः (कः)** । पुं । श्वेतार्के । रा. नि व. १० । रक्ताम्लानपुष्पवृक्षे । रक्तझाँटी । श. र. । झिण्टीशाके । कुरुई शाक । रा. नि. व. १० । पीतझिण्ट्याम् । हे. च. । षष्टिकधान्यजातिभेदे । सु. सू. ४६ अ. । गुणाः कङ्गुकवत् । केशे । रा. नि. व. १८ ।

**कुरवाहुकः** । पुं । पक्षिविशेषे ।

**कुरसः** । पुं । आसवे । मद्यविशेषे । हारा. । कुत्सितरसे । त्रि । कुरसयुक्ते ।

**कुरसा** । स्त्री । गोजिह्वालतायाम् । गोजिया लता । श. च. ।

**कुरालः** } पुं । कुलाहघोटके, ईषत्पाण्डुकृष्ण-
**कुराहः** } जङ्घघोटके । हे. च. ।

**कुरी** । स्त्री । यमुनातीरप्रसिद्ध तृणधान्यविशेषे । गुणाः—मधुरं बलप्रदं हरितं वा पक्वं वा वृद्धं वा वाजिपुष्टिदायकञ्च । रा. नि. व. १६ ।

**कुरीरम्** । क्ली । मैथुने । उणा. ।

**कुरुः** । पुं, स्त्री । सिद्धौदने । वै. निघ. । कण्टकारिकायाम् । श. च. ।

**कुरुकन्दकम्** । क्ली । मूलके । मूला । श. मा. ।

**कुरुचिल्लः** । पुं । कर्कटे । वै निघ. ।

**कुरटः।** पुं। सितावरशाकक्षुपे। শুশুনি শাক। रा. नि. व. ४।

**कुरटी** (इन्)। पुं। अश्वे।

**कुरण्टः (कः)।** पुं। Yellow amaranth, yellow barleria. पीतझिण्ट्याम्। পীত ঝাঁটী। रा. नि. व. १०। च. द. प्रदर. चि। तत्पर्य्यायः,—सहचरी, सहचरः (अ.), कुरण्टकः (भ.)। दारुपत्र्याम्। अम्लानवृक्षभेदे। ঝাঁটী-বিশেষ। मे.। कुटजवृक्षे।

**कुरण्टका।** स्त्री। पीतझिण्ट्याम्। च. द. अश्मरी. चि.।

**कुरण्टिका (ण्टी)।** स्त्री। साकुरुण्डवृक्षे। रा. नि. व. १०। कृष्णसूक्ष्मफला शिरवालिका इति लोके। सु. सू. ३८अ.। ड.। झिण्ट्याम्। ঝাঁটী। हस्तिशुण्ड्याम्। হাতিশুঁড়ে। रत्ना.। शेफालिकाभेदे। सु. चि. ७अ.। काष्ठपुत्तलिकायाम्। मे.।

**कुरुण्डः।** पुं। कुरुण्टकवृक्षे।

**कुरुनाशः।** पुं। उष्ट्रे। वै. निघ.। पीतझिण्ट्याम्। सु. सू. ३८ अ.।

**कुरुवाहुः।** पुं। पक्षिविशेषे। কুরর। कुरुकुरु इति पाश्चात्ये। वै. निघ.।

**कुरुम्बम्।** क्ली, पुं। कुलपालके, नागरङ्गविशेषे। কমলালেবু। श. च.।

**कुरुम्बा (म्बिका)।** स्त्री। द्रोणपुष्प्याम्। रा. नि. व. ५।

**कुरुम्बी।** स्त्री। सैंहलीवृक्षे। रा. नि. व. ५।

**कुररी** } पुं। कुररपक्षिणि। भालस्थ-चूर्णकुन्तले। हे. च.। वै. निघ.।
**कुरलः** }

**कुरवकः।** पुं। Crimson amaranth, (Barleria cristata.) रक्तझिण्ट्याम्। লাল ঝাঁটী। हिं कटसरैया। अम.। पीतपुष्पझिण्ट्यां। मे.। क्ली। कुरुवकशाके। प. सु.।

**कुरुविन्दः।** पुं। कुरुचेवजब्रीहिभेदे, कुल्माषे। अयं कुधान्यवर्गीयः। कुलत्थ। सु. सू. ४६ अ.। भद्रमुस्तायाम्। নাগরমূতা। ज, द.। मुस्तायाम्। रा. नि. व. ६। सु. सू. ३६ अ.। माषे। माषकलाय। प. सु.। रा. नि. व. १६। सु. सू. ४६ अ, क्ली। हिङ्गुले। हे. च.। पद्मरागमणौ। माणिक। काचलवणे। रा. नि. व. ६। रत्नभेदे। रा. नि. व. १३। कृष्णलवणे। "नानीयात् कुरुविन्दकं यदरुणं स्यात्।" ज. द.।

**कुरुविन्दकः (न्दाख्या)।** पुं, स्त्री। A kind of Dolichos Biflorus. वनकुलत्थके। भद्रमुस्तायाम्। নাগরমূতা। अम.। ज. द. १२ अ.।

**कुरुविल्वः (ल्लः, कः)।** पुं। नागरमुस्तायाम्। ज. द. १२ अ.। पद्मरागमणौ। त्रिका.। वनकुलत्थे। रत्ना.। कुलत्थाञ्जने। र.।

**कुरुविस्तः।** पुं। सुवर्णपले। ৪ তো. সোণা। अम.।

**कुरुवीरकः।** पुं। अर्ज्जुनवृक्षे। रा. नि. व. ९।

**कुरूप्यम्।** स्त्री। रङ्गे। रा. नि. व. १३।

**कुर्कुटः।** पुं। कुक्कुटे।

**कुर्कुरः।** पुं। ग्राम्यमृगे। কুকুর। अ. टी, रा.।

**कुर्चिका।** स्त्री। सूच्याम्। ছুঁচ্। त्रिका.।

**कुर्णकम्।** क्ली। पटोललतायाम्। পটোল-গাছ। श. चि.।

**कुर्णजः।** पुं। कुलिञ्जनवृक्षे, गन्धमूले। रा. नि. व. ६।

**कुर्परः।** पुं। कफोणौ। কুনুই। हे. च.।

**कुर्पासः (कः)।** पुं। स्त्रीणां स्तनाच्छादने वस्त्रे। কাঁচুলি। अम.।

**कुलम्।** क्ली। वदरे। देहे। कृष्णाञ्जने। त्रिका.।

**कु(कू)लकः।** पुं. क्ली। रसनामले। हारा.। भोग्यवस्तुनि। त्रिका.। सा. कौ. ज्व. चि.। सर्पविशेषे। হরিতসর্প। रा नि. व. २३। वल्मीके मे.। कुपीलौ। কুঁচ্লে। भा. पू. १भ.। च. द. ज्व. चि. शाकविधौ। "कुलकङ्कारवेल्लकम्।" "निम्बकूलकयूषस्तु।" मरुवकवृक्षे। মরনা গাছ। र. मा.। क्ली। पटोललतायाम्। পল্তা। मे.।

**कुलककर्कटी।** स्त्री। चीनकर्कट्याम्। रा. नि. व. ७।

**कुलकाः।** स्त्री। पटोललतिकायाम्। পল্তা। भैष. अम्ल.पि.चि. क्षुधावतीगुड़ी। मनःशिलायाम्। (कन्दर्पसारतैले।)

**कुलक्षत्।** पुं। अकर्करे। আকরকরা। वै. निघ, जिह्वक, ज्व. चि.।



**कुलङ्गः।** पुं। कृष्णसर्पविशेषे। वै. निघ.।

**कुलङ्गी।** स्त्री। मेषशृङ्ग्याम्। কাঁকড়াশৃঙ্গী। वै. निघ.।

**कुल(लि)ञ्जः।** पुं। कुलञ्जनवृक्षे। रा. नि. व. ६.। प. मु.।

**कुल(लि)ञ्जनः।** पुं, क्ली। An aromatic plant. (Alpinia Galanga.) स्वनामख्यातद्रव्ये, गन्धमूलके। महाभैरवीवचायाम्। কুড়-বিশেষ, মহাভরী বচ। गुणाः—कटुतिक्तोष्णः दीपनः मुखदोषनुत्। रा. नि. व. ६। कुलञ्जनश्च स्वरकृत् हृत्कण्ठमुखशोधनः। अर्क. चि.। "कुलिञ्जनङ्कटु तिक्तमुष्णञ्चाग्निप्रदीपनं। रुच्यं स्वर्य्यञ्च हृद्यञ्च मुखकण्ठविशुद्धिकृत्। मुखदोषङ्कफञ्चैव कासं वातकफं हरेत्। वृहत्कुष्ठं गुणैर्ज्ञेयं न्यूनमस्मादिति स्मृतम्॥" वै. निघ.।

**कुलटी।** स्त्री। मनःशिलायाम्। र. मा.।

**कुलदृणम्।** क्ली। दमनके। নাগদনা। प. सु.।

**कुल(लि)त्थः (कः)।** पुं। A sort of pulse. (Dolichos biflorus, Syn. Dolichos uniflorus.) शिम्बिधान्यविशेषे। কুর্ত্তিকলায়। हिं कुलत्थी। तें उलवलु। तत्पर्य्यायः,—कालवृन्तः, ताम्रवृन्तः, कुलत्थिका (र.), ताम्रवृन्तः (त्रि), ताम्रवीजः, सितेतरः। कृष्णवन्यभेदेन स द्विविधः। ताम्रश्च तत्कृष्णगुणाः—कषायः उष्णः रूक्षः वातकफघ्नः रक्तपित्तकरः श्वासकासवीर्य्यबलघ्नश्च। रा. नि. व. १६। "उष्णो जयेन्मारुतपीनसांश्च कासप्रतिश्यायविबन्धगुल्मान्। हिक्कां स रक्तस्तु बलासपित्तं निहन्ति मेदश्च कुलत्थकोऽयं॥" अत्रि. १५अ.। उष्णवीर्य्यः पाकेऽम्लः शुक्राश्मरीपीनसघ्नः काशार्शःकफवातघ्नः पित्तासृदश्च। वा.। रसतः कषायः विपाके कटुश्च। हेमाद्रि। शिम्बीधान्यवर्गे। कषायः कटुक उष्णवीर्य्यत्वात् वातं शमयेत्। पाकेन कटुत्वं। सु. सू. ४०अ.।

**कुलत्थगुड़ः।** पुं। हिक्काश्वासाधिकारे। कुलत्थस्य १०० प. दशमूलस्य समष्ट्या १०० प. भार्ग्याः १०० प. एकत्र पृथग्वा वारि प्र. द्रोणमितं (६४श.) पादशिष्टः क्वाथः कार्य्यः। गुड़स्य ५० प. एकत्र पक्वा लेहभूते, प्रक्षेपः—मधु ८ प. वंशरोचना ६ प. पिप्पली २ प. गुड़त्वक् तेजपत्रं एला प्र. २ तो.। च. द.। "कुलत्थो दशमूलञ्च तथैव द्विशियष्टिका। शतं शतञ्च संगृह्य जलद्रोणे विपाचयेत्। पादावशेषे तस्मिंश्च गुड़स्यार्द्धतुलां क्षिपेत्। शीतीभूते च पक्वे च मधुनोऽष्टौ पलानि च। षट्पलञ्च तुगाक्षीर्य्याः पिप्पल्याश्च पलद्वयं। त्रिसुगन्धिसुगन्धं तं खादेदग्निबलं प्रति॥" रस. र.।

**कुलत्थयूषः।** पुं। आमकुलत्थसाधितक्वाथे। प. सु.। गुणाः—वातानुलोमकः गुल्मघ्नस्तूणीघ्नः प्रतितूणीघ्नश्च। वा.। "वीर्य्योष्णो मधुरोऽग्निप्रदीपनः। कषायो गुल्मकफहृद्धायुर्श्वःश्वासकासहा। वातानुलोमनस्तूनीमेहमेदोविनाशनः।" वै. निघ.। कुलत्थयूषो मधुरः कषायो भवेत् स वातस्य कफस्य हन्ता। महाश्मरीवायुजरोहहन्ता सन्दीपनो मेदविशोषणश्च।" अत्रि.।

**कुलत्थषट्पलघृतम्।** क्ली। हिक्काश्वासाधिकारे। "कुलत्थाद्दशमूलाच्च भार्ग्याः प्रस्थं पृथक् पृथक्। क्वाथयित्वा जलद्रोणे पादशेषे विपाचयेत्। द्विक्षीरं सर्पिषः प्रस्थं सक्षारैः पञ्चकोलकैः। पलिकैस्तज्जयेत् सिद्धं......॥" কাথার্থ—কুলথ ২ শ. দশমূলমিলিত ২ শ. ভার্গীমূল ২শ. জল ৬৪ শ. শে. ১৬ শ. ঘৃত ৪শ. ছাগদুগ্ধ ৪শ. গব্যদুগ্ধ ৪ শ.। কল্কার্থ—পঞ্চকোল ও যবক্ষার প্রত্যেকে ১প.। रस. र.।

**कुलत्थसूपः।** पुं। भृष्टकुलत्थसिद्धयूषे। गुणाः—"कुलत्थसूपो वातघ्नः कटुः पाके कषायकः। कफाविरोधी शुक्रास्रकरोषश्वासकासनुत्। शुक्राश्मरीहरः पित्तकारकः कथितो नृभिः॥" वै. निघ.।

**कुलत्था।** स्त्री। कुलत्थाञ्जने। কাল সুর্মা। रा. नि. व. १३। वनकुलत्थिकायाम्। বনকুলথ। मं रानकुलित्था। कं काड़हुलिग। तत्पर्य्यायः,—दृक्प्रसादा, अरण्यकुलत्थिका, कुलाली, लोचनहिता, चक्षुष्या, कुम्भकारिका, कुलत्थिका (रा.), कुल्माषः, कुरुविल्वकः (र.)। गुणाः—कटुः तिक्ता अर्शःशूलघ्नी विबन्धाध्मानघ्नी चक्षुष्या व्रणरोपणी च। रा. नि. व. ५।

**कुलत्थाञ्जनम्।** क्ली। A blue stone nsed as a collyrium. स्वनामख्याताञ्जनविशेषे, कुलत्थाकाराञ्जनप्रस्तरविशेषे। কৃত্রিম অঞ্জনবিশেষ। हिं कालासुर्मा, खापरिया। तत्पर्य्यायः,—कुम्भकारी, प्रलापहा। गुणाः—"कुलत्थिका तु चक्षुष्या कषाया कटुका हिमा।

विषविस्फोटकण्डूतिव्रणदोषनिवर्हिणी ॥" रा. नि. व. १३।

**कुलत्थादिलेपः**। पुं। कर्णमूलशोथे हिते लेपे। कुलत्थः कट्फलं शुण्ठी कृष्णजीरकञ्च समभागं जलेन पेषयित्वा ईषदुष्णो लेपः। भा. म. १भ. ज्व, चि.।

**कुलत्थाद्यघृतम्**। क्ली। अश्मर्य्यधिकारे। "कुलत्थसिन्धूत्थविड़ङ्गसारं सशर्कराशीतलियावशूकम्। बीजानि कुष्माण्डकगोक्षुराणां घृतं पचेद्वरुणस्य तोये।" घृतं ४ श. वरुणत्वक् १२॥० श, (मतान्तरे ८ श.) वारि ६४ श. पादांश: १६ श, कुलत्थादिकल्कः ८ प, एकत्र पाच्यम्। मतान्तरे—घृত ৪শ. বরুণছাল ৪ শ. জল ১৬ শ. শে. ৪ শ.। কল্কার্থ—কুলথ, সৈন্ধব, বিড়ঙ্গ, চিনি, শিউলিছোপ, যবক্ষার, কুষ্মাণ্ডবীজ, গোক্ষুরবীজ, প্রত্যেকে ৮ তো.। বা. কৌ.। च. द.।

**कुलत्थान्नम्**। क्ली। तत्कृतभक्ते। गुणाः—"कुलत्थान्नन्तु मधुरं तुवरं रूक्षमुष्णकं। लघु तृप्तिकरं पाके कटुकञ्चाग्निदीपनम्। कफवातकृमिश्वासनाशनं परिकीर्त्तितम् ॥" वै. निघ.।

**कुलत्थिका**। स्त्री। कुलत्थाञ्जने। रा. नि. व. १३। रत्ना.। कुलत्थे। वनकुलत्थे। বনকুর্ত্তি। र. मा.। हे. च.। रक्तकुलत्थे। भा.। शीतलादेव्याम्। वै. निघ.।

**कुलत्थी**। स्त्री। कुलत्थिकायाम्।

**कुलनाशः**। पुं। उष्ट्रे। हे. च.।

**कुलपत्रः (कः)**। पुं। दमनकवृक्षे। দনা। रा. नि. व. १०।

**कुलपालकम्**। क्ली। कुरुन्ते। কমলা লেবু। श. च.

**कुलबधूरसः**। पुं। सन्निपातज्वरे। अत्र तुल्यांशं एकभागतुल्यं। यद्यपि नस्यमुक्तं तथाप्यञ्जनव्यवहारः। र. सा. सं.। पारदशीषकतात्रमनःशिलातुल्यकानि द्रव्याणि। इन्द्रवारुणी (রাখাল শশা) रसेन चणकाभा वटी कार्य्या। भै. रत्नावली।

**कुलभृत्या**। स्त्री। गर्भिणीपर्य्युपासनायाम्। । अमटा.

**कुलयी** } **कुली** } स्त्री। वृक्षविशेषे। शीतला स्वादुः वातकृत् गुरुश्च। "कुलयी शीतला स्वादुः वातला कफकृद्गुरुः।" वै. निघ.।

**कुलराहः (कः)**। पुं। सेराहापरनाम्नि पीयूषवर्णाश्वे। "कुलाहः कुलराहस्तु सेराहः सुरराहकः।" ज. द. ३अ.।

**कुलर्कः**। पुं। तालमर्द्दने। हारा.।

**कुलवर्णा**। स्त्री। रक्तमूलायां त्रिवृति। লাল তেউড়ী। रा. नि. व. ६।

**कुलसञ्चयम्**। क्ली। परिपेले। কেউটমুতা।

**कुलसौरभम्**। क्ली। मरुवकवृक्षे। हिं मरुआ। श. मा.।

**कुलहण्टः (ण्डकः)**। पुं। जलावर्त्ते। हारा.।

**कुल(ला)हलः**। पुं। (Coryza Terebinthina or Celsia Coromandelina.) भूकदम्बे। কুকশিমা। र. मा.। "कुलहलविषमुष्टी भूस्तृणो भूतकेशी।" बा. भू. १५ अ.। महाश्रावणिकायाम्। मुण्डीरी। मद. व.१।

**कुलहला**। स्त्री। गोरक्षमुण्डीक्षुपे। वै. निघ.।

**कुलच्चया**। स्त्री। कर्पूरशठ्याम्। वै. निघ.। कपिकच्छ्वाम्। श. च.।

**कुला**। स्त्री। मनःशिलायाम्। वै. निघ.। शूकशिम्ब्याम्।

**कुलाटः**। पुं। क्षुद्रमत्स्यविशेषे। श. मा.।

**कुलायः**। पुं। पक्षिनीड़े। स्थानमात्रे। मे.। क्ली। शरीरे।

**कुलायस्थः**। पुं। पक्षिणि। श. च.।

**कुलायिका**। स्त्री। पक्षिशालायाम्। त्रिका.।

**कुलालः**। पुं। वनकुक्कुटपक्षिणि। कुकुभपक्षिणि। हारा.। मे.। कुम्भीरे। वै. निघ.।

**कुलालिका (ली)**। स्त्री। नीलोत्पलविशेषे। अञ्जनान्तरे, कुलत्थाञ्जनप्रस्तरविशेषे। मे.। रा. नि. व. १३। वनकुलत्थिकायाम्। रा. नि. व.५।

**कुलासकः**। पुं। दुरालभायाम्। प. सु.।

**कुलाहः (कः)**। पुं। ईषत्पीतवर्णकृष्णजानुघोटके। हे. च.। "ईषत्पीतः कुलाहस्तु यो भवेत् कृष्णजानुकः।" ज. द. २ अ.। रक्तकोकिलाक्षे।



লাল কুলেখাড়া। गुणाः—आमवातघ्नः रक्तरोगघ्नश्च। राज.। कृकलासे। श. र.।

**कुलाञ्चिका (ञ्चता)**। स्त्री। गुन्द्रां। কুত্তি।

**कुलिः (ली)**। स्त्री। चविकायाम्। চই। रत्ना.। कण्टकार्य्याम्। कण्टकारी। मे.। पुं। काञ्चनारभेदे। রক্তকাঞ্চন। मद. व. १। हस्ते। হাত। त्रिका.। चटकपक्षिणि। वै. निघ.।

**कुलिकः**। पुं। कण्टकपालीवृक्षे। কেলেকড়া, কাঁটা গুড়কাঁউলী। भैष.। अश्वकर्णशाले। লতা শাল। रत्ना.।

**कुलिकच्छः**। पुं। नन्दीवृक्षे। গয়া অশ্বথ গাছ, তূণ। प. सु.।

**कुलिका**। स्त्री। मेषशृङ्ग्याम्। वै. निघ.।

**कुलिङ्गः (कः)**। पुं। चटकपक्षिणि। रत्ना.। तत्पर्य्यायः,—कलिङ्गः, धूम्याटः, फिङ्गकः (शब्दमा.) भृङ्गः (अ.)। च.चि.२अ.वृष्ययोगे। गृहकुलिङ्गमांसं रक्तपित्तहरं अतिशीतलञ्च। रा.नि.व.१९। कुलिङ्गी स्निग्धः कफशुक्रविवर्द्धनः। रक्तपित्तहरो वेश्मकुलिङ्गस्तु विशीतलः। सुश्रु.। सविषमूषिकविशेषे। तद्दष्टे रुजः शोफो राज्यश्च दंशमण्डले भवन्ति। सु. कल्प. ६ अ.। Fork tailed shrike. फिङ्गकपक्षिणि। ফিঙ্গা পাখী हिं गरगैया। तन्मांसगुणाः—कुलिङ्गी मधुरः स्निग्धः कफशुक्रविवर्द्धनः। सु. सू. ४६ अ.। मधुरं स्निग्धं कफपित्तकरञ्च। राज.।

**कुलिङ्गा (ङ्गी)**। स्त्री। कुलिङ्गपक्षिस्त्रियाम्। कर्कटशृङ्गीवृक्षे। কাঁকড়াশৃঙ্গী গাছ। प. सु.। च. सू. ४ अ.।

**कुलिङ्गाक्षी**। स्त्री। पेटिकावृक्षे। পেটারি গাছ। श्वेतोच्चटायाम्। শ্বেত ওকড়া। रत्ना.।

**कुलित्था**। स्त्री। रक्तकुलत्थे। वै. निघ.।

**कुलित्थिका**। स्त्री। वनकुलत्थे। त्रिवृतायाम्। मसूरिकादेव्याम्। वै. निघ.।

**कुलिरः**। पुं। कर्कटे। কাঁকড়া। त्रिका.।

**कुलिशः**। पुं। लताशाले। र. मा.। खड्गकर्णवृक्षे। "हस्तिकर्णपलाशस्य कुलिशस्य तथैव च।" रसेन्द्र. चि. ८ अ.। अस्थिसंहारवृक्षे। प, सु.। भैष. अम्लपि. चि. ८अ.। र. मा. लौहमारणे। हीरकप्रभमत्स्यविशेषे। त्रिका.। मे.। क्ली। वज्रे। হীরে। रा. नि. व. १३।

**कुलिशतरुः**। पुं। अश्वकर्णशाललतायाम्। লতাশাল। रा. नि. व. ९।

**कुलिशद्रुमः**। पुं। स्नुहीवृक्षे। মনসা বৃক্ষ। हिं मूहर। वै. निघ.।

**कुलिशमत्स्यः**। पुं। कुड़िशमत्स्ये। राज.।

**कुलीनः**। पुं। कुनखनामक्षुद्ररोगे। See कुनखः। श्रेष्ठघोटके। हे. च.।

**कुलीनकः**। पुं। वनमुद्गे। মুগানী। कर्कटे। प. सु.।

**कुलीनसम्**। क्ली। जले। हे. च.।

**कुलीयकम्**। क्ली। नेत्रसन्धौ। वै. निघ.।

**कुलीरः (कः)**। पुं। कर्कटशृङ्ग्याम्। वै.निघ.। कर्कटे। क्षुद्रकर्कटे। কাঁকড়া। रत्ना.। रस. र. बाल. चि.। कुलीरमांसगुणाः—"कुलीरकस्य मांसन्तु शीतं धातुविवर्द्धकं। वृष्यं रक्तप्रवाहञ्च स्त्रीणां शमयति क्षणात् ॥" वै. निघ.। सृष्टविण्मूत्रं भग्नसन्धानकृत् वातपित्तघ्नम्। "कुलिरोऽतिमलो वृष्यः पाण्डुक्षयविनाशनः। शोफातिसारग्रहणीस्थविराणां स्त्रियां हितः ॥" अत्रि।

**कुलीरविषाणिका (णी)**। स्त्री। कर्कटशृङ्ग्याम्। কাঁকড়াশৃঙ্গী। भा. पू. १भ.।

**कुलीरशृङ्गी** } **कुलीरा** } स्त्री। कर्कटशृङ्ग्याम्। प. मु.। भा. कर्णक. ज्व. चि.। च. सू. ४ अ.।

**कुलीरात्**। पुं। कर्कटशिशौ। কাঁকড়ার বাচ্ছা। त्रिका.।

**कुलीशम्**। क्ली, पुं। वज्रे। अ. टी. सा.।

**कुलुकम्**। क्ली। जिह्वामले। हे. च.।

**कुलुकगुञ्जा**। स्त्री। उल्काग्नौ। हारा.।

**कुलूलम्**। क्ली। तुषानले। मे.।

**कुलेचरः**। पुं। छत्रकभेदे। वै. निघ.।

**कुलोत्कटः**। पुं। कुलीनघोटके। श. च.।

**कुलोत्थिका**। स्त्री। कुलत्थे। वै. निघ.।

**कुल्फः**। पुं। गुल्फे। গুল্লে। रोगे। उणा.।

**कुल्माषः**। पुं, क्ली। काञ्जिके। रा. नि. व.

२१। कुलत्थे। गन्धशालौ। प, सु.। यावकै। याउ। मे.। अर्द्धस्विन्नधान्यगोधूमादौ। घुङ्गनी। "अर्द्धस्विन्नास्तु गोधूमा अन्येऽपि चणकादयः। कुल्माष इति कथ्यन्ते। कुल्माषा गुरवो रूक्षा वातला भिन्नवर्च्चसः।" भा.। कीटदष्टमाषे। शूक-धान्ये, यवादौ। वै. निघ.। वंशे। रा. नि. व. २१। जटामांस्याम्। वनकुलत्थे। र. मा.। काश्मीरे तुलसीभेदे। क्ली। धान्यविशेषे। বোরো धान। राजमाषे। वर्वटी। यवौदने। सु. चि. ६ अ.। यवपिष्टमाषे। सु. चि. १० अ.।

**कुल्माषाभिभवम्**, **कुल्माषाभिषुतम्** क्ली। काञ्जिके। "कुल्माषादिभिरर्द्धस्विन्नैरभिषूयते च।" अ. टी. स्वा.।

**कुल्मासम्**। क्ली, पुं। कुल्माषे। विश्व.।

**कुल्यम्**। क्ली। अस्थ्नि। হাড়। द्रोणाष्टकपरि-माणे। आमिषे। कीकसे। পাঁজর। मे.।

**कुल्या**। स्त्री। द्रोणाष्टकमाने। जीवन्त्याम्। मे.। स्थूलवार्त्ताक्याम्। বড় বেগুণ। र.मा.। पयः-प्रणाल्याम्। अ.।

**कुल्वकम्**। क्ली। जिह्वमले। वै. निघ.।

**कुवम्**। क्ली। वारिजपुष्पमात्रे। पद्मे। है. च.।

**कुवकालुका**। स्त्री। घोलीशाके। रा. नि. व. ७।

**कुवङ्गम्**। क्ली। सीसके। সীসে। रा. नि. व. १३।

**कुवज्रकम्**। क्ली। वैक्रान्तमणौ। रा.नि.व.१३।

**कुवरः**। पुं। तुवररसे। ঝালরস। अ. टी.।

**कुवलः**। पुं। )Ziziphus Jujuba.) वदरी-वृक्षे। কুল গাছ। र. मा.। क्ली। पद्मे। उत्पले। मे.। वदरफले। কুল। मद. व. ६। ह्रस्वदरे च. इ. ४ अ.। मुक्ताफले। प. मु.।

**कुवलकी**। स्त्री। शल्लकीवृक्षे। वै. निघ.।

**कुवलकुणः**। पुं। कोलिफलकाले।

**कुवलयम्**। क्ली। उत्पले। नीलोत्पले। নীল শুন্দি। হিং কাঁজী। रा. नि. व. १०। श. र.। "कुवलयमीलधवलं कुवलयम्।" उ.। श्वेतपद्मे। नीलपद्मे। वै. निघ.। श्वेतकुमुदे। भा. पु. १भ.।

**कुवलयिनी**। स्त्री। उत्पलिन्याम्। শুন্দি বা কুমুদের ঝাড়। रा. नि. व. १०।

**कुवला**। स्त्री। मुक्ताविशेषे।

**कुवली**। स्त्री। कोलिवृक्षे। কুল গাছ। है.च.।

**कुवाली**। स्त्री। अश्मन्तकवृक्षे। रा.। আবাটু।

**कुवासः**। पुं। दुर्गन्धे। के.।

**कुवाहुलः**। पुं। उष्ट्रे। श.।

**कुविड़म्**। क्ली। विड़लवणे। रा. नि व. २१।

**कुवृत्तिकृत्**। पुं। पूतिकायाम्। करञ्जभेदे। কাঁটা করঞ্জ। श. च.।

**कुवेणी**। स्त्री। मत्स्यधानिकायाम्। থানুই।

**कुवेरः (कः)**। पुं। तुन्नवृक्षे। তুঁদ। मे.।

**कुवेराक्षी**। स्त्री। पाटलावृक्षे। अ.। सिता-पाटलिकायाम्। लताकरञ्जे। पेटिकावृक्षे। रा.।

**कुवेलम्**। क्ली। कुवलये। পদ্ম। है. च.।

**कुवैद्यः**। पुं। कुत्सितवैद्ये।

**कुशः**। पुं, क्ली। जले। मे.। Sacrificial grass. (Poa cynosuroides.) स्वनाम-ख्याततृणे। কুশ। হিং দর্ভ। कुचदमु उन्ना-कुशि। तत्पर्य्यायः,—कुथः, दर्भः, पवित्र (अ.), याज्ञिकः, ह्रस्वगर्भः, वर्हिः, कुतुपः (शब्दर.)। कुशो द्विविधः, ह्रस्वदीर्घभेदेन। तयोर्दीर्घपत्रकुश-एव सितदर्भ उच्यते। स एवाधिकगुणः। ह्रस्वो-ऽपि प्रायेण सितदर्भतुल्यगुणः। "दर्भौ द्वौ च गुण तुल्यौ तथापि च सितोऽधिकः। यदि श्वेतकुशा-भावे त्वपरं योजयेद्भिषक्॥" रा. नि. व. ८। "दर्भद्वयं त्रिदोषघ्नं मधुरं तुवरं हिमं। मूत्रकृच्छ्रा-श्मरीतृष्णावस्तिरुक्प्रदरास्रजित्॥" भा. पू. १भ.। कुशो ह्रस्वदर्भ इति।" सु. सू. ३८ अ.। उ.। तृणपञ्चमूले कुशासने च। च. द. प्रमेह.चि.।

**कुशद्वयम्**। क्ली। स्थूलसूक्ष्मदर्भद्वये। वा. सू. १५ अ. वीरतरादि.। "वृक्षादनीनलकुशद्वयगुण्ठ-गुन्द्राः।"

**कुशनामा**। पुं। उष्ट्रे। है. च.।

**कुशपः**। पुं। पानपात्रविशेषे। उणा.।

**कुशपत्र(क)म्**। क्ली। तदाकारपत्रास्त्रविशेषे-। तच्च विस्रावणे प्रयोज्यम्। "कुशाटीवदने स्राव्ये द्व्यङ्गुलं स्यात्तयोः फलमिति।" सु. सू. ८ अ.।



**कुशपुष्पम्**। क्ली। ग्रन्थिपर्णे। গাঁঠিয়ালা। प. सु.।

**कुशमुत्तोली**। स्त्री। कुशमय्यां मुटिकायाम्। कुशानां रचनाविशेषो मुत्तोलीत्युच्यते। वा. कल्प. १ अ. अरुण.।

**कुशमूढः**। पुं। कुशनिर्म्मितपटके। सु. सू. ४३ अ.।

**कुशमूलम्**। क्ली। दर्भमूले। गुणाः—हिमं रूक्षं मधुरं पित्तघ्नं रक्तज्वरतृष्णाश्वासकामलाहृच्च। रा. नि. व. ८।

**कुशरीरः**। पुं। महाशालवृक्षे। वै. निघ.। त्रि। कुत्सितशरीरे।

**कुशलः**। त्रि। निपुणे। पुं। कुक्कुरे। है. च.। महानलवेतसे। मत्स्यभेदे। वै. निघ.। क्ली। पर्य्याप्तौ। अम.।

**कुशली**। स्त्री। अश्मन्तकवृक्षे। क्षुद्राम्लिकायाम्, चाङ्गेर्य्याम्। আমরুল। भा. भू. १भ. शाकव.। कुमार्य्याम्। घृतकुमारी। वै. निघ.।

**कुशलोदरम्**। क्ली। भव्यफले। চালতা।

**कुशस्तवः**। पुं। कुशगुच्छे।

**कुशस्त्रम्**। क्ली। कुत्सितास्त्रे। খারাপ অস্ত্র। यथा—"अज्ञान-लोभाहितवाक्ययोग - भय - प्रमोहै-रपरैश्च भावैः। यदा प्रयुञ्जीत भिषक् कुशस्त्र तदा स शेषान् कुरुते विकारान्॥" सु.।

**कुशा**। स्त्री। रज्ज्वाम्। मे.। मधुकर्कट्याम्। श. च.। वल्गायां। লাগাম্। हे. च.।

**कुशाकरः**। पुं। अग्नौ। शब्दमा.।

**कुशाग्रः**। पुं। वानरे। सूर्य्ये। अग्नौ। के.। क्ली। कुशतृणाग्रे।

**कुशाङ्कुरम्**। पुं। कुशतृणाङ्कुरे।

**कुशादिशालिपर्ण्यः**। स्त्री। तृणपञ्चकमूलं विदारिगन्धादिगणे च। सि. यो. दाह. चि.।

**कुशाद्यघृतम्**। क्ली। अश्मर्य्यधिकारे। कुशा दिक्वाथ्यद्रव्याणां समष्टिः १२॥० श. वारि ६४ श. पादशिष्टः क्वाथः १६ श. शिलाजत्वादीनां कल्कः १ श. घृतप्रस्थ ४ श. पचेत्। क्वाथद्रव्यं यथा—कुशमूलं काशमूलं शरमूलं इत्कटमूलं ( হকড় মূল ) इक्षुमूलं पाषाणभेदः उलुमूलं भूमिकुष्माण्डः वाराहीकन्दः वराहक्रान्ता वा शालिधान्यमूलं गोक्षुरं श्योणाकः पाटला पाठा ( আকনাদি ) शालिञ्चशाकं पीतझिण्टी श्वेतपुनर्नवे शिरीष-मेवेति। कल्कद्रव्य यथा—शिलाजतु यष्टिमधु इन्दीवरवीजं (চুঞাবীজ) त्रपुषवीजं (শশাবীজ कर्कटीवीजं (কাঁকুড়বীজ)। सर्व्वैरेव क्वाथकल्क इत्यन्ये। च. द. अश्मरी. चि.।

**कुशाद्यतैलम् (घृतञ्च)**। क्ली। दाहाधिकारे। तिलतैलं घृतं वा ४ श.। क्वाथार्थं कुशकाशशरेक्षु-शीरशालपर्णीनां मिलितपलशतं वारि ६४ श. शिष्टक्वाथः १६ श. जीवकादीनां मिलितपलाष्टक-मितं कल्क दत्त्वा एकत्र पचेत्। च. द. दाह. चि। "कुशादिशालपर्ण्यादिजीवकाद्येन साधितं। तैलं घृतं वा दाहघ्नं वात-पित्त-विनाशनम्॥" क्वाथार्थं कुशादिपञ्चतृण-स्वल्पपञ्चमूलञ्च मिलित्वा ३२ प., कल्कार्थं जीवकाद्यष्टवर्गः मि. १ श.। रस. र.।

**कुशाल्मलिः (ली)**। पुं, स्त्री। ( Ander-sonia Rohitaka. रक्तरोहीतके। रोही-तकवृक्षे। রোহিতা বৃক্ষ। रा. नि. व. ८।

**कुशावलेहः**। पुं। प्रमेहाधिकारे औषध-विशेषः। पाठः—"वीरणश्च कुशः काशः क्षणेक्षुः खागड़स्तथा। एषां दशपलान् भागान् जलद्रोणे विपाचयेत्। मधुकं कर्कटीवीजं कर्कारु त्रापुष-न्तथा। शुभामलकपत्राणि एलात्वङ्नागकेशरं। वरुणामृतपियङ्गूनां प्रत्येकमक्षसम्मितम्॥" सा. कौ.। द्रव्याणि—वीरणमूलं (বেণার মূল) कुश मूलं काशमूलं क्षणेक्षुमूलं खगड़मूलञ्च, एषां प्र. १० प. वारि ६४ श. शे. ८ श.। तेन खण्ड २ श. संमिश्र्य पचेत्, लेहभूते प्रक्षेपो देयः। तद्द्रव्यपरिमाणञ्च प्र. २ तो.। प्रक्षेपद्रव्याणि—यष्टीमधुकं कर्कटीवीजं (কাঁকুড়বীজ) कुष्माण्ड-वीजं त्रपुषवीजं (শশাবীজ) वंशलोचना आम-लकपत्र एला त्वक् (দারচিনী) नागकेशरपुष्पं वरुणत्वक् गुड़ूची प्रियङ्गुश्च। च. द.।

**कुशासनम्**। क्ली। कुशनिर्म्मितासने।

**कुशाक्षः**। पुं। वानरे। श. मा.।

**कुशिंशपा**। स्त्री। कपिलवर्णशिंशपायाम्। কাপলবর্ণ শিশুগাছ। रा. नि. व. ९।

**कुशिः**। पुं। पेचके। रा.।

**कुशिकः**। पुं। सर्ज्जवृक्षे। শাল গাছ। मे.।

विभीतकवृक्षे। इ. च.। अश्वकर्णवृक्षे। লতা শাল। रा. नि. व. ९। तैलशिंषे। विश्व.। फाले। ফাল। भल्लातकवृक्षे। वदरे। वै. निघ.। त्रि। টেবা। श. मा.।

**कुशि(षि)तः**। त्रि। जलमिश्रिते। उणा.।

**कुशिम्बिः(म्बी)**। पुं, स्त्री। शिम्बीविशेषे। गुणाः— "ज्ञेया विपाके मधुरा रसे च बलप्रदाः पित्तनिवर्हणाश्च।" वैद्यकं।

**कुशी**। स्त्री। फालं। लौहविकारे। मे.।

**कुशोदम्**। क्ली। फाले। रक्तचन्दने। मुण्ड-मालातन्त्रम्।

**कुशोपुः**। पुं। अग्नौ। वै. निघ.।

**कुशूलः**। पुं। तुषाग्नौ। जटा.। अन्नकोष्ठ, धान्यकोष्ठे। हला.।

**कुशेशयः**। पुं, क्ली। पद्मे। प. मु.। कर्णिकार-वृक्षे। কল্কেফুলের গাছ। श. च.। सारस-पक्षिणि। अम.।

**कुशेशयकरः**। पुं। सूर्य्ये।

**कुषकः**। पुं। विभीतकवृक्षे। वै. निघ.।

**कुषाकुः**। पुं। वानरे। अग्नौ। विश्व.। अर्के। मे.।

**कुष्ठः**। पुं, क्ली। (Sausurea auriculata. Syn. Aplotaxis auriculata.) स्वनाम-ख्यातमध्यमगन्धभेषजविशेषे। কুড়। हिं कूठ। तैं चेंगलिकोष्ठु, चंगलकोष्ठु। प. मु.। तत्पर्य्यायः,—कदाख्यं, दुष्टं (श.), व्याधिः, परिभाव्यं, व्याप्य, उत्पलम् (अ.), वाप्यं, आप्यं (अ.टी.), जरणम्, गदाख्यम् (र.), गदाह्वम्, गदाह्वयम्, कौवेरम्, भासुरम् (शब्दर.) काकलम्, नीरुजम् (ज.), कुठिकः (हा.), रुजा, गदः, आमयः, पारिभद्रकं, रामं वाणीरजम्, पावनं, कुत्सितम्, पाकलं पद्मकम्। गुणाः—"कुष्ठमुष्णं कटु स्वादु शुक्रलं तिक्तकं लघु। हन्ति वातास्रवीसर्पकासकुष्ठ-मरुत्कफान्॥" भा. पू. १भ.। विषकण्डूखर्ज्जू-दद्रुहत्कान्तिकरञ्च। रा. नि. व. १२। वा. सू. १५ अ.। कुष्ठरोगे। पुष्करमूलं। কুড়বিশেষ বিষমর্দ। इ. च.। कुलिञ्जनवृक्षे।

**कुष्ठकण्टकः**। पुं। खदिरवृक्षे। वै. निघ.।

**कुष्ठकालानलरसः**। पुं। कुष्ठे हितः। पाठः—"गन्धं रसं टङ्कणताम्रलौहं भस्मीकृतं माक्षिका-समेतं। पञ्चाङ्गनिम्बेन फलत्रयेण विभावितं राजतरोस्तथैव। नियोजयेद्वल्लकयुग्ममानं कुष्ठेषु सर्व्वेष्वपि रोगसङ्घे॥" र. चि. ९अ.।

**कुष्ठकुठाररसः**। पुं। कुष्ठाधिकारे। सूतभस्म १ भ. गन्धक. १ भ. मृतायःप्रभृति शिलाजत्वन्तानां प्रत्येकं १६ भ. करञ्जवीजचूर्णं ६४ भ. अभ्रस्य च ६४ भ.। चूर्णानुरूपघृतमधुभ्यां विलोड़येत्। "भस्मसूतसमो गन्धो मृतायस्ताम्रगुग्गुलू। त्रिफला च महानिम्बश्चित्रकश्च शिलाजतु। इत्येतच्चूर्णित-कुर्य्यात्प्रत्येकं शाणषोड़श। चतुःषष्टिं करञ्जस्य वीजचूर्णं प्रकल्पयेत्। चतुःषष्टिं मृतञ्चाभ्रं मध्वा-ज्याभ्यां विलोड़येत्॥" रस. र.। र. सा. सं.।

**कुष्ठकेतुः**। पुं। भूम्याहुल्यक्षुपे। ভূমিথথ্মা। रा. नि. व. ४।

**कुष्ठगन्धा (न्धिनी)**। स्त्री। अश्वगन्धायाम्। भा. पू. १भ.।

**कुष्ठगन्धि**। क्ली। (Feronia Elephantum.) एलबालुके। अम.।

**कुष्ठघ्नः**। पुं। पटोललतायाम्। रा. नि. व. ३। हिताबल्लयाम्। खदिरवृक्षे। वै. निघ.।

**कुष्ठघ्नी**। स्त्री। काकोदुम्बरिकायाम्। रा. नि. व. ११। काकमाच्याम्। वाकुच्याम्। সোমরাজ। हिताबल्याम्। वै. निघ.।

**कुष्ठतोदनः**। पुं। रक्तखदिरवृक्षे। रा. नि. व. ८।

**कुष्ठदलनरसः**। पुं। कुष्ठाधिकारे रसः। पाठः—"गन्धं रसं वाकुचिकोत्थवीजं पलाशवीजञ्च क्रमानुशुण्ठ्यौ। श्लक्ष्णानि मध्वाज्ययुतानि कृत्वा सेवेत कुष्ठी च हिताशनन्तु॥" গন্ধক, রস, সোমরাজী, পলাশবীজ, চিত্রক, শুণ্ঠী, প্রত্যেকের চূর্ণ সমভাগ। रस. र.।

**कुष्ठदोषापहा**। स्त्री। वाकुच्याम्। रा. नि. व. ४।

**कुष्ठनाशनः**। पुं। कुष्ठहरवृक्षेषु। गौरसर्षपे। रा. नि. व. १६। चोरीशवृक्षे, चोरकञ्चुकीति लोके। रवा। वाराहीनाममहाकन्दे। रा. नि. व. ७। रक्तखदिरवृक्षे। आरग्वधवृक्षे। वै. निघ.।

**कुष्ठनाशिनी**। स्त्री। वाकुच्यां। সোমরাজ। प. मु.। काकमाच्याम्। रा. नि. व. ४।



**कुष्ठनोदनः**। पुं। रक्तखदिरवृक्षे। वै. निघ.।

**कुष्ठमयः**। त्रि.। कुष्ठरोगिणि।

**कुष्ठरोगः**। पुं। Leprosy. (Elephantiasis.) महाव्याधिनामरोगविशेषे। মহাব্যাধি কুষ্ঠব্যাধি। लक्षणादिकं यथा—मिथ्याहारविहाराचारस्य विशेषाद्गुरुविरुद्धासात्म्याजीर्णाहिताशिनः स्नेहपीतस्य वान्तस्य वा व्यायामग्राम्यधर्म्म-सेविनो ग्राम्यानूपौदकमांसानि वा पयसाभीक्ष्णम-श्नतो यो वा मज्जत्यप्सूष्माभितप्तः सहसा छर्द्दिं वा प्रतिहन्ति तस्य पित्तश्लेष्माणौ प्रकुपितौ परिगृह्यानिलः प्रवृद्धस्तिर्य्यग्गाः शिराः सम्प्रतिपद्य समुद्धूय वाह्यं मार्गं प्रति समन्ताद्विक्षिपति, यत्र यत्र च दोषो विक्षिप्तो निःसरति, तत्र तत्र मण्डलानि प्रादु-र्भवन्ति, एवमुत्पन्नस्त्वचि दोषस्तत्र च परिवृद्धिं प्राप्याप्रतिक्रियमाणोऽभ्यन्तरं प्रतिपद्यते धातून्दूषयन्। तस्य पूर्व्वरूपाणि त्वक्पारुष्यादीनि। स महाक्षुद्र-भेदेन द्विविधः, तत्र सप्त महाकुष्ठान्येकादश क्षुद्राणीति अष्टादश। अरुणोदुम्बरर्ष्यजिह्वकपाल-काकणकपुण्डरीकदद्रुकुष्ठानीति महाकुष्ठानि। स्थूलारुष्कमहाकुष्ठैककुष्ठचर्म्मदलविसर्पसिध्मपामा-विचर्च्चिकाकिटिमपरिसर्परसकाश्चेति क्षुद्राणि। सु. नि. ५ अ.। "पुराणधान्यानि च जाङ्गलानि मांसानि मुद्गाश्च पटोलयुक्ताः। यवादयश्चात्र हिताः पुराणाः घृतानि शाकानि च तिक्तकानि॥" इति पथ्यम्। "अलोमिका ग्रन्थिमती तथा वा व्रणसंयुता। त्वक्कुष्ठमहारोगः करोत्यश्वस्य दारुणाम्॥ गवां मूत्रपुरीषाभ्यां स्वदस्तु व्रणिनो हितः। कुष्ठरोगेषु सर्व्वेषु समीपे वेधयेच्छिराम्॥" इति अश्वस्य कुष्ठम्। ज. द. ४८ अ.।

**कुष्ठवैरी** (इन्)। पुं। वृक्षविशेषे, चाल्मुगरा इति भाषा। गुणाः—"कुष्ठवैरी शैलरोही महा-गदमहीरुहः। वैवस्वतद्रुमः स स्यात्कलञ्च रसायनः। पामाविचर्च्चिकाकण्डूसिध्मदद्रुविपादिकाः। हन्त्यामवातं वातामं कुष्ठानि च विशेषतः॥" अत्रि.।

**कुष्ठशैलेन्द्रवज्ररसः**। पुं। कुष्ठाधिकारे रसः। पाठः—"तालकं मरिचङ्कुष्ठं काचटङ्गनिशावचाः। निर्गुण्डी निम्बकरञ्जवीजं वा दलमेव वा। प्रत्येकं तोलकं चूर्णं चूर्णतुल्यन्तु गुग्गुलुः। वाकुच्याः पलिकं ग्राह्यं पलं सूतञ्च गन्धकं। लौहस्य द्विपल मात्र त्रिफलाजलशोधितं। षण्माषा वटिका कार्य्या गोमूत्रेण निषेविता। कुष्ठशैलेन्द्रवज्राख्यो लोहो-ऽयममृतोपमः॥" रस. र.। হরিতাল মরিচ কুষ্ঠ (কুড়) কাচলবণ টঙ্কণ (সোহাগা) হরিদ্রা বচা নির্গুণ্ডী। নিম্ব-কারবেল্লয়োঃ বীজ পত্র বা, এষাং প্র. ১ তো. সর্ব্বচূর্ণসম গুগ্গুলচূর্ণ সোমরাজীচূর্ণ ৮ তো. পারদগন্ধকয়োঃ চূর্ণ মিলিত ১৬ তো. ত্রিফলাশুদ্ধলৌহ ১৬ তো. একত্র গোমূত্রেণ বটী ৬ মা. কার্য্যা।

**कुष्ठसूदनः**। पुं। आरग्वधे। বড় সোণালু। रा. नि. व. ९।

**कुष्ठहन्ता**। पुं। हस्तिकन्दनाममहाकन्दशाके। रा. नि. व. ७।

**कुष्ठहन्त्री**। स्त्री। वाकुच्याम्। সোমরাজ। হাকুচ্। रा. नि. व. ४।

**कुष्ठहरतालेश्वरः**। पुं। कुष्ठाधिकारे। रसो-ऽयं ताम्रकोटरे कृत्वा पुटपाकविधिना प्रहरषट्कं पचनीयम्। शुद्धहरितालं १२ भ. गन्धकं ६ भ. पारद ७ भ. कृष्णाभ्रभस्म ७ भ. एकत्र अङ्कोटक्वाथेन सेहुण्डक्षीरेण अर्कक्षीरेण करवीरक्वाथेन उदुम्बरक्वाथेन च मर्द्दनीयः। अथ ताम्रपात्रे कृत्वा ६ प्रहरं पाच्यः। र. सा. सं.।

**कुष्ठहा**। पुं। पटोलवृक्षे। भा.पू.१भ.शाकव.।

**कुष्ठहृत्**। पुं। खदिरवृक्षे। খয়ের গাছ। त्रिका.।

**कुष्ठाद्यतैलम्**। क्ली। ज्वरस्तम्भे। कटुतैलं ४ श. कल्कीभूतकुष्ठादीनां प्रत्येक ८ तो. वारि १६ श. तैलपाकविधिना पाच्यम्। श्रीवेष्टः धूपः। अजगन्धा कोफान्दी। अन्यत् कर्णरोगे—"कुष्ठ-हिङ्गुवचादारुशताह्वाविश्वभेषजैः। पूतिकर्णापहं तैलं वस्तमूत्रेण साधितम्॥" शताह्वा शतमूली। तिलतैलं १ श. कुष्ठं (কুড়) हिङ्गु वचा देवदारु शतमूली शुण्ठी मिलितं १६ तो. छागमूत्रं ४ श.। च. द.।

**कुष्ठाद्युद्वर्त्तनम्**। क्ली। कुष्ठरोगे उद्वर्त्तने। "कुष्ठं हरिद्रे सुरसं पटोलं निम्बाश्वगन्धे सुरदारु-शिग्रू। ससर्षपं तुम्बुरुधान्यवन्यं चण्डाञ्च चूर्णानि समानि कुर्य्यात्। तैस्तक्रपिष्टैः प्रथमं शरीरं तैला-क्तमुद्वर्त्तयितुं यतेत।" सुरसं तुलसी, वन्यं कैवर्त्त-मुस्तकं, चण्डा चोरपुष्पी (চোরথড়্কে) च. द.।

**कुष्ठान्तकरसः**। पुं। कुष्ठाधिकारे रसः।

**क्रूरालापी** । स्त्री । द्रोणकाके । वै, निघ. ।

**क्रूर्चः** । पुं, क्ली । श्मश्रुणि । দাড়ি ।

**क्रोञ्चः** । पुं । क्रौञ्चपक्षिणि । वै, निघ. ।

**क्रोड़म्** । क्ली । उत्सङ्गे । কোল । रा.नि.व.१८ ।

**क्रोड़ः (कन्या)** । पुं, स्त्री । वाराहीनाम महाकन्दशाके । रा. नि. व. ७ । वनवराहे । रत्ना. ।

**क्रोड़कन्दः** । पुं । वाराहीकन्दे । वै, निघ. ।

**क्रोड़कशे(से)रुः (कः)** । पुं । भद्रमुस्तायाम् । व. निघ. ।

**क्रोड़चूड़ा** । स्त्री । मण्डूकपर्ण्याम् । বড় থুলকুড়ি । रा. नि. व. ५ ।

**क्रोड़पर्णी** । स्त्री । कण्टकारिकायाम् । श. च. ।

**क्रोड़पादः** । पुं । कच्छपे । हे, च. ।

**क्रोड़पुच्छी** । स्त्री । पृश्निपर्ण्याम् । वै, निघ. ।

**क्रोड़ा (ड़ी)** । स्त्री । वाराहीकन्दे । रा. नि. व. ७ ।

**क्रोड़ाङ्गः** । पुं । कच्छपे । शब्दर. ।

**क्रोड़ाङ्घ्रिः** । पुं । कच्छपे । त्रिका. ।

**क्रोड़ी** । स्त्री । वाराहीकन्दे ।

**क्रोड़ीकन्या** । स्त्री । वाराहीकन्दे । वै, निघ. ।

**क्रोड़ीमुखः** । पुं । गण्डके । গণ্ডার । रा. नि. व. १९ ।

**क्रोड़ेष्टा** । स्त्री । मुस्तायाम् । रा. नि. व. ६ ।

**क्रोथः** । पुं । हनने । हे, च. ।

**क्रोधः** । पुं । कोपे । स च वातपित्तशोणितकोपनः । "क्रोधशोकौ स्मृतौ वातपित्तरक्तप्रकोपनौ ।" विदेहः ।

**क्रोधजः** । पुं । मोहे । गीता. ।

**क्रोधज्वर** । पुं । क्रोधजन्यज्वरे ।

**क्रोधनः** । त्रि । क्रोधयुक्ते । हे, च. ।

**क्रोधना** । स्त्री । ग्रन्थिपर्णीलतायाम् । वै. निघ. ।

**क्रोधमूर्च्छितः** । पुं । चोरानामकगन्धद्रव्ये । श. र. । त्रि । अतिक्रुद्धे ।

**क्रोधी** । पुं । महिषे । रा. नि. व. १९ । त्रि । क्रुद्धे ।

**क्रोशः** । पुं । ४००० हस्तपरिमाणे । ১ ক্রোশ ।

**क्रोशताल: (ध्वनिः)** । पुं । ढक्कायाम् । हा. ।

**क्रोष्टपुच्छिका** । स्त्री । पृश्निपर्ण्यां । वै, निघ. ।

**क्रोष्टा (ष्टुकः)** । पुं । शृगाले । शृगालकोल्याम् । শেয়াকুল । प. मु. ।

**क्रोष्टुकपुच्छका (च्छिका, च्छी) (मूलिका) (मेखला)** । स्त्री । पृश्निपर्ण्याम् । চাকুলিয়া, রামবাসক । रा. नि. व ४ । गोलोमिकायाम् । हिं पाथरी गोधूमी । रा. नि. व. ५ ।

**क्रोष्टु(क)शीर्षः** । पुं । तन्नामकवातव्याधिविशेषे । लक्षणम्—"वातशोणितजः शोथो जानुमध्ये महारुजः । ज्ञेयः क्रोष्टुकशीर्षस्तु स्थूलः क्रोष्टुकशीर्षवत् ॥" मा.नि.वा.व्या. चि. । "गुग्गुलुं क्रोष्टुशीर्षे तु गुड़ूचीं त्रिफलाम्भसा । क्षीरेणैरण्डतैलं वा पिबेद्वा वृद्धदारुकम् ॥" वै. निघ. ।

**क्रोष्टुघण्टिका** । स्त्री । अस्थिसंहारके । मद. व. १ ।

**क्रोष्टुफलः** । पुं । इङ्गुदीवृक्षे । रा. नि. व. ८ ।

**क्रोष्टुविन्ना** । स्त्री । पृश्निपर्ण्याम् । र. मा. । वृक्षविशेषे । রামবাসক । বিড়ালছাজি, বিড়ালছাঁচীতি यस्याः प्रसिद्धिः । अ. टी. भ. ।

**क्रोष्टुहितः** । पुं । चोरानामगन्धद्रव्ये । গেঁঠেলা ।

**क्रोष्टूः** । स्त्री । वृश्चिकाल्याम् । বিছাতী । प.मु. ।

**क्रोष्टेक्षुः** । पुं । पुण्ड्रेक्षौ, श्वेतेक्षौ । रा. नि. व. १४ ।

**क्रोष्ट्री** । स्त्री । शुक्लभूमिकुष्माण्डे । अम. । लाङ्गलिकायाम् । शृगाल्याम् । पिप्पल्याम् । मे. । वाराहीकन्दे । रा. नि. व. ७ । वृश्चिकाल्याम् । रत्ना. ।

**क्रौञ्चः (कः)** । पुं । A kind of heron. (Ardea jaculator.) वकजातीयवकपक्षिणि । কোঁচবক । अम. । तत्पर्य्यायः,—क्रुङ्, क्रुञ्चः, क्रुञ्चा, क्रौञ्चा (अ.), कालिकः, कलीवकः, कलिकः (शब्दरः) । गुणा—ज्वरे हितः । च. द. । "क्रौञ्ची वृष्योऽतिरुचिकृदश्मरीं हन्ति नित्यशः । शोषमूर्च्छाहरी बल्यी हन्ति कासमरोचकम् ॥" अत्रि, २१ अ. पद्मवीजे । वै. निघ. । कुररपक्षिणि । रा. नि. व. ९ ।

**क्रौञ्चनायकः** । पुं । पद्मवीजे । वै. निघ. ।



**क्रौञ्चलोहितम्** । क्ली । हिङ्गुले । वै. निघ. ।

**क्रौञ्चा** । स्त्री । पद्मवीजे । रा. नि. व. १० । क्रौञ्चस्त्रियाम् । जटा. । गुणः—अश्मरीशुक्रदोषघ्नी । अत्रि. २१ अ. ।

**क्रौञ्चादनः** । पुं, क्ली । मृणाले । हारा. । पिप्पल्याम् । श. र. । घेञ्चुलुके । ঘেঁচু । च. चि. ३ अ. । चिञ्चोटके । চেঁচ্কো । मे. ।

**क्रौञ्चादनी** । स्त्री । पद्मवीजे । পদ্মের বীজ । रा. नि. व. २० ।

**क्लमः** । पुं । क्लान्तौ । लक्षणं—"यो नायासश्रमो देहे प्रवृद्धः श्वासवर्ज्जितः । क्लमः स इति विज्ञेय इन्द्रियार्थप्रबाधकः ॥" वैद्यकम् ।

**क्लमथः** । पुं । आयासे । अम. ।

**क्लान्तः** । त्रि । श्रान्ते ।

**क्लान्तिः** । स्त्री । क्लमे ।

**क्लिन्नः** । त्रि । आर्द्रे । ভিজে । अम. ।

**क्लिन्नवर्त्मा** । पुं । क्लिष्टवर्त्मरोगे ।

**क्लिन्ना** । स्त्री । श्वेतकण्टकार्य्याम् । रा.नि.व. ४ ।

**क्लिन्नाक्षः** । त्रि । । Blear-eyed. श्लेष्मादिना क्लिन्नचक्षुषि । পিচুটিচকো । क्ली (त्रि) । क्लिन्ननेत्रे । अम. ।

**क्लिशितः (क्लिष्टः)** । त्रि । क्लेशयुक्ते । अम. ।

**क्लिष्टवर्त्म** । पुं, क्ली । Excess of the lachrymal discharge. तन्नामकश्लेष्मरक्तजनेत्रवर्त्मजरोगे । लक्षणं—वर्त्मद्वयम् अकस्मात् मृदु अल्पवेदनं ताम्रं यद्वर्त्म सममेव च । अकस्माच्च भवेद्रक्तं क्लिष्टवर्त्मेति तद्विदुः ॥" मा. नि. । "श्लेष्मरक्तेन दुष्टेन क्लिष्टं मांसमिवोन्नतं । बन्धुजीवनिभं वर्त्म क्लिष्टवर्त्म तदुच्यते ॥" विदेहः ।

**क्लिष्टिः** । स्त्री । क्लेशे । सेवायाम् । धरणि. ।

**क्लीतः** । पुं । अग्निप्रकृतिकीटे । तेन दष्टे पित्तजन्यरोगा जायन्ते । सु. कल्प. ८अ. ।

**क्लीतकम्** । क्ली यष्टिमधुनि । प. मु. । भा. म. ४भ. कर्णरोग. चि. । "शिवाक्लीतकं राजवर्त्तम् ।" भा. म. १भ. रक्तष्ठीवीज्व. चि. । "क्लीतकनिम्बयुतं परिपक्वम् ।" A kind of plant with poisonous root. (Glycyrrhiza Glabra.) नीलमूलयष्टिमधुनि । इदं स्थावरविषान्तर्गतमूलविषम् । सु. कल्प. २अ. ।

**क्लीत(ति)का(तनी)** । स्त्री । नीलीवृक्षे । रा. नि. व. ४ । पृश्निपर्ण्याम् । वै, निघ. ।

**क्लीतन(नीय)(क)म्** । क्ली । जलजयष्टिमधुभेदे । वल्ली यष्टिमधु । जलजस्थलजभेदेन सा द्विधा । गुणाः—मधुरं रुच्यं बल्यं वृष्यं व्रणघ्नं शीतलं गुरु चक्षुष्यं रक्तपित्तघ्नम् । रा. नि. व. ६ । भा. ।

**क्लीवः** । त्रि । Impotent. बलहीने । रत्ना. । पुं, क्ली । स्त्रीपुरुषेतरे । নপুংসক, হিজ্‌ড়ে । लक्षणं—"क्लीवः स्यात् सुरताशक्तः तद्भावः क्लैव्यमुच्यते ।" भा. । न मूत्रं फेनिलं यस्य विष्ठा चाप्सु निमज्जति । मेढ्रोश्चोन्मादशुक्राभ्यां हीनः स क्लीव उच्यते । उद्वाह. ।

**क्लेदः (कः)** । पुं । शरीरार्द्रतायाम् । कफे । त्रि । आर्द्रे ।

**क्लेदनः** । पुं । चतुरंशावशिष्टकषाये । "क्लेदनश्चतुरंशस्तु ।" रा. नि. व. २० । कफभेदे । तस्य स्थानमामाशयः तत्कर्म चान्नपाकः श्लेष्मस्थानानामुदककर्मणाऽनुग्राहकश्च । भा. । त्रि । क्लेदजनने ।

**क्लेदा (दुः)** । पुं । चन्द्रे । सन्निपाते । उणा. ।

**क्लेशः** । पुं । दुःखे । क्रोधे । व्यवसाये । मे. ।

**क्लैततिकम्** । क्ली । मद्यविशेषे । श. च. ।

**क्लैव्यम्** । क्ली । Absence of virility. पुरुषकारहीनत्वे, स्त्रीपुंभिन्नत्वे, ओजःप्रभृतिधातुक्षयरूपाधैर्य्ये । यच्च षड्विधं मानसजं, धातुक्षयजं, शुक्रक्षयजं, उपघातजं, सहजं, स्थिरशुक्रजञ्चेति । तत्र रिरंसोरप्रियभावात् द्वेष्यस्त्रीसंयोगाच्च क्लैव्यं मानसम् । कट्वम्लोष्णलवणातिसेवनात् सौम्यधातुक्षयरूपं धातुक्षयजम् । वाजीकरणं विनातिस्त्रीसेवाजन्यं शुक्रक्षयजम् । वीर्य्यवाहिशिराच्छेदात् पुरुषकारव्याघातजन्यम् उपघातजम् । आजन्मक्लैव्यात् सहजम् । अतिबलिष्ठस्य अरविकाराच्चित्तविकारे ब्रह्मचर्य्येण वा शुक्रे रुद्धे स्थिरशुक्रजं क्लैव्यं भवति । तदुक्तम्—"तैस्तैर्भावैरहृद्यैस्तु रिरंसोर्मनसि क्षते । ध्वजः पतत्यतो नृणां क्लैव्यं समुपजायते । द्वेष्यस्त्रीसम्प्रयोगाच्च क्लैव्यं तन्मानसं स्मृतम् ॥ कट्वम्लोष्णलवणैरतिमात्रोपसेवितैः ।

सौम्यधातुक्षयो दृष्टः क्लैव्यं तदपरं स्मृतम् । अतिव्यवायशीलो यो न च वाजीक्रियारतः । ध्वजभङ्गमवाप्नोति स शुक्रक्षयहेतुकम् । महता मेढ्ररोगेण मर्म्मच्छेदेन वा पुनः । क्लैव्यमेतच्चतुर्थं स्यान्नृणां पुंस्त्वोपघातजम् ॥ जन्मप्रभृति यः क्लीवः क्लैव्यं तत्सहजं स्मृतम् । बलिनः क्षुब्धमनसो निरोधाद्ब्रह्मचर्य्यतः । षष्ठं क्लैव्यं मतं तत्तु स्थिरशुक्रनिमित्तजम् ॥” सु. चि. २६ अ. । तत्र उपघातजं सहजञ्चासाध्यं ज्ञेयम् । इतरेषां हेतुविपर्य्ययः वाजीकरणञ्च पथ्यम् ।

**क्लोमन्** । क्ली । Bladder. पिपासास्थाने, फुस्फुसे । तच्च हृदयाधो दक्षिणभागस्थम् । ফোঁফ্‌ড়া ফুলধরা, ফুস্‌ফুসি । सु. शा. ५ अ. । भरत. । “अधस्तु दक्षिणे भागे हृदयात् क्लोम तिष्ठति । जलवाहिशिरामूलं तृष्णाच्छादनकृन्मतम् ॥” भा. । बाह्वोर्द्वयोर्मध्ये वक्षः तन्मध्ये हृदयं तत्पार्श्वे क्लोम पिपासास्थानमिति वैद्याः । मस्तिष्के । रा. नि. व. १८ ।

**क्वङ्गुः** । पुं । कङ्गौ । हे. च. ।

**क्वणनः** । पुं । जलाधारविशेषे । ছোট হাঁড়ি । त्रिका. ।

**क्वणितेक्षणः** । पुं । गृध्रे । वै. निघ. ।

**क्वथनम्** । क्ली । क्वाथकरणे ।

**क्वथिका** । स्त्री । क्वाथे । वै. निघ. ।

**क्वथितः** । त्रि । पक्वे, स्रुते (पाचनादौ) । प. प्र. । क्ली । माधवीमद्ये । क्वाथे, कषाये ।

**क्वथितजलम्** । क्ली । उष्णोदकमिति पारिभाषिकं नाम । तत्त्रिविधं—पादावशेषं अर्द्धावशेषं त्रिपादावशेषञ्चेति । गुणाः—पादावशेषं कफघ्नं लघ्वाग्नेयं, अर्द्धावशेषं पित्तघ्नं, त्रिभागावशेषञ्च वातघ्नमिति । एवमेव पादावशेषं वसन्ते, अर्द्धावशेषं शरदि ग्रीष्मे च, त्रिपादावशेषं हेमन्ते शिशिरे च प्रशस्तं । अष्टभागशिष्टं वर्षायां प्रशस्तं । “क्वाथ्यमानन्तु निर्व्वेगं निष्फेनं निर्म्मलञ्च यत् । तत्तोयं क्वथितं ज्ञेयं दोषघ्नम्पाचनं लघु ॥” वैद्यकम् ।

**क्वथितद्रव्यम्** । क्ली । अरिष्टे । वै. निघ. ।

**क्वाथः** । पुं । दुःखे । व्यसने । हे. च. । Decoction. कषाये । तत्पर्य्यायः,—निष्क्वः (अ.), कषायः, निर्य्यूहः, क्वाथः, शृतः (वै.) । स सप्तधा —पाचन-शोधन-क्लेदन-संशमन-दीपन-तर्पण-शोषणभेदेन । तेषु अर्द्धावशेषः पाचनः, द्वादशांशकः शोधनः, चतुरंशकः क्लेदनः, अष्टांशकः संशमनः, षडंशको दीपनः, पञ्चमांशकस्तर्पणः, शोषणश्च षोड़शांशकः इति । रा. नि. व. २० । क्षुद्रद्रव्यस्य पलं, वारि (द्रव्यापेक्षया) षोड़शगुणं मृत्पात्रे मृद्वग्निना अष्टभागावशेषितः क्वाथः । पानीयं षोड़शगुणं क्षुण्णे द्रव्यपले क्षिपेत् । मृत्पात्रे क्वाथयेद्ग्राह्यमष्टमांशावशेषितम् । तज्जलम्पाययेद्धीमान् कोष्णं मृद्वग्निसाधितम् । शृतः क्वाथः कषायश्च निर्यूहः स निगद्यते ॥ क्वाथे क्षिपेत्सितामंशैः चतुरष्टकषोड़शैः । वातपित्तकफातङ्के विपरीतं मधु स्मृतम् ॥” क्वाथे जीरकगुग्गुलुक्षारलवणशिलाजतुहिङ्गुत्रिकटुकानां प्रक्षेपे उक्ते शाणमितं (४ माषा) ग्राह्यम् । शार्ङ्ग. म. २ अ. । तथाचोक्तं —“पाचनो दीपनीयश्च शोधनः शमनस्तथा । तर्पणः क्लेदनः शोषः क्वाथः सप्तविधोत्तमः ॥ पाचनः पचते दोषान्दीपनैर्दीप्यतेऽनलः । शोधनो मलशोधो स्यात् शमनः शमते गदान् ॥ तर्पणस्तर्प्यते धातून् क्लेदी हृत्क्लेदकारकः । विशोषी शोषमादत्ते तस्मात् क्वाथान् परीक्षयेत् ॥ विशोषिक्लेदिनौ ज्ञात्वा वमनं कारयेद्बुधः । पाचनोऽर्द्धावशेषः स्याच्छोधनोऽर्द्धरसांशकः । क्लेदनश्चतुरंशश्च शमनोऽष्टावशेषितः ॥ दीपनीयो दशांशस्तु तर्पणस्तु षडंशकः । विशोषी षोड़शांशश्च क्वाथभेदाः प्रकीर्त्तिताः ॥ पाचयेदातुरं सायं पाचनं सप्तमेऽहनि । शमनेनाथ वा दृष्ट्वा निरामं समुपाचरेत् ॥ निशासु पाचनो देयो ज्ञात्वा दोषबलाबलम् । तत्सन्नवज्वरे पीतः दोषकृन्न च दोषहृत् ॥ क्वाथपाने क्लमो मूर्च्छा वैह्वल्यं वा शिरोव्यथा । यदा सञ्जायते चाशु वामयेद्रोगिणं तथा ॥ षोड़शाष्टचतुर्भागं वात-पित्त-कफार्त्तिषु । क्षौद्रं कषाये दातव्यं विपरीतात्र शर्करा ॥” आत्रेय. । “जरणोषणशुण्ठ्यादि शाणिकं हिङ्गु माषिकं । गुड़क्षीरसितादीनां कर्षं क्वाथे विनिक्षिपेत् । नस्येषु च प्रयोक्तव्यं माक्षिकं हिङ्गुसैन्धवम् ॥” काश्यप. । व्योषं शिलाजतु क्षारं लवणं हिङ्गु जीरकं । क्षिपेट्टङ्कमितं क्वाथं तैलक्षीरं घृतं गुड़म् ॥ पूर्व्वाह्णे शमनो देयोऽपराह्णे दीपनस्तथा । तर्पणश्चोत्क्लेदनश्च कल्ये पानाय दापयेत् ॥ निशीथे शोषणो देयः श्लैष्मिके प्रथमेऽहनि । दद्यात् सूर्य्योदयात् पूर्व्वं शोधनीयं भिषक्तमः ॥ वरमाशीविषं नैव क्वथितं ताम्रभाजने । पीतमत्यग्निसन्तप्ता भक्षिता वा पयोगुड़ाः ॥” सुश्रु. ।



वमनार्थं ताम्रपात्रं प्रसिद्धं । प्रक्वाथ्य शीतो निर्य्यूहः पुनस्तप्तो भवेद्यदि । पानीयं वा पुनस्तप्तं विषवद्धन्ति मानवम् ॥ घृतं तैलञ्च पानीयं कषायं व्यञ्जनादिकं । जलस्नेहौषधानाञ्च प्रमाणं यत्र नोदितम् । तत्र स्यादौषधात् स्नेहः स्नेहात्तोयं चतुर्गुणम् ॥ स्नेहाच्चतुर्गुणं द्रव्यमादाय स्नेहसन्विधौ । चतुर्गुणं जलं दत्त्वा क्वाथः क्वाथ्यसमो मतः ॥ स्नेहाच्चतुर्गुणं क्वाथ्यं क्वाथात्तोयं चतुर्गुणम् । क्वाथः क्वाथ्यसमः कार्य्यः कल्कश्च स्नेहपादिकः । इत्येषा स्नेहपाकार्थम्प्रोक्ता क्वाथस्य कल्पना ॥” चरक ।

**क्वाथोद्भवम्** । क्ली । कर्परीतुत्थके, क्षविमरसाञ्जने, कुलत्थाञ्जने । अम. ।

---

## ख ।

**खम्** । क्ली । अभ्रधातौ । অব্‌ভ্র । रा. नि. व. १३ । इन्द्रिये । मे. । पुं । सूर्य्ये । हे. ।

**खक्खटः** । पुं । खड़िकायाम् । খড়ীমাটী । अ. टी. रा. ।

**खखासः** । पुं । वृक्षभेदे । পুস্ত গাছ । प्रयोगा. उ. मा. चि. मदनरसे ।

**खखोल्कः** । पुं । सूर्य्ये । वै. निघ. ।

**खगः** । पुं । पक्षिणि । मे. । चक्रवाकपक्षिणि । पारदे । वै. निघ. । शलभे । अ. टी. भ. । सूर्य्ये । वाणे । स्वर्णमाक्षिके । वायौ (श.) ।

**खगखानम्** । क्ली । वृक्षकोटरे । श. ।

**खगमः** । पुं । पक्षिणि ।

**खगवक्त्रः** । पुं । लकुचवृक्षे । श. च. ।

**खगवती** । स्त्री । पृथिव्याम् । ज. ।

**खगशत्रुः** । पुं । पृश्निपर्ण्याम् । श. च. ।

**खगस्थानम्** । क्ली । वृक्षकोटरे । श. च. ।

**खगान्तकः** । पुं । धूम्याटपक्षिणि । ফিঙে । व. निघ. । श्येनपक्षिणि । বাজ পাখী, শিক্‌রে । रा. नि. व. १९ ।

**खगेन्द्रः** । पुं । गृध्रे । वै. निघ. ।

**खगो(ग्ग)ड़ः** । पुं । A kind of reed (Saccharum spontaneum.) स्वनामख्याततृणविशेषे । খাগড়া, কষাড়, কেশে । र. मा. ।

**खग्गटः** । पु । कोकिलाक्षवृक्षे । কুলেখাড়া গাছ । वै. निघ. ।

**खङ्गाहः** । पुं । खुङ्गाहापरनाम्नि श्वेतपीताश्वे । खुङ्गाहः श्वेतपीतकः ।” ज. द. ३ अ. ।

**खचमसः** । पुं । चन्द्रे । त्रिका. ।

**खचरः** । पुं । पक्षिणि । वायौ । सूर्य्ये । वै. निघ. । मेघे । श. । क्ली । काशीशे । हे. ।

**खजः (कः)** । पुं । दर्व्याम् । হাতা । अ. टी. भ. । मन्थनदण्डे । মউনি । हे. च. । सि. यो. यक्ष्म. चि. ।

**खजपम्** । क्ली । घृते । उणा. । पुं । मन्थानदण्डे । हे ।

**खजलम्** । क्ली । तुषारे । শিশির । त्रिका. । आकाशजले । तत्तु अगस्त्योदयात्प्राक् न सेव्यम् । यथा—“वर्षासु चरन्ति घनैः सह्योरगाः वियति कीटलूताश्च । तद्विषजुष्टमपेयं जलमगस्त्योदयात् पूर्व्वम् ॥” राज. ।

**खजा (का)** । स्त्री । दर्व्याम् । হাতা । अम. । मन्थे । মওয়া । हे. च. । मारणे । श. र. ।

**खजाकः** । पुं । पक्षिणि । उणा ।

**खज्योतिः** । पुं । खद्योते । रा. नि. व. १९ ।

**खञ्जः (कः)** । पुं । वायुरोगभेदे । तल्लक्षणं यथा—“वायुः कट्याश्रितः सक्थ्नः कण्डरामाक्षिपेद्यदा । खञ्जस्तदा भवेज्जन्तुः पङ्गुः सक्थ्नोर्द्वयोर्वधात् ॥” मा. नि. । त्रि । विकलगतौ । খোঁড়া । अम. । तत्पर्य्यायः,—खोड़ः (अ.), खोलः (शब्दर.), खोरः, खञ्जकः (हे.), खोटः ।

**खञ्जकारिः** । पुं । सुत्रायाम् । থেঁশারি । रा. नि. व. १६ ।

**खञ्जखेटः (लः)** । पुं । खञ्जनपक्षिणि । श. मा. । त्रिका. ।

**खञ्जनः (कः)** । पुं । A species of wagtail. (Montacilla alba.) स्वनामख्यात-

पक्षिणि। চাতক পাখী। श. मा.। तत्पर्य्यायः,—खञ्जरीटः (अ.), कणाटीनः, काकच्छदिः, खञ्जखेलः, तातनः, मुनिपुत्रकः, भद्रनामा, रत्ननिधिः (त्रि.), खञ्जखेटः, गूढ़नीड़ः, तण्डकः, चरः (शब्दमा.), काकच्छदः, नीलकण्ठः, कन्याटीरः, कन्याटीरकः (शब्दर.), भण्डुकः (ज.)। गुणाः—श्लेष्मपित्तघ्नौ लघुः रुक्षः विबन्धघ्नश्च। राज.।

**खञ्जना (निका)।** स्त्री। क्षुद्रखञ्जनजातौ छापुच्छिकायाम्। কাদাখোঁচা। मे.।

**खञ्जनाकृतिः।** पुं। खञ्जनायाम्। श. च.।

**खञ्जनिका।** स्त्री। पङ्कप्रिय-दीर्घतुण्ड-खञ्जनाकार-पक्षिविशेषे। কাদাখোঁচা। तत्पर्य्यायः,—छापुलिका, तुलिका, स्फोटिका, सर्षपी (त्रि), खञ्जनाकृतिः (श.), राजभट्टिका, गोभण्डीरः, पङ्कीरः (त्रि.)।

**खञ्जरीटः।** पुं। खञ्जनपक्षिणि। अम.।

**खटः।** पुं। कफे। कतृणे। तृणे। हे. च.। अन्धकूपे। श्लेष्मणि। टङ्के। मे.।

**खट(टि)कः।** पुं। कुब्जितपाणौ। শূলো। श. मा.।

**खटखादकः।** पुं। काके। काचपात्रे। शृगाले। वै. निघ.। त्रि। भक्षके।

**खटालः।** पुं। तण्डुलीयवृक्षे। কাঁটানটে। वै. निघ.।

**खटिका (टिनी)।** स्त्री। कठिन्याम्। খড়ি। कर्णरन्ध्रे। गन्धवीरणे। विश्व.। रा. नि. व. १३। खड़ीतृणे। वै. निघ.।

**खटी।** स्त्री। Chalk. कठिन्याम्। খড়ি, চাখড়ি। हिं खरी, गौरखरी। तत्पर्य्यायः,—खटिनी, खटिका, धवलमृत्तिका, श्वेतधातुः, पाण्डुमृत्तिका, सितधातुः, पाण्डुमृत् (रा.), कक्खटी, वर्णलेखा, वर्णरेखा (त्रि), पाकशुक्ला, अनिलाधातुः, खड़ी, कठिनी, वर्णलेखिका (र), शुक्लधातुः (हे.), धातूपलः, कठिनिका, वर्णिका। (हा.)। गुणाः—मधुरा तिक्ता शीतला पित्तदाहव्रणदोषघ्नी कफरक्तनेत्ररोगहरी च। रा. नि. व. १३। "खटिका दाहजिच्छीता मधुरा विषशोथजित्। लेपादेतद्गुणा प्रोक्ता भक्षिता मृत्तिका समा। खटी गौरखटी द्वे च गुणैस्तुल्ये प्रकीर्त्तिते॥" भा. पू. १भ.।

**खट्टनः।** त्रि। खर्व्वे। हे. च.।

**खट्टा।** स्त्री। खट्वायाम्। খাট। श. श.।

**खट्टाङ्गनामिका।** स्त्री। वटपत्राम्। रा.।

**खट्टाशः (शी) (सः)।** पुं, स्त्री। The civet or zebet cat. (Viverra zibetha.) सुगन्धमार्ज्जारे। यस्याण्डेन तैलं सुवासितं क्रियते। গন্ধগোকুল, খটাশ। त्रिका.। जटा.। तत्पर्य्यायः,—गन्धोतुः, वनवासनः (त्रि.), खट्टाशी, वनाखुः (शब्दर.), खट्टासः, गन्धमार्ज्जारः, वनश्वा, शालिः (ज.), पुष्पलकः (र), मृगचेटकः (शब्दमा.)। तस्याण्डं खाटाशी इति उच्यते। तदण्डशुद्धिर्यथा—"यथालाभमपामार्गस्नुह्यादिक्षारलेपितं। वाष्पस्वेदेन संस्वेद्य पूतिं निर्लोमतां नयेत्। दोलापाकं पचेत्पश्चात्पञ्चपल्लववारिणि। खलः साधुमिवोत्पीड्य ततो निःस्नेहतां नयेत्। आजशोभाञ्जनजलैः भावयेच्च पुनः पुनः। शिग्रुमूलेन केतक्याः पुष्पपत्रैः पुटेच्च तम्। पचेदेवं विशुद्धस्य मृगनाभिसमो भवेत्॥ स च हृत्तो मांसलश्च प्रशस्तः।" खट्टाशम् अपामार्गस्य स्नुह्या वा क्षारेण संलिप्य वाष्पस्वेदेन लोमरहितं कृत्वा आम्रजम्बूकपित्थमातुलुङ्गविल्वपल्लवजले दोलापाकेन पक्त्वा निःस्नेहं विधाय च छागमूत्रेण शोभाञ्जनक्वाथेन वा पुनः पुनः भावयेत्। अथ शिग्रुमूलेन केतकीपुष्पपत्रैः सपुटीकृतः शुद्धो मृगनाभिसमो भवति। च. द.। भैष. वा. व्या. चि.।

**खट्टिकः।** पुं। शाकुनिके। পাখীমারা। श. मा.। महिषीक्षीरफेने।

**खट्टिका।** स्त्री। क्षुद्रखट्टायाम्। त्रिका.।

**खट्टेरकः।** त्रि। खर्व्वे। श. मा.।

**खट्वा।** स्त्री। पर्य्यङ्के। तत्र शयनं वातकरमिति। राज.। हनुशङ्खगण्डेषु व्रणबन्धनाकृतिविशेषे। सु. सू. १८अ.। तृणविशेषे। वै. निघ.। कोलशिम्ब्याम्। আলকুশী। रा. नि. व. ३।

**खट्वाङ्गनाम(मि)का।** स्त्री। वटपत्रपाषाणभेदे। বড় পাথরকুচা। रा. नि. व. ५।

**खट्वाङ्गपादी।** स्त्री। कोलशिम्ब्याम्। আলকুশী। वै. निघ.।



**खट्वाबन्धः।** पुं, क्ली। व्रणबन्धनाकृतिविशेषे। तल्लक्षणं—"खट्वा तु बहुपादा स्याच्चीराभिर्बहुभिर्वृता।" सु. ड.।

**खड़ः (कः)।** पुं। लघुतृणे। श. र.। खड़यूषे।

**खड़यूषः।** पुं, क्ली। यूषविशेषे। यथा—तक्रं कपित्थचाङ्गेरीमरिचाजाजिचित्रकैः। सुपक्वं खड़यूषोऽयं...। च. द. अ. सा. चि.। तक्रं ८ तो. जलं २४ तो. कपित्थादीनां तोलकद्वय पादावशिष्टं कार्य्यम्। अन्यत्—"मुद्गयूषरसं तक्रं धान्यजीरकसंयुतं। सैन्धवं सहितं दद्यात् खड़यूषमिति स्मृतम्॥" भा.।

**खड़िका (ड़ी)।** स्त्री। खटिकायाम्। ফুলখড়ি। जटा.। शुक्लमृत्तिकायाम्। খড়িমাটি। श. च.।

**खड़ु:।** पुं। मृतशय्यायाम्। उणा.।

**खड्गः (कः)।** पुं। गण्डके। গণ্ডার। त्रिका.। गण्डकशृङ्गे। থাগ্। मे.। चोरकनामगन्धद्रव्ये। গেঁঠেলা। रा. नि. व. १२। अस्त्रे। खग्गड़तृणे। থাগড়া। र. मा.। क्ली। लौहे। तीक्ष्णलौहे। रा. नि. व. १३।

**खड्गकोषः (पत्रः)।** पुं। (Scirpus maximus.) खड्गलतायाम्। श. च.। तत्पर्य्यायः,—खड्गपत्रः, खड्गिमारः, अश्वपुच्छकः (श.), खड्गाधारः। के.।

**खड्गटः।** पुं। (Saccharum spontaneum.) वृहत्काशतृणे। हारा.।

**खड्गधेनुः।** स्त्री। गण्डकस्त्रियाम्। মাদি গণ্ডার। छुरिकायाम्। मे.।

**खड्गपुत्रिका।** स्त्री। छुरिकायाम्।

**खड्गमांस(ड्गामिष)म्।** क्ली। गण्डमांसे। গণ্ডারমাংস। See खड्गी।

**खड्गमृगः।** पुं। गण्डके। গণ্ডার। रा.।

**खड्गरीटः।** पुं। फलके। ঢাল। मे.।

**खड्गलता।** स्त्री। खड्गकोषे। के.।

**खड्गशिम्बी।** स्त्री। असिशिम्ब्याम्। रा. नि. व. ७।

**खड्गाकः।** पुं। दात्रे। দা, কাটারী।

**खड्गामिषम्।** क्ली। महिषमांसे।

**खड्गिकः।** पुं। महिषीक्षीरफेने। মহিষদুগ্ধের ননী। मे.।

**खड्गिमारः।** पुं। खड्गकोषलतायाम्। श. च.।

**खड्गी (इन्)।** पुं। गण्डके। গণ্ডার। तत्पर्य्यायः, गण्डकः, खड्गः (अ.), खड्गमृगः, क्रोड़ी, युग्मः, तुङ्गमुखः, वली, वज्रचर्म्मा, वार्द्धीनखः, स्वनोत्साहः (रा.), एकचरः, गणोत्साहः (त्रि.), गण्डः (शब्दर.)। अस्य मांसगुणाः—"कफघ्नं खड्गिपिशितं कषायमनिलापहं। पैत्रं पवित्रमायुष्यं बद्धमूत्रनिवारणम्॥" सु. सू. ४६ अ.। कफवातघ्नं कषायं पितृतर्पकं पवित्रमायुष्यं मूत्रबन्धकरं रुक्षञ्च। राज.। बलकृत् वृंहणं गुरु च। रा. नि. व. १७।

**खड्गीकम्।** क्ली। दात्रे। দা। शब्दर.।

**खड्डकः।** पुं। देवताड़वृक्षे। দেবতাড়া। प. मु.।

**खण्डः (कः)।** पुं, क्ली। इक्षुविकारविशेषे। খাঁড়, ভুরো, দোলো, খড়ীসাকর, মানখণ্ড। गुणाः—"खण्डस्तु मधुरो वृष्यश्चक्षुष्यो वृंहणो हिमः। वातपित्तहरः स्निग्धो बल्यो वान्तिहरः परः।" भा.। वृष्यं चक्षुष्यं वातपित्तहरञ्च। राज.। वातपित्तहरं शीतं स्निग्धं बल्यं मुखप्रियं। चक्षुष्यं श्लेष्मकृच्चोक्तं खण्डं वृष्यतमं मतम्॥ अत्रि. १० अ.। मणिदोषे। मे.। शर्करायाम्। वै. निघ.। विड़लवणे। বিট্ লবণ। रा. नि. व. ६। इक्षुजातिभेदे। अंशे। अम.।

**खण्डकर्णः [कन्दः]।** पुं। Sweet potatos. आलुविशेषे। শকরকন্দ আলু। तत्पर्य्यायः,—वज्रकन्दः। गुणाः—"कटुपाकी खण्डकर्णः कफपित्तविनाशनः।" राज. ३प.। शाकविशेषे। ঘেঁটকোলশাক। च. द.।

**खण्डका।** स्त्री। यवासशर्करायाम्। वै. निघ.।

**खण्डकाद्यलौहम्।** क्ली। रक्तपित्ते हितम्। क्वाथार्थं—शतावरी गुड़ूची वासा मुण्डीरी बला तालमूली खदिरकाष्ठं त्रिफला भार्गी पुष्करमूलं एषां प्र. ५ प. वारि ६४ श शे. ८श. मनःशिलया वा स्वर्णमाक्षिकेण वा जारितलौहचूर्णं १२ प. शर्करा १६ प. घृतं १६ प. गुड़पाके आयसेन वा ताम्रमयेण वा पात्रेण सिद्धे शिलाजतुत्वक्कर्कटशृङ्गीविड़ङ्गपिप्पलीशुण्ठीजातीफलानां चूर्णं प्र. ८ तो. प्रक्षेप्यः। मधु २ श. त्रिफलाधान्यपत्राणां प्र.

२ तो.। শতমূলী, গুলঞ্চ, বাসকছাল, মুণ্ডিরী, বেলেড়া, তালমূলী, খদিরকাষ্ঠ, ত্রিফলা, বামনহাটী, কুড় প্রত্যেক ৫প. পাকার্থ জল ৬৪ শ. শে. ৮ শ. মনঃশিলা বা স্বর্ণমাক্ষিক-যোগে জারিত লৌহ ১২ প. চিনি ১৬ প. ঘৃত ১৬ প. একত্র পাক করিয়া ঘন হইলে, শিলাজতু, গুড়ত্বক্, কাঁকড়াশৃঙ্গী, বিড়ঙ্গ, পিপুল, শুঁঠ, জায়ফল প্রত্যেক ১প. ত্রিফলা, ধনে', তেজপাত প্রত্যেক ২ তো. প্রক্ষেপ দিবে। মধু ২ সে.। रस. र.।

**खण्डकालु(क)म्।** क्ली। खण्डकर्णालुके। রাঙা আলু। श. च.।

**खण्डकुष्माण्डम्**
**खण्डकुष्माण्डावलेहः** } क्ली, पुं। रक्तपित्ते हितम्। खण्डशः कृतं निष्कुलीकृतपुराणकुष्माण्डशस्य' १०० प. पाकार्थं वारि २०० प. शे. १०० प. तस्मादुद्धृत-कुष्माण्डखण्डानि पेषयित्वा रौद्रे शोषयित्वा च घृतेन २ श. भर्ज्जयितव्यम्। मधुवर्णे तत्र तज्जलं तुलासितशर्करया सह (१०० प.) दत्त्वा लेहवत् पचेत्। शीते प्रक्षेपः—पिप्पलीशुण्ठीजरकाणां प्र. १६ तो. त्वगेलापत्रमरिचधान्यकानां प्र. ४ तो. मधु १ श.। अन्यत् रक्तपित्ताम्लपित्तयोः हितम्।—कुष्माण्डोदकं १०० प. गव्यदुग्ध १०० प. शर्करा ८ प. एकत्र पक्त्वा लेहभूते तत्र धात्रीचूर्णं ८ प. प्रक्षिप्य अवतारयेत्। अम्लपित्तोक्ते अन्यस्मिन् अवलेहे केवलं घृतस्य पलद्वयमधिकं दीयते। भा.।

**खण्डखर्ज्जूरम्।** क्ली। स्वनामख्याते पक्वान्न-विशेषे। वैद्यकम्।

**खण्डजः (जा)।** पुं, स्त्री। खण्डे। খাঁড়। गुड़े। (जा) यवासशर्करायाम्। रा. नि. व. १४।

**खण्डजोद्भवजः।** पुं। तवराजोद्भवखण्डे। रा. नि. व. १४।

**खण्डधारा।** स्त्री। कर्त्तर्य्याम्। কাঁচী। श. मा.।

**खण्डनम्।** क्ली। छेदने। भेदने।

**खण्डनोलः।** पुं। खण्डकर्णालुके। शकर-कन्द आलू। र. मा.।

**खण्डपरशुः (पर्शुः)।** पुं। खण्डामलकभैषज्ये।

**खण्डपालः।** पुं। मोदके। ময়রা। हारा.।

**खण्डपाशः।** पुं। धातकीपुष्पशर्कराजाते मद्ये। वै. निघ.।

**खण्डपिप्पली।** स्त्री। अम्लपित्ते पिप्पलीखण्डे। कणाचूर्णं ३२ तो. घृतं ४८ तो. शतावरीरसः ६४ तो. ८ श. (५१२ तो.) खण्ड १२८ तो.। पाकसिद्धौ—धान्यशुण्ठीजीरकद्वय-हरीतकीमुस्तक-वंशरोचना जटामांसी-वा - आमलकीत्वगेलापत्राणां चूर्णं प्र. १२ मा. नागकेसरखदिरमरिचानाञ्च प्र. चूर्णं ६ मा. प्रक्षेपः। मधु २४ तो.। পিপুলচূর্ণ ৵৷৹ সের বা ৩২ তো. ঘৃত ৪৮ তো. শতমূলীরস ৬৪ তো. দুগ্ধ ৮ শ. খাঁড় ২ শ. একত্র পাক করিয়া পাকসিদ্ধ হইলে, ধনিয়া, শুঁঠ, জীরে, কৃষ্ণজীরে, হরীতকী, মুতা, বংশলোচন বা জটামাংসী, আমলা, গুড়ত্বক্, এলাইচচূর্ণ, তেজপত্র প্রত্যেক ১২ মা. নাগেশ্বরচূর্ণ, খদিরচূর্ণ এবং মরিচচূর্ণ প্রত্যেক ৬মা. প্রক্ষেপ দিবে। মধু ২৪ তো.। रस. र.। मांसीस्थाने वंशीति पाठः। नागकेशरञ्च न घृतम्। भैष.।

**खण्डफणः।** पुं। दर्व्वीकरसर्पे। सु. कल्प. ४ अ.। See सर्पः।

**खण्डमोदकः।** पुं। यवासशर्करायाम्, तव-राजे। रा. नि. व. १४।

**खण्डरः।** पु। यवासशर्करायाम्।

**खण्डराजो।** स्त्री। वाकुच्याम्। वै. निघ.।

**खण्डलवणम्।** क्ली। विड़लवणे। रा. नि. व. ६।

**खण्डवल्ली।** स्त्री। काण्डवल्ल्याम्। करला। वै. निघ.।

**खण्डविकारः।** पुं। शर्करायाम्। वै. निघ.।

**खण्डविन्दुः।** पुं। सर्पजातिभेदे। अत्रि. ५६ अ. २ स्थान.।

**खण्डशर्करा (सिकता, सिता)।** स्त्री। शर्करायाम्। চিনি। वै निघ.।

**खण्डशाखा।** स्त्री। महिषवल्ल्याम्। লতা-বিশেষ। रा. नि. व. ३।

**खण्डशालुकम्।** क्ली। इक्षुविकारे। মিছরি।

**खण्डशुण्ठी (शुण्ठीखण्डं)।** स्त्री। अम्ल-



पित्ते हिता। शुण्ठीचूर्णं ३२ तो. शर्करा १२८ तो. घृतं ६४ तो. दुग्धं ८ श.। प्रक्षेपः—कणाधात्री-त्वगेलापत्रवंशरोचनजीरकृष्णजीरहरीतकीमुस्तधान्य-कानां प्र. १२ मा. मरिचचूर्णं ६ मा. नागकेसर-चूर्णं ६ मा. मधु २४ तो.। শুঁঠচূর্ণ ৩২ তো. চিনি ১২৮ তো. ঘৃত ৬৪ তো. দুগ্ধ ৮ শ.। প্রক্ষেপ—পিপুলচূর্ণ, আমলাচূর্ণ, গুড়ত্বক্, এলাইচ, তেজপত্র, বংশলোচন, জীরে, কৃষ্ণজীরে, হরীতকী, মুতা, ধনিয়াচূর্ণ প্রত্যেক ১২ মা, মরিচচূর্ণ ৬ মা. নাগেশ্বরচূর্ণ ৬ মা. মধু ৩ প. বা ২৪ তো.। रस. र.।

**खण्डस(सा)रः।** पुं। यवासशर्करायाम्। रा. नि. व. १४।

**खण्डसिता।** स्त्री। मधुजात शर्करायाम्।

**खण्डा।** स्त्री। खण्डे। खाँड़ इति लोके। वै. निघ. रक्तपि, चि, कुष्माण्डावलेहे।

**खण्डामलकम् (को)।** क्ली, स्त्री। आम-लकीखण्डे। আমলার মোরব্বা। वै. निघ.। परिणामशूले औषधविशेषे।—पिष्टनिष्पीड़ितपुराण-कुष्माण्डशस्यं ५० प. घृतं १६ प. एकत्र भर्ज्जयेत्। शर्करा ५० प. आमलकरसः ३२ प. (स्वरसाभावे आमलकी २ श. वारि १६ श. शे. ४ श.) कुष्माण्डरसः ३२ प. अवलेहवत्पचेत्। प्रक्षेपः—पिप्पलीजीरकशुण्ठीनां चूर्णं प्र. २ प. मरिच-चूर्णं १ प. तालीशधान्यकत्वगेलापत्रनागकेसर-मुस्तकचूर्णं प्र. २ तो.। পিষ্টনিষ্পীড়িত পুরাতন কুষ্মাণ্ডশস্য ৫০ প. ঘৃত ১৬ প. চিনি ৫০ প. আমলকীরস ৪ শ. (৩২ প.) (স্বরসাভাবে আমলকী ২ শ. (১৬ প.) জল ১৬ শ. শে. ৪ শ.)। কুষ্মাণ্ডরস ৪ শ.। আসন্নপাকে—পিপুল, কৃষ্ণজীরা, শুঁঠ প্রত্যেক ২ প. মরিচ ১ প. তালীশপত্র, ধনে', গুড়ত্বক্, এলাইচ তেজপত্র, নাগেশ্বর, মুতা প্রত্যেক ২ তো. শীতল হইলে মধু প্রক্ষেপ ২ শ.। सा. कौ.।

**खण्डाम्र(क)म्।** क्ली। वाजीकरणौषधभेदे। सुपक्वमधुराम्ररसः ६४ श. शर्करा ८ श. घृत ४ श शुण्ठीचूर्णं ३२ तो. पिप्पलीचूर्णं १६ तो. वारि ८ श. (५१२ तो.) एकत्र पचेत्। खण्डपाक-सिद्धे प्रक्षेपः—तेजपत्रचूर्णं ३२ तो. ग्रन्थिपर्ण-चित्रकमुस्तकधान्यकजीरकद्वयत्रिकटुजातीफलत्वगेला-नागकेसरचूर्णानां प्र. ८ तो. शीते मधु ४ श.। मा. ४ तो.। वै. निघ.।

**खण्डिकः।** पुं। कक्षे। কাঁথ। हे. च.। कलाय-विशेषे। থেঁসারি। भा. पू. १भ.। गुणाः—"लघवः शीतमधुराः सकषाया विरूक्षणाः। पित्त-श्लेष्मणि शस्यन्ते सूपेष्वालेपनादिषु॥" च. सू. २७ अ.।

**खण्डालो।** स्त्री। तैलमानपात्रे। वै. निघ.।

**खण्डिका।** स्त्री। खण्डशर्करायाम्। वै. निघ.।

**खण्डितकर्णः।** पुं। खण्डकर्णाली। शकर-कन्द। खार्कोण् इति ख्याते शाके। रसेन्द्रगुड़ौ।

**खण्डी (इन्)।** पुं। वनमुद्गे। মুগানী। हे. च.।

**खण्डोरः।** पुं। पीतमुद्गे। সোণামুগ। हे.च.।

**खण्डोपला।** स्त्री। खड़ीशर्करायाम्।

**खण्डोष्ठः।** पुं। ओष्ठरोगभेदे। यथा—"तत्र खण्डौष्ठ इत्युक्तो वातेनौष्ठो द्विधा कृतः।" वा. उ. २१ अ.।

**खतमालः।** पुं। धूमे। मे.। मेघे। मे.। अग्नौ। शब्द.।

**खदनम्।** क्ली। भोजने। रा नि. व. २०।

**खदिका।** स्त्री। खधी। খৈ। त्रिका.।

**खदिरः।** पुं। (Acacia cateehu. Syn. Mimosa catechu.) स्वनामख्याततरौ। খয়ের গাছ। उत्. खैर। ते' चंड़चेट्टु। तत्पर्य्यायः,—गायत्री, बालतनयः, दन्तधावनः (अ.), पथिद्रुमः (मे.), तिक्तसारः, कण्टकीद्रुमः (र.), प्रसखः (श.), यूपद्रुः (त्रि.), बालपुत्रः, रक्तसारः, कर्कटी, जिह्मशल्यः (ज.), कुष्ठहृत्, बालपत्रकः, यूपद्रुमः (शब्दर.), बालपत्रः, खद्यपत्री, क्षिति-क्षमः, सुशल्य', वक्रकण्टकः, यज्ञाङ्गः, जिह्वाशल्यः, कण्टी, सारद्रुमः, कुष्ठारिः, दृढसारः, मेध्यः। स त्रिधा श्वेतरक्तविड्भेदात्। विशेषः तत्तत्पर्य्याये द्रष्टव्यः। सा. गुणाः—तिक्तः शीतः पित्तकफघ्नः पाचनः कुष्ठकासास्रशोफकण्डूव्रणघ्नश्च। रा. नि. व. ८। "खदिरः शीतलो दन्त्यः कण्डूकासारुचि-प्रणुत्। तिक्तः कषायो मेदोघ्नः कृमिमेहज्वरव्रणान्। श्वित्रशोथामपित्तास्रपाण्डुकुष्ठकफान्हरेत्॥" भा,। विसर्पवेदनामेहमेदोघ्नः। राज. ३प.। चन्द्रे। मे.। शाकभेदे। लज्जालुका, वराक्रान्ता। अ.टी.भ.।

**खदिरपत्त्रिका (त्री)** । स्त्री । अरिखदिरे । रा. नि. व. ८ । लज्जालुकायाम् । रा. नि. व. ५ ।

**खदिरवटी** । स्त्री । मुखरोगहृद्वटिकायाम् । खदिरः १०० प. पाकार्थजलं ६४ श. शे. ८ श. । पुनः पक्त्वा घनीभूते प्रक्षेपः जयित्रीकर्पूरगुवाककाकोलीजायफलचूर्णानि प्र. ८ तो. । सा. कौ. ।

**खदिरवल्लरी** । स्त्री । अरिखदिरे । हिं मट्टिकफल । (क्ली) दुर्मोत्पले । वै. निघ. ।

**खदिरसारः (रोद्भूतः)** । पुं । खदिरनिर्यासे । খয়ের । মং কাত । रस. र. । गुणाः—कटुतिक्तोष्णः कफ-वातघ्नः व्रण-कण्ठरोगघ्नः रुच्यः दीपनश्च । रा. नि. व. ८ ।

**खदिरा** । स्त्री । लज्जालुकालतायाम् । रा. नि. व. ५ ।

**खदिराङ्गारः** । पुं । खदिरकाष्ठाङ्गारे ।

**खदिरादिपञ्चतिक्तकघृतम्** । क्ली । कुष्ठे घृतम् । घृतं ४ श. । क्वाथार्थं—पञ्चतिक्तकं प्र. १० प. वारि ६४ श. शे. ८ श. । कल्कार्थं—खदिरारग्वधव्योष-त्रिवृच्चित्रक-दन्तीपटोल-त्रिफलानिम्बहरिद्रा-सोमराजी-कटुकातिविषापाठात्रायन्ती-दुरालभाकुष्ठकरञ्जवीज--शारिवाद्वयेन्द्रयव-भल्लातकास्थिविड़ङ्गगुग्गुलूनां प्र. २ तो. । ঘৃত ৪ শ. কাথার্থ—নিমছাল, পটোলপত্র, কণ্টকারী, গুলঞ্চ, বাসকছাল প্রত্যেক ১০প. জল ৬৪ শ. শে. ৮ শ. । কল্কার্থ—খদিরকাষ্ঠ, সোন্দালের আটা, শুঁঠ, পিপুল, মরিচ, তেউড়ী, চিতামূল, দন্তীমূল, পটোলপত্র আমলা, হরীতকী, বহেড়া, নিমবীজ, হরিদ্রা, বাগুজীবীজ, কটুকী, আতইচ, আকনাদি, গোওয়ালেলতা, দুরালভা, কুড়, করঞ্জবীজ, শ্যামালতা, অনন্তমূল, ইন্দ্রযব, ভেলার মুটী ( অভাবে রক্তচন্দন ), বিড়ঙ্গ এবং গুগ্গুল প্রত্যেক ২ তো. । रस. र. ।

**खदिराष्टकः** । पुं । मसूरिकाधिकारे कषायः । "खदिरत्रिफलारिष्टपटोलामृतवासकैः क्वाथोऽष्टकाङ्गो जयति रोमान्तिकमसूरिकाः ॥" च. द. ।

**खदिरिका** । स्त्री । लाक्षायाम् । रा. नि. व. ६ । लज्जालुकायाम् । वै. निघ. ।

**खदिरी** । स्त्री । वराहक्रान्तायाम् । प. मु. । लज्जालुकायाम् । रा. नि. व. ५ ।

**खदिरीवीजम्** । क्ली । अशोकवीजे । च. द. "जलेन खदिरीवीजम् ।"

**खदिरोपमः** । पुं । (Acacia Arabica.) वर्व्वूरकवृक्षे । বাবলা গাছ । वै. निघ. । कदरे । শ্বেত খদির । र. मा. ।

**खदूरकः** । पुं । वामने ।

**खद्योतः (तनः)** । पुं । ज्योतिरिङ्गणे । জনাকি পোকা । हिं पटवीजना । अम. ।

**खद्योतकम्** । क्ली । तन्नामकसविषफलभेदे । सु. कल्प. २ अ. । See फलविषम् ।

**खद्योतनः** । पुं । सूर्य्ये । ज. ।

**खनकः** । पुं । मूषिके । त्रिका. । वनमूषिके । वै. निघ. ।

**खननम्** । क्ली । विदारणे ।

**खनयित्री** । स्त्री । मृत्खननोपयोग्यस्त्रविशेषे । खुन्ती । के. ।

**खनिः (नी)** । स्त्री । स्वर्णाद्याकरे । अम. । तत्पर्य्यायः,—आकरः ( अ. ), खानी, खनी, खानिः ( शब्दर. ), गञ्जा । हे. ।

**खनिजौषधम्** । क्ली । Inorganic medicine. रसोपरसधातुलवणरत्नाख्येषु पञ्चविधेषु खनिजद्रव्येषु । वैद्यकम् ।

**खनित्रम्** । क्ली । अस्त्रविशेषे । কোদাল, খন্তা । अम. ।

**खनिसम्भवः** । पुं । स्वर्णे । वै. निघ. । त्रि । खनिजे ।

**खपु(पू)टः** । पुं । व्याघ्रनखे । नखी । वै. निघ. ।

**खपुरः** । पुं । (Areca catechu.) गुवाकवृक्षे । গুপারি গাছ । र. मा. । शल्लकीनिर्यासे । वा. टी. हेमा. । भद्रमुस्तके । अलसकरोगे । मे. । बालके । বালা । रसोने । वै. निघ. ।

**खपुष्पः** । पुं । पनसवृक्षे । वै. निघ. ।

**खभ्रान्तिः** । पुं । चिल्लपक्षिणि । त्रिका. ।

**खमणिः** । पुं । सूर्य्ये । वै. निघ. ।

**खमीलनम्** । क्ली । तन्द्रायाम् । श. र. ।

**खमूलिः (का)** । स्त्री । An aquatic plant. (Pistia stratiotes.) कुम्भिकायाम् । পানা । श. र. ।



**खरः** । पुं । यासे । দুরালভা । रा. नि. व. ४ । नखीनामगन्धद्रव्ये । वै. निघ. । कङ्कपक्षिणि । कुररपक्षिणि । काके । रा. नि. व. १९ । अश्वतरे । त्रिका. । गर्द्दभे । त्रि । तीक्ष्णे । अम. ।

**खरकः** । पुं । चैत्रपर्प्ट्याम् । रा. नि. व. ४ ।

**खरकाष्ठिका** । स्त्री । बलायाम् । रा. नि. व. ४ ।

**खरकुटिः (टी)** । स्त्री । नापितशालायाम् । নাপিতবাড়ী । त्रिका. ।

**खरको(का)णः** । पुं । तित्तिरपक्षिणि । हे. च. ।

**खरगन्धनिका (निभा) (गन्धा)** । स्त्री । नागबलायाम् । जटा. । रा. नि. व, ४ । वनतुलस्याम् । वै. निघ. ।

**खरगेहं(गृहः)** । क्ली, पुं । गर्द्दभशालायाम् । त्रिका. । गेहे । श. र. ।

**खरघातनः** । पुं । नागकेशरवृक्षे । श. च. ।

**खरच्छदः** । पुं । उलुकनामतृणे । উলুখড় । इक्कटनामक्षुद्रक्षुपे । ওকড়া, ইকড় । र. मा. । कुन्दुरुतृणे । रा. नि. व. ८ । भूमीसहवृक्षे । भा. । शाकवृक्षे । শেগুন গাছ । शाखोटवृक्षे । শ্যাওড়া গাছ । रक्तापामार्गे । वै. निघ. ।

**खरच्छदा** । स्त्री । त्रिपुरमल्लिकायाम् । प. मु. । चिविल्लिकायाम् । চিল্লী শাক । रा. नि. व. ५ ।

**खरटी** । स्त्री । रङ्गधात्री । वै. निघ. ।

**खरतुण्डकः** । पुं । लज्जालुकायाम् । भा. ।

**खरत्वक्** । स्त्री । अलम्बुषायाम्, लज्जालुकाभेदे । भा. ।

**खरदंष्ट्रा** । स्त्री । गोक्षुरक्षुपे । ज. द. ।

**खरदण्डम्** । क्ली । पद्मे । धरणि. ।

**खरदला** । स्त्री । श्यामालतायाम् । काष्ठोदुम्बरे । श. च. ।

**खरदूषणः** । पुं, क्ली । धुस्तूरवृक्षे फले च । श. च. ।

**खरधन्विका** । स्त्री । गोरक्षतण्डुलायाम् । গোরক্ষচাকুলে । प. मु. ।

**खरनादिनी** । स्त्री । रेणुके । श. च. ।

**खरपत्रः** । पुं । क्षुद्रपत्रतुलसीवृक्षे । शाकतरौ । শেগুন গাছ । र. मा. । ताम्रतुलसीवृक्षे । গন্ধতুলসী । भूर्ज्जवृक्षे । वै. निघ. । यावनाले । रा. नि. व. ८ । मरुवकवृक्षे । গন্ধতুলসী । रा. नि. व. १० ।

**खरपत्रकः** । पुं । तिलवृक्षे । श. च. ।

**खरपत्री (त्रिणी, र्णी)** । स्त्री । गोजिह्वानामक्षुपे । গোজিয়া । रा. नि. व. ४ । काकोदुम्बरिकायाम् । কাকডুমুর । रा. नि. व. ११ ।

**खरपल्लवः** । पुं । शाखोटकवृक्षे । শ্যাওড়া গাছ । प. मु. ।

**खरपाच्यः** । पुं । कपित्थवृक्षे ।

**खरपात्रम्** । क्ली । लौहपात्रे । त्रिका. ।

**खरपादाढ्यः** । पुं । कपित्थवृक्षे । श. च. ।

**खरपुष्पः** । पुं । मरुवकवृक्षे । মরুয়া গাছ । र. मा. ।

**खरपुष्पा (ष्पी)** । स्त्री । वर्व्वर्य्याम् । বাবুই । भा. म, ४भ. । "कट्फलं खरपुष्पा च ।" वनतुलस्याम् । বনবাবুইতুলসী । सु. सू. ३७ अ. ।

**खरप्रियः** । पुं । पारावते । श. मा. ।

**खरमञ्जरी** । स्त्री । अपामार्गक्षुपे । रा. नि. व. ४ रसेन्द्र. चि. क्षुधावतीगुड़ी. । श्वेतापामार्गे । वै. निघ. ।

**खरमुखः** । पुं । वर्व्वरीवृक्षे । বাবুইতুলসী ।

**खरमूत्रम्** । क्ली । गर्द्दभमूत्रे । গাধার মুৎ । गुणाः—कटूष्णं क्षारं तिक्तं कफघ्नं महावातघ्नं कम्पोन्मादहरञ्च । रा. नि. व. १५ । "गार्द्दभं नावनं मूत्रं तैलं योज्यं क्वचिद्भवेत् । सक्षारं तिक्तकटुकमुन्मादकुष्ठरोगनुत् । कारभं खरमूत्रञ्च तैले नस्ये विधायकम् ॥" अत्रि. ।

**खरयष्टिका** । स्त्री । लघुवाट्यालके । वै. निघ.

**खरवाहः** । पुं । मुखपुण्ड्रकेण-युक्ते खड्गाहाश्वे "खरवाहश्च खड्गाहः ।" ज. द. ३ अ. ।

**खररोमा** । पुं । नागविशेषे ।

**खरवल्लिका** } स्त्री । गोरक्षतण्डुलायाम् ।
**खरवल्लरिका** } গোরক্ষচাকুলিয়া । र. मा. ।

**खरवुकः (सः)** । पुं । मरुवकवृक्षे । "खरवुस वृषकर्णी कट्फलं ।" वा. सू. १५ अ., हेमा. टी. ।

**खरशब्दः** । पुं । कुररपक्षिणि । কর্কটিয়া । रा. नि. व. १९ ।

**खरशाकः** । पुं । भार्ग्याम् । भा. ।

**खरशूकः** । पुं । पीतशाले । वै. निघ. ।

**खरश्रुवा** । स्त्री । आरण्यमल्लिकायाम् । त्रिपुर-मल्लिकायाम् ।

**खरसोन्दः** । पुं । लौहपात्रभेदे । त्रिका. ।

**खरस्कन्धः (न्धा)** । पुं, स्त्री । प्रियालवृक्षे । खर्ज्जूरीवृक्षे । रा. नि. व. ११ ।

**खरस्पर्शा** । स्त्री । पीतदेवदाल्याम् । भा. । See अगरी । त्रि (र्शः) । गोजिह्वादिवत् खरे । मा. नि. ।

**खरस्वरा** । स्त्री । वनमल्लिकायाम् । र. मा. ।

**खरा** । स्त्री । पीतदेवताड़े । भा. ।

**खरागरी** । स्त्री । पीतदेवताड़वृक्षे । अ.टी.रा. ।

**खराग्निः** । पुं । अर्कनिष्काशनार्थं तीक्ष्णाग्नि-विशेषे । रावण. ।

**खराब्दाङ्कुरम्** । क्ली । वैदूर्य्यमणौ । रा. ।

**खराश्वा** । स्त्री । रुद्रजटायाम् । अ. टी. भ. । अजमोदायाम् । क्षेत्रयमानी । भा. पू. १भ. । गुणाः—"खराश्वा कफवातघ्नी वस्तिरोगरुजापहा ।" च. सू. २७ अ. । च. द. अश्मरीचि. ।

**खराह्वा** । स्त्री । अजमोदायाम् । वनयमानी । रा. नि. व. ६ ।

**खरिका** । स्त्री । नेपालजचूर्णाकृतिकस्तूरीभेदे । रा. नि. व. १२ । See कस्तूरी ।

**खरुः** । पुं । घोटके । दन्ते । त्रि । श्वेते । त्रिका. ।

**खरुवकः** । पुं । श्वेतमरुवकवृक्षे । वै. निघ. ।

**खर्ज्जिका** । स्त्री । अवदंशे । চাট । श. च. ।

**खर्ज्जुः (र्ज्जूः)** । पुं । पिण्डीखर्ज्जुरवृक्षे । उणा. । खर्ज्जाम् । रा. नि. व. २० ।

**खर्ज्जुघ्नः** । पुं । चक्रमर्द्दक्षुपे । रा. नि. व. ४ । अर्कवृक्षे । আকন্দ গাছ । धुस्तूरवृक्षे । শ্বেত ধুতূরা । रा. नि. व. १० ।

**खर्ज्जु (र्ज्जू) रम्** । क्ली, पुं । हरिताले । हे. च. । वृश्चिके । खनामकवृक्षे । मे. । रौप्ये । रूपा । प. मु. । खर्ज्जूरफले । पिण्डीखर्ज्जूरे । च. द. र. पि. चि. ।

**खर्ज्जूरपत्रकम्** । क्ली । तदाकारव्रणच्छेदविशेषे । सु. चि. ८अ. ।

**खर्ज्जूरफलम्** । क्ली । खर्ज्जूरीफले । तच्च रक्त-पित्ते हितम् । सि. यो. रक्तपि. चि. ।

**खर्ज्जूरफलकः** । पुं । गोधूमविशेषे । वै. निघ. । खर्ज्जूरीफले ।

**खर्ज्जूरिका (री)** । स्त्री । खर्ज्जूरवृक्षे । प. मु. । খেজুর গাছ । मं सिंधी । कं इचिलु । तत्पर्य्यायः, —खरस्कन्धा, दुष्प्रधर्षा, दुरारुहा, निःश्रेणी, कषायी, यवनेष्टा, हरिप्रिया । तत्फलगुणाः— अपक्वा कषाया, पक्वा गौल्या कषाया पित्तघ्नी कफकरी कृमिजननी वृष्या बृंहणी च । रा. नि. व. ११ । सा मधु-भू-पिण्ड-राजखर्ज्जूरीभेदेन चतुर्धा भवति । एषां गुणाः स्वस्वपर्य्याये मृग्याः । यथा—"भूमिखर्ज्जूरिका स्वाद्वी दुरारोहा मृदु-च्छदा । तथा स्वल्पफला काककर्कटी स्वादुमस्तका ॥ पिण्डखर्ज्जूरिका त्वन्या सा देशे पश्चिमे भवेत् । खर्ज्जूरी गोस्तनाकारा पराद्वीपादिहागता । जायन्ते पश्चिमे देशे सा छोहारेति कीर्त्तते ॥" सा. गुणाः —"खर्ज्जूरीत्रितयं शीतं मधुरं रसपाकयोः । स्निग्धं रुचिकरं हृद्यं क्षतक्षयहरं गुरु ॥ तर्पणं रक्तपित्तघ्नं पुष्टिविष्टम्भशुक्रदं । कोष्ठमारुतजिद्बल्यं वान्तिवातकफापहम् । ज्वरातिसारक्षुत्तृष्णाश्वास-कासनिवारकम् । मद-मूर्च्छा-मरुत्पित्त-मद्योद्भूत-गदान्तकृत् । खर्ज्जूरीतरुतोयन्तु मदपित्तकरं भवेत् । वातश्लेष्महरं रुच्यं दीपनं बलशुक्रकृत् ॥" भा. । मस्तिष्कगुणाः—स्वादुः तिक्तः कषायः मूत्ररोगघ्नः बलप्राणशुक्रवृद्धिकरश्च । राज. । "अपक्व खर्ज्जूर-फलं त्रिदोषशमनं मतम् । पक्वमेव हितं श्रेष्ठं त्रिदोषशमनं परम् ॥" अत्रि, १७ अ. । मधुरं शीतलं गुरु क्षताभिघातदाहवातपित्तेषु हितं बृंहणं शुक्र-करञ्च । च. सू. २७ अ. । कृष्णमुशल्याम् । वै निघ. ।

**खर्पतुत्थम्** । क्ली । खर्परीतुत्थे । वै. निघ. ।

**खर्परम्** । क्ली । खनामख्यातोपधातुविशेषे । খাপর । हिं खापरिया । मं कलखापरी । प. मु. । तस्य शोधनं यथा—"पुष्पाणां रक्तपीतानां रसैः पिष्टैश्च भावयेत् । नरमूत्रैश्च गोमूत्रैः यवाम्लेन ससैन्धवैः । सप्ताहं त्रिदिनं वापि पश्चाच्छुध्यति खर्परम् । तन्मारणं वङ्गवत् ज्ञेयम् । खर्परं पारदे-नैव वालुकायन्त्रगं पचेत् । चूर्णयित्वा दिनं यावत् शोभनं भस्म जायते ।" अथवा पत्तलीकृतं खर्परं लवणान्तर्निधाय पचेत् ॥ मतान्तरे गुणाः—खर्परं कटु क्षारं कषायं वामकं लघु लेखनं भेदनं शीतलं चक्षुष्यं रक्तपित्तहरं विषाश्मरीकुष्ठकण्डू-घ्नञ्च । भा. । पुं । मृत्पात्रभेदे । খাপরা । प. मु. । स्वभाकारापूपपचनादिपात्रे । তাওয়া, চাটু । वा. टी. हेमा. । कपालास्थनि । মাথার খুলি । रा. नि. व. १८ । नेत्राञ्जनभेदे । छत्रे । त्रिका. ।

**खर्परवटिका** । स्त्री । ग्रहण्यधिकारे । "पक्वे-ष्टका हरिद्राभ्यामागारधूमकेन च । शोधितं पार-दश्चैव कर्षार्द्धं तुलया धृतम् । भृङ्गराजरसैः शुद्धग-न्धकं रससम्मितं । द्वाभ्यां कज्जलिकां कृत्वा भावये-त्तत्तु भेषजैः । सिन्धुवारदलरसे मण्डूकपर्णिकारसे (मधूकपुष्पजे रसे इति वा पाठः) । केशराजरसे चापि ग्रीष्मसुन्दरजे रसे । रसेऽपराजितायाश्च सोमराजरसे तथा । रक्तचित्रकपत्रोत्थे रसे च परिभावितम् । रसमानसमानेन छायायां शोषये-द्भिषक् ॥" वटी सर्षपाभा, अनु. दधिमण्ड । ইষ্টক-চূর্ণ, হরিদ্রাচূর্ণ ও ঝুলের সহিত শুদ্ধ পারা ১ তো. ভীমরাজরসে শুদ্ধ গন্ধক ১ তো. কজ্জলি করিবে । পরে নিশিন্দাপাতার রস, থুলকুড়ির রস, বা মৌলফুলের রস বা কাথ, কেশুরের রস, গিমেশাকের রস, অপরা-জিতাপাতার রস, সোমরাজকা । এবং রক্ত-চিত্রকপত্ররস প্রত্যেক ১ তোলা দ্বারা মাড়িয়া সর্ষপতুল্য বটী করিবে । रस. कौ. । भैष. ।

**खर्परालः** । पुं । अश्वत्थविशेषे । मं लाखोपिंपरी । वै. निघ. ।

**खर्परिका(री)तुत्थकम्** । क्ली । A sort of collyrium. नेत्रप्रसाधनविशेषे । तुत्थाञ्जने, कृत्रिमरसाञ्जने । तत्पर्य्यायः,—खर्परी, रसकं चक्षुष्यं, अमृतोत्पन्नं, तुत्थं, खर्परिका । गुणाः —कटु तिक्तं चक्षुष्यं रसायनं त्वग्दोषघ्नं दीपनं बलपुष्टिकरञ्च । रा. नि. व. १३ । खर्परे । থাপর । मं कलखापरी ।

**खर्परीयकम्** । क्ली । खर्परीतुत्थे । खर्परे । वै. निघ. ।

**खर्परीरसकम्** । क्ली । खर्परीतुत्थे । কৃত্রিম রসাঞ্জন । रा. नि. व. १३ । खर्परे । वै. निघ. ।

**खर्व्वः (र्व्वः)** । पुं । कुब्जकपुष्पवृक्षे । रा. नि. व. १० । त्रि । ह्रस्वे । अम. ।



**खर्व्वशाखः** । त्रि । वामने । हे. च. ।

**खर्व्वा** । स्त्री । नागबलायाम् । रा. नि. व. ४ ।

**खर्व्वु(र्व्वू)रः** । पुं, क्ली । नदीनिष्पावे । रा. नि. व. १६ ।

**खर्वु(र्वू)रा** । स्त्री । तरदीवृक्षे । रा. नि. व. ८ ।

**खर्वूजम्** । क्ली । तन्नामकफलविशेषे । খরমূজ । गुणाः—"मूत्रलं बल्यं कोष्ठशुद्धिकरं गुरु । स्निग्धं स्वादुतरं शीतं वृष्यं पित्तानिलापहम् । तेषु यच्चाम्लमधुरं सक्षारञ्च रसाद्भवेत् । रक्तपित्तकरं तत्तु मूत्रकृच्छ्रकरम्परम् ॥" भा. ।

**खर्म्मम्** । क्ली । पट्टवस्त्रे । पौरुषे । मे. ।

**खर्व्वपत्रा ( त्री, त्रिका )** । स्त्री । द्रोणपुष्प-वृक्षे ।

**खलम्** । क्ली । कल्के । मे । शस्यस्थाने । त्रिका. ।

**खलः (कः)** । पुं । सूर्य्ये । धुस्तूरवृक्षे । रा. नि. व. १० । मालवे व्यञ्जनविशेषे । "मालुधानीयपुष्पै-र्योऽतिगुणः स खल इत्युच्यते । फलमूलैर्घनादानं व्यञ्जन पाकतो घनं । लेहवत् खल इत्यन्ये दोषलाः स्वस्वयोनिवत् । कल्को बिल्वशलाटूनां तिलकल्कश्च तत्समः । दध्नः सरोऽम्लः सस्नेहः खलो हन्ति प्रवा-हिकाम् ॥" शौकुक्कुटः अपराजितश्च नाम परौ खलावपि । वा. चि. ९।१२ अ. मृग्यः । तमालवृक्षे । श. च. । त्रि । नीचे । अधमे । मे. ।

**खलकः** । पुं, क्ली । गुग्गुलौ । भ. ।

**खलकाम्बलिकः** । पुं । तिलकल्के । वै. निघ. ।

**खल(लि)तिः** । पुं । इन्द्रलुप्तरोगिणि । টেকো । हे. च. । त्रिका. ।

**खलमूर्त्तिः** । पुं । पारदे । श. च. ।

**खलयूषः** । पुं । खड़यूषे ।

**खलाधारा** । स्त्री । तैलपायिकायाम् । তেলা-পোকা । जटा. ।

**खलिः** । पुं । तिलकिट्टे । रा. नि. व. १६ । खल इत्यपि पाठोऽस्ति ।

**खलिद्रुमः** । पुं । सरलदेवदारौ । वै. निघ. ।

**खलि(ली)नः** । पुं, क्ली । खलीने । লাগাম । अ. टी. रा. ।

**खलिनी** । स्त्री । कृष्णतालमूल्याम् । वै. निघ. । खलसमूहे । अम. ।

**खलिश:** } **खलेशय:** } पुं। (Tricopodus colisa.) मत्स्यविशेषे। খলশে মাছ। হারা.। तत्पर्य्याय:,—कङ्कतीट:, खलेशय: (शब्दर.), खलेश: (हा.); खशेट: (त्रि.)। गुणा:—ग्राहित्वं कषायत्वं वायुकोपनत्वं रूक्षत्वं लघुत्वं शूलहरत्वं किञ्चिदामघ्नत्वञ्च। राज, ३ प.। रा. नि. व. १९।

**खलुरेष:**। पुं। मृगविशेषे। श. च.।

**खलेधानी**। स्त्री। खले पशुबन्धनदारुणि। जटा.।

**खलेवाली**। स्त्री। खले गोबन्धनकाष्ठे। মেই কাঠ। हे. च.।

**खल्ल:**। पुं। चातकपक्षिणि। मे.। चर्म्मणि। থান। त्रिका.। औषधमर्द्दनपात्रे। খল। क्ली। वाजिदन्ताग्रस्य निम्नकृष्णत्वे।- "निम्नकृष्णञ्च दन्ताग्रं खल्लमित्यभिधीयते।" ज. द, ४अ.।

**खल्लकी**। स्त्री। शर्करायाम्। খাঁড়। वै. निघ.।

**खल्लिका**। स्त्री। पिष्टकादिभर्ज्जनपात्रे। श. च.।

**खल्लि(ल्ली)ट:**। त्रि। खलतौ। श. र.। त्रिका.।

**खल्ली**। स्त्री। हस्तादौ शिरामोटने। খালধরা। सि. यो. विसूची, चि.। "खल्ली तु पादजङ्घोरुकर-मूलावमोटनी।" सरलदेवदारौ। वै. निघ. वा. व्या. चि.।

**खल्लीवर्द्धन:**। पुं। दन्तवेष्टजरोगविशेषे। मारुते-नाधिको दन्तो जायते तीव्रवेदन:। खल्लीवर्द्धन-संज्ञोऽसौ सञ्जाते रुक् प्रशाम्यति॥ भा. म. ४भ. मुखरो. चि.।

**खल्लीश:**। पुं। खलिशमत्स्ये।

**खल्वट:**। पुं। कासरोगे। सं खोक्ला। वै. निघ.।

**खल्वाट:**। पुं। खलतौ। हे. च.।

**खल्वुका**। स्त्री। नाभिशङ्खे। र. सा. सं.।

**खवल्ली**। स्त्री। आकाशवल्ल्याम्। रा. नि. व. ३।

**खवारि**। क्ली। आन्तरिक्षोदके। रा. नि. व. १४।

**खवास्प:**। पुं। हिमे। हारा.।

**खशब्दाङ्कुर:**। पुं, क्ली। वैदूर्य्यमणौ। रा. नि. व. १३।

**खशा**। स्त्री। सुरामांस्याम्। सं मरवा। श. च.।

**खशेट:**। पुं। खलिसमत्स्ये। त्रिका.।

**खश्वास:**। पुं। वायौ। त्रिका.।

**खस:**। पुं। पामायाम्। খোস্ রোগ। वीरण-मूले। वै. निघ. वा. व्या. चि.।

**खसकन्द:**। पुं। वाराहीकन्दे। वै. निघ.। चौरीशवृक्षे। ক্ষীরীশ গাছ। प. मु.। चौर-कञ्चुकीवृक्षे। र. मा.।

**खसगन्ध:**। पुं। चौरकञ्चुक्याम्। ক্ষীর-কড়ার। र. मा.।

**खसतिल:**। पुं। खक्खसे। পোস্তা গাছ। गुणा:—"तिलभेद: खसतिल: कासश्वासहर: स्मृत:। स्याद्वा खसफलोद्भूतं वल्कलं शीतलं लघु। ग्राहि तिक्तकषायञ्च वातकृत्तत्कफासहृत्। धातूनां शोषकं रूक्षं मदकृद्वाग्निवर्द्धनम्। मुहुर्मोहकरं रुच्यं सेवनात् पुंस्त्वनाशनम्॥" भा.।

**खसफलम्**। क्ली। खक्खसे। পোস্ত, ঢেঁড়ি। वै. निघ.।

**खसफेनक्षीरम्**। क्ली। अहिफेने। भा.।

**खसम्भवा**। स्त्री। आकाशमांस्याम्। শূন্য জটা-মাংসী। रा. नि. व. १२।

**खसर्पणवटी**। स्त्री। ग्रहण्यधिकारे। See खर्परवटिका।

**खसवल्ल:**। पुं। लकुचफले। श.।

**खसबीजम्**। क्ली। खक्खसे। পোস্তদানা। हिं खाखसदाना। गुणा:—बल्यं वृष्यं सुगुरु कफकरं वातशमनञ्च। भा.

**खक्खस:**। पुं। स्वनाम्ना मालवदेशे प्रसिद्ध:। খাকসী, পোস্তদানার গাছ। गुणा:—पाके मधुर: कान्तिवीर्य्यबलप्रदश्च। रा. नि. व. ४।

**खक्खसरस: (सार:) (क्षीरं)**। पं. क्ली। अहिफेने। वै. निघ.।

**खस्फटिक:**। पुं। चन्द्रकान्तमणौ। सूर्य्यकान्त-मणौ। वै. निघ.।

**खस्तनी**। स्त्री। पृथिव्याम्। त्रि.।

**खाखस: (तिल:)**। पुं। खसतिले। খাকসী, পোস্ত গাছ। See खसतिल:।

**खाखसतिलोद्भूतम्**। क्ली। खक्खसे। পোস্ত। वै. निघ.।



**खाजिक:**। पुं। लाजायाम्। খৈ। हारा.।

**खाटि:**। स्त्री। किणे। मे.।

**खाड़(ण्ड)व:**। पुं। मधुराम्ललवणनानासुगन्धि-द्रव्यकृतखाद्यविशेषे। "खाड़वा: फलमधुराम्ललवणा: सुगन्धिद्रव्यजा: नानाविधा" इति शिवदास:। द्वीपान्तरखर्ज्जूरे। वै. निघ.।

**खात(त्र)म्**। क्ली। पुष्करिण्याम्। अम.।

**खातकम्**। क्ली। परिखायाम्।

**खातभू:**। स्त्री। प्रतिकूपे। परिखायाम्। श.।

**खादन:**। पुं। दन्ते। हे. च.। क्ली। आहारे। वै. निघ.।

**खादनकोष्ठकम्**। क्ली। अश्वस्य हितखादितान्नत भोजनपात्रे। नकु. १८ अ.।

**खादिर:**। पुं। विट्खदिरे। खदिरसारे। रा. नि. व. १८।

**खादिरसार:**। पुं। खदिरे। খয়ের। तत्-पर्य्याय:,—खादिर:, अद्भुतसार:, रङ्गद:, रङ्ग:, सत्सार:। कृष्णपाण्डवादिभेदेन स बहुविध:। सा. गुणा:—कटुत्वं तिक्तत्वं उष्णत्वं कफवातव्रणकण्ठामय-नाशित्वं रुचिकारत्वं दीपनत्वञ्च। रा. नि. व. ८।

**खाद्यम्**। क्ली। अष्टविधाहारान्यतमाहारे। খাবার জিনিষ। रा. नि. व. २०।

**खाद्यपत्री**। स्त्री। खदिरवृक्षे। रा. नि. व. ८।

**खानि:**। स्त्री। खनौ। हे. च.।

**खानिकम्**। क्ली। कुड्यच्छेद्ये। দেওয়ালের গর্ত্ত। त्रिका.। रत्ने। वै. निघ.।

**खानिष्कम्**। क्ली। अतिशुष्कमांसे। वै निघ.।

**खानोदक:**। पुं। नारिकेले। त्रिका.।

**खापगा**। स्त्री। गङ्गायाम्। हे. च.।

**खार:**। पुं। खारीपरिमाणे।

**खारयिका**। स्त्री। मत्स्यधान्याम्। খালুই।

**खारि: (री)**। स्त्री। परिमाणविशेषे। स च द्रोणचतुष्टयपरिमाणे, शताधिकाष्टाविंशतिशराव-परिमाणं वा (१२८ श.)। "चतुराढ़को भवेद्द्रोण: खारी द्रोणचतुष्टयम्।" वै. निघ.।

**खारिक:**। पुं, क्ली। पुष्करतीर्थसमीपे प्रसिद्धे महापारेवतफले वृक्षे च। বড় খেজুর। रा. नि. व. ११।

**खार्ज्जूरसुरा**। स्त्री। खर्ज्जूरधातकीपुष्पकृत-सुराविशेषे। वै. निघ.। खर्ज्जूरमद्ये। খেজুররসের মদ। गुणा:—"मार्द्वीकात्पान्तरं किञ्चित् खार्ज्जूरं वातकोपनं। तदेव विशदं रुच्यङ्कफघ्नङ्कर्षणं लघु। कषायं मधुरं हृद्यं सुगन्धीन्द्रियबोधनम्॥" सु. सू. ४६ अ.। पिण्डखर्ज्जूरविकृतिभवं खार्ज्जूरमुच्यते। मतान्तरम्। "तालसिन्दीलखर्ज्जूरमूर्द्धान्युच्छिद्य गृह्यते। यद्रसं तत्तदाख्यं हि विज्ञेयं तत्परायणै:॥" तोड़. वृद्धशौनक:।

**खालित्यम्**। क्ली। कपालरोगे। টাকরোগ। लक्षणं यथा—"तेजोऽनिलाद्यै: सह केशभूमिं दग्ध्वाशु कुर्य्यात् खलतिन्नरस्य। किञ्चित्तु दग्ध्वा पलितानि कुर्य्याद्धरिप्रलुप्तञ्च शिरोरुहाणाम्॥" च.।

**खाश्मरी**। स्त्री। गाम्भारीवृक्षे। वै निघ.।

**खिखि:**। पुं। शृगालविशेषे। খ্যাকশিয়ালী সং কোহ্লা। मे.।

**खि(ङ्खि)ङ्खिर:**। पुं। खिखौ। খ্যাকশিয়ালী। मे.। वारिबालके। গন্ধদ্রব্যবিশেষ, জলবালা। विश्व. हे. च.।

**खिच्चा**। स्त्री। खिचरिकान्ने। वै. निघ.।

**खिदिर:**। पु। चन्द्रे। वै. निघ.।

**खिद्र:**। पुं। रोगे। उणा.।

**खिरहिट्टी**। पुं। महासमङ्गानामक्षुपे। रा. नि. व. ४।

**खिल:**। त्रि। अप्रहते (भूम्यादौ)। रा. नि. व. २।

**खिलाह:**। पुं। पाण्डुकेसरपुच्छे कपिलवर्णाश्वे। "खिलाह: कपिलो वाजी पाण्डुकेसरबालधि:।" ज. द. ३अ.।

**खुङ्गाह:**। पुं। श्वेतपीतवर्णाश्वे। "खुङ्गाह: श्वेतपीतक:।" ज. द. ३अ.।

**खुज्ज(ज्जा)क:**। पुं। देवताड़वृक्षे। र. मा.।

**खुड़:**। पुं। वातरक्तरोगे। वै. निघ.।

**खुड़क:**। पुं। गुल्फ। सु. नि. १अ.।

**खुड़वात:**। पुं। वायुरोगभेदे। व. निघ.।

**खुड्डाक:**। त्रि। क्षुद्रे। ह्रस्वे। कनिष्ठे। च.।

**खुड्डाकपद्मकतैलम्**। क्ली। वातरक्ते तैलम्। पाठ: — "पद्मकोशीरयष्ट्याह्वरजनीक्वाथसाधितम्। स्यात् पिष्टै: सर्ज्जमञ्जिष्ठावीराकाकोलिचन्दनै:।

खुड्डाकपद्मकमिदं तैलं वातासृदाहनुत् ॥" रस. र.। च. चि. २९अ.।

**खु(क्षु)रः।** पुं। शफे। पश्वादिर खुर। श्मश्रुच्छेदनास्त्रे। क्षुर। श. र.। कोलदले। कुलपाता। नखीनामगन्धद्रव्ये। मे.। खट्वादिपादे। खुरो। धरणि.।

**खु(क्षु) कः।** पुं। तिलवृक्षे। श. च.। कोकिलाक्षक्षुपे। कुलेथाड़ा। क्ली। उत्तमवङ्गे। वै. निघ. २भ. जीर्णज्व. चि.।

**खुरणसः।** त्रि। चिपिटनासिके। চেপ্টা-নাকযুক্ত। अम.।

**खुरप्रः।** पुं। वाणविशेषे। খুরপা।

**खुरसाना।** स्त्री। खोरासनीयमान्याम्। वै. निघ.। पुं। खोरासानदेशीयोत्तमाश्वे। "ताजिकाः खुरसानाश्च तुषाराश्चोत्तमा हयाः।" नकुलः।

**खुराकः।** पुं। यवनाले। জনার। पशौ। वै. निघ.।

**खुरानकः।** पुं। लौहमयवाणे। शब्दमा.।

**खुरालिकः।** पुं। नापितभाण्डाम्। নাপিতের ভাঁড়। उपधाने। मे.।

**खुरासनी-वचा।** स्त्री। तद्देशीयवचायाम्। শ্বেত বচ। मं श्वेतवेखण्ड। वै. निघ.।

**खुरासानी-यमानी।** स्त्री। यमानीभेदे। खुरमाण इति महाराष्ट्रादौ। गुणाः—"खुरासानीयमानी तु कटुः रूच्या च पाचिका। ग्राहिकोष्णा मादिका च गुर्वी वातकरी मता। कफनाशकरी प्रोक्ता गुणास्त्वन्ये यमानिवत् ॥" वै. निघ.।

**खुरिः।** स्त्री। श्वेतापराजितायाम्।

**खुरिकापत्रः।** पुं। केनीनामपत्रशाके। मं केनी। वै. निघ.।

**खुरी।** स्त्री। छुरिकायाम्। हे.।

**खुलकः।** पुं। जङ्घापादयोः सन्धौ। सु. चि. १८ अ.।

**खुल(ल्व)का।** स्त्री। नाभिशङ्खे। र. सा. सं.।

**खुल्लम्।** क्ली। नखीनामगन्धद्रव्ये। श. च.।

**खुल्लकः।** त्रि। स्वल्पे। अ. टी.।

**खेखीरकः।** पुं। शब्दकारिणि यष्टिविशेषे। শব্দকারী লাঠি। हा.।

**खेगमनः।** कालकण्ठपक्षिणि। श. मा.।

**खेचरः।** पुं। पारदे। पक्षिणि। क्ली। खेचरान्ने। वै. निघ.। काशीषे। হিরেকস। र. सा. सं.। संस्कृत-पारदविशेषे। रा.।

**खेचरा।** स्त्री। आकाशवल्ल्याम्। वै. निघ.।

**खेचराञ्जनम्।** क्ली। काशीषे। হিরেকস। वै. निघ.।

**खेचरान्नम्।** क्ली। खेचरिकायाम्। খিচুড়ী। पाकराज.।

**खेटः।** पुं। कफे। मे.। अश्वे। क्ली। तृणे। श. र.। लगुड़े। चर्म्मे। ঢাল।

**खेदः।** पुं। शोके। हा.। अवसादे। ज.

**खेदिनी।** स्त्री। अश्मनपर्णीवृक्षे। श. च.।

**खेयम्।** क्ली। परिखायाम्। अ.।

**खेलनम्।** क्ली। क्रीड़ने। ह.।

**खेलनी।** स्त्री। शारिफले। हे.।

**खेला।** स्त्री। स्वनामख्यातक्षुपे। কেনা। गुणाः—मधुरा शीता स्तन्यदा रुचिकृच्च। रा. नि. व. ५। क्रीड़ायाम्।

**खेलिः।** स्त्री। वाणे। सूर्य्ये। पक्षिणि। जन्तौ। अज.।

**खेसरः।** पुं। अश्वतरे। খচ্চোর। रा. नि. व. १९।

**खोङ्गा(ङ्गा)हः।** पुं। श्वेतपिङ्गलवर्णाश्वे। हे. च.।

**खोटः(कं)।** पुं, क्ली। ग्रमक, फुट इति ख्याते रसजारणद्रव्ये। तल्लक्षणं यथा—"खोटकं स्वर्णसंतुल्यं समावर्त्तञ्च कारयेत्। कुक्कुटाण्डनिभं सूतं पटु भेदि भवेद्यदा। आवर्ज्जितं पुनस्तद्वत् खोटवद्धरसाकृति। अक्षयं कठिनं श्वेतं शिखिना मृदुना पचेत्। श्वेतपीतगुरुत्वञ्च मृदुसिक्थकसन्निभम्। अग्निमध्ये यदा तिष्ठेत् पोटवद्धस्य लक्षणम्। नानावर्णस्तथा स्वच्छो धृतो योऽग्नौ जलौकवत्। वर्द्धते सूतको यश्च जलौकावद्धलक्षणम् ॥"



**खोटिः (टी)।** पुं, स्त्री। कन्दुरुखोटौ। च. द. वा. व्या. चि.। पालङ्कीवृक्षे। श. च.।

**खोड़ः (रः) (लः)।** त्रि। खञ्जे। अम.।

**खोड़कः।** पुं। शीर्षे। हिङ्गुले। त्रि.।

**खोड़शीर्षकः।** पुं। हिङ्गुले।

**खोरकः।** पुं। गर्द्दभज्वरे। गरुवे.।

**खोलकः।** पुं। वल्मीके। উইঢিপি। शिरस्त्राणे। পাগড়ী। त्रिका.। पूगकोषे। সুপারির খোলা। मे.।

**खौलिः।** स्त्री। तूणे। श. मा.।

**खोषाह्वः।** पुं। जीवशाके। খোসলা। खोषाह्वः शाकवीरश्च जीवशाकः प्रवालकः। द्रव्याभि.।

---

# ग।

**गगनम्।** क्ली। अभ्रधातौ। অভ্র। मेघे। रा. नि. व. २३। कनकसुन्दररसे।

**गगनध्वजः।** पुं। मेघे। हा.। सूर्य्ये। हे.।

**गगनमारकगणः।** पुं। अभ्रमारकद्रव्येषु।

**गगनसुन्दरः।** पुं। ग्रहण्यां रसः। रसः १ तो. गन्धकं २ तो. अभ्रं ८ तो. जलेन वटी कार्य्या। मा. २—४ र.। र. चि.। अन्यः ज्वरातिसारे—टङ्कणहिङ्गुलगन्धकाभ्रं प्र. समम्। क्षीरिणीरसेन (थिरुइ) ३ भावनाः। भैष.।

**गगनस्पर्शः।** पुं। वायौ। वै. निघ.।

**गगनादिलौहम्।** क्ली। सोमरोगे हितम्। "गगनं त्रिफला लौहं कुटजङ्कटुकत्रयम्। पारदो गन्धकश्चैव विषटङ्कणसर्जिकाः। त्वगेला तेजपत्रञ्च वङ्गं जीरकयुग्मकं। एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत्। तदर्द्धं चित्रकचूर्णं...॥" অভ্র, ত্রিফলা, লৌহ, কুড়চি, ত্রিকটু, পারা, গন্ধক, বিষ, সোহাগার খৈ, সাজিমাটী, গুড়ত্বক্, এলা, তেজপত্র, বঙ্গ, জীরা, কৃষ্ণজীরা প্রত্যেকের চূর্ণ সমভাগ। সর্ব্বচূর্ণার্দ্ধ চিত্রকমূলচূর্ণ। र. सा. सं.।

**गगनादिवटी।** स्त्री। वातरोगे। अभ्रकपारदगन्धकताम्रकमुण्डलौहतीक्ष्णलौहस्वर्णमाक्षिकं एषां प्र. समभागं यष्टीवासकद्राक्षाभूकुष्माण्डक्वाथेन मर्द्दयेत्। मा. २ र.। অভ্র, পারা, গন্ধক, তামা, মুণ্ড ও তীক্ষ্ণলৌহ, স্বর্ণমাক্ষিক প্রত্যেক সমভাগ; যষ্টিমধুর ক্বাথ, বাসাক্বাথ, কিস্‌মিসের ক্বাথ ও ভূমিকুষ্মাণ্ডক্বাথে মর্দ্দন। মাত্রা ২ রতি। অনুপান ঘৃত ও মধু। र. सा. सं.।

**गगनाध्वगः।** पुं। सूर्य्ये। हे.।

**गगनाम्बु ( नोदकम् )।** क्ली। नीहारजले। आकाशवारिणि। गुणाः—त्रिदोषघ्नं बल्यं रसायनं मेध्यं रक्षोघ्नं शीतलम् आह्लादकं ज्वरदाहविषघ्नञ्च। सु. सू. ४६ अ.।

**गङ्का (ङ्गा, का)।** स्त्री। स्वनामख्यातनद्याम्। तत्पर्य्यायः,—विष्णुपदी, जह्नुतनया, सुरनिम्नगा, भागीरथी, त्रिपथगा, त्रिस्रोताः, भीष्मसूः (अ.), अर्घ्यतीर्थं, तीर्थराजः, त्रिदशदीर्घिका, कुमारसूः, सरिद्वरा, सिद्धापगा, स्वरापगा, स्वर्गापगा, खापगा, ऋषिकुल्या, हैमवती, स्वर्वापी, हरशेखरा, (हे.), सुरापगा, धर्म्मद्रवी, सुधा, गान्धिनी, नन्दिनी, अलकनन्दा, सितसिन्धुः (जः), सुरसरित् (हला.), पुरन्दरा (हा.), सुरला (हा.), सुरसिन्धुः, सरिताम्बरा, निलिम्पनिर्झरी, पावनी, हिमवत्सुता (के.), अध्वगा, उग्रशेखरा, सिद्धसिन्धुः (त्रिः), मन्दाकिनी, जाह्नवी, पुण्या, समुद्रसुभगा, स्वर्नदी, सुरदीर्घिका, सुरनदी, स्वर्धुनी, ज्येष्ठा, शुभ्रा, शैलेन्द्रजा, सुरेश्वरी, भवायना (शब्दर.)। तज्जलगुणाः—शीतं स्वच्छं स्वादु अतिरोचकं पथ्यं पाचकं पावनं तृष्णामोहघ्नं दीपनं प्रज्ञाकरञ्च। रा. नि. व. १४। लज्जालुकायाम्। वै. निघ.।

**गङ्गाचिल्ली।** स्त्री। चिल्लविशेषे। গাংচীল। हारा.। तत्पर्य्यायः,—देवटी, विश्वका, जलकुक्कुटी। हा.।

**गङ्गाटेयः।** पुं। चिङ्गटमत्स्ये। চিংড়ি মাছ। तत्पर्य्यायः,—गलानिलः (त्रि.), गलालिकः, गलाविलः (हे.)। त्रिका.। See चिङ्गटः।

**गङ्गाधरक्वाथः।** पुं। अतीसारे कपटाद्यपर-

नामकषाये। "कच्चटदाड़िमजम्बूशृङ्गाटकपत्रवह्निष्ठं। जलधरनागरसहितं गङ्गामपि वेगवाहिनीं रुन्ध्यात्॥" কাঁচড়া, দাড়িম, জাম, শিঙ্গাড়া (ইহাদের) পাতা, বালা, মুতা, শুঁঠ প্রত্যেক ২২॥০ র.। भा.।

**गङ्गाधरचूर्णम् (वृहत्)।** क्ली। अतीसारे औषधम्। मुस्ताश्योणाकशुण्ठीधातकीपुष्पलोध्रबालकविल्वशलाटुमोचरसपाठेन्द्रयवकुटजत्वगाम्रास्थिवराहक्रान्तातिविषाणां प्र. चूर्ण समभागम्। মুতা, শ্যোণা, শুঁঠ, ধাইফুল, লোধ, বালা, বেলশুঁঠ, মোচরস, আকনাদি, ইন্দ্রযব, কুড়চিছাল, আম্রাস্থি, বরাহক্রান্তা, আতইচ প্রত্যেকের চূর্ণ সমভাগ। अन्यद्यथा—मुस्तेन्द्रयवमोचरसविल्वशलाटुधातकीलोध्राणि प्र. समभागानि। गुड़ेन सेव्यम्। মুতা, ইন্দ্রযব, মোচরস, বেলশুঁঠ, ধাইফুল, লোধচূর্ণ প্রত্যেক সমভাগ। अपरं यथा—मोचरसमुस्तकशुण्ठीपाठाश्योणाकधातकीपुष्पाणि प्र. समभागानि। दधिमस्तुना सेव्यम्। মোচরস, মুতা, শুঁঠ, আকনাদি, শ্যোণা, ধাইফুলচূর্ণ, প্রত্যেক সমভাগ। भा. म. १भ.।

**गङ्गापत्री।** स्त्री। स्वनामख्यातपत्रशाकविशेषे। मं गङ्गावती। कं वट्टगान्धारी। तत्पर्य्यायः,—पत्री, सुगन्धा, गन्धपत्रिका। गुणाः—कटुः उष्णा वातघ्नी व्रणरोपणी च। रा. नि. व. १०। र. सा. स. अभ्रमारणे। लज्जालुकायाम्। वै. निघ.।

**गङ्गापालङ्कः।** पुं। वन्यपालङ्कशाके।

**गङ्गिका।** स्त्री। गङ्गायाम्।

**गङ्गुकः।** पुं। धान्यविशेषे। सुश्रु.।

**गङ्गोदकम्।** क्ली। गङ्गाजले।

**गच्छः।** पुं। वृक्षे। हिं. च.।

**गजः।** पु। हस्तिनि। अयं कूलचरत्वात्तद्गुणः। नागकेशरवृक्षे। নাগেশ্বর গাছ। वै. निघ.। गजपिप्पल्याम्। पञ्चतिक्तघृतम्। गजपुटे। प्रयोगा.।

**गजकणा।** स्त्री। गजपिप्पल्याम्। र. मा.। सा. कौ. बाहुशालगुड़े।

**गजकन्दः।** पुं। हस्तिकन्दनाममहाकन्दशाके। नि. व. ७।

**गजकर्णा (र्णी)।** स्त्री। कारकर्णवत्पत्रे कन्दशाकविशेषे। हिं हस्तिकर्णा। मं वहस्तीकन्द। गुणाः—तिक्ता उष्णा वातकफहरा पाके स्वादुः शीतज्वरघ्नी पाण्डुशोथकृमिप्लीहगुल्मानाहोदरघ्नी वनशूरणवत् ग्रहण्यर्शोघ्नी च। भा. पू. १भ. शाकव.। आखुकर्णीलतायाम्। रा. नि. व. ३।

**गजकर्णिका।** स्त्री। कर्कटिकायाम्। কাঁকুড়। वै. निघ.। इन्द्रवारुणीलतायाम्। রাখালশশা। रा. नि. व. ३।

**गजकुसुमः।** पुं, क्ली। नागकेशरवृक्षे तत्पुष्पे च। নাগেশ্বর গাছ বা তাহার ফুল। भैष. मुखरो. चि. अरिमेदा. गुड़ी.।

**गजकृष्णा।** स्त्री। गजपिप्पल्याम्। भा. रुद्रतैले। "गजकृष्णा कटुर्वातश्लेष्मनुदग्निवर्द्धनी। उष्णा निहन्त्यतीसारं श्वासकण्ठामयक्रिमीन्॥" भा.।

**गजकेश(स)रः।** पुं। नागकेशरे। নাগেশ্বর। सि. यो. छर्द्दि. चि. एलादिगुड़ी.। "लवङ्गगजकेशरकोलमज्जाः।"

**गजकेश(स)रीरसः।** पुं। आमज्वरादौ रसः। "शुद्धसूतं विषङ्गन्धं व्योषं त्रिफलमेव च। जयपालसमङ्कृत्वा भृङ्गतोयेन मर्द्दयेत्॥" मा. १ र. रस. कौ.।

**गजचक्षुः।** त्रि.। विकृतचक्षुषि। টেরা।

**गजचिर्भ(र्भि)टः (टा)।** स्त्री। इन्द्रवारुण्याम्। রাখালশশা, গোরক্ষলাড়ু। प. मु.। रा. नि. व. ३। च. द. गुल्म. चि.। (टः) गौडम्बायां। গোমক। त्रिका.।

**गजजातिः।** स्त्री। हस्तिजातौ। सा त्रिधा भद्रः मन्द्रः मृगश्चेति। रा. नि. व. १९।

**गजदघ्नः।** पुं। गजपरिमाणे। मुग्धबो.।

**गजदन्तः।** पुं। करिदन्ते। হাতির দাঁত। वै. निघ.। एतन्मषी श्वित्रघ्नी।

**गजदन्तफला।** स्त्री। डङ्गरीनामफलशाकलतायाम्। रा. नि. व. ७।

**गजदन्तवत्।** क्ली। मूलके। वै. निघ.।

**गजदन्तिका।** स्त्री। हस्तिदन्तायाम्। वा. उ. २९ अ.।

**गजदानम्।** क्ली। हस्तिमदे। रा.।

**गजद्रुमः (पादपः)।** पुं। नन्दीवृक्षे। गंग्र. अश्वत्थ। हिं बालियापिपल। भा.।



**गजपादः।** पुं। स्थालीवृक्षे। বেলিয়াপিপর।

**गजपिप्पली।** स्त्री। (Scindapsus officinalis.) Syn. Pothos officinalis. स्वनामख्यातवृक्षे। গজপিপুল। तें गजपिप्पलु। तत्पर्य्यायः,—करिपिप्पली, इभकणा, कपिवल्ली, कपिल्लिका, कपिवल्लिका, श्रेयसी, वशिरः, गजाह्वा (र.), कोलवल्ली, इभोषणा (श.), कुञ्जरपिप्पली (शब्दमा.), वशिरः (अ. टी.), गजोषणा, चव्यफलं, चव्यजा, छिद्रवैदेही, दीर्घग्रन्थिः, तैजसी, वर्त्तुली, स्थूलवैदेही। सा चविकायाः फलमिति केचित्। "चविकायाः फलग्राहैः कथिता गजपिप्पली।" इति। गुणाः—दीपनी पाचनी उष्णात्वाद्रसशोधनी ग्राहिणी कटूष्णा रुच्या स्तन्यविवर्द्धिनी च। रा. नि. व. ६। तत्फलं विष्टम्भि दुर्जरं रुच्यं शीतलं वातकोपनं विपाके मधुरं रक्तपित्तघ्नञ्च। सु. सू. ४६ अ.।

**गजपुटम्।** क्ली। औषधपुटनार्थं सपादहस्तपरिमितनिम्नायतवृत्तखाते। উর্দ্ধ ১।০ হাত, আয়ত ১।০ হাত। "सपादहस्तमानेन कुण्डे निम्ने तथायते। वनोपलसहस्रेण पूर्णे मध्ये विधारयेत्। पुटनद्रव्यसंयुक्ताङ्कोष्ठिकां मुद्रितां मुखे। अथार्द्धानि करण्डानि अर्द्धान्युपरि निःक्षिपेत्। एतद्गजपुटम्प्रोक्तं ख्यातं सर्व्वपुटोत्तमम्॥" भा.। "गजप्रमाणगम्भीरं शुषिरं क्रमशस्तल। वितस्तिद्वितयमुखं त्रिवितस्तितलं तथा। एवं विधाय यत्नेन विशिरस्ककरीरवत्। तस्य पादत्रयं सम्यक् पूरयित्वा वनोपलैः। भैषज्यकोष्ठिकां तत्र स्थापयित्वा ततः पुनः। वनोपलैः संवृणुयादेतद्गजपुटं स्मृतम्॥" গভীর ২ হাত বা ১৸০ হাত, ৩ বিগত তলা, ২ বিগত মুখের ফাঁড় গর্ত্ত। अत्रि.। हस्तप्रमाणगर्त्तो यः पुटः स तु गजाह्वयः। इति प्रयोगा.।

**गजप्रिया।** स्त्री। शल्लकीवृक्षे। শাকবিশেষ। हे. च.।

**गजबला।** स्त्री। गोरक्ष्याम्। গোরক্ষচাকুলিয়া। "नयति गजबलामूलं।" च.द. कास.चि.।

**गजभक्षः (क्ष्यः) (कः)।** पुं। तालवृक्षे। अश्वत्थवृक्षे। रा. नि. व. ९।११।

**गजभक्षा (क्ष्या)।** स्त्री। The gum olibanum tree. शल्लकीवृक्षे। प. मु.।

**गजमदः।** पुं। हस्तिमदे। वै. निघ.।

**गजमदहरणी।** स्त्री। शिवलिङ्गिनीलतायाम्। वै. निघ.।

**गजमाचलः (मोटनः)।** पुं। सिंहे। हारा.। श. मा.।

**गजमुक्ता।** स्त्री। करिगण्डस्थमुक्तायाम्। वै. निघ.।

**गजल(ले)ण्डः।** पुं। हस्तिविष्ठायाम्। হাতীর নাদ। भैष. कुष्ठ. चि.। सु. चि. ९ अ.।

**गजवल्लभा।** स्त्री। गिरिकदलीवृक्षे। বুনো কলা। शल्लकीवृक्षे। रा. नि. व. ११।

**गजवाजिप्रिया।** स्त्री। भूमिकुष्माण्डे। ভুঁই-কুমড়া। वै. निघ.।

**गजवैद्यकम्।** क्ली। पालकाप्य(व्य)कृतगजचिकित्साशास्त्रे। चर.।

**गजाख्यः।** पुं। चक्रमर्द्दक्षुपे। চাকন্দা গাছ। रा. नि. व. ४।

**गजा[illegible]म्।** क्ली। पिण्डमूलके। रा. नि. व. ७।

**गजादनः।** पुं। अश्वत्थवृक्षे। र. मा.।

**गजादिनामा।** स्त्री। गजपिप्पल्याम्। "गजादिनामाकरहाटकुष्ठैः।" सु. चि. १८ अ.।

**गजारिः।** पुं। गजमादनशल्लकीवृक्षे। "गजारितरुसिंहयोः।" हड्डचन्द्रः।

**गजाशनः।** पुं। कमलकन्दे। वै. निघ.। अश्वत्थवृक्षे। मद. व. ५। शालवृक्षे। र. मा.।

**गजाशना।** स्त्री। भङ्गायाम्। ভাঙ, সিদ্ধি। श. च.। शल्लकीवृक्षे। पद्ममूले। र. मा.। अश्वत्थवृक्षे। वै. निघ.।

**गजाह्वः।** पुं, क्ली। नागकेशरवृक्षे तत्पुष्पे च। च. द. अर्श. चि. बाहुशालगुड़े।

**गजाह्वया।** स्त्री। यूथिकाक्षुपे। শ্বেত যুঁই। रा. नि. व. १०। गजपिप्पल्याम्। भा. पू. १भ.।

**गजाह्वा।** स्त्री। गजपिप्पल्याम्। "गजाह्वा व्याधिघातका।" भा पू. १भ.।

**गजेष्टा।** स्त्री। भूमिकुष्माण्डे। रा. नि. व. ७।

**गजोपकुल्या।** स्त्री। गजपिप्पल्याम्। वै. निघ. २भ. ग्रहणी. चि.। भैष. कुष्ठचि.।

**गजोपमः।** पुं। कुमार्य्याम्। घृतकुमारी। वै. निघ.।

**गजोषणा ।** स्त्री । गजपिप्पल्याम् । रा. नि. व. ५ ।

**गञ्जा (ञ्ज्वा) (ञ्जिका) ।** स्त्री । मद्यभाण्डे । श. र. । मदिरागृहे । अम. । रत्नखनौ । मे. । गाँजा इति प्रसिद्धे वणिग्द्रव्ये । गुञ्जायाम् । वै. निघ. ।

**गञ्जायिका ।** स्त्री । शक्राशने । सिद्धि, भाङ ।

**गठो(ड़ो)त्थम् ।** क्ली । साम्भरापरपर्य्याये लवणे । साम्भर लवण । रा. नि. व. ६ ।

**गड़ः (कः) ।** पुं । मत्स्यभेदे । गड़ुई माछ । मे. । गुणाः—मधुरः रुचः कषायः शीतः लघुश्च । राज. ३प. । क्ली । साम्भरलवणे । रा. नि. व. ६ ।

**गड़देशजम् ।** क्ली । साम्भरलवणे । रा. नि. व. ६ ।

**गड़लवणम् ।** क्ली । साम्भरदेशजलवणे । साम्भर लवण । गड़ादिलवणं शुभ्रं पृथ्वीजं गड़देशजं । गड़ोत्थञ्च महारम्भं साम्बरं सम्बरोद्भवम् ॥ गुणाः—लवणं ईषदम्लं मलघ्नम् उष्णं दीपनं कफवातार्शोघ्नं कोष्ठशोधनञ्च । रा. नि. व. ६ ।

**गड़ाख्य(दिलवण)म् ।** क्ली । साम्भरलवणे । रा. नि. व. ६ ।

**गड़िः ।** पुं । तरुणवृषे । युवा षाँड़ । रा. नि. व. १९ ।

**गड़िशः ।** पुं । तन्नामकमत्स्यविशेषे । गुणाः—गड़िशो मधुरो ग्राही बल्यो वह्निप्रदो गुरुः । राज. ३प. ।

**गड़ुः (ड़ूः) ।** पुं । पृष्ठग्रन्थौ । कूँज । रा. नि. व. २० । गलगण्डे । पृष्ठगुड़े, स च घाटामस्तकयोर्मध्ये मांसवृद्धिः । अ. म. । शल्यास्त्रे । श. र. । किञ्चुलुके । त्रिका. । मन्यास्तम्भरोगे । वै. निघ. । त्रि । कुब्जे । मे. ।

**गड़ुकम् ।** क्ली । जलपात्रविशेषे । गाड़ु ।

**गड़ुरः (लः) ।** त्रि । कुब्जे । कूँजो । श. र. ।

**गड़ू(ण्डू)पदः ।** पुं । किञ्चुलुके । केँचो । मं दाणा । अम. ।

**गड़ेरः (लः) ।** पुं । मेघे । त्रि. ।

**गड़ोत्थम् ।** क्ली । गड़लवणे । रा. ।

**गड़ोलः ।** पुं । गुड़े । उणा. । ग्रासे । हे. च. ।

**गडु(ड्डू)कः ।** पुं । सौवर्णभृङ्गारे । सोणार गाड़ु । श. र. ।

**गद्या(द्या)ण(ल)कम् ।** क्ली । ४८ अथवा ६४ रत्तिकमाने । लीलावती । वैद्यकम् । शाणषट्के शताधिकद्विनवतिरत्तिकासु वा । २ तोला । "गद्याणोमाषकैः षड्भिः । त्रिभिः शाणैर्भवेत्तोला षड्भिर्गद्याणकं विदुः ॥" तोड़नानन्द. ।

**गणः ।** पुं । अजमोदायाम् । शङ्कुलौ । मं किरमाणीश्रोम्वा । वै. निघ. । चौरनामगन्धद्रव्ये । मे. ।

**गणकर्णिका ।** स्त्री । इन्द्रवारुण्याम् । रा. नि. व. ३ ।

**गणद्रव्यम् ।** क्ली । साधारणद्रव्ये । द्रव्यसमूहे ।

**गणपर्व्वतः ।** पुं । कैलासपर्व्वते । त्रि. ।

**गणपीठकम् ।** क्ली । वक्षसि । श. च. ।

**गणरूपः (कः) ।** पुं । अर्कवृक्षे । आकन्द गाछ । अम. । श्वेतार्कवृक्षे । र. मा. । मन्दारार्के । रक्तार्के । रा. नि. व. १० । See राजार्कः ।

**गणरूपी** (इन्) । पुं । श्वेतार्के । श्वेत आकन्द । र. मा. । अर्कवृक्षे । वै. निघ. । रक्तार्के । रा. नि. व. १० ।

**गणवतीसुतः ।** पुं । दिवोदासे । "धन्वन्तरिर्दिवोदासः काशिराजः सुधोद्भवः । पालिकाख्या गणवती करेणुरुचिरासुतः ।" पालकाप्ये । त्रिका. ।

**गणहासः (कः) ।** पुं । चोरनामकगन्धद्रव्ये । चोरा इति पश्चिमदेशे । गेँठेला । मं गठोला । रा. नि. व. १२ । चण्डालकन्दे । अजमोदायाम् । शङ्कुलौ । वै. निघ. ।

**गणिका ।** स्त्री । यूथिकापुष्पवृक्षे । युँइफुलेर गाछ । र. मा. । श्वेतयूथिकायाम् । श्वेत युँइ गाछ । रा. नि. व. १० । पीतयूथिकायाम् । वै. निघ. । गणिकारिकायाम् । गणिरि । श. र. । हस्तिन्याम् । जटा. ।

**गणिकारिका ।** स्त्री । (Premna seratifolia. Syn. P. Spinosa.) क्षुद्राग्निमन्थे । छोट गणिरि । ते' चिरिनेल्लिचेट्टु । तत्पर्य्यायः,—श्रीपर्णं, अग्निमन्थः, कर्णिका, जया (अ.), तेजोमन्थः, हविर्मन्थः, ज्योतिष्कः, पावकः, अरणिः,



वह्निमन्थः, मथनः (र.), जयः (भा.), गिरिकर्णिका (द्रव्याभि.), पावकारणिः (शब्दमा.), अग्निमथनः, तर्कारी, वैजयन्तिका, अरणीकेतुः, श्रीपर्णी, कर्णिका, नादेयी, विजया, अनन्ता, नदोजा । गुणाः—कटूष्णतिक्तवातकफशोफश्लेष्माग्निमान्द्यार्शोमलविष्टम्भशमहरी । रा. नि. व. ९ । See अग्निमन्थः । गणिकारीपुष्पवृक्षे । वै. निघ. ।

**गणिकारी ।** स्त्री । पुष्पवृक्षविशेषे, कोङ्कणदेशे स्वनाम्ना प्रसिद्धे । वासन्तीफुलेर गाछ । मं गणेरी । तत्पर्य्यायः,—काञ्चनिका, काञ्चनपुष्पी, गन्धकुसुमा, अलिमोदा, वसन्तदूती, वासन्ती, मदनमादिनी । गुणाः—अतिसुरभिः त्रिदोषघ्नी दाहशोषहरा कामोद्दीपनी च । रा. नि. व. १० । गणिकारिकायाम् ।

**गणिरुः ।** पुं । कर्णिकारवृक्षे । कर्णिकाफुलेर गाछ । पारिभद्रवृक्षे । वै.निघ. । स्त्री । हस्तिन्याम् । मे. ।

**गणेरुकः (का) ।** पुं, स्त्री । गणिकारिपुष्पवृक्षे । वै. निघ. ।

**गणेशः (कुसुमः) ।** पुं । रक्तकरवीरवृक्षे । रा. नि. व. १० ।

**गणेशप्रियः ।** पुं । रक्तकरवीरे । "गणेशप्रियमूलानि ।" अर्कप्रकाशः ।

**गणेशभूषणम् ।** क्ली । सिन्दूरे । रा. नि, व.१३ ।

**गणोत्साहः ।** पुं । गण्डके । गण्डार । त्रिका. ।

**गण्डः (कः) ।** पुं । खड्गिनि । गण्डार । मे. । कपोलदेशे । गाल । रा. नि. व. १८ । रोगविशेषे । "निबद्धः श्वयथुर्यस्य मुष्कवल्लम्बते गले । महान्वा यदि वा ह्रस्वस्तं गण्डमिति निर्द्दिशेत् ॥" सु. नि. ११ अ. । करिकपोले । अम. । ग्रन्थौ । चिह्ने । पिटके । मे. ।

**गण्डकर्णः ।** पुं । वाह्यदीर्घकपालिकर्णे । सु. सू. १६ अ. ।

**गण्डकारी ।** स्त्री । वराहक्रान्तायाम् । वराक्रान्ता । श्वेतलज्जालुकायाम् । लज्जावती । र. मा. । खदिरीवृक्षे । अम. । श. च. ।

**गण्डकाली ।** स्त्री । खदिरीवृक्षे । अम. । काकजङ्घायाम् । केओठेङा । शल्लकीवृक्षे । वै.निघ. ।

**गण्डकी ।** स्त्री । इक्षुदण्डे । आथ । नकुल. १२ अ. । स्वनामख्यातनदीविशेषे । मे. ।

**गण्डकुसुमम् ।** क्ली । गजमदे । हारा. ।

**गण्डगात्रम् ।** क्ली । (Annona squamosa.) आतापिफले । आता, नोना । हिं शरीफा । मं शीताफल । गुणाः—"गण्डगात्रं हिमं वृष्यं वातपित्तनिसूदनं । स्रेष्मलं तर्षशमनं वान्त्युत्क्लेशनिपीड़नम् ॥" अत्रि. । श. च. ।

**गण्डगोपालिका ।** स्त्री । आम्रवाटिकास्थकीटविशेषे । आम्पोका हिं गण्डगुयारि । भा. ।

**गण्डदूर्व्वा ।** स्त्री । जलोपरिजायमानदूर्व्वाविशेषे । दूर्व्वाविशेष, गेँटे दूर्व्वा । हिं गाण्डरिदुविपाच । मं गण्डरदूर्वा गाढ़ीहरियाली । कं मीनगत्ते । तत्पर्य्यायः,—गण्डाली, अतितीव्रा, मत्स्याक्षी, ग्रन्थिला, ग्रन्थिपर्णी, वारुणी, मीननेत्रा, श्यामग्रन्थिः, सूचिपत्रा, श्यामकान्ता, जलस्था, शकुलाक्षी, कलाया, चित्रा । गुणाः—मधुरा शीतला वातपित्तज्वरघ्नी द्वन्द्वदोषघ्नी भ्रमतृष्णाश्रमघ्नी च । रा. नि. व. ८ । "गण्डदूर्व्वा हिमा लोहद्राविणी ग्राहिणी लघुः । तिक्ता कषाया मधुरा वातकृत्कटुपाकिनी । दाहतृष्णाबलासास्रकुष्ठपित्तज्वरापहा ॥" भा. ।

**गण्डपोलिका ।** स्त्री । कीटभेदे । गण्डहस्ता ।

**गण्डप्रपाली ।** स्त्री । कीटविशेषे ।

**गण्डफलकः ।** पुं । प्रशस्तगण्डस्थले । प्रशस्त गाल । वै. निघ. ।

**गण्डमाला ।** स्त्री । Inflamation of the glands of the necks &c. स्वनामख्यातगलरोगविशेषे । गण्डमाला । तस्य सम्प्राप्तिरूपे—"कर्कन्धुकोलामलकप्रमाणैः कक्षांसमन्यागलवङ्क्षणेषु । मेदःकफाभ्यां चिरमन्दपाकैः स्याद्गण्डमाला बहुभिश्च गण्डैः ॥" मा. नि. । "मेदस्थाः कण्ठमन्याक्षकक्षावङ्क्षणगा मलाः । सवर्णान् कठिनान् स्निग्धान्वार्त्ताकामलकाकृतीन् । अवगाढ़ान् बहून् गण्डान् चिरपाकांश्च कुर्व्वते । पच्यन्ते ऽल्परुजस्त्वन्ये स्रवन्त्यन्येऽतिकण्डुराः । नश्यन्त्यन्ये भवन्त्यन्ये दीर्घकालानुबन्धिनः । गण्डमालापची चेयं दूर्व्वेव क्षयवृद्धिभाक् । तां त्यजेत् सज्वरच्छर्द्दिपार्श्वरुक्कासपीनसाम् ॥" वा. उ. २९ अ. । "छर्द्दिर्विरेचनं स्वेदो नस्यं धूमः शिराव्यधः । अग्निकर्म्म क्षारयोगः प्रलेपो लङ्घनानि च । पुराणघृतपानञ्च जीर्णलोहितशालयः ॥" इति पथ्यापथ्यम् ।

**गण्डमालिका।** स्त्री। गण्डमालायाम्। लज्जालुकायाम्। रा. नि. व. ५।

**गण्डरोग:।** पुं। अश्वस्य मुखरोगभेदे। "गण्डाभ्यन्तरगो गण्ड: गण्डरोग इति स्मृत:।" ज द. २९ अ.।

**गण्डशैल:।** पुं। ललाटे। हे. च.।

**गण्डस्थलम्।** क्ली। कपोलदेशे। वै. निघ.।

**गण्डाङ्ग:।** पुं। खङ्गिनि। গণ্ডার। श. च.।

**गण्डारि:।** पुं। कोविदारवृक्षे। রক্তকাঞ্চন গাছ। भा.। सत्त्वविशेषे। वै. निघ.।

**गण्डारी।** स्त्री। मञ्जिष्ठायाम्। के.।

**गण्डालजी।** स्त्री। गण्डजरोगे। लक्षणं—"गण्डालजी स्थिर: शोफ: गण्डे दाहज्वरान्वित:॥" वा. उ. २१ अ.।

**गण्डालिनी (ली)।** स्त्री। गण्डदूर्व्वायाम्। रा. नि. व. ८। श्वेतदूर्व्वायाम्। अम.। सर्पाक्ष्याम्। সুগন্ধ রাস্না। भा.।

**गण्डास्थि।** क्ली। कपोलास्थिद्वये। च. शा. ७ अ.। सु. शा. ५ अ.।

**गण्डि:।** पुं। वपुषे। कण्ठमणौ। तरुशाखायाम्। वै. निघ.। तरुकाण्डे। हे. च.।

**गण्डिरिका।** स्त्री। स्नुहीवृक्षे। चक्र.।

**गण्डीर:।** पुं। शाकविशेषे। গণ্ডিনী, শালিঞ্চ, শমঠ শাক, শুনছিন্না। अ. टी. भ.। च. सू. ४ अ.। मञ्जिष्ठायाम्। स्नुहीवृक्षे। रा. नि. व. ८। कटुसूरणे। वै. निघ.।

**गण्डीराद्यतैलम्।** क्ली। मण्डलकिटिमादिकुष्ठरोगेषु हितम्। "गण्डीरिकाचित्रकमार्कवार्ककुष्ठद्रुमत्वग्लवणै: समूत्रै:। तैलम्पचेत्"......। তৈল ৪ শ. গোমূত্র ১৬ শ.। কল্ক স্নুহী-ক্ষীর বা মঞ্জিষ্ঠা, চিত্রকমূল, ভৃঙ্গরাজ, আকন্দ-আটা, কুড়, কুটজত্বক্ বা সোণালু-ছাল এবং সৈন্ধব লবণ মিলিত ১ শ.। च. द.।

**गण्डीरिका (री)।** स्त्री। स्नुहीवृक्षे। মনসা সিজু, তেকাঁটা সিজু। रा. नि. व. ८। च. द. गण्डीराद्यतैले। मञ्जिष्ठायाम्। प. मु.। शाकविशेषे। भा. म. प्रमेह. चि.। इक्षौ। रक्तकाञ्चनवृक्षे। वै. निघ. संग्रहणी. चि. चाङ्गेरीघृते।

**गण्डु:।** पुं, स्त्री। ग्रन्थौ। वै निघ.। उपधाने। जटा.।

**गण्डूपद:।** पुं। किञ्चुलके। কেঁচো। अम.।

**गण्डूपदभवम्।** क्ली। शीषके। हे. च.।

**गण्डूपदाद्यतैलम्।** क्ली। व्रणरोगे हितम। कटुतैलं ४ श. पाकार्थंजलं १६ श. कल्कार्थंगण्डूपद: (কেঁচো) १ श.। अथवा कटुतैलं १ श कल्कार्थंगण्डूपदद्शकं (কেঁচো ১০টা) च. द.।

**गण्डूपदी।** स्त्री। जलपिप्पल्याम्। वै. निघ.। क्षुद्रकिञ्चुलुकायाम्। अम.। तत्पर्य्याय:,—शिली (अ.), सिली (अ. टी. भ.)।

**गण्डूली।** स्त्री। गण्डदूर्व्वायाम्। वै. निघ.।

**गण्डूष: (धारणं)।** पुं, क्ली। चुलुके। গণ্ডূষ। स्नेहक्षीरकषायादिद्रवैर्मुखापूरणं गण्डूष:। आपूर्य्य च मुखेन धारणं गण्डूषधारणमुच्यते। तस्य द्रव्यमात्रा द्रवद्रव्यं पलमात्रं सूक्ष्मचूर्णस्य च कोलपरिमाणम्। तद्धारणमात्रा—"आसञ्चर्य्या तु या मात्रा गण्डूषे सा प्रकीर्त्तिता।" च. द.। तच्च गण्डूषधारणं तावत्कार्य्यं यावत्कफपूर्णास्यता दोषच्छेद: नेत्रघ्राणस्रुतिश्च भवेत्। गण्डूषस्तु विध: स्नेहनशमनशोधनरोपणभेदेन। "स्निग्धोष्णै: स्नैहिको वाते स्वादुशीतै: प्रसादन:। पित्ते कट्वम्ललवणैरुष्णै: संशोधन: कफे। कषायतिक्तमधुरै: कटूष्णै रोपणो व्रणे। इति। दद्याद्द्रवेषु चूर्णञ्च गण्डूषे कोलमात्रकम्। कर्षप्रमाण: कल्कस्य कवले दीयते बुधै:। धार्य्यन्ते पञ्चमाद्वर्षाद्गण्डूषा: कवलादय:। व्याधेरपचयस्तुष्टिर्वैशद्यं वक्त्रलाघवं। इन्द्रियाणां प्रसादश्च गण्डूषे विहिते भवेत्॥" भा. आसञ्चारी मुखे पूर्णे गण्डूष: कवलोऽन्यथा। द्रवेषु दद्याच्चूर्णं हि गण्डूषे कर्षमात्रकम्॥ पलमात्रं द्रवं सर्व्वं गण्डूषे दापयेद्बुध:। द्रवेण कार्य्यो गण्डूष: कल्केन कवल: स्मृत:। कल्क: शकलरूप: स्यान्न तु सूक्ष्मं प्रदापयेत्॥ एवाङ्गितिचतु:पञ्चवारान् कुर्य्यादनालस:।" करिशुण्डाग्रभागे। प्रसृतिपरिमिते। मे.।

**गण्डूषा।** स्त्री। गण्डूषे। श.।

**गण्डोल:।** पुं, क्ली। गुड़। त्रिका.। शर्करायाम्। ग्रासे। वै. निघ.।

**गतशोक:।** पुं। अशोकवृक्षे। वा. सू. १५ अ. रोध्रादि.।



**गतमन्मक:।** पुं। निर्म्मद-हस्तिनि। श.।

**गतार्त्तवा।** स्त्री। निवृत्तरजस्कायां वृद्धायां स्त्रियाम्। रा. नि. व. १८।

**गतासू:।** त्रि.। मृते।

**गति: (क:)।** स्त्री, पुं। नाड़ीभेदे। নালী। नाड़ीव्रणे। मे.। अश्वस्य गतिविशेषे। ঘোড়ার চাল, কদম। प्र.। तद्यथा—"सङ्कीर्णा विकटभ्रष्टावक्रा सौष्ठववर्ज्जिता। अत्यूर्द्ध्वा वलिता चैव वाजिनां निन्दिता गति:॥ षोड़शच्छोटिकाभिस्तु करवेष्टितजानुभि:। शतं द्विगुणितङ्गत्वा हस्तानां पुनरेति य:॥ स शीघ्रगतिरित्युक्तो वाजी धन्यस्तपोधनै:। दश हीना भवन्त्येते मध्यमाधमगाश्चया:॥ दूरमुत्क्षिप्य य: पादांस्तताङ्गारान् स्पृशन्निव। पुनर्य्याति सुसंहृष्टो वाजी भद्रगतिस्तु स:॥ पूजिता वृषमातङ्गसिंहशार्द्दूलगामिन:। अतोऽन्यगतयो नेष्टा: सर्व्वदैव तुरङ्गमा:॥" ज. द ७ष.। "गतय: षड्विधा धारा: स्कन्दितं रेचितं प्लुतम्। धौरितकं वल्गितञ्च तासां लक्ष्म पृथक् पृथक्॥" इति शुक्र:। "धोरितं वलितं प्लुत्युत्तेजितोत्तेजितानि च। गतय: पञ्च धाराख्यास्तुरङ्गानां क्रमादिमा:॥" हे. च.। "गति: प्लुता चतुष्का च तद्वन्मध्यजवापरा। पूर्णवेगा तथा चान्या पञ्च धारा: प्रकीर्त्तिता:॥" "गतिरेका प्लुता चास्य चातुरीया द्वितीयका। वेगसन्धिस्तृतीया च धारा वेगवती तुरी॥ धारा तु पञ्चमी प्रोक्ता न शृणोति न पश्यति। सर्व्वकर्म्मक्षतो वाजी तस्मात्तां परिवर्ज्जयेत्॥" नकुल.।

**गतिला।** स्त्री। नदीविशेषे। उ.।

**गदम्।** क्ली, पुं। विषे। कुष्ठौषधौ। কুড়। रा. नि. व. ६।१२। वै. निघ. अन्तकसन्निपात.चि.। रोगे। रा. नि. व. २०।

**गदघ्न:।** पुं। नन्दीवृक्षे। वै. निघ.।

**गदनिश्चय:।** पुं। माधवीय-रोगनिश्चायकग्रन्थे।

**गदमुरारि:।** पुं। प्रौढ़ामज्वरे रस:। "रसबलिशिललौहव्योषताम्राणि तुल्यान्यथ सदरदनागं भागमेतत् प्रदिष्टं, भवति गदमुरारिश्चास्य गुञ्जाद्वयं।" রস, গন্ধক, মনছাল, লৌহ, ত্রিকটু, তাম্র, হিঙ্গুল, শীষা প্রত্যেক সমভাগ। र. सा. सं.।

**गदविनोदनिघण्टु:।** पुं। वैद्यकनिघण्टुभेदे।

**गदहर: (री (इन्))।** पुं। वैद्ये। वै. निघ.।

**गदा।** स्त्री। पाटलवृक्षे। श. च.।

**गदाख्यम्।** क्ली। कुष्ठे। কুড়। र. मा.।

**गदागदौ।** पुं द्वि.। अश्विनीकुमारौ। त्रिका.।

**गदाग्रणी:।** पुं। क्षयरोगे। रा. नि. व. २०।

**गदाम्बर:।** पुं। मेघे।

**गदायुध:।** पुं। लगुड़े। লাঠি।

**गदाराति:।** पुं। औषधे। रा. नि. व. २०।

**गदार्त्तिका।** स्त्री। गोजिह्वायाम्। পাথর কুচি। वै. निघ.।

**गदाह्व(य)म्।** क्ली। कुष्ठे। কুড়। श. र.।

**गदी (इन्)।** त्रि। रोगिणि। वै. निघ.।

**गद्गद:।** पुं। वातव्याधिविशेषे। তোৎলা। सु. सू. १अ.। See मिन्मिन:।

**गद्याण:।** पुं। षट्माषके। कालिङ्ग.।

**गद्यान(ल)कम्।** क्ली। अष्टचत्वारिंशद्-गुञ्जामाने। लीला.। चतु:षष्टिक-गुञ्जामाने। के.।

**गन्ता।** त्रि। संवरणशीले। सु. शा. ३अ.।

**गन्त्री।** स्त्री। गोशकटे। अ.। গরুর গাড়ী।

**गन्धम्।** क्ली। अगुरुणि। कृष्णागुरुणि। रा. नि. व. १२।

**गन्ध (क:)।** पुं। (Sulphur.) स्वनामख्यातखनिजोपधातौ। গন্ধক। हिं गन्धक। फार्शि गोगिर्द। तत्पर्य्याय:,—गन्धाश्म, सौगन्धिक: (अ.), गन्धिक:, सुगन्धिक: (अ. टी.), गन्धपाषाण:, पामाघ्न: (र), पामारि:, शुल्वारि: (हे,) गन्धी (शब्दर.), गन्धमोदन:, पूतिगन्ध:, वर:, सुगन्ध:, दिव्यगन्ध:, गन्ध:, रसगन्धक:, कुष्ठारि:, क्रूरगन्ध:, कीटघ्न:, शरभूमिज:। "श्वेतद्वीपे पुरा देव्या क्रीड़न्त्या रजसाप्लुतं। दुकूलं तेन वस्त्रेण स्नातायाम् क्षीरनीरधौ। प्रसृतं यद्रजस्तस्माद्गन्धक: समजायत॥" भा.। स च रक्तपीतश्वेतकृष्णत्वात् चतुर्विध:। पीत: औषधेषु, श्वेत: चर्म्मरोगेषु बाह्यप्रयोगेषु च व्यवहार्य्य:। र. सा. सं.। "चतुर्धा गन्धक: प्रोक्तो रक्त: पीत: सितोऽसित:। रक्तो हेमक्रियासूक्त: पीतश्चैतो रसायने। व्रणादि-

लेपने श्वेत: कृष्ण: श्रेष्ठ: सुदुर्लभ:॥ गुणा:—कटुक: वीर्य्यौंष्णस्तुवर: सर:। पित्तल: कटुक: पाके कण्डूवीसर्पजन्तुजित्। हन्ति कुष्ठक्षयप्लीह-कफवातान् रसायन:॥ अशोधितो गन्धक एष कुष्ठं करोति तापं विषमं शरीरे। शोषञ्च रूपञ्च बलं तथौज: शुक्रं निहन्त्येव करोति चास्रम्॥" भा. पू. १भ.। तच्छुद्धि:—"लौहपात्रे विनिक्षिप्य घृतमग्नौ प्रतापयेत्। तप्ते तस्य समानञ्च नि:-क्षिपेद्गान्धकं रज:। विद्रुतं गन्धकं ज्ञात्वा दुग्ध-मध्ये निधापयेत्। एवं गन्धकशुद्धि: स्यात्सर्व्व-कार्य्येषु योजयेत्॥" एवं त्रिफलाजलभृङ्गराज-स्वरसादौ नि:क्षिपेदिति मतान्तरम्। सा. कौ.। शुद्धगन्धकगुणा:—"शुद्धगन्धो हरेद्रोगान् कुष्ठमृत्यु-ज्वरादिकान्। अग्निकारी महानुष्णो वीर्य्यवृद्धिं करोति च॥" र. मा. सं. ५ अ.। आमोदे। विश्व.। क्षुद्ररोगे। वै. निघ.। शोभाञ्जनवृक्षे। श. र.। गन्धरसे। वै. निघ.।

**गन्धककज्जलि:**। पुं। सन्निपातज्वरे देय:। पाठ:—"कण्टकारी सिन्धुवारस्तथा नाटकरञ्जकं। अमीषां रसमादाय कृत्वा खर्परखण्डके। प्रक्षिप्य गन्धकं तत्र ज्वालां मृद्वग्निना दहेत्। गन्धके स्नेह-तापन्ने पारदं तत्समर्ङ्क्षिपेत्। मिश्रीकृत्य ततो द्वाभ्यां द्रवं तमवतारयेत्। आमर्द्दयेत्तथा तत्तु यथा स्यात् कज्जलप्रभम्। ततस्तु रक्तिकामस्य जीरकस्य च माषकं। माषैकं लवणस्यापि पर्णे कृत्वा प्रदापयेत्। ज्वरे त्रिदोषजे घोरे जलमुष्णं पिबेदनु॥" रस. र.।

**गन्धकतैलम्**। क्ली। कर्णनाड्यां हितम्। "निशागन्धपले द्वे तु कटुतैलं पलाष्टकं। धूर्त्तपत्र-रसे सिद्धं कर्णनाड़ीजिदुत्तमम्॥" कटुतैलं ८ प. धुस्तूरपत्ररस: ८ प.। कल्क:—हरिद्रा १ प. गन्धक: १ प. एकत्र पचेत्। रस. र.।

**गन्धकद्रावकम्**। अर्कीकृतगन्धकविशेषे। शा.। See गन्धद्रावम्।

**गन्धकन्दक:**। पु। कशेरौ। रा. नि. व. ८।

**गन्धकली**। स्त्री। प्रियङ्गौ। च. द. विष. चि.। चम्पककलिकायाम्।

**गन्धकस्तुरिका**। स्त्री। स्वनामख्यात-गन्ध-द्रव्यविशेषे।

**गन्धकारी**। स्त्री। श्वेतखञ्जालुके। अङ्कको इत्र। वै. निघ.।

**गन्धकाष्ठम्**। क्ली। अगुरुकाष्ठ। त्रिका.। शवरचन्दने, ईषत्पीतचन्दने। रा. नि. व. १२। कृष्णागुरुणि। वै निघ.।

**गन्धकी**। स्त्री। सल्लक्याम्। शालुई। च. द. वा. व्या. एकादशशती. प्र. तैले।

**गन्धकुटी**। स्त्री। मुरामांस्याम्। रा. नि. व. १२।

**गन्धकुसुमा**। स्त्री। कोङ्कणदेशे ख्याते गणि-कारीपुष्पवृक्षे। रा. नि. व. १०।

**गन्धकेलिका**। स्त्री। कस्तुर्य्याम्। रा. नि. व. १२। गन्धमालत्याम्। वै. निघ.।

**गन्धकोलिका**। स्त्री। गन्धमालतीतुल्ये गन्ध-द्रव्यविशेषे। गुणा:..."स्निग्धोष्णा कफहृत्तिक्ता सुगन्धा गन्धकोलिका। गन्धकोलिकया तुल्या विज्ञेया गन्धमालती॥" भा. क. व.।

**गन्धखेड़(क)म्**। क्ली। गन्धशीरणे। গন্ধ-ঢেণা। तत्पर्य्याय:,—गन्धवीरणं, भूतृणं, सौहिङ्गं, गोमयप्रियं (र.), गन्धतृणं, सुगन्धभूतृणं, सुरस:, सुरभि:, सुगन्धि:, मुखवास:। एतच्च सुगन्धि ईषत्तिक्तं रसायनं स्निग्धं मधुरं शीतलं कफपित्त-श्रमहरञ्च। रा. नि. व. ८।

**गन्धगर्भ:**। पुं। बिल्ववृक्षे। वै. निघ.।

**गन्धगठा**। स्त्री। मुरामांस्याम्। वै. निघ.।

**गन्धग्राही**। स्त्री। नासिकायाम्। वै. निघ.।

**गन्धचन्दनम्**। क्ली। सम्बरचन्दने। श्वेत-चन्दने।

**गन्धचेलिका (ली)**। स्त्री। लताकस्तुर्य्याम्। प. मु.। कस्तूर्य्याम्। मृगनाभि। त्रिका.। जवादि कस्तूर्य्याम्। খাটাশী। वै. निघ.।

**गन्धजातम्**। क्ली। तेजपत्रे। श. र.।

**गन्धज्ञा**। स्त्री। नासायाम्। हे. च.।

**गन्धतण्डुल:**। पुं। सुगन्धशाली। रा. नि. व. १६।

**गन्धतिरिय:**। पुं। तिरियनाम-शालिधान्य-विशेषे।

**गन्धतुलसी**। स्त्री। सुगन्धतुलसीक्षुपे। ভুলগ-তুলসী, গোলাপতুলসী। प. मु.।

**गन्धतूर्य्यम्**। क्ली। वाद्यविशेषे। तत्पर्य्याय:,—रणतूर्यं, महास्वन: (शब्दर.)।



**गन्धतृणम्**। क्ली। Andropogon schoenanthus.) स्वनामख्याततृणे सुगन्धभूतृणे वा। গন্ধতৃণ, সুগন্ধি তৃণ। गुणा:—सुगन्धि ईष-त्तिक्तं रसायनं मधुरशीतं कफपित्तश्रमघ्नञ्च। रा. नि. व. ८। वालके। वै. निघ.।

**गन्धतैलम्**। क्ली। पक्वतैलविशेषे। आवर्त्तमान-दुग्धे गन्धकरजो दत्त्वा तज्जातदधिजं घृतं गन्ध-तैलमुच्यते। इदं गलत्कुष्ठे लेपनभक्षणाद्धितम्। "आवर्त्तमाने पयसि दत्त्वा गन्धकजं रज:। तज्जातदधिजं सर्पिर्गन्धतैलं वदन्ति हि। गन्धतैलं गलत्कुष्ठं हन्ति लेपाच्च भक्षणात्॥" अत्रि.। मतान्तरं यथा—"अर्कक्षीरै: स्नुहीक्षीरैर्वस्त्रं लिप्यन्तु सप्तधा। गन्धकं नवनीतेन पिष्टा वस्त्रं प्रलेपयेत्। तद्वर्त्तिर्ज्वालिता दण्डे धृता धार्य्या त्वधोमुखी। तैलं पतत्यध: पात्रे ग्राह्यं योगेषु योजयेत्॥" भैष.। अन्यत् भग्नरोगे हितम्। सु. चि. ३ अ. द्रष्टव्यं। अपरं सव्रणभग्नाधिकारे। चतु:शरावी त्रितकृष्णतिलान् गृहीत्वा वस्त्रेण पोट्टलीबद्धान् कृत्वा स्रोतोजले निमज्ज्य रात्रौ स्थापयेत्। ततो दिवसे आतपे शोषयेद्दिनसप्तकं यावत्। तत्तिल-तुल्यपरिमाणे गव्यदुग्धे रात्रौ तिलान् प्रक्षिप्य दिवा प्रसार्य्य आतपे शोषयेत्। तदनुभाव्यद्रव्य-समयष्टिमधुक्वाथेन तत: पुन: क्षीरेण विभाव्य शोषयित्वा चूर्णयेत्। अथ काकोल्यादिचूर्णं तिलचूर्ण-चतुर्थांशं वा समं वा गृहीत्वा तिलचूर्णेन मेलयेत्। तत: एलादिगन्धद्रव्यशृतं क्षीरं तावन्मात्रं ग्राह्यं यावता पीड़नार्थं समस्तं तिलादिचूर्णम् आर्द्रं भवेत्। (इति वृद्धोपदेश:।) एवंविधं निष्पीड़ितं तैलं काकोल्यादिशतपुष्पान्तैस्तथा एलादिशृङ्गाटकान्तै: कल्कद्रव्यै: तैलचतुर्गुणजलेन यथाविधि पाच्यं। क्षीरशुक्ला क्षीरविदारी, अनन्ता दूर्व्वा, मधूलिकं नर्कटहस्तितृणम्। च. द.।

**गन्धत्वक्**। स्त्री। एलवालुके। रा. नि. व. ४।

**गन्धदला**। स्त्री। अजमोदायाम्। वनयमानी। रा. नि. व. ६।

**गन्धद्रव्यम्**। क्ली। पक्वतैलसुवासनद्रव्ये। গন্ধ মশলা। तानि यथा—"एलाचन्दनकुङ्कुमा-गुरुसुराकक्कोलमांसी- शटीश्रीवासच्छदग्रन्थिपर्णशश-भृत्चौणीध्वजोशीरकम्। कस्तूरीनखपूतिगन्धजल-मुस्ता यौलवङ्गादिक गन्धद्रव्यमिदं प्रदेयमखिलं श्रीविष्णुतैलादिषु॥" च. द.। अन्यच्च यथा—कुष्ठञ्च नालिका पूतिरुशीरं श्वेतचन्दनं। जटा मांसी तेजपत्र नखी मृगमद: फलं। कक्कोलं कुङ्कुमञ्चोचं लताकस्तूरिका वचा। सूक्ष्मैला गुरुमुस्तञ्च कर्पूरं ग्रन्थिपर्णकम्। चौवास: कुन्दुरु दैवकुसुमङ्गन्धमातृका। सिह्लकी मिषिका मेथी भद्रमुस्तं तथा शटी। जातीकोष: शैलजञ्च देव-दारु सजीवकम्। एतानि गन्धद्रव्याणि॥" तत्कुद्यादिकं पञ्चपल्लवतोयेन भवति। "आम्र जम्बूकपित्थानां वीजपूरकविल्वयो:। गन्धकर्म्मणि सर्व्वत्र पत्राणि पञ्चपल्लवम्॥" भैष.। गुणा:—रुच्यं दीपनं पाचनं मुखदौर्गन्ध्यहरं मेद:श्रमघ्नञ्च। रा. नि. व.।

**गन्धद्रावकम्**। क्ली। अर्कीकृतौषधविशेषे। দ্রাবকবিশেষ। साधनविधि: यथा—"काशीषं गन्धकं वापि सन्दहेद् यत्नयोगत:। सोरकञ्चापि (সোরা) सन्दह्य द्वयोर्धूमं विमिश्रयेत्। शीश-पात्रेऽम्बुवाष्पेण द्रावकं तेन जायते॥ निर्ज्जलं तन्न सेवेत परं दाहकरं हि तत्। चतुर्दशगुणै-स्तोयैर्युतं विन्दुमितं पिबेत्॥" अत्रि.।

**गन्धधूमज:**। पुं। स्वादुनि अगुरुसारे। স্বাদু অগুরু। रा. नि. व. १२।

**गन्धधूलि: (ली)**। स्त्री। कस्तूर्य्याम्। हे. च.।

**गन्धनकुल:**। पुं। छुच्छुन्दर्य्याम्। ছুঁচো। छारा।

**गन्धनाकुली**। स्त्री। रास्नायाम्। अम.। (Ophioxylon serpentinum.) नाकुली-नामकन्दशाकभेदे, गन्धरास्नायाम्। সুগন্ধ নাকুলী, গন্ধরাস্না। हिं नाइ। तत्पर्य्याय:,—महासुगन्धा, सुवहा, सर्पाक्षी, फणिहन्त्री, नकु-लाढ्या, अहिभुक्, विषमर्द्दनिका, अहिमर्द्दनी, विषमर्द्दनी, महाहिगन्धा, अहिलता। गुणा:—"नाकुली तुवरा तिक्ता कटुकोष्णा विनाशयेत्। भोगिलूतावृश्चिकाखुविषज्वरकृमिव्रणान्॥" भा.। कटुतिक्तोष्णा त्रिदोषघ्नी नकुल्या ईषच्छ्रेष्ठा च। रा. नि. व. ६।

**गन्धनामा (म्नी)**। पुं। रक्तपुष्पतुलस्याम्। सं सुवासिक औषधिविशेष। र. मा.। स्त्री (म्नी)। तन्नासक क्षुद्ररोगभेदे। ত্বগ্গত ফোড়া। "ताट्टशी महती त्वक्का गन्धनामेति कीर्त्तिता।" वा. उ. ३१ अ.। लक्षणं यथा—"एकामेताट्टशीं दृष्ट्वा पिड़कां

स्फोटसन्निभां। त्वग्जातां पित्तकोपेन गन्धनाम्नीं प्रचक्ष्यते ॥" मा. नि.। भा. म. ४भ.।

**गन्धनालिका (ली)।** स्त्री। नासिकायाम्। त्रिका.।

**गन्धनिलया।** स्त्री। नवमल्लिकायाम्। मं वटमोगरी। श. च.।

**गन्धनिशा।** स्त्री। गन्धहरिद्रायाम्। आम-आदा। मं आंबेहलद। रा. नि. व. ६।

**गन्धपत्र(क)म्।** क्ली। तेजपत्रे। वै. निघ. अश्व:. चि. कनकार्णवरसे। सुगन्धपत्रविशेषे। পচাপাত। "गन्धाढ्या सौरभेयी च गन्धपत्रं नपुंसकं।" गुणाः—गन्धपत्रं वातहरं शीतलं वह्निवर्द्धनम्। रा. नि. व. १०। प्रसारणीपत्रे। গন্ধভাদুলের পাতা। सुदर्शनचूर्ण. ज्व. चि.। पुं। श्वेततुलस्याम्। मरुवकवृक्षे। গন্ধতুলসী, নাগদনা इति केचित्। वर्व्वरे। কাল বাবুই। रा. नि. व. १०। नागरङ्गवृक्षे। विल्ववृक्षे। रा. नि. व. ११।

**गन्धपत्रा (त्रिका) (त्री)।** स्त्री। मालवे प्रसिद्धगन्धपलाश्याम्। पलाशनाम्न इति दाक्षिणात्याः। শটীবিশেষ, গন্ধশটী, আম আদা। अजमोदायाम्। বনযমানী। रा. नि. व. १०। गङ्गापत्र्याम्। পত্রশাকবিশেষ। रा. नि. व. १०। अश्वगन्धायाम्। अम्बष्ठायाम्। আকনাদি। रा. नि. व. ४।

**गन्धपर्णम्।** क्ली। काकपुष्पे।

**गन्धपर्णी।** स्त्री। अम्बष्ठायाम्। অশ্বাড়া।

**गन्धपलाशजा (शिनी)।** स्त्री। वंशलोचन-भेदे। वै. निघ.।

**गन्धपलाशिका (शी, सी)।** स्त्री। (Curcuma amhaldi zerumbet.) गन्धशट्याम्। तन्नामकसुगन्धद्रव्ये। गन्धपलाशीति काश्मीरे प्रसिद्धा। গন্ধশটী, আমআদা। मं कापूरकाचरी, आंबेहलद। गुणाः—"भवेद्गन्धपलाशी तु कषाया ग्राहिणी लघुः। तिक्ता तीक्ष्णा च कटुकानुष्णास्यमलनाशिनी। शोथकासव्रणश्वासशूलहिक्काग्रहापहा॥" भा.। कटुः स्वादुः तीक्ष्णोष्णा वातकफघ्नी कासच्छर्द्दिघ्नी पित्तकोपनी च। रा. नि. व. ६। (का) हरिद्रायाम्। हारा.।

**गन्धपल्लवा।** स्त्री। गन्धपलाश्याम्। শটীভেদ। वै. निघ.।

**गन्धपाषाणः।** पुं। गन्धके। र. मा.। भैष. कुष्ठ. चि.।

**गन्धपिण्डिका।** स्त्री। गन्धकजारणकारणार्थं सगन्धकपिष्टौ। "शुद्धसूतपलैकन्तु कर्षैकं गन्धकस्य च। खिन्नखल्ले विनिक्षिप्य देवदालीरसप्लुतम्। मर्द्दयेच्च कराङ्गुल्या जायते गन्धपिण्डिका॥" र. चि. ५ अ.।

**गन्धपिण्डीरः।** पुं। कृष्णमदनवृक्षे। কাল ময়না গাছ। मं कालेगेंल। वै. निघ.।

**गन्धपिशाचिका।** स्त्री। धूपे। हें. च.। छुच्छुन्दर्य्याम्। वै. निघ.।

**गन्धपोता।** स्त्री। गन्धपत्रायाम्। रा. नि. व. ६। गन्धशट्याम्। वै. निघ.।

**गन्धपुष्पः (कः)।** पुं। (Calarpus Rotang.) वेतसवृक्षे। বেত গাছ। बहुवारवृक्षे। रा. नि. व. ९।११। अङ्कोटवृक्षे। আঁকোড় গাছ। जटा.। अशोकवृक्षे। नीलीवृक्षे। वै. निघ.।

**गन्धपुष्पा।** स्त्री। गणिकारिकापुष्पवृक्षे। केतक्याम्। কেয়া গাছ। रा.नि.व. १०। नील्याम्। रा. नि. व. ४।

**गन्धपूतना।** स्त्री। पूतनाभेदे।

**गन्धप्रियङ्गुः।** पुं, स्त्री। प्रियङ्गुभेदे। প্রিয়ঙ্গু লতা। हिं फुलप्रियङ्गु। मं गहुला। गुणाः—तीक्ष्णः तिक्तः वृष्यः शीतलः केश्यः वान्तिभ्रान्तिदाहपित्तरक्तज्वरमोहस्वेदकुष्ठमुखजाड्यतृष्णाहरः वातं गुल्मं विषं मेदं मेहञ्च नाशयेत्। वीजं—कषायं मधुरं शीतलं रुच्यं ग्राहि गुरु रक्तपित्तघ्नं मलविष्टम्भि बल्यं पित्तघ्नं कफघ्नम् आध्मानकरञ्च। वै. निघ.।

**गन्धफणिज्झकः।** पुं। रक्ततुलसीवृक्षे। र. मा.।

**गन्धफलः।** पुं। कपित्थवृक्षे। विल्ववृक्षे। तेजःफलवृक्षे। रा. नि. व. ११।

**गन्धफला।** स्त्री। प्रियङ्गुवृक्षे। श. र.। मेथिकायाम्। शल्लकीवृक्षे। रा. नि. व. ६।११। सुरामांस्याम्। वै. निघ.।

**गन्धफलिका।** स्त्री। स्थूलैलायाम्। रा. नि. व. ६।



**गन्धफली।** स्त्री। प्रियङ्गौ। वै. निघ.। चम्पककलिकायाम्। চাঁপার কলি। रा. नि. व. १०।

**गन्धवधूः।** स्त्री। शट्याम्। मं कापूरकाचरी, कचोरा। चिरानामगन्धद्रव्ये, चौड़ानामदेवदारुभेदे। रा. नि. व. १२।

**गन्धवन्धा।** स्त्री। नासिकायाम्।

**गन्धवन्धुः।** पुं। आम्रवृक्षे। रा. नि. व. २३।

**गन्धवह(हु)लः।** पुं। सुगन्धशालिधान्ये। वै. निघ.। सितार्ज्जकवृक्षे। শ্বেতপত্র ক্ষুদ্র তুলসী। रा. नि. व. १०। स्त्री। श्वेतार्ज्जके। বাবুই। मं श्वेतआजवला। गोरक्षचिञ्चायाम्। रा. नि. व. ५।

**गन्धभद्रा।** स्त्री। प्रसारण्याम्। গন্ধভাদুলিয়া। मं गन्धलीलता। श. च.।

**गन्धभाण्डः।** पुं। गर्द्दभाण्डवृक्षे। श. र.। आम्रातके। আমড়া। च. सू. ४अ.।

**गन्धभेदकः।** पुं। कटके। काचके। लौहे। तिलके। रा. नि. व. २३।

**गन्धमांसी।** स्त्री। A kind of Indian spikenard. सुगन्धजटामांस्याम्। मं कं बहुलगन्धजटामांसी। तत्पर्य्यायः,—केशी, भूतजटा, पिशाची, पिशाचिका (रा.), भूतना, भूतकेशी, लोमशा, जटाला, लघुमांसी। गुणाः—तिक्ता शीता कफघ्नी कण्ठरोगघ्नी रक्तपित्तहरी विषघ्नी भूतज्वरघ्नी। रा. नि. व. १२।

**गन्धमात्(त्रि)का।** स्त्री। गन्धमात्रेति प्रसिद्धे वणिग्द्रव्ये। भैष. स्त्रीरोग. उत्पलादिः।

**गन्धमादनः।** पुं। गन्धके। भ्रमरे। वानरविशेषे। मे.। लूतादिकीटविषघ्नागदविशेषे। "नतरोध्रवचाकट्वीपाठैलापत्रकुङ्कुमैः।" वा. उ. ३७अ.।

**गन्धमाद(दि)नी।** स्त्री। चौड़ानामदेवदारुभेदे। आम्रवृक्षे। रा. नि. व. १२।२३। लाक्षायाम्। रा. नि. व. ६। वन्दाके। मुरामांस्याम्। रा. नि. व. १२। सुराविशेषे। त्रिका.।

**गन्धमाद्रिका (द्री)।** स्त्री। गन्धमात्रायाम्। वै.।

**गन्धमार्ज्जारः।** पुं। The civet cat-लोमशमार्ज्जारे। গন্ধগোকুল। जटा.। मार्ज्जारीनामौषधौ।

**गन्धमार्ज्जारवीर्य्यम्।** क्ली। गन्धमार्ज्जाराण्डोद्भवकस्तूर्य्याम्। খাটাশী। गोरासाखभेदे। हिं आंड़ो। गुणाः—"वीर्य्यश्लेष्मकफवातहृत्। कण्डूकुष्ठहरं नेत्र्य सुगन्धं स्वेदगन्धनुत्॥" भा.।

**गन्धमालती।** स्त्री। गन्धकोकिलानामगन्धद्रव्यविशेषे। भा.। गन्धकोकिलया तुल्या विज्ञेया गन्धमालती।

**गन्धमाला।** स्त्री। क्षुद्ररोगभेदे। See गन्धनाम्नी।

**गन्धमालिनी (न्या)।** स्त्री। मुरामांस्याम्। जटा.। सुगन्धशाली। रा. नि. व. १६।

**गन्धमुण्डः।** पुं। पारीषाश्वत्थे। পলাশপিপুল, গন্ধভাদুলিবিশেষ, গন্ধমূণ্ডঘেঁটু। हिं गन्धियाभाँट्, गजहुण्ड। भा.। तत्पर्य्यायः,—नन्दीवृक्षः, ताम्रपाकी, फलपाकी, पीतकः, गर्द्दभाण्डः, क्षिप्रपाकी। वै.। See पारीषाः।

**गन्धमूलः (कः)।** पुं। कुलञ्जनवृक्षे। रा. नि. व. ६। बालके। বালা। वै. निघ.। शट्याम्। श. र.।

**गन्धमूला।** स्त्री। शट्याम्। शल्लकीवृक्षे। रा नि. व. ११। स्थलकमलिन्याम्। रास्नायाम्। वै. निघ.।

**गन्धमूलिका (ली)।** स्त्री। गन्धशट्याम्। माकन्द्याम्। रा. नि. व. ६।७। अम.।

**गन्धमूषिकः (षिका) (षी)।** पुं, स्त्री। छुच्छुन्दरे। ছুঁচো। त्रिका.। हे. च.।

**गन्धमृगः।** पुं। खट्टाशे। গন্ধগোকুল, খাটাশ। मं जवादीमांजार। श. मा.।

**गन्धमृत्पुष्पः।** पुं। कदम्बवृक्षे। কদম গাছ। वै. निघ.।

**गन्धमेदिनी।** स्त्री। चम्पककलिकायाम्। চাঁপার কলি। वन्दाके। বান্দরা। रा. नि. व. १०।

**गन्धमैथुनः।** पुं। वृषभे। ষাঁড়। त्रिका.।

**गन्धमोदनः।** पुं। गन्धके। रा. नि. व. १३।

**गन्धमोदि (हि) नी।** स्त्री। चम्पककलिकायाम्। वै. निघ.। वन्दायाम्। रा. नि. व. १२।

**गन्धरसः।** पुं, क्ली। सुगन्धवोले। খুনখারাপি,

ফুলসত্ত্ব গন্ধগোল। त्रिका.। तत्पर्य्याय:,—बोल:, प्राण:, पिण्ड:, पिण्डल:, गोप:, रस: (अ.), रसगन्ध:, गोस:, पिण्डगोस:, शश:, गोसशश: (अ. टी.), गान्धारं, मस्तिवर्द्धनं (त्रि.) गोपरस:, बोलज:, गोपज:, गोपक: (शब्दर.)। खट्टासिकायाम्। থাটাশী। च. द. वा. व्या. एलादितैले। (सा) स्त्री। सुरामांस्याम्। वै. निघ.।

**गन्धरसाङ्गक:**। पुं। श्रीवेष्टनाम-गन्धद्रव्ये। रा.।

**गन्धराज: (क:)**। पुं, क्ली। सुन्दरपुष्पवृक्षे। গন্ধরাজ ফুলের গাছ रा. नि. व. १०। स्वनामख्यातद्रव्ये। থাটাশী. গন্ধরাজ See जवादि:। कणगुग्गुलौ। श्रीखण्डचन्दने। শ্বেত চন্দন। कृष्णागुरुणि। रा. नि. व. १२। नखीनामगन्धद्रव्ये। वै. निघ.।

**गन्धराजतैलम्**। क्ली। वातव्याधौ तैले। पाठ:—"तिलतैलाढ़के चिञ्चा तक्रं तत्परिमाणकम्। वचाचतुष्पलं दत्त्वा शुक्तं तच्च चतुर्गुणम्॥ त्रिफलाया: पलान्यष्टौ मञ्जिष्टायास्तथैव च। पुनरष्टपलान्यस्या अर्द्धदग्धानि दापयेत्॥ पूगचेलशठीपत्रशरणाम्बुददारुण:। पलान्यष्टौ विनिक्षिप्य घृतस्य तु पलद्वयम्॥ आद्ये पाके पचेदित्थं तैलं यावच्चतुर्गुणं। गालयित्वापरङ्कुर्य्यात्तत्र पाकत्रयम्बुध:। चण्डादलमरुच्छचालकर्पूरकोलशैलजं। त्रिषाणवीरणग्रन्थिदेवताकुसुमानि च॥ प्रत्येकमेषाञ्चत्वारि पलान्यादाय गान्धिक:। पाकं द्वितीयं तैलस्य कारयेत् क्रमयोगत:॥ पृक्का मांसी मुरा बालं मदनं कल्लिकामलौ। न गुरु काष्ठखोटी च चम्पकुन्दप्रियङ्गव:॥ एषां खट्टासिकायाश्च प्रत्येकञ्च पलद्वयम्। आदाय कारयेत्पाकं तृतीयङ्गन्धकोविद:॥ फणिलावलताकोलफलैलागुरुसिह्लकै:। त्वक्कोषाकैर्द्विपत्रिकैरिति पाकश्चतुर्थक:॥ वेध: पलयुगेनेन्दोर्मदस्य त्वष्टभि: पलै:। गन्धराजाह्वयं तैलमिदं नृपमनोहरम्॥" তিলতৈল ১৬ শ. তক্র ১৬ শ. কাঁজি ৬০ শ. কল্কার্থ—যথাবিধি বচ ৪ প. ত্রিফলা, মঞ্জিষ্ঠা, অর্দ্ধভৃষ্ট মঞ্জিষ্ঠা প্রত্যেক ৮ প গুবাকপুষ্পত্বক্, তেজপত্র, শটী, সরলকাষ্ঠ, মুতা, দেবদারু মিলিত ৮ প. কুন্দুরুখোটী ২ প. ইহাদের দ্বারা প্রথম গন্ধপাক করিবে। শোধিত চোরহুলী, তেজপত্র, মরু বা মৌরী, গুড়ত্বক্, দনা, শিলারস, এলা, কুড়, দেবহুলী, গেঁঠেলা, উশীর প্রত্যেক ৪ প. পূর্ব্বকল্ক ছাঁকিয়া ইহাদ্বারা ২য় গন্ধপাক করিবে। শুষ্ক পিড়িং, জটামাংসী, মুরামাংসী, বালা, লবঙ্গ, ছল্লীপুষ্প (ছলনা), ভূঁই আমলা, অগুরু, লবণখোটী, চম্পকপুষ্প, কুন্দপুষ্প, প্রিয়ঙ্গু; থাটাশী প্রত্যেক ২ প. ৩য় গন্ধপাক। শ্বেত চন্দন, লবঙ্গলতা, কস্তূরী, কক্কোল, জায়ফল, এলাচ, অগুরু, শিলারস, গুড়ত্বক্, জয়িত্রী, কুঙ্কুম প্রত্যেক ২ প. ৪র্থ গন্ধপাক। ছাঁকিয়া কর্পূর ১৬ তো. মৃগনাভি ৬৪ তো. মিশাইবে। रस. र.।

**गन्धराजी**। स्त्री। नख्याम्। नखी। श. च.।

**गन्धराट् (ज)**। पुं। धूनके। धूना।

**गन्धरुहा**। स्त्री। वनमल्लिकायाम्।

**गन्धर्व्व:**। पुं। श्वेतकरवीरे। श्वैतैरण्डे। च. द. वा. रक्त. चि. अमृताद्यघृते। कस्तूरीमृगे। अश्वे। अम.। कोकिले। रा. नि. व. २३। क्ली। कैरवे।

**गन्धर्व्वगन्ध: (न्धा)**। पुं, स्त्री। अश्वगन्धायाम्। भा. म. ४ भ. स्नायुरोगे। उ. ख. वाजी.।

**गन्धर्व्वग्रह**। पुं। उन्मादविशेषे। "हृष्टात्मा पुलिनवनान्तरोपसेवी स्वाचार: प्रियगीतगन्धमाल्य:। नृत्यन् वै प्रहसति चारु चाल्पशब्दं गन्धर्व्वग्रहपरिपीड़ितो मनुष्य:।" मा. नि.।

**गन्धर्व्वतैलम्**। क्ली। एरण्डतैले। भा.।

**गन्धर्व्वभूषणम्**। क्ली। सिन्दूरे। वै. निघ.।

**गन्धर्व्वशाका**। स्त्री। भार्ग्याम्। বামনহাটী। र. मा.।

**गन्धर्व्वहस्त: (क:)**। पुं। एरण्डवृक्षे। हारा.।

**गन्धर्व्वहस्तकतैलम्**। क्ली। व्रध्नवृद्ध्यधिकारे तैलम्। पाठ:—"शतमेरण्डमूलस्य पलं शुण्ठ्या यवाढ़कम्। जलद्रोणे विपक्तव्य यावत्पादावशेषितम्। तेन पादावशेषेण पयसा तत्समेन च। प्रस्थमेरण्डतैलस्य तन्मूलाच्च चतुष्पलम्। त्रिपलं शृङ्गवेरञ्च सर्व्वं दत्त्वा विपाचयेत्॥" रस. र.।

**गन्धर्व्वी**। स्त्री। कोकिलायाम्। वै. निघ.।

**गन्धल:**। पुं। सुगन्धि व्रीहिभेदे।

**गन्धलता**। स्त्री। प्रियङ्गौ। भा. म. १भ. रक्तपि. चि.।



**गन्धला**। स्त्री। प्रियङ्गौ।

**गन्धलोलुपा**। स्त्री। मक्षिकायाम्। श. र.।

**गन्धवती**। स्त्री। त्रिपुरमल्लिकायाम्। प. मु.। वनमल्लिकायाम्। সেউতী। र. मा.। मुरामांस्याम्। रा. नि. व. १२। सुरायाम्। मे.। ताली शपत्रे। वनयमान्याम्। वै. निघ.।

**गन्धवर्णा**। स्त्री। महाबलायाम्। वै. निघ.।

**गन्धवल्कलम्**। क्ली। गुड़त्वङ्नामगन्धद्रव्ये। দারচিনি। रा. नि. व. ६।

**गन्धवल्लरी (वल्ली)**। स्त्री। महाबलायाम्। प. मु.। पीतपुष्पदण्डोत्पलायाम्। ডানিপোলা। र. मा.।

**गन्धवह: (वाह:, क:)**। पुं। कस्तूरीमृगे।

**गन्धव(वा)हा**। स्त्री। नासिकायाम्। रा नि. व. १८। हे. च।

**गन्धवाकुची**। स्त्री। लताकस्तुर्य्याम्।

**गन्धवासिनी**। स्त्री। सुरामांस्याम्। वै. निघ.।

**गन्धवाही (इन्)**। पुं। वायौ। रा. नि. व. २१।

**गन्धविह्वल:**। पुं। गोधूमे। वै निघ.।

**गन्धबीज:**। पुं। कुलिञ्जनवृक्षे। वै. निघ.। (जा) स्त्री। मेथिकायाम्। रा. नि. व. ६।

**गन्धवीरा**। स्त्री। सल्लकीवृक्षे। वै. निघ.।

**गन्धवृक्ष: (क:)**। पुं। शालवृक्षे। सर्ज्जवृक्षे। रा. नि. व. ९। शाकतरौ। वरुणवृक्षे। वै. निघ.।

**गन्धवे (बो) धिका**। स्त्री। कस्तूर्य्याम्। वै. निघ.।

**गन्धवेष्ट:**। पुं। धूनके। धूना।

**गन्धव्याकुलम्**। क्ली। कक्कोले। श. च.।

**गन्धशटी**। स्त्री। स्वनामख्यातौषधौ। गन्धपलाश्याम्। গন্ধশটী, গন্ধপলাশী। श. र.। See गन्धपलाशी।

**गन्धशाकम्**। क्ली। गौरसुवर्णशाके। रा. नि. व. ७।

**गन्धशालि:**। पुं। सुगन्धशालिधान्यविशेषे। সুগন্ধ ধান, কলমাশালি। प. मु.। तत्पर्य्याय:,—कलमोत्तम:, गन्धालु:, कलमोत्तम:, सुगन्धि:, गन्धबहुल:, सुरभि:, गन्धतण्डुल:, सुगन्धिशालि:। गुणा:—मधुर: अतिवृष्य: पित्तदाहारुचिश्रमरक्तशान्तिकर: लघुकर: गर्भस्थिरतादायक: ईषद्वातकर: पुष्टिकर: ईषत्कफकर: बलदश्च। रा. नि. व. १६।

**गन्धशुण्डिनी**। स्त्री। कुच्छुन्दर्य्याम्। रा. नि. व. १९।

**गन्धशेखर:**। पुं। कस्तूर्य्याम्। मृगनाभि। हारा.।

**गन्धसम्भवा**। स्त्री। सुगन्धशालौ। रा. नि. व. १६।

**गन्धसार:**। पुं। चन्दनसामान्ये। प. मु.। श्रीखण्डचन्दने। শ্বেত চন্দন। रा. नि. व. १२। "घनसारो गन्धसार:।" सा. कौ.। गन्धशट्याम्। रा. नि. व. ६। मुद्गरपुष्पवृक्षे। रा. नि. व. १०। गन्धके। वै. निघ.।

**गन्धसारण:**। पुं। वृहन्नख्याम्। र. मा.।

**गन्धसूची**। स्त्री। आम्रातकी। मं आंबाड़ी। वै. निघ.।

**गन्धसूयी**। स्त्री। क्षुद्रकुच्छुन्दर्य्याम्। वै. निघ.।

**गन्धसेवि**। क्ली। रोहिषतृणे। रागकर्पूरे। वै. निघ.।

**गन्धसोमम्**। क्ली। कुमुदे। নালফুল। श्वेतकमले। त्रिका.।

**गन्धसोमजम्**। क्ली। रक्तकैरवे। রক্তকম্বল।

**गन्धहारिणी**। स्त्री। तुलस्याम्। भ.।

**गन्धा**। स्त्री। मङ्गल्यागुरुणि। शट्याम्। रा. नि. व. १२। अजमोदायाम्। रा. नि. व. ६। शालपर्ण्याम्। अ. टी. भ.। वनतुलस्याम्। वंशलोचनाभेदे। कुच्छुन्दर्य्याम्। प्रियङ्गौ। वै. निघ.। सुवर्णचम्पककलिकायाम्। श. र.।

**गन्धाखु:**। पुं। कुच्छुन्दर्य्याम्। ছুঁচা। हारा.।

**गन्धागुरु**। क्ली। मङ्गल्यागुरुणि। वै. निघ.।

**गन्धाजीव:**। पुं। गन्धवणिजि। जटा.।

**गन्धाज्ञता**। स्त्री। गन्धाननुभवे। वै. निघ.।

**गन्धाढ्यम्**। क्ली। चन्दने। श्रीखण्डचन्दने। শ্বেত চন্দন। गन्धराजे। থাটাশী। रा. नि. व. १२। वकुलपुष्पे। वै. निघ.। पुं। नागरङ्गके। रा. नि. व. ११।

**गन्धाढ्या**। स्त्री। स्वर्णयूथिकायाम्। तरणी

पुष्पवृक्षे । आरामशीतलायाम् । গন্ধশাকবিশেষ । रा. नि. व. १० । वनवीजपूरवृक्षे । বুনো লেবু । मुरामांस्याम् । रा. नि. व. ११।१२ । सुगन्धशाल्यौ । रा. नि. व. १६ । गन्धाल्याम् । গাঁধালি । श. च. । कस्तूर्य्याम् । মৃগনাভি । जवादिकस्तूर्य्याम् । अरण्यशिवल्याम् । ফুলবিশেষ । जातीपत्राम् । वै. निघ. । गन्धपत्रायाम् ।

**गन्धादि** । क्ली । तृणकेशरे । वै. निघ. ।

**गन्धाधिकम्** । क्ली । तृणकुङ्कुमे । रा. नि. व. १२ ।

**गन्धाधि(रि)का** । स्त्री । महाशतावर्याम् । **শুল্ফা, বড়িশোপ** । रा. नि. व. ४ ।

**गन्धानो** । स्त्री । सुगन्धशाल्यौ । धूम्रपत्रायाम् । रा. नि. व. १६।२३ ।

**गन्धानु:** । पुं । सुगन्धशाल्यौ । रा. । दण्डाल्यौ । द्रव्याभि. ।

**गन्धान्न:** । पुं । गन्धशाल्यौ । प. मु. ।

**गन्धामृतरस:** । पुं । वाजीकरणोक्त-रसविशेषे । "भस्मसूतं द्विधा-गन्धं चणकान्यां विमर्द्दयेत् । रुद्ध्वा लघुपुटे पच्यात्लेहयेन्मधुसर्पिषा । निष्कमात्रं जरा-मृत्यू हन्ति गन्धामृतो रस: ॥" रस. र. ।

**गन्धाम्बु** । क्ली । गन्धोदके । चक्र. ।

**गन्धारि: (री)** । स्त्री । दुरालभायाम् । रक्त-दुरालभायाम् । गन्धपलाश्याम् । आम्रहरिद्रायाम् । वै. निघ. ।

**गन्धरिका** । स्त्री । शटीभेदे । भा. ।

**गन्धाल: (लु:)** । पुं । गन्धशाल्यौ । रा. नि. व. १६ । दण्डालुके ।

**गन्धाला** । स्त्री । अग्निमन्थक्षुपे । वै. निघ. ।

**गन्धालि: (लिका) (ली)** । स्त्री । गन्धशाल्याम् । प. मु. । (ली) प्रसारण्याम् । গন্ধভাদুলে । तत्पर्य्याय:,—प्रसारणी, भद्रपर्णी, कटम्भरा (र.), शरणा, शरणी (शब्दर.), गन्धाल्या, गन्धभद्रा (श.), सरणा, राजवला, भद्रवला (अ.), गन्धोली, सारणी (ज.), सारणी: (उ.), सरणी (अ. टी.) सा. कौ. । जातीफलायाम् । कीटविशेषे । কুমীরে পোকা । वै. निघ. ।

**गन्धालोगर्भ:** । पुं । सूक्ष्मैलायाम् । रा. नि. व. १२ ।

**गन्धाश्मा** । पुं । गन्धके । গন্ধক । रा. नि. व. १२ । ग्रहणीकवाटरसे । च. द. रसमण्डूरे ।

**गन्धाश्व:** । पुं । अश्वगन्धायाम् । भैष. कुष्ठ. चि. ।

**गन्धाष्टकम्** । क्ली । सुगन्धाष्टद्रव्यगणे । तच्च नानाविधम् । तत्र मांसादियूषसुगन्धीकरणार्थं यथा—जातीपत्र-लवङ्गत्वगेला-नागकेसर-मरिचमृगनाभय: । रावण. । देवतादितुष्ट्यर्थं यथा—चन्दन-कर्पूर-नागकेशर-बालक-नागरमुस्ता-देवदारु-गोरोचना-कुसुमानि । तथा चन्दनागुरुकर्पूररोचना-कुङ्कुममृगमदचन्दनह्रीवेराणि गणपतिप्रीत्यर्थम् । चन्दनागुरुकर्पूर- तमालह्रीवेर-कुङ्कुमकुशीदकुष्ठानि शिवस्य । "चन्दनागुरुकर्पूरचोरकुङ्कुमरोचना: । जटामांसी कपियुता शक्तेर्गन्धाष्टकं विदु: ॥" "चन्द-नागुरुह्रीवेरकुष्ठकुङ्कुमसेव्यका: । जटामांसी मुरा चेति विष्णोर्गन्धाष्टकं विदु: ॥"

**गन्धाह्वा** । स्त्री । प्रियङ्गौ । सु. चि. ९ अ. ।

**गन्धि** । क्ली । तृणकुङ्कुमे । रा. नि. व. १२ ।

**गन्धिक:** । पुं । गन्धके । भा. ।

**गन्धिका** । स्त्री । अजमोदायाम् ।

**गन्धिनो** । स्त्री । मुरामांस्याम् । अम. । पीत-मूल्याम् । रेउचिनीति केचित् । रुमीमस्तुरीति च अन्य: ।

**गन्धपर्ण:** । पुं । सप्तपर्णवृक्षे । रा. नि. व. १२ ।

**गन्धिरस:** । पुं । गोपके । নিশাদল ।

**गन्धिला** । स्त्री । मुस्तायाम् । रा. नि. व. ६ ।

**गन्धो** (इन्) । पुं । कस्तूरीमृगे । वै. निघ. । गन्धके । शब्दर. । कीटविशेषे । ছারপোকা ।

**गन्धोग्रा** । स्त्री । वचायाम् । च. द. वा. चि. ।

**गन्धोतु:** । पुं । सुगन्धमार्ज्जारे । গন্ধ গোকুল । विका. ।

**गन्धोत्कट: (टा)** । पुं, स्त्री । दमनकवृक्षे । দনা গাছ । रा. नि. व. १० । मुरामांस्याम् । वै. निघ. ।

**गन्धोत्तमा** । स्त्री । मदिरायाम् । अम. ।

**गन्धोपला** । स्त्री । गन्धके । वै. निघ. ।



**गन्धोलि: (ली)** । स्त्री । शट्याम् । श. र. । वरटायाम् । বোলতা । अम. । मक्षिकाविशेषे । কুমীরা মাছি । कर्कटीभेदे । वै. निघ. ।

**गन्धोलिक:** । पुं । मसूरे ।

**गन्धौषधम् (धि:)** । क्ली, पुं । सुगन्धिद्रव्यरूपौ-षधौ अगुरुकुष्ठादौ । सि. यो. वा. व्या. चि. । च. सु. ३अ. ।

**गभस्ति:** । पुं । किरणे । सं. । सूर्य्ये ।

**गभोलिक:** । पुं । मसूरे । हारा. ।

**गमूर्च्छा** । स्त्री । मरुया इति ख्याततृणे । र. मा. ।

**गम्भारिका (री)** । स्त्री । वृक्षविशेषे । গাম্ভার গাছ । तत्पर्य्याय:,—सर्व्वतोभद्रा, काश्मरी, मधुपर्णिका, श्रीपर्णी, भद्रपर्णी, काश्मर्य्य:, काश्मर्य्यं, काश्मरी (अ.) काश्वरी, कम्भारिका (के.), भद्रा, गोपभद्रिका, कुमुदा, सदाभद्रा, कृष्णफला, कट्फला, कृष्णवृन्तिका (र.) कृष्णवृन्ता हीरा, सर्व्वतोभद्रिका, स्निग्धपर्णी, सुभद्रा, कम्भारी, गोपभद्रा, चौरिणी, विदारिणी, महाभद्रा, मधु-भद्रा, स्वरुभद्रा, कृष्णा, अश्वेता, रोहिणी, वृष्टि:, स्थूलत्वचा, मधुमती, सुफला, मोदिनी, महाकुमुदा, सुदृढ़त्वचा । गुणा:—कटुत्वं तिक्तत्वं उष्णत्वं गुरुत्वं भ्रमशोथज्वरतृष्णाविषदाहनाशित्वञ्च । रा. नि. व. ९ । तुवरा तिक्ता वीर्य्योष्णा मधुरा गुरु: दीपनी पाचनी मेध्या भेदिनी भ्रमशोषघ्नी तृष्णाम-शूलार्शोविषदाहज्वरघ्नी च । भा. । फलगुणा:—तिक्तं गुरु मधुरं ग्राहि केश्यं रसायनं मेध्यं शीतलं पित्तदाहघ्नं । राज. । वृंहणं वृष्यं गुरु केश्यं रसायनं वातपित्ततृष्णारक्तक्षयमूत्रविबन्धहरं स्वादु-पाकं हिमं स्निग्धं तुवराम्लं दाहतृष्णावातरक्तपित्त-क्षतक्षयघ्नञ्च । तद्बीजतैलं—मधुरं कषायं कफपित्त-घ्नञ्च । सु. सू. ४५ अ. । मूलं—अत्युष्णं चित्त-रोगे हितञ्च । राज. ।

**गम्भीर:** । पुं । पक्वजम्बीरे । उणा. । शाकुरुण्ड-वृक्षे । मातुलुङ्गवृक्षे । शिरीषवृक्षे । वै. निघ. । क्ली । पङ्कजे । वत्सनाभविषे ।

**गम्भीरक:** । पुं । फणिज्झकवृक्षे । वै. निघ. ।

**गम्भीरज्वर:** । पुं । अन्तर्वेगान्तर्दाहयुक्तज्वरे । "गम्भीरस्तु ज्वरो ज्ञेयो ह्यन्तर्दाहेन तृष्णया । आन-द्धत्वेन दोषाणां श्वासकासोद्गमेन च ॥" निदान. ।

**गम्भीरदृष्टि:** । पुं । नेत्ररोगविशेषे । वै. निघ. । See गम्भीरिका ।

**गम्भीरपाक:** । पुं । अन्त:पाके । वै. निघ. ।

**गम्भीरवेदो(न्)** । पुं । दुर्द्दान्तहस्तिनि । त्रि. ।

**गम्भीरा** । स्त्री । तन्नामकहिक्कायाम् । "नाभि-प्रवृत्ता या हिक्का घोरा गम्भीरनादिनी । शुष्कास्य-कण्ठजिह्वा स्यात्क्लासकासरुजाकरी । अनेकोपद्रव-वती गम्भीरा नाम सा स्मृता ॥" निदान. ।

**गम्भीरिका** । स्त्री । वातजन्यनेत्ररोगभेदे । लक्षणं यथा—"दृष्टिर्विरूपा स्वसनोपसृष्टा सङ्कु-च्यतेऽभ्यन्तरत: प्रयाति । रुजावगाढा च तमक्षि-रोगं गम्भीरिकेति प्रवदन्ति धीरा: ॥" भा. ।

**गर:** । पुं । उपविषे । वत्सनाभविषे । रोगे । हे. च. । विषघ्नौषधे । निर्व्विषद्रव्ययोगजे कृत्रिमविषे । तेनान्त:पाण्डु: कृशोऽल्पाग्नि: कासश्वासज्वरार्द्दितश्च भवति । वा. । यथा—"संयोगजन्तु द्विविधं तृतीयं-विषमुच्यते । गर: स्यादविषस्तत्र सविषं कृत्रिमं यत: ॥" वृद्धकाश्यप. । "दंष्ट्राविषे मूल-विषे सगरे कृत्रिमे विषे ।" च. । "नानाप्राण्यङ्ग-समलविरुद्धौषधभस्मनाम् । विषाणाञ्चाल्पवीर्य्याणां योगो गर इति स्मृत: ॥" वा. उ. ३५ अ. ।

**गरघ्न:** । पुं । कृष्णार्जके । কৃষ্ণপত্র ক্ষুদ্র তুলসী । कृष्णपत्रवर्व्वरे । **কাল বাবুই** । रा. नि. व. १० । टङ्कणक्षारे । वैजयन्तीतुलस्याम् । वै. निघ. ।

**गरघ्नो** । स्त्री । मत्स्यविशेषे । গরই মাছ । गुणा:—मधुरा कषाया वातपित्तकफघ्नी रुचिबलवीर्य्य-करी दीपनी लघुश्च । भा. ।

**गरजध्वजम्** । क्ली । अभ्रके । वाचस्पति: ।

**गरणम्** । क्ली । निगरणे, वमने ।

**गरदम्** । क्ली । विषे, गरले । रा. नि. व. ६ । त्रि । विषदायिनि ।

**गरदिग्ध:** । त्रि । कृत्रिमविषलिप्ते । च. सि. स्था. २ अ. ।

**गरद्रुम:** । पुं । कारस्करवृक्षे । কুঁচিলা গাছ । रा. नि. व. ९ ।

**गरध्वजम्** । क्ली । अभ्रे । অভ্র ।

**गरनाशिनो** । स्त्री । देवदालिकायाम् । দেয়াতাড় । मं देवडङ्गरी । वै. निघ. ।

**गरभ:** । पुं । गर्भे । हे. च. ।

**गरलम्** । क्लौ । अहिफेने । हे निघ. । विषे । अम. । सर्पविषे । तृणपूलके । घासेर आँटि । हे. च. । जङ्गमविषे । त्रिका. ।

**गरला** । स्त्री । मधुमक्षिकायाम् । वै. निघ. ।

**गरलारिः** । पुं । मरकतमणौ । रा. नि. व. १३ ।

**गरव्रतः** । पुं । मयूरे । श. र. ।

**गरहा** । पुं । कालशाके । त्रिका. ।

**गरा (री)** । स्त्री । देवताड़वृक्षे । घोषालता । अ. टी. स्वा. । शिकरणी । धरणी. ।

**गरागरी** । स्त्री । लाक्षायाम् । रा. ।

**गरात्मकः** । पुं, क्लौ । शोभाञ्जनवृक्षे, तद्वीजे च । श. च. ।

**गराषिका** । स्त्री । लाक्षायाम् । र. मा. ।

**गराधिका** । स्त्री । लाक्षायाम् । र. मा. ।

**गरारिवटिका** । स्त्री । कासे हिता । पाठः—भागैकः त्रिफलाचूर्णात् द्विभागस्तु कटुत्रयात् । तालीशस्य त्रिभागः स्यादभयायाश्चतुष्टयः । यावन्त्येतानि चूर्णानि तावानेव गुड़ो मतः । मधुना वटिका कार्य्या हिमाषा सुखधारिणी ॥ प्रयोगा. कास. चि. ।

**गरी** । स्त्री । देवतारवृक्षे । रा. ।

**गरुड़ः** । पुं । स्वनामख्यातपक्षिणि । स्वर्णमाक्षिके । स्वर्णशृङ्गिके । रा.श्रा.सं. । गरुड़शाली । रा. नि. व. १६ ।

**गरुड़वल्लिः** । पुं । बालरोगशान्त्यर्थं बलिविशेषे । ओं नमो भगवते गरुड़ाय त्र्यम्बकाय स्वाहा । च. द. बाल. चि. ।

**गरुड़वेगा** । स्त्री । वृक्षविशेषे ।

**गरुड़शालिः** । पुं । स्वनामख्यातशालिधान्यविशेषे । पक्षिराज धान । गुणाः—गन्धकारी लघुपाककरः कफपित्तहरः स्वादुश्च श्वासनिवारणः ग्रहणीगुल्मकुष्ठघ्नः गुल्मशोधनः ॥ रा. नि. व. १६ । "गरुड़ाख्या च वातघ्नी पित्तमूत्रमदापहा ।" अत्रि. १५ अ. ।

**गरुड़ाङ्कितम्** । क्लौ । मरकतमणौ । रा. नि. व. १३ ।

**गरुड़ाश्मा** । पुं । मरकतमणौ । जटा. ।

**गरुड़ाहृतः** । पुं । सोमलताभेदे । सु. चि. २९ अ. ।

**गरुड़ी** । स्त्री । गुड़ूच्याम् । रस. र. विष. चि. ।

**गरुड़ोत्ती(द्गी)र्णम्** । क्लौ । मरकतमणौ । रा. नि. व. २३ ।

**गरुत्** । पुं । पक्षिणि । पाखा । अम. ।

**गरुत्मान्** । पुं । स्वर्णमाक्षिके । रसकौ. । भैष. वा. रक्त. चि. वाद्यशायकी । पक्षिणि । मे. । गरुड़े । वै. निघ. ।

**गरुद्योधी (इन्)** । पुं । भारतीपक्षिणि । भारुई । त्रिका. । लावपक्षिणि । वै. निघ. ।

**गर्गरः (कः)** । पुं । A kind of fish, (Pimelodins gagora.) मत्स्यविशेषे । गागर माछ । स पीतवर्णः पिच्छिलाङ्गः पृष्ठे बहुरेखायुक्तः, तथा गर्गरशब्देन वशीकरणीयत्वात् गर्गर इत्युच्यते । गुणाः—शीतलः कफवातकरश्च । रा. नि. व. १७ । मधुरः स्निग्धः वातपित्तघ्नश्च । राज. ३प. । "गर्गरः पिच्छलः किञ्चिद्वातजित् कफकोपनः ।" भा. ।

**गर्गरकम्** । क्लौ । स्थावरविषान्तर्गतस्वनामकमूलविषभेदे । सु. कल्प. २अ. ।

**गर्गरी** । स्त्री । मन्थन्याम्, दधिमन्थनपात्रे । अम. । कलसी ।

**गर्गाटः** । पुं । गर्गरमत्स्ये । तत्पर्य्यायः—यौगनाविकः । हारा. ।

**गर्ज्जकः** । पुं । मत्स्यविशेषे । गजाड़, शाल माछ । तत्पर्य्यायः,—शालः, शालकः । श. र. ।

**गर्ज्जरम्** । क्लौ । A carrot. स्वनामख्यातमूलशाकं । गाजरमूल । मं कं वाटुलामूला । वहमुलांगि । तत्पर्य्यायः—पिण्डमूलं, पीतकन्दं, सुमूलकं, स्वादुमूलं, सुपीतं, नारङ्गं, पीतमूलकं । गुणाः—मधुरं रुच्यं ईषत्कटु कफघ्नं आध्मानकृमिशूलघ्नं दाहपित्ततृष्णाघ्नञ्च । रा. नि. व. ७ । रक्तरसोने ।

**गर्ज्जरी** । स्त्री । रक्तमूले । वै. निघ. ।

**गर्ज्जाफलः** । पुं । विकण्टकवृक्षे । रा. नि. व. ११ ।

**गर्ज्जितः** । पुं । मत्तहस्तिनि । अ. ।

**गर्त्तः** । पुं । श्वभ्रे । गाड़ा । तत्पर्य्यायः,—अवटः (अ), अवटूः (शब्दर.), आवटिः, सूरन्ध्रं,



दरः, श्वभ्रं (ज.) । जटा. । कुकुन्दरे । मे. । रोगविशेषे । श. र. ।

**गर्त्तकलम्बुका** । स्त्री । गण्डदूर्व्वायाम् । मत्स्याक्ष्याम् । वै. निघ. ।

**गर्त्तोटकः** । पुं । वनमूषिके । वै. निघ. ।

**गर्त्तिका** । स्त्री । तन्तुशालायाम् । ताँतघर । हे. च. ।

**गर्द्दभः** । पु । स्वनामख्यातपशौ । गाधा । तत्पर्य्यायः,—चक्रीवान्, बालेयः, रासभः, खरः (अ.), राशभः (अ.टी.), वेशरः, धूसरः (ज), स्मरक्षय्यः, चिरमेही, पशुचारिः, करपुष्टः, चारटः, ग्राम्याश्वः (शब्दर.), शुद्ध-जङ्घः, शङ्कुकर्णः, भारगः, भूरिगमः, धूसराह्वयः, मांसगुणाः—किञ्चिद्गुरु बलप्रदञ्च । वनगर्द्दभमांसं रुच्यं शैत्यकरं बहुवीर्य्यबलकरञ्च । मूत्रगुणाः—कटुत्वं तिक्तत्वम् उष्णत्वं क्षीरत्वं कफमहावातभूतकम्पोन्मादहरत्वञ्च । रा. नि. व. १७ । विकारघ्नं तीक्ष्णं ग्रहणीरोगनुत् । "दीपनं गार्द्दभं मूत्रं क्रिमिवातकफापहम् ।" सु. सू. ४५ अ. गरभेदोगन्धे । हे. च. । क्लौ । कुमुदे । प. मु. । श्वेतकुमुदे । हे. च. । विड़ङ्गे । र. मा. ।

**गर्द्दभकम्** । क्लौ । श्वेतोत्पले । श्वेतपद्म । हे. ।

**गर्द्दभगदः** । पुं । ज्वालागर्द्दभरोगे । लक्षण ज्वालगर्द्दभशब्दे द्रष्टव्यम् । रा. नि. व. २० ।

**गर्द्दभगन्धिका** । स्त्री । भार्ग्याम् । वामनहाटी । वै. निघ. ।

**गर्द्दभमांसम्** । क्लौ । गर्द्दभस्य पिशिते । रा. नि. व. १७ ।

**गर्द्दभमूत्रम्** । क्लौ । खरमूत्रे । See गर्द्दभः ।

**गर्द्दभशाकः (का, खा, खी)** । पुं, स्त्री । भार्ग्याम् । वामनहाटि । जटा. । रा. नि. व. ६ ।

**गर्द्दभाः** । स्त्री । श्वेतकण्टकार्य्याम् । भा. ।

**गर्द्दभाण्डः** । पुं । (Thespesia populnea. Syn. Hibiscus populnes.) प्लक्षवृक्षे । पाकुड़ गाछ । रा. नि. व. ११ । (Thespesia populneoides.) पारीषाश्वत्थे । गया अश्वथ, पलाश पिपुल । अम. । स च पत्रकाण्डफलादिभिरश्वत्थवृक्षाकारः । गन्धपिपल इति च केचित् । भ. । गर्द्दपिप्पलीति पारसुन्दरी । मं पारसपिपल पिंपरी । गन्धमुण्ड इति गन्धीभाट इति सा. कौ. । तत्पर्य्यायः,—कन्दरालः, कपीतनः, सुपार्श्वकः, प्लक्षः (अ.), शृङ्गी, प्लवः, कमण्डलुः (ज.), गन्धभाण्डः, प्लक्षेशः, कन्दरालकः (शब्दर.), भाण्डः (श.), गन्धमुण्डः, नन्दीवृक्षः, फलपाकी । रा. ।

**गर्द्दभाह्वयः** । पुं । कुमुदे । षण्डे । हे. च. ।

**गर्द्दभिका** । स्त्री । वातपित्तजक्षुद्ररोगविशेषे । तल्लक्षणं—"मण्डलं वृत्तमुत्सन्नं सरक्तं पिड़काचितं । रुजाकरीं गर्द्दभिकां तां विद्याद्वातपित्तजाम् ॥" भा. ।

**गर्द्दभी** । स्त्री । कटभ्याम् । रा. नि. व. २३ । श्वेतापराजितायाम् । श्वेतकण्टकार्य्याम् । रा. नि. व ३।४ । गर्द्दभस्त्रियाम् । दुग्धगुणाः—बलकारत्वं वातश्वासहरत्वं मधुराम्लरसत्वं रूक्षत्वं दीपनत्वञ्च । दधिगुणाः—रूक्षोष्णत्वं वातघ्नत्वञ्च । नवनीतगुणाः—कषायत्वं वातकफनाशित्वं बलकरत्वं दीपनत्व लघुपाकित्वं मूत्रदोषकरत्वम् उष्णत्वञ्च । घृतगुणाः—बल्यं दीपनं मूत्रदोषघ्नम् लघुपाकम् उष्णवीर्य्यं कषायं कफघ्नञ्च । रा. नि. व. १५ ।

**गर्द्धः** । पुं । गर्द्दभाण्डवृक्षे । श. च. ।

**गर्द्धभाण्डः** । पुं । गर्द्दभाण्डवृक्षे ।

**गर्भः** । पुं । भ्रूणे । तेजःसंयोगात् शुक्रं तरलीभूतं च्युतं सत् अनिलसंयोगात् योनिमुखं पतितम् आर्त्तवेन युक्तं गर्भसंज्ञां लभते । ततोऽग्निसोमसंयोगात् संसृज्यमानो गर्भो गर्भाशयमनुप्रतिपद्यते । लक्षणं यथा—"गर्भाशयगतं शुक्रमार्त्तवं जीवसंज्ञकं । प्रकृतिः सविकारा च तत्सर्व्वं गर्भसंज्ञकं । कालेन वर्द्धितो गर्भः यदाङ्गोपाङ्गसंयुत. भवेत्तदा स मुनिभिः शरीरीति निगद्यते ॥" भा. । कामान्मिथुनसंयोगे शुद्धशोणितशुक्रजः । गर्भः सञ्जायते नार्य्याः सञ्जातो बाल उच्यते ॥ शार्ङ्ग. ६ अ. । आधिक्ये रजसः कन्या पुत्रः शुक्राधिके भवेत् । नपुंसकं समत्वेन यथेच्छा पारमेश्वरी ॥ भा. । "प्रथमे मासि द्रवीभूतं शुक्रार्त्तवं तिष्ठति, द्वितीये घनः, तृतीये हस्तपादशिरसां पञ्च पिण्डका निर्वर्त्तन्ते, अङ्गप्रत्यङ्गविभागश्च सूक्ष्मो भवति, चतुर्थे सर्व्वाङ्गप्रत्यङ्गविभागः प्रव्यक्ततरो भवति । गर्भहृदयप्रव्यक्तभावाच्चेतनाधातुरभिव्यक्तो भवति कस्मात्तत्स्थानत्वात्तस्माद्गर्भश्चतुर्थे मास्यभिप्रायमिन्द्रि-

शार्थंषु करोति, पञ्चमे मनः प्रतिबुद्धतरं भवति, षष्ठे बुद्धिः, सप्तमे सर्व्वाङ्गप्रत्यङ्गविभागः प्रव्यक्ततरः, अष्टमेऽस्थिरीभवति ओजस्तत्र जातश्चेन्न जीवेन्निरोजस्त्वान्नैरृतभागत्वाच्च, ततो बलिं मांसौदनमस्मै दापयेत्, नवमदशमैकादशद्वादशानामन्यतमस्मिन् जायते। अतोऽन्यथा विकारी भवति। मातुस्तु खलु रसवहायां नाड्यां गर्भनाभिनाड़ी प्रतिबद्धा, साऽस्य मातुराहाररसवीर्य्यमभिवहति। तेनोपस्नेहेनास्याभिवृद्धिर्भवति। गर्भस्य हि सम्भवतः पूर्व्वं शिरः सम्भवतीति शौनकः, हृदयमिति कृतवीर्य्यः बुद्धेर्मनसश्च स्थानत्वात्। नाभिरिति पाराशर्य्यस्ततो हि वर्द्धते देहो देहिनः। पाणिपादमिति मार्कण्डेयः तन्मूलत्वाच्चेष्टाया गर्भस्य। मध्यशरीरमिति सुभूतिर्गौतमस्तन्निबद्धत्वात् सर्व्वगात्रसम्भवस्य, तत्तु न सम्यक्सर्व्वाङ्गप्रत्यङ्गानि युगपत्सम्भवन्तीत्याह धन्वन्तरिः गर्भस्य सूक्ष्मत्वान्नोपलभ्यन्ते वंशाङ्कुरवत् चूतफलवच्च। तद्यथा चूतफले परिपक्वे केशरमांसास्थिमज्जानः पृथग्दृश्यन्ते कालप्रकर्षात्तान्येव तरुणे नोपलभ्यन्ते सूक्ष्मत्वात्तेषां सूक्ष्माणां केशरादीनां कालः प्रव्यक्ततां करोति। एवं गर्भस्य तारुण्ये सर्व्वेष्वङ्गप्रत्यङ्गेषु सत्स्वपि सौक्ष्म्यादनुपलब्धिः। तान्येव कालप्रकर्षात्प्रव्यक्तानि भवन्ति। गर्भस्य केशश्मश्रुलोमास्थि-नखदन्त-शिरास्नायुधमनी-रेतः-प्रभृतीनि स्थिराणि पितृजानि। मांसशोणितमेदोमज्जहृन्नाभियकृत्प्लीहान्त्रगुदप्रभृतीनि मृदूनि मातृजानि। शरीरोपचयो बलं वर्णः स्थितिर्हानिश्च रसजानि। इन्द्रियाणि ज्ञानं विज्ञानमायुः सुखदुःखादिकञ्चात्मजानि। वीर्य्यमारोग्यं बलवर्णौ मेधा च सात्म्यजानि। तत्र यस्या दक्षिणे स्तने प्राक् पयोदर्शनं भवति दक्षिणाक्षिमहत्त्वञ्च पूर्व्वञ्च दक्षिणं सक्थ्युत्कर्षति बाहुल्याच्च पुन्नामधेयेषु द्रव्येषु दौहृदमभिध्यायति। स्वप्नेषु चोपलभते पद्मोत्पलकुमुदाम्रातकादीनि पुन्नामान्येव प्रसन्नमुखवर्णा च भवति तां ब्रूयात् पुत्रमियं जनयिष्यतीति तद्विपर्य्यये कन्यां। यस्याः पार्श्वद्वयमुन्नतं पुरस्तान्निर्गतमुदरं प्रागभिहितलक्षणञ्च तस्या नपुंसकमिति विद्यात्। यस्या मध्ये निम्नं द्रोणीप्रभूतमुदरं सा युग्मं प्रसूयते। सु॰ शा॰ ३अ। तस्य खल्वेवं प्रवृत्तस्य शुक्रशोणितस्याभिपच्यमानस्य क्षीरस्येव सन्तानिकाः सप्त त्वचो भवन्ति। तासां प्रथमा अवभासिनी नाम सर्व्ववर्णानवभासयति, द्वितीया लोहिता नाम षोड़शभागप्रमाणा तिलकालकाद्यधिष्ठाना, तृतीया श्वेता नाम द्वादशभागप्रमाणा चर्म्मदलाद्यधिष्ठाना, चतुर्थी ताम्राष्टभागप्रमाणा कुष्ठाद्यधिष्ठाना, पञ्चमी वेदिनी नाम ब्रीहिप्रमाणा ग्रन्थ्याद्यधिष्ठाना, सप्तमी मांसधरा नाम ब्रीहिद्वयप्रमाणा भगन्दराद्यधिष्ठाना। कलाः खल्वपि सप्त धात्वाशयान्तरमर्य्यादाः। ततश्च गृहीतगर्भाणामार्त्तववहानां स्रोतसां वर्त्मान्यवरुध्यन्ते गर्भेण तस्माद्गृहीतगर्भाणामार्त्तवं न दृश्यते। ततस्तदधः प्रतिहतमूर्द्धमागतमपरञ्चोपचीयमानमपरेत्यभिधीयते। शेषञ्चोर्द्धतरमागतं पयोधरावभिप्रतिपद्यते। तस्माद्गर्भिण्यः पीनोन्नतपयोधरा भवन्ति। गर्भस्य यकृत्प्लीहानौ शोणितजौ शोणितफेनप्रभवः फुप्फुसः शोणितकिट्टप्रभव उण्डुकः। असृजः श्लेष्मणश्चापि यः प्रसादः परो मतः। तं पच्यमानं पित्तेन वायुश्चाप्यनुधावति। ततोऽस्यान्त्राणि जायन्ते गुदं वस्तिश्च देहिनः उदरे पच्यमानानामाध्मानादुक्कासारवत्। कफशोणितमांसानां सारो जिह्वा प्रजायते। यथार्थमूष्मणा युक्तो वायुः स्रोतांसि दारयेत्। अनुप्रविश्य पिशितं पेशीर्विभजते तथा। मेदसः स्नेहमादाय शिरास्नायुत्वमाप्नुयात्। शिराणाञ्च मृदुः पाकः स्नायूनाञ्च ततः खरः। आशयाभ्यासयोगेन करोत्याशयसम्भवम्॥ रक्तमेदःप्रसादाद्वृक्कौ, मांसासृक्कफमेदःप्रसादाद्वृषणौ, शोणितकफप्रसादजं हृदयं यदाश्रया हि धमन्यः प्राणवहाः, तस्याधो वामतः प्लीहा फुप्फुसश्च दक्षिणतो यकृत् क्लोम च। तद्धृदयं विशेषेण चेतनास्थानमतस्तस्मिंस्तमसावृते सर्व्वप्राणिनः स्वपन्ति। सु॰ शा॰ ४अ॰। सद्यो गृहीतगर्भाया लिङ्गानि श्रमो ग्लानिः पिपासा सक्थिसदनं शुक्रशोणितयोरवबन्धः स्फुरणञ्च योनेः। स्तनयोः कृष्णमुखता रोमराज्युद्गमस्तथा। अक्षिपक्ष्माणि चाप्यस्याः सम्मील्यन्ते विशेषतः। अकामतश्छर्द्दयति गन्धादुद्विजते शुभात्। प्रसेकः सदनञ्चापि गर्भिण्या लिङ्गमुच्यते॥ तदा प्रभृत्येव व्यायामं व्यवायमपतर्पणमतिकर्षणं दिवास्वप्नं रात्रिजागरणं शोकं यानावरोहणं भयमुत्कटकासनञ्चैकान्ततः स्नेहादिक्रियां शोणितमोक्षणं चाकाले वेगविधारणञ्च न सेवेत। दोषाभिघातैर्गर्भिण्या यो यो भागः प्रपीड्यते। स स भागः शिशोस्तस्य गर्भस्थस्य प्रपीड्यते॥ सु॰ शा॰ ३अ॰। आभुग्नोऽभिमुखः शेते गर्भो गर्भाशये स्त्रियाः। स योनिं शिरसा याति स्वभावात्प्रसवम्प्रति॥" सु॰ शा॰ ५अ॰। शिशौ। सन्धौ। पनसकण्टके। कुक्षौ। পেট। मे। अश्वाया गर्भज्ञानलक्षणे—योन्यां वीजग्रहे तृप्तिः लोचनाविलता तथा। सगर्भा ताड़येदश्वं गर्भस्य परिलक्षणम्॥ काचिन्मूका जड़ीभूता निर्विकारा त्यजेद्वृषम्। काचित्कण्डूयमानाश्वा गर्भिण्यपि प्रहर्षति॥ काचिद्रागवशाद्वापि समूत्रा ताड़येद्वृषम्। तृणञ्च परुषा काचित् अश्वा पुच्छेन योनिकाम्॥ विन्यस्तकर्णौ क्रोधाद्वा वृषं दुष्टाप सर्पिणी। शूनाधोयोनिभागा च सदा कान्तिविधारिणी॥ प्रशस्तरन्ध्रा स्निग्धाङ्गी निविड़ोदरबन्धना। गर्भोपलिप्तपार्श्वा च वड़वा गर्भिणी मता॥ ज॰ द॰ ९ अ॰।



**गर्भकम्।** क्ली। रजनीद्वये। দুই রাত্রি। हे॰ च॰। पुं। केशमध्यस्थितमाल्ये।

**गर्भकण्टकः।** पुं। पनसवृक्षे। वै निघ॰।

**गर्भकरः।** पुं। पुत्रजीववृक्षे। भा॰।

**गर्भकोशः (षः)।** पुं गर्भाशये। वै॰ निघ॰।

**गर्भगृहम्।** क्ली। अन्तर्गृहे।

**गर्भघातिनी।** स्त्री। लाङ्गलीनामक्षुपे। ঈশলাঙ্গুলি। रा॰ नि॰ व॰ ४।

**गर्भचिन्तामणिः।** पुं। गर्भाधिकारे रसः। स चतुर्विधः। १मः—सूतिकाविनोदरसे तुत्थस्थाने स्वर्णदानेन चिन्तामणिर्भवति। र॰ सा॰ सं॰। २यः—जातीफलं टङ्गणं (সোহাগা) त्रिकटु हिङ्गुलं प्र॰ समभागः। जम्बीररसेन वटी कार्य्या समभागः। ३यः—रसः रौप्यं लौहं प्र॰ २ तो॰ अभ्रं ६ तो॰ (मतान्तरे ४ तो॰) कर्पूरं वङ्गं ताम्रं जातीफलं जयित्री गोक्षुरवीजं शतावरी बला (শ্বেতবলা) गोरक्षतण्डुला (গোরক্ষচাকুলিয়া) प्र॰ १ तो॰ जलेन वटी कार्य्या। मा २र॰। ४र्थः—रसः गन्धकः स्वर्णं लौहं रौप्यमाक्षिकं हरितालं वङ्गं अभ्रं प्र॰ समभागः। ब्राह्मी-वासा-भृङ्गराज-क्षेत्रपर्पटी-दशमूलानां प्रत्येकं रसेन ७ भावना देयाः। वटी १ र॰। वृहच्चिन्तामणिः।

**गर्भचर्य्या।** स्त्री। गर्भोपचारकर्म्मणि।

**गर्भच्युतिः।** स्त्री। गर्भस्रावे।

**गर्भजरोगः।** पुं। स्त्रीरोगे। त्रिका॰।

**गर्भण्डः।** पुं। नाभिगुड़के। নাড়ের গোঁড়। त्रिका॰।

**गर्भदः (दा)।** पुं, स्त्री। पुत्रजीववृक्षे। रा॰ नि॰ व॰ ९। श्वेतकण्टकार्य्याम्। भा॰।

**गर्भदात्री (त्रिका)।** स्त्री। पुष्पदात्रीक्षुपे। तत्पर्य्यायः,—पुत्रदा, प्रजादा, अपत्यदा, सृष्टिप्रदा, प्राणिमाता, तापसद्रुमसन्निभा, प्राणदाता। कै॰। गुणाः—मधुरा शीता स्त्रीपुष्पदोषपित्तदाहश्रमघ्नी गर्भदा च। रा॰ नि॰ व॰ ४।

**गर्भद्रुतिः।** स्त्री। वह्निव्यतिरेकेऽपि रसग्रासीकृतानां लोहानां द्रवत्वे। গ্রাসানন্তর পারার সহিত স্বর্ণাদির দ্রবত্ব। "जम्बीरवीजपूरकचाङ्गेरीवेतसाम्लसंयोगात्। क्षारा भवन्ति सुतरां गर्भद्रुतिजारणे शस्ताः॥" र॰ चि॰ ३अ।

**गर्भधारिणी।** स्त्री। मातरि।

**गर्भधृक्।** त्रि। गर्भधारिण्याम्। वै॰ निघ॰।

**गर्भनाड़ी।** स्त्री। (Umbilical cord.) गर्भप्रणाल्याम्। वै॰ निघ॰।

**गर्भनाशः।** पुं। गर्भपाते।

**गर्भनाशना।** स्त्री। अरिष्टकवृक्षे। ব্রিটী গাছ। वै॰ निघ॰।

**गर्भनुत्।** पुं। लाङ्गलिकायाम्। विषलाङ्गुलि। मं कललावी। भा॰।

**गर्भपरिस्रवः।** पुं। (Secondines.) गर्भवेष्टने। गर्भपुष्प। वै॰ निघ॰।

**गर्भपाकी (इन्)।** पुं। षष्टिकव्रीहौ। ষেটে ধান। हे॰ च॰।

**गर्भपातः।** पुं। गर्भजरोगविशेषे। येन पञ्चमषष्ठमासिकगर्भस्य पतनं भवेत्। "मतः स्थिरशरीरस्य पातः पञ्चमषष्ठयोः।" सु॰ नि॰ २७ अ॰। See गर्भस्रावः।

**गर्भपातकः।** पुं। रक्तशोभाञ्जनवृक्षे। जटा॰।

**गर्भपातनः।** पुं। रीठाकरञ्जे। ব্রিটী। भा॰।

**गर्भपात(ति)नी।** स्त्री। कलिकारीवृक्षे। विषलाङ्गुलिया। रा॰ नि॰ व॰ ४।

**गर्भपीयूषवल्लीरसः।** पुं। स्त्रीरोगाधिकारे रसः। "सूतो गन्धं तथा स्वर्णं लौहं रजतमाक्षिके। हरितालं वङ्गभस्माप्यभ्रकं समभागिकं। भावना खलुदातव्या रसैरेषां पृथक् पृथक्। ब्राह्मी वासा भृङ्गराजपर्पटं दशमूलकं। सप्तधा भावयेद्वैद्यः गुञ्जामाना वटीश्चरेत्॥" रौप्य स्वर्णमाक्षिकञ्च। भैष॰। See वृहद्गर्भचिन्तामणिः।

**गर्भपोषणम्।** त्रि। गर्भपुष्टिकरणे।

**गर्भभाण्डक:** । पुं । प्रवचर्द्ध । मद. व, ५ ।

**गर्भरूप:** । त्रि. । तरुणे ।

**गर्भवती** । स्त्री । सगर्भायां स्त्रियाम् । পোয়াতি স্ত্রী । तत्पर्य्याय:,—अन्तर्वत्नी, गुर्व्विणी, गर्भिणी, ससत्त्वा, आपन्नसत्त्वा, दोहदवती ( शब्द-र. ), दोहदान्विता । हे. । पुत्रगर्भवतीलक्षणं—पुत्रगर्भयुक्ताया नार्य्या द्वितीये मासि गर्भाशयमध्ये गर्भ: पिण्डाकारो लक्ष्यते, दक्षिणाक्षिमहत्त्वं प्राग्दक्षिणस्तनस्तन्यं प्रसन्नमुखवर्णता दक्षिणोरौ पुष्टि:, निद्रायां पुन्नामधेयद्रव्येष्वभिलाष: आम्रादिफललाभ: इति । कन्यागर्भलक्षणं उक्तविपरीतलक्षणं ज्ञेयम् । नपुंसकगर्भे गर्भोऽर्व्वुदाकृत: पार्श्वद्वयमुन्नतं पुरस्ताच्च महादिति । भा. । See गर्भिणी ।

**गर्भविच्युति:** । स्त्री । रोगादिना गर्भस्य अकालपतने, गर्भस्रावादौ । "कृमिवाताभिघातैस्तु तदेवोपद्रुतं फलं । पतत्यकालेऽपि यथा तथा स्याद्गर्भविच्युति: ॥" सु. नि. ८अ. ।

**गर्भविनोदरस:** । पुं । सूतिकाधिकारे रस: । त्रिकटु २ तो. हिङ्गुलं ४ तो, जयित्री लवङ्गञ्च प्र. २ तो, स्वर्णमाक्षिकं २ तो. जलेन चणकाकारा वटी कार्य्या । र. सा. सं. ।

**गर्भविलासतैलम्** । क्ली । गर्भाधिकारे गर्भस्थापनतैले । तिलतैलं मूर्च्छितं १ श, कल्कार्थं —भूकुष्माण्डं दाड़िमपत्रं आमहरिद्रा ( কাঁচা হলুদ ) शृङ्गाटकपत्रं त्रिफला जातीपुष्पं शतावरी नीलोत्पलं पद्मपुष्पञ्च प्र. १४० तो. (वा मिलितं १६ तो.) पाकार्थं वारि ८ श. । भैष. ।

**गर्भविलासरस:** । पुं । गर्भिणीज्वरे रस: । रसगन्धकतुल्यकानां प्र. सम जम्बीरत्रिकटुरसाभ्यां प्र. दिनत्रयं भावयेत् । পারা, গন্ধক, শুঁঠভস্ম প্রত্যেকে সমান । জম্বীররসে (গোঁড়া লেবু) ৩ দিন ও ত্রিকটুরসে ৩ দিন ভাবনা দিবে । र. चि. ९ अ. ।

**गर्भविस्राविणी** । स्त्री । एलायाम् । वै. निघ. ।

**गर्भशङ्कु: (क:)** । पुं । मृतगर्भनि:सारणास्त्रे । वै. निघ. । तल्लक्षणं यथा,—नतोऽग्रे शङ्कुना तुल्यो गर्भशङ्कुरिति स्मृत: । अष्टाङ्गुलायतस्तेन मूढगर्भं हरेत् स्त्रियाम् ।

**गर्भशय्या** । स्त्री । Uterus. पक्वाशयमध्यवर्त्ति गर्भाधिष्ठानाशये । यया वेष्टितो गर्भ: कुक्षौ तिष्ठति । गर्भाशय । तस्य रूपम्—"शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्ता सा च कीर्त्तिता । तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रकीर्त्तिता । यथा रोहितमत्स्यस्य मुखं भवति रूपत: । तत्संस्थानां तथारूपां गर्भशय्यां विदुर्बुधा: ॥" भा. ।

**गर्भशल्यम्** । क्ली । गर्भवेदनायाम्, गर्भशूले । च. शा. ८ अ. ।

**गर्भशातनम्** । क्ली । भेषजेन गर्भपातने । পেট খসান । शातनशस्त्रतिभि: विशेषै: बन्धनान्मुच्यते गर्भ. ।" सु. नि. ८अ. ।

**गर्भशोष:** । पुं । गर्भस्य शुष्कतारोगे ।

**गर्भसम्भवा** । स्त्री । स्थूलैलायाम् । वै. निघ. ।

**गर्भस्थली** । स्त्री । गर्भाशये ।

**गर्भस्थानम्** । क्ली । गर्भाशये । अन्त:पुरे । वै. निघ. ।

**गर्भ(र्भा)स्थापनम्** । क्ली । गर्भरक्षणे । गर्भरक्षणयोगे । च. शा. ८ अ. ।

**गर्भस्फुरणम्** । क्ली । गर्भस्पन्दने । सु. शा. १० अ. ।

**गर्भस्राव:** । पुं । Abortion. गर्भच्छेदे । चतुर्थमासपर्य्यन्तं शोणितरूपस्य गर्भस्य विच्युतौ । গা খসা, পেট খসা । स च भयाभिघाततीक्ष्णोष्णपानाशनसेवनादिभिर्भवति । गर्भस्रावनिदानलक्षणे यथा—"भयाभिघाततीक्ष्णोष्णपानाशननिषेवणात् । गर्भे पतति रक्तस्य सशूलं दर्शनम्भवेत् । ग्राम्यधर्म्माध्वगमनयानायासप्रपीड़नै: । ज्वरोपवासपतनप्रहाराजीर्णधावनै: । वमनाच्च विरेकाच्च क्रुध्यनाद्गर्भपातनात् । तीक्ष्णक्षारोष्णकटुकतिक्तरूक्षनिषेवणात् । वेगाभिघाताद्विषमादासनाच्छयनाद्यान । आचतुर्थात्ततो मासात् प्रस्रवेद्गर्भविद्रव: ॥" भा. ।

**गर्भस्रावी** (इन्) । पुं । हिन्तालवृक्षे । হাঁতাল গাছ । रा. नि. व. ९ ।

**गर्भागारम्** । क्ली, पुं । शयनगृहे । अन्तर्गृहे । गर्भाशये । रा. नि. व. १८ ।

**गर्भाधानम्** । क्ली । प्रथमऋतुस्नानादूर्द्धमनुष्ठेये दशसंस्कारान्तर्गतप्रथमसंस्कारे । तत्क्रम:—"अथास्मै पञ्चविंशतिवर्षाय द्वादशवर्षां पत्नीमावहेत् पित्र्यधर्म्मार्थकामप्रजा: प्राप्स्यतीति । ऊनषोड़शवर्षायामप्राप्त: पञ्चविंशतिम् । यद्याधत्ते पुमान् गर्भं कुक्षिस्थ: स विपद्यते ॥ जातो वा न चिरञ्जीवेज्जीवेद्वा दुर्ब्बलेन्द्रिय: । तस्मादत्यन्तबालायां गर्भाधानं न कारयेत् ॥" सु. शा. १० अ. ।

**गर्भाम्भ:** । पुं । गर्भस्थजले । পানমুচি । वा. उ. १अ. ।

**गर्भारि:** । पुं । सूक्ष्मैलायाम् । रा. नि. व. ६ ।

**गर्भावक्रान्ति:** । स्त्री । गर्भावतरणक्रियायाम् । सु. शा. ३अ. । See गर्भ: ।

**गर्भाशय:** । पुं । गर्भशय्यायाम् । जरायौ । See गर्भशय्या ।

**गर्भाष्टम:** । पुं । गर्भजननमासादष्टममासे । चिका. ।

**गर्भिणी** । स्त्री । क्षीराविदार्य्याम् । ক্ষীরুই গাছ । श. च. । गर्भवत्याम् । लिङ्गं यथा—"स्तनयोर्मुखकार्ष्ण्यं स्याद्रोमराज्युद्गमस्तथा । अक्षिपक्ष्माणि चाप्यस्या: संमील्यन्ते विशेषत: । छर्द्दयेत्पथ्यं भुक्तापि गन्धादुद्विजते शुभात् । प्रसेक: सदनञ्चैव गर्भिण्या लिङ्गमुच्यते ॥" भा. । See गर्भ: । तत्कृत्यं यथा—"गर्भिणी प्रथमदिवसात् प्रभृति नित्यम्प्रहृष्टा शुच्यलङ्कृता शुक्लवसना शान्तिमङ्गलदेवताब्राह्मणगुरुपरा च भवेन्मलिनविकृतहीनगात्राणि, न स्पृशेन् दुर्गन्धदुर्द्दर्शनानि, परिहरेदुद्वेजनीयाश्च कथा:, शुष्कं पर्य्युषितं कुथितं क्लिन्नं चान्नं नोपभुञ्जीत । वहिर्निष्क्रमणं शून्यागारचैत्यश्मशानवृक्षाश्रयान् क्रोधभयङ्करांश्च भावानुच्चैर्भाष्यादिकं परिहरेत् यानि च गर्भं व्यापादयन्ति । न चाभीक्ष्णं तैलाभ्यङ्गोत्सादनादीनि निषेवेत । न चायासयेच्छरीरं पूर्व्वोक्तानि च परिहरेत् । शयनासनं मृद्वास्तरणं नात्युच्चमपाश्रयोपेतमसम्बाधं विदध्यात् । हृद्यं द्रव्यं मधुरप्रायं स्निग्धं दीपनीयसंस्कृतञ्च भोजनं भोजयेत् । सामान्यमेतदाप्रसवात् । विशेषतस्तु गर्भिणी प्रथमद्वितीयतृतीयमासेषु मधुरशीतद्रवप्रायमाहारमुपसेवेत, चतुर्थे पयोनवनीतसंसृष्टमाहारयेज्जाङ्गलमांससहितं हृद्यमन्नं भोजयेत्, पञ्चमे क्षीरसर्पि:संसृष्टं, षष्ठे श्वदंष्ट्रासिद्धस्य सर्पिषो मात्रां पाययेत् यवागूं वा, सप्तमे सर्पि: पृथक्पर्ण्यादिसिद्धमेवमाप्याय्यते गर्भ:, अष्टमे वदरोदकेन बलातिबलाशतपुष्पपललपयोदधिमस्तुतैल-लवणमदनफल-मधुघृतमिश्रेण स्थापयेत् पुराणपुरीषशुद्ध्यर्थम् अनुलोमनार्थञ्च वायो:, तत: पयोमधुरकषायसिद्धेन तैलेनानुवासयेदनुलोमे हि वायौ सुखमनुपद्रवा प्रसूयते, नवमे मासि सूतिकागारमेनां प्रवेशयेत् । प्राप्तप्रसवालक्षणं—"जाते हि शिथिले कुक्षौ मुक्ते हृदयबन्धने । सशूले जघने नारी ज्ञेया सा तु प्रजायिनी ॥ ततोपस्थितप्रसवाया: कटीपृष्ठम्प्रति समन्ताद्वेदना भवत्यभीक्ष्णं पुरीषप्रवृत्ति: मूत्रं प्रसिच्यते योनिमुखात् श्लेष्मा च ।" सु. शा. १० अ. ।

**गर्भिण्यवेक्षणम्** । क्ली । कुमारभृत्यायाम् । Midwifery. गर्भिणीपरिचर्य्यायाम् । चिका. ।

**गर्भी** (इन्) । पुं । पुत्रजीववृक्षे । वै. निघ. ।

**गर्भैपाकशालिक:** । पुं । षष्टिकधान्ये । रा. नि. व. १६ ।

**गर्म्मु(र्म्मो)टिका (टी)** । स्त्री । लवणतृणविशेषे । মাড়ুয়া ঘাসবিশেষ বা ধান । হিং জরড়ি । মং গৌড়ালবণতৃণ । तत्पर्य्याय:—गर्म्मुच्छद: । र. । गुणा:—मधुरा शीता सारणी दाहघ्नी रक्तदोषघ्नी रुच्या पशूनां दुग्धदायिनी । रा. नि. व. ८ । र. मा ।

**गर्म्मुत्** । स्त्री । तृणधान्यविशेषे । গড়গড়, মগ্না । अम. । सुवर्णे । नले । मे ।

**गर्व्वालावू:** । स्त्री । पातालगरुड़ीनाम लताविशेषे ।

**गल:** । पुं । कण्ठे । গলা । रा. नि. व. १८ । सर्ज्जरसे । धूनो मे । गड़कमीने । श. र. ।

**गलक:** । पुं । गड़कमत्स्ये । श. र. ।

**गलकम्बल:** । पुं । सास्नायाम् । গরুর গলস্থিত কম্বলাকৃতি মাংস অম. ।

**गलकोल:** । पुं । गलशुण्डीनामरोगे । वै. निघ. ।

**गलगण्ड:** । पुं । Goitre. गलरोगविशेषे । গলগণ্ড । तस्य निदानं—"वात: कफश्चापि गले प्रदुष्टौ मन्ये तु संसृत्य तथैव मेद: । कुर्व्वन्ति गण्डं क्रमश: स्वलिङ्गै: समाचितं तं गलगण्डमाहु: ॥ लक्षणं—निबद्ध: श्वयथुर्यस्य मुष्कवल्लम्बते गले । महान्वा यदि वा ह्रस्वो गलगण्डं तमादिशेत् ॥" मा. नि. । पक्षिविशेषे । হাড়গিলে ।

**गलगोड़ि(लि)का (ली)** । स्त्री । सविषकीटविशेषे । यस्य दंशनात् दाहस्वेदशोफकरी तु गलगोड़िका ।" च. । निर्विषसर्पविशेषे । सु. कल्प. ४ अ. ।

**गलग्रह:** । पुं । मत्स्यचण्डापरनामधेये व्यञ्जने ।

माछेर घण्ट। श. च. गलरोगविशेषे। गला-धरा। "तस्य श्लेष्मा प्रकुपितः तिष्ठत्यन्तर्गले स्थिरः। आशु सञ्जनयेच्छोफं जायतेऽस्य गलग्रहः॥" च. सू. १८ अ.। अश्वस्य गलरोगविशेषे। ज. द. २९ अ.।

**गलग्राहः**। पुं। मकरे। वै. निघ.।

**गलत्कुष्ठारिरसः**। पुं। गलत्कुष्ठे रसः। पारद गन्धक-ताम्रलौह-गुग्गुलु - चित्रकशिलाजतुकुचेला-वचानां (पाठान्तरे वचास्थाने त्रिफला) प्र.समभागः। अभ्रं ४ भ. करञ्जवीजं ४ भ. घृतमधुभ्यां वटी कार्य्या। পারা, গন্ধক, তামা, লৌহ, গুগ্গুল, চিতামূলচূর্ণ, শিলাজতু, কুচিলা, বচ (পাঠান্তরে ত্রিফলা) প্রত্যেকে ১ ভ. অভ্র ৪ ভ. করঞ্জবীজ ৪ ভ. ঘৃত ও মধু দ্বারা মর্দ্দন। মা. ১ তোঃ। भा.। र. सा. सं.।

**गलन्तिका**। स्त्री। कर्कर्य्याम्। বদ্‌নারা। अम.।

**गलभङ्गः**। पुं। स्वरभङ्गे।

**गलमेखला**। स्त्री। गलसूत्रे। हारा.। तत्पर्य्यायः—सूत्राली। हा.।

**गलरोगः (हिणी)**। पुं, स्त्री। कण्ठगतसप्तदश रोगभेदे। तत्र वातपित्तकफसन्निपातशोणितज-भेदेन रोहिणी पञ्चधा भवति। अपरे गलशालूक-तुण्डिकेरिका-गलौघ-वलय गलायुक-शतघ्नी गल-विद्रधि - गलार्व्वुदाः वहिर्गलगण्डः वातज कफज-मेदोजभेदेन स्वरघ्नश्चेति द्वादश। रोहिण्यः पञ्च कण्ठशालूकाधि-जिह्ववलय - बलासैकवृन्दवृन्दशतघ्नी-गिलायुगलविद्रधिगलौघस्वरघ्नमांसतानविदार्थ्य इति अष्टादश। लक्षणं—"गलेऽनिलः पित्तकफौ च मूर्च्छितौ पृथक्समस्ताश्च तथैव शोणितं। प्रदूष्य मांसं गलरोधिनोऽङ्कुरान् सृजन्ति यान् सासुहरा तु रोहिणी॥" सु. नि. १६ अ.। कण्ठास्यशोषकृ-द्वातात् सा हनुश्रोत्ररुक्करी। पित्ताज्ज्वरोषात्तृण्मोह-कण्ठधूमायनान्विता। कफेन पिच्छिला पाण्डुः असृजा स्फोटकाचिता। गम्भीरपाकानिचयात्सर्व्व-लिङ्गसमन्विता॥ वा. उ. २१ अ.। लक्षणानि स्वस्वपर्य्याये मृग्यानि।

**गलरोहिणी**। स्त्री। कण्ठगत - रोगविशेषे। "गलेऽनिलः पित्तकफौच मूर्च्छितौ। पृथक् समस्ताश्च तथैव शोणितम्। प्रदूष्य मांसं गलरोधिनोऽङ्कुरान् सृजन्ति यान् सासुहरा तु रोहिणी॥" सुश्रु.।

**गलविद्रधिः**। पुं। गलरोगभेदे। कण्ठेविद्रधि। लक्षणं—"सर्व्वं गलं व्याप्य समुत्थितो यः शोफो रुजो यत्र वसन्ति सर्व्वाः। स सर्व्वदोषो गलविद्रधिस्तु तस्यैव तुल्यः खलु सर्व्वजस्य॥" सु. नि. १६ अ.।

**गलव्रतः**। पुं। मयूरे। त्रिका.।

**गलशालूकः**। पुं। अश्वस्य मुखरोगविशेषे। ज. द. २९।

**गलशुण्डिका (ण्डी)**। स्त्री। The mvula. अलिजिह्विकायाम्। আলজিব, গলার শুঁড়ি। रा. नि. व. १८। च. शा. ७अ। तत्पर्य्यायः,—सुधास्रवा, घण्टिका, लम्बिका (हे.), रसाङ्का, प्रतिजिह्विका, माध्वी, अलिजिह्विका, रसनाकाकुः (शब्दर.)। जिह्वाप्रबन्धजाः कण्ठे दारुणा मार्गरोधिनः। मांसाङ्कुराः शीघ्रचया रोहिणी शीघ्रकारिणी॥ कण्ठशुण्डीत्यपरनामधेये तालुजरोगविशेषे। लक्षणं यथा—"श्लेष्मासृग्भ्यां तालुमूलात् प्रवृद्धो दीर्घः शोथो ध्मातवस्तिप्रकाशः। तृष्णाश्वास-कासकृत् तं वदन्ति व्याधिं वैद्याः कण्ठशुण्डीति नाम्ना॥" भा. म. ४भ. मुखरो. चि.।

**गलशोथः**। पुं। गलस्फीतौ। গলাফোলা। "सनागरं देवदारु चव्यचित्रकपेषितं। प्रलेपनमिदं श्रेष्ठं गलश्वयथुनाशनम्॥" भैष. ज्व. चि.।

**गलस्तनः**। पुं। गलगण्डरोगे। रा. नि. व. २०। छागगलस्थस्तने। वै. निघ.।

**गल(ले)स्तनी**। स्त्री। छाग्याम्। हे. च.।

**गला**। स्त्री। अलम्बुषायाम्। भा.। ফুলশোলা।

**गलाङ्कुरः**। पुं। A disease of the throat. रोहिणीत्यपरपर्य्याये गलरोगविशेषे गण्डमालायाम्। গণ্ডমালা। हे. च.।

**गलानिकः(विलः)**। पुं। गङ्गाटेयमत्स्ये। গল্লাচিংড়ি। त्रिका.।

**गलायुकः**। पुं। गलरोगभेदे। लक्षणं—"मांसकीलो गले दोषैरेकोऽनेकोऽथवाल्परुक्। कृच्छ्रोच्छ्वासाभ्यवहृतिः पृथुमूलो गलायुकः॥" वा. उ. २१ अ.।

**गलार्व्वुदम्**। क्ली। गलरोगभेदे। গলার আব্। लक्षणम्—"जिह्वावसाने कण्ठादावपाकं श्वयथुं मलाः। जनयन्ति स्थिरं रक्तं नीरुजं तद्गलार्व्वुदम्॥ वा. उ. २१ अ.।



**गलितकुष्ठम्**। क्ली। Incurable leprosy. गलत्कुष्ठे।

**गलितदन्तः**। त्रि। दन्तहीने।

**गलुः**। पुं। मणिविशेषे। मद्दा भा.।

**गलेगण्डः**। पुं। मर्कटपक्षिणि। त्रिका.। गलगण्डरोगे। रा. नि. व. २०।

**गलेस्तनी**। स्त्री। स्त्रीछागे। रा.।

**गलोद्भवः**। पुं। रोचमानाश्वे। त्रिका.।

**गलौघः**। पुं। गलरोगविशेषे। तस्य लक्षणं यथा—"शोफो महानन्नजलावरोधी तीव्रज्वरो वातगतेर्निहन्ता। कफेन जातो रुधिरान्वितेन गले गलौघः परिकीर्त्त्यतेऽसौ॥" सु. नि. १६ अ.।

**गल्लः (कः)**। पुं। गण्डे। গাল। हे. च.।

**गल्लचातुरी**। स्त्री। उपधानविशेषे। গালবালিশ। जटा.।

**गल्लिरः**। पुं। उन्मन्थनामककर्णपालीगतरोगे।

**गल्वर्कः**। पुं। वैदूर्य्यमणौ। इन्द्रनीलमणौ। त्रिका.। सुरापानपात्रे।

**गवयः**। पुं। गलकम्बलशून्ये गोसदृशे कूलचर-पशौ। तत्पर्य्यायः,—गोसदृक्षः (हे.), गवालूकः (त्रि.), वनगौः, वनभद्रः, महागन्धः। तन्मांसगुणाः—बृंहणं बल्यं रुच्यं वृष्यञ्च। रा. नि. व. १७। स्निग्धं मधुरं कासघ्नं विपाके मधुरं व्यवायवर्द्धनञ्च। सु. सू. ४६ अ.।

**गवयी**। स्त्री। गवयपत्न्याम्। বুনো গাই। रा. नि. व. १९। तत्पर्य्यायः,—वनधेनुः, भिल्लगवी। रा.।

**गवयोद्भवः**। पुं। तवक्षीरे। वै. निघ.।

**गवराजः**। पुं। महावृषे। श. च.।

**गवलम्**। क्ली। महिषशृङ्गे। अम.। त्रिषु। अ.। पुं। वनमहिषे। हे. च.।

**गवाची (टी)**। स्त्री। (Macrognathus pancalus.) पङ्कालमत्स्ये। পাঁকাল মাছ। अस्य गुणाः—अजीर्णकारित्वं गुरुत्वं श्लेष्मकोपनत्वञ्च। राज. ३ प.।

**गवादनम्**। क्ली। घासे। श. च.।

**गवादनी**। स्त्री। इन्द्रवारुणीलतायाम। রাখালশশা। वै. निघ. अपस्मा. चि.। श्वेतापराजिता-याम्। अक्षोटवृक्षे। वै. निघ.। अपराजिताशाम्। नीलापराजितायाम्। रा. नि. व. ३।

**गवालूकः**। पुं। गवये। त्रिका.।

**गवाषिका**। स्त्री। लाक्षायाम्। र. मा.।

**गवाक्षः**। पुं। गोक्षुरके। वै. निघ.। वातायने। अम.।

**गवाक्षिका**। स्त्री। गवाक्ष्याम्। অপরাজিতা। र. मा.।

**गवाक्षितः**। त्रि। विरचिते। "यैर्गवाक्षितमिदं शरीरम्।" भा.।

**गवाक्षी**। स्त्री। शाखोटवृक्षे। শ্যাওড়া গাছ। रा. नि. व. ८। महाबलायाम्। रा. नि. व. २३। इन्द्रवारुणीलतायाम्। রাখালশশার গাছ। सु. कल्प. ७अ.। भा. म. १भ. तन्द्रिकज्व. चि.। "निकुम्भकुम्भत्रिफलागवाक्षी।" गोडुम्बायाम्। রাজগোমুক। च. सू. २अ.। गोरक्षकर्क्याम्। রাখালশশা। सि. यो. कास. चि.। अपराजितायाम्। प. मु.। सु. सू. ३६ अ.। श्वेतपुष्पेन्द्र-वारुण्याम्। सु. सू. ३९ अ. अधःसंशमने।

**गविनः**। पुं। कोकड़नामकबिलेशयमृगे। जविन इत्यपि पाठः। रा. नि. व. १९।

**गवेडुः**। स्त्री। धान्यविशेषे। গড়গড়, দেধান। अम.।

**गवेधुः (कः)**। पुं। घुलुञ्चवृक्षे। দেধান। च. सू. २अ.। गोरक्षतण्डुलायाम्। গোরক্ষচাকুলিয়া। च. द.। सि. यो. छर्द्दि. चि. विषतैले, महानारायणतैले। क्ली (कम्)। गैरिके। গিরিমাটী। रा. नि. व. १३।

**गवेधुका**। स्त्री। (Coixbarbata.) গবেড়ী। দেধান। हिं गरहेडुआ। तत्पर्य्यायः,—गवेडुः (अ.), गवेधुः, गवेडुका (अ. टी.), कुण्डः (मे.), क्षुद्रा, गोजिह्वा, गुन्द्रः, गुन्मः (व.)। च. सू. २अ. यवाग्वाम्। गुणाः—गवेधुः कटुका स्वाद्वी कार्श्यकृत् कफनाशिनी। भा. पू. १भ. धान्यव.। नाग-बलायाम्। গোরক্ষচাকুলে। रा. नि. व. ४। भैष. वा. व्या. चि. स्वल्पविषतैले। काशमूले। वा. व्या. शता. नारायणतैले।

**गवेरि(रु)कम्**। क्ली। गैरिके। গিরিমাটী। त्रिका.।

**गवेश(षि)का।** स्त्री। गोरचीवृचे। श, च.।

**गव्यम्।** क्ली। गोघृते। गोरोचनायाम्। गव्य-दधि। गोदुग्धे। विका.। त्रि। गोसम्बन्धीये।

**गव्यघृतम्।** क्ली। गव्यनवनीतजातघृते। গাওয়া ঘি। गुणाः—बुद्धिकान्तिस्मृतिदं बलमेधावर्द्धकं पुष्टिकरं वातश्लेष्मघ्नं श्रमहरं पित्तघ्नं हृद्यम् अग्निकरं पाकमधुरं वृष्यं देहस्थैर्य्यकरञ्च। रा. नि. व. १५।

**गव्यतक्रम्।** क्ली। गोदुग्धभवघोले। গরুর ঘোল। गुणाः—"गव्यं त्रिदोषशमनं पथ्यं श्रेष्ठं तदुच्यते। दीपनं रुचिकृन्मेध्यं अर्शोदरविकारजित्॥" अत्रि, ८ अ.।

**गव्यदधि।** क्ली। गोदुग्धजातदधनि। गुणाः—अतिपवित्रं शीतलं स्निग्धं दीपनं बल्यं मधुरम् अरोचकघ्नं ग्राहि वातरोगघ्नञ्च। रा. नि. व. १५। आम्लं स्वादुरसं ग्राहि गुरूष्णं वातरोगजित्। मेदःशुक्रबलश्लेष्म-रक्तपित्ताग्नि-शोफकृत्। स्निग्धं विपाके मधुरं दीपनं रुचिवर्द्धनं। वातापहं पवित्रञ्च दधि गव्यं रुजाकरम्॥" अत्रि. ८अ.।

**गव्यनवनीतम्।** क्ली। गोदुग्धजनवनीते। গাওয়া ননী। सर्व्वदोषघ्नं बलकृत् पुष्टिवर्द्धनञ्च। रा. नि. व. १५।

**गव्यमांसम्।** क्ली। गोमांसे। सु. सू. ४६ अ.।

**गव्या।** स्त्री। गोरोचनायाम्। रा. नि. व. १२।

**गव्यूतिः।** पुं, स्त्री। क्रोशद्वये। हे. च.।

**गहनम्।** क्ली। वने। दुःखे। पीड़ायाम्। वै. निघ.।

**गह्वरम्।** क्ली, स्त्री। विड़ङ्गे। प. मु.। गुहायाम्। अ.। वने। मे.। रोदने। हे.। पुं। निकुञ्जे। मे.।

**गाङ्गम्।** क्ली। गङ्गोदके। वै. निघ.।

**गाङ्गटः (कः)।** पुं। मत्स्यविशेषे। চিংড়ি মাছ। श, र.।

**गाङ्गटेयः।** पुं। गाङ्गटमत्स्ये। श, र.।

**गाङ्गेयम्।** क्ली। भद्रमुस्तायाम्। মুতা। सुवर्णे। रा. नि. व. १३। र. चि. ६अ.। धुस्तूरे। कशेरौ। अम.। पुं। इल्लीशमत्स्ये। त्रिका.। स्त्री (यी)। मुस्तके। "अथवा वृषगाङ्गेयी।" वा. चि. १अ.।

**गाङ्गेरिका।** स्त्री। नागबलायाम्। গোরক্ষ-চাউলী। वै. निघ.।

**गाङ्गेरुः (कः)।** पुं। काकाण्डीक्षुपे। লতা-ফট্‌কী, আলাকুশী। वै. निघ.।

**गाङ्गेरुकम्।** क्ली। गोरचतण्डुलबीजे।

**गाङ्गेरुकी।** स्त्री। गुड़शर्करके। प. मु.। गोरचतण्डुलायाम्। গোরক্ষচাউলী। अम.। "गाङ्गेरुकीमूलरसैर्जायते गतवेदनः।" भा. म. १भ.। तत्फलङ्कषायं हिमं स्वादु कफवातघ्नञ्च। सु. सू. ४६ अ.।

**गाङ्गेरुही।** स्त्री। नागबलायाम्। रा.।

**गाङ्गेष्ठी।** स्त्री। कटशर्करालतायाम्। নটা। हारा.।

**गाङ्गौघम्।** क्ली। गङ्गास्रोतसि।

**गाजरम्।** क्ली। गृञ्जने। শালগম। भा. पू. १ भ. शाकव.।

**गाञ्जि(ञ्जो)कायः।** पुं। वर्त्तिकपक्षिणि। रा. नि. व. १९।

**गाड़वः।** पुं। मेघे। त्रि.।

**गाढ़म्।** त्रि। बहुकालजाते। बद्धमूले। सान्द्रे। सु. नि. ६अ.।

**गाढ़मुष्टिः।** पुं। खड्गे। मे.।

**गाढ़लवणम्।** क्ली। सम्भरदेशजलवणविशेषे। সম্বর লবণ। रा. नि. व. ६।

**गाण्डीरम्।** क्ली। शाकविशेषे। শমঠ শাক। सु. सू. ४६ अ.।

**गाण्डीवी (इन्)।** पुं। अर्ज्जुनवृचे। रा. नि. व. ९।

**गातुः।** पुं। कोकिले। भ्रमरे। मे.। गन्धर्व्वे। के.।

**गात्रम्।** क्ली। देहे, शरीरावयवे। रा. नि. व. १८। करिणः पूर्व्वजङ्घादिप्रदेशे, अग्रपादादि सम्मुखभागे। मे.।

**गात्रकण्डूः।** स्त्री। कण्डूरोगविशेषे।

**गात्रघर्षणम्।** क्ली। शरीरमार्ज्जने।

**गात्रभङ्गा।** स्त्री। शूकशिम्ब्याम्। श, च.। गन्धशट्याम। वै. निघ.।



**गात्रमार्ज्जनी।** स्त्री। अङ्गमार्ज्जनार्थवस्त्रे। গামছা।

**गात्रविक्षेपः।** पुं। अङ्गचालने, अङ्गविक्षेपणे। वै. निघ.।

**गात्रशोषः।** पुं। पूतना-नामबालरोगविशेषे। পুঁয়ে পাওয়া। वै. निघ.।

**गात्रसङ्कोची (इन्)।** पुं। जाहकजन्तौ। कृष्णकृकलासे। কাঁকলাস, বহুরূপী। रा. नि. व. १९। गोनससर्पे। वै. निघ.।

**गात्रसम्प्लवः।** पुं। प्लवजातीयपक्षिणि, हंसादौ। हे. च.।

**गात्रसादः।** पुं। शरीरावसादे। पित्तरोगे। वै. निघ.।

**गात्रानुलेपनी।** स्त्री। गात्रानुलेपनयोग्ये घृष्टपिष्टे सुगन्धिद्रव्ये। अम.।

**गात्रोत्सादनम्।** क्ली। गात्रानुलेपने।

**गाधः।** पु। स्थाने। लाभेच्छायाम्। हे. च.।

**गाध्यखण्डा।** स्त्री। भूम्यामलक्याम्। के.।

**गानिनी (ली)।** स्त्री। वचायाम्। वै. निघ.।

**गान्त्री।** स्त्री। गोशकटे। अ. टी. रा.।

**गान्धारम्।** क्ली। गन्धरसे। গন্ধবোল। त्रिका.। पुं। सिन्दुरे। मे.। देशविशेषे।

**गान्धारी (रिका)।** स्त्री। कण्टकार्य्याम्। वै. निघ.। दुरालभायाम्। भा.। रा. नि. व. ४। गञ्जिकायाम्।

**गान्धिकः।** पुं। कीटविशेषे। গাঁধি পোকা। श, र.। लेखके। नाना.।

**गान्धिनी।** स्त्री। गङ्गायाम्। शब्दर.।

**गाम्भारिका (री)।** स्त्री। गाम्भारीवृचे। গামার গাছ। मं कं सीवनी। तं गम्भारि। प. मु.।

**गाम्भीर्य्यम्।** क्ली। गम्भीरतायाम्।

**गायत्री (इन्)।** पुं, स्त्री। खदिरवृचे। भ.। अम.। च. द., सि. यो. रक्त. पि. चि. खण्डकाद्यलौहे। "तालमूली च गायत्री।" खदिरकाष्ठसारे। च. द. यक्ष्म. चि. एलादिमन्थे।

**गायत्रीसारः।** पुं। खदिरसारे। चक्र.।

**गायत्रः।** पुं। सोमलताभेदे। "गायत्रस्त्रैष्टुभः।" सु. चि. २९ अ.।

**गारित्रम्।** क्ली। धान्यविशेषे। वै. निघ.। ओदने। उणा.।

**गारुड़म्।** क्ली। स्वर्णे। मे.। मरकतमणौ। रा. नि. व. १३। तन्नामविषमन्त्रे। जटा.।

**गारुड़िकः।** पुं। विषवैद्ये। श, र.।

**गारुड़ी।** स्त्री। पातालगरुड़ीवृचे। रा.नि.व.३।

**गारुत्मक(त)म्।** क्ली। मरकतमणौ। रा. नि. व. १३। वै निघ. चय. चि.। नवरत्नराजमृगाङ्के।

**गारुत्मतपत्रिका।** स्त्री। गङ्गापत्र्याम्। পাঁচী লতা। रा. नि. व. १०।

**गार्ज्जरम्।** क्ली। गर्जरमूलके। গাজর মূলা। रा. नि. व. ७।

**गार्द्धः।** त्रि। आद्यूने। क्ली (र्द्धं)। आद्यूनतायां।

**गार्भः (र्भिकः)।** त्रि। गर्भसम्बन्धिनि।

**गालः।** पुं। मदनवृचे। प. मु.। वा. ज्व. चि. १अ.। "पिप्पलीभिर्युतान् गालान्।"

**गालनम्।** क्ली। वस्त्रपूतकरणे। ছাঁকা।

**गालफलम्।** क्ली। मदनफले। वै. निघ.।

**गालवः।** पुं। लोध्रवृचे। मे.। श्वेतलोध्रे। अ. टी. भ.। केन्दुकवृचे। কেঁদ গাছ। श. च.।

**गालितः।** त्रि.। द्रवीकृते।

**गालोड़नम्।** क्ली। उन्मादरोगे।

**गालोड़ितः।** त्रि.। उन्मत्ते। रुग्णे। के.।

**गालोड्यम्।** क्ली। पद्मबीजे। रा. नि. व. १०।

**गाहितः।** त्रि। कम्पिते। स्नाते। वै. निघ.।

**गाक्षीरी।** स्त्री। क्षीरशुक्लायाम्। प. मु.।

**गिरणम्।** क्ली। भक्षणे। वै. निघ.।

**गिरिः।** पुं। चक्षूरोगविशेषे। मे.। पर्व्वते। रा. नि. व. २। स्त्री। गिलने। अम.। बालमूषिकायाम्। अ. टी. र.। पारददोषविशेषे। रत्ना.।

**गिरिकः।** पुं। गिरिनिम्बे। महानिम्बे। वै. निघ.।

**गिरिकदम्बः।** पुं। धाराकदम्बे। रा. नि. व. ९। वा. उ. २अ.।

**गिरिकदली ।** स्त्री । पार्व्वतीयकदलीवृत्ते । तत्पर्य्यायः,—गिरिरम्भा, पर्व्वतमोचा, अरण्यकदली, बहुबीजा, वनरम्भा, गिरिजा, गजवल्लभा । गुणाः—मधुरा हिमा बल्या वीर्य्यवर्द्धनी रुच्या तृष्णापित्तदाहशोषहरी गुरुः दुर्ज्जरा च । रा. नि. व. ११ ।

**गिरिकर्णिः (र्णी) ।** स्त्री । इन्द्रवारुण्याम् । रा. नि. व. २३ । पाण्डुरापराजितायाम् । रा. नि. व. ३ । See श्वेतापराजिता । कृष्णापराजितायाम् । কাল অপরাজিতা । गुणाः—शीतला तिक्ता पित्तोपद्रवघ्नी चक्षुष्या विषदोषघ्नी त्रिदोषघ्नी । भा. । श्वेतकिणिहीवृत्ते । पृथिव्याम् । आस्फोतायाम् । হাপরমালী । र. मा. । दुरालभायाम् । श. च. ।

**गिरिकर्णिका ।** स्त्री । अपराजितायाम् । অপরাজিতা । सु. सू. ३९ अ. । श्वेतकटभीवृत्ते । रा. नि. व. ९ । श्वेतकिणिह्याम् । आरग्वधवृत्ते । रा. नि. व. २३ ।

**गिरिका ।** स्त्री । बालमूषिकायाम् । ছুঁচো । अम. ।

**गिरिकाणः ।** त्रि । गिरिरोगेणैकचक्षुर्हीने । उणा. ।

**गिरिकीटजफलम् ।** क्ली । इन्द्रयवे । वै निघ. २भ. अतिसा. चि. मुस्तादिचूर्णे ।

**गिरिगुड़ः ।** पुं । गेण्डूके । গেঁড়ু । हे. ।

**गिरिगोचरः ।** पुं । श्वेतमर्वटे । वै. निघ. ।

**गिरिजम् ।** क्ली । शिलाजतुनि । भा. । अभ्रधातौ । लौहे । मे. । गैरिके । रा. नि. व. १३ । पुं । गिरिजमधूकवृत्ते । পাহাড়ে মৌল গাছ । र. मा. । तत्पर्य्यायः,—गौरशाकः, मधूलः, स्वल्पपत्रकः । रः । काञ्चनारवृत्ते । রক্ত কাঞ্চন গাছ । रा. नि. व. १० ।

**गिरिजतु (न्म) ।** क्ली । शिलाजतुनि । रा. नि. व. १३ । वै. निघ. क्षय. चि. सूर्य्यप्रभागुड़ी ।

**गिरिजधातुः ।** पुं । गैरिके । গিরিমাটী । वै. निघ. ।

**गिरिजा ।** स्त्री । मल्लिकापुष्पवृत्ते । মল্লিকা ফুলের গাছ । रा. नि. व. १० । मातुलुङ्गवृत्ते । प. मु. । श्वेतबुह्णायाम् । त्रायमाणालतायाम् । रा. नि. व. ५ । गिरिकदलीवृत्ते । लघुपाषाणभेदे । लौहे । रा. नि. व. २३ । रास्नायाम् । कुन्दपुष्पवृत्ते । वै. निघ. ।

**गिरिजातेजः ।** क्ली । अभ्रधातौ । वै. निघ. ।

**गिरिजामलम् ।** क्ली । अभ्रधातौ । अ. टी. रा. ।

**गिरिजावीजम् ।** क्ली । गन्धके । भैष. ग्रहणीकवाटरसे । अभ्रके ।

**गिरिजाह्वयम् ।** क्ली । शिलाजतुनि । वै. निघ. ।

**गिरिज्वरः ।** पुं । वज्रे । श. र. ।

**गिरिधातुः ।** पुं । गैरिकधातौ । रा. नि. व. १३ ।

**गिरिध्वजः ।** पुं । वज्रे ।

**गिरिनिम्बः ।** पुं । महानिम्बवृत्ते, कैटर्य्यनिम्बे । रा. नि. व. ९ ।

**गिरिपत्रः ।** पुं । गिरिनिम्बे । মহানিম । हिं बकाणनिम्ब । वै. निघ. ।

**गिरिपादिका ।** स्त्री । कपिकच्छ्वाम् । আলা-কুশী । मं गौड़ीकुहिड़ी । वै. निघ. ।

**गिरिपीलुः ।** पुं । परूषकवृत्ते । रा. नि. व. ११ ।

**गिरिपुष्प(क)म् ।** क्ली । शैलजे । শৈলজ । मं दगड़फूल । रा. नि. व. १२ ।

**गिरिप्रिया ।** स्त्री । चमरीगव्याम् । रा. नि. व. १९ ।

**गिरिभित् ।** पुं । पाषाणभेदक्षुपे । भा. । श्लेष्मारिवृत्ते । চাঁ' । आ. ।

**गिरिभूः ।** स्त्री । क्षुद्रपाषाणभेदे । रा. नि. व. ५ ।

**गिरिभेदः ।** पुं । पाषाणभेदक्षुपे ।

**गिरिमनोहरः ।** पुं । आरग्वधवृत्ते । वै. निघ

**गिरिमल्लिका (ल्ली) ।** स्त्री । कुटजवृत्ते । अम । सि. यो. रक्ताति. चि. (कुटजाष्टके) ।

**गिरिमानः ।** पुं । गजे । श. र. ।

**गिरिमालः ।** पुं । आरग्वधवृत्ते । वै. निघ. ।

**गिरिमालपञ्चकम् ।** क्ली । आरग्वधाद्यपरनामयोगविशेषे । আরগ্বধাদি পাচন । "आरग्वधग्रन्थिकमुस्ततिक्ताहरीतकीभिः क्वथितः कषायः ।" सि. यो. वातकफज्व. चि. ।

**गिरिमृत् (ड्डवम्) ।** स्त्री, क्ली । गैरिके । त्रिका. । रा. नि. व. १३ ।



**गिरिमेदः ।** पुं । विट्खदिरे । र. मा. । इरिमेद इत्यपि पाठः ।

**गिरिय(या)कः ।** पुं । गेण्डूके । हे. ।

**गिरिरम्भा ।** स्त्री । गिरिकदल्याम् । बीटच कला । रा. नि. व. ११ ।

**गिरिवर्त्तिका ।** स्त्री । पार्व्वततित्तिरिपक्षिणि । वै. निघ. ।

**गिरिवासी** (इन्) । पुं । हस्तिकन्दनाममहाकन्दशाके । रा. नि. व. ७ ।

**गिरिशान्तकः ।** पुं । लौहमारकत्रिफलादिगणे । र. सा. सं. ।

**गिरिशायी** (इन्) । पुं । पार्व्वतपक्षिविशेषे । वै. निघ. ।

**गिरिशालाह्वः ।** पुं । प्रतुदपक्षिणि । सु. सू. ४६ अ. ।

**गिरि(श)शालिनी ।** स्त्री । अपराजितायाम् । पुराणं ।

**गिरिशेखरः ।** पुं । महावकुले । वै. निघ. ।

**गिरिसर्पः ।** पुं । दर्व्वीकरसर्पविशेषे । सु. कल्प. ४ अ. । See सर्पः ।

**गिरिसानुगा(जा) ।** स्त्री । त्रायमाणायाम् । वै. निघ. ।

**गिरिसारः ।** पुं । लौहे, वङ्गे । मे. ।

**गिरिसिन्दु(न्धु)कः ।** पुं । कृष्णनिर्गुण्ड्याम् । वै. निघ. ।

**गिरिस्वेदः ।** पुं । शिलाजतुनि । वै. निघ. ।

**गिरिह्वा ।** स्त्री । बालमूषिकायाम् । अ. टी. र. । सु. कल्प. ५ अ. ।

**गिलः ।** पुं । जम्बीरवृत्ते । श. च. ।

**गिलग्राहः ।** पुं । नक्रे । वै. निघ. ।

**गिलनम् (लिः) ।** क्ली, स्त्री । गलाधःकरणे, भक्षणे । अ. टी. ।

**गिलायुः ।** पुं । गलरोगे । तल्लक्षणं यथा—"ग्रन्थिर्गले त्वामलकास्थिमात्रः स्थिरोऽल्परुक् स्यात् कफरक्तमूर्त्तिः । संलक्ष्यते सक्तमिवाशनञ्च स शस्त्रसाध्यस्तु गिलायुसंज्ञः ॥" सु. नि. १६अ. ।

**गिलोड्यः ।** पुं । शणपत्राकारावयवयुक्तफलविशेषे । गिलोट इति लोके । सु. सू. ४२ अ. ।

**गीर्लता ।** स्त्री । महाज्योतिष्मतीलतायाम् । रा. नि. व. ३ ।

**गीर्व्वाणकुसुमम् ।** क्ली । लवङ्गे । रा. नि. व. १२ ।

**गुग्गुलुः ।** पुं । (Burseraceae. Balsamodendron mukul.) स्वनामख्यातपण्यद्रव्ये । গুগ্গুল । तें गुग्गिलहुचेट्टु । वा. सू. १५ अ. । तत्पर्य्यायः,—कुम्भं, उलूखलकं, कौशिकः, पुरः (अ.), कुम्भोलुखलकं, गुग्गुलः (भ.), जटायुः, कालनिर्य्यासः, देवधूपः, सर्व्वसहः, महिषाक्षः, पलङ्कषा (र.), उषः, उदूखलकं, कुन्ती (मे.), कुम्भी (ज.), उद्दीप्रं (अ. टी. भ.), यवनद्विष्टः, भवाभीष्टः, निशाटकः, जटालः, पुटः, भूतहरः, शिवः, शाम्भवः, दुर्गः, यातुघ्नः, महिषाक्षकः, देवेष्टः, मरुद्दिष्टः, रक्षोहा, रूक्षगन्धकः, दिव्यः । स त्रिविधः—साधारणगुग्गुलुः, कणगुग्गुलुः, भूमिजगुग्गुलुश्च । विशेषाः पर्य्याये द्रष्टव्याः । रा. नि. व. १२ । महिषाक्ष-महानील कुमुद-पद्म-हिरण्या इति पञ्चभेदमिच्छन्ति भावमिश्रादयः । तेषु भृङ्गाञ्जनसवर्णः महिषाक्षः, महानीलवर्णो महानीलः, कुमुदाभः कुमुदः, माणिक्यसवर्णः पद्मः, हेमाभश्च हिरण्य इति । तत्र प्रथमो द्वितीयश्च हस्तिनां, कुमुदो हयानां, पद्म आरोग्ये, कनकश्च नरस्य हितः । भा. । शुद्धिः—उष्णे पूते च दशमूलक्वाथे गुग्गुलुं प्रक्षिप्यालोड्य वस्त्रपूतं विधाय पश्चाद्विशोष्य घृतं दत्त्वा पेषितो ग्राह्यः । सा. कौ. । गुणाः—जराव्याधिहरत्वाद्रसायनः । कटुतिक्तोष्णः कफवातकासघ्नः क्रिमिवातोदरप्लीहशोफार्शोघ्नः । रा. नि. व. १२ । नवो वृष्यो वृंहणः सुगन्धः पिच्छिलः शुष्को दुर्गन्धः । पुराणश्च अतिलेखनो वीर्य्यहीनश्च । भा. । गुग्गुलुपाकः गुड़पाकवत् । See गुड़पाकः ।

**गुग्गुलुवटकः (आदित्यपाकः) ।** पुं । वातव्याधौ । त्रिफलाचूर्णं प्र. ४ तो. पिप्पलीचूर्णं ३ तो. गुड़त्वगेलाचूर्णं प्र. २ तो. शोधितगुग्गुलुः २० तो. एकत्र दशमूलाम्बुना भाव्यम् (दशमूल ४० तो. वारि ६० तो. शे. २० तो.) । "भाव्यद्रव्यसमं क्वाथ्यं क्वाथोऽष्टांशस्तु तेन च ।" च. द. । प. प्र. ।

**गुच्छः ।** पुं । स्तवके । त्रिका. । मूत्तृणे । गुण्डासिनीतृणे । वै. निघ. । मयूरपुच्छे । मे. ।

**गुच्छकः।** पुं। गुच्छकन्दे। तैलशारू इति लोके। गज. वै.। रीठाकरञ्जवृक्षे। रा. नि. व. ९। क्लो। ग्रन्थिपर्णे। भा.।

**गुच्छकच्छदः।** पुं। ग्रन्थिपर्ण्याम्। वै. निघ.।

**गुच्छकणिशः।** पुं। रागीधान्ये। रा. नि.व. १६।

**गुच्छकन्दः।** पुं। कन्दशाके। तैलसारू इति लोके। मं कुलीहालु। कं सुकुलियागडडे। गुणाः—मधुरः शीतलः वृष्यः दाहघ्नः तर्पणः। रा. नि. व. ७।

**गुच्छकरञ्जः।** पुं। करञ्जवृक्षविशेषे। तत्पर्य्यायः,—स्निग्धदलः, गुच्छपुष्पकः, नदी, गुच्छी, स्निग्धपत्रकः, सानन्दः, दन्तधावनः। गुणाः—कटु-तिक्तोष्णः विषवातकण्डूविचर्च्चिकाकुष्ठस्पर्श-त्वग्दोषघ्नश्च। रा. नि. व. ९।

**गुच्छगुल्मिका।** स्त्री। स्नुहीवृक्षविशेषे। হ্রস্ব ফণিমনসাবিশেষ। वै. निघ.।

**गुच्छदन्तिका।** स्त्री। कदलीवृक्षे। रा. नि. व. ११।

**गुच्छपत्रः।** पुं। तालवृक्षे। তালগাছ। रा. नि. व. ९।

**गुच्छपुच्छः (कः)।** पुं। गुच्छकरञ्जे। रा. नि. व. ९।

**गुच्छपुष्पः (कः)।** पुं। सप्तपर्णवृक्षे। अशोकवृक्षे। रा. नि. व. १०। (कः) गुच्छकरञ्जे। रीठाकरञ्जे। रा. नि. व. ९।

**गुच्छपुष्पी।** स्त्री। शिगृड़ीनामक्षुपे। धातकीवृक्षे। रा. नि. व. ४।६।

**गुच्छफलः।** पुं। रीठाकरञ्जे। रा. नि. व. ९। कतकवृक्षे। राजादनवृक्षे। क्षीणी वृक्ष। रा. नि. व. ११। जलवेतसे। वै. निघ.।

**गुच्छफला।** स्त्री। अग्निदमनीनामक्षुपे। काकमाच्याम्। रा. नि. व. ४। द्राक्षायाम्। कदलीवृक्षे। रा. नि. व. ११। निष्पाव्याम्। रा. नि. व. ७।

**गुच्छबुध्ना।** स्त्री। गुण्डालाक्षुपे। रा. नि. व. ५।

**गुच्छमूल(लि)का (ला)।** स्त्री। गुण्डासिनीतृणे। रा. नि. व. ८। गुण्डालाक्षुपे। वै. निघ.।

**गुच्छसह्वा।** स्त्री। क्षुद्रधातक्याम्। वै. निघ.।

**गुच्छार्द्धः।** पुं। चतुर्विंशतियष्टिक-हारविशेषे। श.।

**गुच्छालः।** पुं। भूतृणे। रा. नि. व. ८। भूकदम्बे। प. मु.।

**गुच्छाह्वकन्दः।** पुं। गुलुच्छकन्दे। रा. नि. व. ७।

**गुच्छी।** स्त्री। गुच्छकरञ्जवृक्षे। रा. नि. व. ९।

**गुञ्जः।** पुं। गुच्छे। श. र.।

**गुञ्जकृत्।** पु। भ्रमरे। श. र.।

**गुञ्जनम्।** क्ली। भ्रमरादेर्गुणगुणध्वनौ।

**गुञ्जरत्नमाला।** स्त्री। वैद्यकग्रन्थभेदे।

**गुञ्जा।** स्त्री। (Abrus precatorius.) स्वनामख्यातोपविषजातीयमूलविषलतायाम्। কুঁচ গাছ। हिं शीणकाँड़च चिरमिति। मं कं गुलुगुञ्जे, एरड़ु। उत्. रुञ्ज। सु. कल्प. २ अ.। तत्पर्य्यायः,—गुञ्जिका (श.), काकचिञ्ची, कृष्णला (अ.), शाङ्गुष्ठा, रक्तिका, काकणन्तिका, काकादनी, काकतिक्ता, काकजङ्घा, शिखण्डिनी (र.), काकतुण्डिका, कञ्चा (हे.), कनीचिः (शब्दर.), काका, काकिनी (अ. टी.), काञ्ची (वि.), चूड़ामणिः, सौम्या, शिखण्डी, अरुणा, ताम्रिका, शीतपाकी, उच्चटा, कृष्णचूड़िका, रक्ता, काम्बोजी, भीलभूषणा, वन्या, श्यामलचूड़ा, काकचिञ्चिका। गुञ्जा द्विधा श्वेतरक्तभेदात्। द्वयोर्गुणाः—फलं तिक्तोष्णं वयकरं शिरोऽर्त्तिनाशनञ्च। शिफा वान्तिकरी पत्रं शूलघ्नं विषहृत्। वश्ये श्वेतञ्च शस्यते। रा. नि. व. ३। "गुञ्जाद्वयन्तु केश्यं स्याद्वातपित्तज्वरापहं। मुखशोषभ्रमश्वासतृष्णामदविनाशिनं। नेत्रामयहरं वृष्यं बल्यं कण्डूं व्रणं हरेत्। कृमीन्द्रलुप्तकुष्ठानि रक्ता च धवलापि च॥" भा.। श्वेतगुञ्जायाम्। र. सा. सं.। मुस्तायाम्। रा. नि. व. ६। मद्यशालायाम्। श. र.। यवचतुष्टयात्मके माने। गुञ्जा स्यात्तच्चतुष्टयम्। प. प्र. १ख.। यवत्रयमाने। क्वचिद्वैद्यके। गोधूमद्वयमाने। रा. नि. व. २१ अ.।

**गुञ्जाकिनी।** स्त्री। गुञ्जायाम्। भैष. ज्व. चि. पानीयभक्तवट्याम्।

**गुञ्जागर्भरसः।** पुं। हृद्रोगे रसः। पाठः—"निष्कद्वयं रसस्य स्याद्गन्धकात्तुर्य्यभागिकाः। गन्धकेन



जयाचूर्णं निम्बुवीजं समानकम्। गुञ्जावीजं तदर्द्धं स्यात्तदर्द्धं जयपालकं। निम्बुद्रवेण सम्मर्द्य काकमाच्या दिनान्तकम्। धुस्तूरकजयन्तीभ्यां गुड़िकां कारयेत्सुधीः। गुञ्जागर्भरसो नाम्ना दातव्यो घृतसंयुतः। हिङ्गुसैन्धवसंयुक्तं मण्ड पथ्याय दापयेत्॥" পারা ১॥• তো. গন্ধক, জয়ন্তীবীজ বা হরীতকী, নিম্বুবীজ প্রত্যেকে ৬ তো. কুঁচের বীজ ৩ তো. জয়পাল ১॥० তো. নিম্বু, কাকমাচী, ধুতুরা এবং জয়ন্তী রসে মাড়িয়া বটী করিবে। र. चि.।

**गुञ्जातैलम्।** क्ली। कुष्ठे, गण्डमालायां तैलम्। "गुञ्जामूलफलैः तैलं विपक्वं द्विगुणाम्भसा।" कटुतैलं ४ श. गुञ्जामूलं फलञ्च प्र. ४ प. वारि ८ श.। भा.। अन्यत्—"गुञ्जाफलैः शृतं तैलं भृङ्गराजरसेन च।" কটুতৈল ৪ শ. কুঁচফল ৮ প. ভীমরাজরস ৮ শ.। सा. कौ.।

**गुञ्जाद्यतैलम्।** क्ली। गलगण्डाधिकारे। गुञ्जामूलं करवीरमूलं वीजताड़कमूलं, अर्कमूलं वा निर्यासः, सर्षपं। एषां प्र. ४ तो. तैलं १ श. (८० तो.) गोमूत्रं ८ श. पक्त्वा शोधयेत्। तत्र पिप्पली-पञ्चलवण-मरिचचूर्णं २० तो. प्रदेपः। रस. र.।

**गुञ्जाफलम्।** क्ली। गुञ्जावीजे।

**गुञ्जाभद्ररसः।** पुं। ऊरुस्तम्भे हृद्रोगे च हितः। पारदः १॥० तो. गन्धकं ६ तो. गुञ्जवीजं ३ तो. जयन्तीवीजं निम्बुवीजं जैपालवीजं प्र. अर्द्धतोलकं। जयन्तीधस्तूरपत्रजम्बीरकाकमाचीरसेन प्रत्येकं विभाव्य घृतेन मर्द्दयित्वा वटी कार्य्या। मा. ४ र.। र. सा. सं.। भैषज्यरत्नावल्यां जयन्ती निम्बं नास्ति।

**गुञ्जिका।** स्त्री। गुञ्जायाम्। কুঁচ। त्रियवपरिमाणे। श. च.।

**गुञ्जितम्।** क्ली। गुञ्जने।

**गुटिकः।** पुं। मत्स्यराण्डाम्। মিছরি। ज. द. १२ अ.।

**गुटिका।** स्त्री। वटिकायाम्। গুলি। गुञ्जायाम्। কুঁচ। ज. द.।

**गुटिकाञ्जनम्।** क्ली। त्रिविधाञ्जनान्यतमेऽञ्जने। See अञ्जनम।

**गुटिकाह्वयः।** पुं, क्ली। लवणविशेषे। कै.।

**गुण्ठः।** पुं। तृणविशेषे। কেশুর। रा. नि. व. ८। सुगन्धरोहिषतृणे। वै. निघ.। दाक्षिणात्याश्वे। "दाक्षिणात्यो भवेद्गुण्ठो योऽधन्यः सर्व्ववाजिनाम्।" ज. द. ६अ.।

**गुड़ः।** पुं। इक्षादिरसविकारे। গুড়। तत्पर्य्यायः,—इक्षुसारः, मधुरः, रसपाकजः, खण्डजः, द्रवजः, सिद्धः, मोदकः, अमृतसारजः, शिशुप्रियः, सितादिः, अरुणः, रसजः (रा.), इक्षुरसक्वाथः, गण्डोलः, मधुवीजकः (वै.), गण्डोलं, गुलः, स्वादुखण्डः (शब्दर.), स्वादुः (त्रि.)। स सामान्यतश्चतुर्भेदः धौताधौतपुराणनवभेदात्। तेषु धौतो नातिश्लेष्मलः मलानुलोमश्च, अधौतः प्रभूतकृमिमज्जासृङ्मेदोमांसकरः, पुराणो हृद्यः स्वस्थहितश्च, नवश्च श्लेष्माग्निमान्द्यकृत्। वा. टी. हेमा.। सा. गुणाः—वृष्यो गुरुः स्निग्धः वातघ्नः मूत्रशोधनः नातिपित्तहरः मेदःकफकृमिबलदश्च। भा.। पुरातनस्य गुणाः—अधिकगुणः रक्तपित्तप्रसन्नमलकारी च। राज.। "गुड़ो जीर्णो लघुः पथ्यो नाभिष्यन्द्यग्निपुष्टिकृत्। पित्तघ्नो मधुरो वृष्यो वातघ्नोऽसृक्प्रसादनः॥" भा.। यावनालगुड़स्य कटुः क्षारो मधुरः वातकफघ्नः पित्तजनकः नित्यसेवनेन कण्डूकुष्ठ जनयति अस्रविदाहञ्च करोति॥ रा. नि. व. १४। "बल्यो वृष्यो गुरुः स्निग्धः वातघ्नो मूत्रशोधनः। स पुराणोऽधिकगुणो गुल्मार्शोऽरोचकापहः। क्षये कासे क्षतक्षीणे पाण्डुरोगेऽसृजः क्षये। हितो योग्येन संयुक्तो गुड़ः पथ्यतमो मतः॥" "गुदामये कामलशोषमेहे गुल्मामये पाण्डुहलीमके च। वाते सपित्तासृजि राजरोगे रुचिप्रदो रोगहरो गुरुः स्यात्॥ कासे शोषे गुड़ो नेष्टः अन्यत्रापि हितो मतः। योगयुक्तोऽपि सर्व्वत्र हितो गुणगणालयः॥ क्षामक्षामक्षतरुजाश्वासमूर्च्छातुरोगिणाम्। अध्वश्रान्तिश्रममदविषमूत्रकृच्छ्राश्मरीणाम्। जीर्णक्षामज्वरविषमगे रक्तपित्तप्रकोपे तृष्णादाहक्षयरुधिरगे सर्व्वरोगान् निहन्ति॥" अत्रि. १० अ.। स्नुहीवृक्षे। মনসাসিজু। प. मु.। कार्पास्याम्। কাপাস। अ. टी.। ग्रासे। हे. च.।

**गुड़कः।** पुं। गुड़पक्वौषधमाने। षण्मासं यावत् अस्य पूर्णवीर्य्यत्वम्। वै.।

**गुड़काष्ठः।** पुं। इक्षौ। वै. निघ.।

**गुड़कुष्माण्डकम्।** क्ली। वाजीकरणाधिकारे

**गोरक्षदुग्धा (ग्धी)** । स्त्री । गोरक्षीनामक्षुद्रक्षुपे । तत्पर्य्यायः,—गोरक्षी, ताम्रदुग्धा, रसायनी, बहुपत्री, अमृता, जीवा, अमृतसञ्जीवनी । गुणाः—मधुरा शीतला वृष्या बल्यकरी संग्राहिणी रसे सिद्धिदा । रा. नि. व. ५ ।

**गोरक्षी** । स्त्री । स्वनामख्यातमहाक्षुपे । तन्नाम्नैव मालवदेशे प्रसिद्धा । तत्पर्य्यायः,—सर्पदण्डी, दीर्घदण्डी, सुदन्तिका, चित्रला, गन्धबहुला, गोपाली, पञ्चपर्णिका । गुणाः—मधुरा तिक्ता शीता दाह-पित्तघ्नी विस्फोट-वान्ति-ज्वरातीसारघ्नी च । रा. नि. व. ५ । ऋषभके । कुम्भतुम्ब्याम् । रा. नि. व. ७ । गोरक्षदुग्धायाम् । रा. नि. व. ५ ।

**गोराङ्गी** । स्त्री । गोधापदी-लतायाम् ।

**गोराटी (रटिका) (रिका)** । स्त्री । शारिकापक्षिणि । शालिक पाखी । हे. च. । रा. नि. व. १९ ।

**गोरुची** । स्त्री । गोरोचनायाम् । वै. निघ. ।

**गोरोचम्** । क्ली । हरिताले । रा. नि. व. १३ ।

**गोरोचनम् (ना)** । क्ली, स्त्री । स्वनामख्यातसारजवर्गीयद्रव्ये । तत्पर्य्यायः,—वन्दनीया (वि.), वन्द्या, रोचना (भा.), रुचिः, शोभा, रुचिरा, शोभना, शुभा, गौरी, रोचनी, पिङ्गा, मङ्गल्या, मङ्गला, शिवा, पीता, गौतमी, गव्या, चन्दनीया, काञ्चनी, मेध्या, मनोरमा, श्यामा, रामा । सा च न गोसाधारणहृदयाधारा गोविशेषेषु कदाचित् लभ्यते । प. मु. । गोमस्तकस्थ-शुष्कपित्तमिति साधवः । गोमूत्रनिर्म्मितमिति केचित् । गुणाः—शीतला विषदोषघ्नी रुच्या पाचनी कृमिकुष्ठघ्नी भूतग्रहशान्तिकरी शृङ्गारमङ्गलकरी जनमोहनी च । रा. नि. व. १२ । "गोरोचना हिमा तिक्ता वश्या मङ्गलकान्तिदा । विषालक्ष्मीग्रहोन्मादगर्भस्रावक्षतास्रहृत् ॥" भा. । वै. निघ. २भ. सर्व्वज्व. चि. गोरोचनादिचूर्ण. ।

**गोर्दम्** । क्ली । शिरोमले । मस्तिष्के । माथार घि । अम. ।

**गोलः** । पुं । सुगन्धवोले । गन्धवोल । जटा. । मदनवृक्षे । र. मा. । मणौ । त्रिका. ।

**गोलकः** । पुं । कालमुष्ककवृक्षे । घण्टापारुल । मणौ । त्रिका. । रक्तसुगन्धवोले । र. मा. । कलाये । मटर । श. च. । गुडे । हे. च. । सुगन्धरोहिषतृणे । वै. निघ. । पिण्डे । हे. च. ।

**गोलफलः** । पुं । मदनवृक्षे । मयना गाछ । रा. नि. व. ८ ।

**गोलवत्** । क्ली । पुष्पप्रियङ्गौ । हिं फुलप्रियङ्गु । वै. निघ. ।

**गोला** । स्त्री । मनःशिलायाम् । मे. ।

**गोलाङ्गूलः** । पुं । कपौ । मुखपोड़ा । त्रिका. ।

**गोलासः** । पुं । गोमयच्छत्रके । কোড়কছাতা । हारा. ।

**गोलिका** । स्त्री । घोषलतायाम् । শেয়াকুল । रा. नि. व. ८ ।

**गोलिहः (लीढ़ः)** । पुं । कालमुष्ककवृक्षे । घण्टापारुल । अम. ।

**गोली** । स्त्री । गोजिह्वायाम् । গোজিয়া । वै.निघ. ।

**गोलोमिका (मी)** । स्त्री । (Corydalis govaniana) स्वनामख्यातमहाक्षुपे । गन्धल । हिं पाथरी । हट्गिरे । तत्पर्य्यायः,—गोधूमी, गोजा, क्रोष्टुकपुच्छिका, गोलोमी, गोसम्भवा, प्रस्तरिणी । गुणाः—कटुः तिक्ता हिमा त्रिदोषघ्नी मूलदोषामदोषघ्नी दीपनी ग्राहिणी च । रा. नि. व. ५ । वचायाम् । रा. नि. व. ३ । श्वेतदूर्व्वायाम् । रा. नि. व. ८ । भा. स्कन्दापस्मा. चि. । भूतकेश्याम् । भूँइकेश । "अनलकेशी च गोलोमी भूतकेशी च केश्यपि । द्रव्याभि. । प. मु. च. सू. ४अ. । महौषधिविशेषे । See औषधिः । नील दूर्व्वायाम् । जटामांस्याम् । अककर्करायाम् । वै. निघ. ।

**गोल्यः** । पुं । कशेरौ ।

**गोवत्सादी (न्)** । पुं । वृके ।

**गोवत्सारिः** । पुं । ईहामृगे । घोग । रा. नि. व. १९ ।

**गोवन्दनी** । स्त्री । प्रियङ्गुवृक्षे । अम. । पीतदण्डोत्पलायाम् । पीत डानकुनी । र. मा. ।

**गोवरम्** । क्ली । गोखुरक्षुण्णगोष्ठस्थशुष्कगोमयचूर्णे । "गोष्ठान्त-गोखुरक्षुण्णशुष्कं गोमयचूर्णितं । गोवरं तत् समाख्यातं वरिष्टं रससाधने ॥" भा. ।

**गोवरपुटम्** । क्ली । औषधस्य पुटविशेषे ।



"गोष्ठान्तर्गोखुरक्षुण्णं शुष्कं चूर्णितगोमयम् । गोवरं तत्समाख्यातं वरिष्ठं रससाधने । वृहद्भाण्डस्थितैर्यत्र गोवरैर्दीयते पुटम् । तद्गोवरपुटम्प्रोक्तं भिषग्भिः सूतभस्मनि ॥" भा. ।

**गोवर्णी** । स्त्री । अश्वगन्धायाम् । वै. निघ. ।

**गोवशा** । स्त्री । बन्ध्यायां गवि । वै. निघ. ।

**गोवारि** । क्ली । गोमूत्रे । वा. उ. ३६ अ. ।

**गोविट् (ष्ठा)** । स्त्री । गोमये । अम. । रा. ।

**गोविन्दः** । पुं । गोमेदमणौ । वै. निघ. ।

**गोविन्दिनी** । स्त्री । प्रियङ्गौ । रा. नि. व. १२ ।

**गोविराटी** । स्त्री । शारिकापक्षिणि । वै. निघ. ।

**गोविषाणाह्वा** । स्त्री । वव्वूलवृक्षे । বাবলা গাছ । वै. निघ. हिक्का. चि. धूमे. ।

**गोविष्ठा** । स्त्री । गोमये । रा. नि. व. १५ ।

**गोवृद्धः** । पुं । वलीवर्द्दे ।

**गोवृषः** । पुं । वृषे । श. र. ।

**गोवेष्टम्** । क्ली । शीषके । शीषा । प. मु. ।

**गोशकृत्** । क्ली । गोमये । जटा. ।

**गोशाड्वलः** । पुं । ग्रन्थिपर्ण्याम् । গেঁটেলা । वै. निघ. ।

**गोशालम्** । क्ली । गोरटहे ।

**गोशीर्षः (कः)** । पुं । (र्षः) प. मु. । (कः) र. मा. । द्रोणपुष्प्याम् । घलघसिया । क्ली । श्रीखण्डचन्दने । শ্বেত চন্দন । प. मु. । गोमस्तके । चन्दने । रा. नि. व. १२ ।

**गोशृङ्गः** । पुं । वर्व्वूरकवृक्षे । বাবলা গাছ । रा. नि. व. ८ । वै. निघ. ग्रहणी. चि. । क्ली । गोशृङ्गे ।

**गोष्ठम्** । क्ली । गोस्थाने । अ. ।

**गोष्ठकुक्कुटः (गोचरः)** । पुं । भासपक्षिणि । काकविशेषे । वै. निघ. ।

**गोष्ठीश्वरः** । पुं । उष्ट्रज्वरे । गज-वै. ।

**गोसः** । पुं । रक्तगन्धवोले । খুন্থারাপী । मे. । प्रत्यूषसि । भू. ।

**गोसङ्गः (र्गः)** । पुं । प्रभाते । हारा. । च. इन्द्रिय. ८अ. ।

**गोसदृक्षः** । पुं । गवयमृगे । हे. च. ।

**गोसम्भवा** । स्त्री । गोलोमिकायाम् । श्वेतदूर्व्वा । रा. नि. व. ५ ।

**गोसदृशः** । पुं । रक्तवोले । খুন্থারাপী । अ. टी. रा. ।

**गोस्तना** । स्त्री । द्राक्षायाम् । अ. टी. च. द. सि. यो. रक्त. पि. चि. । "पथ्याखर्ज्जूरगोस्तनाः ।"

**गोस्तनाकारा** । स्त्री । मधुखर्ज्जूरीवृक्षे । वै. निघ. ।

**गोस्तनिका ( नी )** । स्त्री । द्राक्षायाम् । मनक्का । वै. निघ. २भ. पाण्डु. चि. आमलक्यवलेहे । गुणाः—वृष्या गुर्व्वी कफपित्तघ्नी च । भा. ।

**गोस्तनोभवः** । पुं । द्राक्षासवे । দ্রাক্ষার আসব । वै. निघ. ।

**गोस्रवः** । पुं । अनामिकाङ्गुष्ठयुतकरविस्तारे । रा. नि. व. १८ । गोमूत्रे । रा. नि. व. १५ ।

**गोहन(स्र)म्** । क्ली । गोमये । र. मा. ।

**गोहरीतकी** । स्त्री । विल्ववृक्षे । प. मु. ।

**गोहला** । स्त्री । गोधापदीलतायाम् ।

**गोहालिया** । स्त्री । गोधापद्याम् । "पीतं गोहालियामूलं तिलदध्याज्यसंयुतम् । विबद्धमूत्रं क्वथितं प्रवर्त्तयति शङ्कर ॥" गारु. ।

**गोहितः** । पुं । घोषालतायाम् । विल्ववृक्षे । श. च. ।

**गोहिरः** । पुं । अधमजातीयाश्वे । नकुल. । क्ली । पादमूले । हे. च. ।

**गोह्लः** । पुं । गोशीर्षके । के. ।

**गोक्षीरः** । पुं । गोक्षुरके । গোখ্‌রী । रा. नि. व. ४ । क्ली । गोदुग्धे ।

**गोक्षुरः (कः)** । पुं । (Zygophylleæ. Tribulus terestris. Syn. T. Lanuginosus.) स्वनामख्यातक्षुपे । গোখ্‌রী । क्षुद्रक्षुपविशेषे । हिं गोक्षुरमूल । उत्. गोखुरा । वेड़िलीसराटी । गोखरू इति च प्रसिद्धः । तत्पर्य्यायः,—त्रिकण्टः, स्थलशृङ्गाटः, गोकण्टः, त्रिकण्टकः, त्रिपुटः, कण्टकफलः, क्षुरः (र), गोक्षुरकः, पलङ्कषा, इक्षुगन्धा, श्वदंष्ट्रा, स्वादुकण्टकः, गोकण्टकः, वनशृङ्गाटः (अ.), गोखुरिः (श.), विकण्टकः (शब्दमा.), गोखुरः, त्रिकटः, त्रिकः, इक्षुरः,

(शब्दर.), चुरक:, भद्रकण्ट:, इक्षुगन्धिका (भा.), चुराङ्ग:, श्वदंष्ट्रक:, कण्टकी, भद्रकण्ट:, व्यालदंष्ट्र:, त्रुरक:, षड़ङ्ग:, कण्ठी। स च महाक्षुद्रभेदात् द्विधा। सा. गुणा:—शीतलत्वं मधुरत्वं बल्यत्वं वृंहणत्वं कृच्छ्राश्मरीमेहविदाहघ्नत्वं रसायनत्वञ्च। "गोक्षुर: शीतल: स्वादु: बलकृद्वस्तिशोधन:। मधुरो दीपनो वृष्य: पुष्टिदश्चाश्मरीहर:। प्रमेहश्वासकासार्श:-कृच्छ्रहृद्रोग-वातनुत् ॥" भा.। चारगुणा:—"चारस्तु गोक्षुराणान्तु मधुर: शीतलो मत:। स्रोतोविशोधनश्चैव वातघ्नो वृष्य एव च ॥" वै. निघ.। तच्छाकगुणा:—तिक्तं वृष्यं स्रोतोविशोधनञ्च। राज. ३प.। वीजगुणा:—बीजं गोक्षुरकं शीतं मूत्रलं शोथवारणम्। वृष्यमायुस्करं शुक्रमेहनुत् कृच्छ्रनाशनम् ॥ वै. निघ.।

**गोक्षुरादिगण:**। पुं। लौहमारकवर्गभेदे। यथा—गोक्षुर: क्षुरको व्याघ्री सिंहपुच्छी कुशिम्बिका। गोक्षुरादिरिति प्रोक्तो वातश्लेष्महरो गण: ॥" रस. च.।

**गोक्षुराद्यघृतम्**। क्ली। मूत्राघाते घृतम्। "धान्यगोक्षुरकक्वाथकल्कसिद्धं घृतं हितम्।" घृतं ४श. क्वाथार्थं धन्याकं ४ प. गोक्षुर: ४ प.। घृत ৪ শ. ক্বাথার্থ ধনে' ২ শ. জল ১৬ শ. শেষ ৪ শ. কল্কার্থ ধনে' ৪ প. গোক্ষুর ৪ প.। श्वा. कौ.। अन्यत् राजयक्ष्मणि। गव्यघृतं ४ श. क्वाथार्थं दुरालभा गोक्षुर: शालपर्णी पृश्निपर्णी (চাকুলে) मुद्गपर्णी माषपर्णी श्वेतवाट्यालकं चवपर्पटी एषां प्र. १ प. जल ४० श. शे. ४ श.। कल्कार्थं शटी पुष्करमूलं पिप्पली बला भूम्यामलकी चिरायता इन्द्रयव: अनन्तमूलं एषां ग. २ तो. दुग्ध ८ श.। च. चि. ८अ.।

**गोक्षुरी**। स्त्री। गोक्षुरे। গোখ্রী। रा. नि. व. ४।

**गोक्षुर: (रि:)**। पुं। गोक्षुरे। अकलासे।

**गोच्चो(च्चे)ड़: (क:)**। पुं। गोनद्द पक्षिणि सारस পাখী। सु. सू. ४६ अ.।

**गौ:**। पुं, स्त्री। स्वनामख्यातपशौ। গরু। अम.। पुं। स्वर्गे। मे.। चण्डिकातृणे। रा. नि. व. ८। ऋषभके। रा. नि. व. ५। क्ली। लोम्नि। अ. टी. भानु.। रश्मौ। वज्रे। मे.। चन्द्रे। सूर्य्ये। अ. टी.। स्त्री। नेत्रे। वाक्ये। रोहिण्याम्। जले। मे.। भूमौ। त्रिका.।

**गौड़:**। पुं। गुड़विकारे। গুড়ের মদ। स. च. पाचनो दीपनश्च। सु.।

**गौड़(र)वास्तुक:**। पुं, क्ली। चिल्लीशाके। वृहत्पत्ररक्तवास्तुके। रा. नि. व. ७। লাল বেতো শাক। "तदेव तु बृहत्पत्रं रक्तं स्याद्गौरवास्तुकं।" भा. पू. १भ. शाकव.। See वास्तुकम्।

**गौड़सीधु:**। पुं। गुड़कृतसीध्वमद्ये। गुणा:—"कषायो मधुर: सीधुर्गौड़: पाचनदीपन:।" सु. सू. ४५ अ.।

**गौड़ारस:**। पुं। शूले रस:। रससिन्दूरं ५ भ. मृतलौहं ५ भ. शतावरी आमलकी गुड़ूचीक्वाथे मर्द्दयेत्। রসসিন্দূর ৫ ভ. মৃতলৌহ ৫ ভ, শতাবরী, আমলকী এবং গুড়ূচীক্বাথের ৩ দিন ভাবনা দিবে। মাত্রা ৪ র:। অনুপান ঘৃত ও মধু। रस र.।

**गौड़ासव:**। पुं। गुड़कृतासवे। গুড়ে' মদ। गुणा:—सृष्टमूत्रशकृत् तर्पणो दीपनश्च। वा. टी. हेमाद्रि:। धातकीदगुड़ैर्मद्यभेदे गौड़: प्रकीर्त्तित:। तोड़: द्रव्यगुणमाला।

**गौड़िकम्**। क्ली। गुड़कृतमद्यविशेषे। त्रि। गुड़संस्कृते। भा. उदावर्त्त. चि.।

**गौड़ी**। स्त्री। गुड़कृतमद्ये। तत्पर्य्याय: वाल्कली। त्रिका.। धातकीरसगुड़ादिकृताम्लमद्ये। गुणा:—तीक्ष्णा उष्णा मधुरा वातघ्नी पित्तजननी बलकारी पथ्या कान्तिजननी तर्पणी च। रा. नि. व. १४। "गौड़ी कषाया मधुराम्लशीता सन्दीपनी शूलमलापहन्त्री। हृद्या त्रिदोषं शमयत्यजीर्णं पाण्डुामयार्श:श्वसनं निहन्ति ॥" अत्रि. १९ अ.।

**गौणविम्बी**। स्त्री। विम्बीभेदे। वै. निघ.।

**गौणी**। स्त्री। लोणिकाशाके। নুনিয়াশাক। प. मु.। मन:शिलायाम्। र. सा. सं.।

**गौण्य:**। पुं। कशिनके। কেশুর।

**गौत(त्त)म:**। पुं। स्थावरविषभेदे। हे. च.।

**गौतमी**। स्त्री। गोरोचनायाम्। रा. नि. व. १२।

**गौधार: (धेय:) (धेर:, क:)**। पुं। गोधिकात्मजे। गोधा इति ख्याते। स च दर्व्वीकरैर्विषेण तुल्यस्तैरेव जातत्वात्। "गोधासुतस्तु गौधेरो विषे दर्व्वीकरै: सम:। चतुष्पात्व्यन्तरान् विद्यादेतेषामेव सङ्करात्।" वा. उ. ३६ अ.।



स पञ्चविध:—"प्रतिसूर्य्य: पिङ्गभासी बहुवर्णो महाशिरा:। तथा निरुपमश्चापि पञ्च गौधेरका: स्मृता:। तैर्भवन्तीह दष्टानां वेगज्ञानानि सर्पवत्। रुजश्च विविधाकारा ग्रन्थयश्च सुदारुणा:।" सु. कल्प ८ अ.। "तदुत्पत्तिर्यथा—कृष्णसर्पेण गोधायां भवेज्जन्तुश्चतुष्पद:। सर्पो गौधेरकोनाम तेन दष्टो न जीवति। सर्पो गौधेरकोनाम गोधाख्य: स्याच्चतुष्पद:। कृष्णसर्पेण तुल्य: स्यात् नाना स्युर्मिश्रजातय:।" च।

**गौर:**। पुं। श्वेतसर्षपे। रा. नि. व. १६। See सिद्धार्थ:। धववृक्षे। ধাওয়াগাছ। रा. नि. व. ९। कर्पूरे। रा. नि व. १२। करञ्जवृक्षे। खदिरे। वै. निघ.। गौरधान्ये। च. सू. २७ अ.। क्ली। सौगन्धिकतृणे। রামকর্পূর। रा. नि. व. ८। हरिताले। रा. नि. व. १३। पद्मकेशरे। मे.। कुङ्कुमे। रा. नि व. १२। स्वर्णे। रा नि. व. १३। गौरसुवर्णशाके। वै. निघ.।

**गौरक:**। पुं। गिरिमृत्तिकायाम्। গেরিমাটী। वै. निघ. ज्व. चि. लाक्षातैले। लावपक्षिणि। वै. निघ.।

**गौरकदम्ब: (क:)**। पुं। हारिद्रके। हर्दुआ कदम्ब इति लोके। भा. म. ४ भ. रेवती. ग्र. चि.।

**गौरखटी**। स्त्री। श्वेतखटिकायाम्। শ্বেত খড়ি। वै. निघ.।

**गौरचणक:**। पुं। धवलचणकवृक्षे। শাদা ছোলা। म. श्वेतचणा। क. बिलियकड़ले। गुणा:—मधुर: बल्य: रोचन: वातकर. पित्तघ्न: शीतल: गुरुश्च। रा. नि. व. १६।

**गौरजीरक:**। पुं। श्वेतजीरके। শাদা জীরে, সা জীরে। तत्पर्य्याय:,—अजाजी, श्वेतजीरक:, कणाह्वा, कणजीर:, कणा, सितदीप्य, दीर्घकणा, सिताजाजी, गौराजाजी। गुणा:—हिमो रुचिकर: कटुर्मधुर: दीपन: कृमिविषाध्मानहर: चक्षुष्यश्च। रा. नि. व. ६।

**गौरतित्तिर: (रि:)**। पुं। तित्तिरपक्षिणि। তিতির পাখী। वै. निघ.। See तित्तिरि:।

**गौरत्वक्**। पुं। इङ्गुदीवृक्षे। জীয়াপুতা। रा. नि. व. ८।

**गौरद्रु:**। पुं। हरिद्रावृक्षे। वै. निघ.।

**गौरधान्यम्**। क्ली। शालिधान्यविशेषे। শাদা ধান। च. सू २७ अ.।

**गौरपाषाणम्**। क्ली। श्वेतखटिकायाम्। ফুলখড়ি। वै. निघ.।

**गौरमाल्य:**। पुं। गिरिजमधूकवृक्षे। পাহাড়ে মউল গাছ।

**गौररम्भा**। स्त्री। सुवर्णकदलीवृक्षे। চাঁপা কলা। रा. नि. व. ११।

**गौरवम्**। क्ली। कफजरोगे, गुरुत्वे। लक्षणं यथा—"आर्द्रचर्म्मविनद्धं हि यो गात्रमभिमन्यते। तथा गुरुशिरोऽत्यर्थं गौरवं तद्विनिर्द्दिशेत् ॥" सु. शा. ४ अ.।

**गौरवर्णवती**। स्त्री। हरिद्रायाम्। वै. निघ.।

**गौरवल्ली**। स्त्री। प्रियङ्गुलतायाम्। रा. नि. व. १२।

**गौरव्रीहि:**। पुं। गौरशाली। वै. निघ.।

**गौरशाक:**। पुं। मधूकवृक्षभेदे। গিরিজ মউলবিশেষ। र. मा.।

**गौरशाखी (इन्)**। पुं। जलमधूके। वै. निघ.।

**गौरशालि: (क:)**। पुं। श्वेतवर्णशालिधान्यविशेषे।

**गौरषष्टिक:**। पुं। षष्टिकशालिधान्यभेदे। শ্বেতবর্ণ ষেটে ধান। गुणा:—हृद्य: शीतल: दोषघ्न: बल्य: पथ्य: दीपन: वीर्य्यवृद्धिकरश्च। रा. नि. व. १६।

**गौरसर्षप:**। पुं। (Brassica juncea. Syn. Sinapis romasa.) श्वेतसर्षपे। শ্বেত সরিষা। हिं राइ। तें तेल्लावालु। प. मु.। तत्पर्य्याय:,—गौर: (मे.), अनर्घ्य:, सिद्धार्थ:, भूतनाशन:, कटुस्नेह:, ग्रहघ्न:, कण्डूघ्न:, राजिकाफल:, गुणघ्न:, तीक्ष्णक:, दुराधर्ष:, रक्षोघ्न:, कुष्ठनाशन:, सिद्धप्रयोजन:, सिद्धसाधन:, सितसर्षप:। गुणा:—कटुतिक्तोष्ण: वातरक्तघ्न: ग्रहदोषत्वग्दोषविषभूतव्रणहर: हृद्यस्तीक्ष्ण: कफकण्डूकुष्ठकीटकृमिघ्न: रक्तपित्ताग्निवर्द्धकश्च। भा.।

**गौरसुवर्णशाक:**। पुं, क्ली। चित्रकूटदेशे स्वनामप्रसिद्धशाकविशेषे। নটিয়াবিশেষ। तत्पर्य्याय:,—स्वर्णं, सुगन्धिकं, भूमिजं, वारिज,

ह्रस्वं, गन्धशाकं, कटुशृङ्गालं, चूर्णशाकाङ्कः। गुणाः —शीतलं कफपित्तज्वरघ्नं दाहारुचिभ्रान्तिरक्तश्रमघ्नञ्च। रा. नि. व. ७।

**गौरा**। स्त्री। सुवर्णकदलीवृक्षे। চাঁপা কলা। रा. नि. व. २१। श्वेतसर्षपवृक्षे। गोरोचनायाम्। वै. निघ.।

**गौराङ्गी**। स्त्री। सूक्ष्मैलायाम्। গুজরাটী এলাচ। रा. नि. व. ६।

**गौराजाजी**। स्त्री। श्वेतजीरके। শাদা জীরে। रा. नि. व. ६।

**गौराटः**। पुं। श्वेतखदिरे। वै. निघ.।

**गौराटिका**। स्त्री। शारिकापक्षिणि। শালিক পাখী। वै. निघ.।

**गौराद्यं घृतं(तैलञ्च)**। क्ली। गव्यघृतं तिलतैलं वा ४ श. क्वाथार्थं—अश्वत्थवटोदुम्बरप्लक्षवेतसानां त्वक् मिलित्वा ६४ प. वारि ६४ श. शे. १६ श.। कल्कार्थं—हरिद्रा दारुहरिद्रा मञ्जिष्ठा पुण्डरीकं जटामांसी यष्टिमधु बालकं मुस्तकं रक्तचन्दनं जातीपत्रं निम्बपत्रं पटोलपत्रं करञ्जबीजं कटुकी सिक्थकं यष्टिमधु अनन्तमूलम् एषां मिलित्वा ८ प.। গব্যঘৃত বা তিলতৈল ৪ শ. কাথার্থ অশ্বত্থ, বট, যজ্ঞডুমুর, প্লক্ষত্বক্, বেতস মিলিত ৬৪ প. জল ৬৪ শ. শে. ১৬ শ.। কল্কার্থ—হরিদ্রা, দারুহরিদ্রা, মঞ্জিষ্ঠা, পুণ্ডরিয়া, জটামাংসী, যষ্টিমধু, বালা, মুতা, রক্তচন্দন, জাতীপত্র, নিম্বপত্র, পটোলপত্র, করঞ্জবীজ, কট্‌কী, মম, যষ্টিমধু, অনন্তমূল এইসকল মিলিত ৮ প.। च. द.।

**गौरार्द्रकः**। पुं। स्थावरविषभेदे। हे. च.।

**गौराभः**। पुं। हरिद्रावृक्षे। वै. निघ.।

**गौरामलकम्**। क्ली। परिणतामलके। পাকা আমলকী। रस. र.। प्राचीनामलके। পানি আমলা।

**गौरास्यः**। पुं। नीलवानरे। रा. नि. व. १९।

**गौराहिकः**। निर्विषसर्पविशेषे। सु. कल्प.।

**गौरिका**। स्त्री। जलमधूके। जलज मौउआ। "यवाह्वगौरिकोन्मिश्रैः।" सु. चि. २० अ. अलस. चि.। शारिकापक्षिणि। वै. निघ.। अष्टवर्षीयकन्यायाम्। श. र.।

**गौरिणी**। स्त्री। तेरणक्षुपे। वै. निघ.।

**गौरि(री)लः**। पुं। राजिकायाम्। শ্বেত সরিষা। लौहकिट्टे, लौहचूर्णे। मे.।

**गौरी**। स्त्री। मञ्जिष्ठायाम्। रा. नि. व. २३। हरिद्रायाम्। रा. नि. व ६। सु. चि. १७ अ.। प्रियङ्गौ। रा. नि. व. १२। दारुहरिद्रायाम्। प. मु.। नीलदूर्व्वायाम्। श्वेतदूर्व्वायाम्। रा. नि. व. ८। मल्लिकापुष्पक्षुपे। रा. नि. व. १०'२३। तुलसीवृक्षे। रा. नि. व. १०। गोरोचनायाम्। रा. नि. व. १२। सु. चि. १७ अ.। आकाशमांस्याम्। सूक्ष्मजटामांस्याम्। रा. नि. व. १२।२३। अनागतार्त्तवायां कन्यायाम्। रा. नि. व. २३।

**गौरीकेशः**। पुं, क्ली। अभ्रधातौ। प. मु.।

**गौरीजम्**। क्ली। गन्धके। प. मु.। अभ्रकधातौ। रा. नि. व. १३।

**गौरीजेयम्**। क्ली। अभ्रधातौ। रा. नि. व. १३।

**गौरीतेजः**। क्ली। अभ्रधातौ। प. मु.।

**गौरीपाषाणम्**। क्ली। शुक्लपाषाणे। वै. निघ. २भ. अर्शः चि.।

**गौरीपुष्पः**। पुं। प्रियङ्गुवृक्षे। रा. नि. व. १२। श्वेतकरवीरवृक्षे। रा. नि. व. १०।

**गौरीरजः**। क्ली। गन्धके। चि. क्र. कल्प.।

**गौरीललितम्**। क्ली। हरिताले। रा. नि. व. १३।

**गौरीवीजम्**। क्ली। पुं। गन्धके।

**गौर्जरः**। पुं। मेषशृङ्ग्याम्। মেড়াশিঙে। वै. निघ.।

**गौर्य्यम्**। क्ली। तमालपत्रे। वै. निघ. अर्कचि. गण. संख्याशतके।

**गौर्य्यश्मा**। पुं। शुक्लपाषाणे। ফুলখড়ি। वै. निघ.।

**गौर्य्यामलम्**। क्ली। अभ्रके। অভ্র। अ. टी. स्वा.।

**गौलिकः**। पु। कालमुष्ककवृक्षे। ঘণ্টাপারুল। रा. नि. व. ११।

**गौल्यम्**। क्ली। चिक्कणपूगफले। চিকিশুপারী। हिं चिकनीसुपारी। रा. नि. व. ११। See

**अकोटः**। क्ली। मद्यविशेषे। रा. नि. व २०।



स्त्री। बिम्बीलतायाम्। তেলাকুচা, কুঁদরুকী। वै निघ.। मधुररसे। रा.।

**गौल्या**। स्त्री। यावनालशर्करायाम्। মেনা।

**ग्रथितम्**। क्ली। लवङ्गे। वै. निघ. जीर्णज्व. चि. लवङ्गादिकषाये। शूकदोषभेदे। लक्षणं—तत् कफोत्थितं शश्वत् शूकपूरितञ्च भवेत्। सु. नि. १४ अ.।

**ग्रन्थः**। पुं। गुल्फे।

**ग्रन्थिः**। पुं। वंशादेः सन्धौ। গাঁইট। अम.। तत्पर्य्यायः,—पर्व्व, परुः (अ.), काण्डसन्धिः (रा.)। भद्रमुस्तायाम्। रा. नि. व. ६। पिण्डालौ। रा. नि. व. ७। ग्रन्थिपर्णवृक्षे। গেঁটেলা। मे.। पिप्पलीमूले। वै. निघ. २भ. ज्व. चि. ग्रन्थ्यादिकषाये। पादग्रन्थौ। आर्त्तवदोषे। वै. निघ.। तन्नामकशोथरोगे। निदानसम्प्राप्ती यथा—"वातादयो मांसमसृक् प्रदुष्टाः सन्दूष्य मेदश्च कफानुविद्धं। वृत्तोन्नतं विग्रथितन्तु शोथं कुर्व्वन्त्यतो ग्रन्थिरिति प्रदिष्टः॥ आयम्यते व्यध्यत एति तोदं प्रत्यस्यते कृत्यत एति भेदं। कृष्णो मृदुर्वस्तिरिवाततश्च भिन्नः स्रवेच्चानिलजोऽस्रमच्छम्। दन्दह्यते धूप्यति चातिमात्रं पापच्यते प्रज्वलतीव चापि। रक्तः सपीतोऽप्यथवापि पित्ताद्भिन्नः स्रवेदुष्णमतीव चास्रं। शीतो विवर्णोऽल्परुजोऽतिकण्डुः पाषाणवत् संहननोपपन्नः। चिराभिवृद्धिश्च कफप्रकोपात् भिन्नः स्रवेच्छुक्लघनञ्च पूयं। शरीरवृद्धिक्षयवृद्धिहानिः स्निग्धो महानल्परुजोऽतिकण्डुः। मेदःकृतो गच्छति चातिभिन्ने पिण्याकसर्पिःप्रतिमन्तु मेदः"। सु. नि. ११ अ.। स नवधा भवति दोषास्रमांसमेदोऽस्थिशिराव्रणभवः। वा. उ. २९ अ.। तेषां रक्तमांसशिरास्थिव्रणभवानां लक्षणानि स्वस्वपर्य्याये मृग्याणि। तत्र दोषास्रमेदोजाः साध्याः। मर्म्मकण्ठोदरस्थाः स्थूलाः खराः चलाश्च न साध्याः।

**ग्रन्थि(न्थी)कम्**। क्ली। पिप्पलीमूले। रा. नि. व. ६। च. द. कामला. चि. मण्डूरवटके। गुग्गुलौ। मे.। पुं। कर्णपालीगतरोगे। सु. सू. १६ अ.। ग्रन्थिपर्णे। গেঁটেলা। भैष. कुष्ठ. चि. कन्दर्पसारतैले। अर्ज्जुनवृक्षे। त्रिका.। करीरे। मे.।

**ग्रन्थिका**। स्त्री। ग्रन्थिपर्णे। গেঁটেলা। वचायाम्। वै. निघ.। गोधापदीलतायाम्।

**ग्रन्थिकोषः**। पुं। ग्रन्थिपर्णे। গেঁটেলা। च. द. वा. व्या. चि.। "ग्रन्थिकोषो मरुवकम्।"

**ग्रन्थिखेटी**। स्त्री। गन्धमाचायाम्।

**ग्रन्थिखेड़म्**। क्ली। गन्धमाचायाम्। "ग्रन्थिलम् ग्रन्थिखेड़ञ्च माला त्वणकमालिका।" द्रव्याभि.।

**ग्रन्थितकः**। पुं। शूकरोगे। वै. निघ.। See ग्रथितम्।

**ग्रन्थिदला**। स्त्री। मालाकन्दे। रा. नि. व. ७। चोरके, ग्रन्थिपर्णे। वै. निघ.।

**ग्रन्थिदूर्व्वा**। स्त्री। वल्लीदूर्व्वायाम्। মালাদূর্ব্বা। रा. नि. व. ८।

**ग्रन्थिनिका**। स्त्री। महाश्रावणिकायाम्। मुण्डीरी। रा नि. व. ५।

**ग्रन्थिनी**। स्त्री। कदलीवृक्षे। वै. निघ.।

**ग्रन्थिपत्रः**। पुं, क्ली। चोरकनामगन्धद्रव्ये। গেঁটেলা। रा. नि. व. १२।

**ग्रन्थिपर्णः**। पुं, क्ली। चोरकनामगन्धद्रव्ये। গেঁটেলা। रा. नि. व. १२। स्त्री। स्वनामख्यातवणिग्द्रव्ये। গেঁটেলা। हिं (गठिवण)। मद.। तत्पर्य्यायः,—शुकं, वर्हिपुष्पं, स्थौणेयं, कुक्कुरं, वर्हिःपुष्पं, वर्हं, शुकवर्हं (अ. टी.), स्थौणेयकं, कुशपुष्पं, गुच्छकं (र.), वर्हिकुसुमं (श.), विशीर्णाख्यं, स्वारामगुच्छकं, शुकपुच्छं, शुकच्छदं, ग्रन्थिकं, काकपुष्पं, गुच्छकं, नीलपुष्पं, सुगन्धं, ग्रन्थिपर्णकम्। "ग्रन्थिकः पाण्डुरः किञ्चित् कनिष्ठः सर्व्वसम्मतः। उत्तमः कृष्णवर्णो यः स्थूलोऽतीव च निन्दितः॥ भैष. ग्रहणी. चि. शतावरीमोदके। गुणाः—तिक्तं तीक्ष्णं कटूष्णं लघु दीपनं कफ-वात-विष-श्वासकण्डूघ्नञ्च। भा.। शोधनं गोमूत्रेण। (र्णा, र्णी) स्त्री। जतुकालतायाम्। रा. नि. व. ३। गण्डदूर्व्वायाम्। रा. नि. व. ८। ग्रन्थिपर्णे। वै. निघ.।

**ग्रन्थिफलः**। पुं। मदनवृक्षे। ময়না গাছ। रा. नि. व. ८। कपित्थवृक्षे। কয়েৎ বেলের গাছ। रा. नि. व. ११। साकुरुण्डवृक्षे। रा. नि. व. ६।

**ग्रन्थिभा**। स्त्री। अस्थिसंहारवृक्षे। হাড়জোড়া। वै. निघ.।

**ग्रन्थिमत्फलः**। पुं। क्षुद्रकण्टालिकायाम्। वै. निघ.। लकुचवृक्षे। रा. नि. व. ९।

**ग्रन्थिमान्**। पुं। अस्थिसंहारवृक्षे। হাড়জোড়া। प. मु.। भा.।

**ग्रन्थिमूलम्।** क्ली। तालमूल्याम्। लशुने। वै. निघ.। गृञ्जने। গাজর। रा. नि. व. ७।

**ग्रन्थिमूला।** स्त्री। वल्लिदूर्व्वायाम्। मालादूर्व्वा। रा. नि व. ८।

**ग्रन्थिलः।** पुं। विकङ्कतवृक्षे। रा. नि. व. ११। विकङ्कतवृक्षे। বঁইচি বৃক্ষ। रा, नि. व. ९ करवीरवृक्षे। अम.। तण्डुलीयक्षुपे। কাঁটানটিয়া। रा. नि. व. ५। चोरकनामगन्धद्रव्ये। গেঁটেলা। रा. नि. व. २२। पिण्डालौ। रा नि. व. ७। वंश-करीरे। বাঁশের কোঁড়। प. मु। क्ली। पिप्पली-मूले। रा. नि. व. ६। आर्द्रके। ग्र. च.। करीरा-ख्यक्षुपप्रियगुल्मे। रा. नि. व. ८। गन्धमात्रायाम्। प. मु.। विल्ववृक्षे। शूकदोषभेदे। वै. निघ.।

**ग्रन्थिला।** स्त्री। भद्रमुस्तायाम्। रा. नि. व. ६। वल्लीदूर्व्वायाम्। गण्डदूर्व्वा। रा. नि. व. ८।

**ग्रन्थिवज्रकम्।** क्ली। वज्रलौहे।

**ग्रन्थिवर्हीं (न्)।** पुं। ग्रन्थिपर्णवृक्षे। श च.।

**ग्रन्थिवि(वी)सर्पः।** पुं। विसर्परोगभेदे। लक्षणं यथा—"कफेन रुद्धः पवनो भित्वा तं बहुधा कफ। रक्तञ्च वृद्धरक्तस्य त्वक्शिरास्नायु-मांसगं। दूषयित्वा तु दीर्घानुवृत्तस्थूलखरात्मनां। ग्रन्थीनां कुरुते मालां रक्तानां तीव्ररुग्ज्वरां। श्वासकासातिसारांश्च शोषहिक्कावमिभ्रमैः। मोह-वैवर्ण्यमूर्च्छाङ्गभङ्गाग्निसदनैर्युतः। इत्ययं ग्रन्थिवीसर्पो वातश्लेष्मप्रकोपजः॥" मा. नि.।

**ग्रन्थिसंवृता।** स्त्री। नलुकायाम्। वै निघ.।

**ग्रन्थीकम्।** क्ली। पिप्पलीमूले। द्वि.।

**ग्रहघ्नः।** पुं। गौरसर्षपे। रा.।

**ग्रहजित्।** पुं। चोड़ानामदेवदारुभेदे। গন্ধ-দ্রব্যবিশেষ। रा. नि. व. १२।

**ग्रहणम्।** क्ली। नेत्रे। इन्द्रिये। रा. नि. व १८। करे। मे.।

**ग्रहणी (णिः।)।** स्त्री। अग्निवहधमन्याम्। प. प्र. ४ ख.। तस्याः स्थानं यथा—"षष्ठी पित्त-धरा नाम या कला परिकीर्त्तिता। पक्वामाशय-मध्यस्था ग्रहणी सा प्रकीर्त्तिता। ग्रहणीबलमग्निर्हि स चापि ग्रहणी मतः। तस्मादग्नौ प्रदुष्टे तु ग्रहण्यपि प्रदुष्यति॥ सु. शा.। तथा—"अन्नाधिष्ठानमन्नस्य ग्रहणाद् ग्रहणी मता। नाभेरुपरि सा ह्यग्निबलोपस्तम्भवृंहिता। अपक्वं धारयत्यन्नं पक्वं त्यजति चाप्यधः"। च.। तन्नामको-दरामयविशेषे। तस्य सम्प्राप्तिर्यथा—"अती-सारे निवृत्तेऽपि मन्दाग्नेरहिताशिनः। भूयः सन्दूषितो वह्निर्ग्रहणीमपि दूषयेत्।" सामान्य-लक्षणं यथा—"एकैकशः सर्व्वशश्च दोषैरत्यर्थ-मूर्च्छितैः। सा दुष्टा बहुशो भुक्तमाममेव विमुञ्चति। पक्वं वा सरुजं पूति मुहुर्बद्धं मुहुर्द्रवं। ग्रहणीरोगमाहुस्तमायुर्वेदविदो जनाः। पूर्व्वरूपन्तु तस्येदं तृष्णालस्यं बलक्षयः। विदाहोऽन्नस्य पाकश्च चिरात्कायस्य गौरवं॥" निदानं यथा—कटुतिक्त-कषायातिरुक्षसंदुष्टभोजनैः। प्रमितानशनात्यध्व-वेगनिग्रहमैथुनैः। मारुतः कुपितो वह्निं संछाद्य कुरुते गदान्। वातजारूपं यथा—"तस्यान्नं पच्यते दुःखं शुक्तपाकः खराङ्गता। कण्ठास्यशोषः क्षुत्तृष्णा तिमिरं कर्णयोः स्वनः। पार्श्वोरुवङ्क्षणग्रीवारुग-भीक्ष्णं विसूचिका। हृत्पीड़ा कार्श्यं दौर्ब्बल्यं वैरस्यं परिकर्त्तिका। गृद्धिः सर्व्वरसानाञ्च मनसः सदनन्तथा। जीर्णे जीर्य्यति चाध्मानं भुक्ते स्वास्थ्यमुपैति च। स वातगुल्महृद्रोगप्लीहाशङ्की च मानवः। चिराद्दुःखं द्रवं शुष्कं तन्वाम शब्द-फेणवत्। पुनः पुनः सृजेद्वर्चः कासश्वासार्दितोऽ-निलात्॥" पित्तजालक्षणं—"कट्वजीर्णविदाह्यम्ल-क्षाराद्यैः पित्तमुल्वणं। आप्लावयद्धन्त्यनलं जल-न्तप्तमिवानलम्। सोऽजीर्णं नीलपीताभं पीताभः सार्य्यते द्रवं॥ पूत्यम्लोद्गारहृत्कण्ठदाहारुचि-तृड़र्दितः। कफजोत्पत्ति.—गुर्व्वतिस्निग्धशीतादि-भोजनादतिभोजनात्। भुक्तमात्रस्य च स्वप्नात् हन्त्यग्निं कुपितः कफः॥" इत्यादि। मा. नि.। "ग्रहणीमाश्रितं दोषमजीर्णवदुपाचरेत्। लङ्घनै-र्दीपनीयैश्च सदातीसारभेषजैः"। ग्रहण्याम् आहारो ग्रहणीस्थितपाचकपित्तस्थेन वह्निना पच्यते। पच्यमानः सः ग्रहणीस्थितस्य कटुरसस्य पित्तस्य संयोगात् कटुर्भवति।

**ग्रहणीकपाटरसः।** पुं। रसोऽयं ग्रहण्यां हितः। स षड़्विधः। प्रथमो यथा—पारद-गन्धक-टङ्कण-यवक्षार-जातीफल-खदिर-जीरक-शुक्लधूनक-मर्कटीवीज-विल्वशलाटु-वकपुष्पानां प्र. ॥० तो. विल्वपत्र-कार्पास-शालिञ्च-चोरिणी-कच्छट-कुटजपत्राणां रसेन मर्द्दयेत्। वटी १ र.। পারা, গন্ধক, সোহাগা, যবক্ষার, জায়ফল, খদির, জীরা, শ্বেতধুনা, আলাকুশীর বীজ,



বেলশুঁঠ, বকপুষ্প প্রত্যেকের চূর্ণ ॥০ তোলা, বিল্বপত্র, কাপাসফল, শালিঞ্চশাক, খিরুই, কাঁচড়াপাতা, কুড়্চিছাল বা পত্র ইহাদের রসে মর্দ্দন। বটী. ১র.। रस. र.। भैष.।

द्वितीयो यथा—पारदगन्धकयोः प्र. १ तो. कज्जलिः कार्य्या कुटजत्वक्भस्म ४ तो. सर्व्वमेकत्र आर्द्रक-रसेन मर्द्दयेत्। मात्रा ४ गुञ्जा। পারা ১ তো. গন্ধক ১ তো. কজ্জলি করিবে। পরে কুড়্চির ছালের ভস্ম ৪ তো. মিশাইয়া আদার রসে মাড়িবে। ছাগদুগ্ধ বা কুড়্চির কাথের সহিত ৪ রতি সেবন করাইবে। तृतीयो यथा—पारदगन्धकजाती-फललवङ्गानां चूर्णं प्र. ॥० तोलकं विल्वपत्रसूर्य्या-वर्त्तशृङ्गाटकपत्राणां प्र. पलमानरसेन यथाक्रमं मर्द्दयेत्। मात्रा २ गुञ्जा। পারা, গন্ধক, জায়-ফল, লবঙ্গ প্র. ॥০ তো. একত্র চূর্ণ করিয়া বিল্বপত্র, হুড়হুড়িয়া, পাণিফলপাতা ইহা-দের প্রত্যেকের রস ১ পল সহ যথাক্রমে মর্দ্দন করিবে। মাত্রা ২ রতি। অনুপান দধি। चतुर्थो यथा—शुक्लधूनकरसगन्धकानां प्र. ४ मा. सूर्य्यावर्त्त-विल्व-शृङ्गाटकपत्ररसेन प्र. पलमितेन यथाक्रमं मर्द्दयेत्। मात्रा १ गुञ्जा। শ্বেতধুনা, পারা, গন্ধক প্রত্যেক ৪ মাষা একত্র চূর্ণ করিয়া হুড়হুড়িয়া, বিল্বপত্র এবং পাণিফলপত্র ইহাদের প্র. ১ পল রসে মর্দ্দন করিবে। মাত্রা ১ রতি। पञ्चमो यथा संग्रहण्यां—मुक्ताभस्म-स्वर्णभस्म-गन्धक-पारद-टङ्कणाभ्रक-कपर्द्दकभस्मविषाणां प्र. १ तो. शङ्खभस्म ८ तो. अतिविषाक्वाथेन मर्द्दयित्वा गोलकं विधाय पुटपाकेन प्रहरद्वयं पचेत्। उद्धृत्य धुस्तूरचित्रक-तालमूलीरसेन भावयेत्। मात्रा २ गुञ्जा। মুক্তাভস্ম, স্বর্ণভস্ম, গন্ধক, পারা, সোহাগা, অভ্র, কড়িভস্ম, বিষ প্র. ১ তো. শঙ্খভস্ম ৮ তো. আতইচের কাথে মাড়িয়া গোলা করিয়া ২ প্রহর পুটপাক করিবে। শীতল হইলে তুলিয়া লৌহপাত্রে ধুতুরা, চিতা এবং তালমূলীর রসে ভাবনা দিয়া ২ রতি বটী করিবে। भैष.। षष्ठो यथा—रौप्यभस्म १ भ. मुक्ताभस्म १ भ. स्वर्णभस्म १ भ. गन्धकं २ भ. पारदः ३ भ. सर्व्वं कपित्थरसेन सम्मर्द्य मृगशृङ्गे क्षिप्त्वा पचेत्। अथ बलारसे ७, अपा-मार्गरसे ३, लोध्रातिविषामुस्ताधातकीन्द्रयवगुड़ू-चीनां रसे प्र. ३ भावनाः देयाः। রৌপ্যভস্ম ১ ভ. মুক্তাভস্ম ১ ভ. স্বর্ণভস্ম ১ ভ. গন্ধক ২ ভ. পারদ ৩ ভ. কপিত্থরসে মর্দ্দন করিয়া মৃগশৃঙ্গে ভরিয়া পাক করিবে। পরে বলা-রসে ৭, অপামার্গরসে ৩, লোধ্র, অতিবিষা, মুতা, ধাতকী, ইন্দ্রযব, গুড়ূচীর রসে প্র. ৩ ভাবনা দিবে। रस. चि.।

**ग्रहणीगजेन्द्रवटिका।** स्त्री। ग्रहण्यधि-कारे रसः। रसगन्धक लौह-शङ्खभस्म-टङ्कणक्षार-हिङ्गु-शटी-तालीश-मुस्त-धान्यक-जीरक-सैन्धव-धातकी प्रतिविषा-शुण्ठी-गृहधूम-हरीतकी-भल्लातका-स्थि (अभावे रक्तचन्दन) तेजपत्र-जातीफल-लवङ्ग-त्वगेला-बालक-विल्वशलाटु-मेथिका भङ्गानां प्र. समोभागः। छागदुग्धेन मर्द्दनम्। রস, গন্ধক, লৌহ, শঙ্খভস্ম, সোহাগার খই, হিং, শটী, তালীশপত্র, মুতা, ধনে', জীরে, সৈন্ধব লবণ, ধাইফুল, আতইচ, শুঁঠ, ঝুল, হরীতকী, ভেলার মুটী, (অভাবে রক্তচন্দন), তেজপত্র, জায়ফল, লবঙ্গ, গুড়ত্বক্, এলাইচ, বালা, বেলশুঁঠ, মেতি, সিদ্ধি প্রত্যেক সমভাগ। ছাগদুগ্ধের সহিত মর্দ্দন। रस. र.।

**ग्रहणीमिहिरतैलम्।** क्ली। ग्रहणीरोगे तैलम्। तिलतैलं ४ श. तक्रं १६ श.। कुटजत्वक् २ श. वारि १६ श. शे. ४श.; धान्यकं २ श. वारि १६ श. शे. ४ श.। मतान्तरे कुटजत्वक् १२॥० श. वारि ६४ श. शे. १६ श. धान्यकं १२॥० श. वारि ६४ श. शे. १६ श. तक्रं १६ श. एवं ग्रहणीहरद्रव्याणामन्येषां यथालब्धं क्वाथः १६ श। कल्कार्थं—धान्यक-धातकी-लोध्र-वराह-क्रान्ता-अतिविषा हरीतकी-वीरणमूल-मुस्त-बालक-मोचरस-रसाञ्जन-विल्वशलाटु-नीलोत्पलपत्र-नाग-केशर-पद्मकेशर-गुड़ूचीन्द्रयव-श्यामालता-पद्मकाष्ठ-कटुकी-तगर-जटामांसी-भृङ्गराज-केशराज-पुनर्न-वाम्र-जम्बु-कदम्ब-कुटजत्वक्-यमानी जीरकाणां प्र. २ तो.। তিলতৈল ৪ শ. ঘোল ১৬ শ. কুড়চি-ছাল ২ শ. জল ১৬ শ. শে. ৪ শ., ধনে' ২ শ. জল ১৬ শ. শে. ৪ শ.। মতান্তরে কুড়চি-ছাল ১২॥০ শ. জল ৬৪ শ. শে. ১৬ শ, ;

ধনিয়া ১২॥০ শ. জল ৬৪ শ. শে. ১৬ শ.; ঘোল ১৬ শ. এইরূপ গ্রহণীহর অন্যান্য যে কোন দ্রব্যের ক্বাথ ১৬ শ. দিবে। কল্কার্থ—ধনিয়া, ধাইফুল, লোধ, বরাক্রান্তা, আতইচ, হরীতকী, বেণার মূল, মুতা, বালা, মোচরস, রসাঞ্জন, বেলশুঁঠ, নীলোৎপল, তেজপত্র, নাগেশ্বর, পদ্মকেশর, গুলঞ্চ, ইন্দ্রযব, শ্যামালতা, পদ্মকাষ্ঠ, কট্‌কী, তগর, জটামাংসী, ভীমরাজ ( বা দারুচিনি ), কেশুত্তে, পুনর্নবা, আমছাল, জামছাল, কদমছাল, কুড়চিছাল, যমানী, জীরা প্রত্যেক ২ তো.। बृहती यथा—तिलतैलं ४ श. तक्रं १६ श.। क्वाथार्थं—कुटजमूलत्वक् धान्यकं प्र. १०० प. जलं प्र. ६४ श. शे. १६ श.। कल्कार्थं—धनीयकं धातकीपुष्पं लोध्रं वराहक्रान्ता अतिविषा हरीतकी लवङ्गं बालकं शृङ्गाटकपत्रं रसाञ्जनं नागकेशरपुष्पं पद्मकाष्ठं गुड़ूची इन्द्रयवं प्रियङ्गुकं कटुकी पद्मकेशरं तगरं शरमूलं भृङ्गराजः केशराजः पुनर्नवा आम्रत्वक् जम्बूत्वक् कदम्बत्वक् एषां मिलित्वा १ श. स्वल्पपाकविधिना पाच्यम्। रस. र.। भैष.।

**ग्रहणीरुक्।** स्त्री। ग्रहणीरोगे। संग्रहग्रहण्याम्। अम.।

**ग्रहणीवज्रकवाटः।** पुं। ग्रहण्यां रसः। "मृतसूताभ्रकं गन्धं यवक्षारं सटङ्कणं। अग्निमन्थं वचां कुर्य्यात् तत्तुल्यानिमान् सुधीः। ततो जयन्तीजम्बीरभृङ्गद्रावैर्विमर्दयेत्। त्रिवासरं ततो गोलं कृत्वा संशोष्य धारयेत्। लौहपात्रे शरावञ्च दत्त्वोपरि विमुद्रयेत्। अधो वह्निं शनैः कुर्य्यात् यामार्द्धं तत उद्धरेत्। रसतुल्यामतिविषां दद्यान्मोचरसं तथा। कपित्थविजयाद्रावैः भावयेत् सप्तधा पृथक्। धातकीन्द्रयवामुस्तालोध्रप्रतिविषामृताः। एतद्द्रवैर्भावयित्वा दिनैकञ्च विशोषयेत्। रसं वज्रकवाटाख्यं माषैकं मधुना लिहेत्। वह्निं शुण्ठीं विड़ं बिल्वं लवणं चूर्णयेत् समम्। पिबेदुष्णाम्बुना चानु सर्व्वजां ग्रहणीं जयेत्॥" र. चि.।

**ग्रहणीशार्दूलवटिका।** स्त्री। ग्रहण्याम् रसः। जातीफलं लवङ्गं कुष्ठं टङ्कणं विड़लवणं जीरकं त्वक् एला धुस्तूरबीजं अहिफेनञ्च प्र. समभागं आदाय प्रसारणीरसेन मर्द्दयेत्। জায়ফল, লবঙ্গ; কুড়, সোহাগার খই, বিট্‌লবণ, জীরা, গুড়ত্বক্, এলা, ধুতুরাবীজ, আফিম্ প্র. সমভাগ, গন্ধভাদুলিয়ার রসে মর্দ্দন। भैष.।

**ग्रहणीहरम्।** क्ली। लवङ्गे। श. च.। त्रि। ग्रहणीहरद्रव्यमात्रे।

**ग्रहद्रुमः।** पुं। शाकतरौ। रा. नि. व. ९।

**ग्रहनायकः।** पुं। सूर्य्ये।

**ग्रहनाशः (शनः)।** पुं। सप्तपर्णवृक्षे। र. मा.।

**ग्रहनेमिः।** पुं। चन्द्रे।

**ग्रहपतिः।** पुं। अर्कवृक्षे। আকন্দ গাছ। अम.।

**ग्रहपुष्पः।** पुं। अशोकवृक्षे।

**ग्रहपूषः।** पुं। सूर्य्ये। हे.।

**ग्रहभीतिजित्।** पुं, क्ली। चौड़ानामगन्धद्रव्ये। रा. नि. व. १२।

**ग्रहराजः।** पुं। सूर्य्ये। चन्द्र। मे.।

**ग्रहागमः।** पुं। भूतसञ्चारे। रा. नि. व. २०।

**ग्रहाङ्गम्।** क्ली। स्वर्णरजतताम्रत्रपुकृष्णलौहेषु। रा. नि. व. २२। See पञ्चलौहम्।

**ग्रहापहा।** स्त्री। गोरोचनायाम्। वै. निघ.।

**ग्रहामयः।** पुं। ग्रहपीड़ायाम्। रा. नि. व. २०।

**ग्रहाशी (इन्)।** पुं। सप्तपर्णवृक्षे। श. र.।

**ग्रहाह्वयः।** पुं। भूताङ्कुशवृक्षे। হেঁচেতা। रा. नि. व. ९।

**ग्रहिणी।** स्त्री। ग्रहणीरोगे। अ. टी.।

**ग्राम(म्य)कन्दः।** पुं। ग्रामजौले। ওল। तत्पर्य्यायः स्थलकन्दः। कचुरिति ख्याते कन्दशाके। कचु। र. मा.।

**ग्रामकोलः।** पुं। ग्रामशूकरे। वै. निघ.।

**ग्रामक्रोड़ः।** पुं। ग्रामशूकरे। वै. निघ.।

**ग्रामजनिष्पावी।** स्त्री। नखनिष्पाव्याम्। বর্বটী। रा. नि. व. ७।

**ग्रामजा।** स्त्री। खर्जूरवृक्षे। प. मु.।

**ग्रामणीः।** पुं। नील्याम्। নীল গাছ। हे. च.।

**ग्राम(म्य)मद्गुरिका।** स्त्री। शृङ्गीमत्स्ये। শিঙি মাছ। मे.। हारा.।

**ग्राम(म्य)मृगः।** पुं। कुक्कुरे। श. र.। गवादिग्रामवासिपशुवर्गे। यथा—अश्वाश्वतरगोखरोष्ट्रवस्तोरभ्रमेदःपुच्छप्रभृतयः। तन्मांसं वातसंग्रहणं कफपित्तघ्नं रसे पाके च मधुरकं दीपनं बलवर्द्धनञ्च। सु. सू. ४६ अ.।



**ग्रामिणी।** स्त्री। नीलीवृक्षे। নীল গাছ। जटा.।

**ग्रामी(मि)णः।** पुं। ग्राम्यशूकरे। रा. नि. व. १९। काके। कुक्कुरे। मे.।

**ग्रामीणा।** स्त्री। नीलीवृक्षे। भा. पू. १भ.। पालङ्कशाके। रा. नि. व. ७।

**ग्राम्यकर्कटी।** स्त्री। कुष्माण्डे। त्रिका.।

**ग्राम्यकुक्कुटः।** पुं। प्रतुदजातीयपक्षिविशेषे। গ্রামকুক্‌ড়া। तन्मांसं स्निग्धं वातघ्नं दीपनं गुरु। रा. नि. व. १७।

**ग्राम्यकुङ्कुमम्।** क्ली। कुसुम्भे। কুসুমফুল। त्रिका.।

**ग्राम्यकोशा।** स्त्री। हस्तिकोशातक्याम्। धुन्दूल। रा. नि. व. ७।

**ग्राम्यचटकः।** पुं। भट्टानामपक्षिविशेषे। हिं नाट्।

**ग्राम्यधर्म्मः।** पुं। मैथुने। अम.।

**ग्राम्यपशुः।** पुं। गवादिग्रामवासिपशुषु। See ग्राममृगः।

**ग्राम्यवराहः।** पुं। ग्रामजशूकरे। গেঁয়ো শুয়ার। तत्पर्य्यायः,—विट्चरः (अ.), विड्वराहः, ग्रामीणः, ग्रामक्रोड़ः, ग्रामकोलः, विष्कलः, दारकः। तन्मांसं मेदोबलवीर्य्यवर्द्धकं वनवराहमांसाद् गुरु च। रा. नि. व. १७।

**ग्राम्यवल्लभा।** स्त्री। पालङ्कशाके। प. मु.।

**ग्राम्यशूकरः।** पुं। ग्राम्यवराहे। रा. नि. व. १७।

**ग्राम्या।** स्त्री। नीलीवृक्षे। নীল গাছ। निष्पावे। গটর। रा. नि. व. ७। तुलसीवृक्षे। वै. निघ.।

**ग्राम्यातियोगः।** पुं। अत्यन्तमैथुने। मा. नि.।

**ग्राम्याश्वः।** पुं। गर्दभे। त्रिका.।

**ग्रामयोदकम्।** क्ली। ग्राम्यजले। वै. निघ.।

**ग्रावा(न्)।** पुं। प्रस्तरे। अम.। मेघे। व.।

**ग्रावारिः।** पुं। पाषाणभेदे। পাথরকুচি। प. मु.।

**ग्रासः।** पुं। घासे। कवले। কল। अम.। पारदस्य धातुग्रसनयोग्यतारणे। পারার স্বর্ণগ্রাস। स चतुर्विधः—"चतुःषष्ट्यंशकग्रासात् दण्डधारी भवेद्रसः। जलौका च द्वितीयेन ग्रासयोगे सुरेश्वरि। ग्रासेन तु तृतीयेन काकविष्ठासमो भवेत्। ग्रासेन तु चतुर्थेन दधिमण्डसमो भवेत्।" र. चि. ३अ.। (विवरणं पारदशब्दे द्रष्टव्यम्)।

**ग्राहः।** पुं। शिशुमारे। শুশুক। रा. नि. व. १९। नक्रे। হাঙ্গর, জলহস্তী। अ. टी. भ.।

**ग्राहकः।** पुं। सितावरशुपे। শুশুনি শাক। रा. नि. व. ४। घातपक्षिणि। বাজ পাখী। श. र.।

**ग्राहलोमशा।** स्त्री। वचायाम्। বচ। रा. नि. व. ६।

**ग्राहिणी।** स्त्री। क्षुद्रदुरालभायाम्। ক্ষুদ্র দুরালভা। प. मु.। चौरिण्याम्। খিরুই। र. मा.। शुक्ललज्जालुकायाम्। শ্বেত লজ্জাবতী। वै. निघ.। श्येनपक्षिण्याम्। न.।

**ग्राहिफलम्।** क्ली। कपित्थफले। কয়েৎ বেল। रा. नि. व. ११।

**ग्राहिवस्तिः।** पुं। निरूहवस्तिभेदे। পিচকারীবিশেষ। स च अम्बष्ठादिप्रियङ्ग्वादिकाथेन क्षौद्रघृतयुक्तेन साध्यते। यथा—"प्रियङ्ग्वादिगणक्वाथे अम्बष्ठाद्येन संयुताः। सक्षौद्राः सघृताश्चैव ग्राहिणो वस्तयः स्मृताः। एतेनैव च योगेषु स्नेहाः सिद्धाः पृथक् तथा। सम्यगथवा सम्यक् विज्ञेयाः स्नेहवस्तयः॥" सु.।

**ग्राही (इन्)।** पुं। कपित्थवृक्षे। प. मु.। स्त्री। कार्पासे। त्रि। स्तम्भने। वा. टी. हेमा.। धारके। मलबन्धकरे। यदग्निदीप्तिकरं पाचकं तत् ग्राहीत्युच्यते। यथा—"दीपनं पाचनं यत् स्यादुष्णत्वाद्द्रवशोषकं। ग्राहि तच्च यथा शुण्ठी जीरकं गजपिप्पलीति॥" भा.।

**ग्राह्यः।** पुं। अम्लवेतसे। प. मु.।

**ग्रीवा।** स्त्री। कृकाटिकायाम्। ঘাড়। अम.। भा. म. ४भ क्षुद्ररोग-चि.। मन्यायाम्। ঘাড়ের শিরা। मे.। तत्पर्य्यायः—शिरोधिः, कन्धरा (अ.), कन्धिः, शिरोधरा (रा.)।

**ग्रीवारोगः**। पुं। ग्रीवाजातरोगे ग्रीवास्तम्भादौ। च. नि. २अ.।

**ग्रीवास्थि**। क्ली। कसेरुकोर्द्धस्थतदाकारास्थनि। ঘাড়ের হাড়। तानि १५ अ.। च. शा ७अ.।

**ग्रीवी** (इन्)। पुं, स्त्री (विनी)। उष्ट्रे। जटा.।

**ग्रीष्मः**। पुं। घर्म्मे ऋतौ। গর্ম্মিকাল। तत्पर्य्यायः,—उष्णकः, निदाघः, उष्णोपगमः, तपः, उष्णः, उष्णागमः (अ.), घर्म्मः, तापनः, ऊष्णोगमः, उष्णकालः (रा.)। स वैशाखज्यैष्ठमासयोः भवति। ग्रैष्मी शेषदृष्टौ प्रोक्तः। गुणाः—ग्रीष्मोष्णोऽतिकटुकः पित्तकृत्कफनाशनः। उष्णतायाम्। मे.। तात्कालिकं जलम् अभिष्यन्दि। रा. नि. व. १४।

**ग्रीष्मकर्कटी**। स्त्री। ग्रीष्मजकर्कटीविशेषे। वै. निघ.।

**ग्रीष्मका**। स्त्री। पुष्पविशेषे। মল্লিকা, বনমল্লিকা। वै. निघ.।

**ग्रीष्मजा**। स्त्री। लवलीवृक्षे। নোণা গাছ अ. च.।

**ग्रीष्मपुष्पी**। स्त्री। कोङ्कणदेशे करवीरपर्णीति प्रसिद्धे पुष्पवृक्षे। रा. नि. व. १०।

**ग्रीष्मभ(भोद्भ)वा**। स्त्री। नवमल्लिकायाम्। সেউতি। रा. नि. व. १०।

**ग्रीष्मसुन्दरकः**। पुं। सूक्ष्मपत्रशाकविशेषे। গীমা শাক। तत्पर्य्यायः,—घूर्णः (अ.), ग्रीष्मसुन्दरः (के.)। गुणाः—तिक्तं रुचिकरं कफपित्तदोषघ्नञ्च। राज. ३प.।

**ग्रीष्महासा**। स्त्री। इन्द्रतूलके। त्रिका.।

**ग्रीष्मा**। स्त्री। लोध्रवृक्षे। वै. निघ.। नवमल्लिकायाम्। रा. नि. व. १०।

**ग्रैवम् (वेयम्)**। क्ली। कण्ठभूषणे। शब्दर.।

**ग्रैष्मिका (ष्मी)**। स्त्री। नवमल्लिकायाम्। সেউতি। प. मु.।

**ग्लानः**। त्रि। रोगिणि। रा. नि. व. २०।

**ग्लाना**। स्त्री। बलहीनतायाम्। हे. च.। रोगे। राज.।

**ग्लानिः**। स्त्री। व्याधौ। रा. नि. व. २०। ओजःक्षयादिजन्यदेहजाड्ये। "ग्लानिरोजःक्षयाद् दुःखादजीर्णाच्च श्रमाद्भवेत्।" शार्ङ्ग. पू. ६अ.। "वक्त्रे मधुरता तन्द्रा हृदयोद्वेष्टनं भ्रमः। नचान्नं रोचते यस्मै ग्लानिं तस्य विनिर्दिशेत्।" भा.। सु. शा. ४ अ.।

**ग्लास्नुः**। त्रि। रोगिणि। रा. नि. व. २०। ग्लाने। अम.।

**ग्लौः**। पुं। कर्पूरे। अम.। चन्द्रे।

---

# घ।

**घः**। पुं। घण्टायाम्। मे.।

**घंसः**। पुं। दिने। वेद. नि.।

**घटः**। पुं। कलसे। अम.। द्रोणपरिमाणे। ६४ श.। प. प्र.। करिगण्डस्थले। मे.। कुम्भपरिमाणे, द्रोणविंशता।

**घटकः**। पुं। विना पुष्पं फलवति वृक्षे, उदुम्बरादौ।

**घटदेशजम्**। क्ली। गड़लवणे। रा. नि. व. ६।

**घटराजः**। पुं। कलसे। हा.।

**घटा**। स्त्री। मधुरकर्कटिकायाम्। মিষ্টি লেবু। मद. व. ६। श्वेतगुञ्जायाम्। के.।

**घटाभिधा**। स्त्री। घटाकारशुक्लालाबुभेदे, कुम्भतुम्ब्याम्। গোল লাউ। वै. निघ.।

**घटालाबुः (बूः)**। स्त्री। कुम्भतुम्ब्याम्। रा. नि. व. ७।

**घटालिका**। स्त्री। मधुरकर्कट्याम्। মিষ্টি লেবু। मद. व ६।

**घटिकम्**। क्ली। नितम्बे। श. च.।

**घटिका**। स्त्री। मुहूर्त्तपरिमाणे। দুইদণ্ড। जटा.। पादग्रन्थौ। श. र.।

**घटिकालवणम्**। क्ली। विड्लवणे। বিট লবণ। वै. निघ.।



**घटी**। स्त्री। क्षुद्रघटे। मुग्धबो.।

**घटीयन्त्रग्रहणी**। स्त्री। ग्रहणीरोगभेदे। लक्षणं यथा—"प्रसुप्तिः पार्श्वयोः शूलं तथा जलघटीध्वनिः। तं वदन्ति घटीयन्त्रमसाध्यं ग्रहणीगदम्॥" मा. नि.।

**घट्टगा**। स्त्री। दाक्षिणात्यनदीविशेषे। एतज्जलं गुणैः कृष्णासदृशम्। स्वादुतरं पथ्यं कान्तिदञ्च। रा. नि. व. १४।

**घण्टः**। पुं। शाकादिसिद्धव्यञ्जनविशेषे। শাকের ঘণ্ট, নেয়ের ঘণ্ট। गुणाः—बल्यः रुचिकरः वातघ्नश्च। राज.।

**घण्टकः**। पुं। क्षुद्रक्षुपविशेषे। ঘেটকুল, ঘেঁটু গাছ। ঘেঁটুকাণ। सा. कौ.। तत्पर्य्यायः,—घण्टकर्णः (रा.), घण्टकर्णकः (भा.)। तस्य मूलगुणाः—कफघ्नं कटुपाकि पित्तकरञ्च। राज.। घण्टापाटलवृक्षे। ज. द.।

**घण्टकर्णः**। पुं। क्षुद्रक्षुपविशेषे। ঘেঁটুকোল। भैष. अम्लपित्तचि.।

**घण्टकेश्वरः**। पुं। स्वनामख्यात-पुष्पवृक्षविशेषे।

**घण्टा**। स्त्री। अतिबलायाम्। रा. नि. व. ४। जवापुष्पवृक्षे। জবাগাছ। र. मा.।

**घण्टाकः**। पुं। घण्टापाटलिवृक्षे। ঘণ্টাপারুল। ज. द.। शालिन्याम्। ঝিঙে। वै. निघ.।

**घण्टाकर्णः**। पुं। घण्टकक्षुपे। ঘেঁটুগাছ। ঘেঁটুকাণ। प. मु. ग्रहणी. चि नित्यानन्दरसे।

**घण्टापाटलिः**। स्त्री। स्वनामख्यातवृक्षे। ঘণ্টাপারুল। हिं मोखा। प. मु.। तत्पर्य्यायः,—गोलीढः, झाटलः, मोचः, मुष्ककः (अ.), गोलिहः घण्टा, पाटली (अ. टी.), घण्टाकः झाटः (शब्दर.), तीक्ष्णः, घण्टकः (रत्नको.), मोचकः, काष्ठपाटली, कालास्थाली, काचस्थाली (भा.), कालघण्टा, मुष्कः (द्रव्याभि.)।
See मुष्ककः।

**घण्टारवा (वी)**। स्त्री। वनशणवृक्षे। শণ গাছ। हिं झन्झनिया। भ.। तत्पर्य्यायः,—शणपुष्पिका, शणपुष्पी (भ.)।

**घण्टालः**। पुं। मदनवृक्षे। ময়না গাছ। रा. नि. व. ८।

**घण्टालिका**। स्त्री। मधुरमातुलुङ्गवृक्षे। म. द. व. ६।

**घण्टाली**। स्त्री। कोषातक्याम्। ঘোষা। रा. नि. व. ३।

**घण्टाबीजः**। पुं। जैपालवृक्षे। জয়পাল গাছ। रा. नि. व. ६। शणवृक्षे। वै. निघ.। क्ली। शणबीजे।

**घण्टाशब्दम्**। क्ली। कांस्यधातौ। কাঁসা। हे. च.।

**घण्टाशोता**। क्ली। अतिबलायाम्। रा. नि. व. ४।

**घण्टाशीला**। स्त्री। महाशणवृक्षे। वै. निघ.।

**घण्टाश्रेणी**। स्त्री। कोषातक्याम्।

**घण्टिकः**। पुं। पादिजलजन्तुविशेषे। अर्क. चि.।

**घण्टिका**। स्त्री। सूक्ष्मजिह्वायाम्। আলজিবি। रा. नि. व. १८। गलशुण्डिकारोगे। रा. नि. व. २०। शणपुष्प्याम्। শণফুল। वै. निघ. २ भ. अपस्मा. चि. द्राक्षावलेहे। कुमरिचे। লঙ্কামরিচ। वै. निघ.।

**घण्टिनीबीजम्**। क्ली। जैपालबीजे। रा. नि. व. ६।

**घण्टुः**। पुं। करिकण्ठभूषणे। उणा.। उष्णतायाम्। वै. निघ.।

**घण्डः**। पुं। मधुमक्षिकायाम्। भ्रमरे। उणा.।

**घनः**। पुं। मुस्तायाम्। মুতা। रा. नि. व.२३। सि. यो. कास चि. पथ्यादिगुडौ। नागरमुस्तायाम्। च. द. पित्त चि. विशादि.। शरीरे। रा. नि. व. १८। अभ्रके। मेघ। रा. नि. व. २३। कफे। रा. नि. व. २१। त्वचि। গুড়ত্বক্। रा. नि. व. १२। वङ्गे। गुड़े। वै. निघ.। क्ली। लौहे। हे. च.। वल्कले। रा. नि. व. २। त्रि। निविड़े। अम.।

**घनकफः**। पुं। करकायाम्। শিল। त्रिका.।

**घनकालः**। पुं। वर्षर्त्तौ। श. र.।

**घनगोलकः**। पुं। स्वर्णे, रौप्ये च। सन्निवृष्टरजतसुवर्णे। हे. च.।

**घनचन्दनादिः**। पुं। वातपित्तज्वरे क्वाथः। "घन-चन्दन-पर्पटकं कटुकं समृणाल-पटोलदलं

सजलं। शृतशीतसितायुतपित्तहरं ज्वरच्छर्द्दितृषा-रुचिदाहहरम्।” মুতা, রক্তচন্দন, ক্ষেৎ-পাপড়া, কট্‌কী, বেণার মূল, পল্‌তা, বালা প্রত্যেক ১৪ রতি। জল ॥০ শ. শে. ৵০ পোয়া। প্রক্ষেপ—চিনি ৪ মাষা। सा. कौ.।

**घनच्छदम्।** क्ली। तालीशपत्रे। रा. नि. व. ६। शिग्रुवृक्षे। সজিনা গাছ। वै. निघ.।

**घनजम्बाल:।** पुं। चुलुके। গণ্ডূষ। त्रिका.।

**घनजीवन:।** पुं। चातकपक्षिणि।

**घनज्वाला।** स्त्री। मेघदीप्तौ। शब्दर.।

**घनता(तो)ल:।** पुं। चातकपक्षिणि। सारङ्ग-पक्षिणि। जटा.। त्रिका.।

**घनत्वक्।** पुं। शुक्लरोध्रे। শ্বেত লোধ। वै. निघ।

**घनद्रुम:।** पुं। विकङ्कतवृक्षे। रा.।

**घनध्वनि:।** पुं। मेघगर्ज्जने। मुस्तायाम्। र. सा. सं. रसनियामके।

**घननाभि:।** पुं। धूमे। शब्दर.।

**घनपत्र:।** पुं। पुनर्णवायाम्।

**घनपल्लव:।** पुं। शिग्रुवृक्षे। সজিনা গাছ। वै. निघ.।

**घनपाषण्ड:।** पुं। मयूरे। श, मा.।

**घनपाषाण:।** पुं। कान्तपाषाणे। अभ्रके। रस. र. महाज्वराङ्कुशे।

**घनप्रभ:।** पुं। राजावर्त्तमणौ। वै. निघ.।

**घनप्रिया।** स्त्री। काकजम्बूवृक्षे। বনজাম। रा. नि. व. ११। नदीजम्बाम्। वै. निघ.।

**घनफल:।** पुं। विकङ्कतवृक्षे। रा. नि. व. ११। तरम्बुजि। তরমুজ গাছ। वै. निघ.।

**घनफेनिला।** स्त्री। काकमाच्याम्। গুড়-কামাই। वै. निघ.।

**घनमूल:।** पुं। मोरटलतायाम्। লতাকড়ার। रा. नि. व. ३।

**घनमूला।** स्त्री। काकमाच्याम्। क्षीरमूर्व्वा-विशेषे। वै. निघ.।

**घनरव:।** पुं। मयूरे। वै. निघ.।

**घनरस:।** पुं। मोरटे। লতাকরাড়। मे.। मूर्व्वायाम्। মুগরা। र. मा.। जले। कर्पूरे। पीलुपर्ण्याम्। कषाये। सान्द्रनिर्यासे। सम्यक्-सिद्धरसे। मे.। रा. नि. व. १४।

**घनरूपा।** स्त्री। खटीशर्करायाम्। ফুলখড়ি। वै. निघ.।

**घनवल:।** पुं। मोरटलतायाम्।

**घनवल्लिका (ल्ली)।** स्त्री। अमृतस्रवालतायाम्। रा. नि. व. ३।

**घनवास:।** पुं। कुष्माण्डे। हारा.।

**घनशृङ्गी।** स्त्री। मेषशृङ्ग्याम्। वै निघ.।

**घनश्याम:।** त्रि। निविड़कृष्णवर्णे।

**घनसंज्ञा।** स्त्री। मुस्तायाम्। वै. निघ.।

**घनसमय:।** पुं। वर्षाकाले।

**घनसार: (क:)।** पुं। कर्पूरे। रा. नि. व. १२। र. सा. सं.। वसन्ततिलकरसे। भा, उ. वाजी.। ज्व. चि. अगर्व्वादिधूपे। वै. निघ, दाह. चि. रसादिगुड्याम्। भा. म. ३भ. मू. घा. चि.। जले। धरणि.। दक्षिणावर्त्तपारदे। मे.। चन्दने। वै. निघ.।

**घनसून:।** पुं। मोरटलतायाम्। লতা-করাড়। रा. नि. व. ३।

**घनस्कन्ध:।** पुं। कोशाम्रवृक्षे। জলপাই, ক্যাওড়া। रा. नि. व. ११।

**घनस्वन:।** पुं। तण्डुलीयशाकक्षुपे। কাঁটা-নটের ঝাড়। रा. नि, व. ५।

**घना।** स्त्री। मधुपर्णीलतायाम्। रुद्रजटायाम्। रा. नि. व. ३।

**घनाकर:।** पुं। वर्षायाम्। वै. निघ.।

**घनाग्निसहम्।** क्ली। उत्तमकांस्ये। वै.निघ.।

**घनावटा।** स्त्री। काकजङ्घायाम्। কেউয়া ঢৌঁড়ী। श. च.।

**घना:घन:।** पुं। मत्तहस्तिनि। अम.।

**घनाघना।** स्त्री। काकमाच्याम्। श. च.।

**घनात्यय:।** पुं। शरदृतौ। हे. च.।

**घनान्त:।** पुं। शरदृतौ।

**घनापहा।** स्त्री। काकमाच्याम्।

**घनामय:।** पुं। खर्जूरवृक्षे। त्रिका.।



**घनामल:।** पुं। पुनर्नवायाम्। चन्दनवटे। वै. निघ.। ( Chenopodium album. ) वास्तूकशाके। त्रिका.।

**घनाराव:।** पुं। चातकपक्षिणि। वै. निघ.।

**घनावहा।** स्त्री। काकमाच्याम्। कर्ण-स्फोटायाम्। কাণছিড়া। प. मु.।

**घनाश्रय:।** पुं। (Aether.) आकाशे।

**घनाह्वम्।** क्ली। अभ्रधातौ। प. मु.।

**घनेतरम्।** क्ली। दधनि। দই; अ.।

**घनोद्भवम्।** क्ली। लौहकीट्टे। মণ্ডূর। वै. निघ.।

**घनोपल:।** पुं। करकायाम्। हे. च.।

**घरट्ट:।** पुं। पेषणयन्त्रे। যাঁতা।

**घर्घट:।** पुं। (Pimelodus gagora or P. tengara.) मत्स्यभेदे। ট্যাংরা মাছ। श. र.।

**घर्घर:।** पुं। पेचके। পেঁচা। त्रिका.। तुषा-नले। हे. च.। (का:) नदविशेषे। तज्जलं रुच्यं शीतलं दीपनं पथ्यं बल्यं क्षीणाङ्गपुष्टिकारञ्च। रा. नि. व, १४। त्रि। स्वरविशेषे। मे.।

**घर्घरिका।** स्त्री। घर्घरनदे। भृष्टधान्ये। খই। हे. च.। क्षुद्रघण्टिकायाम्।

**घर्घरी।** स्त्री। किङ्किन्याम्। ঘুঙ্গুর।

**घर्घूघा (घा)।** स्त्री। तन्नामककीटे, यमकीटे। ঘুরঘুরিয়া পোকা। र. मा.।

**घर्म्म:।** पुं। स्वेदे। ঘাম। रा. नि, व, १८। तत्पर्य्याय:,—निदाघ:, स्वेद: (अ.), सिम: (ज.), स्रवणं (शब्दर.), तनुरस: (हा,) प्रस्रवण: (त्रि.), प्रस्वेद: (सुश्रु.)। आतपे। उष्मणि। त्रिका.। ग्रीष्मर्त्तौ। हे, च.।

**घर्म्मचर्च्चिका।** स्त्री। घर्म्मचिकायाम्। ঘামাচী। यथा—“स्वेदवाहीनि दुष्यन्ति क्रोधशोकभयैस्तथा। तत: स्वेद: प्रवर्त्तेत दुर्गन्धा घर्म्मचर्च्चिका। रात्रिका-क्षतिरुपीत्या यतो घर्म्मविचर्च्चिका॥” प्रयोगा.।

**घर्म्मज:।** पुं। जवादिकस्तूरिकायाम्। খাটাশী। वै. निघ.।

**घर्म्मदुघ: (द्युति:)।** पुं। सूर्य्ये।

**घर्म्मदोष:।** पुं। स्वेदाधिक्ये। गारु.।

**घर्म्मपय:।** क्ली। घर्म्मजले। उष्णोदके। वै.निघ.।

**घर्म्मविचर्च्चिका।** स्त्री। घर्म्मचर्च्चिकायाम्।

**घर्म्मान्त:।** पुं। वर्षर्त्तौ। रा, नि. व. २१।

**घर्म्मान्तकामुकी।** स्त्री। पक्षिविशेषे। বগুলী বক।

**घर्म्माम्बु (म्भ:)।** क्ली। घर्म्मे। ঘাম। रा, नि. व. १८।

**घर्ष:।** पुं। कर्करिकायाम्। কর্কর করা। च. द. आश्चोतने।

**घर्षणम्।** क्ली। घर्षकर्म्मणि। ঘসা। “घर्षणा-दभिघातात्।” नि.।

**घर्षणाल:।** पुं। मुषले, शिलापुत्रे। নোড়া। त्रिका.।

**घर्षणी।** स्त्री। हरिद्रायाम्। त्रिका.।

**घलम्।** क्ली। तक्रे। श.।

**घसि:।** पुं। अन्ने। आहारे। हे, च.।

**घस्मर:।** पुं। अस्मरे। ভক্ষক। अम.।

**घस्रम्।** क्ली। कुङ्कुमे। त्रिका.। पुं। दिवसे। मे.।

**घाट:।** पुं। घाटायाम्। ঘাড়। श. र.।

**घाटा।** स्त्री। नागबलायाम्। रा. नि. व ४। शिर:पश्चात्सन्धौ। ঘাড়। रा. नि. व. १८। तत्-पर्य्याय:,—अवटु:, कृकाटिका (अ.), शिर:पश्चात्, सन्धि: (रा.), घाट:, कृकाटी (शब्दर.), घाटिका (श.)।

**घाटाल:।** त्रि। बन्धुरे। सु. नि. ६अ.।

**घाटिका।** स्त्री। घाटायाम्। ঘাড়। श च.।

**घाण्टिक:।** पुं। (Datura metel, also fastuosa.) धुस्तूरवृक्षे। हारा.।

**घातकृच्छ्रम्।** क्ली। मूत्रकृच्छ्ररोगे। नि.।

**घात(ति)पक्षी (इन्)।** पुं। A hawk or falcon. श्येनपक्षिणि। বাজ পাখী। हारा.।

**घार:।** पुं। सेचने। हे. च.।

**घार्त्तिक:।** पुं। घृतपूरे। ঘিওড়। हे. च.।

**घास:।** पुं। तृणे। शष्पे। ঘাস। अम.। तत्-पर्य्याय:,—यवसं (अ.), जवसं, यवस: (भ.), गवाद-नम् (श.), यवांश, यवस. (शब्दर.)।

**घासि:।** पुं। अग्नौ। त्रि.।

**घुः** । स्त्री । नासायाम् । वै, निघ. । ध्वनौ । ज. ।

**घुघुकृत्** । पुं । वनकपोते । घुघू । वै, निघ. ।

**घुघुलारवः** । पुं । पारावते । वै, निघ. ।

**घुटः** । पुं । पादग्रन्थौ । পায়ের গাঁট । हे. च. ।

**घुटिः (टी) (कः, का)** । पुं, स्त्री । जङ्घाङ्घ्रिसन्धिग्रन्थौ । গুল্ফ । "जङ्घाङ्घ्रिसन्धिग्रन्थौ तु घुटिका गुल्फ इत्यपि ।" हे. च. । रा.नि.व. १८ ।

**घुणः** । पुं । काष्ठक्रिमौ । ঘুণ । लिङ्गसंग्रहे भरतः । तत्पर्य्यायः,—काष्ठवेधकः (भा.), काष्ठलेखकः (भू.), घूणः, काष्ठकीटः (हे.), किणः । भ्रमरे । वै, निघ. ।

**घुणदयिता** । स्त्री । अतिविषायाम् । আতইচ । वै, निघ, व्य. चि, अर्कादिः । "पर्णीपणघुणदयिता ।"

**घुणप्रिया** । स्त्री । अतिविषायाम् । कृष्णातिविषायाम् । (अमृतार्णवरसे) । वा, सू. ६५ अ. । "कटुका मरिचं घुणप्रिया च गण्डीरम् ।" च, द. पाण्डु, चि. । कृष्णदन्तीवृक्षे । वै. निघ. ।

**घुणवल्लभा** । स्त्री । कृष्णातिविषायाम् । কাল আতইচ । भा. ।

**घुणा** । स्त्री । कालातिविषायाम् । वै. निघ. ।

**घुण्टः (कः)** । पुं । गुल्फे । श. मा. । हे, च, ।

**घुण्टा** । स्त्री । क्षुद्रबदरे । वै, निघ. ।

**घुण्टिकम्** । क्ली । वनकरीषे । নিলঘুঁটে । श, च. ।

**घुण्टिका** । स्त्री । सिंहपुच्छिकायाम् । ছোট চাকুলে । गुल्फे । निङ्गिन्याम् ।

**घुण्डः** । पुं । भ्रमरे । उणा. ।

**घुर्घुरः (कः) (री)** । पुं, स्त्री । भ्रमरे । कीटविशेषे । ঘুরঘুরিয়া পোকা । त्रिका. । (कः) । शब्दविशेषे । গলা ঘড় ঘড় করা । च. द, १० अ. ।

**घुलञ्चः** । पुं । गवेधुकायाम् । গড়গড় । र, मा. ।

**घुलघुलारवः** । पुं । पारावतभेदे । रा. नि. व. १९ ।

**घुसृणम्** । क्ली । कुङ्कुमे । त्रिका. । सि. यो. च. द, वा, व्या, चि, । "घुसृणैः पलार्द्धैः ।"

**घूकः** । पुं । उलूके । हे, च, ।

**घूकारिः** । पुं । काके । हे, च, ।

**घूकावासः** । पुं । शाकभेदे । वै, निघ, । साहोड़वृक्षे । শ্যাঁওড়া গাছ । रा, नि, व, ९ ।

**घूर्णः** । पुं । ग्रीष्मसुन्दरके । গীমা । श, च, ।

**घूर्णनम्** । क्ली । भ्रमणे । हे. ।

**घूर्णिः** । स्त्री । घूर्णने । घुरनि । हे. च. ।

**घृणावासः** । पुं । कुष्माण्डे । त्रिका. ।

**घृणिः (णी)** । पुं । वनशूकरे । वै. निघ. । किरणे । (अ.) । सूर्य्ये । जले । मे, । अश्वरोगविशेषे । तेनाश्वस्य नासाभ्यन्तरे व्रणपिड़काशोफा भवन्ति । नासिकाभ्यन्तरे यस्य पिड़कानां समुद्भवः । व्रणं वा यदि वा शोथस्तस्य विद्याद् घृणीरुजम् ॥" ज. द. ३९अ. ।

**घृतम्** । क्ली । नवनीतजपदार्थे । ঘি, ঘৃত । तत्पर्य्यायः,—आज्यं, हविः, सर्पिः (अ.), पुरोडाश् (व्याक.), आजं (ज.), तोयदं (मे.), वह्निभोग्यं (श.), पौथं (उ.), पवित्रं, नवनीतकं, अमृतं, अभिघारः, हौम्यं, आयुः, तैजसं (रा.) । घृतं दशविधं गव्यमाहिषाजाश्वगार्दभौष्ट्राविकैड़कमानुष्यहास्तिकभेदेन । तेषां गुणादिकं तत्तत्पर्य्यायेषु द्रष्टव्यम् । सा. घृतगुणाः—"आयुर्वर्द्धकं देहदार्ढ्यकरं सौकुमार्य्यकान्तिबुद्धिस्मृतिबलकरं शीतघ्नं बाल्ययौवनवार्द्धक्येषु प्रधानबलकरं पथ्यञ्च । रा, नि. व. १५ । पुराणघृतगुणाः—"सर्पिर्जीर्णञ्चैव सन्धुक्षणं च मूर्च्छाक्लेदोन्मादकर्णाक्षिशूले । शोफाशंसोर्योनिदोषव्रणेषु शस्तं सर्पिर्जीर्णमेव नृणां स्यात् ॥ नवस्य गुणाः—"बलवर्ये तर्पणभोजनेषु श्रमे च पित्तास्रजि रेतशुक्रे । नेत्रामये कामलपाण्डुरोगे वर्य्ये नवं सर्पिरुदाहरन्ति ॥ ज्वरे विबन्धे च विसूचिकायामरोचके वा शटिते तथाग्नौ । पानात्यये वापि मदात्यये वा शस्तं न सर्पिर्बहुमन्यते च ॥" भवि. ९ अ. । पक्वघृतं—वर्षोपरं हीनवीर्य्यं ॥ भा. । तर्पणनेत्ररोगघ्नं दाहनुत्यवसा घृतम् । यथा—"घृतप्रस्थमग्निपक्वं निष्फेनं स्थिरच्छोतार्थं किञ्चित् शीतं हरिद्रामातुलुङ्गरसमुस्तामलकीहरीतकीविभीतकानां कल्कीकृतानां यथाक्रमं प्रत्येकं पलेन मूर्च्छयेत् । यथा—"धात्रीपथ्याविभीतैर्जलधररजनीमातुलुङ्गद्रवैस्तु सर्व्वैरेतैः सुपिष्टैः पलकपरिमितैर्मन्दमन्दानलेन । आज्यप्रस्थं निष्फेनं परिपचनशतं मूर्च्छयेद्वैद्यविज्ञः तस्मादामौघदोषं त्यजति च सहसा वीर्य्यवत्सौख्यदायि ॥" भैष. ।



**घृतकरञ्जः** । पुं । करञ्जविशेषे । ঘিয়া করঞ্চা । तत्पर्य्यायः,—प्रकीर्य्यः, घृतपर्णकः, स्निग्धपत्रः, तपस्वी, विषारिः, स्निग्धशाकः, विरेचनः । गुणाः—कटूष्णः वातघ्नः व्रणनाशनः त्वग्दोषघ्नः अर्शोघ्नश्च । रा. नि. व. ९ ।

**घृतका** । क्ली । घृतकुमार्य्याम् । वै. निघ. ।

**घृतकुमारिका (री)** । स्त्री । स्वनामख्यातक्षुपे । ঘৃতকুমারী । हिं घिउकुमारी । तत्पर्य्यायः,—कुमारी, तरणिः, सहा (शब्दर.), अफला (श.), बहुपत्री, सुवहा, सुरसा (द्रव्याभि.), कन्यका, दीर्घपत्रिका, स्थलेरुहा, मृदुः, कन्या, अमरा, अजरा, कण्टकप्रावृता, विपुलस्रवा, ब्रह्मघ्नी, वीरा, भृङ्गेष्टा, तरुणी, रामा, कपिला, अम्बुधिस्रवा, सुकण्टका, स्थूलदला, गृहकन्या, अदला । गुणाः—हिमत्वं तिक्तत्वं मदगन्धित्वं कफपित्तकासविषश्वासकुष्ठनाशित्वं रसायनञ्च । रा. । अपिच "कुमारी भेदिनी शीता तिक्ता नेत्र्या रसायनी । मधुरा बृंहणी बल्या वृष्या वातविषप्रणुत् । गुल्मप्लीहायकृद्वृद्धिकफज्वरहरी हरेत् । ग्रन्थ्यग्निदग्ध-विस्फोट-पित्तरक्त-त्वगामयान् ॥" भा. । See गृहकन्या ।

**घृतपर्णकः** । पुं । घृतकरञ्जे । रा. नि, व. ९ ।

**घृतपशुः** । पुं । घृते । वै. निघ. ।

**घृतपूरः (कः)** । पुं । चन्द्रपुलीति घियोड़ इति च ख्याते पिष्टकविशेषे । तत्पर्य्यायः,—पिष्टपूरः, घृतवरः, घार्त्तिकः । हं. । तत्प्रणाली—"मर्दिता समिता चोरनारिकेलघृतादिभिः । अवगाह्य घृते पक्वा घृतपूरोऽयमुच्यते । घृतपूरो गुरुर्वृष्यः कफकृत् रक्तमांसदः । रक्तपित्तहरो हृद्यः स्वादुः पित्तहरोऽग्निदः ॥" भा. । प्रकारान्तरं यथा—"गोधूमचूर्णं सूक्ष्मञ्च स्वच्छं तस्मिन् घृतं क्षिपेत् । यावत्तत् पिण्डतां गच्छेत् पश्चाद्दुग्धे विमर्दयेत् । फेनयित्वा द्रवीभूतं ततः पात्रे घृतं न्यसेत् । सशब्दे सुघृते तप्ते तस्य धारामपासृजेत् । यावच्च व्याप्य तत्पात्रं प्रसरेद्घृतपूरकः । यत्किञ्चित्ताम्रतां याते खण्डपङ्के निमज्जयेत् ॥" गुणाः—"स वृष्यो गुरुर्हृद्यश्च बलकृद्धातुवर्द्धनः । कफास्रमांसलकरो वातपित्तक्षयं हरेत् ॥" वै, निघ. ।

**घृतपूर्णः** । पुं । घृतकरञ्जे । भा. ।

**घृतमण्डः** । पुं । अन्ने, भक्ते । वे, निघ, । सर्पिर्मण्डे । गुणाः—मधुरः सरः योनिश्रोत्राक्षिशिरसां शूलघ्नः बस्तिनस्याक्षिपूरणेषूपदिश्यते । सु. सू. ४५ अ. ।

**घृतमण्डलिका** । स्त्री । हंसपादीक्षुपे । रा. नि. व, ५ । रक्तलज्जालुकायाम् । काकजङ्घायाम् । वै. निघ. ।

**घृतमण्डा** । स्त्री । मधूल्यौ । মালকাঁকড়ী, মাকড়হাতা । र. मा. श. च, । रक्तलज्जालुकायाम् । वै, निघ. ।

**घृतवरः** । पुं । घृतपूरे । मोहनभोगे । हे. च. ।

**घृतहेतुः** । पुं । नवनीते । ননি । वै, निघ. ।

**घृता** । स्त्री । काकजङ्घायाम् । श. च, । काकतुण्डिकायाम् । কেয়োঠুঁটী । वै. निघ. ।

**घृताह्वः** । पुं । सरलद्रवे । সরলগাছের আটা । त्रिका. ।

**घृताची** । स्त्री । एलायाम् । वै. निघ. । रात्रौ । वेद, ।

**घृताची(गर्भ)सम्भवा** । स्त्री । स्थूलैलायाम् । বড় এলাইচ । रा. नि. व, ६ ।

**घृताभ्यङ्गः** । पुं । घृतमर्द्दने । ঘৃতমর্দ্দন । तत्र विधिनिषेधौ—"वाते पित्ते कफे रक्ते सन्निपाते क्षयाङ्कके । मदमूर्च्छाप्रलापेषु तृष्णादाहज्वरेषु च । सन्तप्ते सन्तते जीर्णे ह्यध्वश्रान्ते विशेषतः । बालमध्यमजीर्णानां घृताभ्यङ्गः प्रशस्यते ॥ गुल्मप्लीहाग्निसदन-कामला-सातिसारिषु । श्वासकासोदरच्छर्द्दिपाण्डुसर्व्वाङ्गशोथिषु ॥ विद्रधौ पार्श्वशूलेषु गण्डमालार्बुदादिषु । शीतज्वरे प्रमेहे च घृताभ्यङ्गो न शस्यते ॥" वृद्धाः, ।

**घृताह्वः** । पुं । वृकधूपे, कृत्रिमधूपे । सरलनिर्य्यासे । त्रिका. ।

**घृतिला** । स्त्री । पृश्निपर्ण्याम् । চাকুলিয়া । प. मु. ।

**घृतेली** । स्त्री । तैलपायिकायाम् । তেলাপোকা । हे. च. ।

**घृष्टम्** । क्ली । सद्योव्रणविशेषे । ঘেসর লাগিয়া ঘা বা ক্ষত । "विगतत्वक् यदङ्गं हि सङ्घर्षादन्यथापि वा । उषासावान्वितं तत्तु घृष्टमित्युप-

दिश्यते ॥" सु. चि. २ अ. । पुं । गोधूमे । वै. निघ. ।

**घृष्टतलः** । पुं । अश्वस्य पादरोगविशेषे । लक्षणं यथा—"घृष्टं भूमौ तलं यस्य ताम्रीभवति वाजिनः । तस्य घृष्टतलो नाम पादरोगः प्रकीर्त्तितः ॥" ज. द. २९ अ. ।

**घृष्टिः** । पुं । शूकरे । प. मु. । (ष्टी) स्त्री । वराहक्रान्तायाम् । वाराहीकन्दे । চামর আলু । अम. । घर्षणे । अपराजितायाम् । मे. ।

**घृष्टिला** । स्त्री । पृश्निपर्ण्याम् । চাকুলিয়া । र. मा. ।

**घृष्विः** । पुं । वनवराहे । वै. निघ. ।

**घञ्चुलिका** । स्त्री । ( Arumorinense. ) क्रौञ्चादने । ঘেঁচু । र. मा. ।

**घोटः (कः)** । पुं । अश्वे । प. मु. । See अश्वः ।

**घोटकारिः** । पुं । महिषे । वै. निघ. । करवीरे ।

**घोटकीदुग्धम्** । क्ली । अश्वीदुग्धे । ঘুড়ীর দুধ । गुणाः—रूक्षमम्लं लवणं दीपनं लघु देहस्थैर्यकरं बल्यं गौरवकान्तिकृच्च । रा. नि. व. १५ । See अश्वीक्षीरं ।

**घोटगलः** । पुं । काशतृणे । वै. निघ. ।

**घोटिका** । स्त्री । वड़वायाम् । वृहल्लोणीशाके । বড় নুনী । तत्पर्य्यायः,—कर्कटी, तुरङ्गी, चतुरङ्गा । गुणाः—कटूष्णं मधुरं वातव्रणकण्डूकुष्ठरक्तशोथघ्नञ्च । रा. नि. व. ५ । See लोणी ।

**घोटिकाम्ला** । स्त्री । लोणीशाके । भा. ।

**घोटी** । स्त्री । घोण्टायाम् । শেয়াকুল । रा. नि. व. ८ । ह्रस्वबदरवृक्षे । वै. निघ. ।

**घोणकः** । पुं । गोनाससर्पे । वै. निघ. ।

**घोणसा** । स्त्री । लताविशेषे । वै. निघ. ।

**घोणा** । स्त्री । नासिकायाम् । रा. नि. व. १८ । अश्वस्य नासाच्छिद्राक्षिमध्यभागे । ज. द. २ अ. । छिक्किन्याम् । হেঁচেতা । वै. निघ. ।

**घोणान्तभेदनः** । पुं । आरण्यशूकरे । বন শূকর । वै. निघ. ।

**घोणी (इन्)** । पुं । शूकरे । वनशूकरे । प. मु. ।

**घोण्टा** । स्त्री । ( Zizyphus jujuba. ) गोपघण्टायाम् । শেয়াকুল গাছ । मं कं घोटी । गोहृयी । तत्पर्य्यायः,—बदरं, गोपघण्टा, शृगालकोलिः, कपिकोलिः, हस्तिकोलिः, बदरीच्छदा, कर्कन्धूः । गुणाः—कटुः उष्णा मधुरा वातघ्नी व्रणकण्डूतिकुष्ठश्वयथुघ्नी च । रा. नि. व. ८ । पूगीवृक्षे । শুপারি গাছ । रा. नि. व. ११ । वा. सू. १५ अ. । मदनवृक्षे । नागबलायाम् । शाकवृक्षे । শেগুন গাছ । वै. निघ. ।

**घोण्टाख्यः (ख्यः)** । पुं । मदनवृक्षे । ময়না গাছ । रा. नि. व. ८ ।

**घोण्टाफलम्** । क्ली । पूगफले । শুপারি । वै. निघ. । बदरीफले । सू. चि. १७ अ. ।

**घोनसः** । पुं । गोनससर्पे । तिलित्ससर्पे । हे. च. ।

**घोरम्** । क्ली । विषे । रा. नि. व. ६ । पुं । वस्तिकुण्डले । নাইকুণ্ডল । त्रि । मारके । भा. ।

**घोरकुष्ठहा** । स्त्री । हिताली तिक्तालललतायाम् । वै. निघ. ।

**घोरघुष्यम्** । क्ली । कांस्ये । रा. ।

**घोरघ्टः** । पुं । पूगवृक्षे । শুপারি গাছ । मद. व. ६ ।

**घोरदर्शनः** । पुं । भल्लूके । तरक्षौ । তেঁদো বাঘ । रा. नि. व. १९ ।

**घोरनृसिंहरसः** । पुं । सन्निपातज्वरे रसः । "भागैकं मृततास्य द्विभागं मृतलौहकम् । त्रिभागश्च मृतरसः चतुर्भागं मृताभ्रकम् । माक्षिकं रसगन्धौ च तथा शुद्धा मनःशिला । चत्वार्य्येतानि ताम्रस्य प्रत्येकं तुल्यमेव च । गरलञ्चाभ्रतुल्यं स्यात् त्रिकटुश्चाभ्रतुल्यकः । एतत्सर्व्वसमं देयं विषमाल्यं तथैव च । एतत्सर्व्वस्य द्रव्यस्य द्विगुणं कालकूटकं । माल्यमाहिषमायूरच्छागपित्तैर्विभावयेत् । चित्रकस्य द्रवेणैव प्रत्येकं याममात्रकम् । सर्षपाभा वटी कार्य्या...... । दापयेद्वटिकामेकां पयःपेटीरसेन च ॥" भैष. । विषमाल्यं कुचेलके ।

**घोरपुष्पम्** । क्ली । कांस्ये । रा. ।

**घोरप्रदा** । स्त्री । गोधायाम् । গোসাপ । वै. निघ. ।

**घोररासनः (रासी)** । पुं । शृगाले । त्रिका. ।

**घोरा** । स्त्री । देवदाल्याम् । দেয়াতাড়া । रा. नि. व. ३ ।

**घोलम्** । क्ली । सस्नेहजलमथिते दधनि । ঘোল । सु. सू. ४५ अ. । तत्पर्य्यायः,—दण्डाहतम्, कालसेयम्, अरिष्टं, गोरसः, घलं, मथितं, केवलं, भग्नसान्धिकं ( शब्दर. ) । विजलमथिते दधनि । र. मा. । पादजलत्रिभागदधिकृते तक्रे । रा. नि. व. १५ ।

**घोलवटकः** । पुं । घोलकृतवटके । ঘোলবড়া । वै. निघ. ।

**घोलिः (ली)** । स्त्री । पत्रशाकविशेषे । শাকবিশেষ । हिं घोली, तोंडघोलि, किरुगोलि । तत्पर्य्यायः,—घोलिका, घोलिः, कलम्बूः, कुवकालुका । घोली द्विधा क्षेत्रजारामघोलिभेदात् । गुणाः—क्षेत्रशाकं लवणं रुच्यम् अम्लं वातकफघ्नञ्च । आरामघोलिशाकम् अम्लं रूक्षं रुच्यं वातघ्नं पित्तश्लेष्मकरं जीर्णज्वरापहम् । रा. नि. व. ६ ।

**घोलिका** । स्त्री । घोलि । वै. निघ. ।

**घोषः** । पुं । कांस्ये । তামা ও দস্তায় নির্ম্মিত ধাতু । प. मु. । घोषालतायाम् । मे. । मशके । पटोले । भ्रमरे । त्रिका. ।

**घोषकः** । पुं । कोशातक्याम् । हस्तिघोषालतायाम् । ঘোষা, মধুলতা । तत्पर्य्यायः,—धामार्गवः, ( अ. ), घोषः, घोषालता ( शब्दर. ), कोषफलः ( ज ), घोषकाकृतिः, आदाली, देवदाली, तुरङ्गकः । भा. पू. १ भ. शाकव. । See कोशातकी ।

**घोषका** । स्त्री । घोषालतायाम । वै. निघ. ।

**घोषकाकृतिः** । पुं । घोषायाम् । ঘোষা লতা । र. मा. ।

**घोषणः** । पुं । कोकिले । श. र. ।

**घोषपुष्पम्** । क्ली । कांस्ये । रा. नि. व. १३ ।

**घोषयित्नुः** । पुं । कोकिले । त्रिका. ।

**घोषवती** । स्त्री । शताह्वायाम् । শুল্ফা । वै. निघ. । वीणायाम् । हे. ।

**घोषा** । स्त्री । (Anethum sowa.) शताह्वाख्यक्षुपे । মউরী, শুল্ফা । रा. नि. व. ४ । कर्कटशृङ्ग्याम् । रा. नि. व. ६ । विडङ्गे । वै. निघ. ।

**घोषातकी** । स्त्री । श्वेतकोषातक्याम् । শ্বেত ঘোষা । र. मा. । तत्पर्य्यायः,—मृदङ्गी, जालिनी, कृतवेधकः, श्वेतपुष्पा, आकृतिच्छत्रा, ज्योत्स्ना । र. ।

**घोषितः** । पुं । शिशुमारे । শুশুক । वै. निघ. ।

**घोषिलः** । पुं । वनशूकरे । वै. निघ. ।

**घ्राणम्** । क्ली । स्वनामख्यातेन्द्रिये । নাসিকা । रा. नि. व. १८ । आघ्राणे । मा. नि. ।

**घ्राणतर्पणः** । त्रि । घ्राणेन्द्रियतृप्तिजनके । अम. ।

**घ्राणदुःखदा** । स्त्री । छिक्किन्याम् । হেঁচেতা । भा. । नासारोगे । হাঁচি । वै. निघ. ।

**घ्राणपाकः** । पुं । नासापाके । वा. उ. १९ अ. । "सदाहः श्वयथुः सपाकः स्यात् घ्राणपाकोऽपि रक्तपित्तात् ।" चर. ।

**घ्राणेन्द्रियम्** । क्ली । नासिकायाम् । वै. निघ. ।

**घ्राणोदकम्** । क्ली । नासारन्ध्रेण प्रातर्निशोथोदकपाने । নাকে জল খাওয়া । गुणाः—तार्क्ष्यनेत्रत्वं स्वर्गाचार्य्यसदृशवचनशालित्वं बुद्धिमत्त्वमश्विनीकुमारसदृशत्वं शिरोरोगनाशित्वं वलिपलितविहीनत्वञ्च । रा. नि. व. १४ ।

**घ्रातिः** । स्त्री । नासिकायाम् । श. च. ।

# च ।

**चः ।** पुं । कच्छपे । चन्द्रे । मे. ।

**चकोरः (कः) ।** पुं । स्वनामख्यात-पक्षिविशेषे । तत्पर्य्यायः,—चकोरकः, जीवञ्जीवः (अ.), जीवजीवः (शब्दर.) । जीवञ्जीवकः (के.), चलचञ्चुः, ज्योत्स्नाप्रियः, विषदर्शकः (हे.), चन्द्रिकापायी, कौमुदीजीवनः । अस्य मांसगुणाः चटकमांसवत् । "चटकं शीतलं रुच्यं हृद्यं कपिञ्जलानिभं । तद्वच्चकोरजं मांसं हृद्यञ्च बलपुष्टिदम् ॥" रा. नि. व. १९ ।

**चक्रम् ।** क्ली । तगरपादिके । तगरपादुका । नकुल. १३ अ. । सु. कल्प. ५ अ. । अत्रि. २ स्थान २ अ. । विषभेदे । प. मु. । रक्तकुलत्थे । काञ्जिभेदे । काँजि । वै. निघ. । पुं । चक्रवाकपक्षिणि । चकाचकि । अम. ।

**चक्रकः ।** पुं । राजिमत्सर्पविशेषे । सु. कल्प. ४ अ. । See सर्पः ।

**चक्रकरः ।** पुं । स्थलचक्रवाके । भूचक्रवाक् । वै. निघ. ।

**चक्रका ।** स्त्री । स्वनामख्यातमहौषधौ । सु. चि. ३० अ. । See ओषधिगणः ।

**चक्रकारकः ।** पुं, क्ली । नखीनामगन्धद्रव्ये । नखी । वै. निघ. ।

**चक्रकुल्या ।** स्त्री । पृश्निपर्ण्याम् । चाकुलिया । भ. च. । कृष्णतुलस्याम् । वै. निघ. ।

**चक्रगजः ।** पुं । चक्रमर्द्दक्षुपे । चाकन्दा । रा. नि. व. ४ ।

**चक्रगण्डुः ।** पुं । वर्त्तुलोपाधाने । हे. । गोल बालिश ।

**चक्रगुच्छः ।** पुं । अशोकवृक्षे । भ. च. ।

**चक्रगुल्मः ।** पुं । उष्ट्रे । वै. निघ. ।

**चक्रतैलम् ।** क्ली । यन्त्रनिष्पीड़िततैले । टाँट्का तेल ।

**चक्रदंष्ट्रः ।** पुं । वराहे । रा. ।

**चक्रदन्ता (न्ती) ।** स्त्री । जैपालवृक्षे । जय्पाल । प. मु. ।

**चक्रदन्तीवीजम् ।** क्ली । जैपालवीजे । जय्पालविचि । रा. नि. व. ६ ।

**चक्रधरः ।** पुं । सर्पे । त्रिका. ।

**चक्रधारम् ।** क्ली । अर्द्धधारास्त्रविशेषे । तच्चाष्टाङ्गुलायतम् उरसि अङ्गुलविस्तारं द्व्यङ्गुलफलञ्च । सु. सू. टी. ८ अ. ।

**चक्रनखः (नायकः) ।** पुं । नखीनामगन्धद्रव्ये । नखी । रा. नि. व. १२ ।

**चक्रनामा(न्) ।** पुं । माक्षिकधातौ । स्वर्णमाक्षिक । नखीभेदे । नखी । प. मु. ।

**चक्रनायकः ।** पुं । व्यालनखे । रा. । वाघेर नख ।

**चक्रपन्नाटः ।** पुं । चक्रमर्द्दक्षुपे । चाकन्दा । श. र. ।

**चक्रपरिव्याधः ।** पुं । आरग्वधवृक्षे । शोँन्दाल गाछ ।

**चक्रपर्णी (र्णी) ।** स्त्री । कृष्णतुलस्याम् । काल तुलसी । वै. निघ. । पृश्निपर्ण्याम् । चाकुलिया । भ. च. ।

**चक्रपाणिः ।** पुं । स्वनामख्यातप्रकृष्टसंग्रहादिकारे । स गौड़राजस्य पाकशालाध्यक्ष आसीत् । "गौड़ाधिनाथरसवत्यधिकारिपात्रम्" । च. द. ।

**चक्रपादः ।** पुं । हस्तिनि । रथे ।

**चक्रपुन्नाटः ।** पुं । चक्रमर्द्दवृक्षे ।

**चक्रफलः ।** पुं । श्रीनाकवृक्षे ।

**चक्रबन्धना ।** स्त्री । वनमल्लिकायाम् । वै. निघ. ।

**चक्रबाला ।** स्त्री । आम्रातकवृक्षे । आमड़ा गाछ । वै. निघ. ।

**चक्रबालिकः ।** पुं । अश्वस्य पादरोगभेदे । "क्लिद्यन्ते वलयी यस्य खुरसन्धिसमुद्भवाः । अश्विना वाच सततं तं विद्याच्चक्रबालिकम् ॥" न. द. ।

**चक्रभेदिनी ।** स्त्री । रात्रौ ।

**चक्रमण्डली (इन्) ।** पुं । मण्डलिसर्पजातिभेदे । हे. च. ।



**चक्रमर्द्दः (कः) ।** पुं । ( Cassiatora. ) स्वनामख्यातक्षुपे । चाकन्दा, चाट्काटा, एड़ाञ्ची । हिं चक्वड़् । मं तरवटा । कं चगचे । तें चुपविशेषम् । तत्पर्य्यायः,—तर्वटं, तर्वटः, प्रपुन्नडः, मेषाक्षिकुसुमः (रा.), प्रपुन्नाडः (हि.), एडगजः, अड़गजः, गजाख्यः, मेषाह्वयः, एड्हस्ती, व्यावर्त्तकः, चक्रगजः, चक्री, पुन्नाटः, पुन्नाड़ः, विमर्द्दकः, दद्रुघ्नः, तर्व्वटः, चक्राह्वः, शुकनाशनः, दृढ़वीजः, प्रपुन्नाड़ः, खर्ज्जूघ्नः, प्रपुन्नाटः (रा.), चक्रमर्द्दकः, पद्माटः, उरणाख्यः (अ.), उरणाख्यकः, प्रपुन्नड़ः, प्रपुनाड़ः, उरणाक्षः (अ. टी.), उरणाक्षकः, चक्रपन्नाटः (शब्दर.) । गुणाः—कटुः तीव्रः मेदोवातकफघ्नः व्रणकण्डूकुष्ठदद्रुपामादिहरश्च । रा. नि. व. ४ । लघुः स्वादुः रूक्षः वातपित्तघ्नः हृद्यः हिमः कफश्वासदद्रुकुष्ठक्रिमिहरश्च । तत्फलं उष्णं कुष्ठकण्डूदद्रुविषवातघ्नं गुल्मकासक्रिमिश्वासघ्नं कटु च । तत्पत्रम् अम्लं दद्रुघ्नं वातकफघ्नं कण्डूकासक्रिमिश्वासकुष्ठघ्नञ्च । भा. । (र्द्दः) कासमर्दभेदे । श. च. । स्त्री (र्द्दिनी) । अलक्तके । रा. नि. व. ६ ।

**चक्रमुखः ।** पुं । शूकरे । वै. निघ. ।

**चक्रयन्त्रम् ।** क्ली । औषधपाकार्थयन्त्रविशेषे । लक्षणं यथा—"शरावाभ्यां भवेद्यत्तौ मध्यगर्त्ते रसं कुरु । चक्रयन्त्रमिदं सिद्धं वाह्ये गर्त्ते वृहत् पुटम्" ॥ अत्रि. ।

**चक्ररथः ।** पुं । चक्रवाकपक्षिणि । वै. निघ. ।

**चक्ररदः (दंष्ट्रः) ।** पुं । शूकरे, वनशूकरे । वै. निघ. ।

**चक्ररिष्टा ।** स्त्री । वञ्जुलापक्षिणि । रा. ।

**चक्ररेणुका ।** स्त्री । रक्तकरवीरे । रक्तकरवी ।

**चक्रलः ।** पुं, क्ली । रक्तकुलत्थे । लाल कुलथ । वै. निघ. ।

**चक्रलताम्रः ।** पुं । बहुरसालताम्रे । रा. नि. व. ११ ।

**चक्रलक्षणा (णिका) ।** स्त्री । गुड़ूच्याम् । र. मा. ।

**चक्रला** स्त्री । उच्चटायाम् । ওকড়া । अम. । नागरमुस्तायाम् । वै. निघ. ।

**चक्रवक्त्रः ।** पुं । वराहे ।

**चक्रवर्त्तनम् ।** क्ली । शाकविशेषे । हिं चक्वद ।

**चक्रवर्त्तिः (र्त्ती, र्त्तिनी) ।** पुं, स्त्री । वास्तुकशाके । বেতো শাক । प. मु. । लाक्षायाम् । जटामांस्याम् । रा. नि. व. १२ ।

**चक्रवल्लरी ।** स्त्री । स्नुहीभेदे । फणिमनसा । वै. निघ. ।

**चक्रवाकः ।** पुं । ( Anas casarca. ) Rudygoose. स्वनामख्यातहंसजातीयपक्षिविशेषे । চকাচকী, রামচকা । तत्पर्य्यायः,—कामुकः (त्रि.), वियोगी (श.), कोकः, चक्रः, रथाङ्गाह्वयनामकः (अ.), सुरिप्रेमा, द्वन्द्वचारी, सहायः, कान्तः, कामी, रात्रिविश्लेषगामी, रामावचीजोपमः, कामुकः । तन्मांसं लघु स्निग्धं बलदं अग्निदं सर्व्वशुक्लप्रदमुष्णं वातरोगघ्नञ्च । रा. नि. व. १९ । कटु हृद्यम् उष्णवीर्य्यं कटुपाकि बलवह्निकरञ्च । राज. । अश्वविशेषे । नकुल. । (का, की) स्त्री । चक्रवाकपत्न्याम् । চক্রবাকী । ब्रह्मत्याम् । বিরুতী । प. मु. ।

**चक्रवाकुलः ।** पुं । चक्रशकुलमत्स्ये । गजात माछ ।

**चक्रवार्त्ताकी ।** स्त्री । वृहत्याम् ।

**चक्रवीजम् ।** क्ली । जैपालवीजे । रा. नि. व. ६ ।

**चक्रवेधकम् ।** क्ली । चुक्रनामककाञ्जिके । সির্কাম্ন । रा. नि. व. १५ ।

**चक्रशकुलः ।** पुं । शालमत्स्ये ।

**चक्रशल्या ।** स्त्री । काकतुण्ड्याम् । रा. ।

**चक्रश्रेणी ।** स्त्री । अजशृङ्ग्याम् । মেড়াশৃঙ্গী । र. मा. ।

**चक्रसंज्ञम् ।** क्ली । वङ्गे । हे. च. ।

**चक्रा ।** स्त्री । कर्कटशृङ्ग्याम् । কাঁকড়াশৃঙ্গী । नागरमुस्तायाम् । নাগরমুতা । रा. नि. व. ६ ।

**चक्राकी (ङ्की) ।** स्त्री । हंस्याम् । शब्दर. ।

**चक्राङ्गा ।** स्त्री । नागरमुस्तायाम् । रा. नि. व. ६ । सुदर्शनायाम् । উরতীপূরতী । पद्मगुड़्च्याम् । पद्मगुलञ्चः । वै. निघ. ।

**चक्राङ्गः ।** पुं । हंसे । अम. ।

**चक्राङ्गा (ङ्गी (इन्))।** स्त्री, पुं। सुदर्शन लतायाम्। উরতীপুরতী। हिं दद्रुघ्नि। कटुक्याम्। কট্কী। रा. नि. व. ६। कर्कटशृङ्ग्याम्। কাঁকড়াশৃঙ্গী। प. मु.। हिलमोचिकायाम्। হিঞ্চে। त्रिका.। हंस्याम्। श. र.। मञ्जिष्ठायाम्। रा. नि. व. ६। वास्तुके। वै. निघ.।

**चक्राटः।** पुं। विषवैद्ये। मे.।

**चक्राधिवासी।** पुं। नागरङ्गवृक्षे। টাবা বৃক্ষ। त्रिका।

**चक्रालुः।** पुं। महाराजाम्रे। খাস আম। वै. निघ.।

**चक्राह्वः (यः)।** पुं। चक्रमर्द्दक्षुपे। চাকন্দা। रा. नि. व. ४। भैष. कुष्ठ चि.। चक्रवाकपक्षिणि। रा. नि. व. १९।

**चक्राह्वा।** स्त्री। सुदर्शनाख्यलतायाम्। भा.। पद्मगुलञ्च।

**चक्रिकः।** पुं। रक्तकुलत्थे। वै, निघ.।

**चक्रिका।** स्त्री। जानुनि। হাঁটু। रा. नि. व. १८। श्वेतगुञ्जायाम्। সাদা কুঁচ। रक्तकार्पास्याम्। লালকাপাস। चक्रमर्द्दे। চাকন্দা। वै. निघ.।

**चक्रिपत्नी।** स्त्री। चक्रवाकस्त्रियाम्। চক্রবাকী। श्वेततुलस्याम्। वै. निघ.।

**चक्री (इन्)।** पुं। कोकपक्षिणि। চক্রবাক। चक्रमर्द्दे। চাকন্দা। तिनिशवृक्षे। সাদন গাছ। काके। गर्द्दभे। व्याघ्रनखे। নখীবিশেষ। दधनि। रा. नि.व.२३। स्त्री। त्वचि। দারুচিনি। वै. निघ.।

**चक्रीवान्।** पुं। गर्द्दभे। अम.। चक्रवाके। চকা। वै. निघ.।

**चक्रेन्द्रकः।** पुं। देवसर्षपवृक्षे। রাই। वै. निघ.।

**चक्रेश्वरी।** स्त्री। वत्सनाड़िकायाम्। वै. निघ.।

**चक्रोत्थः।** पुं। कुक्कुटपादीलतायाम्। লতা কট্কী। वै. निघ.।

**चङ्क(ङ्कु)रः।** पुं। वृक्षे। मे.।

**चङ्क्रमणम्।** क्ली। भ्रमणे। পুনঃপুনর্ভ্রমণ। गुणाः,—"अनारोग्यमनायुष्यं चक्षुषोरुपघातकृत्। पादाभ्यामनुपानद्भ्याम् सदा चङ्क्रमणं नृणाम्॥" सु. चि. २४ अ.। "यत्तु चङ्क्रमणं नातिदेहपीड़ाकरं भवेत्। तदायुर्बलमेधाग्निप्रदमिन्द्रियबोधनम्॥ अध्वमेदःकफस्थौल्यसौकुमार्य्यविनाशनम्।" राज. २ प.।

**चचण्डी।** स्त्री। क्षुद्रजिह्वायाम्। আলজিভ।

**चचेण्डला।** स्त्री। चिचिण्डायाम्। চিচিঙ্গে। वै. निघ.।

**चचेण्डा।** स्त्री। चिचिण्डायाम्। চিচিঙ্গা, হোঁপা। तत्पर्य्यायः,—वेश्मकूलः, श्वेतराजी, बृहत्फलः। रा.। गुणाः—शोषरोगे हितं पटोलाद्धीनगुणञ्च। मद.।

**चञ्चत्कुठाररसः।** पुं। अर्शसि रसः। रसः गन्धकः लौहं प्र. २ भ.। त्रिकटु दन्तीमूलं कुष्ठं प्र. १ भ. विषलाङ्गलिकामूलं ६ भ. यवक्षारः सैन्धवं टङ्कणक्षारः प्र. ५. भ. गोमूत्रं स्नुहीक्षीरं प्र. ३२ भ.। यावत्पिण्डं मृद्वग्निना पचेत्। र. सा. सं.।

**चञ्चरी (इन्)।** पुं, स्त्री (री)। मधुमक्षिकायाम्। भ्रमरे। ভ্রমর। वै, निघ.।

**चञ्चरीकः।** पुं। भ्रमरे। त्रिका.।

**चञ्चलः।** पुं। वायौ। त्रि.। अस्थिरे। अ.।

**चञ्चलतैलम्।** क्ली। शिलारसे। त्रिका.।

**चञ्चला।** स्त्री। पिप्पल्याम्। श. च.। सौदामन्याम्। श.।

**चञ्चुमूचिः।** पुं। कारण्डवपक्षिणि। সারস। খড়া হাঁস। त्रिका.।

**चञ्चुः।** पुं, स्त्री। क्षुद्रचुञ्चुक्षुपे। চেচ্ড়া শাক। गोनाड़ीचे। নাড়ীচ শাক। रा. नि. व./ ४। हिं चेंचुना। तत्पर्य्यायः,—विजला, चञ्चूः, कलभी, चोरपत्रिका, चञ्चुरः, चञ्चुपत्रः, सुशाकः, क्षेत्रसम्भवः। गुणाः—मधुरत्वं, तीक्ष्णत्वं, कषायत्वं, मलशोधनत्वं, गुल्मोदरविबन्धार्शोग्रहणीनाशित्वञ्च। तद्बीजगुणाः—कटुत्वं, उष्णत्वं गुल्मशूलोदर-विषत्वग्दोष- कण्डूखर्ज्जूकुष्ठनाशित्वञ्च। रक्तैरण्डे। रा. नि. व. ८। एरण्डसामान्ये। मे.। मृगे। श. र.। पक्षिणः ओष्ठे। পাখির ঠোঁট। अम.।



**चञ्चुकः (का, की)।** पुं, स्त्री। चुञ्चुक्षुपे। চেঁচকো। भा. रा. नि. व. ४। स्त्री (का, की)। पक्षिचञ्चौ। श. र.।

**चञ्चुतैलम्।** क्ली। एरण्डतैले।

**चञ्चुपत्रः (पत्राख्यः)।** पुं। चुञ्चुशाके। रा. नि. व. ४.।

**चञ्चुरः।** पुं। चुञ्चुशाके। रा. नि. व. ४।

**चञ्चुलुः।** पुं। रक्तैरण्डे। वै. निघ.।

**चञ्चुसूचिः (कः)।** पुं। पक्षिविशेषे। কাদা খোঁচা। कारण्डवपक्षिणि। त्रिका.। हे. च.। तत्पर्य्यायः,—सुगृहः, पीततुण्डः (त्रि), मरुणः। (शब्दर.)।

**चञ्चूः।** स्त्री। पक्षितुण्डे। পাখির ঠোঁট। हे. च.। चञ्चुशाके। रा.।

**चटकः।** पुं। sparrow. क्षुद्रपक्षिविशेषे। চড়াই পাখী। हिं चवुड़ैया। मं चिमणा। तत्पर्य्यायः,—कलविङ्कः (अ.), चित्रपृष्ठः, गृहनीड़ः, वृषायणः (हा.), बहुप्रजुः (श.), कामुकः, कालकण्टकः, नीलकण्ठकः (रा.), कामचारी, कलाविकलः (शब्दर.), कुलिङ्गकः (हे.), गृहबलिभूक् (हे.)। स द्विविधः गृहारण्यभेदात्। प्रथमस्य मांसगुणाः—शीतं लघु वृष्यं बलदञ्च। द्वितीयस्य मांसगुणाः—लघु पथ्यदञ्च। रा. नि. व. १७। तदण्डगुणाः—हंसीवत् ज्ञेयः। कृष्णचटके। শ্যামা পাখী। राज.। स्त्री (का)। पिप्पलीमूले। अ. टी.। चटकस्त्रियाम्। अम.।

**चट(कि)का।** स्त्री। चटकपत्न्याम्। মাদি চড়াই। हला.। रक्तगुञ्जायाम्। লাল কুঁচ। च. द. उन्मा. चि.। पिप्पलीमूले। अ. टी.।

**चट(टि)काशि(शी)रः।** पुं। पिप्पलीमूले। रा. नि. व. ६।

**चटाफलः।** पुं। नारिकेलवृक्षे। श. र.।

**चटि(टी)का।** स्त्री। चटकस्त्रियाम्। पिप्पलीमूले। वै, निघ.।

**चटुः।** पुं। उदरे। मे.।

**चटुला।** स्त्री। सौदामन्याम्। ज.।

**चट्टिका।** स्त्री। जलौकायाम्। জোঁক। वै. निघ.।

**चट्टुः।** पुं। लौहपात्रविशेषे। চাটু।

**चणः(कः)।** पुं। (Cicerariatinum.) Gram or chick pea. स्वनामख्यातशिम्बीधान्ये। ছোলার গাছ। हिं चणा, चाणा। मं चणा। कं कड़ले। तत्पर्य्यायः,—हरिमन्थकः (अ.), हरिमन्थजः (अ. टी.), चणः, हरिमन्थः, सुगन्धः, कृष्णचञ्चुकः, बालभोज्यः, वाजिभक्ष्यः, कञ्चुकी (भ.), बालभैषज्यः। गुणाः—रक्तपित्तहितः। सि. यो. र. पि. चि.। "रक्ते कफे पीनसके च कण्ठे गलामये वातरुजि सपित्ते। शीतप्रतिश्यायकृमीन् निहन्ति शुष्कस्तथार्द्रश्चणकः प्रशस्तः।" अत्रि. १५ अ.। मधुरः रूक्षः मेहघ्नः वातपित्तकरः दीप्तिवर्णकरः बलकरः रुच्यः आध्मानकरश्च। तद्यूषगुणाः—मधुरः कषायः कफघ्नः वातविकारकरः श्वासोद्र्ध्वकासपीनसघ्नः बलदीपनश्च। रा. नि. व. १६। कषायः कटुकश्चोष्णो वातघ्नः कफदोषकृत्। रक्तपित्तं निहन्त्याशु चणानां यूष उच्यते॥ अङ्गारभृष्टस्तलभृष्टश्च तद्गुण एव। आर्द्रभृष्टः बल्यो रुचिकरश्च। शुष्कभृष्टस्तु रूक्षो वातकुष्ठप्रकोपनः। स्विन्नः पित्तघ्नः कफघ्नश्च। तत्सूपः क्षोभकरः। आर्द्रोऽतिकोमलः रुच्यः पित्तशुक्रहरः शीतलश्च। भा. पू. १भ. धान्यव.। तत्शाकं रुच्यं दुर्जरं कफवातकृत् अम्लं विष्टम्भजनकं पित्तघ्नं दन्तशोथहरञ्च। भा. शाक. व.। पर्य्युषितचणकजलगुणाः—शीतं प्रायः पीतं पित्तरसहरं पुष्टिदं सन्तर्पणञ्च। रा. नि. व. १६।

**चणकरोटिका।** स्त्री। चणकचूर्णकृतरोटिकायाम्। ছোলার রুটী। गुणाः—रूक्षा विष्टम्भकारी गुरुः श्लेष्मपित्तरक्तघ्नी च.। भा.।

**चणकलोणी।** स्त्री। चणकाम्ले। গাছ ছোলা। । চাণাশাক। वै. निघ.।

**चणकशक्तुः।** पुं। चणककृतशक्तौ। ছোলার ছাতু।

**चणकक्षारः।** पुं। चणकपुष्पे। रसको, क्रव्यादरसे।

**चणका।** स्त्री। अतस्याम्। মশিনা। र. सा. सं.।

**चणकाम्लकम्।** क्ली। पिप्पलीमूले। चणकक्षारे। ছোলার শাক, গাছ ছোলা। हिं चणकलोणी। गुणाः—"चणकाम्लकमत्यम्लं दीपनं

दन्तहर्षणं लवणानुरसं रुच्यं शूलाजीर्णविबन्धनुत्।” भा. र. सा. सं. अम्लवर्गे।

**चणकाम्लवा:।** क्ली। चणकक्षारे।

**चणकाम्लम्।** क्ली। चणकक्षत्रफलवत्नवणकपत्रशीतलजले। रत्ना।

**चणक्यम्।** क्ली। चाणक्यमूलके। वैद्यकम्।

**चणद्रुम:।** पुं। क्षुद्रगोक्षुरे। ছোট গোখ্রী। रा. नि. व. ४।

**चणपत्रक: (पत्री)।** पुं, स्त्री। रुदन्तीवृक्षे। रोदन्तीति ভাষা। रा. नि. व. ५। गोक्षुरके। গোখ্রী। वै. निघ।

**चणिका।** स्त्री। तृणविशेषे। চোণার শাক। तत्पर्य्याय:,—गोदुग्धदा, सुनीला, चणजा, हिमा। गुणा:—वृष्या बल्या मधुरा शीतैसृणीच पशुहिता। रा. नि. व. ८।

**चणोद्रुम:।** पुं। क्षुद्रगोक्षुरे। रा.।

**चण्ड:।** पुं। तिन्तिडीवृक्षे। मे.। रक्तकरवीरे। आरण्यशूकरे। वै. निघ। ग्रन्थिपर्णे। গেঁঠেলা। हिं चौरा। रा. नि. व. १२।

**चण्डक: (की (इन्))।** पुं। रक्तकरवीरे। मयूरे। वै. निघ.।

**चण्डका।** स्त्री। वचायाम्। वै. निघ.।

**चण्डतुण्डा।** स्त्री। तिन्तिड्याम्। वै. निघ.।

**चण्डचन्द्रिका।** स्त्री। रसकारणादिज्ञाने। वैद्यकम्।

**चण्डह्रासा।** स्त्री। गुडूच्याम्। रा. नि. व. ३।

**चण्डा।** स्त्री। (Andropogon aciculatum.) चोरनामगन्धद्रव्ये। চোরা। हिं लिमि दौंड़। अम.। अजमोदायाम्। वै. निघ.। शङ्खपुष्प्याम्। चोरपुष्प्याम्। ভাটুই, ডানকুনী। मे.। लिङ्गिन्याम्। हिं पचगुड़िया। कपिकच्छ्वाम्। আলাকুশী। आखुकर्ण्याम्। ইন্দুরকাণী। रा. नि. व. ३। श्वेतदूर्व्वायाम्। रा. नि. व. ८।

**चण्डाख्या।** स्त्री। दारुहरिद्रायाम्। वै. निघ.।

**चण्डात: (क:)।** पुं। करवीरे। अम. रुदन्तीवृक्षे। वै. निघ.।

**चण्डाल: (क:)।** पुं। रक्तकरवीरे। तण्डुलीयशाके। চাঁপানটিয়া, কাঁটানটিয়া। वै. निघ.।

**चण्डालकन्द:।** पुं। स्वनामख्यातमहाकन्दशाके। চণ্ডালকন্দ। मं चण्डालकन्द। कं मादगेगड्डे। स एकपत्रद्विपत्रत्रिपत्रचतुष्पत्रपञ्चपत्रभेदैन बहुधा। गुणा.—मधुर: कफपित्तरक्तदोषघ्न: विषभूतादिदोषघ्न: रसायनश्च। रा. नि. व. ७।

**चण्डालवल्लकी।** स्त्री। चण्डालवीणायाम्। বন চাঁড়াল। श.।

**चण्डालिका।** स्त्री। करवीरे। चण्डालवल्लक्याम्। বনচাঁড়াল। मे.।

**चण्डाली।** स्त्री। शिवलिङ्गिन्याम्। লিঙ্গিনী লতা। रा. नि व. १३। रस. र. प्रमेह चि. मेहद्विरदसिंहरसे।

**चण्डिका।** स्त्री। अतस्याम्। মশিনা। त्रिका.।

**चण्डिल:।** पुं। वास्तूकशाके। रा.।

**चण्डी।** स्त्री। चिड़ादेवदारौ। शिवलिङ्गिन्याम्। শিবলিঙ্গিনী লতা। रा. नि. व. ३। स्त्रीमहिषे। पृक्कायाम्। कै.।

**चण्डीकुसुम:।** पुं। रक्तकरवीरवृक्षे। रा. नि. व. १०।

**चण्डीगोमयम्।** क्ली। महिषीविष्ठायाम्।

**चण्डोलता।** स्त्री। ग्रन्थिपर्णभेदे। গেঁটেলা। हिं चोरा। वै. निघ.।

**चण्डु:।** पुं। मूषिके। श. च.।

**चण्डेश्वररस:।** पुं। नवज्वरे रस:। “रसं गन्धं विषं ताम्रं मर्द्दयेदेकयामकं। आर्द्रकस्वरसेनैव मर्द्दयेत् सप्तवारकम्। निर्गुण्ड्या: स्वरसे पश्चात् मर्द्दयेत्सप्तवारकम्। गुञ्जकार्द्र रसैनैव-दत्तो हन्ति ज्वरं चणात्॥” রস, গন্ধক, বিষ, তাম্র প্রত্যেক সমভাগ, প্রতিদিন আদার রসে ১ প্রহর মর্দ্দন করিয়া ৭ ভাবনা দিবে। ঐরূপ নিশিন্দারসে ৭ ভাবনা দিবে। মাত্রা ১ র. অনুপান আদার রস। रसकौ.।

**चतुर:।** पुं। काके। है. च.।

**चतुरङ्ग:।** पुं। कलायभेदे। তেওড়া। वै निघ.।

**चतुरङ्गा।** स्त्री। घोटिकावृक्षे। শেয়াকুল। रा. नि व. ८।



**चतुरङ्गावलेह:।** पुं। ज्वरे अवलेह:। स च समभागद्राक्षामलकशुण्ठीमधुकृत:। भा.।

**चतुरङ्गुल:।** पुं। आरग्वधविशेषे। বড় সোণালু। हिं धनबहेड़ा। प. मु.। स्त्री। पटोलसदृशफललतायाम्। তিৎপলতা। सु. सू. ३९ अ.। शीतल्याम्। শিউলীছোপ।

**चतुरम्लम्।** क्ली। अम्लचतुष्टये। यथा—कोलदाड़िमवेतसवृक्षाम्लेषु। (वृक्षाम्ल आम्रातके।) अम्लवेतसवृक्षाम्लवृहज्जम्बीरनिम्बुकेषु। অম্লবেতস, আম্ড়া, গোঁড়া লেবু, কাগজী নেবু। भा.।

**चतुरूर्द्ध्वपात:।** पुं। शरभमृगे। वै. निघ.।

**चतुरूषणम्।** क्ली। कणामूलसहिते त्र्यूषणे। “त्र्यूषणं सकणामूलं कथितं चतुरूषणम्। व्योषस्येव गुणा: प्रोक्ता अधिकाश्चतुरूषणे॥” वैद्यकम्।

**चतुर्गति:।** पुं। कच्छपे। है. च.।

**चतुर्जातम्।** क्ली। चातुर्जातके। গুড়ত্বক্ তেজপত্র এলাইচ নাগেশ্বর। वै. निघ. २भ. वा. व्या. लशुनपाके।

**चतुर्थक:।** पुं। विषमज्वरभेदे, चातुर्थिकज्वरे। দুই দিন অন্তর জ্বর।

**चतुर्थिका।** स्त्री। पलमाणे ४ वा ८ तों। प. प्र.।

**चतुर्दंष्ट्रा।** स्त्री। गोक्षुरक्षुपे। গোখ্রী। वै. निघ.।

**चतुर्दल:।** पुं। सुनिषण्णशाके। শুশুনিশাক। भा.।

**चतुर्दशाङ्ग:।** पुं। सान्निपातिकज्वरे कषायभेदे। सदशमूलकिराततिक्तादिगणे। दशमूलं चिरायता गुड़ूची मुस्ता शुण्ठी मिलित्वा २ तो.। प्रक्षेप: कट्फलचूर्णं ४ माषा। দশমূল, চিরেতা, গুলঞ্চ, মূতা, শুঁঠ, মিলিত ২ তো.। প্রক্ষেপ তেউড়ীচূর্ণ ৪ মাষা। सा. कौ.।

**चतुर्दशी।** स्त्री। श्वेतनिर्गुण्ड्याम्। শ্বেত নিশিন্দা। वै. निघ.।

**चतुर्द्रव:।** पुं। चतुर्गुणद्रवद्रव्ये। सि. यो.।

**चतुर्धारी।** स्त्री। चतुर्धारकाण्डवल्ल्याम्। করলাবিশেষ। वै. निघ.।

**चतुर्भद्रा।** स्त्री। शुक्लवृद्धदारके। শ্বেতবীজতাড়ক। वै. निघ.।

**चतुर्भद्र:।** पुं। समभागेषु मुस्तकातिविषागुड़ूचीशुण्ठीषु। वैद्यकम्।

**चतुर्भद्रिकावलेह:।** पुं। चातुर्भद्रावलेहे।

**चतुर्मुख:।** पुं। वातव्याधौ रसविशेषे। रसगन्धकलौहाभ्राणि प्र. समभागानि स्वर्णभस्म सूततुल्यं कुमारीरसेन मर्द्दयित्वा एरण्डपत्रै: वेष्टयित्वा धान्यराशौ दिनत्रयं स्थापयेत्। र. सा. सं.।

**चतुर्वर्ण:।** पुं। कलायभेदे। তেওড়া। वै. निघ.।

**चतुर्विंशतिक:।** पुं। पुरुषे। च. शा. १अ.।

**चतुर्विधान्नम्।** क्ली। चर्व्यचोष्यलेह्यपेयेषु। See अन्नम्।

**चतुर्वीजम्।** क्ली। मेथिकादिवीजचतुष्टये। “मेथिका चन्द्रसूरश्च कालाजाजी यवानिका। एतच्चतुष्टयं युक्तं चतुर्वीजमिति स्मृतम्। तच्चूर्णं भक्षितं नित्यं निहन्ति नयनामयं। अजीर्णं शूलमाध्मानं पार्श्वशूलं कटिव्यथाम्॥” भा.।

**चतुश्छद: (दा)।** पुं, स्त्री। चाङ्गेर्य्याम्। আমরুল। सुनिषण्णके। শুশুনি। वै. निघ.।

**चतुष्की।** स्त्री। मशहर्य्याम्। মশারি। मे.। पुष्करिणीभेदे। कै.।

**चतुष्कुवलयम्।** क्ली। कुवलयस्य नालकन्ददलकेसरेषु। পদ্মের ডাঁটা, মূল, পাতা ও কেসর। वा. उ. ३९., सिद्धरसायनघृते।

**चतुष्पत्र: (त्री (इन्))।** पुं। चण्डालकन्दे। रा. नि. व. ७। क्षुद्रपाषाणभेदक्षुपे। ছোট পাথরকুচি। रा. नि. व. ५। सुनिषण्णकशाके। শুশুনি শাক। हिं चौपत्तिशाक। चाङ्गेरीसदृश: पत्रै: चतुर्दल इति स्मृत:। शाको जलान्विते देशे चतुष्पत्रीति चोच्यते॥” भिण्ड्याम्। ঝাঁটী। अ. टी.।

**चतुष्पद: (ष्पात्)।** पुं। भिण्डाक्षुपे। रा. नि. व. ४। पशौ गजाश्वादौ। मे.।

**चतुष्पदा।** स्त्री। भिण्डायाम्। वै. निघ.। जलजपुष्पविशेषे। अकचि.।

**चतुष्पर्णी।** स्त्री। क्षुद्राम्लिकायाम्। আমরুল। रा. नि. व. ५।

**चतुष्पाटी।** स्त्री। नद्याम्। शब्दमा.।

**चतुष्पादः।** पुं। चिकित्सायाः पादचतुष्टये। "भिषग्द्रव्याण्युपस्थाता रोगी पादचतुष्टयम्।" वैद्यकम्।

**चतुष्पुटोदरा।** स्त्री। पीतपुष्पकरवीरवृक्षे। वै. निघ.।

**चतुष्पुण्ड्रः।** पुं। भिण्डाक्षुपे। रा. नि. व. ४।

**चतुष्फला।** स्त्री। नागबलायाम्। গোরক্ষ চাকুলিয়া। रा. नि. ५. ५।

**चतुस्समः।** पुं। आमज्वरे योगविशेषे। যোগবিশেষ। हरीतकीलवङ्गसैन्धवयवानीसमभागेषु। मिलितचन्दनागुरुकस्तूरीकुङ्कुमेषु। है. च। जाती-फललवङ्गजीरकटङ्कणेषु। गुणाः—"आमशूल-विबन्धघ्नं पाचनं दोषशोषणुत्।" च.। आमातिसारशूले जातीफलं लवङ्ग जीरकं टङ्कणं समभाग-चूर्णं माक्षिकसितासहितं लिह्यात्।

**चत्वरम्।** क्ली। अङ्गने।

**चत्वालः।** पुं। दर्भभेदे। गर्भाशये। वै. निघ.। होमकुण्डे। मे.।

**चदिरः।** पुं। हस्तिनि। कर्पूरे। सर्पे। उणा.।

**चनः।** क्ली। भक्ते। ভাত। वै. निघ.।

**चन्दकः।** पुं। मत्स्यविशेषे। চান্দা মাছ। तत्पर्य्यायः,—चलत्पूर्णिमा,चन्द्रचञ्चला, चन्द्रिका। शब्दर.। तन्मांसम् अनभिष्यन्दि मधुरं बलकरञ्च। रा. नि व. १९।

**चन्दनः।** पुं, क्ली। Sandal. (Sirium myrtifolium.) स्वनामख्यातवृक्षे। यस्य काष्ठं परमसुगन्धि। চন্দন গাছ। तत्पर्य्यायः,—गन्धसारः, मलयजः, भद्रश्री., (अ.), एकाङ्गः (हा.), पटीरः, वर्णकः, भद्राश्रयः सेव्यः, रौहिणः (शब्दर.), याम्यः, सर्पेष्टः, पीतसारः (ज.), श्रीखण्डं, महार्हं, श्वेतचन्दनं, गोशीर्षं, तिलपर्णं, मङ्गल्यं, मलयोद्भवं, गन्धराजं, सुगन्धं, सर्पावासं, शीतलं, गन्धाढ्यं, भोगिवल्लभं, पावनं, शीतगन्धं (रा.), तैल-पर्णिकः, चन्द्रद्युतिः (भा.), सर्पेष्टं, भद्रश्रियं, सितं, हिमं (र.)। स सप्तभेदः—श्रीखण्डशवरपीतपत्तङ्ग-रक्तचन्दनश्वर्वरहरिगन्धभेदेन। श्रेष्ठचन्दनलक्षणं—"स्वादे तिक्तं कषे पीतं छेदे रक्तं तनौ सितं। ग्रन्थिकोटरसंयुक्तं चन्दनं श्रेष्ठमुच्यते॥" भा.। सा. गुणाः—"चन्दनानि च सर्व्वाणि सदृशानि रसा-दिभिः। गन्धेन तु विशेषोऽस्ति पूर्व्वं श्रेष्ठतम गुणैः। चन्दनं शीतलं रूक्षं तिक्तमाह्लादनं लघु॥" रा. नि. व. १२। "हृद्यं बल्यं विषश्लेष्मतृष्णापित्तास्र-दाहजित्॥" म. द.। क्ली। रक्तचन्दने। मे.। पुं। वानरविशेषे। हे. च.। कुङ्कुमे।

**चन्दनगोपा (पो)।** स्त्री। शारिवाविशेषे। কৃষ্ণ শারিবা, শ্যামা লতা। रा. नि. व. १२।

**चन्दनद्रुमः।** पुं। रक्तचन्दनवृक्षे। सर्ज्जतरौ। वै. निघ.।

**चन्दनद्वयम्।** क्ली। श्वेतचन्दन-रक्तचन्दने।

**चन्दनपुष्पम्।** क्ली। लवङ्गे। रा. नि. व. १२।

**चन्दनमूलम्।** क्ली। चन्दनतरुमूले। हृद्यं जङ्गमविषघ्नम्। नकुल. १६ अ.।

**चन्दनमूलिका।** स्त्री। कृष्णशारिवायाम्। শ্যামালতা। वै. निघ.।

**चन्दनशारिवा।** स्त्री। गोपीचन्दने। তিলক-মাটী। कृष्णशारिवायाम्। रा. नि. व. १२।

**चन्दनसारः।** पुं। वज्रक्षारे। रा. नि. व. ६।

**चन्दना।** स्त्री। कृष्णशारिवायाम्। रा. नि. व. १२। श्वेतशारिवायाम्। भा.।

**चन्दनादिगणः।** पुं। चन्दनप्रभृति-सुगन्धिद्रव्य-समूहे। "चन्दनञ्च तथोशीरं कर्पूरो गन्धवाकुची। एला गुड़ूची सप्तैते—॥" सर्व्वेषु पित्तरोगेषु चन्द-नादिः प्रशस्यते। रा.।

**चन्दनादितैलम्।** क्ली। राजयक्ष्माधिकारे। तिलतैलं ४ श. दधिमस्तु १६ श. लाक्षारसः ४ श. (लाक्षा १६ प. वारि १६ श. शे. ४ श.)। कल्कार्थं—रक्तचन्दनं बालकं नखी कुष्ठं यष्टिमधु शैलजं पद्मकाष्ठं मञ्जिष्ठा सरलकाष्ठं देवदारु शटी एला खाट्टाशी नागकेशरं तेजपत्रं शिलारसः मुरामांसी जटामांसी काकोली प्रियङ्गुः मुस्ता हरिद्रा दारुहरिद्रा श्यामालता अनन्ता लताकस्तूरी लवङ्गं अगुरु कुङ्कुमं गुड़त्वक् रेणुकं नलुका प्र. २ तो.। তিলতৈল ৪ শ. দধিমস্তু ১৬শ. লাক্ষারস ৪ শ. (লাক্ষা ১৬ প. জল ১৬ শ. শে. ৪ শ)। কল্কার্থ—রক্তচন্দন, বালা, নখী, কুড়, যষ্টি-মধু, শৈলজ, পদ্মকাষ্ঠ, মঞ্জিষ্ঠা, সরলকাষ্ঠ, দেবদারু, শঠী, এলাইচ, খটাশী, নাগেশ্বর,



তেজপত্র, শিলারস, মুরামাংসী, জটামাংসী, কাকোলী, প্রিয়ঙ্গু, মুতা, হরিদ্রা, দারুহরিদ্রা, শ্যামালতা, অনন্তমূল, লতাকস্তুরী, লবঙ্গ, অগুরু, কুঙ্কুম, গুড়ত্বক্, রেণুক, নালুকা, প্রত্যেক ২ দুই তোলা। च. द.।

**चन्दनादिलौहम्।** क्ली। जीर्णज्वरघ्नं। "रक्त-चन्दनह्रीवेरपाठोशीरकणाशिवाः। नागरोत्पल-धात्रीभिस्त्रिमदेन समन्वितं। लौहं निहन्ति विवि-धान् समस्तान् विषमज्वरान्॥" রক্তচন্দন, বালা, আকনাদিমূল, বেণার মূল, পিপুল, হরীতকী, শুঁঠ, নীলোৎপল, আমলা, মুতা, চিতার মূল, বিড়ঙ্গ, প্রত্যেক সমভাগ। সর্ব্বসমান লৌহ, একত্র জলে মাড়িবে। र. सा. सं।

**चन्दनाम्बु।** क्ली। सुगन्धजलभेदे। वैद्यकम्।

**चन्दनोया।** स्त्री। गोरोचनायाम्।

**चन्दिरः।** पुं। कर्पूरे। उणा.। हस्तिनि। मे.।

**चन्द्रः।** पुं। निशाकरे। अम.। कर्पूरे। जले। मे.। काम्पिल्लके। কমলাগুঁড়ি। रा. नि. व. १२। भा. म. १भ. सन्ततज्वर. चि.। रौप्ये। स्वर्णे। रा. नि. व. १३। रक्तमुक्ताफले। र. चि. ३अ.। हीरके। भा.। गैरिके। शुक्लचिह्नतायाम। वै. निघ.।

**चन्द्रकः।** पुं। मत्स्यविशेषे। চাঁদা মাছ। गुणाः—"चन्द्रकास्त्वनभिष्यन्दी मधुरो बलवर्द्धनः।" राज. ३प.। मेचके। ময়ূরপুচ্ছের চাঁদ। अम.। नखे। श. च.। क्ली। श्वेतमरीचे। रा. नि. व. ६। चन्दने। स्त्री। मेथिकायाम्। মেতি। कपिकच्छौ। আলাকুশী। वै. निघ.।

**चन्द्रकला।** स्त्री। वाचामत्स्ये। বাচা মাছ। श. र.।

**चन्द्रकवान्।** पुं। मयूरे। वै. निघ.।

**चन्द्रकान्तः।** पुं। स्वनामख्यातमणौ। চন্দ্র-কান্ত মণি। तत्पर्य्यायः,—चन्द्रमणिः, चान्द्रः, चन्द्रोपलः (हे.) इन्दुकान्तः, चन्द्राश्मा, संप्लवोपलम्, शीताश्मा, चन्द्रिकाद्रावः, शशिकान्तः। गुणाः—शीतलः स्निग्धः रक्तपित्ततापहरः शिवप्रीतिकरः ग्रहालक्ष्मीदूरकृत् स्वच्छश्च। तत्परीक्षा—"स्निग्धं श्वेतं पीतमाभासमं तद्वत्ते चित्ते स्वच्छतां यन्मुनी-नाम्। यत्र स्रावं याति चन्द्रांशुसङ्गाज्जात्यं रत्नं चन्द्रकान्ताख्यमेतत्॥" रा. नि. व. १३। तदुत्थ-जलगुणाः—लघु गङ्गाम्बुसदृशं पित्तघ्नं निर्म्मलं मूर्च्छादाहरक्तपित्तकासमदात्ययेषु हितञ्च। रा. नि. व. १४। क्ली। श्रीखण्डचन्दने। कैरवे। प. मु.। स्त्री। निर्गुण्ड्याम्। वै. निघ.। रात्रौ। श. च.।

**चन्द्रकान्ति।** क्ली। रूप्ये। রূপা। वै. निघ.।

**चन्द्रकी (इन्)।** पुं। मयूरे। त्रिका.। स्त्री। लिङ्गनाशरोगे, दृष्ट्युपसर्गविशेषे। यथा—"दृष्टिः कांस्यसमच्छाया चन्द्रकी चन्द्रकाकृतिः।" वा. उ. १४ अ.।

**चन्द्रकुन्दः।** पुं। क्षुद्रचन्द्रकमत्स्यभेदे। চাঁদ-কুড়ো মাছ। गुणाः—चन्द्रकुन्दो गुरुर्ग्राही मधुरो वातपित्तजित्। राज.।

**चन्द्रगन्धा।** स्त्री। शट्याम्। শটী। वै. निघ.।

**चन्द्रगोलिका।** स्त्री। चन्द्रकमीने। চাঁদা মাছ। वै. निघ.। ज्योत्स्नायाम्।

**चन्द्रचक्रम्।** क्ली। चन्द्रवच्चक्राकारच्छेदकर्म्मणि। सु. चि. ८अ.।

**चन्द्रचञ्चलः।** पुं। खल्लिशमत्स्ये। খলশিয়া মাছ। त्रिका.। चन्द्रकमत्स्ये। চাঁদা মাছ। जटा.।

**चन्द्रचन्दनम्।** क्ली। कुङ्कुमागुरुचन्दने। वै. निघ.।

**चन्द्रचूड़ः।** पुं। स्वनामख्यातवृक्षभेदे।

**चन्द्रजोपलः।** पुं। चन्द्रकान्तमणौ। रा. नि. व १३।

**चन्द्रटः।** पुं। त्रिंशच्छ्लोकीव्याख्याकारे।

**चन्द्रतरुः।** पुं। महासोमवल्ल्याम्। वै. निघ.।

**चन्द्रद्युति।** क्ली। चन्दने। वै. निघ.।

**चन्द्रनामा (न्)।** पुं। कर्पूरे। रा. नि. व.१२।

**चन्द्रनायकम्।** क्ली। शङ्खनख्याम्।

**चन्द्रपर्णी।** स्त्री। प्रसारण्याम्। भा.।

**चन्द्रपादः।** पुं। चन्द्रकिरणे।

**चन्द्रपुष्पम्।** क्ली। रौप्ये। वै. निघ.। (ष्पा, ष्पी) स्त्री। श्वेतकण्टकार्य्याम्। रा. नि. व. ४। श्वेतसोमराज्याम्। ज्योत्स्नायाम्। रा.।

**चन्द्रप्रभा** । स्त्री । वाकुच्याम् । সোমরাজ । रा. नि. व. ४ । कर्च्चूरके । शटी । वै. निघ. । पायसविशेषे । পায়সবিশেষ । लक्षणं—तत्प्रणाली यथा—"आतप्ततण्डुलौ धौतौ परिभ्रष्टौ घृतेन च । खण्डयुक्तेन दुग्धेन पाचितः पायसो भवेत् । भृष्टजीरचतुर्जातचन्द्रबिन्दुसुरोचनः ॥" राज. ३प. । अर्शसि प्रमेहे च औषधविशेषे—विड़ङ्गं चित्रकमूलं त्रिकटु त्रिफला देवदारु चवी किराततिक्तकं पिप्पलीमूलं मुस्ता शटी वचा शुद्धस्वर्णमाक्षिकं सैन्धवं यवक्षारः सर्ज्जिक्षारः हरिद्रा दार्व्वी धान्यकं गजपिप्पली अतिविषा प्र. २ तो. शुद्धशिलाजतु ८ प. (३२ तो.) शुद्धगुग्गुलुः २ प. शर्करा ४ प. वंशरोचनात्रिवृता-दन्तीमूलत्वगेलापत्राणां प्र. १ प. । अत्र पलप्रमाणं रसगन्धकयोरपि केचिद्वदन्ति । मात्रा वदरास्थि-समा । रस. र. ।

**चन्द्रबाला** । स्त्री । स्थूलैलायाम् । বড় এলা-ইচ । अम. ।

**चन्द्रभस्म** । क्ली । कर्पूरे । त्रिका. ।

**चन्द्रभा** । स्त्री । श्वेतकण्टकार्य्याम् । वै. निघ. ।

**चन्द्रभागा** । स्त्री । भारतवर्षीयनदीविशेषे । तत्पर्य्यायः,—चन्द्रभागी, चन्द्रिका, चान्द्रभागा । शब्दर. । तज्जलगुणाः—सुशीतलं पित्तदाहघ्नं वातकरञ्च । रा. नि. व. १४ ।

**चन्द्रभूतिः** । स्त्री । रौप्ये । रा. नि. व. १३ ।

**चन्द्रमणिः** । पुं । चन्द्रकान्तमणौ । हे. च. ।

**चन्द्रमल्लिका (ल्ली)** । स्त्री । मल्लिकाभेदे । চন্দ্রমল্লিকা ।

**चन्द्रमसी** । स्त्री । योनिमध्यस्थनाड़ीविशेषे । यथा—"या चापरा चान्द्रमसी च नाड़ी कन्दर्पगर्भे भवति प्रधाना । सा सुन्दरी योषितमेव सूते ... ॥" भा. ।

**चन्द्रमा** । पुं । सोमलताभेदे । सु. चि. २९ अ. । (स्) पुं । चन्द्रे । अ. ।

**चन्द्ररश्मिनः** । पुं । चकोरपक्षिणि । वै. निघ. ।

**चन्द्रराजी** । स्त्री । वाकुच्याम् । হাকুচ । रा. नि. व. ४ ।

**चन्द्ररूक्** । क्ली । चन्द्रकमत्स्ये । চাঁদা মাছ । वै. निघ. ।

**चन्द्ररे(ले)खा** । स्त्री । सोमराज्याम् । प. मु. । वाकुचीवीजे । হাকুচ । वा. चि. ३अ. कन्दर्पसार-तैले ।

**चन्द्रलता** । स्त्री । एलाकलतायाम् । वै. निघ. ।

**चन्द्रलोह(क)म्** } क्ली । रौप्ये । रा. नि. व.
**चन्द्रवपुः** } १३ ।

**चन्द्रवल्लभा (वल्लरी)(वल्ली)** । स्त्री । (री) सोमलतायाम् । रा. नि. व. २३ । ब्राह्मीक्षुपे । ব্রাহ্মী শাক । अ. टी. भ. । (भा, ल्ली) प्रसारण्याम् । গন্ধভাদুলী । माधवीलतायाम् । रा. नि. व. ५।१० । चन्द्रमल्लिकायाम् । वै. निघ. ।

**चन्द्रविहङ्गमः** । पुं । वकपक्षिणि । त्रिका. । सारसपक्षिणि । वै. निघ. ।

**चन्द्रशकला** । स्त्री । वाकुच्याम् । হাকুচ । वै. निघ. ।

**चन्द्रशालिका** । स्त्री । प्रासादशिरोगृहे । हारा. ।

**चन्द्रशू(सू)रम्** । क्ली । पद्मभेदनकारिकायाम् । হালিম, চাঁদসুর । वै. निघ. २ भ. हिक्का. चि. चन्द्रसूरकषाये । तत्पर्य्यायः,—चन्द्रिका, चर्म्महन्त्री, पद्मभेदनकारिका, नन्दिनी, कारवी, भद्रा, वासपुष्पा, सुवासरा । भा. । गुणाः,—"चन्द्रशूरं हितं हिक्कावातश्लेष्मातिसारिणाम् । असृग्वातगदद्वेषि बलपुष्टिविवर्द्धनम् ॥" भा. ह. वर्गः । वनमेथिकायाम् । वै. निघ. ।

**चन्द्रशेखररसः** । पुं । शीताङ्गसन्निपातज्वरे रसः । रसगन्धकमरिचटङ्कनानि प्र. समानि सर्व्वतुल्या शुद्धमनःशिला मत्स्यपित्तेन ३ दिनं भावयेत् । र. सा. सं. ।

**चन्द्रसंज्ञः** । पुं । कर्पूरे । अम. ।

**चन्द्रसम्भवा** । स्त्री । सूक्ष्मैलायाम् । श. च. ।

**चन्द्रहासम्** । क्ली । रौप्ये । रा. नि. व. १३ । पुं । खड्गे । अ. ।

**चन्द्रहासा** । स्त्री । लसिकाभेदे । মোহন-ভোগ । भा. । गुड़ूच्याम् । रा. नि. व. ३ । कन्द-गुड़ूच्याम् । प्रसारण्याम् । श्वेतकण्टकार्य्याम् । वै. निघ. ।

**चन्द्रा** । स्त्री । कर्कटशृङ्ग्याम् । কাঁকড়াশৃঙ্গী । रा. नि. व. ६ । एलायाम् । श. र. । गुड़ूच्याम् ।



ग्रन्थिपर्णे । গেঁটেলা । श्वेतकण्टकार्य्याम् । वै. निघ. ।

**चन्द्रातपः** । पुं । विताने । চাঁদোয়া । तत्पर्य्यायः,—उल्लोचः, वितानं, चन्द्रा (शब्दर.) । ज्योत्स्नायाम् । हे. ।

**चन्द्रापुरपूगम्** । क्ली । तत्स्थानजातपूगफले । চন্দ্রাপুরী শুপারি । रा. नि. व. ११ ।

**चन्द्राब्जम्** । क्ली । कुमुदपुष्पे । শ্বেত শুন্দি, শ্বেতোৎপল । रा. नि. व. १० ।

**चन्द्राभिधा** । स्त्री । वाकुच्याम् । वै. निघ. ।

**चन्द्रामृतरसः (लौहञ्च)** । पुं । राजयक्ष्माधिकारे रसः । पारदः १ भ. गन्धकः २ भ. सैन्धवं १ भ. शमीश्वेतापराजितापत्ररसेन एकत्र सम्मर्द्य गोलकीकृत्य नागवल्लीदलैर्वेष्टयित्वा पातालयन्त्रे पचेत् । दिनान्ते च उद्धृत्य यन्त्रोर्द्ध्वलग्नम् औषधं ग्राह्यम् । मात्रा ३ रक्तिः । अनु. मृगाङ्कवत् । अन्यः कासे—रसः गन्धकः लौहं प्र. २ तो. टङ्कणक्षारः ४ वा ८ तो. मरिचचूर्णं २ वा ४ तो. त्रिकटु त्रिफला धान्यकं जीरकं सैन्धवलवणं चविका एषां प्र. चूर्णं १ तो. छागीदुग्धेन पेषयेत् । मात्रा ६ र. । र. सा. सं. । अन्यः बृहच्चन्द्रामृतरसः राजयक्ष्मणि—रसः १ तो. गन्धकः १ तो. अभ्रं २ तो. (मतान्तरे ४ तो.) कर्पूरं ॥० तो. स्वर्णभस्म १ तो. ताम्रभस्म १ तो. लौहभस्म २ तो. वृद्धदारकबीजं जीरकं भूकुष्माण्डः शतमूली कोकिलाक्षबीजं बला कपिकच्छुमूलं गोरक्षतण्डुलीमूलं जातीफलं जयित्री लवङ्गं सिद्धिवीजं श्वेतधूनकं प्र. ॥० तो. मधुना मर्दयेत् । र. सा. सं. ।

**चन्द्रार्द्धकः** । पुं । कर्पूरे । रा. ।

**चन्द्रार्द्धम्** । क्ली । भगन्दरस्य अर्द्धचन्द्राकारच्छेदने । सु. चि. ८अ. ।

**चन्द्रालोकः** । पुं । कर्पूरे । वै. निघ. ।

**चन्द्राश्मा (न्द्रिकाद्रावः)** । पुं । चन्द्रकान्तमणौ । रा. नि. व. १३ ।

**चन्द्रास्पदा** । स्त्री । कर्कटशृङ्ग्याम् ।

**चन्द्रिका** । स्त्री । स्थूलैलायाम् । कर्णस्फोटायाम् । কাণছিড়া । श्वेतकण्टकार्य्याम् । रा. नि. व. ४ । सूक्ष्मैलायाम् । मल्लिकापुष्पवृक्षे । ज्योत्स्नायाम् । चन्द्रशूरे । भा. ।

**चन्द्रिकापायी (इन्)** । पुं । चकोरे । रा. नि. व. १९ ।

**चन्द्रिकाम्बुजम्** । क्ली । कुमुदे । শ্বেতোৎ-পল বা শ্বেত শুন্দি । रा. नि. व. १० ।

**चन्द्रिलः** । पुं । नापिते । वास्तुकशाके । मे. ।

**चन्द्री** । स्त्री । वाकुच्याम् । रा. नि. व. ४ ।

**चन्द्रेष्टम्** । क्ली । कुमुदपुष्पे । वै. निघ. ।

**चन्द्रेष्टा** । स्त्री । उत्पलिन्याम् । কুমুদিনী रा. नि. व. १० ।

**चन्द्रोदयः** । पुं । चन्द्रातपे । চাঁদোয়া ।

**चन्द्रोदयमकरध्वजः (रसः)** । पुं । रसायनाधिकारे रसः । शुद्धकण्टकवेध्यसुवर्णपत्रं १ प. शुद्धरसः ८ प. शुद्धगन्धकः १६ प. एतानि रक्तकार्पासपुष्पैः मर्द्दयित्वा पुनः घृतकुमारीरसेन मर्द्दयेत् ततो दृढ़काचकूप्यां स्थापयेत् । अथ तां कूपीं मृत्तिकावस्त्रखण्डेन लेपयित्वा इष्टकादिना सुखं रोधयेत् । ततो मन्दमध्यातिशयवह्निना यथाक्रमं दिनत्रयं बालुकायन्त्रेण पचेत् । तत उद्धृत्य कूपिकोर्द्ध्वलग्नसिन्दूरस्य १ प. कर्पूरं ४ प. जातीफलं पिप्पली लवङ्गं कस्तूरी (मृगनाभिः) एषां प्रति ४ मा. एकत्र मर्द्दयित्वा माषकप्रमाणा वटिका कार्य्या पर्णानुपानतो भोक्तव्या च । रस. र. । तद्वत्—ध्वजभङ्गाधिकारे । शुद्धसूक्ष्मस्वर्णदलं १ प. शुद्धपारदः ८ प. एकत्र सम्यक् सम्मर्द्य १६ प. शुद्धगन्धकेन एकत्र कज्जली कार्य्या । अथ रक्तकार्पासपुष्परसेन कुमारीरसेन च उक्तां कज्जलिकां सुभाव्य शुष्कीकृत्य समतलविलेपितकाचकूपिकायां स्थापयित्वा खटिकया कूपीमुखं निरोधयेत् । ततस्तां कूपीं तलमध्ये सच्छिद्रहण्डिकाभ्यन्तरे संस्थाप्य बालुकायन्त्रयोगेन दिवसत्रयं पचेत् । शीते अवतार्य्य कूपीकण्ठलग्नमौषधं गृहीत्वा तस्य १ प. कर्पूरस्य च ४ प. तथा जातीफललवङ्गत्रिकटुमृगनाभीनां प्रत्येकं ४ मा. गृहीत्वा एकत्र मर्द्दयेत् । मात्रा ५ र. पर्णेन भक्षणीयम् । स्वल्पः—ध्वजभङ्गे रसः । तस्य प्रणाली यथा—कर्पूरजातीफलमरिचलवङ्गानां प्र. १ तो. मृगनाभिः स्वर्णं प्र. तोलकाष्टमभागं (१ मा.) रससिन्दूरं सर्व्वसमं गृहीत्वा एकत्र मर्द्दयेत् । मात्रा ४ र. अनु. पर्णरसः । भैष. ।

**चन्द्रोदयवर्त्तिः** । स्त्री । नेत्ररोगे हिता । हरीतकी वचा कुष्ठं पिप्पली मरिचं विभीतकास्थि-

मज्जाशुद्ध शङ्खनाभिः शुद्धमनःशिला एषां प्र॰ सम-भागः छागदुग्धेन एकत्र मर्द्दयेत्।

**चन्द्रोपलः**। पुं। चन्द्रकान्तमणौ। हे॰ च.।

**चन्द्रोरसम्**। क्ली। जले। ज.।

**चप(व)लः**। पुं। पारदे। त्रिका॰। र॰ सा॰ सं॰ माणिक्यरसे। राजमाषे। रा॰ नि. व॰ १६। चोरक-नामगन्धद्रव्ये। रा॰ नि॰ व॰ १२। यशदविशेषे। दस्तां। वै.निघ.। मूषिकभेदे। तद्दष्टे छर्द्दिः मूर्च्छा तृष्णा च भवेत्। सु. कल्प. ६अ.। वा, उ, ३८ अ.। मत्स्ये। मे.। प्रस्तरविशेषे। रा.। राजिकाभेदे। के.।

**चपलताशयः**। पुं। अजीर्णरोगे। निदा.।

**चपला**। स्त्री। पिप्पल्याम्। रा. नि. व. ६। भा. म. ४भ. योनिरोग. चि॰। विजयायाम्। सिद्धि। मद्यसामान्ये। रा. नि. व. १४। जिह्वायाम्। भा.। पिप्पलीमूले। ग्रहणी. चि. पानीयभक्तवट्याम्। जीरके। श.। मदिरा-याम्। रा.।

**चपलाजटा (मूलम्)**। स्त्री। पिप्पलीमूले। वै. निघ॰ २भ. कास. चि. मञ्जिष्ठाद्यचूर्णे।

**चपेटः**। पुं. करतले। চাপড়। रा. नि. व॰ १८। तत्पर्य्यायः,—प्रतलः, प्रहस्तः (अ.)।

**चमटः**। पुं। स्थूलगोधूमे। বড়গম। वै. निघ.।

**चमत्कारः**। पुं। अपामार्गे। श॰ र.।

**च(चा)मरम्**। क्ली। चामरे। बालव्यजने। চামর। मे.। तद्वायुगुणाः—ओजस्करः मक्षिकादि-नाशकश्च। राज.।

**चमरः (री)**। पुं, स्त्री। चमरीमृगे। চমরী, চমরী গাভি। मं चवरीगाय। कं हहि। तत्-पर्य्यायः,—व्यजनी, बल्यः, धेनूगः बालधिप्रियः। (स्त्री) दीर्घवाला, गिरिप्रिया। रा.। तन्मांसं स्निग्धं मधुरं कासघ्नं विपाके मधुरं वातपित्तघ्नञ्च। सु. सू. ४६ अ.। (री) स्त्री। मञ्जर्य्याम्। मे.। चमरस्त्रियाम्।

**चमरपुच्छः**। पुं। कोकड़मृगे। रा. नि. व. १९। काष्ठमार्ज्जारिकायाम्। के.।

**चमरिकः**। पुं। कोविदारवृक्षे। রাম কাঞ্চন গাছ। अम.।

**चमसः**। पुं। पर्पटे। পাঁপর। पिष्टकभेदे। लड्डुके। (अजयपाल.)। (सी) स्त्री। मुद्गमसूरादि-पिष्टके तच्चूर्णे च। "चूर्णं यच्छुष्कमाषाणां चमसी साभिधीयते।" भा.। यज्ञपात्रविशेषे। চামচা।

**चमूरुः**। पुं। हरिणभेदे। अम.।

**चम्पः**। पुं। पुं। कोविदारवृक्षे। রক্ত কাঞ্চন গাছ।

**चम्पकः**। पुं। (Michelia champaca.) स्वनामख्यातपुष्पवृक्षे। চাঁপাফুলের গাছ। प. मु.। हिं मं चंपा। कं संपगे। तत्पर्य्यायः,—चाम्पेयः, हेमपुष्पकः (अ.), कटुः, उग्रगन्धः, कुसुमाधिपः (शब्दर.), नागपुष्पः (मे.), कुसुमाधिराट्, पुण्यगन्धः (त्रि.), स्वर्णपुष्पः, शीतलच्छदः, सुभगः, भृङ्गमोही, शीतलः, भ्रमरातिथिः, सुरभिः, दीपपुष्पः, स्थिरगन्धः, अतिगन्धकः, स्थिरपुष्पः, हेमपुष्पः, पीतपुष्पः, हेमाह्वः, सुकुमारः, वनदीपः। गुणाः,—कटुः तिक्तः शीतलः दाहघ्नः कण्डूकुष्ठ-व्रणघ्नः राजचम्पकाद्गुणाढ्यश्च। रा॰ नि॰ व, १०। "चम्पकः कटुकस्तिक्तः कषायो मधुरो हिमः। विषक्रिमिहरः कृच्छ्रकफवातास्रपित्तजित्॥" भा.। पनसवृक्षे। नागकेसरचम्पके। वै. निघ.। क्ली। चम्पकपुष्पे। स्वर्णकदल्याम्। চাঁপাকলা।

**चम्पककदली (रम्भा)**। स्त्री। सुवर्णकद-ल्याम्। চাঁপাকলা। तत्पर्य्यायः,—चम्पकरम्भा, सुवर्णकदली (रा.)। गुणाः,—वातपित्तहरं गुरु वीर्य्यकरम् अतिशीतं रसे पाके च मधुरम्। रा. नि. व. ११। वातपित्तघ्नं गुरु वीर्य्यकरं अति-शीतलं रसे पाके च मधुरम्। राज.।

**चम्पककलिका**। स्त्री। चम्पककोरके। চাঁপার কলি। तत्पर्य्यायः,—गन्धकली, बहु-गन्धा, गन्धमोदिनी, चम्पककोरकः। रा. नि. व. १०।

**चम्पकागदः**। पुं। लूताकीटादिविषहरा-गदभेदे। यथा—"हरिद्राद्वयपत्तङ्गमञ्जिष्ठानत-केसरैः। सक्षौद्रासर्पिः।" वा. उ. ३७अ.।

**चम्पकालुः (सुः)** }
**चम्पालुः** } पुं। पनसवृक्षे। কাঁঠাল গাছ। श. र.।

**चम्पकुन्दः**। पुं। मत्स्यविशेषे। চাপিলা মাছ, চাঁদকড়া। गुणाः,—"चम्पकुन्दो गुरुर्बल्यः मधुरो वातपित्तजित्। शुक्रलो बलकृत् प्रोक्तः स्नेहनः श्लेष्मकोपनः॥" राज. ३प.।



**चम्पकोलः(षः)**। पुं। पनसवृक्षे। কাঁঠাল গাছ। त्रिका.।

**चम्पलः**। पुं। महानागकेशरचम्पके। নাগেশ্বর চাঁপা। त्रिका.।

**चम्पालः**। पुं। पनसे। शब्दर.।

**चम्बेली**। स्त्री। जातीपुष्पवृक्षे। চামেলী।

**चयः**। पुं। विष्ठायाम्। रोगवृद्धौ। वै. निघ.।

**चरः**। पुं। खञ्जरीटपक्षिणि। খঞ্জনপাখী। श॰ मा॰। कपर्द्दके। কড়ি। रा. नि॰ व॰ १३।

**चरकः**। पुं। पर्पटके। ক্ষেৎপাবড়া। प. मु.। तन्नामकवैद्यकसंहितायाम्। स्वनामख्याते अग्नि-वेशकृततन्त्रप्रतिसंस्कर्त्तरि वैद्यकसंहिताकारे। চরক মুনি। आत्रेयस्य मुनेः शिष्या अग्निवेशा-दयोऽभवन्। संहितोत्पत्तिः यथा—"मुनयो बहव-स्तैश्च कृतं तन्त्रं स्वकं स्वकम्। तेषां तन्त्राणि संस्कृत्य समाहृत्य विपश्चिता। चरकेणात्मनो नाम्ना ग्रन्थोऽयं चरकः कृतः॥" तत्प्रादुर्भावः—"यदा मत्स्यावतारेण हरिणा वेद उद्धृतः। तदा शेषश्च तत्रैव वेदं साङ्गं समाप्तवान्। एकदा स महीवृत्तं द्रष्टुं चर इवागतः। तत्र लोकान् गदग्रस्तान् व्यथया परिपीड़ितान्। स्थलेषु बहुषु व्यग्रान् म्रियमाणांश्च दृष्टवान्। तान् दृष्टातिदयायुक्तः तेषां दुःखेन दुःखितः। अनन्तश्चिन्तयामास रोगोप-शमकारणम्। संचिन्त्य स स्वयं तत्र मुनेः पुत्रो बभूव ह। प्रसिद्धस्य विशुद्धस्य वेदवेदाङ्गवेदिनः। यतश्चर इवायात, न ज्ञातः केनचिद्यतः। तस्मा-च्चरकनाम्नासौ विख्यातः क्षितिमण्डले॥" भा॰।

**चरटः**। पुं। खञ्जरीटपक्षिणि। খঞ্জন পাখী। श. मा.।

**चरणः**। पुं। पादे। रा. नि, व॰ १८। तरुमूले। रा. नि॰ व॰ २। क्ली। भक्षणे। हे. च.।

**चरणग्रन्थिः**। पुं। पदगुल्फे। हे॰च.।

**चरणा**। स्त्री। अचरणानामयोनिरोगे। सुश्रु.।

**चरणायुधः**। पुं। कुक्कुटे। কুকড়া। अम.।

**चरतिपञ्चिका**। स्त्री। रास्नायाम्। वै॰ निघ.।

**चरप्रियम्**। क्ली। मरिचे। वै. निघ॰।

**चराचरः**। पुं। कपर्द्दके। रा॰ नि॰ व. १३।

**चरिः**। पुं। चतुष्पादजन्तौ। उ.।

**चरित्रा**। स्त्री। तिन्तिड़ीवृक्षे। श॰ र.।

**चरुः**। पुं। अन्ने। हव्यान्ने। हव्यान्नपाकभाण्डे। मे.।

**चरुका**। स्त्री। तृणधान्यभेदे। गुणाः—श्यामाक-वत्। च. सू॰ २७ अ॰।

**चरुव्रणः**। पुं। चित्रपूपे, रोटिकायाम्। চিতাই পিঠা। त्रिका॰।

**चर्च्चरीकः**। पुं। शाके। महाकाले। मे॰।

**चर्च्चा**। स्त्री। नियमापरित्यागे।

**चर्पटः**। पुं। पर्पटे। चपेटे। मे.।

**चर्पटी**। स्त्री। पूपालिकायाम्। পুলিবিশেষ। त्रिका॰।

**चर्भटः**। पुं। कर्कटिकालतायाम्। কাঁকুড় গাছ। हला.।

**चर्म्म (कण्टकः)**। पुं। त्वचि। চামড়া। रा नि, व, १८। पर्पटके। ক্ষেৎপাবড়া। वै. निघ। जिह्वश, ज्व॰ चि.।

**चर्म्मकरी**। स्त्री। मांसरोहिन्याम्। भा॰।

**चर्म्मकषा (सा)**। स्त्री। The plant Chámara ghása. स्वनामख्यातगन्धद्रव्ये। চামরকষা, চামরঘাস। र. सा॰ अ. टी॰ भ.। तत्पर्य्यायः,—सप्तला, विमला, सातला, भूरिफेना (अ.), शातला, चर्म्मकसा (भ॰), विदलिका। श.। See सातला। मांसरोहिण्याम्। रा, नि॰ व. १२।

**चर्म्मकारतरुः**। पुं। शुक्लमदनवृक्षे। वै, निघ.।

**चर्म्मकारालुः (कः)**। पुं। वाराहीकन्दे। শুয়ার আলু। वै॰ निघ॰।

**चर्म्मकारिका (री)**। स्त्री। चर्म्मकषायाम्। চামরঘাস। मे॰ ज. द॰।

**चर्म्मकी** (इन्)। स्त्री, पुं। चर्म्मपक्षिणि। চামচিকী। रा. नि. व॰ १९।

**चर्म्मकीलः**। पुं। तन्नामकक्षुद्ररोगे। আঁচিল। "समुत्थाननिदानाभ्यां चर्म्मकीलः प्रकीर्त्तितः।" सु॰ नि॰ १३ अ.। "माषेभ्यस्तून्नततरान् चर्म्म-कीलान् सितासितान्।" वा॰ उ॰ २१ अ.। अर्शो-

भेदे। অর্শ, হারিশ্। सम्प्राप्तिः—"व्यानस्तु प्रकुपितः श्लेष्माणं परिगृह्य बहिःस्थिरासि कीलवदर्शांसि निर्वर्त्तयन्ति तानि चर्म्मकीलान्यर्शांसि आचक्षते॥" सु. नि. २ अ.। "वातेन तोदपारुष्ये पित्तादसितरक्तता। श्लेष्मणा स्निग्धता चास्य ग्रथितत्वं सवर्णता॥" मा. नि.।

**चर्म्मघटिका।** स्त्री। जलौकायाम्। জোঁক।

**चर्म्मचट(टि)का (टी)।** स्त्री। चर्म्मचट्याम्। চামচিকে। त्रिका.। हे.च. श. र.।

**चर्म्मचित्रकम्।** क्ली। श्वित्रकुष्ठे। धवल। रा. नि. व. २०।

**चर्म्मजम्।** क्ली। रक्तधातौ। लोम्नि। रा. नि. व. १८।

**चर्म्मजा।** स्त्री। मसूरिकाभेदे। चामरगोटीति लोके। "स्फोटानां मिलनादेषा बहुस्फोटापि दृश्यते। एकस्फोटा च कृष्णा च बोद्धव्या चर्म्मजाभिधा" भा.।

**चर्म्मटी।** स्त्री। जलौकायाम्। জোঁক্। वै. निघ.।

**चर्म्मण्वती।** स्त्री। कदलीवृक्षे। मे.। नदीविशेषे।

**चर्म्मतरङ्गः।** पुं। त्वक्सङ्कोचे। মাংসলোলতা। रा. नि. व. १८। चर्म्मकीलरोगे। আঁচিল। वै. निघ.।

**चर्म्मदण्डः।** पुं। उपस्थे। कशायाम्। চাবুক। रा.।

**चर्म्मदलम्।** क्ली। क्षुद्रकुष्ठभेदे। लक्षणं—"रक्तं सशूलं कण्डूमत् सस्फोटं दलयत्यपि। तच्चर्म्मदलमाख्यातं स्पर्शासहनश्च यत्॥" भा.। अन्यच्च—"स्वेदेन कण्डुव्यथनोषचोषास्तलेषु तच्चर्म्मदलं वदन्ति।" सु. नि. ५ अ.।

**चर्म्मदूषिका।** स्त्री। चर्म्मरोगविशेषे। কোঠ রোগ। रा. नि. व. २०। खर्ज्ज्वाम्। চুলকুনি। वै. निघ.।

**चर्म्मद्रुमः।** पुं। भूर्ज्जवृक्षे। रा. नि. व. २३।

**चर्म्मनालि(सि)का।** स्त्री। कशायाम्। (सि) शब्दर.।

**चर्म्मनाशकः।** पुं। चन्द्रशूरे। হালিম। भा.।

**चर्म्मन्।** क्ली। वृक्षवल्कले। গাছের ছাল। त्वगिन्द्रिये, यत् असृग्धरा नामकलेति संहितासु ख्यातम्। চামড়া। रा. नि. व. १९।

**चर्म्मपत्रा (त्री)।** स्त्री। पुं (त्रः, त्रः)। चर्म्मचटिकायाम्। চামচিকী। जटा.। रा. नि. व. १९।

**चर्म्मपिड़का।** स्त्री। मसूरिकारोगभेदे। চর্ম্মদল বসন্ত। लक्षणं—"कण्ठरोधारुचिस्तम्भ-प्रलापारतिसंयुताः। दुश्चिकित्स्याः समुद्दिष्टाः पिड़काश्चर्म्मसंज्ञिताः॥" मा. नि.।

**चर्म्मपुटकः।** पुं। चर्म्मनिर्म्मित-पात्रविशेषे। मे.। কুপো, মশক।

**चर्म्मप्रसेवकः।** पुं। अग्निसन्धुक्षणार्थे चर्म्ममययन्त्रविशेषे। জাঁতা। अ.।

**चर्म्मप्रभेदिका।** स्त्री। चर्म्मप्रभेदनास्त्रे। পোড়। अम.।

**चर्म्मबन्धनम्।** क्ली। मरिचे। वै. निघ.।

**चर्म्मयष्टिः (का)।** स्त्री। कशायाम्। চাবুক। शब्दर.।

**चर्म्मरङ्गा।** स्त्री। आवर्त्तकीलतायाम्। আঁৎগোড়া। रा. नि. व. ३।

**चर्म्मरी।** स्त्री। तन्नामकफलविषभेदे। सु. कल्प. २ अ.। See फलविषम्।

**चर्म्मरेखा।** स्त्री। त्वक्सङ्कोचरोगे।

**चर्म्मविन्दुका।** स्त्री। शीतपित्तोदर्द्दकोठरोगेषु। वै. निघ.।

**चर्म्म(र्म्मि)वृक्षः।** पुं। भूर्ज्जवृक्षे। सु. कल्प. ५ अ.। चर्म्मलौहे। सु. चि. ११अ.।

**चर्म्मव्रणः।** पुं। चर्म्मरोगभेदे, लूतारोगादौ। वै. निघ.।

**चर्म्मसंज्ञा।** स्त्री। चर्म्मकषायाम्।

**चर्म्मसम्भवा।** स्त्री। एलायाम्। हारा.।

**चर्म्मसा।** स्त्री। जलौकायाम्। वै. निघ.।

**चर्म्मसारः।** पुं। शरीरस्थरसधातौ। অন্নরস। रा. नि. व. १८।

**चर्म्महन्त्री।** स्त्री। चन्द्रशूरे। হালিম। भा.।

**चर्म्माख्यम्।** क्ली। क्षुद्रकुष्ठभेदे। "अस्वेदनं महावास्तु यन्मत्स्यशकलोपमं। तदेककुष्ठं चर्म्माख्यं बहलं गजचर्म्मवत्॥" भा.। (ख्या) स्त्री। सप्तलायाम्। চামর ঘাস। प. मु.।



**चर्म्मानुरञ्जनम्।** क्ली। हिङ्गुले। वै. निघ.।

**चर्म्माभः।** पुं। रसधातौ। रा. नि. व. १८।

**चर्म्माम्भः (स्)।** पुं। रसे। रा.।

**चर्म्मारकः।** पुं। शुक्लहिङ्गुले। वै. निघ.।

**चर्म्माह्वयः।** पुं। पर्पटके। ক্ষেৎপাবড়া। वै. निघ.।

**चर्म्मा(र्म्मसा)ह्वा।** स्त्री। सप्तलायाम्। চামরকষা। चा. सू. १५अ.। श्यामादिगणे। हेमा.। ब्राह्म्याम्। वा. टी. अरुण.।

**चर्म्मी (इन्)।** पुं। भूर्जपत्रवृक्षे। अम.। भृङ्गरीटी। মোচা। श. र.। चर्म्मचटके। वै. निघ.।

**चर्व्वणम्।** स्त्री। अष्टविधान्नान्यतमे अन्ने। চর্ব্যান্ন। रा. नि. व. २०। भक्षणे। दन्तैर्भक्षणे। চিবান। हे. च.।

**चर्व्वितः।** त्रि। दन्तैः भक्षिते। अम.।

**चर्व्व्यम्।** क्ली। चर्व्वणोपयोगि-खाद्यद्रव्ये। "चर्व्व्यं चिपिटधान्यादि।" भा.।

**चर्षणिः।** पुं। मनुष्ये। वै. निघ.।

**चलः।** पुं। शिलारसे। र. मा.। च. द. व्या. महाराज. प्र. तैले। सुवर्णचम्पके। नखे। নখী। वै. निघ.। वायुरोगे। কাঁপা। मे.।

**चलघ्नी।** स्त्री। स्पृक्कायाम्। পিড়িং। वै. निघ.।

**चलचञ्चुः।** पुं। चकोरपक्षिणि। हे. च.।

**चलच्छदः।** पुं। रोहितकवृक्षे। श.। अश्वत्थवृक्षे। के.।

**चलत्पूर्णिमा।** स्त्री। चन्द्रकमत्स्ये। চাঁদা মাছ। त्रिका.।

**चलदङ्गः (कः)।** पुं। मत्स्यभेदे। চেঙ্গমাছ। गुणाः—"चलदङ्गोऽनभिष्यन्दी हितो वाते च रोचनः।" राज. ३ प.।

**चलदलः (पत्रः)।** पुं। अश्वत्थवृक्षे। मद. व. ५। रा. नि. व. ११।

**चलद्रुमः।** पुं। गोक्षुरक्षुपे। वै. निघ.।

**चलाह्वयः।** पुं। कोकिले।

**चलनम्।** क्ली। कम्पने। भ्रमणे। मे.। पुं। हरिणे। जटा.। पादे। हे. च.।

**चलपुच्छः।** पुं। खञ्जरीटे। वै. निघ.।

**चला।** स्त्री। सिह्लके। শিলারস। र. मा.।

**चलाचलः।** काके। रा. नि. व. १९। त्रि.। चञ्चले। अम.।

**चलातङ्कः।** पुं। वातव्याधौ। रा. नि. व. २०।

**चलापहः।** पुं। वरुणवृक्षे। বরুণ গাছ। रक्तकुलत्थे। লাল কুর্ত্তি। वै. निघ.।

**चलिः।** पुं। राजमाषे। उत्तरीयवस्त्रे।

**चलुः।** पुं। गण्डूषे। हे. च.।

**चलुकः।** पुं। प्रसृतिमाने। मे.।

**चविः (वी)।** स्त्री। चविकायाम्। চই। श. र.।

**चविकम्।** क्ली। चविकायाम्। भ. रुद्रः।

**चविका।** स्त्री। चव्ये। চই। रा. नि. व. ६। गजपिप्पल्याम्। तन्मूले। वै. निघ.।

**चविकाशिरः।** क्ली। पिप्पलीमूले। वै. निघ.।

**चवी।** स्त्री। चविकायाम्। शब्दर.।

**चव्य(क)म्।** क्ली। (Piper chaba. Syn. Chavica officinarum.) स्वनामख्यातकटुलतायाम्। চই গাছ। तैं सेवासु। तत्पर्य्यायः,—चविका, चव्या, चविकं, चवी (भ.), चविः (शब्दर.), पुरन्दरं, तेजोवती, कोला, नाकुली, उषणा, चव्यकं, वशिरः, गन्धनाकुली, वल्ली, कोलवल्ली, कोलं, कुक्कुटमस्तकं, तीक्ष्णं, करिकणावल्ली, क्रकरः, कुटिलसप्तकम्। गुणाः—उष्णं कटुकं लघु दीपनं रुच्यं श्वासकासशूलघ्नम्। रा. नि. व. ६। पिप्पलीमूलसदृशं गुदजरोगे हितम्। भा. पू. १भ.। भेदकं कफघ्नञ्च। राज.। हस्तिपिप्पलीमूले। सु. सू. ३८ अ.। कार्पासे। गजपिप्पल्याम्। गुञ्जायाम्। কুঁচ। वै. निघ.।

**चव्यजा।** स्त्री। गजपिप्पल्याम्। रा. नि. व. ६।

**चव्यफलम् (ली)।** क्ली, स्त्री। गजपिप्पल्याम्। रा. नि. व. ६।

**चव्या।** स्त्री। कार्पास्याम्। কাপাস। रा. नि.

**छत्राङ्गम्** । क्ली । हरितालविशेषे । গোদন্ত হরিতাল । প. মু. । See गोदन्तम् ।

**छत्रातिच्छत्रः (त्रा)** । पुं, स्त्री । सुगन्धाख्य-तृणविशेषे । स जलजः छत्राकारश्च भवति काश्मीरस्थदिव्यसरसि दृश्यते । श. र. । तत्-पर्य्यायः,—छत्रातिछत्रा, पालघ्नः, अतिच्छत्रा, सुगन्धा, छत्रकः, कटुकः, कटुः (शब्दर.) । (त्रे) द्रोणपुष्पीवृक्षे । ছোট বড় ঘলঘসিয়া । सि. यो. उन्मा. चि. पैशाचघृते । श्रीकण्ठः ।

**छत्राधान्यम्** । क्ली । धन्याके । रा. ।

**छत्रिका** । स्त्री । शिलीन्ध्रे । কোঁড়কছাতা, পাতালফোড়; ভূঁই ফোড় । तत्पर्य्यायः,—गोमयछत्रिका, दिलीरं शिलीन्ध्रकं, वसारोहं, गोलास, उच्छ्रङ्गं (हा.) उच्छिलीन्ध्रम् । सा नानास्थानजभेदेन बहुधा । सा. गुणाः—शीता कषाया स्वादुः पिच्छिला छर्द्यतिसारज्वरकफ-रोगकरी गुरुश्च । पलालजा तु स्वादुपाका रुक्षा च । च । तथा वेणुजगोष्ठजशुचिस्थानजकाष्ठज-श्वेतछत्रिकाश्च दोषकर्य्यः निन्दिताश्च । राज. ।

**छत्री (इन्)** । पुं । सप्तपर्णवृक्षे । वै. निघ. । नापिते । श. र. । त्रि । छत्रविशिष्टे ।

**छत्वरः** । पुं । गृहे । के. ।

**छदः** । पुं । ग्रन्थिपर्णवृक्षे । গেঁঠেলা । तमाल-वृक्षे । पत्रे । পাতা । मे. । तेजपत्रवृक्षे । भैष. वा. व्या. गन्धकघृते ।

**छदनम्** । क्ली । तमालपत्रे । তেজপত্র । रा. नि. व. ६ । त्वचि । গুড়ত্বক্ । वै. निघ. । पत्रे । पक्षे । मे. ।

**छदपत्रः** । पुं । भूर्ज्जवृक्षे । र. मा. ।

**छदवल्लभः** । पुं । ग्रन्थिपर्णमूले । গেঁঠেলার মূল । वं. निघ. ।

**छदिः (स्)** । क्ली । गृहाच्छादने, पाटले । চাল্ ।

**छद्मद्विजः** । पुं । कङ्कपक्षिणि । কাঁক পাখী । मे. ।

**छद्मा** । स्त्री । मञ्जिष्ठायाम् । रा. नि. व. ६ ।

**छद्मिका** । स्त्री । गुडूच्याम् । रा. नि. व. ३ । मञ्जिष्ठायाम् । वै. निघ. ।

**छद्वरः** । पुं । दन्ते । वै. निघ. ।

**छन्दः** । पुं । विषे । श. र. ।

**छमिः** । पुं । ऊर्णनाभौ । মাকড়শা । वै. निघ. ।

**छरिषा** । स्त्री । दारुहरिद्रायाम् । वै. निघ. ।

**छर्द्दम्** । क्ली । वमनवेगे, वमने । हे. च. ।

**छर्द्दनः** । पुं । निम्बवृक्षे । मदनवृक्षे । मयना গাছ । प. मु. । अलम्बुषे । তিৎ লাউ । के. । क्ली । वान्तौ । मा. नि. ।

**छर्द्दापनिका** । स्त्री । कर्कटिकायाम् । কাঁকুড় । रा. ।

**छर्द्दिः (स्)** । स्त्री, क्ली । वान्तौ । वमन । रा. नि. व. २० । तत्पर्य्यायः,—प्रच्छर्द्दिका, छर्द्द, वमथुः, वमनं, वमिः (हे.), छर्द्दिका, छर्द्दीका, वान्तिः, उद्गारः (रा.), उत्कासिका, छर्द्दनं (शब्दर.), छर्द्दिः (उ) । सा पञ्चधा । यथा— "दुष्टैर्दोषैः पृथक्सर्वैः वीभत्सालोचनादिभिः । छर्द्दयः पञ्च विज्ञेयास्तासां लक्षणमुच्यते । अतिद्रवै-रतिस्निग्धरहृद्यैर्लवणैरति । अकाले चातिमात्रैश्च तथासात्म्यैश्च भोजनैः । श्रमाद्भयात्तथोद्वेगा-दजीर्णात् क्रिमिदोषतः । नार्य्याश्चापन्नसत्वाया-स्तथातिद्रुतमश्नतः । वीभत्सैर्हेतुभिश्चान्यैर्द्रुतमुत्-क्लेशितो बलात् । छादयन्नाननं वेगैरर्द्दयन्नङ्ग-भञ्जनैः । निरुच्यते छर्द्दिरिति दोषो वक्त्रं प्रधा-वितः । हृल्लासोद्गाररसरोधः प्रसेको लवणस्तनुः । द्वेषोऽन्नपाने च भृशं वमीनां पूर्व्वलक्षणम् ॥" मा. नि. ।

**छर्द्दिका** । स्त्री । विष्णुक्रान्तायाम् । অপরা-জিতা । रा. नि. व. ५ । वान्तौ ।

**छर्द्दिकारिपुः**<br>**छर्द्दिघ्नरिपुः** } पुं । सूक्ष्मैलायाम् । श. च. । वै. निघ. ।

**छर्द्दिघ्नः** । पुं । निम्बवृक्षे । र. मा. ।

**छर्द्दापनिका (नी)** । स्त्री । कर्कटिकायाम् । কাঁকুড় । वै. निघ. ।

**छलिः** । स्त्री । चर्म्मणि । চামড়া । (शब्दर.) ।

**छल्लम् (कम्)** । क्ली । वल्कले । नि. । शब्दर. ।

**छल्लिः (ल्ली)** । स्त्री । चर्म्मणि । ছাল । श. र. । वृक्षविशेषे । भवरसालीति महाराष्ट्रे । वै. निघ. २भ. अतिसा. चि. जम्ब्वादिचूर्णे । पुष्प-विशेषे । मे. ।



**छविपत्रकः** । पुं । वृश्चिकाल्याम् । বিছাতি । भैष. कुष्ठ. चि. कन्दर्पसारतैले ।

**छाः** । पुं । शावके । एकाक्षर. ।

**छागः** । पुं । स्वनामख्यातपशौ । ছাগল । तत्पर्य्यायः,—यज्ञपशुः (शब्दमा.), परिक्रमसहः (त्रि.), पादचलरः (मे.), वस्तः, छगलकः, अजः, स्तुतः, छगः, छगलः, स्तभः, शुभः (अ. टी.), स्तूर्णकः (श.), लघुकायः, क्रयसदः, वर्करः, पर्णभाजनः, लम्बकर्णः, मेनादः वुक्कः, अल्पायुः, शिवप्रियः (शब्दर.), चवुकः, मेध्यः, पशुः, पयस्वलः, मेकः । गुणाः—"नातिशीतो गुरुः स्निग्धः मन्दपित्तकफः स्मृतः । छगलस्त्वनभिष्यन्दी तेषां पीनसनाशनः ॥" सु. सू. ४६अ. ।

**छागकर्णः** । पुं । सर्ज्जतरौ । শাল গাছ । शाकतरौ । শেগুন গাছ । वै. निघ. ।

**छागघृतम्** । क्ली । छागीनवनीतजघृते । ছাগ-ঘৃত । गुणाः,—चक्षुष्यं दीपनं बलवर्द्धनं कास-श्वासकफरोगराजयक्ष्मसु हितञ्च । रा. नि. व १५ ।

**छागणः** । पुं । करीषाग्नौ । ঘুঁটের আগুন । त्रिका. ।

**छागदधि** । क्ली । छागीदुग्धकृतदधनि । ছাগ-দুধের দই । गुणाः,—वातकफघ्नं लघु उष्णं नेत्र-रोगे हितं अर्शःश्वासकासघ्नं रुच्यं दीपनं पाच-नञ्च । रा. नि. व. १५ । "आजं दधि भवेच्चोष्णं क्षयवातविनाशनं । दुर्नामश्वासकासेषु हितमग्नि-प्रदीपनम् ॥ विपाके मधुरं वृष्यं रक्तपित्तप्रसादनं । शस्तं प्राभातिकं प्रोक्तं वातपित्तनिबर्हणम्" ॥ अत्रि, ८ अ. ।

**छागदुग्धम्** । क्ली । अजादुग्धे । ছাগলদুধ । मं शेल्लोदुध । कं पुइआड़िनहालु । गुणाः—कषायं मधुरं शीतं ग्राहि लघु पित्तक्षयापहारि कास-ज्वरघ्नं रुधिरातिसारे हितं त्रिदोषघ्नञ्च । अत्रि. ८ अ. । लघुकायत्वात् नानाद्रव्यनिषेवणात् नात्यम्बुपानात् व्यायामात् सर्व्वव्याधिहरं, क्षीणा-जदुग्धं गोदुग्धवीर्य्यादधिकगुणं क्षीणदेहेषु पथ्यतमञ्च । स्थूलाजदुग्धं गुणैः किञ्चिदूनम् । रा. नि. व. १५ ।

**छागनवनीतम्** । क्ली । छागीदुग्धोत्थनवनीते । ছাগলদুধের ননী । गुणाः—लघु मधुरं कषायं त्रिदोषघ्नं चक्षुष्यं दीपनं बल्यं सदाहितञ्च । प्रत्यग्रनवनीतं क्षयकास-नेत्ररोग-कफघ्नं बल्यम् अतिदीपनञ्च । रा. नि. व. १५ ।

**छागभोजी (इन्)** । पुं । ईहामृगे । वृके । रा. नि व. १९ । त्रि । छागभक्षके ।

**छागमांसम्** । क्ली । छागलमांसे । सि. यो. । गुणाः—लघु स्निग्धं नातिशीतं रुचिप्रदं निर्द्दोषं वातपित्तघ्नं मधुरं बलदं पुष्टिदञ्च । छागपोतभवं मांसं लघु शीतलं प्रमेहघ्नञ्च । तृणचारिच्छागपोत-मासम् ईषल्लघु बलदञ्च । रा. नि. व. १७ । "छाग-मांसं परं हृद्यं वृंहणं बलवर्द्धनं । स्निग्धं मृदनभि-ष्यन्दि नात्युष्णं धातुसाम्यकृत् ॥" राज. । निष्का-सितण्डच्छागमांसगुणाः—कफकृत् गुरु स्रोतः-शुद्धिकरं बलकरं मांसवर्द्धकं वातपित्तघ्नञ्च । वृद्ध-च्छागमांसगुणाः—वातलं रुक्षञ्च । तदण्डं रुचि-प्रदम् । भा. । शुक्रवर्द्धकमिति दृष्टफलम् ।

**छागमूत्रम्** । क्ली । छागीमूत्रे । गुणाः—आजं कषायं मधुरं पथ्यं दोषं निहन्ति च । अ. ।

**छागलः (कः)** । पुं । छागे । रा. नि. व. १९ । मत्स्यविशेषे । আড় মাছ । तस्य लक्षणं—"श्वेतं सुकायं समदीर्घवृत्तं निःशल्ककं छागलकं वदन्ति । गले द्विकण्टः किल तस्य पृष्ठे कण्टः ।" तन्मांस-गुणाः—सुपथ्यः रुचिदः बलप्रदश्च । रा. नि. व. १७ ।

**छागला (न्त्रिका, न्त्री)** । स्त्री । वृद्धदारक लतायाम् । प. मु. । रा. नि. व. ३ । वृके ।

**छागलान्त्रः (न्त्रिः)** । पुं । ईहामृगे । रा. नि. व. १९ ।

**छागलाक्षः** । पुं । मल्लिकाकुसुमवृक्षे । प. मु. ।

**छागली** । स्त्री । छाग्याम् । चर. ।

**छागवाहनः** । पुं । अग्नौ । त्रि. ।

**छागशकृत्** । क्ली । छागविष्ठायाम् । ছাগল-নাদি ।

**छागशत्रुः** । पुं । ईहामृगे । वै. निघ. ।

**छागशृङ्गी** । स्त्री । अजशृङ्ग्याम् । भा. म. ३भ, मूत्रकृच्छ्र. चि. ।

**छागक्षीरम्** । क्ली । छागदुग्धे । चक्र. ।

**छागाद्यघृतम्** । क्ली । यक्ष्मरोगे हितम् । पाठः—"छागमांसतुलां गृह्य साधयेद्द्रोणलीयतः । पादशेषेण तेनैव सर्पिःप्रस्थं विपाचयेत् । ऋद्धि-वृद्धिश्च मेदे द्वे जीवकर्षभकौ तथा । काकोली

क्षीरकाकोली पृथक् कल्कैः पलोन्मितैः। सम्यक् सिद्धे चावतार्य्य शीते तस्मिन् प्रदापयेत्। शर्करायाः पलान्यष्टौ मधुनः कुड़वं क्षिपेत्॥" छागमांसं १०० प. वारि ६४ श. शे. १६ श. घृतं ३२ प.। कल्कार्थं—ऋद्धिः वृद्धिः मेदा महामेदा जीवकः ऋषभकः ( उक्तद्रव्याणामभावे वरा गोरक्षतण्डुला अश्वगन्धा अनन्तमूलं गुड़ूची वंशलोचना ) काकोली क्षीरकाकोली प्र. १ प.।

ছাগমাংস ১০০ প. জল ৬৪ শ. শেষ ১৬ শ. ঘৃত ৩২ প.। কল্কার্থ—ঋদ্ধি ( অভাবে বেড়েলা ), বৃদ্ধি ( অভাবে গোরক্ষ চাকুলিয়া ), মেদ, মহামেদ ( অভাবে অশ্বগন্ধা, অনন্তমূল), জীবক, ঋষভক ( অভাবে গুলঞ্চ, বংশলোচন ), কাকোলী, ক্ষীরকাকোলী প্রত্যেক ১ এক প.। সা. কৌ.। চ. দ.। बृहद्यथा—"छागमांसतुलाञ्चैव दशमूल्याः शतं पलं। अश्वगन्धापलशतं वाट्यालकशतन्तथा। जलद्रोणे विपक्तव्यं प्रत्येकं पादशेषितं। घृताढ़कं पचेत्तेन क्षीरं सर्पिःसमं ततः। शतावरीरसस्तत्र दातव्यो घृततुल्यकः। ताम्रपात्रे दृढ़े चैव शनैर्मृद्वग्निना पचेत्। अस्यौषधस्य सिद्धस्य कल्कः स्याच्छुक्तिसम्मितः। जीवन्ती मधुकं द्राक्षा काकोल्यौ नीलमुत्पलम्। मुस्तञ्च चन्दनं रास्ना पर्णिनीद्वयशारिवे। मेदे द्वे च तथा कुष्ठं जीवकर्षभकौ शटी। दार्व्वी प्रियङ्गुः त्रिफला नतं तालीशपद्मकौ। एला पत्रं वरी नागं जातीकुसुमधान्यके। मञ्जिष्ठा दाड़िमं दारु एलवालुकरेणुके। विड़ङ्गं जीरकञ्चैव पेषयित्वा विनिक्षिपेत्। वस्त्रपूते सुशीते च शर्कराप्रस्थसंयुतम्॥"

মূর্চ্ছিত গব্য ঘৃত ১৬ শ. নপুংসক-ছাগের মাংস ১০০ প. ক্বাথার্থ দশমূল প্রত্যেক ১০ প. অশ্বগন্ধা ১০০ প. বেড়েলা ১০০ প. জল প্র. ৬৪ শ শে. ১৬ শ.। উক্ত ছাগমাংসাদির প্রত্যেক ক্বাথ ঘৃতের সঙ্গে পাক করিবে। দুগ্ধ ১৬ শ. শতমূলীরস ১৬ শ.। কল্কার্থ—জীবন্তী, যষ্টিমধু, দ্রাক্ষা, কাকোলী, ক্ষীরকাকোলী, নীলোৎপল, মুতা, রক্তচন্দন, রাস্না, শালপাণী, চাকুলে, শ্যামালতা, অনন্তমূল, মেদ, মহামেদ ( অভাবে অশ্বগন্ধা, অনন্তমূল ), কুড়, জীবক, ঋষভক, (অভাবে গুলঞ্চ, বংশলোচন), শটী, দারু-হরিদ্রা, প্রিয়ঙ্গু, ত্রিফলা, তগরপাদুকা, তালীশপত্র, পদ্মকা এলাইচ, তেজপত্র, শতমূলী, নাগেশ্বর, জাতীপুষ্প, ধনিয়া, মঞ্জিষ্ঠা, দাড়িম, দেবদারু, এলবালুক, রেণুক, বিড়ঙ্গ, জীরা প্রত্যেকের চূর্ণ ৪ তো. বস্ত্রে ছাঁকিয়া প্রক্ষেপ; শর্করা ১৬ প.।

सा. कौ.। रस. र.। अन्यत् वातव्याधौ। आजं चर्म्मविनिर्म्मुक्तं त्यक्तशृङ्गखुरादिकम्। पञ्चमूलीद्वयञ्चैव जलद्रोणे विपाचयेत्। तेन पादावशेषेण घृतप्रस्थं विपाचयेत्। जीवनीयैः सयष्ट्याह्वैः क्षीरञ्चैव शतावरीं। छागलाद्यमिदं नाम्ना सर्व्ववातविकारनुत्। द्रोणे द्रव्यतुला मुख्या स्याच्छागदशमूलयोः। पृथक् तुलार्द्धं यष्ट्याह्वयं देयं विधीक्तितः॥" ছাগমাংস ৫০ প. দশমূল ৫০ প. জীবনীয়াদি দশকপ্র ৪ তো. ১ মা. ১ র. যষ্টিমধু ১০ তো. ১ মা. ১৩ র।

च. द. वा. व्या.। छागलवधं यथा—"नातिबाला न मृताश्च न वृद्धा न च रोगिणः। मध्यस्थास्तरुणा ग्राह्या कृशा वृष्या विशेषतः॥ तुलाद्रव्ये जलद्रोण इति वाक्यबलादिह। पृथक् तुलार्द्धं चक्रेष्टं दशमूलाजमांसयोः॥" तुलार्द्धं पञ्चाशत्पलानि। छागमांसं ५० प. दशमूलं ५० प. जलं ६४ श. शे. १६ श.। "क्वाथ्याच्चतुर्गुणं वारीत्यादिवाक्यबलात् पुनः। चतुःषष्टिपलं क्वाथ्यं वृन्दकुण्डस्य सम्मतम्॥" एतन्मतेन छागमांसं ३२ प.। एतच्चाप्रसिद्धाभादिति वकुलः। दशमूलस्य प्रत्येकमष्टरक्तिकोपेत द्वादशमाषाधिक-पलत्रयम्। यत्र दशमूलस्य प्र. ३ प. १२ मा. ८ र.। जलं पूर्व्ववत्। चक्रमतेन प्रायः प्रचारः। पृथगेव जलद्रोणाद्धन मांसक्वाथमेकाहेन कृत्वा व्यवहरन्ति वृद्धाः। दशमूलेन सह क्वाथकरणे तु व्युषितोऽपि मांसक्वाथो न दोषलः। तदुक्तं "केवलव्रीहिप्रायश्च-क्वाथी व्युष्टस्तु दोषल" इति। क्षीरं घृतसमं। क्षीरसाहचर्य्येन शतावर्य्या रसोऽपि घृतसमः। जीवनीयं जीवनीयदशकं। अत्र प्रविष्टमपि यष्टिमधु पुनरुक्तं भागद्वयग्रहणार्थं। यदुक्तं "घृततैले च योगे च यद्द्रव्यं पुनरुच्यते। तज्ज्ञातव्यमिहार्य्येण भागतो द्विगुणेन च॥" इति। जलस्थलभेदात् यष्टिमधुद्वयग्रहणमिति तु चक्रः। रस. र.।

**छागिका (गी)।** स्त्री। छागस्त्रियाम्। धाड़ि ছাগল। तत्पर्य्यायः,—अजा, पयस्विनी, भीरुः मेध्या, गलेस्तनी ( रा. ), छागिका, मञ्जा, सर्व्वभक्षा, गलस्तनी (हे.), चुलुम्पा ( त्रि. ), वस्तुः, सञ्जा, सुखविलुण्ठिका ( शब्दर. )। मांसगुणाः—मधुरं शीतलं ग्राहि दीपनं रक्तपित्तहरं क्षयकासघ्नं कषायं लघु अतिसारज्वरघ्नञ्च। अप्रसूतामांसं पीनसघ्नं शुष्ककासेऽरुचौ शोषे च हितम् अग्निदीपनञ्च। भा.।

**छागीतक्रम्।** क्ली। छागीघोलि। ছাগলদুধের ঘোল। गुणाः—"छागलं लघु सस्निग्धं त्रिदोषशमनं परं। गुल्मार्शोग्रहणीशूलपाण्ड्वामयविनाशनम्॥" अत्रि. ८ अ.। See अजातक्रम्।

**छागीमूत्रम्।** क्ली। अजामूत्रे। See अजामूत्रम्।

**छागोक्षीरविनाशनः।** पुं। शाखोटवृक्षे। শ্যাওড়া গাছ। वै. निघ.।

**छातः।** त्रि.। दुर्व्बले। अ.।

**छात्र(क)म्।** क्ली। सरघाभिः वरटाभिर्वा कृते छत्राकारपटलसञ्चिते मधुनि। বোল্‌তাচাকের মধু। तच्च आपीतवर्णम्। "छत्राकारन्तु पटलं सरघाः पीतपिङ्गलाः। यत् कुर्व्वन्ति तदुत्पन्नं मधु छात्रकमीरितम्॥" गुणाः—विविधनेत्ररुक्क्रिमिहरं गुणोत्तरञ्च पौत्तिकात्। रा. नि. व १४। क्रिमिश्वित्ररक्तपित्तहरं गुरु च। राज.। "वरटाः कपिलाः शीताः प्रायो हिमवतो वने। कुर्व्वन्ति छत्रकाकारं तज्जं छात्रमधु स्मृतम्। छात्रकं स्याच्च कपिलं पिच्छिलं शीतलं गुरु। स्वादुपाकं क्रिमिश्वित्ररक्तपित्तप्रमेहजित्। भ्रमतृण्मोहविषकृत् तर्पणञ्च गुणाधिकम्॥" भा.।

**छात्रदर्शनम्।** क्ली। प्रत्यग्रघृते, हैयङ्गवीनघृते। টাট্‌কা ঘৃত। श. च.।

**छात्रशर्करा।** स्त्री। छात्रमधुकृतशर्करायाम्। गुणैश्छात्रमधुसदृशा। रा. नि. व. १४।

**छादम्।** क्ली। गृहाच्छादने। ज.। वस्त्रे। शब्दर.।

**छादनम्।** क्ली। पत्रे। अ. टी. भ.। पुं। नीलाम्लानवृक्षे। নীল ঝাঁটী। रा. नि. व. १०।

**छादी।** स्त्री। चर्म्मणि। চামড়া। शब्दर.।

**छाया।** स्त्री। प्रभायाम्। वर्णप्रभाश्रिता या सा छाया। सा क्षित्याद्याश्रयभेदेन पञ्च भवति। च. इ. ७ अ.। छायाः श्यावलोहितनीलपीतादयो रोगिणो मरणसूचका भवन्ति। सु. सू. ३१ अ.। रौद्रशून्यतायां। ছায়া। तत्पर्य्यायः,—भावानुगा, भूमयी ( त्रि. ), श्यामा, अतेजः, भीरुः, अनातपः, आभीतिः आतपाभावः, भावानीला। सा. गुणाः,—शीतला मधुरा दाहश्रमहरा। वा.। श्रमभ्रममूर्च्छासन्तापघ्नीति मेघच्छाया। राज. २प. वटच्छाया बलवर्णप्रसादनी। च.।

**छायातरुः।** पुं। छायाप्रधानवृक्षे, वटादौ। त्रिका.। सुरपुन्नागवृक्षे। ज.।

**छायाभृत्।** पुं। चन्द्रे। हे.।

**छायामित्रम्।** क्ली। छत्रे। श र.।

**छायामृगधरः।** पुं। चन्द्रे। त्रि.।

**छायावृक्षः।** पुं। अश्वत्थवृक्षे। वै. निघ.।

**छावी।** स्त्री। सुरपुन्नागवृक्षे। ছবিয়ান ফুল।

**छिक्क(ण)म् (का)।** क्ली, स्त्री। क्षवथौ। হাঁচি। वै. निघ.।

**छिक्कणी।** स्त्री। छिक्किन्याम्। হেঁচেতা গাছ। भा.।

**छिक्करः।** पुं। जाङ्गलजीवविशेषे। गुणाः—"छिक्करो लघु वृंही च मधुरो दीप्तनाशनः। तुल्यो हरिणमांसेन ज्वरेष्वपि प्रशस्यते॥" अत्रि. २० अ.।

**छिक्किका (नी)।** स्त्री। ( Artemisia sternutatoria, ) स्वनामख्यातलतायाम्। হেঁচেতা গাছ। हिं नाक्छिकनी। तत्पर्य्यायः,—उग्रा ( हे. ), उग्रगन्धा। ( मे. )। गुणाः—कटुका रुच्या तीक्ष्णोष्णा वह्निपित्तकृत् वातरक्तहरी कुष्ठक्रिमिवातकफापहा च। भा.।

**छिक्किपत्रा।** स्त्री। छिक्किन्याम्। হেঁচেতা। वै. निघ.।

**छित्तिः।** पुं। करञ्जवृक्षे। श. च.।

**छिदकम्।** क्ली। वज्र। उ.।

**छिदा।** स्त्री। छेदने। मुग्धबो.।

**छिदिः।** स्त्री। कुठारे। के.।

**छिदिरः।** पुं। असौ। रज्जौ। करवाले। कुठारे। मे.।

**छिद्रम्।** क्ली। श्रोतसि। रा. नि. व. १८। रन्ध्रे।

**छिद्रवैदेही**। स्त्री। गजपिप्पल्याम्। गज-पिप्पुल। रा. नि. व. ६।

**छिद्रान्तः**। पुं। नले। नल गाछ। रा. नि. व. ८।

**छिद्राफलः**। पुं। मायाफलवृक्षे। वै. निघ.।

**छिद्रोदरम्**। क्लो। चतोदररोगे। क्षत जन्य उदरी। तस्य लक्षणं चरके यथा—"तदधो नाभ्याः प्रायोऽभिनिवर्त्तमानमुदकोदरस्य च यथा-बलञ्च दोषाणां रूपाणि दर्शयति। अपिचातुरः सलोहितपीतपिच्छिल-कुणपगन्धमबर्च्चं उपवेशयते हिक्काश्वासकास-तृष्णाप्रमेहारोचकाविपाकदौर्ब्बल्य-परीतश्च भवति। एतच्छिद्रोदरं विद्यात्।"

**छिन्नम्**। क्लो। सद्योव्रणविशेषे। "तिरश्चीन-ऋजुर्वापि यो व्रणश्चायतो भवेत्। गात्रस्य पातनं चापि छिन्नमित्युपदिश्यते॥" सु. चि. २अ.। क्लो। काण्डभग्नास्थिनामभङ्गरोगभेदे। अन्यतरपार्श्व-विशिष्टमिति तल्लक्षणम्। सु. नि. १५अ.। तच्च द्विधा एकं विदीर्णं संलग्नञ्च। अन्यत् विदीर्णं द्विधा-भूतञ्च। भा. म. ३भ.।

**छिन्नग्रन्थिनिका**। स्त्री। विपर्णिकायाम्। रा. नि. व. ७। गोरचमुण्ड्याम्। वै. निघ.।

**छिन्नपत्रा (त्री)**। स्त्री। अम्बष्ठायाम्। पुदिना। रा. नि. व. ४।

**छिन्नपत्रिका (त्री)**। स्त्री। आम्रातकवृक्षे। वै. निघ.।

**छिन्नपुष्पकः**। पुं। तिलकवृक्षे। भा.।

**छिन्नपुष्पा**। स्त्री। तिलकवृक्षे। तिल गाछ। वै. निघ.।

**छिन्नरुहः**। पुं। तिलकक्षुपे। रा. नि. व. १०।

**छिन्नरुहा**। सल्लकीवृक्षे। रा. नि. व. ११। गुडूच्याम्। रा. नि. व. ३। "छिन्नरुहातिक्तरोहिणी।" चि. यो. कफज्व. चि.। स्वर्णकेतकीवृक्षे। रा. नि. व. १०।

**छिन्नरूढ़शालिः**। पुं। रोपितशालौ। রোওয়া धान। See शालिः।

**छिन्नरोहा**। स्त्री। गुडूच्याम्। वा. सू. श्यामा-क. व.।

**छिन्नलता**। स्त्री। गुडूच्याम्। वै. निघ. २भ. कासचि. त्रिकटुकादिचूर्णे।

**छिन्नवेशिका**। स्त्री। पाठायाम्। আকনাদি। श. च.।

**छिन्नश्वासः**। पुं। पञ्चविधश्वासान्यतमे श्वास-रोगे। छिन्न श्वासरोग। लक्षणं—"यस्तु श्वसिति विच्छिन्नं सर्व्वप्राणेन पीड़ितः। न वा श्वसिति दुःखार्त्तो मर्म्मच्छेदरुगर्द्दितः। आनाहस्वेदमूर्च्छार्त्तो दह्यमानेन वस्तिना। विप्लुताक्षः परिक्षीणः श्वसन् रक्तैकलोचनः। विचेताः परिशुष्कास्यो विवर्णः प्रलपन्नरः। छिन्नश्वासेन विच्छिन्नः स शीघ्रं विज-हात्यसून्॥" मा. नि.।

**छिन्नांशुका**। स्त्री। लिङ्गनाशरोगे, दृष्ट्युप-सर्गविशेषे। "विषमच्छिन्नदग्धाभा सरुक् छिन्नांशुका स्मृता।" वा. उ. १४ अ.।

**छिन्ना**। स्त्री। गुड़ूच्याम्। रा. नि. व. ३। महानीलकण्ठरसे। महाश्रावणिकायाम्। रा. नि. व. ५। सल्लकीवृक्षे। रा. नि. व. ११। कन्द-गुड़ूच्याम्। वै. निघ।

**छिन्नाङ्गी**। स्त्री। गुड़ूच्याम्। वै. निघ.।

**छिन्नोद्भवा**। स्त्री। गुड़ूच्याम्। रा. नि. व. ३। सि. यो. जीर्णज्वरे।

**छिन्नोन्नतकुक्षिः**। स्त्री। सविषजलौकाभेदे। ছিনে জোঁক। सु. सू. १३ अ.।

**छिरिण्टः (ण्डः) (ण्टी)**। पुं, स्त्री। पातालगरुड़ीलतायाम्। हिं छिरिहिटा। मद.। भा.।

**छिलो**। स्त्री। छिलिहिण्टायाम्। वै. निघ.।

**छुछुन्दरः (री)**। पुं, स्त्री। चुचुन्दर्याम्। ছুঁচো। हिं छुछुन्दर। तत्पर्य्यायः,—गन्धमूषी (हे.), चिक्कः, वेश्मनकुलः, पुंध्वजः, गन्धमूषिकः (त्रि.), गन्धमूषिका (ह.) राजपुत्री, प्रतिमूषिका, सुगन्धिमूषिका, गन्धशुण्डिनी, शुण्डिमूषिका (रा.), गन्धाखुः, गन्धनकुलः, चुचुः (हा.)। तद्दष्टे विड्भेदः ग्रीवास्तम्भो जृम्भनञ्च भवति। सु. कल्प. ६ अ.।

**छुरम्**। क्लो। कपिकच्छुमूले। আলকুশীর মূল। वै. निघ.।

**छुरण्डः**। पुं। पक्षिणि। शब्दर.।

**छुरा**। स्त्री। सुधायाम्। চূণ। हारा.।

**छुरिकः**। पुं। सप्तपर्णवृक्षे। प. मु.।



**छुरिका**। स्त्री। बन्ध्यायाम् गवि। पालङ्कशाके। भा.। अस्त्रभेदे। छूरि। तत्पर्य्यायः,—शस्त्री, असिपुत्री, असिधेनुका (अ.), छुरी (भ.), खुरी, क्षुरी, कृपाणिका, धेनुपुत्री (हे.), छुरिका शब्दर.)।

**छुरिकापत्री**। स्त्री। श्वेतानामक्षुपे। रा. नि. व. ५।

**छुरिपत्रिका**। स्त्री। वृश्चिकालीलतायाम्।

**छुरी**। स्त्री। छुरिकास्त्रे। हे.। छूरी।

**छेकः**। पुं। गृहासक्तपक्षिणि। मृगे। मे.।

**छेदः**। पुं। खण्डे। त्रिका.। व्रणादिच्छेदने। स चतुर्व्विधः गोतीर्थकः सर्व्वतोभद्रः दललाङ्गलकः लाङ्गलकाख्यश्च। "पार्श्वं गतेन शस्त्रेण छेदो गोतीर्थको मतः। सर्व्वतः सर्व्वतोभद्रः पार्श्वच्छेदो-ऽर्द्धलाङ्गलः। पार्श्वद्वये लाङ्गलकः॥" तत्र गोतीर्थकः काव्यगत-गोमूत्रिकाकारः। सर्व्वतो-भद्रः भद्रकाव्याकारः। य एकस्मिन् पार्श्वे छेदः दरलाङ्गलकः। कुटासहितहलाकारः पार्श्वद्वये यश्छेदः स लाङ्गलकाख्यः सम्पूर्णहलाकारः। वा. उ. २८अ. अरुणः।

**छेदकम्**। क्लो। कान्तलौहे। रा. नि. व. १३।

**छेदनम्**। क्लो। द्विधाकरणे, कर्त्तने। वायुजन्य-व्रणवेदनायाम्। सु. सू. २२अ.। कफादिनाशकौ-षधवर्गे। यथा त्रिकटु।

**छेदनीयः**। पुं। कतकवृक्षे। निर्म्मली। रा. नि. व. ११।

**छेदारः**। पुं। शल्लकी-नाम जन्तुभेदे। शब्दर.। সজারু।

**छेदी**। त्रि। विश्लेषकरे। वा. सू. टी. हेमा.। पुं। कतकवृक्षे। वै. निघ.।

**छेद्यः**। त्रि। निःशेषं छेदार्हे। ते च भगन्दरा-दयो रोगाः। सु. सू. ५ अ.। पुं। कपोत-पक्षिणि। र.।

**छेद्यकण्ठः**। पुं। पारावते। रभ.।

**छेलिका**। स्त्री। छाग्याम्। भा.।

**छेलुः**। पुं। सोमराज्याम्। श. च.।

**छोटिका**। स्त्री। अङ्गुलिध्वनौ। তুড়ি। हिं चुट्की। भा.।

**छोदः**। पुं। चूर्णे। सि. यो. दाह. चि.। "चन्दन-क्षोदवारिणा।"

**छोलङ्गः**। पुं। मातुलुङ्गवृक्षे। টাবা নেবু। प. मु.।

**छोहारा**। स्त्री। शुष्कमहाखर्ज्जूरे। खर्ज्जूरी गोस्तनाकारा परद्वीपादिहागता। जायते पश्चिमे देशे सा छोहारेति कीर्त्त्यते॥" भा.। See खर्ज्जूरी।

---

# ज।

**जः**। पुं। मृत्युञ्जये। मे.। विषे। तेजसि। श. र.।

**जकुटम्**। क्लो। वार्त्ताकुपुष्पे। বেগুনফুল। अचि. २ स्थान. ५६ अ.। पुं। कुक्कुरे। मे.।

**जकूटः**। पुं। मलयपर्व्वते। कुक्कुरे। मे.।

**जगच्चक्षुः (स्)**। पुं। सूर्य्ये। हे.।

**जगत्**। क्लो। सौराष्ट्रमृत्तिकायाम्। पञ्च-पर्पटी। भैष, ज्व. चि. प्राणेश्वररसे। पृथिव्याम्।

**जगत्प्राणः**। पुं। वायौ। अ.।

**जगत्साक्षी (न्)**। पुं। सूर्य्ये।

**जगती**। स्त्री। पृथिव्याम्। मे.। गवि। के.।

**जगतीरुहः**। पुं। वृक्षे।

**जगदुन्मादका**। स्त्री। सुरायाम्। वै. निघ.।

**जगनुः**। पुं। अग्नौ। कीटभेदे। विश्व.। श. र.।

**जगलः**। पुं। कादम्बर्य्याः सुराया घनतरभागे। ভেতো বা পাঁচী মদ। शार्ङ्ग.। गुणाः—पाचनो ग्राही रूक्षः भेदःकृत् विष्टम्भी दोषपाचनश्च। वा. टी. हेमा.। सुराकल्क। মদের মেতা। तत्-पर्य्यायः,—मेदकः (अ.), मद्यपङ्कः (हे.)। गुणाः—"ग्राह्युष्णो जगलः प्रोक्तो रूक्षस्तृट्कफ-

शोफहृत् ॥" सु. सू. ४६ अ.। मदनवृक्षे। ময়না গাছ। पिष्टकसुरायाम्। मे.। क्ली। गोमये। र. मा.।

**जग्धम्।** त्रि.। भुक्ते। अ.।

**जग्धिः।** स्त्री। भोजने। रा. नि. व. २०।

**जग्मिः।** स्त्री। वायौ। कै.।

**जघनः।** पुं। शरीरावयवे, कटिप्रदेशे। नितम्ब-श्वरमं श्रोणेः स्त्रीणां जघनमग्रतः।" रा. नि. व. १८। कट्यधःस्थाने। वै. निघ.।

**जघनकूपकौ।** पुं। सन्धिखल्लद्वये। हला.।

**जघनेफला।** स्त्री। काकोदुम्बरिकायाम्। কাকডুমুর। अम.। ज. द. ११अ.।

**जघन्यम्।** क्ली। शिश्ने। मे.।

**जङ्गमकुटी।** स्त्री। तृणादिच्छत्रे। त्रिका.।

**जङ्गमविषम्।** क्ली। सर्पादिविषे। तच्चाश्रय-भेदेन षोडशधा। ते चाश्रयाः दृष्टिनिःश्वासदंष्ट्रा-नखमूत्रपुरीषशुक्र-लालार्त्तव-मुखसन्दंशविशर्द्धित-गुदास्थिपित्तशूकशवादयः। तत्र दृष्टिनिःश्वास-विषाः दिव्याः सर्पाः, भौमा दंष्ट्राविषाः, मार्जारश्व-वानरादयो दंष्ट्रानखविषाः, चिपिटादयो मूत्रविषाः, मूषिकाः शुक्रविषाः, लूताश्च लालामूत्रपुरीष-शुक्रार्त्तवादिविषाः, वृश्चिकादय आलविषाः, विष-हतास्थिसर्पकण्टकवरटामत्स्यास्थीनि चेति अस्थि-विषाणि, शकुलीमत्स्यादयः पित्तविषाः। सु. कल्प. ३अ.।

**जङ्गलम्।** क्ली। मांसे। निर्ज्जनदेशे। त्रिका.।

**जङ्गालम्।** क्ली। रञ्जनद्रव्यभेदे। জাঙ্গাল/রং। अर्क, चि. ९ शतकं। केदारे। तत्पर्य्यायः,— आलिः, सेतुः (ज.)।

**जङ्गुलम्।** क्ली। विषे। त्रिका.। जालिनीफले। श. र.।

**जङ्घा।** क्ली। गुल्फोर्द्ध जान्वधोभागे। জাঙ। रा. नि. व. १८। तत्पर्य्यायः,—प्रसृता (अ.), टङ्गा, टङ्कं, टक्किका (शब्दर.)।

**जङ्घा[illegible]।** क्ली। ऊरुमध्यस्थपर्व्वणि। वै. निघ.।

**जङ्घापिण्डिका।** स्त्री। जङ्घाद्वये। উভয় জঙ্ঘা। च. शा. ७अ.। इन्द्रवस्तौ। পায়ের ডিম্।

**जङ्घालः।** पुं। जाङ्गलमृगभेदे, एणहरिणर्ष्य-कुरङ्गकरालकृतमाल-शरभश्वदंष्ट्र-पृषतचारुष्कारमृग-मातृकाप्रभृतिषु मृगेषु। तन्मांसञ्च कषायं मधुरं लघु वातपित्तघ्नं तीक्ष्णं हृद्यं वस्तिशोधनञ्च। सु. सू. ४६ अ.।

**जङ्घालवर्गः।** पुं। जङ्घालजातीय मृगसमूहे। "हरिणैणकुरङ्गर्ष्य-वातायुर्मृगमातृकाः। राजीवः पृषतश्चैव जङ्घालाः शरभादयः॥" भा.।

**जङ्घाशूलम्।** क्ली। वातव्याधिभेदे। नि.।

**जङ्घास्थि।** क्ली। जङ्घानलकास्थनि, ते च द्वे। জঙ্ঘার নলা। च. शा. ७ अ.।

**जटरः।** पुं। उदरे। द्वि. कोषः।

**जटा।** स्त्री। भूम्यामलक्याम्। रा. नि. व. ५। रुद्रजटालतायाम्। रा. नि. व. ३। जटामांस्याम्। रा. नि. व. १२। शतावर्य्याम्। रा. नि. व. ४। वा. उ. ५ अ.। तरुमूले। वै. निघ। कपि-कच्छ्वां। र. मा.।

**जटाजूटः।** पुं। जटासमूहे।

**जटाज्वालः।** पुं। प्रदीपे। हा.।

**जटान्ता।** स्त्री। जटामांस्यां। भूम्यामलक्यां। वै. निघ.।

**जटामांसी।** स्त्री। (Valeriana jatámámsi.) स्वनामख्यातगन्धद्रव्यविशेषे। জটামাংসী। तत्पर्य्यायः,—नलदं, चक्रिनी, पेषी, मांसी, कृष्णजटा, जटी, किरातिनी, जटिला, लोमशा, तपस्विनी (र.), मिषिका (अ. टी.), भूतजटा, (भा.), क्रव्यादी, पिशिता, पिशी, पेशी, पेशिनी, जटा, हिंसा, मांसिनी, जटाला, नलदा, मेषी, तामसी, चक्रवर्त्तिनी, माता, अमृतजटा, जननी, जटावती, मृगभक्षा (रा.), जड़ामांसी, मिंषिः, मिषिः, मिसी, मिसिका, मिषि: (शब्दर.)। सा त्रिधा—साधारणजटामांसी सुगन्धजटामांसी सूक्ष्मजटामांसी चेति। विशेषाः पर्य्याये ज्ञेयाः। सा. गुणाः—सुरभिः कषाया कटुः शीतला कफ-हृत् भूतघ्नी दाहघ्नी पित्तघ्नी च। रा. नि. व. १२। तदनुलेपनं ज्वरघ्नं रुचताघ्नञ्च। राज.। तिक्ता कषाया मेध्या कान्तिदा बल्या स्वादुर्हिमा त्रिदोषरक्तदाहवीसर्पकुष्ठघ्नी च। भा.। रूपं यथा



—"असूक्ष्मकेसरा स्निग्धा मांसी पिङ्गजटाकृतिः।" भैष.।

**जटामांस्यादिः।** पुं। कफरोगे तदादिसुरभि-द्रव्यगणे। जटामांसी-नल्ली-पत्री-लवङ्ग-तगर-शिलारस-गन्धपाषाणेषु। रा. नि. व.।

**जटामूला।** स्त्री। शतमूल्याम्। শতমূলী। रा. नि. व. ४।

**जटायुः।** पुं। गुग्गुलौ। গুগ্গুল। प. मु.।

**जटारुद्रा।** स्त्री। रुद्रजटायाम्। रा. नि. व. ३। सुगन्धजटामांस्याम्। গন্ধমাংসী। रा. नि. व. १२।

**जटालः।** पुं। कर्च्चूरे। गुग्गुलौ। रा. नि. व. १२। मुष्ककवृक्षे। ঘণ্টাপারুল। वटवृक्षे। रा. नि. व. ११।

**जटाला।** स्त्री। जटामांस्याम्, गन्धमांस्याम्। সুগন্ধ জটামাংসী। रा. नि. व. १२।

**जटावती।** स्त्री। जटामांस्याम्। रा.नि.व. १२।

**जटावल्ली।** स्त्री। रुद्रजटायाम्। गन्धमांस्याम्। रा. नि. व. ३।

**जटिः (टी) (इन्))।** स्त्री, पुं। प्लक्षद्रुमे। পাকুড় গাছ। श.र.। प्रतुदपक्षिविशेषे। জটায়ু। च. सू. २७अ.। स्त्री। जटामांस्याम्। प. मु.।

**जटिका।** स्त्री। गुञ्जालतायाम्। वै. निघ.।

**जटिलः।** पुं। वटवृक्षे। प्लक्षवृक्षे। गुग्गुलौ। वै. निघ.। कर्च्चूरे। रा. नि. व. ६। दमनकक्षुपे। रा. नि. व. १०। तिले। रा. नि. व १६। सिंहे। श. च.। स्त्री। पिप्पल्याम्। मे.। उच्चटायाम्। र. मा.। शुक्लवचायाम्। वचायाम्। रा. नि. व. ६। श्वेतपुनर्नवायाम्। सुगन्धजटामांस्याम्। वै. निघ.। जटामांस्याम्। रा. नि. व. १२। वा. उ. ६अ. महापैशाचघृते। च. मु. ४अ.।

**जटु(डु)लः।** पुं। पिप्लौ। জড়ুল। अम. टी. अ.। See जतुमणिः।

**जठरः।** पुं, क्ली। कुक्षौ, उदरे। रा. नि. व. १८। कर्कटे। मे.। उदररोगे। त्रि। बद्धे। मे.।

**जठरघ्नः।** पुं। जलोदरे। रा. नि. व. २०।

**जठरज्वाला।** स्त्री। उदरशूले। পেটজ্বালা। वै. निघ.।

**जठरनुत्।** पुं। आरग्वधवृक्षे। শোন্দাল গাছ। श. च.।

**जठरयन्त्रणा।** स्त्री। गर्भयातनायाम्।

**जठरव्यथा।** स्त्री। उदरशूले। উদরবেদনা। वै. निघ.।

**जठरानलः।** पुं। कोष्ठाग्नौ।

**जठरामयः।** पुं। जलोदररोगे, उदररोगे। জল-উদরী, উদরী। रा. नि. व. २०।

**जठ(ड़)री।** स्त्री। गर्म्मटिकातृणे। তৃণ-বিশেষ। रा. नि. व. ८।

**जड़म्।** क्ली। शीषके। रा. नि. व. १३। जले। अ. टी. रा.। पुं। शरदि। वै. निघ.।

**जड़ता।** स्त्री। जाड्ये। रा. नि. व. २०।

**जड़सम्भवम्।** क्ली। शीतलजले। वै. निघ.।

**जड़ा।** स्त्री। शूकशिम्ब्याम्। আলাকুশী। प. मु.। भूम्यामलक्याम्। र. मा.।

**जतु(क)म्।** क्ली। जतुके। জৌ। लाक्षायाम्। লাহা। मे.। वै. निघ. २भ. क्षय.चि. लक्ष्मीविलास-तैले। शिलाजतुनि (कम्) हिङ्गुनि। হিং। भा.।

**जतुका।** स्त्री। लाक्षायाम्। हारा.। वास्तुके। वै. निघ.। चर्म्मचट्याम्। চামচিকী। श. र.। च. द. अपस्मा चि.। जनीनामगन्धद्रव्ये। अ. टी.। पर्पटीनामगन्धद्रव्ये। भा.। मालवे प्रसिद्धलता-विशेषे। रा. नि. व. ३। See जन्तुका।

**जतुकाजननी।** स्त्री। मक्षिकाविशेषे। वै. निघ.।

**जतुकारी।** स्त्री। जन्तुकालतायाम्। रा. नि. व. ३। अलक्तके। আল্তা। वै. निघ.।

**जतुकाश्मीरम्।** क्ली। कुङ्कुमे। वै. निघ.।

**जतुकाह्वा।** स्त्री। लाक्षायाम्। वै. निघ.।

**जतु(न्तु)कृत्।** स्त्री। जनीनामगन्धद्रव्ये। अम.। लाक्षायाम्। वै. निघ.।

**जतुकृष्णा।** स्त्री। पर्पटीनामगन्धद्रव्ये, जन्तुका-लतायाम्। भा.।

**जतुनी।** स्त्री। चर्म्मचटिकायाम्। त्रिका.।

**जतुपत्रिका।** स्त्री। चाङ्गेर्य्याम्। क्षुद्रपाषाण-भेदे। वै. निघ.।

**जतु(न्तु)मणिः** । पुं । क्षुद्ररोगविशेषे । জতুক, জরুড় । लक्षणं यथा—"नीरुजं सममुत्पन्नं मण्डलं कफरक्तजम् । सहजं रक्तमीषच्च श्लक्ष्णं जतुमणिं विदुः ॥" सु. नि. १३ अ. ।

**जतुमुखः** । पुं । रक्तमुखशालिधान्यविशेषे । लक्षण यथा—"लाक्षावर्णं मुखं यस्य श्रेयो जतुमुखस्तु सः ।" भा. पू. १भ. धान्यव. । अथ व्रीहिर्हीनगुणः ।

**जतुरसः** । पुं । अलक्तके । আল্‌তা । रा. नि. व. ६ ।

**जतुशिला** । स्त्री । शिलाजतुनि । वै. निघ. २भ. कृमि. चि. विड़ङ्गादितैले ।

**जतूकर्णः** । पुं । तन्त्रकारभेदे ।

**जतूका** । स्त्री । अजिनपत्रायाम् । চামচিকা পাখী । श. र. । जनीवृक्षे । अम. । वास्तूकभेदे । वै. निघ. ।

**जत्रु(क)म्** । क्ली । स्कन्धकक्षयोः सन्धौ । পাথুরা । रा. नि. व. १८ ।

**जत्र्वस्थि** । क्ली । स्कन्धकक्षासन्ध्यस्थनि । পাথুরার হাড় । ते च द्वे । च. शा. ७अ. ।

**जत्वश्मक(ज)म्** । क्ली । शिलाजतुनि । रा. नि. व. १३ । मनःशिलायाम् । वै. निघ. ।

**जनः** । पुं । लोके । मनुष्ये । अम. ।

**जनकम्** । क्ली । पद्माङ्गचन्दने । বকমভেদ । रा. नि. व. १२ ।

**जनकारी** (इन्) । पुं । अलक्तके । रा. नि. व. ६ ।

**जनचा** । स्त्री । छले । वै. निघ. ।

**जननम्** । क्ली । जन्मनि, उत्पत्तौ । मे. ।

**जननिः (नी)** । स्त्री । मञ्जिष्ठायाम् । कटुकायाम् । अलक्तके । रा. नि. व. ६ । जटामांस्याम् । रा. नि. व. १२ । जन्तुकालतायाम् । रा. नि. व. ३ । जनीनामकगन्धद्रव्ये, पर्पटीनामकगन्धद्रव्ये, पपरीति उत्तरदेशे । जटा. । श. र. । चर्मचट्याम् । চামচিকা । त्रिका. । वास्तूके । मञ्जिकायाम् । वै. निघ. । यूथिकायाम् । যূঁই ফুলের গাছ । श. च. ।

**जनप्रियः** । पुं । शोभाञ्जनवृक्षे । সজিনা গাছ । रा. नि. व. ७ । गोधूमे । नागरङ्गवृक्षे । নারঙ্গা লেবু । वै. निघ. । धान्यके । ধনে' । रा. नि. व. ६ ।

**जनप्रिया** । स्त्री । कुस्तुम्बुर्य्याम् । কাঁচা ধনে' ; हिं कोथम्बीर । रा. नि. व. २३ । हिलमोचिकायाम् ।

**जनरञ्जकः** । पुं । वनवास्तूके । वै. निघ. ।

**जनरञ्जनी** । स्त्री । जन्तुकालतायाम् । जनीनामसुगन्धद्रव्ये । वै. निघ. ।

**जनवल्लभः** । पुं । श्वेतरोहितकवृक्षे । শ্বেত রোড়া । रा. नि. व. ८ ।

**जनाशनः** । पुं । ईहामृगे, वृके । रा.नि.व. १९ ।

**जनाश्रयः** । पुं । गृहे ।

**जनिः (नी)** । स्त्री । वास्तूके । বেতো । वै. निघ. । उत्पत्तौ । अम. । स्वनामख्यातगन्धद्रव्ये । भ.टी.रा. । जन्तुकायाम् । कट्टुकायाम् । কটুকী । रा. नि. व ६ । (नी) सातलायाम् । वै. निघ. ।

**जनिनीलिका** । स्त्री । महानील्याम् । বড় নীল । रा. नि. व. ४ ।

**जनिष्ठा (नेष्टा)** । स्त्री । हरिद्रायाम् । रा. नि. व. । ६ । जातीपुष्पवृक्षे । रा. नि. व. १० । ऋद्धौ । रा. नि. व. ५ । जन्तुकालतायाम् । रा. नि. व. ३ ।

**जनेष्टः** । पुं । गन्धराजपुष्पवृक्षे । গন্ধরাজ ফুলের গাছ । रा. नि. व. १० ।

**जनोत्तमः** । पुं । शाकवृक्षे । শেগুন । प. मु. ।

**जन्तवम्** । क्ली । विड़ङ्गे । वै. निघ. २भ. अर्शः-चि. ।

**जन्तुः** । पुं । वाह्याभ्यन्तरक्रिमौ । वा. टी. हेमा. । प्राणिमात्रे । अम. ।

**जन्तुकः** । पुं । हिङ्गौ । अ. द. १२अ. । जन्तुकायाम् । वै. निघ. ।

**जन्तुकम्बुः (कः)** । पुं । कृमिशङ्खे । रा. नि. व. १९ ।

**जन्तुका** । स्त्री । लाक्षायाम् । रा. नि. व. ६ । मालवदेशप्रसिद्धस्वनामख्यातलतायाम् । हिं पापड़ी । तत्पर्य्यायः,—जतुकारी, जननी, चक्रवर्त्तिनी, तिर्य्यक्फला, निशान्धा, सुपविका, बहुपुत्री,



राजवृक्षा, जनेष्टा, कपिकच्छूफलोपमा, रञ्जनी, सूक्ष्मवल्ली, भ्रमरी, कृष्णवल्लिका, त्रिज्युलिका, कृष्णरुहा, ग्रन्थिपर्णी, सुवर्च्चिका, तरुवल्ली, दीर्घफला । गुणाः—शिशिरा तिक्ता रक्तपित्तकफघ्नी दाहतृष्णावमिहरा रुचिकृत् दीपनी च । रा. नि. व ३ । नाड़ीहिङ्गौ । पलदावग्राम् । भ्रमर्य्याम् । त्वचि । रा. नि. व. २३ ।

**जन्तुकारी** । स्त्री । जन्तुकालतायाम् । रा. नि. व. ३ । नाड़ीहिङ्गौ । अलक्तके । रा नि. व. ६ ।

**जन्तुघ्नम्** । क्ली । हिङ्गुनि । विड़ङ्गे । प. मु. । पुं । वीजपूरवृक्षे । টাবা গাছ । रा. नि. व. ११ । (घ्नी) स्त्री । विड़ङ्गायाम् । रा. नि. व. ६ । जन्तुकालतायाम् । वै. निघ. ।

**जन्तुजित्** । पुं । जम्बीरवृक्षे । জামীর গাছ । रा. नि. व. ११ ।

**जन्तुतन्तुः** । पुं । शणवीजे । वै. निघ. ।

**जन्तुनाशनम्** । क्ली । हिङ्गुनि । हिं । रा. नि. व. ६ । पुं । विड़ङ्गे । पारसीकयमान्याम् । वै. निघ. ।

**जन्तुपादपः** । पुं । कोषाम्रवृक्षे । জলপাই । रा. नि. व. ११ ।

**जन्तुफलः** । पुं । उदुम्बरवृक्षे । যজ্ঞডুম্বুর । रा. नि. व. ११ । क्ली । उदुम्बरफले । चि. क्र. क. अर्द्धावभेद. चि. ।

**जन्तुमत्फलः** । पुं । उदुम्बरवृक्षे । যজ্ঞডুম্বুর । वै. निघ. ।

**जन्तुमाता** । स्त्री । लाक्षायाम् । वै. निघ. । रक्तजक्रिमिभेदे । च. वि. ७अ. ।

**जन्तुमारी** । स्त्री । निम्बुकवृक्षे । গোঁড়ালেবু গাছ । रा. नि. व. ११ ।

**जन्तुरसः** । पुं । अलक्तके । আল্‌তা । रा. नि. व. ६ ।

**जन्तुला** । स्त्री । जन्तुकालतायाम् । জনীলতা । वै. निघ. । काशतृणे । त्रिका. ।

**जन्तुवृक्षः** । पुं । कोषाम्रवृक्षे । জলপাই । उदुम्बरवृक्षे । वै. निघ. ।

**जन्तुशत्रुः** । पुं । विड़ङ्गे । चि. क्र. क. कीशरञ्जने ।

**जन्तुहनन(रण)म्** । क्ली । विड़ङ्गे । वै. निघ. ।

**जन्तुहन्त्री** । स्त्री । विड़ङ्गायाम् । रा. नि. व. ६ ।

**जन्मबलप्रवृत्तः** । पुं । अयं रोगविशेषो यो मातुरपचारात्पङ्गु-जात्यन्ध-वधिर-मूकमिन्मिनवामनप्रभृतयो जायन्ते । स पुनर्द्विविधो रसकृतो दौहृदापचारकृतश्चेति । सु. सू. २४ अ. । एष आध्यात्मिकः ।

**जन्मवर्त्म** । क्ली । भगे । त्रिका. ।

**जन्युः** । पुं । जीवे । अग्नौ । मे. ।

**जपा (व्या)** । स्त्री । ओड्रपुष्पवृक्षे । জবাফুলের গাছ । तत्पर्य्यायः,—जवा (के.), ओड्रपुष्पं, त्रिसन्ध्या । सा द्विधा श्वेतरक्तभेदेन । गुणाः—कटूष्णा इन्द्रलुप्तघ्नी कृमिच्छर्द्दिकारी च । रा. नि. व. १० ।

**जपाकुसुमसन्निभम्** । क्ली । हिङ्गुले । वै. निघ. ।

**जपापुष्प(प्रसून)म्** । क्ली । जवायाम् । জবা ফুল । तच्च अगर्भसम्पादनगुणं । चि. क्र. क. गर्भ-चि. ।

**जपारक्तम्** । क्ली । जवापुष्पे । पुं । जपावृक्ष ।

**जमनम्** । क्ली । भोजने । अ. टी. भ. ।

**जम्बः** । पुं । जम्बीरवृक्षे । জামীর গাছ । र. मा. सं. ।

**जम्बा** । स्त्री । जम्बूफले । জাম । अम. ।

**जम्बालः** । पुं । केतकवृक्षे । श. र. । शैवाले । पङ्के । त्रिका. । हारा. । क्ली । सुगन्धतृणे । वै. निघ. ।

**जम्बालिनी** । स्त्री । पद्मिन्याम् । शब्दर. । नद्याम् । हे. ।

**जम्बि(म्बी, म्भी)रः (कः)** । पुं । (Citrus medica. Citrus acida.) स्वनामख्यातफलवृक्षे । গোঁড়ানেবু গাছ, জামীর । हिं जम्बीरी, निम्बू । मं इड़ । कं कंचिलि । ते' निम्मचेट्टु । मद. व. ६ । तत्पर्य्यायः,—दन्तशठः, जम्भः, जम्भीरः, जम्भलः (अ.), जम्भकः, जम्भरः (श.), दन्तहर्षणः, दन्तकर्षणः, गम्भीरः, जम्भिरः (शब्दर.), रेवतः, वक्त्रशोधी, दन्तहर्षकः (ज.), जम्भी, रोचनकः, मुखशोधी, श्वाद्यारिः । स

द्विविध: जम्बीरस्वल्पजम्बीरभेदेन । गुणा:— "जम्बीर: पाचनस्तीक्ष्ण: क्रिमिवातकफापह: । सुरभि-र्दीपनो रुच्य: मुखवैशद्यकारक: । कफानिलविष श्वासकासहीगन्धनाशन: । पित्तकृत् पार्श्वशूलघ्न: सरस: समुदाहृत: ॥" सु. सू. ४६ अ. । "स्वल्प-जम्बीरिका तद्वत् तृष्णाच्छर्द्दिनिवारणी ।" भा. । तत्फलमम्लमधुरं वातघ्नं पित्तकृत् पथ्यं पाचनं रोचनं बल्यमाग्नेयं । पक्वं तत् मधुरं कफदमनं पित्तरक्तदोषघ्नं वर्ण्यं वीर्य्यवर्द्धनं रुचिकृत् पुष्टिकृत् तर्पनञ्च । रा. नि. व. ११ । अत्यम्लं गुरु सुगन्धि दुर्ज्जरञ्च । राज. । मरुवकवृक्षे । গন্ধ তুলসী, নাগদনা । अर्ज्जकवृक्षे । ক্ষুদ্র তুলসী । सिताज्जके । শ্বেতপত্র ক্ষুদ্র তুলসী । रा. नि. व. २० । च. द. बाल. चि. ।

**जम्बीरिका** । स्त्री । जम्बीरभेदे । भा. ।

**जम्बु:** । पुं, स्त्री । जम्बूवृक्षे । জাম গাছ । क्षुद्रजम्बूवृक्षे । বন জাম গাছ । र. मा. सं. । नागदमन्याम् । 'गोलापजाम' इति ख्याते वृक्षे । वै. निघ. । क्ली । जम्बूफले । জাম । अम. । तत्पर्य्याय:,—जम्बू:, जाम्बवम् । श. ।

**जम्बुक:** । पुं । 'गोलापजाम' इति ख्याते वृक्षे । श. र. । केतकवृक्षे । प. मु. । शृगाले । रा. नि. व. १९ । श्योणाकभेदे । रा. नि. व. ९ ।

**जम्बुकलयम्** । क्ली । गन्धतृणे । भा. ।

**जम्बुड़िका** । स्त्री । खिन्नमाषे । रावणकुमार-तन्त्रे ।

**जम्बु(म्बू)ल:** । पुं । केतकवृक्षे । কেয়া গাছ । र. मा. । जम्बूवृक्षे । জামরুল । मे. । कर्णपाली-गतरोगविशेषे । सु. सू. १६ अ. ।

**जम्बवनजम्** । क्ली । श्वेतजवापुष्पे ।

**जम्बू:** । पुं, स्त्री । (Ugenia jambolana, Syn. Syzigium jambolanum) स्वनामख्यातमहातरौ । জাম গাছ । हिं जामूं । मं जाम्बुक । कं नेरिलुसा । तें नेरड़चेट्टु । तत्-पर्य्याय:,—जम्बु: (अ. टी. भ.), जम्बूल: (मे.), सुरभिपत्रा, नीलफला, श्यामला, महास्कन्धा, राजार्हा, राजफला, शुकप्रिया, मोदमोदिनी (रा.) । राजजम्बू-काकजम्बू-भूमिजम्बूभेदेन त्रिधा । तासां विशेषास्तत्पर्य्याये द्रष्टव्या: । सा. गुणा:—कषायमधुरा श्रमपित्तदाहकण्ठशोषघ्नी क्रिमिघ्नी श्वासातिसार-कफकासघ्नी विष्टम्भिनी पाचनी च । रा. नि. व. ११ । तत्फलगुणा:— "अत्यर्थं वातलं ग्राहि जाम्बवं कफपित्तजित् ।" सु. सू. ४६ अ. । गुरु स्वादु शीतलम् अग्निदुष्टि-करं रुचं वातलञ्च । राज. । "जम्बूर्ग्राही मधुरकफहा रोचनी वातहारी ।" अत्रि. १७ अ. । च. द. ज्वरातीसा. चि. कलिङ्गाद्य गु. जम्बुस्थिशस्ये । पृथुशिम्बश्योणाकवृक्षे । বড় শোণা গাছ । रा. नि. व. १० । नागदमन्याम् । रा. नि. व. ५ ।

**जम्बूक:** । पुं । शृगाले । ब्राह्म्यां । ব্রহ্মী শাক । मत्स्याक्ष्यां । वाराहीकन्दे । रा. नि. व. २३ । पीतलोध्रे । वै. निघ. । (का) स्त्री । कपिल-द्राक्षायाम् । रा. नि. व. ११ ।

**जम्बूद्वयम्** । क्ली । महाजम्बू: राजजम्बूश्चेति-द्वये । अरुणस्तु एका जम्बूर्वृहत्फला अन्या ह्रस्वफला काकजम्बूश्च । "जम्बूद्वयार्ज्जुन-कपीतनसोमवल्का: ।" वा. सू. १५ अ. । सु. सू. ३८ अ. । न्यग्रोधादि: ।

**जम्बूराज:** । पुं । वृहत्फलजम्बूभेदे ।

**जम्बूल:** । पुं । जम्बूवृक्षे । केतकपुष्पवृक्षे । मे. ।

**जम्भ: (क:)** । पुं । जम्बीरवृक्षे । জামীর গাছ । रा. नि. व. ११ । श. च. । वै. निघ. कास चि. लोकनाथपोट्टलीरसे । भक्षण । के । हनुदेशे । हे. च. । दन्ते । चका । मे. । क्ली । अन्न । पुं (क:) पातन्न ध्र । व. नि । तूणे ।

**जम्भका** । स्त्री । जृम्भायाम् । হাই তোলা । रा. नि. व. २० ।

**जम्भन: (ल:)** । पुं । अर्कवृक्षे । আকন্দ গাছ । रा. नि. व. १० । मरुवकवृक्षे । তুলসীভেদ । वै. निघ. । क्ली । मैथुने । (ल.) जम्बीरवृक्षविशेषे । प. मु. चिका. । मद. । रा. नि. व. ११ ।

**जम्भर:** । पुं । जम्बीरे । श. ।

**जम्भला** । स्त्री । सुखप्रसवस्मरणराक्षसीविशेषे । तथा—"समुद्रस्योत्तरे तीरे जम्भला नाम राक्षसी । तस्या: स्मरणमात्रेण विशल्या गर्भिणी भवेत् ॥" राजमार्त्तण्ड: । तूलके । तूला । वै. निघ. ।

**जम्भा** । स्त्री । जृम्भायाम् । হাই তোলা । कश्चित् । रा. नि. व. ११ ।

**जम्भारि:** । पुं । अग्नौ । वज्रे ।

**जम्भी (इन्)** । पुं । जम्बीरवृक्षे । श. च. ।



**जय:** । पुं । अग्निमन्थक्षुपे । গণিরী । भा. । पीतमुद्गे । সোণা মুগ । वै. निघ. ।

**जयकारिका** । स्त्री । लज्जालुकायाम् । লজ্জা-বতী লতা । वै. निघ. ।

**जयतरु:** । पुं । नन्दीवृक्षे । वै. निघ. ।

**जयदेव:** । पुं । रसामृतसंग्रहकारे ।

**जयद्रुम:** । पुं । वन्दायाम् । বান্দড়া । वै. निघ. ।

**जयनाल:** । पुं । यावनाले । জনার । वै. निघ. ।

**जयन्त:** । पुं । चन्द्रे । त्रि. ।

**जयन्तिका** । स्त्री । हरिद्रायाम् । रा. नि. व. ६ ।

**जयन्ती** । स्त्री । (Eachynomene sesban or Sesbania aculeatia.) स्वनाम-ख्याततिक्तशाकौषधिक्षुपे । জন্তির গাছ, ধন্চে গাছ । मं कं सोरिरि, तोगरसे । तत्पर्य्याय:,— जया, तर्कारी, नादेयी, वैजयन्तिका (अ.), जैवी (शब्दर.), बला, मोटा, हरिता, विजया, सूक्ष्म-मूला, विक्रान्ता, अपराजिता । गुणा:—गल-गण्डानिलभूतघ्नी तिक्ता कटु: उष्णा च । रा. नि. व. ४ । तत्पत्रं गरदोषघ्नं चक्षुष्यं मधुरं हिमञ्च । राज. ३प. । See बलमोटा । (कन्दर्पसारतैले, महाभवव्याम्) । स. कौ. । कपिकच्छौ । আলকুশী । रा. नि. व. ३ । हरिद्रायाम् । जयायाम् । विजयायाम् । रा. नि. व. २३ । अग्नि-मन्थे । আগ্গন্ত । भा. । श्वेतरक्तकाञ्चनद्वये । वचायाम् । मञ्जिष्ठायाम् । काञ्जिके । हरीतक्यां । श्वेतनिर्गुण्ड्याम् । श्वेतजयन्तीमूलस्य शिरसि धारणात् सर्व्वज्वरनाशो भवति । च. द. ज्वर. चि. । "मूलं जयन्त्या: शिरसि धृतं सर्व्व-ज्वरापहम् ।"

**जयपाल:** । पुं । स्वनामख्यातवृक्षे । जयपाल वृक्ष । जैपाल, जामालगोटा इति च भाषा । तत्पर्य्याय:,—जैपाल: (द्वि:), सारक: रेचक:, तिन्तिड़ीफलं, दन्तीवीजं, मलद्रावि, वीजरेचनं, कुम्भीवीजं, कुम्भिनीवीजं, घण्टावीजं, घण्टिनी-वीजं, निकुम्भाख्यवीजं, शोधनीवीजं, चक्रदन्तीवीजं । वीजगुणा:—तीक्ष्णमुष्णं सारकम् उत्क्लेदकरम् । कटुरुष्ण: क्रिमिघ्न: विरेचन: दीपन: कफवातघ्न: उदरामयघ्नश्च । रा. नि. व. ६ । "जयपालवीजशस्यं तप्ते स्थगोमयस्वरसे च । सन्तापितमुच्छूनं विशादनवद्यतां तदेवास्य ।" अनवद्यतां शुद्धत्वम्, उच्छूनं सिद्धमित्यर्थ: । सा. कौ. । अपि च । "खिन्नं गोमयतोये वा दुग्धे वा जयपालकं । खर्परे मृदु भृष्टं तत् नि:स्नेहं शुद्धिमृच्छति ॥" अत्रि. । जयपालवीजं निस्तुषं द्विधाकृत्य वीजमध्यस्थपत्रञ्च परित्यज्य अष्टमांशटङ्कणचूर्णेन विमिश्र्य च केश-यन्त्रेण दुग्धसंप्लुतं त्रिवारं भाव्यम् । तत्तैलं सार्ष-पादितैलवत् तैलपीड़नयन्त्रे निष्काश्यम् । गुणा: —अत्युग्ररेचकम् आनाहोदरघ्नं धनुस्तम्भसंन्यास-शिरोरोगघ्नं ज्वरघ्नमुन्मादहरमामवातशोथमेकाङ्ग-रोगञ्च मर्दनात् हन्ति कासञ्च हरति । अत्रि. । एरण्डवृक्षे ।

**जयमङ्गलरस:** । पुं । विषमज्वरघ्ने औषध-विशेषे । पाठ:—हिङ्गुलसम्भवं सूतं गन्धकं टङ्कणं तथा । ताम्रं वङ्गं माक्षिकञ्च सैन्धवं मरिचं तथा । एतत्समांशमाहृत्य द्विगुणं स्वर्णभस्मकं । तदर्द्धं कान्तलौहञ्च रूप्यभस्म च तत्समं । एतत् सर्व्वं विचूर्ण्याथ भावयेत् कनकद्रवै: । शेफालिकादलैर्वापि दशमूलरसेन च । किराततिक्तकै: क्वाथैस्त्रिवारं भावयेत् सुधी: । भावयित्वा तत: पश्चात् गुञ्जा-द्वयवटीकृता । अनु. मधु जीरकचूर्णञ्च । सा. कौ. । अन्य:—हिङ्गुलोत्थपारद: गन्धक: टङ्कणक्षार: ताम्रं वङ्ग स्वर्णमाक्षिकं सैन्धवलवणं मरिचचूर्णं प्र. समं, स्वर्णभस्म एतत्सर्व्वद्विगुणं स्वर्णभस्मार्द्धं कान्तलौहं तदर्द्धं रौप्यञ्च । एकत्र धुस्तूरपत्ररसेन शेफालिकापत्ररसेन दशमूलक्वाथेन किराततिक्त-कादिगणक्वाथेन च प्र. वारत्रयं भावयेत् । दशमूलं भाव्यद्रव्यपारदादिसमं वारि अष्टगुणम् अष्टमांश शिष्टं ग्राह्यम् । एवं किराततिक्तकादेरपि । अपर: —रससिन्दूरं अभ्रं रौप्यं मुण्डलौहं तीक्ष्णलौहं हरितालं स्वर्णमाक्षिकं चित्रकमूलं टङ्कणक्षारं त्रिकटुकं प्र. समभागं । पाठानिर्गुण्डीयष्टिमधुविल्व-मूलकषायेण दिनं मर्दयित्वा मूषया भूधरे पुटे पचेत् । अनु. दशमूलक्वाथ: । अस्याञ्जनं नस्यमपि हितम् । र. चि. रस. कौ. ।

**जया** । स्त्री । विजयायाम् । সিদ্ধি । भा. नासा-रोगचि. जवापुष्पवृक्षे । ब्राह्म्यां । महादन्तीवृक्षे । कपिकच्छाम् । वै. निघ. । अग्निमन्थवृक्षे । रा. नि. व. ९ । भा. कर्णकज्व. चि. । वा. उ. ६अ. । शमी-वृक्षे । रा. नि. व. ८ । नीलदूर्व्वायाम् । जयन्ती-वृक्षे । रा. नि. व. ४ । भैष. कुष्ठ. चि. कन्दर्पसार-तैले । च. द. यक्ष्म. चि. रसेन्द्रगुड़ी । हरीत-

क्याम्। रा. नि. व. ११। वै. निघ. संग्रहणी चि. तालीशचूर्णे। अपराजितायाम्। मद. व. १। शाल्मलीवृचे। वै. निघ. २भ. चय. चि. कनकसिन्दूरे।

**जयाञ्जन(मल)म्**। क्ली। स्रोतोऽञ्जनविशेषे। जहरपाथर इति पश्चिमदेशे। "स्रोतोऽञ्जनं नदीजञ्च कृष्णस्रोतो जयाञ्जनम्।" प्र. मु.।

**जयाद्वयम्**। क्ली। तकारी हरीतकी चेति द्वये। वा. सू. १५ अ.।

**जयापुष्पम्**। क्ली। जपापुष्पे। वै. निघ.।

**जयावटी**। स्त्री। ज्वराधिकारे। "विषं त्रिकटुकं मुस्तं हरिद्रा निम्बपत्रकं। विड़ङ्गमष्टमं चूर्णं छागमूत्रैः समं समम्। चणकाभा वटी कार्य्या साज्जया योगवाहिका॥" अत्र जयन्तीमूलचूर्णं तुल्यांशं देयं योगवाहिकत्वात्। र. सा. सं.।

**जयावहा**। स्त्री। नीलदूर्व्वायाम्। रा. नि. व. ८। भद्रदन्तीवृचे। दन्ती। रा. नि. व. ६।

**जयाश्रया**। स्त्री। गर्मूटिकाटणे। रा. नि. व. ८।

**जयाह्वा**। स्त्री। भद्रदन्तीवृचे। रा. नि. व. ६।

**जरकम्**। क्ली, पुं। हिङ्गुनि। वै. निघ.।

**जरठः**। त्रि। पाण्डौ। कठिने। मे.। जीर्णे। हे. च.।

**जरड़ी**। स्त्री। गर्मूठिकाटणे। घासविशेष। हिं जहर्। तत्पर्य्यायः,—गर्मूटिका, गर्म्भोटिका, सुनाला, जयाश्रया। गुणाः,—मधुरत्वं शीतलत्वम् सारकत्वं रुचिकरत्वं रक्तदोषदाहनाशित्वं पशूनां दुग्धवर्द्धकत्वञ्च। रा. नि. व. ८।

**जरणः**। पुं, क्ली। स्थूलजीरके। बड़ जीरा। रा. नि. व. ६। च. द. वातश्लेष्म ज्व. चि.। कृष्णजीरके। कासमर्द्दे। कालकासन्दा। हिङ्गुनि। रा. नि. व. २३। सौवर्चललवणे। सचल लवण। श. र.। कुष्ठौषधौ। कुड़। र. मा.। पीतजीरके। च. द. ज्व. चि.। स्त्री। कृष्णजीरके। रा. नि. व. ६।

**जरणद्रुमः**। पुं। अश्वकर्णनामलताशाले। लता शाल। रा. नि. व. ९।

**जरती**। स्त्री। वृद्धायाम्। रा. नि. व. १८।

**जरत्पित्तशूलम्**। क्ली। परिणामशूले। "वान्तमात्रे जरत्पित्ते शूलमाशु प्रशाम्यति।" रस. र.।

**जरद्गदः**। पुं। गटप्रपचिविशेषे।

**जरद्गवः**। पुं। वृद्धवृषे।

**जरन्तः**। पुं। महिषे। त्रिका.।

**जरमानः**। पुं। मनुष्ये। उणा.।

**जरा**। स्त्री। वार्द्धक्ये। अम.। चीरिकावृचे। श.।

**जराक्लैव्यम्**। क्ली। जराजन्यक्लैव्यरोगविशेषे। तस्य निदानलचणं यथा—"अथ प्रवयसां शुक्रं प्रायशः चीयते नृणां। रसादीनां चयाच्चैव तथैवावृष्यसेवनात्। बलवीर्य्येन्द्रियाणाञ्च क्रमेणैव परिचयात्। परिचयादायुषश्चाप्यनाहाराच्छ्रमात् क्लमात्। जरासम्भवजं क्लैव्यमित्येतैर्हेतुभिर्नृणाम्। जायते तेन सोऽत्यर्थं चीणधातुः सुदुर्व्बलः। विवर्णो विह्वलो दीनः चिप्रं व्याधिमथाश्नुते॥" च.।

**जरायुः**। पुं। अग्निजारवृचे। रा. नि. व. ६। गर्भाशये। गर्ड्भथलि वा आँओल। रा. नि. व. १८। स चर्म्माकारः सूक्ष्मश्च। तस्य स्थानञ्च गुदमूत्राशयमध्यभागः। यथा—"गुदमूत्राशयान्तःस्थो जरायुर्गर्भमन्दिरं। जरायुपार्श्वे नाड्यौ द्वे डिम्बनाड्यौ प्रकीर्त्तिते॥" अत्रि.। "या तु चर्म्माकृतिः सूक्ष्मा जरायुः सा निगद्यते।" तन्त्रान्तरम्।

**जरायुजः**। त्रि। जरायुजाते प्राणिमात्रे, पशुमनुष्यव्यालादौ। अम.। "शुक्रशोणितयोर्योगस्तस्मिन् सञ्जायते यतः। तत्र गर्भो भवेद्यस्मात्तेन प्रोक्तो जरायुजः॥' तन्त्रान्तरम्।

**जरायुदोषः**। पुं। गर्भजरोगभेदे। वै. निघ.।

**जरालक्ष्म**। क्ली। पलिते। रा. नि. व. १८।

**जराशोषः**। पुं। वार्द्धक्यजन्यचीणतारोगे। लचणं—"जराशोषी कृशो मन्दवीर्य्यबुद्धिबलेन्द्रियः। कम्पनोऽरुचिमान् भिन्नकांस्यपात्रहतस्वरः। ष्ठीवति श्लेष्मणा हीनं गौरवारुचिपीड़ितः। सम्प्रस्नुतास्यनासाचः शुष्करूचमलच्छविः॥" मा. नि.।

**जरूथम्**। क्ली। मांसे। त्रिका.।

**जर्ज्जरः**। पुं। रक्तरसोने। मद. व. ७। क्ली। शैवाले। शैलजे। मे.। त्रि.। वृद्धे। रा. नि. व. १८।

**जर्ज्जरीकः**। त्रि। बहुच्छिद्रद्रव्ये। झाँझरी। मे.।

**जर्णः**। त्रि। जीर्णे। हे. च.। पुं। वृचे। चन्द्रे। मे.।



**जर्त्तः (र्त्तुः)**। पुं। करिणि। योनौ। उणा.।

**जर्त्ति(र्हि)लः**। पुं। आरण्यतिलके। বুনো তিল। हे. च.। रा. नि. व. २३।

**जलम्**। क्ली। बालके। वाला। च सू. ३ अ.। भा. बालज्व. चि.। वा. सू. १५ अ. एलादौ। जलवेतसे। उदके। जल। तत्पर्य्यायः,—मेघप्रसवः (रा.), आपः, वाः, वारि, सलिलं, कमलं, पयः, कीलालं, अमृतं, जीवनं, भुवनं, वनं, कवन्धं, उदकं, पाथः, पुष्करं, सर्व्वतोमुखं, अम्भः, अर्णः, तोयं, पानीयं, नीरं, चीरं, अम्बु, सम्बरं, मेघपुष्पं, घनरसः (अ.), प्रजाहितं (शब्दमा.), प्राणदं (हे.), आपम्, सरिलं, सलं, जड़ं, कं, अन्धं, कमन्धं, उदं, दकं, नारं, शम्बरं, अभ्रपुष्पं, घनरसं, घृतं (भ), पाथं, कृतस्तं (मे.), पर्य्यं, (वि.), पीथं, यादोनिवासः, जीवनीयं, कुलीनसं, कुलीनं (हे.), पिप्पलं, कुशं, विषं, काण्डं, सवरं, सरं, कपीटं, चन्द्रोरसं, सदनं, कर्व्वुरं, व्योम, सम्बं, सरः, इराः, वाजं, तामरं (ज), कम्बलं, स्यन्दनं, सम्बलं, जलपीथं, चरं, ऋतं, ऊर्ज्जं, कोमलं, सोमं, नारा (शब्दर.), कृतसं (के.), चद्मः, चोदः नभतः, मधु, पुरीषं, रेतः, कशः, जन्म, वृबुकं, वुसं, तुग्या, वर्व्वुरं, सुसेम, धरुणं, सुरा, अरविन्दानि, धम्मन्वतु, जामि, आयुधानि, चपः, अहिः, अचरं, स्रोतः, तृप्तिः, रहसः, रसः, भेषजं, सहः, शरः, षहः, ओजः, सुखं, चत्रं, आरयाः, शुभं, यादुः, भूतं, भविष्यत्, आपः, महत्, व्योम, यशः, नहः, सर्णीकं, स्वृतीकं, सतीनं, गहनं, गभीरं, गम्भरं, ईं, अन्नं, हविः, सद्म, योनिः, ऋतस्ययोनिः, सत्यं, रियः, सत्, पूर्णं, सर्व्वं, अचितं, वर्हिं, नाम, सर्पिः, अपः, पवित्रं, इन्द्रः, हेम, स्वः, सर्गाः, सम्बरं, अम्बं, वपुः, अम्बु, तूर्यं, तोयं, शुक्रं, तेजः, स्वधा, दर्भं, जलाषं (वेदनि.)। जलस्य षड़्दोषा भवन्ति—स्पर्श-रूप-रस-गन्ध वीर्य्य-विपाकाख्याः। तत्र स्पर्शदोषे खरता पैच्छिल्यमुष्णता, रूपदोषे पङ्कसिकताशैवालबहुवर्णता च, रसदोषे व्यक्तरसता, गन्धदोषे अनिष्टगन्धता, वीर्य्यदोषे तृष्णादिकं सेवनात्, विपाकदोषे च विष्टम्भादिकं जनयति। जलस्य कलुषताप्रसाधनं सप्त—कतक-गोमेद-विसग्रन्थि-शैवालमूल-वस्त्र-मुक्ता-मणय इति। जलस्य निचेपणं पञ्च। फलादिशीतीकरणञ्च सप्त-प्रवातस्थापनादि। सु. सू. ४५ अ.। सा. गुणाः—मधुरं शीतलं तृष्णाघ्नं शोषमोहभ्रान्तिघ्नं भुक्तान्नपाचकं निद्रालस्यहरं विषघ्नं श्रमहरं रुचिजनकं धीबलवीर्य्यतुष्टिपुष्टिकरणञ्च। "साधारणं जलं रुच्यं दीपनं पाचनं लघु। श्रमतृष्णापहं वातकफभेदघ्नपुष्टिदम्॥ पात्रदेशादिभेदेन जलगुणाः यथा—"जातं ताम्रमृदस्तदेव सलिलं वातादिदोषप्रदं देशाज्जाड्यकरञ्च दुर्ज्जरतरं दोषावहं धूसरम्। वातघ्नन्तु शिलाशिरोत्थममलं पथ्यं लघु स्वादु च श्रेष्ठं श्याममृदस्त्रिदोषशमनं सर्व्वामयघ्नं पयः।" रा. नि. व. १४। "तच्चादौ द्विविधमान्तरीचभौमभेदेन। तयोरान्तरीचं जलमनिर्द्देश्यरसम् एकान्ततः पथ्यतमञ्च। तदेवावनिपतितमन्यतमं रसमुपलभते स्थानविशेषान्नद्यादिष्ववस्थितमिति। तत्र स पृथिव्यादीनामन्योन्यानुप्रवेशकृतः सलिलरसः भवत्युत्कर्षापकर्षेण, तत्र स्वगुणभूयिष्ठायां भूमौ लवणमम्लञ्च भवति, अम्बुगुणभूयिष्ठायां मधुरं, तेजोगुणभूयिष्ठायां कटुकं तिक्तञ्च, वायुगुणभूयिष्ठायां कषायं, आकाशगुणभूयिष्ठायामव्यक्तरसञ्चेति।" सु. सू. ४५ अ.। अन्तरीचोद्भवं जलं पुनः धारं कारकं तौषारं हैममिति चतुर्धा। तत्र धारमष्टविधम्—"धारं पृथिव्यां पतितं पयस्तु तत्रैव जातं गुणभेदभिन्नं। नानाविधैर्भेदगुणैश्च सम्यक् जातं जलञ्चाष्टविधं वदन्ति। नद्यौद्भिदं प्रास्रवणञ्च चौण्ट्यं कौपं तड़ागं सरसीभवञ्च वाप्युद्भवं तत्प्रवदन्ति धीराः।" नदीजलम् औद्भिदादिकञ्च पर्य्याये द्रष्टव्यम्। तत्र कारं जलं यथा—"स्वर्णद्याः शीतवातेन मेघविस्फूर्ज्जसङ्कुलम्। शीताम्बु कठिनं भूत्वा शिलं जातं हिमेन तु। पश्चात् सुसूर्य्यसन्तापात्किञ्चिद् वै द्रवते जलम्। वर्षन्ति मेघाः सलिलं शकलं शीतलं मतम्॥ गुणाः कारं शीतगुणैः श्रमोपशमनं शोषार्त्तिनिर्नाशनम् मूर्च्छामोहशिरोऽर्त्तिनाशनकरं हिक्कावमेर्वारणं। शोफानां व्रणिनान्तु दोषशमनं पित्तात्मिकानां हितं संसत्सु प्रवरं गुणैः प्रतिदिनं तस्मान्न दूरे कृतम्॥" इति। "तौषारं लघु शीतलं श्रमहरं पित्तार्त्तिशान्तिप्रदं दोषाणां शमनं जलार्त्तिहननं सर्व्वामयघ्नं परं। कुष्ठश्लीपदवर्च्चिकाविषहरं पामाविसर्पापहं चीणानां चतशोषिणां हितकरं संसेव्यते मानवैः॥" हैमजलगुणाः—"हैमं घनञ्च मधुरञ्च कफात्मकञ्च मूर्च्छार्त्तिसंशमनमामविनाशनञ्च। पित्तासृजः प्रशमनं रुधिरचतञ्च शान्तङ्करोति हिमसम्भववारि सद्यः॥" भूमिविशेषे जलगुणाः—"भूमिः पञ्चविधा ज्ञेया कृष्णा रक्ता तथा सिता। पीता नीला भवेच्चान्या गुणा-

**ज्यावा** । स्त्री । धनुर्गुणे । शब्दर. ।

**ज्येष्ठतोयाम्लम्** । क्ली । काञ्जिके ।

**ज्येष्ठबला** । स्त्री । महाबलायाम्, सहदेव्याम् । रा नि. व. ४ ।

**ज्येष्ठा** । स्त्री । कदलीवृक्षे । गृहगोधिकायाम् । टिकटिकि । त्रिका. । तर्ज्जन्याम् । वै. निघ. ।

**ज्येष्ठामलकः** । पुं । निम्बवृक्षे । रा. नि. व.९ ।

**ज्येष्ठामूलीयः** । पुं । ज्यैष्ठमासे । वै. निघ. ।

**ज्येष्ठाम्बु (म्बः)** । क्ली । तण्डुलोदके । চেলুনির জল । च. द. उन्मा. चि. । प्रस्तुतप्रणाली यथा,—कुट्टितं तण्डुलपलं जलेऽष्टगुणिते क्षिपेत् । भावयित्वा जल ग्राह्यं देयं सर्व्वेषु कर्म्मसु ॥ शालितण्डुलपानीयं ज्ञेयं ज्येष्ठाम्बु-संज्ञितम् ॥ वै. । "शृताज्ज्येष्ठाम्बुनिर्म्मितम् ।" सुश्रुते । विका. । बा उ. २६ अ. ।

**ज्येष्ठी** । स्त्री । गृहगोधायाम् । টিকটিকি । त्रिका. । तत्पर्य्यायः,—मूषली, मुसली, कुड्यमत्स्या, गृहगोधिका, मूली, कुकुटी, शकुनज्ञा, गृहपालिका । शब्दर. ।

**ज्येष्ठीमधु** । क्ली । यष्टिमधुनि । वै. निघ. ।

**ज्योतिः (स्)** । पुं । चित्रकवृक्षे । क्ली । रक्तचन्दने । वै. निघ. । मेथिकायाम् । रा.नि.व.६ । हृष्टी मे. । स्त्री । ज्योतिष्मतीलतायाम् ।

**ज्योतिःसोमम्** । क्ली । रक्तचन्दने । मद. ।

**ज्योतिरिङ्गः (णः)** । पुं । खद्योते । श. र. । धूम्याटपक्षिणि । वै. निघ. ।

**ज्योतिर्लता** । स्त्री । ज्योतिष्मतीलतायाम् । লতাফট্‌কী । रा. नि. व. ३ ।

**ज्योतिर्वीजम्** । क्ली । खद्योते । त्रिका. ।

**ज्योतिषी** । स्त्री । तारकायाम् । हे. ।

**ज्योतिष्कः** । पुं । अग्निमन्थे । গণিরি । र.मा. । चित्रकवृक्षे । मेथिकाबीजे । रा. नि. व. ६ । स्त्री (का) । ज्योतिष्मत्याम् । अ.टी.स्वा. । सु.चि. ९अ. । वचायाम । वै. निघ. ।

**ज्योतिष्मती** । स्त्री । ( Cardiospermum halicacabum. ) स्वनामख्यातलतायाम् । লতাফট্‌কী, বন উচ্ছে । तें वेक्कुड्‌तीगे । हिं मालकंगुणी, काकुमर्द्दनिका । काकुन्दलीतिः । सु. सू. ३९अ. । तत्पर्य्यायः,—पारावताङ्घ्रि कटभी, पिन्या (अ.), ज्योतिष्का (अ. टी. स्वा.), निफला (भा.), पारावतपदी, लगणा, स्फुटवन्धनी, पूतितैला, इङ्गुदी (र.), स्वर्णलता, अनलप्रभा, ज्योतिः, लता, सुपिङ्गला, दीप्ता, मेध्या, मतिदा, दुर्ज्जरा, सरस्वती, अमृता । सा द्विधा लघुदीर्घभेदेन । सा. गुणाः—अतितिक्ता किञ्चित्कटुः रुक्षा वातकफघ्नी दाहप्रदा दीपनी च । विशेषेण द्वितीया मेधाप्रज्ञावृद्धिकरी । रा. नि. व. ७ । तीक्ष्णा व्रणविस्फोटघ्नी । राज. । "ज्योतिष्मती कटुस्तिक्ता सरा कफसमीरजित् । अत्युष्णा वामनी तीक्ष्णा वह्निवृद्धिस्मृतिप्रदा ॥" भा. ।

**ज्योतिष्मतीतैलम्** । क्ली । तत्फलोत्थतैले । লতাফট্‌কীর তৈল । गुणाः—तिक्तोष्णं वातघ्नं पित्तघ्नं मेधाप्रज्ञाबुद्धिवर्द्धनञ्च । रा. नि. व. १५ ।

**ज्योतीरथः** । पुं । निर्विषसर्पविशेषे । सु. कल्प. ४अ. । See सर्पः ।

**ज्योत्स्ना (त्स्निका) (त्स्नी)** । स्त्री । ज्योतिष्मत्याम् । লতাফট্‌কী । रेणुकबीजे । श. च. । चन्द्रिकायाम् । চন্দ্রকিরণ । गुणाः—त्रिदोषघ्नी दाहास्रक्‌पित्तनाशिनी । राज. । कोषातक्याम् । শ্বেত ঘোষা । र.मा. । पटोलिकायाम् । ঝিঙা । अम. ।

**ज्योत्स्नाप्रियः** । पुं । चकोरे । हे. च. ।

**ज्योत्स्नावृक्षः** । पुं । दीपाधारे । पिलसुज् । त्रि. । प्रदीपे । शब्दर. ।

**ज्यो(ज्यौ)त्स्नी** । स्त्री । पटोलिकायाम् । अ. । पटोले । रा. । रेणुकायाम् । श. ।

**ज्वरः** । पु । सर्व्वरोगप्रधानरोगविशेषे । জ্বর । हिं बोखार, ज्वर । ज्वरोत्पत्तिः—दक्षापमानसंक्रुद्धरुद्रनिःश्वासेन सम्भूतत्वात् ज्वरः स्वभावत पैत्तिक इति बोद्धव्यः, यत उक्तं चरकेण । "क्रोधात्पित्त" मित्यादि । तेन सर्व्वज्वरेषु पित्तोपशमनी चिकित्सा कर्त्तव्या । भा. । ज्वरस्य मूर्त्तिः—सर्व्वभूततापनः त्रिपात् त्रिशिराः महोदरः कपिलवर्णो व्याघ्रचर्म्मवासा माल्यधारी पिङ्गलनेत्रः ह्रस्वजङ्घः विकृताकारो भस्मभूषिताङ्गो महाबलवान् लोकनाशाय लोकेऽवतिष्ठते । सु. । तस्य प्रकृतिः—"तस्य प्रकृतिरुद्दिष्टा दोषाः शारीरमानसाः । देहिनं न हि निर्द्दोषं ज्वरः समुप



सेवते ॥" ज्वरस्य संख्यारूपसम्प्राप्तिः—ज्वरोऽष्टधा, वातिकः पैत्तिकः श्लैष्मिकश्चेति त्रयः, द्वन्द्वजाश्च त्रयः—वातपैत्तिकः वातश्लैष्मिकः पित्तश्लैष्मिकश्चेति, सान्निपातिकः आगन्तुकश्चेति साकल्येन अष्टधा । सान्निपातिकज्वरः त्रयोदशविध इति । चर. । See सन्निपातज्वरः । शार्ङ्गधरस्तु पञ्चविंशतिभेदानाह यथा—पृथग्दोषैस्त्रिधा, द्वन्द्वजभेदेन च तथा, सन्निपातेन चेकः ; विषमज्वरः पञ्चधा—सन्ततसततान्येद्युष्कतृतीयकचातुर्थकभेदेन ; आगन्तुरेक एवेति त्रयोदशविधः ; आगन्तुः पुनस्त्रिधा, अभिघातजः चतुर्धा, अभिषङ्गजश्च पञ्चविध इति पञ्चविंशतिधा । शार्ङ्ग. पू. ख. ७अ. । ज्वरस्य विप्रकृष्टकारणं—मिथ्याहारविहारादि—तेन वातादय आमाशयगता ज्वरं जनयन्तीति सम्प्राप्तिः । तस्य रूपं—श्रमारतिविवर्णता मुखवैरस्यनेत्रप्लवताजृम्भाङ्गमर्द्द-गुरुतारोमहर्षारुचि-तमोऽप्रहर्ष शीतादिकं शीतवातातपेषु मुहुरिच्छाद्वेषौ च भवन्ति । तस्य सामान्यलक्षणं—स्वेदावरोधादि । सामान्यतो ज्वरचिकित्सा—सामान्यतो ज्वरे पूर्व्वं निवातानलये वासः । व्यजनानिलः तालपत्रवातः वंशव्यजनजवायुः चामर-वस्त्र-मयूरपुच्छ वेतसव्यजनवायुश्च । तथा गुरुणावसनावरणं यथर्त्तु-पक्वपानीयव्यवहारश्च । ज्वरे वर्ज्यं स्नानप्रदेहादिकम् । भा. म. १भ. । ज्वरादौ लङ्घनं मध्ये पाचनं अन्ते च भेषजं प्रयोक्तव्यम् । प्राणिभेदे तदसाध्यता—"असाध्योऽयं ज्वरो व्याधिः गोमहिषाश्वकुञ्जरे । किञ्चित् कृच्छ्रतमो नृणामन्येषां जीवघातकः ॥ यथा मृगाणां मृगयुर्बलिष्ठः तथा गदानां प्रबलो ज्वरोऽयम् । नान्योऽपि शक्तो मनुजं विहाय सोढुं भुवि प्राणभृतः सुराद्याः ॥" नरस्य ज्वरसहत्वे कारणं—"कर्म्मणा लभते यस्माद्देवत्वं मानुषो दिवि । तत्रैवाच्युतः स्वर्गान्मानुष्यमभिवर्त्तते । तस्मात स देवभावात्तु सहते मानुषो ज्वरमिति ॥" अग्नि. । प्राणिविशेषे ज्वरनाम यथा—"पालकः स तु नागानामभितापस्तु वाजिनाम् । गवामीश्वरसंज्ञस्तु मानवानां ज्वरो मतः । दारिद्रो महिषाणाञ्च मृगरोगो मृगेषु च । अजावीनां प्रलापाख्यः करभेष्वलसो भवेत् । शुनोऽलर्कः समाख्यातो मत्स्येष्विन्द्रमदो मतः । पक्षिणामभिघातस्तु व्यालेष्वक्षितसंज्ञितः । गुल्मस्य नलिका प्रायो भूमेरूषरनामतः । वृक्षस्य कोटराख्यस्तु ज्वरः सर्व्वत्र दृश्यते ॥" अग्नि, २ स्थान, २ अ. ।

**ज्वरकुञ्जरपारीन्द्ररसः** । पुं । विषमज्वरे रसः । यथा—"मूर्च्छितं रसकर्षैकं तदर्द्धं जारिताभ्रकं । तारं ताप्यञ्च रजतं रसकं ताम्रकं तथा । मौक्तिकं विद्रुमं लौहं गिरिजं गैरिकं शिला । गन्धकं हेमसारञ्च पलार्द्धञ्च पृथक् पृथक् । चीरायी सुरवल्ली च शोथघ्नी गणिकारिका । भाटामला ज्योत्स्निका च सतिक्ता च सुदर्शना । अग्निजिह्वा पूतितैला सूर्पपर्णी प्रसारणी । प्रत्येकं स्वरसं दत्त्वा मर्द्दयेत्त्रिदिनावधि । भक्षयेत्पर्णखण्डेन चतुर्गुञ्जाप्रमाणतः ॥"...... । মূর্চ্ছিত রস ২ তো. জারিত অভ্র ১ তো. স্বর্ণমাক্ষিক, স্বর্ণ, রৌপ্য, খাপর, তাম্র, মুক্তাভস্ম, প্রবালভস্ম, লৌহভস্ম, শিলাজতু, গিরিমাটী, মনছাল, গন্ধক, তুঁতেভস্ম প্র. ২ তো. । থিরুই, তুলসী, শ্বেতপুন্না, গণিরি, ভুঁই আমলা, চিরাতা, পদ্মগুলঞ্চ, ঈশলাঙ্গুলিয়া, লতাফট্‌কী, পটোল, মুগানী, গন্ধভাদালিয়া, প্রত্যেকের রসে ৩ দিন মাড়িবে । र.सा.सं. ।

**ज्वरघ्नः** । पुं । वास्तूकभेदे । स्त्री । गुडूच्याम् । रा. नि. व. ३।२३। मञ्जिष्ठायाम् । वास्तूके । वै. निघ. ।

**ज्वरघ्नी** । स्त्री । स्वनामख्यातचिल्लीशाके । रा. । मञ्जिष्ठायाम् ।

**ज्वरघ्नी(वटिका)** । स्त्री । ज्वरे रसः । शुद्धजैपालबीजं १ तो. कटुकी २ तो. गैरिकं १ तो. घृतकुमारीरसेन मर्द्दयेत् । শুদ্ধ জয়পালবীজ ১ তো. কট্‌কী ২ তো. গেরিমাটী ১ তো. ঘৃতকুমারীরসে মর্দ্দন । বটী ১ কলায় । भा. । अन्या—रसः १ तो. शिलाजतु पिप्पली हरीतकी अक्रकरा(वचा) कटुतैलशुद्धगन्धकं इन्द्रवारुणीफलं प्र. ४ तो. इन्द्रवारुणीरसेन मर्द्दयेत । পারা ১ তো. শিলাজতু, পিপুল, হরীতকী, আকরকরা বচ, কটুতৈলে শুদ্ধ গন্ধক এবং রাখালশশার ফল প্রত্যেক ৪ তো, রাখালশশামূলের রসে মর্দ্দন । বটী ১ মাষকড়াই । शार्ङ्ग । अपरा—पारदः १ तो. गन्धकः २ तो. हिङ्गुलं ३तो. जैपालबीजं ४तो दन्तीक्वाथेन मर्द्दयेत् । পারা ১ তো. গন্ধক ২ তো. হিঙ্গুল ৩ তো. জয়পালবীজ ৪ তো. দন্তীক্বাথে মর্দ্দন । रस. र. ।

**ज्वरविनाशनी**। स्त्री। ज्वरनिदानचिकित्सा-संग्रहे शार्ङ्गधरकृते।

**ज्वरनाशनः**। पुं। पर्पटके। ক্ষেৎপাপড়া। स्त्री (शिनी)। मञ्जिष्ठायाम्। गुड़ूच्याम्। वै. निघ.।

**ज्वरहन्त्री**। स्त्री। मञ्जिष्ठायाम्। रा. नि. व ६।

**ज्वराग्निः**। पुं। ज्वरसन्तापे। জ্বরের তাপ।

**ज्वराङ्गी**। स्त्री। भद्रदन्त्याम्। दन्ती। रा. नि. व. ६।

**ज्वरातङ्कः**। पुं। ज्वररोगे। रा. नि. व. २०।

**ज्वरातिसारः**। पुं। ज्वरयुक्तातिसाररोगे।

**ज्वराधिष्ठानम्**। क्ली। शरीरे मनसि च। "केवलं समनस्कञ्च ज्वराधिष्ठानमुच्यते।" च. चि. ३ष.।

**ज्वरान्तकः**। पुं। किराततिक्तके। চিরেতা। आरग्वधवृक्षे। रा. नि. व. ९।

**ज्वरान्तकरसः**। पुं। ज्वरे रसः। ताम्रं गन्धकः पारदः सौराष्ट्रमृत् (पङ्कपर्पटी) लौहं स्वर्णमाक्षिकं हिङ्गुलं टङ्कणक्षारः(সোহাগার খৈ) रसाञ्जनं स्वर्णभस्म प्र. समभागं चित्रकादीनां (चित्रक-गुड़ूची-मुस्ता-शुण्ठीनां प्र ॥० तोलं वारि ॥० श.) पादावशिष्टेन क्वाथेन मर्द्दयेत्। रस.कौ.।

**ज्वरापहा**। स्त्री। बिल्वशलाटौ। श.। বেলশুঁঠ।

**ज्वरारिः**। पुं। गुड़ूच्याम्। रा नि. व. २३। ज्वरे रसविशेषः। पारदः गन्धकः हिङ्गुलं ताम्रं शीषं टङ्कणं (সোহাগার খৈ) विडलवणं मनःशिला एषां प्र. समभागः। आरग्वधपत्ररसेन १० भावना देयाः। भैष.। अन्यः—पारदः १भ. गन्धकः २ भ. हिङ्गुलं ३ भ. धुस्तूरबीजं ४ भ.। दन्तीक्वाथेन मर्द्दयेत्। रस. कौ।

**ज्वरारि (अभ्रम्)**। क्ली। जीर्णज्वरे रसः। अभ्रं ताम्रं पारदः गन्धकः विषं, एषां समभागः। धुस्तूरबीजम् एकभागापेक्षया द्विगुणं त्रिकटु मिलित-पञ्चगर्थं जलेन वटी कार्य्या। অভ্র, তামা, পারা, গন্ধক, বিষ প্রত্যেক সমভাগ, ধুতুরার বীজ ২ ভ. ত্রিকটু মিলিত ৫ ভ. জলে মাড়িবে। र. सा. सं.।

**ज्वराशनिः**। पुं। विषमज्वरे रसः। रसः गन्धकः सन्धवं विषं ताम्रं प्र. समभागः, सर्व्वसमं लौहचूर्णं लौहसमम् अभ्रम्। लौहपात्रे लौहदण्डेन निर्गुण्डीरसेन सम्मर्द्य तेन सह पारदसमभाग मरिचचूर्णं मिश्रयेत। রস, গন্ধক, সৈন্ধব, বিষ, তামা প্রত্যেকে সমভাগ। সর্ব্বসমান লৌহ-চূর্ণ, লৌহসমান অভ্রভস্ম। লৌহপাত্রে লৌহদণ্ডে নিশিন্দারসে মাড়িয়া তাহার সহিত পারার সমান মরিচচূর্ণ মিশ্রিত করিবে। र. सा. सं.।

**ज्वरिः**। पुं। ज्वररोगे। रा.।

**ज्वरितः**। त्रि। ज्वरार्त्ते। रा.।

**ज्वरी** (इन्)। त्रि। ज्वरयुक्ते।

**ज्वलः**। पुं। के.। अग्निशिखायाम्।

**ज्वलत्प्रभा (न्ती)**। स्त्री। कृष्णसर्षपे। वै. निघ.।

**ज्वलनः**। पुं। चित्रकवृक्षे। अम.। भा, ४भ.। नाड़ीव्रण-चि.। अग्नौ।

**ज्वलनात्मा (श्मा)**। पुं। सूर्य्यकान्तमणौ। प. मु.। रा. नि. व, १३।

**ज्वलनाभः**। पुं। गन्धतृणे। वै. निघ.।

**ज्वल(लि)नी**। स्त्री। मूर्व्वायाम्। मूर्गा। रा. नि. व. ३। अग्निशिखायाम्। हे.।

**ज्वाला**। स्त्री। धातकीवृक्षे। चित्रकवृक्षे। वै. निघ.। दग्धान्न। श च।

**ज्वालाखरगदः**। पुं। जालगर्द्दभकरोगे। नि. २।

**ज्वालागर्द्दभकः**। पुं। जालगर्द्दभकरोगे।

**ज्वालाजिह्वः**। पुं। अग्नौ। हे.।

**ज्वालानलरसः**। पुं। अजीर्णाधिकारे सर्ज्जिक्षारः यवक्षारः पारदः गन्धकः पञ्चकोलम इति नव द्रव्यं प्र. समं, सर्व्वतुल्या जया (সিদ্ধি) जयाई शिग्रुत्वक् (সজিনার ছাল) चूर्णं। जया-शिग्रुचित्रकभृङ्गराजरसेन प्र. दिनत्रयं भावयित्वा शुष्कः लघुपुटेन पाच्यः। उद्धृत्य आर्द्रकरसेन ७ भावना देयाः। र. सा. सं.। मतान्तरे टङ्कणमपि ग्राह्यम्। भावप्रकाशे क्षारत्रयं पाठः।



**ज्वालामरिचकः**। पुं। कटुवीरायाम्। গাছ মরিচ। See कटुवीरा।

**ज्वालामुखरसः**। पुं। ग्रहण्यधिकारे। "शुद्ध-सूतं समगन्धं सुवर्णं मरिचं समं। रक्तचित्रकजै-द्रावैः जलमण्डूपिकाद्रवैः। दिनैकं मर्द्दयेत् खल्ले चतुर्गुञ्जाञ्च भक्षयेत् ॥" পারা, গন্ধক, স্বর্ণ, মরিচ প্রত্যেক সমভাগ, রক্তচিতার রস ও পানার রসে ১ দিন মর্দ্দন করিবে। रस. कौ.।

**ज्वालामुखी**। स्त्री। सूर्य्यावर्त्ते। के.। अग्नि-मुख्याम्। उल्कामुखीनाम शृगालभेदे।

**ज्वालारासभकः**। पुं। जालगर्द्दभकरोगे। रा. नि. व. २०।

---

## झ।

**झटा (आमला)**। स्त्री। भूम्यामलक्याम्। ভূঁই আমলা। भा. नि.। वै. निघ.।

**झटिः**। पुं। क्षुद्रवृक्षे। उ.।

**झण्टी**। स्त्री। कुन्दतृणे। वै. निघ.।

**झम्पाकः (कः)**। पुं। वानरे। मर्कटे। वै. निघ.। श. र.।

**झम्पाशी** (इन्)। पुं। जलकाके। পানকৌড়ী। वै. निघ.। मत्स्यरङ्के। जटा.।

**झम्पी** (इन्)। पुं। वानरे। श. र.।

**झरः**। पुं। (रा,री) स्त्री। निर्झरे। अ.।

**झर्झरः**। पुं। सुगन्धिद्रव्यभेदे। शब्दविशेषे। अ.। नदविशेषे। मे.।

**झर्झरिका**। स्त्री। धूमस्याम्। দালের রুটী। गुणाः धूमसीशब्दे मृग्याः।

**झर्झरीकः**। पुं। शरीरे। उणा.।

**झला**। स्त्री। झिल्लिकायाम्। वै. निघ.।

**झलिः**। स्त्री। क्रमुके। শুপারি। वै. निघ.।

**झल्लकण्ठः**। पुं। पारावते। हारा.।

**झल्लिका**। स्त्री। उद्वर्त्तनपटे मले च। मे.।

**झषः (सः)**। पुं। मत्स्ये। अम.। जलचरभेदे। वा. उ. ५।

**झषलोचना**। स्त्री। मत्स्याक्ष्याम्। वै. निघ.।

**झसश्रेष्ठः**। पुं। रोहितमत्स्ये।

**झषा (सा)**। स्त्री। गोरक्षतण्डुलायाम्, नाग-बलायाम्। प. मु.। अम.।

**झषाशनः**। पुं। शिशुमारे। त्रिका.।

**झाटः**। पुं। व्रणमार्ज्जने। मे.। घण्टापाटल-वृक्षे। शब्दर.।

**झाटलः**। पुं। घण्टापाटलायाम्। ঘণ্টাপারুল। अम.।

**झाटा (आमला)**। स्त्री। भूम्यामलक्याम्। अम.। ज्वरकुञ्जरपारीन्द्ररसे मृग्या। यूथिकायाम्। যূঁই। श. च.।

**झाटिका (टी)**। स्त्री। भूम्यामलक्याम्। श. च.। जातीपुष्पवृक्षे। वै. निघ.।

**झामकम्**। क्ली। दग्धेष्टकायाम्। ঝামা ইট। हारा.।

**झालिः**। स्त्री। व्यञ्जनभेदे, झारीति भाषा। तत्साधनं यथा—"आममाम्रफलं पिष्टं राजिका-लवणान्वितं। भृष्टहिङ्गुयुतं पूतं घोलितं झालि-रुच्यते। झालिर्हरति जिह्वाया कुण्ठत्वं कण्ठ-शोधनी। मन्दं मन्दं निपीता सा रोचनी वह्नि-बोधनी ॥' भा.।

**झावुः (कः, का)**। पुं, स्त्री। वृक्षविशेषे। ঝাউ গাছ। श. र.। तत्पर्य्यायः,—पिचुलः, झावुः, झाबुः (शब्दर), आकलः, बहुग्रन्थिः (श.)।

**झिङ्गाकम्**। क्ली। कर्कटीभेदे। फलशाक-विशेषे। ঝিঙা গাছ। खटर, झिमनीति पाश्चात्ये। गणाः—तिक्त मधुरम् आमवात-मन्दाग्निकरञ्च। राज. ३ प.।

**झिङ्गिनी (ङ्गी) (ल्ली)**। स्त्री। जिङ्गिन्याम्। ঝিঙে। भा.। वै. निघ.।

**झिञ्झिनी** । स्त्री । जिङ्गिन्याम् । झिंঙে । वै निघ. ।

**झिञ्झिरिण्टिका (ण्टा) (रीटा)** । स्त्री । स्वनामख्यातक्षुपविशेषे । झिंझिरीटा इति लोके । तत्पर्य्यायः,—फला, पीतपुष्पा झिञ्झिरा, रीमाश्रयफला, वृत्ता । गुणाः—शीता कषाया रक्तातिसारघ्नी सन्तपथ्री वृष्या महिषीदुग्धवर्द्धनी च । रा. नि. व. ४ ।

**झिण्टिका (ण्टी) (रीटिका)** । स्त्री । (Barlaria crstata, or B. Prionitis.) पुष्पवृक्षविशेषे । ঝাঁটী গাছ, কুলঝাঁটী । हिं कटसरैया । तत्पर्य्यायः,—सौरीयकः (श.), कण्टकुरण्टः, सैरेयकः, झिण्टिका (रा.) । श्वेत-नील पीत-रक्तपुष्पभेदेन सा चतुर्धा । सैरेयकः श्वेतपुष्पः सैरेयः कटसारिका । सहाचरः सहचरः स च भिन्नापि कथ्यते ॥ कुरुण्टकोऽत्र पीतः स्यात् रक्तः कुरवकः स्मृतः । नीलो वाणाह्वयोरक्तो दासी आर्त्तगलश्च सः ॥" भा. । सा. गुणाः—कटुका: तिक्ता दन्तरोगघ्नः शूलघ्नः वातकफश्लेष्मकासत्वग्दोषशमन्यश्च । रा. नि. व. १० । "सैरेयः कुष्ठवातास्रकफकण्डूविषापहः । तिक्तोष्णो मधुरोऽनम्लः सुस्निग्धः केशरञ्जनः ॥" भा. । तृणधान्यभेदे । गुणाः श्यामाकवत् । च. सू. २७ अ ।

**झिल्लिकण्ठः** । पुं । पारावते । त्रिका. ।

**झिल्ली** । स्त्री । कीटविशेषे । ঝিঁঝি । तत्पर्य्यायः,—झिल्लिका, झिल्लीका, झिविका, झिरुका, झिरी, चीलिका, चिल्लीका, चिल्ली, चीरुका (शब्दर.), चीरी, झिञ्झी (अ.), चिरुका (अ. टी.), करीया (उ.), कच्छा, भीरुका (मे) ।

**झुण्टः** । पुं । स्तम्बे । गुल्मे । ঝোড় । श. ।

**झूनिः** । पुं । क्रमुके । শুপারি গাছ । मे. ।

**झेण्डूः** । स्त्री । तन्नामकक्षुपे । रा. नि. व. ५ ।

**झोड़ः** । पुं । क्रमुकवृक्षे । শুপারি গাছ । भूरिप्र. ।

---

# ट ।

**टः** । पुं । वामने । पादे । मे. ।

**टम्** । पुं । करङ्के । নারিকেলের মালা ।

**टक्कदेशीयः** । पुं । वास्तुकशाके । त्रि. । जङ्घायाम् । शब्दर. ।

**टगरः** । पुं । टङ्कणक्षारे । সোহাগা । त्रि । केकराक्षे । मे. ।

**टङ्कः (कः)** । पुं । धरणे, शाणमाने, २४ रक्तिके वा । प. प्र. १ख. । क्ली । नीलकपित्थे । मे. । गुणाः—"शीतं कषायं मधुरं टङ्कं मारुतकृद्गुरु ।" सु. सू. ४६ अ. । टङ्कणक्षारे । मे. । ज्व. चि. पञ्चवक्त्ररसे । जङ्घायाम् । हे. च. । राजाम्रे । থাস আম । भा. । रजतमुद्रायाम् । पाषाणदारणे ।

**टङ्कणः** । पुं । टङ्कणक्षारे । সোহাগা । हे. च. । वै. निघ. ज्व. चि. मृतसञ्जीवन्याम् ।

**टङ्कदेशजः (शीयः)** । पुं, क्ली । वास्तूकशाकविशेषे । টক্কদেশীয় বেতো । प. मु. ।

**टङ्कनलः** । पुं । आम्रे । वै. निघ. ।

**टङ्का** । स्त्री । जङ्घायाम् । मे. ।

**टङ्कानकः** । पुं । वृक्षविशेषे । ब्रह्मदारुवृक्षे । তুঁৎ গাছ । श. च. ।

**टङ्कारी** । स्त्री । स्वनाम्नैव प्रसिद्धे क्षुपविशेषे टेकारीति भाषा । गुणाः—"टङ्कारी वातजित्तिक्ता श्लेष्मघ्नी दीपनी लघुः । शोथोदरव्यथाहन्त्री हिता पीठविसर्पिणाम् ॥" भा. ।

**टङ्गः** । पुं । क्ली । टङ्कणक्षारे । श. । चतुर्माषकपरिमाणे । वै. । खनित्रे । जङ्घायाम् । मे. ।

**टङ्कणः (नः)** । पुं, क्ली । खनिजोपरसविशेषे । সোহাগা । हिं मं टङ्कणक्षार । तत्पर्य्यायः,—पाचनकः, मालतीतीरजः, लोहश्लेषणः, रसशोधनः (हे.), टङ्कः (मे.), टङ्कणक्षारः, रङ्गः, क्षारः, रङ्गदः, रसाधिकः, लोहद्रावी, रसघ्नः, सुभगः, वर्त्तूलं, कनकं, क्षारं, मलिनं, धातुवल्लभं, कनकक्षारः (रा.), द्रावकः, लोहशुद्धिकारकः



(भा.), स्वर्णपाचकः (र.), टङ्गः, टङ्कणः । वै. । रस. र. ग्रहणीकवाटरसे । स द्विविधः साधारणश्चेतभेदेन । प्रथमगुणाः—अग्निकरो रूक्षः कफघ्नः वातपित्तकृच्च । भा. पू. १भ, धातुव. । कटुः उष्णः कफघ्नः स्थावरादिविषघ्नः कासश्वासघ्नश्च । द्वितीयगुणाः—स्निग्धः कटूष्णः वातकफघ्नः आमक्षयहरः श्वासविषकासमलहरश्च । रा. नि. व. ६ । श्लेष्मवातघ्नः क्षाररसः तीक्ष्णः उष्णः अग्निवर्द्धकः । रूक्षः भेदकः बलवर्द्धनश्च । "टङ्कणः कामणष्टङ्गः सम्यक् क्षारश्च पाचनः । सुभगो मालतीजातो द्रवो लोहविशुद्धिदः ॥" तच्छुद्धिः—"आदौ टङ्कणमादाय काञ्जिकाम्ले विनिःक्षिपेत् । एकरात्रात् समुद्धृत्य रौद्रयन्त्रे विभावयेत् । नरमूत्रगतं टङ्कं गवां मूत्रगतं तथा । दिनान्ते तत् समुद्धृत्य जम्बीराम्बुगतं ततः । जम्बीराम्लात् समुद्धृत्य नारिकेलस्य पातके । मरीचचूर्णसंयुक्तं क्षालयेच्छीतलाम्बुना ॥" र. सा. सं. ।

**टङ्कारः (कः)** । पुं । वृक्षविशेषे । তুম্দ গাছ । श. र. ।

**टङ्गिणी** । स्त्री । पाठायाम् । श. च. ।

**टट्टनी** । स्त्री । गृहगोधिकायाम् । টিক্‌টিকি ।

**टट्टरी** । स्त्री । पटहवाद्ये । मे. ।

**टण्टुकः** । पुं । पीतलोध्रे । वै. निघ. ।

**टलनम्** । क्ली । हृद्रोगे । वै, निघ. ।

**टा** । स्त्री । पृथिव्याम् । एकाक्षरको. ।

**टाङ्कमाध्वीकम्** । क्ली । मद्यभेदे । "शतावरी टङ्कमूलं लक्ष्मणपत्रमेव च । मधुना सह सन्धानात् टाङ्कमाध्वीकमीरितम् ।" तन्त्रं ।

**टारः** । पुं । अश्वे । हे. च. ।

**टिटि(ट्टि)भः (कः)** । पुं । पक्षिविशेषे । তিতির পাখী । अ. टी. । तत्पर्य्यायः,—टीटीभकः, टिटिभकः (शब्दर.), टिटिभः (के.), टिट्टिभकः, कोयष्टिकः (अ.), टिटिभकः (अ. टी.) ।

**टिण्टिनिका (नी)** । स्त्री । जलशिरीषे । भा. ।

**टिण्टुकः** । पुं । श्योणाकवृक्षे । वा. उ. ३७अ. । पीतलोध्रे । वै. निघ. ।

**टिण्डिशः** । पुं । डिण्डिशे । ঢেঁড়শ । हिं ढेड़शी, भिण्डी, रामतरु । भा. ।

**टीटिभकः** । पुं । टिट्टिभपक्षिणि । श. र. ।

**टुण्टु(ण्ठु)कः** । पुं । श्योणाकवृक्षे । अम. । श्योणाकभेदे । रा. नि. व, २३ । ज. द. १२ अ. । च. द. माषतैले । स्वर्णलोध्रवृक्षे । সোণালু । वै. निघ. । पक्षिविशेषे । টুনটুনী পাখী । श. र. । कृष्णखदिरे । श. च. ।

**टुण्टुका** । स्त्री । पाठायाम् । आकनादि । टङ्गिनीवृक्षे । श. च. ।

**टुनाका** । स्त्री । तालमूल्याम् । श. च. ।

**टेन्दुकः** । पुं । श्योणाकवृक्षे । শোণা, সোণালু । वैद्यकम् ।

**टेरः (कः)** । त्रि । काणे । वक्रनेत्रे । টেরা । श. र. ।

**टोलाफलः** । पुं । मधूकवृक्षे । वै. निघ. ।

---

# ठ ।

**ठः** । पुं । शिवे । चन्द्रमण्डले । सूर्य्यमण्डले । महाध्वनौ । एकाक्षरको. ।

**ठक्कदेशीयः** । पुं । वास्तूके । त्रिका. ।

---

## ड ।

**डः** । पुं । वाड़वाग्नौ । मे. ।

**डङ्ग(ङ्गा)रिः (री)** । स्त्री । फलशाकलता-विशेषे । ঢেঁড়শ, চিচিঙ্গা । मं डागर । कं डंगर । तत्पर्य्यायः,—डाङ्गरी, दीर्घर्व्वीरुः, दण्डरी, डङ्गारी नामग्रन्थी, गजदन्तफला । गुणाः—शीतला रुच्या वातपित्तरक्तदोषघ्नी शोषघ्नी जाड्यमूत्ररोधहरौ तर्पणी गौल्या । बालफलगुणाः—सुमधुर शीतलं पित्तघ्नं तृष्णादाहघ्नं रुच्यं सन्तर्पणं पुष्टिकरं वीर्य्योद्रेककरं बलकरं भ्रमघ्नं श्रमहरं । पक्वं तत् गुरु तृष्णादाहरक्तञ्च कुरुते । रा. नि. व. ७ । See चिचिण्डः ।

**डण्डमत्स्यः** । पुं । मत्स्यविशेषे । দাঁড়িকা মাছ । वै. निघ. ।

**डमरुयन्त्रम्** । क्ली । औषधपाकार्थं डमरुका-कारयन्त्रविशेषे । तल्लक्षणं यथा,—"यन्त्रं डमरु संज्ञं स्यात्तत् स्थाल्योर्मुद्रिते मुखे ।"

**डल्लकम्** । क्ली । वंशनिर्म्मितपात्रे । ডালা ।

**डल्वणः** । पुं । निबन्धसंग्रहकारे ।

**डहुः (हूः)** । पुं । लकुचवृक्षे । ডেহুয়া ফল, ডেলো মান্দার । श. र. । तत्पर्य्यायः,—लकुचः, लिकुचः (श.) । फलगुणाः—गुरु विष्टम्भि त्रिदोष-शुक्रदोषकरञ्च । राज. ।

**डाङ्गरः (री)** । पुं, स्त्री । अलाबुविशेषे । वै. निघ. । डङ्गरीफले । ঢেঁপা । रा. नि. व. ७ ।

**डालिमः** । पुं । दालिम्बवृक्षे । দাড়িম গাছ । श. टी. भ. ।

**डाहकः** । पुं । दात्यूहपक्षिणि । ज. ।

**डाहुकः** । पुं । हरिणविशेषे । वै. निघ. । दात्यूहपक्षिणि । जटा. ।

**डिडिमः** । पुं । प्रत्युदजातीयपक्षिणि । सुश्रु. ।

**डिडि(ण्डि)माणक** । पुं । प्रतुदपक्षिजातौ । सु. सू. ४६ अ. । च. सू. २७अ. ।

**डिण्डः (ण्डकः)** । पुं । रक्तैरण्डे । वै. निघ. ।

**डिण्डिमः** । पुं । करञ्जवृक्षे । वै. निघ. । क्षुद्र-पाकफले । পানী আমলা ।

**डिण्डि(ण्डी)रः** । पुं । समुद्रफेने । हे. च. । नकुल. १३ अ. ।

**डिण्डिशः** । पुं । फलशाकविशेषे । ঢেঁড়শ । मं ढेड़शीफल । वै. निघ. २भ. अतिसा. पथ्य. । तत्पर्य्यायः,—रोमशफलः, तिन्डिशः, मुनिनिर्म्मितः (रा.), डिण्डिशः । गुणाः—रुचिकृत् भेदनः पित्त-श्लेष्मघ्नः शीतलो वातलः मूत्रलः अश्मरीहरो रुक्षश्च । भा. पू. १भ. शाकव. ।

**डिण्डीरमोदकम्** । क्ली । गृञ्जने । গাজর । रा. नि. व. ७ । लशुने । रक्तमूलके । वै. निघ. ।

**डितिका** । स्त्री । बालरोगे । वै. निघ. ।

**डिम्बः (म्भः)** । पुं । शिशौ । रा. नि. व. १८ । उदररोगे । मूत्राशये । गर्भाशये । वै. निघ. । क्ली । फुस्फुसे । हारा. । अण्डे । प्लीह्नि । পিলে । मे. ।

**डिम्बिका** । स्त्री । जलमक्षिकायाम् । वै. निघ. । श्योणाकवृक्षे । कामुक्याम् । श. र. ।

**डिम्भा** । स्त्री । अतिबालिकायाम् । रा. नि. व. १८ ।

**डुङ्गरी** । स्त्री । अलाबूभेदे । ঢেঁড়শ । वै. निघ. ।

**डुण्डुः** । पुं । द्विमुखसर्पे । त्रिका. ।

**डुण्डुभः** । पुं । जलसर्पे । ঢোঁড়া সাপ । अम. । तत्पर्य्यायः,—राजिलः (श.), दुण्डुभः (भ.), नागभृत्, डुण्डुः (त्रि), धोँड़ः (शब्दर.) ।

**डुण्डुलः** । पुं । क्षुद्रपेचके । रा. नि. व. १९ । तत्पर्य्यायः,—क्षुद्रोलूकः, शाकुनेयः, पिङ्गलः, वृक्षाश्रयी, वृहत्रावी, विशालाक्षः भास्करः ।

**डुन्दुकः** । पुं । हरिणभेदे । पक्षिभेदे । ডাক পাখী । वै. निघ. ।

**डुम्बुरः** । पुं । काकोदुम्बरिकायाम् ।

**डुम्बुरपर्णी** । स्त्री । दन्तीवृक्षे ।

**डुलिः** । स्त्री । कच्छप्याम् । अम. ।

**डुलिका** । स्त्री । खञ्जरीटाकारपक्षिविशेषे । जटा. ।



**डुली** । स्त्री । चिल्लीशाके । रा. नि. व. ७ । कच्छप्याम् ।

**डोड़ी** । स्त्री । जीवन्तीक्षुपे । तत्पर्य्यायः,—जीवन्ती, शाकश्रेष्ठा, सुकाखाका, बहुवल्ली, दीर्घ-पत्री, सूक्ष्मपत्री, जीवनी । गुणाः—मलबद्धकरी वातला रुच्या दुर्ज्जरा च । राज. ।

**डोड़(ण्ड)का** । स्त्री । फलशाकविशेषे । हिं करिरुका । मं हरणदोड़ी । गुणाः—पुष्टि-करी रुच्या दीपनी लघुः पित्तकफार्शोघ्नी कृमि-गुल्मघ्नी च । भा. पू. १भ. शाकव. ।

**डोरड़ो** । स्त्री । वृहत्याम् । रा. नि. व. ४ ।

**डोलाफलम्** । क्ली । फलविशेषे । वै. निघ. २ भ. वा. व्या. ।

---

## ढ ।

**ढः** । पुं । ढक्कायाम् । कुक्कुरे । कुक्कुरलाङ्गुले ।

**ढक्कः** । पुं । अभिलाषे । वै. निघ. ।

**ढक्का** । स्त्री । वाद्यविशेषे । अ. ।

**ढङ्कणम्** । क्ली । शैवाले । वै. निघ. ।

**ढ(ढा)मरा** । स्त्री । हंसे ।

**ढालम्** । क्ली । फलके । ঢাল ।

**ढिण्ढिणिका (णी)** । स्त्री । जलशिरीषे । वै. निघ. ।

**ढोलः** । पुं । वाद्यविशेषे । के. ।

**ढोलसमुद्रिका** । स्त्री । ढोलसमुद्र इति ख्याते वृक्षविशेषे । सा कीटादिविषहरी । अत्रि. । "ढोलसमुद्रिका शीता कीटादीनां विषप्रणुत् ।" आ. ।

---

## त ।

**तः** । पुं । अमृते । पुच्छे । क्रोड़े । मे. । गर्भे । शब्दर. । वृक्षे । के. ।

**तकिलम् (ला)** । क्ली, स्त्री । औषधे । वै. निघ. । उणा. ।

**तक्कोलम्** । क्ली । कक्कोले । কাঁকলা । वै. निघ. ।

**तक्रम्** । क्ली । पादजलघोले । र. मा. । प. प्र. २ ख. । रा. नि. व. १५ । घोलसामान्ये । ঘোল । तत्पर्य्यायः,—गोरसजं, घोलं, कालसेयं, विलो-ड़ितं, दण्डाहतं, अरिष्टं, अम्लं, उदश्वित्, मथितं, द्रवः, प्रमथितं (रा.), काटुरं (ज.), अम्बरं, कट्वरं, कड्वरं (हे.) । तक्रं चतुर्विधं मस्तुमथितो-दश्विद्घोलभेदेन । छच्छिका चेति पञ्च । तेषां नाम-गुणाः—"ससरं निर्ज्जलं घोलं मथितं त्वसरोदकं । तक्रं पादजलं शीतमुदश्विदर्द्धवारिकं । छच्छिका सरहीनं स्यादच्छा प्रचुरवारिका ॥" तक्रगुणाः—"तक्रं त्रिदोषशमनं रुचि दीपनीयं रुच्यं वमिश्रम-हरं क्लमहारि मस्तु । वर्णप्रदं पवननाशमुदश्विदाख्यं शस्तं कफश्रममरुद्दमनेषु घोलम् । अम्लेन वातं मधुरेण पित्तं कफं कषायेण निहन्ति सद्यः । आमातिसारे च विसूचिकायां वातज्वरे पाण्डुषु कामलेषु । प्रमेहगुल्मोदरवातशूले नित्यं पिबेत तक्रमरोचके च ॥ शीतकालेऽग्निमान्द्ये च कफे पाण्ड्वामयेषु च । मार्गोपरोधे कुष्ठादिव्याधौ तक्रं प्रशस्यते । वातोदरी पिबेत्तक्रं पिप्पलीलवणान्वितं । शर्करामरिचोपेतं स्वादु पित्तोदरी पिबेत् । जवानी-सैन्धवाजाजीव्योषयुक्तं कफोदरे । सन्निपातोदरे तक्रं त्रिकटु-क्षार सैन्धवम् ॥ इति तक्रसेवन-स्थानम् । तक्रं दद्यान्न क्षते नोष्णकाले नो दौर्ब्बल्ये नो तृषामूर्च्छिते च । नैव भ्रान्तौ नैव

पित्तास्रदोषे नैतद्दद्यात् सूतिकायां विशेषात् ॥" इति वर्ज्यस्थानम् । "तक्रं स्नेहान्वितं तन्द्रानिद्राजाड्यप्रदं गुरु । अर्द्धविशिष्टं सामान्यं निःशेषं लघु पथ्यदम् ॥" रा. नि. व. १५ । "समुद्धृतघृतं तक्रं पथ्यं लघु विशेषतः । बल्यं स्तोकोद्धृतघृतं गुरु हृष्यं कफावहम् । अनुद्धृतघृतं सान्द्रं गुरु पुष्टिकफप्रदम् ॥" इति उद्धृतानुद्धृतस्वल्पोद्धृतघृततक्रगुणाः । आमपक्वतक्रगुणाः—"तक्रमामं कफं कोष्ठे हन्ति कण्ठे करोति च । पीनसश्वासकासादौ पक्वमेव प्रयुज्यते ॥" गव्यादितक्रविशिष्टगुणाः—"यान्युक्तानि दधीन्यष्टौ तद्गुणं तक्रमादिशेत् ।" भा. । "उदश्वित् कफकृद्बल्यं श्रमघ्नं परमं मतम् । छच्छिका शीतला लघ्वी पित्तश्रमतृषापहरी । वातनुत् कफकृत् सा तु दीपनी लवणान्विता ॥" इति तक्रभेदगुणाः ।

**तक्रकूर्च्चिका(र्च्ची)** । स्त्री । दुग्धविकारविशेषे । ছানা । गुणाः—ग्राहिणी वातला रूक्षा दुर्ज्जरा च । सु. सू. ४५अ. दधिव. । "तक्रेण पक्वं यत् क्षीरं सा भवेत्तक्रकूर्च्चिका ।" प. प्र. १ख. ।

**तक्रजननी** । स्त्री । घोले । वै. निघ. ।

**तक्रजन्म** । क्ली । दधनि । वै. निघ. ।

**तक्रपर्य्याया** । स्त्री । तक्राक्षुपे । रा. नि. व. ४ ।

**तक्रपिण्डः (ण्डिका)** । पुं, स्त्री । तक्रकूर्च्चिकायाम् । ছানা । नष्टदधिपिण्डे । नष्ट् दुध इति देशभेदे । लक्षणं यथा—"दध्ना तक्रेण वा नष्टं दुग्धं बद्धं सुवाससा । द्रवभावेन रहितं तक्रपिण्डः स उच्यते ॥" गुणाः—लघ्यः बृंहणः बलवर्द्धनश्च । भा. ।

**तक्रभक्षा** । स्त्री । तक्रायाम् । रा. नि. व. ४ ।

**तक्रभित्** । पुं । कपित्थवृक्षे । वै. निघ. ।

**तक्रमांसम्** । क्ली । यवनदेशप्रसिद्धव्यञ्जनविशेषे । 'एस्नी' इति पारस्यभाषा । तत्साधनविधिः—"पाकपात्रे घृतं दत्त्वा हरिद्राहिङ्गु भर्ज्जयेत् । छागादेः सकलस्यापि खण्डान्यष्टौ च भर्ज्जयेत् । सिद्धयोग्यं जलं दत्त्वा पचेन्मृदुतरं यथा । जीरकादियुते तक्रे मांसखण्डानि धारयेत् ॥" गुणाः—"तक्रमांसन्तु वातघ्नं लघु रुच्यं बलप्रदं । कफघ्नं पित्तकृद्दीप्तिसर्वाहारस्य पाचनम् ॥" भा. ।

**तक्रवटकः** । पुं । तक्रमज्जित-पिष्टकविशेषे । ঘোলবড়া ।

**तक्रविट्** । पुं । स्वनामख्यातफलभेदे ।

**तक्रा** । स्त्री । स्वनामख्यातक्षुपे । गुणाः—कटुः क्रिमिघ्नो व्रणघ्नी च । रा. नि. व. ४ ।

**तक्रारिष्टम्** । क्ली । यहणीमरिष्टौषधविशेषे । "यमानी आमलकं हरीतकी मरिचानि प्र. चिपलांशकानि पञ्चलवणानि पलांशानि एकत्र चूर्णयित्वा तक्राढ़कयुतानि तक्रारिष्टं भवति ।" च. द. ।

**तक्राह्वा** । स्त्री । तक्राक्षुपे । रा. नि. व. ४ ।

**तगर(पादिक)म्** । क्ली, पुं । (Tabernaemontana coronaria.) जलजातक्षुपे । তগরপাদুকা, শিউলি ছোপ । हिं तगरचण्डी । तें नन्दिवर्द्धनचेट्टु, गंधितगरपुचेट्टु । उत्. पाणिफलरा । तत्पर्य्यायः—कालानुसारिवा, वक्रं, कुटिलं, शठं, महोरगं, नतं, जिह्मं, दीपनं, तगरपादिकं (र), विनम्रं, कुञ्चितं, चक्रं, नहुषाख्यं, दण्डहस्तं, बर्हणं, पिण्डीतगरकं, पार्थिवं, राजहर्षनं, कालानुसारकं, चलं, दीनं । तच्च द्विविधं तगरं पिण्डीतगरञ्च । पिण्डीतगरं कोङ्कणदेशे प्रसिद्धम् । गुणाः—उष्णं स्निग्धं स्वादु लघु विषापस्मारमूर्द्धाक्षिरोगत्रिदोषघ्नञ्च । शीतलं तिक्तं दृष्टिदोषघ्नं पथ्यञ्च । रा. नि. व. १० । तगराभावे कुष्ठं ग्राह्यम् । च. सू. ४ अ. । च. द. एलादितैले । वा. सू. १५अ. । आहुल्यक्षुपे । मदनवृक्षे । रा. नि. व. ४।८ । पुष्पवृक्षविशेषे । টগর গাছ । तत्पर्य्याय —सितपुष्पः, कालपर्णः, कटुच्छदः । श. र. ।

**तङ्कः** । पुं । क्ली । पाषाणदारणास्त्रभेदे । টাঙ্গী ।

**तज्वी** । स्त्री । हिङ्गुपत्राम् । रा. नि. व. ६ ।

**तड़ाकः (गः)** । पुं, क्ली । पुरुषकृतसरोवरे । श. र. । तत्पर्य्यायः—पद्माकरः (अ.), तड़ाकः, तटकः (शब्दर.), तड़गः (द्वि.) । तल्लक्षणं—प्रशस्तभूमिभागस्थो बहुसंवत्सरोषितः । जलाशयस्तड़ागः स्यात् ताड़ागं तज्जलं स्मृतम् ॥" भा. । जलं स्वादु कषायं वातकरञ्च । रा. नि. व. १४ । पाके कटु शीतलं हेमन्ते प्रशस्तञ्च । राज. । यन्त्रकूटके । मे. ।

**तड़ाका** । स्त्री । नदीसमुद्राणां तटभागे । उ. ।

**तड़ागजः** । पुं । कालकोठे । কোমরভোগ কচু । प. मु. ।

**तड़िल्वान्** । मुस्तके । मूता । अम. । मेघे । अ. ।



**तण्डकः** । पुं । फेने । खञ्जनपक्षिणि । मे. । रोगे । वै. निघ. ।

**तण्डुरीणः** । पुं । कीटसामान्ये । वै. निघ. । तण्डुलजले । मे. ।

**तण्डु(न्दु)लः (कः)** । पुं । तण्डुलीयशाके । কাঁটানটে श. र. । भा. म. ४भ. प्रद. चि. । विड़ङ्गे । मे. । (Oryza sativa.) Rice. धान्यनिकरे । চাল । हिं चावल । मं ताण्डुल । तें बियम । गु. चोखा । दा. चश्रीयल । ता. अविशि । गुणाः—मेहघ्नः क्रिमिघ्नः । नवः सोऽतिदुर्ज्जरश्च । भा. । भृष्टं तत् सुस्निग्धं कफघ्नं रूक्षं पित्तकरञ्च । राज. । अष्टसर्षपमितमाने । च. कल्प. १२अ. ।

**तण्डु(न्दु)लधावनम्** । क्ली । तण्डुलोदके । চেলুনিজল । रा. नि. व. १५ । वै निघ. ।

**तण्डुलनामा (न्)** । पुं । तण्डुलीयशाके । চাঁপানটে । रा. ।

**तण्डु(न्दु)ला** । स्त्री । विड़ङ्गायाम् । रा. नि. व. ६ । महासमङ्गायाम् ।

**तण्डु(न्दु)लाम्बु** । क्ली । तण्डुलोदके । रा. नि. व. १५ । तत्पर्य्यायः—जीरणाम्बु, तण्डुलोदकं, तण्डुलोत्थं ।

**तण्डु(न्दु) ली** । स्त्री । तण्डुलीयशाके । চাঁপা নটিয়া । रा. नि. व. ५ । यवतिक्तायाम् । यवेची इति लोके । रा. नि. व. ३ । शशाण्डुलीकर्कट्याम् । रा. नि. व. ७ ।

**तण्डु(न्दु)लीयः (कः)** । पुं, क्ली । विड़ङ्गे । मे. । (Amarantus(thus) spinosus or Amblogina polygonoides.) Prickly Amaranth. स्वनामख्यातपत्रशाकक्षुपे । वनतण्डुलीयके । কাঁটানটে, গোয়াল নটে, ক্ষুদে নটে । हिं चल्पमरसा, चवड़ाइ । म तांदुलिजा । कं किरुकुशाले । दा. काण्टेमाट । ता. मुलुकिरइ । तत्पर्य्यायः—अल्पमारीषः (अ.), तण्डुलीकः, तण्डुलः (शब्दर.), तण्डेरः, तण्डुली, तण्डुलीयकः, ग्रन्थिलः, बहुवीर्य्यः, मेघनादः, घनस्वनः, सुशाकः, पथ्यशाकः, स्फूर्ज्जथुः, स्वनिताह्वयः, वीरः, तण्डुलनामा । गुणाः—शिशिरमधुरविषघ्नः रुचिकृद्दीपनः पित्तदाहभ्रमघ्नश्च । रा. नि. व. ५ । सृष्टमलमूत्रो विषहारकश्च । भा. पू. १ भ. शाकव. । रसे मधुरः, वीर्य्ये शीतपाको मधुरः, प्रभावश्च रक्तपित्तविषहरः । च. द. । 'मधुरो रसपाकाभ्यां रक्तपित्तमदापहः । तेषां शीततमो रूक्षस्तण्डुलीयो विषापहः ॥" सु. सू. ४६अ. । तन्मूलगुणाः—"तण्डुलीयकमूलं स्यादुष्णं श्लेष्मविनाशनं । रजोरोधकरं रक्तपित्तप्रदरसंहरम् ॥" अचि. । विशेषतः शूलघ्नम् । तच्छाकगुणाः—हिमम् अर्शःपित्तरक्तविषकासघ्नं ग्राहि मधुरं दाहशोषघ्नं रुच्यञ्च । रा. नि. व. ७ । "स्वादुपाकमसृक्पित्तविषघ्नं तण्डुलीयकम् ।" अवि. १६अ. ।

**तण्डु(न्दु)लीयका** । स्त्री । विड़ङ्गायाम् । বিড়ঙ্গ । रा. नि. व. ६ ।

**तण्डुलीयदलम्** । क्ली । तण्डुलीयशाके । रा. नि. व. ७ ।

**तण्डुलीयमूलम्** । क्ली । तण्डुलीयकजटायां । কাঁটানটের শিকড় । अवि. ।

**तण्डु(न्दु)लीवीजः** । पुं । तण्डुलीयशाके । भा. पू. शाकव. ।

**तण्डुलीयशाकम्** । क्ली । शाकभेदे । কাঁটা নটিয়ার শাক । रा. नि. व. ७ । सि. यो. र. पि. चि. ।

**तण्डुलुः** । स्त्री । विड़ङ्गे । श. र ।

**तण्डु(न्दु)लेरः (कः)** । पुं । तण्डुलीयशाके । भा. पू. १भ. शाकव. ।

**तण्डु(न्दु)लोत्थ(दक)म्** । क्ली । प्रक्षालिततण्डुलजले । চেলুনির জল । तस्य विधिः—तण्डुलपलं कणशः कृत्वा चतुर्गुणजलेन चाल्यम् । प. प्र. १ख. । शीतकषायमानेन वा तण्डुलोदककल्पना इति केचित् । अष्टगुणजलमिति शार्ङ्ग. । "कुट्टितं तण्डुलपलं जलेऽष्टगुणिते क्षिपेत् । भावयित्वा जलं ग्राह्यम् ।" "जलमष्टगुणं दत्त्वा पलकण्डिततण्डुलात् । भावयित्वा ततो देयं तण्डुलोदककर्म्मणि ।" तन्त्रान्तरम् । गुणाः—कषायं मधुरं लघु संग्राहि विषच्छर्द्दितृष्णादाहनाशनम् । रा. नि. व. ५ । [ श. च. ।

**तण्डुलौघः** । पुं । वेष्टकवंशे । বেউড় বাঁশ ।

**ततः** । पुं । वायौ । वै. निघ. ।

**ततपत्री** । स्त्री । कदलीवृक्षे । श. च. । हिङ्गुपत्रीवृक्षे । के. । [ निघ. ।

**तल्काललवणम्** । क्ली । सौवर्चललवणे । वै.

**तत्पद:** । पुं । अश्वत्थवृक्षे । वै.निघ. ।

**तत्फल:** । पुं । श्वेतपद्मे । कुष्ठे कुड़ । चोरा-नामगन्धद्रव्ये । धरणि: । रोहिषतृणे । वै.निघ. ।

**तत्त्वम्** । क्लो । परमात्मनि । स्वरूपे । वस्तुनि । त्रिका. । चित्ते । धरणि. ।

**तद्रुप्यम्** । क्लो । पातलदधनि । পাতলা দই । रा.नि.व.१५ ।

**तद्विद्यसम्भाषा** । स्त्री । विजिगीषुणा स्पर्द्धया शारीद्वारपूर्व्वं गुह्यार्थप्रकटने । च.वि.८अ. ।

**तनय:** । पुं । पुत्रे । स्त्री । कन्यायाम् । कृष्ण-तुलस्याम् । श.च. । पृश्निपर्ण्याम् । वै. निघ. ।

**तनु: (नू:)** । स्त्री । त्वचि । त्वक् । नार्य्याम् । मे. । शरीरे । रा.नि.व.१८ । (स्) क्लो । शरीरे । त्रि । अल्पे । कृशे । मे. ।

**तनुकम्** । क्लो । धातकीपुष्पे । विभीतके । त्वचि । দারুচিনি । वै.निघ. ।

**तनुकूप:** । पुं । रोमकूपे । वै. निघ. ।

**तनुच्छाय:** । पुं । ज्वालावर्बूरकवृक्षे । ক্ষুদে বাব্‌লা । रा. नि. व. ८ ।

**तनुता** । स्त्री । क्षीणतायाम् ।

**तनुत्वक्** । पुं । तेलाशारु इति ख्याते वृक्षे । प.मु. । सूक्ष्मत्वचि । দারুচিনি । वै. निघ. ।

**तनुत्वचा** । स्त्री । क्षुद्राग्निमन्थे । ছোট গণিরি । रा. नि. व. ९ ।

**तनुपत्र:** । पुं । इङ्गुदीवृक्षे । रा. नि. व. ८ । क्लो । वंशपत्रहरिताले । वै.निघ.

**तनुभस्त्रा** । स्त्री । नासिकायाम् । श.र. ।

**तनुरस:** । पुं । स्वेदे । ঘাম । हारा. ।

**तनु(नू)रुट्(हम्)** । क्लो । रोम्नि । केशे । श. र. । मे. ।

**तनुवोज:** । पुं । राजबदरे । নারকুলে কুল । रा. नि. व. ११ ।

**तनुव्रण:** । पुं । वल्मीकनामरोगे । श.र. ।

**तनुसञ्चारिणी** । स्त्री । बालिकायाम् । शब्दर. ।

**तनु(नू)च्छद:** । पुं । पायौ, गुदे । मलद्वार । त्रिका. ।

**तनुक्षीर:** । पुं । आम्रातकवृक्षे । আমড়া গাছ । रा.नि.व.११ ।

**तनून:** । पुं । वायौ । वै.निघ. ।

**तनूनपम्** । क्लो । घृते । श.च. ।

**तनूनपात्** । पुं । चित्रकवृक्षे । अग्नौ । अम. ।

**तनोनु:** । पुं । षष्टिकशालौ । ষেটে ধান-বিশেষ । वै.निघ. ।

**तन्तु: (क:)** । पुं । वनशूकरे । स्नायुरोगे । भा.म ४भ. । जलजन्तौ । हे.च. । सन्ततौ । सूत्रे । अम. । नखलिसर्पभेदे । सु.कल्प.४अ. । सरुपवृक्षे । अ.टी.रा. ।

**तन्तुकी** । स्त्री । शिरायाम् । शरीरान्तर्नाड्यां । रा.नि.व.१८।१९ । नाड़ीशाकभेदे । राजिकायां । রাই । वै.निघ. ।

**तन्तुकीट:** । पुं । कीटविशेषे । গুটীপোকা । जटा. ।

**तन्तुण: (नाग:)** । पुं । ग्राहे । হাঙ্গর । हे.च. ।

**तन्तुनाभ:** । पुं । ऊर्णनाभौ । মাকড়শা ।

**तन्तुनिर्यास:** । पुं । तालवृक्षे । श.र. ।

**तन्तुभ:** । पुं । श्वेतसर्षपक्षुपे । प.मु. ।

**तन्तुर(ल)म्** । क्लो । मृणाले । श.र. । हे.च. ।

**तन्तुवाप: (य:)** । पुं । लूतायां । মাকড়শা । अम. ।

**तन्तुविग्रहा** । स्त्री । कदलीवृक्षे । त्रिका. ।

**तन्तुसार:** । पुं । गुवाकवृक्षे । त्रिका. ।

**तन्त्रम्** । क्लो । औषधे । मे. । द्रव्ये । अग्निवेशादि-कृतषट्संख्यवैद्यकशास्त्रभेदे । च सू.१अ. । वस्त्रे । पुं । ऊर्णनाभौ । पुत्रे । वै.निघ. । गृहे । के ।

**तन्त्रकार:** । पुं । अग्निवेशादिषट्संख्यतन्त्र-कारिषु । यथा—"अग्निवेशश्च भेलश्च जतूकर्ण: परा-शर: । हारीत: क्षारपाणिश्च जगृहुस्तन्मुनेर्वच: । तन्त्रस्य कर्त्ता प्रथममग्निवेशो यतोऽभवत् । अथ भेलादयश्चक्रु: स्वं स्वं तन्त्रकृतानि च । श्रावयामासु-रात्रेयं सर्षिसङ्घं सुमेधस: ॥" च सू.१अ. ।

**तन्त्रयुक्ति:** । स्त्री । असद्वादिप्रयुक्तवाक्यप्रति-षेधनेन स्ववाक्यपोषकशास्त्रयुक्तौ । तस्या: प्रयोजनं । वाक्ययोजनमर्थयोजनञ्च । "असद्वादि प्रयुक्तानां वाक्यानां प्रतिषेधनम् । स्ववाक्यसिद्धिरपि च क्रियते तन्त्रयुक्तित: ॥ व्यक्ता नोक्ताश्च ये ह्यर्था लीना ये चाप्यनिर्म्मला: । लेशोक्ता ये क्वचित्तन्त्रे तेषाञ्चापि प्रसाधनम् ॥ यथाम्बुजवनस्यार्क: प्रदीपो वेश्मनो यथा । प्रबोध्यस्य प्रकाशार्थास्तथा तन्त्रस्य युक्तय: ॥" सु.उ.६५अ. ।



**तन्त्रवाय:** । पुं । लूतायाम् । মাকড়শা । अ.टी. ।

**तन्त्रिका (न्त्री)** । स्त्री । गुड़ूच्याम् । ज.द. १२अ. । र.सा.सं.पुटपाकप्रकरणे । कर्णपालीगत-रोगविशेषे । लक्षणं—"कृशा दृढ़ा च तन्त्रीवत् पाली वातेन तन्त्रिका ।" वा.उ.१७अ. । सैंहली-पिप्पल्यां । वै.निघ. । शोणितवाहिशिरायां । मे. ।

**तन्द्रा** । स्त्री । विषयाज्ञाने । रा.नि.व.२० । सा च श्लेष्मतमोऽनिलसम्भूता । "तन्द्रा श्लेष्मतमोऽनि-लै: ।" शार्ङ्ग.पू.६अ. । लक्षणं—"इन्द्रियार्थेष्वसं-वित्ति: गौरवं जृम्भणं क्लम: । निद्रार्त्तस्येव यस्येहा तस्य तन्द्रां विनिर्द्दिशेत् ॥ मा.नि. । निद्रावत् क्लान्तौ । च.सू.१६अ. । ततपर्य्याय:,—प्रमीला, तन्द्री (अ.), तन्द्रि: (अ.टी.), तन्द्रिका, विषया-ज्ञानं (रा.) ।

**तन्द्राकफ:** । पुं । तज्जनकश्लेष्मिकरोगभेदे । निदानम् ।

**तन्द्रालु:** । पुं । निद्रालौ ।

**तन्द्रि: (का)** । स्त्री । निद्रायां । आलस्ये । उणा. । च.सू.१६अ. ।

**तन्द्रिक:** । पुं । तन्नामकसन्निपातज्वरे । लक्षणं —"प्रभूता तन्द्रार्त्तिर्ज्वरकफपिपासाकुलतरा भवे-च्छ्यामा जिह्वा पृथुलकठिना कण्टकवृता । अती-सार: श्वास: क्लमथुपरितापौ श्रुतिरुजौ भृशं कण्ठे जाड्यं शयनमनिशं तन्द्रिकगदे ॥" ज्वरे प्रथमसु-त्पन्ने चक्षुर्भ्यां नैव पश्यति । निदा. ।

**तन्वि: (न्वि:)** । स्त्री । चक्रकुल्यावनस्पतौ । কাল তুলসী । र.मा. ।

**तन्यतु:** । पुं । रात्रौ । उ. ।

**तन्वी** । स्त्री । शालपर्ण्यां । শালপাণি । हिङ्गु-पत्र्यां । रा.नि.व.४'६ । त्रि । कृशाङ्ग्याम् । चक्र-कुल्यायाम् । द्रव्याभि. ।

**तप:** । पुं । ग्रीष्मर्त्तौ । ग्रीष्मे । अम. ।

**तप:कर:** । पुं । तपस्विमत्स्ये । তপসী মাছ । श.र. ।

**तपन:** । पुं । शुक्लार्कवृक्षे । শ্বেত আকন্দ । रा.नि.व.१० । भल्लातकवृक्षे । रा.नि.व.११ । सूर्य्यकान्तमणौ । रा.नि.व.१३ । ग्रीष्मर्त्तौ । हे.च. । क्षुद्राग्निमन्थे । क्लो । चक्षुषि । रा. ।

**तपनक:** । पुं । शालिधान्यभेदे । वा.सू.६अ. । See शालि: ।

**तपनच्छद:** । पुं । आदित्यपत्रक्षुपे । হুড়হুড়ে । रा.नि.व.४ ।

**तपनतनया (येष्टा)** । स्त्री । महाशमीवृक्षे । रा.नि.व ८ । वै.निघ. ।

**तपनमणि:** । पुं । सूर्य्यकान्तमणौ । रा.नि.व.१३ ।

**तपना** । स्त्री । क्षुद्राग्निमन्थे । ছোট গণিরি । रा.नि.व.९ ।

**तपनी** । स्त्री । पाठायाम् । वै.निघ. ।

**तपनयो(क)म्** । क्लो । स्वर्णे । अम. । रा.नि. व.१३ । अन्ने । पुं । शालिधान्यभेदे । च.सू.२७अ. ।

**तपनेष्टम्** । क्लो । ताम्रे । रा.नि.व.१३ । (ष्टा) स्त्री । शमीभेदे । হ্রস্ব শমী । वै.निघ. ।

**तपस:** । पुं । चन्द्रे । त्रि । पक्षिणि । सि.कौ. ।

**तपस्य:** । पुं, क्लो । कुन्दपुष्पवृक्षे । श.च. । पुं । फाल्गुने मासि । अम. ।

**तपस्वी** । पुं । घृतकरञ्जे । रा.नि.व.९ । मत्स्य-भेदे । তপসী মাছ । श.च. । हिङ्गुपत्र्यां । दम-नकवृक्षे । वै.निघ. ।

**तपस्विनी** । स्त्री । जटामांस्याम् । रा.नि.व. २३ । कटुक्यां । हे.च. । मुण्डीर्य्यां । মুণ্ডীরী । भा. । जिङ्गिण्यां । ঝিঞা । वै.निघ. । महाश्राव-निकायाम् । বড় থুলকুড়ী ।

**तपस्विपत्र:** । पुं । मदनकवृक्षे । दना । रा. नि.व.१० ।

**तपा:** । पुं । ग्रीष्मर्तौ । अ.टी. । माघमासे । मे. । शरदि । च.सू.१अ. । च.द. ।

**तपात्यय:** । पुं । वर्षाकाले । हे.च. ।

**तपु: (स्)** । पुं । अग्नौ । सूर्य्ये । उ. ।

**तपोधन:** । पुं । श्रावणीनाममहाक्षुपे मदनक-वृक्षे । रा.नि.व.५।१० । स्त्री (ना) । मुण्डीर्य्यां । মুণ্ডীরী । मे. । श्रावनिकायाम् । থুনকুড়ি ।

**तप्त(क)म्** । क्लो । रौप्ये । रा.नि.व.१३ । माक्षिकनामोपधातौ । स्वर्णमाक्षिकादि । र.सा.सं. ।

**तप्तकः।** पुं। ताम्रपात्रविशेषे। कै। लौहपात्रविशेषे। তাওয়া। भा.।

**तप्तखल्लः।** पुं। छागशकृदग्नितुषाग्नौ उष्णीकृतखल्ले। গরম খল। तद्यथा—"अजाशकृत्तुषाग्निञ्च चालयित्वा भुवि क्षिपेत्। तस्योपरिस्थितः खल्लस्तप्तखल्ल इति स्मृतः।" रूचि.।

**तप्तराजतैलम्।** क्ली। शिरोरोगे तैलम्। सर्षपतैलं ४ श. गोमूत्रं १६ श.। क्वाथार्थं—धुस्तूर-करञ्ज-भिण्टी-जयन्ती-निर्गुण्डी शिरीष-हिज्जलवीज-शिग्रु-दशमूलानां प्र. २ श. जलं ६४ श. शे. १६ श.। कल्कद्रव्यं—मदनफल-त्रिकटु-कुष्ठ-कृष्ण-जीरक-शुण्ठी-कट्फल-वरुणत्वक्-मुस्ता-हिज्जल-विल्व-हरिताल-जवापुष्प-विष-मनःशिला-कर्कटशृङ्गी-रक्तचन्दन-शिग्रु-यमानी-विकङ्कतत्वचां प्र. २ तो.। भैष.।

**तप्तरूप(क)म्।** क्ली। रौप्ये। रा.नि.व.१३।

**तप्तलोमशः।** पुं। काशीशे। হিরাকস্। वै.निघ.।

**तप्ताम्भः।** क्ली। उष्णसलिले।

**तभः।** पुं। छागे। श.टी.।

**तमम्।** क्ली। अन्धकारे। शब्दर.। पादाग्रे। श.।

**तमः।** पुं। तमालवृक्षे। श.च.। अन्धकारे। तद्गुणाः—तमोभयावहं मोहदिङ्मोहजनकं भवेत्। पित्तहृत् कफहृत् कासवर्द्धनं श्रमकृच्च तत्॥ भा.। अन्धकारदर्शने। सु.चि.२२अ.। क्ली। वातकफजे प्रकृतेरन्यतमगुणे। वै.निघ.। चित्तोन्मेषहृदयावरणे। विमोहने। रा.नि.व.२१। व्याधौ। रा.नि.व.२०।

**तमःप्रवेशनम्।** क्ली। अन्धकारप्रविष्टस्येवासंवित्तौ। मा.नि.। तमःस्येव यद्ज्ञानं तत्तमः कथ्यते बुधैः।"

**तमकश्वासः।** पुं। श्वासरोगभेदे। তমক-শ্বাস। लक्षणं—"प्रतिलोमं यदा वायुः स्रोतांसि प्रतिपद्यते। ग्रीवां शिरश्च संगृह्य श्लेष्माणं समुदीर्य्य च। करोति पीनसं तेन रुद्धो घुर्घुरकं तथा। अतीव तीव्रवेगञ्च श्वासं प्राणप्रपीड़कं। प्रताम्यति सवेगेन तृष्यते सन्निरुध्यते। प्रमोहङ्कासमानश्च स गच्छति मुहुर्मुहुः। श्लेष्मण्यमुच्यमाने तु भृशं भवति दुःखितः। तस्यैव च विमोक्षान्ते मुहूर्त्तं लभते सुखं। तथास्योद्ध्वंसते कण्ठः कृच्छ्राच्छक्नोति भाषितुम्। न चापि लभते निद्रां शयानः श्वासपीड़ितः। पार्श्वे तस्यावगृह्णाति शयानस्य समीरणः। आसीनो लभते सौख्यमुष्णञ्चैवाभिनन्दति। उच्छ्रिताक्षो ललाटेन स्विद्यता भृशमर्त्तिमान्। विशुष्कास्यो मुहुः श्वासी मुहुश्चैवावधम्यते। मेघाम्बुशीतप्राग्वातैः श्लेष्मलैश्च विवर्द्धते। स याप्यस्तमकः श्वासः साध्यो वा स्यान्नवोत्थितः॥" मा.नि.।

**तमका।** स्त्री। भूम्यामलक्याम्। वै.निघ.।

**तमरम्।** क्ली। सीसधातौ। वङ्गे। हे.च.।

**तमसम्।** क्ली। अन्धकारे। त्रि.।

**तमसः।** पुं। कूपे। अन्धकारे। सं.सा.।

**तमराजः।** पुं। शर्कराविकारे। "नवात गड़" इति भाषा। गुणाः—तृष्णाज्वरदाहरक्तपित्तघ्नः। राज.।

**तमस्वती।** स्त्री। रात्रौ। रा.। [अम.।

**तमस्विनी।** स्त्री। निशायाम्। हरिद्रायाम्।

**तमा।** स्त्री। भूधात्र्याम्। ভূঁই আমলা। काकोल्यां। কাঁকলা। रात्रौ। हे.च.। तमालवृक्षे। श.च.।

**तमालः (कः)।** पुं। (Xanthochymus Pictorius.) स्वनामख्यातवृक्षे। তমাল গাছ। मं तमालु। कं कदालउ। तत्पर्य्यायः,—कालस्कन्धः, तापिच्छः (अ.), तापिञ्जः (भ.), कृष्णस्कन्धः (अ.टी.भ.), तमः, तमा (श.), नीलतालः, तमालकः, नीलध्वजः, कालतालः, महाबलः। गुणाः—मधुरः बल्यः वृष्यः शीतलः गुरुः तृष्णादाहकरः कफपित्तकरः श्रमशान्तिकरश्च। वरुणवृक्षे। বরুণ গাছ। रा.नि.व.९। कृष्णखदिरे। श.च.। स्थलपद्मे। कृष्णतिले। त्रिका.। वंशत्वचि। বাঁশের ত্বক্। अम.। श.र.। यवासशर्करायाम्। खड्गे। तापिच्छे। त्रिका.। क्ली। श्वेतसुनिषण्णकशाके। तेजपत्रे। रा.नि.व.६। मे.। सु.सू.३९अ. शिरोविरेके। त्वचि। গুড়ত্বক্। वै. निघ.।

**तमालकम्।** क्ली। सुनिषण्णशाके। स्थलपद्मपुष्पवृक्षे। त्रि.। तेजपत्रे। रा.।

**तमालका (की)।** स्त्री। भूधात्र्याम्। ভূঁই আমলা। वै.निघ.।



**तमालच्छदम्।** क्ली। तेजपत्रे। वै.निघ.।

**तमालपत्र(क)म्।** क्ली। तेजपत्रे। रा.नि.व.६। च.चि.३अ.। तमालवृक्षे, दारुचिनीति ख्याते। तिलके। मे.।

**तमालिका (नी) (ली)।** स्त्री। भूम्यामलक्याम्। रा.नि.व.५। ताम्रवल्ल्याम्। मञ्जिष्ठायाम्। रा.नि.व.३। "भूधात्र्यान्तु तमालिनी।" रा.नि.व.२३। (ली) वरुणवृक्षे। रा.नि.व.९।

**तमाली(न्)।** पुं। वरुणवृक्षे।

**तमाली।** स्त्री। ताम्रवल्ल्याम्। भूम्यामलक्याम्। रा.।

**तमाह्वयम्।** क्ली। तालीशपत्रे। वै.निघ.।

**तमिः (मी)।** स्त्री। हरिद्रायाम्। रात्रौ। अम.।

**तमिस्रम्।** क्ली। अन्धकारे। अ.। क्रोधे। मे.।

**तमिस्रा।** स्त्री। हरिद्रायाम्। अन्धकाररात्रौ। अ.।

**तमी।** स्त्री। रात्रौ। हरिद्रायाम्। अ.।

**तमोज्योतिः (भित्)।** पुं। खद्योते। জোনাকি পোকা। वै.निघ.। श.र.।

**तमोदर्शनम्।** क्ली। पित्तजरोगे अन्धकारदर्शने। मा.।

**तमोनुदः।** पुं। सूर्य्ये। शब्दर.।

**तमोभिद्।** पुं। खद्योते। शब्दर.।

**तमोमणिः।** पुं। गोमेदरत्ने। प.मु.। खद्योते। त्रिका.।

**तमोविकारः।** पुं। रोगे। रा.नि.व.२०।

**तमोव्रणः।** पुं। वल्मीके। त्रिका.।

**तमोहरः।** पुं। चन्द्रे। शब्दर.।

**तम्पा(म्बा)।** स्त्री। गवि। हे.च.।

**तम्बुरुः।** पुं। तुम्बुरौ। নেপালি ধনে। रा.नि.व.११।

**तरः।** पुं। वृक्षे। भूरिग.। अग्नौ। तरणे। मे.।

**तरः (स्)।** क्ली। वने। तटे। प्लवगे। शब्दर.। मांसे। कै.।

**तरङ्गः।** पुं। वस्त्रे। ऊर्म्मौ। ঢেউ। तत्पर्य्यायः,—भङ्गः, ऊर्म्मिः, वीचिः (अ.), ऊर्म्मी, वीची, विचिः, लहरी, लहरिः, हल्ली, विलिः (भा.), उत्कलिकाः (हा.) उत्कलिका, ऊर्म्मिका (ज.), विची। द्वि.।

**तरटः।** पुं। चक्रमर्द्दक्षुपे। চাকন্দা গাছ।

**तरटी।** स्त्री। शोलापुरादौ स्वनामख्यातरक्तवीजकण्टकवृक्षे। मं तरड़ि। कं रेउड़ि। तत्पर्य्यायः,—तरदी, तारदी, तीव्रा, खर्ज्जूरा, रक्तवीजका। गुणाः—तिक्ता मधुरा गुरुः बल्या कफघ्नी। रा.नि.व.८।

**तरणिः।** पुं। अर्कपत्रवृक्षे। আকন্দ গাছ। अम.। तासे। स्त्री। कण्टकसेवत्याम्। সেউতি গোলাপ। रा.नि.व.१०। घृतकुमार्य्याम्। अम.।

**तरणिरत्नम्।** क्ली। माणिक्ये। रा.नि.व.१३।

**तरणी।** स्त्री। घृतकुमार्य्याम्। प.मु.। क्षुद्रदन्तीक्षुपे। रा.नि.व.६। पद्मचारिण्यां। श.च.। स्वनामख्यातपुष्पवृक्षे। मं तरणी। कं चेंवड़े। শেউতী গোলাপ। गुणाः—शीतला स्निग्धा पित्तदाहज्वरघ्नी मधुरा मुखपाकहरी तृष्णाच्छर्दिघ्नी च। राजतरणी कषाया कफकरी चक्षुष्या हृद्या सुगन्धिश्च। रा.नि.व.१०।

**तरणीवल्ली।** स्त्री। कण्टकशतपत्रीपुष्पवृक्षे। বুনো গোলাপ। वै.निघ.।

**तरत्।** पुं। कारण्डवपक्षिणि। मे.।

**तरत्सलः।** पुं। तृणाग्नौ। वै.निघ.।

**तरदी।** स्त्री। तरट्याम्। रा.नि.व.८।

**तरन्तः।** पुं। पक्षिविशेषे। भेके।

**तरम्बुजम्।** क्ली, पुं। (Lupinus albus or Citrullus vulgaris. Syn. Cucurbita citrallus.) तरमुज इति ख्यातफले। हिं तरमूजा। प.मु.। तद्वृक्षे। वै.निघ.। वीजं शैत्यकरम्।

**तरलः।** पुं। माणिक्ये। रा.नि.व.१३। श्वेतधुस्तूरके। हारमध्यमणौ। वै.निघ.। (ला) स्त्री। यवाग्वाम्। त्रिका.। काञ्चिके। मद्यविशेषे। मे.। मधुमक्षिकायाम्। हे च.।

**तरवटः।** पुं। आहुल्याख्यक्षुपे। हिं तरा। रा.नि.व.४।

**तरसं (तरः,म्)।** क्ली। मांसे। बले। वेगे। त्रिका.।

**तरस्वी(न्)** । पुं । वायौ । गरुड़े । रा. ।

**तरक्षः (क्षुः)** । पुं । प्रसहजातीयमृगादनव्याघ्रे । তেঁদো বাঘ, নেকড়ে বাঘ । हिं तरख । रा. नि.व.१९ । तत्पर्य्यायः,—तर्चः, तरक्षुः, मृगादनः, तरक्षुकः (शब्दर.), तरचः (अ.टी.भ.) ।

**तरिता** । स्त्री । रसोने । तर्ज्जन्याम् । श.च. । गञ्जने । গাঁজা । "तारिका तरिता तथा ।" कुलार्णवतन्त्रे ।

**तरी** । स्त्री । धूमे । त्रिका. । नौकायाम् । द्रोण्याम् । पेटके । गदायाम् ।

**तरुः** । पुं । वृक्षे । अम. ।

**तरुकूणिः** । पुं । वाग्गुदपक्षिणि । त्रिका. ।

**तरुजः** । पुं । श्वेतखदिरे । प.मु. ।

**तरुजीवनम्** । क्ली । तरुमूले । श.च. ।

**तरुटः** । पुं । नीलोत्पलमूले । राज.३प. । च. सू.२७अ. ।

**तरुणः** । पुं । एरण्डवृक्षे । प.मु. । श्वेतैरण्डवृक्षे । भा. । रा.नि.व.८ । स्थूलजीरके । মোটা জীরা । रा.नि.व.६ । युवके । रा.नि.व.१८ । चौड़ादेवदारौ । क्ली । कुब्जकपुष्पे, कुन्दपुष्पे । मे. । घ्राणनेत्रग्रीवास्थनि । वै.निघ. ।

**तरुणज्वरः** । पुं । नवज्वरे । नवज्वर, নূতন জ্বর । "आसप्तरात्रं तरुणं ज्वरमाहुर्मनीषिणः ।" च.द. ।

**तरुणज्वरारिरसः** । पुं । ज्वरे मलशुद्धिकरज्वरलाघवकररसविशेषे । पारदगन्धकविषजैपालबीजानि समभागानि कुमारीरसेन एकत्र मर्द्यानि । পারা, গন্ধক, বিষ, জয়পালবীজ প্রত্যেক সমান । सा.कौ. ।

**तरुणदधि** । क्ली । पञ्चदीनातीतदधनि । "दधि पञ्चादिनातीतं तरुणं दधि उच्यते ।" वै. ।

**तरुणदारुः** । पुं । वृद्धदारौ । বীজতাড়ক । वै.निघ. सन्धिकज्व.चि. । [ निघ. ।

**तरुणपीतिका** । स्त्री । मनःशिलायाम् । वै.

**तरुणाभासः** । पुं । कर्कट्याम् । কাঁকুড় । वै.निघ. ।

**तरुणास्थि** । क्ली । घ्राणकर्णाक्षिगुदेषु कोमलास्थिषु । सु. । भा. ।

**तरुणिः (णी)** । स्त्री । स्थूलकृष्णजीरके । मु. दन्त्याम् । रा.नि.व.६ । चौड़ादेवदारुणि । रा. नि.व.१२ । तरणीपुष्पवृक्षे । সেউতী গোলাপ ফুলের গাছ । सु.सू.४६अ. । तत्पर्य्यायः,—सेवती (के.), सहा, कुमारी, गन्धाढ्या, चारुकेशरा, भृङ्गेष्टा, रामतरुणी, सुदला, बहुपत्रिका, भृङ्गवल्लभा । गुणाः—शीतत्वं, स्निग्धत्वं, मधुरत्वं, पित्तदाहज्वर- मुखपाकतृष्णाविषच्छर्द्दिनाशित्वञ्च । रा. नि. व. १० । घृतकुमार्य्याम् । रा. नि. व. ५ । युवत्याम् ।

**तरुणीकटाक्षमालः** । पुं । तिलकवृक्षे । তিল গাছ । रा.नि.व.१० ।

**तरुणीमूलम्** । क्ली । दन्तीमूले । वै. ।

**तरुतू(टू)लिका** । स्त्री । वादुली । বাদুড় । हारा. ।

**तरुनखः** । पुं । कण्टके । কাঁটা । हारा. ।

**तरुभुक्** । पुं । वन्दाके । পরগাছা । वै.निघ. ।

**तरुमालिनी** । स्त्री । भूम्यामलक्यां । वै.निघ. ।

**तरुमृगः** । पुं । वानरे । वै.निघ. ।

**तरुरागम्** । क्ली । कोमलपल्लवे । हारा. ।

**तरुराजः** । पुं । तालवृक्षे । रा.नि.व.९ ।

**तरुरुट् (हा) (रोहिणी)** । स्त्री । वन्दाके । বান্দরা । रा.नि.व.५ ।

**तरुवल्ली** । स्त्री । जतुकालतायाम् । জনীনাম গন্ধদ্রব্য । रा.नि.व.३ ।

**तरुशायी (इन्)** । पुं । पक्षिणि । हारा. ।

**तरुसारः** । पुं । कर्पूरे । हारा. । [ व.५ ।

**तरुस्था** । स्त्री । वन्दाके । পরগাছা । रा.नि.

**तरूटः** । पुं । कमलमूले । उत्पलकन्दे । गुणाः —गुरुः विष्टम्भिः शीतलश्च । राज. ।

**तर्कारी** । स्त्री । (Sesbania aculeata.) जयन्तीवृक्षे । ধনিচা গাছ । हिं बड़चक्रमेद । मं रानशेवरि । तें तक्केडुचेट्टु । ता. एराजिल्गना । देवताड़वृक्षे । रा.नि.व.३ । अग्निमन्थे । भा.म.१ भ. ज्व. चि. । रा. नि. व. ९।२३ । क्षुद्राग्निमन्थे । जीमूते । रा. नि. व. २३ । वै.निघ.सा.ज्व.चि, अर्कादि । शिंशपावृक्षे । वनकर्कट्याम् । वै.निघ. । चक्रमर्द्दक्षुपे । वै.निघ.२भ.वा.व्या.चि. ।



**तर्किणः (लः)** । पुं । चक्रमर्द्दक्षुपे । চাকন্দা গাছ । प.मु. । वै.निघ. ।

**तर्कुः** । स्त्री । सूत्रनिर्म्माणयन्त्रे । টাকু । ज. ।

**तर्कुटम्** । क्ली । कर्त्तने । वि. ।

**तर्कुटी** । स्त्री । तर्कौ । টাকু । हा. ।

**तर्कुपीठी** । स्त्री । वर्त्तन्यां । টেকোর বাঁটুল । त्रिका. । [ त्रिका. ।

**तर्कुशाणः** । पुं । शाणके । টেকোর শাণ ।

**तर्जनी** । स्त्री । प्रदेशिन्यामङ्गुली । रा.नि.व.१८ । सा तु गर्भस्य चतुर्थे मासि भवति ।

**तर्णः (कः)** । पुं । शालिधान्यविशेषे, काश्मीरे आजव इति प्रसिद्धे । तूर्णक इति अरुणदत्तः । स कलमाद्दीनगुणः स्वादुपाकरसत्वादियुक्तः । वा. सू. टी. ६।२ अ. हेमा. । "तर्णकः शकुनाहतः ।" गोवत्से । কমলে বাছুর । अम. ।

**तर्णभः** । पुं । सद्योजातवत्से । ज. ।

**तर्णिः** । पुं । सूर्य्ये । प्लवे । के. ।

**तर्दकः** । पुं । काष्ठदर्व्याम् । ज.द.१२अ. ।

**तर्दूः** । स्त्री । काष्ठदर्व्याम् । কাঠের হাতা । अम. ।

**तर्पणम्** । क्ली । तृप्तौ । अम. । तीयम्,शसक्तुषु । सि.यो.छर्दि.चि. । आहारविशेषे । स च द्राक्षादाड़िमखर्ज्जूरादिज्वरघ्नफलरसैः समधुशर्करलाजाचूर्णं मिश्रयित्वालोड्य कृतः मदात्ययादिज्वरे यवागूस्थले देयः हितश्च । "तत्र तर्पणमेवादौ प्रदेयं लाजशक्तुभिः । ज्वरापहैः फलरसैर्युक्तं समधुशर्करं । द्रवेणालोड़िताले सुस्तर्पणं लाजसक्तवः ।" जल /२ সে. দ্রাক্ষারস ১ ছ. দাড়িমাদিরস /॥০ শে. খইচূর্ণ ৪ তো. । च.द.ज्व.चि. । नेत्रतर्पणानुष्ठाने । यथा—"वातातपरजोहीने वेश्मन्युत्तानशायिनः । अभितो माषचूर्णेन क्लिन्नेन परिपिण्डितौ । समौ दृढ़ौ च सम्बाधौ कर्त्तव्यौ नेत्रकोशयोः । पूरयेद्घृतमण्डेन विलीनेन सुखोदकैः । सर्पिषा शतधौतेन क्षीरजेन घृतेन वा । निमग्नान्यक्षिपक्ष्माणि यावत्युस्तावदेव हि । पूरयेन्मीलिते नेत्रे तत उन्मीलयेच्छनैः । भिषग्भिरेव विख्यातस्तर्पणस्येदितोविधिः ॥" भा.पू.२भ. । त्रि । नेत्रपूरणे । तृप्तिजनने । वा.टी. ।

**तर्पणकषायः** । पुं । पञ्चमांशावशिष्टकषाये । "तर्पणपञ्चमांशके ।" रा. नि. व. २० । यत्र यत्र तर्पणकषायविधिस्तत्र तत्रैवं कल्पनीयम् ।

**तर्पणी** । स्त्री । पित्तघ्नेषु लाजयवधान्यकृतान्नेषु । "लाजाश्च यवधानाश्च तर्पणी पित्तनाशिनी ।" रा. नि.व.१६ । गुरुस्कन्धवृक्षे, श्लेष्मवृक्षे । श.मा. ।

**तर्पिणी** । स्त्री । पद्मचारिण्याम् । স্থলপদ্ম । श.च. ।

**तर्व्वटः** । पुं । चक्रमर्द्दे । চাকন্দা । रा. नि. व. १३ ।

**तर्षः** । पुं । तृष्णायां । लिप्सायां । त्रिका. । प्लवे । समुद्रे । उ. । सूर्य्ये । सं.सा. ।

**तर्षणम्** । क्ली । पिपासायाम् । जटा. ।

**तर्क्षुः** । पुं । तरक्षुमृगे । श.र. ।

**तर्क्ष्यः** । पुं । यवक्षारे । र.मा. ।

**तलः** । पुं । तालवृक्षे । मे. । वै.निघ.२भ.वा.व्या.चि. । वक्षसि । खुरस्याधोभागे । ज.द.२अ. । चपेटे । रा.नि.व.१८ । मूले । गर्त्ते । त्रिका. । आधारे । हे.च. ।

**तलकम्** । क्ली । पुष्करिण्याम् । हिं ताहाव । वै.निघ. ।

**तलमीनः** । पुं । चिलिचिममत्स्ये । भा. ।

**तलसारकम्** । क्ली । अश्वस्य वक्षःस्थलरज्जौ । तङ्ग इति भाषा । हे.च. ।

**तलसारणम्** । क्ली । अश्वस्य भोजनपात्रे ।

**तलहृदयम्** । क्ली । मध्यमाङ्गुलीमनुपूर्व्वेण पादतलस्य मध्ये । हे.च. । तन्नामकसन्धिमर्म्मणि । सु.शा.६अ. ।

**तलक्षिप्रम्** । क्ली । पादतलस्थमर्म्मभेदे । सुश्रु. । See क्षिप्रम् ।

**तला** । स्त्री । गोधायाम् । अम. ।

**तलाटी** । स्त्री । नलनिर्म्मितकटे । নলের দরমা । हा. ।

**तलामणिः** । पुं । प्रवाले । त्रिका. ।

**तलाह्वम्** । क्ली । तालीशपत्रे । रा.ग.व.६ ।

**तलिका** । स्त्री । तलसारके । हे. च. ।

**तलित(मांस)म्** । क्ली । स्नाभ्जितमांसे । ভাজা

মাংস। यथा—"शुद्धमांसविधानेन मांसं सम्यक् प्रसाधितम्। पुनस्तदाज्ये संभृष्टं तलितं प्रोच्यते बुधैः॥" गुणाः—"तलितं बलमेधाग्निमांसौजःशुक्रवृद्धिकृत्। तर्पणं लघु सुस्निग्धं रोचनं दृढ़ताकरम्॥" भा.।

**तलिन(म)म्।** क्ली। शय्यायाम्। त्रि। तुच्छे। হারা.। दुर्ब्बले। हे,च,। मे.।

**तलुनः।** पुं। पवने। तरुणे। मे.। (स्त्री, नी) युवत्याम्।

**तलोदा।** स्त्री। नद्याम्। त्रि.।

**तलेक्षणः।** पुं। शूकरे। वै,निघ,।

**तल्कम्।** क्ली। वने। त्रि.।

**तल्पः।** पुं, क्ली। शय्यायाम्। अम.।

**तल्पकीटः।** पुं। कीटभेदे। ছারপোকা।

**तल्पनम्।** क्ली। पृष्ठवंशमांसे। মেরুদণ্ডের মাংস। হারা.। हस्तिपृष्ठे। वै.निघ.।

**तल्लः।** पुं। तड़ागे। वै.निघ.।

**तवराजः।** पुं। यवासशर्करायां। मिना इति भाषा। रा.नि.व.१४। वै.निघ,चय,चि,तवराजचूर्णे।

**तवराजखण्डः।** पुं। यवासशर्कराजातखण्डे। মাগথণ্ডীবিশেষ। सं खण्डतवराज, মিনার খাঁড়। तत्पर्य्यायः,—सुधामोदकजः, खण्डजोद्भवजः, सिद्धमोदकः, अमृतसारजः, सिद्धखण्डः। गुणाः—दाहहरः तापशान्तिकरः तृप्तिजनकः मूर्च्छामोहहरः श्वासघ्नः इन्द्रियतर्पणः शीतलः सुमधुरश्च। रा.नि.व.१४।

**तवराजोद्भवः।** पुं। तवराजखण्डे, नवात् इति ख्याते मिष्टान्ने। वै.निघ.।

**तवराजोद्भवखण्डः।** पुं। तवराजखण्डे। रा.नि.व.१४।

**तवर्णकृत्।** पुं। शरटे। গিরগিটী। वै.निघ.।

**तवक्षीरम्।** क्ली। स्वनामख्यातपिष्टकविशेषे। तत्तु यवजं मवयक्षीरपक्वं क्षीरजलं। हिं तीवाक्षीर। तत्पर्य्यायः,—पयःक्षीरं, यवजं, यवजोद्भवम्। गुणाः—मधुरं शिशिरं दाहपित्तघ्नं क्षयकासकफश्वासघ्नं रक्तदोषहरश्च। रा.नि.व.६। गन्धपत्रायाम्। वै निव,शर्मः चि, चन्द्रप्रभायां।

**तवक्षीरी।** स्त्री। गन्धपत्रायां। रा.नि.व.४।६। १०। तवक्षीरे। वै.निघ.।

**तवक्षीर्य्यकपत्रिका।** स्त्री। आम्रहरिद्रायां। वै.निघ.।

**तवीषः।** पुं। सुवर्णे। मे.। (स्त्री, षी) नद्याम्। सि. कौ.।

**तसरः।** पुं। सूत्रवेष्टने। उणा.। पट्टवस्त्रविशेषे।

**तस्करः।** पुं। स्पृक्कायां। পিড়িং শাক। प. सु.। मदनवृक्षे। ময়না গাছ। जटा.। चोरके। চোরানামক গন্ধদ্রব্য। वै.निघ.। [व.३।

**तस्करस्नायुः।** पुं। काकनासायां। रा.नि.

**तस्करी।** स्त्री। काकनासालतायां। ग्रन्थिपर्ण्यां। श्वेतलज्जालुकायां। वै.निघ.। [भा.।

**तहरी।** स्त्री। तापहरीतिख्याते व्यञ्जनविशेषे।

**तक्षकः।** पुं। सर्पविशेषे। सु.कल्प.५अ.। वृक्षभेदे। हे.च.।

**तक्षणम्।** क्ली। कृशीकरणे।

**तक्षणी।** स्त्री। अस्त्रविशेषे। বাইস প্রভৃতি। त्रिका.।

**ताड़ः।** पुं। कृष्णताले। তমাল গাছ। हिन्ताले। হেঁতাল। श्रीताले। कण्टकताले। वै.निघ.। पर्व्वते। हे.। करभूषणभेदे।।

**ताड़कम्।** क्ली। वृद्धदारकबीजे। भेष शिरोरोगचि सह्लादशमूलतैले।

**ताड़का।** स्त्री। देवदाल्यां। দেশাতাড়া। वै.निघ.। र.चि.९अ.।

**ताड़काफलम्।** क्ली। स्थूलैलायां। प.मु.।

**ताड़नम्।** क्ली। वायुजन्यव्रणवेदनाविशेषे। सु.सू.२२अ.। मारणे।

**ताड़नी।** स्त्री। कशायाम्। शब्दमा.।

**ताड़िः (ड़ी)।** स्त्री। तालरसे। তাড়ী। गुणाः—"तालजं तरुणं तोयमतीवमदकृन्मतं। अम्लीभूतं तदा तु स्यात्पित्तकृद्वातदोषहृत्॥" भा. आसव.। वृक्षविशेषे। তেড়েৎ গাছ। अटी.भ.। तत्पर्य्यायः,—ताड़िः, तालिः (भ.), तालकी (वि.), तारिका (के.)।

**ताण्डवम्।** क्ली। तृणविशेषे। मे.।



**तातनः।** पुं। खञ्जरीटपक्षिणि। त्रिका.।

**तातलः।** पुं। रोगे। पाके। मे.।

**तानीयकः।** पुं। यावनालवृक्षे। জনারগাছ। वै.निघ.।

**तानूरः।** पुं। बहुवारवृक्षे। চাল্তা গাছ। वै.निघ.। जलावर्त्ते। भू.।

**तान्त्रिकः।** पुं। तन्द्राभकसन्निपाते। "अतितन्द्रा ज्वरः श्वासः कासस्तापोऽतिसारकः। स्थूलकण्ठः सिता श्यामा जिह्वा कण्ठे च कूजति। श्रुतिरल्पा चेति विद्यात् तान्त्रिके सान्निपातिके।

**तान्दवः।** पुं। वायौ।

**तापः।** पुं। अग्निसन्तापैर्वस्त्रादिभिः कृते स्वेदे। वा. टी, हेमा.। सन्तापे। रा नि. व. २०। कृच्छ्रे। मे.।

**तापकः।** पुं। ज्वरे। श.र.।

**तापनः।** पुं। सूर्य्यकान्तमणौ। रा.नि.व.१३। सूर्य्ये। हे.।

**तापसम्।** क्ली। तेजपत्रे। তেজপাত। रा.नि.व.६। त्वचि। দারুচিনি। वै.निघ.।

**तापसः।** पुं। मदनकवृक्षे। वकपक्षिणि। रा.नि.व.१९। तापसेक्षौ। के.।

**तापसजम्।** क्ली। तेजपत्रे। वै.निघ.।

**तापसतरुः।** पुं। इङ्गुदीवृक्षे। अम.। हिं इङ्गुआ। पुत्रञ्जीवकवृक्षे। सु.सू.३८अ.।

**तापसद्रुमः।** पुं। इङ्गुदीवृक्षे। জিয়াপুতা। रा.नि.व.८। स्वर्णमाक्षिके। र.सा.सं.मेहवज्ररसे। वकवृक्षद्वये। वै.निघ.।

**तापसद्रुमसन्निभा।** स्त्री। पुत्रदात्रीक्षुपे। रा.नि.व.४।

**तापसपत्रः।** पुं। दमनकक्षुपे। দনা। रा.नि.व.१०।

**तापसप्रियः।** पुं। इङ्गुदीवृक्षे। प.मु.। र.मा.। चारवृक्षे। পেয়াল গাছ। द्राक्षौ। रुद्राक्षे। स्त्री। द्राक्षालतायाम्। रा.नि.व.११।

**तापसवृक्षः।** पुं। इङ्गुदीवृक्षे। सु.सू.३७अ., चि,१८अ., वा.सू.१५अ.अर्कादिः। "श्वेतायुग्मं तापसानाञ्च वृक्षः।"

**तापसा।** स्त्री। द्राक्षायाम्। वै.निघ।

**ताप(म)सी।** स्त्री। जटामांस्यां। आम्रहरिद्रायां। আম আদা। वै.निघ.।

**तापसेष्टः।** पुं। प्रियालवृक्षे। পেয়াশাল গাছ। रा.नि.व.११।

**तापसेक्षुः।** पुं। इक्षुविशेषे। गुणाः—"तापसेक्षुर्भवेन्मृद्वी मधुरा श्लेष्मकोपनी। तर्पणी रुचिकृच्चापि वृष्या च बलकारिणी॥" भा.। कान्तारेक्षुगुणश्च। सु.सू ४५अ.।

**तापस्वेदः।** पुं। स्वेदविशेषे। अवलक्तवेष्टिते काये अम्लसिक्तैः खदिराङ्गारप्रतप्तैर्वालुकावस्त्रकांस्यकन्दुककपालपाणिभिः शयानस्य बहुशोऽङ्गतापे। भा.। सु.चि.३२अ.।

**तापहरी।** स्त्री। व्यञ्जनविशेषे। ताहड़ी, तातातोरी इति भाषा। तत्साधनविधिः—"घृते हरिद्रासंयुक्ते माषजा मज्जयेद्वटीः। तण्डुलांश्चापि निर्धौतान् सहैव परिभर्ज्जयेत्। सिद्धयोग्यं जलं तत्र प्रक्षिप्य कुशलैः पचेत्। लवणार्द्रकहिङ्गूनि मात्रायां तत्र निक्षिपेत्। एषा सिद्धिं समायाता प्रोक्ता तापहरी बुधैः। भवेत्तापहरी बल्या वृष्या श्लेष्माणमाचरेत्। वृंहणी तर्पणी रुच्या गुर्व्वी पित्तहरी स्मृता॥" भा.।

**तापिञ्छः (ञ्छः) (ञ्जः)।** पुं। तमालवृक्षे। अ.टी.भ.। (ञ्जं) क्ली। स्वर्णमाक्षिके, धातुमाक्षिके। रा.नि.व.१३।

**तापिनी।** स्त्री। भारतवर्षीयनदीविशेषे। सा च पश्चिमदेशे प्रसिद्धा। तज्जलं वेत्रवती-जलतुल्यगुणम्। रा.नि.व.१४।

**तापि(पी)समुद्भवम्।** क्ली। माक्षिकनामोपधातौ। স্বর্ণমাক্ষিক। र.सा.सं.।

**तापीजम्।** क्ली। स्वर्णमाक्षिके। रा.नि.व.१३।

**ताप्य(क,ज)म्।** क्ली, पुं। धातुमाक्षिके, स्वर्णमाक्षिके। हे,च.। र.मा.। तुत्थके। তুঁতিয়া। रा.नि.व.१३। सि,यो.यक्ष्म.चि,।

**ताप्युत्थसंज्ञकम्।** क्ली। माक्षिकधातौ। স্বর্ণমাক্ষিক। र.मा.।

**तामरम्।** क्ली। घृते। जले। भ, रुद्रः।

**तामरसम्।** क्ली। कमले। रा. नि. व. १०। नीलपद्मे। वै.निघ.। स्वर्णे। त्रिका.। ताम्रे। मे.। सारसपक्षिणि। अम.।

**तामलकी ।** स्त्री । भूम्यामलक्याम् । ভূঁই আমলা । च.द.सि.यो.यक्ष्म.चि.च्यवनप्राशे ।

**तामसः ।** पुं । पेचके । रा.नि.व.१९ । सर्पे । मे. । तमोगुणे । स्त्री । जटामांस्यां । रा.नि.व.१२ ।

**ताम्बूलम् ।** क्ली । (Piper Betle. Syn. Chavica Betle.) नागवल्लीदले, पर्णे । পান । हिं पान । तें तामलपाकु । ता, वेट्टिली । बम्, नागवेल । तत्पर्य्यायः,—गृहाश्रया (श्र.), पर्णं (रा.) सुखभूषणम् (वै.) । गुणाः—"ताम्बूलं विशदं रुच्यं तीक्ष्णोष्णं तुवरं सरं । वश्यं तिक्तं कटु क्षारं रक्तपित्तकरं लघु ॥ बल्यं श्लेष्मास्यदौर्गन्ध्यमलवातश्रमापहम् । मुखवैशद्यसौगन्ध्यकान्तिसौष्ठवकारकम् । हनुदन्तमलध्वंसि जिह्वेन्द्रियविशोधनं । नवं तदेव मधुरं कषायानुरसं गुरु । बलासजननं प्रायः पतद्धाक्कगुणं स्मृतम् । वङ्गदेशोद्भवं पर्णं परं कटुरसं सरम् । पाचनं पित्तजननमुष्णं कफहरं स्मृतं ॥ पर्णं पुराणमकटु खुल्लकं तनु पाण्डुरम् । विशेषाद्गुणवद्वेद्यमन्यद्धीनगुणं स्मृतम् ॥" भा. । "शिरा पर्णस्य शैथिल्यं कुर्य्यात्तस्यास्त्वहृद्रसः । शीर्णं त्वग्दोषदन्तास्यभक्षिते तु सितासिते । अनिधाय मुखे पर्णं पूगं खादयते नरः । मतिभ्रंशी दरिद्रः स्यादन्ते न स्मरते हरिम् ॥ कृष्णपर्णस्य गुणाः—तिक्तोष्णं कषायं दाहमुखजाड्यमलनाशनम् । शुभ्रपर्णं श्लेष्मवातामयघ्नं पथ्यं रुच्यं पाचनन्दीपनञ्च । सद्यस्त्रोटितस्य गुणाः—मुखजाड्यारोचककरम् ।" रा.नि.व.११ । ताम्बूलभक्षणनिषिद्धता यथा—"ताम्बूलमहितम् प्रोक्तं शरीरे रुक्षदुर्बले । ज्वरास्यशोषपित्तास्रमदमूर्च्छाक्षिरोगिषु ॥" तदनुपयोगगुणाः—"ताम्बूलानुपयोगात्स्यात् श्लेष्मपित्तानिलान्वितः । देहदृक्केशदन्ताग्निश्रोत्रवर्णबलक्षयः ॥" राज. ३ प. । गुवाके । त्रिका. ।

**ताम्बूलकरङ्कः ।** पुं । ताम्बूलपात्रे । পানের বাটা । हे.च. ।

**ताम्बूलपत्रः ।** पुं । नागवल्लीलतायाम् । वै. निघ. । पिण्डालौ । रा.नि.व.७ ।

**ताम्बूलपत्र(र्ण)कन्दः ।** पुं । कन्दशाके, पिण्डालौ । থাম আলু, চুবড়ি আলু । रा.नि. व.७ । गुणाः—शुक्लो विशदः लघुश्च । अत्रि. ।

**ताम्बूलपर्णिका (र्णी) ।** स्त्री । नागवल्लीलतायाम् । পানের গাছ । वै.निघ. ।

**ताम्बूलरागः ।** पुं । मसूरे । हारा. ।

**ताम्बूलवल्लिका (ल्ली) ।** स्त्री । नागवल्लीलतायाम् । পানের গাছ । श.र. ।

**ताम्र(क)म् ।** क्ली । (Cuprum.) Copper. स्वनामख्यातधातौ । र.मा. । তামা । हिं तांबा । तें रागि । ता. सेम्बु । तत्पर्य्यायः,—ताम्रकं, शुल्वं, म्लेच्छमुखं, द्व्यष्टं, वरिष्टं, उडुम्बरं (श्र.), कनीयसं (हे.), शुल्लं, द्विष्ट, उदम्बरं, औदुम्बरं, औडुम्बरं, उदुम्बरं (अ.टी.), रविसंज्ञकं, मुनिपित्तलं, अर्कं, सूर्य्याह्वं, लोहितायसं (शब्दर.), लोहितायः (त्रि.), तपनेष्टं, अम्बकं, अरविन्दं, रविलोहं, रविप्रियं, रक्तं, नैपालिकं, रक्तधातुः । ताम्रलक्षणम्—"जवाकुसुमसङ्काशं स्निग्धं मृदु घनं क्षमं । लौहनागोज्झितं ताम्रं मारणाय प्रशस्यते ॥" इति । ताम्रदोषा अष्टौ—भ्रमो मूर्च्छा विदाहश्च उत्क्लेदः शोषवान्तयः । अरुचिश्चित्तसन्ताप एते दोषा विषोपमाः ॥" र.सा.सं. । ताम्रोत्पत्तिः—"शुक्रं यत्कार्त्तिकेयस्य पतितं धरणीतले तस्मात्ताम्रं समुत्पन्नमिदमाहुः पुराविदः ॥" गुणाः—"ताम्रं कषायं मधुरञ्च तिक्तमम्लञ्च पाके कटु सारकञ्च । पित्तापहं श्लेष्महरञ्च शीतं तद्रोपणं स्याल्लघु लेखनञ्च । पाण्डूदरार्शोज्वरकुष्ठकासश्वासक्षयान् पीनसमम्लपित्तं । शोथं कृमिं शूलमपाकरोति प्राहुः परे वृंहणमल्पमेतत् ॥" भा.पू.१भ.धातुव. । ताम्रं सुपक्वं मधुरं कषायं तिक्तं विपाके कटु शीतलञ्च । कफापहं पित्तहरं विबन्धशूलघ्नपाण्डूदरगुल्मनाशि ॥" इति शोधितताम्रगुणाः । "घनघातसहं स्निग्धं रक्तपत्रामलं मृदु । शुद्धाकरसमुत्पन्नं ताम्रं शुभमसंस्कृतम् ॥" तस्य लक्षणम् । ताम्रमारणम्—"गोमूत्रेण पचेद्यामं ताम्रपत्रं दृढाग्निना । शुध्यते नात्र सन्देहो विषदोषनिवृत्तये । जम्बीररससंश्लिष्टं रसगन्धकलेपितम् । ताम्रपत्रं शरावस्थं त्रिपुटे म्रियते ध्रुवम् । सूताभावे भिषग्युक्त्या चात्र हिङ्गुलमर्पयेत् ॥" इति । यथैव मारितं ताम्रं ताम्रमम्लेन मर्द्दयेत् । तद्गोलं शूरणस्यान्ते रुद्ध्वा मृद्भिः प्रलेपयेत् । शुष्के गजपुटे पाच्य सर्व्वदोषहरं भवेत् । पत्तलीकृतपत्राणि ताम्रस्याग्नौ प्रतापयेत् । निषिञ्चेत्तप्ततप्तानि तैले तक्रे च काञ्जिके । गोमूत्रे च कुलत्थानां कषाये च त्रिधा त्रिधा ॥ एवं ताम्रस्य पत्राणां विशुद्धिः सम्प्रजायते । तथा—"गोमूत्रे



च पचेद्यामं ताम्रपत्रं दृढाग्निना । शुद्धते नात्र सन्देहो मारणञ्चात्र कथ्यते ॥" इति अन्यविधशोधनं । "सूतमेकं द्विधा गन्धं यामं मर्दन्तु कन्यया । द्वयोस्तुल्यं ताम्रपत्रं क्षिप्त्वा स्थाल्यां निधापयेत् । सम्यक् शूरणजैः सार्द्धं पार्श्वे भस्म निधापयेत् । चतुर्यामं पचेच्चुल्ल्यां पात्रपृष्ठे सगोमये । जलं पुनःपुनर्देयं स्वाङ्गशीतं विमर्द्दयेत् । म्रियते नात्र सन्देहः सर्व्वरोगेषु योजयेत् ॥ जम्बाम्भसा सैन्धवसंयुतेन सगन्धकं स्थापय शुल्वपत्रम् । पक्वायमानं पुटयेत् सुयुक्त्या वान्त्यादिकं यावदुपैति शान्तिम् ॥" इति अन्यविधमारणम् । र.सा.सं. । अम्लपिष्टमृतं ताम्रं शूरणस्थं वह्निमृदा । पुटेत् पञ्चामृतैर्वापि त्रिधा वान्त्यादिशान्तये ॥" र.चि.६अ. । रक्तचन्दने । त्रि । ताम्रवर्णे । पुं । कुष्ठरोगभेदे । वै.निघ. । [ नि.व.८ ।

**ताम्रकण्टकः ।** पुं । रक्तखदिरवृक्षे । रा.

**ताम्रकल्पः ।** पुं । प्लीहाधिकारे कल्पविशेषः । "अक्षपारदगन्धञ्च कर्षद्वयमितं पृथक् । सर्व्वैः समं भवेत्ताम्रं जम्बीराम्लेन मर्द्दयेत् । सूर्य्यावर्त्तरसैः पश्चात् कणामोचरसेन च । योजयेत्तीव्रघर्म्मे तु यावत्सर्व्वन्तु जीर्य्यति । जम्बीरस्य रसैर्भूयो रसं दण्डेन चालयेत् । दृढे शिलामये पात्रे चूर्णयेदतिशोभनम् ॥" मात्रा २ रतिः । विभीतक-पारदगन्धकाः प्र. २ तो. जारितताम्रं ६ तो. जम्बीररसेन मर्द्दयेत् । अथ सूर्य्यावर्त्तरसेन कणामोचरसक्वाथेन च संमिश्र्य यावज्जरणं रौद्रे धारयेत् । पुनश्च जम्बीररसेन सम्मर्द्य शुष्के सति चूर्णयेत् । मा. २ र. । र.सा.सं. ।

**ताम्रकिलिः (क्रिमिः) ।** पुं । इन्द्रगोपकीटे । আষাঢ়ে পোকা । हारा. ।

**ताम्रकुट्टकः (कूटः) ।** पुं । (Nicotiana rustica or tabacum. Latakia tobacco.) Tobacco. कलञ्जे, ताम्रकूटे । তামাক । पं, हिं तमाकु, चिलासीतमाकु । तें पोगाकु, धूम्रपत्रमु । ता. पुगइ इलइ । बम्. तम्बाखु । तन्लम् ।

**ताम्रगर्भम् ।** क्ली । तुत्थे । रा.नि.व.१३ ।

**ताम्रचक्षुः ।** पुं । कपोते । वै.निघ. ।

**ताम्रचूड़ः ।** पुं । कुक्कुटे । प.मु. । च.सू.२अ. । कुक्कुरवृक्षे । কুকুশিমা । रा.नि.व.५ ।

**ताम्रतुण्डः ।** पुं । श्वेतमर्कटे । वै.निघ. ।

**ताम्रत्रपुजम् ।** क्ली । कांस्यधातौ । भा. ।

**ताम्रदुग्धा ।** स्त्री । गोरक्षदुग्धीनामक्षुपे । नि.व.५ ।

**ताम्रद्रुः ।** पुं । रक्तचन्दनवृक्षे । वै.निघ. ।

**ताम्रधातुः ।** पुं । गिरिमृत्तिकायां । वै.निघ. ।

**ताम्रपत्रः ।** पुं । जीवशाके । रा.नि.व.७ । क्ली । ताम्रस्य पत्रे । তামার পাত ।

**ताम्रपत्रकः ।** पुं । आवर्त्तकीलतायाम् । আঁৎমোড়া । वै.निघ. ।

**ताम्रपत्री ।** स्त्री । हंसपादीनामक्षुपे । लज्जालुविशेषे । रा.नि.व.५ ।

**ताम्रपर्णी ।** स्त्री । गन्धमुण्डे । গন্ধভাদুলি বিশেষ । प.मु. । मञ्जिष्ठायां । वै.निघ. ।

**ताम्रपल्लवः ।** पुं । अशोकवृक्षे । रा.नि.व.१० ।

**ताम्रपाकी (इन्) ।** पुं । प्लक्षवृक्षे, गर्द्दभाण्डवृक्षे । र.मा. ।

**ताम्रपादी ।** स्त्री । रक्तलज्जालुकायाम्, हंसपाद्याम् । रा.नि.व.३ ।

**ताम्रपुष्पः (कः) ।** पुं । आरग्वधवृक्षे । रक्तकाञ्चने । वै.निघ. । काञ्चनवृक्षे । जटा. । भूचम्पके । ভূঁই চাঁপা । श.च. ।

**ताम्रपुष्पा (ष्पिका) (ष्पी) ।** स्त्री । रक्तपाटलवृक्षे । পারুল গাছ । रा.नि.व.१० । (ष्पी, ष्पिका,) रक्तत्रिवृति । धातकीवृक्षे । रा.नि.व.६ । प.मु.क्षय.चि.खर्ज्जूरासवे । नागरङ्गवृक्षे । নারাঙ্গা । ज.द.१२अ. ।

**ताम्रप्रयोगः ।** पुं । उदराधिकारे । "केवलं जारितं ताम्रं शृङ्गवेररसैः सह । द्विगुञ्जं भक्षयेत्प्रातः...... ॥" रस.चि. । अन्यः ग्रहण्यादौ । शोधितपारदगन्धकयोः प्र. २ तो. कज्जलीकृत्य अतिसूक्ष्मताम्रपत्रेण तोलकद्वयेन एकत्र सम्मिश्र्य मृत्पात्रे संस्थाप्य यावता द्रावितं भवेत् तावत्परिमाणं पक्वजम्बीररसं दत्त्वा तावत्कालं आतपे स्थापयेत् यावता औषधं पङ्कभूतं भवेत् । अथ हस्तेन मर्द्दयित्वा वटी कार्य्या । रस.र. ।

**ताम्रफलः ।** पुं । अङ्कोलवृक्षे । আঁকোড় গাছ । रा.नि.व.९ ।

**ताम्रफलकः** । पुं । ताम्रदले । তামার চাদর ।

**ताम्रमूला (लिका) (ली)** । स्त्री । लज्जालुकालतायाम् । रा.नि.व.५ । क्षीरिणीभेदे । थिरुई । र.मा. । मञ्जिष्ठायां । दुरालभायां । रा.नि.व.४ । भा.म.१भ.ज्व.चि. । "सिंही व्याघ्री ताम्रमूली ।" रक्तदुरालभायां । प.मु. ।

**ताम्रमृगः** । पुं । रक्तवर्णहरिणे । वै.निघ. ।।

**ताम्ररसायनी** । स्त्री । दुग्धिकायां । वै.निघ. ।

**ताम्रवर्णः (कः)** । पुं । पल्लीवाहतरणे । रा.नि.व.८ । गोधूमभेदे । हरिणे । गिरिमृत्तिकायां । वै.निघ. ।

**ताम्रवर्णा** । स्त्री । जपावृक्षे । श.च. ।

**ताम्रवल्ली** । स्त्री । मञ्जिष्ठायां । प.मु. । चित्रकूटदेशे प्रसिद्धायां स्वनामख्यातलतायां । सु.शा. १०अ. । तत्पर्य्यायः,—ताम्रा, ताली, तमाली, तमालिका, सूक्ष्मवल्ली, सूलीमा, शोधनी, तालिका । गुणाः—कषाया कफघ्नी मुखकण्ठदोषघ्नी श्लेष्मशोधनी च । रा.नि.व.३ ।

**ताम्रवीजः** । पुं । कुलत्थे । प.मु. ।

**ताम्रवृन्तः** । पुं, स्त्री (न्ता, न्तिका) । रक्तकुलत्थे । त्रिका. । हे च ।

**ताम्रवृक्षः** । पुं । कुलत्थे । रक्तचन्दने । र.मा. ।

**ताम्रशालिः** । पुं । रक्तशाली । দাদখানি । प.मु. ।

**ताम्रशिखी (इन्)** । पुं, स्त्री । ताम्रचूड़े । কুক্‌ড়া । जटा. ।

**ताम्रसार(क)म्** । क्ली । रक्तचन्दने । प.मु. । (कम्) रक्तखदिरे । रा.नि.व.८ ।

**ताम्रा** । स्त्री । ताम्रवल्लीलतायां । सैंहलीलतायां । रा.नि.व.३।६ । मञ्जिष्ठायां । रक्तगुञ्जायां । मद. । देहाभ्यन्तरचतुर्थीकलायाम् । या व्रीहेरष्टभागप्रमाणा कुष्ठाद्यधिष्ठाना । सु.शा.४अ. ।

**ताम्राभम्** । क्ली । रक्तचन्दने । श.च. ।

**ताम्रार्द्धम्** । क्ली । कांस्ये । কাঁসা । त्रिका. । वै निघ ।

**ताम्राक्षः** । पुं । कोकिले । त्रिका. । रा.नि. व.१९ । चकोरपक्षिणि । (क्षी) कोकिलायाम् । वै.निघ. ।

**ताम्रिका (म्री)** । स्त्री । गुञ्जायाम् । रा.नि.व.३ । रक्तगुञ्जायाम् । मञ्जिष्ठायां । वै.निघ. ।

**ताम्रोपधातुः** । पुं । तुत्थके । তুঁতে । भा. ।

**तारम्** । क्ली । कर्पूरे । वै.निघ. । रौप्ये । मौक्तिके । रा. नि. व. १३ । शुद्धमौक्तिके । पुं । वानरविशेषे । त्रि । निर्म्मले । शरणिः । अत्युच्चस्वरे । त्रिका. ।

**तारकम्** । क्ली । नेत्रे । मे. । धनुषि । शब्दर. ।

**तारका** । स्त्री । देवताड़वृक्षे । मद. । यवक्षारे । र.सा.सं. । इन्द्रवारुणीलतायाम् । रा.नि.व.३ । कनीनिकायां । मे. । त्रिका. । मुक्तायां । नक्षत्रे । वै.निघ. ।

**तारकिनी** । स्त्री । रात्रौ । रा. ।

**तारकेश्वररसः** । पुं । प्रमेहाधिकारे रसः । रससिन्दूरं वङ्गं लौहम् अभ्रकं प्रत्येकं समं मधुना मर्दयित्वा मधुना बहुमूत्रे लेहयेत् । अनुपानं पक्वोदुम्बरवीजचूर्णं यथाबलमात्रं मधुना लेह्यम् । रस. र. । अन्यः मूत्रकृच्छ्रे रसः । गन्धकः लौहं वङ्गम् अभ्रं दुरालभा यवक्षारः गोक्षुरवीजं हरीतकी एषां प्रति समभागः । कुष्माण्डसलिलेनैकत्र मर्द्दयित्वा कुशादितृणपञ्चमूलगोक्षुरयोः क्वाथेन च भावयित्वा रक्तिद्वया वटी कार्य्या । उदुम्बरवीजचूर्णस्य लेहः ।

**तारजम्** । क्ली । रौप्यमाक्षिके । वै.निघ. ।

**तारटी (टी)** । स्त्री । तरटीवृक्षे । रा.नि.व.८ ।

**तारणः** । पुं । भेलके । शब्दर. ।

**तारणिः** । स्त्री । नौकायाम् । हा. ।

**तारतण्डुलः** । पुं । धवलयावनाले । শ্বেত জবার বা জওয়ারী । रा.नि.व.१६ ।

**तारतालकीवीजम्** । क्ली । रसजारणार्थं वीजभेदे । र.चि.३अ. ।

**तारदी** । स्त्री । तरदीवृक्षे । रा. ।

**तारपुष्पः** । पुं । कुन्दपुष्पवृक्षे । रा.नि.व.१० ।

**तारमाक्षिकम्** । क्ली । Iron pyrites. रूप्यमाक्षिके, रूप्यस्योपधातौ । রৌপ্যমাক্ষিক । प.मु. । रूप्याभावे तन्माक्षिकं ग्राह्यम् । लक्षणम्—"तारमाक्षिकमन्यत्तु तद्भवेद्रजतोपमम् । किञ्चिद्रजतसाहित्यात्तारमाक्षिकमीरितम् । अनुकल्पतया तस्य ततो हीनगुणाः स्मृताः । न केवलं रूप्यगुणाः वर्त्तन्ते तारमाक्षिके । द्रव्यान्तरस्य संसर्गात् सन्त्यन्येऽपि गुणा यतः ॥" गुणाः—"स्यात्तारमाक्षिकं स्वादु तिक्तं वृष्यं रसायनम् । चक्षुष्यं वस्तिरुक्कुष्ठपाण्डु-मेह विषोदरान् । अर्शः शोथं क्षयकण्डूं त्रिदोषमपि नाशयेत् । अशुद्धं तत् स्वर्णमाक्षिकवद्दोषान् करोति च ॥" तच्छोधनं यथा—"कर्कटीमेषशृङ्ग्युत्थै द्रवैर्जम्बीरजैर्दिनं । भावयेदातपे तीव्रे विमला शुध्यति ध्रुवम् ॥" तन्मारणं यथा—"कुलत्थस्य कषायेन घृष्ट्वा तैलेन वा पुटेत् । तैलेन वाजमूत्रेण तारमाक्षिकमृच्छति ॥" भा. ।

**तारविमला** । स्त्री । रौप्यमाक्षिके । वै.निघ. ।

**तारवीजम्** । क्ली । रौप्यादिकृतरसनिबन्धन वीजे । "कुटिलं विमला तीक्ष्णं समचूर्णम्प्रकल्पयेत् । पुटितम्पञ्चवारन्तु तारे वाह्यं शनैर्धमन् । यावद्दशगुणं तत्तु तावद्वीजम्भवेच्छुभम् ॥" र.चि.३अ. ।

**तारशुद्धिकरम्** । क्ली । सीसके । रा.नि.व.१३ ।

**तारा** । स्त्री । चोड़ानामदेवदारुभेदे । नेत्रकनीनिकायाम् । रा.नि.व.१२।१८ ।

**तारापथः** । पुं । आकाशे । हे. ।

**ताराभः** । पुं । यशदभेदे । दस्ताविशेष । पारदे । वै.निघ. ।

**ताराभ्रः** । पुं । कर्पूरे । रा.नि.व.१२ ।

**तारारिः** । पुं । माक्षिकधातौ । স্বর্ণমাক্ষিক । विड़माक्षिके । हे.च. ।

**तारारिष्टम्** । क्ली । रौप्यारिष्टे । र.चि.३अ. ।

**तारिका** । स्त्री । ताड्यां । তাড়ি । तन्त्रम् ।

**तारिणी** । स्त्री । मातरि । अक्षिमध्यभागे । त्रिका । [ समुद्रे । त्रि. ।

**तारीषम्** । क्ली, पुं । स्वर्णे । वै.निघ. । मे. ।

**तारुण्यम्** । क्ली । यौवने । अम. ।

**तारुण्यजनवल्लभा** । स्त्री । उस्पाशाली । रा.नि.व.१६ ।

**तारुण्यपिड़का** । स्त्री । मुखदूषिकायाम् । বয়সফোঁড়া । भैष.क्षुद्ररोग.चि. ।

**तारेश्वररसः** । पुं । राजयक्ष्मणि रसः । पारदः १ तो. रौप्यं । ४ तो. मनःशिला गन्धकः प्र. ४ तो. गोक्षुररसेन प्रहरद्वयं सम्मर्द्य वालुकायन्त्रेण प्रहरद्वयं पचेत् । शीते सति चूर्णयेत् । मात्रा २ र. । रस.कौ. ।

**तार्क्षी** । स्त्री । वत्सादनीलतायाम् । পাতাল-গরুড়ী লতা, শিলিন্দা । रा.नि.व.३ ।

**तार्क्ष्य(क.ज)म्** । क्ली । रसाञ्जने । भा.म.४भ. नेत्रविड़ालकी. चि. । सि.यो.अपस्मा.चि. सिद्धतमयोगे । See माणिक्यम् । पुं । अश्वकर्णलतायाम्, लताशाले । শিয়াড়ি লতা । र.मा. । वा.उ.३९अ. । सर्ज्जतरौ । अश्वे । सर्पे । मे. । स्वर्णे । श.र. ।

**तार्क्ष्यनायकः** । पुं । गरुड़े । रा.नि.व.१९ ।

**तार्क्ष्यप्रसवः** । पुं । अश्वकर्णनामकलताशाले । লতাশাল । रा.नि.व.९ ।

**तार्क्ष्यशैलम्** । क्ली । रसाञ्जने । र.मा. ।

**तालः** । पुं । (Borassus flabelliformis.) The Palmyra tree. स्वनामख्यातवृक्षे । তালগাছ । प.मु. । र.मा. । हिं ताल, ताड़ । उत्. ताड़ । गुर्ज. तड़ । ता. पनम । स्वरताल इति अन्ध्रप्रदेशे । सु.सू.३७अ. । तत्पर्य्यायः,—तलः (से.), भूमिपिशाचः (हा.), दीर्घतरुः, द्रुमश्रेष्ठः द्रुमेश्वरः (के.), तालद्रुमः, पत्री, दीर्घस्कन्धः, ध्वजद्रुमः, तृणराजः, मधुरसः, मदाढ्यः, दीर्घपादपः, चिरायुः, तरुराजः, दीर्घपत्रः, गुच्छपत्रः, आसवद्रुः (रा.), करपत्रवान्, दीर्घद्रुः (श.), तत्तुनिर्य्यासः (शब्दर.) । गुणाः—स्वादुतिक्तकषायः मूत्ररोगघ्नः बलप्राणशुक्रवृद्धिकरश्च । राज. । "पक्वं तालफलं पित्तरक्तश्लेष्मविवर्द्धनं । दुर्जरम्बहुमूत्रञ्च तन्द्राभिष्यन्दशुक्रदम् ॥ तालमज्जा तु तरुणः किञ्चिन्मदकरो लघुः । श्लेष्मलो वातपित्तघ्नः सस्नेहो मधुरः सरः ॥" भा.आस्रव. । तालप्रलम्बगुणाः—रुक्षः क्षतरोगघ्नश्च । तालास्थिमज्जा (তাল-আঁটি-শাঁস)गुणाः—मधुरं शीतं मूत्रलं गुरु च । तालाम्बु गुणाः—पित्तघ्नं शुक्रलं स्तन्यवर्द्धनं गुरु च । तालफलं शीतलं बल्यं स्निग्धं स्वादुरसं गुरु विष्टम्भि वातपित्तरक्तक्षतदाहक्षयघ्नञ्च । रा.नि.व.९ । तालरसगुणाः—तरुणो रसो मदकारी । अम्लीभूतः स पित्तकृत् वातदोषहरश्च । भा. । क्ली । हरिताले । लौहे । त्रिका. । तालीशपत्र । रा.नि.व.६ । तालफले । तुवरिकायां । श.र. । मत्स्यशल्के । सु.सू.७अ. ।

**तालकः** । पुं । प्राणनाशककीटविशेषे । सु.कल्प. ८अ. । See कीटः । क्ली । हरिताले ।

**तालकन्दः।** पुं। तालवृक्षस्य कन्दे। चि.क्र. क.सोमरो.चि.।

**तालकरोरः।** पुं। तालाङ्कुरे। च.द.अमृत-सारलौहे।

**तालकाफलम्।** क्ली। स्थूलैलायाम्। ज.द. १२अ.।

**तालकाभम्।** क्ली। नीलरङ्गे। वै.निघ.।

**तालकी।** स्त्री। ताड्याम्। তাড়ী। त्रिका.।

**तालचुः।** पुं। पक्षिभेदे। ভালুই। के.।

**तालजटा।** स्त्री। तालवृक्षस्य जटायां। তালের জটা। चि.क्र.क.सोमरो.चि.।

**तालतो।** स्त्री। तालसुरायां। त्रिका.।

**तालद्रुमः।** पुं। अम्बुदेशे खरताल इति ख्याते वृक्षे। रा.नि.व.९।

**तालध्वजा।** स्त्री। तालपत्र।

**तालपत्रम्।** क्ली। तालच्छदे। मेथिकायाम्। वै.निघ.।

**तालपत्रा (त्री)।** स्त्री। मिश्रेयानामक्षुपे। মউরী গাছ। रा.नि.व ४। तालमूल्यां। सु.सू. ३६अ.। चि.११।२५अ.। वा.उ.१२अ.। कृष्ण-मुषल्यां। কৃষ্ণ তালমূলী। सु.चि.१८अ.। मूषक-पर्ण्याम्। मे.। वनशताह्वायाम्। वै.निघ.।

**तालपत्रिका।** स्त्री। तालमूल्यां। रा.नि. व.७।

**तालपर्णम्।** क्ली। मुरानामगन्धद्रव्ये। মুরা-মাংসী। श.च.।

**तालपर्णी।** स्त्री। मधुरिकायाम्। रा.नि.व. ४। मुषल्यां। তালমূলী। मुरामांस्यां। अम.। वृहच्छताह्वायाम्। वै.निघ.।

**तालपुष्प(क)म्।** क्ली। तालजटायाम्। তালের মোচ। (कम्) प्रपौण्डरीके। श.र.।

**तालप्रलम्बम्।** क्ली। तालजटायाम्। गुणाः —"तथा तालप्रलम्बञ्च हृद्यं क्षतरुजापहम्।" राज.३प.।

**तालमण्डिका।** स्त्री। तालरसमद्ये। তালের মদ, তাড়ী। तत्पर्य्यायः,—सैन्धा, हाला। तत्साधनं यथा,—"तालपक्वं दन्तिशाकं ककुभञ्च तथैवच। तैरेवच सुसन्धानात् तालमद्यं प्रकीर्त्तितं॥" तन्त्र.। गुणाः—"श्लेष्मदोषकरी वृष्या वातला श्लेष्मवर्द्धनी। कासहृल्लासविध्वंसकरणी ताल मण्डिका॥ पूर्णे कषायपित्ते च योगयुक्ता सुरा हिता। बहुदोषहरा चैव श्लेष्मरोगे विशेषतः॥" अत्रि.१९अ.।

**तालमस्तकम्।** क्ली। कटुशूरणे। বুনো ওল। वै.निघ.। तालवृक्षमस्तके। তালের মাতি। गुणाः—स्वादुतिक्तकषायत्वं, बल प्राण-शुक्रवृद्धिकरत्वं, मूत्रातङ्करोगनाशित्वञ्च। राज.।

**तालमूलिका।** स्त्री। तालमूल्याम्। अम.।

**तालमूली।** स्त्री। (Curculigo orchioides or Hypoxis orchioides. Syn. Curculigo orchiodies.) स्वनामख्यातकन्द-शाके। তালমূলী, তলুর। दा. हिं कालीमुष्ली। ते निलप्तलिगड्डलु, नेलतारि। मुषलीकन्द इति भाषा। तत्पर्य्यायः,—तालिका, तालमूलिका (शब्दर.), अर्शोघ्नी, मुषली, ताली, खलनी (र.), सुवहा, तालपत्रिका, गोधापत्री, हेमपुष्पी, भुताली, दीर्घकन्दिका, मूषली। सा श्वेतकृष्ण-भेदाद्विधा। श्वेता स्वल्पगुणा, अन्या रसायनी च। श्वेता शफेदमुषली, कृष्णा कालीमुषली। सा. गुणाः—मधुरा शीतला वृष्या बलपुष्टिदा पिच्छिला कफकरी पित्तदाहश्रमघ्नी च। रा. नि. व. ७। अपिच—"तालमूली च विष्टम्भी मुषली परि-कीर्त्तिता। मुषली मधुरा वृष्या वीर्य्योष्णा वृंहणी गुरुः। तिक्ता रसायनी हन्ति गुदजाननिलां-स्तथा॥" भा.

**तालर(ल)ण्डः।** पुं। तालजटायाम्। তালের মোচ। र.सा.सं.।

**तालवृन्त(क)म्।** क्ली। तालव्यजने। তাল-পাতার পাখা। तच्च त्रिदोषशमनं लघु। राज. २प.। पुं। सोमलताभेदे। सु.चि.२९अ.। See सोमः।

**तालशस्यम्।** क्ली। तालास्थिमज्जायां। তাল-শাঁস। गुणाः—वृंहणं स्निग्धं शीतलं बल्यं मधु-रञ्च। च.सू.२७अ.।

**तालसत्त्वम्।** क्ली। हरितालभस्मनि। रस.चि.।

**तालक्षीर(क)म्।** क्ली। तालजतवक्षीरे। रा.नि.व.६।

**तालाख्या।** स्त्री। मुरामांस्यां। श.च.।



**तालाङ्कः।** पुं। शाकभेदे। हे.च.। करपत्रे।

**तालाङ्कुरम्।** क्ली। तालास्थिशस्ये। पुं। मनः-शिलायाम्। के.।

**तालिः।** स्त्री। तालभेदे। তেড়েৎ। वै.निघ.। भूम्यामलक्यां। र.मा.।

**तालिकः।** पुं। प्रसारिताङ्गुलिपाणौ। हे.च.।

**तालिका (ली)।** स्त्री। ताम्रवल्लीलतायाम्। रा.नि.व ३। तालमूल्याम्। प.मु.। सु.चि.१७अ.। भूम्यामलक्याम्। रा.नि.व.५। तालवृक्षभेदे। তাড়িয়াৎ। अम.। मनःशिलायाम्। तालीश-पत्रे। वै.निघ.। तुवरिकायाम्। श.र.।

**तालिश(स)(पत्र)म्।** क्ली। तालीशपत्रे। भूरिप्र.।

**तालीतलम्।** क्ली। मुषलीकन्दे। তালমূলী। सु.चि.१७अ.। ड.।

**तालीपत्रम्।** क्ली। तालीशपत्र। रा.नि व.६।

**तालीश(क)म्।** क्ली। तालीशपत्रे। रा.नि. व.६।

**तालीश(स)पत्रम्।** क्ली। (Abies webbiana or Pinus webbiana or Flacourtia cataphracta) भूम्यामलकीसदृशे स्वनामख्यातपण्यद्रव्ये। তালীশপত্র। भा.। दा. हिं तालिष्पत्रि, तालिशपत्र। ते ता. तालिशपत्रि। दा. पनिअल। बम्. ताम्बठ। तत्पर्य्यायः,—तालीशं, पत्राख्यं, शुकोदरं, धात्रीपत्रं, अर्कवेधं, करिपत्रं, करिच्छदं, नीलं, नीलाम्बरं, तालं, तालीपत्रं, तमाह्वयं, तालीशपत्रकं। तदभावे कण्टकारीजटा ग्राह्या। गुणाः—तिक्तोष्णं मधुरं कफवातघ्नं हिक्काश्वासक्षयकासच्छर्द्दिघ्नञ्च। रा.नि. व.६। लघु अरुचिघ्नं गुल्मामाग्निमान्द्यहरञ्च। भा.। भूम्यामलक्यां। मे.।

**तालीशादिमोदकः।** पुं। यक्ष्माधिकारे। तालीशपत्रं १ तो. मरिचं २ तो. शुण्ठी ३ तो. पिप्पली ४ तो. गुड़त्वक् ॥० तो. एला ॥० तो. वंशलोचना ५ तो. शर्करा ३२ तो.। सा.कौ.। च.द.।

**तालु (कम्)।** क्ली। जिह्वाधिष्ठानभूतप्रदेशे। তালু, টাকরা। तत्पर्य्यायः,—काकुदं (अ.), तालुकं। रा.नि.व.१८। "मुखतस्तालु निर्भिन्नं जिह्वा तत्रोपजायते। ततो नाना रसो जज्ञे-जिह्वया योऽधिगम्यते॥" भाग.।

**तालुकण्टकः।** पुं। तालुगतरोगभेदे। তেলো-ওলা। अयञ्च प्रायः शिशोरेव भवति। लक्षणं यथा—"तालुमांसे कफः क्रुद्धः कुरुते तालुकण्ट-कम्। तेन तालुप्रदेशस्य निम्नता मूर्द्ध्नि जायते। तालुपातात् स्तनद्वेषः कृच्छ्रात् पानं शकृद्द्रवम्। तृड़क्षिकण्ठास्यरुजा ग्रीवादुर्धरता वमिः॥" भा.।

**तालुजिह्वः।** पुं। कुम्भीरे। हे.च.।

**तालुपाकः।** पुं। पित्तजन्यतालुरोगविशेषे। তেলো পাকা। तत्र पित्तम् अतिघोरं तालुपाकं जनयति। "पित्तं कुर्य्यात्पाकमत्यन्तघोरं तालुन्येवं तालुपाकं वदन्ति।" भा.म.४भ. मुखरो.चि.।

**तालुपातः (पोड़कः)।** पुं। तालुरोगभेदे, तालुकण्टके। তেলো ওলা।

**तालुपुप्पुटः।** पुं। तालुदेशे मेदःकफजन्ये रोगविशेषे। तत्रावेदनः स्थायी कोलमात्रः शोथो जायते। लक्षणम्—"नीरुक् स्थायी कोलमात्रः कफात्मा मेदोयुक्तः पुप्पुटस्तालुदेशे।" भा.म.४भ. मुखरो.चि.।

**तालुयन्त्रम्।** क्ली। कर्णनासानाड़ीशल्याना-माहरणार्थयन्त्रविशेषे। तच्च मीनतालावाकारं द्वादशाङ्गुलपरिमितम्। तद्विधा—तयोरेकं मत्स्य-तालुवदेकतालं नाम, अन्यत् द्वितालं नाम। सु.सू.७अ.

**तालुरोगः।** पुं। मुखरोगभेदे, तालुदेशस्थ-रोगे। स नवधा यथा—गलशुण्डी तुण्डिकेरीअध्रुषः कच्छपः ताल्वर्बुदः मांससङ्घातः तालुपुप्पुटः तालुशोषः तालुपाकश्चेति। भा.म.४भ.मुखरो. चि.। एषां विशेषाः स्वस्वपर्य्याये मृग्याः।

**तालुविद्रधिः (धी)।** स्त्री। तालुशोथे। "स्यात्तालुविद्रध्यपि दाहरागयुता भवेत्तालुनि सा त्रिदोषात्।" च.।

**तालुशोषः।** पुं। तालुदेशे वायुजन्यरोगविशेषे। तत्र तालुदेशे विदारणवत्पीड़ा श्वासश्च जायते। "शोषोऽत्यर्थं दीर्य्यते वापि तालु श्वासो वातात्तालु-शोषोऽयमुक्तः।" भा.म.मुखरो.चि.।

**तालुसंहतिः।** स्त्री। तालुरोगविशेषे। "तालु-मध्ये निरुच्छ्वासं संहतं तालुसंहतिः।" वा.उ. २१प।

**तालूरः** । पुं । जलावर्त्ते । हे. ।

**तालेश्वररसः** । पुं । कासरोगे रसः । रसः २ तो. लौहं २ तो. गन्धकः ४ तो. अभ्रं ८ तो. हरितालं १ तो. मनःशिला ॥० तो. जयन्ती (জন্তী) एरण्डः चाङ्गेरी (আমরুল) तण्डुलीयं (কাঁটানটে) केशराजः (কেশুত্তে) भृङ्गराजः (ভীমরাজ) पत्ररसेन प्र. द्विधा भावयेत् । रस.कौ. ।

**ताम्रपर्णी** । स्त्री । मिश्रेयायाम् । শুল্‌কা । रा. ।

**ताल्वर्व्वुदम्** । क्ली, पुं । तालुशोथरोगे । টাক্‌রা ফোলা । लक्षणं—पद्माकारं तालुमध्ये तु शोफं विद्याद्रक्तादर्व्वुदं पित्तलिङ्गम् । भा. ।

**ताल्वस्थि** । क्ली । तालुदेशस्थे अस्थनि । ते च द्वे । च.शा.७अ. ।

**तावीषः** । पुं । स्वर्णे ।

**तिक्तः (कः)** । पुं । पटोललतायां । পল্‌তা নতি । प.सु. । भा. । वरुणवृक्षे । বরুণ গাছ । श.मा. । कुटजवृक्षे । কুড়চী গাছ । श.च. । किराततिक्तके । চিরেতা । श.र. । वा.उ.२अ. । कुरवकशाके । কুরুয়া শাক । पर्पटकक्षुपे । ক্ষেৎপাপড়া । प.सु. । उ.च. । वाय्वाकाशभूयिष्ठ-षड्रसान्यतमरसे । তেতো রস । "यो गले चोष-मुत्पादयति मुखवैशद्यं जनयति भक्तरुचिमुत्पाद-यति हर्षञ्च स तिक्तः ।" सु.सू.४२अ. । स निम्बादौ ख्याप्यते । गुणाः—कृमिघ्नः कुष्ठघ्नः अतिसेवनात् राजयक्ष्माणं करोति । रा.नि.व.२० । शीतलघुरुक्षः दीपनः पाचनः शोधनः अरोचक-विषघ्नश्च । तद्विपाकोऽपि कटुः । स च विपाकी वातकृत् कफपित्तघ्नश्च । सु.सू.४२अ. । "प्रतिहन्ति निपाते यो वमनं स्वदते न च । स तिक्तो मुखवैशद्यशोष-प्रह्लादकारकः ॥" चर. । स चातियुक्तः शिरःशूल-मन्यास्तम्भश्रमान् जनयति । तथा कम्पमूर्च्छातृषा-बलशुक्रक्षयकरश्च भवति । इङ्गुदीवृक्षे । भा. । निम्बवृक्षे । वै.निघ. । क्ली । तेजोह्वायाम् । তেজ-বল । वैं. निघ. चयरो. चि. गोक्षुरघृते । पित्ते । विड़लवणे । कृष्णखदिरे । श.मा. ।

**तिक्तकघृतम्** । क्ली । कुष्ठे घृतम् । गव्यघृतं ४श. । क्वाथार्थं त्रिफला हरिद्रा दारुहरिद्रा वासा दुरालभा चेत्रपर्पटी पटोलपत्रं त्रायमाणा कटुकी निम्बत्वक् एषां प्र. २ प. वारि ६४ श. शे. १६ श. । कल्कार्थं—पिप्पली मुस्तकं रक्तचन्दनं त्रायमाणा (বলা লতা) इन्द्रयवः भूनिम्बः एषां प्र. ४ तो. मतान्तरे ६ तो. । सु.चि.९अ. । च.द. । घृतं ४ श. । कल्कार्थं—सप्तपर्णत्वक् अतिविषा सम्पाकः (সোন্দাল) कटुकी पाठा मुस्तकम् उशीरं त्रिफला पटोलपत्रं निम्बत्वक् चेत्रपर्पटी दुरालभा रक्तचन्दनं पिप्पली गजपिप्पली पद्मकाष्ठं हरिद्रा दारुहरिद्रा वचा इन्द्रवारुणी (রাখাল-শশা) मुरा वा शतावरी श्यामालता अनन्ता इन्द्र-यवः वासा मूर्व्वा गुड़ूची भूनिम्बः (চিরেতা) यष्टिमधु त्रायमाणा एषां मिलित्वा १ शरावः (১ সের) । जलं ३२ श. आमलकफलरसः ४ श. । च.द. । रस.र. । महातिक्तकमिदम् ।

**तिक्तकन्द(न्दि)का** । स्त्री । आम्रहरिद्रायां । मालवे पलाश इति ख्याते गन्धपत्रवृक्षे । रा.नि.व. ६ । तिक्तदन्तकापीति क्वचित् निघण्टौ पाठः ।

**तिक्तकरोहिणी** । स्त्री । कटुक्याम् । কট্‌কী । च.द.पित्तज्व.चि,कलिङ्गादौ ।

**तिक्तकर्कोटकी** । स्त्री । तिक्तकर्कटिकायां । তিৎকাঁকড়ী, কাঁকরোল । श.चि. ।

**तिक्तका** । स्त्री । तुम्ब्यां, कटुतुम्ब्याम् । তিৎ লাউ । प.मु. । काकजङ्घायाम् । करञ्जलतायां । चुञ्चुशाके । वै.निघ. ।

**तिक्तकाण्डः** । पुं । भूनिम्बे । চিরাতা ।

**तिक्तकाण्डेरुहा** । स्त्री । कटुकायाम् । কট্‌কী ।

**तिक्तकोषातकी** । स्त्री । तिक्तघोषायाम् । তিৎপল্‌তা । भैष. कुष्ठचि. ।

**तिक्तगन्धा** । स्त्री । राजिकायाम् । রাই । व. निघ. । वराहक्रान्तायाम् ।

**तिक्तगन्धिका** । स्त्री । वराहक्रान्तायाम् । বরাক্রান্তা । श.मा. ।

**तिक्तगुञ्जा** । स्त्री । करञ्जवृक्षे । हारा. । तत्-पर्य्यायः,—चुद्ररसा, रसघा, विड्वाकंटी ।

**तिक्ततण्डुला** । स्त्री । पिप्पल्यां । रा.नि.व.६ ।

**तिक्ततुण्डी** । स्त्री । कटुतुण्डीलतायाम् । তিৎ কুন্দরু, তেলাকুচা । हिं कटुतराइ । रा. नि. व. ३ ।



**तिक्ततुम्बी** । स्त्री । कटतुम्ब्याम् । তিৎ লাউ । प.सु. ।

**तिक्तदुग्धा** । स्त्री । चीरिण्याम् । अजशृङ्ग्याम् । কাঁক্‌ড়াশৃঙ্গী । रा.नि.व ५।९ ।

**तिक्तधातुः** । पुं । पित्ते । रा.नि.व.२१ ।

**तिक्तनित्यः** । त्रि । नित्यं तिक्तभक्षणशीले । च.द. ।

**तिक्तपर्णी (र्णिका)** । स्त्री । गोरक्षकर्क्ट्याम् ।

**तिक्तपत्रः (त्रो)** । पुं, स्त्री । कर्कोटकवृक्षे । কাঁকরোল লতা । हे.च. । भैष.उपदं. चि. ।

**तिक्तपर्व्वा** । स्त्री । गुड़ूच्याम् । यष्टिमधुनि । हिलमोचिकायां । मे. । ब्राह्मीभेदे । दूर्व्वायाम् । जटा. ।

**तिक्तपुष्पा** । स्त्री । पाठायां । रा.नि.व.६ ।

**तिक्तफलः (ला)** । पुं, स्त्री । कतकवृक्षे । निर्म्मालिा वृक्ष । रा.नि.व.११ । (ला) कतकवीजे । वै.निघ. । यवतिक्तालतायां । रा. नि. व. ३ । वार्त्ताक्यां । षड्भुजायां । थर्म्मूज । रा.नि.व.७ ।

**तिक्तभद्रः (कः)** । पुं । पटोललतायां । श.च. ।

**तिक्तमरिचः** । पुं । कतकवृक्षे । रा.नि.व.११ ।

**तिक्तयवा** । स्त्री । यवतिक्तालतायां । रा.नि. व.३ । शङ्खिन्याम् । वै.निघ. ।

**तिक्तरसा** । स्त्री । ब्राह्मीनाम शाकभेदे ।

**तिक्तरोहिणिका (णी)** । स्त्री । कटुक्यां । কট্‌কী । रा.नि.व.६ । र.मा. । सि.यो.कफज्व. चि. । च.द.कफज्व.चि. ।

**तिक्तला** । स्त्री । शङ्खिन्यां । नवमालिका । ज.द.१२अ. ।

**तिक्तवर्गः** । पुं । तिक्तरसद्रव्यगणे । तद्यथा—मण्डूकपर्णी ( থুলকুড়ি )—वेत्रकरीर (বেতের কোঁড়)—हरिद्राद्वय (হরিদ্রা দারুহরিদ্রা) -इन्द्र-यव-वरुण-स्वादुकण्टक-(বঁইচী) सप्तपर्णवृहतीद्वय-(বৃহতী, কণ্টকারী) शङ्खिनी-(শাঁকিনী) द्रवन्ती-(ইন্দুরকাণী) त्रिवृत्-कृतवेधन-(ঘোষা) कारवेल्ल-(উচ্ছে) वार्त्ताकु-करीर (বংশাঙ্কুর)-सुमनः-(নাটা) शङ्खपुष्पी (ডানকুণী)-अपामार्ग-त्राय-माणा-(গোহালিয়া) शोकरोहिणी (কটুকী)-वैजयन्ती-(জন্তী) सुवर्चला (হুড়হুড়ে)-पुनर्नवा-वृश्चिकाली-(বিছাতী) ज्योतिष्मती (লতাফট্‌কী)—प्रभृतीनि द्रव्याणि । सु.सू.४६अ. ।

**तिक्तवल्ली** । स्त्री । मूर्व्वायां । मुर्गा । र.मा. ।

**तिक्तवार्त्ताकुः** । पुं । The egg plant, the fruit of which is bitter. वार्त्ताकुभेदे । তেত বেগুন । हिं तीत् भण्टा । ज.द.१२अ. ।

**तिक्तवीजा** । स्त्री । कटुतुम्ब्यां । रा.नि.व.३ ।

**तिक्तशाकः** । पुं । वरुणवृक्षे । प.मु. । पत्र-सुन्दरवृक्षे । मे. । खदिरवृक्षे । त्रिका. ।

**तिक्तशाकतरुः** । पुं । श्वेतप्रसूनकवृक्षे । शब्दमा. ।

**तिक्तशाकद्रुमः** । पुं । वरुणवृक्षे । वै.निघ. ।

**तिक्तषट्पलकं (घृतम्)** । क्ली । कुष्ठाधि-कारे । क्वाथार्थं—निम्बत्वक् पटोलपत्रं दार्वी दुरालभा कटुकी त्रिफला पर्पटकः त्रायमाणा प्र. ४ तो. जलं ३२ श. शे. ४ श. । कल्कार्थं—रक्त-चन्दनं भूनिम्बः पिप्पली त्रायमाणा (বলা লতা) मुस्तकम् इन्द्रयवः प्र. १ तो. । च.चि.७अ. ।

**तिक्तसारः** । पुं । विट्खदिरवृक्षे । प मु, । See अरिमेदः । क्ली । दीर्घरोहिषे । বড় রাম-কর্পূর । रा.नि.व.८ ।

**तिक्तस्कन्धः** । पुं । षड्विधास्थापनस्कन्धेषु तिक्त-वर्गीयद्रव्यकृतास्थापनविशेषे । च.चि.८अ. ।

**तिक्ता** । स्त्री । लताकस्तूरिकायाम् । লতাকস্তূ-রিকা । सि.यो.यक्ष्मा.चि.चन्दनादितैले । "हरिद्रे शारिवे तिक्ता ।" कटुक्यां । रा.नि.व.६ । सि. यो.हिक्काश्वासलेहे । च.द.शूल चि. । वा.उ.२अ. । "तिक्ताकाञ्चनगैरिकम् ।" छिक्किन्यां । भा. । मूर्व्वायाम् । मूर्गा । रा.नि.व.३ । सि.यो.कासचि. । कटुरोहिण्यां । पाठायाम् । रा.नि.व.६ । यव-तिक्तायां । कटुतुण्ड्यां । रा.नि,व.३ ।

**तिक्ताख्या** । स्त्री । कटुतुण्डीलतायाम् । কটু-তরাই । रा नि.व.३ ।

**तिक्ताङ्गा** । स्त्री । पातालगरुड़ीलतायाम् । শিলিন্দা । रा.नि.व.३ ।

**तिक्ताद्वयम्** । क्ली । एका कटुका अन्या काक-तिक्ता च । वा.सू.१५अ. ।

**तिक्तामृता।** स्त्री। गुड़ूच्याम्। वै.निघ.।

**तिक्तालाबू:।** स्त्री। तिक्ततुम्ब्यां। তিৎলাউ। ज.द.१२अ.।

**तिक्तास्यता।** स्त्री। पित्तजन्यमुखरोगे। वै. निघ.।

**तिक्तिका।** स्त्री। कटुतुम्ब्यां। श.र.। काकमाच्यां। रा.नि.व.४। तिक्तपटोल्यां। তিৎ পল্তা। सा.कौ.अश्मर्यां।

**तिक्तोत्तमा।** स्त्री। पटोले। वै.निघ.।

**तिग्मम्।** क्ली। तीक्ष्णे। च.।

**तिग्मांशु:।** पुं। सूर्य्ये। ह.।

**तिङ्गुद:।** पुं। इङ्गुदीवृक्षे। वै.निघ.।

**तिजिल:।** पुं। चन्द्रे। उ.।

**तिण्टी।** स्त्री। श्योणाके। विवृतायां। श.च.।

**तितउ:।** पुं। शतपोषके। চালনী।

**तितिभ:।** पुं। इन्द्रगोपकीटे। हे.च.।

**तितिरि:।** पुं। तित्तिरपक्षिणि। रा.

**तितिलम्।** क्ली। तिलपिष्टे। वै.निघ.।

**तित्तिड़ीक: (रीका)।** पुं, स्त्री। आम्रवेतसे। तिन्तिड्यां। वै.निघ.।

**तित्तिर: (रि:)।** पुं। पक्षिविशेषे। তিতির পক্ষী। तें तीतुकपिट्ट। वसन्तगौर इति च। तत्पर्य्याय:,—कपिञ्जल:, लघुमांस:(वि), खरकोण:(हे.), चित्रपक्ष.(ज), तितिरि:, तैत्तिर:, याजुषोदर:। गौरकृष्णभेदेन तित्तिरो द्विविध:। तयो: कृष्ण: तित्तिरिरिति, गौर: प्रशस्त: कपिञ्जल इति कथ्यते। मांसगुणा:—वर्ण्यं ग्राहि हिक्काघ्नं त्रिदोषघ्नं श्वासकासज्वरघ्नम्। भा.मांसव.। रक्तपित्ते हितम्। सि.यो.र.पि.चि.। स्निग्धं लघु बलवीर्य्यकरं कषायं मधुरं शीतलं त्रिदोषघ्नञ्च। रा.नि.व.१७। "तित्तिरि: कृष्णवर्ण: स्याच्चित्रोऽन्यो गौरतित्तिरि:। तित्तिरिर्बलदो ग्राही हिक्कादोषत्रयापह:। श्वासकासज्वरहरस्तस्माद्गौरोऽधिको गुणै:॥" अपिच "तित्तिरि: सर्व्वदोषघ्नो ग्राही वर्णप्रसादन:। हिक्काश्वासानिलहरो विशेषाद्गौरतित्तिरि:॥" सु.सू.४६अ.। तथैव तित्तिरो रुच्य: मेधाग्निबलवर्द्धन:। सर्व्वदोषहरो बल्यो बलाकासमता गुणै:॥ गौरतित्तिरभेदश्च श्रेष्ठो गौरश्च तित्तिर:। हतीयतित्तिरोऽन्योऽपि सामान्यगुणलक्षणै:। स वातलोऽतिबलकृद्घन: किञ्चिद्रसायन:॥" अत्रि.२१अ.। सारसपक्षिणि। जैपालवृक्षे। वै.निघ.।

**तित्तिरीफलम्।** क्ली। जैपालबीजे। वै.निघ.। वृक्षाम्ले।

**तिथ:।** पुं। अग्नौ। प्रावृट्काले। सं.सा.।

**तिथिप्रणी:।** पुं। चन्द्रे। हे.।

**तिदिश:।** पुं। डिण्डिशे। টেঁড়শ। वै.निघ.।

**तिनाशक:।** पुं। तिनिशवृक्षे। জারুল গাছ। श.र.।

**तिनि:।** पुं। तिनिशवृक्षे। জারুল গাছ। "कट्फलं तिनिसैन्धवम्।" सु.चि.१६अ.।

**तिनिका।** स्त्री। यवनालवृक्षे। জনার গাছ। वै.निघ.।

**तिनिश:।** पुं। (Lagerstroemia flos-Reginae or Dalbergia oujeineisis.) स्वनामख्यातवृक्षे। জারুল গাছ, সাদন গাছ। प.मु.। हिं तिरिच्छ। स्यन्दन इति महाराष्ट्रे कर्णाटे अनूपदेशे च प्रसिद्ध:। च.चि.१अ.। तत्पर्य्याय:,—तिनाशक:, स्यन्दनद्रुम: (शब्दर.), अच्छक: (र.), चित्रकर्म्मा (श), स्यन्दन:, नेमी, रथद्रु:, अतिमुक्तक., वञ्जुल:, चित्रकृत् (अ.), चक्री, शताङ्ग:, शकट:, रथ:, रथिक:, भस्मगर्भ:, मेषी, जलधर:, स्यन्दिनि:। गुणा:—कषाय: उष्ण: कफरक्तातिसारघ्न: ग्राहक: दाहजनक: वातरोगे हितश्च। रा.नि.व.९। "तिनिश: श्लेष्मपित्तास्रमेद:-कुष्ठप्रमेहजित्। तुवर: श्वित्रदाहघ्नो व्रणपाण्डुकृमिप्रणुत्॥" भा.।

**तिन्तिड़:।** पुं। वृक्षाम्ले। विश्व.।

**तिन्तिड़ि(ड़ी)क: (कम्) (का)।** पुं, क्ली, स्त्री। The tamarind tree or its fruit. (Tamarindus Indica) स्वनामख्याताम्लफलवृक्षे। তেঁতুল গাছ, তেঁতুল। हिं अमली, इमली। मं इमली, चिञ्चा। कं हुलिसे। तें चिण्ट। उत् কঁয়া। ता. पुलि। वम्. टिनृटञ्। तत्पर्य्याय:,—चिञ्चा, अम्लिका (अ.), तिन्तिड़ीक:, तिन्तिड़ीका, तिन्तिड़िका, अम्लीका, आम्लिका, आम्लीका, तिन्तिलीका (अ.टी.), वृक्षाम्ल:, तिन्तिड़: (वै.), तिन्तिली, तिन्तिड़िका, आम्लिका, चुक्र:, क्ला. [illegible] अम्ला, अत्यम्ला, भुक्ता, भुक्तिका, चारित्रा, गुरुपत्रा, पिच्छिला, यमदूतिका, चरित्रा (शब्दर.), शाकचुक्रिका, सुचुक्रिका, सुतिन्तिड़ी। गुणा:—आमा (কাঁচা) गुरुर्वातहरा पित्तकफरक्तघ्नी। पक्वा (পাকা বা গোবরা) सरा रुच्या वह्निकृत् वस्तिशोधनी। शुष्का (শুক্না) हृद्या लघु: श्रमभ्रान्तितृष्णाहरी च। मद व.६। आम वातघ्नी गुरु: पित्तकफास्रकृत्, पक्वा दीपनी रुच्या सरा उष्णा वातकफघ्नी च। भा.पू.१भ.। आमं वातघ्नम् उष्णम् अतिगुरु च। पक्वं लघु संग्राहि ग्रहणी कफवातजिच्च। मद. व. ६। आमतिन्तिड़ी (কাঁচা তেঁতুল) अत्यम्ला। पक्वा (পাকা তেঁতুল) मधुराम्ला वातघ्नी पित्तदाहरक्तकफमकोपकरी। तिन्तिड़ीकम् आममत्यम्लं लघु पित्तकृत्। पक्वं फलं मधुराम्लं भेदन विष्टम्भवातघ्नञ्च। अम्लं वटु कषायं कफार्शोघ्नमुष्णं वातोदरतृष्णाहृद्रोगयक्ष्मातिसारव्रणघ्नञ्च। रा.नि.व.६। पक्वचिञ्चाफलरस: मधुराम्ल: रुचिद: शोथपाककरलेप: व्रणदोषघ्नश्च। चिञ्चापत्रं (তেঁতুলপাতা) शोफघ्नं रक्तदोषव्यथाहरञ्च। तस्य शुष्कत्वक्क्षार: (শুষ্ক তেঁতুলছালের ক্ষার) शूलाग्निमान्द्यहर:। रा.नि.व.११।

**तिन्तिड़ीकम्।** क्ली। वृक्षाम्ले। তেঁতুল। अम.। सि.यो. स्वरभेद. चि. चव्यादिलेहे। पुं। अम्लवेतसे। वै.निघ.।

**तिन्तिड़ीद्युतम्।** क्ली। चुक्रद्यम्। কাঁইবীচির খোলা।

**तिन्तिड़ो(लो)फलम्।** क्ली। वृक्षाम्ले। তেঁতুল। মহা আদা। रा.नि.व.६। जैपालबीजे। प.मु.।

**तिन्तिणी (ला) (लि(ली)का) (ली)।** तिन्तिड्यां। अ.टी.। श.र.। वै.निघ. ग्रहणी चि. यमान्यादिचूर्णे।

**तिन्तिराङ्गम्।** क्ली। वज्रलौहे।

**तिन्दिश:।** पुं। टिण्डिशवृक्षे। रा.नि.व.७।

**तिन्दु: (क:)।** पुं, क्ली (कम्)। (Diospyros glutinosa or D. Cordifolia or D. Embryopteris.) स्वनामप्रसिद्धवृक्षे तत्फले च। গাব, তেঁদ, মাকড়া কেঁদ। हिं तेँद, माकड़ाकेँद, गाव्। मं टेम्बरुयणि। कं रु'वुरु। तें तमिक्। ता. तुम्बिक। वम्. तिम्बोरी। तत्पर्य्याय:,—स्फूर्ज्जक:, कालस्कन्ध:, शितिसारक: (अ.), स्फूर्ज्जक:, कैन्दु:, तिन्दु:, तिन्दुल:, तिन्दुकी (शब्दर.), नीलसार:, अतिमुक्तक:, स्यन्दक:, रामण:, स्फूर्ज्जन:, स्यन्दनाह्वय:, कालसार:। च. सू. ४ अ.। सु.सू.३८अ.न्यग्रोधादि:। फलगुणा:—स्वादामं तिन्दुकं ग्राहि वातलं शीतलं लघु। पक्वं पित्तप्रमेहास्रश्लेष्मघ्नं मधुरं गुरु॥ भा. आमव.। अक्षोण' लघु संग्राहि स्निग्ध' पित्ताग्निवर्द्धनं। आमं कषायं संग्राहि तिन्दुं वातप्रकोपनम्॥ सु.सू.४६अ.। तिन्दुकामं कषायं स्यात् संग्राहि वातकृत्परं। पक्वन्तु मधुरं स्निग्ध' दुर्ज्जरं श्लेष्मलं गुरु॥" रा. नि. व. ११। (Diospyros melanoxylon.) Ebony tree. काकतिन्दुके। तिन्दुकभेदे। কেঁদ, আবলুশ। हिं केन्दु, तेन्दु। तें तुमि, तुमकि। ता. तुम्बि। कुचेलके। तिण्डिशे। টেঁড়শ। वै.निघ.। क्ली। कर्षे, २ तो.। प.प्र.१ख.।

**तिन्दुकाक्ततिफल:। तिन्दुकाभफल:।** पुं। द्वीपान्तरखर्ज्जूरीवृक्षे। পিণ্ডীখেজুর। वै.निघ.।

**तिन्दुकास्थि।** क्ली। तिन्दुकबीजे। কেঁদফলের বীজ।

**तिन्दुकि:।** स्त्री। तिन्दुकवृक्षे। श. र.।

**तिन्दुकिनी।** स्त्री। आवर्तकीलतायां। আঁৎমোড়া। रा.नि.व.३।

**तिन्दुकी (इन्)।** पुं। तिन्दुकवृक्षे। গাবগাছ। र.मा.। श.र.।

**तिन्दुज: (क:)।** पुं। लोध्रवृक्षे। प.मु.। च. द. परिणामशूले।

**तिन्दुल:।** पुं। तिन्दुकवृक्षे। श.र.।

**तिन्दुबीजम्।** क्ली। कैवुकबीजे। কেঁউ বীজ। र.चि.क्षासि.चि.।

**तिमि:।** पुं। सागरजमहामत्स्ये। তিমি মাছ। गुणा:—"सामुद्रा गुरव: स्निग्धा मधुरा नातिपित्तला:। उष्णा वातहरा वृष्या वर्चस्या: श्लेष्मवर्द्धना:। बलावहा विशेषेण मांसाशित्वात्समुद्रजा:॥" सु.सू.४६अ.।

**तिमिकोष:।** पुं। समुद्रे।

**तिमिङ्गिलः।** पुं। सागरजाते तिमितोऽपि महति मत्स्ये। अयन्तिमिभक्षकः तद्गुणश्च। अम.।

**तिमिङ্গিলগিলঃ।** पुं। राघवमत्स्ये। अयं तिमिङ्गिलभक्षकः। রাঘব বোয়াল। हे.च.।

**तिमितः।** त्रि। क्लिन्ने। ভিজে। रा.

**तिमिरः (रोगः)।** पुं, क्ली। लिङ्गनाशापरनामधेये नेत्ररोगविशेषे। রাতকাণা। हिं नजला। तच्च षड्विधं वातपित्तकफरक्तसंसर्गसन्निपातभेदेन। निदानादि यथा—दोषाश्चतुर्थपटलमाश्रित्य तिमिरमुत्पादयन्ति। तेन साकल्येन दृष्टिरोधो भवति। गाढ़े च तस्मिन् तेजःपदार्थमपि न दृश्यते। "तिमिराख्यः स वै दोषश्चतुर्थपटलं गतः। रुणद्धि सर्व्वतो दृष्टिं लिङ्गनाशमतःपरम्। अस्मिन्नपि तमोभूते नातिरूढ़े महागदे। चन्द्रादित्यौ सनक्षत्रावन्तरीक्षे च विद्युतं। निर्म्मलानि च तेजांसि भ्राजिष्णून्यथ पश्यति॥ शिरानुसारिणि मले प्रथमं पटलं श्रिते। अव्यक्तमीक्षते रूपं व्यक्तमप्यनिमित्ततः। प्राप्ते द्वितीयं पटलमभूतमपि पश्यति। भूतन्तु यत्नादासन्नं दूरे सूक्ष्मञ्च नेक्षते। दूरान्तिकस्थं रूपञ्च विपर्य्यासेन मन्यते। दोषे मण्डलसंस्थाने मण्डलानीव पश्यति। द्विधैकदृष्टिमध्यस्थे बहुधा बहुधास्थिते। दृष्टेरभ्यन्तरगते ह्रस्ववृद्धविपर्य्ययम्। नान्तिकस्थमध संस्थे दूरगं नोपरिस्थितं। पार्श्वं पश्येन्न पार्श्वस्थे तिमिराख्योऽयमामयः॥" वातजे यथा—"...वाते तु सङ्कोचयति दृक्शिराः। दृङ्मण्डलं विशत्यन्तो गम्भीरा दृगसौ स्मृता॥" पित्तजे यथा—"पित्तजे तिमिरे विद्युत्खद्योतोद्योतदीपितम्। शिखितित्तिरपिच्छाभं प्रायो नीलञ्च पश्यति॥" कफजे यथा—"कफेन तिमिरे प्रायः स्निग्धं श्वेतञ्च पश्यति। शङ्खेन्दुकुन्दकुसुमैः कुमुदैरिव चाचितम्। रक्तेन तिमिरे रक्तं तमोभूतञ्च पश्यति। संसर्गसन्निपातेषु विद्यात् सङ्कीर्णलक्षणम्॥" वा.उ.१२अ.। अश्वस्य नेत्ररोगविशेषे। আঁধা। लक्षणं—"कदाचिद्वीक्षते रूपं कदाचिच्च न वीक्ष्यते। तिमिरं तं विजानीयात् लिङ्गेनानेन बुद्धिमान्॥" ज.द.३० अ.। लौहकिट्टे। ताम्रे। त्रिका.। जलजन्तुभेदे। नखरञ्जनवृक्षे। মেদী গাছ। द्रव्याभि.।

**तिमिरा।** स्त्री। हरिद्रायाम्। भैष.वातरक्तचि. विषतिन्दुकतैले।

**तिमिरिः।** पुं। मत्स्यभेदे। वै.निघ.।

**तिमिरी (इन्)।** पुं। इन्द्रगोपकीटे। वै.निघ।

**तिमिषः।** पुं। कुष्माण्डलतायाम्। কুমড়া গাছ। त्रिका.। ग्राम्यकर्कटिकायाम्। त्रिका.। तरम्बुजलतायाम्। नाटामे। हारा.।

**तिमी।** स्त्री। तिमिमत्स्ये। द्विरूपकोषः।

**तिमीरकः।** पुं। नखरञ्जकवृक्षे। মেহেদি গাছ। प.मु.।

**तिरश्ची।** स्त्री। पशुपक्षिस्त्रियाम्। शादि।

**तिरस्कारिणी।** स्त्री। व्यवधायकवस्त्रे। अ.। কানাৎ।

**तिरिजिह्विकः।** पुं। पारिजातवृक्षे। वै.निघ.। পাল্‌তে।

**तिरिटः।** पुं। इक्षुदण्डे। वै.निघ.।

**तिरिटिः।** पुं। इक्षुग्रन्थौ। श. र.।

**तिरिणीकण्टः।** पुं। पारिजातवृक्षे। পাল্‌তে মান্দার। वै.निघ.।

**तिरिमः (रियः)।** पुं। शालिधान्यभेदे। गुणाः—मधुरः स्निग्धः शीतलः दाह-पित्तघ्नः रुच्यः त्रिदोषघ्नः पथ्यश्च। रा.नि.व.१६।

**तिरीटः।** पुं, क्ली। लोध्रवृक्षे। प.मु.। रा.नि.व.६। भैष.नेत्ररो.चि.। किरीटे। उ.।

**तिरीटकः।** पुं। पट्टिकालोध्रे। सि.यो.रक्तार्शः-चि.। भा.म.४भ.।

**तिरीपशालिः।** पुं। मासत्रयपक्वे शालिधान्यभेदे। वै.निघ.।

**तिर्य्यक्।** पुं। चञ्चलधातौ। পারা। पक्षिजातौ। वै.निघ.।

**तिर्य्यक्पातनम्।** क्ली। पारदस्य पातनक्रियाविशेषे। तत्साधनविधिः—"घटे रसं विनिःक्षिप्य सजलं घटमन्यकम्। तिर्य्यङ्मुखं द्वयोः कृत्वा तन्मुखं रोधयेत् सुधीः। रसाधो ज्वालयेदग्निं यावत् सूतोजलं विशेत्। तिर्य्यक्पातनमित्युक्तं सिद्धैर्नागार्जुनादिभिः॥" र.सा.सं।

**तिर्य्यक्फला।** स्त्री। जतुकालतायाम्। আঁৎ-মোড়া। रा.नि.व.३।

**तिर्य्यक्स्रोताः (स्)।** पुं। पशुपक्ष्यादौ।

**तिर्य्यक्च्छिन्नम्।** क्ली। अस्थिभङ्गविशेषे। See भग्नम्।



**तिर्य्यग्गतः।** त्रि। सन्धिस्थानं त्यक्त्वा वक्रं गते। भा.म.३भ.भग्न.चि.।

**तिर्य्यग्गा।** स्त्री। पूतनीशाके। পুদিনা। प.मु.।

**तिर्य्यग्गामी (इन्)।** पुं। कर्कटे। वै.निघ.।

**तिर्य्यग्यन्त्रम्।** क्ली। पारदस्य तिर्य्यक्पातनार्थं यन्त्रविशेषे। "अधःपाते लवीभाण्डे त्रिभागजलपूरिते। तोयमग्न्यर्द्धभाण्डस्य तन्नालञ्चोर्द्धविस्तृतं। त्रिपिटं ज्वालयेदग्निं तस्योपरि च गोमयैः। तिर्य्यक्कृतञ्च तद्यन्त्रं तिर्य्यग्यन्त्रमुदीरितम्॥" रस चि.।

**तिर्य्यग्यवोदरम्।** क्ली। यवधान्ये। वै.निघ.।

**तिर्य्यग्यानः।** पुं। कर्कटे। त्रिका.।

**तिर्य्यग्योनिः।** पुं। पशुपक्ष्यादौ। सुश्रु.।

**तिर्य्यङ् (ञ्च)।** त्रि। विहङ्गादौ। मे.। पशौ। हे.।

**तिर्य्यञ्ची।** स्त्री। पशुपक्ष्यादौ। मुग्धबो.।

**तिलः (कः)।** पुं, क्ली,। (Sesamum Indicum.) स्वनामख्यातक्षुपे। তিল গাছ। प.मु.। हिं मिठातिल। सं तिल। कं एलु। ते' नुव्वुलु, मंचिनूने नुव्वुलु। ता. वाल्लेन्नेय। फा. कुञ्जद। दा. वारिक तिल। तत्पर्य्यायः,—होमधान्यं, पवित्रः, पितृतर्पणः, पापघ्नः, पूतधान्यं (रा.), स्नेहफलः, स्नेहफलपूरफलः। श्वेतकृष्णरक्तवन्यभेदेन चतुर्धा। सा, गुणाः—स्निग्धः वर्ण्यबलाग्निवृद्धिकरः स्तन्यघ्नः दाहघ्नः गुरुः उष्णः पित्तकरः मूत्रलाघवकरः व्रणे हितः पथ्यः। संग्राही मधुरः कषायः तिक्तः कटुविपाकः पथ्यतमश्च। इति कृष्णतिलगुणाः। सितः अल्पगुणदः। रा.नि.व.१६। "कृष्णः श्रेष्ठतमस्तेषु शुक्लो मध्यमः सितः। अन्ये हीनतराः प्रोक्तास्तज्ज्ञैः रक्तादयस्तिलाः॥" भा.पू.१भ.धान्यव.। "तिलो विपाके मधुरो बलिष्ठः स्निग्धो व्रणालेपनपथ्य उक्तः। बल्योऽग्निमेधाजननो वरिष्ठो मूत्रस्य दोषाहरणो गुरुश्च। तिलेषु सर्व्वेष्वसितः प्रधानो मध्यः सितो हीनतरास्तथान्ये॥" अत्रि.१५अ.। तच्छाकगुणाः—"वातलं कटु तिक्ताम्लमधोमार्गप्रवर्त्तकम्।" च.सू.२७अ.। (कः) लोध्रवृक्षे। লোধ গাছ। रा.नि.व.६। मरुवकवृक्षे। মরুয়া ফুলের গাছ। तत्पर्य्यायः,—विदिषकः, सुखमण्डनकः, पुण्ड्रः, पुण्ड्रकः, स्थिरपुष्पी, छिन्नरुहः, दग्धरुहः, मृतजीवः, तरुणीकटाक्षकामः, बालसुन्दरः, दुग्धरुहः, भालविभूषणसंज्ञः, पुन्नागः, रेचकः रा.)। गुणाः—मधुरः शीतः वातपित्तकफघ्नः बलपुष्टिकरः हृद्यः लघुः मेदोवृद्धिकरश्च। रा.नि.व.१०। कटुपाकः उष्णः रसायनः कफकुष्ठकृमिघ्नः बस्तिदन्तमुखरोगघ्नश्च। भा.। कैतकीवृक्षे। गुड़ूच्याम्। सुषव्याम्। উচ্ছে। रा.नि.व.२३। मूत्राशये। अश्वविशेषे। मे.। तिलकालकरोगे। अम.। (कम्) क्ली। सौवर्च्चललवणे। रा.नि.व.६। कालसौहे। गुड़े। कृष्णतिले। वै.निघ.। मस्तिष्के। क्लोम्नि। रा.नि.व.१८। कृष्णसौवर्च्चललवणे। वाचलवणे। चित्रके। त्रिका.।

**तिलकटः।** पुं। तिलपुष्परेणौ। तिलचूर्णे। वै.निघ.।

**तिलकणः।** पुं। मार्ज्जिततिले। মাজা তিল। च.सू.४अ.।

**तिलकत्वक्।** स्त्री। तिलवल्कले। তিলের ছাল। गुणाः—कषाया उष्णा पुंस्त्वघ्नी दन्तदोषहरी कृमिशोफव्रणघ्नी रक्तदोषघ्नी। रा.नि.व.१०।

**तिलकन्दः।** पुं। तिलपर्णीकन्दे। रा.नि.व.७।

**तिलकल्कः (ज)।** पुं, क्ली। पीड़िततिलपिण्याके। তিলের খোল। रा.नि.व.१६।

**तिलका।** स्त्री। कस्तुरीमृगभेदे। रा.।

**तिलकालकः।** पुं। क्षुद्ररोगभेदे। তিল। तत्पर्य्यायः,—तिलकः (अ.), कालकः, पिप्लुः, जड़ुलः (हे.)। लक्षणं—"कृष्णानि तिलमात्राणि नीरुजानि समानि च। वातपित्तकफोद्रेकात्तान् विद्यात्तिलकालकान्॥" भा.नि.। शूकरोगभेदे। "कृष्णानि चित्राण्यथवा शूकानि सविषाणि च। पातितानि पचन्त्याशु मेढ़्रं निरवशेषतः॥ कालानि भूत्वा मांसानि शीर्य्यन्ते यस्य देहिनः। सन्निपातसमुत्थानं तं विद्यात्तिलकालकम्॥" सु.नि.१४अ.।

**तिलकाश्रयः।** पुं। ललाटे। কপাল। शब्दार्थकल्पतरुः।

**तिलकिट्टम्।** क्ली। तिलकल्के। তিলের খইল। गुणाः—लेखनं रूक्षं विष्टम्भि दृष्टिदोषकरञ्च। भा.पू.१भ.।

**तिलकी (इन्)।** त्रि। तिलकालकयुक्ते।

**तिलकुट्टम्।** क्ली। तिलकिट्टे। भा.।

**तिलखलिः** । पुं । तिलकिट्टे । भा. ।

**तिलचित्रपत्रकः** । पुं । तैलकन्दनामककन्दशाके । रा.नि.व.७ ।

**तिलचूर्णम्** । क्ली । तिलकल्के । তিলকুটো । तत्पर्य्यायः,—तिलकल्कं, पललं, पिष्टकम् । गुणाः—मधुरं रुच्यं रक्तपित्तबलपुष्टिकरञ्च । रा. नि.व.१६ ।

**तिलच्छकः** । पुं । ईहामृगे । वै.निघ. ।

**तिलजम्** । क्ली । तैले । वै.निघ. ।

**तिलजटा** । स्त्री । तिलमञ्जर्य्याम् । दुग्धेनैतत् क्वाथः आखुविषहरः । वा.उ.३८अ. ।

**तिलजा** । स्त्री । तिलवासिनीशाली । হৈমন্তিক-ধান্যবিশেষ । रा.नि.व.१६ ।

**तिलतण्डुलकम्** । क्ली । आलिङ्गने । श.मा. । तिलतण्डुले । सतिलतण्डुले ।

**तिलतैलम्** । क्ली । तिलभवतैले । তিলের তেল । गुणाः—तीक्ष्णं त्वग्दोषहृत् चक्षुष्यं सूक्ष्मोष्णं कफकृत् बद्धविट्कं कृमिघ्नं स्रोतःशोधकं कृशस्य धातुपुष्टिकरञ्च । वा.तैलव. । केश्यं मधुरं तिक्तं कषायम् उष्णं तीक्ष्णं बल्यं कफवातजन्तुखर्जुव्रणकण्डूतिहरं कान्तिकरञ्च । रा. नि. व. १५ । "कषायानुरसं स्वादु सूक्ष्ममुष्णं व्यवायि च । पित्तकृद्वातशमनं श्लेष्मरोगादिवर्द्धनं । अल्पं रुचिकरं मेध्यं कण्डूकुष्ठविकारनुत् । वृष्यं श्रमापहं श्रेयं तिलतैलं विदुर्बुधः । छिन्ने भिन्ने च्युते दृष्टे भग्नेऽग्निदाहकेऽपि च । वाताभिष्यन्दिस्फुटने चाभ्यङ्गे तिलतैलकम् । विषे व्यालगुनः सर्पे भेकेऽभ्यङ्गावगाहने । पाने वस्तौ वलासे च तिलतैलं विधीयते । तिलतैलं विधेयं स्यात् सर्व्वरोगनिवारणे ॥" अवि. १४अ. ।

**तिलनामा** । स्त्री । तिलवासिनीशाली । रा. नि.व.१६ ।

**तिलनालभूतिः** । स्त्री । तिलनालक्षारे । তিলের ক্ষার । गुणाः—अश्मरीघ्नः । च.द. अश्म.चि. ।

**तिलनी** । स्त्री । तिलवासिनीशाली । रा.नि. व.१६ ।

**तिलपर्णः** । पुं, क्ली । श्रीवेष्टे । দেবদারু-নির্যাস । रा.नि.व.१२ ।

**तिलपर्ण(क)म्** क्ली । रक्तचन्दने । भा. । श्रीखण्डचन्दने । শ্বেতচন্দন । रा.नि.व.१२ ।

**तिलपर्णिका** । स्त्री । श्रीखण्डचन्दने, श्रीवेष्टके । अजगन्धायाम् । शाकुनि । रा.नि.व.२३ । रक्तचन्दनवृक्षे । हे.च. ।

**तिलपर्णी** । स्त्री । रक्तचन्दने । प.मु. । वै.निघ. २भ.ज्व.भैरवीगुट्याम् । तिलवासिनीशाली । रा. नि.व.१६ । "तिलौनी"नामकशाकभेदे । र.सा. सं.रसमारणे । गुणाः—लघुः कफशोथहरी च । सु.सू.४६अ. । चन्दने । वै.निघ. ।

**तिलपिच्चटम्** । क्ली । तिलपिष्टके । তিল-কুটো । कश्चित् ।

**तिलपिञ्जः** । पुं । श्वेततिलकवृक्षे । শাদা তিল । निष्फलतिलवृक्षे । अम. । वन्यतिले । কাটতিল । वै.निघ. । [ प.मु. ।

**तिलपिण्डी** । स्त्री । तिलकल्के । তিল খইল ।

**तिलपिष्टकम्** । क्ली । पलले, कुट्टिततिलकृतपिष्टके । তিলকুটো, তিলে সন্দেশ । गुणाः —"पललन्तु समाख्यातं सैवं तिलपिष्टकम् । पललं मलकृद्बल्यं वातघ्नं कफपित्तकृत् । बृंहणं गुरु वृष्यञ्च स्निग्धं मूत्रनिवर्त्तकम् ।" भा. ।

**तिलपुष्पकः** । पुं । विभीतकवृक्षे । वै.निघ. । व्याघ्रनखवृक्षे ।

**तिलपेजः** । पुं । तिलपिञ्जे । শ্বেত তিল, নিষ্ফল তিল । वै.निघ. ।

**तिलभाविनी** । स्त्री । जातीपुष्पवृक्षे । रा. नि.व.१० । [ वै.निघ. ।

**तिलभेदः** । पुं । खाखसवृक्षे । পোস্ত গাছ ।

**तिलमयूरः** । पुं । पक्षिभेदे । তিলে ময়ূর । तत्पर्य्यायः,—गुरुगटकः । त्रिका. ।

**तिलमलम्** । क्ली । तिलकिट्टे । के. ।

**तिलमोदकः** । पुं । तिललड्डुके । वै.निघ. ।

**तिलरसः** । पुं । तिलतैलं । वै.निघ. ।

**तिलवासिनी (सी)** । स्त्री, पुं । स्वनामख्यातशालिधान्यविशेषे । হৈমন্তিক ধান্যবিশেষ । गुणाः—पित्तकफघ्नी स्निग्धा कासश्वासहरा शीघ्रपाककारी लघुः हृद्या शुक्रवर्द्धिनी महागुणा पाण्डुशूलामवातेषु प्रशस्ता च । रा.नि.व.१६ ।



**तिलशालिः** पुं, स्त्री । तिलवासिशाली । रा.नि.व.१६ ।

**तिलश्राणा** । स्त्री । कृषरायाम् । খিচুড়ী । प.मु ।

**तिलसम्भवम्** । क्ली । तैले । वै.निघ. ।

**तिलस्नेहः** । पुं । तिलतैले । (शब्दकल्पतरुः) ।

**तिलाङ्कितदलः** । पुं । तैलकन्दे । रा. नि. व ७ । See तैलकन्दः ।

**तिलापत्त्या** । स्त्री । कृष्णजीरके । श.च. ।

**तिलित्सः** । पुं । गोनाससर्पे । अम. ।

**तिलोदनम्** । क्ली । तिलान्ने । हारा. ।

**तिल्यम्** । क्ली । तिलक्षेत्रे । रा.नि.व.२ ।

**तिल्वः (ल्वः) (कः)** । पुं । मरुवकवृक्षे । মরুয়া ফুলের গাছ । र.मा. । रोध्रवृक्षे । अम. । श्वेतरोध्रे । रक्तरोध्रे । अ.टी.सभूति.स्वा. । रोध्राकारे वृहत्पत्रे रक्तवैरेचनिकवृक्षे । सु. सू. ३८ अ. । श्यामादिः ड. । वा.सू.१५अ. । स्वल्परोध्रे । सु.सू. ३९ अ. । अधःसंशमने । इङ्गुदीवृक्षे । वै. निघ. विषमज्व. कोलादिघृते ।

**तिल्वकतरुः** । पुं । लोध्रवृक्षे । वै.निघ. ।

**तिल्वनी** । स्त्री । कर्णस्फोटायाम् । কাণছিড়া । वै.निघ. ।

**तिष्यः (कः)** । पुं । पौषमासे । श.र. । आमलकवृक्षे । असनवृक्षे । वै.निघ. ।

**तिष्यद्गुः** । पुं । सन्ध्यायाम् । भट्टि. ।

**तिष्यपुष्पा (फला)** । स्त्री । आमलकीवृक्षे । श.च. । अम. ।

**तिष्या** । स्त्री । आमलकीवृक्षे । श.र. ।

**तिस्रा** । स्त्री । शङ्खपुष्पीलतायाम् । वै.निघ. ।

**तिह्रा(न्)** । पुं । तण्डुले । त्रि । रोगिणि । उणा. । धनुषि । सं.सा. ।

**तीरः** । पुं, क्ली । वङ्गे । मे. ।

**तीरणः** । पुं । करञ्जिकायाम् । वै.निघ. ।

**तीरभुक्तिः** । पुं । त्रिहुदितिख्याते देशभेदे । त्रि. ।

**तीर्णपदी** । स्त्री । मुषलीकन्दे । তালমূলী । श.च. ।

**तीर्थम्** । क्ली । स्त्रीरजसि । मे. । योनौ । हे. च. । अग्नौ । निदाने । उणा. । स्त्री । कदलीवृक्षे । रा नि.व.११ ।

**तीर्थवाकः** । पुं । केशे । हे.च. ।

**तीर्थसेवी (इन्)** । पुं । वकपक्षिणि । रा. नि. व १६ ।

**तीवरः** । पुं । समुद्रे । अ. ।

**तीव्रम्** । क्ली । लौहे । तीक्ष्णलौहे । रा. नि. व. १३ । वङ्गे । उणा. । त्रि । तीक्ष्णे । कटुनि । त्रिका. ।

**तीव्रकन्दः (गठः)** । पुं । शूरणे । ওল । कटुशूरणे । বুনো ওল । रा.नि.व.७ ।

**तीव्रगन्धा(न्धिका)** । स्त्री । यमान्याम् । रा. नि. व. ६ ।

**तीव्रज्वाला** । स्त्री । धातकीवृक्षे । रा.नि.व.६ ।

**तीव्रवेदना** । स्त्री । अतिवेदनायाम् ।

**तीव्रशक्तिः** । स्त्री । कटुवीरायाम् । লঙ্কা-মরিচ । अ. ।

**तीव्रसन्तापः** । पुं । श्येनपक्षिणि । বাজ পাখী । वै.निघ. ।

**तीव्रा** । स्त्री । महाज्योतिष्मतीलतायाम् । বড় লতাফট্‌কী । तरटीवृक्षे । तुलसीवृक्षे । रा. नि. व. ६।८।१० । धातकीवृक्षे । पाण्डुशिंशपायाम् । वै.निघ. । गण्डदूर्व्वायाम् । राजिकायाम् । রাই । कटुक्याम् । मे. ।

**तीक्ष्णः** । पुं । कृष्णसर्षपे । विषे । अम. । तिक्ततायाम् । यवक्षारे । शोभाञ्जनमूलके । रेचनधूमपानविशेषे । तत्र धूमनाड़ी २४ अङ्गुलयः, धूपद्रव्याणि च तीक्ष्णानि भाव्यानि । शल्लकीवृक्षे । श्वेतशिग्रौ । छिक्किन्यां । श्वेतमरुवके । कृष्णशिंशपायां । पुंरोगे । वै.निघ. । सितदर्भे । कुन्दुरौ । কুন্দুরুখোটী । रा.नि.व.८।१२ । क्ली । मृत्तिकालवणे । तीक्ष्णवस्तुनि । हीरकादौ । खर्परधातौ । वै.निघ. । लवङ्गे । लौहे । प.मु. । तीक्ष्णलौहे । र.मा. । लवणे । मुष्कके । मे. । मरिचे । वै.निघ. २भ.अतिसा.चि. देवदार्व्यादिः । चविकायां । रा. नि.व.६ । मूलके । अम. । त्रि । तीव्रगुणभूयिष्ठे । तदाश्रयद्रव्यं पित्तकरं वातकफघ्नं लेखनञ्च । सु. ।

**तीक्ष्णकः** । पुं । सिद्धार्थे । শ্বেত সরিষা । रा. नि.व.१६ ।

**तीक्ष्णकण्टः (कः)।** पुं। यासक्षुपे। ক্ষুদ্র দুরালভা। रा.नि.व.४। इङ्गुदीवृक्षे। करीरवृक्षे। वर्वूरकवृक्षे। रा.नि.व.८। धुस्तूरवृक्षे। जटा.। स्नुहीवृक्षे। वै.निघ.। क्ली। धुस्तूरफले।

**तीक्ष्णकण्टका।** स्त्री। कन्थारीवृक्षे। रा.नि.व.८। फणवज्रीवृक्षे। ফণিমনসা। वै.निघ.।

**तीक्ष्णकन्दः।** पुं। पलाण्डौ। रा.नि.व.७।

**तीक्ष्णकल्कः।** पुं। रेचनाख्यधूमपानकल्के। स च त्वक्पत्रादिः। भा.। कुस्तुम्बुरुवृक्षे। তাম্বূল ফল, নেপালি ধনে। रा.नि.व.६।

**तीक्ष्णकोलः (कः)।** पुं। अकर्करे। शुक्लमदनवृक्षे। वै.निघ.।

**तीक्ष्णगन्धः (कः)।** पुं। पलाण्डौ। भैरवीवचायां। शोभाञ्जनवृक्षे। गन्धतुलस्यां। प.मु.। चव्यकवृक्षे। হেঁচেতা। रा. नि. व. ९। कृष्णशिग्रौ। एलायां। कृष्णार्जके। फणिज्झकवृक्षे। वै.निघ.। कुन्दुरुखोटौ। शब्दार्णवः। महाराजप्र. सा.तैले।

**तीक्ष्णगन्धा।** स्त्री। सूक्ष्मैलायां। र.मा.। श्वेतवचायां। कन्थारिवृक्षे। रक्तसर्षपे। রাই। रा.नि.व.६।८।१६। वचायां। मे.। भा.म.४भ क्षुद्ररी.चि.। जीवन्त्याम्। श.च.। श्वेतशीरके। वै.निघ.।

**तीक्ष्णगन्धोग्रा।** स्त्री। शुक्लवचायां। वै.निघ.।

**तीक्ष्णगुणकर्म्म।** क्ली। तीक्ष्णद्रव्यगुणक्रियायाम्। तत् दाहपाककरं स्रावणं मृदु च। सु.।

**तीक्ष्णतण्डुला।** स्त्री। पिप्पल्याम्। प.मु.। रा.नि.व.६। भा.पू.१भ.।

**तीक्ष्णतरुः।** पुं। पीलुवृक्षे। वै.निघ.।

**तीक्ष्णतैलम्।** क्ली। मद्ये। सर्जरसे। स्नुहीक्षीरे। श.र.। ज्योतिष्मतीतैले। লতাফট্কীর তৈল। रस.र.।

**तीक्ष्णत्वक्।** पुं। तुम्बुरौ। নেপালি ধনে। वै.निघ.।

**तीक्ष्णदंष्ट्रः (कः)।** पुं। व्याघ्रे, चित्रकव्याघ्रे। रा.नि.व.१९।

**तीक्ष्णदुग्धा।** स्त्री। कोङ्कणे ख्याते थावनालवृक्षे। वै.निघ.।

**तीक्ष्णद्रुः।** पुं। पीलुवृक्षे। वै.निघ.।

**तीक्ष्णपत्रः।** पुं। कुमरिचे। লঙ্কামরিচ। प.मु.। तुम्बुरुवृक्षे। रा.नि.व.११। रक्तोद्यौ। इङ्गुदीवृक्षे। वै.निघ.।

**तीक्ष्णपर्णम्।** क्ली। कर्म्मरङ्गवृक्षे। वै.।

**तीक्ष्णपुष्पम् (ष्पा)।** क्ली, स्त्री। लवङ्गे। रा.नि.व.१२। (ष्पा) श्वेतकेतकीवृक्षे। रा.नि.व.१०।

**तीक्ष्णप्रियः।** पुं। यवे। वै.निघ.।

**तीक्ष्णफलः।** पुं। तुम्बुरुवृक्षे। रा.नि.व.११। क्ली। तेजःफले। वै.निघ.।

**तीक्ष्णफला।** स्त्री। राजसर्षपे। রাই সরিষা। रा.नि.व.१६।

**तीक्ष्णमञ्जरी।** स्त्री। नागवल्लीलतायाम्। পানের গাছ। वै.निघ.।

**तीक्ष्णमूलः।** पुं। कुलञ्जनवृक्षे। रा.नि.व.६। शिग्रुवृक्षे। সজিনে গাছ। रा.नि.व.७।

**तीक्ष्णरसः।** पुं। यवक्षारे। र.मा.।

**तीक्ष्णलौहम्।** क्ली। रुक्मलौहे। ইস্পাত, বিদরীতি ভাষা। गुणाः—रूक्षम् उष्णं तिक्तं वातपित्तकफप्रमेहपाण्डुशूलघ्नं सुखाधिकगुणञ्च। रा.नि.व.१३।

**तीक्ष्णवल्कः।** पुं। तुम्बुरुवृक्षे। रा.नि.व.११।

**तीक्ष्णवृक्षः।** पुं। पीलुवृक्षे। वा.टी.हेमा., अरुणश्च। सू.१५अ.श्यामादिः।

**तीक्ष्णशूकः।** पुं। यवे। प.मु.। रा.नि.व.१६।

**तीक्ष्णसारः।** पुं। मधूकवृक्षे। মউল গাছ। कृष्णशिंशपायाम्। घण्टापाटलायाम्। ঘণ্টাপারুল। लौहे। वै.निघ.। स्त्री। कृष्णशिंशपायां। কাল শিশু বা অগুরু। रा.नि.व.९।

**तीक्ष्णा।** स्त्री। अत्यम्लपर्ण्याम्। वचायाम्। सर्पकङ्कालिकालतायाम्। प.मु.। चविकायाम्। रा. नि. व. ६। महाज्योतिष्मतीलतायाम्। লতাফট্কী। कपिकच्छौ। আলাকুশী। रा. नि. व. ३। छिक्किण्याम्। হেঁচেতা। वै.निघ.।

**तीक्ष्णाग्निः।** पुं। जाठराग्न्यन्यतमे अग्नौ। পাচক অগ্নিবিশেষ। "मात्रातिमात्राप्यशिता तीक्ष्णाग्नेः पच्यते सुखं। अतएव हि केनापि मतस्तीक्ष्णाग्निरुत्तमः॥" भा.। See अग्निः।

**तीक्ष्णायसम।** क्ली। तीक्ष्णलौहे। তিখা বা ইস্পাৎ। रा.नि.व.१३। तत्पर्य्यायः,—लौहं, शस्त्रायसं, शस्त्रं, पिण्डं, पिण्डायसं, शठं, आयसं, निशितं, तीव्रं, खड्गं, मुण्डितं, अयः, चित्रायसं, चीनजं। गुणाः—रूक्षोष्णतिक्ततीक्ष्णत्वं वातपित्तकफप्रमेहपाण्डुशूलनाशित्वं मुण्डलौहादगुणाधिकत्वञ्च। रा.।



**तुका(गा)क्षीरी।** स्त्री। वंशलोचनायाम्। हे.च.। रा.नि.व.६। च.द.यक्ष्म.चि.सितोपलादिचूर्णे।

**तुगा (ख्या)।** स्त्री। वंशलोचनायाम्। বংশলোচন। रा.नि.व.६। च.द.सि.यो.स्व.भे.चि.। वा.सू.१५अ.।

**तुङ्गः।** पुं। पुन्नागवृक्षे। পুন্নাগ গাছ। र.मा.। च.सू.४अ.। वृद्धदारकवृक्षे। सु.कल्प.८अ.। नारिकेलवृक्षे। भा.। गण्डके। গণ্ডার। रा.नि.व. ६। पद्मकेसरे। वै.निघ.। त्रि। उग्रे। प्रधाने। उच्चे।

**तुङ्गकः।** पुं। पुन्नागवृक्षे। श.र.। वृद्धदारकवृक्षे। पद्मकेसरे। वै.निघ.।

**तुङ्गकेशरः।** पुं। पुन्नागवृक्षे। प.मु.। नाग- [ केशरे।

**तुङ्गभद्रा।** स्त्री। दक्षिणदेशप्रसिद्धनद्यां। तज्जलं स्निग्धं निर्म्मलं स्वादु गुरु कण्डूपित्तजनकं सात्म्यं पथ्यकरञ्च। रा.नि.व.१४।

**तुङ्गवृक्षः।** पुं। नारिकेलवृक्षे। वै.निघ.।

**तुङ्गस्कन्धफलः।** पुं। नारिकेलवृक्षे। भा. आम्रवर्गे।

**तुङ्गा।** स्त्री। वंशलोचनायाम्। रा.नि.व६। वै.निघ.अ.सा.चि.बृहल्लवङ्गादिचूर्णे। शमीवृक्षे। रा.नि.व.८। अल्पशमीवृक्षे। च.वि.८अ.।

**तुङ्गारिः।** श्वेतकरवीरवृक्षे। र.।

**तुङ्गाक्षीरी।** स्त्री। वंशलोचनायां। वै.निघ.।

**तुङ्गिनी।** स्त्री। महाशतावर्य्यां। रा.नि.व.४।

**तुङ्गी।** स्त्री। कर्णस्फोटायां। কাণছিড়া। वै.निघ.। वनतुलस्यां। हरिद्रायाम्। मे.। वर्व्वरीवृक्षे। शब्दर.।

**तुङ्गीनसः।** पुं। प्राणनाशककीटविशेषे। सु.कल्प.८अ.।

**तुङ्गीपतिः।** पुं। चन्द्रे। त्रि.।

**तुङ्गीशः।** पुं। सूर्य्ये। शब्दर.।

**तुच्छम्।** क्ली। पुलाकजे, तुषे। ভূষি। उणा.।

**तुच्छद्रुः।** पुं। एरण्डवृक्षे। श.च.।

**तुच्छधान्यकम्।** क्ली। नीवारधान्ये। উড়ি ধান। पुलाके। আগড়া। र.मा.।

**तुच्छा।** स्त्री। नीलीवृक्षे। तुत्थके। भा.।

**तुटुमः।** पुं। मूषके। त्रिका.।

**तुड़ी।** स्त्री। आढक्यां। অরহর। र.मा.।

**तुणः (णिः) कः।** पुं। नन्दिवृक्षे। তুণ গাছ। अ.टी.स्वा.।

**तुण्डम्।** क्ली। मुखे। रा.नि.व.१८।

**तुण्डकी।** स्त्री। करञ्जवल्ल्यां। वै.निघ.।

**तुण्ड(ण्डि)केरिः (रिका) (री)।** स्त्री, पुं। कार्पास्याम्। কাপাস গাছ। विम्बिकायां। তেলাকুচা। अ.टी.स्वा.। रा.नि.व.४। वनकार्पासीफले। (कः, का) तन्नामकतालुरोगविशेषे, शिरोगलरोगभेदे। लक्षणम्—"शोथः स्थूलस्तोददाहप्रपाकी श्लेष्मास्रभ्यां कीर्त्तिता तुण्डिकेरी।" भा.। सु.। "हनुसन्ध्याश्रितः कण्ठे कार्पासीफलसन्निभः। पिच्छिलो मन्दरुक् शोफः कठिनस्तुण्डिकेरिकः॥" वा.उ.२१अ.। वायव्य कीटविशेषे। तद्दष्टे वातजन्यरोगा भवन्ति। सु.कल्प.८अ.।

**तुण्डाहतदष्टकम्।** क्ली। अदंष्ट्राकृतदंशे। ছোব্লান। "यत्र लालापरिक्लेदमात्रं गात्रे प्रदृश्यते। न तु दंष्ट्राकृतो दंशः तत्तुण्डाहतमादिशेत्॥" वा.उ.३६अ.।

**तुण्डिः (ण्डी)।** पुं, स्त्री। मुखे। पक्षिचञ्चौ। পাখীর ঠোঁট। उणा.। स्त्री। शिशोर्नाभिगण्डरोगे। গোঁড়। लक्षणं यथा—"वातेनाध्मापिता नाभिः सरुजा तुण्डिरुच्यते।" भा.। सु.शा.१०अ.। नाभौ। श.र.। अरण्यविम्बिकायाम्। रा.नि.व.२३। देवधान्ये। वै.निघ.। (ण्डी) काकादनीवृक्षे। र.।

**तुण्डिका।** स्त्री। पीलुपर्ण्याम्। रा.नि.व.२३। विम्बिकायाम्। তেলাকুচা। नाभौ। श.र.। कार्पास्याम्। काकजङ्घायाम्। कुन्दुरुलतायाम्। কুন্দুরুকী। वै.निघ.।

**तुण्डिकेरि(री)फला।** स्त्री। कुन्दुरुलतायाम्, मधुरविम्ब्याम्। কুন্দুরুকী। वै.निघ.।

**तुण्डिकेरफला।** स्त्री। तन्नामगलरोगविशेषे। वै.निघ.।

**तुण्डिकेशी।** स्त्री। बिम्बिकायां। अ.टी.।

**तुण्डिभः (लः)।** त्रि। पुष्टे। वृहन्नाभियुक्ते। अम.।

**तुत्थ(क)म्।** क्ली। Sulphate of copper. ताम्रस्योपधातौ स्वनामख्यातपण्यद्रव्ये। तूँतिया। र.मा.। तुत्थं द्विविधं मयूरं खर्परीतुत्थञ्च। तत्पर्य्यायः,—नीलाञ्जनं, हरिताम्म, तुत्थकं, मयूरग्रीवकं, ताम्रगर्भं, अमृतोद्भवं, मयूरतुत्थं, शिखिकण्ठं, नीलं (रा.), तुत्थाञ्जनं, शिखिग्रीवं, वितुन्नकं, मयूरकं (अ.), भूतकं, मूषातुत्थं, मृतामदं (श.), हेमसारं। र.चि.। गुणाः—"तुत्थं कटु कषायोष्णं श्वित्रनेत्रामयापहं। विषदोषेषु सर्व्वेषु प्रशस्तं शान्तिकारकं। खर्परी कटुका तिक्ता चक्षुष्या च रसायनी। त्वग्दोषशमनी रुच्या दीप्या पुष्टिविवर्द्धनी॥" रा.नि.व.१३। "तुत्थं ताम्रोपधातुर्हि किञ्चित्ताम्रेण तद्भवेत्। किञ्चित्ताम्रगुणं तस्मात् वक्ष्यमाणगुणञ्च तत्॥" भा.पू.१भ.। क्षारं निर्म्मलं लघु भेदकं क्रिमि-कण्डू-कुष्ठ-कफ-पित्तघ्नम्। राज.। "गन्धकेन पचेत्तुत्थं तुत्थार्द्धेनाद्र्यामकं। वान्तिभ्रान्ती यदा न स्तः तदा शुद्धिं विनिर्द्दिशेत्॥" इति शुद्धिः। सा.कौ.। अन्यच्च—"त्रिष्ठया मर्द्दयेत्तुत्थं मार्ज्जारककपोतयोः। दशांशं टङ्कणं दत्त्वा पचेल्लघुपुटे ततः। पुटं दध्ना पुटं क्षौद्रैः देयं तुत्थविशुद्धये॥" भा.। क्रिमिरसाञ्जने। उणा.।

**तुत्थखर्परिका (री)।** स्त्री। खर्परिकायां। थापर। वै.निघ.।

**तुत्थनी।** स्त्री। एलायां। शिवलिङ्गिन्यां। वै.निघ.।

**तुत्था।** स्त्री। नीलीवृक्षे, महानील्यां। रा.नि.व.४। क्षुद्रैलायां। अम.।

**तुत्थाञ्जनम्।** क्ली। तुत्थे। अम.।

**तुनिकः।** पुं। तूनीवृक्षे।

**तुन्तुभः।** पुं। सर्षपवृक्षे। भा.पू.१भ.धान्यव.।

**तुन्दम्।** क्ली। उदरे। रा.नि.व.१८।

**तुन्दः।** पुं। स्थविरे। रा.नि.व.२०। नाभौ। त्रिका.।

**तुन्दकूपिका (पी)।** स्त्री। नाभ्याम्। हे.च.। त्रिका.।

**तुन्दपरिमार्जः (मृजः)।** त्रि। अलसे। अ.टी.र.।

**तुन्दि।** क्ली। उदरे। हे.च.। स्त्री। नाभौ। त्रिका.।

**तुन्दिकः।** पुं। पृथूदरमानुषे। स्त्री। नाभौ। श.र.।

**तुन्दिकरः।** पुं। नाभौ। त्रिका.।

**तुन्दिका।** स्त्री। नाभौ। शब्दर.।

**तुन्दिभः (लः)।** त्रि। स्थूलोदरे। ভুঁড়ো। श.र.।

**तुन्दिलफला।** स्त्री। त्रपुषीलतायाम्। रा.नि.व.७।

**तुन्दी।** स्त्री। नाभौ। श.र.।

**तुन्नः (कः)।** पुं। (Cedrela Toona.) वृक्षविशेषे, तूणीवृक्षे। তুন্দ গাছ। हिं महानिम, तुन्। उत् महालिम्बु। पुं, द्रावी। अ.म.। त्रि। पीड़िते।

**तुन्नकारिका।** स्त्री। भूम्यामलक्याम्। वै.निघ.।

**तुन्नसेवनी।** स्त्री। शिरःकटीकपालसन्धिदेशेषु। सु.शा.५अ.।

**तुभः।** पुं। वर्करे। বোকা ছাগল। वै निघ.।

**तुमुलः।** पुं। विभीतकवृक्षे। मे.।

**तुम्बः (कः)।** पुं। अलाब्वाम्। লাউ। प मु.। श.र.।

**तुम्बकम्।** क्ली। धन्याके। धनिया। कन्दर्पसा. तैलि।

**तुम्बरुः।** पुं। तुम्बुरौ। নেপালি ধনে'। वै.निघ.।

**तुम्बा।** स्त्री। अलाब्वाम्। प.मु.। तिक्ततुम्ब्याम्। वै.निघ.।

**तुम्बिः।** स्त्री। तिक्ततुम्ब्याम्। अलाब्वाम्। श.र.।

**तुम्बिका।** स्त्री। कटुतुम्ब्याम्। रा.नि.व.३।

**तुम्बिनी।** स्त्री। कटुतुम्ब्याम्। रा.नि.व.३।



**तुम्बी।** स्त्री। अलाब्वाम्। प.मु.। कटुतुम्ब्यां। তিৎলাউ। भा.। पुं (इन्)। सरलवृक्षे। रा.नि.व.१२। बिम्बिकाफले। कुलिकवृक्षे।।

**तुम्बीतैलम्।** क्ली। गलगण्डाधिकारे तैलम्। कटुतैल ४ श. पुराण तिक्तालाबूरसः १६ श.। कल्कार्थं—विड़ङ्गं यवक्षारः सैन्धवं वचा रास्ना चित्रकमूलं त्रिकटु देवदारु एषां प्रति ८ तो.। भैष.। च.द.।

**तुम्बीपुष्पम्।** क्ली। अलाबुपुष्पे। लताम्बुजे। हारा.।

**तुम्बुकः।** पुं, क्ली। अलाब्वाम्। লাউ। हड्डचन्द्रः।

**तुम्बुरः (री)।** पुं, स्त्री। तुम्बुरुवृक्षे। र.मा.। आर्द्रधान्यके। त्रिका.। कुक्कुरस्त्रियां। मे.।

**तुम्बुरुः।** पुं, क्ली। (Xanthoxylon alatum. Syn. Z. hostile.) स्वनामख्यातफलवृक्षविशेषे। তেজবলের গাছ, নেপালি ধ'নে, তাম্বূল ফল। हिं तेजबल, तुमरु। मं तेन्दु। कं तुम्बुरु। तत्पर्य्यायः,—शूलघ्नः (र.), सौरजः, सौरभः, सौरः, वनजः, सानुजः, द्विजः, अन्धकः, तीक्ष्णकल्कः, तीक्ष्णफलः, तीक्ष्णपत्रः, महामुनिः, स्फुटलः, सुगन्धिः। तत्फलं मरिचवत्। च सू.३अ.। एतदभावे धान्यकं ग्राह्यम्। गुणाः—मधुरः तिक्तः कटूष्णः वात-कफघ्नः शूल-गुल्मोदराध्मान क्रमिघ्नः अग्निदीपनश्च। रा.नि.व.११। "तुम्बुरु प्रथितं तिक्तं कटु पाकेऽपि तत्कटु। रूक्षोष्णं दीपनं तीक्ष्णं रुच्यं लघु विदाहि च। वातश्लेष्मान्निकर्णौष्ठ-शिरोरुग्गुरुताक्रमीन्। कुष्ठ-शूल-रुचि-श्वासप्लीह-कृच्छ्राणि नाशयेत्॥" भा.।

**तुर(ग,ङ्ग)गन्धा।** स्त्री। अश्वगन्धायां। प.मु.।

**तुरग(ङ्ग)द्विष(द्वेषि)णी।** स्त्री। महिष्यां। रा.नि.व.१९। वै.निघ.।

**तुरग(ङ्ग)प्रियः।** पुं। यवे। रा.नि.व.१६।

**तुरगशिफा।** स्त्री। अश्वगन्धामूले। च.द.वा.व्या.चि.।

**तुरगाह्वा।** स्त्री। अश्वगन्धायाम्। मद.व.१। घोण्टायां। শেয়াকুল। रा.नि.व.८।

**तुरगी (इन्)।** त्रि। अश्वारोहे। हे.च.। स्त्री। अश्वगन्धायां। घोण्टायां। रा.नि.व.४।८। अश्वायां।

**तुरङ्गः (मः)।** पुं। घोटके। अम.। चित्ते। श.र.। क्ली। गन्धके। र.सा.स.। सैन्धवे। अ.।

**तुरङ्गकः।** पुं। हस्तिघोषायां। र.मा.।

**तुरङ्गरिपुः (ङ्गारिः)।** पुं। करवीरवृक्षे। र.मा.। वै.निघ.२भ.शिवमज्ज.चि.। महिषे।

**तुरङ्गा (ह्वा) (ङ्गी)।** स्त्री। अश्वगन्धायाम्। वै.निघ.। मद.व.१। प.मु.। घोण्टायाम्। ঘোণ্টাবদর। रा.नि.व.८।

**तुरङ्गारिः।** पुं। करवीरवृक्षे। र.।

**तुरङ्गिका।** स्त्री। देवदालीलतायां। দেয়াতাড়া। रा.नि.व.३। See अगरी।

**तुरङ्गी।** स्त्री। अश्वगन्धायाम्। शब्दर.। घोण्टिकावृक्षे। रा.।

**तुरुष्कः।** पुं। शिह्लके। শিলারস। प.मु.। सु.सू.३८अ.। वा टी हैमा.। अरुणस्तु क्रिमिनिर्यासविशेषमाह। वै.निघ.शतावरीनारायणतैले। च.द.वा.व्या.चि.१८श.शतिकमहाराजप्रसारणीतैले। तद्देशीयाश्वे। ज.द.६अ.। घण्टापाटलवृक्षे। ঘণ্টাপারুল গাছ।·श्रीवासे। তাপিন তেলের গাছ। प्राण्यङ्गे। त्रिका.।

**तुलम्।** क्ली। ब्रह्मदारुनामवृक्षभेदे। अ.।

**तुलसी।** स्त्री। (Oci(y)mum sanctum.) Holy basil. स्वनामख्यातक्षुद्रक्षुपे। তুলসী গাছ। हिं बरब्डा, तुलसी। मं तुलसीचेझाड़। तें क्रुष्ण, गग्गेरचेट्टु, इयुलसी, तुलसीचेट्टु। ता. तुलशी। दा. तुल्सी। बम्. तुलस। तत्पर्य्यायः,—सुभगा, तीव्रा, पावनी, विष्णुवल्लभा, सुरेज्या, सुरसा, कायस्था, सुरदुन्दुभिः, सुरभिः, बहुपत्री, मञ्जरी, हरिप्रिया, अपेतराक्षसी, श्यामा, गौरी, त्रिदशमञ्जरी, भूतघ्नी, भूतपत्री (रा.), पर्णासः, वृन्दा, कठिञ्जरः, कुठेरकः (शब्दर.), वैष्णवी, पुण्या, पवित्रा, माधवी, अमृता, पत्रपुष्पा, सुगन्धा, गन्धहारिणी, सुरवल्ली, प्रेतराक्षसी, सुवहा, ग्राम्या, सुलभा, बहुमञ्जरी, देवदुन्दुभिः (भा.)। अन्या—(O. gratissimum.) রামতুলসী। हिं रामतुलसी। तें निम्मतुलसी। ता. एलुमिच्छम्तोलसी। दा. रामतुलसी। अपरा—(Ocimum Basilicum.) See विश्वतुलसी। क्षुद्रपत्रतुलसी-गन्धतुलसी-कृष्णतुलसी विल्व(श्व)गन्धतुलसी-श्वेततुलसी वर्व्वरीतुलस्य इति षड़्भेदा तुलसी।

सा, गुणाः—कटुः तिक्तोष्णा वातघ्नी पघ्नी सुरभिः क्रिमिघ्नी भूतघ्नी रुच्या वातशान्तिकारी। "तुलसी उभया च कासवातक्रमिवमिभूतापहारिणी पूता।" इति श्वेतकृष्णगुणाः। रा.नि.व.१०। "तुलसी कटुका तिक्ता हृद्योष्णा दाहपित्तकृत्। दीपनी कुष्ठकृच्छ्रास्रपार्श्वरुक्कफवातजित्॥" श्वेतकृष्णगुणाः—"शुक्ला कृष्णा च तुलसी गुणैस्तुल्या प्रकीर्त्तिता।" भा.।

**तुलसीच्छद(पत्र)म्।** क्ली। तुलसीपत्रे। वै.निघ.।

**तुलसीद्वेषा।** स्त्री। वर्वर्याम्। बाबुई तुलसी। र.मा.।

**तुला।** स्त्री। ४०० तोलकपरिमाणे, पलशतमाने। तुलामाने। निक्ति। मे.। सादृश्ये। विका.।

**तुलाकोटिः (टी)।** स्त्री। परिमाणभेदे। अर्बुदे। हे.च.। कोटिसंख्यायाम्। वै.निघ.। नूपुरे। हे.।

**तुला(लि)वीजम्।** क्ली। गुञ्जायाम्। विका.।

**तुलिका।** स्त्री। द्वापुविकापक्षिणि। खञ्जन पाखी। विका.।

**तुलिनी।** स्त्री। शाल्मलीवृक्षे। रा.।

**तुलिफला।** स्त्री। शाल्मलीवृक्षे। र.।

**तुल्यार्थता।** स्त्री। एकसामान्यरूपार्थानुयोगितायां। च.सू.१अ.।

**तुवरः (कः)।** पुं। तुवरयवनाले। लाल काल जनार। रा.नि.व.१६। आढक्याम्। अरहर। (कः) क्षुधान्यभेदे। "पत्रैस्तु केशराकारैः कलायसदृशैः फलैः। वृक्षस्तुवरको नाम पश्चिमार्णवतीरजः॥ आरुष्करं तौवरकं कषायं कटुपाकि च। उष्णकृमिज्वरानाहमेहोदावर्त्तनाशनम्॥" सु.सू. ४६अ.। वा.उ.३९अ.। अप्रसृप्तपुरुषे। थोवा। अजातशृङ्गगवि। अम.। वि। कषाये। मे.। तिक्ते। सु.सू.४५अ.।

**तुवरयावनालः।** पुं। स्वनामख्यातरक्तकृष्णशिम्बीधान्ये। अरुक कृष्ण जनार। मं तूरेजो धल्ले। कं ... तत्पर्य्यायः,—तुवरः, कषाययावनालः, रक्तयावनालः, लोहितकृष्णधान्यं। गुणाः—कषायः उष्णः श्लेष्मघ्नः संग्राही वातशमनः विदाही शोषजनकश्च। रा.नि.व.१६।

**तु(तू)वरिका (री)।** स्त्री। (Cajanus Indicus.) आढक्याम्। अरहर। रा.नि.व.१६। भुजाढक्याम्। तोरिसेति लोके। টোড়োঁর কলাই। हिं तोरी। प.मु.। तत्पर्य्यायः,—मृत्, सौराष्ट्री, मृत्स्ना, आमङ्कं, मसी, सुराष्ट्रजा, मृत्तालकं, काली, मृत्तिका, सुरमृत्तिका, स्तुल्या, काक्षी, सुजाता, सौराष्ट्रा। गुणाः—कटुतिक्तकषाया उष्णा ग्राहिणी चक्षुष्या छर्द्दिपित्तजन्मानाशिनी च। रा.नि.व.१६। ग्राहिणी लघुः कफविषरक्तघ्नी तीक्ष्णा उष्णा दीपनी कण्डूकुष्ठकोष्ठक्रमिहरी च। भा.पू.१भ.धा.व.। A kind of lentil (Cytisus Cajan.) मसूरकलायै। सौराष्ट्रमृत्तिकायां। मे.। गोपीचन्दने। तिलकमाटी। भा.। राजिकायाम्। শ্বেত সরিষা। वै.निघ.।

**तुवरीमृत्।** स्त्री। सौराष्ट्रमृत्तिकायाम्। तिलकमाटी। पङ्कपर्पटी। रा.नि.व.१३।

**तुवरीशिम्बः।** पुं। चक्रमर्द्दवृक्षे। श.च.।

**तुविः।** स्त्री। तुम्बराम्। लाउ। श.मा.।

**तुषः।** पुं। विभीतकवृक्षे। तुषे। तूष। अम.।

**तुषग्रहः।** पुं। अग्नौ। वि.।

**तुषजलम्।** क्ली। तुषोदके। काँजिविशेष। अभावे काञ्जिकम्। सि.यो.वृहच्छ्रक्रसन्धाने।

**तुषधान्यम्।** क्ली। तुषे। तुष। र.मा.। रक्तशाल्यादौ। वै.निघ.। कङ्ग्वादिक्षुधान्यवर्गे। यथा—"कङ्गुश्चीनः कोद्रवश्च श्यामाको वनकोद्रवः। प्रशवीजं वंशवीजं गवेधुश्च प्रसाधिका। तावन्त्येतानि चोक्तानि तुषधान्यानि वै नव॥"

**तुषसारः।** पुं। अग्नौ। शब्दमा.।

**तुषसौवीरकम्।** क्ली। सतुषयवकाञ्जिकि, तुषोदके। वै.निघ.।

**तुषस्वेदः।** पुं। अश्वस्य वातव्याधौ स्वेदविशेषे। "सुतप्तकाञ्जिकैः स्विन्नं तुषं बद्धा पु(पू)तं भिषक्। तुषस्वेदं तुरङ्गस्य धान्यं वापि प्रदापयेत्॥" ज.द. ३८अ.।

**तुषानलः।** पुं। तुषाग्नौ। हे.च.।

**तुषाम्बु।** क्ली। तुषोदके। विदलितामयवैः सहितं अम्लतां गतं तुषाम्बु नि। "तुषाम्बु सन्धितं च यमाषैर्विदलितैर्यवैः। शार्ङ्ग.। गुणाः—"तुषाम्बु



दीपनं हृद्यं हृत्पाण्डुपार्श्वरोगनुत् ग्रहण्यर्शोविकारघ्नं भेदि सौवीरकं तथा॥" सुश्रु.।

**तुषाम्बुवटम्।** क्ली। तुषाम्बुपक्वान्ने। वै.निघ.।

**तुषाम्भः।** क्ली। तुषाम्बुनि। भैष.र.पि.शूलचि.। "अम्लतुषाम्भसा।"

**तुषारः।** पुं। कर्पूरे। चीनकर्पूरे। रा.नि.व.१२। जलकणायां। मे.। "अपि नद्याः समुद्रान्ते वह्निरापस्तदुद्भवाः। धूमावयवनिर्मुक्ताः तुषाराख्यास्तु ताः स्मृताः॥" भा.। त्रि। शीतले। हिमे। मे.।

**तुषारकालः।** पुं। शरत्काले। वै.निघ.।

**तुषारगौरः।** पुं। कर्पूरे। भीमसेनीकर्पूरे। चीनकर्पूरे। वै.निघ.।

**तुषाराम्बु।** क्ली। नीहारजले।

**तुषोत्थम्।** क्ली। तुषोदके। सौवीरकाञ्जिके। रा.नि.व.१५।

**तुषोदकम्।** क्ली। सतुषयवकाञ्जिके। द्वारा.। सौवीरकाञ्जिके। रा.नि.व.१५। च.सू.३अ.। तल्लक्षणं—"भृष्टान् माषतुषान् भिन्नान् यवांस्तु चूर्णसंयुतान्। आश्वतानम्भसा तदज्जातं तत्र तुषोदकम्॥" च.। "तुषोदकं यवैरामैः सतुषैः शकलीकृतैः।" गुणाः—"तुषाम्बु दीपनं हृद्यं पाण्डुकृमिगदापहम्। तीक्ष्णोष्णं पाचनं पित्तरक्तकृत् वस्तिशूलनुत्॥" भा.। "तुषोदकं वातपित्तहरन्तु प्रभेदकं रक्तपित्तहरञ्च। विपाचकं स्याज्ज्वरघ्नं क्रिमिघ्नम् अजीर्णहन्तृ कटुकं विपाके॥" अत्रि.११अ.। "तुषाम्बु दीपनं हृद्यं हृत्पाण्डुपार्श्वरोगनुत्। ग्रहण्यर्शोविकारघ्नं भेदि सौवीरकं तथा॥" सु.।

**तुष्टिः।** स्त्री। वृद्ध्यौषधे। वै.निघ.।

**तुसः।** पुं। तुषे। अ.टी.र.।

**तुस्तम्।** क्ली। रजसि। धूला। के.।

**तुहिनः।** पुं। कर्पूरे। क्ली। हिमे। अम.। स्त्री। शुकनासायाम्। শোণা। वै.निघ.।

**तुहिनांशुः।** पुं। कर्पूरे। रा.नि.व.१२।

**तुहिनांशुतैलम्।** क्ली। कर्पूरतैले। रा.नि.व.१५।

**तूणः।** पुं। तूणीवृक्षे। तुण गाछ।

**तूणि(णी)कः।** पुं। (Cedrela Toona.) कोङ्कणे नन्दीवृक्ष इति ख्याते वृक्षे। तुण गाछ। हिं तूणि, महानिम। उत्. महालिम्बु। पं द्रवी। तत्पर्य्यायः,—तूणीकः, तूणी, पीतकः, कच्छपः, नन्दी, कुठेरकः, कान्तः, तुन्नीकः, आपीनः, कच्छकः, कान्तलकः, नन्दीवृक्षः, नन्दकः, तूणीयकः। गुणाः—कटुः तिक्तः पीतः रक्तपित्तदाहघ्नः शिरोवेदनाघ्नः श्वेतकुष्ठघ्नः सुगन्धिः पुष्टिकरः वीर्य्यकरश्च। रा.नि.व.१२।

**तूणी (इन्)।** पुं। नन्दीवृक्षे। तुण गाछ। रा.नि.व.१२। "तूणी रक्तः कटु पाके कषायी मधुरो लघुः। तिक्तो ग्राही हिमो वृष्यो व्रणकुष्ठास्रपित्तजित्॥" भा.। नीलीवृक्षे। वै.निघ.। स्त्री। वातव्याधिविशेषे। लक्षणं यथा—"अधो या वेदना याति वर्चोमूत्राशयोत्थिता। भिन्दतीव गुदोपस्थं सा तूणीत्युपदिश्यते॥" सु.नि.१अ.।

**तूतः (दः)।** पुं, क्ली। तूलकाष्ठे। गुणाः—"तूतं पक्वं गुरु स्वादु हिमं पित्तानिलापहम्। तदेवामं गुरु सरमम्लोष्णं रक्तपित्तकृत्॥" भा.आम्रव.। ब्रह्मवृक्षे। रा.नि.व.९।

**तूतकम्।** क्ली। तुत्थे। श.च.।

**तूरी।** स्त्री। शुक्लधुस्तूरके। भा.।

**तूर्णकः।** पुं। शालिधान्यविशेषे। काश्मीरे आजव इति प्रसिद्धे। वा.सू.६अ.। [ निघ.।

**तूर्णिः।** स्त्री। विशायां। उष्णा.। मनसि। वै.

**तूलः।** पुं, क्ली। (Morus Indica or Morus Nigra.) स्वनामख्यातकाष्ठविशेषे। তুঁত, পলাশ পিপুল, আবলুষ इति कश्चित्। हिं तूतरी, साहुड़। मं पारिसपिंपलु, बंगरलि। तें कम्बलिचेट्टु। ता. मसुकट्टचेड़ि। तत्पर्य्यायः,—तूदः, ब्रह्मकाष्ठं, ब्रह्मणेष्टः, पूषकः, ब्रह्मदारु, सुपुष्पं, सुरूपं, नीलवृन्तकं, क्रमुकः, विप्रकाष्ठं, मदसारः (रा.), पूषः (भा.)। गुणाः—मधुराम्लं वातपित्तघ्नं सरं दाहघ्नं कषायं हृद्यं कफघ्नञ्च। रा.नि.व.९। मधुराम्लं हृद्यं दाहघ्नं कषायं कफघ्नं गुरु सारकम् अम्लम् उष्णं रक्तपित्तकरञ्च। भा.। कार्पासे। श्वेतधुस्तूरके। गगनशब्दे। अम.।

**तूलकम्।** क्ली। कार्पासे। हे.च.।

**तूलग्रन्थिसमा।** स्त्री। ऋद्धिनामकौषधौ। वै.निघ.।

**तूलनालिका (ली)**। स्त्री। पिञ्जिकायाम्। পাঁইজ। त्रिका.। [ टी.भ.।

**तूलपिचुः**। पुं। कार्पासे, तूले। তুলা। अम.

**तूलफलः**। पुं। अर्कवृक्षे। আকন্দ গাছ। रा.नि.व.१०।

**तूल(लि)फला**। स्त्री। शाल्मलीवृक्षे। र.मा.।

**तूलवती (शय्या)**। स्त्री। तूलशय्यायाम्। তোষক। भा.।

**तूलवृक्षः**। पुं। शाल्मलीवृक्षे। रा.नि.व.७।

**तूलशर्करा**। स्त्री। कार्पासवीजे। श.मा.।

**तूला (ली)**। स्त्री। रक्तकार्पास्याम्। रा.नि.व.४। नीलीवृक्षे। भा.। वर्त्त्याम्। श.र.।

**तूलिः (लि(ली)का)**। स्त्री। नील्यां। रक्तकार्पास्यां। वै.निघ.। चित्रलेखन्यां। তুলি। अम.। वीरणादिशलाकायां। शय्योपकरणे। তোষক। मे.। वर्त्त्यां। श.र.।

**तूल(लि)नी (फला)**। स्त्री। शाल्मलीवृक्षे। শিমুল গাছ। प.मु.। र.मा.। भा.। लक्ष्मणाकन्दे। रा.नि.व.७।

**तूवरः**। पुं। See तुवरः। [ श.र.।

**तूस्तम्**। क्ली। धूलौ। ধূলো। मे.। सूक्ष्मे।

**तृक्षम्**। क्ली। जातीफले। श.च.।

**तृट्**। स्त्री। तृषायां। इच्छायां। मे.।

**तृणम्**। क्ली। कत्तृणे। গন্ধতৃণ। रा.नि.व.८। खटे। नड़ादौ तृणवर्गे। "त्रिधा वंशः कुशः काशस्त्रिधा......नलः। गुन्द्री मुञ्जो दर्भमेथीचणकादिगणस्तृणम्॥" अर्क.।

**तृणकतैलम्**। क्ली। कुष्ठाधिकारे तैलम्। पाठः—"मञ्जिष्ठारुङ्निशा-चक्रमर्दारग्वधपल्लवैः। तृणकस्वरसे सिद्धं तैलं कुष्ठहरं कटु॥" कटुतैलं ४श, चोणघासस्वरसः ४ श, जलं १६ श.। कल्कार्थं—मञ्जिष्ठा कुष्ठं (কুড়) हरिद्रा चक्रमर्दपत्र (চাকন্দার পাতা) सोनालुपत्रं (সোন্দালপাতা) एषां मिलित्वा शरावः (১ সের)। रस.र.।

**तृणकुङ्कुमम्**। क्ली। काश्मीरदेशे स्वनाम्ना प्रसिद्धे सुगन्धतृणे। कुङ्कुमघास् इति भाषा। सं तृणकेशर। गुणाः—कटूष्णं वातकफशोथघ्नं कण्डूतिपामाकुष्ठामदोषघ्नं दीप्तिकरञ्च। रा.नि.व.१२।

**तृणकुटी**। स्त्री। तृणाच्छादितगृहे। त्रि.। तत्पर्य्यायः—तृणौकः। हे.।

**तृणकूर्म्मः**। पुं। श्वेतालाव्वां। শ্বেত লাউ। वै. निघ.। श.मा.। [ निघ.।

**तृणकेतकी**। स्त्री। वंशलोचनविशेषे। वै.

**तृणकेतुः (कः)**। पुं। वंशे। বাঁশ। रा. नि.व.७।

**तृणकेसरम्**। क्ली। तृणकुङ्कुमे। रा.नि.व.१२।

**तृणगन्धा**। स्त्री। वृद्धदारकलतायां। वै.निघ.।

**तृणगोधा**। स्त्री। सरटे। গিরগিটে। कृकलासे। मे.। तृणजलौकायाम्। शब्दकल्प.।

**तृणगोधूमः**। पुं। स्वनामख्यातगोधूमे। घासिगम। प.मु.।

**तृणगौरम्**। क्ली। तृणकुङ्कुमे। रा.नि.व.१२।

**तृणग्रन्थिः**। पुं। स्वर्णजीवन्त्यां। रा.नि.व.३।

**तृणग्राही (इन्)**। पुं, क्ली। नीलहीरके। प.मु.। नीलमणौ। কাফুরদানা। रा.नि.व.१२। तत्पर्य्यायः,—शूकापट्टः, तृणमणिः (हा.)।

**तृणचरः**। पुं। गोमेदमणौ। वै निघ.।

**तृणजलौका**। तृणचरजलौकाविशेषे। চীনে জোঁক।

**तृणद्रुमः**। पुं। तालवृक्षे। केतकीवृक्षे। पूगवृक्षे। खर्ज्जूरीवृक्षे। ताड़ीद्रुमे। তেড়েৎ গাছ। नारिकेलवृक्षे। हिन्तालवृक्षे। হেঁতাল গাছ। एषां मज्जनिर्यासाः लघवः शीतला बल्या मोहना हृद्या तृषातापहराश्च। रा.नि.व.९।

**तृणधान्यम्**। क्ली। तृणोद्भवश्यामाकादौ। শ্যামা ধান প্রভৃতি। गुणाः—"श्यामाकः शोषणो रूक्षः वातलः श्लेष्मपित्तहा। जड़िका कोद्रवश्चैव हस्तिश्यामाकचीनकौ। पीनसश्वासकासोरुस्तम्भकण्ठगदान् जयेत्। कङ्गुकाश्चापि जानीयात् एतान् श्यामाकवद्गुणैः। जड़िका तत्र कथिता बलासस्य विवर्द्धिनी। कोद्रवश्च परं ग्राही वातलः कफनाशनः॥" राज.३प.। See कुधान्यम्।

**तृणधुक्**। पुं। वाडवाग्नौ। त्रि.।

**तृणध्वजः**। पुं। बल्वजायां। উলু। रा.नि.व.८। वंशे। अम.।



**तृणनिम्बः**। पुं। नेपालनिम्बे। চিরেতা। रा.नि.व.९।

**तृणपञ्चकम्**। क्ली। तृणपञ्चमूले। भा.।

**तृणपञ्चमूलम् (ली)**। क्ली, स्त्री। कुशकासशरेक्षुदर्भेषु। दर्भ उलूपः। शरेक्षुदर्भकासशालय इति चरकः। "श्वेतक्षीरं पिबेद्वापि पञ्चमूल्या तृणाख्यया॥" सि.यो र.पि.चि। गुणाः—तृणादाहपित्तरक्तमूत्रसङ्गहरी। "कुशः काशः शरो दर्भ इक्षुश्चेति तृणोद्भवं। पित्तकृच्छ्रहरं पञ्चमूलं वस्तिविशोधनम्॥" भा.मू.कृ.चि.।

**तृणपञ्चमूलाद्यघृतम्**। क्ली। अश्मर्य्यधिकारे घृतम्। गव्यघृतं ४ श.। क्वाथार्थं—कुशः काशः शरः इक्षु दर्भमूलं गोक्षुरः एषां प्र. १० प, वारि ६४ श. शे. १६ श.। कल्कार्थं—गुड़गोक्षुरवीजे प्र. ४ प.। भा.।

**तृणपतिः**। पुं। राजघासे। কালাকপূর। के.।

**तृणपत्रिका (त्री)**। स्त्री। इक्षुदर्भायाम्। ইকুদর্ভা তৃণ। (त्री) गुण्डासिनीतृणे। रा.नि.व.८।

**तृणपर्णम्**। क्ली, पुं। चीनाखड़ इति प्रसिद्धतृणे। रस.र.महाभल्लातकगुड़े।

**तृणपुष्पम्**। क्ली। तृणकुङ्कुमे। रा.नि.व.१२।

**तृणपुष्पी**। स्त्री। सिन्दूरपुष्पीवृक्षे। रा.नि.व.१०।

**तृणपूलिकम्**। क्ली। क्लीवभेदे। के.।

**तृणपूली**। स्त्री। चञ्चाम्। চাঁচ। हारा.। च.चि.२अ.।

**तृणमणिः**। पुं। नीलहीरके। हारा.। तृणजलौकायाम्।

**तृणमल्लिका**। स्त्री। मल्लिकापुष्पभेदे। কাঠমল্লিকা। "कुमारिका ग्रीष्मभवा सुगन्धा तृणमल्लिका।" वै.।

**तृणसुन्नः**। पुं। श्यामाकधान्ये। শ্যামা ধান। प.मु.।

**तृणमुस्तिका**। स्त्री। मुस्ततृणे। मुस्तायाम्। रस.र.रसमारणे।

**तृणमूलम्**। क्ली। गन्धतृणमूले। भा.म.३भ. मू.कृ.चि.।

**तृणमेदः**। पुं। रुद्राक्षवृक्षे। शब्दर।

**तृणराजः (कः)**। पुं। तालवृक्षे। তাল গাছ। नारिकेलवृक्षे। वंशे। रा.नि व.९।११।१३। इक्षुवृक्षे। बल्वजायाम्। वै.निघ.।

**तृणराजवर्गः**। पुं। गुवाकादि सप्तवृक्षे। यथा—"गुवाकस्तालहिन्तालस्तथा ताड़ी च केतकी। खर्ज्जूरनारिकेलौ च सप्तैते तृणराजकः। तृणराजशिरापर्वं नं कुर्य्याद्दन्तधावनम्॥ आह्नि. त.।

**तृणराजाह्वः (यः)**। पुं। तालवृक्षे। रा.नि.व.११।

**तृणवल्ल(ल्व)जा**। स्त्री। बल्वजायां। উলু। रा.नि.व.८।

**तृणवीजः (जोत्तमः)**। पुं। श्यामाकतृणे। শামা ঘাস। र.मा.।

**तृणवृक्षः**। पुं। नारिकेलवृक्षे। तालवृक्षे। पूगवृक्षे। केतकीवृक्षे। खर्ज्जूरीवृक्षे। रा.नि.व.९। वै.निघ.।

**तृणशिम्बी**। स्त्री। निष्पावे। শীম গাছ। प.मु.।

**तृणशीतः**। पुं। देवताड़वृक्षे। वै.निघ। क्ली। कत्तृणे। गन्धतृणे। र.मा.। स्त्री। महाराष्ट्रीलतायां, जलपिप्पल्यां। কাঁচড়া। रा.नि.व.४।

**तृणशून्यम्**। क्ली, पुं। नागदमनक्षुपे। प.मु.। च.चि.३अ.। सु.चि.१८अ.। श्वेतकेतक्यां। च.सू.२५अ.। मल्लिकायां। केतकीफले। मे.।

**तृणशोणितम्**। क्ली। तृणकुङ्कुमे। কুঙ্কুম ঘাস। रा.नि.व.१२।

**तृणशोषकः**। पुं। राजिमत्सर्पविशेषे। सु.कल्प. ४अ.। See सर्पः।

**तृणषट्पदः**। पुं। कीटविशेषे, वरोले। ভীমরুল। त्रिका.।

**तृणसंज्ञकः**। पुं। वैद्यकोक्त-पञ्चतृणे। "कुशकाशनलदर्भकाण्डेक्षुकाः।" सुश्रु.।

**तृणसारा**। स्त्री। कदल्याम्। हारा.।

**तृणसिंहः**। पुं। कुठारे। शब्द.क.। [ व. ८।

**तृणाख्य(ढ्य)म्**। क्ली। पर्व्वततृणे। रा. नि.

**तृणाङ्कुपः**। पुं। मन्थानकतृणे। रा.नि.व.८।

**तृणाञ्जनः**। पुं। कृकलासे। কাঁকলাস। त्रिका.।

**तृणाधिपः**। पुं। मन्थानकतृणे। रा.नि.व.८।

**तृणान्नम्।** क्ली। देवधान्ये। नीवारधान्ये। भा. पू. भ.धा.व.।

**तृणाम्लम्।** क्ली। लवणतृणे। रा.नि.व.८।

**तृणारिः।** पुं। पर्पटके। ক্ষেৎপাপড়া। वै. निघ.।

**तृणावर्त्तः।** पुं। गुञ्जासिनीतृणे। वै.निघ.।

**तृणासृक्।** क्ली। तृणकुङ्कुमे। रा.नि.व.१२।

**तृणाह्वा।** स्त्री। चीनेघास इतिख्याते तृणभेदे।

**तृणी।** स्त्री। आम्रहरिद्रायाम्। वै.निघ.।

**तृणेक्षुः।** पुं। बल्वजायाम्। উলু। रा.नि.व.८।

**तृणोत्तमः।** पुं। ऊषरतृणे। रा.नि.व.८।

**तृणोत्थम्।** क्ली। तृणकुङ्कुमे। रा.नि.व.१२।

**तृणोद्भवः।** पुं। नीवारे। বোরো ধান। रा. नि.व.१६। [ वा.उ.३७अ.।

**तृणोलुपम्।** क्ली। उलुपतृणे। উলুখড়।

**तृणोल्का।** स्त्री। तृणाग्नौ। খড়ের আগুন।

**तृणौकः।** पुं। तृणाच्छादितगृहे। খড়ুয়া ঘর। हे.च.।

**तृणौषधम्।** क्ली। एलबालुके। श्र.च.।

**तृण्मान्।** त्रि। तृणायुक्ते। वा.चि.६अ.।

**तृतीयकः।** पुं। विषमज्वरविशेषे। একদিন অন্তর জ্বর। "दिनमेकमतिक्रम्य यो भवेत् स तृतीयकः।" भा.। "कफपित्तात्त्रिकग्राही पृष्ठाद्वा तकफात्मकः। वातपित्ताच्छिरोग्राही त्रिविधः स्यात् तृतीयकः।" मा.नि.ज्व.।

**तृतीयकविपर्य्ययः।** पुं। तृतीयकस्य ज्वरस्य भेदे। প্রথম শেষ দিনে ছাড়িয়া দ্বিতীয় দিনের জ্বর। यथा—आदावन्ते च मुञ्चति मध्ये एकं दिनं ज्वरयति। भा.।

**तृतीय(या)प्रकृतिः।** पुं। नपुंसके। अ.टी.।

**तृप(फ)ला।** स्त्री। लतायाम्। त्रिफलायाम्। उणा.। त्रिका.।

**तृप्तिः।** स्त्री। सत्यपि भोजनसामर्थ्ये अनन्नाभिलाषे। भा.म.१भ.ज्व.चि.। "स्तम्भस्तृप्तिरथापिवा।"

**तृप्तिघ्नः।** त्रि। तृप्तिजनके। क्षुधामान्द्यकरे।

**तृप्तिघ्नवर्गः।** पुं। नागरचित्रकचव्यविडङ्गमूर्व्वागुडूचीवचामुस्तपिप्पलीपटोलेषु। च.सू.४अ.।

**तृप्रः।** पुं। घृते। उणा.।

**तृफुः।** पुं। सर्पे। उणा.।

**तृवृता।** स्त्री। त्रिवृति। তেউড়ী। शुक्लत्रिवृतायां। শ্বেত তেউড়ী। वा.चि.२अ.।

**तृशूलफलम्।** क्ली। बिल्वफले। [ प.मु.।

**तृषती।** स्त्री। शुकशिम्ब्याम्। আলাকুশী।

**तृषा।** स्त्री। तृष्णायाम्। रा.नि.व.२०। लाङ्गलिकालतायाम्। श्र.च.।

**तृषाभूः।** स्त्री। मूत्राशये। क्लोम्नि। श्र.च.।

**तृषाह(क)म्।** क्ली। जले। श्र.च.। वै.निघ.।

**तृषाहा।** स्त्री। शताह्वायाम्, मधुरिकायाम्।

**तृषितम्।** क्ली। तृषायाम्। त्रि। तृषार्त्ते।

**तृषितोत्तरा।** स्त्री। गोकर्णीनामवल्ल्याम्। वै. निघ.। अश्मनपर्णीलतायाम्। श्र.च.।

**तृष्णक्।** त्रि। तृष्णावति। वा. ज्व. चि.१अ.। लुब्धे। अम.।

**तृष्णा।** स्त्री। पानेच्छायां। পিপাসা। मे.। तत्पर्य्यायः,—उदन्या, पिपासा, तृट्, तर्षः (अ.), तृषा (शब्दर.), तर्पणं, तर्षणं (ज.), उपलासिका, धृतिः (हे.)। तर्पणे। जटा.। पिपासारोगे। रा. नि.व.२०। "भयश्रमाभ्यां बलसङ्क्षयाद्वा ऊर्द्ध्वञ्चितं पित्तविवर्द्धनैश्च। पित्तं सवातं कुपितं नराणां तालुप्रपन्नं जनयेत्पिपासाम्॥" "सततं यः पिबेत्तोयं न तृप्तिमधिगच्छति। पुनः काङ्क्षति तोयञ्च तं तृष्णार्दितमादिशेत्॥" "स्रोतःस्वपांवाहिषु दूषितेषु दोषैश्च तृट् सम्भवतीह जन्तोः। तिस्रः स्मृतास्ताः क्षतजा चतुर्थी क्षयात्तथाह्यामसमुद्भवा च। भक्तोद्भवा सप्तमिकेति तासां निबोध लिङ्गान्यनुपूर्व्वशस्तु। क्षामास्यता मारुतसम्भवायां तोदस्तथा शङ्खशिरःसु चापि। स्रोतोनिरोधो विरसञ्च वक्त्रं शीताभिरद्भिश्च विवृद्धिमेति। मूर्च्छान्नविद्वेषविलापदाहा रक्तेक्षणत्वं प्रततश्च शोषः। शीताभिनन्दा मुखतिक्तता च पित्तात्मिकायां परिदूयनञ्च। वाष्पावरोधात् कफसंवृतेऽग्नौ तृषा बलासेन भवेत्तथा तु। निद्रागुरुत्वं मधुरास्यता च तृष्णार्दितः शुष्यति चातिमात्रम्। क्षतस्य रुक्शोणितनिर्गमाभ्यां तृष्णा चतुर्थी क्षतजा मता तु। रसक्षयाद्या क्षयसम्भवा सा तयाभिभूतश्च निशादिनेषु। पेपीयतेऽम्भः स सुखं न याति तां सन्निपातादिति केचिदाहुः॥" इत्यादि। मा.नि.। पथ्य—"शोधनं वमनं निद्रा स्नान कवलधारण। कोद्रवाः शालयः पेया विलेपी लाजसक्तवः। अन्नमण्डो धन्वरसाः सिता मुद्गादिजा रसाः। खर्जूरं दाड़िमं धात्री कर्क्कोलं नलदम्बु च। जम्बीरं करमर्द्दञ्च वीजपूरं गवां पयः। मधूकपुष्पं तिक्तानि मधुराणि विशेषतः। बालतालकशीताम्बु माक्षिकं सरसीजलं। घनसारो गन्धसारः कौमुदी शिशिराणि च। एला जातीकपत्रञ्च कुस्तुम्बुरु च टङ्कणम्। चन्दनार्द्रप्रियाश्लेषो रत्नाभरणधारणं। हिमानुलेपनञ्च स्यात्पथ्यमेतत् तृषातुरे॥" पथ्यापथ्यम्।

**तृष्णारिः।** पुं। पर्पटके। ক্ষেৎপাবড়া। रा. नि.व.५।

**तेजः।** क्ली। मज्जायां। रा.नि.व.१८। गुणाः—तृट्क्षुधानिद्रालस्यमैथुनेषु। रस.र.ज्व.चि.। पित्ते। रा.नि.व.२१। घृते। कान्तौ। स्वर्णे। रा.नि.व.१३। शुक्रे। मे.। नवनीते। अग्नौ। हे.च.। ओजसि।

**तेजःफलः।** पुं। तेजफलवृक्षे। তেজবল। रा.नि.व.११।

**तेजनः (कः)।** पुं। शरे। प.मु.। वंशे। भा.। मुञ्जातृणे। उलुपतृणे। ज.द.१२अ.। रा.नि.व. ८। क्ली। भोजने। रा.नि.व.२०।

**तेजना(ख्यः)ह्वयः।** पुं। मुञ्जतृणे। মুজ। रा.नि.व.८।

**तेजनी।** स्त्री। मूर्वायां। अम.। चीरमूर्व्वायां। कङ्गुधान्ये। वै.निघ.। वचायां। भैष.मु.रो.चि.। ज्योतिष्मतीलतायां। श्र.र.।

**तेजपत्रम्।** क्ली। स्वनामख्यातपत्रे। তেজপাত। प.मु.। तत्पर्य्यायः,—पत्रं, पत्रकं, गन्धजातं (शब्दर.), पाकरञ्जनम् (श्र.)। See अंशुकम्।

**तेजफलः।** पुं। हिमालयादौ ख्याते स्वनामख्यातवृक्षे। তেজবল। मं काड़फल। कं गावटे। तत्पर्य्यायः,—बहुफलः, शाल्मलीफलः, स्रवकफलः, स्तेयफलः, गन्धफलः, कण्टवृक्षः। गुणाः—कटुः तीक्ष्णः सुगन्धः दीपनः वातश्लेष्मारुचिघ्नः बालरक्षाकारकः। "तेजफलः कटुस्तीक्ष्णः सुगन्धिर्दीपनः परः। वातश्लेष्मारुचिघ्नश्च बालरक्षाकरः परः॥" रा.नि.व.११।

**तेजलः।** पुं। कपिञ्जलपक्षिणि। তিতির পাখী। रा.नि.व.१९।

**तेजवती।** स्त्री। गजपिप्पल्यां। কাঁচড়া। वै.निघ.२भ.अ.च.चि.। गजपिप्पल्याम्। श्र.र.। तेजवल्कल, तेजबल इति च ख्याते द्रव्ये। गुणाः—"तेजस्विनी कफ-श्वास-कासास्यामय-वातहृत्। पाचन्युष्णा कटुस्तिक्ता रुचिवह्निप्रदीपनी॥" भा.। वचायां। বচ। भैष.क्षुद्ररो.चि.।

**तेजसाह्वयः।** क्ली। मुञ्जतृणे। वै.निघ.।

**तेजस्करः।** त्रि। तेजोवर्द्धके।

**तेजस्विनी (जिनी)।** स्त्री। मूर्वायाम्। चविकायाम्। महाज्योतिष्मतीलतायाम्। रा.नि. व.३। च. वि. ८अ.। तेजोवल्कवृक्षे। वै. निघ.। ज्योतिष्मतीलतायाम्। লতাফট্কী। श्र.र.।

**तेजाह्वा।** स्त्री। तेजफले। महाज्योतिष्मतीलतायाम्। के.।

**तेजिका।** स्त्री। ज्योतिष्मतीलतायाम्। के.।

**तेजोद्वेषः।** पुं। पित्तजरोगे। भा.।

**तेजोधातुः।** पुं। पित्ते। वै.निघ.।

**तेजोमन्थः।** पुं। ह्रस्वाग्निमन्थक्षुपे। ছোট গণিরি। प.मु.। गुणाः—"तेजोमन्थगुणाः प्रोक्ताश्चाग्निमन्थसमा बुधैः। विशेषाद्वातशोफे च प्रोक्ताः पूर्व्वैश्च सूरिभिः॥" वै.निघ.।

**तेजोमयम्।** क्ली। पित्ते। वै.निघ.।

**तेजोवती।** स्त्री। महाज्योतिष्मतीलतायाम्। বড় লতাফট্কী। हिं उमिजिनि। भैष. कुष्ठ. चि. पञ्चतिक्तघृते। वै. निघ. २भ. जीर्णज्व. चि.। चविकायाम्। চই। प.मु.। भा.। सा.कौ.अर्शः-चि.बाहुशालगुड़े। गजपिप्पल्यां। श्र.र.। वचायां। सि.यो.हि.श्वास.चि.बाहुशालगुड़े। "तृवृत्तेजोवती दन्ती।" यत्र चवी तेजोवती चास्ति तत्र तेजोवती ज्योतिष्मती ग्राह्या। श्रीकण्ठः। तेजोवल्कले। তেজবল। स्वर्णजीवन्त्याम्। भा.म.४भ.मु.रो.चि.। सु.चि.२२अ.। मरिचे। वै.निघ.।

**तेजोवीजम्।** क्ली। मज्जायाम्। মজ্জা। वै. निघ.।

**तेजोवृक्षः।** पुं। क्षुद्राग्निमन्थ। ছোট গণিরি। रा.नि.व.९।

**तेजोह्वा।** स्त्री। तेजोवल्याम्। তেজবল। भा. म.४भ.मु.रो.चि.। सु.चि.२अ.। वै.निघ.अर्शःचि. बाहुशालगुड़े। वचायाम्। বচ। क्षुद्ररो.चि. कालकचूर्णे।

**तेमनम् ।** क्ली । आर्द्रीकरणे । मे. । व्यञ्जने । "व्यञ्जनं सूपशाकादिमिष्टान्नं तेमनं स्मृतम् ।" रा. नि. व. २० ।

**तेमनी ।** स्त्री । चुल्लीभेदे । हे.च. ।

**तैरः (रणः) ।** पुं । स्वनामख्यातक्षुपे । তেরড়া গাছ । मं तेरणा । कं वेणंतिगे । गुणाः—शीतलः तिक्तः व्रणघ्नः अरुणरक्तदः । रा.नि.व.४ ।

**तैजवल्ली ।** स्त्री । शतावर्य्याम् । रा.नि.व.४ ।

**तैजसम् ।** क्ली । घृते । रा.नि.व.१५ ।

**तैजसावर्त्तिनी ।** स्त्री । स्वर्णादिपाकमूषायां । मूचि । अम. ।

**तैजसी ।** स्त्री । गजपिप्पल्याम् । रा.नि.व.६ ।

**तैतिलः ।** पुं । खड्गिनि । গণ্ডার । मे. ।

**तैत्तिरः ।** पुं । तित्तिरपक्षिणि । रा. नि. व. १९ । गण्डके । গণ্ডার । मे. ।

**तैरणी(रिणी) ।** स्त्री । तेरणक्षुपे । रा.नि.व.४ । तत्पर्य्यायः,—तैरणः, तैरः, कुनीली, रागदः । गुणाः—तिक्तत्वं, शीतत्व, व्रणनाशित्वं, अरुणवर्णजनकत्वञ्च । रा. ।

**तैलम् ।** क्ली । सिह्लके । शिलारस । च.द. । सि. यो. रा. य. चि. चन्दनादितैले । तिलादिसम्भूतस्नेहे, तैलसामान्ये । তেল । तत्पर्य्यायः,—म्रक्षणं, स्नेहः, अभ्यञ्जनं (हे.) । तच्चाष्टादशविधम् । तद्यथा—तिलजं सार्षपं कौसुम्भम् अतसीजं धान्यजम् एरण्डजं कारञ्जम् ऐङ्गुदं नैम्बं विभीतकजं निर्गुण्डजं ज्योतिष्मतीजम् अभयाजं मधुरिकोत्थं कोशाम्रजं चित्राभवं कर्पूरजं त्रपुषवीजजञ्चेति । एषां विशेषगुणाः स्वस्वपर्य्यायेषु ज्ञेयाः । "तैलं न सेवयेद्धीमान् यस्य कस्य च यद्भवेत् । विषसाम्यगुणत्वाच्च योगे तन्न प्रयोजयेत् । उक्तञ्च, विषस्य तैलस्य न किञ्चिदन्तरं मृतस्य सुप्तस्य न किञ्चिदन्तरम् ।" रा. नि. व. १५ । तैलसामान्यगुणाः स्वरूपञ्च । "तिलादिस्निग्धवस्तूनां स्नेहस्तैलमुदाहृतम् । तत्तु वातहरं सर्व्वं विशेषात्तिलसम्भवम् । तैलं स्वयोनिगुणकृत् वाग्भटेनाखिलं मतं । अतः शेषस्य तैलस्य गुणाः ज्ञेयाः स्वयोनिवत् । तैलं पक्वमपक्वं वा चिरस्थायि गुणाधिकं ॥" भा.पू.२भ. तैलव. । "आनाहाष्ठीलवातासृक्प्लीहोदावर्त्तशूलिनां । हन्ति वातविकाराणां विदध्याच्च प्रशान्तये । यावन्तः स्थावराः स्नेहाः समासेन प्रकीर्त्तिताः । सर्व्वे तैलगुणाः ज्ञेयाः सर्व्वे चानिलनाशनाः ॥" अत्रि. १४अ. । तैलन्त्वाग्नेयमुष्णं तीक्ष्णं मधुरं मधुरविपाकं वृंहणं प्रीणनं व्यवायि सूक्ष्मं विशदं गुरु सरं विकाशि वृष्यं त्वक्प्रसादनं मेधामार्दवमांसस्थैर्य्यवर्णबलकरं चक्षुष्यं बद्धमूत्रं लेखनं तिक्तकषायानुरसं पाचनमनिलबलासक्षयकरं क्रिमिघ्नम् अशीतपित्तजननं योनिशिरःकर्णशूलप्रशमनं गर्भाशयशोधनञ्च । सु.सू.४५अ. । कटाहपक्वतैलगुणाः —"तैलद्रोणी प्रशस्ता विविधगदमये वातरोगादितेषु व्याकुल्ये पङ्गुभूते सविषमबधिरे मिण्मिने गद्गदे च । धन्वङ्गे लग्नपृष्ठे प्रचलितपवने गात्रकम्पे कपाट्यां ग्रीवाभङ्गेऽपतन्त्रे क्षयरुधिरभवे मूत्रकृच्छ्रे च वस्तौ ।" राज.२प. । सर्व्वदा शिरस्तैलदानगुणाः—शिरःशूलखालित्यपालित्यहरं केशदार्ढ्यकरं केशस्याप्रतनदीर्घतासान्द्रताकरम्, इन्द्रियप्रसादकं वह्निशुद्धिकरञ्चेति । सदाकर्णपूरणगुणाः —मन्याहनुसंग्रहोच्चैःश्रुतिबाधिर्य्यकर्णवातजरोगाजनकञ्च । "सौवर्चलिङ्गुदीपीलुशिंशपासारसम्भवं । सरलागुरुदेवादिपादपैः सम्भवन्तु यत् । तुम्बुरूत्थं करञ्जोत्थं ज्योतिषत्युद्भवं तथा । अर्शःकुष्ठक्रिमिश्लेष्मशुक्रमेदोऽनिलापहम् । करञ्जारिष्टके तिक्ते नात्युष्णे च विनिर्दिशेत् । कषायं मधुरं तिक्तं सारणं व्रणशोधनं । अक्षातिमुक्तकाक्षोड़नारिकेरमधूकजम् । त्रपुषैर्वारुकुष्माण्डश्लेष्मान्तकमिलुङ्गवं । वातपित्तहृदशीघ्नं श्लेष्मलं गुरु शीतलं । पित्तश्लेष्मप्रशमनं श्रीपर्णीकिंशुकोद्भवम् ।" अत्रि. १४अ. ।

**तैलकम् ।** क्ली । अल्पपरिमाणतैले ।

**तैलकन्दः ।** पुं । स्वनामख्यातमहाकन्दशाके । तैलकन्द इति भाषा । मं कं सूजिसुर्दिगड्डे । तत्पर्य्यायः,—द्रावककन्दः, तिलाङ्कितदलः, करवीरकन्दसंज्ञः, तिलचित्रपत्रकः । गुणाः—कटूष्णः वातापस्मारघ्नः विषघ्नः लौहद्रावी शोफघ्नः रसबन्धकारी च । तल्लक्षणं यथा—"अश्वारिपत्रसङ्काशः तिलबिन्दुसमन्वितः । सस्निग्धाधस्थभूमिस्थस्तिलकन्दोऽतिविस्तृतः ॥" रा.नि.व.७ ।

**तैलकल्कजः ।** पुं । तैलकिट्टे । খল । रा.नि. व.१६ ।

**तैलकिट्टम् ।** क्ली । पिण्याके । খল । तत्पर्य्यायः —पिण्याकः, खलिः, तैलकल्कजः । गुणाः— कटुकं गौल्यं कफवातप्रमेहघ्नञ्च । रा.नि.व.१६ ।



**तैलकीटः ।** पुं । तैलपायिकायाम् । रा. ।

**तैलङ्गः ।** पुं । तैलपायिकायाम् । शब्दर. ।

**तैलचो(चौ)रिका ।** स्त्री । तैलपायिकायाम् । श.र. ।

**तैलद्रोणी ।** स्त्री । तैलमानपात्रे । তেলের দোনা । तैलपूर्णकाष्ठपात्रे । आकण्ठमज्जनार्थं तैलपूर्णकाष्ठादिपात्रे । তেলের ডুনী । तत्र स्थितिगुणाः—वातव्याकुण्ठरोगपङ्गुबाधिर्य्यमिण्मिनगद्गदधन्वङ्गलग्नपृष्ठप्रचलितपवनगात्रकम्पग्रीवाभङ्गापतन्त्रकक्षय-रुधिरजमूत्रकृच्छ्र-वस्तिरोगेषु प्रशस्ता । राज. ।

**तैलधान्यम् ।** क्ली । तिलादिवीजवर्गे । यथा— तिलातसी च तौरी च द्विविधश्चापि सर्षपः । द्विधा राजी खाखसञ्च वीजं कौसुम्भसम्भवम् । एतानि तैलधान्यानि पठितानि च पूर्व्ववत् ॥ अर्कः ।

**तैलनिर्यासः ।** पुं । गन्धराजे । रा.नि.व.१२ ।

**तैलनी ।** स्त्री । तिलकिट्टे । वै.निघ. ।

**तैलपञ्चकम् ।** क्ली । द्रव्यपञ्चकसिद्धतैले । यथा —"तैलं प्रसन्ना गोमूत्रमारणालं यवाग्रजः । गुल्मजाठरमानाहपीतमेकत्र साधयेत् ॥" च. ।

**तैलपर्णः (कः) ।** पुं, क्ली । ग्रन्थिपर्णवृक्षे । গেঁটেলা । भा. । चन्दनवृक्षे । वै.निघ. ।

**तैलपर्णिकम् ।** क्ली । तैलचन्दने । तत्तु शीतलं धवलं तिलपर्णतरुजातञ्च । भ. । हरिचन्दने । अम. ।

**तैलपर्णी ।** स्त्री । लवणखोन्याम्, देवदारुनिर्यासे । प.मु. । रक्तचन्दने । चन्दने । शिलारसे । मे. ।

**तैलपा ।** स्त्री । पिचके । तैलपायिनि । তেলাপোকা । रा.नि.व.१९ ।

**तैलपाकः ।** पुं । तैलसाधने । তৈল পাক করা । See स्नेहपाकविधिः ।

**तैलपातनम् ।** क्ली । सर्व्ववीजात्तैलनिःसारणे । यथा—"सुपक्वतालपत्राणां रसमादाय भावयेत् । समस्तवीजचूर्णं यदुक्तानुक्तं पृथक् पृथक् । आतपे सुञ्चते तैलं साध्यासाध्यं न संशयः ॥" र.चि ७अ. ।

**तैलपायिका ।** स्त्री । तैलपायाम् । তেলাপোকা, আরশোলা । अम. । तत्पर्य्यायः,— परोष्णी, तैलचौरिका (शब्दर.), तैलपा, तैलपायी (रा.), तैलाम्बुका, खलाधारः (ज.), यक्षदात्मिका (श.), सुखविष्ठा, हृतैली, पिङ्गकपिशा (हे.), वल्गुलिका ।

**तैलपिञ्जः ।** पुं । अरण्यतिलकवृक्षे । वै.निघ. ।

**तैलपिपीलिका ।** स्त्री । तैलपायिपिपीलिकाभेदे । रा. नि. व. ११ । तत्पर्य्यायः,—उदया, कपिजाङ्किका । रा. ।

**तैलपिष्टकः ।** पुं । तैलकिट्टे । খইল ।

**तैलपीतः ।** पुं । तैलपिचौ । च.द. ।

**तैलफलः ।** पुं । इङ्गुदीवृक्षे । रा. नि. व. ८ । विभीतकवृक्षे । रा.नि.व.११ । तिलवृक्षे । वै.निघ. ।

**तैलभाविनी ।** स्त्री । जातीपुष्पवृक्षे । रा.नि. व.१० । [ श.मा. ।

**तैलमाली ।** स्त्री । वर्त्त्याम् । শল্তে, বাতি ।

**तैलमूर्च्छा ।** स्त्री । तैलस्य मूर्च्छनायां । তেল মূর্চ্ছা করা । यथा—"तैलं कृत्वा कटाहे दृढ़तरविमले मन्दमन्दानलैस्तत् तैलं निष्फेनभावं गतमिह हि यदा शैत्ययुक्तं तदैव । मञ्जिष्ठारात्रिलोध्रैर्जलधरनलिकैः सामलैः साक्षपथ्यैः, सूचीपुष्पाङ्घ्रिनीरैरुपहितमथितैर्गन्धयोगं जहाति ॥ तथा—तैलस्येन्दुकलांशिकी विकङ्किकाभागस्तु मूर्च्छाविधौ ये चान्ये त्रिफला पयोद-रजनी-ह्रीवेरलोध्रान्विताः । सूचीपुष्पवटावरोहनलिकास्तस्याश्च पादांशिका दुर्गन्धं विनिहन्ति तैलमकृणं सौरभ्यमाकुर्व्वते ॥" भैष. । मूर्च्छाद्रव्यमानं यथा—मञ्जिष्ठा ५ तो. । अन्येषाञ्च मात्रा मञ्जिष्ठाचतुर्थांशा इति ।

**तैलयन्त्रम् ।** क्ली । तैलनिष्काशनार्थं यन्त्रभेदे । घानि ।

**तैलवल्ली ।** स्त्री । शतमूल्याम् । रा. ।

**तैलवीजः ।** पुं । भल्लातकवृक्षे । रा.नि.व.११ ।

**तैलसाधनम् ।** क्ली । कस्तूरिकायां । वै.निघ. । काकोल्यां । কাঁকলা । श.च. ।

**तैलस्फटिकः ।** पुं । तृणमणौ । हे.च. ।

**तैलस्यन्दा ।** स्त्री । भूमिकुष्माण्डे । काकोल्यां । श्वेतापराजितायाम् । वै.निघ. ।

**तैलाख्यः ।** पुं । तुरुष्कनाम-गन्धद्रव्ये । शब्दर. । শিলারস ।

**तैलाग(गु)रु ।** क्ली । दाहागुरुणि । रा. नि. व. १२ ।

**तैलाङ्ग:**। पुं। वकुलवृक्षे। प.मु.। [ हे.च.।
**तैलाटी**। तृणषट्पदे। वरटायां। বোল্তা।
**तैलाम्बुका**। स्त्री। तैलचौरिकायां। আর্শোলা। जटा.।
**तैलिनी**। स्त्री। तैलपायिकायाम्। रा.नि.व.१९। दशावर्त्त्याम्। श.मा.। [ हे.च.।
**तैलिशाला**। स्त्री। तैलिकगृहे। घानिघर।
**तैलीनम्**। क्ली। तिलक्षेत्रे। रा.नि.व.२।
**तैलु(ल्व)क:**। पुं। लोध्रे। च.द.पाण्डु-चि.। बा.चि.६अ.।
**तैल्वणपूगम्**। क्ली। पूगफलविशेषे। नैल्ववत् इति भाषा। रा.नि.व.११। See अक्रोट:।
**तैष:**। पुं। पौषमासे। अम.।
**तैक्ष्ण्यम्**। क्ली। तीक्ष्णतायाम्।
**तोक:**। पुं। बालके। त्रिका.।
**तोकक:**। पुं। चाषपक्षिणि। নীলকণ্ঠ। वै.निघ.। चातकपक्षिणि। अ.स.।
**तोक्य: (क्म:)**। पुं। अपक्वयवे। हरितनि:शूकक्षुद्रयवे। জই। "तोक्मस्तद्वत्सहरित: तत: स्वल्पश्च कीर्त्तित:।" सोऽतियवाद्धीनगुण:। भा.पू.१भ.धा.व.। पल्लवाद्यङ्कुरे। भागवतम्।
**तोड़िमत्स्य:**। पुं। मत्स्यविशेषे। তারুই মাছ। वै.निघ.।
**तोत्रम्**। क्ली। गवादिताड़नदण्डे। अ.।
**तोद: (नम्)**। पुं, क्ली। सूचीव्यधनेनेव शूलेनेव वा व्यथायाम्। र.मा.। भा.म.१भ.आगन्तुज्व.। तीव्रवेदनायाम्। पुं। वायौ। वै.निघ.।
**तोदन:**। पुं। फलशाकविशेषे। तत्फलं कषायं रूक्षं वातकफघ्नञ्च। सु.सू.४६अ.। अग्नीण लघु संग्राहि स्निग्धं पित्ताग्निकरञ्च। च.सू.२७अ.।
**तोदपर्णी**। स्त्री। तोयपर्ण्याम्। পানা। कुधान्यभेदे। सु.सू.४६अ.।
**तोमर:**। पुं। अस्त्रविशेषे। শাবল। अ.।
**तोमरधर:**। पुं। अग्नौ। वै.निघ.।
**तोमरिका**। स्त्री। सौराष्ट्रमृत्तिकायां। श.र.।
**तोयम्**। क्ली। जले। रा.नि.व.१४। बालके। বালা। वै.निघ.।

**तोयकाम:**। पुं। जलवेतसे। मद.व.५। परिव्याधवृक्षे।
**तोयकुम्भा**। शैवाले। वै.निघ.।
**तोयगर्भ:**। पुं। नारिकेलवृक्षे। वै.निघ.।
**तोयज:**। पुं। उशीरे। लामज्जके। वै.निघ.।
**तोयडिम्भ:**। पुं। घनोपले। हारा.।
**तोयद:**। पुं। उशीरे। नागरमुस्तायाम्। वै.निघ.। मेघे। क्ली। घृते। मे.।
**तोयद्रुम:**। पुं। कतकवृक्षे। নির্মলফলের গাছ।
**तोयधर:**। पुं। मुस्तायां। नागरमुस्तायाम्। सुनिषण्णकशाके। मेघे। मे.।
**तोयधिप्रियम्**। क्ली। लवङ्गे। श.च.।
**तोयपर्णी**। स्त्री। तृणधान्यविशेषे। गुणा: श्यामाकवत्। च.सू.२७अ.। वारिपर्ण्यां। পানা। कारवेल्लीलतायाम्। के.।
**तोयपाषाणजमलम्**। क्ली। खर्परे। খাপর। वै.निघ.।
**तोयपिप्पली**। स्त्री। कच्छटे। কাঁচ্ড়া। रा.नि.व.४।
**तोयपुष्पी**। स्त्री। पाटलवृक्षे। श.मा.।
**तोयप्रष्ठा**। स्त्री। पाटलवृक्षे। वै.निघ.।
**तोयप्रसादन(फल)म्**। क्ली। कतकफले। নির্মলফল। र.मा.।
**तोयफला**। स्त्री। बालकर्कटिकायाम्। কাঁকুড়। रा.नि.व.७।
**तोयमञ्जरी**। स्त्री। जलापामार्गे। वै.निघ.।
**तोयमलम्**। क्ली। समुद्रफेने। वै.निघ.।
**तोयवती**। स्त्री। अमृतवल्ल्याम्। वै.निघ.।
**तोयवल्लरी**। स्त्री। जलपिप्पल्याम्। কাঁচড়া-দাম।
**तोयवल्लिका (ल्ली)**। स्त्री। अमृतस्रवालतायाम्। चित्रकूटे रुदन्तीति ख्यातायाम्। अमृत-वल्ली लता। कारवेल्लके। উচ্ছে। रा.नि.व.३। महादुग्धायाम्। रा.नि.व.२३।
**तोयवृत्ति:**। पुं। जलापामार्गे। वै.निघ.।
**तोयवृक्ष:**। पुं। शैवाले। वै.निघ.।



**तोयशाला**। स्त्री। वारिशालायाम्।
**तोयशुक्तिका**। स्त्री। जलशुक्तौ। জল-ভাটাই। रा.नि.व.१९।
**तोयशूक:**। शैवाले। वै.निघ.।
**तोयसर्पिका**। स्त्री। भेक्याम्। वै.निघ.।
**तोयसूचक:**। पुं। मण्डूके। शब्दार्थकल्प:।
**तोयस्राव:**। पुं। अश्वस्य नेत्रगते जलस्रावरोगे। "अजस्रं पश्यतां व्यश्रु स्वच्छं स्रवति चक्षुष:। तोयस्रावीति तं विद्याद्विकारं मारुतात्मकम्॥" ज.द.३०अ.। जलस्रावे।
**तोयाधिवासिनी**। स्त्री। पाटलवृक्षे। प.मु.।
**तोयापामार्ग:**। पुं। जलापामार्गे। वै.निघ.।
**तोयोद्भवा**। स्त्री। जलापामार्गे। वै.निघ.।
**तोरणम्**। क्ली। ग्रीवायाम्। हारा.। पुं। वहिर्द्वारे। अ.।
**तोल: (क:)**। पुं, क्ली। टङ्कपरिमाणे। ১ তোলা। अशीतिरक्तिकामाने। ९६ रक्तिकमाने। प.प्र.। शाणद्वयमाने। श.मा.। तत्पर्य्याय:,—कोलं, द्रङ्क्षणं, वटकं, कर्षार्द्धं, वैपं, कर्षं। लीला.।
**तोषफला**। स्त्री। एर्व्वारुलतायाम्। বড় কাঁকুড়। रा.।
**तौक्मम्**। क्ली। कर्णमले। त्रिका.।
**तौतिक:**। पुं, क्ली। शुक्तौ। ঝিনুক। प.मु.। मुक्तायाम्। रा.नि.व.१३।
**तौषारम्**। क्ली। तुषारजले। रा.नि.व.१४।
**त्यद्**। क्ली। वायौ। आकाशे।
**त्रपु**। क्ली। रङ्गे। सीसके। मे.।
**त्रपुकर्कटी**। स्त्री। कर्कटिकाभेदे, त्रपुष्याम्। শশা। रा.नि.व.७। [ र.मा.।
**त्रपुटी**। स्त्री। सूक्ष्मैलायाम्। ছোট এলাচ।
**त्रपुलम्**। क्ली। वङ्गे। रङ्गे। भ.द्वि.।
**त्रपुष(स)म्**। क्ली। कर्कट्याम्। কাঁকুড়। प.मु.। क्षणविवृति। কাল তেউড়ী। र.मा.। वङ्गे। रा.नि.व.१३। त्रपुषीफले। শশা। भा.।
**त्रपुषतैलम्**। क्ली। त्रपुषबीजोत्थतैले। শসা-বীজের তৈল। गुणा:—वातपित्तहरं कैश्यं श्लेष्मलं गुरु शीतलञ्च। वा. टी. हेमा. मधुरं गुरु शीतलं केश्यं कफपित्तघ्नं कान्तिजनकञ्च। रा.नि.व.१५।
**त्रपुषा (षी) (सा,सी)**। स्त्री। (Cucumis sativus. Syn. C. Hardwickii.) The cucumber. स्वनामख्यातफलशाकविशेषे। শশা গাছ। हिं खीरे, लघुखीरा, बालमखीरा। मं तौशीकर्कटी। कं तसैवकायि। ते दोसकाइ। उत्. काण्टआरि काकुड़ि। ता. महिवेहरि वोळ्ळौ। तत्पर्य्याय:,—पीतपुष्पा, काण्डालु:, कण्टालु:, त्रपुकर्कटी, बहुफला, कण्टकिलता, कोषफला, तुन्दिलफला, सुधावासा। फलगुणा:—रुच्यं मधुरं शीतलं गुरु भ्रमपित्तविदाहवान्तिघ्नं बहुमूत्रकरम्। रा.नि.व.७। "त्रपुषं लघु नीलञ्च मलहृत्क्लमदाहहृत्। स्वादु पित्तापहं शीतं रक्तपित्तहरं परम्। तत्पाण्डु कफकृज्जीर्णमम्लं वातकफापहम्। तत्पक्वमम्लमुष्णं स्यात्पित्तलं कफवातनुत्। तद्बीजं मूत्रलं शीतं रूक्षं पित्तास्रकृच्छ्रजित्॥" भा. श्यामव.। क्षणवलति। কাল তেউড়ী। र.मा.। महेन्द्रवारुण्याम्। रा.नि.व.३। कर्कटिकायाम्। हे.च.।
**त्रपुसिनी**। कर्कटिकायां। वै.निघ.।
**त्रपुस्**। क्ली। वङ्गे। भा.म.४भ.कर्णरी.चि.सु.सू.६८अ.त्रप्वादि:। शीसके। रा.नि.व.१३। मे.। प.मु.। पुं। त्रपुषलतायां। শসা গাছ।
**त्रप्वादि:**। पुं। रङ्गादिसप्तधातुषु। त्रपुशीसताम्ररजतकृष्णलौहसुवर्णलौहमलानि। गुणा:—गरकृमिहर: तृष्णाविषहृद्रोगपाण्डुमेहघ्नश्च। सु.सू.३८अ.।
**त्रप्सम्**। क्ली। घनेतरदधनि। বস্ত্রাদই।
**त्रयी**। स्त्री। सोमराज्यां। श.च.।
**त्रयोदशाङ्गगुग्गुलु:**। पुं। वातव्याधौ। आह-(भा)वा इति ख्यातं वणिग्द्रव्यं (अभावे मुस्ता लशुनं बिल्वफलं वा) अश्वगन्धा हवुषा (হবুষফল) गुड़ूची (গুলঞ্চ) शतावरी गोक्षुरबीजं बीजताड़कबीजं रास्ना शुलुफा शटी यमानी शुण्ठी एषां प्र. चूर्णं १ प. शुद्धगुग्गुलु: १२ प. घृतं ६ प.। रस.र.। सा.कौ.। आहश्च लशुने प्रोक्ता: आह्वी बिल्वफले तथा।" विश्व.।
**त्रसम्**। क्ली। वने।
**त्रसरेणु:**। पुं। त्रिंशत्परमाणुत्मकपरिमाणे।

स जालान्तरगतरविकिरणेषु दृश्यते। "त्रसरेणुस्तु विज्ञेयः त्रिंशता परमाणुभिः।" प.प्र.३ख.। तत्पर्य्यायः,—ध्वंसी।

**त्राणम्।** क्लौ। त्रायमाणालतायाम्। मे.।

**त्राणा (णी)।** स्त्री। त्रायमाणालतायां। बला लता वा डुमुर। रा.नि.व.५। मे.।

**त्रायन्ती (न्तिका)।** स्त्री। त्रायमाणायां। बला डुमुर। बन भाडुलिया। रा. नि. व. ५। भैष.कुष्ठ.चि.महाभल्लातकगुड़े। सि.यो.गुर्व्वाद्यघृते। "त्रायन्ती तुवरा तिक्ता सरा पित्तकफापहा। ज्वरहृद्रोगगुल्मार्शोभ्रमशूलविषप्रणुत्॥" भा.। च.द. सन्ना.ज्व.चि.। सि.यो.च.द.यक्ष्म.चि.जीवन्त्याद्यघृते। वात.ज्व.द्राक्षादिः। च.द.ज्वर.चि.पिप्पल्यादिघृते। नखरञ्जके। मेहदीति लोके। वै.निघ.चयरी.चि. जलाद्यघृते। च.द.शूलचि.।

**त्रायमाणा (णिका)।** स्त्री। हिमवत्प्रसिद्धस्वनामख्यातमहाक्षुपे। बलाडुमुर, बला लता, बहुला, बन भाडुलिया। हिं त्रायमाणा। तत्पर्य्यायः,—वार्षिकं, त्रायन्ती, बलभद्रिका (अ.), बलदेवा (मे.) सुभद्रानी, भद्रनामिका (र.), कृतत्रा, त्रायमाणिका, बलभद्रा, सुकामा, वार्षिका, गिरिजा, अनुजा, मङ्गल्यार्हा, देवबला, पालिनी, भयनाशिनी, अवनी, रक्षणी, त्राणा। गुणाः—शीतमधुरा गुल्मज्वरकफरक्तघ्नी। भ्रमतृष्णाक्षयविषच्छर्दिघ्नी च। रा.नि.व.५।

**त्रायमाणादिः।** पुं। पित्तज्वरघ्नसिद्धकषायभेदे। च. द. ज्व. चि.। "त्रायमाणा च मधुकं पिप्पलीमूलमेव च। किराततिक्तकं मुस्तं मधुकं सविभीतकम्॥"

**त्रायवृन्तम्।** क्लौ। गण्डीरेतिख्याते आनूपशाकभेदे। शुठिया। वै.।

**त्रासः।** पुं। भये। अ.।

**त्रासदष्टः।** पुं। कुक्कुरदष्टरोगभेदे। यथा—"योऽद्भ्यस्त्रस्येददष्टोऽपि शब्दसंस्पर्शदर्शनैः। जलसन्त्रासनामानं दष्टं तमपि वर्जयेत्॥" वा. उ. ३८अ.।

**त्रिंशत्पत्रम्।** क्लौ। कुमुदपुष्पे। ছেলা বা নালি ফুল। श.मा.।

**त्रिकम्।** क्लौ। त्रिफलायां। त्रिकटुनि। त्रिमदे। (सुखबोधः)। कटिप्रान्तभागे। रा. नि. व. १८। "स्फिक्सकथ्नोः पृष्ठवंशास्थ्नोर्यः सन्धिस्त्रिकं मतम्।" पुं। गोक्षुरके। शृङ्गाटके। वै.निघ.।

**त्रिकग्रहः।** पुं। वातरोगभेदे। त्रिकवेदना। च.सू.२०अ.।

**त्रिकग्राही।** त्रि। वेदनया त्रिकव्यापिनि। मा.नि.।

**त्रिकटः।** पुं। शृङ्गाटके। गोक्षुरके। श.र.।

**त्रिकटु।** क्लौ। शुण्ठीपिप्पलीमरिचेषु। তে শুণ্ঠি পিপ্পলি মরিয়ালু। तत्पर्य्यायः,—त्र्यूषणं, व्योषं (अ.), कटुत्रिकं (के.), कटुत्रयं। गुणाः—दीपनं श्वासकासघ्नं चर्मरोगगुल्ममेहकफस्थौल्यमेदःश्लीपदपीनसादिकं हन्ति। भा.।

**त्रिकटुगुड़िका।** स्त्री। प्रमेहपिड़कायाम्। त्रिकटु त्रिफला गुग्गुलु प्रत्येकं समभागः। गोक्षुरक्काथेन मर्द्दयेत्।

**त्रिकट्वादिवर्त्तिः।** स्त्री। नेत्ररोगाधिकारे वर्त्तिः। "त्रीणि कटूनि करञ्जफलानि द्वे रजनी सह सैन्धवञ्च। बिल्वतरोर्वरुणस्य च मूलं वारिचरं दशमं वदन्ति॥" वारिचरः शङ्खनाभिः। रस.र.।

**त्रिकण्ट(क)म्।** क्लौ। कण्टकारी दुरालभा गोक्षुरकश्चेति क्षुपत्रये। सि. यो. सन्निपातज्वरे। बृहतीगणिकारीदुरालभासु। रा.नि.व.२२। गुणाः—"त्रिकण्टकानां क्वाथः स्यात्पित्तज्वरविनाशनः। नेत्ररोगं वमिञ्चैव मस्तकस्य रुजं तथा॥" वै. निघ.। पुं। मत्स्यविशेषे। ট্যাংরা মাছ, গাগর মাছ। त्रिका.। गुणाः—पित्तघ्नः कफघ्नः रुक्षः लघुः दीपनश्च। राज.३प.। गोक्षुरके। र.मा.। च.द.ज्व. चि. यक्ष्म. चि. नागबलाघृते। शृङ्गाटके। गुड़ूच्याम्। कण्टकार्य्याम्। शुण्ठ्याम्। वै.निघ.। स्नुहीवृक्षे। তেকাঁটা সিজু। श.च.। कणभजातीयकीटविशेषे। सु.कल्प.८अ.।

**त्रिकण्टका।** स्त्री। त्रिवृतायां। তেউড়ী। ग.द.१२अ.। गोक्षुरे।

**त्रिकण्टकादिघृतम्।** क्लौ। मूत्रकृच्छ्राधिकारे घृतम्। गोक्षुरः एरण्डमूलं कुशमूलं काशमूलं शरमूलं इक्षुमूलं उलुपमूलं शतमूली कर्कटिबीजं एषां प्र. स्वरसः ४ श.। स्वरसाभावे गोक्षुरैरण्डमूलकुशादिपञ्चमूलं प्र. १४ प. ५ तो. २ मा. ७ र.। जल ४४ श. शे. ११ श.। शतमूलीरसः कर्कटीरसः इक्षुरसः प्र. १२ प. २ तो. ५ मा. ३ र.



घृतं ४ श.। पाके सिद्धे प्रक्षेपः पुरातनगुड़ः। सा.कौ.। त्रिकण्टकादीनां मिलित्वा ४४ प. वारि ४४ श. शे ११ श. शतावर्य्यादीनां रस. मिलितः ५ श.। रस.र.। भा.। गव्यघृतं ४ श. गोक्षुरादीनां प्र. २ श. क्वाथार्थजलं प्र. १६ श. शे. ४ श.। शतावरीक्षुकुष्माण्डानां स्वरसः प्र. ४ श.। प्रक्षेपः शर्करा २ श.। भैष.।

**त्रिकण्टाख्यः (कः)।** पुं। शृङ्गाटके। वै. निघ.।

**त्रिकत्रयम्।** क्लौ। समत्रिकटुत्रिफलात्रिमदे।

**त्रिकत्रयादिलौहम्।** क्लौ। पाण्डुरोगे हितम्। शोधितमण्डुरं १ प. गव्यघृतं १ प. शर्करा १ प. मधु १ प. कान्तलौहं १ तो. त्रिकटु त्रिफला मुस्तं चित्रकमूलं विड़ङ्गं एषां प्र. १ तो. एषां क्वाथेन लौहपात्रे ताम्रपात्रे वा सप्त भावयित्वा ततः घृतेन च सप्त भावयित्वा रौद्रे शिशिरे च स्थाप्यम्। सा.कौ.।

**त्रिकर्ष(र्षिक)म्।** क्लौ। नागरातिविषामुस्तासु। শুঁট, আতইচ, মুতা। "नागरातिविषामुस्तात्रयमेतत्त्रिकर्षिकम्।" रा.नि.व.२२।

**त्रिकशूलम्।** क्लौ। वातव्याधिभेदे। কটিপ্রান্তে শূল। लक्षणं—"स्फिक्सकथ्नोः पृष्ठवंशास्थ्नोर्यः सन्धिस्त्रिकं स्मृतं। तत्र वातेन या पीड़ा त्रिकशूलं तदुच्यते॥ कारयेद्वालुकास्वेदं त्रिकशूली प्रयत्नतः। खट्वाधस्तात्करीषाग्निं धारयेत्सततं नरः॥" भा.म.२भ.।

**त्रिकसन्धिः।** पुं। स्फिक्सक्थिपृष्ठवंशास्थिसन्धिस्थाने। च.शा.७अ.।

**त्रिकसन्ध्यस्थि।** क्लौ। त्रिकास्थिनि। কটিসন্ধির হাড়। च.शा.७अ.।

**त्रिकूट(लवण)म्।** क्लौ। सामुद्रलवणे। করকচ লবণ। प.मु.। र.मा.। द्रोणीलवणे। रा.नि.व.६।

**त्रिकूटाह्वयम्।** क्लौ। काचलवणे। वै.निघ.।

**त्रिकूर्च्चकम्।** क्लौ। व्रणविस्रावणार्थम् षड़ङ्गुलशस्त्रविशेषे। सु.सू.८अ.। "अङ्गुलानि तथाष्टौ च शस्त्रकार्य्यं त्रिकूर्च्चकं। फलैरन्तर्मुखाकारैरङ्गुलैरन्वितं त्रिभिः। एकैकस्य फलस्यैषामन्तरं व्रीहिसम्मितं। वृन्तं पञ्चाङ्गुलायामङ्कार्य्यं रुचकभूषितं॥" सु.टी.ड.।

**त्रिकोणम्।** क्लौ। योनौ। शृङ्गाटके। पुं। त्रिधारतृणे। वै.निघ.।

**त्रिकोणकः।** पुं। गुण्डतृणे। रा.नि.व.८।

**त्रिकोणफलम्।** क्लौ। शृङ्गाटके। পাণিফল। भा.। पुं। त्रिधारतृणे। वै.निघ.। [ निघ.।

**त्रिकोणा।** स्त्री। योनौ। शृङ्गाटकवृक्षे। वै.

**त्रिखम्।** क्लौ। कर्कटिकायाम्। वै. निघ.। त्रपुषे। श.च.।

**त्रिगन्ध(क)म्।** क्लौ। त्वगेलापत्रेषु। वै.निघ. २भ.ग्रह.चि.दाड़िमाष्टके।

**त्रिगर्त्ता।** स्त्री। मुक्तायाम्। वै.निघ.। घुघुरिकायां। मे.। काशुकायाम्। मे.।

**त्रिगुणम्।** क्लौ। सत्त्वरजस्तमःसु।

**त्रिगुणाख्यरसः।** पुं। वातव्याधिघ्नो रसः। गन्धकः १ भ. पारद ८ भ. (मतान्तरे गन्धकः १ भ. पारदः २ भ.) मृद्वग्निना पक्वावतार्य्य सञ्चूर्ण्य च तेन समभागं हरीतकीचूर्णं मिश्रयेत्। रस.कौ.। अन्यः शूलि—टङ्कणं (সোহাগার খই) मृगशृङ्ग-स्वर्ण-गन्धक-रससिन्दूरं समभागं आर्द्रकरसेन पिष्ट्वा रुद्ध्वा गजपुटे पचेत्। मात्रा १ मा. अनु. मधु। र.सा.सं.।

**त्रिजटा।** स्त्री। बिल्ववृक्षे। तन्त्रम्।

**त्रिजात(क)म्।** क्लौ। मिलिततुल्यत्वगेलापत्रेषु। দারুচিনি, এলাচ, তেজপত্র সমভাগ। रा.नि.व.२२। हिं दालचीनी, एलकुलु, आकुपत्तौंक। "त्वगेला-पत्रकैस्तुल्यैस्त्रिसुगन्धि त्रिजातकम्। नागकेशरसंयुक्तं चातुर्जातमुच्यते॥" प.प्र. ३ ख.। गुणाः—"तद्द्वयं रोचनं रुक्षं तीक्ष्णोष्णं मुखगन्धहृत्। लघु पित्ताग्निकृद्वर्ण्यं कफवातविषापहम्॥" भा.।

**त्रिणम्।** क्लौ। तृणे। श.र.।

**त्रिणता।** स्त्री। धनुषि। त्रि.।

**त्रितयम्।** क्लौ। सन्निपाते। भा. म. ४भ. शिरोरो. चि।

**त्रिदला।** स्त्री। गोधापदीलतायाम्। গোয়ালিয়া লতা। प.मु.। रक्तलज्जालुकायाम्। वै. निघ.। यष्टिमधुनि। ज.द.१२अ.। [ च.।

**त्रिद(दा)लिका।** स्त्री। चर्मकषायाम्। श.

**त्रिदशगोपः** । पुं । इन्द्रगोपकीटे । वै.निघ. ।

**त्रिदशदारु** । क्ली । देवदारुकाष्ठे । चि.क्र.क. क्षीरो.चि. । [ व. १० ।

**त्रिदशमञ्जरी** । स्त्री । तुलसीवृक्षे । रा. नि.

**त्रिदशवरभोज्यम्** । क्ली । अमृते । चि.क्र. क.कीशररसे ।

**त्रिदशसर्षपः** । पुं । देवसर्षपवृक्षे । वै.निघ. ।

**त्रिदशाहारः** । पुं । अमृते । हला. ।

**त्रिदिवा** । स्त्री । एलायां । गङ्गायां । वै.निघ. ।

**त्रिदिवोद्भवा** । स्त्री । स्थूलैलायाम् । বড় এলাচ । रा.नि.व.६ ।

**त्रिदिवोद्भूता** । स्त्री । सूक्ष्मैलायाम् । वै.निघ. ।

**त्रिदीप्यम्** । क्ली । यमानीत्रये, यमानी खोरा सानी अजमोदा च । वै.निघ.२भ.अर्श:चि.भस्मक वट्याम्

**त्रिदोषम्** । क्ली । वातपित्तकफाख्यदोषत्रये । रा. ।

**त्रिदोषजः** । त्रि । त्रिदोषजनिते ।

**त्रिदोषदावानलकालमेघः** । पुं । सन्निपात ज्वरे रसः । हरितालपुटितवङ्गं मनःशिलापुटित- शीषं शीषपुटितस्वर्णरौप्यताम्राणि प्रत्येकं पुनः हिङ्गुलपुटितानि कृत्वा प्र. समभागो ग्राह्यः एतत्समष्टितुल्यः पारदः गन्धकः तुल्यकश्च द्विगुणः (मतान्तरे उक्तद्रव्याणां प्र. एकैको भागः, गन्धक- तुल्ययोः द्वौ भागौ) एकत्र निम्बुकरसेन सम्मर्द्य गोलकञ्च कृत्वा यथाविधि पुटेत् । अथ तत्र तुल्य- भागं पुनः गन्धकं दत्त्वा चित्रकरसेन मर्दयेत् । तदनु षोड़शांशं विषं सम्मिश्य पुनः तद्रससिक्तं कृत्वा पचेत् । अथ रोहितमत्स्यपित्तेन भावयित्वा रक्तिद्वयमिता वटी कार्य्या ।

**त्रिदोषदावानलरसः** । पुं । ज्वराधिकारे रसः । अर्कमूर्त्तिरसः यदि ताम्रपात्रे जम्बीरादि रसैः पुनरपि भावितः स्यात् तदा त्रिदोषदावानलो भवति । भैष. ।

**त्रिदोषरोहिणी** । स्त्री । त्रैदोषिकगलरोग- विशेषे । वै.निघ. । [ व. २२ ।

**त्रिदोषसमम्** । क्ली । समदोषत्रये । रा. नि.

**त्रिदोषसम्भवः** । पुं । सन्निपाते । वै.निघ. ।

**त्रिदोषहारी (रसः)** । पुं । ज्वराधिकारे रसः । "बलिशिलातालताप्यतुल्योदधिमलटङ्ग- निकुम्भजामृताख्यं । दलितं महिषपित्ततस्त्रिधा स्यादुधिरगतः शिरसि त्रिदोषहारी ॥" र.चि.९अ. ।

**त्रिधातुः** । पुं । गणपतौ । त्रिका. । क्ली । धातुत्रये ।

**त्रिधारकः** । पुं । स्नुहीभेदे । তেকাঁটা মনসা ।

**त्रिधारकाण्डवल्ली** । स्त्री । त्रिधारकारवे- ल्लाम् । তেশিরে উচ্ছে । वै.निघ. ।

**त्रिधारस्नुही** । स्त्री । त्रिधारवज्रीवृक्षे । তেকাঁটা সিজ্ । रा.नि.व.८ ।

**त्रिनेत्ररसः** । पुं । पित्तकासे रसः । ताम्रभस्म अभ्रभस्म तीक्ष्णलौहभस्म समभागम् । कासमर्द्द- तालाम्लवेतसरसैः दिनैकं मर्द्दयित्वा द्विगुञ्जा वटी कार्य्या । रस.र. । अपरः परिणामशूले—टङ्कणं (সোহাগার খই) मृगशृङ्ग स्वर्णं रससिन्दूरम् एषां प्र. समभागं दिवा आर्द्रकरसेन पिष्ट्वा गज- पुटेन पचेत् । घृतमधुभ्यां सेव्यम् । रस.र. । अन्यः शोथे—पारदः गन्धकः भृष्टटङ्कणं ताम्रं लौहम् एषां प्र. समभाग आर्द्रकरसेन मर्दयित्वा लघु- पुटे पचेत् । अनुपानं—एरण्डरसः अपामार्गरसः । अन्यः वृष्याधिकारे—पारदगन्धकताम्राणि सम- भागानि निर्गुण्डीरसैः दिनैकं मर्दयित्वा शुष्कीकृत्य मूषामध्यगतं बालुकायन्त्रे प्रहरत्रयं पचेत् । पर्ण- खण्डेन सेव्यः । र.चि.९अ. । अपरः सन्निपात- ज्वरे—पारदगन्धकताम्राणि समभागानि द्रव्यत्रय- तुल्यैः गव्यदुग्धैः शिग्रुरसैश्च दिनं सम्मर्द्य गोलकं कृत्वा खरातपे शुष्कीकृत्य च अन्धमूषागतं बालुका- यन्त्रे प्रहरत्रयं पचेत् । र.चि.९अ. । अन्यश्च सन्नि- पातज्वरे—रसः १ भ. गन्धकः १ भ. ताम्रं चतुर्थांशं सर्व्वतुल्येन गव्यदुग्धेन निर्गुण्डीरसेन शिग्रुरसेन च खरातपे दिनैकं मर्दयित्वा शोषयेत् । भा. । अपरः ऊरुस्तम्भे—जारितस्वर्णमाक्षिकं हिङ्गुलं लौहं पारदः वङ्गं गन्धकः ताम्रम् अभ्रं समुद्रफेनः गिरिमृत्तिका स्वर्णं शीषं चित्रकमूलं हिङ्गु त्रिकटु त्रिफला शिग्रुवीजम् अजमोदा (রাঁধুনি) यमानी पिप्पलीमूलं भार्गी (বামনহাটী) लशुनं जीरककृष्णजीरके एषां प्र. समभागः आर्द्र- करसेन मर्द्यः । रस.र. । अपरः मूत्रकृच्छ्रे, रस- गन्धकवङ्गानां प्र. समभागः । दूर्व्वायष्टिमधुगोक्षुर- शाल्मलिरसैर्भावयित्वा भूधरयन्त्रे पक्त्वा च पुनस्तै- र्भावयेत् । मा. २ र. । र.सा.सं. ।



**त्रिनेत्रा (त्री)** । स्त्री । वाराहीनाममहाकन्द- शाके । रा.नि.व.७ ।

**त्रिपटु** । क्ली । विड़सैन्धवकाचलवणेषु । वै.निघ. ।

**त्रिपत्रः** । पुं । चण्डालकन्दभेदे । रा.नि.व.७ । त्रिदलविल्ववृक्षे । रा. नि. व. ११ । क्ली । त्रिदल- विल्वपत्रे ।

**त्रिपत्रकः** । पुं । पलाशवृक्षे । हे.च. ।

**त्रिपथम्** । क्ली । त्रिमार्गे । তেমাথা পথ । हे. ।

**त्रिपथगा** । स्त्री । गङ्गायाम् । अ. ।

**त्रिपदा** । स्त्री । हंसपदीलतायाम् । रा.नि.व. ५ । रक्तलज्जालुकायाम् । वै.निघ. ।

**त्रिपदी** । स्त्री । हंसपदीलतायाम् । ছোট গোয়ালিয়া লতা । प.मु. । रा.नि.व.५ । शत- दलमल्लिकायाम् । "त्रिपदी शतपत्रा तु मोहिनी श्रेष्ठमल्लिका ।" द्रव्याभि. ।

**त्रिपर्णः** । पुं । पलाशवृक्षे । रा.नि.व.१० ।

**त्रिपर्णा** । स्त्री । वनकार्पास्याम् । বন কাপাস । पृश्निपर्ण्यां । চাকুলিয়া । र.मा. । वनगङ्गायाम् । वै.निघ. । तिलपर्णिकाकन्दे । रा.नि.व.७ । शाल- पर्ण्याम् । भा.म.ख.१भ. ।

**त्रिपर्णिका** । स्त्री । यासक्षुपे । দুরালভা । रा.नि.व.४ । स्वनामख्यातकन्दशाकविशेषे । तिल- पर्णी मूरेङ्गल इति कौङ्कणदेशे अनूपदेशे च प्रसिद्धा । তিলকন্দ । तत्पर्य्यायः,—वृहत्पत्रा, छिन्नग्रन्थिलिका, कन्दालुः, कन्दबहुला, अम्लवल्ली, विनारुहा, त्रिपर्णी । तल्लक्षणं यथा—"अश्वारि- पत्रसङ्काशः तिलविन्दुसमन्वितः । सस्निग्धाधस्थ- भूमिस्थः तिलकन्दोऽतिविस्तृतः ॥" गुणाः—मधुरा शीता श्वासकासघ्नी पित्तशमनी विषघ्नी व्रणघ्नी च । रा.नि.व.७ । तच्छाकगुणाः—शाकं गुरु च रूक्षञ्च प्रायो विष्टभ्य जीर्य्यति । मधुरं शीतवीर्य्यञ्च पुरीषस्य च भेदनम् ॥ च.सू.२७अ. ।

**त्रिपर्णी** । स्त्री । शालपर्ण्याम् । भा. । वन- कार्पास्याम् । प.मु. । "त्रिपर्णी कलसीविल्वैः ।" मूर्व्वायाम् । रा.नि.व.३ । आरण्यगञ्जिकायाम् । वै. निघ. । त्रिपर्णीकन्दे । তিলকন্দ । रा.नि.व.७ ।

**त्रिपला** । स्त्री । त्रिफलायाम् । भ.द्वि. ।

**त्रिपात्** । पुं । ज्वरे । वैद्यकम् । "ज्वरस्तु त्रिशिरास्त्रिपात् ॥" भाग. ।

**त्रिपादः** । पुं । ग्रन्थिपर्णमूले । वै.निघ. ।

**त्रिपादिका** । स्त्री । हंसपादीलतायाम् । रा. नि.व.५ ।

**त्रिपादी** । स्त्री । हंसपादीलतायां, कीटमारि- कायाम् । वा.सू.१५अ.विदार्य्यादिः । "द्वे पञ्चके गोपसुता त्रिपादी ।" रक्तलज्जालुकायां । वै.निघ. ।

**त्रिपिवा (न्)** । पुं । लम्बकर्णे छागे । वै.निघ. ।

**त्रिपिष्टकम्** । क्ली । आकाशे । शब्दर. ।

**त्रिपुटः (कः)** । पुं । तालके । श.र. । गोक्षुर- क्षुपे । प.मु. । सतीलके, मटर इति ख्यातद्विदल- क्षुपे । र.मा. । शिम्बीधान्यभेदे । খেসারি কলাই । হিং খেসারি । गुणाः—"त्रिपुटो मधुरस्तिक्तस्तुवरो रूक्षणो भृशम् । कफपित्तहरो रुच्यो ग्राहकः शीतलस्तथा । किन्तु खञ्जत्वपङ्गुत्वकारी वातातिकोपनः ॥" भ.पू.१भ.धा.व. । "रुच्यो विशोषो मधुरः प्रदिष्टः स्नायु करोत्यस्थिगतं बलिष्ठं । विबन्ध-शूल-भ्रम-शोफकर्त्ता दाहार्शहृद्रोगविकार- कारी ॥" अत्रि.१५अ. । तत्सूपगुणा.—"त्रिपुटानां कलायानां सूपः स्वादुश्च वातलः । आध्मानशूल- जनकः पित्तास्ररुचिवान्तिहा ॥" द्रव्यगुणः ।

**त्रिपुटकी** । स्त्री । श्वेतत्रिवृति । वै.निघ. ।

**त्रिपुटा** । स्त्री । अरुणत्रिवृति । रा. नि. व. ६ । कर्णास्फोटालतायाम् । रा.नि.व.३ । त्रिवृन्मात्रे । कृष्णचणके । प.मु. । स्थूलैलायाम् । सूक्ष्मैलायाम् । रा.नि.व.६।२३ । वार्षिकमल्लिकायाम् । मल्लिका- विशेष । रा.नि.व.१०।२३ । जातीवृक्षे । गोक्षुरके । कुलत्थिकायाम् । वै.निघ. ।

**त्रिपुटी** (इन्) । पुं । एरण्डे । श.मा. । स्त्री । त्रिवृति । তেউড়ি । अ.टी.भ. ।

**त्रिपुटीफलः** । पुं । एरण्डवृक्षे । हारा. ।

**त्रिपुरभण्डिका** । स्त्री । रुद्रजटायाम् । भांट् इति भाषा । भैष.पानीयभक्तवट्याम् ।

**त्रिपुरभैरवरसः** । पुं । ज्वरे रसः । शुद्धविषं १ भ. टङ्कणक्षारः (সোহাগার খই) २ भ. गन्धकः ३ भ. हिङ्गुलं (मतान्तरे ताम्रं) ४ भ. दन्ती- वीजं ५ भ. । दन्तीक्काथेन मर्द्दयेत् । मात्रा ३ र. । अनु. आर्द्रकरसः । रस.र. । रस.कौ. । अन्यो यथा—विषं १ भ. पिप्पली ३ भ. मरिचं ४ भ.

ताम्रं ५ भ. हिङ्गुलं ६ भ. आर्द्रकरसेन मर्द्दयेत्। माता ॥० र.। भा.म.ज्व.चि.।

**त्रिपुरमल्लिका (मालिका)।** स्त्री। हस्तिमल्लिकायाम्। रा.नि.व.१०। तत्पर्य्यायः,—श्लेष्मघ्नी। त्रिका.।

**त्रिपुरमाली।** स्त्री। वटपत्राकृतिपत्रपुष्पवृक्षभेदे। "मोहना त्रिपुरा हैमा वटपत्रा च मोहिनी।" द्रव्याभि.।

**त्रिपुरा।** स्त्री। त्रिपुरमालीवृक्षे। द्रव्याभि.।

**त्रिपुषा।** स्त्री। त्रपुषायाम्। कृष्णत्रिवृति। श.च.। क्ली। त्रपुषफले। त्रपुषीबीजे। कुशावलेहे।

**त्रिपुष्पा।** स्त्री। अतिबलायाम्। वै.निघ.।

**त्रिफला (ली)।** स्त्री। Three myrobalans. फलत्रये। ত্রিফলা। तत्पर्य्यायः,—त्रिफली, फलत्रयं, फलत्रिकं (रा.), फलं (शि.)। सा चतुर्धा महती क्षुद्रा सुगन्धा मधुरा च। तत्रादौ महती आमलकादीनां प्रत्येकमत्रभागाः। तदुक्तं—"पथ्या विभीतकं धात्री त्रिफला महती स्मृता।" शि.यो.पानीयकल्याणघृते। आमलक हरीतकीविभीतकेषु। रा.नि.व.२२। द्वितीया—काश्मर्य्यमृद्वीकापरूषकफलेषु। গাঁমার ফল, কিস্‌মিস্, ফল্‌সা ফল। "द्राक्षाकाश्मर्य्यमृद्वीकापरूषकफलानि च।" श्रीकण्ठः। त्रिफलायां द्रव्यत्रयं समभागं देयम्। एषा योगेषु प्रधाना। गुणाः—दीपनी पित्तकफघ्नी दृष्टिवर्द्धनी रूक्षा मलशोधनी मेहकुष्ठविषमज्वरनाशिनी च। भा.पू.१भ.। महाकुष्ठविषमज्वरपित्तघ्नी च। राजव.। सुगन्धत्रिफला यथा—जातीफललवङ्गपूगेषु। मधुरत्रिफला यथा—द्राक्षादाड़िमखर्ज्जूरेषु।

**त्रिफलाघृतम्।** क्ली। पाण्डुरोगे। गव्यघृतं ४ श.। पाकार्थं गोमूत्रं १६ श.। कल्कार्थं त्रिफला दन्तीत्रिवृत्मूलवचाकम्पिल्ल (কম্‌লাগুঁড়ি) मिलितशरावः। रस.र.। इदं स्वल्पम्।

**त्रिफलाद्यघृतम्।** क्ली। नेत्ररोगाधिकारे घृतम्। गव्यघृतं ४ श.। क्वाथार्थं—त्रिफलारसः १२ श. स्वरसाभावे त्रिफला २ श. जलं ४८ श. शे. १२ श.। दुग्धं ४ श.। कल्कार्थं—त्रिफला त्रिकटु यष्टिमधु कटुकी पुण्डरीकं क्षुद्रैला विड़ङ्गं नागेश्वरं नीलोत्पलम् अनन्तमूलं श्यामालता रक्तचन्दनं हरिद्रा दारुहरिद्रा एषां म.२तो. रा. को.। भा.। इदं मध्यमम्। अपरं—गव्यघृतं ४ श.। क्वाथार्थं—त्रिफला २ श. वारि १६ श. शे. ४ श.। भृङ्गराजरसः ४ श. वासारसः ४ श.। स्वरसाभावे वासामूलं २ श. वारि १६ श. शे. ४ श.। शतमूलीरसः ४ श. छागदुग्धं ४ श. गुड़ूचीरसः ४ श. अभावे क्वाथः आमलकीरसः ४ श.। कल्कार्थं—पिप्पली शर्करा द्राक्षा हरीतकी आमलकी विभीतकं नीलोत्पलं यष्टिमधु काकोली गाम्भारीत्वक् कण्टकारी एषां मिलित्वा शरावः (১ সের)। भैष.। रस.र.। इदं बृहत्। स्वल्पं यथा—घृतं ४ श.। क्वाथार्थं—त्रिफला ८ श. वारि ६४ श. शे. १६ श.। गव्यदुग्धं ४ श.। सन्ध्यायां तिमिरनाशार्थं पेयम्। अन्यत्—घृतं ४ श. शतावरीक्वाथः १६ श.। कल्कार्थं—त्रिफला यष्टिमधु १ श.। पाकशेषे मधु-प्रक्षेपः १ श.। अन्यत् योनिरोगे—घृतं ४ श.। कल्कार्थं—त्रिफला भिण्टीद्वयं गुड़ूची पुनर्नवा श्योनाकः हरिद्रा दार्वी रास्ना अश्वगन्धा शतावरी एषां मिलितशरावः (১ সের)। गव्यदुग्धं १६ श.। भा.।

**त्रिफली।** स्त्री। त्रिफलायाम्। रा.।

**त्रिबला।** स्त्री। वाट्यालक-नागबला-श्वेतवाट्यालकेषु।

**त्रिबलिः।** स्त्री। जठरावयवविशेषे। পেটের বড়্। शूरिप्र.।

**त्रिबलीकम्।** क्ली। गुदद्वारे, पायौ। हे.च.।

**त्रिभङ्गी (ण्टी) (ण्डी)।** स्त्री। त्रिवृतायां। তেউড়ী। प.मु.। "सशर्करा कामलिनां त्रिभण्डी हिता।" सि.यो.कास.चि.। अ.द.काम चि.। सु सू. ४५अ.। चि १७अ.।

**त्रिभण्ड(द्र)म्।** क्ली। मैथुने, सुरते। त्रिका.।

**त्रिमण्डला।** स्त्री। कृच्छ्रसाध्यलूताविशेषे।

**त्रिमदः।** पुं। विड़ङ्गमुस्तचित्रकेषु। "विड़ङ्गमुस्तचित्रैश्च त्रिमदः।" प.प्र.३ख.त्रिकत्रयलौहे।

**त्रिमदद्वितयम्।** क्ली। त्रिमदस्त्रिफला चेति द्वये। प्रयोगा.ग्रह चि.कणादिलौहे।

**त्रिमधु।** क्ली। मधुरत्रये, मधुघृतशर्करासु। रा नि व २२। गुणाः—"मधुरत्रितयञ्चाग्निदीपनं कान्तिदायकं। विषदोषं रक्तपित्तं तृषाञ्चैव विनाशयेत्॥" वै.निघ.।

**त्रिमल्लभट्टः।** पुं। योगतरङ्गिणीकारे।



**त्रियष्टिः।** स्त्री। पर्पटके। ক্ষেৎপাবড়া। प.मु.।

**त्रियामा।** स्त्री। हरिद्रायाम्। रा. नि. व. ६। नील्याम्। कृष्णत्रिवृति। उणा.। रात्रौ। यमुनायाम्। उ.।

**त्रिरेखः।** पुं। शङ्खे। শাঁখ। हे.।

**त्रिलवणम्।** क्ली। सौवर्चलसैन्धवविड़ानीति लवणत्रये। सि.यो.सान्निपातिकज्व.। "मातुलुङ्गार्द्रकरसं कैश्चित्त्रिलवणान्वितम्।" च.द.ज्व.चि. नस्ये। रा.नि.व.२२।

**त्रिलिङ्गगतिः।** स्त्री। त्रिदोषजनाड्याम्। भा.म.४भ.मु.री.चि.। "त्रिलिङ्गगतिसौषिरी।"

**त्रिलोहकम्।** क्ली। स्वर्णरजतताम्रेषु। सुवर्णं रजतं ताम्रं त्रयमेतत्त्रिलोहकं। रा. नि. व. २२। गुणाः—त्रिलोहस्य गुणाः प्रोक्ताः पञ्चलोहसमा गुणैः। वै.निघ.।

**त्रिवर्गः।** पुं। त्रिकटुनि, त्रिफलायां, त्रिमदे च। सु.चि.२अ.।

**त्रिवर्गद्वितयम्।** क्ली। त्रिफलात्रिमदे। ত্রিফলা ও ত্রিমদ। रस.र.कणाद्यलौहे।

**त्रिवर्णकम्।** क्ली। गोक्षुरके। त्रिफलायाम्। त्रिकटुके मे.। त्रिजातके। सु.सू.४४अ.।

**त्रिवर्णकृत्।** पुं। शरटे। কাঁকলাস। वै.निघ.।

**त्रिवर्णा।** स्त्री। वनकार्पास्याम्।

**त्रिवर्षिका।** स्त्री। त्रिवर्षागवि। তিন বৎসরের গরু। हे.।

**त्रिवल्ली।** स्त्री। इन्दीवरायाम्। वै.निघ.।

**त्रिविक्रमरसः।** पुं। अश्मर्य्यधिकारे रसः। ताम्रभस्म तुल्येन छागदुग्धेन पक्वा, छागदुग्धपक्वताम्रभस्म १ तो. पारदः १ तो. गन्धकः १ तो. निर्गुण्डी (নিশিন্দা) रसेन दिनं मर्द्दयित्वा गोलकङ्कृत्वा वालुकायन्त्रे दिनैकं पचेत्। शीते उद्धृत्य द्विगुञ्जा मात्रा देया। रस.र.।

**त्रिविधायतनम्।** क्ली। इन्द्रियार्थातियोगकर्म्मातियोग-कालातियोगरूपेषु रोगाणां त्रिविधकारणेषु। च.सू.११अ.।

**त्रिविष्टपम्।** क्ली। आकाशे। अ.टी.भ.।

**त्रिवीजः।** पुं। श्यामाके। শ্যামা ধান। रा. नि.व.१६।

**त्रिवृतादिगणः।** पुं। तदाद्यधोभागहरद्रव्यसमूहे। यथा—"त्रिवृता श्यामा दन्ती द्रवन्ती (ইন্দুরকাণী) सप्तला (চামরকষা) शङ्खिनी (শ্বেত বুহ্না) विषाणिका (কর্কটশৃঙ্গী, মেড়াশিঙে) गवाक्षी (গোমুক, রাখালশশা) छगलान्त्री (বিজতাড়ক) स्नुक् (মনসা সিজু) सुवर्णक्षीरी (ঔষধবিশেষ বা শিয়ালকাঁটা) चित्रकः किणिही (আপাং) कुशः काशः तिल्वकः कम्पिल्लकः (কমলাগুঁড়ী) पाटला पूगः हरीतक्यामलकी विभीतकं नीलिनी (নীল) चतुरङ्गुलः (সোন্দাল) एरण्डः पूतिकः (করঞ্জ) महावृक्षः (তেকাঁটা সিজু) सप्तच्छदार्कज्योतिष्मत्यश्चेति अधोभागहराणि।" सु.सू.३८अ.।

**त्रिवृतिका।** स्त्री। त्रिवृतायां। रा.नि.व.६।

**त्रिवृत् (ता, त्त्या)।** स्त्री। (Ipomœa turpethum. Syn. Convolvulus turpethum.) Turpeth Root. स्वनामख्यातलतायाम्। তেউড়ী। हिं तर्वद, निशोत, नक्पतर, पिथोरी। मं तियड़। कं तिगड़े। तें आलतेगड़। ता. शिवदइ। वम्. फुट्कुरी, निशोओर। तत्पर्य्यायः,—सर्व्वानुभूतिः, सुवहा, त्रिपुटा, त्रिवृता, त्रिभण्डी, रेचनी, सरहा, सरणा, सरसा, रोचनी (भ.), मालविका, मसूरी, श्यामा, अर्द्धचन्द्रा, विदला, सुषेणी, कालोञ्जिका, कालमेषी, काली, त्रिवेला, त्रिवृत्तिका (रा.), श्वेता, सारा (शब्दर.)। श्वेतकृष्णारुणभेदात् सा त्रिविधा। श्वेतायाः पर्य्यायः,—त्रिवृत्, वृकाक्षी, सुवहा, त्रिभण्डी, त्रिपुटा। कृष्णायाः पर्य्यायः,—श्यामा, पालिन्दी, सुषेणिका, काला, मसूरविदला, अर्द्धचन्द्रा, कालमेषिका (अ.), पालिन्धी, कालमेशिका (भ.)। अरुणायाः पर्य्यायः,—व्याघ्रादनी, कुटरणा, निःसृता, त्रिवृता, अरुणा (र.), कलिङ्गा, परिपाकिनी (श.)। सा. गुणाः—कटुरुष्णा कृमिश्लेष्मोदरार्त्तिकुष्ठकण्डूव्रणघ्नी विरेचने प्रशस्ता च। रा.नि.व.६। अरुणागुणाः—स्वादुः कषाया मृदुः रेचनी रूक्षा कटुका पित्तकफापहा च। राज.। च.द.चिरज्व.चि.। कृष्णागुणाः—श्वेतायाः हीनगुणा विरेचनी तीव्रा मूर्च्छादाहमदभ्रान्तिकण्ठोत्कर्षकारिणी च। श्वेतागुणाः—विरेचनी स्वादुः उष्णा वातला रूक्षा पित्तज्वरश्लेष्मपित्तशोफोदरघ्नी च। भा.। रेचनी अर्थात् विपक्कम्

विपक्कं वा मलादि द्रवतां नयेत् रेचयति च। शार्ङ्ग.। एषा रक्तमूलैव ग्राह्या। सु. सू. ३८·३९ अ.। सि·यो·च.द·र.पि.चि·। त्रिवृतामोदके।

**त्रिवृत्पत्रम्।** क्ली। वटपत्रे। रस·र·। वह्नि-भल्लातके।

**त्रिवृत्पर्णी।** स्त्री। हिलमोचिकायां। श·च·।

**त्रिवृत्(ताख्य)स्नेहः।** पुं। तैलवसारूपे स्नेह-द्रव्ये। भा.।

**त्रिवृत्तिका।** स्त्री। त्रिवृति। रा.।

**त्रिवृन्तः।** पुं। पलाशवृक्षे। वै.निघ.।

**त्रिवेणी।** स्त्री। चातकपक्षिणि। के.। गङ्गया यमुनासरस्वत्योर्धियोगस्थानरूपे तीर्थे।

**त्रिवेला (ली)।** स्त्री। त्रिवृतायां। তেউড়ী। रा.नि·व.६।

**त्रिशङ्कुः।** पुं। चातकपक्षिणि। त्रिका.। सुगन्ध मार्ज्जारे। গন্ধগকুল। वै. निघ.। विड़ाले। शलभे। मे.। खद्योते। श.मा.। [ निघ.।

**त्रिशतपत्रम्।** क्ली। पुण्डरीके। পদ্ম। वै.

**त्रिशर्करा।** स्त्री। गुड़ोत्पन्ना हिमोत्था मधुरा चेति मिलितशर्करायाम्। "गुड़ोत्पन्ना हिमोत्पन्ना मधुरा चेति मिश्रिता, त्रिशर्करा।" रा.नि.व.२२।

**त्रिशाखपत्रः।** पुं। विल्ववृक्षे। रा.नि·व.११।

**त्रिशिखः।** पुं। विल्ववृक्षे। रा.नि.व.११। क्ली। त्रिशूले। किरीटे। है.। [ व. ७।

**त्रिशिखिदला।** स्त्री। मालाकन्दे। रा. नि.

**त्रिशिराः (स्)।** पुं। ज्वरे। भाग.।

**त्रिशिरा।** स्त्री। पाठायाम्। रा.नि.व.६।

**त्रिशूली** (इन्)। पुं। पारदे। रस.र.उन्मा.चि. चण्डभैरवरसे।

**त्रिशृङ्गी** (इन्)। पु। रोहितमत्स्ये। রুই মাছ। शब्दकल्पतरुः।

**त्रिसन्धिः।** स्त्री। पुष्पवृक्षविशेषे। কৃষ্ণ কেলি। स तसान्व। क त्रिमाङ्ग। त पर्य्यायः.—साध्य कुसुमा सन्धिवल्ली, सदाफला, त्रिसन्ध्याकुसुमा, कान्ता, सुकुमारा, सन्धिजा। यस्य कुसुमानि सन्धिकाले एव विकसन्ति। सा रक्तसितासित-कुसुमभेदात् त्रिधा। परन्तु गुणैस्तुल्या। गुणाः—कफकासहरा रुच्या त्वग्दोषघ्नी च। रा.नि.व.१०।

**त्रिसन्धिपुष्पदा।** स्त्री। त्रिसन्धिवृक्षे। वै.निघ.।

**त्रिसन्धी।** स्त्री। शुक्लत्रिसन्धी। वै.निघ.।

**त्रिसन्ध्यम्।** क्ली। त्रिसन्धिपुष्पे।

**त्रिसन्ध्यकुसुमा।** स्त्री। त्रिसन्धिपुष्पवृक्षे। रा. नि.व.१०।

**त्रिसन्ध्या।** स्त्री। त्रिसन्धिपुष्पवृक्षे। वै.निघ.।

**त्रिसमम्।** क्ली। समभागा हरीतकी शुण्ठी गुडूची च। रा.नि·व.२२। गुणाः—"समत्रयं रुचिकरं चतुथ्यं मलशोधनम्। वातं पित्तं नाश-यति॥" वै.निघ.।

**त्रिसरः।** पुं। तिलौदने। वै.निघ.। हे·च.।

**त्रिसरा।** स्त्री। कृसरायाम्। "तिलतण्डुल-माषैश्च कृसरा त्रिसरेति।" प.प्र.३ख.।

**त्रिसरी।** पुं। यस्याश्वस्य सर्व्वाङ्गं भिन्नवर्णं केवलं शिरः कृष्णं स त्रिसरी। "अन्यवर्णस्य वाहस्य शिरः कृष्णं यदा भवेत्। त्रिसरी नाम स प्रोक्तः भर्त्तुः कुलविनाशनः॥" ज.द.३अ.।

**त्रिसवनम्।** क्ली। त्रिसन्ध्यस्नाने। च.शा.५अ.।

**त्रिसिता।** स्त्री। त्रिशर्करायां। रा.नि.व.२२।

**त्रिसुगन्धम् (न्धि)।** क्ली। मिलितसमभाग-त्वगेलापत्रेषु। रा.नि.व.२२। च.द.वासाखण्ड-कुष्माण्डे। गुणाः—"तदर्कं मुखदुर्गन्धच्छेदनो मल-भेदनः।" अर्कः।

**त्रिसूत्रः (स्कन्धः)।** त्रि। हेतुलिङ्गौषधज्ञान-रूपे (आयुर्व्वेदे)। त्रीणि हेत्वादीनि सूत्राणि यस्मिन्। त्रयो हेत्वादयः स्कन्धरूपा यस्य इति। च.सू.१अ.।

**त्रिस्रोताः (स्)।** स्त्री। गङ्गायाम्। तिस्तेति-ख्याते नदीभेदे। मे.।

**त्रिहिमम्।** क्ली। श्वेतरक्तहरिचन्दनेतिख्याते चन्दनत्रये।

**त्रिक्षारम्।** क्ली। क्षारत्रये। रा. नि. व. २२। समयवक्षारसर्जिक्षारटङ्कणक्षारेषु। कामाग्निसन्दी-पनरसे। च.द.।

**त्रिक्षुरः।** पुं। श्वेतकोकिलाक्षवृक्षे। শ্বেত কুলেখাড়া গাছ। र.मा.।

**त्रिक्षुरी।** स्त्री। गोक्षुरे। वै·निघ·२भ.र.पि·चि· कुष्माण्डावलेहे।



**त्रुटिः (टी)।** स्त्री। सूक्ष्मैलायाम्। ছোট এলাচ। रा. नि. व. ६। वा·सू·१५अ.मुस्तादिः। "कुष्ठं त्रुटी हैमवती।" चि. क्र. क. अर्शो. चि.। च. द. रा. य. चि. लवङ्गाद्यचूर्णे। "त्रुटिसकृष्णा।" कट्फले। वै.निघ.।

**त्रुटिवीजः।** पुं। कच्वीवृक्षे। কচু গাছ। श. मा.।

**त्रुटीद्वयम्।** क्ली। सूक्ष्मैलायां स्थूलैलायाञ्च। वा. सू. १५ अ. शिरोविरेचने। "त्र्यटी पृथ्वीका शोधयन्त्युत्तमाङ्गम्।"

**त्रैकटु।** क्ली। त्रिकटुके। चि· क्र· क· स्त्री· चि. मक्कल्लशूले।

**त्रैफलम्।** क्ली। त्रिफलायाम्। श·चि·।

**त्रैलोक्यचिन्तामणिरसः।** पुं। ज्वराधिकारे रसः। पारदः हीरकं स्वर्णं रौप्यं ताम्रं लौहम् अभ्रं मुक्ता गन्धकः शङ्खभस्म प्रवालं हरितालं मनः शिला प्र· समभागं चित्रकमूलक्वाथेन ७ दिनानि भावयेत्। अर्कनिर्यासेन (আকন্দের আঠা) निर्गुण्डीरसेन श्रीलरसेन स्नुहीक्षीरेण (মনসার আঠা) च· प्र· ३ दिनानि भावयित्वा पीतकपर्द्द काभ्यन्तरे दत्त्वा अर्कक्षीरेण टङ्कनं सम्मर्द्य तेन कपर्द्दकमुखानि संलिप्य अथ कपर्द्दकानि भाण्ड-मध्ये संस्थाप्य भाण्डमुखं रुद्ध्वा वालुकायन्त्रेण पचेत्। शीते सञ्चूर्ण्य चूर्णतुल्यं रससिन्दूरं तत्-चतुर्थांशं वैक्रान्तञ्च सम्मिश्र्य शिग्रुरसेन ७ चित्रक-मूलरसेन च भावनाद्वयं देयम्। मात्रा ४ र.। भैष.।

**त्रैलोक्यडम्बररसः।** पुं। नवज्वरे हितः। पारदः गन्धकः ताम्रं पिप्पली नैपालं कटुकी हरीतकी त्रिवृत् मधुरतिन्दुकफलं, एषां प्र· सम भागं स्नुहीक्षीरेण मर्द्दयेत्। मात्रा २ गुञ्जा। अनुपानं मधु। अन्यः—रसः २ भ· गन्धकः ४ भ. अभ्र-चित्रक·विड़ङ्ग-गुडूचीसार-शोषक-कृष्णजीरक-त्रिकटुसैन्धवयवक्षाराणां प्र· १ भ· निर्गुण्डीवीजपूर-रसेन मर्दयेत्। मात्रा ३ र.। घृतेन देयः। अन्यः वातव्याधौ—हीरकभस्म स्वर्णं विषं शुद्धमुक्ता कान्तलौहं, एषां प्र. १ तो· अभ्रभस्म ४ तो· रस-सिन्दूरं ४ तो· कुमारीरसेन मर्द्दः। र·सा·सं.।

**त्रैलोक्यविजया।** स्त्री। शक्राशनवृक्षे। সিদ্ধি গাছ। श·च·।

**त्रैलोक्यविजयापत्रम्।** क्ली। विजयापत्रे। সিদ্ধি। (मदनमोदके, लक्ष्मीविलासरसे)।

**त्रैलोक्यसुन्दररसः।** पुं। उदररोगे रसः। पारदः १ तो· गन्धकः २ तो अभ्रं सैन्धवं विषं कृष्णजीरकं विड़ङ्गं गुडूचीसारः वचा यवक्षारः प्रत्येकं ॥० तो· निर्गुण्डीरसेन वीजपूररसेन च दिनं मर्दयित्वा शोषयेत्। मात्रा २ गुञ्जा। घृतेन सेव्यः। रस·चि.९अ.। अन्यः—रसः १ मा गन्धकः २ मा. कज्जलीकृत्य कुटजतालमूलीधुस्तूरकेशराज-(কেশুতে) हस्तिघोषक-(ধুন্দুল) जयन्तीमण्डूक-पर्णीणां (থুলকুড়ি) प्र· शाणमितपत्ररसेन खल्ल-येत्। र.सा.सं.।

**त्रैष्टुभः।** पुं। सोमलताभेदे। सु·चि·२९अ.। See सोमः।

**त्रोटकः।** पुं। सर्पप्रकृतिकीटविशेषे। See कीटः। सु·कल्प.८अ.।

**त्रोटिः (टी)।** स्त्री। पक्षिचञ्चौ। कट्फले। पक्षिणि। मत्स्यभेदे। मे.।

**त्रोटिहस्तः।** पुं। पक्षिणि। श·।

**त्र्यञ्जनम्।** क्ली। कालाञ्जन पुष्पाञ्जन·रसा-ञ्जनाख्ये अञ्जनत्रितये।। স্তুমাত্রয়। रा· नि. व. २२।

**त्र्यप्सम्।** क्ली। घनेतरदधनि। अ.टी.।

**त्र्यम्बकम्।** क्ली। ताम्रे। তামা। रा. नि. व. १३। [ व. ११।

**त्र्यम्बकफलः।** पुं। नारिकेलवृक्षे। रा· नि.

**त्र्यष्टकम्।** क्ली। प्रसाधनार्थं जलरक्षणाधार-विशेषे। सु·सू·४५अ.। पुं। राजिकायाम्। শ্বেত সরিষা। रस.र·सू.चि.।

**त्र्यस्रः।** पुं। त्रिपुटक्षुपे। মটর গাছ। र.मा.। व्याघ्रनखे। নখীবিশেষ। रा·नि·व·१२। स्त्री। शुक्लत्रिवृति। वै. निघ.। वार्षिकमल्लिकायाम्। मल्लिका। रा·नि·व·१०।

**त्र्यस्रफला।** स्त्री। शल्लकीवृक्षे। वै.निघ.।

**त्र्याहिकः।** पुं। ज्वरविशेषे। यो ज्वरः तृतीये दिने भवति। "तृतीयेऽह्नि तृतीयकः" इति। मा.नि.। [ वै.निघ.।

**त्र्यक्षफलः (ला)।** पुं, स्त्री। नारिकेलवृक्षे।

**त्यू्सर:।** पुं। नागवीटे। त्रिका.।

**त्याहिकज्वर:।** पुं। तृतीयऽह्निभवे ज्वरे। अप. स्मृ.।

**त्र्यु(त्र्यू)ष(ण)म्।** क्ली। त्रिकटुनि। शुँठ पिप्पुल मरिच। रा.नि.व.२२। "पिप्पली शृङ्गवेरञ्च मरिचं त्र्यूषणं विदु:।" प.प्र.३ख.।

**त्र्यूषणाद्यघृतम्।** क्ली। यष्ट्याख्यं घृतम्। गव्यघृतं ८ प.। कल्कार्थे—त्रिकटुत्रिफलामिलितं पलं गुड़पलं जलं ३२ प.। "त्र्यूषणत्रिफलाकल्के बिल्वमात्रे गुड़ात् पले। सर्पिषोऽष्टपलं पक्त्वा मात्रां मन्दानिल: पिबेत्॥" च.चि.१९अ.। अन्यत्कासे— "त्र्यूषणं त्रिफलां द्राक्षां काश्मर्याणि परूषकम्। द्वे पाठे सरलं व्याघ्रीं स्वगुप्तां चित्रकं शटीं। ब्राह्मीं तामलकीं मेदां काकनासां शतावरीं। त्रिकण्टकां विदारीञ्च पिष्ट्वा कर्षसमं घृतात्। प्रस्थं चतुर्गुणक्षीरं सिद्धं कासहरं पिबेत्॥" कल्कार्थे—त्रिकट्वादीनां प्र. २तो. दुग्धं १६श. घृतं ४ श.। च.चि.२२अ.।

**त्र्यूषणाद्यमण्डूरम्।** क्ली। पाण्डुरोगे हितं। त्रिकटु त्रिफला मुस्ता विड़ङ्गं चवी (चइ). चित्रकमूलं दारुहरिद्रा गुड़त्वक् स्वर्णमाक्षी पिप्पलीमूलं देवदारु, एषां प्र. चूर्णं २ प. चूर्णसमष्टिद्विगुणं शुद्धमण्डूरं गोमूत्रं मण्डूरात् ८ गुणम्। गोमूत्रे मण्डूरं पक्त्वा घनीभूते चूर्णप्रक्षेपो देय:। भैष.।

**त्र्यूषणाद्यलौहम्।** क्ली। स्थौल्याधिकारे। त्रिकटु त्रिफला चव्यं काचलवणं (कर्कच्) सैन्धवलवणं विट्लवणं सौवर्चललवणम् (सचल) अभ्रं सोमराजो लौहभस्म, एषां प्र. समभाग:। रस.र.।

**त्र्यूषणम्।** क्ली। त्र्यूषणे। वै.निघ.।

**त्वक्।** स्त्री। वल्कले। छाल। मे.। इन्द्रियविशेषे। स्पर्शेन्द्रिये। गुड़त्वचि। दारुचिनि। रा.नि.व.६। तालीशपत्रे। वै.निघ.। चर्मणि। चामड़ा। यथा—"क्षीरस्य पच्यमानस्य यथा सन्तानिका भवेत्। पच्यमानस्य शुक्रस्य रजसश्च तथा त्वच:। पूर्व्वावभासिनी तासां सिध्मस्थानञ्च सा स्मृता॥ शरीरे षट् त्वच:—तद्यथा—उदकधरा असृग्धरा सिध्मकिलाससम्भवाधिष्ठाना कुष्ठसम्भवाधिष्ठाना अलजी-विद्रधिसम्भवाधिष्ठाना यस्यां छिन्नायां ताम्यत्यन्ध इव च तम: प्रविशतीयां चाप्यधिष्ठाय अरूंषि जायन्ते पर्व्वसन्धिषु कृष्णरक्तानि स्थूलमूलानि दुश्चिकित्स्यतमानीति षट् त्वच: एता: षड़ङ्गं शरीरमवतत्य तिष्ठन्ति।" च.शा.७अ.। सुश्रुतस्तु सप्त त्वच आह। १ अवभासिनी २ लोहिता ३ श्वेता ४ ताम्रा ५ वेदिनी ६ रोहिणी ७ मांसधरा चेति। तत्र १मा सर्व्ववर्णानवभासयति, व्रीहे: अष्टादशभागप्रमाणा सिध्मपद्मकाधिष्ठाना। २या व्रीहे: षोड़शभागप्रमाणा तिलकालकन्यच्छव्यङ्गाधिष्ठाना। ३या द्वादशभागप्रमाणा चर्म्मदलाधिष्ठाना। ४र्थी अष्टभागप्रमाणा किलासकुष्ठाद्यधिष्ठाना। ५मी पञ्चभागप्रमाणा कुष्ठविसर्पाधिष्ठाना। ६ष्ठी व्रीहिप्रमाणा ग्रन्थ्याद्यधिष्ठाना। ७मी व्रीहिद्वयप्रमाणा भगन्दरविद्रध्यधिष्ठाना च। सु.शा.४अ.।

**त्वक्खण्डुर:।** पुं। व्रणे। हारा.।

**त्वक्कन्द:।** पुं। वनशूरणे। बुनो ओल। भैष. यक्ष्म.चि.। [र.मा.।

**त्वक्छद:।** पुं। क्षीरीशवृक्षे। क्षीरकञ्चुकी।

**त्वक्तरङ्ग: (क:)।** पुं। वल्याम्। रा.नि.व.१८। चर्म्मकीले। वै.निघ.।

**त्वक्पञ्चकम्।** क्ली। न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलेषु। रा.नि.व.२२।

**त्वक्पत्रम्।** क्ली। दारुचिनीविशेषे। कलमि दारुचिनि। तेजपत्रे। मे.। पुं। हिङ्गुवृक्षे। वै निघ.।

**त्वक्पत्री।** स्त्री। हिङ्गुपत्र्याम्। हिङ्गुवृक्षे। तमालपत्रे। वै.निघ.। कारव्याम्। कृष्णजीरा। मे.।

**त्वक्पाक:।** पुं। शूकरोगे। तल्लक्षणं यथा— "पित्तरक्तकृतो ज्ञेय: त्वक्पाको ज्वरदाहवान्।" सु.नि.१४अ.।

**त्वक्पुष्पम्।** क्ली। रोमाञ्चे। त्रिका.। किलासे। छुली। हे.च.।

**त्वक्पुष्पिका।** स्त्री। शिम्ब्याम्। शिम्। श्वित्रकुष्ठे। किलासे। धवल, छुली। त्रिका.।

**त्वक्पुष्पी।** स्त्री। श्वित्ररोगे। किलासे। धवल, छुली। जटा.।

**त्वक्शून्यता।** स्त्री। स्पर्शाज्ञतायाम्। "स्पृश्यमाना त्वचा या तु शीतोष्णं मृदु कर्कशं। न जानाति बुधैस्त्वक्ता शून्येति परिकीर्त्यते॥" निदा.।



**त्वक्सार:।** पुं। शणक्षुपे। शणगाछ। रा.नि.व.४। रक्तवंशे। रा.नि.व.७। वंशलोचनायाम्। वंशलोचन। गुड़त्वचि। सु.सू.४४अ.। वंशे। अम.।

**त्वक्सारनिर्यासविषम्।** क्ली। स्थावरविषभेदे। यस्य त्वक्सार: निर्यासश्च विषम्। तानि सप्त यथा—अन्त्रपाचककर्त्तरीयसौरीयककरघाटकरम्भनन्दनवराटकानीति। "त्वक्सारनिर्यासविषैरुपयुक्तैर्भवन्ति हि। आस्यदौर्गन्ध्यपारुष्यशिरोरुक्कफसंस्रवा:॥" सु.कल्प.२अ.।

**त्वक्सारभेदिनी।** स्त्री। क्षुद्रचुञ्चुक्षुपे। रा.नि.व.४।

**त्वक्सारा।** स्त्री। वंशरोचनायाम्। रा.नि.व.६.।

**त्वक्सुगन्ध:।** पुं। नागरङ्गवृक्षे। नाराङ्गा लेबुर गाछ। भा.। लवङ्गे।

**त्वक्सुगन्धा (न्धिका)।** स्त्री। सूक्ष्मैलायाम्। एलबालुके। वै.निघ.। जटा.। [निघ.।

**त्वक्स्वादी।** स्त्री। त्वक्सारे। दारुचिनि। वै.

**त्वक्स्वाप:।** पुं। स्पर्शाज्ञतायाम्। निदा.।

**त्वक्क्षीरम्।** क्ली। तवक्षीरे, वंशलोचनायाम्। वै.निघ.२भ.कास.चि.।

**त्वक्क्षीरी।** स्त्री। क्षीरशुक्लायां, वंशरोचनायाम्। रा.नि.व.६।

**त्वग:।** पुं। गुड़त्वचि।

**त्वगङ्कुर:।** पुं। रोमाञ्चे। त्रिका.।

**त्वगाक्षीरा (री)।** स्त्री। वंशलोचनायाम्। जटा.। अम.।

**त्वगूर्म्मि:।** स्त्री। वल्याम्। मांसलोलतायाम्। रा.नि.व.१८।

**त्वग्गन्ध:।** पुं। नागरङ्गवृक्षे। नारेङ्गा। रा.नि.व.११।

**त्वग्जम्।** क्ली। रक्तधातौ। रक्त। केशे, रोम्नि। रा.नि.व.१८।

**त्वग्दोष:।** पुं। चर्म्मरोगे, शीतपित्तोदर्द्दकुष्ठकोठादौ। चर्म्म रोग, कोठादि। निदा.।

**त्वग्दोषापहा।** स्त्री। सोमराज्याम्। रा.नि.व.४।

**त्वग्दोषारि:।** पुं। हस्तिकन्दे। रा.नि.व.७।

**त्वग्ध्वंसी।** स्त्री। वंशत्वचि।

**त्वग्भी।** स्त्री। चर्म्मचटके। चाम्‌चिकि। वै.निघ.।

**त्वग्भेद:।** पुं। व्रणे। वै.निघ.।

**त्वचम्।** क्ली। गुड़त्वचि। दारुचिनि। गुणा: —गुरु शीतं कफकासघ्नं शुक्रामशमनं कण्ठशोधनञ्च। रा.नि.व.६। सि,यो,र,पि.चि,खण्डखाद्यलौहे।

**त्वचा।** स्त्री। मिष्टवल्कले। दारुचिनि। चर्म्मणि। वल्कले। श.र.।

**त्वचाङ्ग:।** पुं। नागरङ्गवृक्षे। रा.नि.व.११।

**त्वचापत्र:।** पुं। हिङ्गुवृक्षे। क्ली। त्वचायाम्। दारुचिनि। श.र.।

**त्वचिसार:।** पुं। वंशे। मद.व.७।

**त्वचिसुगन्धा।** स्त्री। क्षुद्रैलायाम्। हारा.।

**त्वच्यगण:।** पुं। त्वक्प्रसाधनवर्गे तैलादौ। यथा—"तैलन्तु नवधा प्रोक्तं वाकुची चक्रमर्दकं। स्नौहियं पर्पटी स्वक्ता त्वच्योऽयं गण उच्यते॥" अर्क.।

**त्वरारोह:।** पुं। पारावते। वै.निघ.।

**त्वरितका।** स्त्री, पुं (क:)। शीघ्रपाकिशालिधान्यभेदे।। सु.सू.४६अ.।

**त्वष्ट(ष्ट्र)म्।** क्ली। ताम्रे। वै.निघ.। त्रि.। तनूकृते। चाँचाछोला। अ.।

**त्वष्टा (ष्ट्री)।** स्त्री। ब्राह्मीशाके। वै.निघ.।

**त्वाचम्।** क्ली। त्वक्तैले। दारुचिनिर तेल। गुणा:—"वह्निमान्द्यानिलहरमाध्मानाक्षेपनाशनम्। वात्युत्क्लेशप्रशमनं संग्राहि दशनार्तिभित्। त्वाचं तैलं रज:स्रावि तीव्रं क्षिप्रं निसर्ज्जति।" अत्रि.।

## थ ।

**थः** । पुं । पर्व्वते । मे. । रोगविशेषे । भचणे । श.र. ।

**थुत्कारः** । पुं । निष्ठीवनत्यागानुकरणशब्द ।

**थुथुक्कृत्** । पुं । पक्षिविशेषे । धूतुलि पाखी । वै.निघ. ।

**थोड़नम्** । क्ली । आच्छादने । २.निघ. ।

**थौनेयकः** । पुं । ग्रन्थिपर्णे । गाँटियाला । च. चि.३अ, अणुतैले । च.द.विष.चि. ।

## द ।

**दः** । पुं । दन्ते ।

**दंशः** । पुं । दन्ते । हे च. । मक्षिकाविशेषे । डाँश । अम. । शोभाञ्जनवृक्षे । मद्दिषे । सर्पक्षते । मर्म्मणि । विश्व. । त्रिका. । वै.निघ. । दंशने । मे. ।

**दंशकः** । पुं । कर्कटे । कुक्कुरे । वै. निघ. । मक्षिकायाम् । डाँश । हारा. । तत्पर्य्यायः,—वनमक्षिका (अ.), गोमक्षिका, अरण्यमक्षिका, भम्भरालिका (शब्दर.), पांशुरः, दंशकः (हा.), दुष्टमुखः, क्रूरः, क्षुद्रिका (रा.), भङ्गारी, भम्भरालिका (त्रि.) ।

**दंशनम्** । क्ली । दन्तेन कर्त्तने । कामड़ान । हे.च. । वर्म्मणि ।

**दंशनाशिनी** । स्त्री । तैलकीटे । वै.निघ. ।

**दंशभीरु: (रुः)** । पुं, स्त्री । मत्कुणे । मद्दिषे । त्रिका ।

**दंशमूलः** । पुं । शिग्रुवृक्षे । सजिना गाछ । रा.नि.व.७ ।

**दंशवदनः** । पुं । कङ्कपक्षिणि । वै.निघ.

**दंशिका** । स्त्री । वनमक्षिकाविशेषे । डाँश माछी, रोँयानी । वै.निघ. ।

**दंशी** (इन्) । पुं, स्त्री । कुक्कुरे । वै.निघ. । वनमक्षिकायाम् । क्षुद्रदंशे । रोँयानी । अम. ।

**दंष्ट्रः** । पुं । शूकरे । प.मु. ।

**दंष्ट्रकम्** । क्ली । सर्पदंशविशेषे ।

**दंष्ट्रा** । स्त्री । दृढ़दन्ते । दाड़ा । हे.च. । विषदन्ते । वै.निघ. ।

**दंष्ट्रायुधः (ष्ट्रास्त्रः)** । पुं । वनशूकरे । वै. निघ. ।

**दंष्ट्रिका** । स्त्री । दाढ़िकायाम् । हे.च. ।

**दंष्ट्री** (इन्) । पुं, स्त्री । वन्यशूकरे । अम. । सर्पे । श.र. ।

**दकम्** । क्ली । जले । त्रिका. । वा.चि.१अ. ।

**दकलावणिकः** । पुं । यूषविशेषे । "नातिमांसास्तनुरसा दकलावणिकाः स्मृता." । अन्यच्च "अल्पमांसपटुस्नेहा दकलावणिकाः स्मृताः ।" वा.टी.१अ.अरुणः ।

**दकोदरम्** । क्ली । उदररोगभेदे । जलोदरी । "यः स्नेहपीतोऽप्यनुवासितो वा वान्तो विरिक्तोऽप्यथवा निरूढ़ः । पिबेज्जलं शीतलमाशु तस्य स्रोतांसि दुष्यन्ति हि तद्वहानि । स्नेहोपलिप्तेष्वथवापि तेषु दकोदरं पूर्व्ववदभ्युपैति । स्निग्ध महत् सम्परिवृत्तनाभि भृशोन्नतं पूर्णमिवाम्बुना च । यथा दृतिः क्षुभ्यति कम्पते च शब्दायते चापि दकोदर तत् ।" सु.नि.७अ. । [ अ. ।

**दग्धम्** । क्ली । कतृणे । र. । त्रि. । भस्मीकृते ।

**दग्धकः** । पुं । महाशतावर्य्याम् । रा.नि.व.४ ।

**दग्धकाकः** । पुं । डोमकाके । ডোম কাক । हे.च. ।



**दग्धभूमिजशालिः** । पुं । दग्धक्षेत्रजशालौ । गुणाः—"दग्धायामवनौ जाताः शालयो लघुपाकिनः । किञ्चित्सतिक्ता मधुराः पाचना बलवर्द्धनाः ॥" रा.नि.व.१६ । "दग्धग्रामाचले जाताः शालयो लघुपाकिनः । सुपथ्या बद्धविण्मूत्रा रूक्षाः श्लेष्मापकर्षिणः ॥" अत्रि.१५अ. ।

**दग्धमत्स्यः** । पुं । अग्निदग्धमीने । পোড়া মাছ । तस्य विवरणम् । "पलाशैर्वेष्टितो मत्स्य कर्द्दमेन च लेपितः । दग्धोऽङ्गारे सलवणो दग्धमत्स्यः प्रकीर्त्तितः ॥" वैद्यकम् । गुणाः—"दग्धमत्स्यो गुरुर्वृष्यो वृंहणः प्राणवर्द्धनः । क्षीणशुक्राश्च ये केचित् भग्नजर्ज्जरिताश्च ये । नित्यं स्त्रीसेविनो ये च क्षीणतेजस एव च । दग्धमत्स्यो हितस्तेषां सतैललवणान्वितः । तस्माद्धीनगुणः किञ्चिद्भ्रष्टमत्स्य उदाहृतः ॥" राज. । [ रा नि.व.१० ।

**दग्धरुहः** । पुं । तिलकक्षुपे । তিল গাছ ।

**दग्धरुहा** । स्त्री । दग्धावृक्षे । हिं कुरुही । रा.नि.व.९ । [ वै.निघ. ।

**दग्धवर्णकः** । पुं । रोहिषतृणे । রামকর্পূর ।

**दग्धहीरम्** । क्ली । वैक्रान्तमणौ । भैष.ज्व. पानीयभक्तवट्याम् ।

**दग्धा** । स्त्री । कुरुही इति कोङ्कणे प्रसिद्ध वृक्षविशेषे । तत्पर्य्यायः,—दग्धरुहा, दग्धिका, स्थलेरुहा, रोमशा, कर्कशदला, भस्मरोहा, सुदग्धिका । गुणाः—कषाया उष्णा वातकफघ्नी अग्निदीपनी पित्तकोपनी च । रा नि.व.९ ।

**दग्धान्नम्** । क्ली । दग्धभक्ते । পোড়া ভাত । तत्पर्य्यायः,—भिस्सिटा, भिस्सिटा, भिस्सिका (अ. टी.सा.) भिस्सटा । अ. ।

**दग्धास्यः (स्याह्वः)** । पुं । कुमरिचक्षुपे । লঙ্কামরিচ গাছ । प.मु. । "दग्धास्यः स्यात् तीक्ष्णपत्रः क्षुपद्रुः कुमरीचकः ॥" द्रव्याभि. ।

**दग्धाह्वः** । पुं । तिलकपुष्पवृक्षे । वै.निघ. ।

**दग्धिका** । स्त्री । दग्धायाम् । कुरुहीति कोङ्कणे । रा.नि.व.९ । दग्धान्ने । धरा वा আঁকা ভাত । चाँचौति केचित् । भ. ।

**दग्धेष्टका** । स्त्री । अग्निदग्धेष्टकायाम् । পাকা ইট, ঝামা । हारा. ।

**दच्छदः** । पुं । ओष्ठे । ঠোঁট ।

**दण्डः** । पुं । चतुर्हस्तमाने । षष्टिपलमिते काले । अश्वे । यष्टिकायाम् । লাঠী, ছড়ি ।

**दण्डकः** । पुं । वातव्याधिविशेषे । तल्लक्षणं—"पाणिपादशिरःपृष्ठश्रोणिस्तम्भातिमारुतः । दण्डवत् स्तब्धगात्रस्य दण्डकः सोऽनुपक्रमः ॥" भा. । शरे । सु.कल्प,७अ. । वा.उ.५ अ. ।

**दण्डकन्दः (कः)** । पुं । धरणीकन्दे । रा.नि. व.७ ।

**दण्डकाकः** । पुं । स्वनामख्यातकाके । দাঁড়কাক । हे.च. ।

**दण्डधारणम्** । क्ली । यष्टिधारणे । गुणाः—"शुनः सरीसृपव्यालविषाणिभ्यो भयापहं । श्रमस्खलनदोषघ्नं स्थविरे च प्रशस्यते । सत्वोत्साहबलस्थैर्य्यधैर्य्यवीर्य्यविवर्द्धनं । अवष्टम्भकरश्चापि भयघ्नम् ॥" सु.चि.२४अ । स्खलतः सम्प्रतिष्ठानम् अवष्टम्भनं शत्रुवारणं भयघ्नमायुष्यञ्च । राज. ।

**दण्डपातः (ती)** (इन्) । पुं । सन्निपातज्वरविशेषे । लक्षणं—"नक्तं दिवा न निद्रामुपैति गृह्णाति मूढ़धीर्नभसः । उत्थाय दण्डपाती भ्रमातुरः सर्व्वतो भ्रमति ॥" भा.म.१भ. ।

**दण्डपालः** । पुं । अर्द्धशफरमत्स्यविशेषे । ডান্‌কোণা মাছ । हारा. ।

**दण्डपालकः** । पुं । दण्डमत्स्ये । ডানকোণা মাছ । शकुलमत्स्ये । শউল মাছ । हारा. ।

**दण्डपाली** । स्त्री । तुलायन्त्रे । দাঁড়িপাল্লা । च.सू.१५अ. ।

**दण्डबालाधः** । पुं । हस्तिनि । श.र. ।

**दण्डमत्स्यः** । पुं । स्वनामख्यातमत्स्ये । দাঁড়িকা মাছ । हिं दण्डारी । गुणाः—"दण्डमत्स्यो रसे तिक्तः पित्तरक्तकफं हरेत् । वातसाधारणः प्रोक्तः शुक्रलो बलवर्द्धनः ॥" भा. । कफवायुपित्तघ्नः तिक्तः लघुश्च । राज.३प. ।

**दण्डमातङ्गः** । पुं । तगरे, पिण्डीतगरे । वै.निघ. ।

**दण्डयामः** । पुं । दिवसे । वै.निघ. । यामे । मे. ।

**दण्डरी** । स्त्री । डङ्गरीफले । रा. ।

**दण्डवालधिः** । पुं । हस्तिनि । शब्दर. ।

**दण्डवृक्षः (कः)** । पुं । स्नुहीवृक्षे । সিজু গাছ । रा.नि.व.८ ।

**दण्डहस्तः (स्ती)** (इन्)। पुं। तगरपुष्पे। টগর ফুল। रा. नि. व. १०।२३। पिण्डीतगरे। তগরপাদুকা। वै.निघ.।

**दण्डा।** स्त्री। नागबलायाम्। वै.निघ.।

**दण्डापतानकः।** पुं। वातव्याधिभेदे। लक्षणम्—"कफान्वितो यदा वायुर्धमनीष्वेव तिष्ठति। स दण्डवत्स्तम्भयति कृच्छ्रो दण्डापतानकः॥" सु.नि.१अ.।

**दण्डारः।** पुं। मत्तहस्तिनि। मे.।

**दण्डालुः।** पुं। स्वनामख्यातालुविशेषे। খাম আলু। प.मु.। "ताम्बूलपत्री दण्डालुर्गन्धालुः सोमवल्कलः।" इति द्रव्याभिधानम्।

**दण्डाहतम्।** क्ली। पादजलेन त्रिभागदधिकृते तक्रे। रा.नि.व.१५।

**दण्डिकः।** पुं। दण्डमत्स्ये। ডানকোণা মাছ।

**दण्डिका।** स्त्री। श्योणाकवृक्षे। वै.निघ.।

**दण्डी** (इन्)। पुं। दमनकक्षुपे। দনা। रा.नि.व.१०।

**दण्डोत्पलम्।** क्ली। वृक्षविशेषे। দণ্ডকলস, ডানকুনি, ডানপোলা। हिं डानिकुनुहे। मं सहदेवी। तच्च पीतश्वेतरक्तपुष्पभेदेन त्रिधा भवति। र.मा.। पीतपुष्पस्य पर्य्यायाः,—गोवन्दनी (र.), देवसहा (त्रि.), गन्धवल्ली, सहदेवी, सहा (र.)। रक्तस्य पर्य्यायाः—विश्वदेवा। श्वेतस्य पर्य्यायः,—दण्डोत्पला। गुणाः—श्वासकासक्षयघ्नम् अग्निदीप्तिकरञ्च। राज.।

**दण्डोत्पला।** स्त्री। पीतपुष्पदण्डोत्पले। ডানপোলা, ডানকুনী। र.मा.। भैष.अ.पि.चि.वृहत् क्षुधावतीगुटिकाम्। "दण्डोत्पलाया मूलानि।" सा.कौ.दूर्व्वाद्यतैले। वै.निघ.अजी.चि.भल्लातकलेहे।

**दत्।** पुं। दन्ते। श.च.।

**दलम्।** क्ली। स्वर्णे। वेदनि.।

**दद्रुः (कः)।** पुं। क्षुद्रकुष्ठभेदे। দাদ। लक्षणं यथा—"सकण्डूरागपिडकं दद्रुमण्डलमुन्नतम्।" मा.नि.। (कः) कच्छपे। श.र.।

**दद्रु(द्रू)घ्नः।** पुं। चक्रमर्द्दक्षुपे। চাকন্দা গাছ। रा.नि.व.४। भा कुष्ठ.चि.।

**दद्रुघ्नपत्रम्।** क्ली। दद्रुमर्द्दपत्रे। श.चि.।

**दद्रु(द्रू)णः।** त्रि। दद्रुरोगिणि। अम.। अ.टी.र.।

**दद्रुनाशिनी।** स्त्री। वृक्षविशेषे। দাদমর্দ্দনী। तैलिनीकीटे। रा.नि.व.१९।

**दद्रुमर्दी** (इन्)। पुं। (Cassia alata.) दद्रुघ्नवृक्षविशेषे। দাদমর্দ্দনী ওষধিবিশেষ। हिं दादमर्दन। तें श्रिमअविसि। उत् जादुमारि। ता.सिमइअगति। "अगदो दद्रुमर्दी स्यात् कीटारिश्चाङ्गसुन्दरः।" इति क्वचित्तन्त्रम्।

**दद्रुरोगी** (इन्)। त्रि। दद्रुरोगयुक्ते।

**दद्रुहनः।** पुं। चक्रमर्द्दवृक्षे। भै.।

**दद्रूः।** पुं। दद्रुरोगे। अ.टी.भ.।

**दधि।** क्ली। श्रीवासे। সরল নির্যাস। वसने। श.र.। कपित्थे। वै.निघ.। दुग्धविकारे। দই। हिं दही। मं दहिं। कं मोसरु। तत्पर्य्यायः,—क्षीरजं, मङ्गल्यं, विरलं (रा.), पयस्यं, घनेतर, दधिद्रप्सं (अ.)। तद्भेदाः—मन्दकदधि मधुरदधि मधुराम्लदधि अम्लदधि अत्यम्लदधि चेति। "आदौ मन्दं ततः स्वादु स्वाद्वम्लञ्च ततः परं। अम्लं चतुर्थमत्यम्लं पञ्चमं दधि पञ्चधा॥" तत्स्वरूप-गुणाः—"मन्दं दुग्धं यदव्यक्तरसं किञ्चिद्घनं भवेत्। मन्दं स्यात् सृष्टविण्मूत्रं दोषत्रयविदाहकृत्। यत् सम्यक् घनतां यातं व्यक्तस्वादुरसं भवेत्। अव्यक्ताम्लरसं तत्तु स्वादु विज्ञेयदाहृतम्। स्वादु स्यादत्यभिष्यन्दि वृष्यं मेदः-कफापहं। वातघ्नं मधुरं पाके रक्तपित्तप्रसादनं। स्वाद्वम्लं सान्द्रमधुरं कषायानुरसं भवेत्। स्वाद्वम्लस्य गुणा ज्ञेयाः सामान्यदधिवज्जनैः। यत्तिरोहितमाधुर्य्यं व्यक्ताम्लत्वं तदम्लकम्। अम्लन्तु दीपनं पित्तरक्तश्लेष्मविवर्द्धनं। तदत्यम्लं दन्तरोमहर्षकण्ठादिदाहकृत्। अत्यम्लं दीपनं रक्तवातपित्तकरं परम्॥" इति। निःसार-दुग्धदधिगुणाः—"असारं दधि संग्राहि शीतलं वातलं गुरु। विष्टम्भि दीपनं रुच्यं ग्रहणीरोग-नाशनम्। दधि पक्व दुग्धभवं रुच्यं स्निग्ध गुणोत्तमं। पित्तानिलापहं सर्व्वधात्वग्निबलवर्द्धनम्। सशर्करं दधि श्रेष्ठं तृष्णा-पित्तास्र-दाहजित्। सगुड़ं वातनुद्वृष्यं वृंहणं तर्पणं गुरु॥" भा.पू.२ भ.द.व.। भा.। "न नक्तं दधि भुञ्जीत न चाप्यधिकशर्करं (अघृतशर्करम्)। नामुद्गसूपं नाक्षौद्रं नोष्ण नामलकैर्विना।" इति। रात्रि-दधिसेवननिषेधविधौ। भा.पू.२भ.। चर.। सु.।



"पीनसे चातिसारे च शीतके विषमज्वरे। अरुचौ मूत्रकृच्छ्रे च कार्श्ये च दधि शस्यते। रक्तपित्त-विकारेषु कफोत्थेषु न तद्धितं। ज्वरासृक्पित्त-वीसर्पकुष्ठपाण्ड्वामयान् क्रमात्। प्राप्नुयात् काम-लाञ्चाग्नि विधिं हित्वा दधिप्रियः॥" राज.३प.। दधिविशेषगुणाः स्वस्वपर्य्यायेषु मृग्याः। सुजाता-त्यम्लमन्दजातभेदेन त्रिधेति शिवदासकृतभेदाः। सा. गुणाः—अम्लविपाकं संग्राहि गुरु उष्णगुणं वातघ्नं शुक्रमेदोबलश्लेष्मपित्तरक्ताग्निवर्द्धकं मुख-रोचकं शोथकरम् अरुचिघ्नं विषमज्वरमूत्रकृच्छ्र-पीनसघ्नञ्च। मन्दकम् अनभिव्यक्ताम्लं दधि, मलमूत्रनिःसारकं विदग्धपाकं त्रिदोषवर्द्धकञ्च। मधुरदधि कफकरं बलकरं मेदोवर्द्धकञ्च। तृतीयं दधिसामान्यगुणम्। चतुर्थमाग्नेयं पित्तरक्तकफ-वर्द्धकञ्च। पञ्चमं दन्तहर्षरोमाञ्चकण्ठदाहकरञ्च। वा सू.५अ.। शारददधिगुणाः—"शारदं दधि गुर्व्वम्लं रक्तपित्तविवर्द्धनं। शोफतृष्णाज्वरार्त्तानां करोति विषमज्वरम्।" हैमन्तदधिगुणाः—"गुरु स्निग्धं सुमधुरं कफकृद्बलवर्द्धनं। वृष्य मेध्यञ्च हैमन्तं पुष्टिदं तुष्टिवृद्धिदम्॥" वसन्तदधिगुणाः—वातलं मधुरं स्निग्धं किञ्चिदम्ल कफात्मकं। बलकृद्वीर्य्यकृत्प्रोक्तं वसन्ते न प्रशस्यते॥" ग्रीष्मदधि-गुणाः—"लघु चाम्ल भवेद्ग्रीष्मे चात्युष्णं रक्त पित्तकृत्। शोषभ्रमपिपासाकृत् दधि प्रोक्तं न ग्रैष्मिके॥" तथा—"दध्यम्लं गुरु वातदोषशमनं संग्राहि मूत्रावहं बल्यं शोफकरञ्च रुच्यशमनं वक्त्रस्य शान्तिप्रदं। कासे श्वास अपीनसेषु विषमे शीतज्वरे स्याद्धितं रक्तोद्रेककरं करोति सततं शुक्रस्य वृद्धिं पराम्॥" रा.नि.व.१५। स्वादु हृद्यं रोचनं माङ्गल्यञ्च। राज.। दधिसरः। দয়ের মাথা। "दध्नस्तूपरि यो भागो घनः स्नेहसमन्वितः। स लोके सर इत्युक्तः......। सरः स्वादु-र्गुरुर्वृष्यो वातवह्निप्रणाशनः। साम्लो वस्तिप्रशमनः पित्तश्लेष्मविवर्द्धनः॥" भा.। दधि नवधा गव्यादि भेदेन—अग्निमान्द्यकरं कास-श्वास-शीतज्वरेषु हितञ्च। लवणमरिचघृतशर्करामुद्गामलकपुष्परस हीनं न नित्यमश्नीयात्। तथा शरदि वसन्ते ग्रीष्मे रात्रौ कफविकारे पित्तदोषे च नाद्यात्। इति दधिवर्ज्जस्थानम्। त्रिकटुयुतं सर्षपचूर्णमिश्रं दधि कफघ्नं वातघ्नमग्निदीपनञ्च। तुहिनशिशिरकाले चातिपथ्यं देहदार्ढ्यं कान्तिञ्च करोति। इति संयोगदधिसेवनकालः। "दधि मधुरमीषदम्लं मधुराम्लं वा हितं न चात्युष्णं। यावद्यावन्मधुरं दोषहरं तावदुक्तमिदम्।" रा.नि.व.१५।

**दधिकः।** पुं। श्रीवेष्टकवृक्षे। সরল, শালাই। हिं शालाइ। ज.द.१२अ.। क्ली। दधिमिश्रित-भक्ते। भा.।

**दधिकूर्चिका।** स्त्री। दध्ना सह पक्वे पयसि। ছানা। र.मा.। "दध्ना सह पयः पक्वं सा भवेद्दधिकूर्चिका।" प.प्र.२ख.। अत्र दधि दुग्धं समानं भाव्यम्। गुणाः—"वातघ्नी ग्राहिणी रुच्या दुर्जरा दधिकूर्चिका।" राज.।

**दधिक्रा (न्) [क्रावान्]।** पुं। घोटके। कै.।

**दधिचारः।** पुं। दधिमन्थनदण्डे। हारा.।

**दधिजम्।** क्ली। दध्नि। नवनीते। रा.नि. व.१५।

**दधिजलम्।** क्ली। मस्तुनि। দয়ের মাৎ। रा.नि.व.१५।

**दधित्थः।** पुं। कपित्थवृक्षे। र.मा.। च.सू. ३अ.। क्ली। कपित्थफले। ज.द.१२अ.। सि.यो. तृड्दाह-चि.। च.द.विदार्य्यादिलेपे ॥ "दधित्थं बीजपूरकम्।"

**दधित्थाख्यः (ह्वः)।** पुं। धूपविशेषे, सरल-द्रवे। लोवान् इति लोके। र.मा.।

**दधिद्रप्सम्।** क्ली। घनेतरदधनि। कै.।

**दधिनाम (कम्)।** क्ली। कपित्थफले। কয়েৎ বেল। सि.यो.हिक्काश्वास चि.। "काशीशं दधिनाम च।" पुं (मा)। कपित्थवृक्षे। च.द.।

**दधिपुष्पिका (ष्पी)।** स्त्री। कटभीवृक्षे। कटुन्नाम्। रा.नि.व.२३। श्वेतापराजितायाम्। रा नि.व.३। शुकशिम्ब्याम्। আলাকুশী। वै. निघ.। तन्नामकफलशाकविशेषे। চিচিঙ্গা, ঝোঁপা। हिं कुहिरो। मं गोड़ीकुहिली। कं काकण्डोला, कुगरी। गुणाः—कटुः मधुरा शीतला सन्तापपित्तघ्नी वातकरी गुरुः अरोचघ्नी च। रा.नि.व.७। बीजगुणाः—गुरु हृद्यं रुच्यं मलस्तम्भकं कफाग्निमान्द्यकरणं वातपित्तहरञ्च। वै.निघ.। । वै.निघ.।

**दधिपूपः (कः)।** पुं। दधिवटके। দয়ের বড়া।

**दधिफलः।** पुं। कपित्थवृक्षे। रा.नि.व.११।

**दधिभवम्।** क्ली। नवनीते। ননি। वै.निघ.।

**दधिमण्डः (स्तु)**। पुं, क्ली। दधिजले। দধির মাৎ। र.मा.। गुणाः—"मस्तु क्लमहरम्बल्यं लघु भक्ताभिलाषकृत्। स्रोतोविशोधनं ह्लादि कफतृष्णानिलापहं। अवृष्यम्प्रीणनं शीघ्रम्भिनत्ति मलसञ्चयम्॥" भा.। "उष्णाम्लं रुचिपक्तिदं क्लमहरं बल्यं कषायं सरं भुक्तिच्छेदकरं तृषोदरगदप्लीहार्शसां नाशनं। स्रोतःशुद्धिकरं कफानिलहरं विष्टम्भशूलापहं पाण्डुश्वासविकारगुल्मशमनं मस्तु प्रशस्तं लघु॥" रा.नि.व.१५।

**दधिमण्डातकम्**। क्ली। दधिमस्तुनि। च.चि. १८अ. पञ्चकोलघृते। [ वै.निघ.।

**दधिमण्डोद्भवम्**। क्ली। नवनीते। ননি।

**दधिमुखः**। पुं। वानरभेदे। दर्व्वीकरजातीयसर्पविशेषे।

**दधिशर्करम्**। क्ली। क्षीरसञ्जातदधनि। চিনিপাতা দই।

**दधिलेहः**। पुं। दधिसरे। দয়ের সর, বা মাথা। र.मा।

**दधिवटी**। स्त्री। औषधवटिकाविशेषे। ইটের গুঁড়া, হরিদ্রার গুঁড়া, ও ঝুলের দ্বারা পারা, এবং ভীমরাজরসে গন্ধক শোধন করিবে। ঐ পারা ১ তো. ঐ গন্ধক ১ তো. ইহার কজ্জলি; হরিতাল, বিষ, তুঁতে, এলবালুক, অভ্র, খাপর, স্বর্ণমাক্ষীক ও কান্তলোহ প্রত্যেক ॥০ তো. নিসিন্দা, লতাফট্কী, অপরাজিতা, জয়ন্তী ও চিতার মূল, ইহাদের রসে ভাবনা। বটী সরিষা। भैष.। कज्जलिः २ तो. हरितालं, विषं, तुत्थम्, एलबालुकम्, अभ्रकं, खर्परं स्वर्णमाक्षिकं लौहं एषां प्रति ॥० तो.। निर्गुण्डीजयन्तीज्योतिष्मतीचित्रकरसेन क्वाथेन वा भावयेत्।

**दधिवास्तुका**। स्त्री। गोदन्तहरिताले। दुरालभाभेदे। वै.निघ.।

**दधिशोणः**। पुं। शुक्लवानरे। दर्व्वीकरसर्पविशेषे। सु.कल्प.४अ.। See सर्पः। गोलाङ्गूलवानरे। মুখ পোড়া। त्रिका.।

**दधिसक्तवः**। पुं (बहु)। दध्युपसिक्तसक्तुषु। দইমাথা ছাতু বা রসালা। अम.।

**दधिसक्तुः**। पुं। रसालायाम्। प.मु.।

**दधिसरः**। पुं। दध्यग्रभागे। দধির সর। वै.निघ.। See दधि।

**दधिसारम्**। क्ली। नवनीते। हं.च.।

**दधिस्नेहः**। पुं। दध्नः स्नेहभागे, दधिसरे। त्रिका.। तत्पर्य्यायः,—दधिसरः (रा.), सरः, दध्युत्तरगम्, कट्वरम् (र.)।

**दधिस्वद्रा**। स्त्री। लवणखोट्याम्। श.चि.। See तैलपर्णी।

**दधिस्वेदः**। पुं। तक्रे। ঘোল। जटा.।

**दधीचा(च्य)स्थि**। क्ली। हीरके। त्रिका.।

**दधग्रम्**। क्ली। दधिसरे। वै.निघ.।

**दध्याङ्गः**। पुं। सरलद्रवे। त्रिका.।

**दध्यानी**। स्त्री। कटुक्यां। कट्की। वै.निघ.।

**दध्याली**। स्त्री। सुदर्शनालतायाम्। দয়েথয়ে, উন্নতিপুয়তি। हिं मदनमस्तु। र.मा.।

**दध्याह्वः**। पुं। कपित्थवृक्षे। वै.निघ.।

**दधाह्वयः**। पुं। सरलद्रवे। গোবান্। रा.।

**दध्युत्तर(क)म्**। क्ली। दधिसारे। र.मा.। सु.सू.४३अ.।

**दन्तः**। पुं। तरुप्रकाण्डे। रा.नि.व.२। कुञ्जे। मे.। शैलशृङ्गे। त्रि.। चर्व्वणसाधनास्थनि दशने। দাঁত। तत्पर्य्यायः,—रदनः, दशनः, रदः (अ.), द्विजः, खरुः (शब्दर.), द्विजन्मा, खादनः (हे.)। स च शिशोः षष्ठे मासि जायते। सुखबोधः।

**दन्तकः**। पुं। पर्व्वतशृङ्गे। नागदन्ते।

**दन्तकड़मड़िः**। पुं। तन्नामकबालरोगे। यत्र बालकः निद्रितोऽपि दन्तशब्दं करोति। रस.र. बाल.चि.।

**दन्तकरालः**। पुं। दन्तरोगभेदे। "करालः सुकुमाराणां दशनानां समुद्भवः।" वा.उ.२१अ.।

**दन्तकर्षणः**। पुं। निम्बूवृक्षे। লেবুগাছ। श.र.।

**दन्तकाष्ठः**। पुं। अर्कवृक्षे। खदिरवृक्षे। अर्ज्जुनवृक्षे। करञ्जवृक्षे। वै.निघ.। विकङ्कतवृक्षे। বঁইচী গাছ। रा. नि. व. ९। क्ली। दन्तधावनकाष्ठे। দাঁতন কাঠি। तच्च द्वादशाङ्गुलं कनिष्ठाङ्गुलिस्थूलम् ऋजु अग्रन्थि कीटाद्यक्षतं ग्राह्यम्। तदुक्तं—"द्वादशाङ्गुलमायतम्। कनिष्ठिकापरीणाहमृज्वग्रथितमव्रणम्। निम्बखदिरयष्टिमधुकरञ्जभवम् ऋतुवीर्य्यरसदोषविशेषेषु प्रशस्तम्। अवेक्ष्यर्त्तुञ्च दोषञ्च रसं वीर्य्यञ्च योजयेत्।" सु.चि.२४अ.। "कषायं मधुरं तिक्तं कटुकम्प्रातरुत्थितः। निम्बश्च तिक्तके श्रेष्ठः कषाये खादिरस्तथा। मधूको मधुरे श्रेष्ठः करञ्जः कटुके तथा।" च.सू.५अ.। "केऽप्यत्र करवीरासनकरञ्जवकुलासनान्। दन्तकाष्ठार्थमन्ये तु सर्व्वान् कण्टकिनोऽभ्यधुः। गुवाकतालहिन्तालखर्ज्जूरैः केतकीयुतैः। नारिकेलेन ताड्या च न कुर्य्याद्दन्तधावनम्। अर्दिती कर्णशूली च दन्तरोगी नवज्वरी। शोथी कासी च मूर्च्छार्त्तो दन्तकाष्ठं विवर्ज्जयेत्।" राज.१प.।



**दन्तकाष्ठकम्**। क्ली। आहुल्यक्षुपे। रा.नि. व.४। दन्तधावनकाष्ठे। [ वै.निघ.।

**दन्तकेतुः**। पुं। लघुनिम्बवृक्षे। লেবুর গাছ।

**दन्तघर्षणम्**। क्ली। दन्तमार्ज्जने। দাঁতমাজা।

**दन्तघातः**। पुं। निम्बूवृक्षे। शिशोर्दन्तकड़मड़िरोगे। वै.निघ.।

**दन्तचालः (नः)**। पुं। दन्तरोगविशेषे। দাঁত নড়া। "चालश्चलद्भिर्दशनैः भक्षणादधिकव्यथैः।" वा.उ.२१अ.।

**दन्तच्छदः**। पुं। ओष्ठे। हला.।

**दन्तच्छदा**। स्त्री। मधुरबिम्ब्याम्। बिम्ब्याम्। কুন্দুরু। তেলাকুচা। वै.निघ.।

**दन्तच्छदोपमा**। स्त्री। कुन्दुरौ। बिम्ब्याम्। रा.नि.व.७।

**दन्तध(धा,प)वनम्**। क्ली। दन्तमार्ज्जने। দাঁত মাজা বা দাঁতন করা। दन्तधावनकाष्ठे। দাঁতন কাঠি। दन्तधावनविधिः—"प्रातर्भुक्त्वा च मृद्वग्र कषायकटुतिक्तकम्। भक्षयेद्दन्तपवनं दन्तमांसान्यबाधयन्। केऽप्यत्र करवीराम्रकरञ्जवकुलासनान्। दन्तकाष्ठार्थमन्ये तु सर्व्वान् कण्टकिनोऽभ्यधुः। निषिद्धं यथा—गुवाकतालहिन्तालखर्ज्जूरैः केतकीयुतैः। नारिकेलेन ताड्या च न कुर्य्याद्दन्तधावनम्॥ इति। दन्तधावने दिक्—"मृत्युः स्याद्दक्षिणास्येन पश्चिमास्येन चामयः। पूर्व्वास्येनोत्तरास्येन सम्पदो दन्तधावनात्॥" इति। दन्तकाष्ठव्यवहारे निषिद्धजनाः यथा—"अर्दिती कर्णशूली च दन्तरोगी नवज्वरी। शोथी कासी च मूर्च्छार्त्तो दन्तकाष्ठं विवर्जयेत्॥" इति। राज.१प.।

**दन्तधावनः**। पुं। खदिरवृक्षे। ज.द.१२अ.। रा.नि.व.८। गुच्छकरञ्जे। रा.नि.व.९। वकुलवृक्षे। श.च.।

**दन्तनाड़ी**। स्त्री। दन्तमूलगतनाड़ीनामरोगे। দন্তনালী। सा पञ्चविधा वातपित्तकफसन्निपातागन्तुजनिमित्ता। "दन्तमूलगता नाड्यः पञ्च ज्ञेया यथेरिताः।" भा.म.४भ.मु.रो.चि.।

**दन्तपत्रकम्**। क्ली। कुन्दपुष्पे। श.च.।

**दन्तपातनयन्त्रम्**। क्ली। दन्तोत्पाटनयन्त्रे। দাঁততোলা সাঁড়াশি। "शरपुङ्खमुखं यन्त्रं दन्तपातनमुच्यते।" अत्रि.।

**दन्तपाली**। स्त्री। शिशोर्दन्तरोगे। वा.उ.२अ.।

**दन्तपीठकम्**। क्ली। दन्तवेष्टे। দাঁতের মাড়ি। ज.द.२अ.।

**दन्तपुप्पुटः (कः)**। पुं। दन्तरोगविशेषे। দাঁতের মাড়ি ফোলা বা দাঁতের গোড়া ফোলা। "दन्तयोस्त्रिषु वाप्यत्र श्वयथुर्जायते महान्। दन्तपुप्पुटको नाम स व्याधिः कफरक्तजः।" भा.म.४भ.मु.रो.चि.। "दन्तयोस्त्रिषु वा यस्य श्वयथुः सरुजो महान्। दन्तपुप्पुटको ज्ञेयः कफमारुतपित्तजः।" सु.। "दन्तयोस्त्रिषु वा शोफो बदरास्थिनिभो घनः। कफास्रात्तीव्ररुक् शीघ्रं पच्यते दन्तपुप्पुटः॥" वा.उ.२१अ.।

**दन्तपुष्पः**। पुं। अश्वत्थवृक्षे। वै.निघ.। क्ली। कतकफले। श.च.।

**दन्त(न्ता)फलः**। पुं। पिप्पल्याम्। "दन्तफलस्तु पिप्पल्याम्।" रा.नि.व.२३। क्ली। कतकफले। নির্ম্মাল্য ফল। श.च.।

**दन्त(न्ता)फला**। स्त्री। पिप्पल्याम्। रा.नि.व.६। अश्वत्थिकावृक्षे। वै.निघ.।

**दन्तभागः**। पुं। हस्त्यग्रभागे। अम.।

**दन्तभेदः**। पुं। दन्तरोगविशेषे। लक्षणम्—"दन्तभेदे द्विजास्तोदभेदरुक्स्फुटनान्विताः।" वा.उ.२अ.।

**दन्तमलम्**। क्ली। दशनमले। দাঁতের ময়লা বা পাথুরি। हारा.।

**दन्तमांसम्**। क्ली। दन्तवेष्टे। দাঁতের মাড়ি।

**दन्तमूलम्।** क्ली। दन्तार्ब्बुदरोगे। रा. नि. व. २०। दन्तवेष्टे।

**दन्तमूलिका।** क्ली। दन्तीवृक्षे। श.र.।

**दन्तरञ्जनम्।** क्ली। काशीषे। হিরেকস্। र.सा.सं.।

**दन्तरोगः।** पुं। दन्तगतमुखरोगे। स अष्टविधः। यथा—दालनः क्रिमिदन्तः भञ्जनकः दन्तहर्षः दन्तविद्रधिः दन्तशर्करा कपालिका श्यावदन्तकश्चेति। भा.। दन्तविद्रधिमगणय्य हनुमोक्षमाह। सु.नि.१६अ.। अष्टस्य दन्तगतरोगे। ज.द. २९अ.। See मुखरोगः।

**दन्तरोगो (इन्)।** त्रि। दन्तरोगयुक्ते।

**दन्तलेखनम्।** क्ली। अस्त्रविशेषे। দাঁতের পাথুরি ছোলা। यथा—"एकधारं चतुष्कोणं प्रबद्धाकृति चैककतः। दन्तलेखनकं तेन शोधयेद्दन्तशर्कराम्॥" भावि.।

**दन्तवलः।** पुं। हस्तिनि। वै.निघ.।

**दन्तवस्त्रम् (वासः)।** क्ली, पुं। ओष्ठे। रा. नि.व.१८।

**दन्तविद्रधिः।** पुं। दन्तवेष्टगतरोगविशेषे। দাঁতের গোড়া ফোলা, দাঁতকড়া। यत्र दन्तवेष्टगतदोषेण स्वर्त्तेन हेतुना बाह्यतो दाहरुजायुक्तः महान् श्वयथुः भिन्नः पूयं स्रवेत् स दन्तविद्रधि.। "दन्तमांसमलैः सास्रैः बाह्यतः श्वयथुर्महान्। सदाहरुक् स्रवेद्भिन्नः पूयास्रं दन्तविद्रधिः॥" भा.म.४भ.मु.रो.चि.।

**दन्तवीजः (कः) (जा)।** पुं, स्त्री। दाड़िम्बवृक्षे। भा.। रा.नि.व.११। (जा) अलाव्वाम्। वै.निघ.।

**दन्तवेष्टः।** पुं। दन्तवेष्टनमांसे, दन्तगाढ़िकायाम्। দাঁতের মাড়ি। दुष्टशोणितजे तन्नामकदन्तवेष्टजरोगे। यदि पूयरुधिरं स्रवेत् दन्ताश्च चला भवन्ति तदा दन्तवेष्ट इत्यभिधीयते। "स्रवन्ति पूयं रुधिरं चला दन्ता भवन्ति च। दन्तवेष्टः स विज्ञेयो दुष्टशोणितसम्भवः॥" भा.म.४भ.मु. रो.चि.।

**दन्तवेष्टजरोगः।** पुं। दन्तवेष्टनमांसगतमुखरोगे। स षोड़शविधः (দাঁতের মাড়ির ১৬ রোগ) यथा—दन्तवेष्टः सौषिरः महासौषिरः परिदरोपकुशौ वैदर्भः खलि(ल्ली)वर्द्धनः (আক্কেল দন্ত) अधिमांसकः करालकः, पञ्च दन्तनाड्यः वातादिभेदेन, शीतादः दन्तपुप्पुट इति। "शीतादो गदितः पूर्व्वं दन्तपुप्पुटकस्तथा। स्युरष्टावोष्ठयोर्दन्तमूले तु दश षट् तथा। दन्तवेष्टः सौषिरश्च महासौषिर एव च। ततः परिदरः प्रोक्तस्ततस्तूपकुशः स्मृतः। वैदर्भश्च ततः प्रोक्तः खलि(ल्ली)वर्द्धन एव च। अधिमांसकनामा च दन्तनाड्यश्च पञ्च च। दन्तविद्रधिरप्यत्र दन्तवेष्टेषु षोड़श॥" भा.म.४भ. मु.रो.चि.। मा.नि.। करालस्थाने दन्तविद्रधिमाह भावमिश्रः। सुश्रुतस्तु करालकं न गणयति। एषां लक्षणानि तत्तत्पर्य्याये मृग्याणि।

**दन्तवैदर्भः।** पुं। दन्तमूलगतमुखरोगे। See वैदर्भः।

**दन्तशङ्कुः।** पुं। तीक्ष्णकण्टकप्रथमयवपत्रमुखे दन्ताहरणार्थं शस्त्रभेदे। "शङ्कुवच्च मुखं तस्य कार्य्यमर्द्धाङ्गुलायतम्। चतुरस्रं समञ्चैव तीक्ष्णधारं समाहितम्। उन्नाय तस्य कर्त्तव्यं शस्त्रं व्रीहिमुखाकृति। कपालिकां शर्कराञ्च दन्तानां तेन शोधयेत्॥" सु.सू.८अ.। सु.टी.ड.।

**दन्तशटः।** पुं। दन्तशठे। अ.टी.भ.।

**दन्तशठः।** पुं। कपित्थवृक्षे। जम्बीरवृक्षे। रा.नि.व.११।२३। चाङ्गेर्य्याम्। आम्रातकवृक्षे। कर्म्मरङ्गवृक्षे। मे। तिन्तिड़ीवृक्षे। वै.निघ.।

**दन्तशठा (ठो)।** स्त्री। चाङ्गेर्य्याम्। আমরুল। रा.नि.व.५। तिन्तिड्याम्। भा.।

**दन्तशब्दः।** पुं। ग्रहजुष्टबालकस्य दन्तपीड़नरोगे। দাঁত কড়মড় রোগ। लक्षणम्—"ऊर्द्ध्वं निरीक्षते दन्तान् खादेत्कूजति जृम्भते।" मा.नि.।

**दन्तशर्करा।** स्त्री। दन्तगतमुखरोगे। দাঁতের পাথুরি। लक्षणं यथा—"मलो दन्तगतो यस्तु पित्तमारुतशोषितः। शर्करेव खरस्पर्शो सा ज्ञेया दन्तशर्करा॥" मा.नि.।

**दन्तशाणम्।** क्ली। दन्तघर्षणे, दन्तनिघृष्यद्रव्ये। মাজন, মিশি। त्रिका.।

**दन्तशिरा।** स्त्री। दन्तवेष्टे। দাঁতের মাড়ি। श.र.।

**दन्तशूलम्।** क्ली। दन्ततोदे। दन्तार्ब्बुदे। দাতের শূলুনি। रा.नि.व.२०।

**दन्तशैथिल्यम्।** क्ली। वातजदन्तरोगविशेषे। দাঁত আল্‌গা। च.सू.२०अ.।



**दन्तशोधनी।** स्त्री। दन्तगतमलनिष्काशनार्थं शलाकाविशेषे। খড়্‌কে।

**दन्तशोफः।** पुं। दन्तार्ब्बुदरोगे। रा.नि.व.२०।

**दन्तहर्षः।** पुं। दन्तगतमुखरोगे। দাঁত শিহরা, টকা। लक्षणं—"शीतरूक्षप्रवाताम्लस्पर्शानामसहा द्विजाः। पित्तमारुतकोपेन दन्तहर्षः स नामतः॥" मा.नि.। "दशनाः शीतमुष्णञ्च सहन्ते स्पर्शनं न च। यस्य तं दन्तहर्षन्तु व्याधिं विद्यात्समीरणात्॥" सु.। "शीतरूक्षप्रवाताम्लस्पर्शानामसहा द्विजाः। तत्र स्युर्वातपित्ताभ्यां दन्तहर्षः स कीर्त्तितः॥" भा.।

**दन्तहर्षकः (णः)।** पुं। जम्बीरवृक्षे। त्रिका.। जटा.।

**दन्ताघातः।** पुं। निम्बूकवृक्षे। গোড়া লেবুর গাছ। रा.नि.व.११।

**दन्तायुधः।** पुं। वन्यशूकरे। त्रिका.।

**दन्तार्ब्बुदः।** पुं, क्ली। दन्तरोगविशेषे। দাঁতের গোড়ার আব্‌। रा.नि.व.२०।

**दन्तालिका।** स्त्री। वल्गायाम्। ঘোড়ার লাগাম। त्रि.।

**दन्तावलः।** पुं। करिणि। अम.।

**दन्तिका (जा)।** स्त्री। दन्तीवृक्षे। अम.। श.र.।

**दन्तिनी।** स्त्री। दन्तीक्षुपे। रा.नि.व.६। वै. निघ. २भ. क्रिमि-चि. चित्रकादितैले। हस्तिन्याम्। মাদী হাতী। रा.।

**दन्तिनीवीजम्।** क्ली। जैपालवीजे। জয়পাল। रा.नि.व.६।

**दन्तिमदः।** पुं। हस्तिमदजले।

**दन्तिला।** स्त्री। नागदन्त्यां। হাতিশুঁড়ে। सु.सू.३७अ.।

**दन्ती (न्)।** पुं। पर्व्वते। कै.। हस्तिनि। अ.।

**दन्ती।** स्त्री। (Baliospermum montanum. Syn. Croton polyandrum.) स्वनामख्यातक्षुद्रक्षुपे। দন্তী গাছ। हिं हकुम्। मं दान्ति। कं दन्ति। तें दन्तिचेट्टु, कोण्डआमदुम्। वम्. जामालगोटा। तत्पर्य्यायः,—निकुम्भः, दन्तिका, प्रत्यक्पर्णी (अ.), उदुम्बरपर्णी (अ.), निकुम्भः (अ.टी.), शीघ्रा, श्येनघण्टा, निकुम्भी, नागस्फोता, दन्तिनी, उपचित्रा, भद्रा, रूक्षा, रेचनी, अनुकूला, निःशल्या, चक्रदन्ती, विशल्या, मधुपुष्पा, एरण्डफला, तरुणी, एरण्डपत्रिका, एरण्डपत्री, घुणरेवती, विशोधनी, कुम्भी, उडुम्बरदला, उदुम्बरदला, घुणप्रिया, मकूलकः। ह्रस्वदीर्घभेदेन दन्ती द्विधा। तयोरेका उदुम्बरदलाकारा, अन्या एरण्डदला। सा, गुणाः—कटूष्णा शूलघ्नी अर्शोव्रणाश्मरीघ्नी दीपनी च। अन्या कटूष्णा रेचनी क्रिमिघ्नी शूलकुष्ठामघ्नी तुदामयघ्नी च। रा.नि.व.६। "दन्तीद्वयं सरं पाके रसे च कटु दीपनं। गुदाङ्कुराश्मशूलास्रकण्डूकुष्ठविदाहनुत्। तीक्ष्णोष्णं हन्ति पित्तास्रकफशोथोदरक्रिमीन्। क्षुद्रदन्तीफलं तु स्यात् मधुरं रसपाकयोः। शीतलं सृष्टविण्मूत्रगरशोथकफापहम्॥" भा.। वा.सू.१५अ. श्यामादिः। "श्यामा दन्ती द्रवन्ती॥" सु.सू.३९अ.। च.सू.२अ.वमने। जैपालवीजे। वै.निघ.२भ.शीतज्व.चि.। "कार्येण दन्तीत्रिवृतोद्भवेन।" वा.व्या.चि.महानाराचरसे। क्वचित् विषगर्भतैले। पुं (इन्)। हस्तिनि। प.मु.।

**दन्तीफलम्।** क्ली। पिप्पल्याम्। दन्तीवीजे। वै.निघ.।

**दन्तीफलसमाकृतिः।** पुं। पिस्तावृक्षे। পেস্তা গাছ। वै.निघ.।

**दन्तीवीजम्।** क्ली। जैपालवीजे। रा.नि.व.६। वै.निघ.२भ.अर्श.चि. महोदधिवट्याम्। वा.व्या. मृतसञ्जीवनीरसे, वातगजकेशरीरसे।

**दन्तीहरीतकीगुड़ः।** पुं। गुल्माधिकारे। पाठः—"जलद्रोणे विपक्तव्यं विंशतिः पञ्च चाभयाः। दन्त्याः पलानि तावन्ति चित्रकस्य तथैव च। तेनाष्टभागशेषेण पचेद्दन्तीसमं गुड़ं। तस्मिंश्च त्रिवृच्चूर्णात्तैलाच्चापि चतुष्पलं। पलार्द्धं कणाशुण्ठ्योः सिद्धे लेहे च शीतले। क्षौद्रं तैलसमं दद्याच्चातुर्जातपलन्तथा। ततो लेहपलं लिह्वा जग्ध्वा चैकां हरीतकीम्॥" पोटलीबद्धहरीतकी २५, दन्तीमूलं २५ प. चित्रकमूलं २५ प. जलं ६० श, शे, ८ श,। पुरातनगुड़स्य २५ प. क्वाथेन गुड़ं गालयित्वा पचेत्। पाके सिद्धे अवतार्य्य स्निग्धे सति त्रिवृच्चूर्णं ४ प. कणाशुण्ठ्योः प्र. पलं तिलतैलं ४ प. प्रक्षेप्यम्। शीते मधु ४ प. गुड़त्वक् एलातेजपत्रनागकेसराणां प्र. २ तो. मिश्रणीयम्। मात्रा २ तो. हरीतकी १० श.। रस.र.।

**दन्तुर:** । त्रि । उच्चदन्ते । नतानते । मे. ।

**दन्तुरच्छद: (त्वक्)** । पुं । मातुलुङ्गवृत्ते । टाबा गाछ । रा.नि.व.११ । [ निघ. ।

**दन्तोज्ज्वला** । स्त्री । श्वेतजातीपुष्पवृक्षे । वै.

**दन्तोद्भेद:** । पुं । बालदन्तोद्गमे । दाँत उठा । "दन्तोद्भेद: शिशो: सर्व्वरोगाणां कारणं स्मृतं । विशेषाज्ज्वरविड्भेदकासच्छर्द्दिशिरोरुजाम् । अभिष्यन्दस्य पोथक्या विसर्पस्य च जायते ॥" भा.म. ख.४भ. ।

**दन्तोलूखलम्** । क्ली । दन्ताधिष्ठानास्थनि । तानि २० । च.शा.७अ. ।

**दन्दश:** । पुं । दन्ते । वै.निघ. ।

**दन्दशू(क:)ल:** । पुं । सर्पे । वै.निघ. ।

**दम:** । पुं । दमनकक्षुपे । वै.निघ. । कर्द्दमे ।

**दमनम्** । क्ली । दमनपुष्पे । दना फूल । सि. यो.च.द.वा.व्या चि.महाराजप्र.तैले । पु । कुन्दपुष्पवृक्षे । कुँदफुलेर गाछ । रा.नि.व.१० । दमनकवृक्षे । त्रिका. । "दमनस्तुवरस्तिक्तो हृद्यो वृष्य: सुगन्धिक: । ग्रहणात् विषकुष्ठास्रक्लेदकण्डूत्रिदोषजित् ॥" भा. ।

**दमनक:** । पुं । (Artemisia Scoparia or A. Indica.) दना इति ख्याते पुष्पक्षुपे । दना गाछ । प.मु. । हिं दवणा । मं दोणा । तत्पर्य्याय:,—पुष्पचामर:, मदनक: (त्रि.), दमन: दान्त:, गन्धोत्कट:, मुनि:, जटिला, मुनिपुत्र:, तपोधन:, दण्डी, पाण्डुराग:, ब्रह्मजटा, पुण्डरीक:, तापसपत्री, पत्री, पवित्रक:, देवशेखर:, कुलपत्र:, विनीत:, तपस्विपत्र: (रा.) । गुणा:—शीतल: तिक्त: कषाय: कटुक: द्वन्द्वदोषत्रिदोषघ्न: विषविस्फोटघ्नश्च । अन्यश्च वन्यदमन: वीर्य्यस्तम्भनकारी बलदायी आमदोषहारी च । रा.नि.व.१० ।

**दमनी** । स्त्री । अग्निदमनीनामक्षुपे । शोला । रा.नि.व.४ । नागदमन्याम् । नागदना । वै.निघ. ।

**दमयन्ती** । स्त्री । भद्रमल्लिकापुष्पवृक्षे । मल्लिका फुलेर गाछ । रा.नि.व.१० । कर्कटिकायाम् । वै.निघ. ।

**दसु(मू)ना: (स्)** । पुं । अग्नौ । शब्दर. ।

**दम्पती** । पुं (द्वि.) । जायापत्यो: । वै.निघ. ।

**दम्भ:** । पुं । अतीसाररोगे दाहकर्म्मविशेषे । "नाभेर्द्व्यङ्गुलकादधोऽर्धशशिवद्दंशास्थिमूले तथा । दाह: प्रज्वलितायसस्य कथितो दम्भो ग्रहण्यातुरे ॥" तन्त्रान्तरम् । कल्कि । शब्दर. । वज्रे । ज. ।

**दम्भफल:** । पुं । सेववृक्षे । सेओ । वै.निघ. ।

**दम्भोर:** । पुं । लावपक्षिणि । (भरु:) महिषे । वै.निघ. ।

**दम्य:** । पुं । षण्डे । वृषे । वै.निघ. ।

**दर:** । पुं । शङ्खे । वै. निघ, २भ, मधुर ज्व, विषमचिकादिकषाये । विषे । वै.निघ. । कान्दरे ।

**दरकण्टिका** । स्त्री । शतावर्य्याम् । रा. नि. व. ४ ।

**दरद्** । पुं । पर्व्वते । मे. । तटभूमौ । सि.कौ. ।

**दरद:** । पुं । वृत्तपत्रशाके । नटे शाक । प. मु. । क्ली । हिङ्गुलधातौ । रा.नि.व.१३ । र.मा. ।

**दरहार:** । पुं । लघुवदरे । छोट कुल ।

**दरिमेद:** । पुं । विट्खदिरवृक्षे ।

**दरी (रि:)** । स्त्री । पर्व्वतगुहायाम् ।

**दर्द्दर:** । पुं । पर्व्वते । मे. । भेके ।

**दर्दराम्र:** । पुं । मीनाम्लीने, व्यञ्जनाविशेषे । श.मा. ।

**दर्दरीक:** । पुं । भेके । मेघे । उणा. ।

**दर्दुर:** । पुं । पुनर्नवायाम् । इन्द्रगोपकीटे । वर्षाभ्वाम् । रा.नि.व.२३ । कृष्णाभ्रे । नीलाभ्रभेदे । रा.नि.व.१३ । र.चि.३अ. । "वलिदर्दुरपूतिलोहतापम् ।" भेके । मेघे । मे. । शालिधान्यभेदे । अयं षष्टिकाङ्गीनगुण: । च.सू.२७अ. ।

**दर्दुरच्छदा** । स्त्री । ब्राह्मीक्षुपे । वै.निघ. ।

**दर्दुरदला** । स्त्री । मण्डूकपर्ण्याम्, सा च ब्राह्मी, ब्रह्मी, वरम्हीति महाराष्ट्रे ख्याता । थूलकुड़ि भेद । भा.म.१भ.चित्तभ्रम.ज्व.चि. । "हन्युश्चित्तरुजोऽथ दर्दुरदला ।"

**दर्दुरपर्णी** । स्त्री । ब्राह्मीक्षुपे । वै.निघ. ।

**दर्द्रु: (द्रू:)** । पुं । लकुचवृक्षे । डेलो गाछ । रा.नि.व.९ । महाकुष्ठभेदे । दाद । मा.नि. । स्त्री । दद्रुरोगे । उणा. ।

**दर्द्रुघ्न:** । पुं । चक्रमर्द्दवृक्षे । चाकन्दा गाछ । श.र. ।



**दद्रुघ्नपत्रम्** । क्ली । पत्रशाकविशेषे । दादमर्द्दिनी । चक्रमर्द्दपत्रे । चाकन्दा पाता । हिं चकवड़ । गुणा:—दोषहरम् अम्लं वातकफघ्नं कण्डूकासक्रिमिश्वासदद्रुकुष्ठघ्नं लघु च । भा.पू.१भ. शा.व. । See दद्रुघ्नी ।

**दद्रु(द्रू)ण:** । त्रि । दद्ररोगिणि । अ.टी.भ. ।

**दद्रु(द्रू)रोगी (इन्)** । त्रि । दद्रुरोगयुक्ते । अ.टी.भ. ।

**दर्प:** । पुं । कस्तूरिकावृक्षे । मे. । उष्माणि । त्रिका. ।

**दर्पणम्** । क्ली, पुं । नेत्रे । जटा. । आदर्शे । आर्शि । तत्पर्य्याय:,—मुकुर:, आदर्श: (अ.), आत्मदर्श:, नन्दर:, दर्शनं, प्रतिविम्बातं (शब्दर.), कर्क:, कर्कर: (ज.) । गुणा:—आयु:श्रीकारित्वं पापशमनत्वञ्च । राज.२प. ।

**दर्पपत्रक:** । पुं । काशतृणे । वै.निघ. ।

**दर्पा** । स्त्री । कस्तूर्य्याम् । वै.निघ. ।

**दर्भ:** । पुं । (Poa cynosuroides. Syn. Eragrostis cynosuroides.) कुशतृणे । कुश तृण । हिं दाभ् । तें दुभ । अम । सु.सू. ३८अ. । (Imperata cylindrica. Syn. Saccharum cylindricum.) उलुके । উলু, থাগড়া । प.मु. । वा.सू.१५अ, वरुणादि: । "वहलपल्लवदर्भरुजाकरा: ।" च.सू.४अ. । काशतृणे । श.र. । "काशा: कुशा वल्वजाश्च तथैवोच्चैस्तीव्ररोमशा: । मौञ्जाश्च शाद्वलाश्चैव षड् दर्भा: प्रकीर्त्तिता: ॥" वायुपु. ।

**दर्भक:** । पुं । अश्वस्य पादरोगविशेषे । लक्षणं —"मण्डूका विवरं यस्य दर्भमुञ्जकरं भवेत् । तस्य दर्भक इत्युक्तो व्याधि: कष्टचिकित्सित: ॥" ज.द.३९अ. ।

**दर्भकुसुम:** । पुं । क्रिमिजातौ । तदाकार क्रिमिजाति । वै.निघ. ।

**दर्भपत्र:** । पुं । काशतृणे । रा.नि.व.८ ।

**दर्भपुष्प:** । पुं । तन्नामकदर्वीकरसर्पविशेषे । राजिमच्छर्पत्रिशेषे । वैकरञ्जजातीयसर्पे । सु.कल्प. ४अ. । See सर्प: । कफजक्रिमिभेदे । च.वि.७अ. ।

**दर्भमूलम्** । क्ली । कुशमूले । उलुमूले । च. द.हृद्रो.चि. ।

**दर्भर:** । पुं । लावपक्षिणि । वै.निघ. ।

**दर्भवटम्** । क्ली । अन्तर्गृहे । त्रिका. ।

**दर्भाशत:** । पुं । पुरच्छदतृणे । উলুখড় । रा. ।

**दर्भाह्वय:** । पुं । मुञ्जतृणे । मुज । रा.नि.व.८ ।

**दर्व्व:** । पुं । हिंस्रप्राणिनि ।

**दर्व्वरीक:** । पुं । वायौ । वाद्यभेदे । सं.सा. ।

**दर्व्वि: (र्व्वी) (क:)** । स्त्री । सर्पफणायाम् । दर्व्विकायाम् । हाता । अम. । श.र. ।

**दर्व्विका** । स्त्री । दर्व्याम् । हाता । अ.टी. रा. । कज्ज्वलभेदे । काजल । तच्च सौवीरजाम्बलतुल्यमयूरश्रीकरदर्विकासित्वनीलभेदेन षट् भवति । तल्लक्षणम् अञ्जनशब्दे द्रष्टव्यम् । पुराणम् । गोजिह्वायाम् । वै.निघ. ।

**दर्व्विपत्रिका** । स्त्री । गोजिह्वायां । दाड़िया शाक । ज.द.१२अ. ।

**दर्वीकर:** । पुं । सर्पजातिविशेषे । फणधर सर्प । लक्षणं यथा—"रथाङ्गलाङ्गलच्छत्रस्वस्तिकाङ्कुशधारिण: । फणिन: शीघ्रगतय: सर्पा दर्व्वीकरा मता: ॥" वा.उ.३६अ. । दर्वीकरभेदा:—कृष्णसर्प महाकृष्णकृष्णोदर-श्वेतकपोतवलाहकमहासर्पशङ्खपाललोहिताक्षगवेधुकपरिसर्पखण्डफणककुदपद्म-महापद्म दर्भपुष्प-दधिमुख-पुण्डरीक-भ्रुकुटीमुखविष्किरपुष्पाभिकीर्ण-गिरिसर्पऋजुसर्प-श्वेतोदरमहाशिरालगर्दाशीविषाश्चेति । दर्वीकरस्य प्रथमे विषवेगे श्याववर्णं दुष्टञ्च रक्तं स्यात् । तथा मुखादौ श्यावता स्यात् । द्वितीये ग्रन्थय:, तृतीये शिरोगुरुत्वादय:, चतुर्थे ष्ठीवनादय:, पञ्चमे सन्धिविश्लेषणं तन्द्रा पर्व्वभेद: दाह: हिक्का च, षष्ठे हृत्पीड़ाद्या:, सप्तमे च शुक्रं प्राप्य स्कन्धादिभङ्ग: सर्व्वचेष्टानिवृत्तिश्च स्यात् । वा.टी.अरुण: ।

**दर्व्वीकृत्** । पुं । सर्पे । शब्दर. ।

**दर्श:** । पुं । अवलोकने । मे. ।

**दर्शत:** । पुं । सूर्य्ये । चन्द्रे । उणा. ।

**दर्शनम्** । क्ली । नेत्रे । रा.नि.व.१८ । दर्पणे । स्वप्ने । मे. ।

**दर्शनी** । स्त्री । तैलकीटके । वै.निघ. ।

**दर्शनीय:** । पुं । अर्कवृक्षे । श्वेतार्के । वै.निघ. ।

**दर्शनोज्ज्वला** । स्त्री । श्वेतजातीवृक्षे । वै. निघ. ।

**दर्शविपत्** । पुं । चन्द्रे । हारा. ।

**दलम्** । क्ली । तेजपत्रे । रा.नि.व.६ । वा.उ.५ अ. । च.द.सि.यो.समशर्करचूर्णे । "शुण्ठीकणामरिचनागदलत्वगेला ।" पत्रे । পাতা । त्रिका. । अर्द्धांशे । लीला. । पुं । गन्धके ।

**दलकोमलम्** । क्ली । पद्मे । वै.निघ. ।

**दलकोषः** । पुं । मल्लिकापुष्पवृक्षे । वै.निघ. । कुन्दपुष्पवृक्षे । श.मा. ।

**दलनिर्म्मोकः** । पुं । भूर्जवृक्षे । श.मा. ।

**दलनी** । स्त्री । लोष्ट्रे । ঢেলা । शब्दर. ।

**दलपः** । पुं । सुवर्णे । उणा. ।

**दलपुष्पा** । स्त्री । केतकीवृक्षे । কেয়া গাছ । रा.नि.व.१० । श्वेतकेतकाम् । শ্বেত কেয়া । वै निघ ।

**दल(अर्द्ध)लाङ्गलकः** । पुं । तदाकारच्छेदविशेषे । य एकस्मिन् पार्श्वे छेदः स दललाङ्गलकाख्यः । वा.उ.२८अ. । "ह्रस्वमेकतरं यत्र सोऽर्द्धलाङ्गलकः स्मृतः ॥" सु.चि.८अ. ।

**दलशालिनी** । स्त्री । कञ्चुकशाके । কচু শাক । वै.निघ. ।

**दलसायसी** । स्त्री । श्वेततुलसीवृक्षे । वै.निघ. ।

**दलसारिणी** । स्त्री । केमुकवृक्षे । কেউ গাছ । र.मा. ।

**दलसूचिः** । पुं । कण्टकवृक्षे । কাঁটা গাছ । कण्टके । কাঁটা । हारा. ।

**दलस्नसा** । स्त्री । पत्रशिरायाम् । পাতার শিরা । हे.च. ।

**दलहीनफला** । स्त्री । सुलेमानीखर्ज्जूर्य्याम् । খেজুর বিশেষ । भा. ।

**दला** । स्त्री । नगवल्ल्याम् । নাগিতা । प.मु. । अजमोदायाम् । রাঁধুনী, বনযমানী । रा.नि.व.६ । [ रा.नि.व.७ । पलाशलोहितापि पठ्यते ।

**दलाग्रलोहिता** । स्त्री । चिल्लीनामपत्रशाके ।

**दलाढ़कः** । पुं । नागकेशरवृक्षे । নাগেশ্বর গাছ । गैरिके । গেরিমাটী । समुद्रफेने । आरण्यतिलकवृक्षे । বন তিল । काके । पृश्निचाकुले । चक्रवाके । मे. । करिकर्णे । कुन्दवृक्षे । शिरीषवृक्षे । हे.च. । कुम्भिकायाम् । ज. ।

**दलाढ़की** । स्त्री । फणिज्झकवृक्षे । वै.निघ. । पृश्निपर्ण्याम् । চাকুলে । मे. ।

**दलाढ्यः (कः)** । पुं । कुन्दपुष्पवृक्षे । वै.निघ. । पङ्ककर्वटे । দল্‌দলিয়া কাদা । त्रिका. ।

**दलामलम्** । क्ली । मूर्व्वायाम् । মূর্গা । मरुवकवृक्षे । মরুয়া । दमनकवृक्षे । দনা । मे. । मदनवृक्षे । ময়না গাছ । श.र. ।

**दलाम्लम्** । क्ली । चुक्रनामपत्रशाके । চুকা শাক । रा.नि.व.७ ।

**दलाह्वम्** । क्ली । तमालपत्रे । তেজপত্র । मद.व.३ ।

**दलिः** । स्त्री, पुं । लोष्ट्रे । ঢেলা । शब्दर. ।

**दलिकम्** । क्ली । काष्ठे । हे.च. ।

**दलितम्** । क्ली । विदले । ডাইল ।

**दलीमृगः** । पुं । विलेशयजन्तौ ।

**दलेगन्धः (न्धिः)** । पुं । सप्तपर्णवृक्षे । ছাতিম্ গাছ । त्रिका. ।

**दवः** । पुं । अग्नौ । अ.टी.नी. । उपतापे । दवथौ, मुखताल्वोष्ठानां दाहे । वै.निघ. । वने । वनाग्नौ । अ. । कन्दरे । ज. ।

**दवदग्धकम्** । क्ली । कत्तृणे । গন্ধতৃণ বা রামকর্পূর । रा.नि.व.८ ।

**दवथुः** । पुं । दवे, चक्षुरादिभ्यस्तीव्रोष्मप्रवृत्तौ । वा.ज्व.चि.१अ. । "उद्रिक्तपित्ते दवथुः ।"

**दवाग्निः** । पुं । दावानले । हि. ।

**दशकम्** । क्ली । प्रसिद्धदशमूले ।

**दशजटा** । स्त्री । दशमूले । वै.निघ.२भ.वा.व्या.चि.रास्नादिचूर्णे ।

**दशनः** । पुं । दन्ते । अ.टी.भ. । कवचे । मे. ।

**दशनवासः** । क्ली । ओष्ठे । अम. ।

**दशनवीजः** । पुं । दाड़िम्बवृक्षे । वै.निघ. ।

**दशनाढ्या** । स्त्री । चाङ्गेर्य्याम् । আমরুল । चुक्रशाके । চুকাপালং । श.च. ।

**दशनोच्छिष्टः** । पुं । निःश्वासे । मे. । अधरचुम्बने । मे. ।

**दशपु(पू)रम्** । क्ली । जलमुस्तायाम्, कैवर्त्तमुस्तके । अम. । अ.टी.भ. ।



**दशमूलकम्** । क्ली । दशविधमूले । हस्तिमहिषीऽश्ववानरमेषाश्वगर्दभनरनारीणां मूत्रे । रा.नि.व.२२ ।

**दशमूलम्** । क्ली । विल्वादिदशविधवृक्षमूले, पञ्चमूलीद्वये वा । "विल्वश्योणाकगाम्भारीपाटलागणिकारिकाः । शालपर्णी पृश्निपर्णी वृहतीद्वयगोक्षुरम् ॥" रा.नि.व.२२ । वर्गोऽयं वातघ्नः । वा. सू. १५अ. भद्रदार्व्वादौ । गुणाः—दशमूलं त्रिदोषघ्नं श्वासकासशिरोरुजः । तन्द्राशोथज्वरानाहपार्श्वपीड़ारुचीर्हरेत् ॥" भा. । "गणः श्वासहरो ह्येष कफपित्तानिलापहः । आमस्य पाचनश्चैव सर्व्वज्वरविनाशनः ।" सुश्रु. । सूतिकारोगहरम् । अर्क. ।

**दशमूलघृतम्** । क्ली । गुल्मे घृतम् । गव्यघृतं ४ श. । क्वाथार्थं—दशमूलं ६४ प. वारि ६४ श. शे. १६ श. । कल्कार्थं—शुण्ठी पिप्पली मरिचं यवक्षारः सैन्धवलवणम्, एषां प्र. २ प. । च.चि.५अ. ।

**दशमूलतैलम्** । क्ली । कर्णरोगे तैलम् । पाठः —"दशमूलीकषायेन तैलप्रस्थं विपाचयेत् । एतत्कल्कं प्रदायैव वाधिर्य्ये परमौषधम् ॥" तिलतैलं ४ श. दशमूलं ४ श. वारि १६ श. शे. ४ श. । क्वाथार्थं—दशमूलं १ श. । च.द. । सा.कौ. । अन्यत् शिरोरोगे—दशमूलं प्र. ६प. करञ्जनिर्गुण्डीजयन्ती-धुस्तूराणां प्र. ६ प. जलं ६४ श. शे. १६ श. । कटुतैलं ४ श. । कल्कार्थं—दशमूलधुस्तूरकरञ्जनिर्गुण्डीजयन्तीनां प्र. ६ तो. । अत्राष्टाङ्गावलेहकल्कमपि ददति वृद्धाः । सा.कौ. ।

**दशरथः** । पुं । शरीरे । वै.निघ. ।

**दशराजौ(न्)** । पुं । चन्द्रे । हे. ।

**दशशतकरदुग्धम्** । क्ली । अर्कक्षीरे । আকন্দ আটা । वै.निघ.२भ.कर्णक.ज्व.चि. ।

**दशशताङ्घ्रिः** । स्त्री । शतावर्य्याम् । শতমূলী । वै.निघ. ।

**दशशाकः** । पुं । त्वक्पत्रमूलफलदण्डाङ्कुरपुष्पकपिकच्छूपर्पटककुमारीषु ।

**दशसारवटी** । स्त्री । वातव्याधौ वटी । "यष्टि धात्री बला द्राक्षा एला चन्दनवालुकं । मधूकपुष्पं खर्ज्जूरं दाड़िमं पेषयेत्समं । सर्व्वतुल्या सिता योज्या पलार्द्धं भक्षयेत्सदा । दशसारवटी ख्याता...... ।" र.सा.सं. ।

**दशा** । स्त्री । बाल्याद्यवस्थायाम्, बाल्ययौवनप्रौढ़वार्द्धक्येषु । अश्मस्य चैत्रफलदशविधकालपरिमाणे । सा च समाहयं सहादशदिन वर्षवयं ज्ञेयम् । "वासराः सप्ततिः द्वौ च वर्षाणाञ्च तथा वयं । दशाप्रमाणं बाह्यानां शालिहोत्रेण कीर्त्तितम् ॥" ज.द.५अ. ।

**दशाकर्षः (र्षिन्)** । पुं । प्रदीपे । हे. ।

**दशाङ्गः** । पुं । दशमूले । के. ।

**दशाङ्गगुग्गुलुः** । पुं । मेदोरोगे । त्रिकटु चित्रकामूलं त्रिफला मुस्ता विड़ङ्गं एषां प्र. चूर्णं १ तो. गुग्गुलुः ८ तो. । भा. ।

**दशाङ्गधूपः** । पुं । दशविधद्रव्यकृतधूपविशेषे । यथा—"पञ्चांशः गन्धपाषाणस्तावान्माहिषगुग्गुलुः । चतुरंशं चन्दनञ्च जटामांसी च तावती । त्रिभागः सार्ज्जकः सारः तावदेव हि बालकं । उशीरन्तु द्विभागं स्याद्घृतम्प्टनखं समम् । कर्पूरी मृगनाभिश्च एकभागौ प्रकीर्त्तितौ ॥" अन्यः—"वचाहिङ्गुविड़ङ्गानि सैन्धवं गजपिप्पली । पाठा प्रतिविषा व्योषं दशाङ्गः कश्यपोदितः ॥" अयं धूपः सर्व्वग्रहजित् । वा.उ.३अ. ।

**दशाङ्गलेपः** । पुं । लेपार्हदशाङ्गयोगविशेषे । "शिरीषमधुयष्टीच तगरं रक्तचन्दनं । एलामांसी निशायुग्मं कुष्टबालकमेवच ॥ इति सञ्चूर्ण्य लेपोऽयं पञ्चमांशघृतप्लुतः । जलेन क्रियते सद्भिर्दशाङ्ग इति संज्ञितः ॥ विसर्पञ्च विषस्फोटान् शोथदुष्टव्रणान् नयेत् ॥" भा. ।

**दशाङ्गुलः** । पुं, क्ली । खर्व्वूजायाम् । খর্মুজা-গাছ । भा. ।

**दशाङ्घ्रिः** । पुं । दशमूले । वा.व्या. महारास्नादौ ।

**दशानिकः** । पुं । दन्तीवृक्षे । श.च. ।

**दशारुहा** । स्त्री । कैवर्त्तमुस्तायां । रा.नि.व.६ । कैवर्त्तिकालतायाम् ।

**दशार्णा** । स्त्री । नदीविशेषे ।

**दशाश्वः** । पुं । चन्द्रे । शब्दर. ।

**दशेन्धनः** । पुं । प्रदीपे । शब्दर. ।

**दशेरः** । पुं । हिंस्रजन्तौ । उ. ।

**दष्टपीड़ितम्** । क्ली । दंशनविशेषे । "दंष्ट्रापदानि चत्वारि तदृष्टनिपीड़ितम् ।" वा.छ.३५अ. ।

**दस्रः।** पुं। अश्विनीकुमारे। गर्द्दभे। मे.। क्ली। तुहिने। उणा.।

**दस्रौ।** पुं (द्वि.)। अश्विनीकुमारौ। अम.।

**दहनः।** पुं। चित्रकवृक्षे। रा.नि.व.६।२३। वा.सू.१५अ.। भल्लातकवृक्षे। रा.नि.व.११। सि.यो.ख.भे.चि.चव्यादिलेहे। "तालीशजीरकतुगादहनैः।" वा.सू.१५अ.वरुणादिः। "दहनमीरटविल्वविषाणिकाः।" च.द.अ.च.चि.। वृश्चिकाल्याम्। विछाती। रा.नि.व.२३। गुग्गुलौ। पक्षिविशेषे। पायरा। रा.नि.व.१९। क्ली। दाहे। अगुरुणि। काञ्जिकभेदे। वै.निघ.। अग्नौ। मे.।

**दहनकेतनः।** पुं। धूमे। हे.च.।

**दहनविटपी।** स्त्री। लाङ्गलिकायाम्। ঈশ-লাঙ্গলা।

**दहनाग(गु)रु।** क्ली। दाहागुरुणि। रा.नि.व.१२।

**दहनारातिः।** पुं। जले। रा.नि.व.१४।

**दहनाश्रयः।** पुं। अग्न्याश्रये। भा.।

**दहनी।** स्त्री। मूर्व्वायां। मूर्गा। रा.नि.व.३।

**दहनोपलः।** पुं। सूर्य्यकान्तमणौ। हे.च.।

**दहरः।** पुं। कुक्कुटे। बालके। मूषिके। मे.।

**दह्रः।** पुं। अग्नौ। दावानले। उ.।

**दक्षः।** पुं। कुक्कुटे। त्रिका.। सि.यो.कास-चि.दशमूलघृते। वृषभेदे। विश्व.। स्त्री (क्षा:) पृथिव्याम्।

**दक्षाण्डम्।** क्ली। कुक्कुटाण्डे। चक्र.।

**दक्षाण्डत्वक्।** स्त्री। कुक्कुटाण्डत्वचि। কুক্ড়ার ডিমের খোলা। भैष.नेत्र चि.। भा.म.४भ.कर्पूरी.चि.। "दक्षाण्डत्वक् च सा।"

**दक्षाय्यः।** पुं। गृध्रे। वै.निघ.।

**दक्षिणः।** पुं। सव्येतरे। ডাইন। हे.।

**दक्षिणदेशजा।** स्त्री। उत्ताकस्तूर्य्याम्। লতা-কস্তুরী। श.चि.।

**दक्षिणवायुः।** पुं। मलयमारुते। দক্ষিণ-বায়ু। गुणाः—"मधुरश्चाविदाही च कषायानुरसो लघुः। दक्षिणो मारुतः श्रेष्ठः चक्षुष्यो बलवर्द्धनः। रक्तपित्तप्रशमनो न च वातप्रकोपनः॥" सु.सू.।

**दक्षिणाचलः।** पुं। मलयपर्व्वते। हे.।

**दक्षिणायनम्।** क्ली। रवेर्दक्षिणस्यां गतौ। यदा रविः कर्कटराश्यवस्थितो भवति तदा तदारभते। तच्च श्रावणादिमासषट्के भवति। "कर्कटावस्थिते भानौ दक्षिणायनमुच्यते।" सु सू.।

**दक्षिणावर्त्तकी।** स्त्री। वृश्चिकाल्यां। বিছাতি গাছ। रा.नि.व.९। मेषशृङ्ग्यां। वै.निघ.।

**दक्षिणावर्त्तफला।** स्त्री। वज्रौषधे। वै.निघ.।

**दक्षिणावर्त्ता।** स्त्री। मेषशृङ्ग्यां। रा.नि.व ६।

**दक्षेयः।** पुं। गृध्रे। वै.निघ.।

**दाड़कः।** पु। दन्ते। शब्दार्थकल्पतरुः।

**दाड़िका।** स्त्री। चिबुके। দাড়ি। हे.।

**दाड़िमः।** पुं। एलायाम्। मे.। (Punica Granatum.) The Pomegranate. स्वनामख्यातफलवृक्षे। দাড়িম গাছ। हिं अनार। मं दाड़िम। कं दाड़िम्ब। तें डानिम्मचेट्टु। उत्. दालिम्ब। ता. मादलइचेट्टिडि। गुर्ज. डालम। तत्पर्य्यायः,—करकः (अ.), पिण्डपुष्पः, दाड़िम्बः, पर्व्वरुट्, स्वाद्वम्लः, पिण्डीरः, फलशाड़वः, शुकवल्लभः (त्रि.), मुखवल्लभः (शब्दमा.), रक्तपुष्पः (र.), डालिमः (अ,टी,भ.), शुकादनः(श.), दाड़िमीसारः, कुट्टिमः, फलसाड़वः, फलषाड़वः, रक्तवीजः, सुफलः, दन्तवीजकः, मधुवीजः, कुचफलः, रोचनः, मणिवीजः, कल्कफलः, वृत्तफलः, सुनीलः, नीलपत्रः, नीलपत्रकः। फलगुणाः—मधुराम्लकषायं कासवातकफपित्तघ्नं ग्राहि दीपनं लघूष्णं शीतलं श्रमघ्नं रुचिकरम्। दाड़िमम् अम्लमधुरभेदेन द्विविधं, तयोः प्रथमं वातकफहारि, द्वितीयं तापहारि लघु पथ्यञ्च। रा.नि.व.११। स्वादुस्वाद्वम्लकेवलाम्लभेदेन त्रिभेदमिच्छति भावप्रकाशः—स्वादु तत्त्रिदोषहरं तृष्णादाहज्वरघ्नं हृत्कण्ठमुखदुर्गन्धघ्नं तर्पणं शुक्रलं लघु कषायानुरसं ग्राहि स्निग्धं मेधाबलावहम्। स्वाद्वम्लं—दीपनं रुच्यं लघु किञ्चित् पित्तकरञ्च। अम्लन्तु—पित्तजनकं वातकफघ्नञ्च। तन्मूलञ्च क्रमिहरम्। भा.। हृद्यम् अम्लं श्वासरुचितृष्णाहरं कण्ठशोधनं पित्तकफविशोधकम्। राज.। "श्रेष्ठं वातादिकरुजहरं दाड़िमस्यामयघ्नम्।" अत्रि.१७अ.। क्ली। दाड़िमफले। सि.यो.छड्.दाहज्व.चि.।



**दाड़िमत्वक्।** स्त्री। दाड़िमफलवल्कले। দাড়িমের খোলা। सि.यो.अ.सा.चि.उत्पलादिः।

**दाड़िमपत्र(पुष्पः)कः।** पुं। रोहितकवृक्षे। রোড়া, রয়না গাছ। रा.नि.व.८।

**दाड़िमप्रियः।** पुं। शुकपक्षिणि। শুক পক্ষী। श.र.।

**दाड़िमभक्षणः।** पुं। शुकपक्षिणि। श.च.।

**दाड़िमाम्बु।** क्ली। दाड़िम्बफलरसे। चक्र.।

**दाड़िमाष्टकम्।** क्ली। ग्रहण्यां हितम्। "कर्षोन्मिता तुगाक्षीरी चातुर्जातं द्विकार्षिकम्। यमानीधान्यकाजाजीग्रन्थिव्योषं पलांशिकं। पलानि दाड़िमादष्टौ सितायाश्चैकतः कृतम्॥" च.द.।

**दाड़िमी।** स्त्री। दाड़िमवृक्षे। वै.निघ.।

**दाड़िमीरसः।** पुं। दाड़िमाम्बुनि। च.द.।

**दाड़िमीविषम्।** क्ली। दारुमोचनामकविषभेदे। দামুর্জ। प.मु.।

**दाड़िमीसारः।** पुं। दाड़िमवृक्षे। रा.नि.व. ११।

**दाड़ि(ड़ी)म्बः।** पुं। दाड़िमवृक्षे। प.मु.।

**दाढ़ा।** स्त्री। दंष्ट्राभेदे। দাড়া। हे.च.।

**दाढ़िका।** स्त्री। दाड़ी इति ख्याते मुखावयवे। हे.च.।

**दात्यूहः।** पुं। शुकपक्षिणि। प.मु.। डहुकपक्षिणि। ডাক পাখী। तत्पर्य्यायः,—कालकण्टकः (अ.), अत्यूहः, दात्यौहः, कालकण्ठः, मासङ्गः, शुक्लकण्टकः, शितिकण्ठः, कचाटुरः, कटाहकः (शब्दर.), काकमद्गुः (त्रि.), डाहुकः (ज.)। गुणाः—वातघ्नः वृष्यः बलदः शुक्रदः श्रमघ्नश्च। अत्रि.२२अ.। चातकपक्षिणि। त्रिका.।

**दात्यौहः।** पुं। जलकाके, दात्यूहे। श.र.।

**दात्रम्।** क्ली। अस्त्रविशेषे। দা।

**दाधिकः।** त्रि। दधिसम्बन्धिनि। क्ली। दधिसंस्कृतभक्ते। भा.म.३भ.अन्नद्र.शू.चि.।

**दानम्।** क्ली। कुङ्कुमे। च.द.वा.व्या.चि.१८प्र-शती.प्रसारणीतैले। गजमदे। मे.। तरुकोटरजमधुनि। কুটুরে মধু। गुणाः—रुच्यं दीपनं कफच्छर्दिमेहघ्नञ्च। राज.।

**दानगन्धिः।** पुं। सप्तपर्णवृक्षे। ছাতিম।

**दानवप्रिया।** स्त्री। नागवल्लीलतायाम्। वै निघ.।

**दान्तः।** पुं। दमनकक्षुपे। দনা গাছ। रा नि.व.१०।

**दामम्।** क्ली, स्त्री। रज्जौ।

**दामनः।** पुं। दमनकवृक्षे। वै.निघ.। क्ली। रज्जौ। स्त्री। (नी) पशुबन्धनरज्जौ। अ.।

**दामबन्धः (नः)।** क्ली। व्रणबन्धनविशेषे। लक्षणं—"दामाकृतिश्चतुष्पादो बन्धः स्याद्दामसञ्ज्ञितः।" इति। सु.सू.१८अ.। दाम अनेकगोबन्धनीरज्जुः। দৌঁকা। तदाकारः चतुष्पादयुक्तः दामबन्धः। च.द.।

**दामाञ्चलम्।** क्ली। अश्वादेः पादबन्धनरज्जौ। हे.च.।

**दामोदरः।** पुं। व्याघ्रर्गलाख्यवैद्यकग्रन्थप्रणेतरि।

**दाम्भिकः।** त्रि। वाचाले। पुं। वके। रा.नि.व.१९।

**दायकः।** पुं। बालके। मे.। पुत्रे। हे.च.।

**दारकः।** पुं। ग्राम्यशूकरे। रा.नि.व.१९। त्रि। विदारके। वै.निघ.। हरिद्वर्णस्थावरविषभेदे। अत्रि.३स्थान.५६अ.।

**दारकर्म्म।** क्ली। विवाहे। त्रिका.।

**दारणम्।** क्ली। कतकफले। নির্ম্মল ফল। श.च.। व्रणविदारणद्रव्ये। ফোড়া গলান দ্রব্য। यथा—"चिरविल्वोऽग्निको दन्ती चित्रको हयमारकः। कपोतगृध्रकङ्कानां पुरीषाणि च दारणम्। क्षारद्रव्याणि यानीह क्षारो वा दारणम्परम्॥" सु.। पुं। कतकवृक्षे। वै.निघ.।

**दारदः।** पुं। हिङ्गुले। त्रिका.। पारदे। मे.। दरददेशीयविषे। विषमात्रे। अम.। [ १९।

**दारुबलिभुक्।** पुं। वकपक्षिणि। रा.नि.व.

**दारी।** स्त्री। पाददारिनामक्षुद्ररोगे। "परिक्रमणशीलस्य वायुरत्यर्थरूक्षयोः। पादयोः कुरुते दारीं सरुजां तलसंश्रिताम्।" सु.नि.१३अ.।

**दारु।** पुं,क्ली। काष्ठे। अम.। क्ली। दार्व्वीम्। দারুহরিদ্রা। र.सा.सं.मेहमुद्गररसे। च.द.पाण्डु.चि.। वै.निघ.२भ.अ.सा.धि.पाठादिकषाये। वा.व्या. स्वल्पनारायणतैले। देवदारुणि। प. मु.। सि.यो.सा.अ.चि.अष्टाङ्गधान्ये। "भूनिम्बदारुदश-

मूल... ।" च.द.ज्व.चि.अपराजिताधूपे । वा.ज्व. रास्नादिः । "रास्नाश्वादनीदारु ।" दारुमूषे দার্মুজ । र.सा.सं. । पित्तले । मे. । कर्पूर-हरिद्रायाम् । भा. ।

**दारुकम्** । क्ली । देवदारुणि । रा.नि.व.१२ । वा.व्या.चि. । तैलदेवदारुणि । शीषपित्तले । वै. निघ. ।

**दारुकदली** । स्त्री । काष्ठकदल्याम् । বন কলা । रा.नि.व.११ ।

**दारुगन्धा** । स्त्री । चीड़ानामकदेवदारुभेदे । रा.नि.व.१२ ।

**दारुमरलम्** । क्ली । दारुमूषाख्यविषे ।

**दारुणः** । पुं । चित्रकक्षुपे । रा.नि.व.६।२३ । दारुणकरोगे । क्ली । कतकफले ।

**दारुणकः** । पुं । स्नुहीभेदे । वरुणवृक्षे । वै. निघ.२भ.मूर्च्छा-चि. । क्ली । तन्नामकक्षुद्ररोगे । রুসী খুসকী । लक्षणं यथा—"दारुणा कण्डुरा रूक्षा केशभूमिः प्रपाट्यते । कफ-मारुतकोपेन विद्याद्दारुणकन्तु तम् ॥" सु.नि.१३अ. ।

**दारुणकर्म्म** । क्ली । मृदुव्रणानां कठिनीकरणे । কোমল ক্ষতস্থান কঠিন করা । सु. ।

**दारुनिशा** । स्त्री । दारुहरिद्रायाम् । দারু-হরিদ্রা । रा.नि.व.६ । वै.निघ.२भ.मध्यमलाक्षा-तैले । च.द.वा.र.चि., मेह.चि. । "वत्सादनीदारु-निशा ।"

**दारुपत्री** । स्त्री । हिङ्गुपत्र्याम् । रा.नि.व.६ ।

**दारुपीता** । स्त्री । दारुहरिद्रायां । रा.नि.व.६ ।

**दारुफलम्** । क्ली । पेस्ता इति ख्याते फले । वै.निघ. ।

**दारुभद्रम्** । क्ली । देवदारुणि । भा. ।

**दारुमत्स्या (ह्वया,ह्वा)** । स्त्री । गोधायाम् । গোসাপ । रा.नि.व १९ ।

**दारुमुखा** । स्त्री । दारुमूषाख्यविषे । भा. ।

**दारुमुख्याह्वा** । स्त्री । गोधायाम् । र. ।

**दारुमूषा** । स्त्री । दार्मुज इति प्रसिद्धे स्थावर-विषभेदे । দার্মুজ । भा.म.१भ.ज्व.चि. ।

**दारुमोचः** । पुं । स्वनामख्यातविषभेदे । দার্মুজ । प.मु. ।

**दारुविषम्** । क्ली । दारुमोचविषे । "भवेदाखु-विषं दारुविषं पाषाणसंज्ञकम् । तद्भेदाः शृङ्ग-गोदन्तदाड़िमीस्फटिकादयः ॥" प.मु. ।

**दारुसिता** । स्त्री । (Cinnamomum zeylanicum.) दारुचिनीतिख्यातायां मधुर-त्वचि । দারুচিনি । हिं डालचिनि । तें सनलिंगु । ता. कारुवा । गुणाः—"उक्ता दारुसिता स्वाद्वी तिक्ता चानिलपित्तहृत् । सुरभिः शुक्रला वर्ण्या मुखशोषतृषापहा ॥" भा.उ.वाजी.चि. ।

**दारुहरिद्रा** । स्त्री । (Coscinium fenestratum. [Berberideae] Berberis Asiatica and other species.) स्वनाम-ख्यातपीतकाष्ठविशेषे । দারুহরিদ্রা । हिं दा दारुहलदि, जारकेहलदि । कं मरनरिसन । तें मनिपसुपु । ता. मरमञ्जिल । तत्पर्य्यायः,—पीतद्रुः, कालेयकः, हरिद्रुः, हेमकान्तिः, दार्व्वी, पचम्पचा, पर्जनी (अ.), हरिद्रा (शब्दर.), काम-वती, दारुपीता, कर्कटिनी, काष्ठा, मर्म्मरी (मे.), द्वितीया (भा, श,), कपीतकं (भा.), पीतिका, पीतदारु, स्थिररागा, कामिनी, कटङ्कटेरी. पर्ज्जन्या, पीता, दारुनिशा, कालीयकः । गुणाः—तिक्ता कटूष्णा व्रणघ्ना मेहघ्नी कण्डूविसर्प-त्वग्दोषकर्णाक्षिरोगघ्नी च । रा.नि.व.६ । "दार्व्वी-निशागुणाः किन्तु नेत्रकर्णास्यरोगनुत् ।" भा. । कफपित्तशोफघ्नी विशेषेण कफाभिष्यन्दहरी च । राज. । [ सु.सू.७अ. ।

**दारुहस्तकः** । पुं । दर्व्व्याम् । কাঠের হাতা ।

**दार्दुरः** । पुं । दक्षिणमुखशङ्खे । खाखायाम् । जले । शब्दार्थकल्पतरुः । विषभेदे । वै. ।

**दार्व्वण्डः** । पुं । मयूरे । वै.निघ. ।

**दार्व्वाघाटः (तः)** । पुं । काष्ठकुट्टपक्षिणि । কাঠঠোক্রা পাখী । अम. । श.र. ।

**दार्व्विकरः** । पुं । विषभेदे ।

**दार्व्विका** । स्त्री । खर्परधातौ । খাপরা । प. मु. । गोजिह्वाक्षुपे । रा.नि.व.४ । रसाञ्जने । वै. निघ. ।

**दार्व्विपत्रिका** । स्त्री । दार्व्वी शाके । গোজিয়া শাক । र.मा. ।

**दार्व्वी** । स्त्री । दारुहरिद्रायाम् । प.मु. ।



**दार्व्वीक्वाथसमुद्भवम्** । क्ली । कृत्रिमरसाञ्जने । रा.नि.व.१३ ।

**दार्व्वीक्वाथोद्भवम्** । क्ली । कृत्रिमाञ्जने । रसोत् इति पारस्यभाषा । प.मु. । "दार्व्वीक्वाथसमं क्षीरं पादं पक्त्वा यथा घनं । रसाञ्जनमिति ख्यातं नेत्रयोः परमं मतम् ।" भा. ।

**दार्व्वीत्वक्** । स्त्री । दारुहरिद्रात्वचि । सि.यो. काम.चि.मण्डूरवटके । "दार्व्वीत्वक्त्रिफलाव्योषं ।" त्वच एव प्राशस्त्यम् । अभावे काष्ठम् । श्रीकण्ठः ।

**दार्व्वीभेदा** । स्त्री । कर्पूरहरिद्रायाम् ।

**दार्व्यम्** । क्ली । रसाञ्जने । वै.निघ. ।

**दार्व्यादिः** । पुं । कषायविशेषे । "दार्व्वीरसाञ्जन-किरातवृषाब्द-विल्व-सक्षौद्रचन्दन-दिनेशभवप्रसूनैः । क्वाथः कृतो मधुयुतो विधिना विनीतः रक्तं सितञ्च सरुजं प्रदरं निहन्ति ।" भा. । "दार्व्वी-रसाञ्जन-वृषाब्द-किरात-विल्व-भल्लातकैरवकृतो मधुना कषायः ।" च.द. ।

**दालम्** । क्ली । अष्टविधमध्वन्यतममधुविशेषे । কুটুরে মধু । एतदापीतवर्णं सूक्ष्ममक्षिकाभिः इन्द्रनीलवर्णाभिः तरुकोटरादौ उत्पाद्यते । "इन्द्र-नीलदलाकाराः सूक्ष्मास्विन्वन्ति मक्षिकाः । यद्वृक्ष-कोटरान्तःस्थं मधु दालमिदं स्मृतम् ॥" गुणाः—कटु कषायमम्लं मधुरं पित्तकरञ्च । रा.नि.व.१४ । अपिच—"संस्नुत्य पतितं पुष्पात् यत्तु पत्रोपरि-स्थितम् । मधुराम्लकषायञ्च तद्दालमधु कीर्त्तितम् । दालं मधु लघु प्रोक्तं दीपनीयं कफापहं । कषायानु-रसं रूक्षं रुच्यं छर्द्दिप्रमेहजित् । अधिकं मधुरं स्निग्धं वृंहणं गुरुभारिकम् ॥" भा. । पुं । कोद्रवे । हे.च. ।

**दालकशर्करा** । स्त्री । दालकमधुकृतशर्करा-याम् । দালমধুর চিনি । सा तन्मधुतुल्यगुणा । रा.नि.व.१४ ।

**दालनः** । पुं । वायुजन्यदन्तगतमुखरोगे । "दीर्य्यमाणेष्विव रुजा यस्य दन्तेषु जायते । दालनो नाम स व्याधिः सदागतिनिमित्तजः ॥" भा.नि. । तथा "दाल्यन्ते बहुधा दन्ता यस्मिन् तीव्ररुग-न्विताः । दालनः स इति ज्ञेयः सदागति-निमित्तजः ॥" सु.सू.४५अ. ।

**दालवः** । पुं । स्थावरविषभेदे । हे.च ।

**दाला** । स्त्री । आरिखदिरे । रा.नि.व.८ । इन्द्रवारुण्याम् । वै.निघ. । महाकाले । মাকাল । भा. ।

**दालिः** । स्त्री । द्विदले । দাল । "स्फोटस्तु चण-कादीनां दालिस्तु परिकीर्त्तिता ।" रा.नि.व.१६ ।

**दालिका** । स्त्री । दाल्याम् । ডাল । महा-काले । মাকাল । भा. ।

**दालिमः** । पुं । दाड़िम्बवृक्षे । अ.टी.भ. ।

**दाली** । स्त्री । देवदालीलतायाम् । পীত ঘোষালতা । हिं घघरवेल । रा.नि.व.३ । See अगरी । द्विदले । দাল । "दलितन्तु शमीधान्य दालिर्दाली स्त्रियामुभे ।" तत्पाकविधिः—"दाली तु दलिते सिद्धा लवणार्द्रकहिङ्गुभिः । संयुक्ता सूपनाम्नी स्यात्कथ्यन्ते तद्गुणा अथ । सूपो विष्टम्भको रूक्षः शीतस्तु स विशेषतः । निस्तुषो भृष्टसंसिद्धो लाघवं सुतरां व्रजेत् ॥" भा । विट्खदिरवृक्षे । গুয়েবাবলা । रा.नि.व.८ ।

**दावः** । पुं । वने । दावाग्नौ । अ. । अग्नौ । अ.टी. ।

**दावाग्निः (नलः)** । पुं । वनोद्भवाग्नौ । शब्दर. ।

**दाशः** । पुं । आर्त्तगले । ঝাঁটি ।

**दासः** । पुं । नीलझिण्ट्याम् । उष्ट्रे । वै.निघ. ।

**दास(श)पु(पू)रम्** । क्ली । जलमुस्तके, परि-पेलवे । नागरमुस्ता । श.र. । रा.नि.व.८ ।

**दासिका** । स्त्री । दासीकुरुण्टके । নীলপুষ্প ঝাঁটি । श.चि. ।

**दासी** । स्त्री । पीतपुष्पझिण्टीक्षुपे । পীতঝাঁটি । नीलझिण्ट्यां । কুলঝুটি, নীলঝাঁটি । रा.नि.व. १० । काकजङ्घायाम् । কেওঝাকা । रा.नि.व. ४ । See नीलाम्लानः ।

**दासीकुरुण्टकः** । पुं । नीलपुष्पझिण्टीक्षुपे । নীলঝাঁটি । सु.सू.३८अ. । See नीलाम्लानः । "नीलपुष्पः स एव दासीकुरुण्टकः ।" डल्वणः ।

**दासेरः (कः)** । पुं । उष्ट्रे । मे. ।

**दास्यादिः** । पुं । विषमज्वरे कषायभेदे । "दासीदारु-कलिङ्ग-लोहितलता-श्यामाकपाठाशठी-शुण्ठ्युशीर-किरात-कुञ्जरकणा-चायन्तिकापद्मकैः । वज्री-धान्यक-नागराम्बु-सरलैः शिग्रुम्बुसिंहीशिवा-व्याघ्रीपर्पटदर्भमूलकटुकानन्तामृतापुष्करैः । धातुस्थं विषमं त्रिदोषजनितं...... ।" भैष. ।

**दाहः ।** पुं । भस्मीकरणे । सर्व्वाङ्गसन्तापे । "सर्व्वाङ्गीणस्तीव्रतृष्णा दाहः ।" अरुणः । वा.ज्व.चि.१अ. । तन्नामकपित्तजरोगे । জ্বলুনি রোগ । "त्वचं प्राप्य समानोष्मा पित्तरक्ताभिमूर्च्छितः । दाहं प्रकुरुते घोरं पित्तवत्तत्र भेषजम् ॥" दाहः तृष्णारोधजरक्तपूर्णकोष्ठजधातुक्षयजपित्तजक्षतजरक्तजभेदेन षड्विधः, मर्म्माभिघातजश्चैक इति सप्तविधः । [ नि.व.६ ।

**दाहकः ।** पुं । चित्रके । रक्तचित्रकवृक्षे । रा.

**दाहकर्षितः ।** त्रि । दाहपीड़िते ।

**दाहकाष्ठम् ।** क्ली । दाहागुरुणि । वै.निघ. ।

**दाहग(गु)रु ।** क्ली । अगुरुविशेषे गुर्जरदेशप्रसिद्धे । অগুরুবিশেষ । तत्पर्य्यायः,—दाहागुरु, दाहनागुरु, दाहकाष्ठं, धूपागुरु, तैलागुरु, पूरं, वनवल्लभं । गुणाः—दाहागुरु कटुकोष्णं लेशवर्द्धनं वर्णकरं केशदोषघ्नं सौगन्ध्यप्रदञ्च । रा. नि.व.१२ ।

**दाहज्वरः ।** पुं । दाहपूर्व्वके ज्वरे । দাহপূর্ব্বক জ্বর । "करोत्यादौ तथा पित्तं त्वक्स्थं दाहमतीव च । तस्मिन् प्रशान्ते त्वितरौ कुरुतः शीतमन्ततः ॥", मा.नि. ।

**दाहदा ।** स्त्री । नागवल्लीलतायाम् । वै.निघ. ।

**दाहनिःश्वासः ।** पुं । सुगन्धार्जकवृक्षे । वै. निघ. ।

**दाहलवः ।** पुं । श्मशाने । त्रि. ।

**दाहसरः ।** क्ली । श्मशाने । त्रिका. ।

**दाहहरणम् ।** क्ली । उशीरे । श.च. ।

**दाक्षाख्यः ।** पुं । गृध्रपक्षिणि । अ. ।

**दाक्षायणम् ।** क्ली । स्वर्णे । वै.निघ. ।

**दाक्षाय(या)णी ।** स्त्री । दन्तीक्षुपे । र.मा. ।

**दाक्षायणीपः (पतिः) ।** पुं । चन्द्रे । त्रि. ।

**दाक्षिणात्यः ।** पुं । नारिकेलवृक्षे । रा.नि.व. ११ । बाहुल्येन दक्षिणदेशोद्भवोऽयम् ।

**दिक् ।** स्त्री । रीतौ । পিতল । सु.सू.४३अ. ।

**दिक्कः ।** पुं । करिशावके । श.र. ।

**दिक्करिका ।** स्त्री । नदीभेदे ।

**दिक्करी ।** स्त्री । युवतीस्त्रियाम् । हे. ।

**दिक्पालसङ्ख्या ।** स्त्री । अष्टसंख्यायाम् । আট । भा.ज्व.वाग्भटः ।

**दिग्धः ।** त्रि. । विषाक्ते । अ. ।

**दिग्धविद्धः ।** त्रि । विषाक्तबाणविद्धे । च.द. । विष.चि. ।

**दिङ्गः ।** पुं । लिक्ष्यायां । ৪ বা ৮ ত্রসরেণু । शब्दार्थकल्पतरुः ।

**दितः ।** त्रि । छिन्ने । अम. ।

**दिनम् ।** क्ली । दिवसे । रा.नि.व.२१ । तत्पर्य्यायः,—घस्रः, अहः, दिवसः, वासरः (अ.), भास्वरः, दिवा (रा.), वारः, अंशकः, द्यु (शब्दर.), सूर्य्यकालः (श.), वस्तोः, द्युः, भानुः, स्वसराणि, घ्रंसः, घर्म्मः, घृणः, दिवेदिवे, द्यविद्यवि (वेदनि.) ।

**दिनकरः (कृत्) ।** पुं । सूर्य्ये । हे.च. ।

**दिनकरात्मजा ।** स्त्री । यमुनानद्याम् ।

**दिनकेशरः ।** पुं । अन्धकारे । शब्दर. ।

**दिनकेशान्तकः ।** पुं । वटपत्रपाषाणभेदे । বড় পাথরকুচা । वै.निघ. ।

**दिनचर्य्या ।** स्त्री । दिवसे योविधिः स्वास्थ्यकरस्तथाचरणे । तत्र ब्राह्ममूहूर्त्तोत्थानाभीष्टदेवतास्मरणम्, ततोदध्याज्यादर्शबिल्वगोरोचनादिदर्शनस्पर्शनादि, घृते स्वमुखदर्शनम्, उषसि मलादिविसर्ज्जनम्, दन्तधावनजिह्वानिर्लेखनमुखप्रक्षालनतैलाभ्यङ्गस्नानभोजनादि च । भा.च.द. ।

**दिनज्योतिः (स्) ।** क्ली । आतपे ।

**दिनदुःखितः ।** पुं । चक्रवाके । स्त्री । तत्पत्न्याम् । श.र. ।

**दिनप्रणीः ।** पुं । सूर्य्ये । त्रि. ।

**दिनप्रभा ।** स्त्री । आतपे । रा. ।

**दिनमणिः ।** पुं । सूर्य्ये । त्रिका. ।

**दिनादिः ।** पुं । प्रभाते । रा.नि.व.२१ ।

**दिनान्तः ।** पुं । सायंकाले । अम. ।

**दिनान्धः ।** पुं । पेचके । वै.निघ. ।

**दिनान्तकः ।** पुं । अन्धकारे । त्रि. ।

**दिनावसानम् ।** क्ली । दिनान्ते । हे. ।

**दिनेशः ।** पुं । सूर्य्ये । अर्कवृक्षे । वै.निघ २भ.वा. व्या.चि.शतपुष्पालेपे ।

**दिनेशपुष्पम् ।** क्ली । कैरवपुष्पे । নীলশুন্দী পুষ্প । चि.क्र.क.मदरचि. ।



**दिल्लीरम् ।** क्ली । शिलीन्ध्रे । কোঁড়ক ছাতা । हारा. ।

**दिवसः ।** पुं, क्ली । दिने ।

**दिवसमुखम् ।** क्ली । प्रभाते । हला. ।

**दिवा ।** व्य, पुं (न्) । दिवसे । अम. ।

**दिवाकरः ।** पुं । काके । सूर्य्यपद्मे । श.च. । अर्कवृक्षे । अम. ।

**दिवाकीर्त्तिः ।** पुं । पेचके । नापिते । हे.च. ।

**दिवाटनः ।** पुं । काके । शब्दार्थकल्प. ।

**दिवान्धः ।** पुं । पेचके । रा.नि.व.२३ । त्रि । दृष्टिरोगयुक्ते । দিনকাণা । लक्षणं—"प्राप्ते तृतीयं पटलञ्च दोषे दिवा न पश्येत् निशि वीक्षते सः । रात्रौ स शीतानुगृहीतदृष्टिः पित्ताल्पभावादपि तानि पश्येत् ॥" मा.नि. । (न्धा) स्त्री । वल्गुलापक्षिणि । रा.नि.व.१९ ।

**दिवान्धकी (न्धिका) ।** स्त्री । कुछुन्दर्य्याम् । ছুঁচো । वै.निघ. ।

**दिवाभीतः (तिः) ।** पुं । पेचके । त्रिका. । श.र. । क्ली । श्वेतपद्मे । वै.निघ. ।

**दिवामध्यम् ।** क्ली । मध्याह्ने । हे.च. ।

**दिवास्वापः ।** पुं । दिवानिद्रायाम् । দিনে ঘুমান । तस्य विधिः—"सर्व्वर्त्तुषु दिवास्वापः प्रतिषिद्धः अन्यत्र ग्रीष्मात् ।" सु.शा.४अ. । "दिवा सात्मीकृतं यैस्तु रात्रौ वा यदि वा दिवा । न तेषां स्वपतां दोषो जाग्रतां वा विधीयते ॥" दिवास्वापं न कुर्व्वीत यतोऽसौ स्यात्कफावहः । ग्रीष्मवर्षासु कालेषु दिवास्वप्नो निषिध्यति ॥" "व्यायामप्रमदाध्ववाहनरतान् कान्तानतिसारिणः, शूलश्वासवतस्तृषापरिगतान् हिक्का-मरुत्-पीड़ितान् । क्षीणान् क्षीणकफान् शिशून् मदहतान् वृद्धान् रसाजीर्णिनो रात्रौ जागरितान् नरान् निरशनान् कामं दिवा स्वापयेत् ॥"

**दिवास्वापा ।** स्त्री । पक्षिविशेषे, वल्गुला इति लोके । रा.नि.व.१९ ।

**दिविः ।** पुं । चाषपक्षिणि । श.मा. ।

**दिविजम् ।** क्ली । कुङ्कुमागुरुचन्दने । वै.निघ. ।

**दिवी ।** स्त्री । उपजिह्विकाकीटे । हारा. ।

**दिवौकाः ।** पुं । चातके । मे. । हरिणे । वै. निघ. ।

**दिवोदासः ।** पुं । काशीराजधन्वन्तरौ । यः चन्द्रवंशीयभीमरथनरपतेः पुत्र आसीत् । त्रिका. ।

**दिवोद्भवा ।** स्त्री । एलायां । शब्दार्थकल्पतरुः ।

**दिव्यः ।** गुग्गुलौ । रा.नि.व.१२ । यवे । रा. नि.व.१६ । अर्ज्जुनवृक्षे । वै.निघ. । क्ली । कान्तलौहे । प.मु. । लवङ्गे । रा.नि.व.१२ । चन्दने । वै.निघ. । वालके । বালা । ज.द.१३प. ।

**दिव्यकः ।** पुं । निर्विषसर्पविशेषे । सु.कल्प ४अ. ।

**दिव्यगन्धः ।** पुं । गन्धके । रा.नि.व.१३ । क्ली । लवङ्गे । रा.नि.व.१२ ।

**दिव्यगन्धा ।** स्त्री । स्थूलैलायाम् । বড় এলাইচ । रा.नि.व.६ । महाचुञ्चुक्षुपे । रा.नि.व. ४ । लवङ्गलतायाम् । श.चि. । [ वै.निघ. ।

**दिव्यचन्दनम् ।** क्ली । हरिचन्दने । लवङ्गे ।

**दिव्यचक्षुः ।** पुं । वानरे । श.मा. । उपचक्षुषि । চশমা । सुगन्धभेदे । मे. ।

**दिव्यतुम्बी ।** स्त्री । अलाबूभेदे । वै.निघ. ।

**दिव्यतेजाः ।** स्त्री । ब्राह्मीनामसंहाक्षुपे । रा. नि.व.५ ।

**दिव्यपञ्चामृतम् ।** क्ली । समभागगव्यघृतदधिदुग्धमधुशर्करासु । "गव्यमाज्यं दधि क्षीरं माक्षिकं शर्करान्वितम् । एकत्र मिलितम् ।" रा.नि.व. २२ । [ व १० ।

**दिव्यपुष्पः ।** पुं । श्वेतकरवीरवृक्षे । रा. नि.

**दिव्यपुष्पा (ष्पी) ।** स्त्री । देवद्रोण्याम् । বড় ঘলঘসা । रा.नि.व.५ ।

**दिव्यपुष्पिका ।** स्त्री । देवद्रोणक्षुपे, महाद्रोण्याम् । বড় ঘলঘসা । वै.निघ. । रक्तार्कवृक्षे । र.मा. ।

**दिव्यरथः ।** पुं । व्योमयाने । शब्दर. ।

**दिव्यरसः ।** पुं । पारदे । रा.नि.व.१३ ।

**दिव्यलता ।** स्त्री । मूर्व्वायाम् । रा.नि.व.३ ।

**दिव्यसारः ।** पुं । सर्ज्जवृक्षे । শাল বা ধূনার গাছ । रा.नि.व.९ ।

**दिव्या ।** स्त्री । महामेदायाम् । ब्राह्म्याम् । ব্রাহ্মী শাক । वन्ध्याकर्कोटक्यां । शतावर्य्याम् । स्थूलजीरके । বড় জীরা । रा.नि.व,५ । श्वेत-

दूर्व्वायां। रा.नि.व.८। आमलक्यां। मे.। हरीतक्याम्। रा.नि.व.११।

**दिव्यान्नम्**। क्ली। उत्तमान्ने। वै.निघ.।

**दिव्येलक:**। पुं। राजिलवद्वैकरञ्जसर्पविशेषे। सु.कल्प.४अ.।

**दिव्योदकम्**। क्ली। आन्तरीक्षजले। तत्-पर्य्याय:,—आकाशजलं, खवारि, व्योमोदकं, अन्तरीक्षजलम्। गुणा:—मधुरं, त्रिदोषनाशि, पथ्यदं, रुच्यं, अग्निकरं, तृष्णाश्रममोहापहारकं, पाचापेक्षिगुणत्वञ्च, अनार्त्तवन्तु तत् त्रिदोषजनकं। रा.।

**दिव्यौषधि: (धी)**। स्त्री। मन:शिलायां। च.द.। कृतलौहे। भा.। च.द.सि.यो.र.पि.चि. खण्डखाद्यलौहे। "दिव्यौषधिहतस्यापि।" शमीमूले। क्ली। स्वर्णमाक्षिके। वै.।

**दिष्टम्**। क्ली। दारुहरिद्रायाम्। श.मा.।

**दिष्टान्त:**। पुं। मृत्यौ। अम.।

**दिष्टि:**। स्त्री। परिमाणे। मे.।

**दीर्घिका**। स्त्री। त्रिशतधनु:परिमितजलाशये। দিঘি। "पल्वलं दीर्घिका वापी यष्टिका मीनगोधिका।" त्रिका.।

**दीदिवि**। क्ली। अन्ने। प.मु.।

**दीनम्**। क्ली। तगरपादिके। रा.नि.व.१०।

**दीना**। स्त्री। छुछुन्दर्य्याम्। वै.निघ.। मूषिकायां। त्रिका.।

**दीनार:**। पुं। माषचतुष्टयमाने। ৪ মাষা। अम.। स्वर्णमुद्रायां। মোহর। स्वर्णकर्षद्वये। अ.टी.सा.। वर्त्तिस्थज्वलदग्निशिखायाम्।

**दीपक:**। पुं। कासमर्द्दक्षुपे। চাকন্দা। रा.नि.व.४। चित्रकवृक्षे। वै. निघ. २ भ. वा. व्या.। यमान्यां। र.मा.। अजमोदायाम्। जीरके। वै. निघ.। श्येनपक्षिणि। বাজ পাখী। हे.च.। क्ली। कुङ्कुमे। श.र. मयूरपुच्छे। विलेशयसर्पविशेषे। सुश्रु.।

**दीपकर्पूरज:**। पुं। कर्पूरे। वै.निघ।

**दीपकिट्टम्**। क्ली। दीपकज्जले। श.मा.।

**दीपकूपी (खोरी)**। स्त्री। दीपवर्त्त्याम्। শলতে। श.मा.।

**दीपतरु:**। पुं। सरलतरौ, सरलदेवदारौ। दीपवृक्षे। ডেলকো। रा.नि.व.१२।

**दीपध्वज:**। पुं। कज्जले। जटा.।

**दीपनम्**। क्ली। रसस्य संस्कारविशेषे। तन्नामकरससाधनकार्य्यविशेषे। तद्यथा—"काशीशं पञ्चलवणं राजिका मरिचानि च। भूशिग्रुबीजमेकत्र टङ्कणेन समन्वितं। आलोड्य काञ्जिके दोलायन्त्रे पाकाद्दिनैस्त्रिभि:। दीपनं जायते सम्यक् सूतराजस्य जारणे॥" अथवा चित्रकद्रावै: काञ्जिके त्रिदिनं पचेत्। र.सा.सं.। मण्डोदके। त्रिका.। See पारद:। कुङ्कुमे। त्रिका.। तगरमूले। र.मा.। पुं। पलाण्डौ। रा.नि.व.१७। शालिञ्चशाके। সাঞ্চে শাক। श.च.। षडंशावशिष्टकषाये। "दीपनस्तु षडंशश्च।" रा.नि.व.२०। चक्रमर्द्दवृक्षे। काशमर्द्दवृक्षे। रा.नि.व.४। अग्निगुणभूयिष्ठ द्रव्यमात्रे। "पचेन्नामं वह्निकृद्दीपनं तद्यथा मिसि:।" भा.। त्रि। पाचने। अग्निगुणभूयिष्ठे। सु.सू.४१अ.।

**दीपनी**। स्त्री। मेथिकायां। মেতি। पाठायां। आकनादि। यमान्याम्। रा.नि.व.६। कर्कटिकायाम्। কাঁকুড়ী। वै.निघ.।

**दीपनीय:**। पुं। यमान्याम्। रा.नि.व.६। हरितपलाण्डौ। वै.निघ.। त्रि। अग्निदीप्तिकरे।

**दीपनीयवर्ग:**। पुं। तन्नामकाग्नेयमहाकषायवर्गे। यथा—"पिप्पली-पिप्पलीमूल-चव्यचित्रकशृङ्गवेराम्ल-वेतस-मरिचाजमोदाभल्लातकास्थि हिङ्गु-निर्यासा इति दशेमानि दीपनीयानि भवन्ति।" পিপুল, পিপুলমূল, চই, চিতা, শুঁট, অম্ল-বেতস বা থৈকল, মরিচ, যমানী, ভেলার মুটী, হিঙ্গু। च.सू.४अ.। "द्विविधश्चित्रकोधान्यमजमोदा च जीरकम्। चतुर्द्धा हनुषा हेषा गणोऽयं दीपन: स्मृत:॥" अर्क.चि.।

**दीपनीया**। स्त्री। यमान्याम्। मद.व.२।

**दीपनीयौषधम्**। क्ली। आग्नेयौषधे, पञ्चकोलादौ। सि.यो.मदा.चि.। च.द.।

**दीपपुष्प:**। पुं। चम्पकवृक्षे। रा.नि.व.१०।

**दीपवती**। स्त्री। कामरूपस्थनदीभेदे। का.पु.।

**दीपवृक्ष: (क:)**। पुं। सरलदेवदारुवृक्षे। वै. निघ.।



**दीपशिखा**। स्त्री। कज्जले। शब्दार्थकल्प.।

**दीपसंज्ञ:**। पुं। चित्रकवृक्षे। वै.निघ.।

**दीपास्यभस्म**। क्ली। दग्धदीपशिखायाम्। প্রদীপের পোড়া শীষ। रस.र.स्मरो.चि.।

**दीपिका**। स्त्री। वचायाम्। वै.निघ.।

**दीप्त(क)म्**। क्ली। हिङ्गुनि। হিং। रा.नि.व.६। कांस्यधातौ। কাঁসা। सुवर्णे। रा.नि.व.१३। जम्बीरे। वै.निघ.। पुं। सिंहे। रा.नि.व.१९। नासारोगविशेषे। নাকজ্বালা। लक्षणं यथा—"घ्राणे भृशं दाहसमन्विते तु विनि:सरेद्धूम इवेह वायु:। नासा प्रदीप्तेव च यस्य जन्तोर्व्याधिन्तु तं दीप्तमुदाहरन्ति॥" सु.। निम्बूकवृक्षे। रा.नि.व.११।

**दीप्तकंसम्**। क्ली। शुद्धकांस्यधातौ। খাঁটি কাঁসা। रा.नि.व.१३।

**दीप्तजिह्वा**। स्त्री। उल्कामुखीशृगाल्याम्। त्रिका.।

**दीप्तपिङ्गल:**। पुं। सिंहे। रा.नि.व.१९।

**दीप्तपुष्पा**। स्त्री। लाङ्गलीवृक्षे। বিষলাঙ্গলিয়া। वै.निघ.।

**दीप्तरस:**। पुं। किञ्चुलुके। কেঁচো। श.च.।

**दीप्तलोचन:**। पुं। विडाले। रा.नि.व.१९।

**दीप्तलोहम्**। क्ली। कांस्यधातौ। प.मु.।

**दीप्ता (प्ति:)**। स्त्री। लाङ्गलिकाक्षुपे। বিষলাঙ্গলিয়া। रा.नि.व.४। ज्योतिष्मतीलतायाम्। লতাফটকী। रा.नि.व.३। लाक्षायाम्। रा.नि.व.६। मन:शिलायाम्। वै.निघ.। कांस्यधातौ। रा.नि.व.१३। दीप्तनामनासारोगभेदे। वा.उ. १९अ.। See दीप्त:।

**दीप्ताग्नि:**। त्रि। दीप्तजठराग्नौ। मा.नि.।

**दीप्ताङ्ग: (क्ष:)**। पुं। मयूरे। श.र.। विडाले। श.र.।

**दीप्तानलम्**। क्ली। सुवर्णे। रा.नि.व.१३।

**दीप्ताक्ष:**। पुं। विडाले। त्रिका.। मयूरे। वै.निघ.।

**दीप्ति:**। स्त्री। दीपने। अ.। लाक्षायाम्। कांस्ये। रा.।

**दीप्तिक:**। पुं। दुग्धपाषाणे। ফুল খড়ি। वै. निघ.।

**दीप्तिकांस्यम्**। क्ली। कांस्ये। रा.।

**दीप्तोपल:**। पुं। सूर्य्यकान्तमणौ। प.मु.।

**दीप्य: (क:)**। पुं, क्ली। मयूरशिखायां। रुद्रजटायाम्। अम.। रक्तचित्रके। कुङ्कुमे। तगरे। निम्बूकवृक्षे। श्येनपक्षिणि। भ.। जीरके। रा.नि.व.६। रस.र.सूतिका.चि.पञ्चजीरकगुडे। भैष.कुष्ठ.चि.। च.द.पञ्चतिक्तघृतगुग्गुलौ। उन्मा.चि. लशुनाद्यघृते। अजमोदायाम्। शाकुनि। भा.पू.१भ.। यमान्याम्। च.द.सि.यो.कास चि.दशमूलषट्पलकघृते। "तालीशवह्निदीप्यकम्।"

**दीप्यका**। स्त्री। यमान्याम्। अजमोदायाम्। शाकुनि। भा.पू.१भ.।

**दीप्यवल्ली**। स्त्री। अजमोदायाम्। वै.निघ.।

**दीप्या**। स्त्री। कृष्णजीरकभेदे। মোটা কৃষ্ণজীরে। रा.नि.व.६। यमान्याम्। भा.। पिण्डखर्ज्जुरिकायाम्।

**दीर्घ:**। पुं। रामशरे। रा.नि.व.८। लताशाले। र.मा.। कोङ्कणदेशप्रसिद्ध माड़वृक्षे। रा.नि.व.९। रक्तकशाले। रा.नि.व.१६। इत्कटे। र.मा.। नक्षत्रे। रा.। उष्ट्रे। रा.नि.व.१९। त्रि। आयते।

**दीर्घकम्**। क्ली, पुं। कृष्णजीरके। मद.व.२। शरवृक्षे। श्वेतजीरके। उशीरे। उष्ट्रे। शाकवृक्षे। শেগুন গাছ। वै.निघ.।

**दीर्घकणा**। स्त्री। गौरजीरके। শাদা জীরা। रा.नि.व.६।

**दीर्घकण्ट: (क:)**। पुं। बर्बूरवृक्षे। বাবলা গাছ। रा.नि.व.८।

**दीर्घकण्ठ: (क:)**। पुं। बकपक्षिणि। श.च.।

**दीर्घकन्द: (क:)**। पुं। मालाकन्दे। वै.निघ.। मुषलौ। মৌ আলু। (कम्) क्ली। मूलके। মূলা। रा.नि.व.७।

**दीर्घकन्दिका**। स्त्री। तालमूल्याम्। रा.नि.व.७। कृष्णतालमूल्याम्। वै.निघ.।

**दीर्घकन्धर:**। पुं। बकपक्षिणि। रा.नि.व.१९। स्त्री। बकस्त्रियाम्। वै.निघ.।

**दीर्घकर्णः** । पुं । छागे । ছাগল ।

**दीर्घकाण्डः** । पुं । गुण्डतृणे । रा.नि.व.८ ।

**दीर्घकाण्डा** । स्त्री । वत्सादनीलतायाम् । পাতাল গরুড়ী । रा.नि.व.३ ।

**दीर्घकोलः (कः)** । पुं । अङ्कोलवृक्षे । ধল আঁকোড়, আঁকোড় গাছ । रा. नि. व. ९ । जटा. । "अङ्कोलो दीर्घकीलकः ।" रा.नि.व.२३ ।

**दीर्घकुल्या** । स्त्री । गजपिप्पल्याम् ।

**दीर्घकूरकम्** । क्ली । नृपान्ननामकशालिधान्यभेदे । রাজ অন্ন । रा.नि.व.१६ ।

**दीर्घकृष्णा** । स्त्री । तिलवासिनीशाली । रा.नि. व.१६ ।

**दीर्घकेशः (शी)** । पुं । भल्लूके । रा.नि.व.१९ ।

**दीर्घकोशा (षा)** । स्त्री । पङ्कशुक्तौ । গুগ্‌লি, ঝিণুক । हारा. । गण्डूपद्याम् । কেঁচো । वै.निघ. ।

**दीर्घकोशि(षि)का (शी)** । स्त्री । पङ्कशुक्तौ । हारा. । गण्डूपद्यां । वै.निघ. ।

**दीर्घखरच्छदः** । पुं । इत्कटे । ইৎকড় । प.मु. ।

**दीर्घगतिः** । पुं । उष्ट्रे । रा.नि.व.१९ ।

**दीर्घगोधूमः** । पुं । महागोधूमे । वै. निघ. ।

**दीर्घग्रन्थिः** । पुं । गजपिप्पल्यां । रा.नि.व.६ ।

**दीर्घग्रीवः** । पुं । उष्ट्रे । हे. च. । नीलक्रौञ्चपक्षिणि । रा.नि.व.१९ ।

**दीर्घघाटिकः** । पुं । उष्ट्रे । वके । वै. निघ. ।

**दीर्घचञ्चुः** । पुं । पक्षिविशेषे । वम्, रक्तठोंड़ा । वै. निघ. ।

**दीर्घच्छदः** । पुं । शाकवृक्षे । শেগুন গাছ । इक्षौ । भा. ।

**दीर्घजङ्गलः** । पुं । मत्स्यविशेषे । ভাঙ্গন মাছ । श. मा. ।

**दीर्घजङ्घः** । पुं । उष्ट्रे । जटा. । वकपक्षिणि । त्रिका. ।

**दीर्घजिह्वः** । पुं । सर्पे । हे. च. ।

**दीर्घजीरकः** । पुं । स्थूलजीरके । भा. पू.१भ. ।

**दीर्घतन्वी** । स्त्री । आलुकभेदे । वै.निघ. ।

**दीर्घतरः** । पुं । शूकरे । शब्दव. ।

**दीर्घतरुः** । पुं । तालवृक्षे । शब्दार्थकल्प. ।

**दीर्घतिमिषा** । स्त्री । कर्कटिकायाम् । क्षुद्र তেতো কাঁকুড় । श.मा. ।

**दीर्घतुण्डा (ण्डी)** । स्त्री । छुछुन्दर्याम् । ছুঁচো । वै. निघ. ।

**दीर्घतृणः** । पुं । पल्लिवाहतृणे । वम्. पीकन्तृण । रा.नि.व.८ ।

**दीर्घदण्डः (कः)** । पुं । श्वेतैरण्डे । रा.नि.व. ८ । जटा. । तालवृक्षे । रोहीतकविशेषे । वै.निघ. ।

**दीर्घदण्डी** । स्त्री । गोरक्षायाम् । গোরক্ষচাকুলে । रा.नि.व.५ । [ निघ. ।

**दीर्घदलः** । पुं । मालाकन्दे । श्यामाके । वै.

**दीर्घदर्शी (दृष्टिः)** । पुं । गृध्रे । श.र. । भल्लूके । रा.नि.व.१९ ।

**दीर्घद्रुः** । पुं । तालवृक्षे । श.च. ।

**दीर्घद्रुमः** । पुं । शाल्मलिवृक्षे । শিমুল গাছ । रा.नि.व.८ । [ १९ ।

**दीर्घनादः** । पुं । शङ्खे । শাঁক । रा.नि.व.

**दीर्घनालः** । पुं । दीर्घरोहिषे । বড় গন্ধতৃণ । गुण्डतृणे । रा.नि.व.८ । शालुके । शालिधान्यभेदे । वै.निघ. । यावनालनामशिम्बीधान्ये । रा.नि.व.१६ ।

**दीर्घनिद्रा** । स्त्री । मृत्यौ । हे. ।

**दीर्घनिस्वनः** । पुं । शङ्खे । वै. निघ. ।

**दीर्घपटोलिका (ली)** । स्त्री । पटोलाकार-दीर्घफलशाकविशेषे । धुन्दुल । वम्. गोड़परवल । गुणाः—गुरु स्निग्ध विष्टम्भि कटुकं मधुरं शीतलं वातपित्तघ्नं आरुचिकरञ्च । राज. ३प. ।

**दीर्घपत्रः (कः)** । पुं । पुनर्नवायाम् । শ্বেত পুণ্য । रा.नि.व.५ । राजपलाण्डौ । विष्णुकन्दे । रा.नि.व.७ । शरपत्रदर्भे । कुन्दुरुतृणे । रा.नि.व. ८ । तालवृक्षे । रा.नि.व.९ । हरितकुशे । रक्तपुनर्नवायाम् । सर्ज्जवृक्षे । मिश्रवर्णेक्षौ । हिं वड़ौ सा । गुणाः—सुकठिनः सक्षारश्च । भा. । वातकरः कफपित्तघ्नः कषायः विदाही च । सु.सू.४५ अ. । कुपीलौ । কুঁচিলা । भा. । मधूकवृक्षे । वै. निघ. । (क) वेतसवृक्षे । मद.व.५ । रक्तरसोने । লাল রশুন । रा.नि,व.७ । एरण्डवृक्षे । हिज्जलवृक्षे । रा.नि.व.८ । शुक्लरसोने । শ্বেত রশুন । हे.च. । जलमधूके । जटा. । करीरवृक्षे । श.च. ।



**दीर्घपत्रा** । स्त्री । वृहतीक्षुपे । द्रोणपुष्प्याम् । ঘলঘসা । रा.नि.व.४।५ । शालपर्ण्याम् । भा. । क्षुद्रजम्बूवृक्षे । বন জাম গাছ । र. मा. । केतकीवृक्षे । रा.नि.व.१० । घृतकुमार्य्याम् । श्वेतपुनर्नवायाम् । आम्रहरिद्रायां । कदलीवृक्षे । श्योणाकवृक्षे । कुम्भतुम्ब्याम् । গোল লাউ । वै. निघ. । चिञ्चायां । চেঁচ্‌ড়া । भा. पू १भ. शा.व. ।

**दीर्घपत्रिका** । स्त्री । श्वेतवचायाम् । শ্বেত বচ । रा.नि.व.६ । घृतकुमार्य्याम् । ঘৃতকুমারী । रा.नि.व.५।२३। शालपर्ण्याम् । শালপানি । रा. नि.व.४ । भा. । केतक्यां । रा.नि.व.२३ । आटरूषके । বাসক । मातुलुङ्गवृक्षे । ছোলঙ্গ লেবু । कृष्णतालमूल्याम् । कदलीवृक्षे । वै.निघ. ।

**दीर्घपत्री** । स्त्री । पलाशीलतायाम् । হাপরমালী । रा.नि.व.३ । महाचुञ्चुक्षुपे । চুঞ্চু শাক । रा.नि.व.४ ।

**दीर्घपर्णः** । पुं अश्वकर्णनामकशाले । লতাশাল । रा.नि.व.९ । 'चोपचिनी' इतिख्याते द्रव्ये । वै. निघ. ।

**दीर्घपर्णी** । स्त्री । पृश्निपर्ण्याम् । চাকুলিয়া । रा.नि.व.४ । शालपर्ण्याम् । শালপানি । वै.निघ. ।

**दीर्घपर्व्वा** । पुं । इक्षौ । वै. निघ. ।

**दीर्घपलाण्डुः** । पुं । विष्णुकन्दे । राजपलाण्डौ । तालवृक्षे । रा.नि.व.७।९। हरितकुशतृणे । कुन्दरुतृणे । इक्षुभेदे । कुचेलवृक्षे । কুঁচিলা গাছ । भा. ।

**दीर्घपल्लवः** । पुं । शणक्षुपे । শণ গাছ । रा. नि.व.४ ।

**दीर्घपक्षः** । पुं । मत्स्यविशेषे । वै. निघ. ।

**दीर्घपात् (दः)** । पुं । क्रौञ्चवके । কোঁচ বক । कङ्कपक्षिणि । কাঁকপাখী । त्रिका. । हे. च. ।

**दीर्घपादपः** । पुं । तालवृक्षे । रा.नि.व.९ । गुवाकवृक्षे । रा.नि.व.११ । See कर्कोटः ।

**दीर्घपुष्पः** । पुं । मुचुकुन्दवृक्षे । মুচকুন্দ । प.मु. । श्वेतमन्दारार्के । रा.नि.व.१० ।

**दीर्घपृष्ठः** । पुं । सर्पे । अम. ।

**दीर्घपोरः** । पुं । वंशनामेक्षुभेदे । "दीर्घपोरः सुकठिनः सक्षारो वंशकः स्मृतः ।" भा. ।

**दीर्घफलः (कः)** । पुं । स्थूलारग्वधवृक्षे । বড় সোণালু । रा.नि.व.९ । पलाशवृक्षे । अर्कवृक्षे । वै.निघ. । (कः) अगस्तिपुष्पवृक्षे । বাসনাফুলের গাছ । रा.नि.व.१० ।

**दीर्घफला** । स्त्री । कोषातक्याम् । ঝিঙে প্রভৃতি । रा.नि.व ७ । जन्तुकालतायाम् । रा.नि. व.३ । कपिलद्राक्षायाम् । रा.नि.व.११ । मेषशृङ्ग्याम् । तिक्तालाब्वाम् । वै.निघ. ।

**दीर्घबाला** । स्त्री । चमरीमृगे । वै. निघ. ।

**दीर्घबालुकः** । पुं । वृद्धदारकलतायाम् । বীজতাড়ক । रा.नि.व.३ ।

**दीर्घमारुतः** । पुं । हस्तिनि । त्रिका. ।

**दीर्घमूलः** । पुं । मोरटलतायाम् । रा.नि. व.३ । यासक्षुपे । দুরালভা । रा.नि.व.४।२३ । वेल्लन्तरवृक्षे । रा. नि. व. ८।२३ । विल्ववृक्षे । लज्जालुकायाम् । लामज्जके । रा.नि.व.१२।२३ । विभीतकवृक्षे । देवसर्षपे । इन्द्रयवे । क्ली । मूलके । वै. निघ. ।

**दीर्घमूलकम्** । क्ली । मूलके । মূলা । रा.नि. व.७ । पुं । स्थूलशरे । रा.नि.व.८ ।

**दीर्घमूला (लिका)** । स्त्री । शालपर्णीक्षुपे । वै.निघ. । श्यामालतायाम् । प.मु. । (ला) दुरालभायाम् । सु.सू.३८अ. । शरतृणे । শর গাছ । चीरमूर्व्वायां । मेषशृङ्ग्यां । वेल्लन्तरवृक्षे । वै. निघ. ।

**दीर्घमूली (लिका)** । स्त्री । दुरालभायाम् । श. मा. । काकमाच्याम् । काकजङ्घायाम् । वै. निघ. ।

**दीर्घरङ्गा** । स्त्री । हरिद्रायाम् । वै.निघ. ।

**दीर्घरतः (दः)** । पुं । शूकरे । त्रिका. ।

**दीर्घरसनः** । पुं । सर्पे । श. च. ।

**दीर्घरागा** । स्त्री । हरिद्रायाम् । रा.नि.व.६ ।

**दीर्घरात्रिकः** । पुं । बहुरात्रानुबन्धी-ज्वरभेदे । मा. ।

**दोषहरवस्तिः** । पुं । तन्नामकनिरूहवस्तौ । "शताह्वा मधुकं विल्वं कौटजं फलमेव च । सकाञ्जिकः सगोमूत्रो वस्तिर्दोषहरः स्मृतः ॥" भा. ।

**दोषा** । स्त्री । शाखौ । रा.नि.व.१८ । रात्रौ । मे. ।

**दोषाकरः** । पुं । चन्द्रे ।

**दोषा(षोत्)क्लेशी** । स्त्री । वनवर्व्वरिकायाम् । वन बाबुई । रा.नि.व.१० ।

**दोषातिलकः** । पुं । दीपे । त्रिका. ।

**दोषान्धः** । पुं । दृष्टिरोगभेदे । लक्षणं— "अर्केऽस्तमस्तकन्यस्तगभस्तौ स्तम्भमागताः । स्थगयन्ति दृशं दोषा दोषान्धः स गदोऽपरः ॥ दिवाकरकरस्पृष्टा भ्रष्टा दृष्टिपथान्मलाः । विलीनलीना यच्छन्ति व्यक्तमत्राक्षि दर्शनम् ॥" अत्र रोगिणो दिवारूपं पश्यन्ति । वा.उ.१२अ. ।

**दोषास्यः** । पुं । प्रदीपे । शब्दर. ।

**दोषिकः** । पुं । रोगे । श.च. । निघ. ।

**दोहः** । पुं । दोहने । दोहनपात्रे । दुग्धे । वै.

**दोहजम्** । क्ली । दुग्धे । शब्दार्थकल्पतरुः ।

**दोहदः (लः)** । पुं । गर्भिणीदोहदे । साध । हे.च. । गर्भचिह्ने । भरतधृतकोषान्तरम् ।

**दोहदलक्षणम्** । क्ली । गर्भधारणे । गर्भे । वयःसन्धौ । मे. ।

**दोहदवती** । स्त्री । गर्भवत्यां स्त्रियां । हे.च. ।

**दोहनम्** । क्ली । स्तनाद्दुग्धनिःसारणे । दोग्ध्री ।

**दोहनी** । स्त्री । धातकीवृक्षे । वै.निघ. । दोहनभाण्डे । त्रिका. ।

**दोहनः** । पुं । वकुल-पुष्पवृक्षे । रा. । गर्भिण्यभिलाषे । शब्दार्थकल्पतरु. ।

**दोहलवती** । स्त्री । दोहदवत्यां । शब्दार्थकल्प. ।

**दोहली** । स्त्री । अशोकवृक्षे । रा.नि.व.१० ।

**दोहापनयः (पयनम्)** । पुं,क्ली । गव्यदुग्धे । त्रिका. । वै.निघ. ।

**दौग्धिकम्** । क्ली । दुग्धिकामूले । थिरुइमूल । गा.उ.३७अ. ।

**दौग्डिका** । स्त्री । कोषातक्यां । वै.निघ. ।

**दौर्गन्ध म्** । क्लीं । दुर्गन्धताकृपपित्तजरोगविशेषे । दुर्गन्धत । तन्नाशकतैलं—चन्दनं कुङ्कुमं मांसी कर्पूरी जातिपत्रिका । जाती-कक्कोल-पूगानां लवङ्गस्य फलानि च । अगुरुश्चीरकाश्मर्य्यं कुष्ठ तगरनालिका । गोरोचना प्रियङ्गुश्च चोल मदनकं नखं । सरलः सप्तपर्णश्च लाक्षा चा-लकी तथा । कर्पूरकः पद्मकश्च एतैस्तैलं प्रसाधितम् ॥" गारुड़ प्रसिद्धम् ।

**दौर्ग्रहः** । पुं । घोटके ।

**दौर्बल्यम्** । क्ली । दुर्व्वलतायाम् । वै.निघ. ।

**दौर्वीणम्** । क्ली । दृष्टपर्णे । दूर्व्वारसे । मे. ।

**दौर्हृदम्** । क्ली । गर्भे । दोहदे । हे.च. ।

**दौर्हृदा** । स्त्री । गर्भवत्याम् स्त्रियाम् । सुश्रु. ।

**दौलेयः** । पुं । कच्छपे । हे.च. ।

**दौष्कुलेयः** । पुं । ग्रन्थिपर्णमूले । गेँटेला । वै.निघ. ।

**द्यविद्यवि** । व्य । दिवसे । वेदनि. ।

**द्यु** । क्ली । दिने । गगने । वि. ।

**द्युः** । क्ली । दिवसे । पुं । अग्नौ । मे. ।

**द्युकः** । पुं । पेचके । वै.निघ. ।

**द्युकारिः** । पुं । काके । वै.निघ. ।

**द्युगः** । पुं । पक्षिणि । रा.नि.व.१९ ।

**द्युगतिः** । पुं । सूर्य्ये । हे. ।

**द्युतरुः** । पुं । कल्पतरौ । वै.निघ. ।

**द्यु(ति)मणिः** । पुं । अर्कवृक्षे । अम. । र.सा.सं. विद्याधररसे । मारितताम्रे । भा.म.१भ.ज्व.चि. त्रिपुरभैरवरसे । "द्युमणिरक्तकमार्दकमर्द्दितम् ।"

**द्युम्नम्** । क्ली । बले । मे. ।

**द्यूतबीजम्** । क्ली । कपर्द्दके । त्रिका. ।

**द्योःशिखरम्** । क्ली । स्कन्धे । रा. ।

**द्योतः** । पुं । रौद्रे । अ. ।

**द्योतनम्** । क्ली । दर्शने । हे. च. । पुं । प्रदीपे । उ. ।

**द्योभूमिः** । पुं । पक्षिणि । श.च. ।

**द्यौ** । स्त्री । आकाशे । अ. ।

**द्यौतम्** । क्ली । बीजे । उणा. ।

**द्रङ्कणम्** । क्ली,पुं । टङ्कद्वयमाने । (इति कालिङ्गमानम्) । "चतुर्भिष्टङ्ककैश्चापि द्रङ्कणः स निगद्यते । शाणौ द्वौ द्रङ्कणः ।" (इति मागधमानम् । प.प्र.१ख. । तोलके । श.मा. ।



**द्र(द्रा)प्स[प्सग]म्** । क्ली । तरलदधनि । वयादहे । अम. । अ.टी.भ. ।

**द्रवः** । पुं । तक्रे । रा.नि.व.१५ । तरले । पातला । गुणाः—क्लेदकरः व्यापकश्च, शुष्कः विपरीतगुणः । भा. । रसे । विश्व. । क्ली । जले । सि.यो.उन्मा.चि.महापैशाचघृते ।

**द्रवजः** । पुं । शर्करायाम् । गुड़े । रा.नि.व.१४ ।

**द्रवत्पत्री** । स्त्री । शिमड़ीवृक्षे । रा.नि.व.४ ।

**द्रव(व)दारु** । क्ली । पित्तले । (व्य.) लाक्षायाम् ।

**द्रवद्रव्यम्** । क्ली । तरलद्रव्ये ।

**द्रवन्तिका (न्ती)** । स्त्री । (Anthericum tuberosum.) खनामख्यातक्षुपे । मूशाली लता, बुड़िगुञ्जापान, मूषाकाणी । मंभीपना । कं वन्निहर्दे तें एलुकचेविचेट्टु । गुणाः—मधुरा शीता रसबन्धकरी ज्वर क्रमि-शूलघ्नी च । रा.नि. व.५ । क्षणदन्तीक्षुपे । र.मा. । वृहद्दन्त्याम् । चीरितपत्रदन्तीभेदे । च.सू.१अ. । सु.सू.३९अ. । श्रुतश्रेणीनामकक्षुपे । इन्दूरकर्णी । रा.नि.व.४ । क्षुद्राखुकर्णीलतायाम् । रा.नि.व.३ । वा.सू.हेमा. टी. १५ष. श्यामादिः । "श्यामा दन्ती द्रवन्ती ।" क्षुद्रदन्त्याम् । च.सू.२अ. ।

**द्रवरसा** । स्त्री । लाक्षायाम् । रा.नि.व.६ ।

**द्रवशूलः** । पुं । अन्नद्रवशूले ।

**द्रवस्वेदः** । पुं । वातहरस्वेदविशेषे । स च द्रव्यक्वाथपूर्णे कटाहे, षड्विंशत्यङ्गुलायामोच्छाययुक्ते चतुष्कोणे सौवर्णादिस्वेदकोष्ठके वा अवगाह्योपविश्य च गृह्यते । "द्रवस्वेदस्तु वातघ्नो द्रव्यक्वाथेन पूरिते । कटाहे कोष्ठके वापि सुप्रविष्टेऽवगाहयेत् । सौवर्णं राजतं वापि ताम्रं लौहञ्च दारुजम् । कोष्ठकं तत्र कुर्व्वीतोच्छ्राये षड्विंशदङ्गुलम् । आयामे वा तदेव स्याच्चतुष्कोणन्तु चिक्कणम् ॥' भा. ।

**द्रवा** । स्त्री । मेदायाम् । रा.नि.व.५ ।

**द्रविड़ी** । स्त्री । एलायाम् । वै.निघ. २भ. वा. व्या.चि.शतावरीतैले । [ मे. ।

**द्रविणम्** । क्ली । सुवर्णे । रत्ने । बले । अम. ।

**द्रविणनाशनः** । पुं । शिग्रुवृक्षे । सजिना गाछ । श.र. ।

**द्रविणोदाः (स्)** । पुं । अग्नौ ।

**द्रवीकरणम्** । क्ली । तरलतापादने ।

**द्रव्यम्** । क्ली । वस्तुनि । पित्तले । मद्ये । जले । विलेपने । जतुके । लौ । मे. । औषधोपकरणे । औषधे । त्रिका. । तच्च द्रव्यमात्रं पृथिव्यादिभूतसमुदायादुत्पद्यते । तदुत्कर्षस्याभिव्यञ्जकत्वात्, तत्पञ्चविधं पार्थिवम् आप्यं तैजसं वायव्यमाकाशीयञ्च । तत्र "स्थूलसारसान्द्रमन्दखरगुरुकठिनगन्धबहुलमीषत्कषायमम्लप्रायशो मधुरम्पार्थिवम्, तच्च स्थैर्य्यबलादिकरं विशेषतश्चाधोगतिस्वभावम् । यच्च द्रव्यं शीतस्निग्धगुरुसरसान्द्रं पिच्छिलमीषत्कषायाम्ललवणं मधुररसप्रायं तदाप्यम्, तच्च स्नेहनाह्लादनादिकरम् । यद्रूपगुणबहुलम् ईषदम्ललवणं कटुरसप्रायं विशेषतश्चोर्द्धगतिस्वभावं तत्तैजसं, तच्च दहनपचनदारणादिकरम् । सूक्ष्मरूक्षखरविशदं स्पर्शबहुलमीषत्तिक्तं विशेषतश्च कषायं वायव्यम्, तद्वैशद्यलाघवादिकरम् । श्लक्ष्णसूक्ष्ममृदुव्यवायिविविक्तमव्यक्तरसं शब्दबहुलमाकाशीयम्, तच्च मार्द्दवलाघवादिकरम् । अनेन निदर्शनेन नानौषधीभूतं जगति किञ्चिद्द्रव्यमस्तीति कृत्वा तं तं युक्तिविशेषमर्थं वाभिसमीक्ष्य स्ववीर्य्यगुणयुक्तानि द्रव्याणि कार्म्मकराणि भवन्ति । तानि यदा कुर्व्वन्ति स कालः, यत्कुर्व्वन्ति तत्कर्म्म, येन कुर्व्वन्ति तद्वीर्य्यं, यत्र कुर्व्वन्ति तदधिकरणं, यथा कुर्व्वन्ति स उपायः, यन्निष्पादयति तत्फलमिति । तत्र विरेचनद्रव्याणि पृथिव्यम्बुगुणभूयिष्ठानि पृथिव्यापो गुर्व्व्यौ गुरुत्वादधोगच्छन्ति तस्माद्विरेचनमधोगुणभूयिष्ठमनुमानात् । वमनद्रव्याण्यग्निवायुगुणभूयिष्ठान्यग्निवायू हि लघू लघुत्वाच्च तान्यूर्द्धमुत्तिष्ठन्ति तस्माद्वमनमप्यूर्द्धगुणभूयिष्ठमुक्तम् । उभयगुणभूयिष्ठमुभयतोभागं । आकाशगुणभूयिष्ठं संशमनं । संग्राहमनिलगुणभूयिष्ठमनिलस्य शोषणात्मकत्वात् । दीपनमग्निगुणभूयिष्ठं । लेखनमनिलानलगुणभूयिष्ठं । वृंहणं पृथिव्यम्बुगुणभूयिष्ठं । एवमौषधकर्म्माण्यनुमानात्साधयेत् । भवन्ति चात्र—भूतेजोवारिजैर्द्रव्यैः शमं याति समीरणः ॥ खतेजोऽनिलजैः श्लेष्मा शममेति शरीरिणां । क्षित्यम्बुवनजाताभ्यां वृद्धिमाप्नोति मारुतः ॥ आग्नेयमेव यद्द्रव्यं तेन पित्तमुदीर्य्यते । वसुधाम्बुजाताभ्यां बलासः परिवर्द्धते ॥ एवमेतद्व्याधिकं द्रव्यं द्रव्यं विनिश्चितं । द्विशो वा बहुशो वापि ज्ञात्वा दोषेऽवचारयेत् ॥" सु.सू. ४१अ. । दोषशमनधातुदूषणस्वस्थहितत्वात् द्रव्यं त्रिविधमाह चरकः ॥ तच्च पुनस्त्रिविधं जाङ्गमौ-

ङ्गिदपार्थिवभेदात्। तत्र जाङ्गममूलविंशतिः, भौमं विंशतिः, उद्भिदस्त्वह । तच्च चतुर्विधं वनस्पति-वीरुद्वानस्पत्यौषधयः । इति । च.सू.१अ. । द्रव्यं पुनः द्विविधं शुष्कमार्द्रं चेति। तयोः शुष्कद्रव्यापेक्षयार्द्रस्य द्विगुणा मात्रा ग्राह्या। "शुष्कद्रव्य तु या मात्रा आर्द्रस्य द्विगुणा हि सा।" तदपवादमाह —"वासानिम्बपटोलकेतकिबलाकुष्माण्डकेन्दीवरी वर्षाभूकुटजाश्वगन्धसहिताः ताः पूतिगन्धामृताः। मांसीनागबलाकुरुण्टकपुरीहिङ्ग्वार्द्रकं चैवव ग्राह्या-स्तत्क्षणमेव न द्विगुणिता ये चेक्षुजाता गणाः।" इन्दीवरी शतावरी। पूतिगन्धा प्रसारणी। कुरुण्टकः पीतझिण्टी । इक्षुजाता गुडादयः । गणाः दशमूलादयः। "वासाकुटजकुष्माण्डशतपुष्पासहामृताः। प्रसारण्यश्वगन्धा च नागाख्यातिबलाबलाः। नित्यमार्द्राः प्रयोक्तव्याः न तासां द्विगुणो भवेत्।" शाङ्ग.। "शुष्कं नवीनं द्रव्यञ्च योज्यं सकलकर्मसु। आर्द्रञ्च द्विगुणं विद्यादेष सर्व्वत्र निश्चयः। द्रव्याण्यभिनवान्येव प्रशस्तानि क्रियाविधौ। ऋते घृत-गुड़क्षौद्रधान्यकृष्णाविड़ङ्गतः॥" प.प्र.१ख.।

**द्रव्यकल्कः**। पुं। दृषदि पेषितद्रव्ये ।

**द्रव्यगुणाकरः**
**द्रव्यरत्नवाली** } पुं,स्त्री। द्रव्यगुणसंग्रहविशेषे ।

**द्रव्यसंग्रहः**। पुं । करचरणहरीतक्यादिद्रव्य-सङ्क्षेपे। च.सू.१अ.। [संग्रहे।

**द्रव्याभिधानम्**। क्ली। औषधादीनां नाम-

**द्राघिष्ठम्**। क्ली । दीर्घरोहिषतृणे । बड़ गन्धतृण। रा.नि.व.८।

**द्राघिष्ठास्यः**। पुं । भल्लूके । रा.नि.व.१९।

**द्राणः**। त्रि । सुप्ते ।

**द्रापः**। पुं । पङ्के । शब्दार्थकल्प.।

**द्रापसम्**। क्ली। द्रप्से। अ.टी.। वस्त्रादहे।

**द्रावः**। पुं । उष्णतायाम् वै.निघ.।

**द्रावकम्**। क्ली। सिक्थके। रा.नि.व.१३। लौहचुम्बके। वै.निघ.। शोधौषधविशेषे। महा-द्रावकादौ । पुं । प्रस्तरविशेषे। चन्द्रकान्तमणि। मे.। रसविशेषे। श.र.।

**द्रावककन्दः**। पुं। तैलकन्दे। रा.नि.व.७।

**द्रावकरम्**। क्ली। श्वेतटङ्कणे। সোহাগা। रा.नि.व.६।

**द्रावकवर्गः**। पुं। द्रवकरद्रव्यपञ्चके। यथा— "गुञ्जाटङ्कणमध्वाज्यगुड़ा द्रावकपञ्चकाः।" र.सा.सं.। [र.मा.।

**द्रावण(फल)म्**। क्ली। कतकफले। निर्म्मली।

**द्रावणकः**। पुं । टङ्कणक्षारे। वै.निघ.।

**द्राविका**। स्त्री। लालायाम्। লাল, থুতু। श.र.।

**द्राविड़ः (कः)**। पुं। वेधमुख्ये । किम्रूषष्ठि। अम.। मे.। गन्धशठ्याम्। पमु.। आमहरिद्रायाम्। কাঁচা হলুদ। श.र.। क्ली। विड़लवणे। रा.नि.व.६।

**द्राविड़भूतिकः (भिजः)**। पुं । आमहरिद्रायाम्। কাঁচা হরিদ্রা। श.र.।

**द्राविड़ी**। स्त्री। सूक्ष्मैलायाम्। प.मु.। भा.म.४भ.सौभाग्यशुण्ठीमोदके। "द्राविड़ीनां पलम्।" सु.सू.३८अ.।

**द्राविड़ोद्भवः**। पुं। सुगन्धतृणे। सुगन्धप्रियङ्गौ। (वा) स्त्री। एलायाम्। वै.निघ.।

**द्राविणः**। पुं। टङ्कणे। সোহাগা। रा.सा.सं.।

**द्राविणी**। स्त्री। काकजङ्घायां, काकमाच्यां। वै.निघ.।

**द्रावी** (इन्)। पुं । टङ्कणक्षारे । र.सा.सं. टङ्कणशोधने। अम्लवेतसे। वै.निघ.।

**द्राक्षम्**। क्ली। द्राक्षाभवमद्ये। ज.।

**द्राक्षा**। स्त्री। (Vitis vinifera.) Dried fruits called Kismis. स्वनामख्यातलतायाम्। কিস্‌মিস, মনেকা। हिं दाख, आङ्गुर। मं द्राक्षा। तें द्राक्षपोण्डु, द्राक्षचेट्टु। ता. कोड़िम ख्डिरिप्पझाम्। तत्पर्य्यायः,—कृष्णा, चारुफला (ज.), रसा (शब्दर.), मृद्वीका, गोस्तनी, स्वाद्वी, मधुरसा (अ.), यक्षमघ्नी (शब्दमा.), प्रियाला, तापसप्रिया, गुच्छफला, रसाला, अमृतफला, स्वादुफला, हारहूरा। गुणाः—पक्वा सा सरा शीता चक्षुष्या बृंहणी। अपक्वा स्वल्पगुणा गुर्व्वी च। अम्ला सा रक्तपित्तकृत्। "द्राक्षा पक्वा रसा शीता चक्षुष्या बृंहणी गुरुः। स्वादुपाकरसा स्वर्य्या तुवरा सृष्टमूत्रविट्। कोष्ठमारुतकृद्वृष्या कफपुष्टिरुचिप्रदा। हन्ति तृष्णाज्वरश्वासवातवातास्रकामलाः। कृच्छ्रास्रपित्त-सम्मोह-दाहशोषमदात्ययान् । वृष्या



स्याच्छीतला द्राक्षा गुर्व्वी च कफपित्तनुत्। अबीजान्या स्वल्पतरा गोस्तनीसदृशी गुणैः। द्राक्षा पर्व्वतजा लघ्वी साम्ला श्लेष्मास्रपित्तकृत्। द्राक्षा पर्व्वतजा याद्दृक्ताद्दृशी करमर्द्दिका॥" भा. द्राक्षाव.। "द्राक्षाफलं मधुरमम्लकषाययुक्तं क्षारेण पित्तमरुतां कफहारि शीघ्रम्। श्रेष्ठं निहन्ति रुधिरामयदाहशोषमूर्च्छाज्वरश्वसनकासविनाशकारि। कषायाम्ला विपाके च द्राक्षा चैव कफे हिता॥" अत्रि. १७अ.। एतदभावे गाम्भारीफलं ग्राह्यम्। सि.यो ज्व.चि.पिप्पल्यादौ । वा.मू.१५अ.परूषकादिः। "परूषकं वरा द्राक्षा"। च.द.वा.ज्व.चि. पिप्पल्यादिः। वा.ज्व.चि. द्राक्षादिः। रसालायाम्। रा.नि.व.२३।

**द्राक्षादिः**। पुं। वातज्वरे कषायः। "द्राक्षा-गुडूचीकाश्मर्य्यत्रायमाणाः सशारिवाः। निष्क्वाथ्य सगुड़ं क्वाथम्...।" च.द.वा.ज्व.चि.। अन्यः—द्राक्षाभयापर्पटकाब्दतिक्ताकृतः कषायः पैत्तिकज्वरे प्रलापमूर्च्छाभ्रमघ्नः। च.द.पि.ज्व.चि.।

**द्राक्षाफलः**। पुं । पियालवृक्षे। वै.निघ.।

**द्राक्षायणी**। स्त्री। दन्तीवृक्षे। प.मु.।

**द्राक्षारसम्**। क्ली। द्राक्षाभवमद्ये।

**द्राक्षारिष्टः**। पुं। यक्ष्माधिकारे अरिष्टविशेषे। पाठः—"द्राक्षातुलार्द्धं द्विद्रोणे जलस्य विपचेत् सुधीः। पादशेषे कषाये च पूते शीते विनिक्षिपेत् गुड़स्य द्वितुलां तत्र त्वगेलापत्रकेसरम्। प्रियङ्गुमरिचकृष्णा विड़ङ्गञ्चेति विचूर्णयेत्। पृथक् पलोन्मितैर्भागैर्घृतभाण्डे निधापयेत्। समन्ततो घट्टयित्वा पिबेज्जातरसं ततः॥" भैष.।

**द्राक्षासम्भूतः**। पुं । द्राक्षासवे। वै.निघ.।

**द्राक्षासवः**। पुं। द्राक्षाकृतासवे। गुणाः—रोचनो दीपनो हृद्यः बल्यः पित्ताविरोधी विबन्धघ्नः कफघ्नः लघुः स्वल्पमारुतश्च। च.सू.२७अ.।

**द्राक्षासुरा**। स्त्री। द्राक्षाकृतमद्ये। च.सू.२७अ.।

**द्राक्षोत्थः**। पुं। द्राक्षासवे। वै.निघ.।

**द्रुः**। पुं। वृक्षे। अ.।

**द्रुकिलिमम्**। क्ली। देवदारुणि। प.मु.।

**द्रु(द्रू)घनः**। पुं। भूमिचम्पकवृक्षे। ভুঁই চাঁপা। श.च.। मुद्गरे।

**द्रु(द्रू)णः**। पुं। भ्रमरे। वृश्चिके। धूम्याटपक्षिणि। ফিঙে। हे.च.। मधुमक्षिकायां। वै.निघ.।

**द्रुणहः**। पुं। खड्गपिधाने। हा.। তরওয়ালের খাপ। क्ली। धनुषि।

**द्रुणी**। स्त्री। कर्णजलायुकायाम्। কাণ-কোটারি। कच्छपिकायाम्। अम.भ.।

**द्रुतः**। पुं। हरिणे। शशके। वृक्षे। धरणि.।

**द्रुतमांसम्**। क्ली। शशादिहरिणादयः स्वयं द्रुतगमनात् द्रुतसंज्ञकाः स्मृताः, तेषां मांसे। गुणाः—पथ्यं बल्यं लघु वीर्य्यकारि च। रा.नि.व.१७।

**द्रुनखः**। पुं। कण्टके। কাঁটা। त्रिका.।

**द्रुपदी**। स्त्री। वन्दाके। মান্দড়া। वै.निघ.।

**द्रुमः**। पुं। वृक्षे। त्रिका.। कुटजवृक्षे। आरग्वधवृक्षे। च द. कुष्ठ-चि. गण्डीराद्यतैले। पारिजातवृक्षे। मे.।

**द्रुमकण्टका**। स्त्री। शाल्मलीवृक्षे।

**द्रुमकिलः**। पुं। देवदारुवृक्षे। वै.निघ.।

**द्रुमगः**। पुं। स्वल्पजलदेशे। वै.निघ.।

**द्रुमत्वक्**। स्त्री। कुटजवल्कले। च.द कुष्ठ-चि.।

**द्रुमध्वजः**। पुं। तालवृक्षे। वै.निघ.। [मे.।

**द्रुमनखः**। पुं। कण्टके। हारा.। पारिजातवृक्षे।

**द्रुमनिर्यासः**। पुं। तरुनिर्य्यूहे। গাছের আটা। वै.निघ.।

**द्रुमरः**। पुं। कण्टके। हारा.।

**द्रुमव्याधिः**। पुं। लाक्षायाम्। रा.नि.व.६।

**द्रुमशयः**। पुं। वानरे। वै.निघ.।

**द्रुमशीर्षः**। पुं। दाड़िम्बे।

**द्रुमश्रेष्ठः**। पुं। तालवृक्षे। वै.निघ.।

**द्रुमाङ्गः**। पुं। वृक्षशाखायाम्।

**द्रुमामयः**। पुं। लाक्षायाम्। प.मु.।

**द्रुमारिः**। पुं। हस्तिनि। वै.निघ.।

**द्रुमारुहा**। स्त्री। कैवर्त्तमुस्तायां। रा.नि.व.३।

**द्रुमाश्रयः**। पुं। सरटे। গিরগিটে। रा.नि.व.१९।

**द्रुमेश्वरः**। पुं। तालवृक्षे। रा.नि.व.२३।

**द्रुमोत्पलः**। पुं। (Abroma augusta.) कर्णिकारवृक्षे। ওলট্ কম্বল। अम.। ऋतुशूले हितः।

**द्रुयवम्** । क्ली । परिमाणे । वै.निघ. ।

**द्रुमसल्लकः** । पुं । पियालवृक्षे । পেয়াশাল । श.र. ।

**द्रूः** । स्त्री । स्वर्णे । वै.निघ. ।

**द्रेकः (का)** । पुं, स्त्री । निम्बविशेषे । ঘোড়া নিম্ । हिं बकायननिम्ब । भा.म.४भ.महाभल्लातके । श्रोकड़ा इति ख्याते द्रुमे । च.द.दार्व्वादिकषाये । "सरलाद्रेकाम्रतायासकैः ।"

**द्रोणः** । पुं । ४०० धनुःपरिमितजलाशये । काकविशेषे । দাঁড় কাক, ডোম কাক मे. । द्रोणपुष्पवृक्षे । ঘলঘসে । वृश्चिके । रा.नि.व.१९ । पुं,क्ली । आढ़कमाने । ৮ শের । खारीषोड़शांशे । नीलावल्यां । आढ़कचतुष्टये (३२ श.) । "चतुर्भिराढ़कैर्द्रोणः ।" तत्पर्य्यायः,—उन्मानः, नल्वनः, अर्म्मणः, घटः, कलसः । प.प्र.१ख. । क्ली । हरिचन्दने । द्रोणीलवणे । वै.निघ. ।

**द्रोणकाकः** । पुं । तन्नामककाके । ডোম কাক । अम. । तत्पर्य्यायः,—काकोलः (अ.), द्रोणः, अरण्यवायसः, वनवासी, महाप्राणः, क्रूररावी, पलप्रियः (रा.), काकालः, काकलः (शब्दर.) ।

**द्रोणकुतुम्बिका** । स्त्री । देवकुम्भायाम् । देवद्रोण्यां । বড় ঘলঘসাবিশেষ । वै.निघ. ।

**द्रोणगन्धिका** । स्त्री । रास्नायाम् । जटा. ।

**द्रोणपर्णी** । स्त्री । द्रोणपुष्प्याम् ।

**द्रोणपुष्पिका** । स्त्री । द्रोणपुष्प्याम् । घलघसा । वै.निघ. ।

**द्रोणपुष्पी** । स्त्री । घलघसा हलकषा दण्डकलस इति ख्याते क्षेत्रजक्षुपे । द्रोणपुष्पीति भाषा । र.मा. । मं कुंबा । कं तुंबे । हिं गुम्मा, गूमा । तें एनुगतुम्मि । तत्पर्य्यायः,—चवपत्री, कुम्भयोनीः, कुरुम्बिका, चित्राक्षुपः, कुरुम्बा, सुपुष्पा, चित्रपत्रिका । गुणाः—कटूष्णा रुच्या वातकफघ्नी अग्निमान्द्यकरी पथ्या च । रा.नि.व.५ । च. द. सि. यो. काम. चि. अञ्जने । "अञ्जनं कामलार्त्तानां द्रोणपुष्पीरसः शुभः । द्रोणपुष्पीरसोऽप्येव निहन्ति विषमज्वरान् ।" शार्ङ्ग. म. ख. १ अ. । कफार्शःकामलाक्रिमिशोथघ्नी । राज । द्रोणपुष्पी गुरुः स्वादुपाका कट्वी भेदनी कफामकामलाशोथतमकश्वासक्रिमिघ्नी च । भा. ।

**द्रोणपुष्पीदलम्** । क्ली । द्रोणपुष्पीपत्रे । ঘলঘসের পাতা । गुणाः—स्वादु रुच्यं गुरु पित्तकरं भेदनं कामलाशोथमेहज्वरहरं कटु च । भा.पू.१भ.शा.व. ।

**द्रोणा** । स्त्री । द्रोणपुष्प्याम् । घलघसा । भा.वा.उ३६अ. । इन्दीवरालसायाम् । वै.निघ. ।

**द्रोणिः** । स्त्री । सूर्पद्वयमाने । १२८श. । प.प्र.१ख. ।

**द्रोणिका** । स्त्री । नील्याम् । श.र. । [ व.६ ।

**द्रोणि(णी)जम्** । क्ली । द्रोणीलवणे । रा.नि.

**द्रोणिनी** । स्त्री । उत्तरिण्याम् । वै.निघ.२भ. मञ्जिष्ठाद्यघृते ।

**द्रोणी** । स्त्री । इन्द्रचिर्भटां, इन्दीवरायाम् । रा.नि.व.३ । द्रोणीलवणे । श.र. । नील्याम् । सूर्पद्वयमाने । १२८श. । "सूर्पाभ्याञ्च भवेद्द्रोणी ।" प.प्र.१ख. । काष्ठाम्बुवाहिन्याम् । मे. ।

**द्रोणीजम्** । क्ली । द्रोणीलवणे । रा. ।

**द्रोणीदलः** । पुं । केतकीपुष्पवृक्षे । কেয়া গাছ । हारा. ।

**द्रोणीलः** । पुं । केतकवृक्षे । है.निघ. ।

**द्रोणीलवणम्** । क्ली । वारिजलवणे । मं दीर्णीचेभोट । कं दोणीय उपु । गुणाः—भेदनं स्निग्धं शूलघ्नं नातिपित्तलं पाके नात्युष्णञ्च । रा.नि.व.६ ।

**द्रौणेयम्**, **द्रौणम्** } क्ली । वारिजलवणे । रा.नि.व.६ ।

**द्वन्द्व(न्द्व)म्** । क्ली । मिथुने । युगले । सुखदुःखादौ । पु । रोगभेदे । श.र. ।

**द्वन्द्वगः** । पुं । चक्रवाके । वै.निघ. ।

**द्वन्द्वगदः** । पुं । द्वन्द्वजरोगे ।

**द्वन्द्वचरः (चारी)** । पुं । चक्रवाकपक्षिणि । है.च. । त्रिका. ।

**द्वन्द्वचरीसहायः** । पुं । चक्रवाकपक्षिणि ।

**द्वन्द्वजः (दोषोत्थः)** । पुं । विषमज्वरे । रा.नि.व.२० । द्विदोषरोगे । त्रि । द्विदोषोत्थे । सा.ज्व.नि. ।

**द्वयाग्निः** । पुं । चित्रकवृक्षे । চিতা । श.च. ।

**द्वादशपत्रिका** । स्त्री । शताह्वायाम् । শুল্ফা গাছ, মউরি ।



**द्वादशाङ्गक्वाथः** । पुं । सन्निपातज्वरे कषायः । दशमूलीकषायस्तु पिप्पलीपौष्करान्वितः । सन्निपातज्वरे देयः श्वासकाससमन्विते ॥ भा.म.१भ. ।

**द्वादशाङ्गुलः** । पुं । वितस्तौ । বিগৎ । अम. ।

**द्वादशात्मा** । पुं । सूर्य्ये । अर्कवृक्षे । अम. ।

**द्वादशायसकः** । पुं । ऊरुस्तम्भाधिकारे रसः । त्रिनेत्राख्यरस एव । रस.र. । See त्रिनेत्ररसः वातरक्ते ।

**द्वादशायुः** । पुं । कुक्कुरे । श.मा. ।

**द्वारम्** । क्ली । उपाये । निगमे । त्रिका. ।

**द्वारकण्टकः** । पुं । कवाटे ।

**द्वारका** । स्त्री । कार्पास्याम् । वै.निघ. ।

**द्वारदारुः (तु)** । पुं । शाकवृक्षे । वै.निघ. । भूमीसहवृक्ष । भा. ।

**द्वारबलिभुक्** । पुं । काकविशेषे । त्रिका. ।

**द्विकः** । पुं । काके । त्रिका. । चक्रवाके । मे. । क्ली । अगुरुकाष्ठे । चक्र. ।

**द्विककारः** । पुं । काके । श.र. ।

**द्विककुत्, द्विकपृष्ठः** । पुं । उष्ट्रे । हे.च. ।

**द्विकटुकम्** । क्ली । पिप्पलीमरिचरूपे कटुद्वये । चक्र. ।

**द्विकाकोली** । स्त्री । काकोलीक्षीरकाकोल्योः । वा.उ.२भ. ।

**द्विखुरी (रिन्)** । पुं । गोखुरवत् द्विधाविभक्तखुरायुभाश्वे । "द्विखुरं गोखुराकारङ्गुरैर्विंद्याद्विचक्षणः । अथवा सीवनीयुक्तैर्निम्नमध्यं तु निर्द्दिशेत् ॥" ज.द.३अ. ।

**द्विगर्भनखी** । स्त्री । मिलित-कुलिककोलिवृक्षे । কুলেকাঁটা ও কুলগাছ ।

**द्विचित्रकम्** । क्ली । श्वेतरक्तचित्रकयोः । सि.यो अग्निमा.चि. ।

**द्विजः** । पुं । दन्ते । रा.नि.व.१८।२३ । तुम्बुरुवृक्षे । रा.नि.व.११ । ब्राह्मणे । क्षत्रिये । वैश्ये । मे. । सर्पे । अण्डजे । अम. ।

**द्विजकुत्सितः** । पुं । बहुवारवृक्षे । চালিতা গাছ । रा.नि.व.११ ।

**द्विजकेतुः** । पुं । जम्बीरविशेषे । वै.निघ. ।

**द्विजन्मा (मन्)** । पुं । पक्षिणि । दन्ते । श.र. । आर्द्रधान्ये । मौक्तिके । अण्डजे । वै.निघ. ।

**द्विजप्रिया** । स्त्री । सोमलतायां । रा.नि.व.३ ।

**द्विजभक्तः** । त्रि । वैद्ये भक्तिमति (रोगिणि) । वै.निघ. ।

**द्विजयष्टिः (ष्टिका)** । स्त्री । भार्ग्याम् । বামু হাটী । वै.निघ.२भ.वा.व्या.चि. ।

**द्विजराजः** । पुं । चन्द्रे । कर्पूरे । अ. । गरुड़पक्षिणि । मे. ।

**द्विजव्रणः** । पुं । दन्तमूलक्षते । रा. ।

**द्विजशमः** । पुं । राजमाषे । বর্বটী । श.च. ।

**द्विजस्नेहः** । पुं । पलाशवृक्षे । वै.निघ. ।

**द्विजा** । स्त्री । रेणुकायां । রেণুক । रा.नि.व.६ । भार्ग्याम् । मे. । लोबान् इति ख्याते गन्धद्रव्ये । वै.निघ. पालक्यशाके । श.च. ।

**द्विजाङ्गिका (ङ्गी)** । स्त्री । कटुक्याम् । कट्की । रा.नि.व.६. ।

**द्विजातिः** । पुं । दन्ते । अण्डजे । पक्षिणि ।

**द्विजायनी** । स्त्री । यज्ञोपवीते । त्रिका. ।

**द्विजालयः** । पुं । तरुकोटरे । श.च. ।

**द्विजिह्वः** । पुं । सर्पे । अम. । अधिजिह्वनामककण्ठरोगे । আলজিবের রোগ । सु.नि.१६अ. ।

**द्विजेन्द्रकः** । पुं । निम्बूवृक्षे । লেবুর গাছ । वै.निघ. ।

**द्विड़ा** । स्त्री । स्त्री-गवि । গাভী । के. ।

**द्वितिक्ता** । स्त्री । कटुक्यां, करञ्जिकायाञ्च । धा.टी.हेमा, सुखकादि. ।

**द्वितीयः** । पुं । पुत्रे । शब्दर । स्त्री(या) । भार्य्यायाम् ।

**द्वितीयत्रिफला** । स्त्री । द्राक्षाखर्ज्जूरगाम्भारीफलेषु । কিস্‌মিস্, খেজুর, গামারফল । वै.निघ. ।

**द्वितीयाभा** । स्त्री । Curcuma zanthorrhiza.) वृक्षविशेषे । दारुहरिद्रायाम् । श.च. ।

**द्विदलः** । पुं । अश्मन्तकवृक्षे । आपटा इति ख्याते । আবুটা । वै.निघ. । क्ली । द्विदलमात्रे । तद्यूषगुणाः—"यूषः कृतो द्विदलानामष्टादशगुणेऽम्भसि । स एव सत्रिकटुकः सर्पिःसैन्धवसंयुतः ।

भवेद्गुरुतरश्चैव कृतमित्येव तं विदुः। चिरैर्द्रव्यै-र्विनासिद्धमकृतन्तु लघुं वदेत्। फलान्नधान्यतक्रैश्च कृता गुरुतरा मताः। वातघ्ना रुचिदाः प्रोक्ताः पूर्व्वपाकविशारदैः॥” द्रव्यगुणः।

**द्विधागतिः।** पुं। शिशुमारे। शुशुक। वै. निघ.। कुम्भीरे। कुमीर। हे.च.।

**द्विधातुः।** त्रि। द्विप्रकृतिके।

**द्विधात्मकम्।** क्ली। जातीफले। वै.निघ.।

**द्विधालेख्यः।** पुं। हिन्तालवृक्षे। হেঁতাল গাছ। रा.नि.व.९।

**द्विनिशा।** स्त्री। हरिद्रा-दारुहरिद्रारूपे हरिद्राद्वये। भै.।

**द्विपः।** पुं। हस्तिनि। प.मु.। नागकेसरवृक्षे।

**द्विपञ्चमूलम्।** दशमूले। चक्र.।

**द्विपत्रकः।** पुं। चण्डालकन्दे। रा.नि.व.७।

**द्विपदः।** पुं। मनुष्ये। पक्षिणि। प्रश्नसारः।

**द्विपबला।** स्त्री। नागबलायां। वै.निघ. वा. व्या चि. शतावरीतैले।

**द्विपमदः।** पुं। करिमदजले।

**द्विपर्णी।** स्त्री। शालपर्णी पृश्निपर्णी चेति द्वये। শালপাণি, চাকুলিয়া। च.द.ग्रहः चि।

**द्विपसर्पः।** पुं। नागकेशरे।

**द्विपच्चः।** पुं। पनसवृक्षे। কাঁটালগাছ।

**द्विपाख्यः।** पुं। नागकेशरवृक्षे। प.मु.।

**द्विपाठा।** स्त्री। अम्बष्ठाद्वये। चरा.।

**द्विपादिकः।** पुं। नागकेशरवृक्षे। प.मु.।

**द्विपायी** (इन्)। पुं। करिणि। हारा.।

**द्विपाश्वः।** पुं। हस्तिनि। द्विकर्षमाने। ৪ চারি তোলা। चक्र.।

**द्विपिनखः।** पुं। व्याघ्रनखे। নখীবিশেষ। रा.नि.व.१२।

**द्विपी** (इन्)। पुं। चित्रकभेदे। च.वि.८अ.।

**द्विपुटः।** पुं। (Impotiens Balsamina) पुष्पवृक्षविशेषे। দোপাটী। श.चि.।

**द्विपुटी।** स्त्री। मल्लिकायाम्। मे.।

**द्विपुनर्नवम्।** क्ली। शुक्ललोहितलताभेदेन पुनर्नवाद्वये। শ্বেতপুন্না, গাদাপুন্না। सि.यो. काम.चि.व्योषाद्यघृते। “त्रिफला द्विपुनर्नवम्।”

**द्विब्राह्मी।** स्त्री। ह्रस्वदीर्घब्राह्मीद्वये। ছোট ও বড় ব্রাহ্মী। सु.शा.१०अ.।

**द्विमधुकः।** पुं। स्थलज-जलजभेदाद् यष्टिमधु-द्वये। चर.।

**द्विमाषम्।** क्ली। मुद्गपर्णीमाषपर्ण्योः। মুগানী ও মাষাণী। च.द.उन्मा.चि.महाकल्याणघृते।

**द्विमुखः (खाहिः)।** पुं। द्विमुखसर्पविशेषे. राजसर्पे। রাজসাপ, দুমুখো সাপ, শাঁখিনী সাপ। बम् दूंदुल। हला.। रस.र.विष.चि.। त्रि। मुखद्वययुक्ते।

**द्विमुखा।** स्त्री। झारिकायां। গাড়ু। जलौ-कायाम्। জোঁক। हला.।

**द्विमुखाहिः।** पुं। राजसर्पे। শাঁখিনী সাপ। तत्पर्य्यायः,—अहीवलिः, राजहिः, राजसर्पः। द्विःस्वः, सर्पभुक्। ह.।

**द्विमुखोरगः।** पुं। द्विमुखसर्पे। जटा.।

**द्विरजनी।** स्त्री। हरिद्रायां दारुहरिद्रायाञ्च। হরিদ্রা, দারুহরিদ্রা। सि.यो.काम.चि.व्योषाद्य-घृते।

**द्विरदः।** पुं। हस्तिनि। प.मु.।

**द्विरदपिप्पली।** स्त्री। गजपिप्पल्याम्। वै. निघ.२भ.वा.व्या.चि.द्वात्रिंशकगुग्गुलौ।

**द्विरदान्तः (कः)।** पुं। सिंहे। रा.नि.व. १९।

**द्विरदारातिः।** पुं। शरभे। সিংহবিশেষ। वै.निघ.।

**द्विरदाशनः।** पुं। अश्वत्थवृक्षे। वै.निघ.।

**द्विरर्व्वुदम्।** क्ली। अर्व्वुदभेदे। तस्य लक्षणं —“यद्दन्द्वजातं युगपत् क्रमाद्वा द्विरर्व्वुदं तच्च भवेदसाध्यम्।” सु.नि.११अ.।

**द्विरशनम्।** क्ली। वारद्वयभोजने। तिथितत्त्वम्।

**द्विरसनः।** पुं। सर्पे। त्रिका.।

**द्विरा।** स्त्री। पृथिव्याम्। शब्दर.।

**द्विरापः।** पुं। हस्तिनि। श.मा.।

**द्विरे** । पुं। गर्द्दभे। वै.निघ.। स्त्रीपुंचिह्न



नपुंसके। “वीजात्समांशादुपतप्तवीजात् स्त्रीपुंसलिङ्गी भवति द्विरेताः।” च.शा.२अ.।

**द्विरेफः।** पुं, स्त्री। भ्रमरे। अ.।

**द्विरेफगणसम्म(म्मि)ता।** स्त्री। पुष्पवृक्षभेदे। বন শেঁউতী। व.निघ.।

**द्विलग्नकः।** पुं। दुश्चर्म्मणि। हे.च.।

**द्विवर्षा (र्षिका)।** स्त्री। द्विहायन्याम् गवि। अम। हे.च.।

**द्विवार्त्ताकी।** स्त्री। बृहतीद्वये। বৃহতী, কণ্টিকারী। भा.म.४भ.बाल-चि.। “द्विवार्त्ताकी-फलरसम्।”

**द्विवाहिका।** स्त्री। दोलायाम्। ডুলি।

**द्विविदः।** पुं। वानरभेदे। हे.।

**द्विविषम्।** क्ली। पाण्डुकृष्णातिविषायाम्। শ্বেত ও কৃষ্ণ আতইচ। वै.निघ.२भ.वा.व्या.चि.।

**द्विवृन्तः।** पुं। नखरञ्जकक्षुपे। মেঁদী গাছ। प.मु.।

**द्विवृहती।** स्त्री। कण्टकारिका-बृहत्योः। কণ্টিকারী ও বিরুতী। वा.सू.१५अ.। “द्विवृ-हती विकरञ्जयाद्वयम्।”

**द्विशफः।** त्रि। द्विखुरपशुमात्रे। “गौरजो महिषः कृष्णः शूकरो गवयो रुरुः। द्विशफाः पशवश्चेमे अविरुष्ट्रश्च सत्तमः॥” भागवतम्।

**द्विशृङ्गिका।** स्त्री। मेषशृङ्ग्याम्। মেড়াশিঙী। वै.निघ.। [ माछ। वै. निव.।

**द्विशृङ्गी** (इन्)। पुं। मत्स्यविशेषे। শিঙ্গী

**द्विषा।** स्त्री। एलायाम्। वै.निघ.।

**द्विष्टम्।** क्ली। ताम्रे। अ.टी.सा.।

**द्विस्विन्नान्नम्।** क्ली। सिद्धतण्डुले। সিদ্ধ চাউল। पुराणम्। [ सुश्रु.।

**द्विहरिद्रा।** स्त्री। हरिद्रा-दारुहरिद्रेतिद्वये।

**द्विहा** (न्)। पुं। हस्तिनि। शब्दर.।

**द्विहृदया।** स्त्री। गर्भवत्यां स्त्रियां। वै.निघ.।

**द्विक्षारम्।** क्ली। यवक्षारसर्ज्जिक्षारयोः। सि. यो. अग्निमा.चि.।

**द्विक्षीरम्।** क्ली। गव्याजदुग्धयोः। গাইদুগ্ধ ও ছাগদুগ্ধ। च.द.यक्ष्म.चि.सर्पिर्गुडे।

**द्वीपः।** पुं। कक्कोलवृक्षे। वै.निघ.। जलवेष्टित-स्थलभागे। अ.। क्ली। व्याघ्रचर्म्मणि। भ.।

**द्वीपकर्पूरः (जः)।** पुं। चीनकर्पूरे। रा. नि.व.१२। [ द्वीपान्तरखर्ज्जूरे। रा.नि.व.११।

**द्वीपखर्ज्जूरम्, द्वीपजम्।** क्ली। महापारेवते,

**द्वीपवती।** स्त्री। नद्याम्। भूमौ। मे.। [४।जटा.।

**द्वीप(पि)शत्रुः।** पुं। शतावर्य्याम्। रा.नि.व.

**द्वीपसम्भवः।** पुं। कक्कोलवृक्षे। কাঁকলা। कोरके। (वा) स्त्री। महाखर्ज्जूरवृक्षे। वै.निघ.।

**द्वीपान्तरवचा।** स्त्री। चोपचिनीति ख्याते मूले। गुणाः—“द्वीपान्तरवचा किञ्चित्तिक्तोष्णा वह्निदीप्तिकृत्। विबन्धाध्मानशूलघ्नी शकृन्मूत्रविशो-धिनी। वातव्याधीनपस्मारमुन्मादं तनुवेदनाम्। व्यपोहति विशेषेण फिरङ्गामयनाशिनी॥” भा.।

**द्विपिकः।** पुं। चित्रकवृक्षे। चर.।

**द्वीपिका।** स्त्री। शतमूल्याम्। रा.नि.व.४।

**द्विपिनखः।** पुं। व्याघ्रनखे। নখী। वै.निघ.।

**द्विपिनी।** स्त्री। वटपत्रपाषाणभेदे। वै.निघ.।

**द्वीपिपलाशः।** पुं। हस्तिकर्णपलाशे। वा. सू.१५अ.मुष्ककादिः। “मुष्ककस्नुक्पलाशद्वीपि-पलाशधवशिंशपाः।”

**द्वीपी** (इन्)। पुं। व्याघ्रविशेषे। चित्रकक्षुपे।

**द्विप्य'।** पुं। काके। क्ली। कक्कोले। वै.निघ.।

**द्वीप्या।** स्त्री। शतावर्य्याम्। रा.नि.व.४। पिण्डीखर्ज्जूरवृक्षे। रा.नि.व.११।

**द्वेषः।** पुं। अवलाविद्वेषे। रस.र.स्त्रीरो.चि.।

**द्वेष्यम्।** क्ली। कक्कोले। रा.नि.व.१२।

**द्वैपेयम्।** क्ली। कर्पूरतैले। अा.। [रा.नि.व.२।

**द्वैमातृकः।** पुं। नदीवृष्ट्यम्बुपालिते देशे।

**द्वैषणीया।** स्त्री। नागवल्लीविशेषे। द्वीसयली चलिय इति पारसमुद्रदेशे ख्याता। द्वेसनीया इति पुस्तकान्तरे पाठः। रा.नि.व.११। [ আধসের।

**द्व्यञ्जलम्।** क्ली। अञ्जलीद्वयपरिमाणे।

**द्व्यन्तरः।** पुं। जातिद्वयसम्भूते सर्पे। দোআঁসলা সাপ। सु.कल्प.टी.।

**द्व्यष्टम्।** क्ली। ताम्रे। अम.। [ ज्वरे। मा.नि.।

**द्व्यहिकः (हीनः)।** पुं। दिनद्वयान्तरभवे

# ध

**धटः (कः)।** पुं। धववृक्षे। ধাওয়া গাছ। वै.निघ.। तुलामाने। তরাজু ধাড়া। अम.। १४ वल्लमाने। ४२ रति। लीलावती।.

**धटी (घटी)।** स्त्री। वल्कले। वै.निघ.। जीर्णवस्त्रखण्डे। ধড়ি। मे.।

**धत्तूरः।** पुं। धुस्तूरवृक्षे। रा.नि.व.१०।

**धनम्।** पुं,क्ली। मरिचे। अर्थे। वै.निघ.। स्नेहपात्रे। श.र.।

**धनकम्।** क्ली। धान्यके। धनियां। वै.निघ. २भ. सर्व्वज्व.चि.गुडूच्यादिः।

**धनच्छः (च्छूः)।** पुं, स्त्री। पक्षिविशेषे। ধানস পাখী, কর্কটিয়া পাখী। त्रिका.।

**धनञ्जयः।** पुं। अर्ज्जुनवृक्षे। रा.नि.व.९। वै.निघ.२भ.अजी.चि.पञ्चाग्निचूर्णे। अग्नौ। अम.। चित्रकवृक्षे। र.मा.। सर्पभेदे। मे.।

**धनदः।** पुं। हिज्जलवृक्षे। रा.नि.व.१०।

**धनदायी (न्)।** पुं। अग्नौ। शब्दर.।

**धनदाची।** स्त्री। पाटलवृक्षे। रा.नि.व.१०। लताकरञ्जे। रा.नि.व.८।

**धनपिशाची (चिका)।** स्त्री। तृष्णायाम्। त्रिका.। हारा.।

**धनप्रिया।** स्त्री। काकजम्बूवृक्षे। বন জাম। रा.नि.व.११।

**धनस्रूः।** पुं। धूम्याटपक्षिणि। ফিঙে পাখী। वै.निघ.।

**धनस्य(स्व)कः।** पुं। गोक्षुरकवृक्षे। श.च.।

**धनहरः।** पुं। ग्रन्थिपर्णवृक्षे। গেঁঠেলা। पारसीकयमान्याम्। वै.निघ.। चोरकनाम-गन्धद्रव्ये। भा.।

**धनह(हा)री।** स्त्री। पारसीकयमान्याम्। ग्रन्थिपर्णभेदे। अम.। चोरके। अ.।

**धनहृत्।** पुं। चण्डालकन्दे। वै.निघ.।

**धना (नी)।** स्त्री। आर्द्रधान्यके। वै.निघ.। धान्यके। वै.निघ.२भ.वा.व्या.चि.षड़शीतिगुग्गुलौ। अत्रि.२स्थान.२अ.।

**धनिकः।** पुं। धान्यकक्षुपे। ধনে গাছ। रा.नि.व.६। क्ली। धान्यके। ধনে। च.द. सि.यो. सन्निपातज्व.अष्टाङ्गकषाये। "तिक्तेन्द्रवीजधनिके"।

**धनिका।** स्त्री। धान्यके। ধনে। अत्रि.२स्थान.। प्रियङ्गुलतायाम्। श.च.। युवतीस्त्रियाम्। धनियां। श.र.।

**धनोदकम्।** क्ली। आर्द्रधान्यके। धान्यके।

**धनुः(स्)।** पुं। भल्लातकवृक्षे। चारवृक्षे। पियाशाल। मे.। शरासने। शब्दर.।

**धनुःप(ष्प)टः।** पुं। प्रियालवृक्षे। रा.नि.व. ११। अम.।

**धनुःशाखा।** स्त्री। मूर्व्वायां। मूर्गा। श.च.।

**धनुःश्रेणी।** स्त्री। मूर्व्वायाम्। प.मु.। वारुण्याम्। বড় মাকাল, রাখালশশা। रा.नि. व.३।

**धनुर्गुणा।** स्त्री। मूर्व्वायाम्। श.च.।

**धनुर्द्रुमः।** पुं। वंशे। বাঁশ। रा.नि.व.७।

**धनुर्माला।** स्त्री। मूर्व्वायाम्। श.च.।

**धनुर्य्यासः।** पुं। दुरालभायाम्। प.सु.।

**धनुर्लता।** स्त्री। सोमवल्ल्याम्। সোমলতা। रा.नि.व.३।

**धनुर्वातः।** पुं। वातव्याधिविशेषे, यत्र सर्व्वसन्धिषु वेदनारुचिश्च भवति। "अनिच्छन्त्यच्चतां यस्तु उपभुङ्क्ते परस्त्रियं। बलादाक्रम्य स नरः सर्व्वसन्धिषु वेदनां। तीव्रामाप्नोत्यरुचिमान् धनुर्वातयुतो भवेत्॥" इति कर्म्मविपाकः। धनुस्तम्भरोगे।

**धनुर्वीजः।** पुं। भल्लातकवृक्षे। रा.नि.व.११।

**धनुर्वृक्षः।** पुं। धमन्यवृक्षे। ধামনি গাছ। र.मा.। रा.नि.व.९। वंशे। भल्लातकवृक्षे। अश्वत्थवृक्षे। रा.नि.व.११।

**धनुषः।** पुं। कुक्कुरे। वै.निघ.।

**धनुष्यः।** पुं। वंशे। বাঁশ। रा.नि.व.७।

**धनुस्तम्भः।** पुं। वातव्याधिविशेषे। धनुष्टङ्कारे। स वाह्याभ्यन्तरायामभेदाद्विविधः। लक्षणं—"धनुस्तुल्यो नमेद्यस्तु स धनुस्तम्भसञ्ज्ञितः। विवर्णदशनवदनः स्रस्ताङ्गो नष्टचेतनः। प्रस्विद्यंश्च धनुस्तम्भी दशरात्रं न जीवति॥" मा.नि.।



**धनूः।** स्त्री। धनुषि। ज.।

**धनेच्छूः।** पुं। करेटूपक्षिणि। [भ.।

**धनेयकम्।** क्ली। धन्याके। धनियां। अ.टी.

**धनैषणा।** स्त्री। एषणासु नरस्य द्वितीयैषणायाम्। धनप्रार्थना। "प्राणेभ्यो ह्यनन्तरं धनमेव पर्य्येष्टव्यं भवति। तदुपकरणानि च कृषिपाशुपाल्यवाणिज्यराजोपसेवादीनि। यानि चान्यान्यपि सतामविगर्हितानि कर्म्माणि वृत्तिपुष्टिकराणि विद्यात्।" च.सू.११अ.।

**धन्यः।** पुं। अश्वकर्णशाले। লতা শাল। रा. नि.व.९। क्ली। द्रव्ये। वै.निघ.। कैवर्त्तमुस्तायां। ज.द.१२अ.। धन्याके।

**धन्यवृक्षः।** पुं। अश्वत्थवृक्षे। वै.निघ.।

**धन्या।** स्त्री। धन्याके। ধনে। हे.च.। उपमातरि। वै.निघ.। आमलक्याम्। मे.। निर्जलप्रदेशे। वै.निघ.।

**धन्याकम्।** क्ली। (Coriandrum sativum.) Coriander plant. स्वनामख्यातपण्यद्रव्ये। प.मु.। ধনে। हिं धनिया। तें कोचिमिरचेट्टु, धनियलु। ता. कोटमल्लि। तत्पर्य्यायः,—छत्रा, वितुन्नकं कस्तुम्बुरु (अ.), धन्यं, धन्याकं, तुम्बुरु, धनिकं, धनीयकं, कस्तुम्बुरी, धान्याकं, धन्या, तुम्बरी, धनेयकं (भरतधृतरत्नको.). धानकं, धान्यं, धानियं, धनिका, छत्राधान्यं, सुगन्धि, शाकयोग्यं, सूक्ष्मपत्रं, जनप्रियं, धान्यबीजं, बीजधान्यं, अवरिका, वेधकं (रा.), उग्रा (कै.), धेन्निका। भा.। च.द.सन्निपातज्व.चि.नागरादिः। "धन्याकं वृहतीद्वयम्।" पि.ज्व.चि.। "व्युषितं धन्याकजलम्।" पि. श्लेष्मज्व.चि. गुडूच्यादिः। गुणाः—तुवरं स्निग्धम अवृष्यं मूत्रलं लघु तिक्तं कटूष्णवीर्य्यं दीपनं पाचनं ज्वरघ्नं रोचकं ग्राहि स्वादुपाकं त्रिदोषघ्नं तृष्णादाहवमिश्वासकासकार्श्यक्रिमिघ्नञ्च। आर्द्रं तत् तद्गुणसम्पन्नं स्वादु विशेषतः पित्तघ्नञ्च। भा.पू.१भ.। मद.व.२।

**धन्वः।** पुं। दुरालभायाम्। वै.निघ.।

**धन्वकः (गः)।** पुं। धामनवृक्षे। च.द.मेह.चि.। "पाठार्ज्जुनधन्वकानां।"

**धन्वङ्गः।** पुं। धामनवृक्षे। ধামনা গাছ। गुणाः—"धन्वङ्गस्तु धनुर्वृक्षो गोत्रवृक्षः सुतेजनः। धन्वङ्गः कफपित्तास्रकासहृत्तुवरो लघुः। वृंहणो बलकृद्रुक्षः सन्धिकृद्व्रणरोपणः॥" भा.म.३भ.प्रमे.चि.। वंशे। वै.निघ.। [७अ.।

**धन्वचारी।** त्रि। निर्जलदेशचारिणि। वा.चि.

**धन्वजा।** स्त्री। सर्षप्याम्। आ.।

**धन्वतरुः।** पुं। सोमवल्ल्याम्। वै.निघ.।

**धन्वदुर्गम्।** क्ली। निर्जलदेशे। पुराणम्।

**धन्वनः।** पुं। धामनवृक्षे। ধামনা গাছ। र.मा.। हिं धामिनी। मं धमान्। कं उदुवे तत्पर्य्यायः,—पिच्छिलत्वक् (रा.), रक्तकुसुमः, धनुर्वृक्षः, महाबलः, रुजासहः, पिच्छिलकः, रुक्षस्वादुफलः। गुणाः—कटुः उष्णः काषायः कफघ्नः दाहशोषकरः संग्राही कण्ठदोषघ्नश्च। रा.नि.व.९। एतत्फलं कषायं हिमं स्वादु वातकफघ्नञ्च। सु.सू. ४६अ.।

**धन्वन्तरिः।** पुं। वैद्ये। क्षितौ आयुर्व्वेदप्रणेतरि देववैद्ये। तत्प्रादुर्भावः—"एकदा देवराजस्य दृष्टिर्निपतिता भुवि। तत्र तेन नरा दृष्टा व्याधिभिः परिपीड़िताः॥ तान् दृष्ट्वा हृदयं तस्य दयया परिपीड़ितम्। दयार्द्रहृदयः शक्रो धन्वन्तरिमुवाच ह॥ धन्वन्तरे सुरश्रेष्ठ भगवन् किञ्चिदुच्यते। योग्यो भवसि भूतानामुपकारपरो भव॥ उपकाराय लोकानां केन किं न कृतम्पुरा। त्रैलोक्याधिपतिर्विष्णुरभून्मत्स्यादिरूपवान्॥ तस्मात्त्वं पृथिवीं याहि काशीमध्ये नृपो भव। प्रतीकाराय रोगाणामायुर्व्वेदम्प्रकाशय॥ इत्युक्त्वा सुरशार्दूलः सर्व्वभूतहितेप्सया। समस्तमायुषो वेदं धन्वन्तरिमुपादिशत्॥ अधीत्य चायुषो वेदमिन्द्राद्धन्वन्तरिः पुरा। आगत्य पृथिवीं काश्यां जातो बाहुजवेश्मनि॥ नाम्ना तु सोऽभवत् ख्यातो दिवोदास इति क्षितौ। बाल एव विरक्तोऽभूच्चचार सुमहत्तपः॥ यत्नेन महता ब्रह्मा तं काश्यामकरोन्नृपम्। ततो धन्वन्तरिर्लोकैः काशिराजोऽभिधीयते॥ हिताय देहिनां स्वीया संहिता विहितामुना। अथं विद्यार्थिनो लोकान् संहितान्तामपाठयत्॥' भा.। चिकित्सादीपकनिदाननिघण्टादिप्रणेतरि।

**धन्वन्तरिग्रस्ता।** स्त्री। कटुकां। कट्की। श.च.। [विशेषे।

**धन्वन्तरिपञ्चकम्।** क्ली। धन्वन्तरिकृतग्रन्थ-

**धन्वन्तरिभागः।** पुं। औषधकरणार्थं तैल-

लभ्यौषधादिभागे। सिद्धरसानां ॥० भ. तत्रहृत-लौहानां ८ भ. लिहवटिकानां ७ भ.। वै.निघ.।

**धन्वपटः**। पुं। प्रियालवृक्षे।

**धन्वमांसम्**। क्ली। निर्जलदेशपशुमांसे। वा. चि.१२अ.। See जाङ्गलमांसम्।

**धन्वयवासः (कः)**
**धन्वयासः** } पुं। दुरालभायाम्। रा. नि.व.४। सि.यो.रक्तार्श-। च.। "धन्वयवासाः सनागराः कथिताः।" च.सू. ४अ.। सि.यो.सन्निपात-ज्व.चि.अष्टादशाङ्गकषाये।

**धन्वी** (न्)। पुं। मरुभूमौ। रा.नि.व.२। स. चि.१अ.।

**धन्वामिषम्**। क्ली। जाङ्गलपशुमांसे।

**धन्वी** (इन्)। पुं। दुरालभायाम्। रा.नि.व.४। अर्ज्जुनवृक्षे। रा.नि.व.९। वकुलवृक्षे। বকুল। रा.नि.व.१०।

**धमनः**। पुं। नलतृणे। নল গাছ। रा.नि.व. ८। निम्बवृक्षे। নিম্ গাছ। रा.नि.व.९।

**धमनिः (नी)**। स्त्री। पृश्निपर्ण्याम्। চাকুলে। रा.नि.व.४। उत्तरापथप्रसिद्ध-नालिकानामगन्धद्रव्ये। भा.। हे.च.। नखीनामगन्धद्रव्ये। हरिद्रायाम्। ग्रीवायाम्। हे.। शिरायाम्। रा.नि.व.१८। शिराविकार एव धमनी। धमन्यश्च नाभिजाः, तत्संख्या च २४। तेषु दशोर्द्धगाः, शेषास्तिर्य्यगाश्च। तेषूर्द्धगाः रूपरसगन्धस्पर्शशब्दप्रश्वासोच्छ्वासजृम्भ-क्षुत्हास्यभाषणरोदनगानादिकर्म्म सम्पादयन्तो देहं धारयन्ति। ताश्च हृदयं गत्वा प्रत्येकं शाखात्रयं विस्तारयन्त्यः ३० संख्या भवन्ति। तासु प्रत्येकं द्वे द्वे कृत्वा दश धमन्यो वातपित्तकफ-शोणितरसान् वहन्ति। अष्टौ च रूपादीनि गृह्णन्ति। शिष्टासु द्वादशसु द्वाभ्यां वाङ्निष्पत्तिः, द्वाभ्यां घोषणं, द्वाभ्यां निद्रा, द्वाभ्यां जागरणं, द्वाभ्याञ्च रक्तवहनं भवति शिष्टेन स्तनसंस्थितेन द्वयेन च स्त्रियाः स्तन्यवहनं पुंसश्च शुक्रवहनं स्तनाभ्यां भवति। अधोगास्तु दश पित्ताशयमधिगम्य त्रिंशत्सम्पन्नाः। तासु द्वे द्वे वातपित्तकफरक्तरसान् वहतः। शिष्टाभ्यश्च द्वे अन्नमाश्रित्यान्नं वहतः। द्वे जलं वहतः, द्वे वस्तिमाश्रित्य मूत्रं वहतः। द्वाभ्यां पुरुषस्य शुक्रं स्त्रिय आर्त्तवञ्च प्रादुर्भवति द्वे च तद्द्वयं निःसारयतः। द्वे स्थूलान्त्रनिबद्धे भूत्वा पुरीषं निःसारयतः। अवशिष्टाश्चाष्टौ तिर्य्यग्गा-मिन्यो स्वेदं निःसारयन्ति। एताश्चाधोगा धमन्यः पक्वाशयकटिमूत्रपुरीषगुह्यवस्तिमेढ्रपादप्रभृतीन्याश्रित्य तेषां पोषणं सम्पादयन्ति. तिर्य्यगाश्च धमनीचतुष्टयं प्रत्येकमसंख्यशाखाविभक्तं देहं रन्ध्रभूयिष्ठं करोति। एतासाञ्च मुखानि प्रतिलोमकूपं संलग्नानि। तेभ्यश्च मुखेभ्यः स्वेदा निर्गच्छन्ति, देहरसो बहिरन्तश्च सन्तर्पयति। अभ्यङ्गादिना च तैलादिवीर्य्यमन्तःशरीरं प्रविश्य त्वक्पाकादिकं करोति तेनैव च शुभाशुभस्पर्शज्ञानं भवति।" सु. शा.९अ.। भा.।

**धमन्यः**। पुं। धन्वनवृक्षे।

**धम्मिः**। स्त्री। अन्त्रे। धमन्याम्। हारा.।

**धयनम्**। क्ली। पाने। रा.नि.व.३०।

**धरः**। पुं। कार्पासतूलके। मे.। पर्व्वते। कूर्म्मराजे। मे.।

**धरणः**। पुं। तुलायां। स्तने। धान्ये। हे.च.। तण्डुले। वै.निघ.। क्ली। कालिङ्गचतुर्माषमित-माने। रौप्यषोड़शमाषे। वै.निघ.।

**धरणी**। धारणीकन्दे। रा.नि.व.७। शिरायां। रा.नि.व.१८। खदिरवृक्षे। रा.नि.व.२३। पुन-र्नवायाम्। मेदायाम्। वै.निघ.। शाल्मलिवृक्षे। श.च.। पृथिव्याम्।

**धरणीकन्दः**। पुं। धरणीकन्दे। रा.नि.व.७।

**धरणीकीलकः**। पुं। पर्व्वते। शब्दर.।

**धरणीधरः (ध्रः)**। पुं। पर्व्वते। कच्छपे। रा. नि.व.१९।

**धरणीपूरः (प्लवः)**। पुं। समुद्रे। शब्दर.। त्रि.।

**धरणीबन्धः**। पुं। अरिष्टबन्धने। সর্পাঘাতে বন্ধনবিশেষ। स शाखादष्टस्य दंशदेशाच्चतुरङ्गुले न्याय्यः। यदाह वाभटः—"दंशस्योपरि बध्नीया-दरिष्टां चतुरङ्गुले। क्षौमादिभिर्वेणिकया सिद्धै-र्मन्त्रैश्च मन्त्रवित्॥" च द विष.चि.।

**धरणीया**। स्त्री। धारणीकन्दे।

**धरणीरुहः**। पुं। वृक्षे। अ.।

**धरा**। स्त्री। शिरायाम्। नाड्याम्। रा.नि.व. १८। वसायाम्। गर्भाशये। मे.।

**धराकदम्बः (कः)**। पुं। कदम्बवृक्षे। हारा.।

**धराङ्कुरः**। पुं। भूच्छत्राके। वै.निघ.।

**धराकदम्बः**। पुं। धाराकदम्बे। हा.।



**धराजकुष्माण्डः**। पुं। भूमिकुष्माण्डे। ভূঁই কুমড়া। चि.क्र.क.स्त्रीरो.चि.।

**धराफलः**। पुं। कर्म्मरङ्गे। কামরাঙ্গা। रा.।

**धराफला**:। स्त्री। वार्त्ताक्याम्।

**धरिमा** (न्)। पुं। तुलायाम्। তরাজু। आकारे। वै.निघ.।

**धरुणः**। पुं। जले। मे.।

**धर्त्तम्**। क्ली। गृहे। उ.।

**धर्त्तूरः**। पुं। शुक्लधुस्तूरे। वै.निघ.। [ धनुषि।

**धर्म्मः**। पुं। स्वभावे। आचारे। गुणे। मे.।

**धर्म्मघ्नः**। पुं। विभीतकवृक्षे। वै.निघ.।

**धर्म्मणः**। पुं। धमन्यवृक्षे। ধামনা গাছ। र.मा.। सर्पभेदे। ঢেমনা সাপ। मे.।

**धर्म्मद्रवी**। स्त्री। गङ्गायाम्। त्रि.।

**धर्म्मद्वेषी** (इन्)। पुं। विभीतकवृक्षे। वै.निघ.।

**धर्म्मपत्तनम्**। क्ली। मरिचे। रा.नि.व.६।

**धर्म्मपत्रः**। पुं, क्ली। उदुम्बरवृक्षे। श.च.।

**धर्म्मपालः**। पुं। खड्गे। शब्दर.।

**धर्म्मवृक्षः**। पुं। अश्वत्थवृक्षे। रा.नि.व.११।

**धर्म्मसूः**। पुं। धूम्याटपक्षिणि। श.र.।

**धर्म्मिणी**। स्त्री। रेणुकायाम्। রেণুক। रा.नि.व.। [ जाड्ये।

**धर्षः (र्षितम्)**। पुं, क्ली। मैथुने। त्रिका.।

**धलखड़ः (कः)**। पुं। स्वनामख्यातवृक्षे। ধলা আঁকোড়। श.च.।

**धलमङ्कठः**। धलखड़वृक्षे। मे.।

**धवः**। पुं। (Anogeissus latifolia. Syn. Conocarpus latifolia.) स्वनामख्यातवृक्षे। ধাওয়া গাছ। र.मा.। मं धामोड़ा। कं दिण्डिग। तें नारिंजचेट्टु। तत्पर्य्यायः,—धुरन्धरः, शकटाख्यः (रा.) दृढ़तरुः, गौरः, कषायः, मधुरत्वक्, शुक्लवृक्षः, शुक्लाङ्गः, पाण्डु-तरुः, धवलः, पाण्डुरः। गुणाः—कटुः कषायः कफघ्नः वातघ्नः पित्तकोपनः रुच्यः दीपनश्च। राज.। 'धवः शीतः प्रमेहार्शःपाण्डुपित्तकफापहः। मधुरस्तुवरस्तस्य फलञ्च मधुरं मनाक्॥" भा.। अन्यच्च—'धवः कषायः कटुकः कफघ्नोऽनिल-नाशनः। पित्तप्रकोपणो रुच्यो विज्ञेयो दीपनः परः॥" फलमीषन्मधुरम्। रा.नि.व.९। काके। त्रिका.। मनुष्ये। अम.। खदिरे। र.सा.सं. मृत्युञ्जयलौहे। [ वै.निघ.।

**धवनी**। स्त्री। पृश्निपर्ण्याम्। চাকুলিয়া।

**धवलः**। पुं। धववृक्षे। ধাওয়া গাছ। रा.नि. व.९। अर्ज्जुनवृक्षे। भा.। शङ्खे। चीनकर्पूरे। रा.नि.व.१२। धातकीवृक्षे। वै.निघ.। क्ली। श्वेतमरिचे। रा.नि.व.६। त्रि। शुक्ले। सुन्दरे। त्रिका.। [ नि.व.१९।

**धवलपक्षः (क्षी इन्)**। पुं। हंसे। रा.

**धवलपाटली**। स्त्री। शुक्लपाटल्याम्। শ্বেত পারুল। रा.नि.व.१०।

**धवलपुनर्नवा**। स्त्री। श्वेतपुनर्नवायाम्। चक्र.।

**धवलमृत्तिका**। स्त्री। खटिकायाम्। ফুলখড়ি। रा.नि.व.१३।

**धवलयावनालः**। पुं। श्वेतवर्णयावनालवृक्षे। শাদা জনার। मं श्वेतजुवारी। कं बिलिय-जोल। तत्पर्य्यायः,—पाण्डुरः, तारतण्डुलः, नक्षत्रकान्ति-विस्तारः, वृत्तः, मौक्तिक-तण्डुलः। अयं शिम्बीधान्ये वर्त्तते। गुणाः—शैत्यः बल्यः त्रिदोषघ्नः वृष्यः रुचिप्रदः अर्शोघ्नः पथ्यः गुल्मव्रणघ्नश्च। रा.नि.व.१६।

**धवलशारिवा**। स्त्री। शुक्लशारिवायाम्। অনন্তমূল। वै.निघ.।

**धवला**। स्त्री। श्वेतशारिवायाम्। See अनन्ता श्वेतसारिवा च। भा.पू.१भ.। गवि। গাই গরু। त्रिका.। वचायाम्। श्वेतापराजितायाम्। र.चि. पापरोगान्तकरसे।

**धवली**। स्त्री। शुक्लगवि। अम.।

**धवलेक्षुः**। पुं। श्वेतेक्षौ। रा.नि.व.१४।

**धवलोत्पलम्**। क्ली। कुमुदपुष्पे। নালফুল, হেলা ফুল। रा.नि.व.१०।

**धवाशकः**। पुं। वायौ। उ.।

**धवित्रम्**। क्ली। मृगचर्म्मनिर्म्मितव्यजने। अम.।

**धाकः**। पुं। वृषे। क्ली। अन्ने। स्तम्भे। उणा.।

**धातकी**। स्त्री। (Woodfordia floribunda. Grislea tomentosa.) स्वनामख्यात-पुष्पवृक्षे। ধাইফুলের গাছ। हिं धावइ,

धाश्रीला। मं धायटी। तें आरेपुव्व, जार्गि। उत्, जातिकी। तत्पर्य्यायः,—धातृपुष्पी, धातुपुष्पी, धाती (शब्दर.), वह्निपुष्पी, ताम्रपुष्पी, धावणी, अग्निज्वाला, सुभिक्षा, पार्व्वती, बहुपुष्पिका, कुञ्जरा, सीधुपुष्पी, कुञ्जरा, मद्यवासिनी, गुच्छपुष्पी, सङ्गपुष्पी, रोध्रपुष्पिणी, तीव्रज्वाला, वह्निशिखा, मद्यपुष्पी। गुणाः—कटुः उष्णा मदकृद्विषघ्नी प्रवाहिकातिसारघ्नी विसर्पव्रणघ्नी च। रा.नि.व.६। "धातकी कटुका शीता मृदुकृत्तुवरा लघुः। तृष्णातिसारपित्तास्रविषक्रिमिविसर्पजित्॥" भा.। शीता रक्तपित्तघ्नी च। राज.।

**धातकीकुसुम(पुष्प)म्।** क्ली। धातकीपुष्पे। धाइ फुल। सु.सू.३८अ. अम्बष्ठादिः। च.सू.४अ.।

**धातक्यभिषुतम्।** क्ली। धातकीपुष्पकृत-सुराभेदे। गुणाः—हृद्यं रुच्यं रोचनं दीपनञ्च। च.सू.२७अ.।

**धातक्यादिचूर्णम्।** क्ली। बालरोगाधिकारे औषधम्। पाठः—"धातकीविल्वधन्याकलोध्रेन्द्र-यववालकम्। लिह्यः क्षौद्रेण बालानां ज्वरातीसारवान्तिजित्॥" धाइफुल, বেলশুঁটা, धने, লোধ, ইন্দ্রযব, বালা প্রত্যেক চূর্ণ সমভাগ মধু দ্বারা লেহন। सा.कौ.।

**धाता** पुं। स्रष्टरि। शरीरादिसंयोगस्य धारणहेतौ। सु.शा.१अ.।

**धातुः।** पुं। खनिजेषु स्वर्णादिसप्तविधाष्टविध-नवविधपदार्थेषु। धाउ। यथा—काञ्चनं रजतं ताम्रं कांस्यं पित्तलं नागं वङ्गं लौहञ्चेत्यष्टौ। रा.नि.व.१८। स्वर्णरौप्यताम्रवङ्गयशदसीसलौहानीति सप्त। भा.। तथा—"हेमताराऽरनालाश्च ताम्रवङ्गे च तीक्ष्णकम्। कांस्यकङ्काललौहञ्च धातवो नव कीर्त्तिताः॥" सुखबोधः। "त्रिविधन्तु सुवर्णं स्यादष्टधा रजतं भवेत्। पञ्च प्रकारकं ताम्रं वङ्गन्तु द्विविधं स्मृतम्। यशदं त्रिविधं प्रोक्तं भवेन्नागस्तु षड्विधः। अष्टधा लौहमुद्दिष्टमिति सप्तैव धातवः॥" अर्क.चि.। गुणाः—"वलीपलितखालित्यकार्श्या-बल्यज्वरामयान्। निवार्य्य देहं दधाति नृणां तद्धातवो मताः॥" भा.पू.१भ.धातव.। देहधारक-वस्तुविशेषे। स च वातपित्तकफरूपः देहस्य धारणात्तस्य धातुशब्दवाच्यता। यथा—"धारणाद्धातवस्ते स्युर्वातपित्तकफास्त्रयः।" वैद्यकम्। गैरिक-मनःशिलाद्यश्मविकारे। प.मु.। शरीरस्थसप्त-धातुषु रसरक्तमांसमेदोऽस्थिमज्जशुक्रेषु। "रसादक्तं ततो मांसं मांसान्मेदोऽस्थि तद्भवं। अस्थ्नोर्मज्जा ततः शुक्रमित्यमेषां विनिष्क्रमः॥" रा.नि.व.१८। धातूनाञ्च कर्म्माणि प्रीणनजीवनलेपस्नेहधारणपूरण-गर्भोत्पादकानि। गिरिमृत्तिकायां। रा.नि.व.१३।

**धातुक(ज)म्।** क्ली। शिलाजतुनि। वै. निघ.।

**धातुकाशीष(सीस)म्।** क्ली। काशीसे। হিরেকস্। रा.नि.व.१३।

**धातुकी।** स्त्री। धातकीवृक्षे। वै.निघ.।

**धातुग्राही (इन्)।** पुं। खर्परे। वै.निघ.

**धातुघनः।** पुं। शरीरस्थ-रस-धातौ।

**धातुघ्नम्।** क्ली। काञ्जिके। हे.च.।

**धातुचेतनकरम्।** क्ली। दुग्धे। आमलके। द्विदले। वै.निघ.।

**धातुद्रावकम्।** क्ली। टङ्कणक्षारे। সোহাগা। वै.निघ.।

**धातुनाशनम्।** क्ली। काञ्जिके। त्रिका.।

**धातुपः।** पुं। शुक्रे। रसे। श.च.।

**धातुपाकः।** पुं। रसादिधातुह्रासे। तल्लक्षणम्—"निद्रानाशो हृदिस्तम्भो विष्टम्भो गौरवा-रुची। अरतिर्बलहानिश्च धातूनाम्पाकलक्षणम्।" वैद्यकम्।

**धातुपुष्पिका (ष्पी)।** स्त्री। धातकीवृक्षे। प.मु.। भा.।

**धातुभृत्।** पुं। पर्व्वते। शब्दर.।

**धातुमलः।** पुं। शीसके। रसादिमलेषु। রসরক্তাদির মল। "मलिनीकरणान्मलाः॥" वैद्यकम्। "कफः पित्तं मलः खेषु प्रस्वेदो नखलोम च। नेत्रविट् त्वचु च स्नेहो धातूनां क्रमशोमलाः॥ भा.।

**धातुमारिणी।** स्त्री। टङ्कणक्षारे। श.च.।

**धातुमारी (इन्)।** पुं। गन्धके। वै.निघ.।

**धातुमाक्षिकम्।** क्ली। स्वर्णमाक्षिके। रा.नि.व.१३। धातुकाशीषे। হিরেকস্। वै.निघ.।

**धातुराजः (कम्)।** पुं, क्ली। वीर्य्ये। शुक्र। वै.निघ.। श.च.।

**धातुवल्लभम्।** क्ली। टङ्कणे। সোহাগা प.मु.।



**धातुवादी (इन्)।** पुं। खनिजविद्याभिज्ञे।

**धातुविट्।** स्त्री। शीसके। वै.निघ.।

**धातुविषम्।** क्ली। हरितालादौ। र.सा.सं.।

**धातुवृद्धिः।** स्त्री। रसादिवृद्धौ, रसादिधातु-साम्ये। च.सू.१२अ.।

**धातुवृद्धिकरः।** पुं। धातुवर्द्धकद्रव्ये, अश्व-गन्धावृषलोशतावर्य्यादौ।

**धातुवैरी (इन्)।** पुं। गन्धके। श.च.।

**धातुवैषम्यम्।** क्ली। विकारागमरूपकार्य्य-योनौ। च.वि.८अ.।

**धातुशेखरम्।** क्ली। Green sulphate of Iron. धातुकाशीषे। হিরেকস্। हे.च.।

**धातुशोधनम्।** क्ली। शीसके। वै.निघ.।

**धातुशोधनकरी।** स्त्री। हरीतक्याम्। वै.निघ.।

**धातुसम्भवम्।** क्ली। शीसके। वै.निघ.।

**धातुसाम्यम्।** क्ली। विकारोपशमरूपकार्य्ये। च.वि.८अ। आरोग्ये। च.सू.१अ.।

**धातुस्तम्भनकरम्।** क्ली। जातीफले। वै निघ.।

**धातुहा (न्)।** पुं। गन्धके। वै.निघ.।

**धातुक्षयकासः।** पुं। धातुक्षयकरकासरोगे। ক্ষয়কাস। निदा.। [ रा.।

**धातूपरसः।** पुं। भक्तमण्ड। ভাতের মাড়।

**धातूपलः।** पुं। खड़िकायाम्। খড়ি। वै.निघ.।

**धात्रिका।** स्त्री। आमलक्याम्। रा.नि.व.११।

**धात्री।** स्त्री। आमलक्याम्। আমলা। रा.नि.व.११। भा.पू.१भ.। See अकरा। उप-मातरि। दाइ। तल्लक्षणं—"पीताथ यदि बालस्य विदध्यादुपमातरम्। सुविचार्य्य गुणान् दोषान् कुर्य्याद्धात्रीं तदेदृशीम्। सवर्णां मध्यवयसां सच्छीलां मुदितां सदा। शुद्धदुग्धां बहुक्षीरां सवत्सामतिवत्सलाम्। स्वाधीनामल्पसन्तुष्टां कुलीनां सज्जनात्मजाम्। कैतवेन परित्यक्तां निजपुत्राश्च शिशौ॥" मा.। धात्रीकर्म्म। यथा—"धात्री तु यदा स्वादु-बहुल-शुद्धदुग्धा स्यात्, तदा स्नातानुलिप्ता शुक्लवस्त्र परिधाय ब्राह्म्याद्यौषधं धारयन्ती कुमारं प्राङ्मुखं प्रथमं दक्षिणं स्तनं पाययेत्।" इत्यादि। च.शा.८अ.।

**धात्रीपत्रम्।** क्ली। तालीशपत्रे। रा.नि.व.६। आमलकीपत्रे।

**धात्रीफलम्।** क्ली। आमलकफले। আমলা। मद.व.१। (ला) स्त्री। आमलक्याम्। আমলা গাছ। रा.नि.व.११।

**धात्रीलौहम्।** क्ली। शूलाधिकारे। प्रथमः पाठः—शुद्धमण्डूरं ६ प. यवः ४ प. पाकार्थंजलं २ श. शि.॥० श. शतावरीरसः ८ प. आमलकी-स्वरसः ८ प. दधि ८प. दुग्धं ८प. भूमिकुष्माण्ड-स्वरसः ४ प. घृतं ४ प. इक्षुरसः ४ प.। एकत्र पक्त्वा पाके सिद्धे प्रक्षेपः—जीरकचूर्णं धान्यकचूर्णं त्वक्चूर्णं तेजपत्रचूर्णम् एलाचूर्णं गजपिप्पलीचूर्णं मुस्ताचूर्णं हरीतकीचूर्णम् अभ्रभस्म लौहभस्म रेणुक-चूर्णं त्रिफलाचूर्णं तालीशचूर्णं नागकेसरचूर्णं प्र. २तो.। শুদ্ধমণ্ডুর ৬প. যব ৪প. পাকার্থ জল ২শ.শে.॥০ শ.। শতমূলীরস ৮প. আমলকীরস ৮ প. দধি ৮ প. দুগ্ধ ৮ প. ভূমিকুষ্মাণ্ডের রস ৪ প. ঘৃত ৪ প. ইক্ষুরস ৪ প.। একত্র পাক সিদ্ধ হইলে, প্রক্ষেপ—জীরা, ধনে, গুড়ত্বক্, তেজপত্র, এলাইচ, গজপিপুল, মুতা, হরীতকী, অভ্র, লৌহ, রেণুক, ত্রিফলা, তালীশপত্র, নাগেশ্বর প্রত্যেক চূর্ণ ২তো.। र.सा.सं.। सा.कौ.। द्वितीयः—धात्रीचूर्णं ८ प. मण्डूरचूर्णं ४ प. यष्टिमधुचूर्णं २ प. गुडूचीक्वाथे सप्तवारं भावयेत्। भावनाक्वाथार्थं क्वाथ्यद्रव्यम् औषधतुल्यमादाय ८ गुणे वारिणि साधयेत्। আমলকীচূর্ণ ৮ প. মণ্ডুরলৌহচূর্ণ ৪প. যষ্টি-মধুচূর্ণ ২ প.। গুলঞ্চক্বাথে সপ্তাহ ভাবনানন্তর শুষ্ক করিয়া ঘৃতভাণ্ডে রাখিবে। ভাবনার ক্বাথ ঔষধের তুল্য লইয়া ৮ গুণ জলে প্রস্তুত করিবে। तृतीयः पाण्डौ—आमलक-लौहत्रिकटुमनःशिलाचूर्णं मधु घृतं शर्करा प्र. समम्। আমলাচূর্ণ, লৌহ, ত্রিকটু, মনছাল, মধু ঘৃত, চিনি প্রত্যেক সমান। चतुर्थः वाजीकरणे—आमलकचूर्णं ८ प त्रिफलाक्वाथेन २१ भावयित्वा ; अथ मृतलौहमधुघृतशर्कराः प्र. २ प. मिश्रयेत्। আমলাচূর্ণ ৮ প. ত্রিফলাক্বাথে ২১ ভাবনা দিবে। মৃতলৌহ ২ প. মধু ২

प. घृत २ प. शर्करा २ प. একত্র মিশ্রিত করিবে। रस.र.। अन्यः पित्तरोगे—"धात्रीचूर्णस्याष्टौ पलानि चत्वारि लौहचूर्णस्य। यष्टीमधुकरजश्च द्विपलं दद्यात् पुटे घृष्टम्। धात्र्याश्च क्वाथेन तच्चूर्णं भाव्यञ्च सप्ताहं। चण्डातपेन संशुष्कं भूयः पिष्टं घटे स्थितं। घृतेन मधुना युक्तं भोजनादन्तमध्यतः। त्रीन् वारान् भक्षयेन्नित्यं......।" र. सा.सं.।

**धात्रीश्वरी।** स्त्री। धातक्याम्। रा.।

**धात्रीषट्पलकघृतम्।** क्ली। गुल्मे घृतम्। "धात्रीफलानां स्वरसैः षट्पलं विपचेद्घृतम्। शर्करासैन्धवोपेतं तद्धितं सर्व्वगुल्मिनाम्॥" धात्रीरसः घृतसमः। रस.र.। भैष.।

**धात्रेयि(यी)का।** स्त्री। आमलक्याम्। रा.नि.व.११। उपमातरि।

**धात्र्यरिष्टम्।** क्ली। पाण्डुरोगे। "धात्रीफलसहस्रे द्वे पीड़यित्वा रसन्तु तं। क्षौद्राष्टांशेन संयुक्तं कृष्णार्द्धकुड़वेन च। शर्करार्द्धतुलोन्मिश्रं पक्वं स्निग्धे घटे स्थितं। प्रपिबेन्मात्रया प्रातः......।" च.चि.२० अ.।

**धात्र्यादिः।** पुं। चातुर्थिकज्वरघ्ने धात्रीमुस्तामृतक्षौद्रकृते कषाये। वा.चि.१अ.।

**धानकः।** पुं। माषपरिमाणे। च.कल्प.१२अ.। क्ली। धन्याके। मद.व.२।

**धाना (नाः)।** स्त्री। चिपीटके। চিঁড়ে। प.मु.। भृष्टयवादौ। ভাজা যবাদি। हिं बहुड़ा। गुणाः—विष्टम्भिनी रूक्षा तर्पणी लेखनी गुरुश्च। वा.। "यवादयश्च ये भृष्टा धानास्ते परिकीर्त्तिताः।" रा.नि.व.६। "धानाः स्युर्दुर्जरा रूक्षास्तृट्प्रदा गुरवस्तु ताः। तथा मेहकफच्छर्द्दिनाशिन्यः सम्प्रकीर्त्तिताः॥". धन्याके। ধনিয়া। भा.। शुष्कभृष्टयवे। सु.चि.१०अ.।

**धानाकाः।** स्त्री। धान्याके। ধনে। वा. सू. १५अ.गुडूच्यादिः। "धानाकारक्तचन्दनम्।" (बहुवचनान्ताः)।

**धानाचूर्णम्।** क्ली। भृष्टयवादिचूर्णे। যবাদির ছাতু। हे.च.।

**धानाली।** स्त्री। वृक्षभेदे।

**धानिका।** स्त्री। धान्यके। ধনে। वै.निघ. अ.सा.चि.यवान्यादौ।

**धानी (इन्)।** पुं। पीलुवृक्षे। रा.।

**धानी।** स्त्री। धान्यके। ধনে। मद.व.२। पीलुवृक्षे। रा.नि.व.११।

**धानुष्का।** स्त्री। अपामार्गवृक्षे। আপাং গাছ। श.च.।

**धानुष्यः।** पुं। वंशे। रा.नि.व.८।

**धानेय(क)म्।** क्ली। धन्याके। रा.नि.व.६। आर्द्रधान्यके। কাঁচা ধনিয়া। वै.निघ.।

**धान्धा।** स्त्री। एलायाम्। श.च.।

**धान्यम्।** क्ली। ४ तिलमाने। ६ गुञ्जामाने। धन्याके। ধনে। रा.नि.व.६।२२। भूम्यामलक्यां। रा.नि.व.२३। (Oryza sativa.) Common rice plant. शाल्यादिवृक्षे। सतुषतण्डुले। ধান। तत्पर्य्यायः,—भोग्य, भोगार्ह, अन्नं, आद्यं,जीवनधनं, सुखकारि, व्रीहिः। धान्यं त्रिधा शालिषष्टिकव्रीहिभेदतः। यथा—"शालयो हैमनास्तत्र षष्टिका ग्रैष्मिका अपि। व्रीहयस्त्वाशवः ख्याता प्रावृट्कालसमुद्भवाः॥" राज.३प.। शूकशिम्बीतृणधान्यभेदेन त्रिधा। रा.नि.व.१६। शालिव्रीहिशूकशिम्बीक्षुद्रधान्यभेदेन पञ्चविधम्। 'शालयो रक्तशाल्याद्या व्रीहयः षष्टिकादयः। यवादिकं शूकधान्यमुद्गाद्यं शिम्बिधान्यकम्। कङ्ग्वादिकं क्षुद्रधान्यं तृणधान्यञ्च तत् स्मृतमिति॥" भा.पू.१भ.धा.व.। अष्टादशविधम्। यथा—"रक्तशालिर्महाशालिः कलमा षष्टिकापरा। खञ्जरी टोपशाद्बौ च जीरकाख्या कपिञ्जला। सौगन्धी शूकला चान्या तिलवासो कचोरका। गरुड़ा रुक्मवन्ती च कलमान्या तथापरा। विल्वजा मागधी पीता ता अष्टादश शालयः॥ कङ्गुश्चतुर्विधः प्रोक्तः श्यामाकश्चीनकः कटः। कोद्रवो द्विविधः प्रोक्तो वंशवीजं शरोद्भवं। कुसुम्भवीजं तोली च योनरी च गवेधुकः। द्विजाङ्गला राजनी च क्षुद्रधान्यगणस्त्वयम्॥" क्षुद्रधान्यम्। त्रिधा यवश्च गोधूमो मुद्गः षड्विध ईरितः। द्विविधः प्रोच्यते माषो राजमाषस्त्रिधा मतः। मकुष्ठस्तुवरी त्वेधा निष्पावकमसूरकौ। त्रिधा चणक उद्दिष्टः कलायश्च त्रिपुण्ड्कः॥" अत्रि.। एषां गुणाः स्वस्वपर्य्याये द्रष्टव्याः। शरद्ग्रीष्मोद्भवधान्यगुणाः—"धान्यं शरद्ग्रीष्मभवं पाकेऽम्लं पित्तकृद्गुरु।" ऋतुसन्धिजधान्यगुणाः—"ऋतुसन्धिभवञ्चोष्णं पित्तलं



कफनाशनम्॥" राज.३प.। स्थलजधान्यगुणाः—"स्थलजं कफ-पित्तघ्नं कषायं कटुपाकि च। किञ्चित् तु तिक्त-मधुरं पवनानलवर्द्धनम्॥" वापितावापितधान्यगुणाः—"वापितं गुरु तद्धान्यं किञ्चिद्धीनमवापितम्।" रोप्यातिरोप्यधान्यगुणाः—"रोप्यातिरोप्ये लघुनी शीघ्रपाके गुणोत्तरे। अदाहिनी दोषहरे बल्ये मूत्रविवर्द्धने॥" यच्छूकसमन्वितं व्रीह्यादिकं तच्छूकधान्यम्, शिम्बीनिगूढ़ं मुद्गमकुष्ठकादि शिम्बीधान्यम्। तृणोद्भवतया तृणधान्यम्। इति। "पक्वं हरितलूनञ्च धान्यं सर्व्वगुणावहम्। शुष्कं लूनन्तु निःसारं रूक्षं तत्सत्त्वनाशनम्॥" इति हरितलूनान्नशुष्कलूनान्नगुणाः। "कोशधान्यं नवस्वल्पं मधुरं वत्सरोषितं। निर्द्दोषं लघु पथ्यञ्च तद्वर्षादचिरम्भवेत्। नवं धान्यमभिष्यन्दि लघु संवत्सरोषितं। द्वाब्दोषितं लघु पथ्यं त्रिवर्षादबलम्भवेत्॥" इति नवधान्यजीर्णधान्यगुणाः। धान्य वापितम् उत्तमं, तदेव छिन्नोद्भवं मध्यमम्। दग्धभूमौ वने वा वापितं छिन्नोद्भवं धान्यं विण्मूत्रबन्धकरम्। क्षारोदकसमुत्पन्नं श्लेष्मरोगघ्नम्। सुस्निग्धभूमिजम् ओजोबलकरम्। बालुकाभूमिजम्बलपुष्टिहरञ्च। रा नि.व.१६।

**धान्यकम्।** क्ली। स्वनामख्यातपण्यद्रव्ये। ধনে। हिं कोथुम्बुरि। धनिया। मद.व.२। गुणाः—मधुरं शीतलं कषायं पित्तघ्नं ज्वरकासतृष्णाच्छर्द्दिकफघ्नं दीपनञ्च। रा.नि.व ६। च.सू.४अ.। च.द.ज्वराति, चि.। "विल्वधान्यकनागरैः।" पुं। माषमितमाने। ৬ কুঁচ। प.प.१ख.।

**धान्यकञ्चुकी (इन्)।** पुं। धान्यत्वचि। ধানের খোলা। गुणाः—धान्यगुणयुक्तः। रा.नि.व.१६।

**धान्यकतण्डुलः।** पुं। कण्डितधान्यकतण्डुले। ধানের চা'ল। भा म १भ अन्तकच्च.चि.धान्यकक्वाथे। "प्रातर्धान्यकतण्डुलक्वाथः।"

**धान्यकल्कः।** पुं। तुषे।

**धान्यचतुष्कम्।** क्ली। अतीसारे धान्यमुस्तकबालकविल्वकृतकषायविशेषे। वैद्यकसं.।

**धान्यचमसः।** पुं। चिपीटके। চিঁড়ে। त्रिका.।

**धान्यजम्।** क्ली। धान्ये। रा.नि व.६।

**धान्यतुषोदम्।** क्ली। धान्यतुषकृतसन्धानविशेषे। एतदभावे काञ्जिकम्। भि.यो.अजी.चि.।

**धान्यतैलम्।** क्ली। गोधूमयावनालव्रीहियवादिजतैले। गुणाः—त्रिदोषशमनं कण्डूकुष्ठादिहरं चक्षुष्यञ्च। रा.नि.व.१५।

**धान्यपञ्चकम्।** क्ली। आमशूलादौ कषाये। "धान्यकं नागरं मुस्तं बालकं विल्वमेव वा। आमशूलविबन्धघ्नं पाचनं वह्निदीपनम्॥" वैद्यकसं.। पञ्चविधधान्येषु शालिव्रीहिशूकशिम्बीक्षुद्राख्येषु। "शालिधान्यं व्रीहिधान्यं शूकधान्यं तृतीयकं। शिम्बीधान्यं क्षुद्रधान्यमित्युक्तं धान्यपञ्चकम्॥" भा.।

**धान्यपटोलः।** पुं,क्ली। पित्तश्लेष्मज्वरे योगविशेषे। अत्र धान्यस्य १० माषाः पटोलस्य च ६ माषाः। सि.यो.ज्व.चि.।

**धान्यपानकम्।** क्ली। धान्यकृतपानकविशेषे। ধানের পানা। तस्य साधनविधिः—"शिलायां साधु सम्पिष्टं धान्यकं वस्त्रगालितं। शर्करीदक्षसंयुक्तं कर्पूरादिसुसंस्कृतं। नूतने मृण्मये पात्रे स्थितं पित्तहरं परम्॥" भा.।

**धान्यपिप्पली।** स्त्री। आमज्वरे। ज्वरे दीपनी पाचनी च। धान्यादीनां प्रत्येकं ६ माषा ४ रतिः। यो.रत्ना.।

**धान्यभक्षकः (नः)।** पुं। गृहकर्त्तरि पक्षिणि। বাবুই পাখী। रा.।

**धान्यमञ्जरी।** स्त्री। धान्यशीर्षके। ধানের শীষ।

**धान्यमण्डः।** पुं,क्ली। धान्यकृतमण्डे। ধানের মণ্ড। गुणाः—"धान्यमण्डं पित्तहरं श्रमघ्नञ्चाश्मरीहरं। वात रक्तशमनं ग्राहि सन्दीपनम्परम्॥" अत्रि,१२अ.।

**धान्यमद्यम्।** क्ली। धान्यकृतमद्ये। ধেনো মদ। गुणाः—गुरु विष्टम्भि च। रा.नि.व.१४।

**धान्यमाषः।** पुं। कलाये, माषे। वै.निघ.। षोड़शसर्षपपरिमाणे। च.कल्प.१२अ.।

**धान्ययोनिः।** पुं। काञ्जिके। अ.टि.भ.।

**धान्यमूलम्।** क्ली। काञ्जिके। अ.टी.भ.।

**धान्ययूषः।** पुं। धन्याककाथे। चक्र.।

**धान्यराजः।** पुं। यवे। रा.नि.व.१६।२३।

**धान्यवर्गः।** पुं। धान्यपञ्चके। भा.।

**धान्यवीजम्।** क्ली। धन्याके। रा.नि.व.६।

**धान्यवीरः** । पुं । माषे । মাষকলায় বা বিরি কলায় । रा.नि.व,१६ ।

**धान्यशाकम्** । क्ली । धन्याकशाके । ধনে'র শাক । र.चि,९ष्म. ।

**धान्यशीर्षकम्** । क्ली । धान्यकणिशे । ধানের শুঙ বা শীষ । जटा, ।

**धान्यश्रेष्ठम्** । क्ली । हैमन्तशालिधान्यभेदे, नृपान्ने । হৈমন্তিক ধান্যবিশেষ । रा.नि.व,१५ ।

**धान्यस्वेदः** । पुं । धान्याम्लैः स्वेदे । माषादिकोषधान्यैः स्वेदे । सु,चि.१ष्म. ।

**धान्या** । स्त्री । धान्यके । अति,२स्थान,२ष्म. ।

**धान्याकम्** । क्ली । धान्यके । मद.२व. । वै. निघ.२भ.छर्दि.चि. ।

**धान्याग्रम्** । क्ली । धान्यकणिशे ।

**धान्याभ्र(क)म्** । क्ली । अभ्रकविशेषे । কৃত্রিম অভ্রবিশেষ । तत्करणप्रणाली भावप्रकाशे— "पादांशं शालिसंयुक्तमभ्रं बद्धा च कम्बले । त्रिरात्रं स्थापयेन्नीरे तत् क्लिन्नं मर्द्दयेत्करैः । कम्बलाद्गालितं सूक्ष्मं बालुकारहितञ्च यत् । तद्धान्याभ्रमिति प्रोक्तमभ्रमारणसिद्धये ॥" इति । तन्मारणप्रकरणम्—"वज्राभ्रञ्च धमेद्वह्नौ ततः क्षीरे विनिक्षिपेत् । भिन्नपत्रन्तु तत् कृत्वा तण्डुलीयाम्लयोर्द्रवैः । भावयेदष्टयामन्तदेवं शुध्यति चाभ्रकम् । कृत्वा धान्याभ्रकं तत्तु शोषयित्वा तु मर्द्दयेत् । अर्कक्षीरैर्दिनं मर्द्यमर्कमूलद्रवेण वा । वेष्टयेदर्कपत्रैस्तु सम्यग्गजपुटे पचेत् । पुनर्मर्द्यं पुनः पाच्यं सप्तवारं प्रयत्नतः । ततो वटजटाक्वाथैस्तद्दद्यं पुटत्रयम् ॥" र,चि,४ष्म, ।

**धान्याम्बवम्** । क्ली । मधुजम्बीरकृतसन्धानविशेषे । লেবুর আরক । मधुभाण्डं जम्बीररसैरापूर्य धान्यराशौ मासं स्थापयेत् । वै.निघ. ।

**धान्याम्बु** । क्ली । धान्योदके । वा,चि.६ष्म. ।

**धान्याम्ल(क)म्** । क्ली । रसस्वेदनकाञ्जिकविशेषे । यथालब्धनिस्तुषधान्यानि जलेन भाण्डमध्ये तावद्रक्षेत् यावदम्लत्वं नायान्ति । ततश्च तन्मध्ये भृङ्गराज-मुण्ड्यपराजिता-मत्स्याक्षी-सर्पाक्षी-सहदेवी-त्रिफलानीलापराजिताहंसपादीचित्रकं समूलं यथालाभं कुट्टयित्वा देयम् । "नानाधान्यैर्यथाप्राप्तैस्तुषवर्ज्जैर्जलान्वितैः । मृद्भाण्डं पूरितं रक्षेत् यावदम्लत्वमाप्नुयात् । तन्मध्ये भृङ्गरा मुण्डी विष्णुक्रान्ता पुनर्नवा । मीनाक्षी चैव सर्पाक्षी सहदेवी शतावरी । त्रिफला गिरिकर्णी च हंसपादी च चित्रकं । समूलं कुट्टयित्वा तु यथालाभं विनिःक्षिपेत् । पूर्व्वाम्लभाण्डमध्ये तु धान्याम्लकमिदं स्मृतम् । स्वेदनादिषु सर्व्वत्र रसराजस्य योजयेत् ॥" भा,२भ. । च.द.तृष्णा-चि, । काञ्जिके । কাঁজি । रा.नि.व. १५ । तत्साधनप्रणाली यथा—"धान्याम्लं शालिचूर्णञ्च कोद्रवादिकृतं भवेत् । धान्याम्लं धान्ययोनित्वात्प्राणनं लघु दीपनं । अरुचौ वातरोगेषु सर्व्वेष्वास्थापनेषु च ॥" भा.पू.२भ, ।

**धान्यारिः** । पुं । वनमूषके । रा,नि.व,१९ ।

**धान्यासवः** । पुं । धान्यकृतासवे । गुड़धात्रीधातकीसुरासौवीरकसैरेयमेदकधान्याम्लेषु षट्सु । च.सू.२५ष्म. ।

**धान्योत्तमम्** । क्ली, पुं । शालिधान्ये । रा.नि. व,१६ ।

**धान्वः** । त्रि । जाङ्गले । वा.चि,३ष्म, ।

**धान्वनम्** । क्ली । धन्वनवृक्षफले ।

**धान्वन्तरघृतम्** । क्ली । प्रमेहाधिकारे घृतम् । गव्यघृतं १६ श. । क्वाथार्थं—दन्तीमूलं चित्रकमूलम् एषां प्र, ८ प. हरीतकी २० प, देवदारु-कदम्ब-केलिकदम्बत्वक्-वरुणत्वक्-आरग्वधत्वक्-आम्रत्वक्-पुनर्नवा-करञ्जत्वक् प्र. ६ प. दशमूलं मिलित्वा ६४ प. वारि चतुर्गुणं शे. चतुर्थांशः । कल्कः—पञ्चलवणं पञ्चकोलं प्र. २ तो. । इति वृहद्धान्वन्तरम् । सा.कौ, । ঘৃত ১৬ শ. । ক্বাথার্থ—দন্তীমূল, চিতামূল প্রত্যেক ৮ প. হরীতকী ২০ প. দেবদারু ৬ প. কদম্ব, কেলিকদম্ব, বরুণ, শোঁদাল, আম্র, পুনর্নবা, করঞ্জ প্রত্যেকের ছাল ৬ প. দশমূল মিলিত ৬৪ প. জল চতুর্গুণ, শে. চতুর্থাংশ । কল্কার্থ—পঞ্চলবণ, পিপুল, পিপুলমূল, চই, চিতামূল, শুঁট প্রত্যেক ২ তো. । द्वितीयम्—गव्यघृतं ४ श. । क्वाथार्थं—दशमूलं करञ्जद्वयस्य फलं (तदभावे त्वक्) देवदारु हरीतकी शुक्लपुनर्नवा वरुणमूल दन्तीमूलं चित्रकमूलं पुनर्नवा कदम्बत्वक् केलिकदम्बत्वक् स्नुहीत्वक् बिल्वत्वक् भल्लातकं शटी पुष्करमूलं कणामूलम् एषां प्र. १० प. यवकोलकुलत्थानां प्र. १६ प. वारि २१० श. शे. ५४ श, ४ प. । कल्कार्थं—हिज्जलमूलं त्रिफला



भार्गी रोहितकमूलं गजपिप्पली शुण्ठी वचा विड़ङ्गं गुण्डारोचनी एषां प्र. ५॥० तो. । च.द. । ঘৃত ৪ শ. । ক্বাথার্থ—দশমূল, করঞ্জ, রক্তকরঞ্জ, দেবদারু, হরীতকী, শ্বেতপুনর্নবা, বরুণ, দন্তী, চিতা, পুনর্নবা, কদম্ব, কেলিকদম্ব, সিজু, বিল্ব, ভেলা, শঠী, পুষ্করমূল, পিপুলমূল, প্রত্যেক ১০ প. যব, কুল, কুলথ প্রত্যেক ১৬ প. জল ২১০ শ. শে. ৫৪ শ. ৪ প. । কল্কার্থ—হিজলমূল, ত্রিফলা, বামুনহাটী, রয়নামূল, গজপিপুল, শুঁট, বচ বিড়ঙ্গ, কমলাগুঁড়ি প্রত্যেক ৫॥० তো. । रस.र. । [ मे. । गृहे ।

**धाम (न्)** । क्ली । शरीरे । अम. । जन्मनि ।

**धामकम्** । क्ली । कत्तृणे । গন্ধতৃণ বা রাম কর্পূর । रा.नि.व.८ । पुं । माषपरिमाणे । "हेमश्च धामकाश्चैव ।" प.प्र. ।

**धामनी** । स्त्री । शोणितवाहिशिरायां । श.च. ।

**धामार्गवः** । पुं । पीतघोषायाम् । পীতঘোষা । ধুন্দুল । हिं नेनुआ । प,मु. । सु.सू.३९ष्म,। च.सू१।२ष्म. । अपामार्गे । रक्तापामार्गे । भा पू.१ भ. । महाकोशातक्याम् । ঝিঙ্গে । हिं, तरइ । तें उत्तरेणि, चेतिश्रीर । रा नि.व,७ । राजकोषातक्याम् । धा.टी.हेमा. ।

**धारः** । पुं । पाषाणविशेषे । सन्ततौ । द्रवद्रव्यमात्रे । क्ली । वृष्ट्युदके । বৃষ্টির জল । तच्च द्विविधं गाङ्गं सामुद्रञ्चेति । "धाराभिः पतितं तोयं गृहीतं स्फीतवाससा । शिलायां वसुधायां वा धौतायां पतितञ्च यत् । सौवर्णे राजते ताम्रे स्फाटिके काचनिर्म्मिते । भाजने मृण्मये वापि स्थापितं धारमुच्यते ॥" गुणाः जलशब्दे ज्ञेयाः । भा. ।

**धारकः (णः)** । त्रि । संग्राहिद्रव्यमात्रे । सु. सू.४५ष्म. ।

**धारणी (या)** । स्त्री । स्वनामख्यातमहाकन्दशाकविशेषे । धारणीकन्द, मैलगड़े इति च अनूपदेशे ख्याता । ধরণীকন্দ । तत्पर्य्यायः,—धरणी, धारणीया, धीरपत्री, सुकन्दकः, कन्दालुः, वनकन्दः, कन्दाढ्यः, दण्डकन्दकः, धरणीकन्दः । गुणाः—मधुरः कफपित्तघ्नः मुखदोषघ्नः कण्डूकुष्ठघ्नश्च । रा.नि.व.७। आच्छादने । शरीरान्तर्गतनाड़ीविशेषे । मे. । पृथिव्याम् ।

**धारा** । स्त्री । द्रवद्रव्यस्य सन्ततरक्षणे । गुड़ूच्यां वै.निघ,२भ.जीर्णज्व.चि.सेवन्तीपाके । हरिद्रायां । त्रिका. । आमलक्याम् । क्षीरकाकोल्याम् । वै. निघ. । शस्त्राणां शाणतीक्ष्णतायाम् । ধার । हिं तेज । सा च शस्त्रधारा मासूर्य्यर्द्धमासूरीकैशिक्यर्द्धकैशिकी चेति चतुर्धा शस्त्रकर्म्मविशेषेषु भिन्नप्रकृतिका । तत्र भेदनानामस्त्राणां मासूरी (मसूरधारातन्वी) मण्डलाग्रादिलेखनानाम् अर्द्धमासूरी (मसूरदलधारार्द्धतन्वी), सूचीकुशपत्रादिव्यधनानां त्रिस्रावणानाञ्च कैशिकी (केशप्रमाणतन्वी, वृद्धिपत्रादिच्छेदनानामर्द्धकैशिकी (अर्द्धकेशप्रमाणतन्वी) चेति । सु.स,८ष्म. ।

**धाराकदम्बः** । पुं । (Adina cordifolia. Syn. Nauclea cordifolia.) स्वनामख्यातवृक्षविशेषे । কেলিকদম্ । हिं हलदु । मं धाराकलंबु । कं धारेयकड़ब । तें बोगुलुकड़िमि । तत्पर्य्यायः,—भ्रमरप्रियः, प्रावृष्यः, प्रावृषेण्यः, कलम्बकः, भृङ्गवल्लभः, मेघाभः, प्रियकः, नीपः, पुलकी । गुणाः—कटुः वर्ण्यः हिमः कषायः तिक्तः पित्तघ्नः वीर्य्यवृद्धिकरः विषशोषहरश्च । रा,नि.व.९ ।

**धाराङ्कुरः** । पुं । लघुवृष्टौ । शीकरे । घनोपले । मे. ।

**धाराटः** । पुं । चातकविहङ्गे । घोटके । श.र. । मेघे । मत्तहस्तिनि ।

**धाराधरः** । पुं । मेघे ।

**धाराफलः** । पुं । मदनवृक्षे । ময়না গাছ । रा.नि.व,८ । (ला) स्त्री । कोषातक्याम् । ঝিঙ্গে । रा.नि.व.७ ।

**धारायन्त्रम्** । क्ली । वारिसेचनयन्त्रे । ফোয়ারা । सुगन्धवारिक्षरणपात्रे । গোলাবপাশ । अचि, ।

**धारावनिः** । पुं । वायौ ।

**धारासत्त्वम्** । क्ली । गुड़ूचीस्वरसे । গুলঞ্চের রস । वै,निघ.२भ,चय.चि,सेवन्तीपाके ।

**धारास्नुही** । स्त्री । त्रिधारस्नुहीभेदे । তেকাঁটা সিজু । रा.नि.व,८ ।

**धारि** । क्ली । आयुधि । (धारयति शरीरं पुनिता ... न ददातीति) । च.मृ.१ प.

**धारिणी।** स्त्री। शाल्मलीवृक्षे। श.च.।

**धारी (इन्)।** पुं। पीलुवृक्षे। আক্রোট্। जटा.।

**धारुः।** त्रि। स्तन्यपायिनि। जटा.।

**धारोष्णम्।** क्ली। दोहनेनोष्णधारया पतिते दुग्धे। धारोष्ण दुध। गुणाः—"धारोष्णम् अमृत स्पर्शी भ्रमहरं निद्राकरं कान्तिदं वृष्यं बृंहणमग्नि-वर्द्धनमतिस्वादु त्रिदोषापहम्।" रा.नि.व.१५। त्रि। धारया उष्णं, यस्य सुखमेव पानम्। "धारोष्णमृतोपमम्।" वा.टी.हेमा.।

**धार्त्तराष्ट्रः।** पुं। दुर्योधनराजहंसे। कृष्ण-चञ्चुचरणहंसे। গেঁড়ি হাঁস। अम.। सर्पभेदे। मे.।

**धार्त्तराष्ट्रपदी।** स्त्री। हंसपादीलतायाम्। रा.नि.व.५। रक्तलज्जालुकायाम्। वै.निघ.।

**धाव(वि)निः (नी)।** स्त्री। पृश्निपर्ण्याम् চাকুলিয়া। प.मु.। वा.चि१अ.। "धाविनी-श्रीफलैः कृताम्।" कण्टकार्य्याम्। धातकीवृक्षे। रा.नि.व.४।६। कपिकच्छ्वाम्। আলকুশী। च. द सि.यो.यच्म.चि। शणवृक्षे। वै.निघ.।

**धावनिका।** स्त्री। कण्टकार्य्याम्। प.मु.। वै. निघ.२भ.सुश्रुतेनसन्निपातज्व.चि.। पृश्निपर्ण्याम्।

**धिलिका।** स्त्री। गोमयाग्निभेदे। ঘুঁটের আগুন।

**धीः।** स्त्री। बुद्धौ। अम.। उपदिष्टग्रहणे शक्तौ। वा.।

**धीतिः।** स्त्री। पिपासायाम्। हे.च.।

**धीन्द्रियम्।** क्ली। ज्ञानेन्द्रिये। तच्च मनः नेत्रे श्रोत्रं त्वक् रसना घ्राणञ्चेति षट्। अम.।

**धीमोदिनी।** स्त्री। मद्ये। रा.नि.व.१४।

**धीरः** पुं। ऋषभके। रा.नि.व.५। क्ली। कुङ्कुमे। त्रिका.। पुष्करमूले। वै.निघ.।

**धीरस्कन्धः।** पुं। वनशूकरे। वै.निघ.। महिषे। हे.च.।

**धीरा।** स्त्री। मेदायाम्। प.मु.। महाज्योति-ष्मतीलतायाम्। বড় লতাফট্কী। काकोल्यां। रा.नि.व.३। क्षीरकाकोल्याम्। वै.निघ.। शिंशपा-वृक्षे। শিশু গাছ। प.मु.। कृष्णशिंशपायां, কালশিশু বা কাল অগুরু। रा.नि.व.९। शुक्लवचायाम्। कण्टकासेवत्याम्। वै.निघ। मद्य-विशेषे। रा.नि.व.१४।

**धीरावी।** स्त्री। पीतशिंशपायाम्। वै.निघ.।

**धीवरी।** स्त्री। शतमूल्याम्। रा.नि.व.४।

**धीहरा।** स्त्री। कुन्दुरौ। वै.निघ.।

**धुः।** पुं। कम्पने।

**धुकः (का)।** पुं, स्त्री। भूमिवदरवृक्षे। वै. निघ.।

**धुकन्धुकम्।** क्ली। वदरीफले। मद.व.६।

**धुकी।** स्त्री। भूवदरे, हस्तिकोल्याम्। জামকোলী। मद.व.६।

**धुत्तूरः।** पुं। धुस्तूरवृक्षे।

**धुन्धुमारः।** पुं। इन्द्रगोपनामकीटविशेषे। गृहधूमे। ঝুল। मे.

**धुरणोफलः।** पुं। मुञ्जवृक्षे। प.मु.।

**धुरन्धरः।** पुं। धववृक्षे। प.मु.। र.मा.।

**धुर्व्वरः, धुर्य्यः।** पुं। ऋषभके। रा.नि.व.५

**धुस्तु(स्तू)रः।** पुं। (Datura fastuosa.) कृष्णधुस्तूर। (Datura elba.) श्वेतधुस्तूरे। (Datura metel.) उपविषपर्य्यायस्वनामख्यात-क्षुपे। ধুতুরাগাছ। र.मा.। हिं धातुरा। मं धत्तूर। कं मदकुणिगे। तें उम्मेत्तचेट्टु. ताम उन्मत्त। तम. कारुउमते। तत्पर्य्यायः,— उन्मत्तः, कितवः, धूर्त्तः, कनकाह्वयः, मातुलः, मदनः, पुरीमोहः, मूर्त्तकृत्, धत्तूरः, घण्टिकः, शठः, मातुलकः, श्यामः, शिवशेखरः, खर्ज्जूघ्नः, काहलापुष्पः, खलः, कण्टफलः, मोहनः, कलभः मत्तः, शवः, देविका, तुरी, महामोही, शिवप्रियः, धुत्तूरः, धुत्तूरः, खरदूषणः। गुणाः—कटुरुष्णः कान्तिकारी व्रणघ्नः त्वग्दोषखर्ज्जूकण्डुज्वरघ्नः भ्रम-जनकश्च। रा.नि.व.१०। मूर्च्छाजनकः अग्निघ्नः पित्तघ्नश्च। राज.। "धुस्तूरादेश्च यद्वीजमन्यच्चोप-विषञ्च यत्। चीरेण पाचयेद्दोलायन्त्रेण शुद्धिमाप्नु-यात्।" इति शोधनम्। सा.कौ.। घण्टाकर्ण-क्षुपे। ঘেঁটু গাছ। रुद्रतैले। सा.कौ.।

**धुस्तूरतैलम्।** क्ली। कर्णरोगाधिकारे पक्व-तैलम्। "निशागन्धपले। पक्वं कटुतैलं पलाष्टकं। धुस्तूरपत्रजरसे कर्णनाड़ीजिदुत्तमम्।" कटुतैलं



८ प. धुस्तूरपत्ररसः १६ प.। कल्कार्थं—हरिद्रा-गन्धकयोः प्रत्येकं १ प.। सा.कौ.। इदमेव रस-रत्नाकरे गन्धकतैलम्।

**धूकः।** पुं। वायौ। वकुलवृक्षे। विड़ाले। वै. निघ।

**धूनकः (नः)।** पुं। शालनिर्यासे। धूनो। त्रिका.। क्ली। कम्पने।

**धूनराजः।** पुं। वृक्षविशेषे। रुमिनसुकीति-पश्चिमदेशे ख्यातः। तत्पर्य्यायः,—पीतरसः, भङ्गुरा, गन्धिनी। गुणाः—मूत्रलः ग्राही कफघ्नः दन्तरोगघ्नो बल्यः मेहासृग्दरघ्नश्च। अत्रि.।

**धूनिः।** स्त्री। कम्पने। व्याक.।

**धूपः।** पुं। उशीरे। ভাপরা। सुगन्धीकरणे। गन्धद्रव्योत्थधूमे तद्दर्शौ च। हे.च.। माहेश्वरादौ। धूपार्थं द्रव्यगणो यथा—"त्रिधागुर्देवदारुश्च गन्ध-पाषाणकस्त्रिधा। गुग्गुलुः पञ्चधा सर्ज्जो निर्यासः सरलस्य च। पद्मकाष्ठं मोचरसो निर्यासः सल्लकस्य च। रालं नेपालकञ्चेति गणोऽयं धूपसंज्ञकः॥" अर्क.चि.।

**धूपकम्।** क्ली। तूलकाष्ठे। रा.नि.व.९।

**धूपगन्धिनम्।** क्ली। रोहिषतृणे।

**धूपद्रुमः।** पुं। रक्तखदिरे। रा.नि.व.८।

**धूपनम्।** क्ली। धूपाधिवासने। धूपेन घर्म्मा-कर्षणे। ভাপরা। Fumigation. व्रणादीनां क्रियाविशेषे। শুকো মলম্। स च व्रणशोधना-नन्तरं विधेयः। तद्द्रव्यं यथा—"श्रीवेष्टके सर्जरसे सरले देवदारुणि। सारेष्वपि च कुर्व्वीत मतिमान् व्रणधूपनम्॥" सु.।

**धूपनः।** पुं। धूनके। धूनो। श.मा.।

**धूपवृक्षः (कः)।** पुं। रक्तखदिरवृक्षे। रा.नि. व.८। देवदारुवृक्षे। सरलवृक्षे। त्रिका.। श.र.।

**धूपसञ्चारी।** स्त्री। कस्तुर्य्याम्।

**धूपसरला।** स्त्री। धूपाङ्गसरलवृक्षविशेषे। वै. निघ.। [१२]

**धूपाग(गु)रु।** क्ली। दाहागुरुणि। रा.नि.व.

**धूपाङ्गः।** पुं। श्रीवेष्टनामकसुगन्धकाष्ठे। টার্পেন্টাইন্ গাছ। रा.नि.व.१२।

**धूपार्हम्।** क्ली। कृष्णागुरुणि। रा.नि.व.१२।

**धूप्यः।** पुं। नखीनामगन्धद्रव्ये। रा.नि.व.१२।

**धूमः।** पुं। शिलारसे। गृहधूमे। ঝুল। मेचके। ধোঁওয়া। तत्पर्य्यायः,—भस्मः, मरुद्वाहः, खत-मालः, शिखाध्वजः, शिखिध्वजः, अग्निवाहः, तरी, कच्चमालः अम्भःसूः, वायुवाहः, मेघयोनिः, मेचकः। गुणाः—"सद्यः श्लेष्मकरो धूमो नेत्रयो-रहितो भृशम्। शिरोगौरवकृच्चापि वातपित्तञ्च कोपयेत्॥" भा.। वातपित्तवर्द्धकः। राज.१प.। अन्यः पानार्थं पञ्चविधः—प्रायोगिकः स्नेहनः रेचनः कासघ्नः वामनीयश्चेति। पञ्चविधा एव धूमवर्त्तयः। तत्रैलादिना कुष्ठतगरवर्जेन सूक्ष्म-पिष्टेन द्वादशाङ्गुलं शरकाण्डं क्षौमेणाष्टाङ्गुलं परि-वेष्ट्यालिपयेत्। एषा प्रायोगिकधूमवर्त्तिः। स्नेह-फलसार-मधूच्छिष्ट-सर्जरस-गुग्गुलुप्रभृतिभिः स्नेह-मिश्रैः स्नेहने। शिरोविरेचनद्रव्यैर्वैरेचने। कासघ्ने कासहरैर्वृहतीकण्टकारिकात्रिकटुकासमर्दहिङ्गु-इङ्गुदीत्वङ्मनःशिलाच्छिन्नरुहाकर्कटशृङ्गीप्रभृतिभिः। वामनीये वामनीयैः स्नायुचर्म्मखुरशृङ्गकर्कटकास्थि-शुष्कमत्स्यवल्लूरकृमिप्रभृतिभिर्द्रव्यैश्च वर्त्तिः कार्य्या। तत्र प्रायोगिकनेत्रं कनिष्ठिकापरिणाहमग्रे कलाय-मात्रं स्रोतो मूलेऽङ्गुष्ठपरिणाहं धूमवर्त्तिप्रवेश-स्रोतोऽङ्गुलान्यष्टचत्वारिंशत्। द्वात्रिंशत् स्नेहने। चतुर्व्विंशतिर्वैरेचने। षोड़शाङ्गुलं कासघ्ने वामनीये च। एते अपि कोलास्थिमात्रच्छिद्रे भवतः। व्रण-नेत्रमष्टाङ्गुलं व्रणधूपनार्थं कलायपरिमण्डलं कुलत्थ-वाहिस्रोत इति। सु.चि.४०अ.। See धूम-पानम्। [भा.।

**धूमगन्धिकम्।** क्ली। रोहिषतृणे। গ্রামকর্পূর।

**धूमजाङ्गजम्।** क्ली। वज्रक्षारे रा.नि.व.६।

**धूमदर्शी।** पुं। नेत्ररोगविशेषे। "शोकज्वरा-यासशिरोऽभितापैरभ्याहता यस्य नरस्य दृष्टिः। धूमांस्तथा पश्यति सर्व्वभावान् स धूमदर्शीति नरः प्रदिष्टः॥" मा.नि.।

**धूमनाड़ी।** स्त्री। प्रायोगिकादिधूमप्रयोगार्थं नलाकारयन्त्रे। ধূমপানের নল। लक्षणं— धूमनाडी भवेत्तत्र त्रिखण्डा च विपर्व्विका। कनि-ष्ठिकापरीणाहा राजमाषागमान्तरा॥' भा.।

**धूमपानम्।** क्ली। धूमसेवायाम्। চুরট খাওয়া বা ধূমপান। तच्च षड़्विधं शमनवृंह-रेचनकासघ्नवामनव्रणधूपनानीति। एषां विशेषाः स्वस्वपर्य्याये स्मृताः। तद्विधिः—अत्र सर्व्वासामेव

धूमनाड़ीनां छिद्राणि कलायस्थूलानि भाव्यानि। द्वादशाङ्गुलामीषिकां यथास्वधूमद्रव्यकर्षमितकल्केनालिप्याष्टाङ्गुलपर्य्यन्तं छायाशुष्कां कारयेत्। अथ तां स्नेहाक्तामङ्गारदीपितां कृत्वा नेत्ररन्ध्रे धृत्वा च वदनेन धूमं पिबन् तेनैव सन्त्यजेत्। ततो नासिकाभ्यां पीत्वा वदनेन वमेत्। तथा शरावसंपुटे कल्कं निधायाङ्गारदीपितं कृत्वा छिद्रे नेत्रं निवेश्य व्रणञ्च धूपयेदिति। भा.। अथ सुखोपविष्टः सुमना ऋज्वधोदृष्टिरतन्द्रितः स्नेहाक्तां प्रदीप्ताग्रां वर्त्तिं नेत्रस्रोतसि प्रणिधाय धूमं पिबेत्। "मुखेन तं पिबेत्पूर्व्वं नासिकाभ्यां ततः पिबेत्। मुखपीतं मुखेनैव वमेत् पीतञ्च नासया। मुखेन धूममादाय नासिकाभ्यां न निर्हरेत्। तेन हि प्रतिलोमेन दृष्टिस्तत्र विहन्यते।" विशेषतस्तु प्रायोगिकं घ्राणेनाददीत स्नेहनं मुखनासाभ्यां। नासिकया वैरेचनं मुखेनैवेतरे। तत्र प्रायोगिके वर्त्तिं व्यपगतशरकाण्डां निवातातपशुष्काम् अङ्गारेष्ववदीप्य नेत्रमूलस्रोतसि प्रयुज्य धूममाहरेति ब्रूयात्। एवं स्नेहनं वैरेचनिकञ्च कुर्य्यादिति। इतरयोर्व्यपगतधूमोऽङ्गारस्थिरे समाहिते शरावे प्रक्षिप्य वर्त्तिं मूलच्छिद्रेणानेन शरावेण पिधाय तस्मिन् छिद्रे नेत्रमूलं संयोज्य धूममासेवेत। प्रशान्ते धूमे वर्त्तिमवशिष्टां प्रक्षिप्य पुनरपि धूमं पाययेदादोषविशुद्धेः। एष धूमपानोपायविधिः। गुणाः—दन्तप्रक्षालननस्यस्नानभोजनशस्त्रकर्म्मान्तेषु प्रायोगिक इति। तत्र स्नेहनो वातं शमयति, स्नेहादुपलेपाच्च वैरेचनः श्लेष्माणमुत्क्लेश्यापकर्षति, रौक्ष्यात्तैक्ष्ण्यादौष्ण्याद्वैशद्याच्च प्रायोगिकः श्लेष्माणमुत्क्लेशयत्युत्क्लिष्टं चापकर्षति साधारणत्वात् पूर्व्वाभ्यामिति। भवति चात्र—"नरो धूमोपयोगाच्च प्रसन्नेन्द्रियवाङ्मनाः। दृढकेशद्विजश्मश्रुसुगन्धिविशदाननः॥" कासश्वासारोचकास्योपलेपस्वरभेदमुखास्रावक्षवथुतन्द्रानिद्राहनुमन्यास्तम्भपीनसशिरोरोगकर्णाक्षिशूलवातकफनिमित्ताश्चास्य मुखरोगा न भवन्ति। प्रायोगिकं त्रींस्त्रीनुच्छ्वासानाददीत मुखनासिकाभ्याञ्च पर्य्यायांस्त्रींश्चतुरो वेति स्नैहिकं यावदश्रुप्रवृत्तिः। वैरेचनिकमादोषदर्शनात्। तिलतण्डुलयवागूपीतेन पातव्यो वामनीयः। ग्रासान्तरेषु कासघ्न इति। सू.चि.४०अ.। [ चिका.।

**धूममहिषी।** स्त्री। नीहारे। কুয়াশা।

**धूममर्त्तिका।** स्त्री। स्वर्णशोधनयोग्यकृष्णमृत्तिकायाम्। श.चि.।

**धूमयोनिः।** पुं। मुस्तके। अम.। मेघे।

**धूमरः।** पुं। दृष्टिमण्डलगतरोगविशेषे। (ধোঁয়া দেখা)। लक्षणं—"शोकज्वरशिरोरोगसन्तप्तस्यानिलादयः। धूमाविलां धूमदर्शी दृशं कुर्य्युः स धूमरः॥" वा.उ.१२अ.। [ चि.।

**धूमरजः।** क्ली। गृहधूमे। ঝুল। भैष.कर्णरो.

**धूमलः।** पुं। कृष्णलोहितवर्णे।

**धूमवृत्तकः।** पुं। सरलवृक्षे।

**धूमसः।** पुं। शाकतरौ। वै.निघ.।

**धूमसारः।** पुं। गृहधूमे। ঝুল। र.सा.सं.।

**धूमसी।** स्त्री। मुद्गविदलादिकृतरोटिकायाम्। পাপড়, ডালবড়ি. চুকুনি। प्रणाली यथा—"माषाणां दालयस्तोये स्थापितास्त्यक्तकञ्चुकाः। आतपे शोषिता पाते पिष्टास्ता धुमसी स्मृता। धूम्सी रुचिरा सैव प्रोक्ता भुर्भुरिका बुधैः। भुर्भुरी कफपित्तघ्नी किञ्चिद्वातकरी स्मृता।" भा.।

**धूमा(ङ्गः)।** स्त्री, पुं। कृष्णशिंशपायाम्। वै.निघ.।

**धूमाभः।** पुं। धुम्रवर्णे।

**धूमिका।** स्त्री। कुज्झटिकायां। त्रिका.। प्रसहजातीयपक्षिणि। च.।

**धूमोत्थम्।** स्त्री। वज्रक्षारे। रा.नि.व.६।

**धूमोद्गारः।** पुं। पित्तजरोगभेदे। भा.।

**धूम्या(म्रा)टः।** पुं। कुलिङ्गपक्षिणि। ফিঙে। अम.।

**धूम्रः (कः)।** पुं। सिह्लके। শিলারস। रा.नि.व.१२। उष्ट्रे। जटा.। तुम्बुरुवृक्षे। कृष्णलोहितवर्णे।

**धूम्रपत्रा।** स्त्री। स्वनामख्यातक्षुपे। তামাক। मं गांधानी। कं कत्तगिरि। उत्. धूयापत्र। तत्पर्य्यायः—धूम्राह्वा, गृध्रपत्रा, गृध्राणी, कृमिघ्नी, शोमलापहा, सुलभा, स्वयम्भुवा। गुणाः—तिक्ता शोफघ्नी कृमिघ्नी उष्णा कासघ्नी रुच्या दीपनी च। रा.नि.व.५।

**धूम्रपत्रिका।** स्त्री। धूम्रपत्रायाम्। रा.नि.व.२३। गन्धतृणे। गन्धतृणभेदे। वै.निघ.।

**धूम्रमूलिका (ली)।** स्त्री। मूलीतृणे। रा.नि.व.८



**धूम्रलोचनः।** पुं। कपोते। वन्यकपोते। रा.नि.व.१९।

**धूम्रवर्णः (कः)।** पुं। सिह्लके। শিলারস। रा.नि.व.१२। कोकड़नामविलेशयमृगे। रा.नि.व.१९.। कृष्णलोहितवर्णे।

**धूम्रवर्णा।** स्त्री। वराटिकाभेदे। रा.नि.व.१३।

**धूम्रशूलः।** पुं। उष्ट्रे। वै.निघ.।

**धूम्रा।** स्त्री। शशाण्डुल्याम्। কাঁকুড়বিশেষ। रा.नि.व.७। [ व.५।

**धूम्रा(म्या)ह्वा।** स्त्री। धूम्रपत्रायाम्। रा.नि.

**धूम्राच्चिः।** स्त्री। धूम्रमुक्तायाम्। वै.निघ.।

**धूम्रिका।** स्त्री। कृष्णशिंशपावृक्षे। কালশিশু বা অগুরু। रा.नि.व.९।

**धूरीयः।** पुं। वृषभे।

**धूर्त्तः।** पुं। श्वेतकृष्णधुस्तूरवृक्षे। प.मु.। अर्जुनवृक्षे। कुष्माण्डे। वै.निघ.। चोरक-नामगन्धद्रव्ये। গেঁটেলা। रा.नि.व.१२। क्ली। लौहकिट्टे। हे.च.। विड़लवणे। रा.नि.व.६।

**धूर्त्तकः।** पुं। कृष्णधुस्तूरे। केलिकदम्बे। प.मु.। शृगाले। श.र.।

**धूर्त्तकृत्।** पुं। धुस्तूरवृक्षे। श.मा.।

**धूर्त्तजन्तुः।** पुं। मनुष्ये। श.च.।

**धूर्त्तमानुषा।** स्त्री। रास्नायाम्। श.च.।

**धूर्त्तरः।** पुं। पारदे। रा.नि.व.१३।

**धूर्त्ता।** स्त्री। शुक्लकण्टकार्य्याम्। वै.निघ.।

**धूर्द्धरः, धूर्य्यः।** पुं। ऋषभके। वै.निघ.। धववृक्षे।

**धूर्व्वहः।** पुं। धववृक्षे।

**धूलकम्।** क्ली। विषे। श.च.।

**धूलिः।** पुं। परागे। गर्द्दभे। पार्थिवरजसि। अम.। तत्पर्य्यायः—रेणुः, पांशुः, रजः, धूली, पांसुः, क्षितिकणः क्षौद्रः, चूर्णं, तूस्तं, महीद्रवः, वातकेतुः, कणा, क्षितिकणा, नभःकेतुः, मेदिनीद्रवः, वायुकेतुः। अम.। [ वृक्षे।

**धूलिकदम्बः।** पुं। नीपे। तिनिशवृक्षे। वरुण-

**धूलिका।** स्त्री। धूली। पुष्पपरागे। वै.निघ.। कुज्झटिकायाम्। श.र.।

**धूलिगुच्छः(कः)।** पुं। पिष्टातके। আবীর। त्रिका.।

**धूलिजङ्घः।** पुं। काके। কাক। वै.निघ.।

**धूलिध्वजः।** पुं। वायौ। বাতাস।

**धूलिपुष्पिका।** स्त्री। केतकीवृक्षे। কেয়া গাছ। रा.नि.व.१०। श्वेतकेतके। वै.निघ.।

**धूलीकदम्बः (कः)।** पुं। कदम्बवृक्षविशेषे। धाराकदम्ब। मं धूलिकदंबु। कं धूलिगड्ड गुणैः धाराकदम्बतुल्यः। रा.नि.व.१०। तिनिशवृक्षे। वरुणवृक्षे। मे.।

**धूसरः।** पुं। गर्द्दभे। उष्ट्रे। वनचटके। कपोते। रा.नि.व.१९। मुद्गे। वै.निघ.। त्रि। पाण्डुवर्णे। मे.।

**धूसरच्छदा।** स्त्री। श्वेतवुह्नायाम्। प.मु.। शुक्लपुष्परास्नायाम्। वै.निघ.।

**धूसरपत्रिका (त्री)।** स्त्री। वृश्चिकाल्याम्। বিছাতি। शिवल्लशोशाके। प.मु.। हस्तिशुण्डीनामक्षुपे। হাতিশুঁড়ে। रा.नि.व.५।

**धूसरमुद्गः।** पुं। धूसरवर्णमुद्गविशेषे। मं धुसरमुङ्ग। कं पीयरमुङ्ग। गुणाः—रसवीर्य्यविपाकेषु हरिन्मुद्गसमः कषायः मधुरः रुच्यः पित्तकृत् वातविबन्धकृच्च। रा.नि.व.१६।

**धूसरा।** स्त्री। पाण्डुरफलीनामक्षुपे। रा.नि.व.५।

**धूसराह्वयः।** पुं। गर्दभे। वै.निघ.।

**धूसरी।** स्त्री। गर्दभ्याम्।

**धूस्तूरः।** पुं। धुस्तूरक्षुपे। प.मु.।

**धृतराष्ट्रः।** पुं। हंसभेदे। हंसजातीयपक्षिणि। हे.च. सर्पभेदे।

**धृतराष्ट्री।** स्त्री। हंसविशेषपत्न्याम्। मे.।

**धृतिः।** स्त्री। धैर्य्ये वेगविधाते। भा.म.३अ उदा.चि.।

**धृष्णुः।** स्त्री। कञ्चिकायां। কঞ্চি। श.च.।

**धेनिका।** स्त्री। धान्याके। ধনে। भा.।

**धेनुः।** स्त्री। दुग्धवत्यां गवि। अम.।

**धेनुका।** स्त्री। धान्याके। ধনে। मद.व.२। हस्तिन्यां। गवि। मे.।

**धेनुकारिः।** पुं। नागकेशरवृक्षे। वै.निघ.।

**धेनुजिह्वा** । स्त्री । गोजिह्वानामक्षुपे । গোজিয়া । रा.नि.व.४ ।

**धेनु(का)दुग्धम्** । क्ली । चिर्भटयाम् । भा. । गोदुग्धे ।

**धेनुदुग्धकरः** । पुं । मज्जरकणी । रा.नि.व.८ । गृञ्जनके । গাজর ।

**धेनुमक्षिका** । स्त्री । गोमक्षिकायाम् । ডাঁশ মাছি । वै.निघ ।

**धेनुयन्त्रम्** । क्ली । तैलपातनयन्त्रे । घानि ।

**धोड़ः** । पुं । डुण्डुभे । ঢোড়াসাপ । श.र. ।

**धौतम्** । क्ली । रौप्यधातौ । रा.नि.व.१३ । नीलकाशीसे । নীল হিরেকস্ । वै.निघ. ।

**धौतकौशेयम् (षजम्)** । क्ली । धौतकोषजे । पत्रोर्णे । রেশম । श.र. ।

**धौतखण्डी** । स्त्री । खण्डशर्करायां । वै निघ. ।

**धौतशि(शो)लम्** । क्ली । स्फटिके । विका. ।

**ध्मीमतम्** । क्ली । रक्तबोले । খুনখারাপি । वै.निघ. ।

**धौरः** । पुं । धवहक्षे । ধাওয়া গাছ । भा. ।

**धौरेयः** । पुं । वृषभे ।

**ध्माङ्क्षः** । पुं । काके । बके । जलकाकी । পানকৌড়ী । अम. । जलपक्षिमात्रे । तक्षके । वै.निघ. । [ रा.नि.व.४ ।

**ध्मा(ध्वा)ङ्क्षजङ्घा** । स्त्री । काकजङ्घायाम् ।

**ध्मा(ध्वा)ङ्क्षजम्बूः** । पुं । काकजम्बुवृक्षे । जलजम्बू । रा.नि.व.११ ।

**ध्मा(ध्वा)ङ्क्षतण्डुलफला** । स्त्री । काकजङ्घायाम् । वै.निघ. ।

**ध्मा(ध्वा)ङ्क्षतुण्डा (ण्डी)** । स्त्री । काकादनीलतायाम् । काकनासालतायां । কুঁচ গাছ । रा.नि.व.३ ।

**ध्मा(ध्वा)ङ्क्षदन्ती (नखी)** । स्त्री । काकादनीलतायाम् । काकनासालतायाम् । रा.नि.व.३ ।

**ध्मा(ध्वा)ङ्क्षनामा (नाम्नी)** । स्त्री । काकोदुम्बरिकायाम् । रा.नि.व.११ ।

**ध्मा(ध्वा)ङ्क्षनाशिनी** । स्त्री । हवुषाभेदे । हबुष फल । रा.नि.व.४ । भा. ।

**ध्मा(ध्वा)ङ्क्षनासा (सिका)** । स्त्री । काकनासालतायाम् । কুঁচ গাছ । रा.नि.व.३ ।

**ध्मा(ध्वा)ङ्क्षपुष्टः** । पुं । कोकिले । हारा ।

**ध्मा(ध्वा)ङ्क्षमाची** । स्त्री । काकमाचीक्षुपे । रा.नि.व.४ ।

**ध्मा(ध्वा)ङ्क्षवल्ली** । स्त्री । काकजङ्घायाम् । रा.नि.व.४ ।

**ध्मा(ध्वा)ङ्क्षादनी** । स्त्री । काकादनीलतायाम् । रा.नि.व.३ ।

**ध्मा(ध्वा)ङ्क्षारातिः** । पुं । पेचके । हला. ।

**ध्मा(ध्वा)ङ्क्षी** । स्त्री । काकोल्याम् । কাঁকলা । मे. । काकजङ्घायाम् । वै.निघ. ।

**ध्मा(ध्वा)ङ्क्षोली** । स्त्री । काकोल्याम् । কাঁকলা । प.मु. । रा.नि.व.३ । द्राक्षाभेदे । বেদানা কিসমিস্ ।

**ध्मापनम्** । क्ली । अग्निसन्धुक्षणे ।

**ध्यामम्** । क्ली । दमनकवृक्षे । मे. । कत्तृणे । রামকর্পূর । प.मु. । सु.चि.२२अ. । च.द.सन्निपातज्व.चि.अपराजिताधूपे । च.द.वा.व्या.१८शती-प्रसारणीतैले । वै.निघ.२भ.गुग्गुल्वादिधूपे । तुलसी । सु.सू.२५अ. ।

**ध्यामकम्** । क्ली । कत्तृणे । রামকর্পূর । प.मु. । च.सू.५अ. । सु.सू.३८अ. एलादिः । रोहिषे । वा.सू.१५अ.हेमा. (अभावे उशीरं) । भा.म.४भ. विष.चि. । "पिप्पली ध्यामकं मांसी ।" भा.म.१ भ.ज्व.चि. ।

**ध्रुवः** । पुं । धवहक्षे । ধাওয়া গাছ । र.मा. । वटवृक्षे । मद.व.५ । विका. । जीवके । शरारीपक्षिणि । नासायां ।

**ध्रुवा** । स्त्री । शालपर्ण्याम् । रा.नि.व.४ । मूर्व्वायाम् । मे. । शरारीपक्षिणि ।

**ध्वंसः (कः)** । पुं । मद्यविकाररोगे । लक्षणं यथा—"श्लेष्मप्रसेकः कण्ठास्यशोषः शब्दासहिष्णुता । तन्द्रानिद्राभियोगश्च ज्ञेयं ध्वंसकलक्षणम् ॥" च. ।

**ध्वंसी** । स्त्री । मानविशेषे, त्रसरेणुपरपर्य्याये मागधमाने । "त्रसरेणुस्तु पर्य्यायनाम्ना ध्वंसी निगद्यते ।" प.प्र.१ख. । पुं (इन्) । गिरिजपीलौ । श.र. ।



**ध्वजः** । पुं, क्ली । शिश्ने । भा.म.उ. । "ध्वजः पतत्यतो नृणां क्लैब्यं समुपजायते ।" "ध्वजं चिह्ने पताकायां मेहने ।" विश्व. । तालवृक्षे । रा.नि.व.९ ।

**ध्वजद्रुमः** । पुं । तालवृक्षे । रा.नि.व.९ ।

**ध्वजप्रहरणः** । पुं । वायौ । श.र. ।

**ध्वजभङ्गः** । पुं । लिङ्गपातकक्लैब्यरोगविशेषे । ধ্বজভঙ্গ রোগ । निदानलक्षणे यथा—"अति व्यवायशीलो यो न च वाजीक्रियारतः । ध्वजभङ्गमवाप्नोति स शुक्रक्षयहेतुजः । अत्यम्ललवणक्षार-विरुद्धाजीर्णभोजनात् । अत्यम्बुपानाद्विषमात् पिष्टान्नगुरुभोजनात् । दधिक्षीरानूपमांससेवनाद्व्याधिकर्षणात् । कन्यायाश्चैव गमनाद्योनिदोषात्तथापि च । दीर्घरोमां चिरोत्सृष्टां तथैव च रजःस्वलाम् । दुर्गन्धां दुष्टयोनिञ्च तथैव च परिस्रुतां । ईदृशीं प्रमदां मोहात् यो गच्छेत् कामदर्पितः । चतुष्पदादिगमनाच्च शेफसश्चाभिघाततः । अधावनाद्वा मेढ्रस्य शस्त्रदन्तनखक्षतात् । काष्ठप्रहारनिष्पेषशूकानाञ्च निषेवणात् । चेतसश्च प्रतीघातात् ध्वजभङ्गः प्रवर्त्तते ॥" च. । See क्लैब्यम् ।

**ध्वजवृक्षः** । पुं । 'माड़' इति कोङ्कणदेशख्यातवृक्षे । रा.नि.व.९ ।

**ध्वजी** (इन्) । पुं । मयूरे । रा.नि.व.१९ । सर्पे । मे. । रथे । अश्वे । पर्व्वते ।

**ध्वनमोदी** (इन्) । पुं । भ्रमरे ।

**ध्वनिग्रहः** । पुं । कर्णे । विका. । [ वै.निघ. ।

**ध्वनिबोधक(न)म्** । क्ली । सुगन्धरोहिषतृणे ।

**ध्वाङ्क्षः** । पुं । काके । बके । मत्स्यादपक्षिणि । अम. । जलचरपक्षिमात्रे ।

**ध्वान्तम्** । क्ली । अन्धकारे ।

**ध्वान्तवित्तः** । पुं । खद्योते । श.र. ।

**ध्वान्तशात्रवः** । पुं । श्योणाकवृक्षे । श.च. ।

**ध्वान्तोन्मेषः** । पुं । खद्योते । জোনাকি পোকা । विका. । तत्पर्य्यायः—ध्वान्तारिः, ध्वान्तारातिः ।

---

## न

**नः** । पुं । रत्ने । ए.को. ।

**नःक्षुद्रः** । त्रि । क्षुद्रनासिके । খাঁদা । है.च. ।

**नकुटम्** । क्ली । नासिकायाम् । श.मा. ।

**नकुलः** । पुं । (The bengal mungoose, Viverra ichneumon.) स्वनामख्यातजन्तौ । নেউল । हिं नेवौ । मं नेउरा । कं मंगुल । तत्पर्य्यायः,—पिङ्गलः, सर्पहा, बभ्रुः, कोटिरः, सर्पहयः, सूचीवदनः, सर्पारिः, लोहिताननः । लक्षणं—यः स्थूलपुच्छो रक्तनेत्रो बभ्रुदेहः स नकुलः । शालिहोत्र. । नकुलमांसगुणाः—पिच्छिलं वातघ्नं श्लेष्मपित्तघ्नञ्च । रा.नि.व.१७ । "गुरूष्णं स्निग्धमधुरं बलोपचयवर्द्धनम् । हृद्यं परं वातहरम् ...... ॥" च.सू.२७अ. ।

**नकुलाढ्या** । स्त्री । गन्धनाकुल्याम् । गन्धरास्ना । रा.नि.व.७ ।

**नकुलान्ध्यम्** । क्ली । नेत्ररोगभेदे । लक्षणं— "विद्योतते यस्य नरस्य दृष्टिर्दोषाभिपन्ना नकुलस्य यद्वत् । चित्राणि रूपाणि दिवा च पश्येत् स वै विकारो नकुलान्ध्यसंज्ञः ॥" भा.म.४स. । नकुलान्धो दिवा चित्रं पश्यति न तु निशि । अरुण. ।

**नकुलारिः** । पुं । विड़ाले । वै.निघ. । सर्पे ।

**नकुली** । स्त्री । शालिनीवृक्षे । वै.निघ. । शङ्खिन्याम् । धरणि. । कुङ्कुमे । है.च. । नकुलपत्न्याम् । मांस्यां । জটামাংসী । कुक्कुट्याम् । মুর্গি । मे. ।

**नकुलेष्टका (ष्टा)** । स्त्री । रास्नायाम् । अम. । सर्पाक्ष्याम् ।

**नक्तम्** । क्ली । रात्रौ ।

**नक्रकः** । पुं । नेत्रपटले । वै.निघ. । कर्पटे । নেকড়া । अ.टी.भ. । मयूरे । हस्तिनि ।

**नक्तचारी** (इन्) । पुं । पेचके । विड़ाले । विका. ।

**नक्तञ्चरः** । पुं । गुग्गुलौ । গুগ্গুল । पेचके । जटा. । सोमराज्यां । दुण्डुभे । रा.नि.व.२१ । विड़ाले ।

**नक्तमालः** । पुं । दृढत्वग्करञ्जवृक्षे । डहरकरञ्ज ।

रा.नि.व.९। सु.सू.३८अ.हृष्मरिचाद्यतैले। सि. यो.उन्मा.चि.। [ करञ्जे। वै.निघ.।

**नक्तमूलकम्।** क्ली। करञ्जमूले। पुं। महा-

**नक्ता।** स्त्री। लाङ्गलीक्षुपे। विषलाङ्गुलिशा। रा.नि.व.४। तृणविशेषे। गुलवास इति लोके गुणाः—वातला शीता गलगण्डहरी च। अपक्वा सा अशोघ्नी। वै.निघ.। रात्रौ। हरिद्रायाम्।

**नक्तान्धः।** त्रि। रात्र्यन्धे। রাতকাণা। रात्र्यन्धस्य लक्षणं यथा—"दिवा पश्यति यः स्वच्छं रात्रौ नैव च पश्यति। नक्तान्ध इति तं विद्यात् विकारं पवनोद्भवम्॥" ज.द.३०अ।

**नक्तान्ध्यम्।** क्ली। रात्र्यन्धतारोगे। निदा.।

**नक्ताह्वः।** पुं। करञ्जवृक्षे। भैष.ने.रो.चि.। "नक्ताह्वबीजवर्त्तिः।" च.द.न्र.शो.चि.। भा.वा. र.चि.त्रिफलागुग्गुलौ।

**नक्रम्।** क्ली। नासिकायाम्। मे.।

**नक्रः।** पुं। ग्राहे। वै.निघ.। कुम्भीरे। अम.।

**नक्रराजः (ट्)।** पुं। महाशिशुमारे, ग्राहे। হাঙ্গর। तत्पर्य्यायः,—ग्राहः, जलकिराटः, जलाटक। त्रिका.। ] श.र.।

**नक्रा।** स्त्री। मक्षिकादंशसूच्याम्। नासिकायाम्।

**नक्राण्डम्।** क्ली। कुम्भीराण्डे। च.चि.२अ.।

**नखम्।** क्ली, पुं। शरीरोपधातुविशेषे, करजे। নখ। तत्पर्य्यायः,—पुनर्भवः, कररुहः, नखरः, कामाङ्कुशः, करजः, पाणिजः, अङ्गुलीसम्भूतः, पुनर्नवः, कराग्रजः, करकण्टकः, स्मराङ्कुशः, रतिरथः, करचन्द्रः, कराङ्कुशः। रा.नि.व.१८। तत् गर्भस्थस्य षष्ठे मासि भवति। सुखबोधः। नखीनाम गन्धद्रव्ये। নখী। तं नखमुचिप्य। च.द. चन्दनाद्यतैले। नखीभेदे। प.मु.। च.सू.५अ.। क्षुद्रनिष्पावे। বর্বটী, ছোট শিম্। वै.निघ.।

**नखकुट्टः।** पुं। नापिते। त्रिका.।

**नखगु(पु)च्छ[ञ्ज]फला।** स्त्री। वृत्तनिष्पाविकायाम्। শ্বেত শিম্, শ্বেত বর্বটী रा.नि.व.७।

**नखच्छेदनम्।** क्ली। नखस्य कर्त्तने। নখকাটা। गुणाः—"पौष्टिकं वल्यमायुष्यं शौचरूपविराजनम्। केशश्मश्रुनखादीनां कल्पनं सम्प्रसाधनम्॥" राज.१प.।

**नखच्छेद्या।** स्त्री। मेदायाम्। रा.नि.व.५।

**नखनामा।** पुं। नीलवृक्षे। वै.निघ.।

**नखनिकृन्तनम्।** क्ली। नखच्छेदनास्त्रे नरुन। श.चि.।

**नखनिष्पावः (विका)।** पुं, स्त्री। शिम्बीभेद। ছোট শিম্, শ্বেত বর্বটী। रा.नि.व.७। तत्पर्य्यायः,—वृत्त-निष्पाविका, अङ्गुलिफला, ग्राम्या, नखगुच्छफला, ग्रामजनिष्पावी, नखफलिनी। गुणाः—मधुर-कषायः, कफशोधकः, मेध्यः, अग्निदीपनः, रुचिकरः। See निष्पावी।

**नखपर्णी।** स्त्री। वृश्चिकालीक्षुपे। বিছাতি।

**नखपुङ्खी (ष्पी)।** स्त्री। स्पृक्कायां। পিড়িং। रा.नि.व.१२।

**नखपुञ्जफला।** स्त्री। श्वेतनिष्पाव्याम्।

**नखपूर्व्विका।** स्त्री। शिम्बीधान्यविशेषे। হরিত বর্বটী। रा.नि.व.७।

**नखभेदः।** पुं। वातरोगभेदे। कुलत्थादौ।

**नखरः।** पुं। नखे अम.।

**नखरगञ्जिनी।** स्त्री। नखीनाम-गन्धद्रव्ये।

**नखरञ्जकः।** पुं। नखरञ्जिनीवृक्षे। মেহেদী গাছ "तिमिरः काकदन्ता च दिवृन्तो नखरञ्जकः।" वै द्रव्याभि।

**नखरञ्ज(ञ्जि)नी।** स्त्री। (Myrtus communis) वृक्षविशेषे। মেহেদী গাছ। वै. द्रव्याभि.। नखकृन्तन्यां। नरुन। उङ्कटः।

**नखरायुधः**
**नखायुधः** } पुं। नखशस्त्रजन्तुमात्रे। सिंहे। ताम्रचूड़े। व्याघ्रे। रा.नि.व.१९। "शशकशल्लकीगोधामार्जाराद्याः।" अत्रि.२०अ.।

**नखराह्वः।** पुं। श्वेतकरवीरवृक्षे। रा.नि.व.१०।

**नखरी।** स्त्री। नखीनामगन्धद्रव्ये। श.मा.। लघुशिम्ब्याम्। वै.निघ.। [ चि.।

**नखविष्किरः।** पुं। नखायुधपक्षिमात्रे। श.

**नखवृक्षः।** पुं। नीलवृक्षे। रा.नि.व.९।

**नखशङ्खः।** पुं। क्षुद्रशङ्खे। श.र.।

**नखशस्त्रम्।** क्ली। नखच्छेदनार्थम् अर्द्धकेशिकीधारायुक्ताष्टाङ्गुलशस्त्रविशेषे। नरुन प्रभृति। "वृद्धिपत्रनखशस्त्रमुद्रिकोत्पलपत्रकार्द्धधाराणि छेदने भेदने च।" सु.सू.८अ.। तस्य फलं द्व्यङ्गुलायामम् एकाङ्गुलविस्तृतम्। सु.टी.ड.। तच्च छेदनभेदनयोः प्रशस्तं नवाङ्गुलम्। तत्रोक्तिः। "वक्रजधारं द्विमुखं नखशस्त्रं नवाङ्गुलम्। सूक्ष्मशल्योद्धृतिच्छेदभेदप्रच्छादलेखने॥" इति।



**नखाङ्कम्।** क्ली। नखीनामगन्धद्रव्ये। श.र.। नखक्षते।

**नखाङ्कुरः।** पुं। नखे। वै.निघ.।

**नखाङ्गम्।** क्ली। नखीनामगन्धद्रव्ये। र.मा.।

**नखाभ्यङ्गः।** पुं। नखे तैलमर्द्दने। "तद्विशेषो नखाभ्यङ्गः शिरोनासाक्षि(च्चि)तापजित्।" प्रयोगपारिजातः।

**नखायुधः।** पुं। सिंह-व्याघ्र-कुक्कुटादौ जन्तौ।

**नखालिः।** पुं। क्षुद्रशङ्खे। श.च.।

**नखालुः।** पुं। नीलीवृक्षे। रा.नि.व.९।

**नखाशी (इन्)।** पुं। पेचके। त्रिका.।

**नखी।** स्त्री। स्वल्पनखाख्यगन्धद्रव्ये। ছোট নখী। नखं स्वल्पं नखी प्रोक्ता।" भा.। सा रत्नोश्नीति राजवल्लभः। खोसाने। "नखी पञ्चविधा प्रोक्ता गन्धाख्या गन्धवत् परैः। काचिद्बदरपत्राभा तथोत्पलदलोपमा। काचिदश्वखुराभा च गजकर्णसमा तथा। वराहकर्णसङ्काशा पञ्चमी परिकीर्त्तिता॥" च.द.टी.। तत्र वराहकर्णाभा न ग्राह्या। सा द्विधा एका शङ्खनखा अन्या शुक्त्याख्या वदरीच्छदा। र.मा.। सा. गुणाः—ग्रहघ्नी श्वासातास्त्वरकुष्ठघ्नी लघुः उष्णा वर्ण्या शुक्रला स्वादुः व्रणविषालक्ष्मीमुखदौर्गन्ध्यहरी पाके रसे च कटुः। भा.। उष्णा कटुः विषघ्नी कुष्ठकण्डूव्रणघ्नी भूतविद्रावणी च। रा.नि.व.१२। शुद्धिः यथा—गोविट्काञ्जिकचित्रसुखिन्ना मधुपाचिता नखी शुध्यति। सङ्कपात् यथालाभं गोमयादिषु गोमयजले वा पक्तव्या। वृद्धोपदेशेन घृतेन भर्ज्जयित्वा चूर्णीकर्त्तव्या। ततः कुङ्कुमादिगन्धद्रव्येण भावना कार्य्या। सर्व्वेषां गन्धद्रव्याणां गन्धतोयेन प्रक्षालनभावने कृत्वा रौद्रशुष्कं कर्त्तव्यम्। सा.कौ.। च.द.।

**नखी (इन्)।** पुं। नखायुधे जन्तौ। उन्दुरौ।

**नखीत्रयम्।** क्ली। त्रिविधनख्यां। नखी, उत्पलपत्राभा, अश्वखुराभा चेति। च.द.वा.व्या.चि. महाराजप्रसारणीतैले।

**नखोद्वयम्।** क्ली। কানাগড়, কুর্করাণী, इति द्वये। च.द.वा.व्य.चि। "विश्वग्टघ्ननखोद्वयम्।"

**नख्यम्।** क्ली। व्याघ्रनखे।

**नगः।** पुं। वृक्षे। पर्व्वते। अम.।

**नगकर्णी।** स्त्री। श्वेतापराजितायां। वै.निघ.।

**नगगन्धा।** स्त्री। रास्नायाम्। वै.निघ.।

**नगजः।** पुं। हस्तिनि। अ.टी.सा.।

**नगजा।** स्त्री। क्षुद्रपाषाणभेदे। रा.नि.व.५।

**नगजित्।** पुं। पाषाणभेदके। रा.नि.व.५।

**नगण।** स्त्री। पारावतपद्याम्। বনউচ্ছে বা লতাফটকী। रा.मा.।

**नगपतिः।** पुं। तालवृक्षे। वै.निघ.। पनसवृक्षे।

**नगपर्य्यायकर्णी।** स्त्री। अपराजितायाम्। वै.निघ.।

**नगभित्।** पुं। पाषाणभेदे। পাথরকুচি। रा.नि.व.५। करज्योड़िपाषाणभेदे वै.निघ.।

**नगभूः।** पुं। पाषाणभेदे। रा.नि.व.५।

**नगभेदनः।** पुं। करज्योड़िपाषाणभेदे। वै. निघ.।

**नगमालः।** पुं। शालिधान्यभेदे। गुणाः शालिवत्। अर्क.चि.।

**नगरघातः।** पुं। हस्तिनि। व्याकरणम्।

**नगराह्वम्।** क्ली। शुण्ठ्याम्। শুঁট। रा.नि. व.६।

**नगरौकवः।** पुं। काके। त्रिका.।

**नगरोत्था।** स्त्री। नागरमुस्तायां। रा.नि.व.६।

**नगरौषधिः।** स्त्री। कदलीवृक्षे। श.च.।

**नगवृत्तिकः।** पुं। गुड़मञ्जनिकायां वृश्चिकाल्यां वा। सु.चि.२०अ.।

**नगवृत्तिका।** स्त्री। सल्लकीवृक्षे। सु.चि.१५ अ.। कल्प.५अ.।

**नगाटनः।** पुं। वानरे। त्रिका.।

**नगाश्रयः।** पुं। हस्तिकन्दनामके महाकन्दशाके। रा.नि.व.७।

**नगौकाः।** पुं। सिंहे। मे.। काके। श.च.। पक्षिणि। अम.। शरभे।

**नग्नहू:** । पुं । स्फीतौ । नानाद्रव्यकृतसुरावीजे । वाखर इति लोके । भ. ।

**नग्निका** । स्त्री । अनागतार्त्तवकन्यायाम् । रा. नि.व.१८ । दुग्धिकायाम् ।

**नघुषम्** । क्ली । तगरपादिके ।

**नट:** । पुं । अशोकवृक्षे । रा.नि.व.१०।२३ । श्योणाकवृक्षे । अम. । लोध्रवृक्षे । देवनाले । जटा. । क्ली । परिपेलवे । रा.नि.व.८ ।

**नटपत्रिका** । स्त्री । वात्ताकुवृक्षे । वै.निघ. ।

**नटपर्णम्** । क्ली । त्वचि । चामड़ा । वै.निघ. । गुड़त्वचि ।

**नटभूषणम्** । क्ली । हरिताले । र.मा. ।

**नटमण्डनम्** । क्ली । हरितालविशेषे । गोदन्ता । प.मु. । हरिताले । रा.नि.व.१३ ।

**नटसंज्ञक:** । पुं । हरिताले । त्रिका. ।

**नटाख्य:** । पुं । श्योणाकवृक्षे ।

**नटी** । स्त्री । नलिकानामगन्धद्रव्ये । रा.नि.व. १२ । अशोकवृक्षे । वै.निघ. ।

**नड:** । पुं । नले । नलथागड़ा । रा.नि.व.८ ।

**नड़कीय:(प्राय:)** । त्रि । नलमयदेशे । हे.च.

**नड़मीन:** । पुं । चिलिचिममत्स्ये । अम. ।

**नतम्** । क्ली । तगरपादिके । तगरपादुका । प.मु. । रा.नि.व.१० । वा.सू.१५अ.भद्रदार्व्वादि: । "भद्रदारु नतं कुष्ठं ।" च.द.सि.यो.यक्ष्म.चि.शत पुष्पादिलेपे । "शणपुष्पं नतं कुष्ठम् ।" सि.यो. पानीयकल्याणघृते । "स्थिरा नतं हरिद्रे द्वे ।" भा.म.४भ. । "नतवार्त्ताकिनीकुष्ठ...... ।"

**नतद्रुम:** । पुं । लताशाले । र.मा. ।

**नतनाड़िका** । स्त्री । प्रहरद्वयात् मध्यरात्रि-पर्य्यन्तं काले । वै.निघ. ।

**नतनासिक:** । त्रि । चुद्रनासायुक्ते । थाँदा ।

**नताङ्गी** । स्त्री । कर्कटशृङ्ग्याम् । मद.व.१ ।

**नदनु:** । पुं । सिंहे । श.मा. ।

**नदी** । स्त्री । अनूनाष्टसहस्रधनुर्व्याप्ते जल-प्रवाहे । तज्जलगुणा:—लघु, पाचनं, रुचिकर, मधुरं, ईषदुष्णं, दाहतृष्णाघ्नञ्च ।

**नदीकदम्ब: (म्बा)** । पुं, स्त्री । गोरच-मुण्डग्रां, महाश्रावणिकायाम् । रा.नि.व.५ ।

**नदीकान्त:** । पुं । हिज्जलवृक्षे । হিজল গাছ । रा.नि.व.८ । जलवेतसे । वै.निघ. । सिन्धुवार-वृक्षे । मे. ।

**नदीकान्ता** । स्त्री । काकजङ्घाक्षुपे । रा.नि.व. ४ । ह्रस्वकारवेल्लके । ছোট উচ্ছে । जम्बूवृक्षे । জাম গাছ । मे. ।

**नदीकुठेरक:** । पुं । नन्दीवृक्षे । रा.नि.व.१२ ।

**नदीकूलप्रिय:** । पुं । जलवेतसे । जटा. ।

**नदीजम्** । क्ली । स्रोतोऽञ्जने । पुं । अर्ज्जुनवृक्षे । प.मु. । यावनाले । हिज्जलवृक्षे । रा.नि.व.८ । नदीनिष्पावे । रा.नि.व.१६ । खर्ज्जूरीवृक्षे । वै. निघ. । विट्माक्षिके ।

**नदीजलम्** । क्ली । नद्या जले । নদীর জল । सर्व्वा एव नद्य: प्राङ्मुखगा गुरुजला: पश्चिममुखगा लघुसलिला:, देशविशेषगुणानुसारेण गुरुलघु जलाश्च भवन्ति । तथा विन्ध्यान्निर्गत्य पूर्व्वमुखगा वाताटोपं पश्चिममुखगा पित्तश्लेष्मनाशं दक्षिण-मुखगा पित्तोद्रेकम् उत्तरमुखगा: पथ्यपाकञ्च कुर्व्वन्ति । हिमवत्कैलासमलयसह्यादिप्रभवा नद्य: शिरोरोगादीन् जनयन्ति । पारियात्रप्रभवाश्च तान् नाशयन्ति । इति देशविशेषान्नदीजलगुणा: । सामान्य-नदीजलगुणा:—स्वच्छं लघु पाचनं दीपनं रुच्यं तृष्णाघ्नं पथ्यं मधुरम् ईषदुष्णञ्च । कालभेदान्नदी-जलगुणा:—यथा प्रावृट्कालीननदीजलसेवनात् पीनसकफश्वासकासा जायन्ते, शारदीयनदीजल-पान पथ्यं वातकफघ्नञ्च, हैमन्तनदीजलपान बुद्धि-प्रदम्, शिशिरवसन्तकालीननदीजलं सन्तापशमनं तृष्णादाहवमिश्रमप्रशमनं, तथा ग्रीष्मनदीजलं सद्गुणमेव करोति । रा.नि.व.१४ । "तथा प्राच्यङ्गमा-श्चान्या: पश्चिमानुगमास्तथा । ससैकता सपाषाणा द्विविधा चाम्बुवाहिनी । एवं चतुर्विधा नद्यो वातपित्तकफात्मिका: ॥" अथ पाषाणनदीगुणा:— "घनविमलशिलानां स्फालनाज्जातफेनं बहलसजल-वीचीच्छन्नसङ्गीभट्टतम् । ननु लघु च सुशीतं नाति चोष्णं घनञ्च हरति पवनपित्तं श्लेष्मकृद्वारि सम्यक् ॥" सवालुकनदीगुणा:—"न घनविमल-तोय सैकताया: प्रवाही न च भवति लघुत्वं श्लेष्मकृद्धन्ति पित्तम् । भवति मधुरमेवं किञ्चिदुष्णं कषायं भवति पवनकारी शोषमूर्च्छां निहन्ति ॥ गङ्गा सरस्वती शोणो यमुना सरयू: सची । वेणा सरावती नीला उत्तरा पूर्व्ववाहिनी । हिमवत्प्रभवा



ह्येता हिमसम्भवशीतला: । समा: सर्व्वगुणैर्नद्यो वातश्लेष्महरा नृणाम् ॥ आसां नवशतैर्युक्ता गङ्गा प्रोक्ता मनीषिभि: । तथा चर्म्मण्वती वेत्रावती पारावती तथा । चिप्रा महानदी पीता मूलकन्या मनस्विनी । शिवती शैवलिन्यश्च सिन्धुयुक्ता: समुद्रगा: । वातपित्तहरं नीरं त्रिदोषघ्नं मतं परम् । श्रमग्लानिहरं हृष्यमुत्तराशानुगामि च ।" इति नद्य उत्तरानुगा: । "तापी तापा च गोलोमी गोमती सलिला मही । सरस्वतीयुता नद्यो नर्म्मदापश्चिमा-नुगा: । आसां जलं घनं पीतं पित्तघ्नं कफकृत्तथा वातदोषहरं हृद्यं कण्डू-कुष्ठविनाशनम् । पश्चिमाद्रिसमुद्भूता गौतमी पुण्यभावना । आसां शीतं जलं वापि कफवातविकारनुत् । पित्तदं शमनं बल्यं मूत्रदोषविकारनुत् । पूर्णा पयस्विनी वेता प्रणीता च वरानना । द्रोणा गोवर्द्धनी यान्या गौतम्यनुगता इमा: । कावेरी वीरकान्ता च भीमा चैव पय:स्विनी । विभावरी विशाला च गोविन्दी मदनस्वसा । पार्व्वत्यश्चापरा नद्यो दक्षिणी-दिग्गमा इमा: ॥" अत्रि.७अ. ।

**नदीजा** । स्त्री । जलशुक्त्याम् । झिनूक । वै. निघ. । अग्निमन्थवृक्षे । रा.नि.व.९ ।

**नदीन:** । पुं । वरुणवृक्षे ।

**नदीनिष्पाव:** । पुं । शिम्बीधान्यविशेषे, कटु-शिम्ब्याम् । मं नदीचेवर्षे । क तीरे आवरे । तत्पर्य्याय:,—कटुनिष्पाव:, कर्व्वूर:, नदीज: । गुणा,—तिक्त: कटु: गुरु: रक्तकर: वातकफद: रुक्ष: कषाय: विषदोषहरश्च । रा.नि.व.१६ ।

**नदीवहल:** । पुं । मेषशृङ्ग्याम् । वै.निघ. ।

**नदीभल्लातक:** । पुं । भल्लातकविशेषे, पानीय-भल्लातके । पमु. ।

**नदीभव:** । पुं । क्षुद्रशङ्खे । वै.निघ. ।

**नदीमातृक:** । पुं । देशभेदे । यो नद्यम्बुभि: पाल्यते । "नद्यम्बुभिर्व्रती धान्यै: नदीमातृक उच्यते ।" रा.नि.व.२ ।

**नदीमाषकम्** । क्ली । शाकभेदे । गुणा:— "विषदं गुरु शीतञ्च समभिष्यन्दि चोच्यते ।" च. सू.२७अ. । [व.९ ।

**नदीया** । स्त्री । अग्निमन्थे । गणिरि । रा.नि.

**नदीवट:** । पुं । वटीवृक्षे, ह्रस्वपत्रवटवृक्षविशेषे । नदीवट । मं दुंआवरु । क गालिआल । गुणा:— कषाय: मधुर: शीतल: पित्तघ्न: तृष्णादाहश्रमश्वास-च्छर्दिहरश्च । रा.नि.व.११ ।

**नदीसर्ज्ज:** । पुं । अर्ज्जुनवृक्षे । रा.नि.व.९ ।

**नदेयी** । स्त्री । जलवेतसे । वै.निघ. । भूमि-जम्ब्वाम् । श.च. ।

**नद्यम्** । क्ली । कृष्णाञ्जने । वै.निघ. ।

**नद्याम्र:** । पुं । समष्ठीलक्षुपे । हिं कौंकुया । मं कौतुम्बा । रा.नि.व ४।२३ । गुणा:—कटु: उष्ण: रुच्य: मुखशोधन: । दाही दीपन: कफवातघ्नश्च । व.निघ. ।

**नद्यावर्त्त:** । पुं । मत्स्यभेदे । वै.निघ. ।

**नध्री** । स्त्री । चर्म्मबन्धन्यां, चर्म्मरज्जौ । श.च. ।

**नन्द:** । पुं । बृहज्जम्ब्वाम् । বড় জাম ।

**नन्दक:** । पुं । नन्दीवृक्षे । कुन्दुरौ । भेके त्रिका. ।

**नन्दकि:** । स्त्री । पिप्पल्याम् । श.च. ।

**नन्दगोपिता** । स्त्री । रास्नायाम् । श.च. ।

**नन्दन:** । पुं । मधुनिष्पावे । मुकुटशिम् । प.मु भेके । श.र. । क्ली । सरलदेवदारौ । रक्ताञ्जने वै.निघ. । विषवृक्षभेदे ।

**नन्दनजम्** । क्ली । हरिचन्दने । रा.नि.व.१२

**नन्दनविषम्** । क्ली । तन्नामकवृक्षस्य त्वक्सार निर्यासविषे । सु.कल्प.२अ. । See त्वक्सारनिर्यास विषम् ।

**नन्दनी** । स्त्री । चन्द्रशूरे । হালিম ।

**नन्दा** । स्त्री । सुरसायाम् । বাবুইতুলসী । प.मु. । योनिरोगविशेषे । बालस्य तन्नामकमातृका-ग्रहे । तथा च प्रथमे दिने मासि वर्षे वा बाल आक्रान्तो भवति । तेन च ज्वरादिर्भवति । च.द. ।

**नन्दा (न्द्य)वर्त्त:** । पुं । तगरपुष्पवृक्षे । তগর ফুলের গাছ । र.मा. । मत्स्यविशेषे । गुणा:—नन्दावर्त्तस्तु संग्राही कफपित्तविनाशन: । राज.३प. ।

**नन्दिक:** । पुं । नन्दिवृक्षे । श.र. ।

**नन्दितरु:(द्रु:)** । पुं । धववृक्षे । भा. ।

**नन्दिनक:** । पुं । धववृक्षे । वै.निघ. ।

**नन्दिनी** । स्त्री । जटमांस्याम् । रेणुकायाम् । রেণুক । रा.नि.व.६ । हरीतक्याम् । मद.व.१ ।

नन्दिवृक्षे। प्रियङ्गौ। गुच्छकरञ्जे। शुक्लापामार्गे। वै.निघ.। चन्द्रशूरे। তোক্মারী। भा.।

**नन्दिपादपः**। पुं। नन्दिवृक्षे। वै.निघ.।

**नन्दिवृक्षः**। पुं। कलाये। वै.निघ.।

**नन्दिवृक्षः**। पुं। नन्दिके। मेषशृङ्ग्याम्। प.मु.।

**नन्दी** (इन्)। पुं, स्त्री (न्दी)। नन्दिवृक्षे। वट वृक्षे। प्लक्षवृक्षे। मे.। गुच्छकरञ्जे। रा.नि.व.९। शुक्लापामार्गे। रा.नि.व.४।

**नन्दीकामुकः**। पुं। पानीयामलके। वै.निघ.।

**नन्दीमुखः**। पुं। वंशधान्यविशेषे। दीर्घगोधूमे। वै.निघ.। प्लवजातीयपक्षिविशेषे। व्रीहिजाति भेदे। सु. सू. ४६ अ.। गुणाः—"निःशूकी दीर्घगोधूमः क्वचिन्नन्दीमुखाभिधः॥"

**नन्दीमुखा (खी)**। स्त्री। शूकशून्य-यवे। निद्रायाम्। गोधूमे। वै.निघ.। जलचरपक्षिविशेषे। च.सू.२७अ.। "स्थूला कठोरा वृत्ता च यस्याश्चूपरि स्थिता। गुटिका जम्बुसदृशी प्रोक्ता नन्दीमुखीति सा॥" निःशूकगोधूमे। "शुक्ला बृंहणी पथ्या तद्वत् नन्दीमुखा स्मृता।" भा.।

**नन्दीवरलः**। पुं। सागरशृङ्गकमत्स्ये। वै.निघ.।

**नन्दीवर्त्तः**। पुं। तगरे। वै.निघ.।

**नन्दीवृक्षः**। पुं। अधोमुखपत्रशाखे अश्वत्थविशेषे। गयां अश्वथ। प मु.। कोङ्कणदेशप्रसिद्धे सुगन्धवृक्षविशेषे। তূণ গাছ। हिं वे लयापिपर। ते वहिचेट्टु। तत्पर्य्यायाः,—तूनिकः, तूणी, पीतकः, कच्छपः, नन्दी, कुठेरकः, कान्तः, तुन्नः, कुवेरकः, कुणिः, कच्छः, कान्तलकः, तूणिः, कूणिः, तुन्दः नन्दिकः, नन्दिवृक्षः नन्दिवृक्षकः। वा. सू. ३५अ. अम्बष्ठादिव.। "नन्दीवृक्षपलाशकक्कुराः।" सु.सू.३८अ. न्यग्रोधादिव.। गुणाः—"नन्दीवृक्षो लघुः स्वादुः तिक्तस्तुवर उष्णक.। कटुपाकरसो ग्राही विषपित्तकफास्रजित्॥" भा.। कटुस्तिक्तः शीतः पित्तास्रदाहघ्नः। शिरःपीड़ाघ्नः कुष्ठघ्नः सुगन्धिः पुष्टिवीर्य्यकरश्च। रा.नि, व.२२। गाम्भार्य्याम्, गर्द्दभाण्डे वा। सु.सू.३८ अ. अम्बष्ठादिव.। मेषशृङ्ग्याम्। र.मा.।

**नन्द्यावर्त्तः**। पुं। तगरवृक्षे। मत्स्यभेदे। तद्गुणाः—संग्राही, कफपित्तविनाशी।

**नपुंसकम्**। क्ली, पुं। षण्डपुरुषे। क्लीवे। हिजड़े। तत्र शुक्रबाहुल्यात् पुमान्, आर्त्तवबाहुल्यात् स्त्री। साम्यादुभयोः नपुंसकमिति कारणम्। नपुंसके जाते गर्भचिह्नं यथा—यस्याः पार्श्वद्वयमुन्नतं पुरस्तान्निर्गतमुदरं प्रागभिहितलक्षणञ्च तस्या नपुंसकमिति विद्यात्। नपुंसकं चतुर्विधम्। यथा—आसेक्यश्च सुगन्धी च कुम्भीकश्चेर्ष्यकस्तथा। सरेतसस्त्वमी ज्ञेया अशुक्रः षण्डसञ्ज्ञितः। सु.शा.२ अ.। तेषां लक्षणादिकं तत्तत्शब्दे मृग्यम्।

**नमृका**। स्त्री। चटकविशेषे। सु.सू.४६अ.। गुडूचिकायाम्। वै.निघ.।

**नभम्**। क्ली। कमले। रा.नि.व.१०।

**नभः**। पुं। श्रावणमासे। श.र.। अम.। (स्) क्ली। आकाशे। पद्मे। अभ्रधातौ। वै.निघ.।

**नभःकेतुः**। पुं। धूलौ। धूलो।

**नभःक्रान्ती** (इन्)। पुं। सिंहे। श.मा.।

**नभःसङ्गमः**। पुं। पक्षिणि। अम.।

**नभश्चमशः**। पुं। चित्रापूपे। मे.।

**नभस्यः**। पुं। भाद्रपदे मासि। अम.।

**नभाः**। पुं। श्रावणमासि। घ्राणे। विसतन्तौ। मे.। पलितशीर्षे। धरणि.। मेघे।

**नभोऽम्बुपः**। पुं। चातकपक्षिणि। हे.च.।

**नभोरेणुः**। पुं। नीहारे। विका.।

**नभोलयः**। पुं। धूमे। श.र.।

**नमष्करी**। स्त्री। दुग्धपुच्छीवृक्षे।

**नमस्कारः**। पुं। विषभेदे।

**नमस्कारी**। स्त्री। खदिरिकाशाके, वराहक्रान्तायाम्। वराक्रान्ता। प.मु.। शुक्लज्जालुकायाम्। रा.नि.व.५। वा.सू.३५अ. अम्बष्ठादिव.। "अम्बष्ठा मधुकं नमस्कारी।" नीलदूर्व्वायाम्। वै.निघ.।

**नमेरुः**। पुं। सुरपुन्नागवृक्षे। সুরপুনাং। छलना। रा.नि.व.१०। सरलदेवदारौ। वै.निघ.। रुद्राक्षे। भूरिप्र.। [ भा.।

**नम्रः (कः)**। पुं। वेतसवृक्षे। मद.व.५।

**नयनम्**। क्ली। नेत्रे। रा.नि.व.१८।

**नयनचन्द्रलौहः**। पुं। नेत्ररोगे लौहः। त्रिकटु त्रिफला शृङ्गी शटी रास्ना शुण्ठी द्राक्षा नीलोत्पलं काकोली यष्टिमधुकं बला नागकेशरं वृहती कण्टकारी एषां प्र. २ प. कान्तलौहं १



प. अभ्रं १ प.। आदौ त्रिफलाक्काथेन तदनु तिलतैलेन अन्ते भृङ्गराजरसेन भावयेत्। वटी बदरास्थिवत्। ত্রিকটু ত্রিফলা, কাঁকড়াশৃঙ্গী, শটী রাস্না, শুঁঠ, দ্রাক্ষা, নীলোৎপল, কাঁকলা, যষ্টিমধু, বেড়েলা, নাগেশ্বর, বৃহতী, কণ্টিকারী প্রত্যেক ২ প. কান্তলৌহ ১ প. অভ্র ১ প.। অগ্রে ত্রিফলাকাথ, তৎপরে তিলতৈল, শেষে ভীমরাজরসে ভাবনা দিবে। বটী কুল-আঁটীর ন্যায়। भैष.।

**नयनाञ्चलकः**। त्रि। दृष्टिविभ्रानकुशले। भा.ने.री.चि.।

**नयनप्रसादः**। पुं। कतकवृक्षे। वै.निघ.।

**नयनप्लवः**। पुं। नेत्रयोरश्रुपूर्णत्वे। मा.नि.।

**नयनबुद्बुदः**। पुं। नेत्रबुद्बुदे। "विद्यादङ्गुलमाहुल्यं स्वाङ्गुष्ठोदरसम्मितं। द्व्यङ्गुलं सर्व्वतः सार्द्धं भिषङ्नयनबुद्बुदम्॥" सु.उ.१अ.।

**नयनशोणाञ्जनम्**। क्ली। नेत्ररोगे अञ्जनम्। पिप्पलीतण्डुलं सैन्धवलवणं मरिचं रसाञ्जनं कृष्णाञ्जनं समुद्रफेन शर्करा पुनर्नवा हरिद्रा रक्तचन्दन यष्टिमधु तुत्थं हरीतकी मनःशिला निम्बपत्रं रोध्रं फटिकारी शङ्खनाभिः कर्पूर एषां चूर्णं प्रःसमं लौहपात्रे ताम्रखण्डेन मधुना मर्द्दयेत्। পিপুলদানা, সৈন্ধব, মরিচ, রসাঞ্জন, শুর্মা, সমুদ্রফেন, চিনি, শ্বেতপুন্যা, হরিদ্রা, রক্তচন্দন, যষ্টিমধু, তুঁতে, হরীতকী, মনছাল, নিমপাতা, লোধ, ফট্‌কিরি, শঙ্খনাভি, কর্পূর—সমভাগ সূক্ষ্মচূর্ণ করিয়া লৌহপাত্রে তাম্রখণ্ডদ্বারা মধুর সহিত মর্দ্দন করিবে। ইহার অঞ্জন প্রয়োজ্য। भा.।

**नयनापाङ्गः**। पुं। नेत्रप्रान्ते। अम.।

**नयनी**। स्त्री। कनीनिकायाम्। श.च.।

**नयनोपान्तः**। पुं। अपाङ्गे। रा.नि.व.१८।

**नयनोर्द्ध्वगरोमराजिः**। स्त्री। भ्रुवि। ভুরু। रा.नि.व.१८।

**नयनौषधम्**। क्ली। स्रोतधातुकाशीषे। हे.च.।

**नरः**। पुं। मनुष्ये। नीलवृक्षे। रा.नि.व.९। क्ली। गन्धद्रव्ये। रामकर्पूरे। मे.।

**नरङ्गम्**। क्ली। शिश्ने। पुं। वरण्डके। নারাঙ্গা। ब्रणः।

**नरटङ्कणम्**। क्ली। नरसारे। निशादल।

**नरनामा(न्)**। पुं। नीलीवृक्षे।

**नरनामिका (नी)**। स्त्री। श्मश्रुमत्यां स्त्रियाम। श.र.। त्रिका.।

**नरप्रियः**। पुं। नीलीवृक्षे। रा.नि.व.९। पारावते। वै निघ.। [ हे.च.।

**नरमालि(नि)नी**। स्त्री। श्मश्रुमत्यां स्त्रियाम्।

**नरमूत्रम्**। क्ली। मानुषमूत्रे। মানুষের মূৎ। गुणाः—आमघ्नं क्रिमिविषघ्नं तिक्तोष्णं लवणं रुक्षं भूतघ्नं त्वग्दोषहरं वातहरञ्च। रा.नि.व.१५। "मानुषं चारकटुकं तितोष्णं लवु चोच्यते। चक्षूरोगहरं बल्यं दीपनं कफनाशनम्॥" "अप्रसूताया स्तनं मूत्रं प्रसूताया द्रवं लघु। न किं गुणविशेषः स्यात् संमता पाकवीर्य्ययोः॥" अत्रि.९अ।

**नरवल्लभः**। पुं। कपोते। वै.निघ.।

**नरवृक्षः**। पुं। नीलीवृक्षे। रा.नि.व.९।

**नरषण्डः**। पुं। गर्भविकारजन्यपुरुषभेदे। পুং-নপুংসক। यथा—"मन्दाल्पवीजाल्पबलावहर्षौ क्लीवे च हेतुर्विकृतद्वयस्य।" च.शा.२अ.।

**नरसादरः**। पुं। नरसारे। निषादल। भैष. महाशङ्खद्रावके।

**नरसारः**। पुं। निशादल इति ख्याते द्रव्ये। हिं नौसादर। तत्करणविधिः—"औष्ट्रं वा माहिषं गव्यं पुरीषं भस्मतां गतं। क्षारपाकविधानेन नृसारसिद्धिरुच्यते॥" गुणाः—"पटुप्रवृत्तिशीलानां स्रावणः शोथहृद्धिमः। यकृद्दोषे ज्वरे प्लीह्नि शिरःशूलेऽर्व्वुदादिषु। स्तनरोगे रक्तपित्ते कासे भग्नामये तथा। योनिव्यापत्सु च ज्ञेयो नरसारः सुखावहः॥" र.सा.सं.। तच्छुद्धिः—"नरसारो भवेच्छुद्धस्तूर्णतोये विपाचितः। दोलायन्त्रेण यत्नेन भिषग्भिर्योगसिद्धये॥" अत्रि.। शा.कौ.।

**नरसिंहरूपज्वरः**। पुं। विषमज्वरभेदे। "विदग्धेऽन्नरसे देहे श्लेष्मपित्ते व्यवस्थिते। तेनार्द्धं शीतलं देहमर्द्धमुष्णं प्रजायते॥" निदा.।

**नरहरिः**। पुं। राजनिघण्टुकारे।

**नराङ्गमेदिनी**। स्त्री। जटामांस्याम्।

**नराधिपः**। पुं। महारग्वधवृक्षे। सु.चि.३०अ.।

**नरी**। स्त्री। मानुष्याम्। जटा.। त्वचायाम्। चामडा। वै.निघ.।

**नरेन्द्रः** । पुं । आरग्वधे । काष्ठागुरुवृक्षे । सु. चि.१६अ. । विषवैद्ये । मे. । राजिके । त्रिका. ।

**नरेन्द्रद्रुमः** । पुं । आरग्वधवृक्षे । সোন্দাল গাছ । भैष.कुष्ठ-चि. । "पूतीकार्कस्नुक्नरेन्द्रद्रुमा-णाम् ।" च.द.कुष्ठ-चि. ।

**नरेन्द्राह्वः** । पुं, क्ली । काष्ठागुरुणि । वै.निघ. ।

**नर्कुटकम्** । क्ली । नासिकायाम् । हे.च. ।

**नर्त्तकः** । पुं । मयूरे । करिणि । हे.च. । देवनले । श.र. ।

**नर्त्तका (की)** । स्त्री । नलिकानामगन्धद्रव्ये । रा.नि.व.१२ । हस्तिन्याम् । मयूर्याम् ।

**नर्त्तनप्रियः** । पुं । मयूरे । वै.निघ. ।

**नर्त्तापहारकः** । पुं । धूलीकदम्बे । वै.निघ. ।

**नर्म्मटः** । पुं । खर्परे । খাপরা । হারা. । सूर्य्ये ।

**नर्म्मठः** । पुं । कुचाग्रे । श.र. । मैथुने । वै.निघ. ।

**नर्म्मदा** । स्त्री । भारतवर्षीयनदीविशेषे । सा विन्ध्यपादवाहिनी । तज्जलगुणाः—लघु शीतलं पथ्यं कफपित्तप्रकोपकरं सर्व्वरोगघ्नं रुच्यं मधुरञ्च । रा.नि.व.१४ । स्पृक्कायाम् । हे.च. ।

**नर्म्मरा** । स्त्री । सरलायाम् । निष्फलायाम् । भस्त्रायाम् । मे. ।

**नलः** । पु । Phragmites karka, Syn. Arundo karka.) स्वनामख्याततृणे । दूर्व्वाकाराङ्कुरोऽन्तःशुषिरः स्वनामख्यातः । सु.सू. ३८अ.ड. । नल । मं देवनलु । कं देवनाल । तें किक्कि शगड्डि । तत्पर्य्यायः,—धमनः, पोटगलः, नालः, नड़ः, कुच्छिरन्ध्रः, कीचकः, दीर्घवंशः, शून्यमध्यः, विभीषणः, छिद्रान्तः, मृदुपत्रः, वंश-पत्रः, मृदुच्छदः, लालवंशः । अयं द्विविधः क्षुद्रदीर्घभेदात् । तयोः प्रथमः शीतकषायः मधुरः रुचिकरः रक्तपित्तघ्नः दीपनः बलदश्च । देवनलः मधुरः वृष्यः ईषत्कषायः वीर्य्याधिकः रसकर्म्मणि प्रशस्तश्च । रा.नि.व.८ । वा.सू.१५अ.वीरतरादिः । "वृचादनी-नल-कुशद्वय-गुण्ठ-गुन्द्राः ।" খাগড়ে । থাগড়া । सु.सू.३८अ.तृणपञ्चमूले । तालीशपत्रे । वै.निघ.वा.व्या.दशमूलादितैले । कदम्बवृक्षे । मातुलुङ्गवृक्षे । देवधान्ये । सुगन्धे । वै.निघ. । क्ली । पद्मे । रा.नि.व.१० ।

**नलकम्** । क्ली । शाखास्थनि । हे.च. । पृष्ठा-स्थनि । পিঠের হাড় । रा.नि.व.१८ । पद्माक्षे । পদ্মবীজ । वै.निघ. । [ भा.म.३भ. ।

**नलकास्थि** । क्ली । नाड़ीवत्सरन्ध्रास्थिपर्व्वसु ।

**नलकिनी** । स्त्री । जानुदेशे । जान्वस्थनि । जङ्घायाम् । हे.च. ।

**नलकीलः** । पुं । जानुदेशे । हे.च. ।

**नलदम्** । क्ली । उशीरवत्पीतच्छविलामज्जके । उशीरभेदे । भा. रेवतीग्र.चि. । "पलङ्कषायं नलदे ।" प्रलापकज्व.चि. । "नलदतुरगगन्धा ।" पुष्परसे । उशीरे । मे. । वै.निघ दाह.चि.रसादि-गुड्याम् । वा.व्या.चि.दशमूलादितैले । जटा-मांस्यां । सु.सू.२८अ. । च.सू.४अ.अञ्जनादिः । वै. निघ.र.पि.चि.चन्दनादिचूर्णे । च.द.यक्ष्म.चि. लवङ्गाद्यचूर्णे । वा.व्या. एलादितैले ।

**नलदम्बुः** । पुं । निम्बवृक्षे । भूरिप्र. ।

**नलदा** । स्त्री । जटामांस्याम् । रा.नि.व.१२ । उशीरे । परागे । वै.निघ. ।

**नलदाम्बु** । क्ली । उशीरजले । वै.निघ. ।

**नलपट्टिका** । स्त्री । नलनिर्म्मितपट्टिकायाम् । নলের পাটী, চেটা, মাদুর । হারা. ।

**नलमीनः** । पुं । चिलिचिममत्स्ये । अम. । गुणः—कफकरत्वम् । अत्रि.२२अ. ।

**नलमूलम्** । क्ली । वीरणमूले । বেণার মূল । सु.सू.३९अ. ।

**नलिकः** । पुं । नले । वै.निघ. ।

**नलिका** । स्त्री । इन्दीवराललतायाम् । रा.नि. व.३ । सि.यो.यक्ष्म.चि.चन्दनादितैले । नाड़ी-शाके । वै.निघ. । स्वनामख्यातसुगन्धवल्कले । सा च उत्तरापथे तन्नाम्ना प्रसिद्धा सुगन्धा प्रवालाकृतिः प्रवालो इति क्वचित् प्रसिद्धा, पवारो इति च क्वचित् ख्याता । नाल्‌को । मं नलिकाजाई । कं वेतललिके । तें पक्केसुक, सुगन्धिद्रव्यमु । तत्पर्य्यायः—कपोताङ्घ्रिः, विद्रुमलतिका, कपोत-वाणा, नलिनी, निर्म्मथ्या, शुषिरा, आशानी, स्नुत्या, रक्तदला, नर्त्तकी नटी । लक्षणम्—"मध्ये सारविहीना या सरसा कीटवर्ज्जिता । नलिका सा भवेद्भद्रा... ॥" भैष. । गुणाः—तिक्ता कटुका तीक्ष्णा मधुरा हिमा क्रमिघ्नी वातोदरघ्नी अर्शःशूलघ्नी मलशोधनी च । रा.नि.व.१२ । "नलिका शीतला लघ्वी चक्षुष्या कफपित्तहृत् ।





हृत् । कृच्छ्राश्मवाततृष्णास्रकुष्ठकण्डूज्वरापहा ॥" भा. ।

**नलिकायन्त्रम्** । क्ली । तन्नामके उदररोग-शमनार्थं यन्त्रविशेषे । लक्षणं यथा—"द्विद्वारा नलिका पिकनलिका वा दकोदरे ।" अत्रि. ।

**नलितः** । पुं । तिक्तपट्टशाके । তেতো পাট । বা নালিতা শাক । तत्पत्रं तिक्तं पित्तघ्नं शुक्रलञ्च । राज. ।

**नलिनः** । पुं । सारसपक्षिणि । अम. । पानी-यामलके । श.च. । क्ली । कमले । रा.नि.व.१० । श्वेतसौगन्धिके । শ্বেত শুন্দি । च.सू.४अ. । नील्याम् । जले । हे.च. । पद्मकेशरे । सु.सू. ३अ. ।

**नलिनकेशरम्** । क्ली । पद्मकेशरे । सु.सू.३८ अ.अञ्जनादिः ।

**नलिनी** । स्त्री । पद्मिन्याम् । পদ্মের ঝাড় । रा.नि.व.१० । नलिकायाम् । নাল্‌কো । वै. निघ.२भ.अर्शः. चि.विड़ङ्गादिचूर्णलेहे । नारिकेला-सवे । त्रिका. ।

**नलिनीदलम्** । क्ली । पद्मपत्रे ।

**नलिनीरुहम्** । क्ली । मृणाले । পদ্মের ডাঁটা । रा.नि.व.१० ।

**नली** । स्त्री । नलिकानामके गन्धद्रव्ये । रा.नि. व.१२ । मनःशिलायां । विश्व. ।

**नलुका** । स्त्री । नलिकायाम् । নাল্‌কো । जातीवृक्षे । वै.निघ. ।

**नलोत्तमः** । पुं । देवनले । रा.नि.व.८ ।

**नल्वकी** (इन्) । पुं । नले । নল । भैष.यो. व्या.चि. ।

**नल्वणः** । पुं । द्रोणपरिमाणे । १६ शे. । प.प्र. १ख. । वा.उ.३९अ. ।

**नल्ववत्सगा** । स्त्री । काकनासायां । श.च. ।

**नवः** । त्रि । नूतने । पुं । रक्तपुनर्नवायाम् । रा. नि.व.५ ।

**नवकार्षिकगुग्गुलुः** । पुं । भगन्दरे हितः । "त्रिफलापुरकृष्णाभिस्त्रिपञ्चैकांशयोजिता । गुड़िका शोथगुल्मार्शोभगन्दरवतां हिता ।" रस.र. । भा. ।

**नवगन्धिका** । स्त्री । नवमालिकायाम् ।

**नवज्वरहरी(वटी)** । स्त्री । नवज्वरे रसः । पारद-गन्धक-विष-त्रिकटु-त्रिफला-शुद्धदन्तीवीजानि प्र. समानि । द्रोणपुष्पीरसे मर्द्दनं गजपुटे पाकश्च । পারা, গন্ধক, বিষ, শুঁট, পিপুল, মরিচ, হরীতকী, বহেড়া, আমলা, শুদ্ধ দন্তীবীজ, প্রত্যেক সমাংশ, হলকষার রসে মর্দ্দন ও গজপুটে পাক করিবে । মাত্রা মাষকলায়ের ন্যায় । भा. ।

**नवज्वरेभसिंहः** । पुं । नवज्वरे रसः । "शुद्ध-सूतं तथा गन्धं लौहं ताम्रञ्च सीसकम् । मरिचं पिप्पली विश्वं समभागं विचूर्णयेत् । अर्द्धभागं विषं दद्यात् मर्द्दयेद्वासरद्वयम् ।" পারা, গন্ধক, লৌহ, তামা, সীসা, মরিচ, পিপুল, শুঁট, প্রত্যেক ১ তো. বিষ ॥০ তো. জল দিয়া ২ দিন মাড়িবে । र.सा.सं. ।

**नवदलम्** । क्ली । कोमलपत्रे । हड्डचन्द्रः । पद्मकेशरसमीपस्थदले । तत्पर्य्यायः—सम्वर्त्तिका, सम्वर्त्ती, सम्वर्त्तिः । अम. ।

**नवधान्यम्** । क्ली । प्रत्यग्रधान्ये । নূতন ধান্য । गुणाः—तच्च मालिन्यात् स्रोतसां स्तु तिरूपश्लेष्माणं करोति गुरु च । वा.सू.६अ. । अरुण. । "वर्षास्तु यवगोधूमतिलमाषा नवा हिताः ।" रा.नि.व.१६ ।

**नवनी(तम्)** । स्त्री, क्ली । दुग्धजसारे । টাট্‌কা ননি, মাথন্ । तत्पर्य्यायः,—नवोद्धृतं, नवनी, सरजं, मन्थजं, हैयङ्गवीनं, दधिसारः, कलम्बूटः, दधिजं, सारं, हैयङ्गवीनकं । तन्नानादुग्धजत्वात् दशविधं । गव्यं माहिषमाजमाविकं गर्द्दभजमौष्ट्रम् ऐड़कं हास्तिकं मानुष्यमश्वीजञ्चेति । विशेषाः स्वस्वपर्य्याये मृग्याः । सा. गुणाः—शीतं वर्णदं बलदं मधुरं वृष्यं संग्राहकं वातघ्नं कफघ्नं रुच्यं सर्व्वाङ्गशूलघ्नं कासघ्नं श्रमघ्नं सुखजनकं कान्तिप्रदं पुष्टिकरं चक्षुष्यञ्च । गव्यं नवनीतं—सर्व्वदोषघ्नम् । नवोद्धृतं—शीतलं रुच्यं मधुरं वृष्यं वातघ्नं कासघ्नं क्रमिहरं कफजनकं संग्राहि शूलघ्नं । दधिजं नवनीतं —बलपुष्टिकरं तृष्णासन्तापहरं चक्षुष्यं श्रमघ्नं तर्पनं पित्तघ्नञ्च । तथा—"एकाहाद्युषितं प्रोक्तमुत्त-रोत्तरगन्धदम् । अहृद्यं सर्व्वरोगाढ्यं दधिजं तद्घृतं सममिति ॥" रा.नि.व.१५ । माहिषं नवनीतं,—कषायं, मधुरं, शीतं, वृष्यं, बल्यं, ग्राहि, पित्तघ्नञ्च । छागं नवनीतं,—बल्यं, दीपनं, कफकासक्षयनेत्ररोगघ्नञ्च । आविकं नवनीतं, —हिमं, लघु, कफवातशमनं, गुद-योनि-शूलहरं । ऐड़कं नवनीतं,—क्लमं, शीतलं, गुरु, दीपनं,

मेधानाशि, पुष्टिकरं, मेदोवर्द्धकञ्च। हास्तिकं नवनीतं,—कषायं, शीतलं, लघू, तिक्तं, विष्टम्भि, कफपित्तक्रिमिनाशि च। अश्वीजं नवनीतं,—कटु-कषायं, उष्णं, चक्षुष्यं, कफवातघ्नञ्च। गार्द्दभं नवनीतं,—लघु, कषायं, बल्यं, दीपनं, कफवातघ्नं, मूत्रदोषनाशि च। औष्ट्रं नवनीतं,—शीतपाकि व्रण-क्रिमि-कफास्र-वात-नाशि च। मानुष्यं नवनीतं,—लघु, रुच्यं, दीपनं, चक्षुष्यं, सर्व्वामय-विषदोषहरञ्च। (नीतम्) कुन्दुरुखोटी। भैष. ग्रह.चि. वृहज्जीरकाद्यमोदके।

**नवनीतकम्।** क्ली, पुं। गन्धके। आमला-सार गन्धक। र.सा.सं.।

**नवनीतजम्।** क्ली। घृते। रा.नि.व.१५।

**नवनीताह्वयगन्धः।** पुं। आमलासार वा लाउया गन्धक इति लोके ख्याते गन्धक भेदे। र.सा.सं. नेत्राग्निरसे। [निघ.।

**नवनीतोद्भवम्।** क्ली। दधनि। घृते। वै.

**नवपल्लवः।** पुं। कोमलपल्लवे। सु.रि.प्र.।

**नवफलिका।** स्त्री। अचिरजातरजस्कायां स्त्रियि। मे.।

**नवमल्लिका (ल्ली) (मालिका)।** स्त्री। J. Zambac floribus muitiplicatis.) स्वनामख्याते पुष्पवृक्षविशेषे। सा ग्रीष्मोद्भवा। वासन्ती नेयाली सेउती नेवारी इति लोके। वासन्ती गाछ। मं रोमाली। कं विरवल्लिभेद। वम्मोगरा। तत्पर्य्यायः,—भद्रवल्ली, देवलता, गन्धनिलया, मालिका, ग्रीष्मभवा, अतिमोदा, ग्रीष्मी, ग्रैष्मी, ग्रीष्मोद्भवा, सप्तला, सुकुमारी, सुरभिः, रुचिमल्लिका, सुगन्धा, शिखरिणी, नवाली। गुणाः—अतिशीता सुरभिः सर्व्वरोगघ्नी च। रा.नि.व.१०।

**नवयौवना।** स्त्री। युवत्याम्। हारा.।

**नवरत्नम्।** क्ली। वज्र-मौक्तिक माणिक्य-नील-मरकत गोमेद-पद्मराग-वैदुर्य्य-प्रवालेषु नवमणिषु। प.मु.। तद्दैवतानि सूर्य्यादयः। तद्धारणविधिः—"वैदूर्य्यं धारयेत् सूर्य्ये नीलञ्च मृगलाञ्छने। आव-नेयेऽपि माणिक्य पद्मरागं शशाङ्कजे। गुरौ मुक्ता भृगौ वज्रं शनौ नीलं विदुर्बुधाः॥" दीपिका। तच्छुद्धिः—"विद्रुमं क्षारवर्गेण ताक्ष्य गोदुग्धत-स्तथा। पुष्परागञ्च सन्धानैः कुलत्थक्वाथसंयुतैः। तण्डुलीयजलैर्व्वज्रं नीलं नीलीरसेन वा। रोचना-भिश्च गोमेदं वैदूर्य्यं त्रिफलाजलैः॥" मारणं यथा—"लकुचक्षारसम्पिष्टैः शिलागन्धकतालकैः। वज्रं विनान्यरत्नानि म्रियन्तेऽष्टपुटैः खलु॥" र.चि,७अ.।

**नवरत्नदेवता।** त्रि। वज्रादिरत्नानामधिष्ठातृ-दैवते। See नवरत्नम्। [१२।

**नववल्लभम्।** क्ली। दाहागुरुणि। रा.नि.व.

**नवविधान्नम्।** क्ली। सूपशाकव्यञ्जनमिष्टौ-दनोपदंशवितर्दिशस्कन्धामरीचनेषु। वै.निघ.।

**नवशस्यम्।** क्ली। नवीनधान्ये। वै.निघ.।

**नवसागरम्।** क्ली। वज्रक्षारे। वै.निघ.२भ. क्षय.चि.क्षयकेसरिरसे।

**नवसारः।** पुं। नरसारे। निशादल।

**नवसू(ता)तिका।** त्रि। नवप्रसूतायां। वा,उ, २३.अ.।

**नवाङ्गम्।** क्ली। वातपित्तज्वरे विश्वादिनवद्रव्यज-कषाये। "विश्वामृताब्दभूनिम्बैः पञ्चमूलीसमन्वि-तैः। कृतः कषायो हन्त्याशु वातपित्तोद्भवं ज्वरम॥" শুঁট, গুলঞ্চ, মূতা, চিরতা, শালপাণি, চাকুলিয়া, বৃহতী, কণ্টিকারী, গোক্ষুর। सा.कौ। अन्यत्—त्रिकटुत्रिफलाचित्रकमुस्त-विड़ङ्गकृतकषाये। च.द.द्वन्द्व.ज्व.चि,।

**नवाङ्गा।** स्त्री। कर्कटशृङ्ग्याम्। কাঁকড়াশৃঙ্গী।

**नवान्नम्।** क्ली। नूतनान्ने। See अन्नम्।

**नवाम्बरम्।** क्ली। नूतनवस्त्रे। अम.।

**नवायसचूर्णम् (लौहम्)।** क्ली। पाण्डु-रोगे। त्र्यूषणत्रिफलामुस्तविड़ङ्गचित्रकाः समाः। नवायोरजसो भागास्तच्चूर्णं मधुसर्पिषा। भक्षयेत् पाण्डुहृद्रोगकुष्ठार्शःकामलापहम्। শুঁট, পিপুল, মরিচ, ত্রিফলা, মূতা, বিড়ঙ্গ, চিতামূল, প্রত্যেক ১ তো. জারিতলৌহ ৯ তো. মাত্রা ১ মা.। सा.कौ,।

**नवाली।** स्त्री। नवमल्लिकायाम्।

**नवोद्धृतम्।** क्ली। सद्योजातनवनीते। अम,।

**नव्यः।** । रक्तपुनर्नवायाम्। रा.नि,व.५।

**नशाकः।** पुं। काकसदृशपक्षिविशेषे। वै.निघ.। काकभेदे। उणा,।



**नश्यत्प्रसूतिका।** स्त्री। मृतवत्सायाम्। हे.च.।

**नष्टचेष्टता।** स्त्री। मूर्च्छायाम्।

**नस् (सा)।** स्त्री। नासिकायाम्। नाड्याम्। त्रिका.।

**नस्तलकः।** पुं। मत्स्यजातिक्षरे। गजवै.।

**नस्तः।** पुं। नासिकायाम्। भा.म.४भ.शि.री. चि.। "सर्पिर्व्वा नस्ततस्तयोः।" क्ली। नस्ये। र. सा.।

**नस्तकर्म्म।** क्ली। प्रतिमर्षावपीड़नस्यप्रधमन-शिरोविरेचनेषु पञ्चसु। "नावनञ्चावपीड़श्च ध्मवनं धूम एव च। प्रतिमर्षश्च विज्ञेयं नस्तःकर्म्म च पञ्चधा॥" च.सिद्धिस्था.।

**नस्तप्रच्छर्द्दनम्।** क्ली। पञ्चशिरोविरेचनेषु। च.सू.२अ.।

**नस्तो(स्यो)तः।** पुं। सनासारज्जु-वृषे। নাকফোঁড়া বলদ। अ.टी.र.।

**नस्यम्।** क्ली। नासाग्राह्यौषधे। नास, नश्य। नासयोर्न्यस्य आकृष्यते यत्। "नस्यं तत्कथ्यते धीरैः नासाग्राह्यं यदौषधम्॥" नस्यं रेचनस्नेहन-भेदेन द्विविधम्। तयो रेचनं कर्षणं, स्नेहनं बृंहणञ्च। तस्य कालः—"कफपित्तानिलध्वंसे पूर्व्वे मध्येऽपराह्णिके। दिनस्य गृह्यते नस्यं रात्रौ वानुत्कटे गदे॥" तच्च नस्यं प्रतिमर्षावपीड़नस्यप्रध-मनशिरोविरेचनभेदेन पञ्चधा। ऊर्द्धजत्रुदिरोगे अरोचकादौ च वैरेचनिकं नस्यं हितम्। भीरु-स्त्रीकृशबालानां स्नेहननस्यं देयम्। बालरोगादौ अवपीड़नम् अत्युत्कटदोषादौ प्रधमनम्। स्नैहिक-नस्यमानम् अष्टविन्दवः। निषेधकालः—"नस्यं त्यजेद्भोजनान्ते दुर्द्दिने चावतर्पितः। तथा नवप्रति-श्यायी गर्भिणी गरदूषितः। अजीर्णी दत्तवस्तिश्च पीतस्नेहोदकासवः। क्रुद्धः शोकाभिभूतश्च तृषार्त्तो वृद्धबालकौ। वेगावधारी श्रान्तश्च स्नातुकामश्च वर्ज्जयेत्॥" अष्टवर्षात् पूर्व्वं अशीतेरूर्द्धं च न देयम्। भा.। स्त्री (स्या) नासिकायाम्।

**नहुनी।** स्त्री। वृक्षभेदे।

**नहुषम्।** क्ली। तगरपुष्पे। रा.नि,व.१०। पुं। सर्पे। वै.निघ.।

**नहुषाख्यम्।** क्ली। तगरपुष्पे। रा.नि.व.१०।

**नक्षत्रम्।** क्ली। अश्विन्यादिसप्तविंशतितारकासु। सु.सू.५अ.। मौक्तिके। रा.नि,व.१३।

**नक्षत्रकान्तिविस्तारः।** पुं। धवलयाव-नालाख्यशिम्बीधान्यभेदे। रा.नि.व.१६।

**नक्षत्रमालिनी।** स्त्री। जातीपुष्पवृक्षे। वै. निघ.।

**नक्षत्रशः।** पुं। चन्द्रे। कर्पूरे। अम.। शुक्तौ। त्रिका.। खण्डे। हे.च.।

**नाकनः।** पुं। वंशधान्यविशेषे। प.मु.।

**नाकुः।** पुं। वल्मीकमृत्तिकायाम्। উইমাটী। भैष.आ.वा.चि.स्वेदे।

**नाकुली।** स्त्री। (Vanda roxburghii.) A variety of rásná. स्वनामख्यातमहाकन्द-शाकविशेषे, रास्नाद्वये। রাস্না, গন্ধরাস্না। प.मु.। नाकुली नाशि विषमुंगरीति च लोके। हिं चन्द्रा। तत्पर्य्यायः—सर्पगन्धा, सुगन्धा, रक्तपत्रिका, ईश्वरी, नागगन्धा, अहिभुक्, सरसा, सर्पादनी, व्यालगन्धा। नाकुली द्विधा—नाकुली गन्धनाकुली च। गुणाः—नाकुलीयुगलं तिक्तं कटूष्णं त्रिदोषघ्नं नानाविषघ्नञ्च। द्वितीया तु किञ्चिच्छ्रेष्ठा। रा.नि. व.४। चव्ये। प.मु.। मरिचे। शाल्मलिवृक्षे। मे.।

**नाकुलीद्वयम्।** क्ली। गन्धरास्नायां रास्नायाञ्च। सि.यो,उन्मा.चि.महापैशाचघृते। "वयस्था नाकुली-द्वयम्।"

**नाकुसद्मा (न्)।** पुं। सर्पे।

**नागः।** पुं, क्ली (गं)। शीषधातौ। वत्सनाभे। কাটবিষ। नागकेशरवृक्षे। प.मु.। वङ्गे। उद्वृ-वार्य्यां। नागबलायाम्। मेदायाम्। करिदन्ते। मुस्तके। सुरपुन्नागवृक्षे। रक्ताभ्रके। मे.। हस्तिनि। नागवल्लीलतायाम्। अ.टी,भ.। सि.यो,समशर्कर-चूर्णे। भैष.अ.पि.चि,पिप्पलीखण्डे। सर्पे। त्रिका.। वीजद्रुमे। অসন বৃক্ষ। रा.नि.व.२३।

**नागकन्दः।** पुं। हस्तिकन्दाख्यमहाकन्दशाके। रा,नि.व.७। [हस्तिकर्णपलाशे।

**नागकर्णः।** पुं। रक्तैरण्डे। रा.नि.व.८।

**नागकर्णी।** स्त्री। आखुकर्णीलतायाम्। रा. नि.व ३। श्वेतापराजितायाम्। श.चि.।

**नागकिञ्जल्कम्।** क्ली। नागकेशरपुष्पे। रा. नि.व.८।

**नागकुमारिका (री)।** स्त्री। गुड़ूच्याम्। रा.नि,व.३। मञ्जिष्ठायाम्। रा.नि,व.६।

**नागकुसुमम्।** क्ली। नागकेशरपुष्पे। वै.निघ. २भ.ज्व.चि.चन्दनबलातैले।

**नागकृष्णा।** स्त्री। गजपिप्पल्याम्। वै.निघ.।

**नागकेश(सरः) (कः)।** पुं। (Mesuafe-rrea.) स्वनामख्यातपुष्पवृक्षे। নাগেশ্বর চাঁপা ফুলের গাছ। हिं कावावचिनी। तैं नागकेसरालु। ता. नागल। वम्.। नागचम्प। तत्पर्य्यायः,—चाम्पेयः, केसरः, काञ्चनाह्वयः, सुवर्णाख्यः भुजङ्गाख्यः, षट्पदप्रियः, इभाख्यः, पुष्परेचनः, नागाख्यः, सुपर्णाख्यः, केशरः, नागकेशरः, केसरी, किञ्जल्कः, नागकिञ्जल्कः, नागीयः, काञ्चनं, सुवर्णं, हेमकिञ्जल्कः, रुक्मं, हेम, पिञ्जरं, फणिकेसरः, पुन्नगकेसरः, कनकाह्वयम्। गुणाः—दीपनः पाचनः आमपाचनः अग्निमान्द्यकरश्च। तत्कुसुमं वस्तिवातघ्नं कण्ठशिरोरुजाघ्नञ्च। रा.नि,व.६। "नागपुष्पङ्कषायोष्णं रूक्षं लघ्वामपाचनम्। ज्वरकण्डूतृषास्वेदच्छर्द्दिहृल्लासनाशनम्। दौर्गन्ध्यकुष्ठवीसर्पकफपित्तविषापहम्॥" भा.। "कीटादिकेन रहितमभिनवमिह केवलं ग्राह्यम्।" भैष.। क्ली। वज्रलौहे।

**नागगन्धा।** स्त्री। नाकुलीकन्दे। रा.नि,व,७। नागदमन्यां। নাগদনা। वै.निघ.।

**नागगर्भम्।** क्ली। सिन्दूरे। रा.नि,व.१३।

**नागचम्पकः।** पुं। वनचम्पकवृक्षे। নাগেশ্বর চাঁপা, বুনো চাঁপার গাছ। रा.नि.व.१०।

**नागच्छत्रः (त्रा)।** पुं, स्त्री। नागदन्त्याम्। रा.नि.व.५। (त्रा) नागवल्ल्याम्। वै.निघ.।

**नागजम्।** क्ली। सिन्दूरे। प.मु.। वङ्गे। हे.च.।

**नागजम्बूः।** स्त्री। भूमिजम्ब्वाम्। ভুঁইজাম।

**नागजिह्वा।** स्त्री। अनन्तायां। অনন্তমূল। भैष वा.व्या.चि.। र.मा.। मनःशिलायाम्। रा.नि.व.१२।

**नागजिह्विका।** स्त्री। मनःशिलायां। प.मु.।

**नागजीवनम्।** क्ली। वङ्गे। हे.च.।

**नागजीवनशत्रुः।** पुं। हरिताले। वै.निघ.।

**नागतुम्बी।** स्त्री। तुम्ब्याम्। वै.निघ.।

**नागदन्तः (कः)।** पुं। हस्तिदन्ते। मे.।

**नागदन्तिका (न्ती)।** स्त्री। महाराष्ट्रकर्णाटयोः स्वनामख्यातमहाक्षुपे। হাতিশুঁড়ে। तत्पर्य्यायः,—श्रीहस्तिनी, विशल्या, पर्व्वपुष्पी, विषौषधी, शुक्लपुष्पा, इभदन्ताह्वा, काण्डेरी, कामदूतिका, श्वेतपुष्पा, मधुपुष्पा, विशोधिनी, नागस्फोता, विशालाक्षी, नागच्छत्रा, विचक्षणा, सर्पपुष्पी, शुभ्रपुष्पी, स्वादुका, शतदन्तिका, सितपुत्री, सर्पदन्ती, नागिनी। गुणाः—कटुः तिक्ता रूक्षा वातकफघ्नी विषघ्नी मेधाकरी पाचनी गुल्मशूलोदरघ्नी च। रा,नि.व.५। स्थूलमूलदन्त्याम्। च.द.। भैष.ना.व्र.चि.। सु.चि.१७अ.। च.वि,८अ.। (का) वृश्चिकाल्यां। বিছাতি। र.मा.।

**नागदमनी।** स्त्री। (Artemisia vulgaris. Syn. A. Indica.) Indian worm wood. स्वनामख्यातक्षुपे। নাগদনা। हि नागचुनी, नागदवन। तैं ईश्वरिचेट्टु, दरणम। ता. माचिपत्री। वम्. दवणा। नेपाले तितापात। तत्पर्य्यायः,—जम्बुः, जाम्बवती, वृका, रक्तपुष्पी, जाम्बरी, मलघ्नी, दुर्द्धर्षा, दुःसहा। गुणाः—"बलामोटा कटुतिक्ता लघुः पित्तकफापहा। मूत्रकृच्छ्रव्रणान् रक्षो नाशयेज्जालगर्द्दभम्। सर्व्वग्रहप्रशमनी विशेषविषनाशिनी। जयं सर्व्वत्र कुरुते धनदा सुमतिप्रदा॥" भा.। त्रिदोषघ्नी तीक्ष्णोष्णा कटु-तिक्ता उदराध्मानघ्नी कोष्ठशोधनी च। रा.नि.व.५। बन्ध्याकर्कोटक्याम्। वै.निघ.।

**नागदलम्।** क्ली। नागदमन्यां। নাগদনা। भैष.तक्रराजतैले। (स्त्री) पर्णे। পাণ।

**नागदलोपमः।** पुं। परूषकवृक्षे। পরুষ-ফল বা ফলসা গাছ। प.मु.।

**नागदा।** स्त्री। हरीतक्यां। र.सा.सं.स्वच्छन्दभैरवरसे।

**नागदोना।** स्त्री। नागदमन्याम्। नागदन्त्याम्।

**नागद्रुः।** पुं। वृक्षविशेषे। তেকাঁটা সিজু গাছ। वम्. गेरचिकाड़ा। श.च.।

**नागनामकम्।** क्ली। सीसके। भा.।

**नागनामा (न्)।** पुं। श्वेततुलसीवृक्षे। कृष्णतुलसीवृक्षे। वै.निघ.।

**नागपत्री।** स्त्री। लक्ष्मणाकन्दे। লক্ষ্মণামূল। रा.नि.व.७।

**नागपत्रम्।** क्ली। ताम्बूलदले। পান। वै.निघ.श्वास-चि.त्रिकटुवटी। [ लक्ष्मणाकन्दे।

**नागपत्रा।** स्त्री। नागदमन्याम्। भा.।



**नागपत्री।** स्त्री। नागदमन्याम्। वै.निघ.।

**नागपत्री।** स्त्री। लक्ष्मणाकन्दे।

**नागपर्णी।** स्त्री। नागवल्लीलतायाम्। वै.निघ.।

**नागपर्य्यायकर्णी।** स्त्री। श्वेतापराजितायाम्। रा.नि,व.३।

**नागपुटभावना।** स्त्री। षोड़शपलेन भावनायाम्। वै.निघ.।

**नागपुरगम्।** क्ली। सीसधातौ। रा.नि,व.१३।

**नागपुरीषच्छत्रम्।** क्ली। गजपुरीषजाते छत्राके। वा.उ.१७अ.।

**नागपुष्पः।** पुं। पुन्नागवृक्षे। मे.। नागकेशरवृक्षे। प.मु.। नागकेसरपुष्पसमपुष्पे महातरौ। सु.म,३८अ.एलादि.। क्ली। नागकेसरपुष्पे। च.द.र.पि चि.कामदेवघृते। सु.कल्प.५अ.। भा.फिरङ्गरोगे। च.चि.३अ.। नागचम्पके। मे.।

**नागपुष्पकः।** पुं। कपित्थवृक्षे। स्वर्णयुथिकायाम्। कुष्माण्डे। रा.नि.व.२३। पुन्नागवृक्षे। नागकेसरवृक्षे। वै.निघ.।

**नागपुष्पफला।** स्त्री। कुष्माण्डीलतायाम्। रा.नि.व.७।

**नागपुष्पा।** स्त्री। नागदमन्याम्। मनःशिलायाम्। वै.निघ.।

**नागपुष्पिका।** स्त्री। स्वर्णयूथिकायाम्। रा.नि.व.१०।

**नागपुष्पी।** स्त्री। नागदमन्याम्। भा.। स्वर्णयूथिकायाम्। रा.नि.व.१०। पुष्पवृक्षविशेषे। तत्पर्य्यायः,—श्वेतपुष्पा, नागिनी, रामदूतिका। गुणाः—"नागिनी रेचनी तिक्ता तीक्ष्णोष्णा कफपित्तनुत्। विनिहन्ति विषं शूलं योनिदोषवमिक्रिमीन्॥" भा.अर्क.चि.।

**नागफणः।** पुं। (Opuntia Dillenii. Syn. Cactus Indicus.) वृक्षविशेषे। ফণিমনসা। तैं ता. नागदलि।

**नागफलः।** पुं। पटोले। रा.नि.व.३। कटुपटोले। वै.निघ.।

**नागफेनम्।** क्ली। अहिफेने। वै.निघ.२भ.अ.सा.चि कुङ्कुमवटी।

**नागवधूप्रियः।** पुं। सल्लकीनिर्य्यासे। धूना। वै.निघ.।

**नागबन्धुः।** पुं। उदुम्बरवृक्षे। श.चि.। अश्वत्थवृक्षे। श.च.।

**नागबलः।** पुं। रक्तैरण्डवृक्षे। লাল ভেরেণ্ডা।

**नागबला।** स्त्री। (Sida spinosa. Syn. Sida alba.) गोरक्षतण्डुलायाम्। গোরক্ষচাকুলিয়া। हिं गुलशकरी ककही। तत्पर्य्यायः—गाङ्गेरुकी, झषा, ह्रस्वगवेधुका, खरगन्धिनी, गोरक्षतण्डुला, भद्रौदनी, खरगन्धा, चतुःपला: मह्लोदया, महापत्रा, महाशाखा, महाफला, विश्वदेवा, अनिष्टा, देवदण्डा, महागन्धा, घण्टा। च.द.यक्ष्म.चि.शृङ्ग्याद्यचूर्णे। च.चि.१अ.नागररसायने। सा,कौ महाकामेश्वरमोदके। नागानामिव बलं यस्याः सा। सि.यो.यक्ष्म.चि.बलाद्यघृते। भा.मू.कृ.चि.नागबलातैले। योगरत्न.उ,ख.। गुणाः—मधुराम्ला कषाया उष्णा गुरुः कण्डूकुष्ठवातव्रणपित्तघ्नी च। स्निग्धा आयुष्या ग्राहिणी वृष्या मूत्रकृच्छ्रक्षीणक्षयरोगेषु हिता च। भा.। मधुराम्ला कषाया उष्णा गुरुः कण्डूकुष्ठवातव्रणपित्तघ्नी वाजीकरणी च। रा.नि व.४।

**नागबलातैलम्।** क्ली। वातरक्ते तैलम्। तिलतैलं १६ श.। क्वाथार्थं—गोरक्षतण्डुलामूलं १२॥० श. वारि ६४ श. शे. १६ श. छागदुग्धं १६ श.। कल्कार्थं—तगरं यष्टिमधु प्र ५ प. वा २ श.। तुलाद्रव्ये जलद्रोणाः इति। प.प्र তিলতৈল ১৬ শ.। ক্বাথার্থ—গোরক্ষচাকুলিয়া ১২॥০ শ. জল ৬৪ শ. শে. ১৬ শ. ছাগদুগ্ধ ১৬ শ.। কল্কার্থ—তগরপাদুকা, যষ্টিমধু প্রত্যেক ৫ প. বা ২ শ.। च.द.।

**नागभूः।** स्त्री। क्षुद्रपाषाणभेदायाम् ছোট পাথরকুচা। रा.नि.व.५।

**नागभृत्।** पुं। डुण्डुभसर्पे। त्रिका.।

**नागमती।** स्त्री। कृष्णतुलस्याम्। वै.निघ.।

**नागमल्लः।** पुं। ऐरावत-हस्तिनि।

**नागमाता।** स्त्री। शारिवायाम्। वै.निघ.। मनःशिलायाम्। हे.च.। मनसादेव्याम्। श.र.।

**नागमारः।** पुं। भृङ्गराजे, केशराजे। কেশুতে। त्रिका.। त्रि। हस्तिमारके।

**नागरम्।** क्ली। मुस्तायां। मे.। च.सू,२अ.। शुण्ठ्याम्। रा.नि.व.६। भा.। वा.सू.१५अ.वचादिव.। "नागरातिविषाभयाः।" वा.चि.अ.१

दुरालभादिः। शुण्ठ्याम्। हरीतक्याम्। च.द. सन्निपातज्व.चि.षड़ङ्गपानीये। च.सू.४अ.। पुं। नागरङ्गवृक्षे। श.र.।

**नागरकः**। पुं। नागरङ्गवृक्षे। वै.निघ.।

**नागरक्तम्**। क्ली। सिन्दूरे। हे.च.।

**नागरघनः**। पुं। नागरमुस्तायाम्। नागर-मूता। रा.नि.व.६।

**नागरङ्गः**। पुं। (Citrus aurantium.) Orange. जम्बीरविशेषे। कमला लेबु। हिं नाराङ्गी, संत्रा। मं नारङ्ग। तें गंजनिम्म, नारंजिचेट्टु। ता. किचिलिचेट्टु। उत्. नारिङ्गी। तत्पर्य्यायः,—नारङ्गः, ऐरावतः, नार्य्यङ्गः, नागरः, नागरुकः, किर्म्मिरः, किर्म्मीरत्वक्, चक्राधिवासी। गुणाः—तत्फलम् अम्लम् अनुष्णं वातपित्तहरं सरञ्च। पक्वं स्वाद्वम्लं हृद्यं दुर्जरं वातघ्नञ्च। मद.व.६। मधुरमम्लं गुरु उष्णं रोचनम् आमवातक्रिमिशूलघ्नं श्रमघ्नं बलकरं रुच्यञ्च। रा.नि.व.११। सुरभि पाके गुरु दुर्जरम् अत्यम्ल मधुरकल्पं वृष्यं वातघ्नञ्च। तत्केशरं रुच्यं वातहरञ्च। राज.। वातघ्नं दुर्जरं गुरु च। सु.सू.४६अ.।

**नागरमुस्तकम् (स्ता)**। क्ली, स्त्री। (Cyperus pertenuis. Syn. Mariscus cyperus.) नागरदेशप्रसिद्धमुस्तायाम्। नागर-मूता। हिं नागरमोथा। तें तुङ्गगड्डलविम्। ता. मुद्दहकाच। दा. गरमोटा। तत्पर्य्यायः,—नागरोत्था, चक्राङ्गा, नादेयी, चूड़ाला, मुस्ता, शिशिरा, वृषध्वाङ्क्षी, कच्छरुहा, चारुकेशरा, उच्चटा, पूर्णकोष्ठसंज्ञा, कलापिनी। गुणाः—तिक्ता कटुः कषाया शीतला कफघ्नी पित्तज्वरातिसारारुचितृष्णादाहघ्नी श्रमघ्नी च। रा.नि.व.६।

**नागरा**। स्त्री। प्रानीयामलके। वै.निघ.। शुण्ठ्याम्।

**नागरादिः**। पुं। कषायभेदे। "नागरातिविषामुस्तभूनिम्बामृतवत्सकैः। सर्व्वज्वरहरः क्वाथः सर्व्वातीसारनाशनः॥" च.द.अ.सा.चि.। अन्यः—"नागरं देवकाष्ठञ्च धन्याकं बृहतीद्वयम्।" च.द. सामान्यज्व. चि.। शुण्ठ्यादीनां प्रत्येकं रक्तिद्वयाधिकमाषकत्रयं चतुष्पलजलेन पक्त्वा पलमवशेषयेत्। शा.कौ.। अपरः—"नागरं सुरतरुश्च धान्यकं कुण्डली बृहतिकायुगं निशि।" अति.ज्व.चि.। नागरमुस्तायाम्। वै.निघ.।

**नागरादिघनसंज्ञका**। स्त्री। नागर-मुस्तायाम्।

**नागराह्वम्**। क्ली। शुण्ठ्याम्। रा.नि.व.६।

**नागरी**। स्त्री। स्नुहीवृक्षे। मनसा गाछ। श.च.। [ वै.निघ.।

**नागरीकन्या**। स्त्री। बन्ध्याककर्कोटक्याम्।

**नागरुकः**। पुं। नागरङ्गवृक्षे। कमला लेबुर गाछ। श.र.।

**नागरूपप्रभम्**। क्ली। हरिताले। वै.निघ.।

**नागरेणुः (कः)**। पुं। सिन्दूरे। रा.नि.व. १३। (कः) नागकेसरवृक्षे। वै.निघ.।

**नागरोत्था**। स्त्री। नागरमुस्तायाम्। "नागरोत्था कच्छरुहा।" रा.नि.व.६।

**नागलता**। स्त्री। शिश्ने। त्रिका.। नागवल्ल्याम्।

**नागवल्लरी**। स्त्री। नागवल्ल्याम्। भा.।

**नागवल्लिका (ल्ली)**। स्त्री। पत्रशाकविशेषे। नागिता गाछ। ताम्बूलीलतायाम्। पान गाछ। तत्पर्य्यायः,—नागवल्लिका, ताम्बूली, वर्णलता, सप्तशिरा, सप्तलता, फणिवल्ली, भुजगलता, भक्ष्य-पत्रा, पर्णवल्ली, ताम्बूलिः, दिवाभीष्टा, नागिनी, नागवल्लरी। गुणाः—कटुस्तीक्ष्णा तिक्ता पीनस-वातघ्नी कफकासहरा रुच्या दाहकृद्दीपनी च। सा स्थानविशेषजातत्वात् बहुधा भिन्नगुणा। तत्र श्रीवाट्यम्लवाटी सातसी सदाशिराम्लसरादयः प्रसिद्धाः। तत्र अम्लसरा मालवे अगरापर्णं इति ख्याता, आन्ध्रे पोटुकुलिपर्णं हैसनीया च, घोरसमुद्रदेशे घोरसमुद्रदेशपर्णं इति प्रसिद्धा। श्रीवाटीगुणाः—मधुरा तीक्ष्णा रसाढ्या सरसा रुच्या च। अम्लवाटी—कट्वम्लतीक्ष्णतिक्ता उष्णा विष्टम्भकरी वातघ्नी च। सातसी—मधुरा तीक्ष्णा कटुरुष्णा पाचनी रुच्या दीपनी च। सदाशिरा—अतिरसा सुगन्धिः रुच्या तीक्ष्णा मधुरा दीपनी पुंस्त्वकरी अतिबल्या विरेचनी मुखसौगन्ध्यकरी च। अम्लसरा—तीक्ष्णा मधुरा रुच्या हिमा दीपनी बल्या मुखामोदिनी गुल्माध्मानादिजिच्च। पटुलिका—कषाया उष्णा कटुः मलकर्षिणी पित्तहृत् वातघ्नी च। हैसनीया—कटुस्तीक्ष्णा हृद्या दीर्घपत्रा रुच्या दीपनी पाचनी च। ताम्बूलं



सद्यस्त्रोटितं मुखरोगादिजननं दाहारोचकरक्तदं मलकरं विष्टम्भि वान्तिजननम्। चिरत्रोटितं ताम्बूलदलं जलपोषितं गुणकरं रुच्यं बल्यञ्च। कृष्णं पर्णं तिक्तमुष्णं कषायं दाहजनकं मुख-जाड्यकर मलजननञ्च। शुभ्रं पर्णं वातश्लेष्मरोगघ्नं रुच्यं पथ्यं दीपनं पाचनञ्च। शिरापर्णं रक्तहृत् शैथिल्यजनकञ्च। रा.नि.व.११। नागवल्लीफलं हृद्यं सुगन्धि कफवातजिच्च। अत्रि.१७अ.।

**नागवारिकः**। पुं। मयूरे। करीन्द्रे। मे.।

**नागविन्ना**। स्त्री। नागच्छत्रायाम्। नाग-दन्त्यां। वा.उ.६अ.।

**नागवीजम्**। क्ली। शीसकृतरसवेधकवीज-विशेषे। यथा—"माक्षिकेण हतं ताम्रं नागञ्च रञ्जयेन्मुहुः। तं नागं वाहयेद्द वीजे विषोड़श-गुणानिह। वीजन्त्विदं वरं श्रेष्ठं नागवीजम्प्रकीर्त्ति-तम्॥" र.चि.३अ.।

**नागवीरकः**। पुं। काकपच्चिणि।

**नागवृन्ता (न्तिका)**। स्त्री। वृश्चिकालीक्षुपे। प.मु.।

**नागशुण्डी**। स्त्री। हस्तिशुण्ड्याम्। वै.निघ.। तामालाख्याम्, डङ्गरीफले। रा.नि.व.७।

**नागश्रीवल्लभः**। पुं। सल्लकीनिर्यासे। वै. निघ.।

**नागसत्त्वः**। पुं। मेषशृङ्ग्याम्। वै.निघ.।

**नागसम्भवम्**। क्ली। सिन्दूरे। अम.।

**नागसिन्दूरम्**। क्ली। सीसकृत-सिन्दूरे। तत्प्रकरणं यथा—"भुजङ्गममगस्त्यञ्च पिष्ट्वा पत्र-म्प्रलेपयेत्। तत्र संविद्रुते नागे वासामार्गसमुद्भवम्। क्षारं वा मिश्रयेत्तत्र चतुर्थांशं गुरूक्तितः। प्रहरं पाचयेच्चुल्ल्यां वासादर्व्याविघट्टितं। तत उद्धृत्य तच्चूर्णं वासानीरैर्विमर्द्दयेत्। पुटेत् पुनः समुद्धृत्य तेनैव परिमर्द्दयेत्। एवं सप्तपुटैर्नागः सिन्दूरं जायते ध्रुवम्। तारस्य रञ्जनो नागः वातपित्त-कफापहः। ग्रहणीकुष्ठगुल्मार्शःशोषव्रणविषापहः॥" रस.चि.६अ.। [ अ.टी.भ.खा.।

**नागसुगन्धा**। स्त्री। रास्नायाम्, सर्पगन्धायां।

**नागस्तोककम्**। क्ली। वत्सनाभाख्यविषे। मिठा विष।

**नागस्फोता**। स्त्री। दन्तीक्षुपे। रा.नि.व.६। नागदन्तीक्षुपे। रा.नि.व.५।

**नागहनुः**। पुं। नखीनामगन्धद्रव्य। रा.नि. व.१२।

**नागहन्त्री**। स्त्री। बन्ध्याककर्कोटक्याम्। रा. नि.व.७। हिं भाँझ काँकरोल।

**नागा**। स्त्री। नाकुल्याम्। पुत्रदात्र्याम्। लाङ्गलीवृक्षे। वै.निघ.। [ रस्थान.२अ.।

**नागाख्यः**। पुं। नागकेसरे। त्रिका.। अति.

**नागाञ्जना**। स्त्री। हस्तिन्याम्।

**नागान्तकः**। पुं। मयूरे। गरुड़े। अम.।

**नागारातिः**। पुं। बन्ध्याककर्कोटिकायाम्। रा.नि.व.७।

**नागारिः**। पुं। देवदालीलतायाम्। वै.निघ.। बन्ध्याककर्कोटक्याम्। रा.नि.व.३।

**नागार्जुनयोगः**। पुं। अर्शःप्रभृतिरोगेषु योग-विशेषे। त्रिफला पञ्चलवणं कुष्ठ कटुकी देवदारु विड़ङ्गं निम्बफलं बला गोरचतण्डुला हरिद्रा दारुहरिद्रा सौवर्चललवणं प्र. समम्। करञ्ज-त्वग्रसेन पिष्ट्वा वदरास्थिप्रमाणा गुड़ी कार्य्या। उष्णजलेनार्शेयः तक्रेणार्शः काञ्जिकेन गुल्मं खदिरजलेन त्वग्रोगं जलेन मूत्रकृच्छ्रं तैलेन हृद्रोगं निर्गुण्ड्या सर्व्वज्वरञ्च हन्ति। ত্রিফলা, পঞ্চলবণ, কুড়, কটুকী, দেবদারু, বিড়ঙ্গ, নিমফল, বেড়েলা, গোরক্ষচাকুলি, হরিদ্রা, দারুহরিদ্রা, সচললবণ, প্রত্যেক সমভাগ। করঞ্জছালের রস সহ মর্দ্দন। কুলপ্রমাণ গুলী হইবে। च.द.।

**नागार्जुनवटिका**। स्त्री। नेत्ररोगे हिता। "त्रिफलाव्योषसिन्धूत्थयष्टीतुत्थरसाञ्जनैः। प्रपौण्डरीकं जन्तुघ्नं लोध्रं ताम्रं चतुर्दश। द्रव्याण्येतानि संचूर्ण्य वर्त्तिः कार्य्या नताम्बुना॥" रस.र.। नताम्बु तगरवारि।

**नागार्जुनाभ्रम्**। क्ली। हृद्रोगे औषधम्। "सहस्रपुटनैः शुद्धं वज्राभ्रमर्ज्जुनत्वचः। सत्वैर्विमर्दितं सप्तदिनं खल्ले विशोषितं। छायाशुष्का वटी कार्य्या नाम्नेदमर्ज्जुनाह्वयम्॥" रसा.स.।

**नागार्जुनी**। स्त्री। दुग्धिकायाम्। थिरुइ। वै.निघ.। [ व.७।

**नागालावुः**। स्त्री, क्ली। कुम्भतुम्ब्यां रा.नि.।

**नागाह्वः**। पुं। वनचम्पकवृक्षे। रा.नि.व.१०।

क्ली। नागकेसरपुष्पे। वा.सू.१५अ.अञ्जनादिः। "सैलामधुकनागाह्वम्।" सि.यो.बाहुशालगुड़े। "नागाह्वञ्चापि षट्पलम्।" च.द.मू.कृ.चि.।

**नागाह्वयम्।** क्ली। नागकेशरपुष्पे। वा.सू. १५अ.एलादिः। "पुन्नागनागाह्वयम्।"

**नागाह्वा।** स्त्री। लक्ष्मणाकन्दे। रा.नि.व.७। नागवल्लीलतायाम्। नागदमन्याम् वै.निघ.।

**नागिनी।** स्त्री। नागदन्तीक्षुपे। रा.नि.व.६। लक्ष्मणाकन्दे। रा.नि.व.७। नागवल्ल्याम्। नागपुष्पीवृक्षे।

**नागी।** स्त्री। वन्ध्याकर्कोटक्याम्। वै.निघ.२भ. जीर्णज्व.चि.कल्याणघृते।

**नागेयः।** पुं। नागकेशरे। रा.नि.व.६।

**नागेश्वररसः।** पुं। गुल्मे रसः। पारदः गन्धकः शीषः रङ्गं मनःशिला नृसारदः यवक्षारः सर्ज्जिक्षारः टङ्कणं लौहं ताम्रम् अभ्रं प्र, समम्। वज्रीक्षीरेण मर्द्दनं। पश्चात् वासाचित्रकदन्तीमूल-क्वाथेन दिवसं मर्द्दयेत्। मात्रा माषप्रमाणा। পারা, গন্ধক, সীসা, বঙ্গ, মনছাল, নিশাদল, যবক্ষার, সাচিক্ষার, সোহাগা, লৌহ, তাম্র, অভ্র, প্রত্যেক সমভাগ। সিজুর আঠায় মর্দ্দন। পরে বাসক, চিতা ও দন্তীর মূল সমভাগ লইয়া একত্র ক্বাথ করিয়া, সেই ক্বাথ সহ এক দিন মর্দ্দন করিবে। মাত্রা মাষকলায়ের মত। भैष.।

**नागोद(र)म्।** क्ली। गर्भजरोगविशेषे। "शुक्रशोणितं वायुनाभिप्रपन्नम् अवक्रान्तजीव-माध्मापयत्युदरम्, तत्कदाचिद्यदृच्छयोपशान्तं नैग-मेषापहृतमिति भाषन्ते। तमेव कदाचित् प्रलीयमानं नागोदरमित्याहुः।" सु.शा.१०अ.।

**नागोद्भवम्।** क्ली। कृष्णसर्पविषे।

**नाङ्कुरः।** पुं। सारसपक्षिणि।

**नाचिकेतः (तुः)।** पुं। अग्नौ। [ त्रिका.।

**नाटाम्रः।** पुं। कालिङ्गकलतायाम्। তরমুজ।

**नाड़ः।** पुं। नले। নল গাছ। रा.नि.व.८। नाड़ीवल्लतायाम्। च.सू.१अ.।

**नाड़िः।** स्त्री। शरीरान्तर्नाड़िकायाम्। अ.टी. भ.। सिंहपिप्पल्याम्। कालशाके। दूर्व्वाभेदे। नाड़ीव्रणे। নালি ঘা। वै.निघ.।

**नाड़िकम्।** क्ली। कालशाके। কাসন্দা শাক। भा.पू.१भ.शा.व.।

**नाड़िका।** स्त्री। कालशाके। घटपरिमाणे वै निघ।

**नाड़िकायन्त्रम्।** क्ली। यन्त्रविशेषे। बक-यन्त्र, ভাটীযন্ত্র। तस्य लक्षणं यथा—"विनिधाय घटे द्रव्यं कनीयांसमधोमुखं। घटमन्यं मुखे तस्य स्थापयित्वोभयोर्मुखम्। मृदुमृद्भिः समालिप्य नाड़िकां विनिवेशयेत्। यन्त्रात् कुण्डलिताङ्गित्वा जलद्रोणीं महोत्तमां। आधारभाण्डपर्य्यन्तं ततश्चाग्रां विधारयेत्। अधस्ताज्ज्वालयेदग्निं यावद्वाष्पो विनिर्दधः। गृह्णीयादाधारगतं निर्मलं रसमुत्त-मम्। नाड़िकायन्त्रमेतद्धि मुनिभिः परिकीर्त्ति-तम्॥" इति। अत्रि.।

**नाड़िकेरः (लः)।** पुं। नालिकेरवृक्षे। अ. टी.भ.।

**नाड़िचीरम्।** क्ली। निर्वेष्टने। नली। हारा.।

**नाड़िन्धमः।** पुं। स्वर्णकारे। त्रिका.।

**नाड़िपत्रम्।** क्ली। नाड़ीचशाके। श.मा.।

**नाड़ी।** स्त्री। शिरायाम्। रा.नि.व.१८। नासायाम्। नक्षत्रे। रा.नि.व.२३। नाले। गण्ड-दूर्व्वायां। मे.। नाड़ीव्रणे। रा.नि.व.२०। ६० पलात्मककाले।

**नाड़ीकः।** पुं। पट्टशाके। পাটশাক। কোষ্টার শাক। हिं पटुया। भा.पू.१भ.शा.व.। तत्पत्रं तिक्तमधुरभेदेन द्विविधं, तयोस्तिक्तं कृमिकुष्ठहरं; मधुरं पिच्छिलं शीतं विष्टम्भि कफवातकृच्च। शुष्कपत्रं—नलितमित्युच्यते। নালিতা। ज्वरघ्नं पित्तकफज्वरघ्नञ्च। तज्जलञ्च पित्तघ्नं रोचनं व्यञ्जने हितञ्च। राज. क्ली। कालशाके। हिं कालशाक। तत्पर्य्यायः,—नाड़िकं, कालशाकं, श्राद्धशाकं, कालकम्। गुणाः—"कालशाकं सरं रुच्यं वातश्लेष्मकफशोथहृत्। बल्यं रुचिकरं मेध्यं रक्त-पित्तहरं हिमम्॥" भा.।

**नाड़ीकलापकः।** पुं। सर्पाक्ष्याम्। भा.।

**नाड़ीकल्पनविधिः।** पुं। भूमिष्ठस्य नाड़ी-च्छेदनविधौ। "नाभिबन्धनात् प्रभृति हि त्वष्टा-ङ्गुलमभिज्ञानं कृत्वा छेदनावकाशस्य द्वयोरन्तरयोः शनैर्गृहीत्वा तीक्ष्णेन रौप्यराजतायसानां छेदना-नामन्यतमेन ऊर्द्धधारेण छेदयेत्। तामग्रे सूत्रे-



णोपनिबध्य कण्ठे चास्य शिथिलमवसृजेत्। तस्य चेन्नाभिः पच्यतां लोध्रमधुकप्रियङ्गुदारुहरिद्रा-कल्कसिद्धेन तैलेनाभ्यज्यात् एषामेव तैलौषधानां चूर्णेनावचूर्णयेदिति।" च.शा.८अ.।

**नाड़ीकेरः(लः)।** पुं। नारिकेलवृक्षे। श.र.।

**नाड़ीचः।** पुं। तिक्तपट्टशाके। নালিতা পাতা। "नाड़ीचवीजकल्कः।" भैष.क्षुद्ररो.चि.। पेचुके। कचु। त्रिका.। तत्पर्य्यायाः—कोचुकं, पेचुली, पेचुः, विश्वरोचनः। See नाड़ीकः।

**नाड़ीचक्रम्।** क्ली। नाड़ीनिर्णायकग्रन्थे।

**नाड़ीचरणः।** पुं। पक्षिणि। त्रिका.।

**नाड़ीचवीजम्।** क्ली। नालितावीजे। भैष, पृथ्वीसारतैले।

**नाड़ीजङ्घः।** पुं। काके। त्रिका.। बके।

**नाड़ीतरङ्गः।** पुं। काकोलविषे। मे.।

**नाड़ीतिक्तः।** पुं। नेपालनिम्बे। চিরেতা। रा.नि.व.९।

**नाड़ीनक्षत्रम्।** क्ली। जन्मनक्षत्रे। वै.निघ.।

**नाड़ीनिदानम्।** क्ली। नाड़ीज्ञानसंग्रहभेदे।

**नाड़ीपरीक्षा।** स्त्री। शङ्करसेनकृतनाड़ी-ज्ञानशास्त्रे, नाड़ीप्रकाशे।

**नाड़ीयन्त्रम्।** क्ली। तन्नामकविंशतिविधयन्त्रेषु। यथा—एकच्छिद्रभेदेन भगन्दरयन्त्रे द्वे। अर्शोयन्त्रे अपि द्वे। व्रणयन्त्रमेकं। वस्तिनेत्रयन्त्रं चत्वारि। उत्तरवस्तिनेत्रं द्विविधं। मूत्रवृद्धियन्त्रमेकं। दकोदरयन्त्रमेकं। धूमनेत्राणि त्रीणि वैरेचनिक-स्नैहिकप्रायोगिकभेदेन। निरुद्धप्रकशमेकं। सन्निरुद्धगुदयन्त्रमेकं। अलावूयन्त्रमेकं। अर्बुद-यन्त्रमेकम् इति। तानि चानेकप्रकाराणि अनेक-प्रयोजनानि, एकतोमुखानि, उभयतोमुखानि, स्रोतोगतशल्योद्धरणार्थं रोगदर्शनार्थम् आचूषणार्थं क्रियासौकर्य्यार्थञ्चेति। तानि स्रोतोद्वारपरिणाहानि यथायोगपरिणाहदीर्घाणि च। सु.सू.१अ.। "यन्त्रे नाड़ी व्रणाभ्यन्तःक्षालनाय षड़ङ्गुला। वस्तियन्त्राकृतिर्मूलमुखेऽङ्गुष्ठकलायखे। अग्रतः कर्णिके मूले निबद्धमृदुचर्म्मणि।" अत्रि.।

**नाड़ीव्रणः।** पुं। तन्नामकरोगे। নালীঘা। तस्य निदानं यथा—"यः शोथमाममतिपक्वमुपे-क्षतेऽज्ञो यो वा व्रणं प्रचुरपूयमसाधुवृत्तः। अभ्यन्तरं प्रविशति प्रविदार्य्य तस्य स्थानानि पूर्व्वविहितानि ततः स पूयः। तस्यातिमात्रगमनाद्गति-रिष्यते तु नाड़ीव यद्वहति तेन मता तु नाड़ी।" मा.नि.। "दोषैस्त्रिभिर्भवति सा पृथगेकशश्च सं-मूर्च्छितैरपि च शल्यनिमित्ततोऽन्या।" सु.नि.१०अ.। अभेदात् पक्वशोफस्य व्रणे चापथ्यसेविनः। अनु-प्रविश्य मांसादीन् दूरं पूयोऽभिधावति। गतिः सा दूरगमनात् नाड़ी नाड़ीव संस्रुतेः। नाभ्येका-नृजुरन्येषां सैवानेकगतिर्गतिः। सा दोषैः पृथगे कस्थैः शल्यहेतुश्च पञ्चमी। वातात् सरुक्सूक्ष्ममुखी विवर्णा फेणिलोद्वमा। स्रवत्यभ्यधिकं रात्रौ पित्तात्तृड़्ज्वरदाहकृत्। पीतोष्णपूतिपूयास्रं दिवा चातिनिषिञ्चति। घनपिच्छिलसंस्रवा कण्डूला कठिना कफात्। निशि चाभ्यधिकक्लेदा सवः सर्व्वाकृतिं त्यजेत्॥" वा.उ.२९अ.।

**नाड़ीशाकः।** पुं, क्ली (कम्)। पट्टशाके। পাটশাক। নালিতা। गुणाः—"कोठकृमि-विनाशनम्। मधुरं पिच्छिलं शीतं विष्टम्भि कफवात कृत्। तच्छुष्कं जलदोषघ्नम्पित्तस्रं श्रामवातकृत्॥" राज.३प.कुष्माण्डादौ।

**नाड़ीस्वेदः।** पुं। स्वेदविशेषे। वा.उ.२८अ.। "स्वेदनद्रव्याणां पुनर्मूलफलपत्रशुङ्गादीनां मृग-शकुनिपिशितशिरःपादानामुष्णस्वभावानां यथार्हम् अम्ललवणस्नेहोपसंहितानां मूत्रक्षीरादीनां वा कुम्भ्यां वाष्पमनुद्वमन्त्यामुत्क्वथितानां नाड्या शरेषी-कावंशदलकरञ्जार्कपत्रान्यतमकृतया गजाग्रहस्त-संस्थानया व्यामदीर्घया वा व्यामचतुर्भागाष्टभाग-मूलाग्रपरिणाहस्रोतसा सर्व्वतो वातहरपत्रसंवृत-च्छिद्रया द्विस्त्रिर्वा विनमितया वातहरस्निग्धस्नेहा-भ्यक्तगात्रस्य वाष्पमुपहरेत्। वाष्पो ह्यनृजुगामी विहतचण्डवेगस्त्वचमविदहन् सुखं स्वेदयतीति नाड़ीस्वेदः।" च.सू.१४अ.।

**नाड़ीहिङ्गुः।** पुं, स्त्री। हिङ्गुभेदे। হিঙ্গু-বিশেষ। हिं कलःपतिहिङ्गु। मं नाड़ीहिङ्गु। वं कलहस्ति। तत्पर्य्यायः,—पलाशाख्यं, जन्तुका, रामठी, वंशपत्री, पिण्डाह्वा, सुवीर्य्या, हिङ्गु-नाड़िका। गुणाः—कटूष्णः कफवातशान्तिकृत् विबन्धघ्नः आनाहघ्नश्च। रा.नि.व.६। हिङ्गुपत्रां। प.मु.।

**नाथहरिः।** पुं। पशौ। व्याक.।

**नादेयः** । पुं । जलवेतसे । मद.व.५ । काश-तृणे । रा.नि.व.८ । तज्जातीयानूपरोहितपाठी-नादिमीनवर्गे । तन्मांसगुणाः—मधुरं गुरु वातघ्न-सुष्ण रक्तपित्तकरं हृष्यं स्निग्धञ्च । क्ली । सौवर्च्च ल-लवणे । रा.नि.व.६ । सामुद्रलवणे । काशतृणे । रा.नि.व.२३ । सैन्धवलवणे । र.मा. । कृष्णाञ्जने । नदीजलादौ । भा. । "नद्या नदस्य वा नीरं नादेयमिति कीर्त्तितम् ।"

**नादेयिका (यी)** । स्त्री । नागरमुस्तायाम् । रा.नि.व.६ । नागरिकायाम् । भा. । भूमिजम्बु रु.मा. । नागरङ्गवृक्षे । जयन्त्याम् । प.मु. । जल-वेतसे । काशतृणे । वाराहीकन्दे । वज्रु.लि. । रा.नि.व.२३ । भूम्यामलक्याम् । एरण्डवृक्षे । वै.निघ. ।

**नानाकन्दः** । पुं । पिण्डालौ । रा.नि.व.७ ।

**नान्दीमुखी** । स्त्री । क्षुधान्यभेदे । यव । सा स्निग्धा । सु.सू.४६अ. । "नान्दीमुखी मधूली च मधुरा स्निग्धशीतला ।" च.र. ।

**नापाकम्** । क्ली । पद्मबीजे । वै.निघ. ।

**नापितशाला (लिका)** । स्त्री । नापित-भवने । लिका. ।

**नाभः** । पुं, क्ली । शिवे ।

**नाभकः** । पुं । हरीतकीवृक्षे । वै.निघ. ।

**नाभिः** । पुं, स्त्री । उदरावर्त्ते । नाई । रा.नि.व.१८ । तत्पर्यायः,—नाभी, तुन्दकूपी, तुन्दकूपिका, तुन्दिः, तुन्दिका, तुन्दी, तुण्डिः, उदरावर्त्तः । स च गर्भस्थस्य सद्यःमर्मासि भवति । तन्नामक-मर्मस्थाने । सु.शा.६अ. । स्त्री । कस्तूरिकामदे । मे. ।

**नाभिकण्टकः** । पुं । नाभिरोगे । गोँड़ ।

**नाभिका** । स्त्री । कृष्णकटभीवृक्षे । रा.नि.व.९ ।

**नाभिगुड़कः** । पुं । नाभौ गुड़कवद्ग्रन्थौ । नाईयेर गोँड़ । चिका ।

**नाभिगोलकः** । पुं । नाभिगुड़के । जटा. ।

**नाभिच्छेदनम्** । क्ली । नाड़िकाच्छेदने । च. ।

**नाभिनाड़ी** । स्त्री । अमलानामनाभिनाड्यां । नाभिनाड़ी । च. ।

**नाभिपाकः** । पुं । नाभिशोथे । नाई पाका ।

**नाभिनाला** । स्त्री । नाभिनाड्यां । चिका. ।

**नाभिलाषः** । पुं । अनिच्छायाम् । वै.निघ. ।

**नाभिशङ्खः** । पुं । स्वनामख्यात-वणिग्द्रव्य ।

**नाभी** । क्ली । नाभौ । श.र. । कस्तूर्याम् । मदिरायाम् ।

**नाभीलम्** । क्ली । स्त्रीकटिसन्धौ । नाभिगुड़के । मे. । पीड़ायाम् । नाभिकूपे । हे.च. । अण्डसन्धौ । वै.निघ. ।

**नाभ्यभ्यङ्गः** । पुं । नाभौ तैलमर्दने । [ फले ।

**नामगुण्डी** । स्त्री । उङ्गरीति स्वनामप्रसिद्ध

**नायिका** । स्त्री । पिच्छिकाताः किञ्चित्स्थूलैः कस्तूरीभेदे । मृगनाभिविशेष । यथा—"चूर्णा-कृतिस्तु खरिका तिलका तिलाभा कौलत्थबीज-सदृशी च कुलत्थिकाख्या । स्थूला ततः किमपि सैव पिण्डिका स्यात् तस्माच्च किञ्चिदधिकापि च नायिकैषा ॥" रा.नि.व.१२ ।

**नारः** । पुं । गोवत्से । जले । मे. । शुण्ठ्यां ।

**नारकीटः** । पुं । अश्मकीटविशेषे । मे. ।

**नारकेरः** । पुं । नारिकेलवृक्षे । जटा. ।

**नारङ्गम्** । क्ली । गर्जरमूलके । गाजरमूला । रा.नि.व.७ ।

**नारङ्गः** । पुं । नागरङ्गवृक्षे । कमला लेबुर गाछ । तत्पर्य्यायः,—मुखप्रियः, नागरङ्गः, सुरङ्गः, लग्नगन्धः, ऐरावतः, वक्त्रवासः, योगरङ्गः, सुरङ्गः, गन्धाढ्यः, गन्धपत्रः, वरिष्ठः । फलगुणाः—मधुराम्लं गुरु उष्णं रोचनं वातामक्रमिशूलश्रमघ्नं बल्यं रुच्यञ्च । रा.नि.व.११ । मद.व.६ । "नारङ्गं स्वादुगुणोपपन्नं सन्दीपनं रोचकमर्शसाञ्च । त्रिदोषहृत् शूलक्रमीन्निहन्ति मन्दाग्निकासश्वसनाप-हारि ॥" अत्रि.१७अ. । मरिचयूथे । पिप्पलीरसे । मे ।

**नारङ्गवर्णकम्** । क्ली । गञ्जने । शालगम । भा.पू.१भ.शा.व. ।

**नारदा** । स्त्री । इक्षुमूले । मूर्व्वायां । वै.निघ. ।

**नारा** । स्त्री । जले । श.र. ।

**नाराचचूर्णम्** । क्ली । उदावर्त्ताधिकारे चूर्णम् । पाठः—"त्वक्त्कृष्णाहरीतक्यौ द्विचतुःपञ्चभागिकाः । गुड़िका गुड़तुल्या सा विड्विबन्धगदापहा ॥" তেউড়ী ২ তো. পিপুল ৪ তো. হরীতকী ৫ তো. সর্ব্বসম গুড় । अन्यत्—त्रिवृच्चूर्णं पिप्पलीचूर्णं प्र. २ तो. शर्करा १ प. । तीलकद्वयेन



मधुना लिह्यात् । एतद्गाढ़पुरीष पित्तकफ देयम् । তেউড়ীচূর্ণ, পিপুলচূর্ণ প্রত্যেক ২তো. চিনি ১ প. । ২ তো. মধুর সহিত সেব্য । सा.कौ. ।

**नाराचिका (ची)** । स्त्री । स्वर्णतौलनयन्त्रे । निक्ति । श.र. ।

**नारायणः** । पुं । वैद्यवृन्दनामवैद्यकग्रन्थकारे, वैद्यामृतकारे ।

**नारायतैलम्** । क्ली । वातव्याधौ तैलविशेषे । पाठः—"बिल्वोऽग्निमन्थः श्योणाकः पाटला पारि-भद्रकः । प्रसारण्यश्वगन्धा च बृहती कण्टकारिका । बला चातिबला चैव श्वदंष्ट्रा सपुनर्नवा । एषां दशपलान् भागान् चतुर्द्रोणेऽम्भसः पचेत् । पादशेषं परिस्राव्य तैलपात्रं प्रदापयेत् । शतपुष्पा देवदारु मांसी शैलेयकं वचा । चन्दनं तगरं कुष्ठं एला पर्णिचतुष्टयं । रास्ना तुरगगन्धा च सैन्धवं सपुनर्नवं । एषां द्विपलिकान् भागान् पेषयित्वा विनिक्षिपेत् । शतावरीरसञ्चैव तैलतुल्यं प्रदापयेत् । आजं वा यदि वा गव्यं चीरं दद्याच्चतुर्गुणम् ।" इति खल्वम् । शीते गन्धद्रव्यं देयम् । বেল, গণিয়ারী, শোণা, পারুল, নিমছাল, গন্ধভাছুলিয়া, অশ্বগন্ধা, বৃহতী, কণ্টিকারী, বেড়েলা, শ্বেত বেড়েলা বা (গোরক্ষচাকু-লিয়া), গোক্ষুর, পুনর্নবা প্রত্যেক ১০ প. । কাথার্থ—জল ২৫৬ শ. শে. ৬৪ শ. তিল-তৈল ১৬ শ. । কল্কার্থ—শুলফা, দেবদারু, জটামাংসী, শৈলজ, বচ, রক্তচন্দন, তগর-পাদুকা, কুড়, এলাইচ, শালপাণী, চাকুলে, মুগানী, মাষাণী, রাস্না, অশ্বগন্ধা, সৈন্ধব, শ্বেতপুন্যা প্রত্যেক ২ প. শতমূলীরস ১৬ শ. ছাগ বা গব্য দুগ্ধ ৬৪ শ. । শীতল হইলে গন্ধদ্রব্য দিবে । रस.र. ।

**नारायणप्रियम्** । क्ली । पीतचन्दने । मद. ।

**नारायणी** । स्त्री । शतमूल्याम् । रा.नि.व.४ । सा.कौ.लक्ष्मीविलासे । भैष. ।

**नारिकेरः (लः)** । पुं । Cocos nucifera.) The cocoanut tree. स्वनामख्यातवृक्षे । नारिकेल गाछ । श.र. । प.मु. । हिं नेरियल् । मं कं नारियल । तें नारिकदम । उत्. नड़िया । वम नारकौ । ला. टेना, टेङ्का । तत्पर्य्यायः,—

लाङ्गली, नारिकेरः, नारिकेरिः, नाड़िकेलः, नारीकेली, नारीकारी, नारिकेलिः, सदापुष्पः, शिरःफलः, मृदुफलः, पुटीदकः, नालिकेरः, रसफलः, सुतुङ्गः, कूर्च्चशेखरः, दृढ़नीरः, नीलतरुः, मङ्गल्यः, उच्चतरुः, तृणराजः, स्कन्धतरुः, दाक्षिणात्यः, दुरारुहः, चाम्बकफलः, दृढ़फलः, शिरोफलः, करकाम्भाः, पयोधरः, सुतकुम्भः, कौशिकफलः, फलमुण्डः, चटाफलः, मुण्डफलः, विश्वामित्रप्रियः, नाड़ीकेलः, नारकेलः, सुभङ्गः, फलकेशरः, वरफलः । सा गुणाः—गुरुः स्निग्धः शीतलः पित्तघ्नश्च । अर्द्धपक्वफलं तृष्णाशोषघ्नं दुर्ज्जरञ्च । तद्गतसलिलं लघु बल्यं शीतलं रसपाके मधुरं पित्तशमनं पीनसशमनं तृषाघ्नं दाहघ्नं शोषशमनं सुखदञ्च । तत्पक्वजलं किञ्चित्पित्तकारि मधुरं रुचिकरं दीपनं बलकरं गुरु हृष्यं बलवर्द्धनञ्च । नारिकेलखर्व्वरं स्निग्धं गुरु दुर्ज्जरं दाहविष्टम्भकरं रुच्यं बलवीर्य्यवर्द्धनञ्च । रा.नि.व.११ । "दुग्धन्तु नारिकेलस्य बल्यं रुच्यं गुरु स्मृतम् । पाके स्वादु समुद्दिष्टं स्निग्धं हृष्यञ्च दाहकम् । किञ्चिदुष्णं वातकफगुल्मकासविनाश-कम् ॥ नारिकेलद्वसं नाम हृद्यं बलवर्द्धनम् । केशं रसे च पाके च मधुरञ्च रुचिप्रदम् । हृद्यञ्च वातपित्तघ्नं तज्जीर्णं गुरु वातहम् ॥ नारिकेलस्य पुष्पन्तु शीतं रक्तातिसारहम् । रक्तपित्तप्रमेहञ्च सोमरोगञ्च नाशयेत् । मलस्तम्भकरञ्चापि प्रोक्तम्... ... ॥ नारिकेलशिरोमज्जा रसे पाके मधुः स्मृता । नारिकेलपुष्पजलं गुरु हृष्यम्प्रकीर्त्तितम् ॥" वै.निघ । "बालस्य नारिकेलस्य जलम्मार्यो विरेचनम् ।" राज. । "स्निग्धं स्वादु हिमं हृद्यं दीपनं वस्तिशोधनम् । हृष्यं पित्तपिपासाघ्नं नारिकेलोदकं गुरु ॥" सु. । तन्मस्तकगुणाः—"नारिकेलस्य तालस्य खर्ज्जूरस्य शिरांसि तु । कषायस्निग्धमधुरबृंहणानि गुरूणि च ॥ नारिकेल-फलं शीतं दुर्ज्जरं वस्तिशोधनम् । विष्टम्भि बृंहणं बल्यं वातपित्तास्रदाहनुत् । विशेषतः कोमलनारिकेलं निहन्ति पित्तज्वरमूलदोषान् । तदेव जीर्णं गुरु पित्तकारि विदाहि विष्टम्भि मतं भिषग्भिः ॥ तस्याम्भ (तदङ्कुर) शीतलं हृद्यं दीपनं शुक्रलं लघु । पिपासापित्तजित् स्वादु वस्तिशुद्धिकरम्परम् ॥" भा. । तस्य तैलं गुरु वाजीकरं चौशधातुपोषणं वातपित्तघ्नं मूत्राघात-प्रमेहश्वास कासग्रन्थमु हितं मेधाकरं तन्नाशकञ्

"नारिकेलं सुमधुरं गुरु स्निग्धञ्च शीतलम्। हृद्यं संवृंहणं वस्तिशोधनं रक्तपित्तनुत्॥ विष्टम्भि पक्वं मतिमन्नपक्वं कफवातलम्। वृंहणं शीतलं वृष्यं नारिकेलफलं विदुः॥" अत्रि. १७अ.।

**नारिकेरक्षीरिका।** स्त्री। नारिकेलक्षीरीनाम मिष्टान्नभेदे।

**नारिकेलखण्डम्।** क्ली। शूलाधिकारे औषधम्। पाठः—"कुड़वमितमिह स्यान्नारिकेलं सुपिष्टं पलपरिमितसर्पिःपाचितं खण्डतुल्यम्। निजपयसि तदेतत् प्रस्थमाते विपक्व गुड़वदथ सुशीते शाणभागान् क्षिपेच्च। धान्याकपिप्पलिपयोदतुगाद्विजीरान् शाणं त्रिजातकमथापि च केसरञ्च। हन्त्यम्लपित्तमरुचिं क्षयमस्रपित्तं शूलं वमिं सकलपौरुषकारि हारि।" सुपिष्टनारिकेलशस्यं ४ प. भर्ज्जनार्थघृतं १ प. शर्करा ४ प. नारिकेलजलं ४ श.। पाकसिद्धौ प्रक्षेपः—धन्याकं पिप्पली मुस्ता वंशरोचनी जीरकं कृष्णजीरकं गुड़त्वक् तेजपत्रम् एला नागकेसरपुष्पम् एषां प्र. चूर्णं ४ मा.। इदं पित्तशूले। सा.कौ.। रस.र.। भैष.। अन्यत्—कोमलनारिकेलशस्यं ८ प. शर्करा २ श. नारिकेलजलं ८ श. घृतं ५ प. शुण्ठीचूर्णं २ प. दुग्धं १ श. एकत्र पचेत्। पाकसिद्धौ वंशलोचना कटुकी मुस्ता गुड़त्वक् एला तेजपत्रं नागकेशरं धान्यकं पिप्पली गजपिप्पली प्र. चूर्णं ४ तो. प्रक्षेप्यम्। रस.र.। इदमम्लपित्ते।

**नारिकेलजम्।** क्ली। नानाभेषजजातमद्यभेदे। इन्द्रजिह्वा पत्रधात्री नारिकेलजलन्तथा कदलीफलसन्धानात् मद्य तन्नारिकेलजम्।

**नारिकेलजलम्।** क्ली। प्रसिद्धं, रक्तपित्ते हितम्। सि.यो.रक्तपि.चि.।

**नारिकेलतैलम्।** क्ली। तत्फलोत्थतैले। तद्गुणाः,—"नारिकेल-फलोद्भूतं तैलं वाजीकरं गुरु। पोषणं क्षीणधातुनां वातपित्तप्रणाशनम्। मूत्राघाते प्रमेहे च श्वासे कासे च यक्ष्मणि। मेधालोपे च हितदं चतान्तकरणन्तथा॥" अत्रि.।

**नारिकेललवणम्।** क्ली। सजलनारिकेलमध्ये सैन्धवलवणं पूरयित्वा तन्नारिकेलं मृदावेष्ट्य शोषयेत्। अथ दग्ध्वा तन्मध्याल्लवणं ग्राह्यं। मात्रा ४ माषाः। भैष.।

**नारिकेलक्षीरी।** स्त्री। नारिकेलदुग्धशर्कराकृतमिष्टान्ने। यथा—"नारिकेलं तनूकृत्य छिन्नम्पयसि गोः क्षिपेत्। सितागव्याज्यसंयुक्तं तत्पचेन्मृदुनाग्निना॥" गुणाः—"नारिकेलोद्भवा क्षीरी स्निग्धा पित्तातिपुष्टिदा। गुर्वी सुमधुरा वृष्या रक्तपित्तानिलापहा॥" भा.।

**नारिकेलामृतम्।** क्ली। अम्लपित्ताधिकारे औषधम्। "नारिकेलफलप्रस्थं सुपिष्टं घृतभर्जितं। प्रस्थं प्रस्थं समादाय शुण्ठ्याश्चूर्णस्य तद्युतं। द्विपात्रं नारिकेलाम्बु तत्समं क्षीरमेव च। धात्र्याश्च स्वरसप्रस्थं खण्डस्यापि तुलां न्यसेत्। एकीकृत्य पचेत्सर्व्वं शनैर्मृद्वग्निना भिषक्। सिद्धशीते प्रदातव्यं चूर्णं तत्र सुगुण्डितं। त्रिकटोः सचतुर्जातं प्रत्येकन्तु पलोन्मितं। धात्रीजीरकयुग्मञ्च धन्याकं ग्रन्थिपर्णकं। तुगापयोदचूर्णानि त्रिकर्षञ्च पृथक् पृथक्। मधुनः पलचत्वारि स्निग्धे भाण्डे निधापयेत्॥" रस.र.। भैष.।

**नारिकेलिः (ली)।** स्त्री, पुं (इन्)। नारिकेलवृत्ते। भा.। श.र.।

**नारिकेलोदकम्।** क्ली। नारिकेलजले।

**नारी।** स्त्री। तन्नामकौषधिविशेषे। या अश्वबलेति कथ्यते। यस्याः पत्रम् अश्वसदृशञ्च। च. चि.१अ.। रमण्यां। মেয়ে মানুষ। सा मातृशोणितोत्तरा विषमतिथौ जाता च। सुखबोधः।

**नारीघृतम्।** क्ली। नारीदुग्धोत्थघृते। মেয়ে মানুষের দুধের ঘি। गुणाः—कफेऽनिले योनिदोषे रोगेष्वन्येषु तद्धितम्। चक्षुष्यमार्त्तं स्त्रीणाञ्च सर्पिः स्यादमृतोपमम्॥" अत्रि.८अ.। चक्षुष्यं पथ्यं सर्व्वरोगघ्नं मन्दाग्निदीपनं रुच्यं पाके लघु विषघ्नञ्च। रा.नि.व.१५।

**नारीचम्।** क्ली। शाकविशेषे। নালিতা। तद्द्विविधं तिक्तं मधुरञ्च। तिक्तं रक्तपित्तघ्नं कृमिकुष्ठहरञ्च। मधुरं पिच्छिलं शीतलं विष्टम्भि कफवातकरञ्च। राज.।

**नारीदुग्धम्।** क्ली। मानुषीदुग्धे। See मानुषीक्षीरम्।

**नारीपयः।** क्ली। नारीदुग्धे।

**नारीवल्लभा।** स्त्री। गन्धप्रियङ्गौ। वै.निघ.।

**नारीषण्डः।** पु। स्त्रीनपुंसके। च.शा.२अ.।

**नारीष्टा।** स्त्री। मल्लिकापुष्पवृक्षे। মল্লিকা ফুলের গাছ। रा.नि.व.१०।

**नारीक्षीरम्।** क्ली। मानुषीक्षीरे।



**नार्य्यङ्गः।** पुं। नागरङ्गवृक्षे। কমলা লেবুর গাছ। श.र.।

**नार्य्यतिक्तः।** पुं। किराततिक्तके। চিরাতা। वै.निघ.।

**नालः।** पुं, क्ली। पद्मदण्डे। अम.। हरितालि। स्वामी.। नेत्रे। পিচ্কিরি। पुं। नले। रा.नि.८.। मेढ्रे। भा.म.२भ.मूत्रोत्सङ्गे।

**नालकः।** पुं। कलाये। মটর। रा.नि.व.१६। नलक इति पाठोऽपि पुस्तकान्तरे दृश्यते। [ ८।

**नालवंशः।** पुं। नले। নল গাছ। रा.नि.व.

**नालषिका।** स्त्री। शूकशिम्बीवीजे।

**नाला।** स्त्री। नले। स्तम्बे। ডাঁটা, নাড়া। अम.भ.।

**नाला (लि) कण्टः।** पु। अपामार्गक्षुपे।

**नालावती।** स्त्री। नागवल्लीलतायां। प.मु.।

**नालिः।** स्त्री। नलकास्थनि। नलि। नाड्यां, शिरायां। द्वि.को.।

**नालिकः।** पुं। खड्गके। গণ্ডার। महिषे। त्रिका.। रक्तगन्धबोले। नाड़ीशाके। चर्म्मकषायाम्। वै.निघ.। क्ली। पद्मे। श.र.।

**नालिका।** स्त्री। नालायाम्। श.र.। नाड्यां। अ.टी.। चर्म्मकषायाम्। जटा.। करिकर्णवेधनास्त्रे। हारा.। नलाकारतरुमात्रे। नलिकानामगन्धद्रव्ये। शिहुण्डे। वै.निघ.। मिष्टपत्रनालितायाम्। श.मा.।

**नालिकिनी।** स्त्री। कमलिन्याम्। পদ্মের ঝাড়। वै.निघ.। [ टी.र.।

**नालिकेरः (कः)।** पुं। नारिकेलवृक्षे। अ.

**नालिजङ्घः।** पुं। द्रोणकाके। हारा.।

**नालिता।** स्त्री। (Arum colocasia.) स्वनामख्यातपत्रशाके। নালিতা গাছ। "नालिता पट्टशाकञ्च मिष्टपत्रे तु नालिका।" प.मु.। गुणाः—नाड़ीचवत्।

**नाली।** स्त्री। मनःशिलायाम्। नालिकायाम्। वै.निघ.। शाककड़म्बके। ডাঁটা। मे.। नाड्यां, शिरायाम्। अ.टी.भ.। कर्णवेधनी-नामास्त्रविशेषे। पद्मे। श.र.।

**नालीकः।** पुं। पद्मे। मृणाले। शरे। क्ली। पद्मखण्डे। मे.।

**नालीकिनी।** स्त्री। पद्मसमूहे। श.र.।

**नालीव्रणः।** पुं। नाड़ीव्रणे। श.र.।

**नाल्पपुष्पी।** स्त्री। महाशणक्षुपे। प.मु.।

**नावनम्।** क्ली। नस्ये। सु.।

**नासत्यौ।** पुं। अश्विनीकुमारौ। अम.।

**नासा।** स्त्री। नासिकायाम्। वासकवृक्षे। रा.नि.व.४।१९।

**नासाच्छिन्नी।** स्त्री। पूर्णिकानामपक्षिविशेषे। त्रिका.।

**नासा(प्रती)नाहः।** पुं। नासारोगविशेषे। लक्षणं यथा—"कफावृतो वायुरुदानसंज्ञो यदा स्वमार्गे विगुणः स्थितः स्यात्। घ्राणं वृणोतीव यदा स रोगो नासाप्रतीनाह इति प्रदिष्टः॥" सु.उ.२२अ.।

**नासापरिशोषः।** पुं। नासारोगविशेषे। लक्षणं यथा—"घ्राणाश्रिते श्लेष्मणि मारुतेन पित्तेन गाढ़ं परिशोषिते च। समुच्छ्वसित्यूर्द्धमधश्च कृच्छ्राद्यस्तस्य नासापरिशोष उक्तः॥ सु.उ.२२अ.।

**नासा(सिका)पाकः।** पुं। नासारोगविशेषे। लक्षणं यथा—"घ्राणाश्रितं पित्तमरूंषि कुर्य्याद्यस्मिन् विकारे बलवांश्च पाकः। तं नासिकापाकमिति व्यवस्येत् विक्लेदकोथावपि यत्र दृष्टौ। सु.उ.२२अ.।

**नासायन्त्रम्।** क्ली। घ्राणार्वुदादिदर्शनार्थं यन्त्रविशेषे। लक्षणं यथा—"घ्राणार्वुदार्शसामेकच्छिद्रा नाड्यङ्गुलद्वया। प्रदेशिनीपरीणाहा स्याद्भगन्दरयन्त्रवत्॥" अत्रि.।

**नासारोगः।** पुं। नासागतैकत्रिंशद्रोगेषु। यथा—"अपीनसः पूतिनस्यं नासापाकस्तथैव च। तथा शोणितपित्तञ्च पूयशोणितमेव च। क्षवथुर्भ्रंशथुर्दीप्तो नासानाहः परिस्रवः। नासाशोषेण सहिता दशैकाश्चेरिता गदाः। चत्वार्य्यर्शांसि चत्वारः शोफाः सप्तार्वुदानि च। प्रतिश्यायाश्च ये पञ्च वक्ष्यन्ते सचिकित्सिताः। एकत्रिंशन्मितास्ते तु नासारोगाः प्रकीर्त्तिताः॥" सु.उ.२२अ.। विशेषः स्वस्वपर्य्याये मृग्यः।

**नासार्शः।** क्ली। घ्राणेन्द्रियजातार्शसि। নাকের অর্শ। तत्र लक्षणम्—प्रतिश्यायोऽतिमात्रं क्षवथु कृच्छ्रोच्छ्वासता पूतिनस्य सानुनासिकवाक्यत्वं शिरोदुःखञ्चेति। सु.नि.२अ.।

**नासालुः** । पुं । जातीफलवृक्षे । वै.निघ. । कट्फलवृक्षे । श.च. । [ सु.सू.३२अ. ।

**नासावंशः** । पुं । नासादण्डे । नाक दाँड़ि ।

**नासा(सिका)शोषः** । पुं । नासापरिशोषरोगे । सु.उ.२२अ. ।

**नासासंवेदनः** । पुं । काण्डीरलतायाम् । करला । रा.नि.व.३ । छिक्किन्याम् । हेँचेता । क्षुद्रकारवेल्ले । वै.निघ. ।

**नासास्थि** । क्ली । घ्राणास्थनि । नाकेर हाड़ । च.शा.७अ. ।

**नासा(परि)स्रावः** । पुं । नासास्रावरोगे । लक्षणं—"घनजस्रमसं सलिलप्रकाशं यस्या विवर्णं स्रवतीह नासा । रात्रौ विशेषेण हितं विकारं नासापरिस्रावमिति व्यवस्येत् ॥" सु.उ.२२अ. ।

**नासिकन्धमः** । त्रि । नासिकया निःश्वासग्राहिणि । व्याक. । [ व्याक. ।

**नासिकन्धयः** । त्रि । नासापथेन पानशीले ।

**नासिका** । स्त्री । घ्राणेन्द्रिये । तत्पर्य्यायः,—गन्धवहा, घोणा, शिङ्घिनी, सिङ्घिनी, नासिक्यं, नासिक्यकं, नस्या, गन्धनाली, गन्धबन्धा, नक्रा, घ्राणेन्द्रियः, नसी, विकुणिका, घ्रातिः, हुला । रा.नि.व.१८ । सा गर्भस्थस्य पञ्चभिर्मासैः भवति । सुखबोधः । [ पीनसरोगे ।

**नासिकामयः** । पुं । नासागत-रोगसमूहे ।

**नासिकामलम्** । क्ली । सिंघाणे । शिकृणि । रा.नि.व.१८ । [ डाका ।

**नासिकाशब्दः** । पुं । नासाशब्दे । नाक-

**नासिक्यम्** । क्ली । नासायाम् । त्रिका ।

**नासिक्यौ** । पुं । अश्विनीकुमारद्वये । हे.च. ।

**नास्तितः (दः)** । पुं । आम्रवृक्षे । श.च. ।

**नाहः** । पुं । आनाहे, मलावष्टम्भे । वै.निघ. ।

**निःशल्या** । स्त्री । क्षुद्रदन्तीक्षुपे । रा.नि.व.६ ।

**निःशूक** । पुं । मुण्डशालिधान्ये । रा.नि.व.१६ ।

**निःश्रेणिः** । स्त्री । वनखर्जूरिकायाम् । मे. ।

**निःश्रेणिका** । स्त्री । कोङ्कणप्रसिद्धे तृणविशेषे । घासविशेष । तत्पर्य्यायः,—श्रेणिबला, निरसा, वनवल्लरी । गुणाः—नीरसा उष्णा पशूनामबलप्रदा । रा.नि.व.८ ।

**निःश्रेणी** । स्त्री । खर्जूरीवृक्षे । খেজুর গাছ । रा.नि.व.११ ।

**निःश्वसन (सित)म्** । क्ली । निश्वासे ।

**निःश्वासः** । पुं । नासावायौ, प्रश्वासे । हे.च ।

**निःसरणम्** । क्ली । निर्गमने । हे.च. ।

**निःसारः** । पुं । पृथुशिम्बश्योणाकवृक्षे । বড় সোঁটা শোণা গাছ । रा.नि.व.९ । खारीमृत्तिकायाम् । वै.निघ. । शाखोटवृक्षे । श.च. ।

**निःसारकः** । त्रि । रेचके ।

**निःसारा** । स्त्री । कदलीवृक्षे । रा.नि.व.११ ।

**निःस्नुता** । स्त्री । अरुणवर्ण-त्रिवृतायाम् ।

**निःस्नेहफला** । स्त्री । श्वेतकण्टकार्य्याम् ।

**निःस्नेहा** । स्त्री । अतसीवृक्षे । मशिना । त्रिका. ।

**निःस्नुहा** । स्त्री । अरुणत्रिवृतायाम् ।

**निःस्यन्दः** । पुं । स्रावे । क्षरणे ।

**निःस्रावः** । पुं । भक्तसमुद्भवमण्डे । ভাতের মাড়, ফেন । हे.च. ।

**निकषः** । पुं । शाणे । কষ্টি পাথর । स्पर्शमणौ । अ.टी.भ. ।

**निकारणम्** । क्ली । मारणे । अम. ।

**निकुचः** । पुं । डहुके । ডেলো । च.सू.४अ. ।

**निकुञ्चकः** । पुं । मुष्टिपरिमाणे । स च कुड़वपादः । भरतधृतसर्व्वस्वे । वानीरवृक्षे । भा. ।

**निकुञ्जः** । पुं,क्ली । जलवेतसे । मद.व.५ । वै निघ.२भ.पाण्डु-चि.मण्डूराद्यरिष्टे ।

**निकुञ्जिकाम्ला** । स्त्री । निकुञ्जिकानामश्रीवल्लीतुल्यगुणकण्टकवृक्षे । निकुञ्जिके । निरोयवल्लीति भाषा । रा.नि.व.८ ।

**निकुम्भः** । पुं । दन्तीक्षुपे । र.मा. । वा.सू.१५ अ.शोधनव. । "निकुम्भकुम्भत्रिफलागवाक्षी ।" भा.म.४भ.नासारो.चि. । "शिग्रु सिंहीनिकुम्भानाम् ।" च.सू.२अ.षट्प्रदेहे । जलवेतसे । सु.चि.१७अ. ।

**निकुम्भवीजम्** । क्ली । जैपालवीजे । रा.नि.व.६ ।

**निकुम्भा (म्भी)** । स्त्री । कट्फले । वै.निघ. २भ.कर्णकण्ड.चि. । दन्तीवृक्षे । प.मु. । चन्द्रप्रभागुड्याम् । [ रा.नि.व.६ ।

**निकुम्भाख्यवीजम्** । क्ली । जयपालवीजे ।



**निकुतनः** । पुं । गन्धके । वै.निघ. ।

**निकेतनः** । पुं । जलवेतसे । वै.निघ. । पलाण्डौ । श.च. ।

**निकोचः (टः,ठः) (कः)** । पुं । अङ्कोटवृक्षे । আঁকোড় গাছ । रा.नि.व.९ । अ.टी.भ. । च.सू.२७अ. । (टकः) वृक्षभेदे । পেস্তা গাছ । वै.निघ. । [ कन्द ।

**निखण्डिका** । स्त्री । गुड़ूचीकन्दे । गुलूञ्च-

**निखर्व्वः** । पुं । वामने । हे.च. ।

**निगड़ः** । पुं । धातुजारणवीजविशेषे । यथा—रुद्राक्षचोरं पलाशवीजं गुग्गुलुः प्रत्येकं समं सैन्धवद्विगुणेन सह मर्द्दयित्वा विधेयः । र.चि.२अ. ।

**निगदः** । त्रि । पुरातने । वा.चि.७अ. ।

**निगन्धिकः** । पुं । सुवर्णचम्पके । वै.निघ. ।

**निगरः** । पुं । भोजने । रा.नि.व.२० ।

**निगरणम्** । क्ली । भोजने । रा.नि.व.२० । पुं । गले । मे. ।

**निगारः** । पुं । भक्षणे । अम. ।

**निगालः** । पुं । गले । গলা । रा.नि.व.१८ । अश्वस्य घण्टाबन्धसमीपस्थदेशे । ज.द.२अ. ।

**निगालवान्** । पुं । अश्वे । अम. । [ उणा. ।

**निगुः** । पुं । मनसि । त्रिका. । मले । मूले ।

**निगूढ़ः (कः)** । वनमुद्गे । हे.च. । त्रि । गुप्ते ।

**निग्रहः** । पुं । चिकित्सायाम् । रा.नि.व.२० ।

**निग्रहस्थानम्** । क्ली । भिषजां वादमार्गज्ञानार्थमधिगन्तव्यपदविशेषे । "त्रिव्यक्तस्य वाक्यस्याज्ञानं परिषदि विज्ञानवत्याम् अननुयोज्यस्यानुयोगोऽनुयोज्यस्य चाननुयोगः ।" च.वि.८अ. ।

**निघण्टिका** । स्त्री । गुलञ्चकन्दे । तत्पर्य्यायः,—गुलञ्चकन्दः, गुच्छात्वक्कन्दः, बलाह्वकन्दः । गुणाः,—मधुरः, शीतलः, वृष्यः, तर्पणः, दाहघ्नः ।

**निघण्टुः** । पुं । अभिधाने, नामसंग्रहे । हे.च. ।

**निघण्टुराजः** । पुं । नरहरिकृतराजनिघण्टौ ।

**निघसः** । पुं । भक्षणे ।

**निघृष्वः** । पुं । खुरे । वराहे । उणा । वायौ ।

**निचयात्मकः** । त्रि । सान्निपातिके ।

**निचिकी** । स्त्री । उत्तमायां गवि । প্রধান গাই । अ.टी.भ. ।

**निचितः** । त्रि । मज्जिते । व्याप्ते । हे.च. ।

**निचुलः** । पुं, क्ली । हिज्जलवृक्षे । प.मु. । वेतसभेदे । रा.नि.व.९ । च.सू.२अ । जलवेतसे । मद.व.५ । निचोले । পাছুড়ী । अम. । निम्बवृक्षे । वै.निघ. ।

**निचुलकम्** । क्ली । हिज्जलफले । च.द. सि.यो.अप.चि.व.पञ्चगव्यघृते । "त्रिवृतानिचुलानि च ।" निचोलके । हे.च. ।

**निचुलवीजम्** । क्ली । हिज्जलवीजे । लक्ष्मीविलासरसे ।

**निचोलकः** । पुं । कञ्चुलिकायाम् । কাঁচুলী । हे.च ।

**निखिड़ला(का)** । स्त्री । त्रिवृतायां । वै.निघ. । कलायभेदे । তেওড়ী । श.च. ।

**नितम्बः** । पुं । श्रोण्याम् । পাছা । रा.नि.व. १८ । तरुबुध्ने । रा.नि.व.२ । स्कन्धे । मे. ।

**नितम्बिनी** । स्त्री । नार्य्याम् ।

**नित्यगः** । पुं । आयुषि । "नित्यं शरीरं क्षणिकत्वेन गच्छतीति ।" च.सू.१अ. ।

**नित्यगतिः** । पुं । वायौ ।

**नित्यनाथः** । पुं । रसरत्नाकरग्रन्थकारे ।

**नित्ययुक्** । त्रि । आमोक्षं चित्तानुसरणे, पदार्थानुसारिणि । च.शा.२अ. ।

**नित्या** । स्त्री । मनसादेव्याम् । तन्त्रम् ।

**निदम्** । क्ली । विषे । श.च. ।

**निदद्रुः** । पुं । मनुष्ये । श.च. ।

**निदर्शनम्** । क्ली । दृष्टान्तेनार्थः प्रसाध्यते यत्र तत् । सु.उ.६५अ. ।

**निदाघः (कालः)** । पुं । ग्रीष्मकाले । स च ज्यैष्ठाषाढ़ौ, वैशाखज्यैष्ठौ वा । अम. ।

**निदानम्** । क्ली । रोगनिर्णये । विश्व. । रोगलक्षणे । रा.नि.व.२० । रोगहेतौ, कारणे । तच्च द्विविधम् विप्रकृष्टसन्निकृष्टभेदेन । तयोः विप्रकृष्टं विरुद्धाहारादि । सन्निकृष्टं वातादि । मा.नि. ।

**निदानार्थकरः** । पुं । रोगजनके । मा.नि. ।

**निदिग्धा** । स्त्री । कण्टकार्य्याम् । रा.नि.व.४ । एलायां । श.च ।

**निदिग्धिका** । स्त्री । कण्टकार्य्याम् । रा.नि.

व.४। चक्र.द. सन्निपातज्व. चि, पिप्पल्याद्यघृते। "त्रायमाणा निदिग्धिका।" एलायाम्। श.च.।

**निदिग्धिकागणः**। पुं। स्वल्पपञ्चमूले। अर्क.चि.।

**निदिग्धिकादिः**। पुं। निदिग्धिकादिसिद्ध-कषाये। कण्टकारी शुण्ठी गुडूची चेति। अन्यः—"निदिग्धिकाबलारास्नात्रायमाणामृतायुतैः। मसूरविदलैः क्वाथैः...।" च.द,वा.पि.ज्व,चि.।

**निदेशः**। पुं। भाजने। धरणि.।

**निद्रा**। स्त्री। स्वापे। ঘুমান। तत्पर्य्यायः,—शयनं, स्वापः, स्वप्नः, सम्वेशः, संवेशः, सुप्तिः, स्वपनं। तत्कारणम्—"तमःकफाभ्यां निद्रा स्यात्।" शार्ङ्ग.। सा च वैष्णवी मायेत्युच्यते। यदा चैतन्यवहा शिरां प्रति तमोगुणप्रधानः कफः शिरा रुणद्धि, तदा घोरनिद्रा जायते। तदा च ज्ञानाभावो भवति। सा च प्रलयकालिकी मूर्च्छा। निद्रा त्रिधा तामसी स्वाभाविकी वैकारिकी चेति। सु.शा.४अ.। निद्राया विधिनिषेधौ—"दिवा स्वापं न कुर्व्वीत यतोऽसौ स्यात्कफावहः। ग्रीष्मवर्ज्जेषु कालेषु दिवास्वापो निषिध्यते। उचितो हि दिवास्वापो नित्यं येषां शरीरिणाम्। वातादयः प्रकुप्यन्ति तेषामस्वपतां दिवा। व्यायामप्रमदाध्ववाहनरतान् क्लान्तानतीसारिणः, शूलश्वासवतस्तृषापरिगतान् हिक्कामरुत्पीड़ितान्। क्षीणान् क्षीणकफान् शिशून् मदहतान् वृद्धान् रसाजीर्णिनः रात्रौ जागरितान्निरशनान् कामं दिवा स्वापयेत्॥" भा.। "दिवा वा यदि वा रात्रौ निद्रा सात्मीकृता तु यैः। न तेषां स्वपतां दोषो जाग्रतां चोपजायते॥" सु.शा.४अ.। उपयुक्तकाले निद्रा-गुणाः—"निद्रा तु सेविता काले धातुसाम्यमतन्द्रिताम्। पुष्टिवर्णबलोत्साहानग्निदीप्तिं करोति च।" राज.५प.।

**निद्राकरम्**। क्ली। सुनिषण्णकशाके। प.मु.।

**निद्रागौरवम्**। क्ली। निद्राबाहुल्ये। मा.नि.।

**निद्रानाशः**। पुं। अनिद्रायाम्। मा.नि.।

**निद्रारिः**। पुं। नेपालनिम्बे। চিরেতা। रा.नि.व.६।

**निद्रालुः**। पुं। वनवर्व्वरिकायाम्। বন বাবুই। भार्ङ्गी। रा.नि.व.१०। नलीनामगन्धद्रव्ये। श.च.।

**निद्रासञ्जननम्**। क्ली। श्लेष्मणि। श.मा.।

**निधनम्**। क्ली। मरणे। अम.। पुं। वधताराथाम्। [ रा.नि.व.९।

**निधमनः**। पुं। निम्बवृक्षे। নিম্ গাছ।

**निधायकः**। पुं। एरण्डवृक्षे।

**निधिः**। पुं। नलिकायाम्। নালুকো। रा.नि.व.१२। जीवकौषधौ। श.च.।

**निधुवनम्**। क्ली। सुरते। अम.।

**निध्यानम्**। क्ली। दर्शने। अम.।

**निनन्दुः**। स्त्री। मृतवत्सायाम्। हे.च.।

**निन्द(न्ध)तलः**। त्रि। निन्दितहस्ते। श.र.।

**निपः**। पुं। कदम्बवृक्षे। श.च.। कलसे। अम.।

**निपाकः**। पुं। रन्धने, पाके। श.र.।

**निपानम्**। क्ली। दोहनभाण्डे। त्रिका.। कूपसमीपे शिलादिबद्धे कूपोद्धृताम्बुस्थाने। भ.।

**निपुणः**। पुं। चिकित्सके। सु.नि.१६अ.।

**निफला**। स्त्री। ज्योतिष्मतीलतायाम्। লতা-ফট্কী। भा.।

**निफालनम्**। क्ली। दर्शने। वै.निघ.।

**निफेनम्**। क्ली। अहिफेने। रा.नि.व.६।

**निबन्धः**। पुं। मलमूत्ररोधरोगे, आनाहे। हे.च.। निम्बवृक्षे। जटा.।

**निबन्धनम्**। क्ली। हेतौ। भा.।

**निभालनम्**। क्ली। दर्शने। त्रिका.।

**निमज्जथुः**। पुं। शयने। निद्रायां। वै.निघ.।

**निमज्जनम्**। क्ली। स्नाने, अवगाहने। वै.निघ.। [ वा.चि,७अ.।

**निमर्द्दकः**। पुं। मांसस्य विविधव्यञ्जनप्रकारे।

**निमित्त(क)म्**। क्ली। हेतौ। मा.नि.। चिह्ने। अम.। (कम) चुम्बने। श.मा.।

**निमित्तकृत्**। पुं। काके। रा.नि.व.१९।

**निमीलः (नम्)**। पुं,क्ली (नम्)। निमेषे। हे.च.।

**निमेषः**। पुं। नेत्रवर्त्मगतरोगभेदे। तल्लक्षणं—"निमेषणीः शिरा वायुः प्रविष्टो वर्त्मसंश्रयाः। चालयेदति वर्त्मानि निमेषः स गदो मतः॥" सु.उ.३अ.। निमिषे। পলক্। श.र.।



**निमेषरुक्**। पुं। खद्योते। त्रिका.।

**निम्नगम्**। क्ली। जले। रा.नि.व.१४।

**निम्बः (कः)**। पुं। (Melia azadirachta. Syn. Azadirachta Indica.) स्वनामख्यातवृक्षे। নিম্ গাছ। हिं निम्। मं निंबु, लिम्ब। कं बेउ। तं वेपचेट्टु। ता. वेपुम्मरम्। तत्पर्य्यायः,—अरिष्टः, सर्व्वतोभद्रः, हिङ्गुनिर्य्यासः, मालकः, पिचुमर्द्दः, पत्रकृत्, पूयारिः, छर्द्दनः, अर्कपादप, पूकमालकः, कीटकः, विबन्धः, निम्बकः, कैटर्य्य, वरत्वचः, छर्द्दिघ्नः, प्रभद्रः, पारिभद्रकः, काकफलः, कीरेष्टः, नेता, सुमनाः, विशीर्णपर्णः यवनेष्टः, पीतसारकः, शीतः, राजभद्रकः। गुणाः—शीतः तिक्तः व्रणकृमिवमिशोफघ्नः श्लेष्मघ्नः बहुविषपित्तघ्नः विशेषतो हृदयविदाहशान्तिकरश्च। रा.नि.व.९। तत्फलगुणाः—रसे तिक्तं पाके कटु भेदनं स्निग्धं लघूष्णं कुष्ठघ्नं गुल्मार्शःकृमिमेहघ्नञ्च। भा.। "दूर्व्वानन्तानिम्बवासात्मगुप्ताः।" वा.सू.१५अ. आरग्वधादिः। खर्ज्जूरवृक्षे। तालीशपत्रे। मरिचे। पलाण्डौ। रक्तमूलके। रा.नि.व.२३।

**निम्बतरुः**। पुं। पारिभद्रवृक्षे। रा.नि.व.८। निम्बवृक्षे। मन्दारवृक्षे। अम.।

**निम्बतैलम्**। क्ली। निम्बफलोत्थतैले। নিম্-ফলের তৈল। गुणाः—कटूष्णं कृमिकुष्ठकफघ्नञ्च। रा.नि.व.१५।

**निम्बपञ्चकम्**। क्ली। पञ्चनिम्बे। रा.नि.व.२२।

**निम्बपत्रम्**। क्ली। प्रसिद्धं, रक्तपित्ते हितम्। নিমপাতা। सि.यो.र,पि.चि,खण्डखाद्ये। गुणाः—"निम्बपत्रं स्मृतं नेत्र्यं कृमिपित्तविषप्रणुत्। वातलं कटुपाकञ्च सर्व्वारोचककुष्ठनुत्॥" भा.। च.द.अष्टाङ्गधूपे।

**निम्बप्रसवः**। पुं। निम्बपत्रे। वा.चि.६अ.।

**निम्बरकः**। पुं। महानिम्बे। মহানিম্।

**निम्बवीजः**। पुं। राजादनीवृक्षे। ক্ষীরণী গাছ। रा.नि.व.११। क्ली। निम्बस्य वीजे।

**निम्बुः (म्बूः) (कः)**। पुं। (Citrus medica. Var. acida.) अम्लजम्बीरवृक्षे। টেক লেবুর গাছ, কাগজী লেবু। मं निंबे। कं निंबू। तत्पर्य्यायः,—अम्लजम्बीरः, वह्निः, दीप्तः, वह्निवीजः, अम्लसारः, दन्ताघातः, शोधनः, जन्तुमारी, निम्बूः, रोचनम्। गुणाः—फलमम्लरसं कटूष्णं गुल्मामवातहरम् आग्नेयं चक्षुष्यं कासकफकण्ठच्छर्द्दिहरं। पक्वमतीवरुच्यम्। रा.नि.व.११। निम्बूकमम्लं वातघ्नं दीपनं पाचनं लघु कृमिघ्नं तीक्ष्णमुदरग्रहघ्नं शूले हितं रोचनं मन्दाग्नौ बद्धगुदे च हितम्। भा.। "निम्बूकं कृमिसमूहनाशनं तीक्ष्णमुष्णमुदरग्रहापहम्। वातपित्तकफशूलिनां हितं नष्टधान्यरुचि-शोधनम्परम्॥ त्रिदोषसर्व्वज्वरपीड़ितानां दोषाश्रितानाञ्च सवज्वलानां। मलग्रहे बद्धगुदे हितञ्च विसूचिकायां मुनयो वदन्ति॥" अत्रि.१७अ.।

**निम्बूकपानकम्**। क्ली। निम्बूरसकृतप्रपानके। লেবুর শর্বৎ। निम्बुरसः १ भ. शर्करोदकं ६ भ. लवङ्गमरिचचूर्णेन सम्मिश्र कृते पानके। भा.।

**नियतः**। पुं। गन्धके। र.सा.सं.वसन्ततिलकरसे।

**नियमनः**। पुं। निम्बवृक्षे। वै.निघ.। क्ली। रसस्य संस्कारविशेषे। See पारदः।

**नियामकगणः**। पुं। रसनियामकद्रव्यसमूहे। यथा—"सर्पाक्षीवनकर्क्कोटी कञ्चुकी यमचिञ्चिका। शतावरी शङ्खपुष्पी शरपुङ्खा पुनर्नवा। मूषापर्णी च मत्स्याक्षी ब्रह्मदण्डी शिखण्डिनी। अनन्ता काकजङ्घा च काकमाची च पातिका। विष्णुक्रान्ता सहचरा सहदेवी महाबला। बला नागबला मूर्व्वा चक्रमर्द्द करञ्जकौ। पाठा तामलकी नीली जालिनी पद्मचारिणी। घण्टा विघण्टा गाजह्वा कोकिलाक्षो घनध्वनिः। आखुपर्णी चोरिणी च त्रिपुटी मेषशृङ्गिका। कृष्णवर्णा च तुलसी सिंही च गिरिकर्णिका॥" र.सा.सं.।

**नियोगः**। पुं। इदमेव कर्त्तव्यमिति अवधारणे। यथा—पथ्यमेव भोक्तव्यम्। सु.उ.२५अ.।

**नियोद्धा**। पुं। कुक्कुटे। रा.नि.व.१९।

**निय्या**। स्त्री। सर्षपषष्ठांशमाने। प.प्र.।

**निरन्नता**। स्त्री। उपवासे।

**निरशनम्**। क्ली। अनशने। व्याक.।

**निरसनम्**। क्ली। निष्ठीवने। अम.।

**निरसा**। स्त्री। निःश्रेणिकातृणे। रा.नि.व.८।

**निरातङ्कः**। त्रि। रोगमुक्ते। रा.नि.व.२०।

**निरापशालिः**। पुं। जलशून्यक्षेत्रे उत्पन्न-सञ्जातशालिधान्यविशेषे। নির্জলক্ষেত্রজ হৈম

निक थोक्ष । मं रूपशालि । कं तकनेन्त । गुणाः—मधुर स्निग्ध शीतल, पित्तदाहघ्नः त्रिदोषघ्न रुच्यः पथ्यः सर्व्वरोगघ्नश्च । रा.नि.व.१६ ।

**निरामज्वरः** । पुं । पक्वज्वरे । लक्षणं—"क्षुत्क्षामता लघुत्वञ्च गात्राणां ज्वरमार्द्दवम् । दोषप्रवृत्तिरुत्साहो निरामज्वरलक्षणम् ॥" मा.नि. ।

**निरामयः** । पुं । शूकरे । श.मा. । वनच्छागे । मे । त्रि । रोगमुक्ते । रा.नि.व.२७ ।

**निरामालुः** । पुं । कपित्थवृक्षे । श.च. ।

**निरालकः** । तदाख्यमत्स्यभेदे ।

**निरालम्बा** । स्त्री । आकाशमांस्याम् । सूक्ष्म जटामांस्याम् । रा.नि.व.१२ ।

**निरिन्द्रियः** । त्रि । इन्द्रियशून्ये । [ हेम. ।

**निरीहः** । त्रि । निश्चेष्टे । निर्व्यापारे । वा.चि.

**निरुत्थः (त्थितः)** । त्रि । मृते । र.सा.सं. ।

**निरुत्थीकरणम्** । क्ली । मृतलौहस्य मित्रपञ्चकादिभिः पाकेन मारणं । "सत्त्वमनमृत लौह पक्तव्यं मित्रपञ्चकैः । यथैव स्यान्निरुत्थञ्च सेव्यं रात्रिचतुष्टयम् ॥" मतान्तरं यथा—"गोघृतञ्चाष्टकं लौहं तप्तखल्ले विमर्दयेत् । दिनैकञ्चान्यकाद्रावैः कृत्वा गजपुटे पचेत् । इत्थंव सर्व्वलौहानां कर्त्तव्यं स्यान्निरुत्थितम् ॥" र.सा.सं. ।

**निरुद्धगुदः (पायुः)** । पुं । तन्नामकक्षुद्ररोगे । लक्षणादि यथा—"वेगसन्धारणाद्वायुर्विहतो गुदमाश्रितः । निरुणद्धि महत् स्रोतः सूक्ष्मद्वारं करोति च ॥ मार्गस्य सौक्ष्म्यात् कृच्छ्रेण पुरीषं तस्य गच्छति । सन्निरुद्धगुदं व्याधिमेनं विद्यात् सुदुस्तरम् ॥" सु.नि.१३अ. ।

**निरुद्धप्रक(का)शः** । पुं । मेढ्रजक्षुद्ररोगविशेषे । लक्षणं—वातोपसृष्टमेढ्रस्तु चर्म्म संश्रयते मणिम् । मणिश्चर्म्मोपनद्धस्तु मूत्रस्रोतो रुणद्धि च । निरुद्धप्रकशे तस्मिन्मन्दधारमवेदनम् ॥ सु.नि. १३अ. । [ अ. ।

**निरुद्धमणिः** । पुं । निरुद्धप्रकशे । वा.उ ३३

**निरुपमः** । पुं । गौधेरकजातिभेदे । গোধাসাপ বিশেষ । द्रव्य. ।

**निरूहः** । पुं । वस्तिविशेषे । "कषायक्षीरतैलैर्यो नि रूहः स निगद्यते ।" शा.कौ. । तत्र परिमाणं—कफे ११ तो पित्ते ८ तो. वाते च ९ तो ग्राह्यम् । स्नेहमधुनोश्च ३।४।६ पलानि यथाक्रमं कफपित्तवातेषु ग्राह्याणि । तथा कल्कस्य २ प. मधुवस्य २ तो । रसक्षीराम्लमस्त्वानाञ्च एकैकं पलं ग्राह्यम् । इति निरूहवस्तिकल्पनामात्रा ज्ञेया । वै.निघ ज्व चि. स चोत्क्लेशनदोषहरशमनभेदेन, ह्रणापि, स्नेहनसंलेखनद्यापनं, कर्षयामास्त्रीहर-बस्तिभेदेन बहुधा । तेषां लक्षणानि तत्तत्पर्य्याये द्रष्टव्यानि । भा. । तत्र कालादि—"अनुवास्य स्निग्धतनुं तृतीयेऽह्नि निरूहयेत् । मध्याह्ने किञ्चिदावृत्ते प्रयुक्ते बलिमङ्गले । अभ्यक्तस्वेदितोत्सृष्टमलं नातिबुभुक्षितम् । मधुस्नेहकल्काख्यकषायावापतः क्रमात् त्रीणि षट् द्वे दश चोपि पलान्यनिलरोगिणां । पित्ते चत्वारि चत्वारि द्वे द्विपञ्चचतुष्टयम् । षट् त्रीणि द्वे दश त्रीणि कफे चापि निरूहणम् ॥" च.द. ।

**निरोधः** । पुं । नाशे । रोधे । मे. ।

**निरोप्यशालिः** । पुं । वापितशालौ । রোনা ধান । गुणाः—लघवः शीघ्रपाका गुणोत्तरा विदाहिनः दोषघ्ना बल्या मूत्रवर्द्धनाश्च । रा.नि.व.१६ ।

**निर्ऋतिः** । स्त्री । बालस्य तन्नामकमातृकाग्रहविशेष । বালগ্রহবিশেষ । यथा दशमे दिने मासि वर्षे वा बालो गृह्यते । तेन तस्य ज्वरगात्रोद्वेजनादि भवति । च.द बालरो.चि. ।

**निर्गन्धपुष्पी** । स्त्री । शाल्मलिवृक्षे । श.च. ।

**निर्गुण्ठी (ण्डी)** । स्त्री । (Vitex negundo.) स्वनामख्यातवृक्षे, सिन्धुवारवृक्ष । নিশিন্দা গাছ । हिं मउडीसम्भालु, निर्गुण्डी । म लिगुर । तै नाविलिचेट्टु, तेल्लव । यम् कट्टिर । ता. नोच्चि । दा. सानुवालि । फा. सिस्वान् गुर्ज. नगाड़ । कौङ्कर्णा निगूड़ सन्दुवार इति च । तत्पर्य्यायाः,—सिन्धुः, सिन्धुकः, इन्द्रसुरिषः, इन्द्रसुरसः, निगुण्डी, इन्द्राणिका, इन्द्राणी, निन्दुकः, सिन्दुवारका, पौलोमी, शक्राणी, कामनाशिनी, सुरसा, शक्रपृष्ठकः, विसृन्धकः, सुरसः, सिन्दुवारितः, स्थिरसाधनकः, अनन्तः, सिद्धकः, अर्थसिद्धक । भा. । सा चतुर्धा—श्वेता नीला आरण्या कत्तरी चेति । श्वेतपुष्पागुणाः—"निर्गुण्डी कटुका तिक्ता रूक्षा चोष्णा कषायका । स्मृतिप्रदा नेत्रहिता वृष्या लघ्वग्निदीपनी । मेध्या व्रणघ्नी च सम्प्रोक्ता गदवातक्षयापहा । सन्धिवातञ्च वातञ्च शोफश्चामङ्गीस्तथा । कुष्ठकफ व्रणं प्लीहा गुल्मञ्च ग्रहणीं तथा । विषं शूलञ्चाधमत्र ज्वरं मेदो-



रुजं तथा । गृध्रसीञ्च प्रतिश्यायञ्चासं श्वासञ्च नाशयेत । पित्तनाशकरी प्रोक्ता पर्णमस्या लव स्मृतम् । क्रिमिनाशकरम्प्रोक्तं...... ॥" नीलपुष्पागुणाः—"नीला निर्गुण्डिका तिक्ता रूक्षा चोष्णा कटुः स्मृता । आध्मानवातमन्दरक्तं श्वासञ्च कफं हरेत् । वातनाशकरी प्रोक्ता...... ॥" वै.द्रव्यगुणः । रा नि.व.४ । कत्तरीगुणाः—निर्गुण्डी कर्त्तरीयुक्ता कट्वी तिक्ता कफापहा । वातञ्चयञ्च शूलञ्च कण्डूश्च नाशयेत् ॥ आरण्ययोः श्वेतकृष्णयोः गुणाः—प्रोक्ता चारण्यनिर्गुण्डी पथ्या पित्तज्वरं हरेत् । विषञ्च गृध्रसीवातं नाशयेद्वर्णकारिणी । पर्णञ्चास्यास्तु कटुकञ्चाग्निदीपिकं लघु । क्रिमीन् कफञ्च वातञ्च नाशयेत...... ॥ पुष्पञ्चास्याः कटु चोष्णं तिक्तञ्क्रिमिकफापहम् । प्लीहां गुल्मञ्च वातञ्च कुष्ठं शोथञ्च नाशयेत् । अरुचेर्नाशकम्प्रोक्तङ्कण्डूञ्चैव विनाशयेत् ॥" वै. द्रव्यगुणः । See सिन्दुवारः । नीलनिर्गुण्ड्याम् । रा.नि.व.४ । सु.सू.३७अ. । नीलशेफालिकायाम् । श.र. ।

**निर्घातः** । पुं । अस्त्रविशेषे ।

**निर्घातनम्** । क्ली । हृतस्य तस्य विचाल्य शल्योद्धरणरूपे कर्म्मणि । सु सू.७अ. ।

**निर्जरः** । त्रि । जरारहिते । क्ली । सुधायाम् । श.र. ।

**निर्जरसर्षपः** । पुं । देवसर्षपे । रा.नि.व.१६ ।

**निर्जरा** । स्त्री । गुडूच्याम् । तालपर्ण्याम् । मूर्वा । मे. ।

**निर्झरः** । पुं । गजे शातौ । श.र. । तुषानले । मे. । शैलनिःसृत जलप्रवाहे । झरणा । तत्पर्य्यायाः,—झरः, निर्झरा, झरा, झरी । तज्जलगुणाः,—मधुरं पथ्यं, अग्निदीपनं, कफघ्नञ्च ।

**निर्झरिणी (री)** । स्त्री । नद्याम् ।

**निर्णायनम्** । क्ली । गजापाङ्गे । श.र. ।

**निर्णेजकः** । पुं । रजके । अम ।

**निर्णेजनम्** । क्ली । क्षालने । धावने ।

**निर्दरम्** । क्ली । तरुसारे, हृत्क्लिष्टानि । मे ।

**निर्दहनः** । पुं । भल्लातकवृक्षे । क्ली । तद्बीजे । रा.नि.व.११ ।

**निर्दहनी** । स्त्री । मूर्व्वायाम् । मूर्वा । र. मा. । च.द.शूल.चि. । "तथाभया निर्दहनी च ।"

**निर्दिग्धः** । त्रि । बलवति, मांसले । हे.च. ।

**निर्देशः** । पुं । विस्तरवचने । यथा—"शारीरमागन्तु चेति ।" सु.उ.६५अ. ।

**निर्भर्त्सनम् (ना)** । क्ली, स्त्री । अलक्तके, लाक्षायाम् । रा.नि.व.६ ।

**निर्भिन्नार्चिर्भटः** । पुं । फुटिकायां । श चि. ।

**निर्भुग्नः** । त्रि । विस्फारिते । मा.नि. ।

**निर्म(र्म्म)ध्वा(थ्या)** । स्त्री । नलिकानामगन्धद्रव्ये । रा.नि.व.१२ ।

**निर्म्मलम्** । क्ली । कतकफले । निर्म्माल्ये । अभ्रके । मे. । त्रि । पवित्रे ।

**निर्म्मलोपलः** । पुं । स्फटिके । रा.नि.व.१३ ।

**निर्म्माल्यम्** । क्ली । शिवनिर्म्माल्ये । च.द.उन्मा. चि. । देवोच्छिष्टद्रव्ये । पुराणम् । [व.१२ ।

**निर्म्माल्या** । स्त्री । स्पृक्कानामगन्धद्रव्ये । रा.नि.

**निर्म्मुटः** । पुं । वनस्पतिविशेषे । तिका. । खर्परे । थापर । हारा. ।

**निर्म्मोकः** । पुं । सर्पकञ्चुके । সাপের খোলস । भा.म.४भ.गर्भचि. ।

**नि-र्याणम्** । क्ली । गजापाङ्गदेशे । हे.च. ।

**निर्यातनम्** । क्ली । मारणे । हे.च. ।

**निर्यासः (कः)** । पुं । तरुक्षीरे । গাছের আঠা । वल्काल । छाल । र.मा. । कषाये, क्वाथे । श.मा. । लाक्षायाम् । वै.निघ. ।

**निर्या(सि:)सो (न्)** । पुं । शाखोटकवृक्षे । सु.सु. ।

**निर्व्यग्रः** । पुं । निद्रौते । श.मा. ।

**निर्व्यूहः** । पुं । शिरोधान्यकृतकाथे । क्वाथविशेष । श.मा. । प.प. ख. । "शिरोधान्यकृतं तं निर्व्यूह इति कीर्तितः ।" सु.सू. । निर्याते । अश्वे । अम. ।

**निर्लोहम्** । क्ली । लौहनामगन्धद्रव्ये । सूक्ष्म थायमी । रा.नि.व.६ । व्याघ्रनखे । नखी । वै.निघ । [ वै.निघ. ।

**निर्व्व(वं)यनी** । स्त्री । अहिनिर्मोके । हे.च. ।

**निर्व्वचनम्** । क्ली । निश्चितवचने । यथा—"आकृतिद्यतस्मिन्निति आयुर्वेदः ।" सु.उ.६५अ.

**निर्वापणः** । त्रि । रोपणे । नाशने । वा.चि. ६ष. । [ सर्पे ।

**निर्विषः** । पुं । जलसर्पे । वै.निघ. । विषहीन-

**निर्व्विषा (षी)** । स्त्री । (Curcuma zedoaria.) केदारदेशोत्पन्नौषधविशेषे । निर्विषी घास । निर्विषा इति महाराष्ट्रे प्रसिद्धा । तत्पर्य्यायाः,—अपविषा निर्व्विषी, विषहा, विषापहा, विषहन्त्री, विषाभावा, अविषा, विषवैरिणी । गुणाः—कटुः शीता कफ-वातरक्तघ्नी बहुविषघ्नी व्रणरोपणी च । रा.नि.व.६ ।

**निर्वीजा** । स्त्री । काकलीद्राक्षायां । किसमिस् । रा.नि.व.११ ।

**निर्वृत्तिः** । स्त्री । उत्पत्तौ । निष्पादे । "निर्वृत्तिरामयस्यासौ ।" मा.पञ्चनि. ।

**निर्वेधिमः** । पुं । तन्नामककर्णवन्धनाकृतौ । "स च पीठोपमपालिः उभयतः क्षीणपुत्रिकाश्रितः ।" सु.सू.१६अ. ।

**निर्वेष्टनम्** । क्ली । नाड़ीचीरे । हारा. ।

**निर्व्यथनम्** । क्ली । छिद्रे । अम. ।

**निर्हारः** । पुं । मलमूत्रत्यागभवने । आह्निकतत्त्वम् । निर्हरणे, शल्याद्युत्पाटने । भ. ।

**निर्हारगृह(स्थान)म्** । क्ली । निर्हारभवने । पायखाना । शल्योत्पाटनगृहे । स्मृतिः ।

**निर्हारी (इन्)** । त्रि । दूरगामिगन्धे । अम. ।

**निर्लिम्पा** । स्त्री । दोहनभाण्डे । स्त्रीगवि । त्रिका. । [ अ. ।

**निवन्धः** । पुं । अश्वस्य ककुदंसभागे । ज.द.२

**निवातम्** । क्ली । वाताभावे । गुणाः—"निवातश्चायुषे सव्यमारोग्याय च सर्व्वदा ।" सु.चि.२४अ. ।

**निवृत्तसंज्ञम्** । क्ली । गुह्यरोगभेदे । निदानादि यथा—"विमर्दनादिदुष्टेन वायुना चर्म्म कृद्रुजं । निवर्त्तते सकण्डाहं क्वचित्पाकञ्च गच्छति । पिण्डितं ग्रथितं चर्म्म तत्प्रलम्बमधोमणेः । निवृत्तसंज्ञं सकफं कण्डुकाठिन्यवत्तु तत् ॥" वा.उ.३३अ. ।

**निशल्या** । स्त्री । क्षुद्रदन्तीक्षुपे । रा.नि.व.६ ।

**निशा** । स्त्री । हरिद्रायाम् । प.मु. । रा.नि.व. ६ । आमहरिद्रायाम् । भा. संग्रहणाजातीशादिचूर्णे । दारुहरिद्रायाम् । रात्रौ ।

**निशाकरः** । पु । कुक्कुटे । श.र । चन्द्रे ।

**निशाख्या** । स्त्री । हरिद्रायाम् । रा.नि.व.६ ।

**निशाचरः** । पुं । चोरकनामगन्धद्रव्ये । अयं ग्रन्थिपर्णस्यैव भेदः । भटेउर इति नेपालदेशे प्रसिद्धः । रा.नि.व.१२ । पेचके । शृगाले । सर्पे । मे. । चक्रवाके । श.र. । रात्रिचरजीवे ।

**निशाचरी** । स्त्री । केशिनीनामगन्धद्रव्ये । जटा ।

**निशाटः** । पुं । पेचके । हे.च. ।

**निशाटकः** । पुं । गुग्गुलौ । रा.नि.व.१२ ।

**निशाटनः** । पुं । पेचके । हला. ।

**निशाणशिला (लिका) (णी)** । स्त्री । अनिशितक्षुरादिसुनिशाणार्थं माषवर्णश्लक्ष्णापितशिलायाम् थुरशिल्न शिल । सु.सू.८अ. ।

**निशादर्शी (इन्)** । पुं । पेचकपक्षिणि ।

**निशादिः** । पुं । हरिद्रादिगणे । वा.उ.२अ. ।

**निशाद्वयम्** । क्ली । हरिद्रा दारुहरिद्रा च । वा.सू.३५ ४२ मुस्तादिव. । "द्विनिशा द्वितिक्ता ।"

**निशान्तम्** । क्ली । प्रातःकाले । गृहे ।

**निशान्धः** । त्रि । रात्र्यन्धे । রাতকাণা । स्त्री । जतुकालतायाम् । रा.नि.व.३ ।

**निशापतिः** । पुं । कर्पूरे । अम. । चन्द्रे ।

**निशापुष्पम्** । क्ली । उत्पले । शुन्नि फूल । रा.नि.व.१० । [ श.च. ।

**निशाभङ्गा** । स्त्री । दुग्धपुच्छ्याम् । दुधफेनी ।

**निशामूषा** । स्त्री । अन्धमूषायां । रस.र. हिक्का-चि. ।

**निशामृगः** । पुं । शृगाले । श.र. ।

**निशालोहम्** । क्ली । पाण्डुरोगे लौहम् । "लौहचूर्णं निशायुग्मं त्रिफलारोहिणीयुतं । प्राश्याग्मधुसर्पिर्भ्यां क्वामलापाण्डुशान्तये ॥" र.सा.स. ।

**निशावनः** । पुं । शणक्षुपे । रा.नि.व.४ ।

**निशावेदी (इन्)** । पुं । कुक्कुटे । हे.च. ।

**निशाह्वासः** । पुं । कुमुदपुष्पे । त्रिका. ।

**निशाह्वासा** । स्त्री । शेफालिकायाम् ।

**निशाह्वा** । स्त्री । हरिद्रायाम् । अम. । मालवदेशप्रसिद्ध जतुकाख्यलतायाम् ।

**निशिक्रन्दः** । पु । बालानां रात्रिरोदनरोगे । "कृष्णजीरकमलो मासो हरिद्रा विल्वपत्रक । समि-



गुण्डीदलं धूमात् निशिक्रन्दोऽस्ति नो शिशोः ॥" रस.र.वाल.चि. ।

**निशितम्** । क्ली । तीक्ष्णलौहे । रा.नि.व.१३ ।

**निशिपुष्पा (ष्पिका) (ष्पी)** । स्त्री । शेफालिकावृक्षे । त्रिका. । श.र. ।

**निशुम्भनम्** । क्ली । मारणे । हला. ।

**निशैतः** । पुं । वकपक्षिणि । त्रिका. ।

**निशोत्रा** । स्त्री । श्वेतत्रिवृति । त्रिवृति । তেউড়ী । वै.निघ.२भ.अ.चि. शुण्ठ्यादिगुटी ।

**निश्चला** । स्त्री । शालपर्ण्याम् । रा.नि.व.४ । पृथिव्याम् ।

**निश्चलाङ्गः** । पुं । वके । रा.नि.व.१६ ।

**निश्चारकः** । पुं । पुरीषत्यागपरपर्य्याये प्रवाहिकाभेदे । मे. । सि.यो.प्रवाहिका चि.श्रीकण्ठः । "प्रवाहिकेति सा ख्याता केश्चिन्निश्चारकस्तु सः ।" पराशरः उक्तवांश्च । [ त्रिका. ।

**निश्चुक्कणम्** । क्ली । दन्तशाणे । দন্তমঞ্জন ।

**निश्वासः** । पुं । श्वासनिर्गमे । वहिर्मुखश्वासे । हे.च. ।

**निश्वासकः** । पुं । वायौ ।

**निषङ्गथिः** । पुं । तृणविशेषे । स्कन्धे । उणा. ।

**निषण्णकम्** । क्ली । आसने । सुनिषण्णशाके । श र.

**निषद्वरः** । पुं । कर्द्दमे ।

**निषादग्रहः** । पुं । ग्रहविशेषे । तदाविष्टस्य लक्षणं यथा—"गृहीत्वा काष्ठ-लोष्ट्रादि भ्रमन्तं चीरवाससं । नग्नं धावन्तमुत्त्रस्तं दृष्टं तृणविभूषणं । श्मशानशून्यायतनं रथ्यैकद्रुमसेवितं । तिलान्नमद्यमांसेषु सततं सक्तलोचनं । निषादाधिष्ठितं विद्यात् वदन्तं परुषाणि च ॥" वा.उ.४अ. ।

**निषादी (इन्)** । पुं । हस्तिपके । अम. ।

**निषेकः** । पुं । सेके । निष्यन्दे । गर्भाधानसंस्कारे । भ ।

**निषाद्वा (द्व)** । पुं । कुक्कुटपक्षिणि ।

**निष्कः** । पु, क्ली । स्वर्णे । माषचतुष्टये । प.प्र. । कर्षपरिमाणे । "चतुर्भिर्माषकैः शाणः स निष्कोऽटङ्क एव च ।" गोविन्दी परिभाषा । स्वर्णपले । स्वर्णकर्षे । साष्टशततोलके । हे.च. ।

**निष्कण्ठः** । पुं । वरुणवृक्षे । श.च. ।

**निष्कलः** । त्रि । वीर्य्यहीने । मे. ।

**निष्कला (ली)** । स्त्री । वृद्धायाम् । रा.नि. व.१८ । निवृत्तरजस्कायाम् । श.र. ।

**निष्कुटः** । पुं । गृहसन्निहितनिकुञ्जे । गुप्तगृहे । अम. । [ रा.नि.व.६ ।

**निष्कुटिः** । स्त्री । एलायाम् । सूक्ष्मैलायाम् ।

**निष्कुटी** । स्त्री । स्थूलैलायाम् । अ.टी.भ. ।

**निष्कुम्भः** । पुं । दन्तीवृक्षे । अ.टी.रा. ।

**निष्कुलः** । त्रि । त्वक्शिरास्थिरहिते । सि.यो. यक्ष्म.चि.च्यवनप्राशे । पुं । तरुकोटरे । अम. ।

**निष्क्राथः** । पुं । मांसादिक्वाथे । हे.च. ।

**निष्ठा** । स्त्री । चिकित्सायाम् । रा.नि.व.२० ।

**निष्ठानम्** । क्ली । व्यञ्जने । अम. ।

**निष्ठीवः** । पुं । निष्ठीवने ।

**निष्ठीवनम्** । क्ली । मुखेन श्लेष्मादीनां वमने । থুতু ফেলা । च.द.सान्निपातज्व.चि. । "नस्यं निष्ठीवनन्तथा" तत्पर्य्यायाः,—निष्ठेवः, निष्ठ्युतिः, निष्ठेवनं, निष्ठेवा, निष्ठेवं, निष्ठीरः, निष्ठीविका । रा.नि.व.६ ।

**निष्ठीवका** । स्त्री । निष्ठीवने । च.शा.२अ. ।

**निष्ठेवः (नम्)** । पुं, क्ली । निष्ठीवने । अम. ।

**निष्पक्वम्** । त्रि । क्वथिते । अम. । अतिपक्वव्यञ्जनादौ । भ. ।

**निष्पत्रकः (त्रिका)** । पुं,स्त्री । करीरवृक्षे । गुणाः—आध्मानकरः कटूष्णकषायः कफकरः श्वासवायुरोचकशूलखर्ज्जूव्रणघ्नश्च । रा.नि.व.८ ।

**निष्पत्राकृतिः** । स्त्री । अतिपीड़ायाम् । অতিক বেদনা । हे.च. ।

**निष्पावः (कः)** । पुं । (Phaseolus radiatus.) A sort of pulse. शिम्ब्याम् । शीम । प.मु. । श्वेतशिम्ब्या । সাদা শিম্ । र.मा. । च.द. ग्रन्थि.चि. । राजशिम्बीबीजे । "निष्पावस्तु राजशिम्बीबीजं भटवासु, भटवास इति लोके ।" भा. मसूरी.नि. । हिं भटवासु । तै आनपचट्टु, राजशिम्बि । हेमा. । तत्पर्य्यायाः,—निष्पावः, राजशिम्बी, वल्लकः, श्वेतशिम्बिकः, निष्पाव. । गुणाः—वातादिकरः गुरुः सरः विदाही दृष्टिघ्नः शुक्रकफशोफविषापहश्च । वा. सू. । "निष्पावकफलं भृष्टं

च श्वचंस्कारं गुरु।" राज.३प.। "निष्पावो मधुरो रुक्षो विपाकेऽम्लो गुरुः सरः। कषायः स्तन्यपित्तास्र-मूत्रवातविबन्धकृत्। विदाह्युष्णो विषश्लेष्मशोथ-हृच्छुक्रनाशनः।" भा.पू.१भ.धा.व.। गुच्छाहये। राजमाषे। हिं लोबिया। बर्वटी। यूष यथाः— "यूषो निष्पावजः स्तन्य भ्रशमुत्पादयेत स्तने। श्लेष्माणं दृष्टिरोगञ्च नाशयेत्समुपासितः॥" भ्रष्टस्य यूषगुणाः—"निष्पावसूपः पित्तास्रमूत्रस्तन्यानिलप्रदः। विदाह्युष्णो गुरुः शोफकफहृच्छुक्रलः स्मृतः॥" द्रव्य.गु। तुषे। सूर्पवायौ। मे.।

**निष्पावी**। स्त्री। (Vigna Catiang. Syn. Dolichos sinensis.) शिम्बीधान्यविशेष। राजमाषे। बाड़ा इति भाषा। बर्वटी। हिं लोबिया। मं कडुवण। कं तट्टवरे। सा द्विधा हरिच्छुभ्रभेदेन। हरिद्वर्णायाः पर्य्यायाः,— ग्रामजा, फलिनी, नखपृष्ठिका, मण्डपा, फलिका, शिम्बी, गुच्छफला, विशालफलिका, निष्पाविः, चिपिटा। शुभ्रायाः पर्य्यायाः,—भङ्गलिफला, नखनिष्पाविका, हस्तनिष्पाविका, ग्राम्या, नखपुष्पफला, अगना। गुणाः—द्वे एव कषाये मधुरे कण्ठशुद्धिकरे दीपने रुच्ये द्वितीया तु दूषकेष्टा रा.नि.व.७।

**निष्प्रत्यनीकम्**। त्रि। उपचारायोग्यं। भा.म.४भ.युद्धरो.वल्मीक, चि.। "निष्प्रत्यनीकं चिरजं विशेषात्।"

**निष्फली**। स्त्री। निष्फलायां। बन्ध्याकर्कोट्यां। श.र.। निवृत्तरजस्कायाम् वृद्धायाम्।

**निसारा**। स्त्री। कदलीवृक्षे। रा.नि.व.११।

**निसिन्धुः**। पुं। निर्गुण्डीवृक्षे।

**निसुन्धारः**। पुं। निर्गुण्डीवृक्षे। भैष.ज्व.चि.पानीयवट्यां।

**निसृता**। स्त्री। रक्तत्रिवृतायाम्। प.मु.। श्यामाकन्दने। वै.निघ.।

**निसृतान्त्रकः**। पुं। कोष्ठगतरोगभेदे, वृद्धिरोग। वै.निघ.।

**निस्तना**। स्त्री। वटिकायां। वड़ि। श्र.च.।

**निस्तर्हणम्**। क्ली। मारणे। अम.।

**निस्तलः (ला)**। त्रि। वर्तुले। अम.। पुं। तलपर्द्दग। हे.च। [ व.१६।

**निस्तुषः**। पुं। गोधूमे। प.मु.। गम्। रा.नि.

**निस्तुषरत्नम्**। क्ली। स्फटिके। रा.नि.व.१३।

**निस्तुषक्षीरः**। पुं। गोधूमे। रा.नि.व.१६।

**निस्तुषितः**। त्रि। त्वग्रहिते। मे.।

**निस्तुषोपलम्**। क्ली। स्फटिके। प.मु.।

**निस्तोदः**। पुं। अतिव्यथायाम्। [ व.८।

**निस्त्रिंशपत्रिका**। स्त्री। स्नुहीवृक्षे। रा.नि.

**निस्रुटी**। स्त्री। एलायाम्। वै.निघ.।

**निस्त्रैणपुष्पकः**। पुं। राजधुस्तूरके। रा.नि.व.११। [ विका.।

**निस्नेहः (हा)**। पुं, स्त्री। अतसीवृक्षे।

**निस्नेहफला**। स्त्री। श्वेतकण्टकार्य्याम्। रा.नि.व.४।

**निस्पन्दः**। पुं। स्पन्दने। विका.।

**निस्पृहा**। स्त्री। अमूलवनस्पतौ। वै.निघ.। अग्निशिखावृक्षे। श्र.च.।

**निस्रावः**। पुं। भक्तमण्डे। ভাতের ফেন।

**निस्रारकः**। पुं। प्रवाहिकारोगे। च.द.रक्तातिसारे।

**निहाका**। स्त्री। गोधिकायां। अम.।

**निहारः**। पुं। नीहारे। श.र.। [ कोष.।

**निह्वा**। स्त्री। लिख्यायां। निकि। उणादि

**नीकः**। पुं। वृक्षभेदे। उणा.। [ रा.नि.व.१२।

**नीचः**। पुं। चोरकनामगन्धद्रव्ये। গেঁঠেলা।

**नीचकः**। त्रि। ह्रस्वे। श.र.। स्त्री (का)। उत्तमायां गवि। श.टी.भ.।

**नीचकदम्बः**। पु। गोरक्षमुण्डयाम्, महाश्रावणिकायाम्। वै.निघ.।

**नीचकुलिशम्**। क्ली। वैक्रान्तरत्ने। प.मु.।

**नीचगम्**। क्ली। जले। वै.निघ.।

**नीचभोज्यः**। पुं। पलाण्डौ। श्र.च.।

**नीचवज्रम्**। क्ली। वैक्रान्तमणौ। পোখরাজ। रा.नि.व.१३।

**नीडः**। पु, क्ली। पक्षिकुलाये अम.।

**नीडजः** / **नीडोद्भवः** } पुं। पक्षिसामान्ये। हे च.। अम.।

**नीतम्**। क्ली। धान्ये। शस्ये। वै.निघ.।



**नीथम्**। क्ली। जले। उणा.।

**नीपः**। पुं। कदम्बवृक्षे, धाराकदम्बे। কেলি কদম। मं राजकदम्ब। रा.नि.व.९। गुणः— गरदाघहरः। सु.सू.४६अ। अशोकवृक्षे। नीलाशोके। बन्धूकवृक्षे। বান্ধুলি গাছ। म.। भूकदम्बे। कुकुशिमा। वै.निघ.।

**नीपराजः**। पुं। राजकदम्बवृक्षे। वै.निघ.।

**नीरम्**। क्ली। जले। रा.नि.व.१४। बालके। वला। वै.निघ. २भ. क्ष. चि. दाहचि. चन्दनादि-कषाये।

**नीरजः**। पुं। कासमर्दे। ছোট কেশে। रा.नि.व.८। जलनकुले, जलमार्ज्जारे। উদ্বিড়াল। श.र.। क्ली। उत्पले। पद्म। नीलोत्पल। कुष्ठौषधौ। मे.। "नीरजश्चारिवे च।" सु.चि.२५अ.। मौक्तिके। रा.नि.व.१३।

**नीरजाः**। स्त्री। अजातरजस्कायां स्त्रियि।

**नीरदः**। पुं। मुस्तायां। रा.नि.व.६। वै.निघ.२भ.दाह.चि.चन्दनादिकषायः। त्रि। अदन्ते।

**नीरप्रियः**। पुं। जलवेतसे। वै.निघ.।

**नीरवृक्षः**। पुं। जलमधूकवृक्षे। वै.निघ.।

**नीरसः**। पुं। दाड़िम्बवृक्षे। हारा.। त्रि। रसहीने।

**नीरसा**। स्त्री। निःश्रेणिकातृणे। रा.नि.व.८।

**नीराखुः**। पुं। जलमार्ज्जारे। উদ্বিড়াল। हारा.।

**नीरेन्दुः**। पुं। अश्वशाखोटवृक्षे। আশ্শ্যাওড়া গাছ। श्र.च.।

**नीरुक्** / **नीरुजम्** } त्रि। रोगमुक्ते। रा.नि.व.२०। क्ली। कुष्ठभेदे। কুড়বিশেষ। जटा.। पु। उशीर्य्याम।

**नीरोद्भवा**। स्त्री। ब्राह्म्याम्। ब्रह्मीशाक।

**नीलम्**। क्ली। (Indigofera Tinctoria.) नील्याम्। नीलपत्रे। मे.। सौवर्च्चललवणे। तालीशपत्रे। विषे। रा.नि.व.६। तुत्थके। नीलोत्पले। रा.नि.व.१३। कृष्णाञ्जने। वै.निघ.।

**नीलः**। पुं। नीलासनवृक्षे। নীলপত্র আসন গাছ। र.मा.। नीलवृक्ष। रा.नि.व.९ वटवृक्ष। रा.नि.व.११। नीलकान्तमणौ रा.नि.व.१३ वै.निघ.२भ.क्षयचि.नवरत्नराजमृगाङ्के। नीलवर्णे।

सारिकापक्षिणि। नीलवानरे। मे.। कृष्णकुरण्टके। कृष्णनिर्गुण्ड्याम्। वै.निघ.।

**नीलकम्**। क्ली। कृष्णलवणे। कांस्ये। जले। गन्धबोल। वै.निघ.। कान्तलौहे। रा.नि.व.१३।

**नीलकः**। पुं। नीलभृङ्गराजे। रा.नि.व.४। नीलबीजे, नीलबीजासनवृक्षे। रा.नि.व.९। कृष्णसारमृगे। भल्लातकवृक्षे। वै.निघ.। वर्त्तकलाये।

**नीलकणा**। स्त्री। कृष्णजीरके। रा.नि.व.६। जीरके। वै.निघ.। [ मयूरे। अम.।

**नीलकण्टकः**। पुं। चातकपक्षिणि। वै.निघ.।

**नीलकण्ठम्**। क्ली। मूलके। मूला। प.मु.।

**नीलकण्ठः**। पु। पीतशालवृक्षे। পিয়াশাল। र.मा.। मयूरे। अम.। शिगुवृक्षे। चाषपक्षिणि। खञ्जरीटे। दात्यूहे। कपोते। ग्रामचटके। हे.च.। सारसपक्षिणि। वै.निघ.। नीलकदलपुष्पवृक्षे। लक्षणं यथा—"लक्ष्मणाया अभावे तु नीलकण्ठशिखा मता॥" सु.टी.मधुमती। [ ११।

**नीलकण्ठाक्षम्**। क्ली। रुद्राक्षे। रा.नि.व.

**नीलकन्दः**। पु। महिषीकन्दे। কাল আলু-বিশেষ। रा.नि.व.७। अस्य पर्य्यायाः,—सपोख्यः, वनवासी, विषकन्दः, महिषीकन्दः। गुणाः,— कटुः, उष्णः, रुच्यः, कफवातामय-मुखजाड्यनाशी च। सितस्तु महासिद्धिकरः।

**नीलकपित्थकः**। पुं। महाराजचूते। नीलवर्णकपित्थभेदे। रा.नि.व.११। See टङ्कः।

**नीलकमलम्**। क्ली। नीलपद्मे। নীল পদ্ম। गुणाः—शीतलं स्वादु पित्तघ्नं सुगन्धि रुच्यं रसायने श्रेष्ठं देहदार्ढ्यकरं केश्यञ्च। रा.नि.व.१०।

**नीलकलम्बी**। स्त्री। (Ipomoea hederacea. Syn I. Coerulea.) स्वनामख्यातलतायाम्। নীল কলমী। हिं कालदाना। अस्या बीजचूर्णं विरेचने हितम्। [ नि.व.६।

**नीलकचोद्भवम्**। क्ली। काचलवणे। रा.

**नीलकुरण्टकः**। पुं। (Barlaria coerulea.) नीलझिण्टीक्षुपे, नीलाम्लाने। নীল ঝাঁটি। रा.नि.व.१०। भैष.कुष्ठ-चि.।

**नीलकुसुमा**। स्त्री। नीलपुष्पझिण्टीक्षुपे। নীল ঝাঁটি। रा.नि.व.१० See नीलाम्लानः।

**नीलकेशी** । स्त्री । नीलीक्षुपे । रा.नि.व.४ ।

**नीलक्रान्ता** । स्त्री । विष्णुक्रान्तायाम् । নীল অপরাজিতা । रा.नि.व.५ ।

**नीलक्रौञ्च** । पुं । नीलवर्णक्रौञ्चपक्षिणि । নীল বক । वै.निघ. । अस्य पर्य्यायाः,—नीलाङ्गः, दीर्घग्रीवः, अतिजागरः ।

**नीलगिरिकर्णिका** । स्त्री । नीलापराजितायाम् । रा.नि.व.३ ।

**नीलगिरिजा** । स्त्री । (Clitoria Ternatea.) विष्णुक्रान्तायां । অপরাজিতা । हि. कवथेन्दी वम्. गोकर्णी । आस्फोतायाम् । शापरमाली । कोषान्तरम् ।

**नीलङ्गुः** । पुं । कृमिविशेषे । कीटमात्रे । शृगाले । श.द्वि.को. ।

**नीलचर्म्म** । क्ली । परूषकफले । रा.नि.व.११ ।

**नीलच्छदः** । पुं । दैपखर्ज्जूरवृक्षे । वै.निघ. ।

**नीलच्छविः** । पुं । कुक्कुभपक्षिणि । वै.निघ. ।

**नीलजम्** । क्ली । नीललौहे । रा.नि.व.१३ ।

**नीलझिण्टी** । स्त्री । नीलपुष्पझिण्टीक्षुपे । নীল ঝাঁটী । रा.नि.व.१० । See नीलाम्लान:

**नीलतरुः** । पुं । नारिकेलवृक्षे । रा.नि.व.११ ।

**नीलतालः** । पुं । तमालवृक्षे । তমাল গাছ । वै.निघ. । हिन्तालवृक्षे । रा.नि.व.९ ।

**नीलतुत्थम्** । क्ली । तुत्थभेदे । वै.निघ.२भ. । चथ.चि श्वङ्ख स्वरसः ।

**नीलदूर्व्वा** । स्त्री । हरितदूर्व्वायां । নীল দূর্ব্বা ঘাস । मं नीलीहरियाली । क हसुगरुके । तं हरितदूर्व्वाल् । तत्पर्य्यायाः,—हरिता, शाम्भवी, श्यामा, शीता, शतपर्व्विका, अमृता, पूता शतग्रन्थिः, अनुष्णवल्लिका, शिवा, शिवेष्टा, मङ्गला, जया, भूतहन्त्री, शतमूली, महौषधी, विजया, गौरी, शान्ता, रुहा, अनन्ता, भार्गवी शतवल्ली, शस्यं, सहस्रवीर्य्या, शीतकुम्भी, शीतला, वामिनी । गुणाः—मधुरा तिक्ता शीतला रोचनी रक्तपित्तातिसारघ्नी कफवातज्वरघ्नी च । रा.नि.व.८ । "कफपित्तास्रवीसर्पतृष्णादाहत्वगामयान् ।" भा. ।

**नीलद्रुमः** । पुं । नीलवीजासनवृक्षे । रा.नि.व.९ ।

**नीलधातुः** । पुं । खटिकायां । নীল খড়িমাটী । र.मा. । [ रा.नि.व.९ ।

**नीलध्वजः** । पुं । तमालवृक्षे । তমাল গাছ ।

**नीलनिर्गुण्डी** । स्त्री । (Gendarussa vulgaris. Syn. Justicia gendarussa.) नीलपुष्पसिन्धुवारवृक्षे । নীল নিশিন্দা । जगत्मादन । तें नल्लवविलि । वम्. कालअडुलसा । दा. कालसुम्बालि । गुणाः—कटूष्णा तिक्ता रुच्या कासघ्नी श्लेष्मशोफवायुप्रदराध्मानहरी रा.नि.व.४ ।

**नीलनिर्यासकः** । पुं । नीलवीजासनवृक्षे । रा.नि व.९ । See नीलवीजः ।

**नीलपङ्कम्** । क्ली । कृष्णवर्णकर्द्दमे

**नीलपङ्कजम्** । क्ली । नीलकमले । নীল পদ্ম । रा.नि.व.१० ।

**नीलपत्रः** । पुं । गुण्डतृणे । रा नि.व.८ । नीलवीजासनवृक्षे । अश्मन्तवृक्षे । रा.नि.व.९ । दाड़िमवृक्षे । रा.नि.व.११ । क्ली । नीलपद्मे । श.च. । [ वै.निघ. ।

**नीलपत्रा** । स्त्री । भूजम्ब्वाम् । বন জাম ।

**नीलपत्रिका** । स्त्री । नीलासनवृक्षे । নীলপত্র আসন গাছ । र.मा. । कृष्णतालमूल्याम् । वै.निघ. । [ ४ ।

**नीलपत्री** । स्त्री । ह्रस्वनीलीक्षुपे । रा.नि.व.

**नीलपद्मम्** । क्ली । नीलकमले । নীল পদ্ম । तत्पर्य्यायाः,—नीलाम्बुजन्म, नीलाब्ज, नीलोत्पलं, नीलपङ्कजं, नीलाब्ज । गुणाः,—शीतलं स्वादु, सुगन्धि, पित्तनाशि, रुच्यं, रसायनं, केशवर्द्धकं, देहदार्ढ्यकारि । रा.नि.व.१० । [ रा.नि.व.११ ।

**नीलपर्णम्** । क्ली । परूषकफलं । ফল্সা ।

**नीलपर्णी** । स्त्री । विदारीवृन्ते । र.मा. । वन्दाकवृक्षे । वै.निघ. ।

**नीलपिच्छः** । पुं । श्येनपक्षे । শ্যেন পাখী । रा.नि.व.१९ ।

**नीलपिण्डम्** । क्ली । वज्रलौहे ।

**नीलपिष्टोड्डी** । स्त्री । वृक्षविशेषे । पीटोंजी इति लोके । वै.निघ. । [ कल्प.८ष. ।

**नीलपोतः** । पुं । महाविषवृश्चिकभेदे । सु.

**नीलपुनर्नवा** । स्त्री । नीलदलपुनर्नवायाम् ।

हिं नीलगदहपड़ोया । मं कालीघेंट । कं करियवेल्लड़किलु, करियगणजिले । तत्पर्य्यायाः,—नीला, श्यामा, कृष्णाख्या, नीलवर्षाभूः । गुणाः—तिक्ता कटूष्णा रसायनी हृद्रोगपाण्डुश्वयथुश्वासवातघ्नी । रा.नि.व.५ ।

**नीलपुष्पः** । पुं । नीलभृङ्गराजे । नीलझिण्ट्यां । रा.नि.व.४ । विल्वन्तरवृक्षे । कृष्णनिर्गुण्ड्याम् । वै.निघ. । क्ली । ग्रन्थिपर्णे । भा. ।

**नीलपुष्पकः** । पुं । नीलनिर्गुण्डीवृक्षे । वै.निघ. ।

**नीलपुष्पा** । स्त्री । अपराजितायाम् । प.मु. । विष्णुक्रान्तायाम्, नीलापराजितायाम् । रा.नि.व.५ । नीलझिण्टीक्षुपे । নীল ঝাঁটী । रा.नि.व.१० । See नीलाम्लानः । ग्रन्थिपर्ण्याम् । कृष्णनिर्गुण्ड्यां । नील्याम् । वै.निघ. ।

**नीलपुष्पिका (ष्पी)** । स्त्री । नीलपुष्पापराजितायाम् । নীল অপরাজিতা । रा.नि.व.३ । नीलवुह्नायाम् । নীল বোণা । प.मु. । नील्याम् । रा.नि.व.४ । अतसीक्षुपे । মশিনার গাছ । रा.नि.व.१६ । [ वै निघ. ।

**नीलपृष्ठः** । पुं । मत्स्यविशेषे । রুই মাছ ।

**नीलपृष्ठा** । स्त्री । नीलीवृक्षे । भा.म.१भ. ।

**नीलपौरः** । पुं । कृष्णेक्षौ । गुणाः—वातकरः कफपित्तघ्नः कषायः विदाही च । भा. । सु.सू.४५ष. ।

**नीलफला** । स्त्री । जम्बूवृक्षे । জাম গাছ । रा.नि.व.११ । वार्त्ताकुवृक्षे । वै.निघ. ।

**नीलभण्टः** । पुं । पियालवृक्षे । পিয়াশাল । प.मु. । See भखट्टः । [ वै.निघ. ।

**नीलभूमिमलचारः** । पुं । खर्परधातौ ।

**नीलभृङ्गराजः** । पुं । नीलपुष्पभृङ्गराजे । নীল কেশুরিয়া । हिं भगेरिया । तत्पर्य्यायाः,—महाभृङ्गः, महानीलः, सुनीलकः, नीलपुष्पः, श्यामलः । गुणाः—तिक्तोष्णः चक्षुष्यः केशरञ्जनः कफामशोफश्वित्रघ्नः रसायनश्च । रा.नि.व.४ । [ष. ।

**नीलमकुष्ठः** । पुं । नीलवनमुद्गे । नकुल.११

**नीलमञ्जरी** । स्त्री । नीलनिर्गुण्ड्याम् । वै.निघ. ।

**नीलमणिः** । पुं । स्वनामख्यातमणौ । নীলবর্ণ মণি । तत्पर्य्यायः,—सौरिनीलाश्मा, नीलोत्पलः, तृणग्राही, महानीलः, सुनीलक. । गुणाः—तिक्तोष्णः कफ-पित्त-वातघ्नः धारणात् शुभदश्च । रा.नि.व.१३ ।

**नीलमण्डलम्** । क्ली । परूषकफले । पुं । तद्वृक्षे । ফল্সা । रा.नि.व.११ ।

**नीलमयूरः** । पुं । मयूरभेदे । गुणाः—"मेधावृद्धिं स्नोतसाञ्च करोत्युत्पाटनं शिखी । स वातलोऽतिबलकृत् पुनः किञ्चिद्रसायनः ॥" अत्रि. २१ष. ।

**नीलमल्लिका** । स्त्री । कपित्थवृक्षे । रा.नि.व.११ । [ वै.निघ. ।

**नीलमक्षिका** । स्त्री । पृथुकृष्णमक्षिकायाम् ।

**नीलमाषः** । पुं । राजमाषे । বর্বটী । प.मु. । कृष्णमाषे । কাল কলায় ।

**नीलमौलिकः** । पुं । खद्योते । श.मा. ।

**नीलमृत्तिका** । स्त्री । कृष्णमृत्तिकायाम् । पुष्पकासीसे । रा.नि.व.१३ ।

**नीलमेहः** । पुं । पित्तजन्यमेहरोगे । यत्र रोगी सफेनं स्वच्छं नीलञ्च मेहति । सु.नि.६ष. ।

**नीलयष्टिका** । स्त्री । कृष्णेक्षौ । কাজলা ইক্ষু । कृष्णकुटजे । वै.निघ. । [ व.१३ ।

**नीलरत्न(क)म्** । क्ली । नीलमणौ । रा.नि.

**नीलरास्ना** । स्त्री । नीलपुष्परास्नायां । र.मा. ।

**नीलरूपकः** । पुं । प्लक्षवृक्षे । वै.निघ. ।

**नीललोहम्** । क्ली । वर्त्तलौहे, कृष्णलौहे । रा.नि.व.१३ ।

**नीललोहितः** । पुं । नीलरक्तमिश्रितवर्णे । বেগুনে রং ।

**नीललोहिता** । स्त्री । भूजम्बूवृक्षे । মেটো জাম । श.च. ।

**नीलवकः** । पुं । नीलवर्ण-वके ।

**नीलवटी** । स्त्री । नीलवट्याम् । নীলবড়ি । चि.क्र.क.केशरञ्जने ।

**नीलवर्णम्** । क्ली । रसाञ्जने । र.मा. । नीलमूलके । परूषकफले । वै.निघ. । [ नि.व.५ ।

**नीलवर्षाभूः** । स्त्री । नीलपुनर्नवायाम् । रा.

**नीलवल्ला** । स्त्री । वन्दायाम् । পরগাছা ।

**नीलवल्ली** । स्त्री । वन्दाके । বান্দড়া । र.मा. ।

**नीलबीजः ।** पुं । स्वनामख्यातासनवृक्षे । नीलबीज आसनवृक्ष । मं लोहिवांबीया । कं केपिन्नहोने । गुणाः—बीजद्वयी कटू शीतौ कषायौ कुष्ठघ्नौ सारकौ कण्डूदद्रुघ्नौ । तयोरसित श्रेष्ठः । रा.नि.व.९ । [ प.मु. ।

**नीलबुह्ना ।** स्त्री । छगलान्त्र्याम् । नील বোণা ।

**नीलबुह्ना ।** स्त्री । नीलबुह्नायाम् ।

**नीलवृन्तकम् ।** क्ली । तृणकाण्डे । तूलि । रा. नि.व.९ ।

**नीलवृषा ।** स्त्री । वार्त्ताकी । रा.नि.व.७ ।

**नीलवृक्षः ।** पुं । कोङ्कणमालवयोः स्वनामप्रसिद्धे वृक्षे । तत्पर्य्यायाः,—नीलः, वातारिः, शोफनाशनः, नरनामा, नखवृक्षः, नखालुः, नरप्रियः । गुणाः— 'नीलवृक्षस्तु कटुकः कषायोष्णो लघुस्तथा । वातामयप्रशमनो नानाश्वयथुनाशनः ॥' रा.नि.व.९ ।

**नीलशिग्रुः ।** पुं । शोभाञ्जनवृक्षे । रा.नि.व.७ ।

**नीलशिम्बिका ।** स्त्री । शिम्बीभेदे । वै.निघ. ।

**नीलशृङ्गः ।** पुं । महाविषवृश्चिकजातिभेदे । सु.कल्प.८ अ. । [ वै.निघ. ।

**नीलशोधनी ।** स्त्री । नील्याम् । नील ।

**नीलषष्टिकः ।** पुं । षष्टिकशालिविशेषे । नीलवर्ण ষেটে ধান । गुणैः गौरषष्टिकात्किञ्चिदूनः । रा.नि.व.१६ । [ याम् ।

**नीलसन्ध्या ।** स्त्री । नीलपुष्पापराजितालता-

**नीलसस्यम् ।** क्ली । वाजरा इति ख्याते शस्ये । বাজরা । निघ. ।

**नीलसहाचरः ।** पुं । नीलपुष्पझिण्टाम । हिं नीलपुष्पकटसरैया । भा.म.४भ.मुखरोगचि. । "तुलाघृतं नीलसहाचरन्तु" । भैष. ।

**नीलसारः ।** पुं । नीलबीजासनवृक्षे । रा.नि. व.९ । तिन्दुकवृक्षे ।

**नीलसिन्दुकः (का) (वार) ।** पुं, स्त्री । नीलनिर्गुण्ड्याम् । নীল নিশিন্দা । रा.नि.व.४ ।

**नीलसिन्दुवारः ।** पुं । नीलवर्णसिन्दुवारवृक्षे । নীলনিসিন্দা । हिं नीलसिन्दु । तत्पर्य्यायाः —सीतासहा, निर्गुण्डी, सिन्दुकः, कपिका, भूतकेशी, इन्द्राणी, [illegible] गुणाः—कटुः, उष्णः, तिक्तः, कास[illegible]शोफहरः, वातामिप्रदराध्माननाशी च ।

**नीलस्यन्दा ।** स्त्री । नीलापराजितायाम् । रा.नि.व.७ ।

**नीला ।** स्त्री । नीलीवृक्षे । नकुल.१५अ. । नील-पुनर्नवायाम् । लाक्षायाम् । रा.नि.व.५।६ । स्पृक्कायाम् । कृष्णजीरके । वै.निघ. । तन्नामकोर्द्ध-जत्रुगतमर्म्मद्वये । तत्स्थाने कण्ठनाडी भवतः । सु.शा.६अ. । नीलमक्षिकायाम् । अम. ।

**नीलाख्यः ।** पुं । नीलमणौ । वै.निघ. ।

**नीलाङ्गः ।** पुं । नीलक्रौञ्चपक्षिणि । पारावते । वै.निघ. । सारसपक्षिणि । चाषपक्षिणि । रा.नि. व.१९ ।

**नीलाङ्गुः ।** पुं, स्त्री । नीलमक्षिकायाम् । हि. । क्रिमौ । अम. ।

**नीलाञ्जनम् ।** क्ली । रसाञ्जने । तुत्थके । रा. नि.व.१३ । सौवीराञ्जने । সফেদ সুর্মা । र.मा. । गुणाः—उष्णं रसायनं तिक्तं कटु श्लेष्ममुखनेत्र-रोगव्रणदाहघ्नं भेदकञ्च । रा.नि.व.१३ । तच्छोधनं —"नीलाञ्जनं चूर्णयित्वा जम्बीरद्रवभावितं । दिनैकमातपे शुद्धिर्भवेत्कार्य्येषु योजयेत ॥" र.सा. सं. । [ জামরুল । वै.निघ. ।

**नीलाञ्जनच्छदा ।** स्त्री । जम्बूवृक्षे ।

**नीलाञ्जना ।** स्त्री । वीजवृक्षे । वै.निघ. ।

**नीलाञ्जनी ।** स्त्री । कालाञ्जन्याम् । নীল কাপাস । रा.नि.व.४ ।

**नीलाण्डकः ।** पुं । रोहितमत्स्ये । वै.निघ. ।

**नीलाद्रिकर्णी ।** स्त्री । नीलापराजितायाम् । रा.नि.व.३ ।

**नीलापराजिता ।** स्त्री । नीलपुष्पापराजितायाम् । নীল অপরাজিতা । मं नीलगोकर्णी । कं नीलागोरिकर्णिके । तत्पर्य्याय, नीलपुष्पी, महानीली, नीलगिरिकर्णिका, गवादनी, व्यक्तगन्धा नीलसन्ध्या । गुणाः—शीतला तिक्ता ज्वरदाहरक्तातिसारघ्नी विच्छर्दिकोन्मादमदभ्रम-श्वासातिकासघ्नी आमाशयघ्नी च । रा.नि.व.३ ।

**नीलाब्जम् ।** क्ली । नीलकमले । रा.नि.व.१० ।

**नीलाभ्रम् ।** क्ली । कृष्णाभ्रे । নীল অভ্র । रा.नि.व.१० । See अभ्रकम् । [ व६ ।

**नीलाम्बरम् ।** क्ली । तालीशपत्रे । रा.नि.

**नीलाम्बुजम् (न्म) ।** क्ली । नीलपद्मे । प.मु. ।



**नीलाम्लानः ।** पुं । नीलपुष्पझिण्टीक्षुपे । নীল ঝাঁটী । मं कालाकोरांट । क करियगोरंटे । गुणाः—कटुः तिक्तः कफ-वात-शूलघ्न कण्डु-कुष्ठ-व्रणघ्नः शोफत्वग्दोषघ्नश्च । रा.नि.व.१० ।

**नीलाम्ली ।** स्त्री । स्वनामख्यातफलवृक्षे । हिं नलबुलगुड़, कालीपिठालि । मं अजगन्धि । कं वेलियगिड् । सा श्वेतनीलभेदेन द्विधा । गुणाः— मधुरा रुच्या कफवातहरी च । रा.नि.व.४ ।

**नीलालिः ।** पुं । भ्रमरे ।

**नीलालुः ।** पुं । नीलवर्णालुकविशेषे । নীল আলু । मं नीलालु । कं करियगणसु । तत्पर्य्यायौ,—असितालुः, श्यामालुकः । गुणाः मधुरः शीतः पित्तदाहश्रमघ्नश्च । रा.नि.व.७ ।

**नीलाशी ।** स्त्री । नीलनिर्गुण्ड्याम् । वै.निघ. ।

**नीलाश्मजम् ।** क्ली । तुत्थके । वै.निघ. ।

**नीलाश्मा ।** पुं । नीलमणौ । रा.नि.व.१३ ।

**नीलासनः ।** पुं । नीलबीजासनभेदे । পিয়াশালবিশেষ । तत्पर्य्यायः,—नीलबीजः, नील-पत्रः, सुनीलकः, नीलद्रुमः, नीलसारः, नील-निर्य्यासकः । गुणाः—कटुः शीतः कषायः कुष्ठकण्डू-दद्रुघ्नः सारकश्च । रा.नि.व.९ । [ निघ. ।

**नीलाह्वा ।** स्त्री । कृष्णापराजितायाम् । वै.

**नीलाक्षः ।** पुं । हंसे । वै.निघ. ।

**नीलिका ।** स्त्री । रुक्मलौहे । विद्रौलिभाषा । नील्याम् । নীল । रा.नि.व.४ । नीलनिर्गुण्ड्याम् । वर्त्तलौहे । रा.नि.व.१३ । क्षुद्ररोगविशेषे । लक्षणं —"कृष्णमेवंगुणं वक्त्रे गात्रे वा नीलिकां विदुः ।" मा.नि. । "शोकक्रोधादिकुपिताद्वातपित्तान्मुखे तनु । श्यामलं मण्डलं व्यङ्गं वक्त्रादन्यत्र नीलिका ॥" वा.उ.३१अ. । लिङ्गनाशनामकपत्तिकदृष्टिरोगे । भा. । See काचः । इन्दीवरालतायाम् । वङ्गे । कान्तलौहे वै.निघ. । वारिज्वरे । गजवै. ।

**नीलिनी ।** स्त्री । नील्याम् । च.सू.२अ. । नीलबुह्नायाम् । रा.नि.व.४ । स.सू.३९अ. । सि.यो. अ.श्वा.चि.पञ्चगव्यघृते । "नीलिनीं कटुरोहि-णीम् ।" च.द.ज्व.चि. । "नीलिनीमजगन्धाञ्च ।" नीलपुनर्नवायाम् । रा.नि.व.५ । वा.सू.१५अ. । "सुषवीशङ्खिनीनीलिनीतिल्वकानि ।" श्वेतबलायां । च.द.गुल्म-चि. । "सप्तला नीलिनी वचा ।" श्याम-विवृतायां । श.र. । सिंहपिप्पल्याम् । वै.निघ. ।

**नीलिनीफलम् ।** क्ली । नीलीबीजे । নীলের বীজ । सु.सू.१अ. ।

**नीली ।** स्त्री । स्वनामख्यातक्षुपे । নীল গাছ । रा.नि.व.४ । See ञ्जलिका । नीलबुह्नायाम् । নীল বোণ । तत्पर्य्यायः,—काला, क्लीतकिका, ग्रामीणा मधुपर्णिका, रञ्जनी, श्रीफली, तुत्था, तूणी, दोला, नीलिनी, तूली, दलिका, टीपाङ्का, क्लीतिका, कुतसला, मेचकणी, ग्रामणी, ग्रामीणी, नालपिष्पिका नीला, तूलनी, रङ्गा, मेला, तुच्छा, नीलपत्री, राज्ञी, नीलिका, नीलपुष्पी, कालौ, श्यामा, शोधनी, श्रीफला, ग्राम्या, भद्रा, भार-वाही, मोचा, कृष्णा, व्यञ्जनकेशी, महाफला, असिता, क्लीतनी, केशी, चारटिका, गन्धपुष्पा, श्यामलिका, रङ्गपत्री, महाबला, स्थिररङ्गा, रङ्गपुष्पी, कालकेशी । गुणाः—"नीलिनी रेचनी तिक्ता केश्या मोहभ्रमापहा । उष्णा हन्त्युदरप्लीह-वातरक्तकफानिलान् । आमवातमुदावर्त्तं मन्दञ्च विषमुद्धतम् ॥" भा. । च.द.सन्निपातज्व.चि. अष्टादशाङ्गे । "नीली कम्पिल्लकं त्रिवृत् ।" तन्नामकौषधी, यस्याः क्षीरं नीलं पुष्पञ्चापि नीलम् । या चानेक-लताप्रतानवती भवति । च.चि.१अ. । नीलाञ्जनिकायां, शारदफलायां, सिंहपिप्पलीति डल्वणः । सु.चि.२५अ. । कालाञ्जन्याम् । কাল কার্পাস । वा.टी.हेमा. । श्रीफलिकायाम् । বেল গাছ । वृद्धदारके । "नीलीतुल्यं लगेलञ्च ।" "चूर्णं श्यामा त्रिवृन्नीली ।" सु.सू.४अ. ।

**नीलीफलम् ।** क्ली । श्रीफले । सु.चि.१७अ. ।

**नीलीमाषः ।** पुं । राजमाषे । বরবটী ।

**नीलीवृक्षाकृतिः ।** स्त्री । शरपुङ्खायाम् । শরপুঙ্খা, বন নীল । वै.निघ. ।

**नीलोत्पलम् ।** क्ली । (Nymphaea stellata or N. Caerulea.) नीलकमले । নীল পদ্ম, নীলোৎপল । नीलकुमुदे । নীল শুন্দি । हिं नीलोफर । मं नीलोत्पल । कं नेद्दिलु । तें नल्लकलुव । तत्पर्य्यायः,—उत्पलकं, कुवलयं, इन्दीवरं, कन्दोत्थं, सौगन्धिकं, सुगन्धं, कुड्मलकं, असितोत्पलं, कन्दोटं, इन्दिरावरं, इन्दीवारं, नीलपद्मम् । गुणाः—अतिस्वादु शीतं सुरभि सुखकृत् पाकेऽतितिक्तं रक्तपित्तघ्नञ्च । रा.नि.व.१० । "नीलोत्पलमतिस्वादु शीतं सुखकरं मतं । पाके-

ऽतितिक्तं सुरभि रक्तपित्तस्य नाशकम् ॥” द्रव्यगुणः। च.अर्थ.-चि.। तन्मूलगुणाः—गुरु विष्टम्भि शीतलञ्च। राज.२प.। पुं। नीलमणौ।

**नीलोत्पलिनी (ली)।** स्त्री। नीलकमलिन्याम्। নীলপদ্মের ঝাড়। कुमुदिन्याम्। শুন্দী বা কুমুদফুলের ঝাড়। रा.नि.व.१०।

**नीलोदरः।** पुं। महाविषवृश्चिकजातिभेदे। सु.कल्प.८अ.।

**नीलोपलः।** पुं। नीलमणौ। নীলকান্ত মণি। रा.नि.व.१३।

**नीवरम्।** क्ली। जले। वै.निघ.। पुं। पङ्के।

**नीवारः।** पुं। Wild variety of Oryza sativa. तृणधान्यविशेषे। উড়ি ধান। हिं तीनी। तें निवरिवड्डु। तत्पर्य्यायः,—तृणधान्यं, वनव्रीहिः, अरण्यधान्यं, मुनिधान्यं, तृणोद्भवं, अरण्यशालिः। गुणाः—मधुरः स्निग्धः लघुः पवित्रः पथ्यदश्च। रा.नि.व.१६। “नीवारः शीतलो ग्राही पित्तघ्नः कफवातकृत्। भा.धा.व.। तदन्नगुणाः—“नीवारभक्तो रुचिदो लघुर्दीपनकृद्गुरुः। वातकारी यक्ष्मश्वासश्लेष्मवमनाशनः ॥” वै.निघ.। रक्तपित्ते हितः। सि.यो.र.पि.चि.। खुदखाद्ये।

**नीवारतुण्डिका।** स्त्री। नीवारे। উড়ি ধান। र.मा.।

**नीहारः।** पुं। हिमे। শিশির। तत्पर्य्यायाः,—निहारः, मिहिका, अवश्यायः, तुषारः, तुहिनं, हिमं, प्रालेयं, महिका, खजलं, निशाजलम्। स च कफ-वातवर्द्धकः। “शताधिकः सनीहारः सविद्युत्स्तनयित्नुवान्। राज.२प.।

**नुत्तः।** पुं। शुद्रपनसवृक्षे। लकुचवृक्षे। वै.निघ.।

**नूतनगुडः।** पुं। अभिनवगुडे। নূতন গুড়। गुणाः—दाहघ्नः तापघ्नः रसनेन्द्रियतर्पणः शीतः सुमधुरश्च। रा.नि.व.१४।

**नूदः।** पुं। ब्रह्मदारुवृक्षे, अश्वत्थभेदे। গয়া অশ্বত্থ। अम.।

**नृदन्ता (न्ती)।** स्त्री। महामेदायाम्। वै.निघ.।

**नृपः।** पुं। ऋषभके। ঋষভক। प.मु.। राजादनवृक्षे। থির্নী গাছ। वै.निघ.२भ.चन्दनादितैले। “चन्दनाम्बु नृपं वाप्यम्।” तगरपादुकायाम्। वै.निघ.।

**नृपकन्दः।** पुं। राजपलाण्डौ। লাল পেয়াজ। रा.नि.व.७।

**नृपतरुः।** पुं। आरग्वधवृक्षे। राजादनीवृक्षे। থির্নী। चि.क्र.क.४प.।

**नृपद्रुमः (पादपः)।** पुं। स्थूलारग्वधवृक्षे। বড় সোণালু। रा.नि.व.९। भा.वा.र.चि.त्रिफलागुग्गुलौ। राजादनीवृक्षे। থির্নী। रा.नि.व.११।

**नृपप्रियः।** पुं। राजपलाण्डौ। रा.नि.व.७। रामशरे। রামশর। रा.नि.व.८। आम्रवृक्षे। रा.नि.व.११। सारसपक्षिणि। वै.निघ.। वंशभेदे। বেড়ু বাঁশ। श.च.। [व.७।

**नृपप्रियफला।** स्त्री। वार्त्ताकीवृक्षे। रा.नि.

**नृपप्रिया।** स्त्री। केतकीवृक्षे। কেয়া গাছ। रा.नि.व.१०। पिण्डीखर्जूरे। शालिधान्ये। वै.निघ.।

**नृपबदरः।** पुं। राजबदरवृक्षे। रा.नि.व.११।

**नृपमाङ्गल्यकम्।** क्ली। आहुल्यक्षुपे। रा.नि.व.४।

**नृपमाषः।** पुं। राजमाषे। रा.नि.व.१६।

**नृपवल्लभः।** पुं। राजाम्रवृक्षे। राजबदरे। रा.नि.व.११। शङ्खद्रां रसविशेषे। कज्जलिः ८ तो. जातीफलं (জায়ফল) लवङ्गं (লবঙ্গ) मुस्ता (মুতা) गुड़त्वक् एला टङ्कणक्षारः (সোহাগার খই) जीरकं (জীরা) तेजपत्रं यमानी शुण्ठी सैन्धवलवणं लौहम् अभ्रं ताम्रम् एषां प्र. ४ तो. मरिचं ८ तो. छागीदुग्धेन धात्रीरसेन वा मर्द्दयेत्। वृहत् यथा—पारदः गन्धकः लौहम् अभ्रं शोधकं चित्रकमूलं त्रिवृन्मूलं टङ्कणक्षारः जातीफलं हिङ्गु गुड़त्वक् एला मुस्ता लवङ्गं तेजपत्रं यमानीद्वयं शुण्ठी सैन्धवं मरिचं रौप्यं प्र. १ तो. स्वर्णभस्म १२ रत्तिकं। आर्द्रकरसेन आमलकीरसेन वा भावयेत्। मात्रा माषकलायमिता। र.सा.सं.।

**नृपवल्लभघृतम् (तैलम्)।** क्ली। नेत्ररोगे घृतं तैलञ्च। गव्यघृतं, तैलं वा ॥० श. दुग्धं २श.। कल्कार्थं—जीवकः (গুলঞ্চ) ऋषभकः (বংশলোচন) मेदा (অশ্বগন্ধা) द्राक्षा (কিসমিস্) शालपर्णी कण्टकारी वृहती यष्टिमधु वाघ्यालकं



(বেলেড়া) विडङ्गं मञ्जिष्ठा शर्करा (চিনি) रास्ना नीलोत्पल गोक्षुरं पुण्डरीकं (পুণ্ডরিয়া) पुनर्नवा सैन्धव पिप्पली (পিপুল) प्रत्येकं ॥० तो.। तैलस्य घृतसेवनञ्च। भैष.। अथवा तैल-घृतयोः प्र. ४ श. दुग्धं १६श. कल्कद्रव्यं प्र. २ तो.। रस.र.।

**नृपवल्लभा।** स्त्री। केविकापुष्पवृक्षे। रा.नि.व.१०। महाराजचूतवृक्षे। वै.निघ.।

**नृपवृक्षः।** पुं। राजवृक्षे। সোন্দাল গাছ।

**नृपात्मजः।** पुं। महाराजचूतवृक्षे। रा.नि.व.११। आम्रातकवृक्षे। वै.निघ.। स्त्री (जा)। कटुतुम्ब्याम्। र.मा.।

**नृपान्नम्।** क्ली। शालिधान्यविशेषे, राजान्ने। गुणाः—त्रिदोषघ्नं सुस्निग्धं मधुरं लघु दीपनं बल्यं पथ्यं कान्तिदं वीर्य्यवर्द्धनञ्च। रा.नि.व.१६।

**नृपामयः।** पुं। राजयक्ष्मणि, क्षयरोगे। रा.नि.व.२०।

**नृपार्हम्।** क्ली। शालिधान्ये। হৈমন্তিক ধান্য। प.मु.।

**नृपावर्त्तः।** पुं, क्ली। राजावर्त्तमणौ। रा.नि.व.१३।

**नृपाह्वयः।** पुं। राजावर्त्तमणौ। प.मु.। राजपलाण्डौ। रा.नि.व.७।

**नृपेष्टः।** पुं। राजपलाण्डौ। रा.नि.व.७। राजबदरवृक्षे। रा.नि.व.११। नीलीवृक्षे। वै.निघ.।

**नृपोचितः।** पुं। राजमाषे। বর্বটী। प.मु.। रा.नि.व.१६। [पाणौ। रा.नि.व.१८।

**नृमाणम्।** क्ली। पादात् ऊर्द्ध्वविस्तृतदोः

**नृसा(द)रः।** पुं। निषादल इति ख्याते द्रव्ये। महाद्रावके।

**नेता।** पुं। सिन्धुवारक्षुपे। নিশিন্দা। रा.नि.व.४। निम्बवृक्षे। रा.नि.व.९।

**नेत्रम्।** क्ली। दर्शनेन्द्रिये। চক্ষুঃ। रा.नि.व.१८। नेत्रपरीक्षा यथा—वातेन रूक्षं धूम्रमरुणञ्च। पित्तात् पीतरक्तहरितवर्णं सदाहञ्च। कफेन धवलं ज्योतिर्हीनञ्च। भा.। तदुक्तं—“विद्याद्द्व्यङ्गुलबाहल्यं स्वाङ्गुष्ठोदरसम्मितं। द्व्यङ्गुलं सर्व्वतः सार्द्धं भिषङ्नयनबुद्बुदं। सुवृत्तं गोस्तनाकारं सर्व्वभूतगुणोद्भवम्। जलं भुवोऽग्निसो रक्तं वातान्न कृष्णसितं जलात्। आकाशादश्रुमार्गाश्च जायन्ते नेत्रबुद्बुदे। दृष्टिश्चात्र तथा वक्ष्ये यथा ब्रूयाद्विशारदः। नेत्रायामत्रिभागन्तु कृष्णमण्डलमुच्यते। कृष्णात् सप्तमामिच्छन्ति दृष्टिं दृष्टिविशारदाः। मण्डलानि च सन्धींश्च पटलानि च लोचने।” सु.उ.१अ.। तरुमूले। গাছের শিকড়। रा.नि.व.२। च.द.वि.ज्व.चि.। “दीर्घपत्रककर्णाख्यनेत्रम्।” वस्तिशलाकायाम्। शला इति लोके। यथा—नेत्राणि, सुवर्णरजतताम्रायोरीतिदन्तशृङ्गमणितरुसारमयानि श्लक्ष्णानि दृढानि गोपुच्छाकाराणि ऋजूनि गुटिकामुखानि। तदभावे नलंशास्थिसम्भवा। नेत्रप्रणिधानदोषाः षट्, पार्श्वावपीड़ितमत्युत्क्षिप्तमवसन्नं तिर्य्यक्क्षिप्तं चलितं विवर्त्तितमिति। अतिस्थूलं कर्कशमवनतमणु भिन्नं सन्निकृष्टविप्रकृष्टकर्णिकं सूक्ष्मातिच्छिद्रमतिदीर्घमतिह्रस्वमित्येकादश नेत्रदोषाः। सु.चि.३५अ.। See अनुवासनवस्तिः।

**नेत्रकर्म्म (प्रसाधनम्)।** क्ली। सप्तविधनेत्रोपचारेषु। यथा—“सेकश्चाश्च्योतनम्पिण्डी विड़ालस्तर्पणस्तथा। पुटपाकोऽञ्जनं नेत्रे यथावस्थं प्रयोजयेत् ॥” तोड़.। भा.। [अम.।

**नेत्रच्छदः।** पुं। नेत्रावरणे। চক্ষের পাতা।

**नेत्रजलम्।** क्ली। अश्रुणि। চখের জল।

**नेत्रधावनम्।** क्ली। चक्षुर्धावने। तस्य विधिः—“दन्तमूर्द्धमधो घृष्टा प्रातः सिञ्चेच्च लोचने। तोयपूर्णमुखस्तेन दृष्टिराशु प्रसीदति ॥” राज.१प.।

**नेत्रनैर्मल्यकारी।** पुं। खर्परधातौ। वै.निघ.।

**नेत्रपर्य्यन्तः।** पुं। अपाङ्गदेशे। रा.नि.व.१८।

**नेत्रपाकः।** पुं। चक्षुषः पाके। लक्षणं—“कण्डूपदेहाश्रुयुतः पक्वोदुम्बरसन्निभः। संरम्भी पच्यते यस्तु नेत्रपाकः स शोथजः ॥” मा.नि.।

**नेत्रपाषाणः।** पुं। कटुकायाम्। र.मा.।

**नेत्रपिण्डः।** पुं। विड़ाले। नेत्रगोलके। हारा.।

**नेत्रपुटम्।** पुं। नेत्रच्छदे। [२।

**नेत्रपुष्करा।** स्त्री। रुद्रजटायाम्। रा.नि.व.

**नेत्रबलम्।** क्ली। रसाञ्जने। वै.निघ.।

**नेत्रभूषणम्।** क्ली। कृष्णाञ्जने। কাল শুর্মা। वै.निघ.। [व.निघ.।

**नेत्रमङ्गलकारी (इन्)।** पुं। खर्परधातौ।

**नेत्रमलम्।** क्ली। पिच्चटे। পিচুটী। वै.निघ.।

**नेत्रमीला** । स्त्री । यवतिक्तालतायाम् । रा. नि.व.३ ।

**नेत्ररञ्जनम्** । क्ली । अञ्जने । কাজল ।

**नेत्ररोगः** । पुं । दृष्टिगतरोगे । চক্ষের রোগ । तस्य निदानं—सन्तप्तदूरेक्षणरोदनकोपशोकाभिघातादिभिर्वातादयः कुपिता नेत्रविकारान् जनयन्ति । ते च रोगाः षट्सप्ततिः । यथा—वातजा दश, पित्तजा दश, कफजास्त्रयोदश, रक्तजाः षोडश, त्रिदोषजाः पञ्चविंशति बाह्यौ द्वौ । ते च पुन षट्सप्ततिप्रकारा अवयवभेदेन षट्सप्ततिर्भवन्ति । यथा—सन्ध्याश्रया नव, वर्त्मजा एकविंशतिः शुक्लजा एकादश कृष्णजाश्चत्वारः सर्व्वस्थाः सप्तदश, दृष्टिजाः द्वादश, बहिर्जातौ द्वौ चेति । मा.नि. । अन्यस्य नेत्ररोगा यथा—"तोयस्रावः प्रसन्नान्धो नक्तान्धस्तिमिरस्तथा । शुक्लको शुक्लकालश्च पटलश्चार्बुदस्तथा ॥ पूयस्रावश्च काचाख्यो रक्तस्रावस्तथैव च । चिपिटी वर्त्मरोगश्च अभिष्यन्दस्तथैव च ॥ वातपित्तकफैर्दुष्टैर्नेत्ररोगा भवन्त्यमी । लिङ्गं चिकित्सितं तेषां प्रवक्ष्याम्यनुपूर्व्वशः ॥" ग.द. ।

**नेत्ररोगहा** । पुं । वृश्चिकाल्याम् । বিছাতি । रा.नि.व.८ ।

**नेत्ररोम** । क्ली । नेत्रपक्ष्मणि । वै.निघ. ।

**नेत्रवती** । स्त्री । पश्चिमदेशप्रसिद्धभारतवर्षीयनद्याम् । एतज्जलगुणाः—सुमधुर कान्तिजनकं हृद्यं पुष्टिकरं दीपनं पाचनं बल्यञ्च । रा.नि.व.१४ ।

**नेत्रवर्त्म** । क्ली । दृष्टौ, नेत्रे । वै.निघ. ।

**नेत्रवर्त्मबन्धः** । पुं । नेत्ररोगविशेषे । वै.निघ. ।

**नेत्रवस्तिः** । पुं । नेत्रे वस्तिदानप्रकरणे । "नेत्रचेष्टं परित्यज्य साङ्गुष्ठं द्व्यङ्गुलम् । सर्व्वतश्चापि चमसीं जलं दत्त्वा प्रमर्द्दयेत् ॥ तेन पिच्छ नाखवालं दृढं सन्धिविवर्जितम् । कृत्वाखवाले दृक्प्रान्ते शुक्लभागं द्रवेण वै । पूरयेत यथापक्ष्म पूरितस्वेव जायते । नेत्रे पक्वं प्रकुर्व्वीत विकारस्तु तथैव च ॥ स्वस्थे कफे सन्धिरोगे मात्रा पञ्चशतं विदुः । कफे वाते कृष्णरोगे मात्रा सप्तशतं मता । दृष्टिरोगेष्वष्टशतं अधिमन्थे सहस्रकम् । शुक्लेऽप्ति कुटिले कृष्णे स्यात् द्वादशशती मता ॥ पित्तरोगे नवशत सहस्रं वातरोगिणाम् । एकाहं वा त्र्यहं वापि पञ्चाहं चेष्यतेऽथवा ॥ द्रवश्चापाङ्गतो नीत्वा नीलद्रव्यं विलोक्य च । सुखं निरोधयेत् पश्चात् नेत्रवस्तिविधिस्त्वयम् ॥ निर्वृत्त्यांघिशान्तिश्च क्रियालाघवमेव च । सम्यक् रोगे सुखस्वप्नैर्बल्यं वर्णपाटवम् ॥ शोकाश्रुपातगुरुता स्वेदो स्यादतितर्पिते । रुक्षाविलं सरक्तञ्च नेत्रं स्याद्धीनतर्पितं ॥ रुक्षे स्निग्धः क्रमश्चात्र प्रयोज्यः सम्प्रदायतः ।" तोड़ । See सु.उ.१८अ. ।

**नेत्रविभूषणम्** । क्ली । नीलाञ्जने । वै.निघं. ।

**नेत्रवैमल्यकारी** (इन्) । पुं । खर्परधातौ । व.निघ. ।

**नेत्राभिष्यन्दः** । पुं । नेत्रसर्व्वगतरोगे । নেত্রশূল বা চোক উঠা । स चतुर्विधः वाताभिष्यन्दः, पित्ताभिष्यन्दः, कफाभिष्यन्दः रक्तजश्चेति । अयं रोगः प्रायेणाधिमन्थादिसर्व्वविधनेत्ररोगाणामाकरः । लक्षणं यथा—"प्रायेण सर्व्वे नयनामयास्ते भवन्त्यभिष्यन्दनिमित्तमूलाः । वातात्पित्तात् कफाद्रक्तादभिष्यन्दश्चतुर्विधः । प्रायेण जायते घोरः सर्व्वेषामेवाकरः ॥ निस्तोदनस्तम्भनरोमहर्षसङ्घर्षपारुष्यशिरोभितापाः । विशुष्कभावाः शिशिराश्रुता च वाताभिपन्ने नयने भवन्ति ॥ दाहप्रपाकौ शिशिराभिनन्दा धूमायनं बाष्पसमुच्छ्रयश्च । उष्णाश्रुता पीतकनेत्रता च पित्ताभिपन्ने नयने भवन्ति ॥ उष्णाभिनन्दा गुरुताक्षिशोफः कण्डूपदेहावतिशीतता च । स्रावो मुहुः पिच्छिल एव चापि कफाभिपन्ने नयने भवन्ति ॥ ताम्राश्रुता लोहितनेत्रता च राज्यः समन्तादतिलोहिताश्च । पित्तस्य लिङ्गानि च यानि तानि रक्ताभिपन्ने नयने भवन्ति ॥" सु.उ.६अ. ।

**नेत्रामयः** । पुं । नेत्ररोगे । रा.नि.व.२० ।

**नेत्रामयहरः** । पुं, क्ली । खर्परे । वै.निघ. ।

**नेत्राम्बु** । क्ली । अश्रुणि । চক্ষের জল । अम. ।

**नेत्रारिः** । पुं । स्नुहीवृक्षे । মনসা গাছ । रा. नि.व.८ ।

**नेत्रार्शः** । क्ली । अक्षिजातार्शसि । तच्च वर्त्मावरोधः वेदनास्रावौ दर्शननाशश्च । सु.नि.२अ. ।

**नेत्रास्थि** । क्ली । नयनाधिष्ठाने शीर्षाख्यास्थिवये । च.शा.७अ. ।

**नेत्री** । स्त्री । नाड्याम् । श.र. ।

**नेत्रोदकम्** । क्ली । नेत्रजले । অশ্রু ।

**नेत्रोपमः** । पुं । बातामे । বাদাম । भा. ।

**नेत्रोपमफलः** । पुं । बातामवृक्षे । भा. ।



**नेत्रौषधी** । स्त्री । अजशृङ्ग्याम् । তীত পুষ্পী, কোঁগা । प.मु. । र.मा. । क्ली । नेत्रहितौषधमात्रे । पुष्पकाशीषे । नीलाञ्जने । নীল শীরাকস । रा.नि.व.१३ ।

**नेत्रप्रवर्गः** । पुं । चक्षुर्हितकरद्रव्यगणे । यथा—"द्विधा रसाञ्जनञ्जोक्तं त्रिफला लोध्रकद्वयं । कुमारिका च विमला गणोऽयं नेत्रसंज्ञकः ॥" अर्क चि. ।

**नेदिष्ठः** । पुं । अङ्कोटवृक्षे । আটা. ।

**नेपः** । पुं । उदके । জল ।

**नेपा** । स्त्री । नवमल्लिकायाम् । সেউতী । रा. नि.व.१० । कस्तूर्य्याम् । वा.उ.५अ । मनःशिलायाम् । वै.निघ. हिक्का.चि.धूमे ।

**नेपालः** । पुं । कणगुग्गुलौ । वै.निघ. । [ नि.व.१३ ।

**नेपालकम्** । क्ली । ताम्रधातौ । তামা । रा.

**नेपालनिम्बः** । पुं । किराततिक्तके । চিরাতা । चिरइता नेपालनिंबु, चिराइते इति च लोके । तत्पर्य्यायः,—नैपालः, तृणनिम्बः, ज्वरान्तकः, नाड़ीतिक्तः, निद्रारिः, सन्निपातरिपुः, सन्निपातनुत् । गुणाः—"नेपालनिम्बः शीतोष्णो योगवाही लघुस्तथा । तिक्तोऽतिकफपित्तास्रशोफतृष्णाज्वरापहः ।" रा.नि.व.९ ।

**नेपालमूलकम्** । क्ली । गजदन्ताकारे मूलकभेदे । भा.प.१भ.शा.व. ।

**नेपालशृङ्गी** । स्त्री । नेपालदेशीयशृङ्गीविषे । নেপালদেশীয় গিঠা বিষ । गुणाः—"नेपालशृङ्गी नेपाली हन्ति सा कफजान् गदान् । वातजान्त्रिविधांश्चापि सन्निपाताङ्कं ज्वरम् । आमवातं महावीर्यं हृद्रोगमपि दारुणम् ।" अत्रि. ।

**नेपाल(ला)का** । स्त्री । सोमलतायाम् । वै.निघ. । मन.शिलायाम् ।

**नेपालीयम्** । क्ली । ताम्रे । वै.निघ. ।

**नेपालेक्षुः** । पुं । पुण्ड्रकेक्षौ । পুঁড়ি ইক্ষু । रा.नि.व.१४ ।

**नेमिः (मी)** (इन्) । पुं । शुक्लखदिरे । रा. नि.व.८ । चक्रवाकपक्षिणि । च.द.१अ. । तिनिशवृक्षे । अम. । र.मा. ।

**नेमिवृक्षः** । पुं । श्वेतखदिरवृक्षे । रा.नि.व.८ ।

**नैऋतवायुः** । पुं । दक्षिणपश्चिम-कोणवाहिसमीरणे । तद्गुणाः—"नैऋतो न विदाहकृत् ।"

**नैकुम्भम्** । क्ली । नैपालवीजे । सा.कौ. । पुं । नैपालवृक्षे ।

**नैगमेषः** । पुं । पितृग्रहसंज्ञके बालरोगे । तदाविष्टे लक्षणं यथा—"यः फेनं वमति विनम्यते च मध्ये रोदिति विलपति चोर्द्धुमीक्षमाणः । ज्वर्य्येत प्रततमथो वसासगन्धिर्निःसंज्ञो भवति हि नैगमेषजुष्टः ॥" नैगमेषस्तु पार्व्वत्या सृष्टो मेषाननो ग्रहः । कुमारधारी देवस्य गुहस्यात्मसमः सखा । सु.उ.३७अ. ।

**नैगमेषापहृतः** । पुं । नागोदरे । নাগোদর । सु.शा.१०अ. ।

**नैचिकी** । स्त्री । उत्तमायां गवि । अम. ।

**नैचुलम्** । क्ली । हिज्जलवीजे । च.सू.२अ.वमन. ।

**नैदानिकः** । त्रि । निदानशास्त्रकुशले ।

**नैपालः** । पुं । नेपालनिम्बे । চিরেতা । रा. नि.व.९ । [ मूला ।

**नैपालमूलकम्** । क्ली । वृहन्मूलके । বড়

**नैपालिकम्** । क्ली । ताम्रधातौ । रा.नि.व.१३ ।

**नैपाली** । स्त्री । मनःशिलाभेदे । নেপালি গনছাল । मे. । सु.चि.२अ. । मनःशिलायां । र.मा. । रा.नि.व.१३ । नील्यां । श.र. । नवमल्लिकायाम् । সেউতী । वसन्ती नेवारीति लोके । भा. । रा.नि.व.१० । शेफालिकायाम् । मे. । दुग्धभेदे, नेपालकी । गुणाः—वातकरः कफपित्तघ्नः कषाया विदाही च । सु.सू. ५अ. ।

**नैयग्रोधम्** । क्ली । वटवृक्षफले । বটফল । अम. ।

**नैर्झरजलम्** । क्ली । निर्झरवारिणि । ঝর্ণার জল । "शैलसानुस्रवद्वारिप्रवाहः निर्झरो झरः । स तु प्रस्रवणश्चापि तज्जत्यं नैर्झरं जलम् ।" भा. ।

**नैषधकः** । पुं । निषधदेशीये शालिधान्यभेदे । गुणा—शालिवत् । च.सू.२७अ. ।

**नोदयन्ती** । स्त्री । नवमल्लिकायां । र.मा. ।

**नोमाली** । स्त्री । नवमल्लिकायाम् ।

**न्यक्काकः** । स्त्री । विष्ठाकीटे ।

**न्यक्काकका** । स्त्री । पतङ्गविशेषे, विष्ठाकीटे । हारा. ।

**न्यग्रोधः** । पुं । वटवृक्षे । বট গাছ । रा.नि.व.२३।११ । सु.सू.३८अ.न्यग्रोधादिः । सुतश्रेण्याम्. आखुकर्णीलतायाम् । মূষাকাণী । रा.नि.व.२३ । शमीवृक्षे । मे. । विषपर्ण्याम् । मोहननामौषधौ । विश्व. । [ विशेषे । श.मा. ।

**न्यग्रोधपरिमण्डला** । स्त्री । सुन्दरीस्त्री-

**न्यग्रोधपुटपाकः** । पुं । वटकल्कादिसाध्य-पुटपाके । यथा—"न्यग्रोधादेश्च कल्केन पूरयेद्-गौरतित्तिरेः । निरन्त्रमुदरं सम्यक् पुटपाकेन तत्पचेत् ॥" अस्य रसो मधुना सर्व्वातिसारे हितः । शार्ङ्ग.म.ख.१अ. । [ ইন্দুরকাণী ।

**न्यग्रोधा** । स्त्री । आखुकर्णीलतायाम् ।

**न्यग्रोधादिगणः** । पुं । वटादिद्रव्यवर्गे । यथा—"न्यग्रोधपिप्पलसदाफलरोध्रयुग्मं जम्बु-द्वयार्ज्जुन-कपीतन-सोमवल्क-प्लक्षाम्रवञ्जुल-पियाल-पलाशनन्दिकोलीकदम्बविरलामधुकं मधूकम् ।" इति द्रव्याणि । अन्यः—"न्यग्रोधोदुम्बराश्वत्थप्लक्ष-मधुक-कपीतन-ककुभकोशाम्रचोरकपत्रजम्बूद्वय-पियाल-मधूक-रोहिणी-वञ्जुल-कदम्ब बदरी-तिन्दुकी-शल्लकीरोध्रसावरोध्रभल्लातकपलाशनन्दिवृक्षश्चेति । गुणाः—"न्यग्रोधादिर्गणो व्रण्यः संग्राही भग्न-साधकः । रक्तपित्तहरो दाहमेदघ्नो योनिदोष-हृत् ॥" वा.सू.१५अ. । सु.सू.३८अ. ।

**न्यग्रोधिका** । स्त्री । आखुकर्णीलतायाम् । रा.नि.व.३ ।

**न्यग्रोधी** । स्त्री । द्रवन्त्याम् । বড় দন্তী । रा.नि.व.५ । आखुकर्णीलतायाम् । सुतश्रेण्याम् । रा.नि.व.४ । থুলকুড়ীতি কশ্চিত্ । अम.भ. ।

**न्यङ्कुः** । पुं । शम्बरमृगे । शाम्बर इति भाषा । हिं बराहशिङ्गा । मांसगुणाः—स्वादु लघु बल्यं वृष्यं त्रिदोषघ्नञ्च । भा.मांसव. । मणिविशेषे । मे. ।

**न्यङ्कुभूरुहः** । पुं । आरग्वधवृक्षे । वै.निघ. । श्योणाकवृक्षे । শোণাপাঠা । त्रिका. ।

**न्यच्छम्** । क्ली । क्षुद्ररोगभेदे । तल्लक्षणं—"मण्डलं महदल्पं वा श्यामं वा यदि वा सितं । सहजं नीरुजं गात्रे न्यच्छमित्यभिधीयते ॥" सु.नि.१३अ. ।

**न्यच्चः** । पुं । गण्डके । গণ্ডার । वै.निघ. । महिषे । क्ली । घासे, तृणे । मे. ।

**न्याक्यम्** । क्ली । भर्ज्जिततण्डुले । মুড়ি । श.च. ।

**न्यादः** । पुं । भोजने । आहारे । अम. ।

**न्युब्जः** । पुं । रोगे । व्यथायाम् । कुशे । वै.निघ. । हे.च. । त्रि । कुब्जे । কুঁজো । मे. । रुजाभुग्ने । अम. । क्ली । कर्म्मरङ्गे । কামরাঙা । मे. ।

**न्यूनपञ्चाशद्भावः** । पुं । जन्मतः उन्मादग्रस्ते । পাগল । का.पुराणं ।

**न्यूनाङ्गः** । त्रि । हीनाङ्गे । खञ्जे । [ श.चि. ।

**न्यूनेन्द्रियः** । त्रि । असम्पूर्णेन्द्रिये, खञ्जादौ ।

## प

**पः** । पुं । वायौ । पर्णे । एकाक्ष.को. ।

**पक्कटी** । स्त्री । प्लक्षवृक्षे । পাকুড় গাছ । वै.निघ. ।

**पक्क(क्व)पोड़ः** । पुं । वर्द्धनवृक्षे । हिं पखोड़ा । तत्पर्य्यायाः,—पत्रकृत्यः, पत्ररञ्जकः, वर्द्धनः । गुणाः—रुच्यञ्जनविधौ शस्तः कटुः जीर्णज्वरघ्नश्च । रा.नि.व.८ ।

**पक्ता(क्तृ)** । त्रि । स्वयं पाककर्त्तरि । पुं । अग्नौ ।

**पक्तिः** । स्त्री । गौरवे । पाके । मे. । पाकशक्तौ । च.द.शिरोव्यथे ।

**पक्तिशूलः** । पुं, क्ली । परिणामशूलरोगे । रा.नि.व.२० । See अन्नद्रवशूलः ।

**पक्वः** । त्रि । क्वथिते शृते वा (वस्तुनि) । र.मा. । परिणते । পাকা । अम.भ. । क्ली । स्विन्नतण्डुलादौ । पुराणम् । [ पाचके । वै.निघ. ।

**पक्वकृत्** । पुं । निम्बवृक्षे । श.च. । त्रि. ।

**पक्वपात्रम्** । क्ली । पक्वशरावे । वा.उ.५अ. ।

**पक्वमांसम्** । क्ली । पाकसिद्धमांसे । পাক করা মাংস । गुणाः—हितं बलवर्द्धनं वीर्य्यवर्द्धनञ्च । रा.नि.व.१७ । ब्रह्मदरे । मद.व.६ ।



**पक्वरसः (सिक्तः)** । पुं । मद्ये । श.र. । तीक्ष्णमद्यभेदे, शीधौ । गुणाः—बलवर्णकरः सरः शोफघ्नः वातघ्नः पाके मधुरः हृद्यः इन्द्रियबोधनश्च । सु.सू.४५अ. । "रोचनो दीपनो हृद्यः शोषशोफा-र्शसां हितः । स्नेहश्लेष्मविकारघ्नो वर्ण्यः पक्वरसो मतः ॥" च.सू.२७अ. ।

**पक्ववारि** । क्ली । उष्णजले । काञ्जिके । श.च. ।

**पक्वशस्यसमोन्नतिः** । पुं । राजकदम्बे । वै.निघ. । [ द्रव्ये ।

**पक्वान्नम्** । क्ली । पाचितान्ने । घृतादिपक्वभक्ष्य-

**पक्वाशयः** । पुं । नाभेरधोभागे । পাকাশয় । "पक्वाशयो ह्यधो नाभेः ।" रा.नि.व.१८ । अपिच "नाभिस्तनान्तरं जन्तोराहुरामाशयम्बुधाः । आमा-शयादधः पक्वाशयादूर्द्धन्तु पाकला । पक्वाशयस्त्वधो नाभेरूर्द्धमामाशयः स्मृतः ॥" भा. ।

**पक्वेष्टका** । स्त्री । दग्धेष्टकायाम् । वै. संग्रहः ।

**पक्षोड़ः (पोड़ः)** । पुं । पक्कपोड़वृक्षे । পখোড় । रा.नि.व.८ ।

**पङ्कः** । पुं । कर्द्दमे । কাদা । गुणाः—पक्वान्न-दाहनाशित्वं भग्नक्षयहितत्वं हिमत्वञ्च । राज. । शोथघ्नत्वं सरत्वञ्च । भा. ।

**पङ्ककर्व्वटः** । पुं । कोमलकर्द्दमे । থিতন পলি । त्रिका. । [ পাখী । त्रिका. ।

**पङ्ककीरः** । पुं । कोयष्टिकपक्षिणि । টিটির

**पङ्कक्रोड़ः** । पुं । ग्राम्यशूकरे । वै.निघ. ।

**पङ्कगड़कः** । पुं । (Magrognathus.) पङ्कालमत्स्ये, क्षुद्रमत्स्यभेदे । পাঁকাল মাছ । तत्पर्य्यायः,—गवाटी, पङ्कगतिः, ब्रह्मो । त्रिका. ।

**पङ्कगतिः** । पुं । पङ्कालमत्स्ये । श.मा. ।

**पङ्कग्राहः** । पुं । शिशुमारे । वै.निघ. । मकरे । हारा. ।

**पङ्कजम् (न्म)** । क्ली । पद्मे । प.मु. ।

**पङ्कजातः** । पुं । भृङ्गराजक्षुपे । ভীমরাজ । वै.निघ. । [ পদ্মের ঝাড় । वै.निघ. ।

**पङ्कजिनी** । स्त्री । पद्मालये, कमलिन्याम् ।

**पङ्कपर्पटी** । स्त्री । शुष्कपङ्कजाते पर्पटाकारे । सौराष्ट्रमृत्तिकाभावे इयं ग्राह्या । र.मा. ।

**पङ्कमण्डूकः** । पुं । जलशुक्तौ । वै.निघ. । शम्बूके । শামুক । हारा. ।

**पङ्करुट् (रुहम्)** । क्ली । पद्मे । रा.नि.व.१० ।

**पङ्कवारि** । क्ली । काञ्जिके । वै.निघ. ।

**पङ्कवासः** । पुं । कर्कटे । रा.नि.व.१९ ।

**पङ्कशुक्तिः** । स्त्री । शुक्तौ । ঝিনুক । त्रिका. ।

**पङ्कशू(षू,सू)रणः** । पुं । पद्मकन्दे । শালুক । त्रिका. ।

**पङ्कारः** । पुं । (Vallisneria, or Tropa bispinosa.) जलजवृक्षविशेषे, कण्टकसेवल्यां । কাঁটাশেউতী । मे. ।

**पङ्किलः** । त्रि । पङ्कमये । मलिने ।

**पङ्कीरः** । पुं । टिट्टिभपक्षिणि । টিটির পাখী । वै.निघ. ।

**पङ्केज(रुह)म्** । क्ली । कमले । रा.नि.व.१० । पुं । सारसपक्षिणि ।

**पङ्क्तिकण्टकः** । पुं । अपामार्गक्षुपे । रा.नि.व.४ ।

**पङ्क्तिकन्दः** । पुं । मालाकन्दे । रा.नि.व.७ ।

**पङ्क्तिचरः** । पुं कुररपक्षिणि । रा.नि.व.१९ । क्रौञ्चपक्षिणि । श.चि. ।

**पङ्क्तिवीजः (कः)** । पुं । वर्व्वूरवृक्षे । বাবলা গাছ । रा.नि.व.८ । आरग्वधवृक्षे । कर्णिकारवृक्षे । শোন্দাল, চীনের করবী গাছ । रा.नि.व.९ ।

**पङ्क्तिशूलः** । पुं, क्ली । परिणामशूले । निदान-लक्षणे । "स्वैर्निदानैः प्रकुपितो वातः सन्निहितो यदा । कफपित्ते समावृत्य शूलकारी भवेद्बली । भुक्ते जीर्य्यति यच्छूलं तदेव परिणामजम् । तस्य लक्षणमप्येतत् समासेनाभिधीयते । आध्मानाटोप-विण्मूत्रविबन्धारतिवेपनैः । स्निग्धोष्णोपशमप्रायं वातिकं तद्वदेद्भिषक् । तृष्णादाहारतिस्वेदकट्वम्ल-लवणोत्तमम् । शूलं शीतशमप्रायं पैत्तिकं तद्वदे-द्भिषक् । छर्दिहृल्लाससम्मोहस्वल्परुग्दीर्घसन्ततिः । कटुतिक्तोपशान्तौ च विज्ञेयञ्च कफात्मकम् ॥" इत्यादि ।

**पङ्गुः** । पुं । वातव्याधिविशेषे । "पङ्गुः सक्थ्नो-र्द्वयोर्वधात् ।" सु.नि.१अ. ।

**पङ्गुवँ(ल्य)हारिणी** । स्त्री । शिरटीक्षुपे । रा.नि.व.४ । [ व्याधिः । शुक्लार्श ।

**पङ्गुलः** । पुं । एरण्डवृक्षे । वा.सू १५अ.विदा-

**पङ्गुत्वम्।** क्ली। पङ्गुभावे। रा.नि.व.४।

**पचतः।** पुं। सूर्य्ये। अग्नौ।

**पचत्पुटः।** पुं। सूर्य्यमणि-पुष्पवृक्षे।

**पचनम्।** क्ली। पाके। पुं। अग्नौ। श.च.। स्त्री (नी)। वनवीजपूरे। रा.नि.व.११।

**पचम्पचा।** स्त्री। दारुहरिद्रायाम्। प.मु.। भा.म.१भ.तन्द्रिकज्व.चि.। "मरिचकचपचम्पचा-वचारुक्।"

**पचा।** स्त्री। पाके। अम.।

**पचिः।** पुं। अग्नौ।

**पचेलुकः।** पुं। [illegible]चके। त्रिका.।

**पच्यमानज्वरः।** पुं। ज्वरविशेषे। পরিণত জ্বর। लक्षणम्—"ज्वरवेगोऽधिकस्तृष्णा प्रलापः श्वसनं भ्रमः। मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम्॥" मा.नि.।

**पञ्चः।** पुं। तिक्तपटोले। वै.निघ.।

**पञ्चकद्वयम्।** क्ली। जीवनपञ्चमूले ह्रस्वपञ्चमूले च। वा.सू.१५अ.।

**पञ्चकन्दाः।** पुं। पञ्चसिद्धौषधिविशेषेषु। ते च तैलकन्द-क्रोड़कन्द-सुधाकन्द-रुदन्ती-सर्पाक्ष्यात्मकाः। रा.नि.व.२२। See सिद्धौषधिः।

**पञ्चकपित्थम्।** क्ली। कपित्थस्य मूलत्वक्पत्रफलपुष्पेषु। वा.उ.३८अ.।

**पञ्चकर्म्म।** क्ली। वमन-विरेक-नस्य-निरूहानुवासनेषु। वमनादि পাঁচপ্রকার ক্রিয়া। "प्रथमं वमनं पश्चात् विरेकश्चानुवासनं। एतानि पञ्चकर्म्माणि निरूहो नावनं तथा॥" भा.। तेषु न्यूनसप्ताब्दे अतीताशीत्यब्दे च नस्यं, ऊनद्वादशे धूमः, ऊनपञ्चमे कवलः, ऊनदशमे अतिक्रान्तसप्ततौ च शोधनं, न्यूनषोड़शे सप्ततिवार्षिके च रक्तमोक्षणं न देयम्। एतानि दोषनिर्हरणार्थं यथाकालं प्रयोज्यानि। प.प्र.४ख.। विशेषास्तत्तच्छब्दे मृग्याः।

**पञ्चकर्म्मेन्द्रियम्।** क्ली। हस्तपादपायूपस्थजिह्वा चेति इन्द्रियपञ्चे।

**पञ्चकषायः।** पुं। वचावासापटोलप्रियङ्गुनिम्बात्मकद्रव्यवर्गे। भा.म.४भ.योन्या.चि.। "चूर्णैः पञ्चकषायजैः।" भैष.कर्णरो.चि.। महास्नानीयपञ्चविधकषायद्रव्यसमूहे। "जम्बूशाल्मलीवाट्याली वकुलं वदरं तथा। कषायाः पञ्च विज्ञेया देव्याः प्रीतिकराः शुभाः॥"

**पञ्चकीरः।** पुं। जलकुक्कुभे। त्रिका.।

**पञ्चकृत् (त्यः)।** पुं। पर्कटीवृक्षे, पखौड़वृक्षे। रा.नि.व.८।

**पञ्चकृष्णः।** पुं। सौम्यकीटभेदे। सु.कल्प.८अ.। See कीटः।

**पञ्चकोलम्।** क्ली। पिप्पल्यादिपञ्चद्रव्यकृतकषाये। পিপুল, পিপুলমূল, চই, চিতামূল, শুঁট সমভাগ। "पिप्पलीपिप्पलीमूलचव्यचित्रकनागरम्। कोलमात्रोपयोगित्वात् पञ्चकोलकसंज्ञितम्॥" सि.यो.च.द.वा.कफज्व.चि.। गुणाः—रसे पाके कटुकं रूक्षं तीक्ष्णोष्णं पाचनं दीपनं वातकफघ्नं गुल्मप्लीहोदरानाहशूलघ्नं पित्तकोपनञ्च। भा.पू.१भ.।

**पञ्चकोलघृतम्।** क्ली। गुल्मरोगे घृतम्। "पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः। पलिकैः सयवक्षारैः घृतप्रस्थं विपाचयेत्। क्षीरप्रस्थञ्च तत्सर्पिर्हन्ति गुल्मङ्कफात्मकम्॥" গব্যঘৃত ৪শ.। কল্কার্থ—পঞ্চকোল যবক্ষার প্রত্যেক ১প.। দুগ্ধ ৪শ। च.चि.५अ.।

**पञ्चगणः।** पुं। विदारीकन्दः वृहती पृश्निपर्णी निदिग्धिका श्वदंष्ट्रा चेति गणविशेषे। ভুঁই-কুমড়া, বৃহতী, চাকুলে, কণ্টিকারী, গোক্ষুর। रा.नि.व.२२।

**पञ्चगव्यम्।** क्ली। समभागगोमूत्रगोमयदधिदुग्धघृतेषु। গোময়, গোমূত্র, দধি, দুগ্ধ, ঘৃত সমভাগ। "गोमूत्रङ्गोमयङ्क्षीरं गव्यमाज्यं दधीति च। युक्तमेतद्यथायोग पञ्चगव्यमुदाहृतम्॥" रा.नि.व.२२। अत्र दुग्धगोजलघृतानां प्र. १ प. गोमयं २तो. दधि २प.। गारुड़म्। "पलमात्रं दुग्धभाग गोमूत्रं तावदिष्यते। घृतञ्च पलमात्र स्यात् गोमयं तोलकत्रयं। दधि प्रसृतमात्रं स्यात् पञ्चगव्यमिदं स्मृतम्॥" अथवा—"गोमयाद्द्विगुणं मूत्रं पयः स्याच्चतुर्गुणं। घृतं तद्द्विगुणं प्रोक्तं पञ्चगव्ये तथा दधि॥" अपिच—"पयः काञ्चनवर्णायाः श्वेतवर्णाया गोमयं। गोमूत्रं ताम्रवर्णाया नीलवर्णाभवं घृतं। दधि स्यात् कृष्णवर्णाया दर्भोदकसमायुतम्॥"

**पञ्चगव्यघृतम्।** क्ली। अपस्मारे घृतम्। गव्यघृतं ४ श. गोमयरसः अम्लदधि दुग्धं गोमूत्र प्र.४श. यथाविधि त्। वृहद्यथा—गव्यघृतं ४



श. क्वाथार्थं—दशमूलं प्र.२प. त्रिफला प्र. २ प. हरिद्रा दारुहरिद्रा कुटजत्वक् सप्तपर्णत्वक् अपामार्गमूलं नीलीमूलं कटुकी आरग्वधफलमज्जा काकोदुम्बरिकामूलं कुष्ठं दुरालभा च एषां प्र.२प. वारि ६४ श. शे. १६ श.। कल्कार्थं—भार्गीमूलं पाठामूलं त्रिकटु त्रिवृता हिज्जलवीजं गजपिप्पली तुवरीमूलं (অরহরমূল) मूर्व्वामूलं दन्तीमूलं भूनिम्बं चित्रकमूलं श्यामालता अनन्तमूलं मञ्जिष्ठा गन्धतृणं (রামকর্পূর) मदनफलम्, एषां प्र. २ तो. गोमयरसः गोमूत्रम् अम्लदधि दुग्धम् एषां प्र.४श. यथाविधि पचेत्। च.द.। च.चि.३५अ.।

**पञ्चगुप्तः।** पुं। कच्छपे। श.र.।

**पञ्चगुप्ता (प्तिः, रसा)।** स्त्री। स्पृक्कायाम्। পিড়িং শাক। रा.नि.व.१२।

**पञ्चजटा।** स्त्री। पञ्चमूले। च.द.। "पञ्चजटाशृतदुग्धजनस्यम्।"

**पञ्चजनः।** पुं। पुरुषे। वै.निघ.।

**पञ्चतत्त्वम्।** क्ली। क्षित्यप्तेजोमरुद्व्योमसु पञ्चभूतेषु। मद्यमांसमत्स्यमुद्रामैथुनेषु। तन्त्रम्।

**पञ्चता (त्वम्)।** स्त्री, क्ली। मृत्यौ। अम.।

**पञ्चतिक्तः (क्तः)।** पुं। पञ्चविधतिक्तद्रव्यगणे, तत्कषाये वा। तद्विधा—कण्टकारी गुड़ूची शुण्ठी कुष्ठं किराततिक्तञ्च। च.द.पि.श्लेष्म.ज्व.चि.। अन्यः—निम्बमूलत्वक् पटोलपत्रं वासात्वक्कण्टकारी गुड़ूची चेति। भा.।

**पञ्चतिक्तघृतम्।** क्ली। कुष्ठाधिकारे घृतम्। गव्यघृतं ४ श.। क्वाथार्थं—निम्बमूलत्वक् पटोलपत्रं कण्टकारी गुड़ूची वासामूलम्, एषां प्र. १० प. वारि ६४ श.शे. १६ श.। कल्कार्थं—त्रिफला १ श. यथाविधि पचेत्। भैष.। अन्यत् विस्फोटाधिकारे—गव्यघृतं ४ श.। क्वाथार्थं—पटोलपत्रं सप्तपर्णमूलत्वक् निम्बमूलत्वक् वासामूलत्वक् गुड़ूची त्रिफला एषां प्र. ६ प. २ तो. वारि ६४ श. शे. १६ श.। कल्कार्थं त्रिफला १ श. यथावत्पाच्यम्। रस.र.।

**पञ्चतिक्तघृतगुग्गुलुः।** पुं। कुष्ठाधिकारे। गव्यघृतं ४ श.। क्वाथार्थं—निम्बत्वक् (নিমছাল) गुडूची (গুলঞ্চ) वासामूलं (বাসকমূল) पटोलपत्रं कण्टकारी, एषां प्र. १० प. जलं ६४ श. शे. ८श.। कल्कार्थं—आकनादीमूलं विड़ङ्गं देवदारु गजपिप्पली यवक्षारः सर्ज्जिक्षारः (সাজিমাটী) शुण्ठी हरिद्रा शतपुष्पा चव्यं (চই) कुष्ठं (কুড়) ज्योतिष्मती (লতাফট্কী) मरिचम् इन्द्रयवः यमानी चित्रकमूलं (চিতামূল) कटुकी भल्लातकं (ভেলা মুটী) वचा पिप्पलीमूलं मञ्जिष्ठा अतिविषा (আতইচ) त्रिफला वनयमानी, एषां प्र. २ तो. शुद्धगुग्गुलुः ५ प.। (गुग्गुलोः पोट्टलं बद्धा दोलायन्त्रेण कल्कैः सह घृतं पक्तव्यम्)। पाके सति कल्कं छानयित्वा पुनर्गुग्गुलुना सह पक्त्वा गृहीतव्यम्। सा.कौ.।

**पञ्चतृणम्।** क्ली। कुशकाशशरदर्भेक्षुरूपतृणपञ्चमूले। "कुशः काशः शरो दर्भ इक्षुश्चैव तृणोद्भवम्। पञ्चतृणमिदं ख्यातं तृणजम्पञ्चमूलकम्॥" प.प्र.३ख.। अन्यच्च—"शालीक्षुकुशकाशौ स्यात् शरेण तृणपञ्चकम्। एषां मूलं तृषादाहपित्तास्रघ्नं त्रसङ्गहृत्॥" भा.।

**पञ्चथः।** पुं। कोकिले। वै.निघ.।

**पञ्चदीर्घम्।** क्ली। पञ्चशरीरावयव-दैर्घ्यजनित शुभलक्षणे। तद् यथा—"बाहू नेत्रद्वयं कुक्षिर्द्वे तु नासे तथैव च। स्तनयोरन्तरञ्चैव पञ्चदीर्घं प्रचक्षते॥"

**पञ्चनखः।** पुं। व्याघ्रे। रा.नि.व.१९। कच्छपे। जटा.। गजे। त्रिका.। व्याघ्र-शरभ-शार्द्दूल-गोधाकच्छपशरटसिंहेषु। भक्ष्यपञ्चनखाः—"शशकः शल्लको गोधा खड्गी कूर्म्मश्च पञ्चमः।" स्मृतिः।

**पञ्चनखरः।** पुं। गोधायाम्। গোসাপ। वै.निघ.।

**पञ्चनिदानम्।** क्ली। रोगज्ञानस्य पञ्चविधोपायेषु। यथा—"निदानं पूर्व्वरूपाणि रूपाण्युपशयस्तथा। सम्प्राप्तिश्चेति विज्ञानं रोगाणां पञ्चधा स्मृतम्॥" मा.नि.।

**पञ्चनिम्बम्।** क्ली। समभागत्वक्पत्रफलपुष्पमूलरूपे निम्बपञ्चके। "निम्बस्य पत्रत्वक्पुष्पफलमूलैर्विमिश्रितैः। पञ्चनिम्बं समाख्यातं तत्तिक्तं निम्बपञ्चकम्॥" रा.नि.व.२२।

**पञ्चपचा।** स्त्री। दारुहरिद्रायाम्।

**पञ्चपटु।** क्ली। पञ्चविधलवणभेदे।

**पञ्चपत्रः।** पुं। पञ्चालकन्दे। रा.नि.व.७।

**पञ्चपत्रिका।** स्त्री। गोरक्ष्याम्। रा.नि.व.५।

**पञ्चपर्णि(र्णी)का।** स्त्री। गोरक्ष्यां, गोरक्षचिञ्चायाम्। रा.नि.व.५।

**पञ्चपल्लवम्।** क्ली। आम्रजम्बूकपित्थवीजपूरविल्वपल्लवेषु। আম, জাম, কয়েৎ, টাবা ও বিল্বপত্র। "आम्र-जम्बू-कपित्थानां वीजपूरकविल्वयोः। गन्धकर्म्मणि सर्व्वत्र पत्राणि पञ्चपल्लवम्॥" प.प्र.२अ.।

**पञ्चपित्तम्।** क्ली। मत्स्यमहिषवराहमयूरच्छागपित्तेषु। মাছ, মহিষ, শূকর, ময়ূর, ছাগ ইহাদের পিত্ত। "वराहच्छागमहिषमत्स्यमायूरपित्तकं। पञ्चपित्तमिति ख्यातं सर्व्वेष्वेव हि कर्म्मसु॥" बै.संग्रहः। तेषां शुद्धिः—मत्स्यादिपित्तं निम्बद्रावैर्विभावितं शुद्धिमायाति। सा.कौ.।

**पञ्चप्राणाः।** पुं। प्राणापानव्यानोदानसमानाख्येषु पञ्चविधदेहान्तर्वायुषु। सु.।

**पञ्चबला।** स्त्री। बलातिबलानागबलाराजबलामहाबलासु। वै.निघ.।

**पञ्चबुद्धीन्द्रियम्।** क्ली। पञ्चज्ञानेन्द्रियेषु। स्पर्शनं रसनं घ्राणं दर्शनं श्रोतञ्चेति। च.।

**पञ्चभद्रम्।** क्ली, पुं। गुड़ूचीपर्पटमुस्तकिरातविश्वभेषजेषु। গুলঞ্চ, ক্ষেৎপাপড়া, মূতা, চিরাতা ও শুঁট। "गुड़ूची पर्पटं मुस्तं किरातं विश्वभेषजम्। पञ्चभद्रम्।" सि.यो.च.द.ज्व.चि.।

**पञ्चभूतम्।** क्ली। क्षित्यप्तेजोमरुद्व्योमसु। च.।

**पञ्चभृङ्गम्।** क्ली। देवताड़शमीभङ्गातालीशनिर्गुण्डीषु। দেয়াতাড়া, শাঁই, সিদ্ধি, তালীশপত্র ও নিশিন্দা। वै.निघ.।

**पञ्चमम्।** क्ली। मैथुने। तन्त्रम्।

**पञ्चमकारम्।** क्ली। मद्यमांसमत्स्यमुद्रामैथुनरूपे मकारपञ्चके। तन्त्रम्।

**पञ्चमास्यः।** पुं। कोकिले। श.र.। [व.१९।

**पञ्चमुखः।** पुं। सिंहे। पिङ्गलसिंहे। रा.नि.

**पञ्चमुखी।** स्त्री। वासकक्षुपे। বাসক গাছ। रा.नि.व.४। जवापुष्पभेदे।

**पञ्चमुष्टिः (कः) (ष्टी)।** पुं, स्त्री। सान्निपातिकज्वरे यूषविशेषे। আহারদ্রব্য বিশেষ। स च यववदरीफलकुलत्थमुद्गकाष्ठामलकानामेकैकां मुष्टिं गृहीत्वाष्टगुणतोये पक्वः। च.द.सन्निपातज्व.चि. "यवकोलकुलत्थानां मुद्गमूलकशुण्ठयोः। एकैकमुष्टिमाहृत्य पचेदष्टगुणे जले। पञ्चमुष्टिक इत्येष वातपित्तकफापहः। शूले प्रशस्यते गुल्मे

कासे श्वासे क्षये ज्वरे॥" ८ तोअके। वै.निघ.। भ.क्षय.चि.सूर्य्यप्रभायां। स्पृक्कायाम्। वै.निघ.।

**पञ्चमूत्रम्।** क्ली। मूत्रपञ्चके, तच्च गर्द्दभीगोमेषीच्छागीमहिषीजमिश्रितमूत्रे। "गवामजानां मेषीणां महिषीणाञ्च मिश्रितम्। मूत्रेण गर्द्दभीनाञ्च तन्मतं मूत्रपञ्चकम्॥" रा.नि.व.२२। गुणास्तच्छब्दे मृग्याः।

**पञ्चमूलम् (ली)।** क्ली, स्त्री। पञ्चानां मूलानां समष्टौ। तानि च वृहत्स्वल्पतृण-शतावरी-जीवन-बला-गोक्षुर-गुड़ूच्यादिकानि नवविधानि प्रत्येकं पञ्चपञ्चमूलात्मकानि भवन्ति। १। "विल्वश्योणाकगाम्भारीपाटलागणिकारिका।" इति वृहत्पञ्चमूलम्। च.द। सु.सू.३८अ.। २। शालपर्णी पृश्निपर्णी वृहती कण्टकारिका गोक्षुरश्च। स्वल्पपञ्चमूलम्। गुणाः—अश्मरीहरम्। अत्यग्निदीपनम्। अर्क.चि.। See लघुपञ्चमूलं। ३। कुशकासदर्भशरेक्षुमूलात्मकं तृणपञ्चमूल पित्तकासक्षीरपाने ग्राह्यम्। सि.यो. कास-चि.श्रीकण्ठः। ४। शतावरीविदारीकन्द-जीवन्ती-विषाणी-जीवकात्मकं शतावर्य्यादिपञ्चमूलं। गुणाः—स्तन्यकरं गुरु वृष्यं वल्यं शीतलं कान्तिदमाग्नेयञ्च। ५। जीवकर्षभकमेदामहामेदाजीवन्तीषु। जीवकादिपञ्चमूलं। गुणाः—वृष्यं चक्षुष्यं धातुवर्द्धनं वल्यं दाहपित्तज्वरतृष्णाघ्नञ्च। ६। बलापुनर्नवैरण्डमुद्गपर्णीमाषपर्णीषु। बलादिपञ्चमूलं। गुणाः—भेदकं शोफघ्नं ज्वरघ्नञ्च। वै.निघ.। ७। गोक्षुरबदरीन्द्रवारुणीकासमर्द्दसर्षपेषु। गोक्षुरादिपञ्चमूलं। ८। गुड़ूचीमेषशृङ्गीशारिवाविदारीहरिद्रासु। वल्लीपञ्चमूलं। ९। करमर्द्दत्रिकण्टकसैरीयक बाँटी) शतावरीगृध्रनखीषु। इति कण्टकपञ्चमूलं। सु.सू.३८अ.। गुणाः—तत्तत्पर्य्याये मृग्याः।

**पञ्चमूल्यादिः।** पुं। ज्वरातिसारे कषायः। "पञ्चमूली-बला-विल्व-गुड़ूची मुस्त-नागरैः। पाठाभूनिम्बह्रीवेरकुटजत्वक्फलैः शृतम्॥" च.द.।

**पञ्चरत्नम्।** क्ली। स्वर्णमौक्तिकमाणिक्यहीरकराजपट्टेषु। अन्यच्च—"कनकं हीरकं नीलं पद्मरागञ्च मौक्तिकम्। पञ्चरत्नमिदं प्रोक्तमृषिभिः पूर्व्वदर्शिभिः॥" रत्नानाञ्चाप्यभावे तु स्वर्णं कर्षार्द्धमेव च। सुवर्णस्याभावे तु आज्यं ज्ञेयं विचक्षणैः॥" हेमा.।

**पञ्चरसलोहम्।** क्ली। वर्त्तलोहे। वै.निघ.।



**पञ्चरसा।** स्त्री। हरीतक्याम्। मद.व.१। आमलक्याम्। हारा.।

**पञ्चरक्षकः।** पुं। पञ्चोड़वृक्षे। रा.नि.व.८।

**पञ्चराजिफलः।** पुं। पटोललतायाम्। रा.नि.व.४।

**पञ्चलवणम्।** क्ली। काच-सैन्धव-सामुद्र-(কর-কচ)-विड़सौवर्चललवणेषु समभागेषु। "काचसैन्धवसामुद्रविड़सौवर्चलैः समैः। स्यात् पञ्चलवणम्।" रा.नि.व.२२। "सौवर्चलं सैन्धवञ्च विड़मौद्भिदमेव च। सामुद्रेण सहैतानि पञ्च स्युर्लवणानि च॥" प.प्र.२अ.। तद्गुणाः—"मधुरं सृष्टविण्मूत्रं स्निग्धं सूक्ष्मं बलापहम्। वीर्य्योष्णं दीपनं तीक्ष्णं कफपित्तविवर्द्धनम्॥" शार्ङ्ग.म.६अ.।

**पञ्चलक्षणः।** त्रि। वातपित्तकफसन्निपातागन्तूनां लक्षणयुक्ते। व्रणस्य गन्धवर्णस्राववेदनाकृतिरूपलक्षणयुक्ते। सु चि.१अ.।

**पञ्चलोह(क)म्।** क्ली। सौराष्ट्रकलोहे। हे. च.। सुवर्णरजतताम्रवङ्गनागरूपेषु पञ्चसु धातुषु। "सुवर्णं रजतं ताम्रं त्रयमेतत्त्रिलोहकम्। वङ्गनागसमायुक्तं तत्प्राहुः पञ्चलोहकम्।" इति प्रथमम्। समभागस्वर्णरजतताम्रत्रपुकृष्णायसेषु। "सुवर्णं रजतं ताम्रं त्रपु कृष्णायसं समम्। गृहाङ्गमिति वा द्रव्यं द्वितीयं पञ्चलोहकम्॥' इति द्वितीयम्। रा.नि.व.२२। वा.उ.२९अ.।

**पञ्चवक्त्रः।** पुं। पञ्चमुखरुद्राक्षे। स्मृतिः।

**पञ्चवक्त्ररसः।** पुं। रसोऽयं सन्निपातज्वरे हितः। "गन्धेश-टङ्क-मरिचं विषं धत्तूरजैर्द्रवैः। दिनं सम्मर्द्दितं शुष्कं पञ्चवक्त्रो रसो भवेत्। आर्द्रकस्य रसेनैष दातव्यो रक्तिकामितः॥" भा.।

**पञ्चवटी।** स्त्री। विल्वाश्वत्थवटाशोकोदुम्बरेषु। वै.निघ.।

**पञ्चवर्णकः।** पुं। धुस्तूरकवृक्षे। वै.निघ.।

**पञ्चवर्द्धनः।** पुं। पञ्चोड़वृक्षे। रा.नि.व.८।

**पञ्चवल्कलम्** / **पञ्चवेतसम्** } क्ली। वटाश्वत्थोदुम्बरप्लक्षवेतसवल्कलेषु। বট, অশ্বথ, যজ্ঞডুমুর, পাকুড় ও বেতস ছাল। "न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलैः। सर्व्वैरेकत्र मिलितैः पञ्चवेतसमुच्यते।" रा.नि.व.२२। शिरीषपिप्पलवटप्लक्षवेतसेषु। वा.उ.३६अ.। गुणाः—"त्वक्पञ्चकं हिमं ग्राहि व्रणशोथविसर्पजित्।" भा.। अपिच "न्यग्रोधोडुम्बराश्वत्थपारीषप्लक्षपादपाः। पञ्चैते क्षीरिणां वृक्षास्तेषां त्वक् पञ्चवल्कलम्। क्षीरवृक्षा हिमा वर्ण्या योनिरोगव्रणापहाः। रुक्षाः कषाया मेदोघ्ना विसर्पामयनाशिनः। शोफपित्तकफास्रघ्नाः स्तन्या भग्नास्थियोजकाः॥"

**पञ्चवीजम्।** क्ली। कर्कटीत्रपुषदाड़िमपद्मकपिकच्छुजेषु पञ्चवीजेषु। কাঁকুড়, শশা, দাড়িম, পদ্ম ও আলাকুশীর বীজ। राजिकाजमोदाजीरकतिलखस्खसेषु। রাইশরিষা, যমানী, জীরা, তিল ও পোস্ত।

**पञ्चबुद्धीन्द्रियम्।** क्ली। चक्षुःश्रोत्रघ्राणजिह्वास्पर्शेन्द्रियरूपे इन्द्रियपञ्चके।

**पञ्चशस्यम्।** क्ली। धान्यतिलमुद्गयवश्वेतसर्षपेषु।

**पञ्चशाखः।** पुं। हस्ते। रा.नि.व.१८।

**पञ्चशिखः।** पुं। सिंहे। त्रिका.।

**पञ्चशुक्लः।** पुं। सौम्यकीटजातौ। सु.कल्प.८अ.। See कीटः।

**पञ्चशूरणम्।** क्ली। शूरणपञ्चके अत्यम्लपर्णीकाण्डीरमालाकन्दशूरणारण्यशूरणात्मके। "अत्यम्लपर्णीकाण्डीरमालाकन्दद्विशूरणैः। प्रोक्तो भवति योगोऽयं पञ्चशूरणसंज्ञकः॥" रा.नि व.२२।

**पञ्चशैरीषम्।** क्ली। शिरीषवृक्षस्य फलपत्रत्वङ्मूलपुष्पेषु समभागेषु। "शैरीषं कुसुमं मूलं फलं पत्रं त्वगित्ययं। कीटारिः कथितो योगः पञ्चशैरीषकाभिधः॥" रा.नि.व.२२।

**पञ्चसर्पिणी।** स्त्री। ओषधिविशेषे। लक्षणं—"मण्डलैः कपिलैश्चित्रैः सर्पाभा पञ्चसर्पिणी। पञ्चारत्निप्रमाणा।" सु.चि.३०अ.।

**पञ्चसार(राख्य)पानकम्।** क्ली, पुं। पानकभेदे। পানাবিশেষ। स चाभिनवमृत्पात्रस्थः कदलीपनसमिश्रोऽम्लरसमिश्रश्च। तदुक्तं—"द्राक्षामधूकखर्ज्जूरकाश्मर्य्यैः सपरूषकैः। तुल्यांशैः कल्पितं पूतं शीतं कर्पूरवासितम्।" वा.सू.५अ.। काश्मीरमधुखर्ज्जूरमृद्वीकाफालसाफलं। तेषां जलं गृहीत्वा तु एकीकृत्य क्षिपेदमून्। चातुर्जातेन्दुमरिचशर्कराशार्द्रकादिकान्। वस्त्रेण गालयित्वा तत् पञ्चसाराख्यपानकम्। गुरु वृष्यं धातुकरं पित्ततृट्श्रमदाहनुत्।" वै.द्रव्यगुणः।

**पञ्चसाराम्बु।** क्ली। खर्ज्जूराद्यम्बुनि। "मधु

खर्ज्जूरमृद्वीकापरूषकसिताम्भसा ।" वा.चि,२अ. ।

**पञ्चसिद्धौषधी** । स्त्री । पञ्चकन्दात्मकसिद्धौषधिषु । "तैलकन्द-सुधाकन्द-क्रोड़कन्द-रुदन्तिकाः । सर्पनेत्रयुताः पञ्च सिद्धौषधिक संज्ञकः ॥" रा.नि.व.२२ । See सिद्धौषधी ।

**पञ्चसुगन्धिकम्** । क्ली । कर्पूरकङ्कोललवङ्गजातीफलपूगेषु । "कर्पूरकङ्कोललवङ्गपुष्पगुवाकजातीफलपञ्चकेन । समांशभागेन च योजितेन मनोहरं पञ्चसुगन्धिकं स्यात् ॥" रा.नि,व.२२ ।

**पञ्चक्षारम्** । क्ली । यवपलाशसर्ज्जतिलमुष्ककजक्षारेषु । "यवमुष्ककसर्जानां पलाशतिलयोस्तथा । क्षारैश्च पञ्चभिः प्रोक्तं पञ्चक्षाराभिधो गणः ॥" रा.नि.व.२२ । पञ्चलवणे । वै.निघ. ।

**पञ्चक्षीरवृक्षः** । पुं । वटाश्वत्थोदुम्बरपर्कटीगर्दभाण्डेषु । বট, অশ্বত্থ, যজ্ঞডুম্বুর, পাকুড়, গন্ধমুণ্ড । सि.यो.यक्ष्म.चि,सर्पिर्गुड़े । अन्यः—उदुम्बरवटाश्वत्थवेतसप्लक्षेषु वर्त्तते । "उदुम्बरो वटोऽश्वत्थो वेतसः प्लक्ष एव च ।" प.प्र,३अ. । See क्षीरवृक्षः ।

**पञ्चाङ्गम्** । क्ली । योगविशेषः । स चैकस्य वृक्षस्य समभागमिलितत्वक्पत्रफलमूलपुष्पात्मकः । "त्वक्पत्रकुसुमं मूलं फलमेकस्य शाखिनः । एकत्र मिलितं तच्चेत् पञ्चाङ्गमिति संज्ञितम् ॥" रा.नि.व,२२ । पुं । कच्छपे । श,मा. ।

**पञ्चाङ्गगुप्तः** । पुं । कच्छपे । त्रिका. ।

**पञ्चाङ्गिकपञ्चगणः** । पुं । स्वल्पमहत्तृणवल्लीकण्टकसंज्ञकेषु पञ्चमूलेषु । सि.यो.तृष्णा,चि. ।

**पञ्चाङ्गीवन्धः** । पुं । पञ्चाङ्गुलाकारव्रणबन्धविशेषे । "चिवुके चापि पञ्चाङ्गी हनुसन्धौ विसन्धिते । स्वेदयित्वा स्थिते सन्धौ कुर्य्यात्पञ्चाङ्गुलाकृतिम् ॥" सु.शा.ड. । सु.चि.३अ. ।

**पञ्चाङ्गुलः** । पुं । श्वेतैरण्डे । एरण्डक्षुपे । रा.नि.व.८ । क्ली । तेजपत्रे । वै.निघ. ।

**पञ्चाङ्गुली** स्त्री । तन्नाक्षुपे । रा.नि.व.४ । ऊर्द्ध्वजत्रुजव्रणस्य बन्धनविशेषे । सु.सू.१८अ. ।

**पञ्चाज्यम्** । क्ली । छागदध्यादिपञ्चके । वै.निघ. २भ.जीर्णज्व.चि. ।

**पञ्चात्मा** । पुं । शरीरान्तर्वायौ । यथा—"प्राणोऽपानः समानश्चोदानव्यानौ च वायवः ।" निदा. ।

**पञ्चाननः** । पुं । शिवे । सिंहे । मे. ।

**पञ्चाननरसः** । पुं । हृद्रोगाधिकारे रसः । पाठः—"सूतगन्धौ द्रवैर्धात्र्या मर्दयेन्नीलनीद्रवैः । यष्टिखर्ज्जूरसलिलैर्दिनं हृद्रोगजिद्रसः । धात्रीचूर्णं सिताज्ञानु पिबेद्रोगापनुत्तये ॥" रस.चि. ।

**पञ्चामृतम्** । क्ली । दुग्धादिपञ्चविधद्रव्यसमवाये । गुड़ूचीगोक्षुरतालमूलीमुण्डिकाशतावरीणां मिलितसमभागे । "गुड़ूची गोक्षुरश्चैव मुषली मुण्डिका तथा । शतावरीति पञ्चानां योगः पञ्चामृताभिधः ॥" গুলঞ্চ, গোক্ষুর, তালমূলী, মুণ্ডীরী, শতমূলী । रा.नि.व.२२ । इदमौषधं पञ्चामृतमुच्यते । द्वितीयं देवपूजनार्थम् । घृतमधुशर्करादधिदुग्धेषु । দুগ্ধ, দধি, ঘৃত, চিনি, মধু ।

**पञ्चामृतपर्पटी** । स्त्री । ग्रहण्यधिकारे । गन्धकं ८ तो. रसः २ तो. लौहं १ तो. अभ्रं ४ मा. ताम्रं ४ मा. पर्पटीवत् पाकः । रस.र. ।

**पञ्चामृतपिण्डः** । पुं । अश्वस्य बलपुष्टिकरपिण्डविशेषे । "कटुका च जयन्ती च भ्रमरी सुरसा घनः । पञ्चामृतमयः पिण्डः...... ॥" नकुल. १२अ. ।

**पञ्चामृतयूषः** । पुं । कुलत्थादिपञ्चद्रव्यकृतयूषविशेषे । কুলথ, মুগ, অরহর, মাষকলায়, বর্বটী (বা রাজশিম্বীর বীজ) । यथा—"कुलित्थमुद्गाढ़कमाषकाणां निष्पावयुक्तश्च कृतोहि यूषः । सन्दीपनः पाचनधातुवृद्धिकरो लघुः स्यादरुचिप्रणाशः । ज्वरं बलासं श्वयमङ्गमर्दं चौयेत पञ्चामृतयूषकोऽयम् ॥" वै.निघ. ।

**पञ्चाम्रम्** । क्ली । तदाख्य-द्रव्यपञ्चके । यथा—"अश्वत्थमेकं पिचुमर्द्दमेकं न्यग्रोधमेकं दश पुष्पजातीः । द्वे द्वे तथा दाड़िममातुलुङ्गे पञ्चाम्रवापी नरकं न याति ॥"

**पञ्चाम्ल(फल)म्** । क्ली । १ । समभागमिश्रितकोलदाड़िमतिन्तिड़ीचुल्लकाम्लवेतसेषु । কুল, দাড়িম, তেঁতুল, চুল্লক, অম্লবেতস । २ । समभागमिलितजम्बीरनारङ्गाम्लवेतसतिन्तिड़ीवीजपूरकेषु । গোঁড়া, নারঙ্গা, অম্লবেতস, তেঁতুল, টাবালেবু । ३। "कोलदाड़िम्बवृक्षाम्लचुक्रकाः साम्लवेतसाः । फलम्पञ्चाम्लमुद्दिष्टमल्पपञ्चफलं स्मृतम् ॥" ४ । "जम्बीरनारङ्गसहाम्लवेतसैः सतिन्तिड़ीकैश्च सवीजपूरकैः । समांशभागेन तु सेवितैरिदं द्वितीयमुक्तञ्च फलाम्लपञ्चकम् ॥" रा.नि.व,२२ । भा. ।



५ । "कोलदाड़िमवृक्षाम्लचुक्रीकाचुल्लिकारसः । पञ्चाम्लको मुखे लेपः सदा तृष्णां नियच्छति ॥" सा.कौ. ।

**पञ्चारविन्दम्** । क्ली । अरविन्दस्य मृणालविसकेसरपत्रवीजेषु । वा.उ.३९अ. ।

**पञ्चालकः** । पुं । अग्निप्रकृतिकीटविशेषे । सु.कल्प.८अ. । See कीटः ।

**पञ्चावस्थः** । त्रि । मृते ।

**पञ्चाविकम्** । क्ली । मेषीदधिदुग्धघृतमूत्रमलेषु । वै.निघ,२भ.जीर्णज्व.चि. ।

**पञ्चास्यः** । पुं । सिंहे । अम. ।

**पञ्चेन्द्रियम्** । क्ली । इन्द्रियपञ्चके । চক্ষুঃ, কর্ণ, নাসা, জিহ্বা, ত্বক্ । वाक्पाणिपादपायूपस्थेषु ।

**पञ्चोपविषम्** । क्ली । स्नुह्यर्ककरवीरलाङ्गलिविषमुष्टिकेषु । মনসা, আকন্দ, করবী, বিষলাঙ্গুলি, বিষমুষ্টি । 'स्नुह्यर्ककरवीराणि लाङ्गली विषमुष्टिकं । एतान्युपविषाण्याहुः ।' रा.नि,व.२२ ।

**पञ्चोषणम्** । क्ली । पञ्चकोले । पिप्पलीपिप्पलीमूलचव्यचित्रकशुण्ठीषु । वै.निघ. ज्व. चि. अर्कादिः ।

**पञ्चोष्माणः** । पुं । शरीरान्तःपञ्चविधपाचकाग्निषु । यथा—"भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः । पञ्चाहारगुणान् स्वान् स्वान् पार्थिवादीन् पचन्त्यमी । पार्थिवाः पार्थिवानेवं शेषाः शेषांश्च देहगान् ॥" सा.कौ. ।

**पञ्जरः (लः)** । पुं । पटोले । कोलकन्दे । रा.नि.व.७ । क्ली । शरीरे । शरीरास्थिसमूहे । रा.नि.व.७ । क्ली । शरीरे । शरीरास्थिसमूहे । त्रिका. ।

**पञ्जरास्थि** । क्ली । पञ्जरस्य चतुर्विंशत्यस्थिषु । च.शा.७अ. ।

**पटम्** । क्ली । भूवर्णे । गन्धतृण । र.मा. । पुं । कार्पासे । वै.निघ. । प्रियालवृक्षे । मे. । रस.र. वाज.चि. ।

**पटच्चरम्** । क्ली । जीर्णवस्त्रे । वै.निघ. ।

**पटदः** । पुं, स्त्री (दा) । कार्पासक्षुपे । र.मा. ।

**पटरकः** । पुं । गुन्द्रतृणे । रा.नि.व.८ ।

**पटरञ्जनम्** । क्ली । पत्तङ्गे । वकमकाष्ठे ।

**पटलः** । पुं । कासमर्द्दवृक्षे । कार्पासवृक्षे । वै.निघ. । पटोलवृक्षे । त्वचि । त्वक् । भा. । क्ली । दृष्ट्यावरकच्छदिरूपे नेत्ररोगे, तिमिरादौ । मा.नि. । तच्चतुर्व्विधम् । तत्र प्रथमं वाह्यं पटलं रसरक्ताश्रयम्, द्वितीयं मांसाश्रयं, तृतीयं मेदःसंश्रयं, चतुर्थञ्च कालकास्थिसंश्रयम् । "अधस्तादुपरिष्टाद्वा पटलं यस्य जायते । रुणद्धि नयने सद्यः ...... ॥" ज.द.३०अ. । See तिमिरः ।

**पटवासः** । पुं । पिष्टातके । আবীর ।

**पटाकः** । पुं । पक्षिभेदे ।

**पटालुका** । स्त्री । जलौकायाम् । त्रिका. ।

**पटिः(का)** । स्त्री । कुम्भिकावृक्षे । मे. । वस्त्रे ।

**पटीरम्** । क्ली । मूलके । भा.म,३भ,अश्म,चि. । चन्दने । प.मु. । पुं । खदिरवृक्षे । उदरे । उणा. । वंशलोचने । सन्निवायौ । वै,निघ. ।

**पटुः (कः)** । पुं । पटोललतायाम् । प.मु. । कारवेल्लयां । উচ্ছে গাছ । रा.नि.व.३ । शिम्बौ । रा.नि.व.१८ । चीनकर्पूरे । चोरकनामगन्धद्रव्ये । रा.नि.व.१२ । लवणे । मे । क्ली । पटोलपत्रे । विश्व. । पांशुलवणे । प.मु. । जीरके । वचायां । বচ । छिक्किन्याम् । হেঁচেতা । वै.निघ. । क्ली । (कं) पटोलविशेषे । त्रि । रोगमुक्ते । रा.नि.व,२० ।

**पटुतूल (तृण) कम्** । क्ली । लवणतृणे । रा.नि.व.८ ।

**पटुत्रयम्** । क्ली । लवणत्रये, विट्सैन्धवसौवर्च्चललवणेषु । वै.निघ.२भ.संग्रहणीचि. ।

**पटुपञ्चकम्** । क्ली । लवणपञ्चके । পঞ্চলবণ । See पञ्चलवणम् ।

**पटुपत्रिका** । स्त्री । चौरिकायां । क्षुद्रक्षुपक्षुपे । रा.नि.व.४. ।

**पटुपर्णिका** । स्त्री । क्षीरिणीक्षुपे । থিরুই । रा.नि.व.४ ।

**पटुपर्णी** । स्त्री । स्वर्णक्षीर्य्याम् । সোণাথিরুই, শেয়ালকাঁটা । अम. । [ व.६ ।

**पटुभेदनिका** । स्त्री । कृष्णजीरके । रा.नि.

**पटुलिका** । स्त्री । नागवल्लीभेदे । पीटकुलिकेति ख्याते । रा.नि.व.११ । See नागवल्ली ।

**पटूत्तमम्** । क्ली । सैन्धवलवणे । रा.नि.व.६ ।

**पारिणाम:**। त्रि । वय:परिणतिजन्ये । वा, उ,२९अ· । [ हे.च,। त्रिका ।

**पारि(री)न्द्र:**। पुं । सिंहे । अजगरसर्पे ।

**पारिपेलम्**। क्ली । कैवर्त्तमुस्तके ।

**पारिभद्र:**। पुं । निम्बवृक्षे । रा·नि·व·९ । वै निघ,२भ.वा·व्या,चि. कण्टकनादेयादिकषाये । (Erithrina Indica.) The Indian coral tree. पारिजातवृक्षे । পাল্‌তে মান্দার গাছ। हिं फरहद । मं दा. पाङ्गरा, पञ्जीर । कं हरिवाल । तें मोदुगु, बारिदेचेट्टु । ता· मुराक्क । तत्पर्य्याया:,—रक्तपुष्पक: क्रिमिशत्रु: रक्तकुसुम: क्रिमिघ्न: बहुपुष्प: रक्तकेशर:। गुणा:—कटूष्ण: कफवातघ्न: अरोचकघ्न: पथ्य: दीपनश्च । रा,नि. व,८ । पित्तरोगघ्न: कर्णरोगघ्नश्च । भा· । प्रलेपोऽस्य सन्धिवातघ्न: नेत्ररोगे च हित: । कज्जलं चक्षुष्यं । पत्रं वहि:प्रयोगात् सन्धिवेदनाघ्नञ्च । देवदारुणि । मे. । सु.सू,११अ· । सरलदेवदारौ । श·च. ।

**पारिभद्रक:**। पुं । पर्व्वतनिम्बे । सि.यो.क्रमिचि. । निम्बवृक्षे । रा·नि,व·९ । वै.निघ.वा· व्या·चि·नारायणतैले । पारिभद्रवृक्षे । শ্বেত আকন্দ গাছ। राजार्कवृक्षे । देवदारौ । अम. । क्ली । कुष्ठौषधौ । কুড়। रा नि,व.१२ ।

**पारिभद्रकजटा**। स्त्री । पालिधामूले । পালিতামান্দারের শিকড়। च.द,गुल्म·चि. । "व्याघ्रीकिंशुकपारिभद्रकजटा ॥"

**पारिभद्ररस:**। पुं । दद्रुकुष्ठे हित: । "मूर्च्छितं सूतकं धात्रीफलं निम्बस्य चाहरेत् । तुल्यांशं खदिरक्वाथै: दिनं मर्द्यञ्च भक्षयेत् ॥" मात्रा । निष्कमिता । रस.चि. । [ प·मु· ।

**पारिभ(भा)व्यम्**। क्ली । कुष्ठे । কুড়।

**पारिश: (स:)**। पुं । अश्वत्थविशेषे । পলাশপিপুল। हिं गजदण्ड । भा· । वै.निघ. । See पारीश: । [ वै.निघ. ।

**पारिहार्य्यम्**। क्ली । कुष्ठौषधौ । কুড়।

**पारिक्षित:**। पुं । ऋषिविशेषे । च. ।

**पारी**। स्त्री । जातीपत्राम् । जयित्रौ । वै.निघ. । दोहन्याम् । पानपात्रे । त्रिका. । परागे । विश्व· ।

**पारीवण:**। पुं । कच्छपे ।

**पारीश: (ष:)**। पुं । (Thespesia populneoides, or populnea.) The tulip tree. प्लक्षवृक्षे । পাকুড় গাছ। गर्द्दभाण्डवृक्षे । গান্ধীভাঁট্। क्षुद्रप्लक्षभेदे । अश्वत्थविशेषे । গয়া অশ্বত্থ। পরেশপিপুল, পলাশপিপুল। गजदन्तसहोरा इति च लोके । हिं परशपिपुल, पर्सिपु । तें गङ्गरय । वम्, भेन्दि । ता, पोरिश । गुणा:—"पारीषो दुर्जर: स्निग्ध: क्रमिशुक्रकफप्रद: । फलेऽम्लो मधुरो मूले कषायस्वादुमज्जक: ॥" भा· ।

**पारु:**। पुं । अग्नौ । सूर्य्ये ।

**पारुली**। पुं । पाटलावृक्षे ।

**पारुष:**। पुं । नखे । वै.निघ. ।

**पारु(रू)षकतैलम्**। क्ली । वातरक्ते तैलम् । तिलतैलं परुषकफलरस: द्राक्षारस: गाम्भारीरस: इक्षुरस: भूमिकुष्माण्डरस:, एषां प्र, ४ श· दुग्धं १६ श· । पाच्यम् ।

**पारुष्यम्**। क्ली । अगुरुणि । श,च. ।

**पारेवत:**। पुं, क्ली । फलवृक्षभेदे । পেয়ারা। उत्· प्याड़ा । वृक्षविशेषे, कामरूपे रैवात इति ख्याते, यस्य फल महाकालफलवद्भवति । तच्च द्विविधं सामान्य महापारेवतं स्वर्णपारेवतं चेति । सामान्यगुणा:—मधुरं क्रमिहरं वातहरं वृष्यं तृष्णाज्वरविदाहहरं हृद्यं मूर्च्छाभ्रमश्रमशोषहरं स्निग्धं रुच्यं बहुवीर्य्यकरञ्च । महापारेवत शैत्यं बल्यं पुष्टिवर्द्धनं वृष्यं मूर्च्छाज्वरहरं पूर्व्वोक्तात् गुणाधिकञ्च । रा,नि,व·११ । स्वादम्ल शीतलमुष्णञ्च । वा.सू· । द्वीपान्तरखर्ज्जूरे । वै·निघ. ।

**पार्घटम्**। क्ली । भस्मनि । ছাই। हारा. ।

**पार्थ:**। पुं । अर्ज्जुनवृक्षे । प·मु. । भा,हृद्रो,चि. ।

**पार्थकी**। स्त्री । चौरशक्रायाम् । পাঁড়কুমড়া। श,चि. ।

**पार्थवल्क:**। पुं । अर्ज्जुनत्वचि । অর্জ্জুনছাল। अर्ज्जुनत्वते प्रयोज्य: ।

**पार्था**। स्त्री । सुवर्चलायाम् । হুড়হুড়িয়া। सू,१५अ·वीरतर्वादि: । "भल्लूकमीरटकुरण्टकरम्भपार्था: ।" ब्राह्मीक्षुपे । वै.निघ. ।

**पार्थिवम्**। क्ली । तगरपुष्पे । তগরপাদুকা। कोङ्कणे पिण्डीतगर । रा·नि,व.१०।२३ । पुं । शरावे । शरा । घटादौ । त्रिका. । अर्ज्जुनवृक्षे ।



त्रि । मृद्विनिर्म्मिते । पृथ्वीगुणभूयिष्ठे । सु.सू·४१अ. ।

**पार्थिवचूर्णम्**। क्ली । धूलौ । ধূলা।

**पार्थिवजम्**। क्ली । अर्ज्जुनत्वचि । অর্জ্জুনছাল। च.द·हृद्रो·चि. ।

**पार्थिवा (वी)**। स्त्री । सौराष्ट्रमृत्तिकायाम् । পঙ্কপর্পটী। मन:शिलायाम् । वै.निघ. । वाजिदेहगतच्छायाविशेषे । "सुस्निग्धा पार्थिवी छाया नानाज्योति:समन्विता ।" ज.द,३अ. ।

**पार्व्वण:**। पुं । हरिणभेदे । श·च· ।

**पार्व्वत:**। पुं । निम्बवृक्षे । प.मु. । महानिम्बवृक्षे । ঘোড়ানিম্। र.मा· । क्ली । हिङ्गुले । शिलाजतुके । शीषके । वै.निघ. ।

**पार्व्वतपीलु:**। पुं । अक्षोटवृक्षे ।

**पार्व्वती**। स्त्री । क्षुद्रपाषाणभेदायाम् । ছোট পাথরকুচা। रा.नि,व.५ । सौराष्ट्रमृत्तिकायाम् । পঙ্কপর্পটী, বেঙা মাটী। हे·च· । र,मा, । भैष· भग.चि·व्रणगजाङ्कुशे । पिप्पल्याम् । धातकीवृक्षे । सिंहपिप्पल्याम् । रा.नि.व,६ । गजपिप्पल्याम् । रा·नि·व·२३ । अतस्याम् । भा· । शल्लकीवृक्षे । मे. ।

**पार्व्वतीय:**। पुं । अक्षोटवृक्षे । আখ্‌রোট গাছ। वै.निघ. । मशकजातिविशेषे । सु.कल्प·८ अ· । शालिधान्यभेदे । अर्क.चि. । क्ली । नीलाञ्जने । वै·निघ. ।

**पार्व्वतीरज: ( स् )**। क्ली । गन्धके ।

**पार्व्वतीसम्भूत:**। पुं । गन्धके । र,सा·सं. पार्व्वतीरसे ।

**पार्व्वतेय:**। पुं । गजपिप्पल्याम् । प.मु· । चित्रकक्षुपे । रा·नि.व,६ । सूर्य्यावर्त्तवृक्षे । হুড়হুড়িয়া। र.मा. । क्ली । सौवीराञ्जने । सुर्म्मा इति लोके । र·मा,श·च· । स्त्री । धातकीवृक्षे । जिङ्गिन्याम् । वै.निघ. ।

**पार्श्व:**। पुं, क्ली । कक्षाया अधोभागे । পাশ। रा,नि,व,१८ । क्ली । पार्श्वास्थिसमूहे । পাঁজ্‌রার হাড়। मे. ।

**पार्श्वकम्**। क्ली । पार्श्वास्थनि । পাঁজ্‌রার হাড়। रा नि.व.८ ।

**पार्श्वपिप्पलम्**। क्ली, पुं । हरीतकीभेदे, पारीषवृक्षे । गजदण्ड इति पश्चिमदेशे । भा·म, ४भ,योनिरो. चि,क्र,का,वन्ध्याप्रतीकारे ।

**पार्श्वशूल:**। पुं, क्ली । शूलरोगभेदे, पार्श्वदेशस्थशूलरोगे । পার্শ্ববেদনা বা পার্শ্বশূল। तस्य निदानलक्षणे—"कफं निगृह्य पवन: सूचीभिरिव निस्तुदन् । पार्श्वस्थ: पार्श्वयो: शूलं कुर्य्यादाध्मातसंयुतम् । तेन श्वसिति वक्त्रेण नरोऽन्नञ्च न काङ्क्षति । निद्राञ्च प्राप्नुयादेव पार्श्वशूल: प्रकीर्त्तित: ॥" भा,म,३भ, ।

**पार्श्वसंहति:**। स्त्री । पार्श्वभागे । भा· ।

**पार्श्वसन्धि:**। स्त्री । जघनात्तिर्य्यगूर्द्ध्वमध:पार्श्वान्तरप्रतिबद्धपृष्ठमर्म्मणि । सु,शा,६अ. ।

**पार्श्वारुण:**। पुं । बालरोगभेदे । वै.निघ. ।

**पार्श्वास्थि (का स्थि)**। क्ली । चतुर्विंशतिपञ्जरास्थनि । रा.नि.व,१८ । च,शा.७अ, ।

**पार्श्वोदरप्रिय:**। पुं । कर्कटे । हे·च· ।

**पार्षत:**। त्रि । मृगसम्बन्धिनि । श्वेतविन्दुहरिणसम्बन्धिनि । सु.कल्प.१अ. ।

**पार्ष्णि:**। पुं, स्त्री । गुल्फस्याधोभागे । গোড়মূড়া, গোড়ালি। रा,नि·व.१८ । स गर्भस्थस्य मासद्वयेन भवति । सुखबोध: । पृष्ठभागे । हला, ।

**पार्ष्ण्यस्थि**। क्ली । गुल्फाधोभागास्थनि । ते च द्वे । च.शा,७अ· ।

**पाल:**। पुं । चित्रकवृक्षे । वै,निघ· । निष्ठीवनपात्रे । हे·च, ।

**पालक:**। पुं, क्ली । चित्रकवृक्षे । रा,नि,व.६ । गजज्वरे । गजवै. । कुष्ठे । কুড়। र,सा·स,प्रदरारिरसे । हिङ्गुले । वै.निघ· ।

**पालकविषम्**। क्ली । तन्नामकस्थावरकन्दविषे । सु.कल्प.२अ, । See कन्दविषं ।

**पालकाख्य:**। पुं । गजवैद्यकप्रणेतरि ऋषौ । त्रिका. ।

**पालकाप्य:**। पुं । चरकोक्ते मुनिविशेषे । च. । धन्वन्तरौ । त्रिका. ।

**पालक्या (ङ्क्या)**। पुं । वास्तूकाकारपालङ्कशाके । পালং শাক। प.मु. । तत्पर्य्याया:,—पलक्या मधुरा क्षुरपत्रिका सुपत्रा स्निग्धपत्रा ग्रामीणा ग्राम्यवल्लभा क्षुरिका । गुणा:—वातला शीता श्लेष्मला भेदिनी गुरु: विष्टम्भिनी मदघ्नी श्वासपित्तरक्तकफघ्नी च । "पालङ्क्या वास्तुकाकारा क्षुरिका चीरितच्छदा । पालङ्क्या वातला शीता

श्च सत्ता मेदिनी गुरुः ॥ :विष्टम्भिनी मदश्वासपित्त-रक्त-कफापहा ॥" भा.पू.१भ.शा.व.। कफपित्त-वातविबन्धघ्नी रुच्या च। राज.। कुन्दुरुखोटी। अम.।

**पालङ्कः (ङ्क्यः)**। पुं, क्ली। (Beta bengolensis.) A sort of Beet root. स्वनामख्यातपत्रशाके। पालङ्क्यशाक इति दाक्षिणात्यभाषा। পালং শাক। हिं पलकी। पालं शाक इति चित्रकूटे प्रसिद्धम्। गुणाः—ईषत् कटुकं मधुरं पथ्यं शीतलं रक्तपित्तघ्नं ग्राहि सन्तर्पणम्। रा.नि.व.७। शल्लकीवृक्षे। वाजिपक्षिणि। বাজ পাখী। मे।

**पालङ्की**। स्त्री। कुन्दुरौ। কুন্দুরুখোটী। श.टी.भ.। उपोदिकायाम्। পুঁই। पालङ्कि। পালং শাক।

**पालघ्नः (घ्नयः)**। पुं। छत्राके। ছাতা, কোঁড়ক। अम.। जलतृणे, छत्रातिच्छत्रे। श.र.।

**पालनम्**। क्ली। नवप्रसूतायाः गोः दुग्धे। গাঁজলা দুধ। श.च.।

**पालनिका (ल लि नी)**। स्त्री। त्रायमाणायाम्। বলা লতা। रा.नि.व.५। वा.चि.१अ.।

**पालाशम्**। क्ली। तेजपत्रे। रा.नि.व.६।

**पालाशी**। स्त्री। क्षीरीवृक्षे। र.मा.।

**पालासः**। पुं। पलाशवृक्षे। वै.निघ.।

**पालिंहिरः**। पुं। मण्डलिसर्पभेदे। বোড়াসাপ বিশেষ। सु.कल्प.४अ.।

**पालिः (ली)**। स्त्री। कर्णलताग्रभागे। मे.। जलौकायाम्। कल्पितभोजने। हे.च.। कर्णरोगविशेषे। কাণের পাতার রোগ। पाली पञ्चविधा। "परिपोटस्तथोत्पात उन्मन्थो दुःखवर्द्धनः। पञ्चमः परिलेही च कर्णपाल्या गदाः स्मृताः ॥" तेषां लक्षणानि तत्तत्पर्य्याये मृग्याणि। चिकित्सा—अभ्यङ्ग-परिषेक-प्रदेह-रक्तमोक्षणानि। (ली) श्मश्रुयुक्तस्त्रियाम्। हारा.। पाकपात्रे। चित्रकवृक्षे। वै.निघ.। परिमाणभेदे। পালি। त्रिका.। प्रस्थपरिमाणे। हे.च.। आलवाले। च.द.। "यवमाषमयीं पालीं।"

**पालिका**। स्त्री। पाल्याम्। श.च.।

**पालिधा**। स्त्री। पारिभद्रवृक्षे। (जयमङ्गलरसे)।

**पालिन्दः**। पुं। कुन्दुरुखोटी, सल्लकीनिर्य्यासे। वै.निघ.।

**पालिन्दा (न्दिः,न्दी) (न्धा,न्धिः,न्धी)**। स्त्री। श्यामालतायाम्। प.मु.। च.सू.४अ.। कृष्णत्रिवृति। अम.। सु.कल्प.१अ.। कुन्दुरुखोटी। रा.नि.व.१२। अम.। भार्ग्याम्। বামনহাটী। श्वेतापराजितायाम्। त्रायमाणालतायाम्। বলা লতা। वै.निघ.। मालविकात्रिवृतायाम्। वा.उ.३८अ.। कारवेल्लयां। করলা। सु.चि.१७अ.।

**पालि(ली)शोषः**। पुं। कर्णरोगविशेषे। लक्षणं—"शिरास्थः कुरुते वायुः पालीशोषं तदाह्वयम्।" वा.उ.१७अ.।

**पालीकुटः**। पुं। चित्रकवृक्षे। वै.निघ.।

**पालेवतः**। पुं। द्वीपान्तरखर्ज्जूरीवृक्षे। वै.निघ.।

**पावकः**। पुं। रक्तचित्रके। चित्रके। रा.नि.व.६। मे.। वै.निघ.२भ,ज्व.चि.। शुक्लाञ्जने। सूर्य्यकान्तमणौ। वै.निघ.। कुसुम्भवृक्षे। रा.नि.व.४। अग्निमन्थवृक्षे। भल्लातकवृक्षे। विड़ङ्गे। सदाचारे। मे.। वैद्युताग्नौ।

**पावकमणिः**। पुं। सूर्य्यकान्तमणौ। वै.निघ.।

**पावकमन्थनः**। पुं। अग्निमन्थक्षुपे। वै.निघ.।

**पावकारणिः**। पुं। अग्निमन्थक्षुपे। प.मु.।

**पावकाह्वः**। पुं। अग्निमन्थे। वै.निघ.।

**पावकोष्मा** (न्)। पुं। सूर्य्यकान्तमणौ। वै.निघ.।

**पावनम्**। क्ली। कुष्ठौषधे। কুড়। रा.नि.व.१२। रुद्राक्षे। रा.नि.व.११। जले। मे.। चन्दने। वै.निघ.। गोमये। श.च.। पुं। चित्रके। सिह्लके। শিলারস। विश्व.। पीतभृङ्गराजे। रा.नि.व.४। शङ्खे। वै.निघ.।

**पावनध्वनिः**। पुं। शङ्खे। रा.नि.व.९।

**पावनी**। स्त्री। तुलसीवृक्षे। रा.नि.व.१०। हरीतक्याम्। विश्व.। गोरोचनायाम्। नागवल्लीलतायाम्। व.निघ.।

**पावशालिः**। पुं। सूक्ष्मशाली। সরু ধান।

**पावासः**। पुं। क्षुद्रपणसे। वै.निघ.।

**पाशः**। पुं। कचे। जाले। त्रिका.। अस्त्रभेदे।

**पाशवपालनम्**। क्ली। घासे। श.च.।



**पाशी** (इन्)। पुं। वरुणवृक्षे। अम.। रस.र.उद चि.वह्निभल्लातकरसे।

**पाशुपतः (कः)**। पुं। श्वेतरक्तवकपुष्पवृक्षे। रा.नि.व.५। मे.। अगस्तिपुष्पवृक्षे। प.मु.। रा.नि.व.१०। महावकुलवृक्षे। वै.निघ.।

**पाश्चात्याकरसम्भवम्**। क्ली। शाम्भरलवणे। र.मा.। तत्पर्य्यायाः,—रोमकं रामलवणम्।

**पाषाणः**। पुं। गन्धके। प.मु.। करज्योड़ि-पाषाणभेदे। वै.निघ.२भ.अ.सा.चि. धातक्यादिमोदके। च.द.अ.स्म.चि.। प्रस्तरे। अम.।

**पाषाणकदली**। स्त्री। कदलीभेदे। কাষ্ঠ-কদলী। वै.निघ.।

**पाषाणकुट्ट(न्ट)कः**। पुं। पाषाणभेदके। পাথরকুচা। वै.निघ.।

**पाषाणगर्दभः**। पुं। हनुसन्धिजक्षुद्ररोगे। গালটা। निदानलक्षणे—"वातश्लेष्मसमुद्भूतः श्वयथुर्हनुसन्धिजः। स्थिरो मन्दरुजः स्निग्धो ज्ञेयः पाषाणगर्द्दभः॥" मा.नि.। भा.म.४भ.। "हनुसन्धौ समुद्भूतं शोफमल्परुजं स्थिरं। पाषाणगर्दभं विद्यात् वलासपवनात्मकम् ॥" सु.नि.१३अ.।

**पाषाणगैरिकम्**। क्ली। गिरिमृत्तिकायाम्। গিরিমাটী। वै.निघ.।

**पाषाणजतु**। क्ली। शिलाजतुनि। भैष. शोथचि.रसाभ्रमण्डुरे।

**पाषाणभित्**। पुं। पाषाणभेदे। পাথরচূর। र.मा.। कुलत्थे। (एरण्डसप्तके)। करज्योड़ि-पाषाणभेदे। वै.निघ.।

**पाषाणभेदः (कः) (नः) (दी (इन्))**। पुं। (Coleus amboinicus. Syn. Coleus aromaticus.) स्वनामख्यातक्षुपे। पाथरचुनीति लोके। च.सू.४अ.। পাথরকুচা, হিমসাগর। हिं पाथरचुर, लोहाचूर। मं कं पाषाणभेदि। तें पिड़िचेट्टु। तत्पर्य्यायाः,—अश्मभेदः अश्मभित् अश्मघ्नः शैलाभेदः अश्मभेदकः श्वेता उपलभेदी उपलभित् शिलागर्भजः नगभित्। सा त्रिधा वटपत्रीशिलावल्कक्षुद्रभेदेन। सा. गुणाः—मधुरः तिक्तः मेहघ्नः तृड्दाहमूत्रकृच्छ्रघ्नः शीतलः अश्मरीघ्नश्च। रा.नि.व.५। "अश्मभेदो हिमस्तिक्तः कषायो वस्तिशोधनः। भेदनो हन्ति दोषार्शो-गुल्मकृच्छ्राश्महृद्रुजः। योनिरोगान् प्रमेहांश्च प्लीहशूलव्रणानि च ॥" भा.पू.१भ.ह.व.। श्वासहरः सच्छिन्नश्चापि अपस्मारे आक्षेपके हितः वातशान्तिकरश्च। अवशिष्टयोर्गुणाः स्वस्वपर्य्याये मृग्याः।

**पाषाणरोगः**। पुं। अश्मरीरोगे। च.द.अश्म.चि.।

**पाषाणवज्रकरसः**। पुं। अश्मर्य्यधिकारे रसः। पारदः १भ, गन्धकः २भ, श्वेतपुनर्नवारसैः दिनं मर्दयित्वा भूधरयन्त्रे पचेत्। उद्धृत्य श्लक्ष्णं चूर्णयेत्। तुल्येन पाषाणभेदचूर्णेन यथाबलं मात्रा देया। रस.र.।

**पाषाणविषम्**। क्ली। दारुमोचभेदे। দারমুজ। प.मु.।

**पाषाणसम्भववल्ली**। स्त्री। प्रवाले। প্রবাল। वै.निघ.।

**पाषाणान्तकः**। पुं। अश्मन्तकवृक्षे। आपटा इति लोके। रा.नि.व.९।

**पाषाणी**। स्त्री। परिमाणबोधक-पाषाणखण्डे। বাটথারা।

**पाहाड़ः (तः)**। पुं। ब्रह्मदारुवृक्षे। পলাশ-পিপুল। श.च.।

**पिकः**। पुं। कोकिले। स्त्री। कोकिलायाम्। কোকিল পাখী। अम.।

**पिकदेवः**, **पिकप्रियः** } पुं। आम्रवृक्षे। वै.निघ.।

**पिकप्रिया**। स्त्री। महाजम्बूवृक्षे। रा.नि.व.११। कोकिलायाम्।

**पिकबन्धुः**। पुं। आम्रवृक्षे। त्रिका.।

**पिकभक्ष्का (क्ष्या)**। स्त्री। भूमिजम्बूवृक्षे। বন জাম। रा.नि.व.११।

**पिकमहोत्सवः**। पुं। आम्रवृक्षे। वै.निघ.।

**पिकरागः**। पुं। आम्रवृक्षे। रा.नि.व.११।

**पिकवल्लभः**। पुं। आम्रवृक्षे। भा.।

**पिकाङ्गः**। पुं। चातकपक्षिणि। श.च.।

**पिकानन्दः**। पुं। वसन्तकाले।

**पिकाक्षः**। पुं। कोकिलाक्षे। কুলিয়াখাড়া। रा.नि.व.२३। रोचनीवनस्पतौ। श.च.।

**पिकी** । स्त्री । कोकिलायाम् ।

**पिक्कुरस:** । पुं । मद्ये । वै.निघ. ।

**पिकेक्षणा** । स्त्री । कोकिलाचक्षुपे । কুলে-খাড়া । रा.नि.व.४ ।

**पिक्क:** । पुं । करिपोते । श.मा. ।

**पिङ्गम्** । क्ली । शोणपित्तले । वै.निघ. । बालके । বালা । हरिताले । पुं । वनमूषिके । रा.नि.व. १०।१३।१९ । त्रि । पिङ्गलवर्णे ।

**पिङ्गकपिशा** । स्त्री । तैलपायिकायां । তেলা-পোকা । हे.च. ।

**पिङ्गचक्षु:** । पुं । कुम्भीरे । हे.च. ।

**पिङ्गभास:** । पुं । गौधिरकजातिभेदे । सु.कल्प. ८अ. । See कीट: । [ रा.नि.व.७ ।

**पिङ्ग(ल)मूलम्** । क्ली । गर्ज्जरे । গাজর ।

**पिङ्गलम्** । क्ली । रीतौ । পিতল । रा.नि.व. १३ । हरिताले । पुं । नकुले । स्थावरविषभेदे । हे.च. । पेचके । কুটুরে পেঁচা । रा.नि.व.१९ । उशीरे । रास्नायाम् । वै.निघ. । मण्डलिसर्प-विशेषे । सु.कल्प.४अ. । वानरे । त्रिका. । अग्नौ । पिङ्गलवर्णे ।

**पिङ्गलनामक:** । पुं । शिलारसे । वै.निघ. ।

**पिङ्गललोहम्** । क्ली । रीतौ । পিতল । रा. नि.व.१३ ।

**पिङ्गलसारे** । क्ली । हरिताले ।

**पिङ्गला** । स्त्री । शिंशपावृक्षे । শিশু গাছ । र.मा. । गोरोचनायाम् । रा.नि.व.१२ । नकुल. १४अ. । राजरीतौ । পিতলবিশেষ । रा.नि.व. १३ । ज्योतिष्मतीलतायाम् । वै.निघ. । निर्विष-जलौकायाम् । सु.सू.१३अ. । पक्षिभेदे । পিঙ্গলা পাখী । रा.नि.व.१९ । कर्णिकायाम् । নাড়ী-বিশেষ । हे.च.। सा च दक्षिणाण्डाध:स्था धनुर्वक्रा दक्षिणनासान्तं गता । (सारदातिलके) । "पिङ्गला सितरक्ताभा दक्षिणं पार्श्वमाश्रिता ।" योगार्णव: ।

**पिङ्गलाक्ष:** । पुं । पिङ्गलापक्षिणि । वै.निघ. ।

**पिङ्गलिका** । स्त्री । वकपक्षिणि । जटा. । मक्षिकाविशेषे । सु.कल्प.८अ. । हरिताले ।

**पिङ्गवर्णकम्** । क्ली । गर्जरमूले । গাজরমূল । वै.निघ. ।

**पिङ्गसार:** । पुं । हरिताले । रा.नि.व.१३ ।

**पिङ्गस्फटिक:** । पुं । गोमेदमणौ । तत्पर्य्याया: —गोमेद:, राहुरत्नं, तमोयोनि:, स्वर्भानव:, पिङ्ग-स्फटिक: । गुणा:,—अम्लत्वं उष्णत्वं दीपन-पाचनत्वं वातविकारनाशित्वं धारणे पापनाशित्वञ्च । रा.नि.व.१३ ।

**पिङ्गा** । स्त्री । वंशे । वंशलोचने । रा.नि.व.६ । शमीवृक्षे । र.मा. । हिङ्गुनि । मे. । गोरोचना-याम् । रा.नि.व.१२ । हरिद्रायाम् । रा.नि.व.२३। रक्तवाहिनाड्याम् । वै.निघ. ।

**पिङ्गाण:** । पुं । काचे । वै.निघ. ।

**पिङ्गाश:** । पुं । मत्स्यविशेषे । পাঙ্গাশ মাছ । क्ली । स्वर्णे । পাকা সোণা । मे. ।

**पिङ्गाशी** । स्त्री । नीलीवृक्षे । मे. ।

**पिङ्गास्य:** । पुं । पिङ्गाशमत्स्ये । श.र. ।

**पिङ्गाह्व:** । पुं । पक्षिविशेषे । वम्. कालवट-पक्षी । वै.निघ. ।

**पिङ्गाक्ष:** । पुं । विड़ाले । वै.निघ. ।

**पिङ्गी** । स्त्री । शमीवृक्षे । प.मु. ।

**पिच(चि)ण्ड:** । पुं । उदरे । रा.नि.व.१८ । पशुपृष्ठभागे । हे.च. ।

**पिचव्य: (व्या)** । पुं, स्त्री । कार्पासे । हे.च. ।

**पिचिण्डिका** । स्त्री । इन्द्रवल्लौ । পায়ের ডিম । हे.च. ।

**पिचिण्डिल:** । त्रि । लम्बोदरे । हे.च. ।

**पिचु:** । पुं । कार्पास्याम् । रा.नि.व.४ । कार्पासतूलके । अम. । तोलकद्वये । प.प्र.१ख. । कुष्ठरोगभेदे । मे. । मूर्द्धतैलविधिभेदे तैलाक्तपिचु-धारणरूपे । तैलाक्तं तूलफाहा इति । भा.म.४भ. योनिरो.चि. । क्ली । तूले । তূল । सु.सू.५अ. ।

**पिचुक:** । पुं । मदनवृक्षे । কাঁটা ময়না । प.मु. । पक्वकरीरजफलकार्पासे । कर्णपुष्पाख्यमहा-पुष्पे । नीलोत्पले । सु.चि.७अ. । साकुरुण्डवृक्षे । वै.निघ. । शस्यविशेषे । मदनवृक्षे । कार्पास्याम् ।

**पिचुतु(तू)लम्** । क्ली । कार्पासे । त्रिका. ।

**पिचुमन्द: (मर्द्द:)** । पुं । निम्बवृक्षे । নিম্ গাছ । रा.नि.व.९ । सि.यो.सन्निपातज्व.चि. ।

**पिचुल:** । पुं । झावुकवृक्षे । ঝাউ গাছ ।



अम. । कार्पासवृक्षे । जलकाके । तिलकवृक्षे । हिज्जलवृक्षे । मे. । तूले । अ.टी.सा. ।

**पिचुली** । स्त्री । मूर्व्वायाम् ।

**पिचुवर्त्ति:** । स्त्री । तूलवर्त्त्याम् । তূলার বাতি । च.द.आश्मरीताधिकारे ।

**पिच्चक(ट)म्** । क्ली । वङ्गे । রাঙ্ । प.मु. । रा.नि.व.१३ । शीषके । मे. । [ मे. ।

**पिच्चटक:** । पुं । नेत्ररोगे । পিচুটী রোগ ।

**पिच्चिट:** । पुं । अग्निप्रकृतिकीटविशेषे । सु. कल्प.८अ. । See कीट: ।

**पिच्चितम्** । क्ली । अस्थिभङ्गविशेषे । হাড় চেপ্‌টে যাওয়া । तच्च पृथुतां गतमल्पशोफम् । सु. नि.१५अ. । सद्योव्रणभेदे । "प्रहारपीड़नाभ्यान्तु यदङ्गं पृथुतां गतम् । सास्थि तत्पिच्चितं विद्यात् मज्जरक्तपरिप्लुतम् ॥" सु.चि.२अ. ।

**पिच्छ:(क:)** । पुं । मोचरसे । अम. । लाङ्गुले । मे. । क्ली । मयूरपुच्छे । अम. ।

**पिच्छनम्** । क्ली । अत्यन्तपीड़ने । च.सू.१८अ. ।

**पिच्छपादी** । त्रि । तन्नामकपादरोगाक्रान्ते (अश्वे) । "रोमान्त: श्रूयते यस्य समन्तान्नैव पच्यते । क्लेदश्च पिच्छिलो यस्य पिच्छपादीति तं विदु: ॥" ज.द.३९अ. ।

**पिच्छभार:** । पुं । मयूरपुच्छे । वै.निघ. ।

**पिच्छल:** । पुं । मोचरसे । आकाशवल्लयाम् । बहुवारवृक्षे । वै.निघ. ।

**पिच्छलच्छदा (दला)** । स्त्री । उपोदि-कायां । পুঁই গাছ । वदरीवृक्षे । त्रिका. ।

**पिच्छलत्वक्** । पुं । नागरङ्गवृक्षे । स्त्री । नागरङ्गवल्कले । वै.निघ. । [ वै.निघ. ।

**पिच्छलबीज:** । पुं । वनपणसे । আনারস ।

**पिच्छला** । स्त्री । शूलीतृणे । रा.नि.व.८ । शाल्मलीवृक्षे । आकाशवल्लयाम् । वै.निघ. । उपो-दिकायां । त्रिका. ।

**पिच्छवाण:** । पुं । रणगृध्रे । শ্যেন পাখী । रा.नि.व.१९ ।

**पिच्छा** । स्त्री । मोचरसे । प.मु. । भैष. स्त्री रो.चि.मधुकादिलेह: । वा.उ.३४अ.पुष्यानुगचूर्णे । शिंशपावृक्षे । श.च. । मण्डे । भक्तमण्डे । कोषे । पूगवृक्षे । कदलीवृक्षे । मे. । सर्पविषे । लालायाम् । शाल्मलीवृक्षे । चोले । वै.निघ. । अश्वपादरोगे । ज.द. । कतकवृक्षे । आकाशलतायाम् । वै.निघ. ।

**पिच्छावस्ति:** । स्त्री । पिच्छिलवस्तौ । वा. चि.९अ. ।

**पिच्छावृक्ष:** । पुं । शाल्मलीवृक्षे ।

**पिच्छितिका** । स्त्री । शिंशपावृक्षे । শিশু গাছ । श.च. ।

**पिच्छिल:** । पुं । पिण्डालुके । प.मु. । बहु-वारवृक्षे । भा. । क्ली । समण्डदधनि । वै.निघ. । सरसव्यञ्जनादौ । भ. । स्निग्धसूपादौ । भानुदत्त: । समण्डभक्ते । सजलव्यञ्जने । नीलकण्ठ: । त्रि. । भक्तमण्डयुक्ते । अम.रा. ।

**पिच्छिलक:** । पुं । धन्वनवृक्षे । ধামনা গাছ । रा.नि.व.९ । शाल्मलीवृक्षे । वै.निघ. ।

**पिच्छिलगुणकर्म्म** । क्ली । पिच्छिलद्रव्यस्य गुणकर्म्मणि । तच्च बल्यं सन्धानं श्लेष्मलं गुरु । सु. ।

**पिच्छिलच्छदा** । स्त्री । उपोदक्याम् । পুঁইশাক । प. मु. ।

**पिच्छिलत्वक्** । पुं । धन्वनवृक्षे । ধামনা গাছ । प मु. । र. मा. । नागरङ्गवृक्षे । त्रिका. ।

**पिच्छिलदला** । स्त्री । वदर्य्याम् । কুল গাছ । उपोदिकायाम् ।

**पिच्छिलवस्ति:** । स्त्री । निरूहवस्तिभेदे । "वदरैरावती शेलु-शाल्मलीपुष्पजाङ्कुरा: । क्षीर-सिद्धा: क्षौद्रयुक्ता नाम्ना पिच्छिलसंज्ञिता: । अजोर-भ्रैणरुधिरैर्युक्ता देया विचक्षणै: । मात्रा पिच्छिल-वस्तीनां पलैर्द्वादशभिर्मता ॥" भा. ।

**पिच्छिलफलम्** । क्ली । डिण्डिशफले । ঢেঁড়শ । तद्‌गुणा:—बलपुष्टिकारित्वं प्रमेहास्र-पित्तविषदोषनाशित्वञ्च ।

**पिच्छिलसार:** । पुं । मोचरसे । रा.नि.व.८ ।

**पिच्छिला** । स्त्री । वृश्चिकाल्याम् । বিছাতী । रा.नि.व.५ । पीतशिंशपावृक्षे । শিশু গাছ । र. मा. । कच्वां । कचु । श.च. । अनस्याम् । মশিনা । रा.नि.व.१६ । शाल्मलीवृक्षे । उपोदिकायाम् । मे. । शूलीतृणे । रा.नि.व.४ । वृक्षभेदे । विहि-दाना इति केचित् । कोकिलाक्षे । কুলেখাড়া । रा.नि.व.४ ।

**पिच्चोड़कम्** । क्ली । नेत्रपिच्चटे ।

**पिञ्जः** । पुं । कर्पूरे । ভীমসেনী কর্পূর। रा.नि.व.१२। क्ली। बले। मे.।

**पिञ्जकम्** । क्ली । हरिताले। र.सा.स.।

**पिञ्जटः** । पुं । पिच्चटरोगे। পিচুটী। श.र.।

**पिञ्जनम्** । क्ली। तूलधनुषि। তুলো ধোনা। त्रिका.।

**पिञ्जरम्** । क्ली । नागकेशरपुष्पे। रा.नि.व.६। अस्थिपञ्जरे। भ.टी.। श्यामाके। हरिताले। अम.। स्वर्णे। मे.। त्रि। पीतवर्णे।

**पिञ्जरकम्** । क्ली । अतस्याम् । মশিনা। प.मु.। हरिताले। रा.नि.व.१३।

**पिञ्जलम्** । क्ली। हरिताले। प.मु.। कुशपत्रे। धरणी.। पुं। जलवेतसे। वै.निघ.।

**पिञ्जा** । स्त्री । हरिद्रायाम्। तूलके। मे.।

**पिञ्जानम्** । क्ली । सुवर्णे। रा.नि.व.१३।

**पिञ्जिका** । स्त्री । तूलनालिकायां। পাঁইজ। त्रिका.।

**पिञ्जूलम्** । क्ली । तूलवर्त्तिकायाम्। वै.निघ.।

**पिञ्जूषः** । पुं । कर्णगूथे। हे.च.।

**पिञ्जेटः** । पुं । नेत्रमले। পিচুটী। श.र.।

**पिटः(क)** । पुं । विस्फोटके। मे.।

**पिट(टि)का** । स्त्री । पिड़कायाम्। रा.नि.व.२०। मसूरिकायाम्। वैद्यकम्।

**पिटङ्गाकी** । स्त्री । कटुवृन्दावने। वै.निघ.।

**पिटङ्गाशः** । पुं । मत्स्यभेदे, पर्व्वतोर्म्मिमत्स्ये। श.कल्प.।

**पिटङ्कोटिः (की)** । स्त्री । इन्द्रवारुणीलतायाम्। प.मु.। [र.।

**पिट्टकम् (का)** । क्ली, स्त्री । दन्तकिट्टके। श.

**पिठः** । पुं । पीड़ायाम्। देवनले। वै.निघ.।

**पिठरम्** । क्ली । नागरमुस्तके। मन्थनदण्डे। मे.। पुं। स्थाल्याम्। अम.। च.सू.१५अ.।

**पिड़कः (का)** । पुं, स्त्री । व्रणविशेषे। ফুস্কুড়ি। लक्षणं—"उत्पद्यतेऽल्परुक्शोफा क्षिप्रञ्चाप्युपशाम्यति। पायून्तदेशे पिड़का सा ज्ञेयान्या भगन्दरात्॥ भगन्दरा तु विज्ञेया पिड़कातो विपर्य्ययात्। पायोः स्याद्व्यङ्गुले देशे गूढ़मूला सरुग्ज्वरा॥" सु.नि.४अ.। प्रमेहजन्य-विस्फोटकभेदे, प्रमेहपीड़कायाम्। शराविकादौ। सा दशधा। See प्रमेहपिड़का। कुष्ठपिड़कायाम्, यवप्रख्यादौ। ताः षीड़श। .मा.नि.। तासां लक्षणानि पर्य्याये मृग्याणि।

**पिड़कालिका** । स्त्री। नेत्रमले। च.र.पि.नि.।

**पिड़िकापत्रः** । पुं। पृक्काशाके। পিড়িংশাক।

**पिण्डः** । पुं । गोपके। নিশাদল। प.मु.। गर्भे। करिगण्डमूले। अम.। शरीरैकदेशे। त्रिका.। देहे। जवावृक्षे। सिह्लके। बले। मे.। मदनवृक्षे। रा.नि.व.११। क्ली। लौहे। प.मु.। बोलनामगन्धद्रव्ये। গন্ধবোল। रा.नि.व.६। शरीरे। रा.नि.व.८।

**पिण्डकः** । पुं। पिण्डमूलके। पिण्डालौ। रा.नि.व.७। गुणाः—"पिण्डको वातलः श्लेष्मी ग्राही वृष्यो महागुरुः।" अत्रि.१६अ.। शिलारसे। अम.। क्ली। गन्धबोले। तीक्ष्णलौहे। रा.नि.व.६।१३। नवनीते। अन्ने।

**पिण्डकन्दः** । पुं । पिण्डालौ। रा.नि.व.७।

**पिण्डका** । स्त्री । मसूरिकायाम्। वै.निघ.।

**पिण्डखर्ज्जूरः** । पुं । स्वनामख्यातवृक्षे। পিণ্ডিখেজুর গাছ। प.मु.।

**पिण्डखर्ज्जूरिका (री)** । स्त्री । द्वीपादिविदेशजातपृथुमिष्टफलखर्ज्जूरीवृक्षे। পিণ্ডিখেজুর। तत्पर्य्यायाः,—राजजम्बूः पिण्डीफलमुद्गारिका दीप्या सपिण्डा मधुरस्रवा फलपुष्पा स्वादुपिण्डा हयभक्ष्या। मे.। सा द्विधा पिण्डी राजपिण्डी चेति। तयोर्गुणाः—फलं गौल्यं हिमं स्वादु गुरु दाह-पित्त-श्वासघ्नं वीर्य्यवृद्धिकरम् अग्निमान्द्यकरं विषघ्नञ्च। रा.नि.व.११। See खर्ज्जूरी।

**पिण्डगुड़ूचिका (ची)** । स्त्री । कन्दगुड़ूच्याम्। रा.नि.व.३। [टी.र.।

**पिण्डगो(ड़)सः** । पुं । मन्सबोले। भा.। अ.

**पिण्डतगरः** । पुं । तगरपुष्पे। वै.निघ.।

**पिण्डतैलम्** । क्ली । वातरक्ताधिकारे तैलम्। "समधूच्छिष्टमञ्जिष्ठं ससर्ज्जरसशारिवम्। पिण्डतैलं तदभ्यङ्गाद्वातरक्तरुजापहम्॥ কটুতৈল ১ শ. মম, মঞ্জিষ্ঠা, ধূনা, অনন্তমূল প্রত্যেক ১ ছটাক্। रस.र.।



**पिण्डतैलकः** । पुं । सिह्लके। শিলারস। रा.नि.व.१२।

**पिण्डपादः(द्यः)** । पुं । हस्तिनि। त्रिका.।

**पिण्डपुष्पम्** । क्ली । अशोकपुष्पे। जवापुष्पे। वै.निघ.। पद्मपुष्पे। मे.। तगरपुष्पे। श.र.। पुं। दाड़िमवृक्षे। त्रिका.। [श.मा.।

**पिण्डपुष्पकः** । पुं । शाकविशेषे, वास्तूके।

**पिण्डफला** । स्त्री । अलाव्वाम्। प.मु.। सु.चि.१८अ.। "आलेपयेत्पिण्डफलार्कभार्गीः।" कटुतुम्ब्याम्। তিৎলাউ। जटा.।

**पिण्डमुस्तकः (का)** । पुं, स्त्री । नागरमुस्तायाम। रा.नि.व.६।

**पिण्डमूल(क)म्** । क्ली । पञ्चविधमूलकान्यतममूलके। गर्ज्जरमूलके। বাটুলা মূলা। तत्पर्य्यायाः,—गर्ज्जरं गजाण्डं पिण्डकं। गुणाः—कटूष्णं गुल्मवातघ्नञ्च। रा.नि.व.७।

**पिण्डयोनिः** । स्त्री । योनिरोगभेदे। च.द.योनिरो.चि.।

**पिण्डरोहिण(त)कः** । पुं । विकङ्कतवृक्षे। বঁইচি গাছ। रा.नि.व.९।

**पिण्डवीजः (कः)** । पुं । (Oleander oborum.) कर्णिकारवृक्षे। रा.नि.व.९।

**पिण्डशर्करा** । स्त्री । खटीशर्करायां। ফুলখড়ি। वै.निघ.।

**पिण्डस्वेदः** । पुं । पिण्डेन स्वेदे। वा.उ.२८अ.।

**पिण्डहरिद्रा** । स्त्री । ग्रन्थिहरिद्रायाम्। গিঁঠা হরিদ্রা। वै.निघ.।

**पिण्डा** । स्त्री । कस्तूरीभेदे। মৃগনাভি-বিশেষ। सा कुलत्थिकायाः किञ्चित् स्थूला। रा.नि.व.१२। हरिद्रायाम्। वंशपत्रीतृणे। भा.। खर्ज्जूरीवृक्षे। পিণ্ডীখেজুর। पिण्डायसे। পিণ্ডলৌহ। रा.नि.व.१३।

**पिण्डाञ्जनम्** । क्ली । अञ्जनविशेषे। वा.उ.१४अ.।

**पिण्डातः** । पुं। सिह्लके। শিলারস। र.मा.। गन्धरसे। रस.र. पिप्पल्याद्यलौहे।

**पिण्डापा** । स्त्री । नाड़ीहिङ्गौ।

**पिण्डाभा** । स्त्री । शर्कराभेदे। वै.निघ.।

**पिण्डाभ्रम्** । क्ली । करकायाम्। श.मा.।

**पिण्डामृता** । स्त्री। कन्दगुड़ूच्याम्। वै.निघ.।

**पिण्डाम्लम्** । क्ली । चाङ्गेरीलिकुचाम्लवेतस-जम्बीर-कर्पूर-नारङ्ग-फलषाड़वसमभागमिश्रिते। "चाङ्गेरीलिकुचाम्लवेतसयुतं जम्बीरकर्पूरकं नारङ्गं फलशाड़वस्त्विति तु पिण्डाम्लञ्च वीजाम्लकम्।" रा.नि.व.२२। [१३।

**पिण्डायसम्** । क्ली । तीक्ष्णलौहे। रा.नि.व.

**पिण्डारः** । पुं । विकङ्कतवृक्षे। বঁইচি গাছ। वै.निघ.२भ.ज्व.। वृक्षविशेषे। পিটুলি গাছ। मे.। कृष्णमदनवृक्षे। क्ली। (Trewia mudiflora.) फलशाकविशेषे। हिं पिण्डारा। फलगुणाः—"पिण्डारं शीतलं बल्यं पित्तघ्नं रुचिकारकं। पाके लघु विशेषेण विषशान्तिकरं लघु॥" भा.पू.१भ.शा.व.ज्योतिष्मतीनस्ये।

**पिण्डालः (लुः)** । पुं। स्वनामख्यातकन्दशाकविशेषे। চুবড়ি আলু, গোল আলু, হাতিখোজা আলু। मं पेडालु। कं विलियहेण्डल। उत्. घरा अलु। तत्पर्य्यायाः,—ग्रन्थिलः पिण्डकन्दः ग्रन्थिः रोमशः रोमकन्दः रोमालूः ताम्बूलपत्रः लालाकन्दः रोमालुः। गुणाः—मधुरः शीतः मूत्रकृच्छ्रघ्नः दाहशोषमेहघ्नः वृष्यः गुरुः सन्तर्पणः। रा.नि.व.७। "पिण्डालुकः श्लेष्मकरः शुक्रवृद्धिकरो मृदुः।" अत्रि.१६अ.। कन्दगुड़ूच्यां। रा.नि.व.३।

**पिण्डालु(लू)कम्** । क्ली। वृत्तालुके। গোল আলু। মৌ আলু। हिं सुथनी। गुणाः—गुरु कफघ्नं वातकोपनञ्च। राज.। शाकं सर्षपशाकगुणम्। च.सू.२७अ.।

**पिण्डासवः** । पुं । ग्रहण्यामासवविशेषे। तत्साधनविधिः—"प्रास्थिकीं पिप्पलीं पिष्टा गुड़ं मध्य विभीतकम्। उदकप्रस्थसंयुक्तं यवपल्ले निधापयेत्। तस्मात्पलं सुजातात्तु सलिलाञ्जलिसंयुत। पिबेत्पिण्डासवो ह्येषः......।" च.चि.१९अ.। पिप्पलीकल्कः २ श. गुड़ः २ श. मधु २श. वारि ४ श. एकत्र कलसस्थं कृत्वा त्रिःसप्तकं मासं वा यवपल्लमध्ये स्थाप्यम्।

**पिण्डाह्वम्** । क्ली । तगरपादुके। र.सा.सं.।

**पिण्डाह्वा** । स्त्री । नाड़ीहिङ्गौ। रा.नि.व.६।

**पिण्डिः।** स्त्री। पिण्डिकायाम्। পায়ের ডিম। श.टी.र.।

**पिण्डिकः।** पुं। तुरुष्केतिख्याते गन्धद्रव्यभेदे। शिलारस।

**पिण्डिका (ण्डी)।** स्त्री। श्वेताम्लिकायाम्। रा.नि.व.४। इन्द्रवल्ली। "तन्मध्ये पिण्डिका तथा।" रा.नि.व.१८। तालवृक्षे। वै.निघ.। अलाव्वाम्। पिण्डीतगरे। पिण्डीखर्जूरे। मे.। नेत्राभिष्यन्दरोगे नेत्रकर्म्मभेदे। तदुक्तं—"युक्तभेषजकल्कस्य पिण्डी कवलमात्रया। वस्त्रखण्डेन सम्बद्धा नेत्राभिष्यन्दनाशिनी। स्निग्धोष्णा पिण्डिका वाते पित्ते सा शीतला मता। रूक्षोष्णा श्लेष्मणि प्रोक्ता विधिवज्ञो बुधैरयमिति॥" भा.। पिण्डे। सा.को.अश्ममारणे।

**पिण्डिकोद्वेष्टनम्।** क्ली। जान्वधो जङ्घामांसपिण्डस्य दण्डादिपीड़नेनेव वेदनायां। পায়ের ডিমে বেদনা। मा.नि.।

**पिण्डितः (कल्कः)।** पुं। शिलारसे। प.मु.। See सिह्लकः। रा.नि.व.१२। क्ली। कांस्यधातौ। वै.निघ.।

**पिण्डितैलम्।** क्ली। शिलारसे। वै.निघ.।

**पिण्डिनी।** स्त्री। गिरिकर्णिकायाम्। अपराजिता। रा.नि.व.२३।

**पिण्डिरिका।** स्त्री। मञ्जिष्ठायाम्। तण्डुलीयके। वै.निघ.।

**पिण्डिला।** स्त्री। कर्कटीभेदे, गोडुम्बायाम्। গোমুক। श.च.।

**पिण्डी।** स्त्री। पिण्डीतगरे। अलाबौ। पिण्डखर्जूरे।

**पिण्डीतकः।** पुं। कृष्णमदन। কাল ময়না। सु.चि.१७,२५अ.। मदनवृक्षे। रा.नि.व.८। शि.यो.,छर्दि.चि.। भा.म.४भ.गर्भचि.। फणिज्झकवृक्षे। विश्व.। क्ली। पिण्डीतगरे। তগরপাদুকা। विश्व.।

**पिण्डीतकफलम्।** क्ली। कृष्णमदनफले। पाण्डुवर्णमदनफले। सु.चि.२५अ.। मरुवकफले। वै.निघ.।

**पिण्डीतगरः (कः)।** पुं, क्ली। तगरपुष्पविशेषे। তগরপাদুকা। कोङ्कणे पिण्डीतगरनाम्ना प्रसिद्धः। विका.। रा.नि.व.१०। रस.र.विष.चि.। [८।

**पिण्डीतरुः।** पुं। महापिण्डीवृक्षे। रा.नि.व.

**पिण्डीपुष्पः।** पुं। अशोकवृक्षे। रा.नि.व.१०।

**पिण्डीरः।** पुं। दाड़िमवृक्षे। विका.। समुद्रफेने। श.टी.रा.। नकुल.१३अ.।

**पिण्डोद्भवा।** स्त्री। सुरायाम्। वै.निघ.।

**पिण्डोलिः।** पुं। उच्छे। वै.निघ.। त्रि। भुक्तसमुज्झिते। हे.च.।

**पिण्या (का)।** स्त्री। ज्योतिष्मतीलतायाम्। লতা ফট্‌কী। বন উচ্ছে। प.मु.। वै.निघ.।

**पिण्याकः।** पुं, क्ली। तिलकल्के। खलि। তৈলকিট্টে। তিলকুটা। रा.नि.व.१६। "तिलादीनां निष्पीड़ितः कल्क उद्धृततैलस्तिलादिपिण्डः।" हेमाद्रिः। च.सू.२अ.तैलव्यापद्यवाग्वाम्। गुणाः—ग्लानिकरो रूक्षः विष्टम्भी दृष्टिविकारकृच्च। वा.सु.६अ.। सिह्लके। शिलारस। रा.नि.व.१२। हिङ्गौ। कुङ्कुमे। तैलपर्ण्याम्। লবণথোটী। शीलकन्दे। च.द.ग्रन्थि.चि.।

**पितामहः।** पुं। मुञ्जतृणे। মুঁজ। पितुः पितरि। वै.निघ.।

**पितृग्रहः।** पुं। बालरोगभेदे। ভূতোন্মাদগ্রহবিশেষ। तज्जुष्टलक्षणं—"प्रेतानां स दिशति संस्तरेषु पिण्डान् शान्तात्मा जलमपि चापसव्यवस्त्रः। मांसेप्सुस्तिलगुड़पायसाभिकामस्तद्भक्तो भवति पितृग्रहाभिजुष्टः॥" मा.नि.। "रोमहर्षो मुहुर्भ्रमिः।" वा.उ.३अ.।

**पितृजः।** त्रि। शरीरे पितुर्जातेषु केशश्मश्रुनखदन्तास्थिलोमशिरास्नायुधमनीषु। च.शा.३अ.।

**पितृतर्पणम्।** क्ली। तिले। रा.नि.व.१६।

**पितृप्रसूः।** स्त्री। सायङ्काले। अम.।

**पितृप्रियः।** पुं। मार्कवे। ভীমরাজ। रा.नि.व.४। स्त्री। अगस्त्यवृक्षे। भृङ्गराजे। कालशाके। रा.नि.व.२३।

**पितृभोजनः।** पुं। माषे। মাষ কলায়।

**पित्तम्।** क्ली। गोरोचनायां। च.द.उन्मा.चि.। "सपित्तं स्थितमञ्जनं।" (Fel.) Gall or bile. पाचकाग्न्यपरनामकशरीरस्थतेजोधातौ। পিত্ত। हिं पीत् शफ्रा। तत्पर्य्यायाः,—मायुः,



पलाग्निः, पललज्वरः, तेजः, तिक्तधातुः, उष्मा, अग्निः, अमलः। पित्तस्य स्वरूपं यथा—"पित्तमुष्णं द्रवं पीतं नीलं सत्त्वगुणोत्तमम्। सरं कटु लघु स्निग्धं तीक्ष्णमम्लन्तु पाकतः॥" भा.। प्रकोपगुणाः—"पित्तञ्च तिक्ताम्लरसञ्च सारकं चोष्णं द्रवं तीक्ष्णमिदं मधौ बहु। वर्षान्तकाले भृशमर्द्धरात्रके मध्यन्दिनेऽन्नस्य जरे च कुप्यति॥" रा.नि.व.२१। "पित्तं तीक्ष्णं द्रवं पूति नीलं पीतं तथैव च। उष्णं कटुरसञ्चैव विदग्धञ्चाम्लमेव च। तदुष्णैरुष्णकाले च मेघान्ते च विशेषतः। मध्याह्ने चार्द्धरात्रे च जीर्य्यत्यन्ने च कुप्यति॥" सु.सू.२१अ.। "सर्व्वं पित्तमपस्मारकुष्ठदुष्टव्रणापहम्। चक्षुष्यं कटु तीक्ष्णोष्णमुन्मादक्रमिनाशनम्॥" राज.। तच्च पाचकरञ्जकसाधकलोचकभ्राजकभेदेन पञ्चविधमधिष्ठानभेदतः यथाक्रमं अग्न्याशययकृत्प्लीहनेत्रहृयत्वक्सर्व्वशरीरेषु तिष्ठति। एतेषाञ्च कर्म्माणि—"पाचकं पचते भुक्तं शेषाग्निबलवर्द्धनम्। रसमूत्रपुरीषाणि विरेचयति नित्यशः। रञ्जकं नाम यत्पित्तं तद्रसं शोणितं नयेत्। यत्तु साधकसंज्ञं तत् कुर्य्याद्बुद्धिं धृतिं स्मृतिम्। यदालोचकसंज्ञं तत् रूपग्रहणकारणम्। भ्राजकं कान्तिकारि स्यात्लेपाभ्यङ्गादिपावकम्॥" भा.। पित्तं पञ्चात्मकं तच्च पक्वामाशयमध्यगं। पञ्चभूतात्मकत्वेऽपि यत्तैजसगुणोदयात्। त्यक्तं द्रवत्वं पाकादिकर्म्मणानलसंज्ञितं। पचत्यन्नं विभजते सारकिट्टौ पृथक् तथा। तत्रस्थमेव पित्तानां शेषाणामप्यनुग्रहं। करोति बलदानेन पाचकं नामतः स्मृतम्। आमाशयाश्रितं पित्तं रञ्जकं रसरञ्जनात्। बुद्धिमेधाभिमानाद्यैरभिप्रेतार्थसाधनात्। साधकं हृद्गतं पित्तं रूपलोचनतः स्मृतम्। दृक्स्थमालोचकं त्वक्स्थं भ्राजकं भ्राजनात्त्वचम्॥" वा.। See अग्निः। पित्तप्रकृतिलक्षणम्—अकाले केशशुक्लतागौरवर्णताघर्म्मादिषु। यथा—"गौरातिपिङ्गः सुकुमारमूर्त्तिः शीतः सुशीतो मधुपिङ्गनेत्रः। तीक्ष्णोऽपि कोऽपि क्षणभङ्गुरश्च त्वासो मृदुर्गात्रमलोमकं स्यात्। गौल्यप्रियस्तिक्तरसानुभोजी द्वेषी च तीक्ष्णे च नवोष्णसेवी। स्तुतिप्रियो दन्तविशुद्धवर्णो ज्ञातः स पित्तप्रकृतिर्मनुष्यः॥" अत्रि.५अ.। "पित्तप्रकृतिको लोको यादृशोऽथ निगद्यते। अकालपलितो गौरः क्रोधी स्वेदी च बुद्धिमान्। बहुभुक् ताम्रनेत्रश्च स्वप्ने ज्योतींषि पश्यति। एवंविधो भवेद्यस्तु पित्तप्रकृतिको नरः॥" भा.पू.१भ.।

**पित्तकफज्वरः।** पुं। पित्तश्लेष्मज्वरे।

**पित्तकरः (कृत्)।** त्रि। पित्तजनकद्रव्ये, वंशकरीरादौ।

**पित्तकासः।** पुं। पित्तजन्यकासरोगे। लक्षणं—"उरो विदाहज्वरवक्त्रशोषैरभ्यर्द्दितस्तिक्तमुखस्तृषार्त्तः। पित्तेन पीतानि वमेत्कटूनि कासेत् स पाण्डुः परिदह्यमानः॥" मा.नि.।

**पित्तघ्नम्।** क्ली। घृते। मधुरतिक्तकषायद्रव्यमात्रे। त्रि। पित्तनाशके शीतमृदुपिच्छिलगुणत्वात्। सु.सू.४२अ.।

**पित्तघ्नी।** स्त्री। गुड़ूच्याम्। श.च.।

**पित्तज्वरः।** पुं। पित्तजन्यज्वरे। लक्षणं—"वेगस्तीक्ष्णोऽतिसारश्च निद्राल्पत्वं तथा वमिः। कण्ठौष्ठमुखनासानां पाकः स्वेदश्च जायते। प्रलापो वक्त्रकटुता मूर्च्छादाहौ मदस्तृषा। पीतविण्मूत्रनेत्रत्वं पैत्तिके भ्रम एव च॥" निदा.।

**पित्तद्रावी (द्रन्)।** पुं। मधुरजम्बीरवृक्षे। रा.नि.व.११। त्रि। पित्तद्रवकारिणि।

**पित्तधरा।** स्त्री। षष्ठ्यां शरीरकलायां, ग्रहण्याम्। গ্রহণী। "या चतुर्विधमन्नपानमुपयुक्तमामाशयात् प्रच्युतं पक्वाशयोपस्थितं धारयति। सु.शा.४अ.। एषैव ग्रहण्युच्यते। "षष्ठी पित्तधरा नाम या कला परिकीर्त्तिता। पक्वामाशयमध्यस्था ग्रहणी परिकीर्त्तिता॥" सु.उ.४०अ.।

**पित्तनाड़ी।** स्त्री। दन्तमूलगतरोगे। पित्तजन्यनाड़ीव्रणे। उभयलक्षणम्—"पित्तात्तृषाज्वरकरी परिदाहयुक्ता पीतं स्रवत्यधिकमुष्णमहःसु चापि।" मा.नि.।

**पित्तपाण्डुः।** पुं। पित्तजन्यपाण्डुरोगे। लक्षणं—"पीतमूत्रशकृन्नेत्रो दाह-तृष्णा-ज्वरान्वितः। भिन्नविट्कोऽतिपीताभः पित्तपाण्डुामयी नरः॥" मा.नि.।

**पित्तप्रकृतिः।** त्रि। पित्ताधिकधातुविशिष्टजन्तौ। स तु स्वेदनो दुर्गन्ध-पीत-शिथिलाङ्गस्ताम्रनख-नयन-तालु-जिह्वोष्ठ-पानिपादतलो दुर्भगो वलीपलितखालित्यजुष्टो बहुभुगुष्णद्वेषी चिप्रकोपप्रसादो मध्यमबलो मध्यमायुश्च भवति। "मेधावी निपुणमतिः प्रकृष्टवक्ता तेजस्वी समितिषु दुर्निवारवीर्य्यः। सुप्तः सन् कनक-पलाश-कर्णिकारान् सम्पश्येदपि च हुताश-विद्युदुल्काः॥ न भयात्

प्रणमेद्दनतेष्वमृदुः प्रणतेष्वपि सान्त्वदानरुचिः । भवतीह सदा व्यथितास्य गतिः स भवेदिह पित्तकृतप्रकृतिः ॥ भुजङ्गोलूक-गन्धर्व्व-यक्ष-मार्जार-वानराः । व्याघ्रार्च्चनकुलोलूकाः पैत्तिका जन्तवः स्मृताः ॥”

**पित्तप्रकोपी** । त्रि । पित्तवर्द्धके पानेऽन्ने च, यथाक्रमं तक्रसुरादिके मांसादिके चेति । भा.अम्ल. पि चि. । “क्रोधशोकभयकामायासोपवासविदग्ध-मैथुनोपगमनकट्वम्ललवणतीक्ष्णोष्णलघुविदाहितिल-तैलपिण्याककुलत्थसर्षपातसीहरितशाकगोधामत्स्या-जाविकमांस-दधि-तक्रकूर्च्चिका-मस्तु-सौवीरकसुरा विकाराम्लफलकट्वरार्कप्रभृतिभिः पित्तम्प्रकोपमापद्यते ।” सु.सू.२१अ. ।

**पित्तप्रवर्त्तनम्** । क्ली । ऊर्द्ध्वाधोमार्गेण पित्त-निर्गमे ।

**पित्तभेषजम्** । क्ली । मसूरे । वै.निघ. ।

**पित्तरक्तम् ( शोणितम् ) ( त्तासृम् )** । क्ली । रक्तपित्तरोगे । रा.नि.व.२० ।

**पित्तरेताः** । त्रि । पित्तभूयिष्ठशुक्रे । रस.र. मू.घा.चि. ।

**पित्तरोगः** । पुं । पित्तकोपरोगे ।

**पित्तरोहिणी** । स्त्री । पित्तजन्यगलरोगे । लक्षणम्—“क्षिप्रोद्गमा क्षिप्रविदाहपाका तीव्रज्वरा पित्तनिमित्ततः स्यात् ।” सु.नि.१६अ. ।

**पित्तलम्** । क्ली । हरिताले । प.मु. । भूर्ज्जपत्रे । श.मा. । स्वनामख्याततामयशदयोरुपधातौ । পিতল, কাঁচা পিতল । हिं पीतरी, काँची पीतरी । तत्पर्य्यायाः,—आरकूटं, रीतिः, रीती, पतिकावेरं, द्रव्यदारु, मिश्रं, आरः, क्षुद्रसुवर्णं, सिंहलं, पीतनकं, लोहितकं, पिङ्गलं, पिङ्गलोहं, पीतकं । राजरीति-ब्रह्मरीति-भेदात्तत् द्विविधं । “राजरीतिः ब्रह्मरीतिः कपिला पिङ्गलापि च । रीतिरप्युपधातुः स्यात् ताम्रस्य यशदस्य च ॥ पित्तलस्य गुणा ज्ञेया स्वयोनिसदृशा जनैः । संयोगजप्रभावेण तस्याप्यन्ये गुणाः स्मृताः ॥” गुणाः —“रीतिकायुगलं रूक्षं तिक्तञ्च लवणं रसे । शोधनं पाण्डुरोगघ्नं क्रमिघ्नं नातिलेखनम् ॥” भा.पू.१भ.धा.व. । अस्य मारणं शोधनञ्च ताम्रवत् ज्ञेयम् । र.सा.सं. । त्रि । पित्तयुक्ते । पित्तला । स्त्री । शालपर्ण्याम् । रा.नि.व.४ । जलपिप्पल्याम् । मे. । पित्तजयोनिव्यापद्विशेषे ।

**पित्तवर्गः** । पुं । पञ्चविधपित्तेषु । तानि च मत्स्यगवाश्वरुरुवर्हिजानि । मतान्तरे वाराह-च्छागमाहिषमात्स्यमायूरजानि । “पित्तं पञ्चविधं मत्स्यगवाश्वरुरुवर्हिजम् ।” इति । र.सा.सं. । “वाराह-छाग-माहिष-मात्स्य-मायूरपित्तजमिति ।” मतान्तरम् । [ निघ. ।

**पित्तवल्लभा** । स्त्री । कृष्णातिविषायाम् । वै.

**पित्तविदग्धदृष्टिः** । पुं । दृष्टिरोगविशेषे । लक्षणं यथा—“पित्तेन दुष्टेन गतेन दृष्टिं पीता भवेद्यस्य नरस्य दृष्टिः । पीतानि रूपाणि च तेन पश्येत् स वै नरः पित्तविदग्धदृष्टिः ॥ प्राप्ते तृतीयं पटलन्तु दोषे दिवा न पश्येन्निशि वीक्षते च । रात्रौ स शीतानुगृहीतदृष्टिः पित्ताल्पभावात् सकलानि पश्येत् ॥” मा.नि. ।

**पित्तवि(वी)सर्पः** । पुं । पित्तजन्यविसर्परोगे । भा. । लक्षणं—“पित्ताद्रुतगतिः पित्तज्वरलिङ्गोऽतिलोहितः ।” मा.नि. ।

**पित्तव्याधिः** । पुं । पित्तजन्यरोगे । भा. ।

**पित्तशूलम्** । क्ली । पित्तजन्यशूलरोगे । लक्षणं —“तृष्णादाहारतिस्वेदकट्वम्ललवणोत्तरम् । शूलं शीतसमप्रायं पैत्तिकं लक्षयेद्बुधः ॥” मा.नि. । “पैत्ते तु शूले वमनं पयोऽम्बु रसैस्तथेक्षोः सपटोल-निम्बैः । शीतावगाहाः पुलिनाः सवाताः कांस्या-दिपात्राणि जलप्लुतानि ॥ गुड़ः शालिर्यवाः क्षीरं सर्पिःपानं विरेचनं । जाङ्गलानि च मांसानि भेषजं पित्तशूलिनाम् ॥” च.द. ।

**पित्तश्लेष्मज्वरः** । पुं । पित्तकफाधिकज्वरभेदे । लक्षणं—“लिप्ततिक्तास्यता तन्द्रा मोहः कासोऽरुचिस्तृषा । मुहुर्दाहो मुहुः शीतं पित्तश्लेष्म-ज्वराकृतिः ॥” मा.नि. ।

**पित्तश्लेष्मोल्वणः** । पुं । पित्तश्लेष्माधिक-सन्निपातविशेषे । लक्षणं यथा,—पित्तश्लेष्माधिको यस्य सन्निपातः प्रकुप्यति । अन्तर्दाहो वहिःशीतं तस्य तृष्णा प्रवर्द्धते ॥ तुद्यते दक्षिणं पार्श्वमुरः-शीर्षगलग्रहाः । ष्ठीवति श्लेष्मपित्तञ्च कृच्छ्रात् कण्ठश्च दूयते ॥ विड्भेदः श्वासहिक्काश्च वर्द्धन्ते सप्रमीलकाः । ऋषिभिर्भल्लुनामायं सन्निपात उदाहृत ।

**पित्तसंशमनवर्गः** । पुं । पित्तशान्तिकरद्रव्य-गणे । यथा—चन्दनकुचन्दनोशीरह्रीवेरमञ्जिष्ठा-पयस्या-विदारि-शतावरी-गुन्द्राशैवालकह्लारकुमुदो-



त्पल-कदली-कन्दली-दूर्व्वा-मूर्व्वाप्रभृतीनि, काकोल्यादिर्न्यग्रोधादिस्तृणपञ्चमूलमिति समासेन पित्त-संशमनोवर्गः । सु.सू.३९अ. ।

**पित्तस्रावः** । पुं । नेत्रसन्धिगतरोगे । लक्षणं यथा—“पीतभासं नीलमुष्णं जलाभं पित्तस्रावं स स्रवेत् सन्धिमध्यात् ।” सु.उ.२अ. । [ निघ. ।

**पित्तहा** । पुं । पर्पटके । त्रि । पित्तघ्ने । हे.

**पित्तहरः** । पुं । काकोल्यादिगणे । सि.यो. तृष्णा-चि. । च.द.छर्द्दि-चि. । उशीरे । वै.निघ. ।

**पित्तातिसारः** । पुं । पित्तजन्यातिसाररोगे । See अतीसारः । [ अ. ।

**पित्तानुबन्धः** । पुं । पित्तानुबन्धे । वा.चि.३

**पित्ताण्डः** । पुं । अश्वस्य अण्डस्कन्दरोगे । ज.द.५,अ. ।

**पित्ताभिष्यन्दः** । पु । सर्व्वगताक्षिरोगभेदे । পিত্তজন্য চোক্ উঠা । यथा—“दाहो धूमायनं शोफः श्यावता वर्त्मनो वहिः । अन्तःक्लेदोऽश्रु-पीतोष्णं रागः पीताभदर्शनम् । क्षारोक्षितक्षता-क्षित्वं पित्ताभिष्यन्दलक्षणम् ॥” वा.उ.१५अ. ।

**पित्तारिः** । पुं । पर्पटे । ক্ষেৎপাপড়া । रा.नि.व.५ । लाक्षायाम् । লাহা । रा.नि.व.६ । वर्व्वरचन्दने । रा.नि.व.१२ ।

**पित्तिका** । स्त्री । शतपदीभेदे । কেন্নুই-বিশেষ । सु.कल्प ८अ. ।

**पित्तोत्क्लिष्टम्** । क्ली । नेत्रवर्त्माश्रयरोगे । लक्षणं यथा—“सदाहक्लेदनिस्तोदं रक्ताभं स्पर्श-नाक्षमं । पित्तेन जायते वर्त्म पित्तोत्क्लिष्टमुशन्ति तत् ॥” वा.उ.८अ. ।

**पित्तोदरम्** । क्ली । पित्तजन्योदररोगे । तस्य लक्षणं यथा—“यत्रोषतृष्णाज्वरदाहयुक्तं पीतं शिरा यत्र भवन्ति पीताः । पीताक्षिविण्मूत्रनखानन-स्य पित्तोदरं तत्त्वचिराभिवृद्धि ॥” सु.नि.७अ. । पुं । मध्यविषवृश्चिकजातौ । सु.कल्प.८अ. ।

**पित्तोल्वणः** । त्रि । पित्ताधिके । वा.चि.७अ. ।

**पित्तोल्वणसन्निपातः** । पुं । आशुकारि-सन्निपातज्वरे । तस्य लक्षणं—“अतीसारो भ्रमो मूर्च्छा मुखपाकस्तथैव च । गात्रे च विन्दवो रक्ता दाहोऽतीव प्रजायते । पित्तोल्वणस्य लिङ्गानि सन्निपातस्य लक्षयेत् ॥” भा.म.१भ. ।

**पित्वर्हः** । पुं । माषकलाये । मे. ।

**पित्वम्** । क्ली । मधुनि । रा.नि.व.१४ । पुं । माषे । माषकलाये । रा.नि.व.१६ ।

**पित्सन्** । पुं । पक्षिणि ।

**पिनसः** । पुं । नासारोगे, अपीनसे । निदा. ।

**पिनाकः** । पुं, क्ली । तन्नामकनीलाभ्रभेदे । वै.निघ. । See अभ्रम् ।

**पिन्यासः** । पुं । हिङ्गुनि । जटा. ।

**पिपासा** । स्त्री । तृष्णायाम् । रा.नि.व.२० । अत्र यवागूः मृद्वीकादिसिद्धा प्रशस्ता । च.सू.२अ. ।

**पिपासुः** । त्रि । तृष्णातुरे ।

**पिपिली** । स्त्री । पिपीलिकायाम् । वै.निघ. ।

**पिपीलकः** । पुं । कृष्णवर्णमहापिपीलिका-याम् । বড় ডেঁয়ো পিপড়ে । हे.च. ।

**पिपीलिका (ली)** । स्त्री । पिपिल्याम् । পিপড়া । ताः षड्विधाः—स्थूलशीर्षा संवाहिका ब्राह्मणिका अङ्गुलिका कपिलिका चित्रवर्णेति । ताभिर्दष्टे दंशे श्वयथुरग्निस्पर्शवद्दाहशोफौ भवतः । सु.कल्प.८अ. ।

**पिप्पटा** । स्त्री । शर्करायाम् । वै.निघ. । गुड़-शर्करायाम् । त्रिका. ।

**पिप्पलः** । पुं । अश्वत्थवृक्षे । र.मा. । वा.सू. १५अ.न्यग्रोधादिः । पक्षिविशेषे । मे. । क्ली । जले । त्रिका. ।

**पिप्पलकः** । पुं, क्ली । स्तनाग्रे । मे. । च.शा. ८अ. । सीवनसूत्रे । मे. ।

**पिप्पलपर्णी** । स्त्री । मेषशृङ्ग्याम् । वै.निघ. ।

**पिप्पलिः (ली)** । स्त्री । (piper longum. Syn. Chavica Roxburghii.) Long pepper. स्वनामख्यातपण्यद्रव्यं । পিপুল গাছ । हिं पीपर । मं पिप्पली । कं हिप्पली । तें पिप्पलिचेट्टु । वम्. वङ्गाग्निपिंपरि । ता. त्रिपिलि । तत्पर्य्यायाः,—कृष्णा उपकुल्या वैदेही मागधी चपला कणा उषणा ऊषणा शौण्डी कोला कटी एरण्डा चञ्चला कोल्या मगधा तीक्ष्णतण्डुला ककला कटुवीजा कोरङ्गी तिक्ततण्डुला श्यामा सूक्ष्मतण्डुला दन्तफला मगधोद्भवा । पिप्पली वनपिप्पली गजपिप्पली सिंहपिप्पली चेति बहुधा । गुणाः स्वस्वपर्य्याये मृग्याः ।

सा गुणा:—ज्वरघ्नी वृष्या तिक्तोष्णा कटुः तिक्ता दीपनी मारुतश्वासकासश्लेष्मक्षयघ्नी च। रा.नि.व. ६। आर्द्र पिप्पली कफकरी स्निग्धा शीतला मधुरा गुरुः पित्तघ्नी च। शुष्का सा पित्तकोपनी। मधुना सा मेदोवृद्धिकफश्वासकासज्वरघ्नी मेधाग्निवृद्धिकरी च। गुड़ेन सा जीर्णज्वराग्निमान्द्यहरी। तत्र भागैकं पिप्पल्या भागद्वयञ्च गुड़स्येति वृद्धाः। भा. पू.१भ। कटुका पित्तं शमयति मृदुशीतवीर्य्यत्वात्। सु.सू ४०।४६अ.। प्लक्षवृक्षे। मद.व.५। अश्वत्थिकायाम्। गश्रा अशथ। रा.नि.व.११। कर्णगतरोगे। लक्षणं—"एको नीरुगनेको वा गर्भे मांसाङ्कुरः स्थिरः। पिप्पली पिप्पलीमान:...... ...॥" वा.उ.१७अ.। [পাকুড়।

**पिप्पलीका**। स्त्री। क्षुद्रप्लक्षवृक्षभेदे। ছোট-

**पिप्पलीखण्डः**। पुं। See खण्डपिप्पली।

**पिप्पलीद्वयम्**। क्ली। पिप्पली गजपिप्पली चेति द्वये। च.द.कफज्व.चि.निम्बादिः।

**पिप्पलीमूलम्**। क्ली। स्वनामख्यातक्षुद्रलतामूले। পিপুলমূল। मं पिंपलीमूल। कं हिप्पलियबेरु। तें पिप्पलीदुम्प। तत्पर्य्याया:,—ग्रन्थिकं चटिका चटकाशिरः चटिकाशिरः सर्व्वग्रन्थिकं षड्ग्रन्थिः शिरः मूलं कटुग्रन्थि कटूषणं कोलमूलं सर्व्वग्रन्थि पवाढ्यं विरूपं शोषसम्भवं सुगन्धि ग्रन्थिलं। गुणा:—कटूष्णं श्लेष्मकृमिघ्नं दीपनं वातरोगघ्नं रोचनं पित्तकोपनञ्च। रा.नि.व.६। रोचनं कटूष्णं लघु भेदि कफवातोदरघ्नम् आनाहप्लीहगुल्मघ्नं श्वासक्षयहरञ्च। भा.। च.द.। "मृद्वीकापिप्पलीमूलचव्यचित्रकनागरैः।"

**पिप्पलीरसायनम्**। क्ली। मेधाकररसायनविशेषे। "तिस्रस्तिस्रस्तु पूर्व्वाह्णे भुक्ताग्रे भोजनस्य च। पिप्पल्यः किंशुकक्षारभाविता घृतभर्ज्जिताः। प्रयोज्या मधु-सर्पिर्भ्यां रसायन-गुणैषिणा॥" च.चि.१अ.।

**पिप्पलीवर्द्धमानम्**। क्ली। रसायनविशेषे। यथा—प्रथमदिने दश पिप्पलीतण्डुलं दुग्धेनारभ्य प्रतिदिनं दश दश दशाहपर्य्यन्तं वर्द्धयेत्। अथ क्रमेण प्रत्यहं दश दश ह्रासयित्वा पुनर्नवाह्निकं यावत् पूर्व्ववत् दुग्धेन सेवेत, प्रतिदिनञ्च औषध पाके सति सघृतदुग्धं षष्टिकान्नं भक्षयेत्। इति उत्तमस्य मात्रा। मध्यस्य षट्, हीनस्य त्रीणि च मात्रा। च.चि.१अ.।

**पिप्पल्यादिकषायः**। पुं। पिप्पल्यादिगणसिद्धे कफपाचनकषाये। सु.। १। पिप्पलीमूलगुडूचीविश्वभेषजसिद्धे कषाये वातज्वरे हिते। वा.चि.१अ.। २। पिप्पली शारिवा-द्राक्षा-शतपुष्पा-हरेणुभिः कृते कषाये वातज्वरे हिते। च.द.।

**पिप्पल्यादिगणः**। पुं। गणोऽयं वातकफहरः दीपनश्च। "पिप्पलीपिप्पलीमूलचव्यचित्रकशृङ्गवेरमरिचहस्तिपिप्पलीहरेणुकैलाजमोदेन्द्रयवपाठाजीरकसर्षपमहानिम्बमदनफलहिङ्गुभार्गीमूर्व्वातिविषावचाविड़ङ्गानि कटुरोहिणी चेति।" सु. सू.३८अ.।

**पिप्पल्याद्यघृतम्**। क्ली। शूले घृतम्। गव्यघृतं ४ श.। क्वाथार्थं—पिप्पली ४ श. वारि ६४ श. शे. १६ श.। कल्कार्थं—पिप्पली १ श.। अन्यत्सन्निपातज्वरे—गव्यघृतं ४ श.। कल्कार्थं—पिप्पली रक्तचन्दनं मुस्तम् उशीरं कटुकी इन्द्रयवः भूम्यामलकी अनन्तमूलम् अतिविषा शालपर्णी द्राक्षा आमलकं बिल्वमूलत्वक् त्रायमाणा (বলা ডুমুর) फटिकारी, एषां प्रति २ तो. वारि १६ श.। रस.र.।

**पिप्पल्याद्यलेहः**। पुं। हिक्कायाम् कासे च लेहः। "पिप्पल्यामलकीद्राक्षाकोलास्थिमधुशर्करा-विड़ङ्गपुष्करैर्युक्तो लेहो हन्ति सुदुर्ज्जयम्॥" रस.चि.। रस.र.। अन्यः उदरे—"पिप्पलीमूलपिण्डाभविकतयेन्दुसैन्धवैः। योजितो नियतं हन्ति लेहः सर्व्वोदरामयम्॥" पिण्डाभः गन्धरसः। इन्दुः कर्पूरं। सर्व्वसमं लौहचूर्णं ग्राह्यम्। रस.र.।

**पिप्पिका**। स्त्री। दन्तमले। त्रिका.।

**पिप्रुः**। पुं। जतुमणौ। জড়ুল। च.द.१अ।

**पिम्परिः**। पुं। क्षुद्रप्लक्षे। रा.नि.व.११।

**पियारकम्**। क्ली। स्वनामख्यातफले। পেয়ারা ফল। अर्क.।

**पियालः**। पुं। (Buchanania latifolia.) स्वनामख्यातमहातरौ। अस्य बीजं चिरौञ्जीति लोके। পিয়াশাল। हिं नियवेरु। मं चारोली। पञ्जा. चिरोली। उत्. चरु। ता. काटमरा। तत्पर्य्याया:,—राजादनं धनुष्पटः राजातनं राजातनः सन्नः कद्रुः सन्नकद्रुः धनुः पटः क्षुद्रसन्नकः धनुःपटः प्रियालः प्रियालकः खरस्कन्धः चारः बहुलवल्कलः तापसेष्टः। सु.सू.३८अ.। वा.सू.



१५अ. न्यग्रोधादिः। बीजगुणा:—गुरु सरं दाहज्वरतृष्णाघ्नं। रा.नि.व.११। मधुरं स्निग्धं वृंहणं वात पित्तघ्नञ्च। राज.। च.सू.२४अ.। तैलं बिभीतकतैलगुणं। पियालमज्जा मधुरो वृष्यः वातपित्तघ्नश्च। सु.सू.४६अ.। अस्य निर्यासः उदरामयघ्नः ग्रीवामांसग्रन्थिशोफे च हितः। See अखट्टः।

**पियालास्थिजः**। पुं। पियालफलमज्जायाम्। পিয়াল আঁটীর শস্য। भैष.शूलचि.पूगखण्डे।

**पिरजम्**। क्ली। पेरोजेतिख्याते उपरत्नभेदे। See पेरोजम्।

**पिलिपिच्छिका**। स्त्री। शिशोमातृकाग्रहभेदे। या एकादशे दिने मासि वर्षे वा गृह्णाति। तेन बालस्य ज्वरगात्रभङ्गादिर्भवति। च.द.बालरोग.चि.।

**पिलुकः**। पुं। पीलुवृक्षे। श.र.।

**पिलुनी (पर्णी, पत्री)**। स्त्री। मूर्व्वायाम्। मोरटायाम्। र.मा.।

**पिल्लः**। पुं। क्लिन्ननेत्ररोगे। अम.। वा.उ.१६अ.।

**पिल्लका**। स्त्री। करेणुकायाम्। श.मा.।

**पिशङ्गः**। पुं। पिङ्गलवर्णे।

**पिशाचः (ग्रहः)**। पुं। भूतग्रहविशेषे। पिशाचग्रहलक्षणं यथा—"उद्धस्तः कृशपरुषोऽचिरप्रलापी दुर्गन्धो भृशमशुचिस्तथातिलोलः। बह्वाशी विजनवनान्तरोपसेवी व्याचेष्टन् भ्रमति रुदन् पिशाचजुष्टः॥" मा.नि.।

**पिशाचघ्नः**। पुं। श्वेतसर्षपे। प.मु.।

**पिशाचद्रुः (वृक्षः)**। पुं। शाखोटवृक्षे। শেওড়া গাছ। त्रिका.। र.मा.।

**पिशाचिका (ची)**। स्त्री। सूक्ष्म-जटामांस्याम्। See आकाशमांसी।

**पिशितम्**। क्ली। मांसे। रा.नि.व.१८। स्त्री। जटामांस्याम्। रा.नि.व.१२।

**पिशितरोहिणी**। स्त्री। मांसरोहिण्याम्। वै.निघ.।

**पिशितोदकम्**। क्ली। कुङ्कुमे। वै.निघ.।

**पिशिनी (ता), पिशी**। स्त्री। जटामांस्याम्। रा.नि.व.१२।

**पिशीतकः**। पुं। गोधूमे। वै.निघ.।

**पिशुः (ना)**। स्त्री। स्पृक्कायाम्। गन्धद्रवा। रा.नि.व.१२। (ना) ग्रन्थिपर्णे। গেঁঠেলা। वै.निघ.।

**पिशुनम्**। क्ली। कुङ्कुमे। रा.नि.व.१२। मे.। पुं। तगरे। काके। कार्पासे। वै.निघ.। त्रि.। क्रूरे।

**पिशूनः**। पुं। काके। स्त्री। (ना) स्पृक्कायाम्।

**पिष्ट(क)म्**। क्ली। शीषके। शीষ। अस्थिभङ्गविशेषे। सु.। पुं। नन्दिवृक्षे। वै.निघ.। तिलकल्के। তিলকুটা। रा.नि.व.१६। पुं, क्ली। शुक्लगताक्षिरोगभेदे। लक्षणम्—"उत्सन्नः सलिलनिभोऽथ पिष्टशुक्लो बिन्दुर्यः स भवति पिष्टकः सुवृत्तः।" सु.उ.४अ.। "श्लेष्ममारुतकोपेन शुक्ले मांसं समुन्नतं। पिष्टवत् पिष्टकं विद्धि मलाक्तादर्शसन्निभम्॥" भा.म.४भ.। तण्डुलचूर्णादिकृत भक्ष्यद्रव्यविशेषे। পিটে। तत्पर्य्याया:,—पूपः अपूपः आपूपः पिष्टः। सा. गुणा:—"पिष्ट प्राणकरं रुक्षं विदाहि गुरु दुर्जरम्।" शालितण्डुलपिष्टकगुणा:—"शालिपिष्टमया भक्ष्याः कफपित्तविनाशनाः।" वैदलकृतपिष्टगुणा:—"वैदला गुरवो भक्ष्या विष्टम्भिसृष्टमारुताः।" गुड़ादिकृतपिष्टगुणा:—"सगुड़ाः सतिलाश्चैव सक्षौद्रक्षीरशर्कराः। भक्ष्या हृद्याश्च बल्याश्च गुरवो वृंहणाः पराः॥" स्नेहसिद्धगोधूमकृतभक्ष्यगुणा:—"सस्नेहाः स्नेहसिद्धाश्च भक्ष्या गोधूमसम्भवाः। गुरवस्तर्पणा हृद्या बलोपचयवर्द्धनाः॥" राज.३प.।

**पिष्टका**। स्त्री। पिष्टद्विदले। ডাইল বাঁটা।

**पिष्टपर्णी**। स्त्री। पृश्निपर्ण्याम्। पिठाकरञ्ज इति-ख्याते करञ्जभेदे।

**पिष्टपचनम्**, **पिष्टपाकभृत्** } क्ली। पिष्टकपचनपात्रे। তেলানী। अम. टी.च.।

**पिष्टपाचकः**। त्रि। पिष्टकपाककारिणि।

**पिष्टपायसः**। पुं, क्ली। कृशरायाम्। খিচুড়ী। प.मु.।

**पिष्टपूरः**। पुं। घृतभर्जितगोधूमकृतखाद्यद्रव्ये। পূরপিটে। वटके। বড়া। त्रिका.।

**पिष्टमेहः**। पुं। प्रमेहरोगविशेषे। अत्र नरः सपुलकं पिष्टरसतुल्यं मेहति। लक्षणं—"संहृष्टरोमा पिष्टेन पिष्टवद्बहुलं सृतम्।" मा.नि.।

**पूततृण: (दर्भ:)** । पुं । सितदर्भे । শ্বেত কুশ। रा.नि.व.८।

**पूतद्रु:** । पुं । पलाशवृक्षे । रा.नि.व.१० ।

**पूतधान्यम्** । क्ली । तिले । रा.नि.व.१६ । यवे ।

**पूतन:** । पुं । गुदकुन्दरोगे । वा.उ.२अ. । See गुदकुन्द: ।

**पूतना** । स्त्री । गन्धमांस्यां । সুগন্ধজটামাংসী । रा.नि.व.१२ । स्वल्पत्वचि हरीतक्याम् । रा.नि.व. ११ । भा.पू. । च.द. । सि.यो.अ.ध्मा.चि.महापैशाचघृते । इयं सिन्धुदेशजा लेपे शस्ता च । राज. । बालग्रहविशेषे ।

**पूतनाकेशी** । स्त्री । सुगन्धजटामांस्याम् । भूतकेशीति लोके । च.द. ।

**पूतनी** । स्त्री । (Metha arvensis. Syn. M. Sativa.) Marshmint. स्वनामख्यातसुगन्धशाके । पुदिना इति सर्व्वत्र । পুদিনা শাক । प.सु. । गुणा:—कामलाहरी अरोचकघ्नी मूर्च्छाघ्नी वमिघ्नी । शुष्कवृक्ष: स्निग्धताकर: आग्नेय: उत्तेजकश्च । बालरोगविशेषे । পূতনাগ্রহ । लक्षणं यथा—"स्रस्ताङ्ग: स्वपिति सुखं दिवा न रात्रौ विड्भिन्नं स्रजति च काकतुल्यगन्धि: । छर्द्यार्त्तो हृषिततनूरुह: कुमार: तृष्णालुर्भवति च पूतनागृहीत: ॥" सु.उ.२७अ. । तृतीये दिवसे मासे वर्षे वा गृह्णाति पूतना नाम मातृका । तया गृहीतमात्रेण प्रथमं भवति ज्वर: । गात्रमुद्वेजयति स्तन्यं न गृह्णाति दृष्टिं बध्नाति क्रन्दति ऊर्द्ध्वं निरीक्षते च । च.द. ।

**पूतपत्री** । स्त्री । तुलसीवृक्षे । रा.नि.व.१० ।

**पूतफल:** । पुं । पनसवृक्षे । কাঁটাল গাছ । रा.नि.व.११ ।

**पूतवृक्ष:** । पुं । उदुम्बरवृक्षे ।

**पूता** । स्त्री । नीलदूर्व्वायाम् । रा.नि.व.८ । तुलसीवृक्षे । वै.निघ. ।

**पूति:** । स्त्री । गन्धमार्जाराण्डे । थाटाशी । भैष. वाजी. श्रीगोपालतैले । सि.यो.यक्ष्म.चि.चन्दनाद्यतैले । क्ली । कुतृणे । গন্ধ তৃণ । रा.नि.व.८ । दुर्गन्धे । अ.टी.रा. ।

**पूतिकम्** । क्ली । पुरीषे । रा.नि.व.१८ ।

**पूति(ती)क:** । पुं । करञ्जविशेषे । नाटाकरञ्ज । रा.नि.व.९ । च.द.वा.व्या.चि.विष्णुतैले । हि.श्वास. चि. हिंस्राद्यघृते । वै.निघ.२भ.अ.सा.चि. पूतिकादिकल्के, कन्दर्पसारतैले । सु.कुष्ठ.चि.९ अ. । भा.४भ.कर्णकाज्व.चि. । नैगमेषग्रहचि. । प्रसारण्याम् । सा.कौ.शालसारादि: । घृतकरञ्जे । वै.निघ. । गन्धमार्जाराण्डे । थाटाशी । रा.नि.व. १९ । क्ली । विष्ठायाम् । रा.नि.व.१८ ।

**पूतिकजा** । स्त्री । गन्धमार्ज्जाराण्डे । थाटाशी । वै.निघ. ।

**पूतिकण्टक:** । पुं । इङ्गुदीवृक्षे । वै.निघ. ।

**पूतिकन्या** । स्त्री । पूतिकायाम् । পুদিনা শাক । प.सु. ।

**पूति(ती)करज: (ञ्ज:)** । पुं । (Guilandina Bonduc or Caesalpinia bonducella.) करञ्जवृक्षविशेषे । নাটাকরঞ্জা গাছ । हिं कंटकरेजा । बम्. सागरगोटा । ता. पेच्चाककाय । तत्पर्य्याया:,—प्रकीर्य्य: पूतिकरज: पूतिक: पूतीक: कलिकारक: कलिमालक: कलहनाशन: कलिमारक: प्रकीर्ण: रजनीपुष्प: सुमना: पूतिकर्णिक: पूतिकाह्व: पूतिपर्ण: कैडर्य्य: कलिमाल्य: । गुणा:—"करञ्ज: कटुतिक्तोष्ण: विषवातार्त्तिकृन्तन: । कण्डूविचर्च्चिकाकुष्ठस्पर्शत्वग्दोषनाशन: ॥" रा.नि. व.९ । तत्पत्रगुणा:—"शोफघ्नमुष्णवीर्य्यन्तु पत्रं पूतिकरञ्जजम् ।" सु.सू. । अस्य बीजं—बल्यम् । तन्मज्ज—ज्वरघ्नं बल्यं लेपनेन अण्डवृद्धौ हितं शोथहरं रक्तस्रावरोधकम् उष्णं नीरसं कुष्ठघ्नञ्च । पत्रमपि तद्गुणं । केचित् । कण्टकीकरञ्जे । কাঁটাকরম্চা । च.द.श्ली.चि. ।

**पूतिकर्ण: (क:) (र्णिक:)** । पुं । पूतिकरञ्जे । নাটাকরঞ্জা । रा.नि.व.९ । कर्णरोगविशेषे, कर्णपाकेन पूतिगन्धकर्णरोगे । কাণ পাকা বা পচা । लक्षणं—"अवेदनो वाप्यथवा सवेदनो घनं स्रवेत् पूति स पूतिकर्णक: ।" सु.उ.२०अ. । "कर्णविद्रधिपाकेन कर्णे वा वारिपूरणात् । पूयं स्रवति यत् पूति स ज्ञेय: पूतिकर्णक: ।" भा. ४भ. । [ वै.निघ. ।

**पूतिकर्णी** । स्त्री । वाकुच्याम् । সোমরাজ ।

**पूति(ती)का** । स्त्री । वाकुच्याम् । নাটাকরঞ্জা । वै.निघ.२भ.सर्व्वज्व.चि.महाषट्पलकघृते । भैष.महारुद्रतैले । उपोदिकायाम् । পুঁইগাছ ।



अ.टी.भ. । जवादिकस्तूरिकायाम् । थाटाशी । भैष.वा.व्या.चि.हिमसागरतैले ।

**पूतिकामक्षिका** । स्त्री । पृथुमधुमक्षिकाविशेषे । ডাঁশ মাছি । वै.निघ. ।

**पूतिकामुख:** । पुं । शम्बूके । श.मा. ।

**पूतिकाष्ठ(क)म्** । क्ली । देवदारुणि । দেবদারু । रा.नि.व.१२ । सरलकाष्ठे । श.च. ।

**पूतिकाह्व:** । पुं । पूतिकरञ्जे । वै.निघ ।

**पूतिकीट:** । पुं । कीटविशेषे । পেদো পোকা । भैष.कुष्ठ.चि. । "पूतिकीटविलेपनात् ।"

**पूतिकेसर:** । पुं । गन्धमार्जारे । खाटाशीति लोके । थाटाशी । चन्दनादितैले प्रयोज्य: ।

**पूतिगन्ध:** । पुं । इङ्गुदीवृक्षे । रा.नि व.८ । गन्धके । क्ली । रङ्गधातौ । रा.नि.व.१३ । सुगन्धतृणे । वै.निघ. ।

**पूतिगन्धा** । स्त्री । सोमराज्याम् । प्रसारण्याम् । भादालियेति प्रयोगामृते मानकथने । "ता: पूतिगन्धामृत: ।" [ च्याम् । रा.नि.व.४ ।

**पूतिगन्धिका** । स्त्री । पूतिकायाम् । वाकु-

**पूतिघस:** । पुं । सुगन्धमार्जारे । গন্ধ গোকুল । सु.सू.४६अ. । अयं पर्णमृगगुण: । See पर्णमृग: ।

**पूतितैला** । स्त्री । ज्योतिष्मतिलतायाम् । বন উচ্ছে । লতা ফট্কী । र.सा.सं. । See पारावतपदी । भैष.ज्वरकुञ्जरपारीन्द्ररसे ।

**पूतिद:** । पुं । तरुविड़ाले । গেছো বিড়াল, কাঠ বিড়াল । वै.निघ. ।

**पूतिदला** । स्त्री । तेजपत्रे । তেজপাত । च.द.वा.व्या.चि.एलातैले ।

**पूतिनस्यम् (नास:)** । क्ली, पुं । नासारोगभेदे । लक्षणं यथा—"दोषैर्विदग्धैर्गलतालुमूले संवासितो यस्य समीरणस्तु । निरेति पूतिर्मुखनासिकाभ्यां तत् पूतिनस्यं प्रवदन्ति रोगम् ॥" सु.उ.२२अ. । "तालुमूले मलैर्दुष्टैर्मारुतो मुखनासिकात् । श्लेष्मा च पूतिर्निर्गच्छेत् पूतिनासं वदन्ति तम् ॥" वा.उ.१९अ. ।

**पूतिपत्र:** । पुं । पृथुशिम्बश्योणाकवृक्षे । বড় শোণা গাছ । रा.नि.व.९ । पीतलोध्रे । वै.निघ. ।

**पूतिपत्रिका** । स्त्री । प्रसारण्याम् । গন্ধভাদুলিয়া ।

**पूतिपर्ण:** । पुं । करञ्जवृक्षे । ডহরকরঞ্জা গাছ । रा.नि.व.९ । इङ्गुदीवृक्षे । वै.निघ. ।

**पूतिपल्लवा** । स्त्री । राजसुषव्याम् । গয়াকরলা । प.सु. । [ प.सु. ।

**पूतिपुष्प:** । पुं । इङ्गुदीवृक्षे । জিয়াপুতা ।

**पूतिपुष्पिका** । स्त्री । मधुमातुलुङ्गवृक्षे । মো-টাবা । प.सु. ।

**पूतिफल: (ला) (ली)** । पुं, स्त्री । सोमराज्याम् । प.सु. । अम. ।

**पूतिमज्जा** । स्त्री । इङ्गुदीवृक्षे । वै.निघ. ।

**पूतिमयूर(रि)का** । स्त्री । अजगन्धायाम् । रा.नि.व.४ । वन्यतुलस्याम् । वै.निघ. ।

**पूतिमारुत:** । पुं । कर्कन्धौ । रा.नि.व.२३ । विल्ववृक्षे । वै.निघ. ।

**पूतिमांसम्** । क्ली । दुर्गन्धमांसे, पर्य्युषितमांसे । गुणा:—सद्य: प्राणहरम् । राज.४प. ।

**पूतिमूषिका** । स्त्री । छुछुन्दर्य्यां । वै.निघ. ।

**पूतिमेद:** । पुं । अरिमेदे । বিট্‌খদির । रा.नि.व.८ । [ वै.निघ. ।

**पूतियुग्दला** । स्त्री । गन्धतृणे, रोहिषतृणे ।

**पूतियोनि:** । पुं । उपप्लुतानामके योनिरोगे । च.द. ।

**पूतिरक्त:** । पुं । नासारोगभेदे । निदा. ।

**पूतिवर्वरी** । स्त्री । वनतुलस्याम् । वै.निघ. ।

**पूतिवात:** । पुं । विल्ववृक्षे । र.मा. ।

**पूतिवृक्ष:** । पुं । श्योणाकवृक्षे । प.सु. ।

**पूतिशाक:** । पुं । वकवृक्षे । प्र.सु. ।

**पूतिशारिजा** । स्त्री । गन्धखट्टासे । थाटाशी । विका. ।

**पूती** । स्त्री । पूतीकरञ्जे । वा.उ.३अ. ।

**पूतीकद्वयम्** । क्ली । करञ्जद्वये । করঞ্জা, নাটাকরঞ্জা । भैष.शोथ.चि.वृहच्छुष्कमूलाद्यतैले ।

**पूतीकपत्रम्** । क्ली । करञ्जपत्रे । করঞ্জা পাতা । च.द.गुल्म.चि. ।

**पूतीकप्रवाल:** । पुं । करञ्जपल्लवे । कण्टकिकरञ्जपल्लवे । सु.सू.११अ. ।

**पूत्यण्ड:** । पुं । कस्तूरीमृगे । मे. । गन्धकीट । গঁদোপোকা । मे. ।

**पूयः** । पुं । पिष्टके । अम. । चुद्रपनसे । আনারস । वै.निघ. ।

**पूपला** । स्त्री । पिष्टकविशेषे । বড়া । है.च. ।

**पूपलिका** । स्त्री । पिष्टकविशेषे । পুলীবিশেষ । सा गुरुः पुष्टिकरी च । च.चि.२अ । च.सू.२७अ. ।

**पूपालिका (ली) (पि[लि]का)** । स्त्री । पिष्टकविशेषे । त्रिका. । है.च. । सु.चि.२६अ. । रावणकृतकुमारतन्त्रे ।

**पूय(न)म्** । क्ली । पुँजइतिख्याते क्लेदे । পূঁজ । श.च. । पूयकरगणः यथा—"तक्रान्तैर्नवधान्यादिर्योऽयं वर्ग उदाहृतः । दोषसंजननो ह्येषो विज्ञेयः पूयवर्द्धनः ॥" सु. ।

**पूयरक्तः** । पुं, क्ली । नासारोगविशेषे । तल्लक्षणं यथा—"दोषैर्विदग्धैरथवापि जन्तोर्ललाटदेशेऽभिहतस्य तैस्तु । नासा स्रवेत् पूयमसृग्विमिश्रं तं पूयरक्तं प्रवदन्ति रोगम् ॥" सु.उ.२२अ. । "निचयादभिघाताद्वा पूयासृङ्नासिका स्रवेत् । तत् पूयरक्तमाख्यातं शिरोदाहरुजाकरम् ॥" वा.उ. १९अ. ।

**पूयशोणितः** । पुं । पूयरक्तरोगे ।

**पूय(या)स्रावः** । पुं । नेत्रसन्धिगतरोगविशेषे । চক্ষে পূঁজ পড়া । तल्लक्षणं—"पाकः सन्धौ संस्रवेद्यश्च पूयं पूयास्रावो नैकरूपः प्रदिष्टः ।" सु.उ.२अ. । अश्वस्य नेत्ररोगविशेषे । ज.द.३०अ. ।

**पूयारिः** । पुं । निम्बवृक्षे । श.च. ।

**पूयालसः** । पुं । नेत्रसन्धिगतरोगे । लक्षणं यथा—"पक्वः शोफः सन्धिजः संस्रवेद्यः सान्द्रं पूयं पूति पूयालसः सः ।" सु.उ.२अ. ।

**पूयासम्** । क्ली । पूये । वै.निघ. ।

**पूरः** । पुं । मातुलुङ्गवृक्षे, वीजपूरवृक्षे । টাবা লেবুর গাছ । प.मु. । खाद्यद्रव्यभेदे । पूर्‌लिका. । क्ली । दाहागुरुणि । रा.नि.व.१२ ।

**पूरकः (काह्वः)** । पुं । मातुलुङ्गवृक्षे । "मातुलुङ्गे तु पूरकः ।" रा.नि.व.११।२३ । वै.निघ. । क्ली । वीजपूरकफले । सि.यो.मदा.चि. ।

**पूरणम्** । क्ली । वस्तिनेत्रप्रभृतिभिर्यन्त्रैः कर्णादौ तैलादिपूरणकर्म्मणि । सु.सू.७अ. । सुगन्धवृणे । नागरमुस्तायाम् । श.मा. । पूरणार्थं पक्वतैले । वायुजन्यव्रणवेदनाविशेषे । सु.सू.२२अ. । पुं । पुनर्नवायाम् । रस.चि.९अ.शिड्विसारलौहे । विष्णुतैले । धरणि. ।

**पूर(रि)णी** । स्त्री । शाल्मलीवृक्षे । अम. ।

**पूराम्लम्** । क्ली । वृक्षाम्ले । তেঁতুল । रा.नि.व.६ ।

**पूरि(लि)का** । स्त्री । पूरभरितापूपे । বড়া, কচুরী প্রভৃতি । तत्साधनं यथा—"माषाणां पिष्टिकां युञ्ज्यात् लवणार्द्रकहिङ्गुभिः । तया पिष्टिकया पूर्णा समिता कृतपोलिका । ततस्तैलेन पक्वा सा पूरिका कथिता बुधैः ॥" गुणाः—रुच्या स्वाद्वी गुरुः स्निग्धा बल्या पित्तास्रदूषिका । चक्षुस्तेजोहरी चोष्णा पाके वातविनाशिनी । तथैव घृतपक्वापि चक्षुष्या रक्तपित्तहृत् ॥" भा.पू.२भ. ।

**पूरितम्** । क्ली । अन्ने । वै.निघ. ।

**पूरुषः** । पुं । मनुष्ये, पुरुषे । वै.निघ. ।

**पूर्णकः** । पुं । ताम्रचूडे । মোরগ । मे. ।

**पूर्णकोषा** । स्त्री । यत्पिष्टमयभक्ष्यद्रव्ये । পূরপুলি । सु.चि.१०अ. ।

**पूर्णकोष्टा (ष्ठा)** । स्त्री । नागरमुस्तायाम् । रा.नि.व.६ ।

**पूर्णगर्भा** । स्त्री । पूरणपोलिकायाम् । পূর-পিটে । वै.निघ. ।

**पूर्णचन्द्र(र्णाभ्र)रसः** । पु । ग्रहण्यां रसः । पाठः—"सूतगन्धश्चाश्वगन्धा गुडूचीं यष्टीतोयैर्मर्द्दयेदेकघस्रम् । चुद्रं शङ्खं मौक्तिकं लौहकिट्टं भस्मीभूतं सूततुल्यञ्च दद्यात् । भूकुष्माण्डैर्वासरं तद्विमर्द्दाङ्गोलङ्कृत्वा भूधरे तं पुटेत्तु । चूर्णङ्कृत्वा नागवल्लीरसेन दद्यादेवं मर्द्दयित्वैकमाषम् । मध्वाज्याभ्यां पूर्णचन्द्रं रसेन्द्रम्...... ॥" रस.चि. । अन्यः पूर्णचन्द्रोरसायने—कज्जलिः लौहं अभ्रं प्र. ८ तो. रौप्यभस्म २ तो. वङ्गं ४ तो. स्वर्णं ताम्रं कांस्यञ्च प्र. १ तो. जातीफलं लवङ्गं त्वक् एला जीरकं कर्पूरं प्रियङ्गुः मुस्तकं प्र. १ तो. । कुमारीत्रिफलैरण्डरसैर्भावयित्वा एरण्डपत्रैरावेष्ट्य धान्यराशौ ३ दिनं स्थाप्यम् । वटी चणाभा । भैष. ।

**पूर्णपर्णी** । स्त्री । पृश्निपर्ण्याम् ।

**पूर्णवीजः** । पुं । मातुलुङ्गवृक्षे । रा.नि.व.११ ।

**पूर्णिका** । स्त्री । नासाच्छिन्नीपक्षिणि । त्रिका. ।

**पूर्थ्यः (र्व्वः)** । पुं । तूतवृक्षे । वै.निघ. ।



**पूर्व्वकर्म्म** । क्ली । रोगोत्पत्तेः प्राक् तत्तद्व्याधिं प्रति यदादौ क्रियते कर्म्म तस्मिन् । त्रिविधकर्म्माद्यकर्म्मणि । तानि च पूर्व्वपश्चात् प्रधानरूपाणि त्रीणि । तत्र शल्यतन्त्रे शस्त्रकर्म्म, काये लङ्घनादिविरेकान्तं कर्म्म, संशोध्यस्य पाचनं स्नेहनं स्वेदनञ्चेति । सु.सू.५अ. ।

**पूर्व्वमारुतः** । पुं । पूर्व्वदिग्भववायौ ।

**पूर्व्वरूपम्** । क्ली । भाव्यामयसूचके न तु दोषविशेषसूचके चिह्ने । तच्च द्विविध सामान्यविशेष भेदेन । "पूर्व्वरूपन्तु तद्येन विद्याद्भाविनमामयम् । सामान्यं तत दोषाणां विशेषैरनधिष्ठितं । विशिष्टदोषव्यक्तं स्यात् विशेषैश्च समन्वितम् । पूर्व्वरूपं विशिष्टं स्यात् व्यक्तं तल्लक्षणं स्मृतम् ।" भा. । "प्राग्रूपं येन लक्ष्यते । उत्पित्सुरामयो दोषविशेषेणानधिष्ठितः । लिङ्गमव्यक्तमल्पत्वाद्व्याधीनां तद्यथायथम् ॥" मा.नि. ।

**पूर्व्ववायुः** । पुं । पूर्व्वदिग्भवमारुते । পূবে হাওয়া । गुणाः—"पूर्व्वः सुमधुरः स्निग्धो लवणश्चैव मारुतः । गुरुर्विदाहजननो रक्तपित्ताभिवर्द्धनः । चतानां विषजुष्टानां व्रणिनः श्लेष्मलाश्च ये । तेषामेव विशेषेण सदा रोगविवर्द्धनः । वातलानां प्रशस्तश्च श्रान्तानां कफशोषिणाम् । तेषामेव विशेषेण व्रणक्लेदविवर्द्धनः ॥" सु.सू.२०अ. ।

**पूर्व्वसन्ध्या** । स्त्री । प्रातःकाले ।

**पूर्व्वाग्रः (ग्र्यः)** । पुं । लाजायाम् । খই । श.चि. ।

**पूर्व्वाह्णः** । पुं, क्ली । अह्नः पूर्व्वभागे, अयञ्च भागः वसन्तलक्षणसूचकः । सु.सू.६अ. ।

**पूर्व्वेद्युः (स्)** । पुं । अव्य. । पूर्व्वदिने ।

**पूलकः** । पुं । कटिप्रोथे । পোঁদের পেলো ।

**पूषः** । पुं । पौषे मासि । ब्रह्मदारुवृक्षे । তুঁত গাছ । अम. ।

**पूषकः** । पुं । पारिशवृक्षे । তুঁত, পলাশ-পিপুল । रा.नि.व.९ ।

**पूषा** । स्त्री । पाठायाम् । रा.नि.व.६ ।

**पृक्का** । स्त्री । पिड़िङ्गनामकशाके । পিড়িং শাক । प.मु. । हिं पुरी । उत्. फिरिकिशाक । तत्पर्य्यायाः,—मरुन्माला पिशुना देवी लता लघुः समुद्रान्ता वधूः कोटिवर्षा लङ्कापिका लङ्कायिका लङ्कारिका स्रुतामरुत् ब्राह्मणी कुटिला देवपुत्रिका मनुः मालालिका मालानी लघ्वी पञ्चगुशिरसा समुद्रकान्ता मरुत् माला स्पृक्का कोटीवर्षा लङ्कोपिका वर्षालङ्कायिका तस्करः चोरकः चण्डः देवपुत्री । गुणाः—"पृक्का स्वाद्वी हिमा वृष्या तिक्ता निखिलदोषनुत् । कुष्ठकण्डूविषस्वेददाहास्रज्वररक्तहृत् ।" भा.पू.१भ. । सु.सू.३८अ. एलादिः । पृक्कापुष्पे । च.द.वा.व्या.चि. महाराजप्रसारणीतैले, अष्टादशशतिकप्रसारणीतैले । लताकस्तूर्य्याम् । वै.निघ. ।

**पृथक्छदः** । पुं । अक्षोटवृक्षे । वै.निघ. ।

**पृथक्त्वचा** । स्त्री । मूर्वायाम् । र.मा. ।

**पृथक्पत्रः** । पुं । सप्तपर्णवृक्षे । वै.निघ. ।

**पृथक्पर्णिका (र्णी)** । स्त्री । पृश्निपर्णीक्षुपे । रा.नि.व.४ । वै.निघ.२भ.जीर्णज्व.चि. । मूर्वायाम् । মূর্গা । रा.नि.व.३ ।

**पृथगालुः** । पुं । पिण्डालौ । চুবড়ি আলু । হাতি থোজা আলু । प.मु. ।

**पृथग्वीजः** । पुं । भल्लातकवृक्षे । रा.नि.व.११ ।

**पृथाजः** । पुं । अर्ज्जुनवृक्षे । रा.नि.व.९ ।

**पृथिका** । स्त्री । शतपद्याम् । श.म. ।

**पृथिविः (वी)** । स्त्री । कृष्णजीरके ।

**पृथिवीकन्दः** । पुं । भूकन्दे । वै.निघ. ।

**पृथिवीगुणाः** । पुं । अस्थिचर्म्मनखमांसरोमसु । रस.र.ज्व.चि. ।

**पृथिवीपतिः** । पुं । ऋषभकौषधे । मे. ।

**पृथिवीभवम्** । क्ली । कृत्रिमक्षारे । সোরা । वै.निघ. ।

**पृथुः** । स्त्री । हिङ्गुपत्र्याम् । रा.नि.व.६ । कृष्णजीरके । प.मु.भा. । स्थूलकृष्णजीरके । মোটা কৃষ্ণ জীরে । गुणाः—कटुतिक्तोष्णा वातगुल्मघ्नी आध्मानहरी दीपनी च । पुनर्नवायाम् । मेदायाम् । धारिण्याम् । रा.नि.व.२३ । तरुबुध्ने । रा.नि.व.२ । अहिफेने । श.र. ।

**पृथुकः** । पुं, क्ली । चिपिटके । চিড়ে । हिं चुड़ा । प.मु. । "हरितधान्यानि निस्तुषभृष्टमुशलहतानि पृथुकाश्चिपिटसंज्ञाः ।" अरुण. । "व्रीहयोऽप्यर्द्धपक्वास्तु तप्तास्ते पृथुकाः स्मृताः ।" रा.नि.व. १६ । गुणाः—बल्याः कफविष्टम्भकराश्च । वा.सू.

६ग्र.। स्वादव: स्निग्धा हृद्या कामवर्द्धनाश्च। रा.नि.व.१६। सदुग्धस्य तस्य गुणा:—"सक्षीरा बृंहणा वृष्या बल्या भिन्नमलाश्च ते।" भा.। एकवर्षीये शिशौ। अर्द्धवर्षीये शिशौ। ৬ মাসের শিশু। रा.नि.व.१८।

**पृथुकन्दकम्**। क्ली। तृणविशेषे। গুণ্ঠতৃণ। वै.निघ.। विश्व.।

**पृथुका**। स्त्री। बालिकायाम्। हिङ्गुपत्राम्। श.च.। भृष्टतण्डुलायाम्। চিড়ে। वै.निघ.।

**पृथुकालुकी**। स्त्री। रक्तालुभेदे। লাল আলু। भा.पू.१भ.।

**पृथुकृष्णा:**। पुं। जीरके। वै.निघ.।

**पृथुकोल:**। पुं। राजवदरे। रा.नि.व.११।

**पृथुगन्धा**। स्त्री। गन्धशट्याम्। वै.निघ.।

**पृथुच्छद:**। पुं। शरपत्रकुशे। रा.नि.व.८। अचोटवृक्षे। वै.निघ.।

**पृथुपत्र: (क:)**। पुं। रक्तरसोने। रा.नि.व.७।

**पृथुपलाशिका**। स्त्री। शट्याम्। रा.नि.व.६।

**पृथुरोमा** (न्)। पुं। मत्स्यभेदे। अर्क.चि.।

**पृथुल:**। पुं। दर्भे। गुन्द्रातृणे। वै.निघ.।

**पृथुला**। स्त्री। गुण्डासिनीतृणे। रा.नि.व.८। हिङ्गुपत्राम्। जटा.।

**पृथुवीज: (क:)**। पुं। मसूरे। মুগুরিকলায়। प.मु.। रा.नि.व.१६। विकङ्कतवृक्षे। वै.निघ.।

**पृथुशिम्ब: (म्ब) (म्बी)**। स्त्री। श्योनाकभेदे। रा.नि.व.९। पीतलोध्रे। असिशिम्ब्याम्। वै.निघ.। [श.।

**पृथुशिरा**। स्त्री। कृष्णजलौकायाम्। सु.सू.१३।

**पृथुशृङ्गक:**। पुं। मेषविशेषे। दुम्बा। वै.निघ.।

**पृथुस्कन्ध:**। पुं। वनशूकरे। रा.नि.व.१९।

**पृथूदर:**। पुं। मेषे। ভেড়া।

**पृथ्वि(थ्वी)का**। स्त्री। जीरके। मद.व.२। हिङ्गुपत्राम्। सु.चि.२अ.। स्थूलैलायाम्। रा.नि.व २३। कृष्णजीरकभेदे। शुक्लपुनर्नवायाम्। रा.नि.व.६। कृष्णजीरके। च.सू.५अ.। च.द.र.पि.चि.। चार्कवृक्षे। एलायाम्। अम.। आदित्यभक्तायाम्। হুড়হুড়িয়া। वै.निघ.। [व.१०।

**पृथ्वीकुरवक:**। पुं। श्वेतमन्दारार्के। रा.नि.

**पृथ्वीजम्**। क्ली। गड़लवणे। रा.नि.व.६।

**पृदाकु:**। पुं। हस्तिनि। वृक्षे। उणा.। सर्पे। अम.। वृश्चिके। व्याघ्रे। मे.। अग्नौ। चित्रके।

**पृश्नि: (श्नी)**। स्त्री। पृश्निपर्ण्याम्। চাকুলিয়া। श.र.। सु.चि.१७अ.। वारिपर्ण्याम्। পানা।

**पृश्निका**। स्त्री। जलवृक्षविशेषे। श.मा.। पृश्निपर्ण्याम्।

**पृश्निपर्णिका (र्णी)**। स्त्री। (Hemionites cordifolia. Uraria lagopoides. Syn. Doodia lagopodioides.) स्वनामख्याततिक्तशाकक्षुपे। চাকুলিয়া। हिं पीठवन, पीतवन, पठौनी। मं सेवरा। कं नवियलवीने। तें कोलाकुपोन्ना। उत्. क्रष्टपथि। तत्पर्य्याया:,—पृथक्पर्णी चित्रपर्णी अङ्घ्रिवल्लिका क्रोष्टुविन्ना सिंहपुच्छी सिंहलाङ्गली कलशि: धावनि: गुहा तन्वी पुच्छिका क्रोष्टुकपिष्टपर्णी लाङ्गली क्रोष्टुपुच्छी क्रोष्टुपुच्छिका पुच्छिका क्रोष्टुकमेखला पूर्णपर्णी कलशी दीर्घा शृगालवृन्ता त्रिपर्णी सिंहपुच्छिका दीर्घपत्रा अतिगुहा घृष्टिला चित्रपर्णिका कोकलसि: कलसी कदला कङ्गशत्रु: चक्रकुल्या चक्रपर्णी शीर्णमाला महागुहा शृगालविन्ना धमनी मेखला लाङ्गुलिका ब्रह्मपर्णी दीर्घपर्णी सिंहपर्णी पृष्टिपर्णी अङ्घ्रिपर्णी धावनी। सु.चि.८अ.। गुणा:—"...त्रिदोषघ्नी वृष्योष्णा मधुरा सरा। हन्ति दाहज्वरश्वासरक्तातिसारतृड्वमी:। भा.पू.१भ.गु.व.। कटु: उष्णा कासातीसारघ्नी वातरोगज्वरदाहव्रणोन्मादघ्नी च। रा.नि.व.४। च.द.ज्व.चि.। एतद्घनमैकाहिकज्वरे हितम्। च.द.ज्व.चि.। सु.सू.३८अ.।

**पृषत्**। पुं। हरिणे।

**पृषत:**। पुं। श्वेतविन्दुहरिणविशेषे। तत्पर्य्यायौ,—रङ्कु: सरलपृष्ठक:। "पृषतश्चन्द्रविन्दु: स्याद्धरिणात् किञ्चिदल्पक:॥" एतन्मांसगुणा:—"स्वादु शीतलं धारकं लघु दीपनं रुच्यं श्वासज्वरत्रिदोषघ्नम्।" भा.। रोहितमत्स्ये। मण्डलिसर्पविशेषे। सु.कल्प,४अ.। स्त्री। हरिणीभेदे। मे.।

**पृषदाज्यम्**। क्ली। दधिमिश्रितघृते।

**पृषन्ति:**। पुं। जलबिन्दौ। [द.चि.।

**पृष्टिपर्णी**। स्त्री। पृश्निपर्ण्याम्। चि.क.क.प्र-

**पृष्ठम्**। क्ली। तनुपश्चाद्भागे। रा.नि.व.८। [२०।



**पृष्ठग्रन्थि:**। पुं। गड़ुरोगे। কুঁজ। रा.नि.व.

**पृष्ठग्रह:**। पुं। अश्वस्य वातव्याधौ। लक्षणं यथा—"स्तब्धं पृष्ठोन्नतश्चैव रम्भौ चित्रस्य यस्य च। तस्य पृष्ठग्रहं रोगमूर्द्ध्वग्रीवस्य निर्दिशेत्॥" ज.द.५५अ।

**पृष्ठचक्षु:**। पुं। कर्कटे। वै.निघ।

**पृष्ठदृष्टि:**। पुं। भल्लूके। रा.नि.व.१९।

**पृष्ठमर्म्म**। क्ली। पृष्ठवंशगतचतुर्दशमर्म्मसु। तद्यथा—कटीकतरुणे, कुकुन्दरे, नितम्बौ, पार्श्वसन्धी, बृहती, अंसफलके, अंसौ। सु.शा.६अ.।

**पृष्ठरुचम्**। क्ली। मरिचे। वै.निघ.।

**पृष्ठवंश:**। पुं। मेरुदण्डे, पृष्ठास्थनि। পীঠের শিরদাঁড়া। हे.च.। सगर्भस्य शिशो: मासमात्रेण भवति। सुखबोध:।

**पृष्ठशृङ्ग:**। पुं। आरण्यछागे। हे.च.।

**पृष्ठशृङ्गी** (इन्)। पुं। महिषे। श.र.। नपुंसके। मे.। मेषे। वै.निघ.।

**पृष्ठक्षिति:**। पुं। नन्दिवृक्षे। वै.निघ.।

**पृष्ठास्थि**। क्ली। कसेरौ। মেরুদণ্ড। रा.नि.व.१८। तानि च ३५। च.शा.७अ.।

**पृष्ठ्र:**। पुं। अश्वे। अम। क्ली। पृष्ठास्थिसमूहे। वै.निघ.।

**पृष्णि:**। स्त्री। पार्ष्णिभागे। उणा.।

**पेच: (क:)**। पुं। उलूकपक्षिणि। পেঁচা। श.र.। अम.। तत्पर्य्याया:,—उलूक: ऊलुक: वायसाराति: शक्राख्य: दिवान्ध: वक्रनासिक: हरिनेत्र: दिवाभीत: नखाशी पीचु: घर्घर: काकभीरु: नक्तचारी निशाचर: कौशिक: रूपनाशन: रक्तनाशिक: भीरुक: आलु: घांचाराति:। See प्रसह:।

**पेचकी** (इन्)। पुं। करिणि। श.र.।

**पेचनी**<br>**पेचिका** } स्त्री। केमुकवृक्षे। কেঁউ গাছ।

**पेचिल:**। पुं। विरद्दे। হাতী। त्रिका.।

**पेचु: (क:)**। पुं। मुचुकुन्दवृक्षे। মুচুকুন্দ গাছ। केमुकावृक्षे। কেঁউ গাছ। र.मा.। नाड़ीचशाके। पेचुके। कचू। त्रिका.।

**पेचुका**। स्त्री। पेचुके। কচুর শাক। केमुके। কেঁউ। र.मा.।

**पेचुनी (ली)**। स्त्री। पेचुकशाके। কচুর শাক। त्रिका.। केमुके। কেঁউ। र.मा.।

**पेटक: (टिका, टी)**। पुं, स्त्री। (Abutilon Indicum.) कुबेराक्ष्याम्। পেটারি। र.मा.। हिं कुङ्गनी। पारस्य.दरखते रैरा। आर, मस्तुलघौर। ता. टट्टी। भैष.माल.चि.। च.द.। "पेटी पाठामूलात्।" पाटलावृक्षे। केमुके।

**पेड़म्**। क्ली। घृते। अमृते। उणा.।

**पेड़ा(ड़िका)**। स्त्री। पेटिकायाम्। পেটারী। बलालुके। वै.निघ.। पाटलावृक्षे।

**पेल्वम्**। क्ली। अमृते। घृते।

**पेयम्**। क्ली। अष्टविधान्नान्यतमान्ने। रा.नि.व.२०। जले। मे.। दुग्धे। श.च.।

**पेया**। स्त्री। अल्पसिक्थपेयद्रव्ये। सा च पञ्चदशगुणैर्जलै: सिध्यति। মণ্ডবিশেষ। "तोये पञ्चदशगुणे सिद्धा पेयाल्पसिक्थका।" प.मु.। सिक्थसमन्विता पेया। "पेया सिक्थसमन्विता।" प.प्र.२ख.। तण्डुलापेक्षया एकादशगुणे वारिणि सिद्धा। च.द.ज्व.चि.। "निद्रव्या प्राकृता पेया तक्रदाड़िमतण्डुलै:।" इति च लक्षणम्। हेमाद्रि:। गुणा:—मलानुलोमनी पथ्या दीपनी पाचनी क्षुत्तृष्णाग्लानिदौर्बल्यकुक्षिरोगज्वरघ्नी च। वा.सू.१५अ.। "द्रवाधिका घना सिक्था चतुर्दशगुणे जले। सिद्धा पेया बुधैर्ज्ञेया...।" "पेया लघुतरा ज्ञेया ग्राहिणी धातुपुष्टिदा।" प.प्र.२ख.। आर्द्रके। আদা। प.मु.। शतपुष्पायाम्। श.च.। स्वच्छमण्डे। मे.। कषाये। वै.निघ.।

**पेयु(यू)ष:**। पुं, क्ली। नवप्रसूताया: गो: सप्तदिनाभ्यन्तरीणदुग्धे। গাঁজলা দুধ। "आसप्तरात्रप्रसवात् क्षीरं पेयुषमुच्यते।" र.मा.। प्रत्यग्रघृते। वै.निघ।

**पेर(रो)जम्**। क्ली। स्वनामख्यातोपरत्नविशेषे। पेरोजा इति पारस्ये। तच्च भस्माङ्गहरितभेदेन द्विविधम्। गुणा:—अतिकषायं मधुरम् अतिदीपन शूलादिहरं तत्संयोगेन स्थावरजङ्गमोभयविधविषं हन्याच्च। रा.नि.व.१३।

**पेलम्**। क्ली। अण्डकोषे। হোল। हे च.। मुष्काण्डे। वै.निघ.।

**पेलो** (इन्)। पुं। घोटके। वै.निघ.

**पेलुवासः** । पुं । कालसरटे । वै.निघ. ।
**पेशः** । पुं, क्ली । स्वर्णधातौ ।

**पेशस्कृत्** । पुं । कीटविशेषे । कुमीरे पोका । वै.निघ. । पेशस्कृत् इति शब्दकल्पद्रुमः ।

**पेशिः** । स्त्री । डिम्बे । अम. । आढ़कादिद्विदले । वै.निघ. । आम्रादिशलाटौ । आमचूर आदि । खण्डीकृतार्द्रकशलाटौ । "हरितार्द्रकस्य शस्त्रकृत्तान्ता दीर्घाकारा अवयवाः पेशयः उच्यन्ते ।' वा.चि.७अ. ।

**पेशी (षी)** । स्त्री । जटामांस्याम् । रा.नि.व.१२ । मांसपिण्ड्याम् । मांसपेशी । साकल्येन पञ्च पेशीशतानि भवन्ति । तासां चत्वारि शतानि शाखासु । कोष्ठे षट्षष्टिः, ग्रीवां प्रत्यूर्द्धं चतुस्त्रिंशच्चेति । तत्र पादाङ्गुलिषु १५ । पदे १० । पादोपरिकूर्चसन्निविष्टाः १० । गुल्फयोः १० । गुल्फजान्वन्तरे २० । जानुनि ५ । ऊरौ २० । वङ्क्षणे १० । शतम् एवमेकस्मिन् सक्थनि भवन्ति । एतेनेतरसक्थिबाहू च व्याख्यातौ । पायौ ३ । मेढ्रे १ । सेवनौ १ । वृषणयोः २ । स्फिचोः १० । वस्तिशिरसि २ । उदरे ५ । नाभ्यां १ । पृष्ठोर्द्धसन्निविष्टाः ५×५ । पार्श्वयोः ६ । वक्षसि १० । अक्षकांसौ प्रति समन्तात् ७ । हृदयामाशययोः २ । यकृत्प्लीहोण्डुकेषु ६ । ग्रीवायां ४ । हन्वोः ८ । काकलक-गलयोः २ । तालुनि २ । जिह्वायां १ । ओष्ठयोः २ । घोणायां २ । नेत्रयोः २ । कर्णयोः २ । गण्डयोः ४ । ललाटे ४ । शिरसि १ । इत्येवमेतानि पञ्च पेशीशतानि । "शिरा स्नाय्वस्थिपर्व्वाणि सन्धयश्च शरीरिणां । पेशीभिः संवृतान्यत्र बलवन्ति भवन्त्यतः ॥" स्त्रीणाञ्च विंशतिरधिकाः । दश तासां स्तनयोरेकैकस्मिन् पञ्च पञ्च, यौवने तासां परिवृद्धिः । अपत्यपथे चतस्रः तासां प्रसृतेऽभ्यन्तरतो द्वे मुखाश्रिते बाह्ये च प्रवृत्ते द्वे । गर्भच्छिद्रसंश्रितास्तिस्रः । शुक्रार्त्तवप्रवेशिन्यस्तिस्र एव । सु.शा.५अ. । "यथार्थमूष्मणा युक्तो वायुः स्रोतांसि दारयेत् । अनुप्रविश्य पिशितं पेशीर्विभजते तथा । स्त्रीणामपि भवन्त्येताः किन्तु विंशतिरुत्तराः । गर्भाशये गर्भमार्गे योनौ च स्तनयोरपि ॥" भा. । पक्षिडिम्बे । पाखीर डिम । अम. ।

**.शीकोषः** । पुं । अण्डे । डिम । अ.टी. ।

**पेश्यण्डम्** । क्ली । मांसगोलके । वै.निघ. ।
**पेषणः** । पुं, क्ली । त्रिधारस्नुहीवृक्षे । तेकाँटा सिजू । खल्ले । क्ली । पीड़ने । चूर्णने । श.च. ।
**पेषणिः (णी)** । स्त्री । पेषणशिलायाम् ।
**पेषिणी (षी)** । स्त्री । जटामांस्याम् ।
**पेहिता** । स्त्री । प्रसारण्याम् । गन्धभादुलिया । वै.निघ. ।

**पैङ्गिः** । पुं । ऋषिविशेषे । च. ।
**पैज(ञ्जु)षः** । पुं । कर्णे । हे.च. ।
**पैठरम्** । क्ली । स्थालीपक्वमांसादौ । अम. ।
**पैत्तः (त्तिकः)** । पुं । तिलक्षुपे । तिल गाछ । प.मु. । पित्तसम्भवे रोगे । रा.नि.व.२० ।
**पैत्तिकी** । स्त्री । योनिव्यापद्विशेषे । लक्षणं यथा—"यथास्वैर्दूषणैर्दुष्टं पित्तं योनिमुपाश्रितम् । करोति दाह-पाकोषा-पूतिगन्ध-ज्वरान्विताम् । भृशोष्णभूरिकुणपनीलपीतासितार्त्तवाम् । सा व्यापत् पैत्तिकी ॥" वा.उ.३३अ. ।
**पैष्टी** । स्त्री । विविधधान्यविकारजाते अन्नमद्ये । धेनो मद । एषा मादकत्वे हीनतमा । "पैष्टी पुनर्विविधधान्यविकारजाता ख्याता मदाधिकतया॰त्र च पूर्व्वपूर्व्वा ।" प्रस्तुतविधिर्यथा—"शष्कुलीमर्द्दसिद्धान्नमुष्णोदकसमन्वितं । वह्नौ सन्तापयेत् किञ्चित् स्थापयित्वा दिनद्वयं ॥ शेषेऽहनि तु संप्राप्ते शैवलं तत्र निःक्षिपेत् । शृङ्गवेरं मरिचञ्च मातुलुङ्गं तथैव च ॥ एतेषामेव सन्धानात् पैष्टीमद्यं प्रकीर्त्तितम् ॥" गुणाः—कटूष्णा तीक्ष्णा मधुरा अतिदीपनी च । रा.नि.व.१४ । "पैष्टी सन्दीपनी रुच्या कफक्लान्तनाशिनी । पित्तला पाण्डुरोगाणां कारिणी बहुधा मता ॥" अवि. १९अ. ।
**पैष्टिकम्** । क्ली । पैष्टीमद्ये । वि.र. ।
**पोगण्डः** । पुं । अपोगण्डे । दशवर्षीय बालक । हला. ।

**पोटगलः** । पुं । नले । नल । रा.नि.व.८ । खागड़ । थागड़ा । र.मा. । वदरवृक्षे । मत्स्यभेदे । मे. । वैकरञ्जजातीयसर्पविशेषे । अयं राजिलेन गोनस्यां वैपरित्येन वा जातः । सु.कल्प.४अ. । काशतृणे । चिका. ।
**पोटा** । स्त्री । स्त्रीपुंसलक्षणायां नार्य्याम् । हारा. । चुक्रिकायाम् । भा. ।



**पोटाह्विका** । स्त्री । गुञ्जायाम् । वै.निघ. ।
**पोटिकः** । पुं । विस्फोटके । कश्चित् ।
**पोडुः** । पुं । कपालास्थितले । रा.नि.व.१८ ।
**पोतः (कः)** । पुं । शिशौ । त्रैमासिकशिशौ । रा.नि.व.१८ । दशवार्षिककरिणि । हे.च. ।
**पोतकी** । स्त्री । उपोदिकायाम् । पूती, पूँई । भा.मि.४भ.गर्भ.चि. । श्यामाकपक्षिणि । रा.नि.व.१९ ।

**पोताण्डः** । पुं । अश्वस्य मुष्करोगभेदे । लक्षणं —"शूनौ पक्वौ तुरङ्गस्य मुष्कौ यस्य सवेदनौ । विकस्तम्भेन युक्तस्य तस्य पोताण्डमादिशेत् ॥" ज.द.५.अ. ।

**पोताधानम्** । पुं । शिशुमीनपुञ्जे । माछेर पोनार झाँक । गुणाः—"पोताधानन्तु सर्व्वेषां सुस्निग्धं लघु रोचनम् ।" राज.३प. ।
**पोतासः** । पुं । कर्पूरविशेषे । भीमसेनी कर्पूर । रा.नि.व.१२ ।
**पोतिका** । स्त्री । शताह्वाक्षुपे । रा.नि.व.४ । मालवारदेशीयोपोदिकाविशेषे । मूलपोतिकायाम् । रा.नि.व.७ ।
**पोत्रम्** । क्ली । वज्रे । शूकरमुखाग्रभागे । थोप्ना । मे. ।
**पोत्रायुधः** । पुं । शूकरे । रा.नि.व.१९ ।
**पोत्रिदंष्ट्राजम्** । क्ली । शूकरदन्तजरत्ने । वै.निघ. ।
**पोत्री** (इन्) । पुं । शूकरे । अम. ।
**पोथकी** । क्ली । बालानां नेत्रवर्त्मजरोगविशेषे । लक्षणं—'कण्डूस्रावान्विता गुर्व्वी रक्तसर्षपसन्निभाः । पिड़काश्च रुजावत्यः पोथक्य इति संज्ञिताः ॥" सु.उ.३अ. ।

**पोदिका** । स्त्री । कलम्बीशाके । प.मु. ।
**पोलः (कः)** । स्त्री । कटिप्रोथे । पाछार पेलो । अ.टी.भ. ।
**पोलिका (ली)** । स्त्री । पिष्टकभेदे । पाउरुटी । त्रिका. । यथा—"कुर्य्यात् समितयातीव तन्वी पर्पटिका ततः । स्वेदयेत्तप्तके तान्तु पोलिकां तां जगुर्बुधाः ।" गुणाः—मण्डकवत् । भा. ।
**पोषः** । पुं । पोषणे ।

**पोषयित्नुः** । पुं । कोकिले । उणा. ।
**पोष्टा (ष्टृ)** । पुं । पूतिकरञ्जे । श.च. । (त्रि) । पोषके ।
**पौगण्डम्** । क्ली । पौगण्डावस्थायाम् । तच्च षष्ठाब्दात् दशमाब्दपर्य्यन्तम् । "कौमारं पञ्चमाब्दान्तं पौगण्डं दशमावधि । कैशोरमापञ्चदशं यौवनञ्च ततःपरम् ॥" रा.नि.व.१८ ।
**पौण्डरीयः (कः)** । पुं, क्ली । प्रपौण्डरीकवृक्षे । पुण्डरिया गाछ । रा.नि.व.१२ ।
**पौण्डर्य्यम्** । क्ली । प्रपौण्डरीके । पुण्डरिया ।
**पौण्ड्र (ण्ड्रि) कः** । पुं । पुण्ड्रके । पूँड़ि आख । र.मा. । श.मा. । लावपक्षिणि । वै.निघ. ।
**पौतवम्** । क्ली । परिमाणे । अ.टी.भ. ।
**पौतिनासिक्यम्** । क्ली । नासिकारोगे । पीनसे । पीनस रोग । निदा. ।
**पौ (त्ति) त्रिकम्** । क्ली । पुत्तिकानाममक्षिकाभिरायोजिते घृतवर्णमधुनि । पौत्रिक मधु । जटा. । "अन्नजा मक्षिकाः पिङ्गाः पुत्रिका इति कीर्त्तिताः । तज्जातं मधु धीमद्भिः पौत्रिकं समुदाहृतम् ॥" गुणाः—रूक्षम् उष्णं रक्तपित्तदाहघ्नं घृतवर्णञ्च । रा.नि.व.१४ ।

**पौत्रिकशर्करा** । स्त्री । पौत्रिकमधुकृतशर्करायाम् । गुणाः—तन्मधुतुल्याः । रा.नि.व.१४ ।
**पौनर्णवः** । पुं । सन्निपातज्वरभेदे । लक्षणं —"उत्क्षिप्य यः स्वमङ्गं क्षिपत्यधस्तात् नितान्तमुच्छ्वसिति । तं पौनर्णवजुष्टं विचित्रकष्टं विजानीयात् ॥" भल्लुकीतन्त्रम् । [ १अ. ।
**पौपिकः** । त्रि । अपूपनिर्म्माणदक्षे । सु.कल्प.
**पौरम्** । क्ली । सुगन्धतृणे । रामकर्पूर । अम. । पुं । बोले । नखीनामगन्धद्रव्ये । वै.निघ. ।
**पौरसः** । पुं । नखीनामगन्धद्रव्ये । वै.निघ. ।
**पौरुषम्** । क्ली । शुक्रधातौ । रा.नि.व.१८ । मेहने । सु.नि.१अ. । ऊर्द्धविस्तृतदोःपाणिपुरुषपरिमाणे । त्रिका. । इह जगति कृते कर्म्मणि । "तत् पौरुषं यत्विह कर्म्म दृष्टम् ।" च.शा.२अ. । रोहिषतृणे ।

**पौरुषः** । पुं । नरे । पुन्नागवृक्षे । चिका. ।
**पौरोगवः** । पुं । पाकशालाध्यक्षे । अम. ।

**पौलिः** । स्त्री । पौलिकायाम् । पाकावस्थागतयवादौ । अम. ।

**पौषः** । पुं । वर्षस्य नवमे मासे । अम. ।

**पौष्करम्** । स्त्री । पुष्करमूले । পুষ্করমূল । कुष्ठभेदे । কুড়বিশেষ । रा.नि.व.६ । मद.व.१ । सि.यो.यक्ष्म.चि.त्रयोदशाङ्गगुग्गुलौ । "पौष्करातिविषे ।" सि.यो.कफज्व.चि.निम्बादिः । "शटीभूनिम्बपौष्करम् ।" पद्ममूले । वृहज्जीरकाद्यमोदके । एरण्डमूले । वै.निघ.श्वास.चि.दशमूलयवाग्वाम् । स्थलपद्मे । वै.निघ. ।

**पौष्करमूलम्** / **पौष्कराह्वयम्** } क्ली । पुष्करमूले । मद.व.१ ।

**पौष्टिकम्** । क्ली । पुष्टिकरौषधे । पुष्टिकरद्रव्यगणे । यथा—"चतुर्द्वा तु तुगाक्षीरी चन्द्रशूरीऽष्टवर्गकः । द्वीपान्तरवचा विल्वं त्वक् पत्रं नागकेशरम् । तालीशपत्रं त्वक्क्षीरी त्वचा गोक्षुररोहिणी । कपिकच्छूतोयवल्लीभूफलं पौष्टिको गणः ॥" अर्क.चि. । क्षौरकाले गात्राच्छादनवस्त्रभेदे । কাবাই । गुणाः—आयुष्यत्वं धनचिह्नत्वं शुचित्वं रूपविराजनत्वञ्च । राज. ।

**पौष्पम्** । क्ली । । पुष्परेणौ । वै.निघ. ।

**पौष्प(ष्पि)कम्** । क्ली । पुष्पाञ्जने । रा.नि.व.१३ । वै.निघ. ।

**प्रकरम्** । क्ली । अगुरुकाष्ठे । मे. ।

**प्रकशी** । स्त्री । शूकरोगे । निदानम् ।

**प्रकाण्डः** । पुं । तरोः स्कन्धपर्य्यन्तभागे । গুঁড়ি । रा.नि.व.२ ।

**प्रकाण्ड(त)रः** । पुं । वृक्षे । श.च. ।

**प्रकाश(क)म्** । क्ली । कांस्ये । কাঁসা । हे.च. ।

**प्रकाश(क)ज्ञाता** । पुं । कुक्कुटे । श.च. ।

**प्रकीर्णः** । पुं,क्ली । पूतिकरञ्जे । নাটা করঞ্জা । रा.नि.व.९ । चामरे । त्रिका. । [ मे. ।

**प्रकीर्णकम्** । क्ली । चामरे । अम. । पुं । अश्वे ।

**प्रकीर्य्यः (कः)** । पुं, स्त्री । पूतिकरञ्जे । নাটা করঞ্জা । र.मा. । वा. सू.१५अ. । "श्वेतवाहप्रकीर्य्या ।" रीठाकरञ्जे । রিটা । रा.नि.व.९।१३ । कण्टकीकरञ्जे । "कण्टकीविटपकरञ्जे ।" सु.सू.३९अ.कफशमने । ड. । च.सू.१अ.फलिनीव. ।

**प्रकुञ्चः** । पुं । पले । ८ तो. । प.प्र.१ख. ।

**प्रकुलम्** । क्ली । सुन्दरदेहे । त्रिका. ।

**प्रकृतिः** । स्त्री । शक्तौ । शिश्ने । योनौ । त्रिका. । आहारौषधद्रव्याणां स्वाभाविके गुर्व्वादिगुणयोगे । च.चि.१अ. । आकाशादिपञ्चतन्मात्रं बुद्धिः मूलप्रकृतिरहङ्कारश्चेत्यष्टमहाभूतसमुदायरूपे कारणे । च.शा.१अ. । अष्टरूपमखिलस्य जगतः सम्भवहेतुरव्यक्तं नाम । महत्तत्त्वादयः सप्त महानहङ्कारः पञ्चतन्मात्रञ्चेति । प्रकृतिर्महानहङ्कारः पञ्च तन्मात्राणीति अष्ट प्रकृतयः । प्रकृतिपुरुषसाधर्म्म्यम्—अनादित्वम् अनन्तत्वम् अलिङ्गत्वं नित्यत्वं सर्व्वगतत्वञ्च । वैधर्म्म्यं यथा—सा च अचेतना त्रिगुणा वीजधर्म्मिणी प्रसवधर्म्मिणी अमध्यस्थधर्म्मिणी चेति । पुरुषस्तु तद्विपरीतधर्म्मेति । तस्या गुणाः—सत्त्वरजस्तमांसीति । भा.पू.१भ. । स्वभावे । वातादिभेदेन प्रकृतयः सप्त । "शुक्रशोणितसंयोगे यो दोषस्तूत्कटो भवेत् । प्रकृतिर्जायते तेन...... ॥" सु.शा.४अ. । "शुक्रासृग्गर्भिणीभोज्यचेष्टागर्भाशयान्तरे । यः स्याद्दोषोऽधिकस्तेन प्रकृतिः सप्तधोदिता ॥" तेषु—जागरूकोऽल्पकेशश्च वातप्रकृतिः । अकालपलितादिः पित्तप्रकृतिः । श्यामकेशादिः श्लेष्मप्रकृतिः । एवं द्विरूपादिदर्शने द्विप्रकृतिः । वा. ।

**प्रकृतिभोजनम्** । क्ली । स्वाभाविकाहारे । च.सू.१५अ. ।

**प्रकृतिवर्णः** । त्रि । गात्रसवर्णे । च.सू.१८अ. ।

**प्रकृतिविघातः** । पुं । प्रकृतेर्विकृतिजनकोपयोगे । स च कटुतिक्तकषायक्षारोष्णानां द्रव्याणामुपयोगरूपः । यच्चान्यदपि किञ्चित् श्लेष्मपुरीषप्रत्यनीकभूतं तत्स्यादिति । च.वि.७अ. ।

**प्रकोथः** । त्रि । पूतिभावापन्ने । পচা । "प्रकोथोदकावगाहनात् ।" सु.चि.२३अ. ।

**प्रकोपः (नम्)** । पुं, क्ली । क्षोभे । चाञ्चल्ये । वै.निघ. । वातादीनां सङ्क्षोभहेतौ । ते च बहुधा तत्र वातस्य प्रकोपनं बलवद्विग्रहादि । पित्तस्य क्रोधशोकभयादि । कफस्य दिवास्वपादि । पित्तप्रकोपनमेव पित्तस्येति । ऋतुभेदे वातादिप्रकोपो यथा—"वर्षावायुः कुप्यतेऽन्तः शरत्सु लोनो वायुः कुप्यते पित्तरोगे । लोयेत् पित्त शिशिरे श्लेष्मकुञ्ज हेमन्ते वा चीयमानस्तथापि । कोपं याति श्लेष्मरोगो वसन्ते तस्माच्छान्तिः श्लेष्मरोगस्य



क्षोणे । पित्तं याति कोपितो ग्रीष्मकाले दृष्टा शान्तिः पैत्तिकी वार्षिकी च ॥" अथ वायुप्रकोपः—"तथा वातमूत्रपुरीषस्य रोधात् कषायातिशीतान्निशाजागरेषु । व्यवायेऽथ वाहश्रमाद्वातिभुक्त्याध्वनि प्रायशो भाषणेनातिभीत्या । सुरुक्षैरतिक्षारतिक्तैः कटुभिस्तथा दोलाश्वकोष्ट्रकैर्यानमात्रे । रथे वा खरे कुञ्जरे मन्दिरे वा भवेन्मारुतस्य प्रकोपो नरस्य । सुशीते दिने दुर्द्दिने स्नानपीते पराह्णे निशाजागरे वासरे च । वर्षासु वै केवलं याति कोपं मरुत्सेविते याति वै भुक्तजीर्णे । मसूराः कलायाश्च निष्पावकाश्च महामाषशुभ्रा यवाश्चामलाः स्युः । सदा चामला क्षणकाद्याः प्रदिष्टा हिमाः कङ्गुनीवाररक्ताश्च शाल्याः । तथा कोरदूषश्च श्यामाक एतैः कृत चौदनञ्च यवागूशृतं वा । कलिङ्गानि वास्तूकचिल्लीकपूत्यः पलाण्डुस्तथा गृञ्जनं कन्दशाकम् । इमान् सेवितात्यर्थमेति प्रकोपं समीरस्य चोक्तः सुरासम्भवस्तु । अतो यत्नतो रक्षणीयं मनुष्यैः शुभं देहसत्त्वं सदा रोगशान्तिम् ॥" अथ पित्तप्रकोपः—"अत्युष्णकट्वम्लरुक्षैर्विदाहैः द्रव्यैः ससिन्धुसुरासेवनेन । घर्म्मेण क्रोधेन वा स्वेदनेन व्यवायेन वा याति कोपञ्च पित्तम् । कुलत्थाढकीयूषमूलार्कशिग्रुशटीसर्षपाराजिकाशाकमेव । निशाजागरेणापि युद्धे श्रमे वा घनान्ते शरत्सु प्रकोपः प्रदिष्टः । अम्लेन वा क्षोणकाले शरत्सु भृशं वासरे मध्यमे वा निशीथे । जीर्णे रसे भुक्तमात्रे प्रकोपः प्रदिष्टः कोविदैः स्यात्पित्तकोपः ॥" अथ कफप्रकोपः—"निशाजागरे वासरे वातिनिद्रासुशीतोदकसेवने शीतले वा । पयःपानपीयूषेक्षुभिस्तिलैस्तु तथा गृञ्जनैः कन्दशाकैरथापि । अतिस्निग्धसंसेवने भोजने च प्रदिष्टः कफस्य प्रकोपो वसन्ते । दिनान्ते प्रभाते निशान्ते नरस्य प्रकोपः प्रदिष्टोऽपभुक्ते न जीर्णे । प्रदिष्टो बुधैः कोविदैरेव रोगः कफोत्पत्तिजन्यो हि कष्टप्रयुक्तः । सशीतेऽथवा शीतकाले निशान्ते नरस्य प्रकोपः प्रदिष्टोऽपि भुक्तेः । न जीर्णे प्रदिष्टः सुधी रोगवेगः निदानं कफस्येति चोक्तं सुधीभिः ॥" अथ द्वन्द्वजप्रकोपः—"यदा विपर्य्यासगते ऋतौ च प्रकोपनं यस्य यथा प्रदिष्टं । तत्सेवनान्नस्य नरस्य रोगः स्याद्द्वन्द्वजो नाम विकारकारी । यस्मिन् ऋतौ वातविकार उक्तस्तस्मिन् यदि श्लेष्मविकोपनानि । संसेवते वा मनुजस्तदास्य भवेत् प्रकोपः कफपित्तयोश्च ॥ यस्मिन् मरुत्कुप्यति सेवते यः पित्तस्य कोपप्रकराणि यानि । विपर्य्ययो वा ऋतुधान्ययोश्च स पित्तवातप्रभवस्तदा स्यात् ॥" अथ सन्निपातोत्पत्तिः—"विपर्य्यासागते काले रसे विपरिसेविते । तदा स्यात् सन्निपातो हि रोगोपद्रवकारकः ॥" इति । अत्रि.५अ. ।

**प्रकोष्ठः** । पुं । कूर्परपाणिमध्यभागे । रा.नि.व.१८ । কনুইয়ের নীচে হস্ততল পর্য্যন্ত ।

**प्रक्रिया** । स्त्री । औषधादिक्रियायाम् । चिकित्सायाम् ।

**प्रक्लिन्नः** । त्रि । अतिक्लेदयुक्ते ।

**प्रक्लिन्नवर्त्मा** । पुं । नेत्ररोगविशेषे, क्लिन्नवर्त्मरोगे । भा. ।

**प्रक्लेदः** । पुं । आर्द्रतायाम् । भा.४भ.ना.रो.चि. । "प्रक्लेदमायाति च धूप्यते च ।"

**प्रक्वथितः** । त्रि । शृते । प्रमथ्यारूपेण शृते । वा.चि.९अ. ।

**प्रखरः** । पुं । सन्नाहे । त्रिका. । कुकुरे । अश्वतरे । मे. ।

**प्रगण्डः** । पुं । कूर्परांसमध्यभागे । কনুই হইতে বগল পর্য্যন্ত । रा.नि.व.१८ ।

**प्रगतजानुः (कः)** । त्रि । दूरगतजानौ ।

**प्रगन्धः** । पुं । पर्पटके । रा.नि.व.५ ।

**प्रग्रहः** । पुं । कृतारग्वधवृक्षे । मे. । सु.कल्प.७अ. । तुलासूत्रे । अम. । हस्ते । सुवर्णे । वै.निघ. । कर्णिकारवृक्षे । रा.नि.व.९ ।

**प्रग्राहः** । पुं । तुलासूत्रे । मे. ।

**प्रघणः** । पुं । ताम्रपात्रे । लौहमुद्गरे । मे. ।

**प्रघनः** । पुं । मुद्गजातिभेदे । वै.निघ. ।

**प्रचण्डः** । पुं । शुक्लकरवीरे । मे. । त्रि । अत्युष्णे ।

**प्रचण्डमूर्त्तिः** । पुं । वरुणवृक्षे । श.च. ।

**प्रचण्डा** । स्त्री । श्वेतदूर्व्वायाम् । रा.नि.व.८ ।

**प्रचयः** । पुं । उच्चये । भा. ।

**प्रचलः** । पुं । मयूरे । वै.निघ. । (कः) । सौम्यकीटविशेषे । सु.कल्प.८अ. ।

**प्रचला** । स्त्री । सरटे । গিরগিটী । वै.निघ. ।

**प्रचलाकः** । पुं । सर्पे । मयूरपुच्छे । मे. । सु.चि.१८अ. ।

**प्रचलाकी (इन्)** । पुं । सर्पे । मयूरे । त्रिका. ।

**प्रचलाङ्गः** । पुं । मयूरशिखायाम् । व.निघ. ।

**प्रचलित:** । पुं । सद्योव्रणविशेषे । वै.निघ. ।

**प्रचार:** । पुं । अक्ष्णस्य स्नैग्धिकाख्यरोगे । लक्षणं —"प्रच्छादयति यद्दृष्टिं मांसं पर्य्यन्तवर्द्धितम् । प्रचारकाख्यं तं विद्यान्नेत्ररोगं कफान्वितम् ।" ज. द.३०अ. ।

**प्रचेतसी** । स्त्री । कट्फलवृक्षे । रा.नि.व.९ ।

**प्रचेलम्** । क्ली । पीतचन्दने । श.च. । पीतमुद्गे । वै.निघ. ।

**प्रचेलक:** । पुं । अश्वे । श.मा. ।

**प्रचेलुक:** । पुं । मानभेदे । পালি । त्रिका. ।

**प्रचोद(दि)नी** । स्त्री । कण्टकार्य्याम् । अम । दुरालभायाम् । वै.निघ. ।

**प्रच्छर्द्दनम्** । क्ली । वमने । भैष. ।

**प्रच्छर्द्दिका** । स्त्री । वान्तौ । हे.च. ।

**प्रच्छादनम्** । क्ली । नेत्रच्छदे । ज.द.२अ. । उत्तरीयवस्त्रे । हे.च ।

**प्रच्छानम्** । क्ली । छेदने, रक्तस्रावे । सु.कल्प. १अ. । सु.चि.क्षुद्ररो.चि."प्रच्छानैर्वा जलौकाभि: ।"

**प्रजननम्** । क्ली । गर्भधारणे । योनौ । मे. ।

**प्रजल्प:** । पुं । अतिभाषणे । वै.निघ. ।

**प्रजा** । स्त्री । सन्ततौ । जने । अम. ।

**प्रजाता** । स्त्री । प्रसूतायाम् । अम. ।

**प्रजादा** । स्त्री । पुत्रदावीरुतायाम् । रा.नि.व.४ ।

**प्रजादानम्** । क्ली । रौप्ये । श.च. ।

**प्रजाहितम्** । क्ली । जले । श.मा. । [ १६ ।

**प्रज्ञविप्रिय:** । पुं । षष्टिकधान्ये । रा.नि.व.

**प्रज्ञापराध:** । पुं । अहितसेवनातिव्यवायादौ । तदुक्तं—"धीधृतिस्मृतिविभ्रष्ट: कर्म्म यत् कुरुतेऽशुभम् । प्रज्ञापराधं तं विद्यात् सर्व्वदोषप्रकोपनम् । कर्म्मकालातिपातश्च मिथ्यारम्भश्च कर्म्मणाम् । ज्ञातानां स्वयमर्थानामहितानां निषेवणम् ।" च. ।

**प्रणा(ना)ल(ली)स:** । पुं । जीवशाके । वास्तूके । प.मु. ।

**प्रणालिका (ली)** । स्त्री । जलनिर्गममार्गे । द्वारा. । नस्यनलिकायाम् । নস্য দিবার নলি । च.द.नस्याधिकारे ।

**प्रतति: (ती)** । स्त्री । लतायाम् ।

**प्रतना (नी)** । स्त्री । गोजिह्वायाम् । গোজিয়া শাক । रा.नि.व.४ । वाष्पालिके । वै.निघ. ।

**प्रतमक:** । पुं । श्वासरोगभेदे । তমকশ্বাস । लक्षणं—"ज्वरमूर्च्छापरीतस्य विद्यात् प्रतमकन्तु तम् । उदावर्त्तरजोजीर्णक्लिन्नकायनिरोधज: । तमसा वर्द्धतेऽत्यर्थं शीतैश्चाशु प्रशाम्यति । मज्जतस्तमसीवास्य विद्यात् प्रतमकं तु तम् ॥" मा.नि. ।

**प्रतर: (सन्धि:)** । पुं । ग्रीवोर्द्ध्वगतसन्धौ । स च ग्रीवापृष्ठदण्डयो: सन्धि: । भा. । सु.शा.५अ. ।

**प्रतल:** । पुं । संहतविस्तृताङ्गुलिकरे । হাতের তেলো । रा.नि.व.१८ ।

**प्रतानवान्** । पुं । सोमलताभेदे । सु.चि.२९ अ. । See सोम: ।

**प्रतानिका (निनी)** । स्त्री । प्रसारण्याम् । গন্ধভাদুলিয়া । शारिवायाम् । অনন্তমূল । रा.नि.व.५।१२ ।

**प्रताप: (वान्)** । पुं । अर्कवृक्षे । शुक्लार्के । रा.नि.व.१० ।

**प्रतापतपन: (रस:)** । पुं । सन्निपातज्वराधिकारे रस: । "गन्धकं हिङ्गुलं सूतं तालकं लोहटङ्कणे । खर्परं साचिकाक्षारं मञ्जिष्ठां हिज्जलं समं । रसेन मर्द्दितम्पिण्ड निर्गुण्डीहस्तिशुण्डयो: । अष्टयामम्पचेत्कूप्यां निरुध्य सिकताह्वये । तत: सिद्धं समादाय रक्तिकामार्द्रकेण च । सेवेत ......॥" रस.को. । [ अम. ।

**प्रतापस:** । पुं । श्वेतार्के । শ্বেত আকন্দ ।

**प्रतिकर्म्म** । क्ली । प्रतिक्रियायाम् । उपाये । सु कल्प.५अ. । प्रसाधने । अम. ।

**प्रतिका** । स्त्री । जवापुष्पवृक्षे ।

**प्रतिकीर्ण:** । त्रि । मलादिव्याप्ते । च.इ. ।

**प्रतिखुर:** । पुं । मूढगर्भभेदे । "नि:सृतहस्तपादशिरा: कायसङ्गी प्रतिखुर: ।" सु.शा.८अ. ।

**प्रतिगन्धा** । स्त्री । सोमराज्याम् । रा.नि.व.४ ।

**प्रतिघ:** । पुं । मूर्च्छायाम् । श.र. ।

**प्रतिघ्नम्** । क्ली । अङ्गे । श.च. ।

**प्रतिच्छाया** । स्त्री । जलादर्शातपादिषु प्रतिफलितशरीरच्छायायाम् । প্রতিবিম্বিত শরীরের ছায়া । प्रतिप्रमाणसंस्थाना जलादर्शातपादिषु ।



छाया या सा प्रतिच्छाया या च वर्णप्रभाश्रया ॥" च.इ.७अ. ।

**प्रतिजिह्वा (ह्विका)** । स्त्री । मूलजिह्वायाम् । আলজিহ্বা । रा.नि.व.१८ । त्रिका. ।

**प्रतिज्ञा** । स्त्री । साध्यवचने । "प्रतिज्ञा नाम साध्यवचनं, यथा नित्य: पुरुष इति ।" च.वि. ८ अ. ।

**प्रतिज्ञाहानि:** । पुं । पूर्व्वप्रतिगृहीताया: प्रतिज्ञाया: पर्य्यनुयोगेन परित्यागे । च.वि.८अ. ।

**प्रतितन्त्रसिद्धान्त:** । पुं । सिद्धान्तविशेषे । See सिद्धान्त: ।

**प्रतितूणी** । स्त्री । वातव्याधिविशेषे । लक्षणं —"गुदोपस्थोत्थिता सैव प्रतिलोमं विधाविता । वेगै: पक्काशयं याति प्रतूणी चेह सोच्यते ॥" मा.नि. । "तूण्याञ्च प्रतितूण्याञ्च प्रशस्ता: स्नेहवस्तय: । पिबेद्वा स्नेहलवणं पिप्पल्यादिमथाम्बुना । उष्णेन रामठक्षारप्रगाढ़मथवा घृतम् ॥" सु.नि. १ अ. ।

**प्रतिनिका** । स्त्री । प्रसारण्याम् । शारिवायाम् ।

**प्रतिपत्रफला** । स्त्री । क्षुद्रकारवेल्लिकायाम् । रा.नि.व.७ ।

**प्रतिपर्ण(त्र)शिफा** । स्त्री । द्रवन्त्याम् । দন্তীভেদ । रा.नि.व.५ ।

**प्रतिपिष्ट:** । त्रि । अस्थिद्वयपिष्टे, उत्पिष्टे । হাড়ে হাড়ে থেঁতো হওয়া । भा.म.३भ. ।

**प्रतिबन्धक:** । पुं । वृक्षे । গাছ ।

**प्रतिबला** । स्त्री । अतिबलायाम् । चि.क्र.क. प्रद.चि. ।

**प्रतिमर्ष:** । पुं । शिरोवस्तिविशेषे । स चाबालं प्रयोज्य: । "जन्मप्रभृति बालस्य प्रतिमर्षो विधीयते ।" रत्नमालासंग्रह: । ईषदुत्सिङ्घनात् स्नेहो यावद्वक्त्रं प्रपद्यते । नस्ये निषिक्तन्तं विद्यात् प्रतिमर्षं प्रमाणत: । प्रतिमर्षञ्च नस्यार्थं करोति न च दोषभाक् ॥" प.प्र.४ख. । तत्र चत्वार: षट् अष्टौ वा बिन्दव: यथाबलं शिरोविरेकस्नेहस्य मात्रा । सु.चि.४०अ,वा.उ.२अ. । स चतुर्द्दशसु कालेषूपादेय: । तद्यथा—"तल्पोत्थितेन प्रक्षालितदन्तेन गृहान्निर्गच्छता व्यायामव्यवायाध्वपरिश्रान्तेन मूत्रोच्चारकवलाञ्जनान्ते भुक्तवता छर्द्दितवता दिवास्वप्नोत्थितेन सायञ्चेति । तल्पोत्थितादौ यथाक्रमं गुणा:—तल्पोत्थितेनासेवित: प्रतिमर्ष: रात्रावुपचितनासास्रोतोगतं मलमुपहन्ति मन:प्रसादञ्च करोति । प्रक्षालितदन्तेनासेवित: दन्तानां दृढ़तां वदनसौगन्ध्यञ्चापादयति । गृहान्निर्गच्छता सेवित: नासास्रोतस: क्लिन्नतया रजोधूमो वा नाबाधते । व्यायाममैथुनात्परिश्रान्तेन सेवित: श्रममुपहन्ति । मूत्रोच्चारान्ते वा सेवित: दृष्टिगुरुत्वमपनयति । कवलाञ्जनान्ते दृष्टिं प्रसादयति । अभुक्तवता सेवित: स्रोतसां विशुद्धिं लघुताञ्चापादयति । वान्तेनासेवित: स्रोतोविलग्नं श्लेष्माणमपोह्य भक्ताकाङ्क्षामापादयति । दिवास्वप्नोत्थितेनासेवित: निद्राशेषं गुरुत्वं मलञ्चापोह्य चित्तैकाग्रं जनयति । सायञ्चासेवित: सुखनिद्राप्रबोधञ्चेति । सु.चि.४०अ. ।

**प्रतिमा (नम्)** । स्त्री, क्ली । करिणो दन्तद्वयमध्यवर्त्तिखण्डभागे । गजदन्तबन्धे । त्रिका. ।

**प्रतिमूषिका** । स्त्री । छुछुन्दर्य्याम् । वै.निघ. ।

**प्रतियत्न:** । पुं । रचनायाम् । त्रिका. ।

**प्रतिरम्भ:** । पुं । रुन्तापे । निदा. ।

**प्रतिलोम:** । पुं । विलोमे ।

**प्रति(ती)वाप:** । पुं । कषाये चूर्णादिप्रक्षेपे । र.चि.३अ. । कल्के । सु.चि.२३अ. । धातुभस्मीकरणे । गलितस्य धातो: द्रव्यान्तरेणावचूर्णने । अ टी.स्वा. । पानीयौषधविशेषे । च.द.विद्र.चि. ।

**प्रतिबिम्बदर्शक:** । पुं । दर्पणे । वै.निघ. ।

**प्रतिविषा** । स्त्री । अतिविषायाम् । আতইচ । च.द.अ.सा.चि. । "हिङ्गुप्रतिविषाभया: ।"

**प्रतिविष्णुक:** । पुं । मुचुकुन्दवृक्षे । रा.नि. व १० । चोरिणीभेदे । वै.निघ. ।

**प्रतिवीजम्** । क्ली । तारनागाभ्रहेमकृतपारदनिबन्धनद्रव्ये । "नागाभ्रं वाहयेत्तारे हेम्नि च द्वादशे गुणे । प्रतिवीजमिदं श्रेष्ठं पारदस्य निबन्धनं ॥" र.चि.३अ. ।

**प्रतिश्या (श्या) (य:)** । स्त्री, पुं । नासारोगविशेषे । तस्य निदानम्—"अवश्यायानिलरजोभाष्यातिस्वप्नजागरै: । नीचात्युच्चोपधानेन पीतेनान्येन वारिणा । अत्यम्बुपानरमणच्छर्दिवाष्पग्रहादिभि । क्रुद्धा वातोल्बणा दोषा नासायां स्त्यानतां गता: । जनयन्ति प्रतिश्यायं वर्द्धमानं क्षयप्रदम् । तत्र वातात् प्रतिश्याये मुखशोषो भृशक्षव: । घ्राणोप-

रोधनिस्तोददन्तशङ्खशिरोव्यथा: । कीटका इव सर्पन्ति मन्यते परितो भ्रुवौ । स्वरसादश्चिरात् पाक: शिशिराच्छकफस्रुति: । पित्तात्तृष्णाज्वरघ्राण-पिटिकासम्भवभ्रमा: । नासाग्रपाको रुक्षोष्णताम्र-पीतकफस्रुति: । कफात्कासोऽरुचि: श्वासो वमथु-र्गात्रगौरवम् । माधुर्य्यं वदने कण्डू: स्निग्धशुक्लघना स्रुति: । सर्व्वजो लक्षणै: सर्व्वैरकस्माद्वृद्धिशान्ति-मान् । दुष्टं नासाशिरां प्राप्य प्रतिश्यायं करोत्य-सृक् । उरस: सुप्तता ताम्रनेत्रत्वं श्वासपूतिता । सर्व्व एव प्रतिश्याया दुष्टतां यान्त्युपेक्षिता: ।" वा.उ.१९अ. । रस.र,हाल.चि. । "प्रतिश्याश्वास-कासके ।" भा.म,१भ.श्लेष्म.ज्व.चि. । "प्रतिश्यायो ऽरुचि: कास: ।" पीनसरोगे । निदा. ।

**प्रतिष्ठा** । स्त्री । जनोपादेयतथावस्थाने । च. सू.१अ. ।

**प्रतिष्ठापना** । स्त्री । परप्रतिज्ञाया: प्रति-विपरीतार्थाया: स्थापनायाम् । यथा—अनित्य: पुरुष: इति । च.वि.८अ. ।

**प्रतिसमाधानम्** । क्ली । रोगमुक्तकरणे । वै.निघ. । [ निघ. ।

**प्रतिसर:** । पुं । व्रणशुद्धौ । प्रभातकाले । वै.

**प्रतिसार: (णम्)** । पुं, क्ली । लवणै: कटु-चूर्णैश्च व्रणघर्षणे । "लवणै: कटुचूर्णैश्च घृष्यते यद्व्रणं बुधै: । प्रतिसारस्तत: प्रोक्त:...... ॥" ज.द. १२अ. । घर्षणे । सु.चि.२२अ. । दन्तजिह्वा-मुखानां चूर्णकल्कावलेहैरङ्गुल्या शनै: घर्षणे । "वैरस्यं मुखदौर्गन्ध्यं मुखशोषं तथा तृषाम् । अरुचिं दन्तपीड़ाञ्च निहन्ति प्रतिसारणम् ॥" भा. ।

**प्रतिसारी** (इन्) । त्रि । सारकद्रव्यमात्रे । वै. निघ. ।

**प्रतिसूर्य्य: (क:)** । पुं । सरटे । त्रिका. । विश्व. । तन्नामकगोधेरकजातौ । सु.कल्प.८अ. ।

**प्रतिसोमा** । स्त्री । महिषवल्लीलतायाम् । रा. नि.व.३ । लघुसोमलतायाम् । वै.निघ. ।

**प्रति(ती)हास:** । पुं । करवीरवृक्षे । करवी गाछ । रा.नि.व.१० । अम. । शुक्लकरवीरे । वै. निघ. ।

**प्रतिक्षुत्** । स्त्री । छिक्कायाम् । हाँचि । वै.निघ. ।

**प्रतीक:** । पुं । शरीरावयवे । रा.नि.व.१८ । पटोले । भा.पू.१भ.शा.व. । विलोमे । मे ।

**प्रतीकार:** । पुं । चिकित्सायाम । श.मा. ।

**प्रतीनाह:** । पुं । कर्णरोगे । लक्षणम्—"वातेन शोषित: श्लेष्मा स्रोतो लिम्पेत्ततो भवेत् । रुग्गौरवं पिधानञ्च स प्रतीनाहसंज्ञक: ॥" वा.उ.१७अ. । नासारोगभेदे । "उच्छ्वासमार्गन्तु कफ: सवातो रुन्ध्यात् प्रतीनाहमुदाहरेत्तम् ।" मा.नि. ।

**प्रतुण्डक:** । पुं । जीवकशाके । वै.निघ. ।

**प्रतुद:** । पुं । गृध्रश्येनकाकादिपक्षिजातौ । ते प्रतुद्य निष्कृष्य भक्षयन्तीति प्रतुदसंज्ञा: प्राप्ता: । तन्मांसगुणा:—सद्य:स्वादु गुरूष्णं स्निग्धं बल्यं पित्तदाहरक्तकरञ्च । रा.नि.व.१७ । एतदर्कगुणा: —"कफपित्तहरो ग्राही बद्धविण्मूत्रको भवेत् ।" अर्क.चि. ।

**प्रतूणी** । स्त्री । प्रतितूणीनामरोगभेदे । See प्रतितूणी ।

**प्रतोली** । स्त्री । ग्रीवाभिद्ग्रीवाव्रणबन्धनभेदे । सु. सू.१८अ. । लक्षणं—"मुक्तोलौ पुटिका प्रोक्ता जालवद्बहुरन्ध्रका ।" इति भानुमती.टी. । "कौपी-नाकारा मत्स्यधारणजलयन्त्रवत् बहुच्छिद्रा मुक्तोली प्रतोली वा ।" वा. ।

**प्रत्यक्पर्णी** । स्त्री । रक्तापामार्गे । भा.पू.१ भ. । द्रवन्त्याम् । रा.नि.व.५ ।

**प्रत्यक्पुष्पी** । स्त्री । अपामार्गक्षुपे । रा.नि.व. ४ । सु.सू.४३अ. । च.सू.१।४अ. । वा.सू.१५अ. अर्कादि: । "प्रत्यक्पुष्पी पीलतैलोदकीर्य्या ।" मूषिकपर्ण्याम् । दन्तीवृक्षे ।

**प्रत्यक्श्रेणी** । स्त्री । दन्त्याम् । अम. । च.सू.१ अ. । मुतश्रेणीक्षुपे । रा.नि.व.४ । द्रवन्तीक्षुपे । रा.नि.व.५ । आखुकर्ण्याम् । ইন্দুরকাণী । [ मूषाकाणी । रा.नि.व.३ । क्षणदन्तीक्षुपे । र.मा. ।

**प्रत्यग्गन्धा** । स्त्री । स्वर्णयूथिकायाम् वै. निघ. ।

**प्रत्यङ्गम्** । क्ली । अङ्गावयवेषु । तानि मस्तको-दरपृष्ठनाभिललाटनासाचिबुकवस्तिग्रीवा: इत्येता एकैका: । कर्णनेत्रनासाभ्रूशङ्खांसगण्डकक्षस्तनवृषण-पार्श्वस्फिग्जानुबाहूरुप्रभृतयो द्वे द्वे विंशतिरङ्गुलय: । एष प्रत्यङ्गविभाग: । तस्य पुन: सङ्ख्यानम् । यथा—त्वच: कला: धातव: मला: दोषा: यकृत् प्लीहा फुस्फुस: उण्डुक: हृदयम् आशया: अन्त्राणि वृक्कद्वयं स्रोतांसि कण्डरा: जालानि कूर्चा: रज्जव:



सेवन्य: सङ्घाता: सीमन्ता: अस्थीनि सन्धय: स्नायव: पेश्य: मर्म्माणि शिरा: धमन्य: योगवहानि च । विशेषा: पर्य्यायेषु मृग्या: । सु.शा.५अ. ।

**प्रत्यङ्गिरा** । स्त्री । कण्टकशिरीषवृक्षे । "पिबति य: प्रत्यङ्गिरासम्भवम् ।" च.द. भेष. विष.चि. । श्वेतपुनर्नवायाम् । कुलिकावृक्षे ।

**प्रत्यञ्जनम्** । क्ली । अञ्जनेन नेत्रप्रसाधने । চোখে কাজল দেওয়া । च.द. । [ निघ. ।

**प्रत्यनीक:** । त्रि । प्रतिकूले । असाध्ये । वै.

**प्रत्यनुयोग:** । पुं । अनुयोगस्यानुयोगे । यथा —"अनुयोगस्य पुन: को हेतु: इति ।" च.वि.८अ. ।

**प्रत्यय:** । पुं । हेतौ । भा. । रन्ध्रे । शब्दे । अम. । त्रि । ख्यातौ । हे.च. ।

**प्रत्यवसानम्** । क्ली । भोजने । र.मा. । रा. नि.व.२० ।

**प्रत्यश्मा** (न्) । पुं । गिरिमृत्तिकायाम् । গিরিমাটী । त्रिका. ।

**प्रत्यष्ठीला** । स्त्री । वातव्याधिविशेषे । लक्षणं यथा—"एतामेव रुजायुक्तां वातविण्मूत्ररोधिनीं । प्रत्यष्ठीलामिति वदेत् जठरे तिर्य्यगुत्थिताम् ॥" मा.नि. । सु.नि.१अ. । "प्रत्यष्ठीलाष्ठीलकयो: गुल्मेऽभ्यन्तरविद्रधौ । क्रियाहिङ्ग्वादिचूर्णञ्च शस्यते-ऽत्र विशेषत: ॥"

**प्रत्यक्षम्** । क्ली । इन्द्रियग्राह्ये । अम. । तच्च षड्विधं चाक्षुषादिभेदेन । "प्रत्यक्षं नाम तद्यदा-त्मना पञ्चेन्द्रियैश्च स्वयमुपलभ्यते । तत्रात्मप्रत्यक्षा: सुखदु:खेच्छाद्वेषादय: । शब्दादयस्तु इन्द्रिय-प्रत्यक्षा: ।" च.वि.८अ. ।

**प्रत्याध्मान:** । पुं । वातव्याधिविशेषे । लक्षणम् —"विमुक्तपार्श्वहृदयं तदेवामाशयोत्थितं । प्रत्या-ध्मानं विजानीयात्कफव्याकुलितानिलम् ॥" मा.नि. । सा. चिकित्सा—"प्रत्याध्माने समुत्पन्ने कुर्य्याद्वमन-लङ्घने । दीपनादि प्रयुञ्जीत पूर्व्ववद्बस्तिकर्म्म च ॥"

**प्रत्यानाह:** । पुं । आनाहवाते । निदा. ।

**प्रत्युद्गार:** । पुं । वायुजन्यरोगभेदे । वै.निघ. ।

**प्रत्यु(त्यू)ष:** । पुं, क्ली । प्रभाते । अ.टी.भ. ।

**प्रथमकुसुम:** । पुं । शुक्लमरुवकवृक्षे । वै.निघ. ।

**प्रथमनवनीतम्** । क्ली । प्रसवात् शतदिना-न्तरजातनवनीते । वै.निघ. ।

**प्रथितालुकी** । स्त्री । रक्तालुभेदे । भा. ।

**प्रथुक:** । पुं । चिपीटके । চিঁড়ে ।

**प्रदर:** । पुं । (Fluor albus.) तन्नामक-स्त्रीरक्तादिस्रावरोगे । প্রদর, পরদল । "रज: प्रदीर्य्यते यस्मात् प्रदरस्तेन स स्मृत: ।" निदानादि यथा—'विरुद्धमद्याध्यशनादजीर्णाद्गर्भप्रपातादतिमैथु-नाच्च । यानाध्वशोकादतिकर्षणाच्च भाराभिघाता-च्छयनाद्दिवा च । तं श्लेष्मपित्तानिलसन्निपातैश्चतु:-प्रकारं प्रदरं वदन्ति ।" इति । लक्षणं यथा— "असृग्दरं भवेत्सर्व्वं साङ्गमर्द्दं सवेदनम् । शश्वत् स्रवन्तीमास्रावं तृष्णादाहज्वरान्वितां । दुर्व्वलां क्षीण-रक्ताञ्च तामसाध्यां विवर्जयेत् ॥" कफाद्यथा— आमं पिच्छं पाण्डुतुषोदकाभं स्रवति । पित्तात् पीतनीलशुभ्रमुष्णं सवेगं रक्तं स्रवति । वातात् रूक्षम् अरुणं फेनिलमल्पमल्पञ्च स्रवति । अन्यच्च— सक्षौद्रसर्पिर्हरितालवर्णं कुणपं मज्जप्रकाशञ्च स्रवेत् । मा.नि. ।

**प्रदरान्तकलौहम्** । क्ली । प्रदराधिकारे लौहे । "लौहं ताम्रं हरीतालं वङ्गमभ्रं वराटिका । त्रिकटु त्रिफला चित्रं विड़ङ्गं पटुपञ्चकम् । चविका पिप्पली शङ्खं वचाहवुषपाकलम् । शटी पाठा देवदारु एला च वृद्धदारकम् । एतानि समभागानि संचूर्ण्य वटिकां कुरु । शर्करामधुसंयुक्तां घृतेन भावयेत् पुन: । रक्तं श्वेतं तथा नीलं पीतं प्रदरदुस्तरम्...।" লৌহ, তামা, হরিতাল, বঙ্গ, অভ্র, কড়িভস্ম, ত্রিকটু, ত্রিফলা, চিতামূল, বিড়ঙ্গ, পঞ্চলবণ, চই, পিপুল, শঙ্খভস্ম, বচ, হবুষফল, কুড়, শটী, আকনাদি, দেবদারু, এলাইচ, বীজতাড়কের বীজ, প্রত্যেক চূর্ণ সমভাগ, মধু ও চিনি সংযোগে ঘৃতের সহিত ভাবনা দিয়া বটী করিবে । रस.र. ।

**प्रदिग्धमांसम्** । क्ली । पक्वमांसव्यञ्जनविशेषे । "मांसं बहुघृतैर्भृष्टं सिक्तं क्षीराम्बुना मुहु: । जीरकाद्यै: समायुक्तं परिशुष्कं तदुच्यते । तदेव घृततक्राद्यं प्रदिग्धं सविज्ञानकम् ॥" See मांसम् ।

**प्रदीपन:** । पुं । चित्रकवृक्षे । वै.निघ.२भ.अर्श:-चि.राजवल्लभरसे । स्थावरविषभेदे । लक्षणं यथा —"वर्णतो लोहितो य: स्याद्दीप्तिमान्दहनप्रभ: । महादाहकर: पूर्व्वै: कथित: स प्रदीपन: ॥" भा. ।

**बालरस:** । पुं । बालज्वराधिकारे रस: । "शाणं शुद्धस्य सूतस्य गन्धकस्य च तत्समं । सुवर्णमाक्षिकस्यापि अर्द्धभागं प्रयोजयेत् । ततः कज्जलिकां कृत्वा लौहपात्रे दृढे नवे । कैशराजस्य भृङ्गस्य निर्गुण्ड्याः पञ्चसम्भवम् । शुभे शिलामये पात्रे लौहदण्डेन मर्द्दयेत् । शुष्कमातपसंयोगाद्गुडिकां कारयेत्ततः । प्रमाणं सर्षपाकारम् बालानाञ्चैव योजयेत् ॥" পারা ও গন্ধক সমান ভাগ, স্বর্ণমাক্ষিক পারদার্দ্ধ ভাগ; কজ্জলি করিয়া কেশুতে, ভীমরাজ ও নিশিন্দাপাতার রস সহ প্রস্তরময় পাত্রে লৌহদণ্ডদ্বারা মর্দ্দন করিয়া, সর্ষপপ্রমাণ বটী করিবে । रस.र. ।

**बालराजम्** । क्ली । वैदूर्य्यमणौ । श.र. ।

**बालरोग:** । पुं । शिशूनां रोगे । तस्य निदानलक्षणानि—"धात्र्यास्तु गुरुभिर्भोज्यैः विषमैर्दोषलैस्तथा । दोषा देहे प्रकुप्यन्ति ततः स्तन्यं प्रदुष्यति । मिथ्याहारविहारिण्या दुष्टा वातादयः स्त्रियाः । दूषयन्ति पयस्तेन जायन्ते व्याधयः शिशोः ॥" सु.शा. १०अ. वातदुष्टं शिशुः स्तन्यं पिबन् वातगदातुरः । क्षामस्वरः कृशाङ्गः स्याद्बद्धविण्मूत्रमारुतः ॥ स्विन्नो भिन्नमलो बालः कामलापित्तरोगवान् । तृष्णालुरुष्णसर्व्वाङ्गः पित्तदुष्टं पयः पिबन् ॥ कफदुष्टं पिबन् क्षीरं लालालुः श्लेष्मरोगवान् । निद्रार्दितो जडः शूनो वक्राक्षश्छर्दनः शिशुः ॥ द्वन्द्वजे द्वन्द्वजं रूपं सर्व्वजे सर्व्वलक्षणम् । ज्वराद्या व्याधयः सर्व्वे वर्त्तन्ते महतान्तु ये । बालानामपि ते तद्वत् बोद्धव्या भिषगुत्तमैः । बालानामेव ये रोगा भवन्ति महतां न च । तालुकण्टकमुख्यांस्तानवधारय यत्नतः ॥" यथा—तालुकण्टकमहापद्मकुकूणकतुण्डिगुदपाकाहिपूतनाशुष्करेवतीपरिगर्भिकदन्तोद्भेदादयः । एषां लक्षणानि स्वस्वपर्य्याये द्रष्टव्यानि । निदा. ।

**बालवत्स:** । पुं । कपोते । वै.निघ. ।

**बालवर्त्ति:** । स्त्री । बालनिर्म्मितवर्त्त्याम् । सु. चि २अ. ।

**बालवाय(ज)म्** । क्ली । वैदूर्य्यमणौ । चिका. ।

**बालवाह्य:** । पुं । वन्यच्छागे । हारा. ।

**बालविल्वम्** । क्ली । कोमलविल्वफले । কচি বেল । वैनिघ.२भ.अ.सा.चि.पथ्यादिकषाये ।

**बालवैद्य:** । पुं । बालचिकित्सके । निदा. ।

**बालव्यजनम्** । क्ली । चामरे । চামর । गुणा —"बालव्यजनमोजस्यं मक्षिकादीन् व्यपोहति ॥": राज.२प. । "शीत-दाह-श्रम स्वेद-मूर्च्छाघ्नो व्यजनानिलः ।" सु.चि.२४अ. ।

**बालसन्ध्याभ:** । पुं । अरुणवर्णे ।

**बालसूर्य्य:** । पुं । प्राभातिकसूर्य्ये । वन्यच्छागे । वै.निघ. ।

**बालसूर्य्य(क)म्** । क्ली । वैदूर्य्यमणौ । त्रिका. ।

**बालहाटक:** । पुं । क्षुद्रधुस्तूरवृक्षे ।

**बाला** । स्त्री । सूक्ष्मैलायां । रा.नि.व ६ । नारिकेलवृक्षे । हरिद्रायाम् । मे. । आघ्रातकवृक्षे । यूथ्यां । यूँइ । वै निघ. । पाठायां । नीलझिण्ट्यां । रा.नि.व.६।१० । कुमार्य्याम् । कुमारी । श.र. । ह्रीवेरे । বালা । श.च. । भैष.शोथ.चि.तद्दगुच्छमूलाद्यतैले । षोडशवर्षीयस्त्रियाम् । "बालेति गीयते नारी यावद्वर्षाणि षोडश ।" सा शीतसमयकालयो: प्रशस्ता हृद्या च । राज. ।

**बालाङ्गी** । स्त्री । दुग्धपुष्प्याम् ।

**बालाङ्घ्रि:** । पुं । शरपुङ्खायाम् । বন নীল । रस.र.विपरीतमल्लतैले ।

**बालार्क:** । पुं । श्वेतार्कवृक्षे । সাদা আকন্দগাছ । प्रातःसूर्य्ये ।

**बालाश्म(न्)** । क्ली । बालुकायां । भा.म.२भ. उदर.चि. ।

**बालाह्वी** । स्त्री । केशपुष्टवनस्पती । श.च. ।

**बालिका** । स्त्री । एलायाम् । श.र. । अम्बष्ठायाम् । পাঠা । रा.नि,व.५ । कुमार्य्याम् । घृतकुमारी । मुषल्याम् । कन्यायाम् । कर्णभूषणे । शर्करायाम् ।

**बालिकाम्बिका** । स्त्री । अम्बष्ठायाम् ।

**बालि(ली)श:** । पुं । शिशौ । मे. । मूत्रकृच्छ्ररोगे । श.र. । क्ली । उपाधाने । श.मा. ।

**बालीक:** । पुं । "बगेरीति" ख्याते पक्षिभेदे । तत्पर्य्याय-गुणा:,—बालीको वर्त्तिवटको वार्त्तिकश्चैव स स्मृत: । बालीको मधुरः शीतो रूक्षश्च कफपित्तनुत् ॥"

**बालु:(का)** । पुं, स्त्री । कर्पूरे । श.च. । वै. निघ.२भ.श्वास.चित्रकाद्यादिचूर्णे । चिर्भटिकायां । कुटी । लटा. । सिकतायाम । बालुका ।



तत्पर्य्याया:—सिकता: सिकता सिक्ता बालिका शर्करा शीतला सूक्ष्मशर्करा प्रवाही सूक्ष्मा महासूक्ष्मा पानीयवर्णिका । गुणा.—लेखनी शीता व्रणोरःक्षतनाशिनी च । भा. । तन्नामकयन्त्रे । बालूकायन्त्र । (का) ऐलवालुके । उणा. । श.च. ।

**बालुकम्** । क्ली । ऐलवालुके । अम. । शाकविशेषे । वै.निघ.१भ.अर्श.चि. । आलुकफले । पानीयालुके । वै.निघ.अर्श:चि.पथ्यागुडे । श्वेतमरिचे ।

**बालुकागड:** । पुं । मत्स्यविशेषे । বেলেগুড়্গুড়ি মাছ । हारा. ।

**बालुकात्मिका** । स्त्री । शर्करायाम् । চিনি । श.च. ।

**बालुकायन्त्रम्** । क्ली । औषधपाकार्थयन्त्रभेदे । বালুকাযন্ত্র । यथा—"भाण्डे वितस्तिगम्भीरे मध्ये निहितकूपके । कूपिकाकण्ठपर्य्यन्तं बालुकाभिश्च पूरिते । भेषजङ्कूपिकासंस्थं वह्निना यत्र पच्यते । बालुकायन्त्रम्...... ॥" भा. ।

**बालुकास्वेद:** । पुं । तप्तबालुकाभि: स्वेदे । পুঁড়স্বেদ । यथा—"वातस्र पकृते स्वेदान् कारयेद्बहुनिर्म्मितान् । स्निग्धः स्वेदो निजिह्वोऽत्र विना केवलवातजान् ॥ खर्परभृष्टपटस्थितकाञ्जिकसंसिक्तबालुकास्वेदः । शमयति वात-कफामय-मस्तकशूलाङ्गादीन् ॥" भा. ।

**बालुकिनम्** । क्ली । हिङ्गुले । श.चि. ।

**बालुकी(ङ्की)** । स्त्री । चिवकर्कटिकायाम् । त्रिका. । बालुककर्कटिकायाम् । तत्पर्य्याया:—बहुफला स्निग्धफला चिचकर्कटी चिलरुहा काङ्क्षिका मूषला । गुणा:—"बालुकी मधुरा शीता आध्मानरुच्छ्रमापहा । पित्तासृक्शमनी रुच्या कुरुते वातपीवसी ॥" शरद्वर्षजा सा दोषकरी, हेमन्तजा पित्तहरा रुच्या । अर्द्धपक्वा पीनसकरी, पक्वा अतिमधुरा । रा.नि.व.७ ।

**बालुकेलम्** । क्ली । हलायां भूम्याम् बालुका जाते लवणे । च.वि.८अ. ।

**बालुङ्किका(ङ्की)** । त्रि । कर्कट्यां । श.र. ।

**बालूक:** । पुं । विषभेदे । हे.च. ।

**बालेय:** । पुं । गर्दभे । त्रिका, । चाणक्यमूलके । रा.नि.व.७ । मुसली । अ.द.१२अ. । अङ्गारवल्ल्यां । महाकरञ्जे । विश्व. ।

**बालेयशाक:** । पुं । भार्ग्याम् । বামনহাটী । अम. ।

**बालेष्ट: (फल:)** । पुं बदरवृक्षे । কুল গাছ । रा.नि.व.११ ।

**बालला** । स्त्री । एलायाम् । वै.निघ. ।

**बाल्मीक:** । पुं । वल्मीके । উইঢিপি ।

**बाल्यम्** । क्ली । बालभावे ।

**बाल्वङ्किरा** । स्त्री । दुर्वालतायाम् । কাঁকুড় গাছ । हारा. ।

**बाष्कलम्** । क्ली । रौप्ये । वै. निघ. ।

**बाष्प:** । पुं । अश्रुणि । अम. ।

**बाष्पक:** । पुं । मारिषशाके । নটেশাক । वै.निघ. ।

**बाष्पिका** । स्त्री । नीरकभेदे । वै.निघ. ।

**बाह:(हा)** । पुं, स्त्री । बाहौ । अ.टी.र. ।

**बाहु:** । पुं । हस्ते । कक्षादङ्गुल्यग्रपर्य्यन्तावयवे । तत्पर्य्याया:,—भुज: प्रविष्ट: दो: दोष: बाहु: शाख: । त्रिका. ।

**बाहुकुण्ठ:** । पुं । दोर्गण्डौ । কোপা । त्रिका. ।

**बाहुज:** । पुं । स्वयञ्जाततिले । मे. ।

**बाहुपिण्डिका** । स्त्री । प्रत्यङ्गभेदे । হাতের গুলি । च.श.७अ. ।

**बाहुमूलम्** । क्ली । कक्षे । বগল । अम. ।

**बाहुल:** । पुं । कार्त्तिके मासि । अम. । अग्नौ ।

**बाहुल्यम्** । क्ली । प्रष्टौ । भा.म.कुष्ठ.चि ।

**बाहुशोष:** । पुं । तन्नामकवातव्याधौ । निदानलक्षणे—"अंसदेशस्थितो वायुः शोषयेदंसबन्धनम् । अंसबन्धनशोष: स्याद्बाहुशोष: सवेदन: ॥" मा.नि. ।

**बाह्यायाम:** । पुं धनुस्तम्भभेदे । निदानलक्षणे—"महाहेतुर्म्मलो वायुः शिराः सस्नायुकण्डराः । मन्यापृष्ठाश्रिता बाह्याः संशोष्यानमयेद्बहिः । यत्र तं बहिरायामं प्रवदन्ति भिषग्वराः । तमसाध्यं बुधाः प्राहुः वक्षःकट्यूरुभञ्जनम् । बाह्यायामेऽन्तरायामे विधेयाद्धितवत्क्रिया ॥" च ।

**बाह्वस्थि** । क्ली बाहुनलके । হাতের নলি । च.श.७अ. ।

**बिंबिशि:** । स्त्री । प्रवाहिकायाम् । আমশয়রোগ । वा.चि,९अ.

**विड़म्।** क्ली। विड़लवणे। विट् लवण। वै.निघ, शीतज्व.चि,आरोग्यरागिरसे।

**बिम्बिका (म्बी)।** स्त्री। (Coccinia Indica, Syn. Momordica monodelpha.) तुण्डिकेर्य्यां। তেলাকুচা। हि कुन्दुरी। "बिम्बीफलं स्वादु शीत गुरु पित्तास्रवातजित्। स्तम्भनं लेखनं रुच्यं विबन्धाध्मानकारकम् ॥" भा.पू.१म.शा.व.।

**बीभत्सः (त्सुः)।** पुं। घृणाजनके। अर्ज्जुनवृक्षे। वै.निघ.।

**बुकः।** पुं। एरण्डवृक्षे। प.मु.। ईश्वरमल्लिकायाम्। वा.सू,१५अ.।

**बुक्कः।** पुं। छागे। शिका.। क्ली। अग्रमांसे। अम.। स्त्री (क्का, क्की)। अग्रमांसे। अ.टी.भ,स्वा.। रक्ते। कल्पद्रुमे रभसः।

**बुक्का (न्)।** पुं। अग्रमांसे। अ.टी.भ.। स्त्री। वक्षोऽधःपार्श्वभागे। च.मू.१७अ.।

**बद्धिः।** स्त्री। अन्तःकरणे। "शुश्रुषा श्रवणञ्चैव ग्रहणं धारणं तथा। ऊहापोहार्थविज्ञानं तत्त्वज्ञानञ्च धीगुणाः॥" राज.।

**बुद्धिदात्री।** स्त्री। वृद्धौषधौ। वै.निघ.।

**बुद्धीन्द्रियम्।** क्ली। ज्ञानेन्द्रिये। यथा—"मनः कर्णौ तथा नेत्रे रसना त्वक् च नासिके। बुद्धीन्द्रियम् ...... ॥" श.र.।

**बुद्बुदः।** पु। वारिबिम्बुक्याम्। ভুড়ভুড়ি। अम.। अश्वस्य नेत्ररोगभेदे। ज.द.।

**बुधः।** पुं। कुक्कुरे। वै. निघ.।

**बुधरत्नम्।** क्ली। मरकतमणौ। रा.नि.व.१३।

**बुधा।** स्त्री। जटामांस्याम्। श.च.।

**बुघ्नः।** पुं। मूलशिफायाम्। মূলশিকড়। रा.नि. व.२। गुदे। वै.निघ.।

**बुभुक्षा।** स्त्री। क्षुधायाम्।

**बुलिः।** स्त्री। स्त्रीगुह्याङ्गे। हे.च.।

**बुष(स)म्।** क्ली। तुषे। তুষ। नकुलः १३अ.।

**बुस्तम्।** क्ली। कण्टाफलस्यासारभागे। কাঁটালের ভূঁতি। अम.।

**बुक्कम्।** क्ली। बुक्के। हृदये। अ.टी.र,।

**बृक्क (न्)।** क्ली। मूत्राशये। तत्र द्वयं रक्तमेदःप्रसादजम्। सु.शा.४अ.। नाडीव्रणे। रा.नि.व.२।

**बृहत्फलः।** पुं। चिर्भिण्डायाम्। চিচিঙ্গা। मद.व.३।

**बेटकः।** पुं। मत्स्यविशेषे। श.र.। ভেটকী মাছ।

**बेट्टचन्दनम्।** क्ली। श्रीखण्डचन्दनान्यतरे। "मलयाद्रिसमीपस्थाः पर्व्वता बेट्टसंज्ञिताः। तज्जातं चन्दनं यत्तु बेट्टाख्यं क्वचिन्मतं॥" तच्चातिशीतं दाहपित्तज्वरघ्नं तिक्तं छर्दिमोहतृष्णाकुष्ठतिमिरोत्क्षोभघ्नं। रा.नि.व.१२।

**बोकड़ी।** क्ली। अजान्त्रीलतायां। रा.नि.व.।

**बोटः।** पुं। अलम्बुषायाम्। वा.चि.१अ.।

**बोटवृद्धा**
**बोटस्था** } स्त्री। गोरक्षमुण्ड्याम्। व.निघ.।

**बोधः।** पुं। अङ्कोठवृक्षे। ज्ञाने।

**बोधनम्।** क्ली। रसस्य संस्कारविशेषे। See पारदः। [मि.।

**बोधनी।** । स्त्री। वृद्धौषधौ। र.मा.। पिप्पल्यां।

**बोधिः।** पं। अश्वत्थवृक्षे। र.मा.। अम्लवेतसवृक्षे। कुक्कुटे। वै.निघ.।

**बोधितरुः(द्रुमः, पादपः)।** पुं। अश्वत्थवृक्षे। मद.व.५। अम.।

**बोधिवृक्षः।** पुं। अश्वत्थवृक्षे। रा.नि.व.२३।

**बोधी (इन्)।** पुं। अम्लवेतसवृक्षे।

**ब्रध्नः।** पु। अर्कवृक्षे। आकन्द गाछ। अम.। तन्नामकरोगे। व्रागी। निदानादि—"अत्यभिष्यन्दिगुर्व्वन्नसेवनान्निचयङ्गतः। करोति ग्रन्थिवच्छोथं दोषो वङ्क्षणसन्धिषु। ज्वरशूलाङ्गसादाढ्यं तं ब्रध्नमिति निर्द्दिशेत्॥" वि.रू.तन्त्रान्तरम्। "यस्य वायुः प्रकुपितः शोफशूलकरश्चरन्। वङ्क्षणाद्वृषणौ याति ब्रध्नस्तस्योपजायते॥" सु.सू.१८अ.। शोथके। भा.। वृक्षमूले। अम.।

**ब्रह्मकन्यका।** स्त्री। ब्राह्मीक्षुपे। ब्राह्मी। रा.नि.व.५।

**ब्रह्मकाष्ठम्।** क्ली। तूलकाष्ठे। रा.नि.व.९।

**ब्रह्मकुशा।** स्त्री। अजमोदायाम्। বনযোয়ান, রাঁধুনী। भा.।

**ब्रह्मकोशा।** स्त्री। अजमोदायाम्। রাঁধুনী। रा.नि.व.६।



**ब्रह्मगर्भा।** स्त्री। अजगन्धायाम्। বনযমানী। आदित्यभक्तायां। হুড়হুড়িয়া। रा.नि.व.४।

**ब्रह्मघ्नी।** स्त्री। गृहकन्यायाम्। ঘৃতকুমারী। "ब्रह्मघ्नी तु कुमारी स्यात्।" रा.नि.व.३।

**ब्रह्मचर्य्यम्।** क्ली। अमैथुने। भा.उ,वाजी. उपस्थनिग्रहादौ। च.सू.१अ.।

**ब्रह्मचारिणी।** स्त्री। ब्राह्मीशाके। प.मु.। कोङ्कणदेशे करवीकणीनाम्ना प्रसिद्धवृक्षे। रा.नि. व.१०। ब्रह्मयष्टिकायाम्। বামনহাটী। र.मा.। वा.सू.२९अ.।

**ब्रह्मचारी (इन्)।** पुं। पारिशाम्वत्थे। গয়া অশ্বথ। त्रिलक्ष्मे। वै. निघ.।

**ब्रह्मजटा।** स्त्री। दमनकक्षुपे। দনা। रा.नि. व.१०। सुञ्जतृणे।

**ब्रह्मजा।** स्त्री। ब्राह्म्याम्। रा.नि.व.२३।

**ब्रह्मणिका।** स्त्री। अग्निप्रकृतिकीटभेदे। सु. कल्प.८अ.। See कीटः।

**ब्रह्मण्यः।** पुं। मुञ्जतृणे। মুঞ্জ। रा.नि.व.८। पारिशाम्वत्थे। গয়া অশ্বথ। अम.।

**ब्रह्मतरुः।** पुं। ब्रह्मदारुवृक्षे।

**ब्रह्मतीर्थम्।** क्ली। पुष्करमूले। কুড়বিশেষ। प.मु.। रा.नि.व.६।

**ब्रह्मत्वक्।** पु। सप्तपर्णवृक्षे। ছাতিম গাছ। वै.निघ.। ब्राह्मणयष्टिकायाम्। বামন হাটী। श.च.।

**ब्रह्मदण्डः।** पुं। यमान्यां। व.निघ.। भार्ग्याम्।

**ब्रह्मदण्डी।** स्त्री। Lamprachoenium microcephalum.) स्वनामख्यातक्षुपे। सं ब्रह्मदण्ड। वम.ब्रह्मदण्डी। तत्पर्य्यायौ,—अजदण्डी, कण्टपत्रफला। गुणाः—कटुः उष्णा कफशोथवातघ्नी च। रा.नि.व.५। ज.द.। च.द. ज्व.चि.। "ब्रह्मदण्डी कृताञ्जलिः।"

**ब्रह्मदर्भः (र्भा)।** पुं, स्त्री। यमान्याम्। भा.। भैष.अग्निसन्दीपनरसे।

**ब्रह्मदारु।** क्ली। तूलकाष्ठे। পলাশপিপুল। रा.नि.व.९। पुं। फञ्जीनामक्षुपे। रा.नि.व.२३। तत्फले। भा.।

**ब्रह्मनिष्ठः।** पुं। पारिशपिप्पले। পলাশপিপুল। वै.निघ.।

**ब्रह्मन्।** क्ली। मोक्षे। च.सू.१अ.। वेदे। अम.।

**ब्रह्मपत्रम्।** क्ली। पलाशपत्रे। शब्दकल्पद्रुमः।

**ब्रह्मपत्री।** स्त्री। वाराहीनाममहाकन्दशाके। শুয়ার আলু। रा.नि.व.७।

**ब्रह्मपर्णी।** स्त्री। पृश्निपर्ण्याम्। रा.नि.व.२३।

**ब्रह्मपवित्रः।** पुं, स्त्री। सितदर्भे। কুশ। रा.नि.व.८।

**ब्रह्मपादपः।** पुं। विकङ्कतवृक्षे। रा.नि.व.९। पलाशवृक्षे। हे.च.।

**ब्रह्मपुत्रः।** पुं। विषभेदे। प.मु.। तत्स्वरूपं —"वर्णतः कपिलो यः स्यात्तथा भवति सारतः। ब्रह्मपुत्रः स विज्ञेयो जायते मलयाचले। ब्राह्मणः पाण्डुरस्तेषु क्षत्रियो लोहितप्रभः। वैश्यः पीतः सितः शूद्रो विष उक्तश्चतुर्व्विधः॥" भा.।

**ब्रह्मपुत्री।** स्त्री। भार्ग्याम्। বামনহাটী। रा.नि.व.२३। वाराहीकन्दे। रा.नि.व.७।

**ब्रह्मपुष्पः।** पुं। फणिज्झकक्षुपे। ज.द.।

**ब्रह्मभद्रा।** स्त्री। त्रायमाणायाम् वै.निघ.।

**ब्रह्मभूमिजा।** स्त्री। सैंहलीपिप्पल्याम्। रा. नि.व.६।

**ब्रह्ममण्डूकी।** स्त्री। ब्राह्म्याम्। वै.निघ.। मण्डूकपर्ण्याम्।

**ब्रह्ममेखलः (ला)।** पुं, स्त्री। मुञ्जतृणे। वै. निघ.।

**ब्रह्मयष्टिः।** स्त्री। भार्ग्यां। प.मु.। वेत्राख्य-वंशभेदे। বেউর বাঁশ।

**ब्रह्मरन्ध्रम्।** क्ली। उत्तमाङ्गे मस्तिष्कोपरिभागे। ব্রহ্মতালু। तन्त्रम्।

**ब्रह्मरसः।** पुं। वातरक्ताधिकारे रसः। पलाशबीजचूर्णञ्च गोघृतेन समन्वितं। तुल्यं तुल्यं मृतशुल्वं स्निग्धे भाण्डे निधापयेत्। वर्द्धयेच्च यथाशक्ति अयं ब्रह्मरसो महान्॥" रस.कौ.।

**ब्रह्मरीतिः।** स्त्री। राजरीतौ। ভাল পিতল। रा.नि.व.१३।

**ब्रह्मरूपिणी।** स्त्री। बन्दायाम्। বান্দড়া। वै.निघ.।

**ब्रह्मवटी।** स्त्री। उदराधिकारे औषधम्। "विड़ङ्गं दाड़िमं कुष्ठं निम्बत्वग्दहनो वचा। चूर्णं पाठा देवदारु निशा व्याघ्रनखोऽभया। वेल्लकं

रोहिणी चेला विद्दत्प्रत्येककार्षिकम। जैपालवीज-चूर्णञ्च दन्तीमूलं पलं पलम्। ब्रह्मदण्डीरसप्रस्थ पलमाज्य पुरातनं। पूर्व्वकल्कयुतं पाच्यं मृद्वग्निना सुपाचितम् ॥" मात्रा बदरप्रमाणा। रस.र.।

**ब्रह्मवर्द्धनम्**। क्ली। ताम्रे। हे.च.।

**ब्रह्मवीजम्**। क्ली। पलाशवीजे। वै.निघ.। क्रिमि.चि.निम्बादिचूर्णे। ब्रह्मीशाकवीजे। र.सा.सं. क्रिमि.चि.।

**ब्रह्मवृक्षः**। पुं। पलाशवृक्षे। रा.नि.व.१०। वै. नव.वि.ज्व.चि.। अगस्तिवृक्षे। वै.निघ. उदुम्बरवृक्षे। यज्ञडुमुर गाछ। र.मा.।

**ब्रह्मशल्यः**। पुं। बर्व्वूरवृक्षे। बाब्ला गाछ। कदरे। শ্বেতখয়ের। र.मा.।

**ब्रह्मसर्पः**। पुं। सर्पभेदे। तत्पर्य्यायौ,—हल्लाहल: अञ्जनाला।

**ब्रह्मसुदुलभा**। स्त्री। आदित्यभक्तायाम्। हुड़हुड़।

**ब्रह्मसुवर्चला**। स्त्री। तन्नामकौषधिविशेषे। या हिरण्यक्षीरति कथ्यते पत्रञ्च यस्या पद्मपत्रसदृशम्। च चि.१अ.। सु.चि.४०अ.। See औषधि:। आदित्यभक्ताभेदे। হুড়হুড়িয়া। गुणा:—"अन्या तिक्ता कषायोष्णा रसा रुक्षा लघु: कटु निहन्ति कफ-पित्तास्र-श्वास-कासारुचि-ज्वरान् विस्फोटकुष्ठमेहास्रयानिकृच्छ्र मपाण्डुता: ॥" भा. ब्राह्म्याम्। वै.निघ.२भ.संग्रहणी.चि. तालीशादि चूर्णे।

**ब्रह्मसोमा**। स्त्री। ब्राह्म्यां। श्वेतवृन्ददारवे वै. निघ.।

**ब्रह्मस्थानम्**। क्ली। तूलकाष्ठे। वै.निघ.।

**ब्रह्माग्र(त्म)भू:**। पुं। घोटके। श.मा.।

**ब्रह्माणी**। स्त्री। रेणुके। र.मा.। राजरीती। বেঙ্গাপিতল। रा.नि.व.१३।

**ब्रह्माण्ड:**। पुं। कृष्णपिण्डारभेदे। प.मु.।

**ब्रह्मादनी**। स्त्री। रक्तलज्जालुकायाम्। रा. नि.व.५।

**ब्रह्माम्भ:**। क्ली। गोमूत्रे। वै निघ।

**ब्रह्मी**। स्त्री। स्वनामख्यातशाके। मे.। च.सू. ४अ.। फञ्जिकायाम्। বামনহাটী। मे.। पङ्काल मत्स्ये। :चिका.।

**ब्रह्मोष्टतम्**। क्ली। स्वरभङ्गाधिकारे पक्वष्टतम्। समूलपत्रमुत्पाट्य ब्रह्मीम प्रक्षाल्य वारिणा। उदूखले चोदयित्वा रस मन्वेष गालयेत्। रसे चतुर्गुणे तस्मिन् घृतप्रस्थं विपाचयेत्। हरिद्रा मालती कुष्ठं वृहती सहरीतकी। एतेषां पलिकैर्भागै: शेषाणि कार्षिकाणि तु। पिप्पल्येलाविड़ङ्गानि सैन्धवं शर्करा वचा। सर्व्वमेतत् समालोड्य शनैर्मृद्वग्निना पचेत्। एतत्-प्राशितमात्रेण वाग्विशुद्धि: प्रजायते। क्षुद्र सारस्वतं नाम बलवर्णाग्निवर्द्धनम् ॥" च.द.रस.र.। पाठान्तरे वृहती स्थाने त्रिवृतामाह। भैष.। पिप्पल्येलास्थाने पिप्पल्योऽथ। गव्यघृतं ४ श.। ब्रह्मीरस: १६श.। कल्कार्थं—हरिद्रा मालतीपुष्पं कुष्ठ वृहती हरीतकी एषां प्र. १ प., पिप्पली एला विड़ङ्गं सैन्धवम् शर्करा वचा एषां प्र. २ तो.। अन्यत् अपस्माराधिकारे—"ब्रह्मीरसे वचाकुष्ठशङ्खपुष्पीभिरेव च। पुराणं सेव्यमुन्माद-ग्रहापस्मारनुद्घृतम् ॥" पुरातनघृतं ४ श. ब्रह्मीरस: १६ श.। कल्कार्थ—वचा कुष्ठ बालकम् (ढुङ्गादेशात्) एषां प्र. २ प. ५ तो. २ मा. ७ र.। सा.कौ.। रस.र.। च.द.।

**ब्रह्मेण्य:**। पुं। मुञ्जतृणे।

**ब्रह्मोपनेता (तृ)**। पुं। पलाशवृक्षे। পলাশ গাছ। रा.नि व.१०।

**ब्राह्मम्**। क्ली। अङ्गुष्ठमूले। अम.।

**ब्राह्मण:**। पुं। पारिशाश्वत्थे। পলাশপিপুল। व.निघ.।

**ब्राह्मणयष्टि: (का)**। स्त्री। भार्ग्याम्। বামনহাটী। रा.नि.व.६।

**ब्राह्मणिका**। स्त्री। स्पृक्कायां। रा.नि.व.१२। पिपीलिकाविशेषे। वरट्याम्। सु.कल्प.८अ.।

**ब्राह्मणी**। स्त्री। भार्ग्यां। বামনহাটী। प.मु.। देवताड़े। दुरालभायां। स्पृक्कायां। विश्व.। राजरीतौ। रा.नि.व.१२। वरट्याम्। বোল্তা। विका.। हे.च.। स्थूलशीर्षायाम पिपीलिकायाम्।

**ब्राह्मणीयष्टि:**। पुं। बालानां ज्वररोगविशेषे। বামনহাটী। रस.र.बाल.चि.।

**ब्राह्मणेष्टम्**। क्ली। तूलकाष्ठे। वै.निघ.।

**ब्राह्मण्य:**। पुं। मुञ्जतृणे।

**ब्राह्मपिण्डा**। स्त्री। रौप्ये। वै.निघ.।



**ब्राह्ममुहूर्त्त:**। पुं। अरुणोदयकाले। "ब्राह्म मुहूर्त्ते चोत्तिष्ठेत् चिन्तयेदात्मनो हितम् ॥"

**ब्राह्मिका**। स्त्री। भार्ग्याम्। বামনহাটী। श्रा.र.

**ब्राह्मी**। स्त्री। Siphonanthus Indica. Herpestis monnieria.) स्वनामख्यातक्षुपविशेषे। ব্রাহ্মীশাক, অধবর্ণী। हिं वरंभी, ब्रह्मी, श्वेतचमनी। तें शम्बनीचेट्टु। अधविर्णी। बम्. बाम। ता.वोमी। मं ब्रह्ममाण्डुकी। तत्पर्य्याया:,—मत्स्याक्षी वयस्था सोमवल्लरी सुरसा ब्रह्मचारिणी सरस्वती सौम्या सुरश्रेष्ठा सुवर्चला कपोतवङ्का कपोतवेगा वैधात्री दिव्यतेजा महौषधी स्वायम्भवि: सौम्यलता सुरेष्टा ब्रह्मकन्यका मण्डूकमाता मण्डूकी सुरसा मेधा वीरा भारती वरा परमेष्ठिनी दिव्या शारदा। गुणा:—"ब्राह्मी हिमा सरा तिक्ता लघुर्मेध्या च शीतला। कषाया मधुरा स्वादुपाकायुष्या रसायनी। स्वर्य्या स्मृतिप्रदा कुष्ठपाण्डुमेहास्रकासजित्। विषशोथहरी......॥" भा.पू.व.। हिमा कषाया तिक्ता रक्तपित्तघ्नी बुद्धिप्रज्ञामेधाकरी आयुष्करी च। रा.नि व.५। महाज्योतिष्मतीलतायां रा.नि.व.३। मण्डूकपर्ण्याम। থুলকুড়ি। वा.उ.१अ.। भार्ग्याम्। বামনহাটী। रा.नि.व.६। च.शा.८अ.। अजगन्धायाम्, वनयमान्यां। रा.नि.व.४। च.द. कफज्व.चि.। पङ्कगड़कमत्स्ये। পাঁকালমাছ। विका.। हिलमोचिकायाम्। भा.पू. १भ.शा.व.। प्रसारिण्याम्। গন্ধভাদুলিয়া। वाराहीकन्दे। स्पृक्कायां। चटकायाम्। भक्याम्। सर्पाक्ष्याम्। वै.निघ.।

**ब्राह्मीकन्द:**। पुं। वाराहीनाममहाकन्दशाके। শুয়ার আলু। रा.नि.व.७।

**ब्राह्मीका**। स्त्री। भार्ग्याम्। বামনহাটী।

**भ्रूवङ्गावी**। पुं। पक्षिविशेषे। পিঙ্গলা পাখী। वै.निघ.।

---

# भ

**भ:**। पुं। भ्रमरे। एकाक्षरकोष:। भ्रान्तौ। क्ली। नक्षत्रे।

**भक्षिका**। स्त्री। झिल्लीकीटे। ঝিঁঝিঁপোকা। वै.निघ.।

**भक्कुर:**। पुं। मत्स्यभेदे। ভাকুর মাছ। गुणा:—"भक्कुरी मधुर: शीतो वृष्य: श्लेष्मकरो गुरु:। विष्टम्भजनकश्चापि रक्तपित्तहर: स्मृत: ॥"

**भक्तम्**। क्ली। अन्नं। ভাত। अम.। "सुधौतांस्तण्डुलान् स्फीतांस्तोये पञ्चगुणे पचेत्।" See अन्नम्। त्रि। सेवके।

**भक्तकर:**। पुं। दशाङ्गादिकृत्रिमधूपे। कृत्रिमधूप। श.च.। (कार:) त्रि। पाचके। हे.च.।

**भक्तच्छन्द:**। पुं। क्षुधायाम्। आकाङ्क्षायां। च.द अर्श:चि.नागार्जुनयोगे।

**भक्तजा**। स्त्री। अमृते। वै.निघ.।

**भक्तदमनी**। स्त्री। वन्ध्याककर्कोटक्याम्।

**भक्तद्वेष:**। पुं। अरोचकरोगे। चिन्तयित्वा तु मनसा दृष्ट्वा श्रुत्वा तु भोजनं। द्वेषमायाति यो जन्तुर्भक्तद्वेष: स उच्यते ॥"

**भक्तमण्ड:**। पुं। अन्नमण्डे। ভাতের মণ্ড। तत्पर्य्याया:—मासरं आचामं निस्राव: पिच्छा:। See अन्नमण्ड:।

**भक्तविपाकवटी**। स्त्री। अग्निमान्द्यादिनाशके वटीभेदे। "माक्षिकं रसगन्धौ च हरितालं मन:-शिला। त्रिवृद्दन्ती वारिवाहा चित्रकश्च महौषधं। पिप्पली मरिच पथ्या यमानी कृष्णजीरकं। रामठं कटुकापाली सैन्धवं साजमोदकं। जातीफलं यवक्षार: समभागं विचर्णयेत्। आर्द्रकस्य रसेनैव निर्गुण्ड्या: स्वरसेन च। सूर्य्यावर्त्तरसेनैव ज्योतिष्मत्या रसेन तु। चित्रकस्य रसेनापि प्रत्येकं त्रिर्विभावयेत्। पेषयित्वा वटी कार्य्या मुक्ताफलसमप्रभा। भक्षयेच्छायामात्रेण लवङ्गेन सुयोजिता ॥" কজ্জলি ২ভ. স্বর্ণমাক্ষিক, হরিতাল, মনছাল, তেউড়ীমূল, দন্তীমূল, মুতা, চিতার মূল, শুঁট, পিপুল, মরিচ. হরীতকী, যমানী, কৃষ্ণজীরা, হিঙ্গু, গুড়কাঁউলি সৈন্ধব, বনযমানী. জায়ফল, যবক্ষার, ইহাদের প্রত্যেক ১ ভ.। আদার রস, নিসিন্দাপত্ররস, হুড়হুড়ে পাতার রস, লতাফট্‌কীপাতার রস ও চিতারসে তিন

দিন ভাবনা দিয়া বটী করিবে। অনুপান নবঙ্গচূর্ণ ৪ মাষা। रस·कौ·।

**भक्तवारि।** क्ली। काञ्जिके।

**भक्ति:।** स्त्री। सेवायाम्। मे.।

**भक्तिका।** स्त्री। आरामशीतलायां। वै.निघ.।

**भक्तोद्भवम्।** क्ली। गलितान्नमण्डे। ভাতের ফ্যান। वै. निघ.।

**भगम्।** क्ली। योनौ। तत् च गुदमुष्कद्वयमध्यवर्त्तिस्थाने। "गुदमुष्कद्वयोर्मध्ये यो भागः स भगं स्मृतः।" रा.नि.व.१८। चिका.। वीर्य्ये। मे.। उपस्थे। वैराग्ये। ज्ञाने। इच्छायां। चिका.।

**भगन्दरः।** पुं। तन्नामकगुदजरोगे। भगगुदवस्तिप्रदेशदारणाद्भगन्दरा इत्युच्यन्ते। ভগন্দর রোগ। ভগ, ভগন্দর। अपक्वाः पिड़काः, पक्वास्तु भगन्दराः इति भगन्दरपिड़कयोर्भेदः। सु.। "अपक्वं पिड़कामाहुः पाकप्राप्तं भगन्दरम्।" वा.उ २८ अ.। निदानादि—"गुदस्य द्व्यङ्गुले क्षेत्रे पार्श्वतः पिड़कार्त्तिकृत्। भिन्नो भगन्दरो ज्ञेयः स च पञ्चविधो मतः॥" मा.नि.। शतपोनकोष्ट्रग्रीवपरिस्राविशम्बूकावर्त्तोन्मार्गिण इति पञ्च यथाक्रमं ते वातपित्तकफसन्निपातागन्तुनिमित्ता भवन्ति। सु.नि.४अ.। "शानयानान्मलोत्सर्गात्कण्डूरुग्दाहशोफवान्। पायुर्भवेद्रुजः कट्याम् पूर्व्वरूपं भगन्दरे। घोराः साधयितुं दुःखाः सर्व्व एव भगन्दराः। तेष्वसाध्यस्त्रिदोषोत्थः क्षतजश्च भगन्दरः।" सु.। "हस्त्यश्वपृष्ठगमन-कठिनोत्कटकासनैः। अर्शोनिदानाभिहितैरपरैश्च निषेवितैः। अनिष्टादृष्टपातेन सद्यो वा साधुगर्हणैः। प्रायेण पिटिकापूर्व्वो योऽङ्गुले द्व्यङ्गुलेऽपि वा। पायोर्व्रणोऽन्तर्बाह्यो वा दुष्टासृङ्मांसगो भवेत्। वस्तिमूत्राशयाभ्याससंगतत्वात् स्यन्दनात्मकः। भगन्दरः स सर्व्वश्च दारुणत्यक्रियावतः। भगवस्तिगुदारेषु दीर्य्यमाणेषु भूरिभिः। वातमूत्रशकृच्छुक्रैः सूक्ष्मैर्वमति क्रमात्। दोषैः पृथग्युतैः सर्व्वैरागन्तुः सोऽष्टमः स्मृतः॥" क्रिया "पाके पुनरुपस्निग्धं स्वेदितञ्चावगाहतः। यन्त्रयित्वार्शसमिव पश्येत्सम्यग्भगन्दरम्। अर्व्वाचीनं पराचीनमन्तर्मुखं बहिर्मुखम्। अथान्तर्मुखमेषित्वा सम्यक् शस्त्रेण पाटयेत्। बहिर्मुखस्य निःशेषं ततः क्षारेण साधयेत्। अग्निनैव भिषक्साधु क्षारेणौष्ट्रकन्धरम्॥" वा.उ.२८अ.। [व्या.वि.।

**भगफलम्।** क्ली। योनिकन्दरोगे। प.द.योनि.।

**भगालम्।** क्ली। नरमस्तके, मनुष्यकरोट्यां। जटा.।

**भगास्थि।** क्ली। योन्यस्थनि। च.शा.७अ.।

**भग्नम्।** क्ली। तन्नामकरोगे। ভগ্ন রোগ। "पतनपीड़नप्रहाराक्षेपणव्यालमृगदंशनप्रभृतिभिरभिघातविशेषैरनेकविधमस्थ्नां भङ्गमुपदिशन्ति। तत्तु भङ्गजातमनुसार्य्यमाणं द्विविधमेवोत्पद्यते सन्धिमुक्तं काण्डभग्नञ्चेति।" सु.नि.१०अ.। तस्य भेदाः—"भग्नं समासाद्द्विविधं हुताश काण्डे च सन्धावपि तत्र सन्धौ। उत्पिष्टविश्लिष्टविवर्त्तितानि तिर्य्यग्गतं क्षिप्तमधश्च भग्नमिति॥" सन्धिभग्नस्य सामान्यलिङ्गं यथा—"प्रसारणाकुञ्चनवर्त्तनोग्रा रुक् स्पर्शविद्वेषणमेतदुक्तम्। सामान्यतः सन्धिगतस्य लिङ्गमुत्पिष्टसन्धेः श्वयथुः समन्तात्। विशेषतो रात्रिभवा रुजा च। विश्लिष्टके तौ च रुजा च नित्यम्। विवर्त्तिते पार्श्वरुजश्च तीव्रास्तिर्य्यग्गते तीव्ररुजो भवन्ति। क्षिप्तेऽतिशूलं विषमं रुजश्च क्षिप्ते त्वधोरुग्विघटश्च सन्धेरिति।" काण्डभग्नलक्षणं यथा—"भग्नन्तु काण्डे बहुधा प्रयाति विशेषतो नामभिरेव तुल्यम्। काण्डे त्वतः कर्कटकाश्वकर्णौ विचूर्णितं पिच्चितमस्थिखल्लितम्। काण्डेषु भग्नं ह्यतिपातितञ्च मज्जागतं विस्फुटितं च वक्रम्। छिन्नं द्विधा द्वादशधापि काण्डे सामान्यभग्ने किल तस्य लिङ्गम्॥" कर्कटादिकाण्डभग्नलक्षणं यथा—"सस्ताङ्गता शोथरुजातिवृद्धिस्तथा व्यथा वृद्धिरतीव नित्यम्। संपीड्यमाने भवतीह शब्दः स्पर्शासहं स्पन्दनतोदशूलाः। सर्व्वास्ववस्थासु न शर्म्मलाभो भग्नस्य काण्डे खलु चिह्नमेतत्॥" मा.नि.। तस्य यथास्थानस्थापनं यथा—"आञ्छनोत्पीड़नोन्नामचर्म्मसङ्क्षेपबन्धनैः। सन्धीन् शरीरगान् सर्व्वान् चलानप्यचलानपि। इत्येतैः स्थापनोपायैः सम्यक्संस्थाप्य निश्चलम्। पट्टैः प्रभूतसर्पिर्भिः वेष्टयित्वा सुखैस्ततः। कदम्बोदुम्बराश्वत्थसर्ज्जार्ज्जुनपलाशजैः। वंशोद्भवैः स पृथुभिः तनुभिः सन्निवेशितैः। सुश्लक्ष्णैः सुप्रतिस्तम्भैः वल्कलैः शकलैरपि। कुशाह्वयैः समं बन्धं पट्टस्योपरि योजयेत्॥" इत्यादि। वा.उ २७अ.।

**भग्नसन्धिकः।** पुं। सन्धिभङ्गरोगविशेषे। क्ली। घोले। श.च.।

**भग्नास्थिसन्धानकरः।** पुं। लशुने। রশুন। वै.निघ.।



**भङ्गारी।** स्त्री। गोधायाम्। वै.निघ.। दंशे। ডাঁশ। चिका.।

**भङ्गः।** पुं। छेदभेदादिके। भा.म.१भ.आगन्तुज्व.चि.। पक्षाघातरोगे। रा.नि.व.२०।

**भङ्गवासा।** स्त्री। हरिद्रायाम्। श.र.।

**भङ्गा।** स्त्री। विजयायाम्। সিদ্ধি। হি ভাঙ্। ইং হেমপ্‌। गुणाः—"भङ्गा कफहरी तिक्ता ग्राहिणी पाचनी लघुः। तीक्ष्णोष्णा पित्तला मोहमन्दवाग्वह्निवर्द्धिनी॥" भा.। शणबीजे। विस्तृतायाम्। श.च.। काश्मीरदेशप्रसिद्धवृक्षविशेषे। अम.। [वै.निघ.।

**भङ्गानः।** पुं। मत्स्यविशेषे। ভাঙন মাছ।

**भङ्गारी।** स्त्री। गोधायाम्। वै.निघ.। दंशे। ডাঁশ। चिका.।

**भङ्गिः (ङ्गी)।** स्त्री। आक्षेपे। वै.निघ.।

**भङ्गिका।** स्त्री। भङ्गायाम्। ভাঙ্। वै.निघ.।

**भङ्गिनी।** स्त्री। झिङ्गिन्याम्। वै.निघ.।

**भङ्गोलम्।** क्ली। भङ्गाबीजे। रा.नि.व.२।

**भङ्गुरा।** स्त्री। अतिविषायाम्। আতইচ। प्रियङ्गौ। रा.नि.व.६।१२। भा.म.१भ.सन्धिकज्व.चि.। मार्ग्याम्। भङ्गायाम्। সিদ্ধি। वै.निघ.।

**भङ्गरम।** क्ली। भङ्गाबीजे। रा.नि.व.२।

**भञ्जनः।** पुं। अर्कवृक्षे। আকন্দ গাছ। रा.नि.व.१०। क्ली। शिरःकर्णादिरामर्द्दने। सु.सू.२७अ.। वायुजन्यव्रणवेदनाविशेषे। सु.सू.२२अ.। विभक्तकरणे। जर्ज्जरीकरणे। च.सू.१८अ.।

**भञ्जनकः।** पुं। दन्तगतमुखरोगविशेषे। लक्षणं यथा—"वक्त्रं वक्रं भवेद् यस्मिन् दन्तभङ्गश्च तीव्ररुक्। कफवातकृतो व्याधिः स भञ्जनक संज्ञित॥" सु.नि.१६व.।

**भञ्जरः।** पुं। देवकुलोद्भवद्रुमे। चिका.।

**भटा।** स्त्री। इन्द्रवारुणीलतायाम्। রাখাল-শশা। र.मा.।

**भटित्रम्।** क्ली। शूलपक्वमांसादौ। কাবাব। अम.।

**भण्टकः।** पुं। मारिषरूपे। वै.निघ.।

**भण्टा।** स्त्री। चिच्चोटके। वार्त्ताकौ। वै.निघ.।

**भण्टाकी।** स्त्री। बृहत्याम्। বৃহতী। বেঁগুন। रा.नि.व.४। र.मा.। कण्टकार्य्याम्। वार्त्ताकी। अम.।

**भण्टिः (ण्डिः) (का)।** स्त्री। मञ्जिष्ठायाम्। श.र.। 'भাঁट' इति ख्याते गुल्मभेदे।

**भण्टुकः।** पुं। श्योणाकवृक्षे। र.मा.।

**भण्डकः।** पुं। खञ्जरीटपक्षिणि। খঞ্জন পাখী। जटा.। [अम.।

**भण्डिरः (लः)।** पुं। शिरीषवृक्षे। भ.।

**भण्डिरा (री)।** स्त्री। मञ्जिष्ठायाम्। वै.निघ.।

**भण्डी।** स्त्री। मञ्जिष्ठायाम्। रा.नि.व.६। श्रीरुद्रतैले। च.सू.२७अ.। "खदिरकदरभण्डी।" शिरीषवृक्षे। वा.सु.१६अ.असनादिव.। श्वेतत्रिवृतायाम्। শ্বেত তেউড়ী। वै.निघ.कृमि.चि.भण्ड्यादियोगे। तगरपादुके। वै.निघ.।

**भण्डीकः।** पुं। शिरीषवृक्षे। रा.नि.व.९।

**भण्डीतकः।** पुं भिण्डायाम्। वै.निघ.।

**भण्डीतकी।** स्त्री। मञ्जिष्ठायाम्। भा.।

**भण्डीरः।** पुं। तण्डुलीयशाकरूपे। भा.पू.१भ शा.व.। समष्ठिलक्षुपे। शिरीषवृक्षे। रा.नि.व.४।

**भण्डीरतिलका (लतिका)।** स्त्री। मञ्जिष्ठायाम्। रा.नि.व.६।

**भण्डीरा (रिका, री)।** स्त्री। मञ्जिष्ठायाम्। रा.नि.व.६। वै.निघ.। [मञ्जिष्ठायाम्। श.र.।

**भण्डोलः।** पुं। शिरीषवृक्षे। वै.निघ.। स्त्री।

**भण्डूकः।** पुं। मत्स्यभेदे। ভাঙন মাছ। गुणाः—मधुरः शीतः वृष्यः श्लेष्मकरः गुरुः विष्टम्भी रक्तपित्तहरश्च। भा.। श्योणाकवृक्षे। र.मा.।

**भद्रम्।** क्ली। स्वर्णे। मे.। लौहे। नीलोत्पले। नीलपद्म। चन्दने। वै.निघ.। मुस्तके। मे। पुं। सुहीवृक्षे। रा.नि.व.८। महागजे। खञ्जरीटपक्षिणि। कदम्बवृक्षे। मे.।

**भद्रकम्।** क्ली। नागरमुस्तायां। श.मा.। वै.निघ.२भ.चय.चि. सूर्य्यप्रभागुट्यां। इन्द्रयवे। सरलदेवदारुकाष्ठे। पद्मे। वै.निघ.। पुं। देवदारुवृक्षे। श.र.। [व.४।

**भद्रकण्टः (कः)।** पुं। गोक्षुरक्षुपे। रा.नि.

**भद्रका।** स्त्री। इन्द्रयवे। रा.नि.व.९।

**भद्रकार्पासिका।** स्त्री। रक्तकार्पास्याम्। वै.निघ.।

**भद्रकाली ।** स्त्री । प्रसारण्यां । गन्धभादुलिया । प.मु. । नागरमुस्तायाम । वै.निघ. ।

**भद्रकाशी (सी) ।** स्त्री । भद्रमुस्तायाम् । रा.नि.व.६ ।

**भद्रकाष्ठम् ।** स्त्री । काष्ठदेवदारुणि । रा.नि.व.१२ । तैल-देवदारुणि । मलङ्गा দেবদারু । वै.निघ. ।

**भद्रकाह्वया ।** स्त्री । भद्रमस्तायाम् । ভাদলিষা মুথা । च.द.अ.मा.चि । "विश्वतिर्भद्रकाह्वया: ।"

**भद्रगन्धिका ।** स्त्री । प्रसारण्याम् । गन्धभादुलिया । वै.निघ. । मुस्तायाम् । र.मा. ।

**भद्रघन: ।** पु । भद्रमुस्ते । विसू.चि.पिपासायाम् । नागरमस्तायाम । वै.निघ.२भ.अ.ी.चि, ।

**भद्रचन्दनसारिवा ।** स्त्री । कृष्णसारिवायाम् । वै.निघ. ।

**भद्रचूड़: ।** पुं । 'लङ्काशिभु' इति ख्याते वृक्षे । वै.निघ. ।

**भद्रज: (जव:) ।** पुं । इन्द्रयवे । रा.नि.व.९ ।

**भद्रतरुणी ।** स्त्री । कुब्जकवृक्षे । কোঙ্কণদেশের ফুল । रा.नि.व.१० ।

**भद्रतिक्ता ।** स्त्री । महातिक्तायाम् । মিসমিতিতা । "भद्रतिक्ता महातिक्ता रसे तिक्ताग्निवर्द्धनी । ज्वरघ्नी पित्तहृद बल्या शोषाणामपि नाशयेत् ॥"

**भद्रदन्तिका (न्ती) ।** स्त्री । खनामख्यातदन्त्याम् । দন্তীবিশেষ । स्थूलदन्त्यां । বড় দন্তী । तत्पर्य्याया:,—केशरुहा भिषग्भद्रा जयावहा ज्वराङ्गी जयाह्वा आवर्त्तकी । गुणा:—कटु: उष्णा विरेचिका कृमिघ्नी कुष्ठघ्नी शूलामदोषमुखरोगघ्नी च । रा.नि.व६ ।

**भद्रदारु: ।** पुं, स्त्री । देवदारुणि । र.मा. । रा.नि.व.१२ । सरलायां । সরল কাষ্ঠ । र.मा. । वा.सू.१५अ.भद्रदार्व्वादि: ।

**भद्रदार्व्वादि: ।** पुं । वातघ्नकषायभेदे । "भद्रदारु नतं कुष्ठं दशमूलं बलाद्वयं । वायुं वीरतरादिश्च विदार्य्यादिश्च नाशयेत् ॥ वा.सू.१५अ. ।

**भद्रनामा ।** पुं । पक्षिविशेषे । ছাতারিয়া পাখী । वै.निघ. । काष्ठकुट्टपक्षिणि । चिका. ।

**भद्रनामिका ।** स्त्री । त्रायमाणायाम् । বলা লতা, বহলা । प.मु. ।

**भद्रपत्नी ।** स्त्री । अनन्तायाम् । अनन्तमूल ।

**भद्रपर्णा (र्णी) ।** स्त्री । प्रसारण्यां । गन्धभादुलिया । र.मा. । रा.नि.व.५ । गाम्भारीवृक्षे । গামার গাছ । रा.नि.व.९ ।

**भद्रवचा ।** स्त्री । इन्द्रयवे । रा.नि.व.९ ।

**भद्रब(व)ला ।** स्त्री । बलानामक्षुपे । रा.नि.व.४ । काकोदुम्बरिकायाम् । प्रसारिण्यां । रा.नि.व.५ । गाम्भारीवृक्षे । वै.निघ. ।

**भद्रमल्लिका (ल्ली) ।** स्त्री । काष्टमल्लिकायां । কাঠমল্লিকা । प.मु. । गवाक्ष्याम् । গোমক, ফুটী । श.मा. ।

**भद्रमुञ्ज: ।** पुं । मुञ्जतृणभेदे । রামশর, শরপত । तत्पर्य्याया:,—शर: वाण: तेजन: इक्षुवेष्टन: मुञ्ज: मुञ्जातक: स्थूलदर्भ: सुमेधस: । See मुञ्ज: ।

**भद्रमुस्त: (क: ।** पुं । नागरमुस्तायाम् । নাগরমুতা । प.मु. । च.द भा.म.कर्णरो.चि.अञ्जने । स्त्री । भद्रमुस्तके । নাগরমুতা । तत्पर्य्याया:,—कच्छोत्था वराही गुन्द्रा ग्रन्थि: भद्रकाली कशेरु: क्रोड़ेष्टा कुरुविन्दाख्या सुगन्धि: ग्रन्थिला हिमा बल्या राजकशेरु: कच्छोत्था मुस्ता वर्णद: वारिद: अर्णोद: मेघ: जीमूत: अब्द: नीरद: अभ्रं घन: गाङ्गेय: । गुणा:—कषाय-तिक्तत्वं शीतत्व पाचकत्वं ग्राहित्वं पित्तज्वर-कफ-नाशकत्वञ्च । अपि च "मुस्तं कटु हिमं ग्राहि तिक्तं दीपन-पाचनम् । कषायं कफ-पित्तास्र-तृट्-ज्वरारुचि-जन्तुनुत् ॥ अनूपदेशे यज्जातं मुस्तकं तत् प्रशस्यते । तत्रापि मुनिभि: प्रोक्तं वरं नागरमुस्तकम् ॥" रा.नि.व.६ ।

**भद्रयवम् ।** क्ली । इन्द्रयवे अम. ।

**भद्रयोगदिवस: ।** पुं । पुष्यानक्षत्रयुक्तदिने । च द.विष.चि. ।

**भद्रलता ।** स्त्री । माधवीलतायाम् । रा.नि.व.१० । हरिद्रायाम् । वै.निघ. ।

**भद्रवती ।** स्त्री । काकोदुम्बरिकायाम् । वै.निघ. । भद्रपर्ण्याम् । जटा. ।

**भद्रवत् ।** क्ली । देवदारुणि । रा.नि.व. १२ ।



**भद्रवर्म्मा (न्) ।** पुं । नवमल्लिकायाम् । श.च. ।

**भद्रवल्लिका ।** स्त्री । अनन्तायाम् অনন্তমূল । र.मा. । प्रसारण्याम् । वै.निघ. ।

**भद्रवल्ली ।** स्त्री । (Vallaris Heynei. Syn. V. Dichotoma.) शारदमल्लिकायां । হাপরমালী, মদনমালী । र.मा. । मल्लिकायाम् কাঠমল্লিকা । माधवीलतायाम । यस्या निर्यास: पुराणचतस्र: । रा.नि.व.१० ।

**भद्रशिफा ।** स्त्री । हरिद्रायाम् । रा.नि.व.६ ।

**भद्र(द्रा)श्रियम् ।** क्ली । श्वेतचन्दने । र.मा. । श.च. । च.द वा.व्या.महाराजप्रसारणीतैले । च.चि.२ ४अ. ।

**भद्रश्री: ।** पुं । चन्दनवृक्षे । अम. । श्रीखण्ड-चन्दने । শ্বেত চন্দন । रा.नि.व.१२ ।

**भद्रसारम् ।** क्ली । चन्दनसामान्ये । प.म. ।

**भद्रहंस: ।** पुं । नागरमस्तायाम् । वै.निघ. ।

**भद्रा ।** स्त्री । काकोदुम्बरिकायाम् । प.म. । जीवन्तीशाके । रा.नि व.७ । दन्त्यां । रा.नि.व.६ । २३ । शमीवृक्षे । शमीभेदे । रा.नि.व.८ । कटफले । गाम्भारीवृक्षे । रा.नि.व.९ । अनन्तायाम् । অনন্তমূল । नील्याम् । নীল গাছ । रा.नि.व.४।२३ । बलानामक्षुपे । বেলেড়া । रा.नि.व.४ । वचायाम । रा.नि.व.६ । श्वेतदूर्व्वायां । रा.नि.व.८ । श्वेतापराजितायाम् । रा.नि व.३ । कृष्णसारिवायाम् । रा.नि.व.१२ । हरिद्रायाम् । वै.निघ.ज्व.चि.सहदेवादिधूपे । प्रसारण्याम् । रास्नायाम् । मे. । नागवल्लीलतायाम् । मुस्तायाम् । वै.निघ. । चन्द्रशूरे । अ. ।

**भद्राकरणम् ।** क्ली । चौरकर्म्मणि । মুণ্ডন । हे.च. ।

**भद्राख्य: ।** पुं । देवदारुवृक्षे । च.द.उ.दं.चि. ।

**भद्राणी ।** स्त्री । ह्रस्वदन्तीक्षुपे । रा.नि.व.६ ।

**भद्रालपत्रिका ।** स्त्री । प्रसारण्याम् । गन्धभादुलिया । श.मा. ।

**भद्राली ।** स्त्री । प्रसारण्याम् । श.मा. ।

**भद्रावती ।** स्त्री । कट्फलवृक्षे । रा.नि.व.९ ।

**भद्राश्रय: ।** पुं । चन्दने ।

**भद्राह्व: ।** पुं । मुस्तके । भा.म,३भ,अग्स,चि. ।

**भद्रिका ।** स्त्री । गुञ्जायाम् । वै.निघ. ।

**भद्रैला ।** स्त्री । स्थूलैलायाम् । মোটা এলাচ र.मा. ।

**भद्रोत्कट: ।** पुं । भद्रमुस्तायाम । ভাদালিয়ার মুতা । प्रसारण्याम् । गन्धभादुलिया । र.मा. । जातीफलादौ । भैष,स्त्रीरो,चि. । भादाकड़ इति ख्याते वृक्षे च.द. गर्भाधिकारे ।

**भद्रो(द्रौ)दनी ।** स्त्री । बलानामक्षुपे । বেড়েলা । नागबलायाम् । গোরক্ষচাকুলিয়া । रा.नि,व ४ । पीतवाट्यालके । পীত বেড়েলা । रा.नि.व.४ । च.मू.४अ.वृंहणी ।

**भद्रोदुम्बरिका ।** स्त्री । काकोदुम्बरिकायाम् । वै.निघ. । सु.चि.९अ. ।

**भन्दिलम् ।** क्ली । कम्पे । उणा ।

**भम्भ: ।** पुं । धूमे । त्रिका. । मक्षिकायाम् । श.र. ।

**भम्भरालिका(ली) ।** स्त्री । दंशमक्षिकायां । ডাঁশমাছি । त्रिका. ।

**भयम् ।** क्ली, पुं । व्याधौ । रा.नि.व,२० । क्ली । भीतौ । कुब्जपुष्पविशेषे । त्रिका. ।

**भयकण्टक: ।** पुं । बदरवृक्षे । কুল গাছ ।

**भयङ्कर: ।** पुं । रणगर्भे । रा.नि.व,१९ । त्रि । भयावहे ।

**भयज्वर: ।** पुं । भयजन्यज्वरे । আতঙ্কজ্বর । तस्य लक्षणं प्रलाप: । मा.नि. ।

**भयदा ।** स्त्री । भूधात्र्याम् । ভুঁই আমলা ।

**भयनाशिनी ।** स्त्री । त्रायमाणालतायाम् । বলালতা । रा.नि.व.५ ।

**भयानक: ।** पुं । व्याघ्रे । मे. । त्रि । भयङ्करे ।

**भयावहा ।** स्त्री । रात्रौ । वै.निघ. ।

**भर: ।** पुं । द्विसहस्रपलपरिमाणे । वै.निघ. ।

**भरणी ।** स्त्री । घोषायां । ঘোষালতা । मे. ।

**भरण्ड: ।** पुं । वृषे । कृमौ । उणा. ।

**भरण्याह्वा ।** स्त्री । पर्व्वपुष्प्यां । रामदूतीति लोके । श.च. ।

**भरण्यु: ।** पुं । वृषे । वै.निघ. ।

**भरद्वाज: (क:) ।** पुं । व्याघ्राट-नामपक्षिविशेषे । ভারুই পাখী । अम. । श.र. । ऋषिविशेषे । भ. ।

**भरद्वाजी** । स्त्री । वनकार्पास्याम् । र.मा. ।

**भरिणी** । स्त्री । हरिद्वर्णे ।

**भरितः** । त्रि । हरिद्वर्णे । पुष्टे ।

**भरुः** । पुं । स्वर्णे । मे. ।

**भरुजः** । पुं । क्षुद्रशृगाले । हे.च. ।

**भरुटकम्** । क्ली । भर्ज्जितमांसे । ভাজামাংস । हे.च. ।

**भरोद्वहः** । पुं । धवतरौ । ধাওয়া গাছ । वै.निघ. ।

**भर्गः** । पुं । पाककरणे । भर्ज्जने । व्याक. । काल्के । भैष.वा.व्या.वि.म.हाविष्णुतैले ।

**भर्गपर्व्वणी** । स्त्री । भार्ग्याम् । वै.निघ. ।

**भर्ज्जनम्** । क्ली । भृष्टौ । ভাজা ।

**भर्त्सपत्रिका** । स्त्री । महानील्याम् । মহানীল । रा.नि.व.४

**भर्म्म** । क्ली । स्वर्णे । धत्तूरे । अम. । नाभौ । विश्व. । द्विरू. ।

**भर्म्मगैरिकम्** । क्ली । स्वर्णगैरिके । वै.निघ. ।

**भर्म्मयूथी** । स्त्री । स्वर्णयुथिकायाम् । স্বর্ণ যূঁই । वै.निघ. ।

**भर्त्तता** । स्त्री । प्रसारण्याम् । वै.निघ. । आकाशलतायाम् । श.र. ।

**भल्लः** । पुं । सन्निपातविशेषे । See भल्लुः । भल्लातकवृक्षे । भल्लूके । अम. ।

**भल्लकः** । पुं । पृथुशिम्ब-श्योनाकवृक्षे । বড়-শোটা শোণাগাছ । रा.नि.व.९ । भल्लुके । इङ्गुदीवृक्षे । भल्लातकवृक्षे । सन्निपातविशेषे । See भल्लः । वै.निघ. ।

**भल्लकिमत्स्यः** । पुं । मत्स्यविशेषे । ভাটা-মাছ । गुणाः—"भल्लकी मधुरः शीतो वृष्यः श्लेष्म-करो गुरुः" राज.१प. ।

**भल्लपुच्छी** । स्त्री । गोरक्षतण्डुलायां । গোরক্ষ চাকুলিয়া । प.च. ।

**भल्लातः (कः)** । पुं । (Semecarpus Anacardium.) The marking nut tree. स्वनामख्यातवृक्षे । ভেলাগাছ । हिं भिलावा । मं बिब । तैं जिड़िचेट्टु जिड़िबिट्टुलु । उत. भलिय वम्. विरभ । ता. शनक्कोट्टइ । दा. भिलावन् । पारस्. भिलादुर । तत्पर्य्यायाः,—अरुस्करः शोथहृत् वह्निनामा वीरतरुः व्रणकृत् भूतनाशनः भल्लातकी भल्लिका भल्ली भल्लीका अग्निमुखी वीरवृक्षः अहला अन्तःसत्त्वा नाशोहितः निर्द्दहनः तपनः अनलः क्रिमिघ्नः शैलबीजः वातारिः स्फोटबीजकः पृथक्बीजः धनुर्वृक्षः बीजपादपः वह्निः महातीक्ष्णा । गुणाः—फलं रेतोजनकं कषायं मधुरं कोष्णं कफश्रमश्वासानाह-विबन्धघ्नं शूलोदराध्मानक्रिमिघ्नञ्च । तन्मज्जा च विषशोषदाहशमनः पित्तघ्नस्तर्पणो वातारोचकघ्नः कान्तिकरश्च । भल्लातकगुणाः—कटुः तिक्तः कषा-योष्णः क्रिमिघ्न कफ-वातोदरानाह-मेहाशोंघ्नश्च । रा.नि.व.११ । भल्लातकतैल मधुरं कषायं तिक्ता-नुरसं वातकफकुष्ठमेदोमेहक्रिमिहरं वमन विरेच-नञ्च । सु.सू.४५अ. । रक्तचन्दने । च.द.कुब्ज-प्रसारणीतैले । भा. ।

**भल्लातकगुड़ः** । पुं । अर्शोरोगे पक्वगुड़ः । "भल्लातकसहस्रे द्वे जलद्रोणे विपाचयेत् । पाद-शेषे रसे तस्मिन् पचेद्गुड़तुलां भिषक् । भल्लातक-सहस्रार्द्धं छिन्नं तत्र प्रदापयेत् । सिद्धेऽस्मिन् त्रिफला-व्योषयमानीमुस्तसैन्धवम् । कर्षांशं चूर्णितं दद्यात् त्वगेलापत्रकेसरम् ।" ভেলা ২০০০ জল ৬৪ শ. শেষ ১৬ শ, । গুড় ১২॥০ শ, ছিন্ন ভল্লাতক ৫০০ শত । ত্রিফলা, ত্রিকটু, যমানী, মুতা, সৈন্ধব প্রত্যেকের চূর্ণ ২ তো. ।

**भल्लातकघृतम्** । क्ली । गुल्मघ्नघृतभेदे । "भल्ला-तकात्कल्ककषायपक्वं सर्पिः पिबेत् शर्करया विमि-श्रम् । तद्रक्तगुल्मं विनिहन्ति पीतं बलासगुल्मं मधुना समेतम् ॥" सिद्धशीते शर्करा देया । रस.र. । अन्यत् यथा—"भल्लातकानां द्विपलं पञ्चमूलं पलोन्मितं । साध्यं विदारीगन्धाद्यमापोथ्य सलिलाढ़के । पादशेषे रसे तस्मिन् पिप्पलीं नागरं वचां । विड़ङ्गं सैन्धवं हिङ्गु यावशूकविड़ं शटीं । चित्रकं मधुकं रास्नां पिष्ट्वा कर्षसमं भिषक् । प्रस्थञ्च पयसः कृत्वा घृतप्रस्थं विपाचयेत् । एतत् भल्लातकघृतं कफगुल्महरं परम् ।" च.चि.५अ. ।

**भल्लातकतैलम्** । क्ली । रसायनतैलविशेषे । भल्लातकतैलं ८ श. । यष्टिमधुकल्कः २ तो. । दुग्धं ३२ श. शतपाकं कुर्य्यात् ।" च.चि.१अ. ।

**भल्लातकपल्लवम्** । क्ली । रसायनविशेषे । च.चि.१अ. ।



**भल्लातकफलमज्जा** । स्त्री । गोडुम्बायाम् । গোমক, ফুটী । वै.निघ. ।

**भल्लातकयूषः** । पुं । रसायने यूषविशेषे । च. चि.१अ. ।

**भल्लातकसर्पिः** । क्ली । रसायनघृतविशेषे । च.चि.१अ ।

**भल्लातकक्षीरम्** । क्ली । रसायनविशेषे । च. चि.१अ. ।

**भल्लातकास्थि** । क्ली । तन्नामकफलास्थनि । ভেলার মুটি । रा.नि.व.११ । च.सू.४अ.दीपनीय-गणे । गुणाः—कान्तितृप्तिकरं गुरु वृष्यम् अग्निदीप्तिकरं दाहकफघ्नं शोषवातक्रिमिपित्तारुचि-घ्नञ्च । वै निघ. ।

**भल्लातकी** । स्त्री । भल्लातकवृक्षे । अम. ।

**भल्लिः (ल्लिका, ल्ली)** । स्त्री । भल्लातकवृक्षे । रा.नि.व.२३ । श.र. । च. ।

**भल्लुः** । पुं । पित्तश्लेष्मोल्वणसन्निपातज्वरविशेषे । ভালুক জ্বর । लक्षणं—"पित्तश्लेष्माधिकी यस्य सन्निपातः प्रकुप्यति । अन्तर्दाहो बहिः शीतं तस्य तृष्णा प्रवर्द्धते । तुद्यते दक्षिणे पार्श्वे उरःशीर्षगल-ग्रहः । ष्ठीवति श्लेष्मपित्तञ्च कृच्छ्रात् कोठश्च जायते । विड़भेदश्वासहिक्काश्च वर्द्धन्ते सप्रमीलकाः । ऋषिभिर्भल्लुनामायं सन्निपात उदाहृतः ।" भा. । अफल्गुरिति तन्त्रान्तरे नाम ।

**भल्लु(ल्लू)कः** । पुं । श्योणाकवृक्षे । শোণাগাছ । च.द अ.सा.चि.कुशादिगुणे । सु.सू.३८अ. । वा.सू. १५अ.वीरतरादिः । ऋक्षे । रा.नि.व.१९। कोषस्थ-महाकपर्दे । See शङ्खः । कुक्कुरे । रा.नि.व.१९ ।

**भवः** । पुं । कारणे । जन्मनि । शिवे । वै.निघ. । संसारे । सत्तायां । त्रिका । क्ली । भव्ये । চাল্তা । रा.नि.व.११ ।

**भवदारु** । क्ली । देवदारुणि । रा.नि.व.१२ ।

**भवबीजम्** । क्ली । पारदे । भैष. ग्रहणी-कवाटरसे ।

**भवलिङ्गी** । स्त्री । शिवलिङ्गिनीलतायां । पञ्चगुरिया इति पश्चिमदेशे ख्याता । भा.म.४भ. योनि.रो.चि. । "पीत्वाथो भवलिङ्गीबीजम् ।"

**भवा** । स्त्री । स्वर्णचीर्य्याम् ।

**भवात्मजा** । स्त्री । मनसादेव्याम् । श.मा. ।

**भवाभीष्टः** । पुं । गुग्गुलौ । रा.नि.व.१२ । महिषाक्षगुग्गुलौ । वै.निघ. ।

**भविलः** । पुं । षण्डे । वै.निघ. ।

**भव्यः** । पुं । पुष्पोदरफलवृक्षे । চাল্তা গাছ । क्ली । तत्फले । प.मु. । पुं । कर्म्मरङ्गवृक्षे । निम्बवृक्षे । क्ली । तत्फले । से. । पुं । कारवेल्ले । रसविशेषे । श.र. । क्ली । अस्थनि । मे. ।

**भव्यफलम्** । क्ली । बहुवारफले । চাল্তা । वै.निघ.र.पि.चि. । तत्पर्य्यायाः,—भवं भावनं वक्त्रशोधनं लोमफलं पिच्छिलबीजम् । गुणाः,—"भव्यं स्वादु कषायाम्लं हृद्यमास्यविशोधनम् । तदेव पक्वं दोषघ्नं गुरु ग्राहि विषापहम् ॥"

**भव्या** । स्त्री । गजपिप्पल्यां । मे. ।

**भषः (कः, णः)** । पुं । कुक्कुरे । (का) । कुक्कुर्य्याम् । रा.मा.अम. ।

**भषत्** । क्ली । अन्तःकरणे । वै.निघ. ।

**भषा (षो)** । स्त्री । स्वर्णचीर्य्याम् । সোণা খিরুই । र.मा. । (षी) कुक्कुर्य्याम् । श.र. ।

**भसत्** । क्ली । काष्ठे । जघने । अश्वमांसे । उणा. । पुं (द्) । कारण्डवपक्षिणि । प्लवे । उणा. । योनौ । मे. । [ वै.निघ. ।

**भसरा** । स्त्री । मधुमक्षिकायाम् । शालनिर्यासे ।

**भसलाः** । पुं । वृहन्मक्षिकायाम् । वै.निघ. ।

**भसितम्** । क्ली । भस्मनि । हे.च. ।

**भस्त्र(स्त्रा)का (स्त्रा, स्त्री)** । स्त्री । चर्म्मदृतौ । আগুণের যাঁতা । श.र. ।

**भस्म** (न्) । क्ली । कपिलशिंशपायाम् । भूतौ । ছাই । वै.निघ. ।

**भस्मकम्** । क्ली । विड़ङ्गे । प.मु. । भस्मकरोगे । अतिबुभुक्षायां । स्वर्णे । मे. । भार्ग्याम् । वै.निघ. ।

**भस्मकाग्निः** । पुं । तन्नामकरोगविशेषे । ভস্মকীটরোগ । निदानं यथा—"नरे क्षीणकफे पि कुपितं मारुतानुगं । स्वोष्मणा पाचकस्थाने बलमग्निः प्रयच्छति ॥ तदा लब्धबलो देहं रुक्षयेत् सानिलोऽनलः । अभिभूय पचत्यन्नं तैक्ष्ण्यादाशु मुहुर्मुहुः । पक्त्वान्नं स ततो धातून् शोणितादीन् पचत्यपि । ततो दौर्ब्बल्यमातङ्कं मृत्युं चोपनयेत् परम् । भुक्तेऽन्ने लभते शान्तिं जीर्णमात्रं प्रता-म्यति ।" मा.नि. ।

**भस्मगन्धा (न्धिका)।** स्त्री। रेणुकबीजे। भा.। जटा.।

**भस्मगन्धिनी।** स्त्री। रेणुकबीजे। अम.।

**भस्मगर्भः।** पुं। तिनिशवृक्षे। सादनवृक्ष। रा.नि.व.९। शिंशपावृक्षे। वै.निघ.।

**भस्मगर्भा।** स्त्री। कपिलशिंशपायाम्। रा.नि.व.९। रेणुकबीजे। जटा.। तिनिशवृक्षे। रा.नि.व.२३।

**भस्मतूलम्।** क्ली। हिमे। जलकणावर्षणे। लूणगुड़िवर्षा। मे.।

**भस्ममेहः।** पुं। शर्करामेहे। निदा.।

**भस्मरोहा।** स्त्री। दग्धावृक्षे। कोङ्कणे कुरु-हीतिख्याते। रा.नि.व.९।

**भस्मवर्णः।** पुं। भासपक्षिणि। वै.निघ.।

**भस्मवेधः (कः)।** पुं। कर्पूरे। श.र.।

**भस्मशर्करा।** स्त्री। क्षारद्रव्यैः सह दग्धचूर्ण-पाषाणे। "दह्यमानार्द्रकाष्ठरसात् शर्करेवान्योन्य-सहत्वं भस्मशर्करेत्युच्यते।" सु.सू.११अ.।

**भस्मसूतः।** पुं। रससिन्दूरे। र.सा.सं.व.ज्व. चूड़ामणिरसे।

**भस्माङ्गः।** पुं। कपोते। वै.निघ.।

**भस्माह्वयः।** पुं। कर्पूरे। त्रिका.।

**भक्षकः।** पुं। गोक्षुरवृक्षे। वै.निघ.।

**भक्षकण्टकः।** पुं। क्षुद्रगोक्षुरके। रा.नि.व.४।

**भक्षटकः।** पुं। क्षुद्रगोक्षुरे। रा.नि.व.४।

**भक्षणम्।** क्ली। भोजने। त्रिका.।

**भक्षणीयम्।** त्रि। भक्ष्यद्रव्यमात्रे। वै.निघ.।

**भक्षपत्रा (त्री)।** स्त्री। नागवल्लीलतायाम्। रा.नि.व.११।

**भक्षबीजः।** पुं। क्षारवृक्षे। पियालगाछ। रा.नि.व.११। See अखरुः।

**भक्ष्यालाबुः।** स्त्री। शुक्लालाब्वाम्। रा.नि.व.७।

**भक्ष्यम्।** क्ली। अष्टविधान्नान्यतमे अन्ने। रा.नि.व.२०।

**भाकु(कू)टः।** पुं। मत्स्यविशेषे। ভেট্কী-মাছ। मे.। गुणाः—"भाकुटो मधुरः शीतः वृष्यः श्लेष्मकरो गुरुः। आमवातकरो हृद्यो वातपित्तहरो मतः॥" राज.३प.।

**भाक्तम्।** क्ली। धान्ये। वै.निघ.।

**भागः।** पुं। कालपरिमाणविशेषे। अंशे। अम.।

**भाजनम्।** क्ली। आढ़के। ६४प.। प.प्र.१ख.।

**भाण्टः।** पुं। (ण्टी स्त्री)। 'भाँइट' इति ख्याते वृक्षभेदे।

**भाण्टिका।** स्त्री। वार्त्ताक्याम्। श.चि.।

**भाण्डम्।** क्ली। पात्रे। गर्द्दभाण्डफले। श.च.। पुं। गर्द्दभाण्डवृक्षे। श.च.।

**भाण्डकमुष्टिका।** स्त्री। वृहज्जलाधारे। জালা। त्रिका.।

**भाण्डकारी।** स्त्री। मञ्जिष्ठायाम्। वै.निघ.।

**भाण्डपुटः।** पुं। नापिते। जटा.। औषध-पाकार्थं पुटभेदे। यथा—"वृहद्भाण्डे तुषैः पूर्णे मध्ये मूषां विधारयेत्। वह्निर्माग्निं मुद्रयेद् भाण्डं तद्भाण्डपुटमुच्यते॥" [ त्रिका.।

**भाण्डपुष्पः।** पुं। सर्पविशेषे। বোড়া সাপ।

**भाण्डरञ्जनमृत्तिका।** स्त्री। रञ्जनमृदि। কাবষি মাটী, রাঙামাটী। सं.रसकर्पूरप्रकरणे।

**भाण्डिः।** पुं। नापितस्य क्षुराद्याधारे। ভাঁড়। शब्दकल्पद्रुमः।

**भाण्डिलः।** पुं। नापिते। श.मा.।

**भाण्डीरः।** पुं। (Clerodendron infortunata. Syn. Volkameria infortunata.) क्षुपविशेषे। ভাণ্ডীর ফুলের গাছ। हिं भाण्ट्। वटवृक्षे। जटा.।

**भाण्डीरलतिका।** स्त्री। मञ्जिष्ठायाम। रा.नि.व.६।

**भातम्।** क्ली। प्रभातकाले।

**भाद्रः (पदः, पदा)।** पुं, स्त्री। भाद्रमासे। अम.। सु.सू.६अ.।

**भाद्रविकः।** पुं। चीनधान्ये। চীনা ধান। प.मु.।

**भानुः।** पुं। अर्कवृक्षे। अम.। वै.निघ.२भ.। शीतज्व.चि.।

**भानुपाकः।** पुं। सूर्य्यरश्मिभिः लौहस्य पाके। र.सा.सं.।

**भानुफला।** स्त्री। कदलीवृक्षे। रा.नि.व.११।

**भारः।** पुं। विंशतितुलायाम्। अम.। द्विसहस्र-पले। २००० प.। "पलानां द्विसहस्रञ्च भार एकः प्रकीर्त्तितः।" प.प्र.१ख.।



**भारगः।** पुं। गर्द्दभे।

**भारङ्गि (ण्डि) का (ङ्गी, ण्डी)।** स्त्री। भार्ग्यां। বামনহাটী। रा.नि.व.६। नकुल.१२अ.।

**भारटी।** स्त्री। नीलीवृक्षे। वै.निघ.।

**भारण्डः।** पुं। गृध्रपक्षिणि। শকুনি।

**भारती।** स्त्री। पक्षिविशेषे। ব্রাহ্মী শাক। रा.नि.व.५। भा.म.१भ.प्रलापकज्व.चि.। "भारती हारहरा।" चि.क्र.क.स्त्री.री.चि.। भारद्वाज-पक्षिणि। त्रिका.।

**भारथः (यः)।** पुं। भारद्वाजपक्षिणि। ভারুই পক্ষী। श.च.।

**भारद्वाजः।** पुं। पक्षिविशेषे। ভারুই পক্ষী। हे.च.। क्ली। अस्थनि। हे.च.।

**भारद्वाजी।** स्त्री। वनकार्पास्यां। बन-कापासी। र.मा.। मं रानकापुसी। कं काड़हत्ति। च.सू.४अ.वृंहणे। वि.८अ.। गुणाः—हिमा रुच्या व्रणशस्त्रक्षतघ्नी च। रा.नि.व.५। अतिबलायां। महाबलायाम्। चटकायाम्। চড়াই। वै.निघ.।

**भारयः।** पुं। भारद्वाजपक्षिणि।

**भारवाहः।** पुं। गर्द्दभे। वै.निघ.।

**भारवाहिनी (ही)।** स्त्री। नीलीवृक्षे। रा.नि.व.४। वा.सू.१५अ.।

**भारवी।** स्त्री। तुलसीवृक्षे। वै.निघ.।

**भारवृक्षः।** पुं। काचीनामकगन्धद्रव्ये। গোপীচন্দন। সৌরাষ্ট্রমৃত্তিকা। श.च.।

**भारशृङ्गः।** पुं। मृगविशेषे। শম্বর মৃগ। मांसगुणाः—कफजनकं गुरु स्निग्धं बल्यं वृष्यं पुष्टिकर किञ्चिद्वातकर सरञ्च। रा.नि.व.१७।

**भारिः।** पुं। सिंहे। हे.च.।

**भारिकः।** पुं। गर्दभे। वै.निघ.।

**भारिटः।** पुं। श्यामचटके। रा.नि.व.१९।

**भार्गवः।** पुं। नीलभृङ्गराजे। हस्तिनि। त्रिका.। हीरके। वै.निघ.।

**भार्गवप्रियः।** पुं। हीरके। शब्दकल्पद्रुमः।

**भार्गवाग्रणी।** स्त्री। भार्ग्याम्। वै.निघ.।

**भार्गवी।** स्त्री। दूर्व्वायां। र.मा.। श्वेतदूर्व्वा-याम्। रा.नि.व.८। नीलदूर्व्वायाम्। श.र.।

**भार्गी (र्ङ्गी)।** स्त्री। (Clerodendron siphonanthus or C. serratum.) स्वनामख्यातक्षुपे। বামনহাটী। प.मु.। हिं बरङ्गी। मं भारङ्गी। तें भण्टमारङ्गि। नेपा. चूया। तत्पर्य्यायाः,—गर्द्दभशाकः गर्द्दभशाका पद्मा अङ्गारवल्लरी अङ्गारवल्ली बालेयशाकः बर्व्वरः वर्द्धकः यष्टिः ब्रह्मयष्टिः ब्रह्मयष्टिका शाकबालेयः दूर्व्वा बालेयः ब्राह्मिका सुखधौता गर्द्दभशाखी अङ्गारवल्लरी, ब्राह्मणी ब्राह्मी ब्राह्मणयष्टी फञ्जिका फञ्जी फञ्जीका वान्तारिः भृङ्गजा भारङ्गी वातारिः कासजित् सुरूपा भ्रमरेष्टा शक्रमाता। एषा श्वेतनीलपुष्पा इति द्विधा। गुणाः—"भार्गी तु कटुतिक्तोष्णा कासश्वासविनाशिनी। शोफव्रण-कृमिघ्नी च दाहज्वरनिवारिणी॥" रा.नि.व.६। ईषत्कटुः संग्राहिणी उपदंशजे वाते च हिता। च.।

**भार्गीगुड़ः।** पुं। श्वासाधिकारे औषधम्। भार्गीमूलं १०० प. दशमूलं प्र. १० प. श्लथपोट्टली-बद्धा पुष्टहरीतकी १०० संख्या। क्वाथार्थं—वारि ११६ श. शे. २९ श.। पुरातनगुड़ः (अभावे शुष्कखण्ड) १०० प.। प्रक्षेपार्थचूर्णं—त्रिकटु गुड़त्वक् तेजपत्रम् एला प्र. १प. (८तो.) यवक्षारः ४ तो. मधु ६ प.। বামনহাটীর মূল ১০০ প. দশমূল প্রত্যেক ১০ প. পোট্টলীবদ্ধ হরীতকী ১০০ টা। কাথার্থ—জল ১১৬ শ. শে. ২৯ শ. পুরাতন গুড় ১০০ প.। প্রক্ষেপ—ত্রিকটু, গুড়ত্বক্, তেজপত্র, এলাইচ প্রত্যেক চূর্ণ ১প. যবক্ষার ৪ তো. মধু ৬ প.। भा.। भैष.।

**भार्ग्यादिः।** पुं। विषमज्वरे कषायभेदे। "भार्ग्यब्दपर्पटकपुष्करशृङ्गवेरपथ्याकणाह्वदशमूल-कृतः कषायः। सद्यो निहन्ति विषमज्वर...।" भैष.ज्व.चि.।

**भार्द्वाजी।** स्त्री। वनकार्पास्यां। श.र.।

**भार्य्या।** स्त्री। पत्न्याम्। श.र.।

**भार्य्याटिकः।** पुं। हरिणविशेषे। मे.।

**भार्य्यारुः।** पुं। मृगभेदे। मे.। [ व.१२।

**भार्य्यावृक्षः।** पुं। पताङ्गचन्दनवृक्षे। रा.नि.

**भालम्।** क्ली। गण्डस्थले। रा.नि.व.१८। तेजसि। मे.।

**भालदर्शनम्** । क्ली । सिन्दूरे । श.च. ।

**भालविभूषणसंज्ञ:** । पुं । तिलकक्षुपे । তিলগাছ । रा.नि.व.१० ।

**भालाङ्क:** । पुं । रोहितमत्स्ये । त्रिका. । शाकविशेषे । कच्छपे । मे. । करपत्रे । क्षुद्रमत्स्यभेदे । ঝিঁঙ্গা মাছ ।

**भालु(लू,ल्लु,ल्लू)क:** । पुं । भल्लुके । अ.टी.भ. । शृगाले । वै.निघ. ।

**भाव:** । पुं । सत्तायां । भवति सत्तामनुभावयतीति भाव: । गुणद्रव्यकर्म्मणि । च.सू.१अ.च.द.टी. । पदार्थे । त्रिका. । योनौ । धरणि. । जन्तौ । मे. ।

**भावन:** । पुं, क्ली । आम्रातकवृक्षे । औषधस्य अग्निसम्पुटनादिसंस्कारे । वै.निघ. । भव्यफले । চাল্তা । रा.नि.व.११ । क्ली । भावनायाम् । मे. ।

**भावना** । स्त्री । द्रवपदार्थेन पुन: पुन: औषधमारणे शोषणे च । परिमाणं—"द्रवेण यावता सम्यक् चूर्णं सर्व्वं प्लुतं भवेत् । भावनाया: प्रमाणन्तु चूर्णे प्रोक्तम्...॥" शार्ङ्ग.म.ख.६अ. । "द्रवेण यावता द्रव्यमेकीभूयार्द्रतां व्रजेत् । तावत्प्रमाणं निर्द्दिष्टं भिषग्भिर्भावनाविधौ । भाव्यद्रव्यसमं क्वाथ्यमष्टमांशन्तु तेन हि । आर्द्रं यावद्धि तद्भाव्यं सप्ताहं भावनाविधौ ॥" तोड़. ।

**भाष:** । पुं । भासपक्षिणि ।

**भास:** । पुं । कुक्कुटे । गृध्रे । विश्व: । गोकुलचारिगृध्रविशेषे । सु.सू.७अ. । पानीयकाके । পানকৌড়ি । हे.च. । प्रसहजातीयपक्षिविशेषे । नीलकण्ठगुण: काकसदृश: । सु.सू.४६अ. ।

**भासन्त:** । पुं । काकभेदे, भासपक्षिणि । मे. ।

**भासा** । स्त्री । कुमार्य्याम् । वै.निघ. ।

**भासुरम्** । क्ली । कुष्ठे । कूड़ । जटा. । वंशपत्रहरिताले । वै.निघ. । पुं । स्फटिके । त्रिका. ।

**भासु(स्क)रपुष्पा (ष्पिका)** । स्त्री । वृश्चिकालीलतायां । বিছাতি গাছ । रा.नि.व.९ ।

**भास्कर:** । पुं । अर्कवृक्षे । আকন্দ গাছ । रा.नि.व.१० । उदयभास्करनामकर्पूरविशेषे । वै.निघ. । क्ली । स्वर्णे । रा.नि.व.१३ । ताम्रे । धरणि. । प्रयोगा. ज्वरान्तकरसे ।

**भास्करप्रिय:** । पुं । माणिक्यविशेषे । पद्मरागमणि, চুণি । रस.चि. ।

**भास्करलवणम्** । क्ली । ग्रहण्यधिकारे औषधम् । "पिप्पली पिप्पलीमूलं धान्यकं कृष्णजीरकं । सैन्धवञ्च विड़ञ्चैव पत्रं तालीशकेशरम् । एषां द्विपलिकान् भागान् पञ्च सौवर्च्चलस्य च । मरिचाजाजिशुण्ठीनामेकैकस्य पलं पलं । त्वगेलाचार्द्धभागेन सामुद्रात् कुड़वद्वयं । दाड़िमात् कुड़वञ्चैव द्वे पले चाम्लवेतसात् । एतच्चूर्णीकृतं सूक्ष्मं गन्धाढ्यममृतोपमं । लवणं भास्करं नाम भास्करेण विनिर्म्मितं ॥"...रस.र. । सा. ।

**भास्करशिफा** । स्त्री । अर्कमूले । वै.निघ. । वा.व्या.चि.विषगर्भतैले ।

**भास्करावर्त्त:** । पुं । सूर्य्यावर्त्ते । হুড়হুড়ে । सूर्य्यावर्त्तकशिर:पीड़ायाम् ।

**भास्करेष्टा** । स्त्री । आदित्यभक्तायाम् । হুড়হুড়িয়া । रा.नि.व.४ ।

**भास्वन्मूलम्** । क्ली । अर्कमूले । भा.म.१भ. शीताङ्गसन्निपातज्व.चि. । [ दिवसे ।

**भास्वरम्** । क्ली । कुष्ठौषधौ । पुं । सूर्य्ये ।

**भास्वान्** । पुं । ताम्रे । र.चि.३अ. । "तथा शुद्धस्य भास्वत: ।" अर्कवृक्षे । अम. ।

**भिण्ड: (क:)**
**भिण्डातिक:** } पुं । भेण्डाक्षुपे । रा.नि.व.४ ।

**भिण्डा (ण्डी)** । स्त्री । भेण्डाक्षुपे । रा.नि.व.४ ।

**भिण्डीतक:** । पुं । भेण्डाक्षुपे । रा.नि.व.४ । तत्पर्य्याया:,—भिण्ड: भिण्डी चेत्रसम्भव: चतुष्पद: चतु:पुण्ड्र: सुशाक: अस्रपत्रक: करपर्ण: वृत्तबीज: । गुणा:—अम्लत्वं उष्णत्वं ग्राहित्वं रुचिकारित्वञ्च ।

**भित्ति: (का)** । स्त्री । गृहगोधायाम् । টিকটিকী ।

**भित्तिखा(पा)तन:** । पुं । महामूषिके । रा.नि.व.१९ ।

**भिदा** । स्त्री । धान्यकविशेषे । श.च. ।

**भिदि: (रम्) (दु:,द्र:)** । पुं, क्ली । वज्रे । अ.टी.भ. । त्रिका. । रा.नि.व.१३ । चयरी.चि. त्रैलोक्यचिन्तामणिरसे ।

**भदुर:** । पुं । ह्रस्वप्लक्षवृक्षे । रा.नि.व.११ । स्त्री । पिप्पल्याम् । ছোট পিপুল । वै.निघ. ।



**भिन्नम्** । क्ली । सद्योव्रणविशेषे । "कुन्तशक्तीषुखड्गाग्रविषाणादिभिराशय: । हत: किञ्चिच्छ्रवेत्तद्धि भिन्नलक्षणमुच्यते ॥" सु.चि.२अ. । वा.उ २६अ. । त्रि । भेदविशिष्टे । अम. ।

**भिन्नखुर:** । पुं । अश्वस्य पादरोगभेदे । लक्षणं यथा—"विन्द्याद् भिन्नखुरञ्चैव यस्यान्यो जायते खुर: ।" ज.द.३९अ. ।

**भिन्नगात्रिका** । स्त्री । कर्कटिकायाम् । কাঁকুড় । श.च. ।

**भिन्नदला** । स्त्री । मूर्व्वालतायाम् । रा.नि.व.३ ।

**भिन्नभिन्नात्मा (न्)** । पुं । चणकवृक्षे । श.च. ।

**भिन्नयोजनी** । स्त्री । पाषाणभेदकवृक्षे । পাথরকুচা । भा. ।

**भिन्नवर्त्ति:** । पुं । अश्वस्य शूलरोगभेदे । लक्षणं यथा—"अतीसारेण संयुक्तं शूलं यस्योपजायते । भिन्नवर्त्तिन्तु तं विद्यात्तुरङ्गं दीनचेष्टितम् ।" ज.द.४३अ. ।

**भिन्नवल्कल:** । पुं । गुच्छकन्दे, तैलसारु इति ख्याते कन्दशाके । प.मु. ।

**भिन्नविट्कता** । स्त्री । पित्तजन्यमलभेदरोगे । निदानम् ।

**भिरिटिक:** । पुं । वृद्धशृगाले । वै.निघ. ।

**भिरिण्टि(ण्डि)का** । स्त्री । श्वेतगुञ्जालतायाम् । रा.नि.व.३ । अन्धाहुल्याम् । वै.निघ. ।

**भिल्ल: (तरु:)** । पुं । लोध्रवृक्षे । रा.नि.व.६ । "भिल्लोदककषायेण ।" सु.चि.२४अ. ।

**भिल्लगवी** । स्त्री । वन्यायां गवि । বনগাই । गवयीमृगी । रा.नि.व.१९ ।

**भिल्लभूषणा** । स्त्री । गुञ्जालतायाम् । কুঁচের গাছ । रा.नि.व.३ ।

**भिल्ली** । स्त्री । लोध्रवृक्षे । रा.नि.व.६ । [व.६ ।

**भिल्लीशावरक:** । पुं । वम्पकरोध्रे । रा.नि.

**भिषक्** । पुं । वैद्ये, चिकित्सके । रा.नि.व.२० ।

**भिषक्प्रिया** । स्त्री । गुड़ूच्यां । रा.नि.व.३ ।

**भिषग्जितम्** । क्ली । औषधे । त्रिका. । च. ।

**भिषग्जिता** । स्त्री । कन्दगुड़ूच्याम् । वै.निघ. ।

**भिषग्भद्रा** । स्त्री । भद्रदन्तिकायाम् । দন্তী-বিশেষ । रा.नि.व.६ ।

**भिषग्वरा** । स्त्री । हरीतक्यां । रा.नि.व.११ ।

**भिषङ्माता** । स्त्री । आटरूषके । বাসক । रा.नि.व.२३ ।

**भिषाण्डम्** । क्ली । पद्मकन्दे । শালূক ।

**भिस्सिका (टा) (ष्टा)** । स्त्री । दग्धान्ने । अ.टी.सा. ।

**भिश्मट:** । पुं । पद्मकन्दे । वै.निघ. ।

**भिस्स(स्सि)टा** । स्त्री । भिस्सिकायाम् । अम. अ.टी.सा. ।

**भिस्सा (स्सा)** । स्त्री । अन्ने । अम. ।

**भिस्साण्डम्** । क्ली । शालूके । পদ্মগেঁড়ো । भा.पू.१भ.शा.व. ।

**भिक्षु:** । पुं । श्रावणीक्षुपे । মুণ্ডীরী । रा.नि.व.५ । गोक्षुरे । वै.निघ. । कोकिलाक्षक्षुपे । কুলিয়াখাড়া । भा. । ऋषिविशेषे । च.सू.१अ. ।

**भिक्षुक:** । पुं । गोक्षुरे । रा.नि.व.२३ । "भिक्षुको गोक्षुरे ।"

**भी: (ति:)** । स्त्री । भये । कम्पे ।

**भीम:** । पुं । अम्लवेतसे । प.मु. ।

**भीमनाद:** । पुं । सिंहे । श.च. ।

**भीमरथी** । स्त्री । कृष्णसंज्ञका काचिन्नदी । तज्जलं कृष्णाजलतुल्यम् । लोकानां वय:कालभेदे । स च काल. सप्तसप्ततितमवर्षस्य सप्तममासिकसप्तमरात्रिरिति । ভীমরথী । यथा—"सप्तसप्ततिके वर्षे सप्तमे मासि सप्तमी । रात्रिर्भीमरथी नाम नराणां दुरतिक्रमा ।" श.मा. ।

**भीमविक्रान्तम्** । क्ली । द्राक्षामद्ये । वै.निघ. । पुं । सिंहे । त्रिका. ।

**भीमसेन:** । पुं । (Drybalanops camphora) Borneo camphor. तन्नामककर्पूरे । ভীমসেনী কর্পূর । यथा—"पीताभो भीमसेनस्तदनु सितकर: ।" गुणा:—वातपित्तघ्न: रसे पाके च मधुर: शीतल: बृंहण: बल्यश्च । भा. । रा.नि.व.१२ ।

**भीमा** । स्त्री । रोचनाख्यसुगन्धद्रव्ये । श.च. ।

**भीरु:** । स्त्री । शतावर्य्यां । प.मु. । भा.म.१भ. सन्धिकज्व.चि. । च.द.कास.चि. । मल्लिकापुष्पक्षुपे । মল্লিকা ফুলের গাছ । रा.नि.व.१० ।

कण्टकार्य्याम्। श.च.। छाग्याम्। रा.नि.व.१९। शतपद्याम्। श.र.। पुं। व्याघ्रे। रा.नि.व.१९। शृगाले। श.मा.। इक्षुभेदे। र.मा.। मत्स्यविशेषे। मं भेटकि। कं हेमलग। तस्य लक्षणम्—"पृष्ठे पक्षौ द्वौ गले पुच्छके चेत् सर्पाभः स्यात् सर्व्वतो वृत्ततुण्डः। ज्ञेयः शल्को मत्स्यको भीरुकाक्तः स्निग्धो वृष्यो दुर्ज्जरो वातकारी॥" रा.नि.व.१७।

**भीरुकः**। पुं। भल्लुके। शल्लकी। वै.निघ.। पेचके। श.र.। मत्स्यविशेषे। कृष्णैपक्षी। अयं पुण्ड्रकगुणः। भा.। त्रि। भयशीले।

**भीरुचेताः** (स्)। पुं। हरिणे। वै.निघ.।

**भीरुपत्रिका (त्री)**। स्त्री। शतावर्य्याम्। শতমূলী। प.सु.।

**भीरुहृदयः**। पुं। मृगे। जटा.।

**भीलभूषणा**। स्त्री। गुञ्जायाम्। रा.नि.व.७।

**भीलुकः**। पुं। भल्लुके। श.र.।

**भीषणः (णा)**। पुं, स्त्री। कपोते। रा.नि.व.१९। स्त्री। सल्लक्याम्। मे.। कुन्दुरौ। কুন্দুরু খোটী। रा.नि.व.१२। हिन्ताले। रा.नि.व.९।

**भीष्मम्**। क्ली। भस्मे। प.सु.।

**भीष्मगन्धकः**। पुं। माधवीलतायाम्। वै.निघ.।

**भुक्तम्**। क्ली। भक्षणे। त्रिका.। त्रि। भक्षिते। अम.।

**भुक्तशेषः**। त्रि। उच्छिष्टे। वै.निघ.।

**भुक्ता**। स्त्री। भूखर्ज्जूरीवृक्षे। ছোট খেজুর। रा.नि.व.११। भल्लिकायाम्।

**भुक्तिः**। स्त्री। उपभोगे। नखे। वै.निघ.। भोजने। श.र.।

**भुक्तिप्रदः**। पुं। मुद्गे। মুগ। रा.नि.व.१६।

**भुग्नः**। त्रि। रोगादिना वक्रीकृते। अम.।

**भुग्नहृक् (नेत्रः)**। पुं। तन्नामकसन्निपातज्वरविशेषे। लक्षणं यथा..."ज्वरबलापचयस्मृतिशून्यताश्वसनभुग्नविलोचनमोहितः। प्रलपनभ्रमवेपथुशोथवान् त्यजति जीवितमाशु स भुग्नहृक्॥" भा.ज्व.चि.। तन्त्रान्तरोक्तलक्षणं भावप्रकाशे द्रष्टव्यम्।

**भुग्नी**। स्त्री। भूनागे। শীষা। रा.नि.व.१३।

**भुजः**। पुं। वाहौ। रा.नि.व.१८। भूर्जपत्रवृक्षे। वै.निघ.। वृक्षे। सर्पे।

**भुजकोटरः**। पुं। कक्षदेशे। हे.च.।

**भुजगः**। पुं। शीषके। সীসা। भैष.ध्वजभङ्गचि.पुष्पधन्वरसे। र.सा.सं.वसन्तकुसुमाकरे। सर्पे। ঢোড়া সাপ। त्रिका.।

**भुजगलता**। स्त्री। नागवल्लीलतायाम्। পাণ-গাছ। रा.नि.व.११।

**भुजगी**। स्त्री। सर्पिण्याम्। रा.नि.व.५।

**भुजगोपभोजी** (इन्)। पुं। मयूरे। रा.नि.व.१९।

**भुजङ्गः**। पुं। शीषके। सर्पे। अम.।

**भुजङ्गघातिनी**। स्त्री। सर्पकङ्कालिकायाम्। रा.नि.व.७।

**भुजङ्गजिह्वा**। स्त्री। महासमङ्गाक्षुपे। रा.नि.व.४।

**भुजङ्गदमनी**। स्त्री। नाकुलीकन्दे। नागदमन्याम्। वै.निघ.।

**भुजङ्गदर्शिनी**। स्त्री। नागदमन्याम्। নাক্‌দনা। वै.निघ.।

**भुजङ्गदारणः**। पुं। मयूरे। रास्नायाम्। वै.निघ.।

**भुजङ्गपुष्पः**। पुं। पुन्नागपुष्पे।

**भुजङ्गभुक् (ज्)**। पुं। मयूरे। अम.।

**भुजङ्गभोजी**। (इन्)। पुं। राजसर्पे। हे.च.।

**भुजङ्गमः**। पुं। सर्पे। अम.। क्ली। शीषके। रा.नि.व.१३।

**भुजङ्गलता**। स्त्री। नागवल्ल्याम्। পাণ গাছ। रा.नि.व.११।

**भुजङ्गवल्ली**। स्त्री। नागवल्लीलतायाम्। পাণ গাছ। र.सा.सं.। भैष.चिन्तामणिरसे।

**भुजङ्गाख्यः**। पुं। नागकेशरवृक्षे। श.मा.।

**भुजङ्गान्तकः (शनः)**। पुं। मयूरे। गरुडे। वै.निघ.। [ अम.।

**भुजङ्गाक्षी**। स्त्री। सर्पाक्ष्याम्। रास्नायाम्।

**भुजङ्गी**। स्त्री। सर्पिण्याम्। वै निघ.।

**भुजमध्यम्**। क्ली। कूर्परे। रा.नि.व.१८।

**भुजमस्तकम्**। क्ली। स्कन्धदेशे। वै.निघ.।

**भुजशिरः**। क्ली। स्कन्धदेशे। अम.।



**भुजा**। स्त्री। बाहौ। रा.नि.व.१८। त्रिका.।

**भुजाकण्टः**। पुं। हस्तनखे। हे.च.।

**भुजागमः**। पुं। वृक्षे। वै.निघ.।

**भुजाढ़की**। स्त्री। कलायविशेषे। টোঁওর কলায়। रमा.। नीलनिर्गुण्ड्यां। शेफालिकायाम्। रा.नि.व.४। [ त्रिका.।

**भुजादलः**। पुं। करे। পাতের পাঞ্জা।

**भुजान्तरम्**। क्ली। वक्षसि। रा.नि.व.१८। क्रोड़े। अम.।

**भुजिष्यः**। पुं। रोगे। उणा.।

**भुर्जः**। पुं। भूर्जपत्रवृक्षे। ভুজবৃক্ষ। रा.नि.व.९।

**भुवनम्**। क्ली। जले। रा.नि.व.१४। जने। मे.। गगने। जगति।

**भूः**। क्ली, पुं। शरीरे।

**भूकः**। पुं, क्ली। छिद्रे। अन्धकारे। मे। श.मा.।

**भूकदम्बः**। पुं। भूमिकदम्बक्षुपे। কুক্‌শিমা। हिं कोटिमुण्डी, भूइकदम्ब। मद.व.२। प.सु.। महाश्रावणिकायां। मुण्डिरी। रा.नि.व.५। भैष.क्षुद्ररो.चि.। यमान्याम्। रा.नि.व.६।

**भूकदम्बकः**। पुं। यवानीक्षुपे। रा.नि.व.६। मद.व.२।

**भूकदम्बा (म्बिका)**। स्त्री। गोरक्षमुण्ड्यां। वै.निघ.।

**भूकन्दः**। पुं। महाश्रावणिकायाम्। रा.नि.व.५। शूरणे। ওল। भैष.कुष्ठ चि.महाभल्लातकगुड़े।

**भूकवुदारः (कः)**। पुं। श्वेतभूकाञ्चने। हिं छोटालसोड़ा। तत्पर्य्यायाः,—क्षुद्रश्लेष्मान्तकः भूशेलुः लघुपिच्छिलः लघुभूतद्रुमः लघुशीतः लघुशेलुः सूक्ष्मफलः। गुणाः—संग्राही रक्तपित्तहरः मधुरः कृमिशूलघ्नः वातकोपनः ईषच्छीतः स्वर्णमारकश्च। रा.नि.व.५।

**भूकाकः**। पुं। नीलकपोते। क्षुद्रकङ्के। কাঁক্‌পক্ষী। श.र.।

**भूकुम्बकः**। पुं। कुलहले। কুক্‌শিমা। वा.सू.१५अ.सुरसादिः।

**भूकुम्भी**। स्त्री। भूपाटल्याम्। रा.नि.व.५।

**भूकुष्माण्डम्**। क्ली। भूमिकुष्माण्डे। ভুঁই কুমড়া। भैष.ध्वजभङ्ग.चि.।

**भूकुष्माण्डी**। स्त्री। विदारीकन्दे। ভুঁই কুমড়া। रा.नि.व.७।

**भूकेशः**। पुं। वटवृक्षे। शैवाले। मे.।

**भूकेशी**। स्त्री। अवल्गुजनामके वृक्षविशेषे। সোমরাজ। मे.।

**भूखर्जु(र्ज्ज)रिका (री)**। स्त्री। क्षुद्रखर्जुरीवृक्षे। ছোট খেজুরের গাছ। मं लघुसिंधी। कं किरिइंचुलि। तत्पर्य्यायाः,—भूयुक्ता वसुधा खर्जुरिका भूमिखर्ज्जूरी। गुणाः—मधुरा शीतला दाहपित्तघ्नी च। रा.नि.व.११। See खर्जूरी।

**भूगन्धा**। स्त्री। मुरानामगन्धद्रव्ये। মুরা-মাংসী। श.चि.।

**भूगरम्**। क्ली। विषे। रा.नि.व.६।

**भूघ्नी**। स्त्री। फटिकारिकायां। वै.निघ.।

**भूचणकः**। पुं। (Arachis hypogaea.) वृक्षभेदे। চীনার বাদাম, মাট কলায়। हिं मुंफली। तें वरणसनगकाय। ता.वार्कदलई। एतत्तैलं कोशाम्रतैलगुणम्।

**भूचम्पकः**। पुं। भूमिचम्पकक्षुपे। ভুঁই চাঁপা। वै.निघ.।

**भूच्छत्रम्**। पुं। छत्राके। পোয়াল ছাতু, ভুরকুণ্ডা ছাতু। वै.निघ.।

**भूजन्तुः**। पुं। भूनागे। শীষ। रा.नि.व.१३।

**भूजः**। पुं। भूर्ज्जपत्रवृक्षे।

**भूजम्बुः (म्बूः)**। स्त्री। गोधूमे। গম। विकङ्कतवृक्षे। বঁইচিগাছ। मे.। भूमिजम्बूवृक्षे। বনজাম। रा.नि.व.११।

**भूतः**। पुं। मुस्तायाम्। रा.नि.व.२३। देवयोनिविशेषे। बालग्रहे। अ.टी.भ.। लोध्रे। वै.निघ.। जन्तौ। मे.। प्राणिमात्रे। अ.टी.भ.। क्ली। क्षित्यादिपञ्चके। अ.टी.भ.।

**भूतकेशः (शी)**। पुं, स्त्री। (Corydalis govoniana.) स्वनामख्यातक्षुद्रतृणविशेषे। गोलोम्यां। শ্বেতদূর্ব্বা। हिं भूतकेश। तें वाविलिचेट्टु। तत्पर्य्यायाः,—गोलोमी भूतकेशी अल्पकेशी केशी। प.मु.र.मा.। नीलनिर्गुण्ड्याम्। वै.निघ.२भ.ज्व.चि.। शेफालिकायाम्। रा.नि.व.४।

पुत्रजीवायाम् । वा.सू.१५अ.सुरसादिः । जटामांस्याम् । भा.म.१भ.सन्ततादिज्व.चि.माहेश्वरधूपे । गन्धमांस्यां । সুগন্ধ জটামাংসী । रा.नि.व.१२ । इन्द्रवारुण्याम् । রাখাল শশা । श्वेततुलसीवृक्षे । वै.निघ. ।

**भूतकेसरा** । स्त्री । मेथिकायाम् । মেতি । वै.निघ. ।

**भूतक्रान्तिः** । स्त्री । भूतोन्मादे । भूतसञ्चारे । ভূতাবেশ । रा.नि.व.२० ।

**भूतगन्धा** । स्त्री । सुरामांस्याम् । जटा. ।

**भूतगुणः** । पुं । शब्दादौ । च.सू.१अ. ।

**भूतग्रामः** । पुं । प्राणिसमूहे । स चतुर्विधः स्वेदजाण्डजोद्भिज्जजरायुजभेदतः । सु.सू.१अ. ।

**भूतघ्नः** । पुं । श्वेतरसोने । শুক্লরশুন । रा.नि.व.७ । भूर्जवृक्षे । ভূর্জপত্র । रा.नि.व.९ । सर्पपवृक्षे । उष्ट्रे । हे.च. ।

**भूतघ्नी** । स्त्री । प्रपौण्डरीके । পুণ্ডরিয়া । प.मु. । मुण्डीरीभेदे । प.मु. । तुलसीवृक्षे । रा.नि.व.१० । शङ्खपुष्प्याम् । वै.निघ. ।

**भूतजटा** । स्त्री । जटामांस्यां । गन्धमांस्यां । সুগন্ধ জটামাংসী । रा.नि.व.१२ ।

**भूततृणः** । पुं । विषभेदे । ছাতারিয়া বিষ । र.मा. । गन्धतृणविशेषे । रा.नि.व.८ ।

**भूतद्रावी** (इन्) । पुं । रक्तकरवीरवृक्षे । रा.नि.व.१० । चवकवृक्षे । হেঁচেতা । रा.नि.व.९ ।

**भूतद्रुमः** । पुं । श्लेष्मान्तकवृक्षे । रा.नि.व.११ । विभीतकवृक्षे ।

**भूतनाशनः** । पुं, क्ली । सिद्धार्थे । শ্বেত সরিষা । रा.नि.व.१६ । पुं । भल्लातकवृक्षे । र.मा. । हिङ्गुवृक्षे । वै.निघ. । रुद्राक्षवृक्षे । রুদ্রাক্ষ । रा.नि.व.११ ।

**भूतपतिः** । पुं । कृष्णतुलसीवृक्षे । वै.निघ. ।

**भूतपत्री** । स्त्री । तुलसीवृक्षे । रा.नि.व.१० ।

**भूतपादपः** । पुं । भव्यफलवृक्षे । চাল্‌তা গাছ । वै.निघ. ।

**भूत(ति)पुष्पः** । पुं । श्योणाकवृक्षे । र.मा. ।

**भूत(ति)प्रिया** । स्त्री । कृष्णतुलसीवृक्षे । কাল তুলসী । वै.निघ. ।

**भूतबन्धः** । पुं । पिशाचबन्धने । वै.निघ. ।

**भूतभैरवरसः** । पुं । अपस्माराधिकारे रसः । पाठः—"मृतसूताभ्रलौहञ्च शिलागन्धञ्च तालकं । रसाञ्जनञ्च तुल्यांशं नरमूत्रेण मर्दयेत् । तद्गोलद्विगुणं गन्धं लौहपात्रे चणं पचेत् । पञ्चगुञ्जोन्मितं भक्ष्यम्··· । व्योषं सौवर्चलं हिङ्गु नरमूत्रेण सर्पिषा । पिबेत् कर्षमितम्...।" भा.म.२भ. ।

**भूतमारी** । स्त्री । चीड़ानामगन्धद्रव्ये, देवदारुभेदे । रा.नि.व.१२ ।

**भूतयज्ञः** । पुं । भूतेभ्यो बलिहरणे । हारीत. ।

**भूतराजः** । पुं । स्वनामख्यातचवकवृक्षे ।

**भूतलिका** । स्त्री । स्पृक्कानामगन्धद्रव्ये । रा.नि.व.१२ ।

**भूतवासः** । पुं । विभीतकवृक्षे । रा.नि.व.११ ।

**भूतविक्रिया** । स्त्री । अपस्माररोगे । रा.नि.व.२० । See अपस्मारः ।

**भूतविद्या** । स्त्री । अष्टविधतन्त्रान्यतमतन्त्रे । सा देवासुरगन्धर्व्वयक्षरक्षःपितृपिशाचनागग्रहाद्युपसृष्टचेतसां शान्तिकर्म्मबलिहरणादिग्रहोपशमनार्थम् । सु.सू.१अ. । अपि च—"ग्रहभूतपिशाचाश्च शाकिनीडाकिनीग्रहाः । एतेषां निग्रहः सम्यक् भूतविद्या निगद्यते ॥" वैद्य.सं.२अ. । "लक्षयेद् ज्ञानविज्ञानवाक्चेष्टाबलपौरुषम् । पुरुषेऽपौरुषं यत्र तत्र भूतग्रहं वदेत् । भूतस्य रूपप्रकृतिभाषागत्यादिचेष्टितैः । यस्यानुकारं कुरुते तेनाविष्टं तमादिशेत् । सोऽष्टादशविधो देवदानवादिविभेदतः । घ्नन्ति शुक्लप्रतिपत्त्रयोदश्योः सुरा नरम् । शुक्लत्रयोदशीकृष्णद्वादश्योर्दानवा ग्रहाः । गन्धर्वास्तु चतुर्दश्यां द्वादश्यां चोरगाः पुनः । पञ्चम्यां शुक्लसप्तम्येकादश्योस्तु धनेश्वराः । शुक्लाष्टपञ्चमीपूर्णमासीषु ब्रह्मराक्षसाः । कृष्णे रक्षःपिशाचाद्या नवद्वादशपर्व्वसु । दर्शामावास्ययोरष्टनवम्योः पितरोऽपरे । गुरुवृद्धादयः प्रायः कालं सन्ध्यासु लक्षयेत् ।" वा.उ.४अ. ।

**भूतवृक्षः** । पुं । शाखोटवृक्षे । শাওড়া গাছ । रा.नि.व.९ । श्योणाकवृक्षे । मे. । अक्षोटवृक्षे । (क्षः) श्लेष्मान्तकवृक्षे । চাল্‌তা গাছ । भा. ।

**भूतवेशी (श्या)** । स्त्री । श्वेतशेफालिकावृक्षे । प.मु. । निर्गुण्ड्याम् । वै.निघ. । [ वै.निघ. ।

**भूतशिखाग्रणी** । स्त्री । सुगन्धजटामांस्याम् ।

**भूतशिखी** । स्त्री । सुगन्धजटामांस्याम् । वै.निघ. । [ निघ. ।

**भूतशिफा** । स्त्री । सुगन्धजटामांस्याम् । वै.

**भूतसञ्चारः** । पुं । ग्रहावेशे । भूतोन्मादे । रा.नि.व.२० ।

**भूतसारः** । पुं । खदिरसारे । रा.नि.व.८ । पृथुशिम्बश्योणाकवृक्षे । रा.नि.व.९ ।

**भूतहन्त्री** । स्त्री । वन्ध्याकर्कोटक्याम् । नीलदूर्व्वायाम् । रा.नि.व.३।८ ।

**भूतहरः** । पुं । गुग्गुलौ । रा.नि.व.१२ ।

**भूतहा** (न्) । पुं । भूर्जवृक्षे । वै.निघ. ।

**भूतहारि** (न्) । क्ली । देवदारुकाष्ठे । रा.नि.व.१२ । पुं । रक्तकरवीरे । वै.निघ. ।

**भूतहासः** । पुं । सन्निपातज्वरविशेषे । लक्षणं—"शब्दादीनधिगच्छति न स्वान् विषयान् यदीन्द्रियग्रामैः । हसति प्रलपति परुषं स ज्ञेयो भूतहासाख्यः ॥" भा.म.१भ. ।

**भूताङ्कुशः** । पुं । (Anisomelis malabarica.) वृक्षविशेषे । हिं गओजुवान । तें मभेरी, छिनरणभेरि । चवकवृक्षे । হেঁচেতা । तत्पर्य्यायाः,—चव: चवकः चावकः चुरकः तीक्ष्णः क्रूरः रागोद्दीपनसंज्ञः भूतद्रावी ग्रहाह्वयः । गुणाः,—कटूष्णः तीक्ष्णोत्कटगन्धो चवकारी कफवातघ्नः भूतग्रहनाशकश्च । रा.नि.व.९ । वै.निघ.२भ.कास.चि.भूताङ्कुशरसे । अपामार्गे । सुकुमारक्षौ । পুঁড়ো ইক্ষু । राजिकायाम् । रा.नि.व.२३ । तिलकक्षुपे ।

**भूताङ्कुशरसः** । पुं । कासाधिकारे रसः । शुद्धपारदः १ भ. गन्धः २ भ. ताम्रं ३ भ. मरिचं १० भ. अभ्रभस्म ४ भ. विषं १ भ श्वेतसर्षपं १ भ. । अम्लरसेन भावयेत् । अन्य उन्मादे—पारदः लौहभस्म रौप्यभस्म ताम्रभस्म मुक्ताभस्म प्र. समं । हीरं हरितालं गन्धकं मनःशिला तुल्यं शिलाजतु रसाञ्जनं अहिफेनं टङ्कणक्षारः प्र. पारदचतुर्थांशः, पञ्चलवणं प्र. पारदसमभागं । भृङ्गराजदन्तीवज्रीरसैः मर्द्दयित्वा पिण्डितं कृत्वा दिनान्ते गजपुटे पचेत् । रस.कौ. ।

**भूतात्मा** । पुं । शरीरे । प्राणिन आत्मनि । मे. ।

**भूताभिषङ्गः** । पुं । पिशाचकृतपराभवे । भूतावेशजन्यज्वरे । "कामशोकभयाद्वायुः क्रोधात् पित्तं त्रयो मलाः । भूताभिषङ्गात् कुप्यन्ति भूतसामान्यलक्षणम् । भूताभिषङ्गादुद्वेगो हास्यरोदनकम्पनम् ॥" च. । मा.नि. ।

**भूतारि** । क्ली । हिङ्गुनि । रा.नि.व.६ ।

**भूताली** । स्त्री । भूपाटल्यां । रा.नि.व.५ । मुशल्यां । তালমূলী । रा.नि.व.७ ।

**भूतावासः** । पुं । विभीतकवृक्षे । रा.नि.व.२१ । शरीरे । वै.निघ. ।

**भूताविष्टः** । त्रि । पिशाचग्रस्ते ।

**भूतावेशः** । पुं । भूतसञ्चारे ।

**भूतावेशा (शी)** । स्त्री । निर्गुण्डीवृक्षे । নিশিন্দা গাছ । वै.निघ. । [ निघ. ।

**भूतावेश्यालता** । स्त्री । श्वेततुलसीवृक्षे । वै.

**भूतिः** । स्त्री । वृद्धौ । रा.नि.व.५ । रोहिषतृणे । भूतृणे । গন্ধতৃণবিশেষ । रा.नि.व.८ । पक्वमांसे । वै.निघ. ।

**भूति(ती)कः** । पुं, क्ली । यमान्यां । हे.च. । च.द.अ.सा.चि. धान्यपञ्चके । सू.चि.३७अ. । भूनिम्बे । চিরেতা । अम. । कट्फले । हे.च. । कातृणे । গন্ধতৃণ । रा.नि.व.८ । च.द.हिक्काश्वास.चि.तेजोवत्यादिघृते । कर्पूरे । हे.च. ।

**भूतिपुष्पिका** । स्त्री । शुक्लकेतकवृक्षे । वै.निघ. ।

**भूतिसितम्** । क्ली । रौप्यधातौ । रा.नि.व.१३ ।

**भूतुम्बी** । स्त्री । स्वनामख्यातफलशाकविशेषे । अलाबुभेदे । মেটো লাউ । हिं भूतुम्बी, तेलसार । गुणाः—कटूष्णा सन्निपातघ्नी दन्तार्गलदन्तरोधधनुर्वातादिदोषघ्नी च । रा.नि.व.७ ।

**भूतृणम्** । क्ली, पुं । अन्धदेशप्रसिद्धगन्धतृणे । গন্ধতৃণ, রামকর্পূর । मं सुगन्धिरोहिसु । कं परिमलदगञाणि । तें चिप्पगडिड । तत्पर्य्यायाः,—रौहिषः भूतिः भूतिकं कुटुम्बकः मालातृणम् समालम्बी छत्रः अतिछत्रकः गुह्यबीजः सुगन्धः गुच्छालः पुंस्त्वविग्रहः वधिरः अतिगन्धः शृङ्गरोहः गुण्डरोहः करेन्दुकः जम्बुकप्रियः । गुणाः—कटुतिक्तं वातसन्तापघ्नं भूतग्रहावेशघ्नं विषदोषघ्नञ्च । रा.नि.व.८ । च.सू.२७अ. । सुरसादिगणश्च । सु.सू.४६अ. । अपि च "भूतृणं कटुकं तिक्तं तीक्ष्णोष्णं रेचनं लघु । विदाहि दीपनं रूक्षमनेत्रं मुखशोधनम् ॥ अवृष्यं बहुविट्कञ्च पित्तरक्तप्रदूषणम् ॥" भाव.

**भूतेष्टा।** स्त्री। कृष्णतुलस्याम्। व.निघ.।

**भूतोदनम्।** क्ली। ओदनविशेषे। यथा—"तिललाजादधियवहरिद्रायुक्तमोदनं। भूतोदनन्तु संप्रोक्तं गुणाः सर्व्वे पदार्थवत्॥" वै.निघ.।

**भूतोन्मादः।** पुं। भूतावेशजन्योन्मादे। निदानम्।

**भूत्तमम्।** क्ली। स्वर्णे। है.च.।

**भूदराश्रया।** स्त्री। मूषिककर्ण्याम्। वै.निघ.।

**भूदरी(रोद्)भवा।** स्त्री। आखुकर्णीलतायाम्। भा.।

**भूदर्या।** स्त्री। मूषिककर्ण्याम्। वै.निघ.।

**भूदारः (कः)।** पुं। शूकरे। अम.। प.मु.। वनशूकरे।

**भूधरयन्त्रम्।** क्ली। औषधपाकार्थयन्त्रविशेषे। लक्षणम्—"वालुकाभिः समस्ताङ्गं गर्त्ते मूषां रसान्विताम्। दीप्तोपलैः संवृणुयात् यन्त्रं भूधरनामकम्।" भा.। "यन्त्रं डमरुवद् वाथ तुल्य विद्याधरेण वा। भूगर्त्ते तत् समाधाय चोर्द्ध्वमाकीर्य्य वह्निना॥ अधः स्थाल्यां जलं क्षिप्त्वा सूतकं तत्र पातयेत्। एतद् भूधरयन्त्रं स्यात् सूतसंस्थानकर्म्मणि॥" "जलकच्छपपातालदोलाभूधरवालुकाः। वक्राद्या यन्त्रभेदाः स्युः वज्रान्ध्राद्याश्च मूषकाः॥" श.च.।

**भूधात्री।** स्त्री। भूम्यामलक्यां। ভুঁই আমলা। मं भूयांवली। कं आर्द्रनेल्लि। हिं भद्रआंवरा। तें नेलवुसिरिकचेट्टु। गुणाः—कषाया अम्ला शीता मूत्ररोगदाहघ्नी पित्तमेहघ्नी च। रा.नि.व.५।

**भूनागः।** पुं। गण्डूपदाम्। शीषके। रा.नि.व.१३।१९। उपरसभेदे। तत्पर्य्यायाः,—भूजन्तुः क्षितिजः क्षितिजन्तुः क्षितिनागः रक्तजन्तुकः रक्ततुण्डकः। गुणाः—रसजारकः वज्रमारकः विषापहः रसायनश्च।

**भूनिम्बः।** पुं। (Swertia chirata. Syn. gentiana chirayta. किरातिक्तके। চিরেতা। हिं चिरायता। तें नेलवेमु। मं चिराद्दता। रा.नि.व.९। गुणाः—तिक्तः ज्वरघ्नः दीपनः पित्तप्रसादनः कृमिचर्म्मरोगघ्नः। अस्य मूलमधिकगुणम्।

**भूनिम्बादिकषायः।** पुं। भूनिम्बगुडूचीमुस्तनागरकृते कषाये। गुणाः—ज्वरे दोषपाचनः ज्वरादिघ्नश्च। वा.चि.१अ.।

**भूनीपः।** पुं। भूकदम्बे। মুণ্ডীরী, বা কুকশিমা। रा.नि.व.५।

**भूपतिः।** पुं। वृद्धौषधे। वै.निघ.। ऋषभके। रा.नि.व.५।

**भूपत्रम्।** क्ली। मृत्तिकाक्षारे। সোরা। वै.निघ.।

**भूपदः।** पुं। वृक्षे। श.च.।

**भूपदी।** स्त्री। शतदलमल्लिकायाम्। प.मु.। स्वनामख्यातगुल्मे। वै.निघ.।

**भूपर्णी।** स्त्री। भूपिठरिकायाम्। সোণামুখী। वै.निघ.।

**भूपलाशः।** पुं। आस्फोतगुल्मे। শাপরমালী। "आस्फोतकः सुगन्धश्च भूपलाशो विशल्यकृत्॥" र.मा.।

**भूपाटली।** स्त्री। स्वनामख्यातक्षुद्रक्षुपे। টোকাপানা। मं भूयपाड़लि। कं नेलवादरि। तत्पर्य्यायाः,—भूकुम्भी भूताली रक्तपुष्पिका। गुणाः—कटुष्णा पारदं प्रयोज्या च। रा.नि.व.५।

**भूपाला (ली)।** स्त्री। घोषायाम्। वै.निघ.।

**भूपिठरिका (री)।** स्त्री। सोनामुखीति ख्यातलतायाम्। व.निघ.।

**भूपुत्री।** स्त्री। भूपिठर्य्याम्। वै.निघ.।

**भूपुष्पा।** स्त्री। भूमिचम्पकवृक्षे। वै.निघ.।

**भूपेष्टः।** पुं। राजादनीवृक्षे। থির্নী গাছ। रा.नि.व.११।

**भूफलः।** पुं। मुद्गे। हरितमुद्गे। रा.नि.व.१६। महामूषिके।

**भूबदरी।** स्त्री। क्षुद्रबदरीविशेषे। भूबोरीति कालापुरप्रान्ते प्रसिद्धा। মেটো কুল। हिं झड़बेर। गुणाः—मधुराम्ला कफवातहरी रुच्या पथ्या दीपना पाचना किञ्चित्पित्तास्रजननी च। रा.नि.व.११।

**भूभुक्ता।** स्त्री। भूमिखर्ज्जूरिकायाम्। रा.नि. [व.११।

**भूभृत्।** पुं। पर्व्वते। रा.नि.व.२।

**भूमण्डली।** स्त्री। मल्लिकावृक्षे। বেন মল্লিকা। वनस्पतिभेदे। वै.निघ.।



**भूमण्डिनी।** स्त्री। मल्लिकायाम्। व.निघ.।

**भूमयी।** स्त्री। छायाम्।

**भूमिः।** स्त्री। जिह्वायाम्। उणा.। क्षितौ। ভুঁই। सा गुणतः पञ्चधा। काचित् स्वगुणभूयिष्ठा, काचिदम्बुगुणभूयिष्ठा, काचिदाकाशगुणभूयिष्ठा, काचिदग्निगुणभूयिष्ठा, काचिच्चानिलगुणभूयिष्ठा। तत्र १मा अश्मवती स्थिरा गुर्वी श्यामा कृष्णा वा स्थूलवृक्षशस्यप्राया च। २या स्निग्धा शीतला स्वल्पोदका स्निग्धशस्यतृणकोमलवृक्षप्राया शुक्ला च। ३या मृद्वी समा स्वभ्रवती अव्यक्तरसजला सर्व्वतोऽसारवृक्षा महापर्व्वतवृक्षप्राया श्यामा च। ४र्था नानावर्णा लघ्वश्मवती प्रविरलाल्पपाण्डुवृक्षप्ररोहा च। ५मी रूक्षा भस्मरासभवर्णा तनुरूक्षकोटराल्परसवृक्षप्राया च। तत्राम्बुगुणभूयिष्ठायां विरेचनद्रव्याणि, अग्निगुणभूयिष्ठायाम् वमनद्रव्याणि, आकाशगुणभूयिष्ठायां संशमनानि, उभयगुणभूयिष्ठायामुभयतो भागान् आददीत। भूमिः गन्धवर्णरसोपेतत्वात् षड्विधा। षड्रसयुक्तत्वाच्च स्वभावत एव सर्व्ववीजवती च। सु.सू.३७अ.।

**भूमि(मी)कदम्बः।** पुं। कदम्बविशेषे, भूकदम्बे। मं भूमिकदम्बु। कं नेलगड़वु। तत्पर्य्यायाः,—भूनीपः भूमिजः भृङ्गवल्लभः लघुपुष्पः वृत्तपुष्पः विषघ्नः व्रणहारकः। गुणाः—कटुष्णः वृष्यः दोषघ्नः हिमः कषायतिक्तः पित्तघ्नः वीर्य्यवर्द्धकश्च। रा.नि.व.९। (कः) अलम्बुषायाम्।

**भूमिकदम्बिका।** स्त्री। मुण्डीर्य्याम्, गोरक्षमुण्ड्याम्। মুণ্ডীরী। रा.नि.व.५।

**भूमिकालिका।** स्त्री। गोधूमिकाशाके। व.निव.।

**भूमिकुष्माण्डः।** पुं। विदारीकन्दे। ভুঁইকুমড়া। प.मु.।

**भूमिखर्ज्जु(र्ज्जू)रिका (री)।** स्त्री। क्षुद्रखर्ज्जूरीवृक्षे, भूखर्ज्जूरिकायाम्। ছোট খেজুর। रा.नि.व.११। See खर्ज्जूरी।

**भूमिगमः।** पुं। उष्ट्रे। है.निघ.।

**भूमिचम्पकः।** पुं। (Koemferia rotunda.) भूचम्पके। ভুঁইচাঁপা। हिं चण्डमूल। तत्पर्य्यायाः,—ताम्रपुष्पः सन्धिवन्धः द्रुघनः। श.च.। अस्य मूलं व्रणपाककरम्।

**भूमिच(चा)री।** स्त्री। आखुकर्णीलतायाम्। মূষাকাণী। रा.नि.व.३। मार्कण्डिकायाम्। কাঁকরোল।

**भूमिच्छत्र (त्र)म्।** क्ली। भूस्थितच्छत्राके, स्वेदजशाके। ভূঁরুও ছাতা। वै.निघ.। भा.पू.१भ.शा.व.।

**भूमिजः।** पुं। भूमिजकदम्बे। रा.नि.व.९। भूमिजगुग्गुलौ। भूनागे। शीषे। रा.नि.व.१२।१३। यवक्षारे। সোরা। वै.निघ.। क्ली। स्वर्णे। गौरसुवर्णशाके। रा.नि.व.७।१३।

**भूमिजगुग्गुलुः।** पुं। आशापुरगुग्गुलौ। মহিষাক্ষগুগ্গুল। तत्पर्य्यायाः,—दैत्यमेदजः दुर्गाह्वः आशापुरसम्भवः। भूमिजगुग्गुलुः काशीदेशे प्रसिद्धः। गुणाः—सौरभ्यदः तिक्तकटूष्णः कफवातघ्नः सूतघ्नः मेध्यः सुगन्धिश्च। रा.नि.व.१२।

**भूमिजम्बुः (म्बूः)।** स्त्री। क्षुद्रजम्बूविशेषे। বনজাম, ভুঁইজাম। र.मा.। मं क्षुद्रजम्बू। कं किरुनेरिलु तत्पर्य्यायाः,—नादेया काकजम्बुः नादेयिका शीतपल्लवा ह्रस्वफला भृङ्गवल्लभा ह्रस्वा भ्रमरेष्टा पिकभक्ष्या काष्ठजम्बुः। गुणाः—कषाया मधुरा श्लेष्मपित्तघ्नी हृद्या संग्राहिणी ह्लत्कण्ठदोषघ्नी वीर्य्यपुष्टिदा च। रा.नि.व.११।

**भूमिजम्बूका।** स्त्री। नागरङ्गवृक्षे। নারঙ্গলেবু গাছ। क्षुद्रजम्बूवृक्षे। अम.।

**भूमिदण्डा।** स्त्री। मल्लिकापुष्पवृक्षे। वै.निघ.।

**भूमिधात्री।** स्त्री। भूम्यामलकाम्। ভুঁই আমলা।

**भूमिनिम्बः।** पुं। भूनिम्बे। চিরাতা।

**भूमिपिशाचः।** पुं। तालवृक्षे। हारा.।

**भूमिपुत्रः।** पुं। श्योणाके। वै.निघ.।

**भूमिमण्डः।** पुं। आस्फोतकलतायाम्। अष्टपादिका इति लोके। মদনমালী, শাপরমালী। र.मा.।

**भूमिमण्डपभूषणा।** स्त्री। माधवीलता- [याम्। रा.नि.व.१०।

**भूमिमण्डा।** स्त्री। शारदमल्लिकायाम्। र.मा.।

**भूमिरुहः।** पुं। वृक्षे।

**भूमिलग्ना।** स्त्री। शुक्लगोकर्ण्याम्। শুক্ল-অপরাজিতা। वै.निघ.।

**भूमिलता ।** स्त्री । शङ्खपुष्पीलतायाम् । वै.निघ । किञ्चुलुकायाम् । কেঁচো । भैष.वीर्य्यस्तम्भे । च.द. ध्वज.चि. ।

**भूमिलवणम् ।** क्ली । मृत्तिकालवणे । সোরা । वै.निघ. ।

**भूमिलाभः ।** पुं । मृत्यौ ।

**भूमिलेपनम् ।** क्ली । गोमये । हे.च. ।

**भूमिवल्ली ।** स्त्री । माकण्डिकालतायाम् । ভুঁই আমলা, কাঁকরোলবিশেষ । भा. । See मार्कण्डिका । [ व.१९ ।

**भूमिशयः ।** पुं । वनचटके । ছাতার । रा.नि.

**भूमिशयवर्गः ।** पुं । विलवासि जीवसमूहे । तद्यथाः,—"श्वेतः श्यामश्चित्रपृष्ठः कालकः काकलीमृगः । कुटिका चिल्लको भेकी गोधा शल्यक-गण्डकौ ॥ कदली नकुलः श्वाविदिति भूमिशयाः स्मृताः ॥"

**भूमिषण्डः ।** पुं । शारदमल्लिकायाम् । কাঠ-মল্লিকা । रत्ना. ।

**भूमिसम्पुटः ।** पुं । शरावादौ । वै.निघ. । कास.चि. ।

**भूमिसरः ।** पुं । श्यामाकतृणे । वै.निघ. ।

**भूमि(मी)सहः ।** पुं । शाकवृत्ते । हिं भूंरसह । गुणौ—शीतलः रक्तपित्तघ्नः । "भूमीसही दारदातुर्वरदातुः खरच्छदः । भूमिसहस्तु शिशिरो रक्तपित्तप्रसादनः ॥" भा. ।

**भूमिस्पृक् ।** पुं । मानुषे । मे. । अन्धे । खञ्जे । श.र. ।

**भूमिस्फोटः ।** पुं । भूच्छत्राके । ভুঁইছাতু ।

**भूम्याङ्(ह्व)ल्यम् ।** क्ली । स्वनामख्यातक्षुपे । हिं भूंइतखड़् । कासवदा, एलहुड़ि इति देशविशेषे ख्यातम् । गुणाः—तिक्तरसं ज्वरकुष्ठामसिध्महरञ्च । रा.नि.व.४ ।

**भूम्यामलकी (ली)** स्त्री । भूधात्र्याम् । ভুঁই আমলা । हिं भद्र आंवरा । मह्रा भूयावली । कं आरुनेल्लि । तत्पर्य्यायाः,—बहुपुष्पी जड़ा अध्यण्डा तालिः तामलकी अजटा सूक्ष्मफला वेदामलकी वितुन्नकः झटा अज्झटा शिवा अफला अमला मखा झाटा झाटामला झाटिका अमलज्झटा ताली तमालिका तमाली उच्चटा दृढ़पादी वितुन्ना वितुन्निका भूधात्री चारटी वृष्या विषघ्नी बहुपत्रिका बहुवीर्य्या अहिभयदा विश्वपर्णी हिमालया अरुहा वीरा । गुणाः—कषायाम्लतिक्तमधुरा हिमा पित्तास्रमेहदाहतृष्णाकासकफपाण्डुमूत्राघातक्षतनाशिनी । रा.नि.व.५ । मुषल्याम् । তালমূলী । प.मु. । [ व.२३

**भूम्याहुली ।** स्त्री । अपराजितायाम् । रा.नि.

**भूम्याहुल्यम् ।** क्ली । स्वनामख्यातवृत्तभेदे । हिं भुञ्जीतखड़ । तत्पर्य्यायाः,—कुष्ठकेतुः मार्कण्डीयं महौषधम् । गुणाः—कटुतिक्तत्वं ज्वरकुष्ठसिध्मामनाशित्वञ्च ।

**भूम्युदराश्रया ।** स्त्री । मूषिककर्णीलतायाम् । মূষাকাণীলতা । वै.निघ. ।

**भूयुक्ता ।** स्त्री । भूमिखर्ज्जुर्य्याम् ।

**भूरि ।** क्ली । सुवर्णे । अम. ।

**भूरिगः (मः) ।** पुं । गर्द्दभे । रा.नि.व.१९ ।

**भूरिगन्धा ।** स्त्री । मुरानामगन्धद्रव्ये । মুরা মাংসী । रा.नि व.१२ ।

**भूरिचन्द्रः (तेजाः) ।** पुं । सुवर्णे । रा.नि.व. १३ ।

**भूरिचला ।** स्त्री । अतिविषायाम् ।

**भूरिदुग्धा ।** स्त्री । वृश्चिकालीवृत्ते । বিছাতি গাছ । रा.नि.व.९ ।

**भूरिधरः ।** पुं । गर्द्दभे । रा.नि.व.१९ ।

**भूरिनिष्कम् ।** क्ली । स्वर्णे । रा नि.व.१३ ।

**भूरिपत्रः ।** पुं । ऊषरतृणे । উষরতৃণ । रा.नि.व.८ ।

**भूरिपलितदा ।** स्त्री । पाण्डुरफलीवृत्ते ।

**भूरिपुष्पा ।** स्त्री । शतावाक्षुपे । শুল্ফা । रा.नि.व.४ ।

**भूरिप्रेमा (न्) ।** पुं । चक्रवाकपक्षिणि । रा. नि.व.१९ ।

**भूरिफली ।** स्त्री । पाण्डुरफल्यां । रा.नि.व.५ ।

**भूरिफेना ।** स्त्री । चर्म्मकषायां । र.मा. । सातुवृत्ते । वै.निघ. ।

**भूरिबला ।** स्त्री । अतिबलायाम् । रा.नि.व.४ ।

**भूरिमञ्जरी ।** स्त्री । श्वेततुलसीवृत्ते । रा.नि. व.१० ।



**भूरिमल्ली ।** स्त्री । अम्बष्ठायां । रा.नि.व.४ ।

**भूरिमही ।** स्त्री । गवि ।

**भूरिमायः (युः) ।** पुं । शृगाले । अम. । स्त्री । (या.युः) । शृगाल्याम् । रा.नि.व.१९ ।

**भूरिमूलिका ।** स्त्री । अम्बष्ठायां । वै.निघ. ।

**भूरिरसः ।** पुं । इक्षुवृत्ते । भा. ।

**भूरिलग्ना ।** स्त्री । श्वेतापराजितायाम् । वै.निघ. ।

**भूरुण्डी ।** स्त्री । हस्तिशुण्डीवृत्ते । হাতিশুঁড়ে । अम. । महाकरञ्जे । आदित्यभक्तायाम् । वै.निघ. ।

**भूरुहः ।** पुं । वृत्ते । श.मा. । अर्ज्जुनवृत्ते । शालवृत्ते । वै.निघ. । क्ली । मौक्तिके ।

**भूरुहा ।** स्त्री । मांसरोहिण्याम् । दूर्व्वायाम् । वै.निघ. । [ चि. ।

**भूरोहः ।** पुं । किञ्चुलुके । কেঁচো । भैष.भग.

**भूर्ज्जः (पत्रः,वृत्तः) ।** पुं । (Betula bhojpattra.) The birch. स्वनामख्यातवृत्ते । शाकपादः, फटक इति हिमाचलदेशे प्रसिद्धः । ভুজ্জিপত্র, ভোজপত্র । हिं भुजपत्र । बम्. भूर्ज्जपत्र । तत्पर्य्यायाः,—छदपत्रः वल्कद्रुमः भूर्ज्जपत्रः सुकर्म्मा चित्रत्वक् विन्दुपत्रः रक्षापत्रः विचित्रकः भूतघ्नः मृदुपत्रः मृदुचर्म्मी शैलेन्द्रस्थः चर्म्मद्रुमः छत्रपत्रः शिवः स्थिरच्छदः मृदुत्वक् दलनिर्म्मोकः पत्नकी विद्यादलः पत्रपुष्पकः भुजः बहुपटः बहुतक्कः मृदुच्छदः बहुवल्कलः भुजः चर्म्मी । र.मा. । गुणाः—कटुकषायोष्णः भूतरक्षाकरः त्रिदोषघ्नः पथ्यश्च । रा.नि.व.९ । कर्णरुक्पित्तरक्तघ्नः मेदोविषहरश्च । भा. ।

**भूर्ज्जग्रन्थिः ।** पुं । तद्वृत्तग्रन्थौ । च.सू.३अ.२ प्रदेहः । "ग्रन्थिश्च भौर्ज्जः ।"

**भूर्ज्जपत्रकः ।** पुं । आखोटवृत्ते । শ্যাওড়া-গাছ । रा.नि.व.९ ।

**भूर्भूरिका (री) ।** स्त्री । धूमस्याम् । ডা'ল বড়ী ।

**भूलग्ना ।** स्त्री । शङ्खपुष्प्यां । रा.नि.व.३ ।

**भूलता ।** स्त्री । किञ्चुलुके । हे.च. ।

**भूवदरी ।** स्त्री । क्षुद्रकोल्याम् । শেয়াকুল । हिं झड़वोर । तत्पर्य्यायाः,—क्षितिबदरी बदरफली बदरवल्ली वल्लीवदरी बहुकलिका लघुवदरी सूक्ष्मवदरी । गुणाः,—मधुराम्ला रुच्या दीपनी पाचनी पथ्या कफवातनाशिनी रक्तपित्तवर्द्धिनी च ।

**भूशमी ।** स्त्री । ह्रस्वशमीवृत्ते । वै.निघ. ।

**भूशयः ।** पुं । विलवासिजन्तुमात्रे, गोधानकुलादौ । गुणाः—गुरुः उष्णः मधुरः स्निग्धः वातघ्नः शुक्रलश्च । राज. ।

**भूशेलुः ।** पुं । भूकर्वुदारे । ভুঁইচালতা । रा.नि.व.११ । [ वै.निघ. ।

**भूषणार्हम् ।** क्ली । स्वर्णे । मौक्तिके । प्रवाले ।

**भूषि(सु)ता ।** स्त्री । अङ्कोलवृत्ते । আঁকোড় গাছ । वै.निघ. ।

**भूस्तृणः ।** पुं, क्ली । गन्धतृणे । गन्धमार्जारसुता. । गन्धतृण । "सौगन्धिकं भूस्तृणकः ।" गुणाः—"भूस्तृणं कटुकं तिक्तं तीक्ष्णोष्णं रेचनं लघु । विदाहि दीपनं रूक्षमनेत्र्यं मुखशोधनम् । अवृष्यं बहुविट्कञ्च पित्तरक्तप्रदूषणम् ॥" भा.म. ३भ.मू.घा.चि. ।

**भूस्थः ।** पुं । गण्डूपदाम् । मनुष्ये । वै.निघ. ।

**भूस्पृक् ।** पुं । मानुषे । हे.च. ।

**भूस्वेदः ।** पुं । घनाश्मना स्वेदविशेषे । প্রস্তরস্বেদ । विधिः—शयानस्य प्रमाणेन घनामश्ममयीं शिलां । तापयित्वा मारुतघ्नैर्दारुभिः संप्रदीपितैः । व्यपोह्य सर्व्वानङ्गारान् प्रोक्ष्य चैवोष्णवारिणा । तां शिलामथ कुर्व्वीत कौशेयाविकसंस्तराम् । तस्यां स्वभ्यक्तसर्व्वाङ्गः स्वपन् स्विद्यति ना सुखम् ॥" च.सू.१४अ. ।

**भूक्षित् ।** पुं । शूकरे । त्रिका. ।

**भृकुटी ।** स्त्री । मण्डूकजातीयकीटे । सु.कल्प. ८अ. । See कीटः ।

**भृगु(ङ्ग)जा ।** स्त्री । भार्ग्याम् । रा.नि.व.६ । वै.निघ.जीर्णज्व.चि.लवङ्गादिकषाये, श्वास.चि. सिंह्यादिकषाये ।

**भृगुभवा ।** स्त्री । भार्ग्याम् । रा.नि.व.६ ।

**भृगूद्भवा ।** स्त्री । भार्ग्याम् । रा.नि.व.६ ।

**भृङ्गम् ।** क्ली । त्वचि । গুড়ত্বক্ । प.मु. । सि. यो.अर्श.चि. । भैष.बाल.चि. । "शुण्ठीभृङ्गनिशाकारः ।" अभ्रके । रा.नि.व.१२ । च.द.रा.य.चि. लवङ्गाद्यचूर्णे ।

**भृङ्गः** । पुं । भृङ्गराजे । ভীমরাজ । रा.नि.व.६ । च.द.बाल.रो.चि. । र.सा.स.चुधावतीगुड्या । भ्रमरे । र.मा. । पक्षिविशेषे । ফিঙা বা ভীমরাজ পাখী । रा.नि.व.२३ । मांसगुणाः—मधुरं स्निग्धं कफशुक्रवर्द्धनञ्च । रा.नि.व.१७ । भृङ्गरीलि । ভীমরুল । श.र. ।

**भृङ्गकः** । पुं । धूम्याटपक्षिणि । भृङ्गराजपक्षिणि । ফিঙা বা ভীমরাজ পাখী । श.र. ।

**भृङ्गचुल्ली** । स्त्री । भृङ्गाह्वायाम् । म भमरमालि । कं उष्पुवक्षे । गुणाः—कटूष्णा तिक्ता दीपनरोचनी च । रा.नि.व.७ ।

**भृङ्गजम्** । क्ली । अगुरुकाष्ठे । र.सा. ।

**भृङ्गजा** । स्त्री । भार्ग्याम् । रा.नि.व.६ ।

**भृङ्गपर्णिका** । स्त्री । सूक्ष्मैलायाम् । श.च. ।

**भृङ्गप्रियः** । पुं । धूलीकदम्बे । रा.नि.व.९ ।

**भृङ्गप्रिया** । स्त्री । माधवीलतायाम् । रा.नि.व.२० । [ निघ. ।

**भृङ्गबन्धुः** । पु । कुन्दवृक्षे । कदम्बवृक्षे । वै.

**भृङ्गमारिः (री)** । स्त्री । केविकापुष्पवृक्षे । रा.नि.व.१० । See केविका ।

**भृङ्गमूलिका** । स्त्री । भृङ्गाह्वायाम् । भ्रमरमारी रा.नि.व.७ ।

**भृङ्गमोही** (इन्) । पुं । चम्पकवृक्षे । रा.नि.व.१० । स्वर्णचम्पके । वै.निघ. ।

**भृङ्गरजः (जाः)** । पुं । भृङ्गराजे । भा.म.४भ.कर्णरो.चि. । "प्रस्थ भृङ्गरजस्य च ।" च.टी.भ. ।

**भृङ्गरा** । स्त्री । भृङ्गराजे । केशराजे । हिं भांरा । भा.२भ. ।

**भृङ्गराजः** । पुं । (Wedelia calendulacea. Syn. C. Verbesina.) स्वनामख्यातपत्रशाकविशेषे । ভীমরাজ । हिं भाङ्गरा, भेगरिया । मं पिवलभाका । तें गुग्टकलगरचेट्टु । बम्. पिवलभांरा । तत्पर्य्यायाः,—भृङ्गः पतङ्गः मार्कवः मार्कः मार्कवः नागमारः परकः भृङ्गसोदरः केशरञ्जनः केश्यः कुन्तलवर्द्धनः भृङ्गारक एकरजः कारञ्जकः भृङ्गरजः भृङ्गारः अङ्गारकः मर्करः भृङ्गाह्वः पितृप्रियः । गुणाः—कटुस्तिक्तः रूक्षः उष्णः वातकफघ्नः केश्यः त्वच्यः क्रिमिश्वासकासशोथामपाण्डुघ्नः रसायनो दन्त्यः बल्यः कुष्ठनेत्रशिरोरोगघ्नश्च । भा. । भ्रमरे । भीमराजपक्षिणि । मे. । अयं प्रतुदः कषायः मधुरः रूक्षो वातजनकश्च । सु.सू.४६अ. । केशराजे । কেশরাজ । नीलभृङ्गराजे । धूम्याटपक्षिणि । ফিঙে । दारुचिनीति ख्याते सुगन्धद्रव्ये । वै.निघ. ।

**भृङ्गरि(री)टः** । पुं । लौहे । रस.र.रसायने ।

**भृङ्गरोलः** । पुं । कीटविशेषे । ভীমরুল । त्रिका. । तत्पर्य्यायाः,—विषष्टक्का वरोलः तृणषट्पदः विषशूकः विषशृङ्गी ।

**भृङ्गवल्लभः** । पुं । धाराकदम्बे । কেলিকদম । भूकदम्बे । কুকশিমা । रा.नि.व.९ ।

**भृङ्गवल्लभा** । स्त्री । भूमिजम्बूवृक्षे । বনজাম । रा.नि.व.११ । तरणीपुष्पवृक्षे । रा.नि.व.१० ।

**भृङ्गवान्तम्** । क्ली । मधुनि ।

**भृङ्गवृक्षः** । पुं । भृङ्गराजवृक्षे । ভীমরাজ । भा.म.४भ.मुखमुण्डितिका. चि. । "स्वरसैर्भृङ्गवृक्षाणाम् ।"

**भृङ्गसुहृत्** । पुं । कुन्दपुष्पवृक्षे । वै.निघ. ।

**भृङ्गसोदरः** । पुं । केशराजे । কেশুর্ত্তে । त्रिका. । [ वै.निघ. ।

**भृङ्गा** । स्त्री । भृङ्गराजे । त्वचि । দারুচিনি ।

**भृङ्गानन्दा** । स्त्री । यूथिकायाम् । শ্বেতজুঁই । रा.नि.व.१० ।

**भृङ्गापत्रः** । पुं । कर्पूरे ।

**भृङ्गाभीष्टः** । पुं । आम्रवृक्षे । क्ली । आम्रमुकुले । आम्रफले । रा.नि.व.११ ।

**भृङ्गारम्** । क्ली । लवङ्गे । स्वर्णे । रा.नि.व.१२ । १३ । पुं । भृङ्गराजे । जटा. । नालमुखजलपात्रविशेषे । গাড়ু । च.सू.१५अ. ।

**भृङ्गारकः** । पुं । भृङ्गराजवृक्षे । वै.निघ. ।

**भृङ्गारिः** । स्त्री । केविकापुष्पवृक्षे । भ्रमरमारिवृक्षे । रा.नि.व.१० । पुं । भृङ्गराजे । क्ली । लवङ्गे । [ हे.च. ।

**भृङ्गारिका (री)** । स्त्री । झिल्लीकीटे । अम. ।

**भृङ्गार्कः** । पुं । भृङ्गराजवृक्षे । वै.निघ. ।

**भृङ्गाह्वः** । पुं । भृङ्गराजक्षुपे । ভীমরাজ । जीवके । रा.नि.व.५ । लवङ्गे । वै.निघ. ।

**भृङ्गाह्वा** । स्त्री । मूलशाकविशेषे । मं भमरमाली । कं उप्पुशक्के । अड्वीचील इति कोङ्कणे । गुणाः—कटूष्णा तिक्ता दीपनरोचनी च । रा.नि.व.७ ।



**भृङ्गिः** । पुं । भृङ्गराजे । अतिविषायाम् । वै.निघ.२भ.अ.सा.चि.महारसे ।

**भृङ्गिका** । स्त्री । इन्द्रगोपकीटे । वै.निघ. ।

**भृङ्गिणी** । स्त्री । वटीवृक्षे । रा.नि.व.११ ।

**भृङ्गि(ङ्गे)रिटिः** । स्त्री । भङ्ग्याम् । त्रिका. ।

**भृङ्गी** । स्त्री । अतिविषायाम् । আতইচ । वटीवृक्षे । रा.नि.व.११ । भङ्गायाम् । ভাঙ্ । वै.निघ.२भ.अल्लकाज्व.चि. शुण्ठ्यादिः । तन्नामकमक्षिकायाम् । কুমিরে পোকা । इन्द्रगोपकीटे । वै.निघ. । पुं । (इन्) । वटवृक्षे । रा.नि.व.११ ।

**भृङ्गीगृहम्** । क्ली । भृङ्गीमक्षिकागृहे । কুমিরে চাক । वै.निघ.२भ.र.पि.चि.नस्ये ।

**भृङ्गीफलः** । पुं । आम्रातकवृक्षे । रा.नि.व.११ ।

**भृङ्गीरिटिः** । पुं । भृङ्ग्याम्, वटीवृक्षे ।

**भृङ्गेष्टः** । पुं । आम्रवृक्षे । वै.निघ. ।

**भृङ्गेष्टा** । स्त्री । घृतकुमार्य्याम् । रा.नि.व.५ । भार्ग्याम् । रा.नि.व.६ । काकजम्बूवृक्षे । रा.नि.व.११ । तरणीपुष्पवृक्षे । रा.नि.व.१० ।

**भृज्जनः** । पुं भर्ज्जनपात्रे । ভাজনা খোলা ।

**भृण्टका** । स्त्री । श्वेतगुञ्जायाम् ।

**भृशङ्कवः** । पुं । नासारोगभेदे । लक्षणम्—"तीक्ष्णाघ्राणोपयोगार्करश्मिसूत्रतृणादिभिः । वातकोपिभिरन्यैर्वा नासिकातरुणास्थनि । विघट्टितेऽनिलः क्रुद्धो रुद्धः शृङ्गाटकं व्रजेत् । निवृत्तः कुरुतेऽत्यर्थं क्षवथुं स भृशङ्कवः ॥" वा.उ.१९अ. ।

**भृशपत्रिका** । स्त्री । महानील्याम् । रा.नि.व.४ ।

**भृषत्** । पुं, स्त्री । पाषाणे । श.र. ।

**भृष्टः** । त्रि । भर्ज्जिते । ভাজা । हे.च. ।

**भृष्टकुलत्थः** । पुं । भर्ज्जितकुलत्थके । ভাজা কুর্‌তি কলায় । स ज्वरे स्वदोषमहरः । सा.कौ.ज्व.चि. ।

**भृष्टचणकः** । पुं । भर्ज्जितचणके । ছোলা ভাজা । रुं फुटाभुंजा । कं हुरुकड्ली । गुणाः—रूक्षः वातघ्नः रक्तदोषकृत् वीर्य्योष्णः लघुः कफघ्नः शैत्यापहारकश्च । रा.नि.व.१६ ।

**भृष्टतण्डुलः** । पुं । भर्ज्जिततण्डुले । ভাজা চাউল । गुणाः—"सुगन्धिः कफहा रूक्षः पित्तलो भृष्टतण्डुलः ।" राज.२प. ।

**भृष्टतण्डुलान्नम्** । क्ली । भर्ज्जिततण्डुलस्यान्ने । ভাজা চাউলের ভাত । চালভাজা । মুড়ি । गुणाः—"भृष्टतण्डुलजञ्चान्नं लघु वह्निप्रदीपनम् ।" राज.२प. ।

**भृष्टमत्स्यः** । पुं । भर्ज्जितमत्स्ये । ভাজা মাছ ।

**भृष्टमांसम्** । क्ली । घृतादिभर्ज्जितमांसे । ভাজা মাংস । गुणाः—विदाहि रक्तवातादिदोषघ्नञ्च । रा.नि.व.१७ ।

**भृष्टमृत्** । स्त्री । अग्निभर्ज्जनेन दग्धमृत्तिकायाम् । পোড়া মাটী । च.सू.४अ. ।

**भृष्टयवः** । पुं । भर्ज्जितयवे, धानायाम् । ভাজা যব, ছাতু । चिपिटके । চিঁড়ে । प.मु. ।

**भृष्टान्नम्** । क्ली । भृष्टतण्डुले । মুড়ি । श.च. ।

**भेकः** । पुं । घनाभ्रे । रस.चि.३अ. । मण्डूके । ব্যাঙ্ । तत्पर्य्यायाः,—मण्डूकः वर्षाभूः शालूरः प्लवः प्लवगः प्लवङ्गमः दर्दुरः दर्द्दुरः वृष्टिभूः सालूरः व्यङ्गः शल्लः नन्दनः गूढवर्च्चाः अजिह्वः अजिह्मः अलिम्बकः जिह्ममोहनः नन्दकः कृतालयः रेकः अलिमकः मण्डुः हरिः लूलकः लुलुकः शालूकः कटुरवः । तन्मांसगुणाः—सद्योबलकरं श्रमतृष्णादाहप्रमेहक्षयकुष्ठच्छर्द्दिघ्नञ्च । राज. । अपिच "मण्डूकः श्लेष्मलो नातिपित्तलो बलकारकः ॥" भा. । [ भ.वि. ।

**भेकटः** । पुं । मत्स्यभेदे । ভেট্‌কী মাছ ।

**भेकनिः (नी)** । स्त्री । मत्स्यभेदे । ভাঙন মাছ । मांसगुणाः—मधुरं शीतलं वृष्यं श्लेष्मकरं गुरु च । राज. ।

**भेकपर्णी** । स्त्री । मण्डूकपर्ण्याम् । থুলকুড়ি । उत्. थालकुड़ि । सा.कौ.रासादिलौहे । मञ्जिष्ठेति वृद्धाः ।

**भेकभुक्** । पुं । सर्पे । त्रिका. ।

**भेकमूत्रम्** । क्ली । मण्डूकमूत्रे । ব্যাঙের মূত । र.सा.स.वज्रशोधने ।

**भेकराजः** । पुं । महाभेके । भृङ्गराजे । वै.निघ. ।

**भेकी** । स्त्री । मण्डूकपर्ण्याम् । থুলকুড়ি । र.मा. । भेकपत्न्याम् । अम. ।

**भेटुलिः** । पुं । वाममत्स्ये । सु.सू.७अ. ।

**भेड्रः** । पुं । मेषे । त्रिका. ।

**भेड़ः (कः)** । पुं । मेषे । हे.च. । पद्मवीजे । तन्नामकतन्त्रकारे । See तन्त्रकारः ।

**भेड़ा (ण्डा)** । स्त्री । स्वनामख्यातक्षुपे । मं भेड़ । क वेंड़े । गुणाः—अम्लरसा रुचा ग्राहिणी अरुचिकारिणी च । रा.नि.व.४ । पद्मवीजे । रा. नि.व.१० ।

**भेड़ी** । स्त्री । मेष्याम् । ভেড়ী ।

**भेदः** । पुं । भञ्जने । भञ्जनरूपीड़ायाम् । विदारणेनेव व्यथायां । मा.नि. । विरेके । জোলাপ ।

**भेदकः** । त्रि । विरेचके । पुं । अम्लवेतसे । वै.निघ. ।

**भेदनम्** । क्ली । हिङ्गुनि । रा.नि.व.६ । वायुजन्यव्रणवेदनायाम् । सु.सू.२२अ. । त्रि । भेदके, अबद्धं बद्धं वा मलादिकं पिण्डितम् भित्वाधः पातयति, यथा कटुक्यादि । आशयावदारणे । च.सू. १८ अ. । पुं । अम्लवेतसे । प.मु. । रा.नि. व.६ । शूकरे । रा.नि.व.२९ । भल्लातके ।

**भेदन(नि)कः** । पुं । जीरके । वै.निघ. ।

**भेदनीयवर्गः** । पुं । भेदकमहाकषायवर्गे । यथा—"सुवहार्कोरुवुकाग्निमुखीचित्राचित्रकचिरविल्वशङ्खिनीशकुलादनीस्वर्णक्षीरिण्य इति दशेमानि भेदनीयानि भवन्ति ।" তেউড়ী, শ্বেতার্ক বা রক্তার্ক, এরণ্ড, বিষলাঙ্গলি, দন্তী, চিত্রক, করঞ্জ, শ্বেতবুহ্ন, কটুকী, সোণাথিরুই । च.सू.४अ. ।

**भेदाशी** (इन्) । पुं । मद्गुदपक्षिविशेषे । गुणाः—"सर्व्वदोषकरस्तेषां भेदाशी मलदूषकः ।" सु. सू.४६अ. ।

**भेदिज्वराङ्कुशः** । पुं । ज्वराधिकारे रसः । "रसस्य द्विगुणं गन्धं गन्धतुल्यञ्च टङ्कणं । रसतुल्यं विषं योज्यं मरिचं पञ्चधा विषात् । कट्फलं दन्तिवीजञ्च प्रत्येकं मरिचान्वितं । ज्वराङ्कुशो रसो ह्येषः चूर्णयेद्याममात्रकं । वटिकां कारयेद्धीमान् एकगुञ्जाप्रमाणिकाम् ।" रस.कौ. ।

**भेदिनी** । स्त्री । कृष्णजीरके । रा.नि.व.६ ।

**भेदी** (इन्) । पुं । अम्लवेतसे । रा.नि.व.६ । त्रि । भेदकारके । [ रोगे ) । सु.सू.५४अ. ।

**भेद्यम्** । क्ली । भेदार्हे, भेदनीये ( विद्रध्यादौ

**भेरुण्डम्** । क्ली । गर्भधारणे । श.र. । त्रि । भयानके ।

**भेषजम्** । क्ली । औषधे । रा.नि.व.२० । तच्च द्विविधं—"स्वस्थस्यौजस्करं किञ्चित् किञ्चिदार्त्तस्य रोगनुत् ।" च.सू.१अ. । कृष्णजीरके । लावपक्षिणि । जटा. ।

**भेषजकल्पः** । पुं । औषधयोजनायां । ते च कल्पा मदनादयः । वा.कल्प.६अ. ।

**भेषजाङ्गम्** । क्ली । औषधानुपाने । श.च. ।

**भैमी** । स्त्री । महाश्रावणीवृक्षे । ভূতরাজ ।

**भैरवीवचा** । स्त्री । स्वनामख्यातवचायां । শুক্ল বচ । प.मु. ।

**भैषजम्** । क्ली । औषधे । रा.नि.व.२० ।

**भैषज्यसारः** । पुं । उपेन्द्रमिश्रकृतसंग्रहे ।

**भोगः** । पुं । शालिधान्ये । प.मु. । सम्पूर्णाहारे । रा.नि.व.२० । अहिफणायाम् । सर्पशरीरे । पालने । त्रिका. । क्रोड़े । रा.नि.व.१८ । सर्पे । देहे । माने । श.र. ।

**भोगगृहम्** । क्ली । वासगृहे । हे.च. ।

**भोगधरः** । पुं । सर्पे । वै.निघ. ।

**भोगपिशाचिका** । स्त्री । क्षुधायाम् । हारा. ।

**भोगवती** । स्त्री । शुक्लवचायाम् । वै.निघ. ।

**भोगवान्** । पुं । सर्पे । मे. ।

**भोगावासः** । पुं । वासगृहे । हारा. ।

**भोगिगन्धिका** । स्त्री । सर्पगन्धायां । वै.निघ. ।

**भोगिभुक्** । पुं । गरुड़े । मयूरे । वै.निघ. ।

**भोगिवल्लभम्** । क्ली । श्रीखण्डचन्दने । प.मु. ।

**भोगी** । स्त्री । सर्पिण्याम् । सर्पकङ्कालिका । रा.नि.व.५ । गी (इन्) पुं । सर्पे । अम. ।

**भोग्यम्** । क्ली । धान्ये । रा.नि.व.१६ ।

**भोग्यार्हम्** । क्ली । शालिधान्ये । रा.नि.व.१६ ।

**भोजनम्** । क्ली । कठिनद्रव्यस्य गलाधःकरणे । अम. । पादोनाहारे । "पादोनं स्याद्भोजनम् ।" रा.नि.व.२० । भोजनान्तकर्त्तव्यता—"भुक्त्वा पाणितलं दृष्ट्वा चक्षुषोर्यदि दीयते । अचिरेणैव तद्वारि तिमिराणि व्यपोहति । भुक्त्वाचम्य करं वामं दत्त्वा कुक्षौ ततः पठेत् । भुक्तं माहेन्द्रहस्तेन वैश्वानरहुतेन च । गरुड़स्य च कण्ठेन समुद्रस्य



च वह्निना । वातापिर्भक्षितो येन पीतो येन महोदधिः । यन्मया खादितं पीतं तदगस्त्यो जरिष्यति । सुखासीनः चणं तिष्ठेत यावन्न लभते सुखं । भुक्त्वा पादशतं गत्वा वामपार्श्वेन संविशेत् । एवञ्चाधीगतचान्नं सुखं तिष्ठति जीर्य्यति ॥" राज.३प. । See आहारः, अन्नञ्च ।

**भोजनकः** । पुं । नदीभल्लातके । प.मु. ।

**भोजनपात्रम्** । क्ली । स्वर्णादिनिर्म्मिताहारपात्रे । पाकराजः ।

**भोजनार्हम्** । क्ली । शालिधान्ये । प.मु. ।

**भोजनीयम्** । क्ली । भोज्यद्रव्यमात्रे ।

**भोजराजः** । पुं । अश्वशास्त्रकारे ।

**भोजराजशुक्लः** । पुं । रससुधानिधिकारे ।

**भोज्यम्** । क्ली । अष्टविधान्नान्यतमे अन्ने । रा.नि.व.२० ।

**भोज्यसम्भवः** । पुं । शरीरस्थरसधातौ । श.च. ।

**भौलिः** । पुं । उष्ट्रे । त्रिका. ।

**भौतिकम्** । क्ली । मुक्तायां । रा.नि.व.१३ ।

**भौमजलम्** । क्ली । पृथ्वीजलं । जाङ्गलानूपसाधारणभेदेन तेषां गुणाः जलशब्दे द्रष्टव्याः ।

**भौमरत्नम्** । क्ली । प्रवाले । पला । रा.नि.व.१३ ।

**भौमसर्पः** । पुं । पृथ्वीजातसर्पे, दंष्ट्राविषे । सु.कल्प.३अ. ।

**भौमौषधम्** । क्ली । पार्थिवौषधे । "सुवर्णं समलाः पञ्च लौहाः ससिकताः सुधा । मनःशिलाले मणयो लवणं गैरिकाञ्जने ॥" च.सू.१अ. ।

**भौर्जग्रन्थिः** । पुं । भूर्जग्रन्थौ । "ग्रन्थिश्च भौर्जः ।" च.सू.३अ. ।

**भ्रंशः** । पुं । वृक्षादिभ्यः पतने । भा.आगन्तु. ज्व.चि. ।

**भ्रमः** । पुं । चक्रारूढ़स्येव ज्ञाने । भा.म.१भ. ज्व.चि. । "रजःपित्तानिलाद् भ्रमः ।" वै.निघ. मूर्च्छा.चि. । मूर्च्छायाम् । भ्रान्तौ । कुन्दयन्त्रे । কুঁদ । त्रिका. ।

**भ्रमणम्** । क्ली । पर्य्यटने । हस्त्यादिभ्रमणगुणाः—वातकोपनत्वम् अङ्गस्थैर्य्यकरत्वं बलाग्निवर्द्धनत्वञ्च । राज. ।

**भ्रमणी** । स्त्री । जलौकायाम् । वै.निघ. ।

**भ्रमत्कुटी** । स्त्री । तृणादिच्छत्रे । त्रिका. ।

**भ्रमरः (कः)** । पुं । भृङ्गे । अम. । बालमूषिके । ইন্দুরছানা । मे. ।

**भ्रमरकीटः** । पुं । कुम्भीरकीटे, अग्निप्रकृतिकीटे । सु.कल्प.८अ. ।

**भ्रमरच्छल्ली** । स्त्री । भृङ्गच्छल्लीलतायाम् । रा.नि.व.७ ।

**भ्रमरत्वचा** । स्त्री । भ्रमरच्छल्याम् । वृम. भवरमाली । वै.निघ. ।

**भ्रमरप्रियः** पुं । धाराकदम्बे । र.मा. ।

**भ्रमरबान्धवा** । स्त्री । शुक्लजातीवृक्षे । वै. निघ. ।

**भ्रमरमारी** । स्त्री । भ्रमरारिपुष्पवृक्षे । रा.नि. व.१० ।

**भ्रमरा** । स्त्री । भृङ्गच्छल्लीलतायां । रा.नि.व.७ ।

**भ्रमरातिथिः** । पुं । चम्पकवृक्षे । চাঁপাগাছ । रा.नि.व.१० ।

**भ्रमरानन्दः** । पुं । वकुलवृक्षे । रक्ताम्लानवृक्षे । রক্তঝাঁটী । स्त्री । अतिमुक्तकपुष्पवृक्षे । रा.नि व.१० ।

**भ्रमरारिः** । पुं । पुष्पवृक्षविशेषे । भ्रमरमारी इति मालवे प्रसिद्धः । तत्पर्य्यायाः,—भ्रमरारिः भृङ्गमारिः भृङ्गारिः मांसपुष्पिका कुष्ठारिः भ्रमरी षष्ठीलता । गुणाः—तिक्तः वात(पित्त)श्लेष्मज्वरापहः शोथकण्डूकुष्ठव्रणविदोषघ्नश्च । रा.नि.व.१० ।

**भ्रमरालम्बः** । पुं । भूतृणे । गन्धतृण । रा.नि.व.८ ।

**भ्रमरी** । स्त्री । जतुकायाम् । पुत्रदात्र्याम् । भ्रमर्य्याम् । गुड़त्वचायाम् । रा.नि.व.२३ । भ्रमरारिपुष्पवृक्षे । रा.नि व १० ।

**भ्रमरेष्टः** । पुं । पृथुशिम्बश्योणाकवृक्षे । বড় সোঁটা শোণা গাছ । रा.नि.व.९ । स्त्री । भार्ग्याम् । रा.नि.व.११ ।

**भ्रमरोत्सवा** । स्त्री । माधवीलतायाम् । रा. नि.व.१० ।

**भ्रमिः** । स्त्री । मूर्च्छायाम् ।

**भ्रमिका** । स्त्री । धातकीवृक्षे । वै.निघ. ।

**भ्रष्टगुदः** । त्रि । गुदभ्रंशरोगिणि । च.द. ।

**भ्रस्थुः** । पुं । नासारोगभेदे । निदा. ।

**भ्राजकः**। पुं, क्ली। तन्नामकपित्ते। পিত্ত-বিশেষ। श.च.। तस्य स्थानं त्वक्। तस्य कर्म्म छायाप्रकाशकत्वम् अभ्यङ्गादिक्रियाणाञ्च पाचकत्वम्। सु.सू.२१अ.।

**भ्रान्तः**। पुं। पीतधुस्तूरवृक्षे। रा.नि.व.१०।

**भ्रान्तिः**। स्त्री। भ्रमे। सा च रजःपित्तानिलजा भवति। "रजःपित्तानिलैर्भ्रान्तिः।" शार्ङ्ग.पू.६अ.।

**भ्राम(मि)कः**। पुं। सूर्य्यावर्त्ते। शृगाले। चुम्बकप्रस्तरे। मे। कान्तलौहविशेषे। रा.नि.व.१३।

**भ्रामरम्**। क्ली। भ्रमराहृतमधुनि। नकुल.१२अ.। वृहत्सुप्तामृतलौहे। तदुक्तं ये स्निग्धाञ्जनगोलाभाः पुष्पासवपरायणाः। भ्रमरैर्जनितं तैस्तु भ्रामरं मधु भण्यते॥ गुणाः—मधुरं पिच्छिलं रुच्यं मुखजाड्यहरं श्वेतवर्णञ्च। रा.नि.व.१४। "शीतं कषायं मधुरं लघु स्यात् सन्दीपनं लेखनमेव शस्तं। संशोधनञ्च व्रणशोधनञ्च संरोपणं हृद्यतमञ्च बल्यं। त्रिदोषनाशं कुरुते च पुष्टिं कासे चये वा चतजे च छर्द्दौ। हिक्काश्रमे शोषणशोषसानां रक्तप्रमेहे सरक्तातिसारे। रक्तातिसारे च सपित्तरक्ते तथा लोह-हृत्पार्श्वगदेऽपि शस्तम्। नेत्रामये वा ग्रहणीगदे वा विषे प्रशस्तं भ्रमरैश्चितं यत्। भ्रामरं सघनं जाड्यभूयिष्ठं मधुरञ्च यत्। चौद्रं विशेषतो ज्ञेयं शीतलं लघु लेखनम्। भ्रामरं वृक्षसंस्थाने विटपे सारघं भवेत्। रन्ध्रे तु कोटरे वापि चौद्रं तत्र प्रशस्यते॥" अत्रि.१८अ.। पुं। प्रस्तरभेदे। চুম্বুক পাথর। मे.।

**भ्रामरशर्करा**। स्त्री। भ्रामरमधुकृतशर्करायाम्। गुणाः—भ्रामरमधुतुल्याः। रा.नि.व.१४।

**भ्रामरी**। स्त्री। पुत्रदात्रीलतायां। रा.नि.व.३। नकुल.१३अ.।

**भ्रामितः**। वि। रोगिणि। रा.नि.व.२०।

**भ्रामिताक्षः**। पुं। अश्वस्य वातव्याधिविशेषे। लक्षणं यथा—"वक्रः पश्चिमकायेन मण्डलैर्यो विचेष्टते। मन्दश्वासश्च दीनश्च भ्रामिताक्षो रजोवृतः॥" ज.द.५५अ.।

**भ्राष्टः**। पुं, क्ली। भर्ज्जनपात्रे। ভাজনাখোলা। अम.।

**भ्राष्ट्रजा**। स्त्री। खर्परपोलिकायाम्। वै.निघ.।

**भ्रुकुटिः**। स्त्री। भ्रुवि। वै.निघ.।

**भ्रुकुटीमुखः**। पुं। दर्व्वीकरसर्पविशेषे। सु.कल्प.४अ.। See सर्पः।

**भ्रूः**। स्त्री। भ्रूदेशे। ভুরু। वै.निघ.।

**भ्रूणः (कः)**। पुं। बालके। गर्भे। अम.। ह्रीवेरे। বালা। रस.र.तिक्तकघृते।

# म

**मः**। पुं। ब्रह्मणि। एका. कोषः। विषे। मे.।

**मकरः**। पुं। मत्स्यविशेषे। মকর। "मत्स्यानां मकरः श्रेष्ठो दीपनो वातनाशनः। रुचिप्रदः शुक्रकरश्चाश्मरीदोषनाशनः॥" अत्रि.२२अ.। तन्नामकाग्निप्रकृतिकीटे। सु.कल्प.८अ.।

**मकरध्वजः**। पुं। रसायनाधिकारे औषधविशेषे। "स्वर्णस्य भागौ वङ्गञ्च मौक्तिकं कान्तलौहकं। जातीकोषफलं रूप्यं कांस्यकं रससिन्दुरम्। प्रवालं कस्तुरी चन्द्रमभ्रकञ्चैकभागिकम्। स्वर्णसिन्दूरतो भागाश्चत्वारः कल्पयेद्बुधः॥" সুবর্ণ ২ভ. বঙ্গ ১ ভ. মুক্তা ১ ভ. লৌহ ১ ভ. জায়ফল ১ভ. জয়িত্রী ১ভ. রূপা ১ভ. কাঁসা ১ভ. রস-সিন্দুর ১ ভ. প্রবাল ১ ভ. মৃগনাভি ১ ভ. কর্পূর ১ ভ, অভ্র ১ ভ. স্বর্ণসিন্দুর ৪ ভ. र.सा.सं.। स्वर्णसिन्दूरे।

**मकरन्दः**। पुं। मधुनि। प.मु.। कुन्दपुष्पे। কুন্দফুলের গাছ। पद्मकेशरे। रा.नि.व.१०। क्ली। किञ्जल्के। रा.नि.व.१०। आम्रभेदे। कोकिले। वै.निघ.। पुष्परसे। भा.।

**मकरन्दजम्**। क्ली। ह्रीवेरे। বালা। प.मु.।

**मकरन्दवती**। स्त्री। पाटलपुष्पवृक्षे। श.च.।

**मकरन्दवासः**। पुं। धूलीकदम्बे। ধারা কদম্ব। रा.नि.व.९।

**मकराकरः**। पुं। कण्टककरञ्जे। श.च.।



**मकरी**। पुं। सन्निपातज्वरविशेषे। [ च.। श.र.।

**मकुरः (लः)**। पुं। वकुलवृक्षे। कोरके। हे.

**मकु(कू)लकः**। पुं। दन्तीवृक्षे। अ.टी.र.। च.सू.२७अ.।

**मकुष्टः (ष्ठः) (कः)**। पुं। (Phaseolus aconitifolius.) वनमुद्गे। বনমুগ। हिं मुहट, मोट, मुगानी। तें वनमुद्गचेट्टु। मकुष्ठक इति मालवदेशे प्रसिद्धः। तत्पर्य्यायाः,—मपष्टः मयष्टः राजमुद्गः वनमुद्गः कृमीलकः अमृतः अरण्यमुद्गः वल्लीमुद्गः। गुणाः—कषायः मधुरः रक्तपित्तघ्नः ज्वरदाहघ्नः पथ्यः रुचिकृत् त्रिदोषहरश्च। रा.नि.व.१६। "सरक्तपित्तकफवातहन्ता चीणः कषायो मधुरः प्रदिष्टः। ग्राही सुशीतो गुदकीलगुल्मं मकुष्ठकः सर्व्वगदान् निहन्ति॥" अत्रि.१५अ.। तत्सूपगुणाः—"मकुष्ठसूपोऽल्पबलः पाचनो दीपनो लघुः। चक्षुष्यो हर्षणो वृष्यः पित्तश्लेष्मास्ररोगनुत्॥" द्रव्यगुणः।

**मकेरुकः**। पुं। कृमिरोगे, पुरीषजकृमिविशेषे। च.वि.७अ.।

**मक्कलः (ल्लः)**। पुं। वातजशूलरोगे। गर्भमोचनान्ते वातशोणितजशूलार्त्तिविशेषे। হেঁতাল ব্যথা। लक्षणं—"वायुः प्रकुपितः कुर्य्यात्संरुध्य रुधिरं सुतम्। सूताया हृच्छिरोवस्तिशूलं मक्कल्लसंज्ञकम्॥" मा.नि.।

**मक्कुलम्**। क्ली। शिलाजतुनि। श.र.।

**मक्कोलः**। पुं। खटिकायाम्। খড়ি। "मक्कोलो वर्णलेखा च कठिनी कक्खटी खटी।" त्रिका.।

**मखप्रभुः**। पुं। वृहत्सोमलतायाम्। वै.निघ.।

**मखान्नम्**। क्ली। पद्मवीजसदृशवीजे। हिं मखाना। "मखान्नं पद्मवीजाभं पानीयफलमित्यपि।" गुणाः—"मखान्नं पद्मवीजस्य गुणैस्तुल्यं विनिर्दिशेत्।" भा.।

**मगधम्**। क्ली। पिप्पलीमूले। वै.निघ.अरो.चि.सूतादिगुड्याम्।

**मगधजा**। स्त्री। पिप्पल्याम्। পিপুল গাছ। व.निघ.वि.ज्व.चि.।

**मगधजाफलम्**। क्ली। पिप्पल्यां। পিপুল। च.द.गुल्म.चि.भार्गीषट्पलकघृते।

**मगधा**। स्त्री। पिप्पल्यां। प.मु.। वै.निघ.२भ.कर्णकज्व.चि.।

**मगधोद्भवा**। स्त्री। पिप्पल्यां। रा.नि.व.६। सि.यो.अग्निमान्द्यचि.।

**मघम्**। क्ली। औषधे। पुष्पविशेषे। श.र.।

**मघा (घी)**। स्त्री। औषधविशेषे। भरणिः। धान्यविशेषे। मे.।

**मघोनी**। स्त्री। पूर्व्वदिशि।

**मङ्कुरः**। पुं। मकुरे।

**मङ्गलच्छदा (च्छायः)**। स्त्री, पुं। ह्रस्वप्लक्षवृक्षे। পাকুড় গাছ। रा.नि.व.११।

**मङ्गलप्रदा**। स्त्री। हरिद्रायाम्। शमीवृक्षे। वै.निघ.।

**मङ्गला**। स्त्री। शुक्लदूर्व्वायां। श.र.। हरिद्रायां। रा.नि.व.६। नीलदूर्व्वायां। रा.नि.व.८। करञ्जभेदे। श.च.। मङ्गल्यागुरुणि। रा.नि.व.१२। ऋद्धौ। वृद्धौ। त्रायमाणायाम्। वै.निघ.।

**मङ्गलागुरु**। क्ली। मङ्गल्यागुरुणि। रा.नि.व.१२।

**मङ्गल्यम्**। क्ली। दधनि। अम्लदधनि। मे.। स्वर्णे। सिन्दूरे। रा.नि.व.१३। कृष्णागुरुकाष्ठे। प.मु.। श्रीखण्डचन्दने। শ্বেত চন্দন। रा.नि.व.१२। पुं। विल्ववृक्षे। र.मा.। मसूरके। रा.नि.व.१६। जीवकक्षुपे। रा.नि.व.५। नारिकेलवृक्षे। कपित्थवृक्षे। रा.नि.व.११। रीठाकरञ्जे। रा.नि.व.९। अश्वत्थवृक्षे। मे.। जलमधूकवृक्षे। वै.निघ.।

**मङ्गल्यकः**। पुं। मसूरकलाये। भा.पू.१भ.धा.व.।

**मङ्गल्यकुसुमा**। स्त्री। शङ्खपुष्प्याम्। भा.।

**मङ्गल्यनामधेया**। स्त्री। जीवन्तीवृक्षे। जटा.।

**मङ्गल्यपुष्पी**। स्त्री। शङ्खपुष्प्याम्। वै.निघ.।

**मङ्गल्या**। स्त्री। चीड़ानामदेवदारुभेदे। प्रियङ्गौ। मङ्गलागुरुणि। रा.नि.व.१२। हेमपुष्प्यां। मसूरे। मूर्व्वायां। মূর্গা। र.मा.। वृद्धौ। रा.नि.व.५।२३। शमीवृक्षे। रा.नि.व.८।२३। अधःपुष्प्यां। চোর কাঁচকি। गोरोचनायां। हरिद्रायां। दूर्व्वायां। प.मु.। शुक्लवचायां। रा.नि.

व.८। माषपर्ण्यां। रा.नि.व.३।२३। जीवन्ती-लतायां। वचायां। ऋद्धौ। रा.नि.नि.व.३'५ ६।२३। महाबलायां। रा.नि.व.२३। मल्लिका-पुष्पवृक्षे। मुद्गपर्ण्याम्। वै.निघ.।

**मङ्गल्यागुरु।** क्ली। स्वनाम्ना देशविशेषे प्रसिद्धागुरुणि। गुणाः—शीतलं गन्धाढ्यं योग-वाहिकञ्च। रा.नि.व.१२।

**मङ्गल्याह्वा।** स्त्री। त्रायमाणालतायाम्। रा.नि.व.५।

**मङ्गुरः।** पुं। मत्स्यविशेषे। मागुर माछ। वै.निघ.।

**मङ्ग(ङ्गु)णम्।** क्ली। अङ्गनायां। जाङ्गिया। हारा.।

**मच्छः।** पुं। मत्स्यसामान्ये। श.र.।

**मज्जकृत्।** क्ली। अस्थनि। हे.च.।

**मज्जगतज्वरः।** पुं। तदाश्रितज्वरविशेषे। मज्जागतज्वर। लक्षणं यथा—"तमःप्रवेशनं हिक्का कासः शैत्यं वमिस्तथा। अन्तर्दाहो महाश्वासः मर्म्मच्छेदश्च मज्जगे। मज्जगुक्तं क्रिया नीता मरणं तत्र भाषितम्॥" वै.निघ.।

**मज्जदमनी।** स्त्री। बन्ध्याककोंटक्याम्। वै.निघ.।

**मज्जनम्।** क्ली। स्नाने। जटा.। मज्जायां। श.च.।

**मज्जफलम्।** क्ली। माजूफलमिति प्रसिद्धे वणिग्द्रव्ये। भैष.वाजी.।

**मज्जमेहः।** पुं। मज्जगत-मेहरोगविशेषे। "मज्जाभं मज्जमिश्रं वा मज्जमेही प्रमेहति।" मा.नि.।

**मज्जरः।** पुं। तृणविशेषे। माजुर तृण। मं पवना। कं तूले। गुणाः—मधुरः धेनुदुग्ध-करश्च। रा.नि.व.८।

**मज्जसमुद्भवम्।** क्ली। शुक्रे। हे.च.।

**मज्जा** (न्)। पुं, स्त्री। वृक्षादेरन्तःसारभागे। सार। अम.। अस्थ्नः शुद्धस्नेहभागे। स च त्वान्वस्थिमध्यगः तस्य कर्म्म पूरणम्। "स्नेहोऽस्थ्नः शुचिरेव स्यात् स मज्जा कथितो बुधैः।" भा. पाददारीचि.। "अस्थि यत् स्वाग्निना पक्वं तस्य सारो भवेद्वनः। यः स्वेदवत् पृथग्भूतः स मज्जेत्य-भिधीयते॥" इति स्वरूपम्। मज्जस्थानं यथा—"स्थूलास्थिषु विशेषेण मज्जा त्वभ्यन्तरे स्थितः।" भा.। तृतीया मेदोधरा नाम, मेदोहि सर्व्व-भूतानामुदरस्थमणवस्थिषु महत्सु मज्जा भवति। सु.शा.४अ.। अस्थिसारे। आँटिर शाँस। रा.नि.व.१८। गुणाः—"यस्य यस्य फलस्येह वीर्य्यं भवति यादृशं। तस्य तस्यैव वीर्य्येण मज्जानमपि निर्द्दिशेत्॥" सु.सू. ४६अ.। मज्ज-गुणाः—"बलशुक्ररसश्लेष्ममेदोमज्जविवर्द्धनः। मज्जा विशेषतोऽस्थ्नाञ्च बलकृत् स्नेहने हितः॥" च.। वातघ्नी पित्तकफबलकारी मांसतुल्यगन्धरूपा च। कुम्भीरमहिषमज्जगुणाः—मधुरा बृंहणी बल्या च। मज्जसत्त्वगुणौ—शैत्यमुष्णत्वञ्च। राज.।

**मज्जा(नु)गतम्।** क्ली। काण्डभग्नानामास्थि-भङ्गरोगे। "अस्थ्यवयवोऽस्थिमध्यमनुप्रविश्य मज्जान-मुन्नह्यति।" सुनि.१५अ.।

**मज्जाजः।** पुं। भूमिजगुग्गुलौ। रा.नि.व.१२।

**मज्जामेहः।** पुं। मज्जागतप्रमेहे। निदा.।

**मज्जारजाः।** पुं। गुग्गुलौ। वै.निघ.।

**मज्जावहस्रोतः।** पुं। मज्जधातुवाहिन्यां नाड्याम्। तस्य मूलम् अस्थीनि सन्धयश्च। च.वि. ५अ.।

**मज्जारसः (सारः)।** पुं। शुक्रे। रा.नि.व. १८। सप्तलायाम्। मनसाविशेष। वै.निघ.।

**मज्जासारम्।** क्ली। जातीफले। रा.नि.व १२।

**मज्जिका।** स्त्री। लक्ष्मणाकन्दे। वकस्त्रियाम्। वै.निघ.।

**मञ्चकावली**
**मञ्चिपत्रम् (त्री)** } स्त्री, क्ली। सुरपर्ण्याम्। रा.नि.व.१०। गुणाः—तिक्ता उष्णा पित्तघ्ना विषघ्नी कफवातज्वरकास-क्रिमिघ्नी। वै.निघ.।

**मञ्चकाश्रयः।** पुं। मञ्चिकायाम्। मत्कुणे। रा.नि.व.१९।

**मञ्जरम्।** क्ली। मुक्तायां। श.र.। तिलकवृक्षे। श.र.। मञ्जर्य्यां। त्रिका.।

**मञ्जरिः।** पुं। वल्लर्य्यां। अम.।

**मञ्जरी (कः)।** स्त्री, पुं। गन्धतुलस्यां। प.मु.। मुक्तायां। तिलकवृक्षे। श.र.। तुलस्यां। रा.नि. व.१९। वेत्रलतायाम्। अशोकवृक्षे। वै.निघ.।



**मञ्जरीनम्रः।** पुं। वेतसे। বেত। रा.नि. व.९।

**मञ्जा।** स्त्री। वल्ली। छाग्याम्। हे.च.।

**मञ्जिः (ञ्जी)।** स्त्री। मञ्जर्य्यां। त्रिका.।

**मञ्जिफला।** स्त्री। कदलीवृक्षे। त्रिका.।

**मञ्जिष्ठः (ष्ठा,ष्ठिका)।** पुं, स्त्री। (Rubia cordifolia. Syn. R. Manjishtha'.) Indian madder. स्वनामख्यातलतायाम्। मञ्जिष्ठा। प.मु.। हिं वम्. मञ्जीठ, जिञ्जिनि। तं मञ्जिष्ठतीटी, ताम्रवल्ली। ता. मञ्जिष्टी। फा. रनास। तत्पर्य्यायाः,—रक्तयष्टिः विकसा जिङ्गिः जिङ्गी समङ्गा कालमेषिका मण्डूकपर्णी भण्डिरी भण्डी भण्डीरी योजनवल्ली मण्डूका लतायष्टिः हेमपुष्पी काण्डीरा काण्डीरी योजनपर्णी काल-मेषी काला रक्ताङ्गी भण्डिः भण्डिमः भण्डिका भण्डीतकी रसायनी गण्डीरी वस्त्ररञ्जिनी हरिणी रक्ता गौरी योजनवल्लिका क्षिप्रा रोहिणी चित्र-लता चित्रा चित्राङ्गी जननी विजया मञ्जुषा रक्त-यष्टिका क्षत्रिणी रागाङ्गी रागाढ्या कालभण्डिका अरुणा ज्वरहन्त्री छत्रा नागकुमारिका, भण्डीर-लतिका वस्त्रभूषणा। गुणाः—मधुरा कषाया उष्णा गुरुः व्रणमेहज्वरश्लेष्मविषनेत्ररोगघ्नी च। चोलयोजनी कौञ्ची सिंहली चेति तद्भेदाः। एताः सर्व्वा विलोमेन गुणोत्तरा ज्ञेयाः। रा.नि. व.६। सू.चि.१७अ.। च.द.वि.ज्व.चि.लाक्षादि-तैले। "मञ्जिष्ठा सेन्द्रवारुणी।" पक्षाघात-कामलासु हिता मूत्रस्रोतोविशोधनी च। फल यकृद्दोषहरं मूलं चर्म्मविवर्णताहरं तिलकालक-घ्नञ्च। कश्चिद्द्रव्यगुणः।

**मञ्जिष्ठमेहः।** क्ली। पित्तजन्यप्रमेहरोगे। अत्र रोगी मञ्जिष्ठोदकप्रकाशं मेहति। सु.नि.६अ.।

**मञ्जिष्ठाद्यघृतम्।** क्ली। शरीरव्रणाधिकारे घृतं। "मञ्जिष्ठां चन्दनं मूर्व्वां पिष्ट्वा सर्पिर्विपा-चयेत्। सर्व्वेषामग्निदग्धानामेतद्रोपणमिष्यते॥" रस.र.।

**मञ्जिष्ठाद्यतैलम्।** क्ली। क्षुद्ररोगाधिकारे तैलम्। "मञ्जिष्ठा मधुकं लाक्षा मातुलुङ्गं सयष्टि-कं। कर्षप्रमाणैरेतैस्तु तैलस्य कुडवं पचेत्। आजं पयस्तद्विगुणं शनैर्मृद्वग्निना पचेत्। नीलिकापिड़-काव्यङ्गानभ्यङ्गादेव नाशयेत्॥" तिलतैलं ॥०श.। कल्कार्थं—मञ्जिष्ठा मधुकपुष्पं (মউল ফুল) लाक्षा (লাহা) मातुलुङ्गमूलं (টাবামূল) यष्टिमधु प्र. २ तो. छागदुग्ध १श.। रस.र.।

**मञ्जुगमना।** स्त्री। हंस्याम्। रा.नि.व.१९।

**मञ्जुघोषः।** पुं। कपोते। वै.निघ.। [१९।

**मञ्जुपाठकः।** पुं। शुकपक्षिणि। रा.नि.व.

**मञ्जुलः।** पुं। जलरङ्कपक्षिणि। मे.। तित्तिर-पक्षिणि। हरिणभेदे। अञ्जीरवृक्षे। वै.निघ.। क्ली। अञ्जीरे। আঁজীর। राज.। स्त्री। मञ्जि-ष्ठायाम्।

**मञ्जूषा।** स्त्री। मञ्जिष्ठायां। रा.नि.व.६।

**मट्ट(ड़)कः।** पुं। मत्स्यविशेषे। মাডশা। जटा.।

**मठः।** पुं। मण्ठनामक वटकाकारपिष्टकभेदे।

**मणिः (णी)।** पुं, स्त्री। स्फटिकादिरत्ने, मुक्तादौ। त्रिका.। गुणाः—"मणिरत्नं सरं शीतं कषायं स्वादु लेखनं। चक्षुष्यञ्च .....।" राज.। अजागलस्तने। मे.। शिश्नाग्रग्रन्थौ। सि.यो.मूर्च्छा-चि.। अर्शः, भागे।. भा.म.३भ.मूत्रोत्सङ्ग.चि.। मणिबन्धे। हे.च.। योन्यग्रभागे। श.र.।

**मणिकण्ठः।** पुं। चासपक्षिणि। वै.निघ.।

**मणिकाननम्।** क्ली। माने। कण्ठे। श.र.।

**मणिच्छिद्रा।** स्त्री। मेदायां। प.मु.। रा. नि.व.५। महामेदायाम्। मज्जायाम्। वै.निघ.। ऋषभकौषधे। मे.। [व.१९।

**मणितारकः।** पुं। सारसपक्षिणि। रा.नि.

**मणितुण्डः।** पुं। तृषायाम्। वै.निघ.।

**मणिपूरम्।** क्ली। आमाशयकुण्डे।

**मणिबन्धः।** पुं। करमूले। হাতের কব্জী। रा.नि.व.१८। भा.मसूरी.चि.।

**मणिभावरः।** पुं। सारसपक्षिणि। वै.निघ.।

**मणिमन्थम्।** क्ली। सैन्धवलवणे। रा.नि.व.६। वै.निघ.श्वास.चि.शिलाद्यवलेहे।

**मणिमन्दिरम्।** क्ली। मुक्तागृहे। ঝিণুক। वै.निघ.।

**मणिरत्नम्।** क्ली। हीरके। वै.निघ.।

**मणिराग(ज)म्।** क्ली। हिङ्गुले। रा.नि. व.१३।

**माड़: (द्रुम:)** । पुं । स्वनाम्ना कौङ्कणदेश-प्रसिद्धे वृक्षविशेषे । वम्. भेलीमाड़ । मं माडु । कं वैनी । कौङ्कणी जिर्कतुंडु । तत्पर्य्याया:,—माड़ाद्रुम: दीर्घ: ध्वजवृक्ष: वितानक: मद्यद्रुम: । गुणा:—शिशिर: कषाय: रुच्य: पित्तदाहकर: तृषाघ्न: मोहजनक: वातल: श्लेष्मल: श्रमघ्नश्च । रा.नि.व.९ । नारिकेलवृक्षे । वै.निघ. ।

**माढ़ि: (ढ़ी)** । स्त्री । पत्राङ्कुरे । दन्तवेष्ट-भागे । भ.टी.भ. । पर्णशिरायाम् । हे.च. । दन्त-शिरायां । श.र. ।

**माण: (क:)** । पुं । (Arum Indicum.) स्वनामख्याते कन्दविशेषे । মাণকচু । प.मु. । हिं वम्. मानकन्द । तत्पर्य्याया:,—स्थलपद्म: विस्तीर्णपर्ण: माण: वृहच्छद: छत्रपत्र: । गुणा:—"माणक: स्यान्महापत्र: कथ्यते तद्गुणा अथ । माणक: शोथहृच्छीत: पित्तरक्तहरो लघु: ॥" भा.पू.१भ.शा.व. ।

**माणकघृतम्** । क्ली । शोथे घृतम् । "माणक-क्वाथकल्काभ्यां घृतप्रस्थं विपाचयेत्... ।" घृत ४ श. । क्वाथार्थं—माण: १२॥० श. जलं ६४ श. शे. १६ श. माणकल्क: १ श. । भा. ।

**माणतुण्डिक:** । पुं । जलचरपक्षिविशेषे । च.सू.२७अ. ।

**माणमण्ड:** । पुं । माणकचूर्णसाधिते मण्डभेदे । "पुराणं माणकं पिष्टा द्विगुणीकृततण्डुलम् । साधितं क्षीरतोयाभ्यामभ्यस्येत् पायसन्तु तत् ॥ हन्ति वातोदरं शोथं ग्रहणीं पाण्डुतामपि । सिद्धो भिषग्भिराख्यात: प्रयोगोऽयं निरत्यय: ॥" भैष. ।

**माणवक:** । पुं । सप्तवर्षीयबालके । रा.नि.व. १८ । द्वीपान्तरखर्ज्जूरिकायाम् । वै.निघ. । मनुष्ये । हारभेदे । त्रिका. । कुत्सितपुरुषे । मे. । वटौ । हे.च. । गोणके । च.सू.१५अ. ।

**माणिका** । स्त्री । पलाष्टकमाने । प.प्र.१ख. । श.मा. ।

**माणिक्यम्** । क्ली । स्वनामख्यातरक्तवर्णरत्न विशेषे । মাণিক্ । तत्पर्य्याया:,—शोणरत्नं रत्नराट् रविरत्नकं तरणिरत्नं शृङ्गारी रङ्गमाणिक्यं तरुणं रत्ननामकं रागयुक् पद्मराग: रत्नं शोणोपल: सौगन्धिकं लोहितकं कुरुविन्दं कुरुविल्व: लक्ष्मीपुष्प: अरुणोपल: । गुणा:—मधुरं स्निग्धं वातपित्तघ्नं रसायनञ्च । रा.नि.व.१३ । "शुध्येदम्लेन माणिक्यं जयन्त्या, मौक्तिकन्तथा । विद्रुमं क्षारवर्गेण तार्क्ष्यं गोदुग्धतस्तथा । पद्मरागन्तु सन्धानै: कुलत्थक्वाथ-संयुतै: । तण्डुलीयरसैर्वज्रं नीलं नीलीरसेन च । रोचनाभिश्च गोमेदं वैदूर्य्यं त्रिफलाजलै: । स्वेदयेद्दोलिकायन्त्रे जयन्त्या: स्वरसेन च । मणिमुक्ताप्रवालादि यामैके शोधितं भवेत् । चूर्णोदके तथा तैले काञ्जिके याममात्रकम् । दोलायन्त्रेण मतिमान् स्वेदयेत्तालकं वरम् । अनेन शुद्धिमायाति सत्यं गुरु वचो यथा ॥" इति शोधनमारणे । सा.कौ. । तद्वर्णस्थानभेदान्नामभेदो यथा—"सिंहले तु भवेद्रक्तं पद्मरागमनुत्तमं । पीतं काणपुरोद्भूतं कुरुविन्दमिति स्मृतं ॥ अशोकपल्लवच्छायमसुं सौगन्धिकं विदु: । तुम्बुरे च्छायया नीलं नीलगन्धि प्रकीर्त्तितं ॥ उत्तमं सिंहलोद्भूतं निकृष्टं तुम्बुरोद्भवं । मध्यमं मध्यमं ज्ञेयं माणिक्यं चेतभेदत: ॥" [ भा. ।

**माणिक्यकदली** । स्त्री । कदलीविशेषे ।

**माणिक्या** । स्त्री । ज्येष्ठ्याम् । টিকটিকি ।

**माणिबन्ध(मन्थ)म्** । क्ली । सैन्धवलवणे । भ. टी.स्वा. । रा.नि.व.६ । वै.निघ.२भ.अभिन्यासज्व. चि. । सामुद्रलवणे । वै.निघ. ।

**माण्डविक:** । पुं । तद्देशजमध्यमाश्वे । "कैङ्क-नाकारदेहस्तु भवेन्माण्डविको हय: ।" ज.द.६अ. ।

**माण्डव्य:** । पुं । पीतमण्डूके । वै.निघ. ।

**माण्डूकम्** । क्ली । वङ्गधातौ । रा.नि.व.१२ । अहिफेने । भैष.अभयनृसिंहरसे ।

**माण्डूकी** । स्त्री । ब्राह्मीक्षुपे । वै.निघ. ।

**मातङ्ग:** । पुं । अश्वत्थवृक्षे । भ.टी. । हस्तिनि । अम. । उदुम्बरवृक्षे । वै.निघ. ।

**मातङ्गकृष्णा** । स्त्री । गजपिप्पल्याम् । वै. निघ.२भ वा.व्या.पक्षवध-चि. ।

**मातङ्गपिप्पली** । स्त्री । गजपिप्पल्याम् ।

**मातङ्गमकर:** । पुं । महामत्स्यविशेषे । হস্তিমকর । रा.नि.व.१९ ।

**मातर:** । पुं । कूर्मौ । वै.निघ. ।

**माता** । स्त्री । जनन्याम् । अम. । आखुकर्णी-लतायां । মূষাকাণী লতা । इन्द्रवारुणीलतायाम् । রাখালশশা । रा.नि.व.३ । जटामांस्याम् । रा.



नि.व.१२ । महाश्रावणिकायाम् । रा.नि.व.५ । घृतकुमार्य्याम् । वै.निघ. । गवि । मे. ।

**माताङ्गा** । स्त्री । नागबलायाम् । वै.निघ. ।

**मातुल: (क:)** । पुं । धुस्तूरक्षुपे । ধুতুরা গাছ । मदनवृक्षे । कलायविशेषे । मे. । रा.नि.व. १० । त्रिका. ।

**मातुलद्रुम:** । पुं । धुस्तूरवृक्षे । शाल्मलीवृक्षे । শিমুল গাছ । वै.निघ. ।

**मातुलपुत्रक:** । पुं । धुस्तूरफले । শ্বেত ধুতুরার ফল । अम. ।

**मातुलपुष्पम्** । क्ली । धुस्तूरपुष्पे । वै.निघ. ।

**मातुलानी** । स्त्री । प्रियङ्गुलतायाम् । श.च. । शणवीजे । हे.च. । भङ्गायाम् । সিদ্ধি । कलाये । মটর । मे. ।

**मातुलाहि:** । पुं । सर्पविशेषे । মালুয়া সাপ, কেউটিয়া সাপ । अम. ।

**मातुली** । स्त्री । शणवीजे । भङ्गायां । श.च. ।

**मातुलुङ्ग: (क:)** । पुं । (Citrus medica.) छोलङ्गवृक्षे । টাবা নেবুর গাছ । हि वीजौरा । मं माहुलिङ्ग । कं मादला । तें मादीफलपुचेट्टु । उत्. कलंबा । तत्पर्य्याया:,—फलपूर: फलपूरक: वीजपूर: वीजपूर्ण: रुचक: श्वफल: लुङ्ग: पूर: पूरक: अम्लकेशर: छोलङ्ग: । प.मु । सु.सू.२६ अ. । च.द.ज्व.चि. । "अरुचौ मातुलुङ्गस्य केशरम् ।" च.सू.४अ. । गुणा:—"स्यान्मातुलुङ्ग: कफवातहन्ता हन्ता कृमीणां जठरामयघ्न: । स दूषितरक्तविकारपित्तसन्दीपन: शूलविकारहारी ।" तत्फलगुणा:—"श्वासकासारुचिहरं तृषाघ्नं कण्ठ शोधनं । दीपनं लघु रुच्यञ्च मातुलुङ्गमुदाहृतम् ॥" अम्लकटूष्णं श्वासकासघ्नं पाचकं कण्ठशोधनं दीपनं लघु हृद्यं रुचिकृच्च । तच्च फलं बालं वातपित्तकफरक्तकरम् । मध्यं फलं तादृशमेव । पक्वं फलं वर्णकरं हृद्यं पुष्टिकरं बलकर शूलहरम् अजीर्णनाशनं विबन्ध-वात-कफ-श्वासाग्निमान्द्यहरं कासारोचकशोफघ्नञ्च । त्वक् तिक्ता दुर्जरा कृमिकफवातघ्नी च । तत्करद्वं स्वादु शीतं गुरु स्निग्धं वातपित्तहरञ्च । तन्मध्यमुष्णं शूलपित्तहर-मरोचकघ्नञ्च । तत्केसरं दीपनं लघु संग्राहि गुल्मार्शोघ्नञ्च । तद्वद्वकेसरं पित्तमारुतघ्नं हृद्यं वर्णकरं रुच्यं रक्तमांसबलदञ्च । स्वरस: अरुचौ श्वासकासयोश्च हित: । तथा शूले अजीर्णे मन्दाग्नौ वातकफे च हित: । तत्कटाह: कफकृत् दुर्जरश्च । तत्पुष्पं तिक्तम् । वीजं गुल्मघ्नम् । अत्रि.१७अ. । तत्केसरं वातघ्नम् उदररोगघ्नं दीप्यमम्लञ्च । वीजम तिक्तं कफार्श:शोथहरञ्च । रा.नि.व.११ । तन्मांस वृंहणं शीतलं गुरु वातपित्तजिच्च । केसर: लघु: संग्राही शूलगुल्मोदरघ्नश्च । च.द.पि.ज्व. चि.कण्ठतालुशोषलेपे । "केसरं मातुलुङ्गस्य ।" च.द.वातश्लेष्मज्व.चि. । "मातुलुङ्गफल-केशरो घृत: ।" वीजम् उष्णं कृमिश्लेष्मवातघ्नं गर्भदं गुरु च । पुष्पं वातलं ग्राहि लघु रक्तपित्तहरं शूलाजीर्णविबन्धाग्निमान्द्ये हितम् । तद्रस: अरुचि-श्वासकासेषु हित: अतिमधुर: हृद्यश्च । मद.व.६ ।

**मातुलुङ्गशिफा** । स्त्री । मातुलुङ्गमूले । ছোলঙ্গ লেবুর মূল । च.द.कफज्व.चि. । "मातुलुङ्गशिफाविश्व... ।"

**मातुलुङ्गा (ङ्गिका,ङ्गी)** । स्त्री । जम्बीर-भेदे । শরবতী লেবু । हिं शान्तारा । रा.नि.व. ११ । भा.म.३भ.मू.घा.चि. । सि.यो.विसू चि-प्रमीलिकाद्यञ्जने ।

**मातृक:** । पुं । ऋषभके । प.मु. । स्त्री (का) । ऋषभके । आटरूषके । वै.निघ. ।

**मातृकाकुन्द:** । पुं । शिशोर्गुदजव्रणविशेषे । वा.उ.-अ. । See गुदकुन्द: ।

**मातृकावह:** । पुं । पर्दकीटे । পেদো পোকা । "मातृकावहकीटज: ।" प्रयोग: । च.द.ग.ग.चि. ।

**मातृनन्दन: (न्दी(दन्))** । पुं । महाकरञ्जे । वै.निघ. । गुच्छकरञ्जवृक्षे । रा.नि.व.९ ।

**मातृनिन्दक:** । पुं । प्रतुदजातीयपक्षिणि । सु.सू.४६अ. ।

**मातृमण्डलम्** । क्ली । नेत्रयोर्मध्यभागे । तत्तु आसन्नमरणो न पश्यति । स्मृति: ।

**मातृवाहक:** । पुं । कीटभेदे । পাদশুড়া বা পেদো পোকা ।

**मातृवाहिनी** । स्त्री । वल्गुलापक्षिणि । रा. नि.व.१९ ।

**मातृसिंही** । स्त्री । वासकवृक्षे । श.र. ।

**मात्रा** । स्त्री । अनपायिपरिमाणे । च.सू.१अ. । भोजनादिपरिमाणे । कालपरिमाणे । अम. । द्रव्यविशेषे मात्रामाह पुष्कलावत:—"आर्द्रस्याष्ट-

पला मात्रा कुड़वस्य प्रमाणत:। मधुतैलघृतादेश्च शुष्कद्रव्ये चतुष्पलम् ॥" विश्वामित्र:—"मुद्गगुग्गुलुवाह्लीकत्रिफलारिष्टनागरै:। कुष्माण्डार्द्रकनिम्बानां कुड़वश्चाष्टभि: पलै: ॥" "सर्पि:-खण्ड-जल-क्षौद्र-तैल क्षीरासवादिषु। अष्टौ पलानि कुड़वो नारिकेले च शस्यते ॥" सा.कौ.। तथाच भेद:। "गुड़रामठशण्ठीनां मांसकुष्माण्डयोरपि। गुड़्च्या गुग्गुलोश्चैव प्रस्थ: षोड़शभि: पलै: ॥" भोज:—"यच्चूर्णं गुटिकायाश्च कर्त्तव्या गुल्मरोगिणाम्। क्षीरहिङ्गुजमोदाम्लवेतसैस्ता न केवला: ॥ क्रोष्टुशीर्षादिरोगेषु जटायुर्हिगुणो मत:। प्रमेहादिषु रोगेषु मालातोऽर्द्ध: प्रशस्यते ॥"

**मादक:**। पुं। अहिफेणे। আফিম্। प.मु.। हारणभेदे। वै.निघ। दात्यूहपक्षिणि। श.मा.। स्त्री (का)। भङ्गायाम्। সিদ্ধি, ভাঙ্। वै.निघ.।

**मादनम्**। क्ली। लवङ्गे। रा.नि.व,२३। पुं। मदनवृक्षे। त्रि। मदजनके।

**मादनी**। स्त्री। माकन्याम्। रा.नि.व.७। विजयायाम। সিদ্ধি। भा.।

**माद्दिनी**। स्त्री। शक्राशने। সিদ্ধি। वै.निघ.।

**माद्री**। स्त्री। कृष्णातिविषायाम्। কাল আতইচ। रा.नि.व.६। वा.चि. ८।१२अ.। वा.उ.२अ.।

**माधव:**। पुं। कृष्णमुद्गे। प.मु.। रा.नि.व,१६। वैशाखमासे। त्रिका.। मधूकवृक्षे। वसन्तकाले। जीरकवृक्षे। क्ली। मधूकभेदे। वै.निघ.। च.द, सात्म्य.चि.।

**माधवक:**। पुं। मधूकमद्ये। মৌফুলের মদ।

**माधवकर:**। पुं। रुग्विनिश्चयग्रन्थकारे। रसकौमुदीकारे च।

**माधवद्रुम:**। पुं। आम्रवृक्षे। रा.नि.व.११।

**माधवप्रियम्**। क्ली। पीतचन्दने। হরিচন্দন। रा.नि.व.१२। [भ.।

**माधविका**। स्त्री। माधवीलतायाम्। अ टी.

**माधवी**। स्त्री। माधवीलतायां। रा.नि.व.१०। शताह्वाक्षुपे। रा.नि.व.४। वासन्तीपुष्पवृक्षे। रा.नि.व.१०।२२। शतपत्रे। रा.नि.व.२३। मधुशर्करायाम्। रा.नि.व.१४।२३। तुलसीवृक्षे। वाराहीकन्दे। दुग्धफेनिकायाम्, दुग्धपाषाणे। माध्वीमुरायाम। वै.निघ.। मद्ये। त्रिका.।

**माधवीमूलम्**। क्ली। माधवीलतामूले। रस.र.स्तनरो.चि.। "घोलेन माधवीमूलं पीतं स्त्रीमध्यकार्श्यकृत्।"

**माधवीलता**। स्त्री। स्वनामख्यातलतायाम्। মাধবী ফুলের গাছ। गुरुविन्द, माधवी, इन्द्रगोचे, इति महाराष्ट्रकर्णाटदेशयो: प्रसिद्धा। तैं माधवतोगे, पुव्वुलगुरिविन्द। तत्पर्य्याया:,—अतिमुक्त: अतिमुक्तक: पुण्ड्रक: वासन्तीलता माधवीलता चन्द्रवल्ली सुगन्धा भ्रमरोत्सवा भृङ्गप्रिया भद्रलता भूमिमण्डपभूषणा वसन्तदूती लतामाधवी। गुणा:—कटुका तिक्ता कषाया मदगन्धयुक्ता पित्तकासव्रणघ्नी दाहशोषघ्नी च। रा.नि.व.१०। अपिच—"माधवी स्यात्तु वासन्ती पुण्ड्रकी मुण्डकोऽपि च। अतिमुक्तो विमुक्तश्च कामुकी भ्रमरोत्सव: ॥ माधवी मधुरा शीता लघ्वी दोषत्रयघ्नी च ॥" भा.।

**माधवेष्टा**। स्त्री। वाराहीनामसमहाकन्दशाके। वै.निघ.।

**माधवोचितम्**। क्ली। कक्कोले। কক্কোল ফল। रा.नि.व.१२।

**माधवोद्भव:**। पुं। राजादनीवृक्षे। ক্ষীরী গাছ। रा.नि.व.११।

**माधुतैलिक:**। पुं। तन्नामकवस्तिविधौ। सु.चि.३८अ.।

**माधुरम्**। क्ली। मल्लिकापुष्पे। त्रिका.।

**माधुरी**। स्त्री। अजमोदायाम्। रा.नि,व.६। द्राक्षासवे। मधुरतायाम्। वै.निघ.।

**माधूकसार:**। पुं। मधूकवृक्षसारे। মউল-গাছ। मज्जा.वा.सू.१५अ.शिरोविरेचने।

**माधूकी**। स्त्री। मधूकपुष्पजातमद्ये। "मधूकपुष्पजाता या माधूकी सा निगद्यते।" गुणा:—माधूकी मादिनी बल्या पुष्टिकृत् कामवर्द्धिनी।

**माध्वकम्**। क्ली। माध्वीके। वै.निघ.।

**माध्वाम्र:**। पुं। बहुरसालाम्रवृक्षे। খাস আমের গাছ। रा.नि.व.११।

**माध्वी**। स्त्री। मधुखर्ज्जूरीवृक्षे। रा.नि.व.११। मधुरकण्टकमत्स्ये। श.र.। पुष्परसादिमधुकृते मद्ये। "पुष्पद्रवादिमधुसारमया तु माध्वी।" गुणा:—मधुरा हृद्या वातपित्तहृत् नात्युष्णा पाण्डु-



कामलागुल्मार्शोमेहघ्नी च। रा.नि.व.१४। पुष्परसे। मधुशर्करायाम्। वै.निघ.। मद्ये। त्रिका.।

**माध्वीकम्**। क्ली। मध्वासवे। च.द.सात्म्य.चि.। मधूकपुष्पकृतमद्ये। अम.। मद्ये। रा.नि.व.१४। द्राक्षाकृतमद्ये। দ্রাক্ষামদ্য, পোর্ট। गुणा:—"माध्वीकं शीतलाम्लं मधुरमपि तथा संकषायोष्णकञ्च हन्यात् पित्तामयार्श:श्वसनमपि तथा चातिसारं प्रमेहान्। शूलानाहोपमर्द्दं जरयति सकलं दीपयत्यग्निमान्द्यम् तस्माद्धातामवातं वमनमपि तथा हन्ति सर्व्वांश्च रोगान् ॥" अत्रि.। १९अ.। पुं। निष्पावे। শিম্। प.मु.। त्रिका.।

**माध्वीकफल:**। पुं। मधुनारिकेलवृक्षे। रा.नि.व.११।

**माध्वीका**। स्त्री। श्वेतनिष्पावे। শ্বেত শিম্। रा.नि.व.१६।

**माध्वीमधुरा**। स्त्री। मधुखर्ज्जूरिकायाम्। পিণ্ডীখেজুর। रा.नि.व.११।

**माध्वीशर्करा**। स्त्री। मधुशर्करायाम्। মধুর চিনি। ता अष्टविधा मधूनामष्टविधत्वात्। गुणा अपि तत्तन्मधुतुल्या भवन्ति। रा.नि.व १४।

**माध्वीसिता**। स्त्री। मधुशर्करायाम्। মধুর চিনি। रा.नि.व,१४।

**मानम्**। क्ली। परिमाणे। পরিমাণ, ওজন। "मानापेक्षितमाचार्य्या भेषजानां प्रकल्पनम्। मेनिरे यत्ततो मानमुच्यते पारिभाषिकम् ॥" तच्च द्विविधं कालिङ्गमागधभेदेन। तयोर्द्वितीयं श्रेष्ठम्। "कालिङ्गान्मागधं श्रेष्ठम्।" इति। तद्यथा,—त्रसरेणुस्तु विज्ञेय स्त्रिंशता परमाणुभि:। त्रसरेणोस्तु पर्य्यायनाम्ना वंशी निगद्यते ॥ षड्वंशीभिर्मरीचि: स्यात् षण्मरीच्यस्तु सर्षप:। षट्सर्षपैर्यवस्त्वेको गुञ्जैका च यवैस्त्रिभि:। गुञ्जाभिर्दशभि: प्रोक्तो माषको ब्रह्मणा पुरा ॥ हेमश्च माषकश्चैव पर्य्यायस्तस्य कीर्त्तित: ॥ माषस्तु पञ्चभि: षड्भिस्तथा सप्तभिरष्टभि:। दशभिर्द्वादशभिश्च रक्तिभि: षड्विधो मत: ॥ चरकस्य तु माषस्तु दशगुञ्जाभिरेव च। चरकस्य तु चाष्टेन सुश्रुतस्य तु माषक: ॥ माषैश्चतुर्भि: शाण: स्याद्धरणं तन्निगद्यते। टङ्क: स एव कथितस्तद्द्वयं कोल उच्यते ॥ क्षुद्रको वटकश्चैव द्रङ्क्षण: स निगद्यते। कोलद्वयञ्च कर्ष: स्यात् स प्रोक्त: पाणिमाणिक: ॥ अक्ष: पिचु: पाणितलं किञ्चित् पाणिश्च तिन्दुकं। विड़ालपदकञ्चैव तथा षोड़शिका मता ॥ करमध्यो हंसपदं सुवर्णं कवड़ग्रह:। उडुम्बरश्च पर्य्यायै: कर्ष एव निगद्यते ॥ स्यात् कर्षाभ्यामर्द्धपलं शुक्तिरष्टमिका तथा। शुक्तिभ्याञ्च पलं ज्ञेयं मुष्टिमावञ्चतुर्थिका ॥ प्रकुञ्च: षोड़शी विल्वं पलमेवात्र कीर्त्त्यते ॥ पलाभ्यां प्रसृति: ज्ञेया प्रसृतञ्च निगद्यते। प्रसृतिभ्यामञ्जलि: स्यात् कुड़वोऽर्द्धशरावक: ॥ अष्टमानञ्च स ज्ञेय: कुड़वाभ्याञ्च माणिका। शरावोऽष्टपलं तद्वज्ज्ञेयमत्रविचक्षणै: ॥ शरावाभ्यां भवेत् प्रस्थश्चतु:प्रस्थैस्तथाढ़कम्। भाजनं कंसपात्रे च चतु:षष्टिपलञ्च तत् ॥ चतुर्भिराढ़कैर्द्रोण: कलसो लल्वणोऽर्म्मण:। उन्मानञ्च घटो राशिर्द्रोणपर्य्याय संज्ञित: ॥ द्रोणाभ्यां सूर्पकुम्भे च चतु:षष्टिशरावक:। सूर्पाभ्याञ्च भवेद् द्रोणी वाहो गोणी च सा स्मृता ॥ द्रोणचतुष्टयं खारी कथिता सूक्ष्मबुद्धिभि:। चतु:सहस्रपलिका षण्णवत्यधिका च सा ॥ पलानां द्विसहस्रञ्च भार एक: प्रकीर्त्तित: ॥ "तुलापलशतं ज्ञेया सर्व्वत्रैष विनिश्चय:। माषटङ्काक्षविल्वानि कुड़व: प्रस्थ आढ़क:। राशिर्द्रोणी खारिरिति यथोत्तरचतुर्गुणा:। गुञ्जादिमानमारभ्य यावत् स्यात् कुड़वस्थिति:। द्रवार्द्रशुष्कद्रव्याणां तावन्मानं समं मतम्। प्रस्थादिमानमारभ्य द्विगुणन्तु द्रवार्द्रयो:। मानं तथा तुलायाश्च द्विगुणं न क्वचित् स्मृतम् ॥" प.प्र.१ख.।

**मानकम्**। क्ली। शरावे। ১ সের। वै.निघ.। ज्व.चि.चन्दनाद्यतैले। पुं। माणके। মাণকচু। र.मा.। मालाकन्दे। वै.निघ.।

**मानकक्षार:**। पु। माणकदण्डपत्रक्षारे। মাণডাঁটার ক্ষার। भैष.।

**मानत:**। पुं। पर्पटके। ক্ষেৎপাবড়া। वै.निघ.।

**मानद्रुम:**। पुं। शाल्मलीवृक्षे। वा.सू.१५अ. प्रियङ्ग्वादिव.। "मानद्रुमो मोचरस:।"

**मानधानिका**। स्त्री। त्रपुष्याम्। শশা, কাঁকুড়। श.मा.।

**मानभाण्डम्**। क्ली। परिमाणभाण्डे। মাপের-ভাঁড়। च.सू.१५अ.।

**मानस्ताफल:**। पुं। पटोलवृक्षे। वै.निघ.।

**मानव:**। पुं। मनुष्ये। अम.।

**मानवकोत्तम:**। पुं। शिशौ। रा.नि.व.१८।

**मानसम्** । क्ली । मनसि । त्रिका. ।

**मानसक्लैव्यम्** । क्ली । चित्तसम्भूतक्लैव्ये । मनःक्षुण्णता । सु.चि.२६अ. ।

**मानसज्वरः** । पुं । य आदौ मनसि जायते, वैचित्यादौ । लक्षणम्—"वैचित्तमरतिर्ग्लानिर्मनसस्तापलक्षणम् ।" च.चि.३अ. ।

**मानसालयः (सौकाः)** । पुं । हंसे । रा.नि.व.१९ ।

**मानषी** । स्त्री । दुर्गपुष्प्याम् । কেশপুষ্টী ।

**मानिकम् (का)** । क्ली, स्त्री । अष्टपलमिते माने । ६४ तो. । ১ সের । सि.यो.वृहच्छुक्रसन्धाने । "कुड़वाभ्याञ्च मानिका ।" प.प्र.१ख । मद्ये । श.र. । (क्ली) वमनविरेचनयोः शोधनान्यतरे । च.द.वमनाधिकारे ।

**मानिनी** । स्त्री । लक्षणाकन्दे । रा.नि.व.७ । प्रियङ्गौ ।

**मानिमन्थम्** । क्ली । सैन्धवलवणे । भैष.कुष्ठ-चि. । "मानिमन्थञ्च तुल्यांशम् ।"

**मानी** (इन्) । पुं । सिंहे । रा.नि.व ९ । स्त्री (नी) । शरावमिते । ১ শ. । भैष. ।

**मानुषी** । स्त्री । औषधनिर्म्माणकार्य्ये । चिकित्साभेदे । तद्यथा,—आसुरी मानुषी दैवी चिकित्सा त्रिविधा मता । सूतप्रधाना दैवी स्यात् छेदभेदात्मिकासुरी ॥ मानुषी षड्रसा ज्ञेया जपोहोमादिसंस्कृता । कलौ चाल्पबले लोके मानुषी तत्र पूजिता । श.च. । नार्य्याम् । স্ত্রীলোক । अम. ।

**मानुषोदधि** । क्ली । मानुषीदुग्धजातदध्नि । মানুষের দুধের দই । गुणाः—विपाके मधुरं बल्यम् अम्लं गुरु सन्तर्पणं चक्षुष्यं ग्रहदोषघ्नञ्च । रा.नि.व.१५ ।

**मानुषोक्षीरम्** । क्ली । मानुषीस्तनदुग्धे । মানুষের দুধ । मधुरं कषायं हिमं लघु चक्षुष्यं दीपनं पथ्यं पाचनं रोचनञ्च । रा.नि.व.१५ । सञ्जीवनं बृंहणमेव सात्म्यं सन्तर्पणं नेत्ररुजापहञ्च । पित्तस्य रक्तस्य च नाशनञ्च नारीपयः स्नेहनमेव शस्तम् ॥" अत्रि.८अ. ।

**मान्द्यम्** । क्ली । आलस्ये । रा.नि.व.२० । रोगे । हे.च. ।

**माम्बिका** । स्त्री । अम्बष्ठायाम् । रा.नि.व.४ ।

**मायादः** । पुं । कुम्भीरे । त्रिका. ।

**माया(यि)फलम्** } **मायिकम्** } क्ली । फलविशेषे । माजूफल, माय़ाफल । तत्पर्य्यायाः,—मायि मायिकं मायिफलं छिद्र-फलम् । गुणाः—कटूष्णं वातहरं केशकृष्णता-करं शैथिल्यसङ्कोचकरञ्च । रा.नि.व.६ ।

**मायी** । स्त्री । हिलमोचिकायां । হিঞ্চেশাক । र.मा. ।

**मायुः** । पुं । पित्ते । रा.नि.व.२१ । त्रिका. । प्र.रविसुन्दररसे । "स मौनमायुः ।" भा.ज्व.चि. ।

**मायूरा** । स्त्री । काकोदुम्बरिकायाम् । वै.निघ. ।

**मायूरादिपक्षव्यञ्जनम्** । क्ली । मयूरपक्ष-वस्त्रवेतादिव्यजने । गुणाः—"मायूरा वस्त्रजा वैत्रा वाता दोषत्रयापहाः ।" राज.२प. । [भा. ।

**मायूरी** । स्त्री । अजमोदायाम् । वनयमानी ।

**मारः** । पुं । मृत्यौ । मे. । धुस्तूरवृक्षे । श.च. ।

**मारकः** । पुं । श्येनपक्षिणि । বাজবৌরী । त्रि । हिंसके । वै.निघ. । क्ली । हिङ्गुलि । रा.नि.व.१३ ।

**मारकवर्गः** । पुं । रसमर्द्दकद्रव्यगणे । यथा—"घनवचाचित्रकगोक्षुराः कटुतुम्बी दन्तिका जातिः । सर्पाक्षी शरपुङ्खा कन्या चाण्डालिनीकन्दम् । विषमुष्टिवज्रवल्ल्यौ लज्जा देवदाली लाक्षा । सहदेवानीलकणानिर्गुण्डीचक्रलाङ्गलिका । माना-कंचन्द्ररेखा रविभक्ता काकमाचिका चार्कः । विष्णुक्रान्ता वायसतुण्डी वन्ध्या बला शुण्ठी चैव । कोषातकी जयन्ती वाराही हस्तिशुण्डिका रम्भा । मत्स्याक्षी यमचिञ्चा हरिद्रे द्वे पुनर्नवाद्वितयम् । धुस्तूरकाकजङ्घे शतावरी कञ्चुकी चैव वन्ध्या । तिलभेकपर्ण्यौ दूर्व्वा मूर्व्वा हरीतकी तुलसी । गोकण्टकाखुपर्ण्यौ कर्कोटी कन्दवर्गलता च । मुषली हिङ्गु गुडूची शिग्रुः गिरिकर्णिका महाराष्ट्री । मार्कवसैन्धवसरणीसोमलताः श्वेतसर्षपोऽसनश्च । हंसपदी व्याघ्रपदी किंशुकभल्लातकेन्द्रवारुणिका । सर्व्वञ्चाष्टांशं वा अष्टादशाधिका वापि द्रव्यम् । समीरणमूर्च्छादौ च युक्तिज्ञैर्विधिवदुपयोज्यम् ॥" र.सा.सं. ।

**मारङ्गा** । स्त्री । मेदायाम् । रा.नि.व.५ ।

**मारजातकः** । पुं । मार्ज्जारे । वै.निघ. ।

**मारटम्** । क्ली । इक्षुमूले । वै.निघ. ।



**मारणम्** । क्ली । अभिचारभेदे । धात्वादिजारणे ।

**मारारिनारीरजः** । क्ली । गन्धके । भा.ज्व.चि.कल्पतरौ ।

**मारिशः (षः)** । पुं । पत्रशाकविशेषे । নটে' বা কাঁটানটের শাক । हिं नवड़ा । उत्. नेउटा शाग । तत्पर्य्यायाः,—कन्धरः वाष्पकः मार्षः मार्षिकः । स द्विविधः श्वेतरक्तभेदेन । गुणाः—"मारिषो मधुरः शीतो विष्टम्भी पित्तनुद्गुरुः । वातश्लेष्मकरो रक्तपित्तनुद्विषमाग्निजित् ॥ रक्तमार्षो गुरुर्नाति सक्षारो मधुरः सरः । श्लेष्मलः कटुकः पाके स्वल्पदोष उदीरितः ॥" भा.पू.१भ.शा.व. ।

**मारीचः** । पुं । कङ्कोलवृक्षे । रा.नि.व.१२ ।

**मारीचपत्रकः** । पुं । सरलवृक्षे । টার্পিনের গাছ । रा.नि.व.१२ । [ सर्जतरौ । वै.निघ. ।

**मारीचपत्रका** । स्त्री । सरलदेवदारौ ।

**मारीचवल्ली** । स्त्री । मरिचवृक्षे । वै.निघ. ।

**मारी(रु)षः** । पुं । मारिषशाके । द्वि. ।

**मारुण्डः** । पुं । सर्पाण्डे । मे. ।

**मारुतः** । पुं । वायौ । रा.नि.व.२१ ।

**मारुता** । स्त्री । स्पृक्कायां । পিড়িং । वै.निघ. ।

**मारुतापहः** । पुं । वरुणवृक्षे । रा.नि.व.९ ।

**मार्कः** । पुं । भृङ्गराजे । र.मा. ।

**मार्कटपिप्पली** । स्त्री । कपिपिप्पल्याम् । আপাং । रा.नि.व.४ ।

**मार्कण्डिका (ण्डी)** । स्त्री । भूम्याहुल्ये । কাঁকরোল । हिं भूइखखसावल्ली भूमिप्रसरणशीला । बम्. भूँइतरवड़ । तत्पर्य्यायः,—भूमिचरी । गुणाः—"मार्कण्डिका कुष्ठहरी ऊर्द्धाधःकायशोधनी । विषदुर्गन्धकासघ्नी गुल्मोदर-विनाशिनी ॥" मृदुरेचनी च । भा.पू. । वै.निघ. २भ.च.सा.चि.शुण्ठ्यादिचूर्णे । [ ४ ।

**मार्कण्डीयम्** । क्ली । भूम्याहुल्ये । रा.नि.व.

**मार्कवः** । पुं । भृङ्गराजे । ভীমরাজ । र.मा. । हिं भंगरा । मं गरुगमूरु । कं भंगरैआ । बम्. माका । तत्पर्य्यायाः,—भृङ्गराजः भृङ्गः पतङ्गः मार्करः मार्कः नागमारः परुः भृङ्गसोदरः भृङ्गरजः भृङ्गारः भृङ्गराजः मर्करः भृङ्गाह्वः एकरजः अङ्गारकः करञ्जकः अजागरः पितृप्रियः केशरञ्जनः कुन्तलवर्द्धनः । मार्कवः नीलपीतमहा-भेदेन त्रिधा । गुणाः—चक्षुष्यः तिक्तः उष्णः केशरञ्जनः कफशोथश्वित्रविषघ्नः रसायनश्च । रा.नि.व.४ । च.द.ज्वरातिसा.चि.व्योषाद्यचूर्णे । "निम्ब-भूनिम्बमार्कवम् ।" च.द.आ.वा.चि.सिंघलायाम् ।

**मार्गः** । पुं । गुहे । মলদ্বার । त्रिका. । कस्तू-र्य्याम् । मृगनाभि । मे. । रक्तापामार्गे । रस.चि. नागासुन्दरे । भैष.कर्णरो.चि.अपामार्गक्षारतैले । (कः) मार्गशीर्षमासे । श.मा. ।

**मार्गवाहिनी** । स्त्री । क्षुद्रनाड्याम् । वै.निघ. ।

**मार्गविशोधनम्** । क्ली । मूत्रपुरीषसङ्गे सति तन्मार्गशोधनकर्म्मणि । सु.सू.७अ. ।

**मार्जनम्** । क्ली । शुद्धकरणे । श.र. । पुं । लोध्रवृक्षे । प.मु. । श्वेतलोध्रे । सुभूतिः । रक्तरोध्रे । खामी । स्त्री (नी) । सम्मार्जन्याम् । ঝাঁটা ।

**मार्जारः** । पुं । रक्तचित्रकक्षुपे । रा.नि.व.६ । पूतिसारिवायाम् । वै.निघ. । विड़ाले । अम. । खट्टाशे । খটাশ । हे.च. । (कः) मयूरे । त्रिका. ।

**मार्जारकण्ठः** । पुं । मयूरे । श.र. ।

**मार्जारगन्धा (न्धिका)** । स्त्री । मुद्गपर्ण्याम् । मूगानी । प.मु. । रा.नि.व.३ ।

**मार्जारपादः** । पुं । अश्वभेदे । यस्याश्वस्य पादे कूर्चे च स्ववर्णभिन्नवर्णा रेखा भवेत् । स च भर्त्तुरमङ्गलकरः । ज.द.३अ. ।

**मार्ज्जारिका** । स्त्री । कस्तूर्य्याम् । वै.निघ. ।

**मार्ज्जारी (ली)** । स्त्री । गन्धमार्ज्जारे । খাটাশী । तत्पर्य्यायाः,—पूतिकजः पूतिका गन्धचेलिका । तदण्डगुणाः—वामनी चक्षुष्या वातघ्नी कान्तिकरी कफनाशिनी च । मदन-पालः । कस्तूर्य्याम् । मृगनाभि । रा.नि.व.१२।२३ ।

**मार्जारीयः** । पुं । विड़ाले । मे. ।

**मार्जालः** । पुं । विड़ाले । द्वि.कोषः ।

**मार्जिता** । स्त्री । दधिशक्तौ । प.मु. । शिखरिण्याम् । वै.निघ. ।

**मार्त्तण्डः** । पुं । अर्कवृक्षे । अम. । शूकरे । मे. । स्वर्णमाक्षिके । वै.निघ. ।

**मार्त्तण्डमूलम्** । क्ली । अर्कमूले । वै.निघ. । २भ.ज्व.चि.निर्गुण्डीधूपे ।

**मार्त्तण्डवल्लभा** । स्त्री । आदित्यभक्तायाम् । हुड़हुड़िया । रा.नि.व.४ ।

**मार्त्तिकः** । त्रि । मृण्मये । च.चि.१अ.आमलकघृते । पुं । शरावे । विका. ।

**मार्द्दवम्** । क्ली । मृदुतायाम् ।

**मार्द्वीकम्** । क्ली । द्राचारसजात-अम्लमद्ये । "मार्द्वीकमविदाहित्वान्मधुरान्वयतस्तथा । रक्तपित्तेऽपि सततं बुद्धैर्न प्रतिषिध्यते । मधुरं तद्धि रेचञ्च कषायानुरसं लघु । लघुपाकि सरं शोषविषमज्वरनाशनम् ॥" सु.सू.४५अ.मद्यव. ।

**मार्द्वीकमद्यम्** । क्ली । द्राचाकृतमद्ये । "मृद्वीकाभिः कृतं मद्यं मार्द्वीकमिति चोच्यते । मृद्वीकानां सुपक्वानां यः स्वयं गलितः पटात् ॥ रसस्तेन हि तन्मद्यं कषायरहितेन यत् । मार्द्वीकं कापिशं भीमविक्रान्तं कापिशायनम् ॥" तोड़. वृद्धशौनकः ।

**मार्द्वीकशुक्तम्** । क्ली । मार्द्वीकरसेन सतैलेन कन्दशाकफलैश्चाहृते अम्ले । प.प्र.२ख. ।

**मार्षः** । पुं । मारिषशाके । नटे' शाक । भा.पू.१भ.शा.व. ।

**मार्षकः** । पुं । मधुरवास्तूके । मिठा বেতো । मारिषशाके । नटे' शाक । रा.नि.व.७ ।

**मार्ष्टिः** । स्त्री । तैलमर्द्दने । वै.निघ. ।

**मालकम्** । क्ली । स्थलपद्मे । जटा. । प्रपौण्डरीके । कृष्णतुलस्याम् ।

**मालकः** । पुं । निम्बवृक्षे । महानिम्बे । अम. ।

**माल(ला)कन्दः** । पुं । स्वनामख्यातमहाकन्दशाके । मं दावणियगड्डु । कं करियगोलि । गुणाः—सुतीक्ष्णः गण्डमालाघ्नः दीपनः गुल्महरः वातश्लेष्मघ्नश्च । रा.नि.व.७ ।

**मालती** । स्त्री । (Aganosma calicina. Syn. Echites caryophyllata.) स्वनामख्याते पुष्पशाके । मालतीलता, गन्धमालती । र.मा. । सु.सू.३६अ. । गुणाः—"मालती कफपित्तास्यरुग्व्रणक्रिमिकुष्ठजित् । चक्षुष्यं कुसुमं तस्याः पत्रं तत्कफपित्तजित् ॥" राज.५प. । पीतजातीवृक्षे । पीत जातीफुलेर गाछ । श्वेतजात्याम् । जातीकुसुमवृक्षे । तत्पर्य्यायाः,—जातिः जाती सुमनाः । रा.नि.व.१० । पाठायाम् । आकनादि । वै.निघ. । युवत्यां । ज्योत्स्नायाम् । भारतीयनदीविशेषे । हे.च. ।

**मालतीजातः** । पुं । टङ्कणक्षारे । र.सा.सं. ।

**मालतीतीरजः** । पुं । टङ्कणे । সোহাগা । हे.च. ।

**मालतीतीरसम्भवम्** । क्ली । टङ्कणे । সোহাগা । रा.नि.व.१० ।

**मालतीपत्रिका (त्री)** । स्त्री । जातीकोशे । জয়িত্রী । रा.नि.व.१२ ।

**मालतीपुष्पम्** । क्ली । जातीपुष्पे । सि.यो. पानीयकल्याणघृते । स्वनामकपुष्पे । वै.निघ. ।

**मालतीफलम्** । क्ली । जातीफले । जायफल । रा.नि.व.१२ ।

**मालतीमूलम्** । क्ली । मालतीशिफायाम् । মালতীশিকড় । इदं जङ्गमविषहरम् । नकुल १९अ. ।

**मालतृणम्** । क्ली । तृणसामान्ये । तृणविशेषे । মালতৃণ । वै.निघ. ।

**मालयः** । पुं । चन्दनवृक्षे । वै.निघ. । क्ली । श्रीखण्डचन्दने । त्रिका. । पद्मकनामसुगन्धकाष्ठे । पद्मकाष्ठ । रा.नि.व.१२ ।

**मालवा** । स्त्री । उपोदक्याम् । বড় পুঁই । भा.पू.१भ.शा.व. ।

**मालवि(वी)का** । स्त्री । त्रिवृति । তেউড়ী । रा.नि.व.६ । वा.चि.२अ. ।

**मालविटपी** (इन्) । पुं । कुम्भीवृक्षे । वै.निघ. ।

**मालवी** । स्त्री । पाठायाम् । আকনাদি । रा.नि.व.६ ।

**मालसी** । स्त्री । कैशपुष्टवृक्षे । श.र. ।

**माला** । स्त्री । वल्लीदूर्व्वायाम् । रा.नि.व.८ । भूम्यामलक्याम् । वै.निघ. । पृक्कायाम् ।

**मालाकण्टः (कः)** । पुं । अपामार्गक्षुपे । रा.नि.व.४ ।

**मालागुणा** । स्त्री । असाध्यलूताविशेषे । सु.कल्प.८अ. ।

**मालाग्रन्थिः** । स्त्री । मालादूर्व्वायाम्, वल्लीदूर्व्वायाम् । रा.नि.व.८ ।

**मालातृण (क)म्** । पुं, क्ली । भूतृणे । गन्धथड़ । रा.नि.व.८ । आन्ध्रदेशप्रसिद्धसुगन्धरोहिषतृणे । वै.निघ. ।

**मालादूर्व्वा** । स्त्री । मालाकारदुर्व्वाविशेष ।



মালাদূর্ব্বা, গাঁটিয়াদূর্ব্বা । म वेलिहरियाली । कं वल्लिगरुके । वम. वेलिदूर्व्वा । तत्पर्य्यायाः,—वल्लिदूर्व्वा मालाग्रन्थिः ग्रन्थिला ग्रन्थिदूर्व्वा ग्रन्थिमूला मूलग्रन्थिः वेल्लनी रोहत्पर्व्वा पर्व्ववल्ली शिवाख्या । गुणाः—मधुरा तिक्ता शिशिरा पित्तघ्नी कफवान्तितृष्णाहरी च । रा.नि.व.८ ।

**मालाफलम्**
**मालामणिः** } क्ली, पुं । रुद्राक्षे । वै.निघ. ।

**मालारिष्टा** । स्त्री । पाचीनामसुगन्धपत्रे । रा.नि.व.१० ।

**मालालिका (ली)** । स्त्री । स्पृक्कानामगन्धद्रव्ये । रा.नि.व.१२ ।

**मालाश्रेष्ठतमा** । स्त्री । तुलसीवृक्षे । वै.निघ. ।

**मालिकः** । पुं । पक्षिविशेषे । मे. । रञ्जके । श.र. । स्त्री (का) । द्राक्षामद्ये । वै.निघ. । मल्लिकाविशेषे । চন্দ্রমল্লিকা । मद्ये । हारा. । सप्तलायाम् । मे. । अतस्याम् । মশিনা । श.च. ।

**मालिनी** । स्त्री । अग्निशिखावृक्षे । दुरालभायाम् । श.च. ।

**मालुः** । पुं । पत्रबहुललताभेदे ।

**मालुकः** । पुं । कृष्णार्ज्जके । কাল বাবুই । ईषच्छ्वेतराजहंसे । वै.निघ. ।

**मालुकाच्छदः (पत्रः)** । पुं । अश्मन्तकवृक्षे । वै.निघ. ।

**मालुधानः** । पुं । मातुलाहिसर्पे । মালুয়া সাপ । अम. । स्त्री (नी) । लताभेदे । वै.निघ. ।

**मालूकः** । पुं । कृष्णार्ज्जके । কৃষ্ণপত্র ক্ষুদ্র তুলসী । रा.नि.व.१० ।

**मालूरः** । पुं । विल्ववृक्षे । प.मु. । कपित्थवृक्षे । কয়েৎ গাছ । रा.नि.व.११ ।

**मालूरमूलम्** । क्ली । विल्वमूले । भा.म.१भ. जिह्मकज्व. चि. । "मालूरमूलामयमधुना ।"

**मालेया** । स्त्री । स्थूलैलायाम् । प.मु. ।

**माल्यम्** । क्ली । पुष्पे । पुष्पमालायाम् । मे. ।

**माल्यकः** । पुं । मदनवृक्षे । वै.निघ. ।

**माल्यपुष्पः** । पुं । शणवृक्षे । শণ গাছ । रा.नि.व.४ ।

**माल्यपुष्पिका** । स्त्री । शणपुष्प्याम् । বন শণ । रा.नि.व.४ ।

**माल्या** । स्त्री । तृणभेदे । वै.निघ. ।

**माषः (कः)** । पुं । क्षुद्ररोगविशेषे । উচ্চ তিল । तिलकान् उन्नतान्माषानाहुः । "माषांस्तानेव चोन्नतान् ।" वा.उ.३१अ. । A sort of kidney bean. (phaseolus radiatus or P. Roxburghii.) स्वनामख्यातव्रीहिभेदे । মাষকলায় । प.मु. । हिं उरीद, तें मिनुमलु, तृणधान्यविशेषसु । तत्पर्य्यायाः,—बीजरत्नः वल्ली कुरुविन्दः धान्यधारः वृषाकरः मांसलः बलाढ्यः पितृः पितृभोजनः । गुणाः—स्निग्धः मलकरः शोषणः श्लेष्मकरः वीर्य्योष्णः रक्तपित्तप्रकोपकरः वातघ्नः गुरुः बलकरः रोचनः स्वादुः श्रमसुखवतां नित्यं सेवनीयश्च । रा.नि.व.१६ । "माषो गुरुः स्वादुपाकः स्निग्धो रुच्योऽनिलापहः । उष्णः सन्तर्पणो बल्यः शुक्रलो वृंहणः परः । भिन्नमूत्रमलस्तन्यमेदःपित्तकफप्रदः । गुदकीलार्दितश्वासपक्तिशूलानि नाशयेत् । कफपित्तकरा माषाः…॥" भा.पू.१भ.धा.व. । "स्निग्धोऽथ वृष्यो मधुरश्च बल्यो मरुत्कफानां परिवृंहणश्च । पाकेऽम्लकोष्णो विदितो हिमश्च माषोऽथ हृद्यः कथितो नरैश्च ॥" अत्रि. १५अ. । माषयूषगुणाः—"घनं सवातं कफकृन्माषयूषञ्च पित्तकृत् । अम्लपर्य्युषितं तच्च तैलपाने च शस्यते ॥" अत्रि.१३अ. । "माषयूषो गुरुर्वृष्य ईषत्पवनपित्तकृत् । अनल्पकं कफं कुर्व्वन् मलकोष्ठे विवर्द्धयेत् ॥" द्रव्यगु. । परिमाणभेदे । মাষা । तत्पर्य्यायाः,—मासः हेमः धामकः । स मागधमाने सुश्रुतमते च ५ पञ्चरक्तिकात्मकः । चरकमते ६।८ गुञ्जात्मकः । कालिङ्गमाने सुश्रुतमते ५।७।८ गुञ्जापरिमाणम् । भा. । चरके वैद्यकान्तरे च १० गुञ्जात्मकमानम् । १२ गुञ्जात्मकोऽप्यस्ति । १२ धान्यात्मकः १८ माषात्मकोऽपि दृश्यते । अतएव स ह्यधिकः षड्विधः पञ्चगुञ्जात्मकः षड्गुञ्जात्मकः सप्तगुञ्जात्मकः अष्टगुञ्जात्मकः दशगुञ्जात्मकः द्वादशगुञ्जात्मकश्चेति । तत्र पञ्चगुञ्जात्मको यः स नाम्ना कालिङ्गः सौश्रुतश्च षड्गुञ्जात्मकोऽपि कालिङ्ग इति केचित् । दशरक्तिकमाषः चरकसम्मतो गौड़माषक इत्युच्यते । स एव सर्व्वत्र व्यवहार्य्यः । यथा—"माषस्तु पञ्चभिः षड्भिस्तथा सप्तभिरष्टभिः । दशभिर्द्वादशभिश्च रक्तीभिः षड्विधो मतः । अत्र कालिङ्गमाषश्च पञ्चगुञ्जः स सौश्रुतः । दशगुञ्जस्तु माषः स्यात् माषकः स च चारकः । सप्तगुञ्जस्तु केऽप्याहुः मानकं मान-

कोविदाः। दशरक्तिकमानन्तु गौड़माचचतेऽत्र तु। दशरक्तिकमाषेण व्यवहारो भिषग्विदाम् ॥" प्रयोगा.मानकथने। "दशगुञ्जात्मकं माषं प्रवदन्ति चिकित्सकाः।" तत्र श्रेष्ठमध्यादिभेदात् माषकादिप्रतिपत्तौ समाधानमूह्यम्। "माषैर्वादशभिर्धान्यैर्माषकः परिकीर्त्तितः। कषायादिनिरूढेषु द्रव्यमानविधावपि ॥ ततोऽष्टादशभिर्माषैर्माषकः परिकीर्त्तितः। वम्यादिरक्तमोचेषु माने मूत्रवसादिषु ॥ वमनादिषु योज्यस्य माषकश्चाष्टरक्तिकः। लौहरत्नादिविषये दशरक्तिकमाषकः ॥ वमने च विरेके च तथा शोणितमोक्षणे ॥" माषो माषकलायः। कृष्णावेयः।

**माषकलायः**। पुं। माषव्रीहौ। মাষকলায়। अ.टी.भ.।

**माषतैलम्**। क्ली। वातव्याधौ तैलम्। "माषक्वाथे बलाक्वाथे रास्नाया दशमूलजे। यवकोलकुलत्थानां छागमांसं भवेत् पृथक्। प्रस्थे च तिलतैलस्य चीरं दत्वा चतुर्गुणम्। रास्नात्मगुप्तासिन्धूत्थशताह्वैरण्डमुस्तकैः। जीवनीयबलाव्योषैः पचेदक्षसमैर्भिषक्। क्वाथप्रस्थाः षड़ेवात्र विभक्त्यन्तेन कीर्त्तिताः ॥" তিলতৈল ৪ শ.। ক্বাথার্থ—মাষকলায়, বেড়েলা, রাস্না, দশমূল, যব, কুল, কুলথ, ছাগমাংস প্রত্যেক ১৬ প. জল ১৬ শ. শে. ৪ শ.। কল্কার্থ—রাস্না, আলাকুশীমূল, সৈন্ধব, শুলফা, এরণ্ডমূল, মুতা, জীবক, ঋষভক, মেদ, মহামেদ, ঋদ্ধি, বৃদ্ধি, কাকোলী, ক্ষীরকাকোলী, বেড়েলা, ত্রিকটু প্রত্যেক ২তো.। बृद्धीपदैशान्नखीप्रभृति यथासाध्यं दातव्यम्। इदं सप्तप्रस्थमाषतैलम्। सा.कौ.। भैष.बृहन्माषतैलम्। तल्लं यथा—"माषप्रस्थं समावाप्य पचेत्सम्यक् जलाढ़के। पादशेषे रसे तस्मिन् चीरं दद्याच्चतुर्गुणं। प्रस्थञ्च तिलतैलस्य कल्कं दत्वाक्षसम्मितं। जीवनीयानि यान्यष्टौ शतपुष्पां ससैन्धवाम्। रास्नात्मगुप्तामधुकं बलाव्योषं त्रिकण्टकं।...... ऊर्द्ध्वजत्रुगदापहं ॥" মাষকলায় ১৬ প. জল ১৬ শ. শে. ৪ শ.। তিলতৈল ৪ শ. দুগ্ধ ১৬ শ.। কল্কার্থ—জীবক, ঋষভক, মেদ, মহামেদ, ঋদ্ধি, বৃদ্ধি, কাকোলী, ক্ষীরকাকোলী, শুলফা, সৈন্ধব, রাস্না, আলাকুশীবীজ, যষ্টিমধু, বেড়েলা, ত্রিকটু, গোক্ষুরবীজ প্রত্যেক ২ তো.। सा. कौ.। भैष.। महामाषतैलं यथा—"माषस्याढ़कं दत्वा तुलार्द्धं दशमूलतः। पलानि छागमांसस्य त्रिंशद्द्रोणेऽम्भसः पचेत्। पूते शीते कषाये च चतुर्थांशावशेषिते। प्रस्थञ्च तिलतैलस्य पयो दत्वा चतुर्गुणम्। आत्मगुप्तोरुबुकञ्च शताह्वा लवणत्रयम्। जीवनीयानि मञ्जिष्ठा चव्यचित्रककट्फलम्। सव्योषम्पिप्पलीमूल-रास्ना-मधुक-सैन्धवम्। देवदार्व्वमृता-कुष्ठं वाजिगन्धा वचा शठी। एतैरक्षसमैः कल्कैः साधयेन्मृदुनाग्निना ॥" তিলতৈল ৪ শ.। ক্বাথার্থ—মাষকলায় ৪ শ. দশমূল ৬।০ শ. ছাগমাংস ৩০ প. একত্র ৬৪ শ. জলে পাক করিয়া শেষ ১৬ শ. নামাইবে। দুগ্ধ ১৬ শ.। কল্কার্থ—আলাকুশীমূল, এরণ্ডমূল, শুল্‌ফা, সৈন্ধব, বিট্‌, সাম্ভারলবণ, জীবনীয়গণ, মঞ্জিষ্ঠা, চই. চিতার মূল, কট্‌ফল, ত্রিকটু, পিপুলমূল, রাস্না, যষ্টিমধু, সৈন্ধব, দেবদারু, গুলঞ্চ, কুড়, অশ্বগন্ধা, বচ, শটী প্রত্যেক ২ তো.। रस.र.। भैष.।

**माषपत्रिका**। स्त्री। माषपर्ण्यां। रा.नि.व.२।

**माषप(व)र्णी (र्णी)**। स्त्री। (Teramnus labialis. Syn. Glysine debilis. Rox.) स्वनामख्यातलतायाम्। মাষাণী। हिं मासोणी, मासवणी। मं राणउड़दी। कं राणोडिंडु, काउड्ड। तत्पर्य्यायाः,—अश्वपुच्छी सिंहपुच्छी हयपुच्छिका हयपुच्छी काम्बोजी महासहा ऋषिप्रोक्ता कृष्णवृन्ता पाण्डुः पर्णिनी लोमशपर्णिनी पाण्डुलोमशा पाण्डुलोमा पाण्डुहा आर्द्रमाषा मांसमाषा हंसमाषा मङ्गल्या कल्याणी वज्रमूली शालीपर्णी विसारिणी आत्मोद्भवा बहुफला स्वयम्भूः सुलभा घना सिंहविन्ना विशाखिका। वा.सू.१५अ.। गुणाः—"माषपर्णी रसे तिक्ता वृष्या दाहज्वरापहा। शुक्रवृद्धिकरी बल्या शीतला पुष्टिवर्द्धनी ॥" रा.नि.व.२। "माषपर्णी हिमा तिक्ता रूक्षा शुक्रबलाशकृत्। मधुरा ग्राहिणी शोथवातपित्तज्वरास्रजित् ॥" भा.पू.।

**माषयोनिः**। पुं। पापड़ इति ख्याते खाद्यद्रव्ये। পাঁপর। वै.निघ.।

**माषरा**। स्त्री। अन्नमण्डे। प.मु.।

**माषरोटिका**। स्त्री। माषविदलकृतरोटि-



कायाम्। तत्पर्य्यायाः,—झर्झरी। गुणाः—वातकरी कफपित्तघ्नी च।

**माषवटी**। स्त्री। माषकृतवटकभेदे। तत्साधनविधिर्यथा,—माषाणां पिष्टिका हिङ्गुलवणार्द्रकसंस्कृता। तथा विरचिता वस्त्रे वटिकाः साधुशोषिताः। भर्जितास्तप्ततैले ता अथवाम्बुप्रयोगतः। वटकस्य गुणैर्युक्ता ज्ञातव्या रुचिदा भृशम् ॥" भा.।

**माषसूपः**। पुं। भृष्टमाषकृतयूषे। ভাজা মাষকলাইয়ের যূষ। गुणाः—"माषसूपश्च कुल्माषः स्निग्धो वृष्योऽनिलापहः। उष्णः सन्तर्पणो बल्यः सुस्वादु रुचिकारकः ॥" द्रव्यगु.।

**माषादः**। पुं। कच्छपे। श.र.।

**माषान्नम्**। क्ली। माषकृतान्ने। गुणाः—"माषान्नं दुर्ज्जरस्योक्तं मांसवृद्धिकरं गुरु। वातनाशकरं वृष्यम्...... ॥" वै.निघ.।

**माषिकः**। पुं। जीवशाके। वै.निघ.।

**माषेण्डरी**। स्त्री। माषपिष्टविकृतौ। च.द. शूल.चि.।

**मासः (कः)**। पुं। पचहये। अम.। माषपरिमाणे। মাষা। अ.टी.भ.।

**मासकः**। पुं, क्ली। तन्नामकक्षुद्ररोगविशेषे। আঁচিল। लक्षणं—"अवेदनं स्थिरञ्चैव यस्मिन् गात्रे प्रदृश्यते। माषवत् कृष्णमुत्सन्नमनिलान्माषकन्तु तत् ॥" मा.नि.।

**मासघ्नः**। पुं। हरिणविशेषे। वै.निघ.। दात्यूहपक्षिणि। श.र.।

**मासद्वयोद्भवः (वा)**। पुं, स्त्री। षष्टिकधान्ये। गौरषष्टिके। रा.नि.व.१६।

**मासनम्**। क्ली। औषधिवीजविशेषे। সোমরাজ। श.च.।

**माससमानम्**। क्ली। माषपरिमाणे। ১ মাষা।

**मासरः**। पुं। काञ्जिके। वै.निघ.। भक्तसमुद्भवमण्डे। अम.।

**मासवर्त्तिका**। स्त्री। सर्षपीनामपक्षिविशेषे। श.मा.।

**मासु(सू)री**। स्त्री। भेदनयोग्यवृद्धिपक्वनखश्मश्र्वादीनां तनुधाराविशेषे। सु.सू.८अ.। श्मश्रौ। हे.च।

**माहा**। स्त्री। स्त्री-गवि।

**माहिषः (षी)**। पुं, स्त्री। महिषे। कोषान्तरम्।

**माहिषघृतम्**। क्ली। महिषीक्षीरजातघृते। ভয়সাঘৃত। घृतमिदं तीक्ष्णकभस्मकादिरोगेषु हितम्। स्त्री.यो.अग्निमा.चि.। वातश्लेष्मघ्नं बलकरं वर्णकरम् अर्शोग्रहणीहरं दीपनं चक्षुष्यञ्च। रा.नि.व.१५।

**माहिषदधि**। क्ली। महिषीदुग्धकृतदधनि। ম'যের দই। गुणाः—मधुरं स्निग्धं रक्तपित्तघ्नं श्लेष्मलं बलशोणितवर्द्धनं वृष्यं श्रमघ्नं शोधनञ्च। रा.नि.व.१५।

**माहिषनवनीतम्**। क्ली। महिषीदुग्धजातनवनीते। মহিষে ননি। गुणाः—कषायं मधुरं शीतं वृष्यं बल्यं ग्राहि पित्तघ्नं पुष्टिदञ्च। रा.नि.व.१५। "माहिषीनवनीतेन स्तनपीड़ास्थिरा भवेत।" रस.र.स्तनरो.चि.।

**माहिषमूत्रम्**। क्ली। महिषजले। ম'ষের মূৎ। गुणाः—कटु उष्णम् आनाहशोषगुल्मरोगघ्नं कुष्ठकण्डूतिशूलोदररोगघ्नञ्च। रा.नि.व.१५।

**माहिषवल्लरी (ल्लिका)**। स्त्री। कृष्णवृद्धदारके। (ल्लिका) श्वेतवृद्धदारके। वै.निघ.।

**माहिषवल्ली**। स्त्री। लघुसोमलतायाम्। वै.निघ.।

**माहिषाक्षः**। पुं। महिषाक्षगुग्गुलौ। वै.निघ.।

**माहेन्द्री**। स्त्री। इन्द्रवारुणीलतायाम्। রাখালশশা। रा.नि.व.३। गाभ्याम्।

**माहेयः**। पुं। प्रवाले। वै.निघ.।

**माहेश्वरधूपः**। पुं। ज्वरे हिते धूपे। জ্বরে ভাপরাবিশেষ। "हिङ्गुर्दं देवकाष्ठञ्च शौवेष्ट घृतमेव च। गव्यास्थीनि तथा ध्यामं निर्म्माल्यङ्कटुरोहिणी। सर्षपं निम्बपत्राणि पिच्छाहिकञ्चुकन्तथा। मार्ज्जारविष्ठा गोशृङ्गं मदनस्य फलानि च। द्वे वृहत्यौ वचा चैव कार्पासास्थि तुषास्तथा। छागगोमायुविट् चैव हस्तिदन्तस्तथैव च। एतत्सर्व्वं समाहृत्य छागमूत्रेण भावयेत्। उदूखले तु सङ्कुट्य स्थापयेन्मृण्मये घटे ॥" হিঙ্গুল, দেবদারু, সরলকাষ্ঠ, গব্যঘৃত, গোহাড়, গন্ধতৃণ, শিবনির্ম্মাল্য, কট্‌কী, শ্বেত সরিষা, নিমপাতা, ময়ূরপুচ্ছ, সাপের খোলোস, বিড়ালবিষ্ঠা, গোশৃঙ্গ,

मयनाफल, বৃহতী, কণ্টিকারী, বচ, কাপাস-বীজ, তূষ, ছাগবিষ্ঠা, শৃগালবিষ্ঠা, ও হস্তিদন্ত প্রত্যেক সমভাগ। ছাগমূত্রে ভাবনা দিবে। ভৈষ.। "रुद्रजटा गोशृङ्गं विड़ालविष्टीरगस्य निर्म्मोकः। मदनफल-भूतकेश्यौ वंशत्वग रुद्र-निर्म्माल्यम् ॥ घृत-यव-मयूरपुच्छ-छगलकलोमानि सर्षपाः सवचाः। हिङ्गुगवास्थिमरीचाः समभागाः छागमूत्रसंपिष्टाः॥ धूपनविधिना शमयन्त्येते सर्व्वान् ज्वरान् नियतम् ॥" জটালঙ্কা, গোশৃঙ্গ, বিড়াল-বিষ্ঠা, সাপের খোলোস, ময়নাফল, জটামাংসী, মুরামাংসী, বংশত্বক্, শিবনির্ম্মাল্য (পুষ্পাদি), ঘৃত, যব, ময়ূরপুচ্ছ, ছাগরোম, সরিষা, বচ, হিং, গোহাড়, মরিচ প্রত্যেক সমভাগ; ছাগমূত্রে পেষণ করিয়া ধূপ দিবে। भा.।

**माहेश्वरी**। स्त्री। शङ्खिनीवृक्षे। यवतिक्ता लता। रा.नि.व ३।

**माक्षम्**। क्ली। सौवर्च्चललवणे। प.मु.।

**माक्षि(क्षी)कम्**। क्ली। धातुमाक्षिके। রৌপ্য ও স্বর্ণমাক্ষিক। तत्पर्य्यायाः,—पीतकं धातुमाक्षिकं तापिच्छं ताप्यं ताप्यकं आपीतं पीतमाक्षिकं आवर्त्तं मधुधातुः चौद्रधातुः माक्षिक-धातुः कदम्बः चक्रनामा अजनामकम्। र.मा.। तच्च द्विविधं स्वर्णमाक्षिकं रौप्यमाक्षिकञ्चेति। "माक्षिकं द्विविधम्प्रोक्तं हेमाङ्ग तारमाक्षिकम्। भिन्नवर्णविशेषत्वाद्रसवीर्य्यादिकं पृथक् ॥" र.सा.सं.। अपिच,—"लेखनी माक्षिकी धातुः सुवर्ण-रजतद्युतिः। जराजित् पाण्डुरोगघ्नः क्षयकुष्ठ-ज्वरापहः॥ मधुरोऽम्लः कटुः पाके किञ्चिदुष्णोऽमृतोपमः॥" भा.। च.द.र.पि चि.। "माक्षिकेन हतस्य च।" तैलवर्णमधुविशेषे। तत्र कपिल-वर्णातिस्थूल-वनमक्षिकाभिः नानापुष्पेभ्यः समाहृत्योत्पादितम्। "नानापुष्परसाहाराः कपिला वनमक्षिकाः। याः स्थूलास्ताभिरुत्पन्नं मधु माक्षिकमुच्यते॥" गुणाः—तैलवर्णं मधुरं रूक्षं लघु श्वासहरञ्च। रा.नि.व.१४। अपिच— "माक्षिकं मधुषु श्रेष्ठं नेत्रामयहरं लघु। कामलार्शः-क्षत-श्वास-कास-क्षयविनाशनम् ॥" भा.। सामुद्रलवणे।

**माक्षि(क्षी)कजम्**। क्ली। सिक्थके। मम। रा नि.व.१३।

**मा[illegible]तुः**। पुं। धातुमाक्षिके। सि.यो. पाण्डु चि.। कास.चि.मण्डुरवटके। "समैर्माक्षिक-धातुना।" स्वर्णमाक्षिके। रा.नि.व.१३।

**माक्षिकपाकः (फलः)**। पुं। मधुनारिकेल वृक्षे। रा.नि.व.११।

**माक्षि(क्षी)कशर्करा**। स्त्री। मधुशर्करायाम्, माक्षिकमधुजनितशर्करायाम्। गुणाः— माक्षिकमधुतुल्याः। रा.नि.व.१४।

**माक्षिकश्रेष्ठा**। स्त्री। रूप्यमाक्षिके। प.मु.।

**माक्षिकान्तम्**। क्ली। माधवीमद्ये। वै.निघ.।

**माक्षिकाश्रयम्**। क्ली। सिक्थके। रा.नि. व.१३। [ अ.।

**माक्षिकी**। स्त्री। सुवर्णमाक्षिके। नकुल.१६

**मितङ्गमः**। पुं। हस्तिनि।

**मिताशनः**। त्रि। परिमिताहारे, परिमित-भोजिनि। च.।

**मित्रम्**। क्ली। अतिविषायाम्। वै.निघ.।

**मित्रपञ्चकम्**। क्ली। घृत-मधु-गुञ्जा-टङ्कण-गुग्गुलौ। तथाच—"मधु सर्पिस्तथा गुञ्जा टङ्कणं गुग्गुलुस्तथा। मित्रपञ्चकमेतत्तु गदितं धातुमेलने ॥" र.सा.सं.।

**मिथ्याचारः**। पुं। शास्त्रोक्तविधिभ्रष्टाचारे। सु.नि.५अ.।

**मिथ्यामतिः**। स्त्री। भ्रमे।

**मिथ्यायुक्तः**। त्रि। अविधिप्रयुक्ते। भा.म.अ. सा.चि.।

**मिथ्यायोगः**। पुं। रूपादीनां विरुद्धयोगेषु। विषमस्थानाभिघाताशुचि-भूतसंस्पर्शादिरूप-विरुद्ध-योगेषु। यथा—वेगधारणादिः शारीरमिथ्यायोगः, परुषवचनादिः वाङ्मिथ्यायोगः, दुर्गन्धाद्यति-घ्राणादिः घ्राणमिथ्यायोगः, स्तनितादिशब्दानाम-तिश्रवणं शब्दमिथ्यायोगः। इत्यादि। च.सू.१६अ.।

**मिथ्याविहारः**। पुं। बलवद्विग्रहादौ। मा.नि.।

**मिथ्याहारः**। पुं। अनुचिताहारे, सात्म्य-विपरीताहारे, दुग्धमीनादौ। सु.नि.५अ.।

**मिथ्योपचारः**। पुं। प्रवातादिसेवनरूपानु-चिताचरणे। "मिथ्योपचारात्संक्लेशात्।" भा.।

**मिन्मिनः**। पुं। वातव्याधिविशेषे। অস্পষ্টভাষী বা খোঁনা। निदानम् यथा—"आवृत्य वायुः सकफः धमनीः शब्दवाहिनीः। नरान् करोत्य-क्रियकान् मूकमिन्मिनगद्गदान् ॥" सु.नि १अ.।



**मिरा**। स्त्री। मूर्व्वायाम्। रा.नि.व.३।

**मिलपत्रः**। पुं। अश्मन्तकवृक्षे। वै.निघ.।

**मिशिः (शी, शिका)**। स्त्री। मधुरिकायाम्। মৌরী। च द वा.व्या.चि.। शतपुष्पायाम्। शुल्फा। अ.टी भ.। वा.सू १५अ.। जटामांस्याम्। श.र.। वै निघ.महाशाल्वणस्वेदे। कासभेदे, मद्यादर्भे। কেসেবিশেষ। गुणाः—मधुरशीतः पित्तदाह-क्षयघ्नश्च। रा.नि.व.८। मेथिकायाम्। वै.निघ.।

**मिश्रः**। पुं। सन्निपाते। क्ली। चाणक्यमूलके। रा.नि.व.७। रक्ते। वै.निघ.।

**मिश्रकम्**। क्ली। औषरलवणे। रा.नि.व.६। यशदे। मूलके। वै.निघ.। वङ्गभेदे। भा।

**मिश्रकस्नेहः**। पुं। गुल्मे औषधम्। पाठः— "त्रिवृता त्रिफलां दन्तीं दशमूलं पलोन्मितं। जल चतुर्गुणे पक्ता चतुर्भागस्थितं रसं। सर्पिरैरण्डजं तैलं क्षीरञ्चैकत्र साधयेत्। स सिद्धो मिश्रकस्नेहः सक्षौद्रः कफगुल्मनुत्। कफवातविबन्धेषु काष्ठ-शोथोदरेषु च। प्रयोज्यो मिश्रकस्नेहः योनिशूलेषु चाधिकम् ॥" তেউড়ী, ত্রিফলা, দন্তীমূল, দশমূল প্রত্যেক ১ প. জল ১৬ শ. শে. ৪ শ.। ঘৃত ২ শ. এরণ্ডতৈল ২ শ. দুগ্ধ ৪ শ। च.चि.५अ.।

**मिश्रजः**। पुं। खेसरे जीवे। रा.नि.व.१९। খচ্চর।

**मिश्रपुष्पा**। स्त्री। मेथिकायां। रा.नि.व.६।

**मिश्रवनफला**। स्त्री। वार्त्ताक्यां। বেগুন। रा.नि.व ७।

**मिश्रवर्णः**। पुं। पुण्ड्रकेक्षौ। পূঁড়ি ইক্ষু। रा.नि.व.१४। क्ली। कृष्णागुरुणि। रा.नि.व.१२।

**मिश्रवर्णफला**। स्त्री। वार्त्ताक्याम्। বেগুন।

**मिश्रशब्दः**। पुं। खेसरे जन्तौ।

**मिश्रा**। स्त्री। कस्तूर्य्याम्। मृगनाभि।

**मिश्रोतुत्थम्**। क्ली। खर्परे। খাপর। वै.निघ.।

**मिश्रेया**। स्त्री। मधुरिकानामक्षुपे। মৌরী গাছ। (Fœniculum valgarc, F. Panmorium.) वनशुलुफायाम्। वन शुल्फा। हिं सोंआ, वरिसौंफ। मं वनसउफ। कं कास-व्सिगे। तें पेद्दजिलकुरक। ता. सीहिक्किरे। गुणाः—मधुरा स्निग्धा कटुः कफहरी वात-पित्तोत्थदोषघ्नी प्लीहकृमिघ्नी च। रा.नि.व १३। मधूदकेन तच्छुद्धिः। [ संग्रहः।

**मिश्रोदनम्**। क्ली। खिचरिकायाम्। খিচুড়ি।

**मिषिः (सिः) (षी, सी)**। स्त्री। मधुरिकायां। श.च.। शताह्वायां। शुल्फा। रा.नि. व.४। जटामांस्याम्। श.र.। अजमोदायाम्। রাঁধুনী। मे.। उशीर्य्याम्। উশীরী। रा.नि.व.८

**मिषिका**। स्त्री। मधुरिकायां। शताह्वायाम्। श.र.।

**मिष्टः**। त्रि। मधुररसे। भा.।

**मिष्टनिम्बः**। पुं। निम्बवृक्षभेदे। মিষ্ট নিম্। वै निघ.।

**मिष्टनिम्बूः**। स्त्री। मधुरजम्बीरे। मधुनिम्बुके। মিষ্ট লেবু। गुणाः—"मिष्टनिम्बूफलं स्वादु गुरु मारुतपित्तनुत्। गररोगविषध्वंसि कफोत् क्लेशि च रक्तहृत्। शोषारुचितृषाच्छर्द्दिहरं बल्यञ्च बृंहणम् ॥" भा.।

**मिष्टपाकः**। पुं। मिष्टान्ने। मधुररसविपक्व-फलादौ। মোরব্বা। पाकराजः।

**मिष्टरसः**। पुं। स्वादुपाकरसे द्रव्ये। तद्गुणौ —श्लेष्मकृद् वातपित्तहरौ। सु.।

**मिष्टान्नम्**। क्ली। मधुरान्ने, परमान्नादौ। हला.।

**मिहिका**। पुं। कर्पूरे। रा.नि.व.१२। नीहारे। श.र.।

**मिहिरः**। पुं। अर्कवृक्षे। अम.। वै.निघ.२ भ.क्षय.चि.त्रैलोक्यचिन्तामणिरसे। क्ली। ताम्रे। वै.निघ.।

**मीनः**। पुं। मत्स्यसामान्ये। अम.।

**मीनकम्**। क्ली। नयनाञ्जनविशेषे। उणा.।

**मीनकाक्षः (नाक्षः)**। पुं। शुक्लकरवीरे। वै निघ.।

**मीनगोधिका**। स्त्री। वाप्याम्। সরোবর।

**मीनघाती (इन्)**। पुं। बकपक्षिणि। रा. नि.व.१९।

**मीनन्द्रा**। स्त्री। गण्डदूर्व्वायां। रा.नि.व.८।

**मीनपित्तम्**। क्ली। कटुकायाम्। वै.निघ.। मत्स्यपित्ते।

**मीनरः** । पुं । हारके । शङ्गर । विका. ।

**मीनरङ्कः (ङ्गः)** । पुं । मत्स्यरङ्कपक्षिणि । माछराङा पाखी । विका. । जलकाके । वै.निघ. ।

**मीनाण्डी** । स्त्री । शर्करायां । रा.नि.व.१४ ।

**मीनाम्नीणः** । पुं । खञ्जरीटपक्षिणि । वै.निघ. । दर्दुरामे । मे. ।

**मीनाक्षी** । स्त्री । ब्रह्मीशाकक्षुपे । रा.नि.व.५. । गण्डदूर्व्वायां । रा.नि.व.८ । शर्करायाम् । वै.निघ. । सोमलतायाम् ।

**मीरः** । पुं । पानीये । उणा. ।

**मीलकः** । पुं । रोहितमत्स्ये । वै.निघ. ।

**मीलनम्** । क्लो. । नेत्रमुद्रणे । निदा. । व्याक. ।

**मीवा (न्)** । स्त्री । उदरक्रमौ । शीकरे । सारे । उणा. ।

**मीशानः** । पुं । महारग्वधवृक्षे । वै.निघ. ।

**मुकन्दः (कः)** । पुं । पलाण्डौ । अ.टी.भ. । षष्टिकव्रीहिविशेषे । कुधान्यभेदे । भा. । सु.सू.४६अ. । गुणाः काङ्गुवत् । च.सू.२७अ. ।

**मुकलः** । पुं । आरग्वधे । वै.निघ. ॥

**मुकुन्दः (न्दुः)** । पुं । कुन्दुरौ । कुन्दूरुखोटी । अम. अ.टी.भ. । श्वेतकरवीरे । उपोदिकायाम् । रत्नभेदे । पारदे । हे.च. । स्त्री । गाम्भारीवृक्षे । गामारगाछ । रा.नि.व.९ ।

**मुकुरः** । पुं । मल्लिकापुष्पवृक्षे । विश्व. । वकुलवृक्षे । आदर्शे । मे. । बदरवृक्षे । श.र. ।

**मुकुलः** । पुं, क्ली । ईषद्विकसितकलिकायाम् । स्थूलकलिकायाम् । अम. । जैपालवृक्षे । ‘पिस्ता’ इति ख्याते फलवृक्षे । आत्मनि । शरीरे । धरणिः ।

**मुकुष्टः (कः)** । पुं । वनमुद्गे । मूगानी । र.मा. । च.द.ज्व.चि. । “कुलत्थान् समुकुष्टकान् ।” गुणाः—शीतलः ग्राही कफपित्तज्वरघ्नश्च । राज. ।

**मुकूलः** । पुं । वकुलवृक्षे ।

**मुकूलकः** । पुं । दन्तीक्षुपे । दन्ती गाछ । र.मा. । वा.चि.६अ. । [ वै.निघ. ।

**मुक्ताचण्डा** । स्त्री । चिञ्चायाम् । তেঁতুল ।

**मुक्ताचञ्चुः** । पुं । सिंहे । श.मा. ।

**मुक्तापालेवतः** । पुं । द्वैपखर्ज्जूरीवृक्षे । वै.निघ. ।

**मुक्तावन्धना (न्धा)** । स्त्री । मल्लिकावृक्षे । वार्षिकीमल्लिकाभेदे । रा.नि.व.१० । See वार्षिका ।

**मुक्त(क्ता)माता** । स्त्री । शुक्तौ । ঝিণুক । वै.निघ. ।

**मुक्तरसा** । स्त्री । रास्नायाम् । र.मा. ।

**मुक्तवर्च्चाः (स्)** । पुं । मुक्तवर्षीतिख्याते क्षुपविशेषे । मूक्कुरी, मूक्कवर्षी । गुणाः—“मुक्तवर्च्चास्तथा रुद्रा वान्तिकृच्च विरेचनी । कासश्वासगरघ्नी च ज्वरहृत् कफवातनुत् ॥ अस्य वै स्वरसः शीतः कफोत्सारी च वामनः । पायुलेपान्मलोत्सारी कल्कोबालेषु शस्यते ।

**मुक्त(क्ता)वासः** । पुं । शुक्तौ । ঝিণুক । श.च. ।

**मुक्ताशृङ्गः** । पुं । रोहीतकमत्स्ये । वै.निघ. ।

**मुक्तासारः** । पुं । कदलीवृक्षे । वै.निघ. ।

**मुक्ता** । स्त्री । मौक्तिके । प.मु. । मूक्ता, मति । हिं मति । तत्पर्य्यायाः,—मौक्तिकं शुक्तिजं शुक्तिवीजं शुक्तिमणिः शौक्तिकं शौक्तिकेयं हारी कुवलं सौम्या तारं तारा तौतिकं भौतिकं अन्तःसारं अम्भःसारं शीतलं नीरजं नक्षत्रं इन्दुरत्नं लक्ष्मी मुक्ताफलं मुक्तिका विन्दुफलं शशिप्रभं स्वच्छं हिमं हिमवत्नं सुधांशुभं शुधांशुरत्नं लक्षं शशिप्रियं हैमवतं भूरुहं । तद्योनिः यथा—“शुक्तिः शङ्खो गजक्रोड़ः फणी मत्स्यश्च दर्दुरः । वेणुरेते समाख्यातास्तज्ज्ञैर्मौक्तिकयोनयः ॥” भा.पू.१भ. । गुणाः—सारका शीतला कषाया स्वादुः लेखनी चक्षुष्या च । राज. । अपिच,—“मुक्ता कषाया स्वाद्वी च बलपुष्टिप्रदायिनी । वृष्या नेत्रहिता राजयक्ष्मघ्नी विषनाशिनी । स्त्रीणां कान्तिरतिकरी धारणात् ग्रहपापनुत् ॥” भा. । रास्नायाम् । र.मा. । च.सू.४अ.वयःस्थापने ।

**मुक्तागारम्** । क्ली । शुक्तौ । ঝিণুক । श.च. ।

**मुक्तापुष्पः** । पुं । कुन्दपुष्पक्षुपे । कुन्द गाछ । रा.नि.व.१० ।

**मुक्ताप्रसूः** । पुं । शुक्तौ । र.मु. ।

**मुक्ताफलम्** । क्ली । कर्पूरे । लवलीफले । मे. । मौक्तिके । भा. ।

**मुक्ताभा** । स्त्री । वृत्तमल्लिकायां । रा.नि.व.१० ।

**मुक्तामती** । स्त्री । शुक्तौ ।

**मुक्तायोनिः** । स्त्री । शुक्तौ । मुक्ताजन्मस्थाने ।



**मुक्ताशुक्तिः** । स्त्री । मुक्तायोनिशुक्तौ, मुक्तागृहे । मूक्तार ঝিণুক । मं मोतीसीप । कं मुक्तिनचिप्पु । गुणाः—“कटुः स्निग्धा श्वास-हृद्रोगहारिणी । शूलप्रशमनी रुच्या मधुरा दीपनी परा ॥” रा.नि.व.१३ ।

**मुक्तास्फोटः (टा)** । पुं, स्त्री । मुक्तागृहे । ঝিণুক । अम. ।

**मुक्तिका** । स्त्री । मौक्तिके ।

**मुक्तिप्रदः** । पुं । हारिद्रमुद्गे । হাবি মুগ । वै.निघ. ।

**मुक्तिमुक्तः** । पुं । शिलारसे । र.मा. ।

**मुखम्** । क्ली । वदनविवरे । भा. । वदने । মুখ । रा.नि.व.१८ । तत्तु गर्भस्थस्य पञ्चभिः मासैर्भवति । सुखबोधः । “ओष्ठौ च दन्तमूलानि दन्ता जिह्वा च तालु च । गलो मुखादि सकलं सप्ताङ्गं मुखमुच्यते ।” भा. । जीरके । पक्षिचञ्चौ । वै.निघ. । पुं । डहुके । ডেলো । श.च. ।

**मुखगन्धकः** । पुं । पलाण्डौ । रा.नि.व.७ ।

**मुखचीरः** । पुं । जिह्वायाम् ।

**मुखचीरी** । स्त्री, पुं (इन्) । पलाण्डौ । श.चि. । जिह्वायाम् । श.मा. ।

**मुखजः** । पुं । दन्ते । वै.निघ. ।

**मुखदूषः (णः)** । पुं । पलाण्डौ । रा.नि.व.७ ।

**मुखदूषिका** । स्त्री । मुखगतक्षुद्ररोगभेदे । ब्रण् ফোড়া । लक्षणं यथा—“शाल्मलीकण्टकप्रख्या कफमारुतशोणितः । जायन्ते पिड़का यूनां वक्त्रे या मुखदूषिकाः ।” सु.नि.१३अ. ।

**मुखदूषी** (इन्) । पुं । लशुने । রশুন । वै.निघ. ।

**मुखधावनम्** । क्ली । मुखस्य प्रक्षालने । মুখধোওয়া । वा.चि.५अ. । See मुखप्रक्षालनम् ।

**मुखधौता** । स्त्री । भार्ग्याम् । বামুনহাটি । श.च. ।

**मुखपत्रः** । पुं । तदाख्यशाकभेदे । तुन्दवृक्षे ।

**मुखपाकः** । पुं । अश्वस्य मुखरोगे । ज.द.२९अ. । मुखरोगभेदे । निदानलक्षणे यथा—“करोति वदनस्यान्तर्व्रणान् सर्व्वसरोऽनिलः । सञ्चारिणोऽरुणान् रुक्षान् ओष्ठौ ताम्रौ चलत्वचौ । जिह्वा शीतासहा गुर्व्वी स्फुटिता कण्टकाचिता । विवृणोति च कृच्छ्रेण मुखपाको मुखस्य च । अधः प्रतिहतो वायुरर्शोगुल्मकफादिभिः । यात्यूर्द्ध्वं वक्त्रदौर्गन्ध्यं कुर्व्वन्नूर्द्ध्वं गदस्तु सः । मुखस्य पित्तजे पाके दाहोषौ तिक्तवक्त्रता । क्षारोक्षितक्षतसमा व्रणास्तद्वच्च रक्तजे । कफजे मधुरास्यत्वं कण्डूमत्पिच्छिला व्रणाः । अन्तःकपोलमाश्रित्य श्यावपाण्डु कफोऽर्व्वुदम् । कुर्य्यात्तत्पाटितं छिन्नं मुदितञ्च विवर्द्धते । मुखपाके भवेत्सास्रैः सर्व्वैः सर्व्वाकृतिर्मलैः ।” वा.उ.२१अ. ।

**मुखपूरणम्** । क्ली । गण्डूषे । च. ।

**मुखप्रसेकः** । पुं । श्लेष्मजमुखव्याधौ । भा. ।

**मुखप्रक्षालनम्** । क्ली । शीतोदकेन मुखधावने । गुणाः—“नीलिकां मुखशोषञ्च पिड़कां व्यङ्गमेव च । रक्तपित्तकृतान् रोगान् सद्य एव विनाशयेत् ।” सु.चि.२४अ. ।

**मुखप्रियः** । पुं । नागरङ्गवृक्षे । भा. । स्त्री । कर्कटिकायाम् । কাঁকুড় । वै.निघ. ।

**मुखभङ्गः** । पुं । श्वेतशिग्रौ । শাদা শজিনা ।

**मुखभूषणम्** । क्ली । ताम्बूले । निदा. ।

**मुखमण्डलकः** । पुं । तिलकक्षुपे । তিলগাছ । रा.नि.व.१० ।

**मुखमाधुर्य्यम्** । क्ली । श्लेष्मजमुखरोगे । মুখমিষ্টি । भा. ।

**मुखमुण्डि(ति)का** । स्त्री । बालरोगभेदे । लक्षणं यथा—“सस्ताङ्गः सुरुचिरपाणिपादवक्त्रः बह्वाशी कलुषशिरावृतोदरो यः । सोऽरोगी भवति च मूत्रतुल्यगन्धिः स ज्ञेयः शिशुरथ वक्त्रमुण्डिकार्त्तः ॥” सु.उ.२७अ. ।

**मुखमोदः** । पुं । शोभाञ्जनवृक्षे । শজিনা গাছ । रा.नि.व.७ ।

**मुखरः** । पुं । शङ्खे । काके । रा.नि.व.१९ ।

**मुखरोगः** । पुं । ओष्ठादिरोगे । ओष्ठद्वयदन्तमूलदन्तजिह्वातालुगलरूपं सप्ताङ्गं मुखम्, तत्रस्थो यो रोगः स मुखरोग इत्युच्यते । मुखरोगसंख्या—ओष्ठयोरष्टौ, एकादशेति वाभटः । दन्तमूले षोड़श, दन्तेषु अष्टौ, जिह्वायां पञ्च, तालुनि नव, कण्ठे अष्टादश, सर्व्वेषु त्रय इति सप्तषष्टिर्मुखरोगाः साकल्येन भवन्ति । “ओष्ठौ च दन्तमूलानि दन्ता जिह्वा च तालु च । गलो मुखानि सकलं सप्ताङ्गं मुखमुच्यते । स्युरष्टावोष्ठयोर्दन्तमूले तु दश

षट् तथा। दन्तेष्वष्टौ च जिह्वायां पञ्च स्युर्नव तालुनि। कण्ठ त्वष्टादश प्रोक्तास्त्रयः सर्व्वेषु च स्मृताः। एवं मुखामयाः सर्व्वे सप्तषष्टिर्मता बुधैः॥” भा.म.४भ.मु.रो.चि.। निदानं—आनूपमांसादिसेवनात् कुपिता दोषा मुखरोगानुत्पादयन्ति। तदुक्तं—“आनूपपिशितक्षीरदधिमाषनिषेवनात्। मुखमध्ये गदान् कुर्य्युः क्रुद्धा दोषाः कफोत्तराः॥” इति। मा.नि.। “मात्स्यमाहिषवाराहपिशितामकमूलकं। माषसूपदधिक्षीरशुक्तेक्षुरसफाणितम्। अर्वाक् शय्याञ्च भजतो द्विषतो दन्तधावनम्। धूमच्छर्दनगण्डूषानुचितञ्च शिराव्यधम्। क्रुद्धाः श्लेष्मोल्वणा दोषाः कुर्व्वन्त्यन्तर्मुखे गदान्। ओष्ठकोपे तु पवनात् स्तब्धावोष्ठौ महारुजौ। दाल्येते परिपाट्येते परुषासितकर्कशौ। पित्तात् तीक्ष्णासहौ पीतौ सर्षपाकृतिभिश्चितौ। पिटकाभिर्बहुक्लेदावाशुपाकौ कफात्मकौ। शीतासहौ गुरू शूनौ सवर्णपिटिकाचितौ॥ सन्निपातादनेकाभौ दुर्गन्धास्राव-पिच्छिलौ। अकस्मात् म्लान संशून-रुजौ विषमपाकिनौ॥ रक्तोपसृष्टौ रुधिरं स्रवतः शोणितप्रभौ। खर्ज्जूरसदृश चात्र क्षीणे रक्तेऽर्बुदं भवेत्॥ मांसपिण्डोपमौ मांसात् स्यातां मूर्च्छत्कृमी क्रमात्। तैलाभश्वयथुक्लेदौ सकण्डू मेदसा मृदू॥ क्षतजावबदीर्य्येते पाट्येते चासकृत् पुनः॥” वा.उ २१अ.। अश्वस्य यथा—“उपकुशस्तथा शीतो जिह्वास्तम्भस्तथैव च। अलाबुकः प्रसूनश्च दन्तरोगो गलग्रहः॥ मुखपाकोऽधिदन्तश्च रोहिणी चोपजिह्विका। गण्डरोगोष्ठरोगौ च गलशालूक एव च॥ इत्येते वाजिनां रोगा मुखजाः परिकीर्त्तिताः। एषां निदानं वक्ष्यामि चिकित्साञ्च यथाक्रमम्॥ सरिभ्यो दन्तमांसेभ्यो यस्य निर्य्याति शोणितम्। चलदन्तस्य वाहस्य विद्यादुपकुशं भिषक्॥ हनुदेशे यदा दन्तो भवत्यभ्यन्तराश्रयः। आलिश इति तं विद्यात् श्लेष्मरक्तसमुद्भवम्॥ येनाश्वो दुर्म्मनात्यर्थं मन्दं पिबति खादति। जज्जर कासते चैव बलाच्च परिहीयते॥ शूना यस्य भवेज्जिह्वा वाजिनः स्फोटकैर्युता। प्रक्लिन्ना वापि यस्यैव जिह्वास्तम्भोऽति तं विदुः॥ मुखं दुर्गन्धिकञ्चैव तालुकः शूनकौ भवेत्। ग्रासविद्वेषिणोऽश्वस्य रोगं विद्यादलाबुकम्॥ ओष्ठतालुनकं वा मन्दाहारे तथैव च। संशोषे दन्तमांसे च प्रशूनं व्याधिमादिशेत्॥ हन्वोश्चैव तथा गण्डे श्वयथुर्यस्य जायते। जिह्वामूले गले चापि क्षय विद्याद्गलग्रहम्॥ स्फोटोष्ठतालुदेशेषु व्रणं यस्योपजायते। विवर्णन्तु मुखं दुष्टं मुखपाकं तमादिशेत्॥ दन्तानामुपरिष्टात्तु यदा दन्तस्य सम्भवः। अधिदन्तः स विख्यातो मन्दाहारस्य वाजिनः॥ यस्य शूनात्त्रिकूटस्य गले शोथः प्रलम्बते। यवसद्वेषिणोऽश्वस्य रोहिणीरोगमादिशेत्॥ अधस्तादथ जिह्वायाः श्वयथुर्यस्य जायते। तं विद्यादुपजिह्वाख्यं मुखरोगन्तु वाजिनाम्॥ अधिजिह्वाभिधानन्तु उपरिष्टाद्विनिर्दिशेत्। गण्डाभ्यन्तरगो गण्डो गण्डरोग इति स्मृतः॥ सव्रणः पिड़काकीर्णं ओष्ठ उच्छून एव च। स्फुटितः कठिनश्चैव ओष्ठरोगोऽभिधीयते॥ गलाभ्यन्तरशोथेन ग्रासमुद्गिरते हयः। गलशालूकिनं विद्यात् कासार्त्तञ्च तुरङ्गमम्॥ सर्व्वेषां मुखरोगाणां सम्भवः श्लेष्मशोणितम्॥” ज.द. २८अ.।

**मुखलाङ्गलः**। पुं। शूकरे। जटा.।

**मुखलिप्तता (लेपः)**। पुं। मुखरोगे। मुथ चट्‌चटे करा। भा.।

**मुखवल्लभः**। पुं। दाड़िम्बवृक्षे। श.मा.।

**मुखवाचिका**। स्त्री। अम्बष्ठायां। रा.नि.व.४।

**मुखवासः**। पुं। तरम्बूजलतायाम्। तरमुज गाछ। र.मा.। फुटी इति प्रसिद्धे फलशाकविशेषे। गन्धतृणे। आस्यदेशख्याते सुगन्धभूतृणे। रा.नि.व.८।

**मुखवासनः**। त्रि। मुखसुरभीकरणद्रव्यमात्रे। अम.।

**मुखविलुण्ठिका**। स्त्री। छाग्याम्। श.र.।

**मुखविष्ठा**। स्त्री। तैलपायिकायाम्। তেলা-পোকা। हे.च.।

**मुखवैदलः**। पुं। तन्नामकवायव्यकीटे। तैर्द्दष्टानां वातनिमित्तजा विविधा रोगा भवन्ति। सु.कल्प.८अ.।

**मुखव्यङ्गः**। पुं। गण्डगतक्षुद्ररोगे। মেচেতা। “क्रोधायासप्रकुपितो वायुः पित्तेन संयुतः। मुखमागत्य सहसा मण्डलं विसृजत्यतः। नीरुजं तनुकं श्यावं मुखव्यङ्गं तमादिशेत्।” मा.नि.। निदा.।

**मुखशुद्धिः**। स्त्री। मुखशोधने।

**मुखशोधनम्**। क्ली। त्वचि। গুড়ত্বক্, দারুচিনি। रा.नि.व.६।

**मुखशोधनः**। त्रि। मुखशोधकद्रव्यमात्रे। पुं। कटुरसे। हे.च.।



**मुखशोधी (इन्)**। पुं। जम्बीरवृक्षे। रा.नि. व.११। खदिरे।

**मुखशोषः**। पुं। शुष्कास्यतायाम्। निदा.।

**मुखसम्भवम्**। क्ली। पुष्करमूले। वै.निघ.।

**मुखसिञ्चनमन्त्रः**। पुं। पीतविषस्य मुखसिञ्चनार्थजलस्य मन्त्रपूतकरणमन्त्रे। জলপড়া। “ओं हर हर नीलकण्ठ अमृतं प्लावय प्लावय हुङ्कारेण विष ग्रस ग्रस क्रोङ्कारेण हर हर ह्रौङ्कारेण अमृतं प्लावय प्लावय हर हर नास्ति विषम् उच्छिरे।” अत्रि.३स्थान.५६अ.।

**मुखसुरम्**। क्ली। तालसुरायाम्। তাড়ী। त्रिका.। अधरामृते।

**मुखसूची**। स्त्री। आम्रातकवृक्षे। वै.निघ.।

**मुखस्रावः**। पुं। लालायाम्। रा.नि.व.१८। बालकरोगभेदे। निदा.।

**मुखामयः**। पुं। मुखरोगे। भा.।

**मुखामोदः (दा)**। पुं, स्त्री। सल्लकीवृक्षे। रा.नि.व.११। कृष्णशिग्रौ। वै.निघ.।

**मुखार्जकः**। पुं। अर्जकवृक्षे। क्षुद्रतुलसी गाछ। रा.नि.व.१०।

**मुखालुः**। पुं। स्वनामख्यातकन्दशाकविशेषे। মিষ্ট আলু। गुणाः—मिष्टः शीतः पित्तघ्नः रुच्यः वातलः दाहशोषतृष्णाघ्नश्च। रा.नि.व.७।

**मुखासवः**। पुं। मुखस्रावे। থুতু।

**मुखास्त्रः**। पुं। कर्कटे। কাঁকড়া। त्रिका.।

**मुखिकः**। पुं। मुष्ककवृक्षे। वै.निघ.।

**मुख्यधातुः**। पुं। स्वर्णे।

**मुख्यलवणम्**। क्ली। सैन्धवलवणे।

**मुगूहः**। पुं। हरिणविशेषे। वै.निघ.। दात्यूहपक्षिणि। भूरि.प्र.।

**मुचकः**। पुं। लाक्षायाम्। व.निघ.।

**मुच(चु)कुन्दः**। पुं। (Pterospermum suber folium.) स्वनामख्यातवृक्षे। মুচুকুন্দ ফুলের গাছ। र.मा.। कोङ्कणेऽपि मुचुकुन्द इति ख्यातः। हि मेकचन्द। तें लोलगु। उत्. वड्डलो। ता. टड्डो। तत्पर्य्यायाः,—क्षत्रवृक्षः चित्रकः प्रतिविष्णुकः बहुपुत्रः सुदनः हरिवल्लभः सुपुष्पः अर्घ्यार्हः लक्षणकः रक्तप्रसवः। गुणाः—कटुः तिक्तः कफकासघ्नः कण्ठदोषहरः त्वग्दोषशोफघ्नः जीर्णज्वरविनाशनः व्रणपामाघ्नश्च। रा.नि. व.१०। पुष्पगुणाः—“मुचुकुन्दं शिरोऽर्त्तिजित्।” राज.प्र.। काष्ठकमदर्शे। सु.चि.१८अ.।

**मुचिलिन्दः (कः)**। पुं। मुचुकुन्दवृक्षे। तिलकवृक्षे। (कः) राजादनवृक्षे। वै.निघ.।

**मुचुकः**। पुं। पिचुके, मदनवृक्षभेदे। কাঁটামযনা। प.मु.।

**मुचुटी**। स्त्री। अङ्गुलिमोटने। আঙ্গুল মট্‌কান। श.र.। मुष्टौ। मुठी। हे.च.।

**मुच्छकः**। पुं। मुष्ककवृक्षे। रा.नि.व.११। वृषणे।

**मुञ्जः**। पुं। (Saccharum munga.) स्वनामख्याततृणविशेषे। मुञ्जतृणमिति भाषायां प्रसिद्धः। मूँज। तें मुञ्जगड्डि, अग्निस्फुलिङ्ग। स द्विविधः मद्रमुञ्ज-मुञ्जभेदेन। तत्पर्य्यायाः,—इक्षुकाण्डः मुञ्जानकः मौञ्जीतृणाख्यः ब्रह्मण्यः तेजनाह्वयः वाणीरकः शरी दर्भाह्वयः दूरमूलः दृढतृणः दृढमूलः बहुप्रजः रञ्जनः शतभङ्गः सुमेखलः। गुणाः—शीतवीर्य्यो मधुररसः कफपित्तघ्नः भ्रष्टरक्षादिरक्षासु पावनः भूतघ्नश्च। रा.नि.व.८। “मुञ्जद्वयन्तु मधुरं तुवरं शिशिरं तथा। दाहतृष्णाविसर्पास्रमूत्रवस्त्यक्षिरोगजित्। दोषत्रयहरं वृष्यं मेखलासूपयुज्यते॥” भा.। शरतृणे। प.मु.।

**मुञ्जकः (जाकम्)**। पुं, क्ली। अश्वस्य कृमिजन्याक्षिरोगे। “एकेन मुञ्जमाख्यातं बहुभिर्मुञ्जजालकं। कृमिभिः पटलान्तःस्थैर्विद्यान्नेत्ररुजाद्वयमिति। प्रथमं तैलवर्णाभं द्वितीयं स्फाटिकप्रभं। रक्ताभञ्च तृतीयञ्च चतुर्थं तैलमुच्यते। प्रथमं पटलं साध्यं द्वितीयञ्च तथा भवेत्। तृतीयं कृच्छ्रसाध्यं स्याच्चतुर्थं नैव सिध्यति॥” ज.द.३०अ.।

**मुञ्जतृणम्**। क्ली। मुञ्जे। मूज। रा.नि.व.८।

**मुञ्जनकः**। पुं। मुञ्जे। मूज। रा.नि.व.८।

**मुञ्जमणिः**। पुं। पुष्परागमणौ। भा.।

**मुञ्ज(ञ्जा)रम्**। क्ली। शालूककन्दे। श.मा.। मृणाले। वै.निघ.।

**मुञ्जवलयः**। पुं। प्रसाधनार्थं कलरक्षणाधारविशेषे। सु.सू.२५अ.।

**मुञ्जवान्**। पुं। सोमलताभेदे। सु.चि.२९अ.।

**मुञ्जातः (कः)**। पुं। स्वनामप्रसिद्धे श्रौत्तरापथिककन्दविशेषे। रूसमुञ्जटणे। एतदभावे तालमज्जा ग्राह्या। वम्. मुञ्जाराकन्द। गुणाः—अतिस्वादुः वृष्यः पित्तानिलघ्नश्च। राज। मुञ्जातपुष्पगुणाः—"मुञ्जातकं परं स्वादु वृष्यं पित्तानिलापहं।" राज.३प.। सि.यो.अपस्मा.चि महाचैतसघृते। अश्वगन्धाघृते। सु.सू.३९अ.कफशमने। वनशूरणे।

**मुञ्जातकफलम्**। क्ली। मुञ्जातकवीजे। च.द.वृष्य.चि.गोधूमाद्यघृते। एतदभावे तालमस्तकं देयम्।

**मुण्डः**। पुं। स्थाणुवृक्षे। मस्तके। रा.नि.व.१८। क्ली। मुण्डलौहे। रा.नि.व.१३। वोले। रा.नि.व.६।

**मुण्डक(ज)म्**। क्ली। मुण्डलौहे। रा.नि.व.१३। पुं (कः)। नापिते। हे.च.। माधवीलतायाम्।

**मुण्डकिट्टः**। पुं, क्ली। मुण्डलौहभेदे। मण्डुरलौहे। र.सा.सं.।

**मुण्डचणकः**। पुं। वृहच्चणके। বড় ছোলা। प.मु.। कलाये। रा.नि.व.१६।

**मुण्डजम्**। क्ली। तीक्ष्णायसे। हेम्पा०।

**मुण्डनम्**। स्त्री। वपने, केशच्छेदने। মাথা মুড়ান। हे.च.।

**मुण्डनकः**। पुं। श्वेतवटवृक्षे। वै.निघ.।

**मुण्डन(नि)का**। स्त्री। (नका) निःशूकस्थूलशालिधान्ये, मुण्डशालौ। বোরো ধান। रा.नि.व.१६। (निका) मुण्डितिकायाम्। मूण्डीरी। रा.नि.व.५।

**मुण्डफलः**। पुं। नारिकेलवृक्षे। श.र.।

**मुण्डलौहम्**। क्ली। लौहविशेषे। तच्च मृदुकुण्ठकठोरमिति त्रिधा। रा.नि.व.१३।

**मुण्डशालिः**। पुं। स्वनामख्यातनिःशूकशालिधान्ये। शूकशून्य धान, বোরো ধান। मं निःशूकशालि। कं वोम्लनलु। वम्. वीड़के भात। तत्पर्य्यायौ,—निःशूकः अशूकः। गुणाः—त्रिदोषघ्नः मधुराम्लो बलप्रदः रुच्यः दीपनः पथ्यः सुखजाड्यरुजाहरश्च। रा.नि.व.१६।

**मुण्डा (ण्ड्या)**। स्त्री। महाश्रावणिकायाम्। বড় থুলকুড়ি। मूण्डीरी। रा.नि.व.५। मे.। शार्ङ्गधरे महानीलकण्ठरसे।

**मुण्डायसम्**। क्ली। मुण्डलौहे। रा.नि.व.१३।

**मुण्डिका**। स्त्री। गोरक्षमुण्ड्याम्। मूण्डीरी। रा.नि.व.२३।

**मुण्डितम्**। क्ली। लौहे। रा.नि.व.१३।

**मुण्डितिका (निका, नी)**। स्त्री। (Sphaeranthus Indicus. Syn. S. Hirtus.) मुण्डीर्य्याम्। मूण्डीरी, বড় থুলকুড়ি। हिं मुण्डी, गोरक्षमुण्डी। तें वोड़सरपुचेट्टु। वम्. ता. कोट्टक। तत्पर्य्यायाः,—अलम्बुषा श्रावणा श्रावणी पलङ्कषा कदम्बपुष्पा भूतघ्नी कुम्भला अरुणा मुण्डनिका मुण्डीरिका। च.द. शि.यो.र.पि.चि.खण्डखाद्यलौहे। "त्वग्मुण्डितिकाबला:।" गुणाः—"मुण्डितिका कटुः पाके वीर्य्योष्णा मधुरा लघुः। मेध्या गण्डापचीकृच्छ्रकृमियोन्यर्त्तिपाण्डुनुत्। श्लीपदारुच्यपस्मारप्लीहमेदोगुदार्त्तिहृत्। महामुण्डी तु तत्तुल्या गुणैरुक्ता महर्षिभिः॥" भा.।

**मुण्डिनी**। स्त्री। कस्तूरीमृगी। वै.निघ.।

**मुण्डी** (इन्)। पुं। मृगभेदे। तन्मांसगुणाः—"मुण्डी तु ज्वरकासास्रक्षयश्वासापहो हिमः।"

**मुण्डी**। स्त्री। मुण्डितिकायाम्। मूण्डीरी। हिं गोरखमुण्डी। प.मु.। जटा.। (पर्पटीरसे। वै.निघ.२भ.क्षय.चि.नवरत्नराजमृगाङ्के। रस.र. स्तनरो.चि.)। "मुण्डीमूलं दशपलं।"

**मुण्डीरिका (री)**। स्त्री। मुण्डितिकायाम्। मूण्डीरी। अलम्बुषायाम्। ए.मु.।

**मुण्डीवृक्षानुकारकः**। पुं। मुचुकुन्दवृक्षे। प.मु.। See मुचुकुन्दः।

**मुत् (दा)**। स्त्री। वृद्धौषधौ। रा.नि.व.५।

**मुत्तोली**। स्त्री। मूटिकायाम्। वा.कल्प.१अ.।

**मुदिरः**। पुं। भेके। उणा.। [ ११।

**मुदिरफलः**। पुं। विकण्टकवृक्षे। रा.नि.व.

**मुदी**। स्त्री। क्षुद्रगाम्भारीवृक्षे। ज्योत्स्नायाम्। वै.निघ.।

**मुद्गः**। पुं। (Phaseolus mungo.) स्वनामख्यातशमीधान्यभेदे। मुग इति लोके। মুগ। हिं हारिमु'। मं मुग। कं हेसरेरु। तें पेसलु।



पञ्जा. मूजि। तत्पर्य्यायाः—सूपश्रेष्ठः वर्णार्हः रसोत्तमः भुक्तिप्रदः हयानन्दः सुफलः वाजिभोजनः हरिनामा। तद्भेदा यथा—"कृष्णमुद्गा महामुद्गा गौरा हरितपीतकाः। श्वेता रक्तास्तु निर्द्दिष्टा लघवः पूर्व्वपूर्व्वतः। प्रधाना हरितास्तत्र वन्यमुद्गास्तु मुद्गवत्॥" राज.३प.। सा. गुणाः—"काषायमधुरो रुक्षः शीतः पाके कटुर्लघुः। विशदः श्लेष्मपित्तघ्नः मुद्गः सूप्योत्तमो मतः॥" च.सू. २७अ.। "मुद्गो रुक्षो लघुर्ग्राही कफपित्तहरो हिमः। स्वाद्वल्पानिलो नेत्र्यो ज्वरघ्नो वनजस्तथा। कृष्णमुद्गो महामुद्गो हरितः पीतकस्तथा। श्वेतो रक्तश्च तेषान्तु पूर्व्वः पूर्व्वो लघुः स्मृतः। सुश्रुतेन पुनः प्रोक्तो हरितः प्रवरो गुणैः। चरकादिभिरप्युक्त एष एव गुणाधिकः॥" भा.पू. १भ.धा.व.। "शीतः कषायो मधुरो लघुः स्यात् पैत्तास्रभूदोषहरः सरश्च। विपाकतोऽसौ कटुकप्रधानो मुद्गस्तथान्यः कथितोऽतिरम्यः॥" अत्रि. १५अ.। रक्तपित्ते पथ्यः। शि.यो.र.पि.चि. खण्डखाद्यलौहे। जलवायसे। हे.च.।

**मुद्गदला**। स्त्री। मुद्गपर्ण्याम्। মুগানী। चि.क्र.क.प्रद.चि.।

**मुद्गपर्णी**। स्त्री। (Phaseolus Trilobus or P. Aconitifolius.) वनमुद्गे। মুগানী। हिं माठमुगानी। मं राणमुग। कं काहेसरु। तें पिल्लपेसरचेट्टु। तत्पर्य्यायाः,—काकमुद्गा सहा शिम्बिपर्णिका शिम्बिपर्णी शिम्बी क्षुद्रसहा मार्ज्जारगन्धिका रिङ्गिनी ह्रस्वा सूर्पपर्णी कुरङ्गिका कोशिला वनजा वनमुद्गा वनोद्भवा वन्या आरण्यमुद्गा मुद्गदला करञ्जिका। सु.सू.३८अ.काकोल्यादिः। वा. सू.१५अ, जीवन्त्यादिः। "मेदे द्वे मुद्गमाषपर्ण्यौ च। सा द्विधा सामान्या मार्जारगन्धा चेति। प.मु.। गुणाः—"मुद्गपर्णी हिमा रुक्षा तिक्ता स्वादुश्च शुक्रला। चक्षुष्या क्षतशोथघ्नी ग्राहिणी ज्वरदाहनुत्। दोषत्रयहरी लघ्वी ग्रहण्यर्शोऽतिसारजित्॥" भा.। तद्यूषगुणाः—"आरण्यमुद्गयूषस्तु वृष्यो धातुविवर्द्धनः। रक्तपित्तज्वरतापपित्तकृच्छ्रविनाशनः॥" द्रव्यगु.।

**मुद्गभुक् (भोजी)**। पुं। घोटके। त्रिका.। रा.नि.व.१९।

**मुद्गमोदकः**। पुं। पक्वान्नभेदे। মতিচুর। মুগের লাড়ু। गुणाः—लघुः ग्राही त्रिदोषघ्नः चक्षुष्यः स्वादुः ज्वरघ्नः बल्यः शीतलः रुच्यश्च। तत्साधनविधिः यथा—"मुद्गानां धूमसीं सम्यक् गोलयेन्निर्म्मलाम्बुना। कटाहस्थघृतस्योर्द्ध्वं झर्झरं स्थापयेत्ततः। धूमसीन्तु द्रवीभूतां प्रक्षिपेत् झर्झरोपरि। पतन्ति विन्दवस्तस्मात् तान् सुपक्वान् समुद्धरेत्। सितापाकेन संयोज्य कुर्य्यात् युक्तेन मोदकान्॥" भा.।

**मुद्गयूषः**। पुं, क्ली। चतुर्भागाम्बुसाधितमुद्गरसे। মুগের ঝোল। तत्प्रस्तुतविधिर्यथा,—"मुद्गानां द्विदलं तोये शतमष्टाढकोन्मिते। पादस्थं मर्द्दितं पूतं दाड़िमस्य फलेन तत्॥ युक्तं सैन्धव-विश्वाह्व-धान्यकैः पादकान्वितैः। कणाजीरकयोश्चूर्णैः शनैस्तेनावचूर्णितं॥ संस्कृतो मुद्गयूषोऽयं पित्तश्लेष्महरो मतः। मुद्गानामुत्तमो यूषो दीपनः शीतलो लघुः। व्रणोऽथ जन्तु-तृट्-दाह-कफ-पित्त-ज्वरास्रजित्॥" भा.। प.मु.। स च पित्तपानात्यये वातपित्तज्वरे च हितः। सि.यो.पाना.चि.। च.द. ज्व.चि.। गुणाः—पित्तज्वरघ्नः लघुः सन्तापहरः अरोचकघ्नः रक्तप्रसादनः, सैन्धवयुक्तः सर्व्वरोगघ्नश्च। रा.नि.व.१६। "शीतलं मधुरं मौद्गयूषं पित्तविकारजित्। तच्च वातहरं प्रोक्तं ज्वराणां शमनं परम्॥" अत्रि.१३अ.। "मुद्गयूषो लघुर्ग्राही कफपित्तहरो हिमः। स्वादुर्नेत्र्योऽनिलहरः कुल्माषः शुक्रवर्द्धनः। रक्तपित्तज्वरहरस्तुवरस्तृप्तिकारकः। सन्निपातज्वरहरो ग्लानिनाशकरः स्मृतः॥" द्रव्य.गु.।

**मुद्गरः**। पुं। स्वनामख्याते पुष्पवृक्षविशेषे। গন্ধরাজ। तत्पर्य्यायाः,—गन्धसारः सप्तपत्रः अतिगन्धः गन्धराजः प्रियः जलेष्टः भृगेष्टः। गुणाः—मधुरः शीतः सुरभिः सुखदः पित्तप्रकोपघ्नश्च। रा.नि.व.१०। मल्लिकावृक्षे। मत्स्यविशेषे। মাগুর মাছ। कर्म्मरङ्गवृक्षे। কামরাঙা। रा.नि.व.११। क्ली। मल्लिकापुष्पभेदे। मे.।

**मुद्गरकः**। पुं। कर्म्मरङ्गवृक्षे। কামরাঙ্গা গাছ। रा.नि.व.११।

**मुद्गरफलः**। पुं। कर्म्मरङ्गवृक्षे। क्ली। तत्फले। वै.निघ.।

**मुद्गलम्**। क्ली। रोहिषतृणे। रा.नि.व.८।

**मुद्गवटकः**। पुं। मुद्गकृतवटके। মুগের বড়া। गुणाः—मौद्गो वटो गुरू रुच्यो वातपित्तास्रदो मतः। श्लेष्मलः पुष्टिबलकृत् शुक्रलो बलदोऽल्पतृट्॥" वै.निघ.।

**मुद्गष्टः (कः)** । पुं । वनमुद्गे । मुगानी । श. र. । अम. ।

**मुद्गामलकयूषः** । पुं । मुद्गामलककृते यूषभेदे । गुणाः—'मुद्गामलकयूषस्तु ग्राही पित्तकफे हितः ।' सु.सू.४६ अ. । "मुद्गामलकयूषस्तु भेदी पित्तानिलापहः । तृड्दाहशमनः शीतो मूर्च्छाश्रममदापहः ॥"

**मुद्गार्द्रवटकः** । पुं । वटकविशेषे । आदावड़ा । मुद्गपिष्टीविरचितान् वटकांस्तैलपाचितान् । हस्तेन चूर्णयेत् सम्यक् तस्मिंश्चूर्णे विनिक्षिपेत् । भृष्टं हिङ्ग्वार्द्रकं सूक्ष्मं मरिचं जीरकं तथा । निम्बूरसं यवानीञ्च युक्त्या सर्व्वं विमिश्रयेत् । मुद्गपिष्टीं पचेत्सम्यक् स्थाल्यामङ्गारकोपरि । तस्यास्तु गोलकं कुर्य्यात् तन्मध्ये पूरणं क्षिपेत् । तैले तान् गोलकान् पक्त्वा क्वथितायां निमज्जयेत् ॥" गुणाः—"मुद्गार्द्रवटका रुच्या लघवो बलकारकाः । दीपनास्तर्पणाः पथ्यास्त्रिदोषेषु प्रपूजिताः ॥" भा. ।

**मुद्गोलुब्धः** । पुं । किञ्चिद्भृष्टमुद्गे । सु.चि. २३अ. ।

**मुद्र(द्रि)णी** । स्त्री । लाक्षायाम् । रा.नि.व.६ ।

**मुद्राशङ्खम्** । क्ली । स्वनामख्यातखनिजपदार्थे । मुद्राशङ्ख । गुणौ—सङ्कोचनम् आवरकञ्च ।

**मुद्रिका** । स्त्री । छेदनार्थं भेदनार्थञ्च दशाङ्गुलशस्त्रविशेषे । सा च प्रदेशिन्यग्रपर्व्वप्रदेशप्रमाणा कर्त्तरीति कथ्यते । सु.सू.८अ. ।

**मुनिः** । पुं । दमनकक्षुपे । दाना । रा.नि.व. १० । वकवृक्षे । भैष.कुष्ठ.चि. । "मुनिगुञ्जासुही पयः ।" पलाशवृक्षे । प्रियालवृक्षे । मदनवृक्षे ।

**मुनिका** । स्त्री । ब्राह्मीक्षुपे । वै.निघ. ।

**मुनिखर्जु(र्जू)रिका** । स्त्री । श्रेष्ठपिण्डीखर्जूरे । रा.नि.व.११ ।

**मुनिच्छदः** । पुं । सप्तपर्णवृक्षे । रा.नि.व.१२ ।

**मुनितरुः** । पुं । रक्तवकवृक्षे । लाल वकफुलेर गाछ । र.मा. ।

**मुनिद्रुः (मः)** । पुं । श्योणाकवृक्षे । प.मु. । पृथुशिम्बश्योणाकवृक्षे । बड़ शोणागाछ । रा.नि. व.९ । अगस्त्यवृक्षे । वकफुलेर गाछ । रा.नि. व.१० ।

**मुनिधान्यम्** । क्ली । नीवारधान्ये । उड़िधान । रा.नि.व.१६ ।

**मुनिनिर्म्मितः** । पुं । डिण्डिशफलवृक्षे । ट्याँड़श गाछ । गुणाः—"डिण्डिशो रुचिकृद्भेदी पित्तश्लेष्मापहः स्मृतः । सुशीतो वातलो रूक्षो मूत्रलश्चाश्मरीहरः ॥" भा.पू. भ.शा.व. ।

**मुनिपत्रः** । पुं । दमनकवृक्षे । दना । वै.निघ. ।

**मुनिपादपः** । पुं । वकवृक्षे । प.मु. ।

**मुनिपित्तलम्** । क्ली । ताम्रे । त्रिका. ।

**मुनिपुत्रः (कः)** । पुं । दमनकवृक्षे । दना । भा. । (कः) खञ्जनपक्षिणि । त्रिका. ।

**मुनिपुष्पम्** । पुं, क्ली । अगस्तिपुष्पे । वकफुल । शब्द.कल्प. ।

**मुनिपूगः** । पुं । पूगवृक्षभेदे । ग्रामगुया । त्रिका. ।

**मुनिप्रियः** । पुं । पक्षिराजशालौ । रा.नि.व. १६ । पिण्डखर्ज्जूरवृक्षे । प्रियालवृक्षे । वै.निघ. । स्त्री (या) । तिलवासिनीशालौ । रा.नि.व.१६ ।

**मुनिफलः** । पुं । अगस्तिफलकोषे । वकफुलेर शौंटा । वै.निघ. ।

**मुनिभक्त(क्ष्य)म्** । क्ली । देवधान्ये, नीवारधान्ये । उड़िधान । वै.निघ. ।

**मुनिभेषजम्** । क्ली । हरीतक्याम् । लङ्घने । वकवृक्षे । मे. ।

**मुनिभोजनम्** । क्ली । श्यामाकधान्ये । श्यामाधान । नीवारे । वै.निघ. ।

**मुनिवरः** । पुं । पुण्डरीकवृक्षे । पुण्डरिया । वै.निघ.कास.चि.पर्पटीरसे ।

**मुनिवल्लभः** । पुं । प्रियालवृक्षे । पेयाशाल । वै.निघ. ।

**मुनिवृक्षः** । पुं । अगस्तिवृक्षे । प.मु. ।

**मुनिशस्त्रम्** । क्ली । श्वेतदर्भे । वै.निघ. ।

**मुनिसु(सू)तः** । पुं । दमनकवृक्षे । भा. ।

**मुनिह्वयः** । पुं । समष्ठिलक्षुपे । रा.नि.व.४ ।

**मुनीन्द्रः** । पुं । अगस्तिवृक्षे । लोध्रवृक्षे । वै निघ. । [ प.मु. ।

**मुनीष्टम्** । क्ली । नीवारधान्ये । उड़िधान ।

**मुमूर्षा** । स्त्री । मरणेच्छायाम् ।

**मुमूर्षुः** । त्रि । मरणोन्मुखे ।



**मुरगण्डः** । पुं । वरण्डे । वर्णक । जटा. ।

**मुरङ्गिका** । स्त्री । मूर्व्वायाम् । वै.निघ. ।

**मुर(रु)ङ्गी** । स्त्री । कृष्णशिग्रौ । वै.निघ. । रक्तपुष्पशोभाञ्जनवृक्षे । सु.सू.३९अ.शिरोरो.वि. । अत्र सुरङ्गीति डल्वणपाठः, तेन स एवार्थः । सु. चि.३अ. । काकमाच्याम् ।

**मुरजफलः** । पुं । पनसवृक्षे । त्रिका. ।

**मुरलः** । पुं । मत्स्यविशेषे । मउरला माछ । गुणाः—वृंहणो वृष्यस्तन्यश्लेष्मकरश्च । सु.सू.४६अ.

**मुरा (मांसी)** । स्त्री । गुज्जरदेशे स्वनामख्यात गन्धद्रव्ये । मुरामांसी । मं मुरा । कं मुरे । तत्पर्य्यायाः,—तालपर्णी दैत्या गन्धकुटी गन्धिनी भूतगन्धा । सि.यो.च.द.यक्ष्म.चन्दनादितैले । भा. म.१भ. वित्तविभ्रमज्व.चि. । गुणाः—कटुः तिक्ता शीता कषाया कफपित्तहृत् श्वासरक्तविषदाहभ्रमतृष्णाघ्नी च । रा.नि.व.१२ । "मुरा तिक्ता हिमा स्वाद्वी लघ्वी पित्तानिलापहा । ज्वरासृग्भूतरक्षोघ्नी कुष्ठकासविनाशिनी ॥" भा.पू.१भ. । "किञ्चित् पीता मुरा शस्ता मांसी पिङ्गजटाकृतिः ।" भैष. ।

**मुर्भिणी** । स्त्री । पङ्गारधानिकायाम । श.च. ।

**मुर्म्मुरः** । पुं । तुषाग्नौ । तुषेर आगुन । मे. ।

**मुशटी** । स्त्री । श्वेतकङ्गौ श्वेत कङ्गुधान । हे.च. ।

**मुश(ष)लिका (ली)** । स्त्री । (Curculigo orchioides or hypoxis orchioides.) तालमूलीनामकन्दशाके । तालमूली । हिं मुषली, कालीमुषली, सिया । तें निलतलिगड्डलि, नेलताड़ि । रा.नि.व.७ । र.सा.सं. । शाल्मल्याम् । वा.उ.३२अ. । गुणाः—ध्वजभङ्गेऽर्शसि प्रमेहे च हिता । See तालमूली । गृहगोधिकायाम् । श.र. ।

**मुश(ष)लीकन्दः** । पुं । तालमूल्याम् । वै.निघ. ।

**मुषकः** । पुं । मूषिके । वै.निघ. ।

**मुषा(षी)** । स्त्री । स्वर्णादिगालनपात्रे । मुचि । अ.टी.रा. ।

**मुष्कः** । पुं । अण्डकोषे । रा.नि.व.१८ । मुष्ककवृक्षे । घण्टापारुल । मे. । मांसले । हे.च. ।

**मुष्ककः** । पुं । (Schrebera swietenioides.) घण्टापाटलवृक्षे । पलाशवत् पर्व्वतवृक्षे । घण्टापारुल । हिं मोखा । मं मोखे । कं मोखदलाइ । तें मोक्कपुचेट्टु, मुष्कतुन्डुचेट्टु । तत्पर्य्यायाः,—मुक्षकः मोक्षः मुष्कः मोचकः मोचकः सुक्षकः गोलिकः मेहन पाटली विषापहः जटालः वनवासी सुतीक्ष्णक क्षारवृक्षः क्षारश्रेष्ठः । भा. । वा.सू.१५अ । गुणाः—"मुष्ककः कटुकोऽम्लश्च रोचनः पाचनः परः । प्लीहगुल्मोदराशोघ्नो द्विधा तुल्यगुणान्वितः ॥" रा.नि.व.११ ।

**मुष्ककादिवर्गः** । पुं । मुष्ककस्नुक्वराद्वीपिपलाशधवशिंशपा इति गणे । गुणाः—गुल्ममेहाश्मरीपाण्डुमेदोऽर्शःकफशुक्रघ्नः । वा.सू.१५अ. । अपिच,—"मुष्कक-पलाश धव-चित्रक-मदन वृक्षक-शिंशपा-वज्र वृक्षास्त्रिफला चेति । मुष्ककादिर्गणोह्येष मेदोघ्नः शुक्रदोषहृत् । मेहार्शः पाण्डुरोगघ्नः शर्कराश्मरीनाशन. ॥" सु.सू.३८अ. ।

**मुष्करः** । पुं । महाण्डकोषमनुष्ये । कुरुण्डे । हे.च. ।

**मुष्कशून्य** । पुं । षण्डे । खोजा । श.मा. ।

**मुष्टः** । त्रि । मर्द्दिते । मर्द्दानि देओया ।

**मुष्टिः** । पुं, स्त्री । अन्तर्नखमुष्टौ । मूठा । भा.म.५भ.कर्णरो.चि । "अन्तर्नखमुष्टिमुखं यष्टीमधुकं कषायेः ।" सु.सू.४२अ. । संहतपिण्डिताङ्गुलिकरे । "मुष्टिर्भवेत् संहतपिण्डिताङ्गुला वाकुञ्चितोऽयं प्रसृतिः प्रकीर्त्तितः ।" रा.नि.व.१८ । पले । ८ तो. । प.प्र१ख. । त्सरौ । घण्टापाटलवृक्षे । र.मा. । र.सा.सं. शूलचि.अग्निमुखरसे ।

**मुष्टिकः** । पुं । बलिदानयोग्योपकरणविशेषे । वा.कुमारतन्त्रम् ।

**मुष्टिन्धयः** । पुं । बालके । त्रिका. ।

**मुष्टिप्रमाणबदरम्** । क्ली । सेवफले । सेओ फल । भा. ।

**मुष्टियोगः** । पुं । "उद्धृत्य मुष्टिनाच्छाद्य सगुणं यन्निधापयेत् । तं मुष्टियोगमित्याहुर्विबुधा भिषगीश्वराः ॥" इति परिभाषान्तरम् ।

**मुष्ठकः** । पुं । राजसर्षपे । र.मा. ।

**मुसली** । स्त्री । तालमूल्याम् । प.मु.महाभल्लातकगुड़े । गृहगोधायां । टिकटिकि । अम. ।

**मुस्तः** । पुं, क्ली । मुस्तके । छारा. । सु.कल्प.२अ. ।

च.द.पित्त.ज्व.चि.कालिङ्गादिः। "कालिङ्ग' कट्फलं मुस्तम्।" च.सु.४अ.। कन्दविषभेदे। प मु.।

**मुस्तकः।** क्ली। (Cyperus rotundus. Syn. Hexastachyos. Roxb.) स्वनामख्यातगन्धद्रव्ये। मुता। हिं मोथा। तं तुगमुस्त। सकहतुङ्ग विरु। तां। कोरय। तत्पर्य्यायाः,—कुरुविन्दः मेघनामा मुस्ता अम्बुवाहः अम्बुभृत् तड़िल्वान् वलाहकः वारिवाहः स्तनयित्नुः तोयदः तोयधरः भद्रं भद्रमुस्तकं भद्रा श्रीभद्रा। गुणाः—तिक्तकषायं शीतं पाचनं पित्तज्वरघ्नं ग्राहि च। रा.नि.व.६। अनूपदेशे यज्जातं मुस्तकं तत् प्रशस्यते।" तत्रापि तु नागरमुस्तं वरम्। भा.। "हिमुस्तं नूतनं पुष्टं गन्धाढ्यं परमं विदुः।" भैष.। (C. Pertenuis. Syn. Mariscus cyperus.) नागरमुस्तके। तच्छुद्धिर्यथा—"मुस्तकन्तु मनाक् चुस्तं काञ्जिके त्रिदिनोषितं। पञ्चपल्लवतोयेन भञ्जयेच्चूर्णयेत्ततः। आजशोभाञ्जनजलैर्भावयेच्चेति शुध्यति॥" भैष.वा.व्या.चि.। पुं। स्थावरविषभेदे। र.मा.।

**मुस्तकादिः।** पुं। विषमज्वरे कषायभेदे। "मुस्तामलकगुड़ूचीविश्वौषधकण्टकारिकाक्वाथः। पीतः सकणाचूर्णः समधुर्विषमज्वरं हन्ति॥" भैष.ज्व.चि.। [ च.द.वा.व्या.चि.महाप्रसारणीतैले।

**मुस्तद्वयम्।** क्ली। नागरमुस्तकैवर्त्तिमुस्तयोः।

**मुस्ता।** स्त्री। भद्रमुस्तायाम्। अम.। वा.सू.१५ अ.। "मुस्तावचाग्नि।"

**मुस्ताकृतिः।** स्त्री। शट्यां। वै.निघ.।

**मुस्तादः।** पुं। शूकरे। जटा.।

**मुस्ताद्यगणः।** पुं। मुस्ताद्यष्टादशद्रव्यगणे। तत्कृतकषायः सन्निपातज्वरे पित्तोत्तरसन्निपाते च हितः। "मुस्तपर्पटकोशीरदेवदारुमहौषधम्। त्रिफला धन्वयासश्च नीली कम्पिल्लकं त्रिवृत्॥ किराततिक्तकं पाठा बला कटुकरोहिणी। मधुकं पिप्पलीमूलं मुस्ताद्योगण उच्यते॥" च.द.सा.ज्व.चि.। अयं मुस्ताद्यष्टादशाङ्ग इति संग्रहान्तरे। अपिच,— "मुस्ता-हरिद्रा-दारुहरिद्रा-हरीतक्यामलक-विभीतक-कुष्ठहैमवतीवचापाठा-कटुरोहिणी शार्ङ्गष्टातिविषा-द्राविड़ीभल्लातकानि चित्रकश्चेति। एष मुस्तादिकोनाम्ना गणः श्लेष्मनिषूदनः। योनिदोषहरः स्तन्यशोधनः पाचनस्तथा॥" सु.सू.३८अ.।

**मुस्ताभम्।** क्ली। नागरमुस्तायाम्। र.मा.। तत्पर्य्यायाः,—कुटन्नटं पूरं वन्यं परिपेलवम्। See मुस्तकः।

**मुहूर्त्तः।** पुं। घटिकाद्वये। सु.सू.५अ.।

**मुष्कः।** पुं। मुष्ककवृक्षे। अरुणः।

**मूः (र्)।** स्त्री। मूर्च्छायाम्।

**मूकः।** पुं। तन्नामकवातरोगविशेषे। বোবা। निदानलक्षणे—"आवृत्य वायुः सकफो धमनीः शब्दवाहिनीः। नरान् करोत्यवचनान् मूकमिण्मिणगद्गदान्॥" सु.चि.१अ.। मत्स्ये।

**मूढ़म्।** क्ली। मूर्च्छायाम्। त्रि। जड़े। हे.च.।

**मूढ़गर्भः।** पुं। गर्भजरोगे। গর্ভস্রাবাদি রোগ। "तमेव कदाचिद्विगुणमसम्यगागतमपत्यपथमनुप्राप्तमनिबध्यमानमपानवैगुण्यसम्मोहितं गर्भं मूढ़गर्भमित्याचक्षते।" स चतुर्विधः—कीलः प्रतिखुरः वीजकः परिघ इति केचित्। सुश्रुतस्त्वष्टविधमाह। सु.नि.८अ.। सु.शा.। एषां विशेषाः स्वस्वपर्य्याये मृग्याः। तस्य निदानं यथा—"भयाभिघातात्तीक्ष्णोष्णपानाशननिषेवणात्। गर्भे पतति रक्तस्य सशूलं दर्शनं भवेत्॥ गर्भोऽभिघातविषमाशनपीड़िताद्यैः पक्वं द्रुमादिव फलं पतति क्षणेन। मूढ़ः करोति पवनः खलु मूढ़गर्भं शूलञ्च योनिजठरादिषु मूत्रसङ्गम्॥" मा.नि.।

**मूढ़िः।** स्त्री। मूर्च्छायाम्। रा.नि.व.२०।

**मूत्रम्।** क्ली। आहारस्य सारहीनमलद्रवे। प्रस्रावे। প্রস্রাব, মূৎ। रा.नि.व.१८। "शिराभिस्तज्जलं नीतं वस्तौ मूत्रत्वमाप्नुयात्।" शार्ङ्ग.६अ.। सा.मूत्रगुणाः—"मूत्रम् आलेपने प्रलेपे आस्थापने निरूहवस्तौ विरेचनेऽधोभागहरणे च।" च.सू.१ अ.। "मूत्रं तीक्ष्णोष्णलवणं पित्तकृत्कटुकं लघु। रुच्यं क्रिमुदरानाहशोथार्शोविषकुष्ठनुत्॥" राज. ३प.। तच्च दश—गोच्छागमेषमहिषगजाश्वोष्ट्रगर्द्दभनरनारीमूत्रभेदेन। विशेषाः तत्तत्पर्य्याये मृग्याः। "शूलगुल्मोदरानाहवातविच्छर्द्दनादिषु। मूत्रप्रयोगसाध्येषु गोमूत्रङ्कल्पयेद्बुधः॥" रा.नि.व.१५। "अजागवीगतं मूत्रं पाने शस्तं भिषग्वर। आविकं माहिषञ्चाश्वं तैलपाके विधीयते॥" अत्रि.९अ.। अप्रसूतायाः प्रसूतायाश्च मूत्रगुणाः—"अप्रसूताया घनं मूत्रं प्रसूताया द्रवं लघु। न किं गुणविशेषः स्यात्समता पाकवीर्य्ययोः॥" अत्रि.९अ.। सु.सू. ४५अ शिरो.वि.। मूत्रपरीक्षा—"वातेन पाण्डुरं मूत्रं रक्तं नीलञ्च पित्ततः। रक्तमेव भवेद्रक्तात् धवलं फेनिलङ्कफात्॥" भा.।

**मूत्रकृच्छ्रम्।** क्ली। मूत्ररोधरोगे। मूत्रस्य कृच्छ्रेण महता दुःखेन प्रवृत्तौ। त्रि.र.। तच्चाष्टविध—वातादिभेदेन चत्वारि, शल्यजपुरीषजशुक्रजाश्मरीजत्वाच्च चत्वारीति। तस्य निदानं—'व्यायामतीक्ष्णौषधरूक्षमद्यप्रसङ्गनित्यद्रुतपृष्ठयानात्। आनूपमत्स्याध्यशनादजीर्णात् स्युर्मूत्रकृच्छ्राणि नृणां तथाष्टौ॥" लक्षणं—"पृथङ्मलाः स्वैः कुपिता निदानैः सर्व्वेऽथवा कोपमुपेत्य वस्तौ। मूत्रस्य मार्गं परिपीड़यन्ति यदा तदा मूत्रयतीह कृच्छ्रात्॥" मूत्रकृच्छ्रमूत्राघातयोरयं विशेषः—तत्र प्रथमे कृच्छ्रत्वमतिशयितम् ईषद्विबन्धश्च। द्वितीये विबन्धो बलवान् कृच्छ्रत्वमल्पमिति। वि.र.।

**मूत्रकोशः।** पुं। मूत्राशये। ज.द.२अ.।

**मूत्रग्रन्थिः।** पुं। मूत्राघातरोगविशेषे। लक्षणं यथा—"अन्तर्वस्तिमुखे वृत्तः स्थिरोऽल्पः सहसा भवेत्। अश्मरीतुल्यरुग्ग्रन्थिर्मूत्रग्रन्थिः स उच्यते॥" मा.नि.। अश्मर्य्यां पित्तादि कुप्यति अत्र तु रक्तमेवेति भेदः। वि.र.।

**मूत्रग्रहः।** पुं। अश्वस्य मूत्रसङ्गरोगे। लक्षणं यथा—"स्तोकं स्तोकं सफेणञ्च कृच्छ्रान्मूत्रं करोति यः। तस्य वातसमुत्थन्तु विद्यान्मूत्रग्रहं बुधः। दाहोच्छ्वासयुतः पित्तान्मूत्ररोगः प्रजायते। वाजिनः पीतमूत्रस्य अथवा रक्तमूत्रिणः। कफजे मूत्ररोगे तु सान्द्रमूत्रं सपिच्छिलम्॥" ज.द.४७अ.।

**मूत्रजठरः।** पुं। मूत्राघातभेदे। तस्य लक्षणं—"मूत्रस्य वेगेऽभिहते तदुदावर्त्तहेतुकः। अपानः कुपितो वायुरुदरं पूरयेद्भृशम्। नाभेरधस्तादाध्मानं जनयेत्तीव्रवेदनम्। तन्मूत्रजठरं विद्यादधोवस्तिनिरोधजम्॥" मा.नि.।

**मूत्रदशकम्।** क्ली। दशविधमूत्रेषु हस्तिमेषोष्ट्रगवाजमहिषघोटकगर्द्दभमानुषीमानुषजातेषु। "मूत्राणि हस्तिमहिषोष्ट्रगवाजकानां मेषाश्वरासभकमानुषमानुषीणाम्। यत्नेन यत्र मिलितानि दशेति तानि शास्त्रेषु मूत्रदशकाह्वम्......॥" रा.नि.व.२२।

**मूत्रदोषः।** पुं। प्रमेहरोगे। उदकमेहादौ। প্রস্রাবের দোষ। रा.नि.व.२०।

**मूत्रनिरोधः।** पुं। मूत्ररोधरोगे। निदा.।

**मूत्रपञ्चकम्।** क्ली। पञ्चविधमूत्रेषु। "गवामजानां मेषीणां महिषीणाञ्च मिश्रितम्। मूत्रेण गर्द्दभीनाञ्च तन्मतं मूत्रपञ्चकम्॥" रा.नि.व.२२।

**मूत्रपतनः।** पुं। गन्धमार्जारे। গন্ধগোকুল। रा.नि.व.१९।

**मूत्रपथः।** पुं। योनौ। वै.निघ.। उपस्थे।

**मूत्रपरीक्षा।** स्त्री। मूत्रस्य वातादिदोषबाहुल्यनिर्णये। तल्लक्षणं यथा,—"वातेन पाण्डुरं मूत्रं रक्तं नीलञ्च पित्ततः। रक्तमेव भवेद्रक्तात् धवलं फेनिलं कफात्॥"

**मूत्रपुटम्।** क्ली। वस्तौ, नाभेरधोभागे। "नाभेरधो मूत्रपुटो वस्तिर्मूत्राशयोऽपि च।" हे.च.।

**मूत्रफला।** स्त्री। कर्कट्याम्। কাঁকুড়। रा.नि.व.७। त्रपुषे। शशा।

**मूत्रवीजकः।** पुं। असनवृक्षे। वै.निघ.।

**मूत्ररोधः।** पुं। मूत्रकृच्छ्ररोगे, मूत्रसङ्गे। रा.नि.व.२०।

**मूत्रलम्।** क्ली। त्रपुषे। शशा। त्रि। वस्तिशोधने। श.च.। स्त्री। चिर्भटिकायाम्। फुटी। रा.नि.व.७। कर्कटिकायां। त्रिका.।

**मूत्रवर्गः।** पुं। मूत्रदशकेषु।

**मूत्रवहनाड़ी।** स्त्री। या आमाशयाद्वस्तौ मूत्रं नयति। "पक्वाशयगतास्तत्र नाड्यो मूत्रवहास्तु याः। तर्पयन्ति सदा मूत्रं सरितः सागरं यथा। सूक्ष्मत्वान्नोपलभ्यन्ते मुखान्यासां सहस्रशः। नाड़ीभिरुपनीतस्य मूत्रस्यामाशयान्तरात्॥" सु.नि.३अ.।

**मूत्रवृद्धिः।** स्त्री। मूत्रजनित-वृद्धिरोगे। लक्षणं—मूत्रसन्धारणशीलस्य मूत्रवृद्धिर्भवति सा गच्छतोऽम्बुपूर्णा दृतिरिव क्षुभ्यति मूत्रकृच्छ्रवेदनां वृषणयोः शोफं कोषयोः करोति च। मा.नि.।

**मूत्रशुक्रम्।** क्ली। मूत्राघातरोगविशेषे। लक्षणं "मूत्रितस्य स्त्रियं यातो वायुना शुक्रमुद्धतम्। स्थानाच्च्युतं मूत्रयतः प्राक् पश्चाद्वा प्रवर्त्तते। भस्मोदकप्रतीकाशं मूत्रशुक्रं तदुच्यते॥" मा.नि.।

**मूत्रशोधनिका।** स्त्री। चिर्भटिकायाम्। वनकर्कटीविशेषे। वै.निघ.।

**मूत्रशोलाग्रम्।** क्ली। श्लेष्मजन्यमूत्ररोगे। भा.।

**मूत्र(स्रोत्)सङ्गः।** पुं। मूत्राघातभेदे। तस्य

लक्षणं—"वस्तौ वाप्यथवा नाले मणौ वा यस्य देहिनः। मूत्रं प्रवृत्तं सज्जेत सरक्तं वा प्रवाहतः। स्रवेच्छनैरल्पमल्पं सरुजं वाथ नीरुजम्। विगुणानिलजो व्याधिः स मूत्रोत्सङ्गसंज्ञितः॥" मा.नि.।

**मूत्रसादः**। पुं। मूत्राघातभेदे। लक्षणं—"पित्तं कफो द्वावपि वा संहन्येतेऽनिलेन चेत्। कृच्छ्रान्मूत्रं तदा पीतं रक्तं श्वेतं घनं स्रवेत्। सदाहं रोचनाशङ्खचूर्णवर्णं भवेच्च तत्। शुष्कं समस्तवर्णं वा मूत्रसादं वदन्ति तम्॥" मा.नि.।

**मूत्रक्षयः**। पुं। मूत्राघातभेदे। "रूक्षस्य क्लान्तदेहस्य वस्तिस्थौ पित्तमारुतौ। मूत्रक्षयं सरुग्दाहं जनयेतां तदाह्वयम्॥" मा.नि.।

**मूत्राघातः**। पुं। त्रयोदशविधमूत्ररोधरोगे। निदानादि—"जायन्ते कुपितैर्दोषैर्मूत्राघातास्त्रयोदश। प्रायो मूत्रविघाताद्यैर्वातकुण्डलिकादयः॥" यथा—वातकुण्डलिका अष्ठीला वातवस्तिः मूत्रातीतः मूत्रजठरः मूत्रोत्सङ्गः मूत्रक्षयः मूत्रग्रन्थिः मूत्रशुक्रम् उष्णवातः मूत्रसादः विड्विघातः वस्तिकुण्डलः इति। मा.नि.। सुश्रुते द्वादश उक्ताः। एषां लक्षणानि स्वस्वपर्य्याये द्रष्टव्यानि।

**मूत्रातिसारः**। पुं। मूत्रबाहुल्यरोगे। सोमरोगे। বহুমূত্র।

**मूत्रातीतः**। पुं। मूत्राघातभेदे। तस्य लक्षणं—"चिरं धारयतो मूत्रं त्वरया न प्रवर्त्तते। मेहमानस्य मन्दं वा मूत्रातीतः स उच्यते॥" मा.नि.।

**मूत्राधिक्यम्**। क्ली। श्लेष्मजन्यमूत्रबाहुल्यरोगे। মূত্রাতিসার। भा.।

**मूत्राशयः**। पुं। नाभेरधो-वस्तिस्थाने। "वस्तिर्मूत्राशयः स्मृतः।" रा.नि.व.१८।

**मूत्राष्ट(क)म्**। क्ली। "गोऽजाविमहिषाश्वानां खरोष्ट्रकरिणां तथा। मूत्राष्टकमिति ख्यातं सर्व्वशास्त्रेषु सम्मतम्॥" प.प्र.२ख.। भा.म.४भ.बाल.चि.।

**मूत्रिका**। स्त्री। सल्लकीवृक्षे। वै.निघ.।

**मूत्रोष्णता**। स्त्री। पित्तजन्यमूत्ररोगे। भा.।

**मूर्खः**। पुं। वनमुद्गे। माषे। মাষকলায়। त्रिका.। स्त्री (र्खा)। मूर्व्वायाम्। वै.निघ.।

**मूर्च्छनम् (ना)**। क्ली, स्त्री। पारदस्य संस्कारविशेषे। रस.चि.२अ.। See पारदः।

**मूर्च्छा**। स्त्री। सर्व्वथा ज्ञानशून्यतायां, रूपादेरज्ञाने। सा पित्ततमोजाता। भा.म.१भ.ज्व.चि.। "मूर्च्छा दाहो मदस्तृषा।" रोगविशेषे। মূর্চ্ছা রোগ। तत्पर्य्यायाः,—कश्मलं मोहः सम्मोहः मूर्च्छनं मूर्च्छायः। निदानं—"क्षीणस्य बहुदोषस्य विरुद्धाहारसेविनः। वेगघातादभीघातात् हीनसत्त्वस्य वा पुनः। करणायतनेषूग्रा वाह्येष्वाभ्यन्तरेषु च। निविशन्ते यदा दोषास्तदा मूर्च्छन्ति मानवाः। संज्ञावहासु नाड़ीषु पिहितास्वनिलादिभिः। तमोऽभ्युपैति सहसा सुखदुःखव्यपोहकृत्। सुखदुःखव्यपोहाच्च नरः पतति काष्ठवत्। मोहो मूर्च्छेति तामाहुः षड्विधा सा प्रकीर्त्तिता। वातादिभिः शोणितेन मद्येन च विषेण च। षट्स्वप्येतासु पित्तन्तु प्रभुत्वेनावतिष्ठते। हृत्पीड़ा जृम्भणं ग्लानिः संज्ञानाशो बलक्षयः। सर्व्वासां पूर्व्वरूपाणि यथास्वं तं विभावयेत्... ॥" मा.नि.।

**मूर्च्छालः**, **मूर्च्छितः** } त्रि। मूर्च्छायुक्ते। अम.।

**मूर्त्तिः (मत्)**। स्त्री, क्ली। शरीरे। रा.नि.व.१८। त्वचायाम्। वै.निघ.।

**मूर्द्धकर्णी (र्परी)**। स्त्री। छत्रे। हारा.।

**मूर्द्धखोलः**। पुं। जलत्राणायाम्। টোকা, পেকে। त्रिका.।

**मूर्द्धजः**। पुं, क्ली। केशे। रा.नि.व.१८। स्त्री (जा)। बालके। বালা। भा.म.१भ.चित्तविभ्रमज्व.चि.। "सुरामूर्द्धजमेघाह्व... ॥"

**मूर्द्धपुष्पः**। पुं। शिरीषवृक्षे। श.मा.।

**मूर्द्धरसः**। पुं। अन्नफेने। ভাতের ফেন। श.च.।

**मूर्द्धवेष्टनम्**। क्ली। उष्णीषे। পাগড়ী। हे.च.।

**मूर्द्धा (न्)**। पुं। मस्तके। रा.नि.व.१८।

**मूर्व्वा**। स्त्री। (Sansevieria zeylanica. Syn. S. Roxburghiana.) Bow string hemp. स्वनामख्यातक्षुपे। धनुर्गुणोपयोग्या कदलीसदृशस्वल्पविटपा दुधउड़, हधोड़ इति च लोके। सु.सू.३८।३९अ.पित्तशमने। মূর্ব্বা, মুর্গা, মূরহর, সূচমুখী, বোড়াচক্র। हिं चूर्णहार। धं गोनसफण। तें चागचेट्टु, सग, चग। बम्. मोरवेल, मुहरसि। ता. मरूल। तत्पर्य्यायाः,—देवी मधुरसा मोरटा तेजनी स्रवा मधुलिका धनुःश्रेणी गोकर्णी पीलुपर्णी कर्म्मकरी दृढ़सूत्रिका धनुर्गुणा धनुर्मालि धनुःशाखा स्रुवा मूर्व्वी मधुश्रेणी श्रेणी धनुः सुरङ्गिका देवश्रेणी पृथक्त्वचा मधुस्रवा अतिरसा पीलुपर्णिका दिव्यलता ज्वलिनी गोपवल्ली। गुणाः—"सरा गुरुः स्वादुस्तिक्ता पित्तास्रमेहनुत्। त्रिदोषतृष्णाहृद्रोगकण्डूकुष्ठज्वरापहा॥" भा.। मूलं राजयक्ष्महरम्। मूर्व्वाभावे पिप्पलीमूलं। सि.यो. कफजसंशमने।

**मूलम्**। क्ली। पिप्पलीमूले। पुष्करमूले। কুড়-বিশেষ। रा.नि.व.६। वै.निघ.वा.व्या.प्रत्यष्ठीला.चि.। धा.उ.५ख.। तरुमूले।। रा.नि.व.२। हेतौ। भा.। कारणे। च.सू.१अ.।

**मूलकम्**। क्ली, पुं। (Raphauns sativus.) Radish. स्वनामख्यातमूलशाकविशेषे। মূলা। हिं दा. मूली। मं कं ता. मूलंगि। तें मूलंगिचेट्टु। तत्पर्य्यायाः,—राजालुकः महाकन्दः रुरुकन्दकं हस्तिदन्तं हस्तिदन्तकं नीलकण्ठं मलाहं दीर्घपत्रकं दीर्घमूलकं मृत्क्षारं कन्दमूलं सितं शङ्खमूलं हरित्पर्णं रुचिरं दीर्घकन्दकं कुञ्जरक्षारमूलं। मूलकं पञ्चविधं—चाणक्य-टङ्कन-पिण्ड-बाल-गर्ज्जरभेदेन। विशेषास्तत्तत्पर्य्याये द्रष्टव्याः। भावमिश्रेण मूलकस्य द्विभेदः कृतः बालं महच्चेति। কচি মূলা ও পাকা মূলা। सा. गुणाः—"मूलकं कटुकमपि श्लेष्माणं संवर्द्धयति स्निग्धवीर्य्यत्वात्।" सु.सू.४०अ.। तीक्ष्णम् उष्णं कटूष्णं ग्राहि दीपनम् अर्शोगुल्महृद्रोगहरं गुरु रुच्यं वातघ्नञ्च। रा.नि.व.७। स्वर्य्यं श्वासाक्षिपीनसघ्नञ्च। शुष्कं तत् शोथघ्नं लघु त्रिदोषघ्नञ्च। तत्पुष्पं पित्तश्लेष्मघ्नं। फलं वातकफघ्नञ्च। मद.व.७। लघु तत्—कटु उष्णं लघु पाचनं रुच्यं त्रिदोषघ्नं स्वर्य्यं ज्वरश्वासघ्नं नासारोगघ्नं कण्ठरोगघ्नं नेत्रामयहरञ्च। महत्तत् रूक्षोष्णं गुरु त्रिदोषजनकं। स्नेहसिद्धं तत् त्रिदोषघ्नम्। तत्तैलगुणाः... तीक्ष्णं लघु उष्णवीर्य्यं कटु कटुविपाकं सरं वातकफकृमिकुष्ठप्रमेहशिरोरोगहरञ्च। सु.सू.४५अ.। तत्पत्रगुणाः..."पाचनं लघु रुच्योष्णम्।" "पत्रं मूलकजं नवम्। स्नेहसिद्धं त्रिदोषघ्नमसिद्धं कफपित्तकृत्॥" भा.पू.१भ.शा.व.। "मूलकं गुरु विष्टम्भि तीक्ष्णमामं त्रिदोषकृत्। तदेव स्नेहपक्वं स्यात्कफकृद्वातपित्तजित्॥" "बालमूलकपत्री तु रोचनी वह्निदीपनी।" राज.३प.। तत्कृतयूषगुणाः—"मूलकयूषो हरति लालास्रावं गलग्रहं जूर्त्तिं। मेदारोचकपीनसकासकफव्याधिनाशनश्चापि॥" द्रव्यगु.। उशीरे। रा.नि.व.१२। शिग्रुमूले। विषभेदे। हे.च.।

**मूलकच्छदः**। पुं। कृष्णशिग्रौ। কাল সজিনা। वै.निघ.।

**मूलकपर्णी**। स्त्री। शोभाञ्जनवृक्षे। সজিনা গাছ। र.मा.।

**मूलकपोता**। स्त्री। बालमूलके। কচি মূলা। वा.चि.९अ.।

**मूलकपोतिका**। स्त्री। अतिबालमूलके। অতি কচি মূলা। योग.र.मध्यज्वरे। गुणाः—कटुतिक्तरसा उष्णवीर्य्या लघुपाका। प्रभावश्च सर्व्वदोषघ्नता रुचिजनकता च। "सर्व्वदोषहरा लघ्वी कण्ठ्या मूलकपोतिका।" सु.सू.४६अ.। चाणक्यमूलके। वै.निघ.।

**मूलकबीजम्**। क्ली। मूलकशस्ये। মূলার বিচি। भा.।

**मूलकमूला**। स्त्री। चोरीशवृक्षे। [illegible]। चोरकाकोल्याम्। वै.निघ.।

**मूलककर्कटी**। स्त्री। कृष्णोदुम्बरे। वै.निघ.।

**मूलकविषम्**। क्ली। कन्दविषभेदे। सु.[illegible] २अ.। See कन्दविषं।

**मूलकशाकः**। पुं। मूलकपत्रे।

**मूलकक्षारः**। पुं। शुष्कमूलकक्षारे। च.द. ग्रन्थि.चि.। [ व.८।

**मूलग्रन्थिः**। स्त्री। वंशदूर्व्वायाम्। रा.नि.

**मूलजः**। त्रि। यो मूलादुत्पद्यते। यथा पद्मादिकम्। हे.च.। क्ली। आर्द्रके। আদা। रा.नि.व.६।

**मूलजिह्वा**। स्त्री। सूक्ष्मजिह्वाधोवर्त्तिजिह्वामूले। रा.नि.व.१८।

**मूलपर्णी**। स्त्री। मण्डूकपर्ण्याम्। থুলকুড়ি। प.मु.।

**मूलपुष्करम्**। क्ली। पुष्करमूले। কুড়ভেদ। रा.नि.व.६।

**मूलपोती**। स्त्री। मालवे प्रसिद्धायां पोतिकायाम्। मं मालविरलि। कं तोंठदवसले।

तत्पर्य्यायाः,—क्षुद्रवल्ली पोतिका क्षुद्रपोतिका क्षुद्रोपदकनाम्नी वल्लीशाकटपोतिका । गुणाः—त्रिदोषघ्नी हृष्या बल्या लघुः कान्तिपुष्टिकरी रुच्या जठरानलदीपनी च । रा.नि.व.७ । आराम वल्लिकायाम् । रा.नि.व.२३ ।

**मूलफलः (ला)** । पुं, स्त्री । पनसवृक्षे । वै. निघ. ।

**मूलफलदः** । पुं । पनसवृक्षे । কাঁঠাল গাছ । रा.नि.व.११ ।

**मूलरसः** । पुं । मोरटलतायां । र.मा. ।

**मूलविरेचनम्** । क्ली । वृहतादिश्रिफाद्यव-श्रेष्ठविरेचने । तदुक्तं—"सप्तला शङ्खिनी दन्ती द्रवन्ती गिरिकर्णिका । वृश्चिकामोदकौर्य्या च प्रकीर्य्या चोरिणी तथा । छगलाङ्घ्री गवाक्षी च क्षुधाक्षी गिरिकर्णिका । मसूरविदला चैव भवेन्मूलविरेचनम् ॥" वा.चि.१५. ।

**मूलविषम्** । क्ली । स्थावरविषाश्रयकरवीरादौ । गुणाः—उद्वेष्टनं मोहकरं प्रलापजनकञ्च । भा.म.४भ.विष.चि. । क्लीतकाश्वमारगुञ्जासुगन्ध-गर्गरककरघाटविद्युच्छिखाविजयानीति अष्टौ मूलविषाणि । "उद्वेष्टनं मूलविषैः प्रलापो मोह एव च ।" सु.कल्प.२अ. । [ व.१ ।

**मूलवीरम्** । क्ली । पुष्करमूले । কুড় । मद.

**मूलवृक्षः** । पुं । शाल्मलिवृक्षे । শিমুল গাছ रा.नि.व.८ ।

**मूलशाकः** । पुं । मूलप्रधानशाके । शूरणादौ । ते च शूरणगुणाः । राज.३प. ।

**मूलशो(सा)धनः** । पुं । पुण्डरीकवृक्षे । পুণ্ডরিয়া । वै.निघ. ।

**मूला (ली)** । स्त्री । गृहगोधिकायां । त्रिका. । शतावर्य्यां । रा.नि.व ४ ।

**मूलाधारः** । पुं । गुह्यलिङ्गयोर्मध्ये अङ्गुलिद्वय-मितस्थाने । तन्त्रम् ।

**मूलाह्वम्** । क्ली । मूलके । মূলা । रा.नि.व.७ ।

**मूलिका** । स्त्री । मूलके । मूलसमूहे । मूलौषधौ । रस.र.रसशोधने । चोरिकायाम् । वै.निघ. ।

**मूलिकामूलम्** । क्ली । चोरिकामूले । वै. निघ.२भ.सर्वज्व.चि. ।

**मूलिनीवर्गः** । पुं । प्रयोगे प्रशस्तमूलानामु-ष्णिनां षोड़शगणे । "हस्तिदन्ती (नागदन्ती) हैमवती (श्वेतवचा) श्यामा त्रिवृदधोगुड़ा । सप्तला श्वेतश्यामा च प्रत्यक्श्रेणी गवाक्ष्यपि । ज्योतिष्मती च विम्बी च शणपुष्पी विषाणिका । अश्वगन्धा द्रवन्ती च चोरिणी चाथ षोड़श ॥" एषु शणपुष्पी हैमवती विम्बी च छर्द्दने । श्वेता ज्योतिष्मती च शीर्षविरेचने । शिष्टा ११ विरेचने योज्याः । च. सू.१अ. । श्यामा श्यामात्रिवृत् । अधोगुड़ा वृद्ध-दारके । श्वेतनामा श्वेतापराजिता । प्रत्यक्श्रेणी मूषकपर्णी । गवाक्षी गोडुम्बा । ज्योतिष्मती लताफटकी । शणपुष्पी घण्टरवा । विषाणिका मेषशृङ्गी ।

**मूलेरम्** । क्ली, पुं । जटामांस्याम् । उज्ज्वा. ।

**मूश(ष)ली** । स्त्री । तालमूल्याम् । वै.निघ. ।

**मूषकः** । पुं । तरुमूषिके । तेजसावर्त्तन्याम् । श.र. ।

**मूष (षि) ककर्णी (पर्णिका)** । स्त्री । आखुकर्णीलतायाम् । मूषाकाणी । द्रवन्त्याम् । रा.नि.व.३।५ ।

**मूषकमारी** । स्त्री । शुतश्रेणीलतायाम् । रा.नि.व.५ ।

**मूषकयुग्मम्** । क्ली । ह्रस्वदीर्घमूषाकर्णीद्वये । वै.निघ.शीतज्व.चि.तालकादिशीतारिरसे ।

**मूषकशत्रुः** । पुं । विड़ाले । वै.निघ. ।

**मूषकश्र(स्रा)वणी** । स्त्री । मूषिककर्ण्यां । मूषाकाणी । वै.निघ. ।

**मूष(षि)का** । स्त्री । आखुकर्ण्याम् । इन्दूर-काणी । र.मा. । मूषिकायाम् । श.र. ।

**मूषकाह्वया (ह्वा)** । स्त्री । मूषिकमार्य्याम् । इन्दूरमारी । आखुकर्ण्याम् । मूषाकाणी । दन्तीवृक्षे । वै.निघ. ।

**मूषा** । स्त्री । गोक्षुरवृक्षे । वै.निघ. । देवताड़-वृक्षे । मूषिकायाम् । धातुद्रावणपात्रविशेषे । মুচি ।

**मूषाक(प)र्णी** । स्त्री । (Salvinia cuculata.) आखुकर्ण्याम् । मूषाकाणी । श.र. ।

**मूषातुत्थम्** । क्ली । नीलतुत्थके । নীল তুঁতিয়া । हे.च. ।

**मूषिकः** । पुं । विलेशयजन्तुविशेषे । इन्दूर । तन्मांसगुणाः—गर्हितं मान्द्यकरं गुरु दुर्जरञ्च ।



रा.नि.व.१७ । "स्निग्धो बलकरः शुक्रवर्द्धनो मधुरो लघुः दुर्नामकृमिदोषघ्नो वातहारी च मूषिकः ॥" अत्रि.२०अ. । ते अष्टादशधा यथा—लालनः पुत्रकः कृष्णः हंसिरः चिक्किरस्तथा । कुकुन्दरोऽलस-श्चैव कषायदशनोऽपि च । कुलिङ्गश्चाजितश्चैव चपलः कपिलस्तथा । कोकिलोऽरुणसंज्ञश्च महा-कृष्णस्तथोन्दुरः । श्वेतेन महता सार्द्धं कपिलेनाखुना तथा । मूषिकश्च कपोताख्यस्तथैवाष्टादश स्मृताः ॥ सु.कल्प.६अ. । "लालनश्चपलः पुत्रो हंसिरश्चिक्किरो-ऽजिरः । कषायदन्तः कुलकः कोकिलः कपिलो-ऽसितः । अरुणः शबलः श्वेतः कपोतः पलितो-न्दुरः । छुछुन्दरी रसालाख्यः दशाष्टौ चेति मूषिकाः ॥" वा.उ.३८अ. । तेषां साधारण विषलक्षणानि यथा,—"शुक्रं पतति यत्रैषां शुक्रदृष्टैः स्पृशन्ति वा । नखदन्तादिभिस्तस्मिन् गात्रे रक्तं प्रदूष्यति ॥ जायन्ते ग्रन्थयः शोफाः कर्णिका मण्डलानि च । पिड़कोपचयश्चोग्रा विसर्पाः किटिमानि च ॥ पर्व्वभेदो रुजस्तीव्रा ज्वरो मूर्च्छा च दारुणा । दौर्व्बल्यमरुचिः श्वासो वेपथु लोमहर्षणम् ॥" सु.कल्प.६अ. ।

**मूषिकक(प)र्णी** । स्त्री । आखुकर्णीलतायाम् । ইন্দুরকাণী লতা । अम. ।

**मूषिकतैलम्** । क्ली । योनिकन्दे तैलम् । तिलतैलं ४ श. मूषिकमांसं १ श. खण्डशः कृत्वा तैले पक्तव्यं, मांसे द्रवीभूते तैलसिद्धिः भवति । सा.कौ. ।

**मूषिकरुहा** । स्त्री । मूषिकलोम्नि । सु.कल्प. १अ. ।

**मूषिका** । स्त्री । कणादन्तीक्षुपे । কাল দন্তী । र.मा. । आखुपर्ण्याम् । ইন্দুরকাণী পানা । प. मु. । गोक्षुरके । वै.निघ. । निर्विषजलौकायाम् । নির্বিষ জোঁক বিশেষ । "मूषिकाकृति-वर्णा-निष्टगन्धा च मूषिका ।" सु.सू १३अ. ।

**मूषिकाद्यतैलम्** । क्ली । गुदभ्रंशे तैलम् । पाठः—"मूषिकामांसकुड़वं दशमूलं पलोन्मितं । चित्रकं द्विपलञ्चात्र क्वाथश्चाष्टगुणेऽम्भसि । पादाव-शिष्टकर्त्तव्यं तैलं पाच्यं पयः समं । जीवनीयैस्तु तत्पादैः पचेन्मृदग्निना भिषक् । अभ्यङ्गान्नाशयत्याशु गुदभ्रंशं सुदारुणम् ॥" क्वाथ—মূষিকমাংস ৮ প. দশমূল প্রত্যেক ১ প. চিতামূল ২ প. । কল্ক—জীবনীয়গণ মিলিত তৈলের সিকি ।

**मूषिकारातिः** । पुं । विड़ाले । বিড়াল । रा.नि.व.१९ ।

**मूषिकारातुः** । पुं । अर्कवृक्षे ।

**मूषिकारिः** । पुं । मूषिकघ्नौषधविशेषे । चन्दिरमारी इति पश्चिमदेशे ख्यातः । गुणाः—"मूषिकारिस्तु कटुको नेत्रश्चाखुविषापहः । व्रण-दोष-नेत्ररोगं नाशयेदिति च स्मृतम् ॥" वै.निघ. ।

**मूषिकाह्वयः** । पुं । आखुकर्ण्याम् । ইন্দুরকাণী পানা । द्रवन्त्यां । रा.नि.व.५ ।

**मूषी (का)** । स्त्री । मूषिके । वृहदुन्दुरे । ধেড়ে ইন্দুর । रा.नि.व.१९ ।

**मूषीकः** । पुं । मूषिके । श.र. ।

**मूषीककर्णी** । स्त्री । आखुकर्ण्याम् । ইন্দুর-কাণী । श.र. ।

**मृगः** । पुं । पशुमात्रे । ते च हरिणादयः । ते तु द्रुतविलम्बितप्लवगतिभेदेन त्रिधा, तथाश्रयस्थान-भेदेनापि विलस्थलजलाश्रयत्वेन त्रिविधाः भवन्ति । पुनश्च ते प्रसह-प्रतुद-विष्किर-भेदेन । त्रिभेदाः, स्वभावतोऽपि त्रयो भेदास्तेषामुक्ताः । एवं मृगजातयो नवधा । तेषां लक्षणादिकं स्वस्वपर्य्याये मृग्यम् । शशहरिणादयः स्वयं द्रुतगमनाद्द्रुतसंज्ञकाः । तथा तदुदितमांसञ्च पथ्यं बल्यं लघु वीर्य्यमदप्रदञ्च । तथा गजखड्गमृगादयः स्वभावतो विलम्बितगतयः इति तथासंज्ञाः । तदुत्थं मांसञ्च पिच्छिलं कफ-कासवातघ्नं गुरु च । सारसहंसबलाकाचक्रकोचा-दयो जलप्लवनात् प्लवसंज्ञकाः । तन्मांसं गुरुर्वं बलदञ्च । "यत्र स्थिता ये गतितोऽपि देशादन्यत्र याता मृगपक्षिमुख्याः । स्वस्वोचितस्थानविवर्त्तनेन मांसेऽपि तेषां गुणपर्य्ययाः स्युः ॥" रा.नि.व.१७ । मृगनाभौ । मार्गशीर्षे मासि । अ.टी.भ. ।

**मृगखुरी** । स्त्री । हरिणखुरे । वै.निघ. ।

**मृगगन्धा** । स्त्री । मुद्गपर्ण्याम् । वै.निघ. ।

**मृगगामिनी** । स्त्री । विड़ङ्गायाम् । বিড়ঙ্গ । रा.नि.व.६ ।

**मृगचर्म्मजम्** । क्ली । जवादिगन्धद्रव्ये, गन्ध-राजे । रा.नि.व.१२ ।

**मृगचिर्भिटा** । स्त्री । मधुचिर्भटिकायाम् । মধু ফুটী । वै.निघ. ।

**मृगचेटकः** । पुं । गन्धमार्ज्जारे । খাটাশ । श.मा. ।

**मृगजरस:** । पुं । रक्तपित्ताधिकारे रस: । "मृतं सूतं मृतं तीक्ष्णं तुल्यं वासारसैर्दिनं । मर्द्दितं मासमात्रन्तु भक्षयेन्मृगजं रसं ॥" रस.र. ।

**मृगजहु:** । पुं । हरिणमालके । वै.निघ. ।

**मृगजा** । स्त्री । कस्तूर्य्यां । মৃগনাভি । वै.निघ. ।

**मृगजृम्भ:** । पुं । अश्वस्य वातव्याधिविशेषे । लक्षणं यथा—"मृगरोगी यदा वाजी जृम्भावान् जायते मुहु: । मृगजृम्भ तदा तस्य व्याधिं समुपलक्षयेत् ॥" ज.द.५५अ. ।

**मृगदंशक:** । पुं । कुक्कुरे । अम. ।

**मृगधूर्त्तक:** । पुं । शृगाले । रा.नि.व.१९ ।

**मृगनाभि: (जा)** । पुं, स्त्री । कस्तूर्य्याम् । মৃগনাভি । रा.नि.व.१२ । See कस्तूरी ।

**मृगनाभ्याद्यवलेह:** । पुं । स्वरभेदे हित: । मृगनाभि: सूक्ष्मैला लवङ्गं वंशलोचना समा, घृतमधुभ्यां लेह्य: । মৃগনাভি, ছোট এলাচ, লবঙ্গ, বংশলোচন, সমভাগে ঘৃত ও মধুর সহিত অবলেহ করিবে । भा. ।

**मृगपति:** । पुं । सिंहे । रा.नि.व.१८ ।

**मृगपालिका** । स्त्री । कस्तूरीमृगे । वै.निघ. ।

**मृगप्रियम्** । क्ली । भूतृणाख्यतृणे, पर्व्वततृणे । गुणा:—मल्यं रुच्यं पुष्टिकरं पशुहितञ्च । रा.नि.व.८ । स्त्री (या) । जलकदल्याम् । प.मु. ।

**मृगप्रियक:** । पुं । तदाख्यविलेशयजन्तुभेदे ।

**मृगभक्षा** । स्त्री । जटामांस्यां । रा.नि.व.१२ । इन्द्रवारुण्याम् । রাখালশশা । वै.निघ. ।

**मृगजभोनी** । स्त्री । विशालायाम् । রাখালশশা । सु.चि.१७अ. ।

**मृगमद: (दा)** । पुं, स्त्री । कस्तूर्य्याम् । মৃগনাভি । रा.नि.व.१२ ।

**मृगमदवासा** । स्त्री । कस्तूरीमल्लिकायाम् । रा.नि.व.१० ।

**मृगमातृक: (का)** । पुं, स्त्री । कस्तूरीमृगे । लम्बोदरमृगे । च.सू.१५अ. । गुणा:—"शीतासृक्पित्तशमनी विज्ञेया मृगमातृका ।" सु.सू.४६अ. ।

**मृगमात्रारस:** । पुं । प्रमेहाधिकारे रस: । "मारुतं त्रपुशं शीशं सुदग्धं समभागकं । कार्पासबीजमज्जा च तुल्यमङ्कोलबीजकम् । पेषयेन्माहिषीतक्रैः दिनैकं वटकीकृतं । माषद्वयं सदा खादेन्मा गमालाप्रमेहजित् । अनुपानाभयादार्व्वीकषायमनुपानकम् ॥" रस.र. ।

**मृगयु:** । पुं । शृगाले । मे. ।

**मृगरसा** । स्त्री । महाबलायाम् । रा.नि.व.४ ।

**मृगराज: (ट्)** । पुं । सिंहे । श.र. ।

**मृगराटिका** । स्त्री । जीवन्त्याम् । रा.नि.व.७ ।

**मृगरिपु:** । पुं । सिंहे । रा.नि.व.१९ ।

**मृगरोग:** । पुं । मृगज्वरे । गज.वै. । भूर्य्युपद्रवजनके साङ्घातिकाश्वरोगविशेषे । लक्षणं—"नासासन्धानसंयुक्ता जायन्ते भूर्य्युपद्रवा: । नित्यं घासाभिलाषी च हीयते बलमांसयो: ॥ मृगरोग: स विख्यातो व्याधि: कष्टचिकित्सित: । षण्मासाभ्यन्तरे वाथ परलोकम्प्रयाति च ॥ बहुदु:खी भवेदश्वो मृगरोगप्रपीड़ित: । यावदुच्छ्वसते जन्तुस्तावत् कुर्य्यात् प्रतिक्रियाम् ॥" ज.द.२६अ. । "सन्तापी चैव य: पूर्व्वं पुन: स्वस्थो भृशम्भवेत् । प्रखिन्नाङ्गस्य तस्याशु मृगरोगं समादिशेत् ॥" ज.द.५५अ. । [ अ. ।

**मृगलण्डिका** । स्त्री । फलविशेषे । च.सू.२५

**मृगलोमजम्** । क्ली । राङ्कवे । পশমের কাপড় । अम. ।

**मृगवल्लभ:** । पुं । कुन्दुरुतृणे । रा.नि.व.८ ।

**मृगशृङ्गम्** । क्ली । Hart's horn. হরিণশৃঙ্গ । হরিণের শিং । एतद्भस्म हृद्रोगे त्रिकशूलादौ शस्तम् ।

**मृगक्षीरम्** । क्ली । मृगीदुग्धे । व्याक. ।

**मृगा** । स्त्री । महाबलायाम् । रा.नि.व.४ ।

**मृगाङ्क:** । पुं । कर्पूरे । अम. ।

**मृगाङ्क(ङ्ग)ज:** । पुं । कस्तूर्य्याम् । र.सा.सं. बृहच्चूड़ामणिरसे ।

**मृगाङ्कमुकुटार्ह:** । पुं । देवकर्द्दमे । रा.नि.व.२२ ।

**मृगाङ्करस:** । पुं । राजयक्ष्माधिकारे रस: । "स्याद्रसेन समं हेम मौक्तिकं द्विगुणम्भवेत् । गन्धकन्तु समस्तेन रसपादस्तु टङ्कण: । सर्व्वं तद्गोलकं कृत्वा काञ्जिकेन विशोधयेत् । भाण्डे लवणपूर्णेऽथ पचेद्यामचतुष्टयं । मृगाङ्कसंज्ञको ज्ञेयो रोगराजनिकृन्तन: । रसस्य भस्मना हेम भस्मीकृत्य प्रयोजयेत् । गुञ्जाचतुष्टयञ्चास्य मरिचै: सेवयेद्भिषक् । पिप्पलीदशकैर्वापि मधुना लेहयेद्बुध: । पथ्यं सुलघुमांसेन प्रायशोऽस्य प्रयोजयेत् ॥" পারা ১ তো. স্বর্ণভস্ম ১ তো. মুক্তাভস্ম ২ তো. গন্ধক ২ তো. সোহাগা ২ মাষা একত্র কাঁজিসহ পেষণ করিয়া গোলক করিবে । শুষ্ক হইলে মূষাভ্যন্তরে পূরিয়া লবণযন্ত্রে পাক করিবে । भैष. । स्वल्पं यथा—"रसभस्म हेमभस्म तुल्यं गुञ्जाद्वयं द्वयं । पूर्व्ववदनुपानेन मृगाङ्कोऽयक्ष्मयापह: । छागदुग्धानुपानेन दशरक्त्यादिमात्रया ॥" रस.चि.९अ. ।



**मृगाङ्गजा** । स्त्री । मृगनाभौ । र.सा.सं.बृहज्ज्वरचूड़ामणिरसे । मधुचिर्भटिकायाम् । इन्द्रवारुणीलतायाम् । वै.निघ. ।

**मृगाजिनम्** । क्ली । कृष्णमृगचर्म्मणि । वै.निघ. ।

**मृगाण्डज: (जा)** । पुं, स्त्री । कस्तूर्य्याम् । মৃগনাভি । रा.नि.व.१२ ।

**मृगात् (दन:)** । पुं । सिंहे । तरक्षौ । তেন্দো, নেকড়ে, চীতা বাঘ । रा.नि.व.१९ ।

**मृगादनी** । स्त्री । महाबलायाम् । গোরক্ষচাকুলিয়া । रा.नि.व.४ । इन्द्रवारुणीलतायाम् । রাখালশশা । रा.नि.व.३ । सु.चि.२अ. । भा.म.४भ.स्कन्द.ग्र.चि. । "मृगादन्याश्च मूलानि ।" गोरक्षीमूले । গোরক্ষচাকুলিয়ার মূল । कुष्ठ.चि. कन्दर्पसारतैले ।

**मृगान्तक:** । पुं । चित्रकव्याघ्रे । रा.नि.व.१९ ।

**मृगाराति:** । पुं । कुक्कुरे । श.मा. ।

**मृगारि:** । पुं । रक्तशिग्रौ । रा.नि.व.७ । सिंहे । व्याघ्रे । कुक्कुरे । रा.नि.व.१९ ।

**मृगाक्षी** । स्त्री । महाशिम्ब्याम् । वृन्ताकलाय । प.मु. । महेन्द्रवारुणीलतायां । মাকাল । अमृतफलायां । वै.निघ. । विशालायाम् । রাখালশশা ।

**मृगी** । स्त्री । कस्तूरिकायाम् । वै.निघ. । पीतवर्णसितोदरवराटकभेदे । रा.नि.व.१३ । मृगस्त्रियां । दुग्धगुणा:—छागीदुग्धगुणतुल्यम् । भा. । अपस्माररोगे ।

**मृगेन्द्र:** । पुं । सिंहे । अम. ।

**मृगेन्द्रकुटिलोद्भूतम्** । क्ली । सिंहदंष्ट्रनख्यविषे । र.सा.सं.रसप्रयोगे ।

**मृगेन्द्रचटक:** । पुं । मृगयादक्षश्येनपक्षिणि । বাজ পাখী । जटा. ।

**मृगेन्द्राणी** । स्त्री । वकवृक्षे । रा.नि.व.४ । वासकवृक्षे ।

**मृगे(गै)र्व्वारु:** । स्त्री । श्वेतेन्द्रवारुणीलतायां । শ্বেত রাখালশশা । तत्पर्य्याया:,—मृगादनी मृगाक्षी मृगेक्षणा श्वेतपुष्पा बहुफली कपिलाक्षी पथ्या चित्रफला चित्रवल्ली चित्रा विचित्रा मृगचिर्भिटा लघुचिर्भिटा मरुजा कुम्भिनी देवी कटुफला । प.मु. । सु.सू.३९अ. । गुणा:—फलं दुर्ज्जरं गुरु मन्दाग्निकरं रक्तपित्तहरञ्च । रा.नि.व.७ । श्वेतहरिणभेदे, गुहाशयजातीयमृगे । सु.सू.४६अ. । महेन्द्रवारुणीलतायाम् । বড় রাখালশশা । हिं बड़ीइन्द्रवारुणी । भा.म ४भ. शकुनिग्रहचि. ।

**मृगेष्ट:** । पुं । सुन्दरपुष्पवृक्षे । গন্ধরাজ ফুলের গাছ । रा.नि.व.१० ।

**मृगेक्षणा** । स्त्री । मधुचिर्भटिकायाम् । মধুফুটী । रा.नि.व.७ ।

**मृङ्गणम्** । क्ली । दुग्धसरे । तैले । व्याक. ।

**मृडङ्कुण:** । पुं । बालके । उणा. ।

**मृड़ीक:** । पुं । हरिणे । व्याक. ।

**मृणालम्** । क्ली, पुं । उशीरे । গন্ধবেণা । रा.नि.व.१२ । च.द.मधुकादौ । अति.२स्था.२अ. । भैष. । वीरणमूले । বেণার মূল । प.मु. । घनचन्दनादिपाचने । सि.यो.वा.पि.ज्व.चि. । "पाठोदीच्यमृणालैस्तु ।" च.द.वा.पि.ज्व.चि. । "परूषकं मृणालञ्च ।" च.द.वा.व्या.एलादितैले । कमलकोमलदण्डे । পদ্মের ডাঁটা । सं कमलतंतु । तें तामरतुंड़, तामरतोगे । तत्पर्य्याया:,—विशं बिसं कोरकं कोमलं कोमलकं तन्तुरं पद्मतन्तु: पद्मनालं मृणालिनी बिसिनी नलिनीरुहं । सु.चि.१९अ. । गुणा:—शीतलं तिक्तं कषायं पित्तदाहघ्नं मूत्रकृच्छ्रघ्नं रक्तवान्तिघ्नम् । च.द.वा.व्या.अश्वगन्धाद्यतैले ।

**मृणालकण्ठ:** । पुं । जलचरपक्षिविशेषे । च.सू.२७अ. ।

**मृणालमूलम्** । क्ली । पद्मकन्दे । श.र. । भा.पू.१भ. ।

**यच्चामलकम्** । क्ली । पिण्डीखर्ज्जूरफले । श.मा. ।

**यच्चोदुम्बरकम्** । क्ली । अश्वत्थफले । त्रिका. ।

**यच्चोन्मादः** । पुं । यच्चावेशकृते उन्मादविशेषे । लक्षणं—"ताम्राक्षः प्रियतनुरक्तवस्त्रधारी गम्भीरो द्रुतगतिरल्पवाक् सहिष्णुः । तेजस्वी वदति च किं ददामि कस्मै...... ॥" भा. ।

**यच्मघ्नी** । स्त्री । द्राक्षायाम् । श.मा. ।

**यच्मा** (अन्) । पुं । तन्नामकरोगे । যক্ষ্মারোগ । तत्पर्य्यायाः,—राजयच्मा राजजच्मा शोषः क्षयः जच्मं जच्मा रोगराजः रोगाधीशः गदाग्रणीः नृपामयः अतिरोगः उणा । यच्यते पूज्यत इति । तन्निदानं—"वेगरोधात् क्षयाच्चैव साहसाद्विषमाशनात् । त्रिदोषो जायते यच्मा गदो हेतुचतुष्टयात् ॥" तन्निरुक्तिः—"वैद्यो व्याधिमता यस्मात् व्याधिर्यत्नेन यच्यते ।" भा. । See राजयच्म ।

**याचनकः** । पुं । रक्तैरण्डवृक्षे । रा.नि.व.८ ।

**याजः** । पुं । अन्ने । सिद्धतण्डुलान्न । हे.च. ।

**याज(ज्ञि)कः** । पुं । पलाशवृक्षे । रा.नि.व.१० । कुशवृक्षे । कुश । श.र. । रक्तखदिरवृक्षे । रा.नि.व.८ । अश्वत्थवृक्षे । रा.नि.व,११ ।

**याजुषः (षोदरः)** । पुं । तित्तिरपक्षिणि । वै.निघ. ।

**यातना** । स्त्री । अतितीव्रवेदनायाम् । अम. ।

**यातयामः** । पुं । वृद्धे । रा.नि.व.१८ । त्रि । जीर्णे । अम. । उज्झिते । मे. ।

**यातुकः** । पुं । पत्रशाकविशेषे । गुणाः—पीलुपर्णीवत् । च.सू.२७अ. । स्त्री (का) । मयूरशिखायाम् । वै.निघ. ।

**यातुघ्नः** । पुं । गुग्गुलौ । रा.नि.व.१२ ।

**यादः** । क्ली । जलजन्तौ । अम. ।

**यादोनिवासः** । पुं । जले । हे.च. ।

**यानम्** । क्ली । गमने । हस्त्यादिभिर्भ्रमणे । गुणाः—"हस्त्यश्वरथदोलाद्यैर्भ्रमणं वातकोपनं । स्थिरीकरणमङ्गानां बल्यं वह्निविवर्द्धनम् । राज.२प. ।

**यापनवस्तिः** । पुं । निरूहवस्तिभेदे । "क्षौद्राज्यक्षीरतैलानां प्रसृतं प्रसृतं भवेत् । हवुषासैन्धवाक्षांशो वस्तिः स्याद् यापनः परः ॥" भा. ।

**याप्यः** । त्रि । दुःखसाध्ये । तल्लक्षणम्—"यापनीयन्तु तं विद्यात् क्रिया धारयते हि यम् । क्रियायान्तु निवृत्तायां सद्यो यश्च विनश्यति ॥' भा.। याप्यत्वमसाध्यत्वञ्च द्विधा प्रकृतित उपेक्षणाच्चेति । "याप्याः केचित् प्रकृत्यैव केचिद्याप्या उपेक्षया ।" सारचन्द्रिका ।

**याभः** । पुं । मथुने ।

**यामः** । पुं । दिवाष्टमांशे, प्रहरे ।

**यामघोषः** । पुं । कुक्कुटे । श.मा. । स्त्री (षा) । घटिकायन्त्रे । घड़ि । त्रिका. ।

**यामनादी** (इन्) । पुं । कुक्कुटे । वै.निघ. ।

**यामार्द्धम्** । क्ली । प्रहरार्द्धे ।

**यामिनी** । स्त्री । हरिद्रायाम् । रा.नि.व.६ । रात्रौ ।

**यामिनीचरः** । पुं । गुग्गुलौ । पेचके । वै.निघ. ।

**यामिनीपतिः** । पुं । कर्पूरे । मे. । चन्द्रे । श.र. ।

**यामुन(नेय)म्** । क्ली । स्रोतोऽञ्जने । उणा. । सौवीराञ्जने । रा.नि,व.१३ ।

**यामुनेष्टकम्** । क्ली । शीषधातौ । जटा. ।

**याम्यम्** । क्ली । चन्दने । मे. । वै.निघ,चयरो.चि.चन्दनादितैले ।

**याम्यज्वरः** । पुं । प्रवृद्धहीनमध्यवातादिजनित सन्निपातज्वरे । लक्षणं—"हृदयं दह्यते चास्य यकृत्प्लीहान्त्रफुस्फुसाः । पच्यन्तेऽत्यर्थमूर्द्धाधः पूयशोणितनिर्गमः । शीर्णदन्तश्च मृत्युश्च तत्राप्येतद्विशेषतः । भिषग्भिः सन्निपातोऽयं याम्यो नाम्ना प्रकीर्त्तितः ॥" भा.म.१भ. ।

**याम्यदिग्भवा** । स्त्री । तमालपत्राम् । वै.निघ. ।

**याम्यद्रुमः** । पुं । शाल्मलिवृक्षे । वै.निघ. ।

**याम्या** । स्त्री । रात्रौ ।

**याम्योद्भूतः** । पुं । कोङ्कणे प्रसिद्धे शीतालवृक्षे । रा.नि.व.९ । [ वै.निघ. ।

**यावः** । पुं । अलक्तके । अम. । लाक्षायाम् ।

**यावकः** । पुं । कुलत्थे । प.मु. । यवाग्वाम् । যবের ছাউ । हे.च. । च.चि.१अ. । माषे । माषकलाय । अम. । व्रीहिधान्यद्वये । माषाकारपत्रे, काश्मीरेषु तुलसीति ख्याते । सुभूतिः । अलक्तके । श.र. । यवान्ने । सिद्ध यव । हे.च. । गुणाः—"यावकोऽतिगुरुः स्वादुर्वृष्यः स्निग्धः प्रकीर्त्तितः । गुल्मज्वरप्रतिश्यायकण्ठरुक्कासमेहहा ॥" वै.निघ. ।



**यावनः (कल्कः)** । पुं । शिल्हारसे । अम. ।

**यावनकः** । पुं । रक्तैरण्डे । वै.निघ. ।

**यावनालः** । पुं । (Zea mays.) स्वनामकशिम्बीधान्ये । কাল জনার, জনার, জুয়ারা । हिं भुट्टा, मक्का । तें मक्का जोन्नलु । बम्. मकइ, बुट, बजा । ता. मक्कशोलम् । तत्पर्य्यायाः,—शिखरी वृत्ततण्डुलाः दीर्घनालः दीर्घशरः क्षेत्रेक्षुः इक्षुपत्रकः । गुणाः,—गौल्यः बल्यः दुर्जरः रूच्यः वृष्यः त्रिदोषजित् अर्शोयक्ष्मव्रणगुल्मनाशकश्च । अस्य शरमूलम् ईषन्मधुरं रूक्षं शीतलं पित्तघ्नं तृष्णाहरं पशूनां दौर्बल्यकरञ्च । रा,नि.व.१६ ।

**यावनालनिभः (भा)** । पुं । यावनाले । रा.नि.व.८ ।

**यावनालरसजगुड़ः** । पुं । तद्रसजातगुड़े । জনারের গুড় । गुणाः—क्षारः कटुः सुमधुरः कफवातघ्नः पित्तलः नित्यसेवनेन कण्डूकुष्ठजननः रक्तदाहघ्नश्च । वै.निघ. ।

**यावनालशरः** । पुं । यावनालस्य शरे । জনারের শর, গহমা । हिं जोहुरली । तत्पर्य्यायाः,—नदीजः दृढ़त्वक् वारिसम्भवः खरपत्रः । गुणाः—ईषन्मधुरः रूक्षः शीतलः पित्ततृष्णाहरः पशूनामबलप्रदश्च । रा.नि.व.१६ ।

**यावनाली (शर्करा)** । स्त्री । यावनालगुड़कृतशर्करायां । জনারের চিনি । तत्पर्य्यायाः,—हिमशर्करा हिमोत्पन्ना हिमानी क्षुद्रशर्करिका क्षुद्रा गुड़भा जलबिन्दुजा । गुणाः—गौल्या उष्णा तिक्ता अतिपिच्छिला वातघ्नी सारका रूच्या दाहपित्तास्रदा च । रा.नि.व.१४ ।

**यावनी** । स्त्री । करङ्कशालिनामेक्षौ । रा.नि.व.१४ । रसालेक्षौ । वै.निघ. ।

**यावशूकः (जः)** । पुं । यवक्षारे । च.द.सि.यो.कास,चि,कुलत्थाद्यघृते । "दाड़िमगुड़यावशूकानाम् ।" (लवङ्गादिचूर्णे) ।

**यावि: (वी)** । स्त्री । शङ्खिन्याम् । व.निघ. । (री) । यवतिक्तालतायाम् । रा.नि,व.३ ।

**याविकः** । पुं । यवनाले । কাল জনার । प.मु. ।

**याव्यः** । पुं । यवक्षारे । वै.निघ. ।

**यासः (कः)** । पुं । रक्तदुरालभायां । गुणाः—मधुरः तिक्तः शीतः पित्तदाहहरः बल्यः तृष्णाकफच्छर्द्दिघ्नश्च । रा.नि,व.४ । सि.यो,ज्व,चि,अष्टाङ्गावलेहे । "व्योषं यासञ्च कारवी ।" च.द.अभिन्यासज्व.चि. । "यासभार्गीपुनर्नवाः ।"

**यासशर्करा** । स्त्री । यवासशर्करायाम् । वै.निघ. ।

**यासा** । स्त्री । मदनशलाकापक्षिणि । श.मा. । सि,यो.कास.चि, । "मूर्वा तिक्ता निशा यासा ।"

**युक्तरथः** । पुं । निरूहवस्तिभेदे । "एरण्डमूलनिक्वाथो मधुतैलं ससैन्धवं । एष युक्तरथो वस्तिः सवचापिप्पलीफलः ॥" भा. ।

**युक्तरसा** । स्त्री । गन्धरास्नायां । सामान्यरास्नायां । रा.नि,व.६ । काँटा आमरुली इति भाषा । अम भ. ।

**युक्तश्रेयसी** । स्त्री । गन्धरास्नायां । रा.नि,व.६ ।

**युक्ता** । स्त्री । रास्नायां । वा.सू.१५अ,रोध्रादि । वृक्षभेदे । एलानीति लोके । र.मा. ।

**युक्तिव्यपाश्रयः** । त्रि । या चेष्टा प्रत्यक्षं फलति तदौषधवाचके, संशोधनसंशमनौषधवाचके च । च.वि.८अ. ।

**युगम्** । क्ली । ऋद्धौ । भेषजे । हस्तचतुष्टये । मे. । "युगमात्रदृक् विचरेत् ।" च.सू.८अ. ।

**युगच्छदः** । पुं । आपटा इति ख्याते वृक्षे । वै.निघ.उन्मा.चि. ।

**युगन्धरः** । पुं । यावनाले । জনার । वै.निघ. ।

**युगन्धरभक्तम्** । क्ली, पुं । यावनालभक्ते । गुणाः—"अप्रसाधितभक्तो युगन्धराणां भक्तश्च घनो विशदमधुरश्च । कफे त्रिदोषशमने च कथ्यते कासे च श्वासात्मक एव स स्मृतः ॥" अत्रि.२१अ. ।

**युगन्धराम्लम्** । क्ली । यावनालकृतकाञ्जिकविशेषे । गुणाः—"युगन्धराम्लं कफवातहन्तृ शूलामयानां जरणप्रकर्त्तृ । तीक्ष्णं तथाम्लं श्रमदोषहन्तृ मेहार्शसोः रक्तहितं मतञ्च ॥' अत्रि.११अ. ।

**युगप(पा)त्रः (कः)**। पुं। रक्तकाञ्चनवृक्षे। प.मु.। अम.। अश्मन्तके। लोध्रे। वै.निघ.।

**युगपत्रिका**। स्त्री। शिंशपावृक्षे। सर्पपवृक्षे। त्रिका.।

**युगपालिका**। स्त्री। शिंशपावृक्षे। त्रिका.।

**युगभृङ्गराजः**। पुं। भृङ्गराजे केशराजे च। संग्रहः।

**युगलाक्षः**। पुं। बर्वूरकवृक्षे। বাবলা গাছ। रा.नि.व.८।

**युगाख्यगन्धा**। स्त्री। वृद्धदारकलतायाम्। বীজতাড়ক। प.मु.।

**युग्वला**। स्त्री। सुगन्धतृणे, रोहिषतृणे। वै.निघ.।

**युग्मम्**। क्ली। युगले।

**युग्मकण्टका**। क्ली। बदरीवृक्षे। কুল গাছ। मद.व.६.।

**युग्मपत्रः (कः)**। पुं। रक्तकाञ्चनवृक्षे। र.मा.। भूर्जवृक्षे। सप्तपर्णवृक्षे। वै.निघ.।

**युग्मपत्रिका**। स्त्री। शिंशपावृक्षे। श.र.।

**युग्मपर्णः**। पुं। रक्तकाञ्चनवृक्षे। रा.नि.व.१०। सप्तपर्णवृक्षे। रा.नि.व.१२। स्त्री (र्णा)। वृश्चिकालीक्षुपे। श.चि.।

**युग्मफला**। स्त्री। इन्दीवरालतायाम्। रा.नि.व.३। वृश्चिकालीलतायाम्। বিছাতি গাছ। रा.नि.व.९।

**युग्मफलिनी**। स्त्री। दुग्धिकायां। শিরুই। प.मु.।

**युग्माञ्जनम्**। क्ली। अञ्जनद्वये। एकं स्रोतोऽञ्जनम् अपरं सौवीरमिति। चरकः। वा.सू.१५ अ.। प्रियङ्ग्वादिव.।

**युग्या**। स्त्री। ऋद्धौ। ऋद्धि। वृद्धौ। वृद्धि। ध.निघ.।

**युजौ**। पुं, द्वि.। अश्विनीकुमारौ। त्रिका.।

**यु(मु)ञ्जातकः**। पुं। वृक्षविशेषे। गुणाः—"बल्यः शीतो गुरुः स्निग्धस्तर्पणो बृंहणात्मकः। वातपित्तहरः स्वादुः वृष्यो युञ्जातकः परं॥" च.सू.२७अ.।

**युतम् (कम्)**। क्ली। हस्तचतुष्टये। सूर्पार्धे।

**युद्धसारः**। पुं। अश्वे। श.च.।

**युधिष्ठिरराजः**। पुं। कङ्कपक्षिणि। কাঁক পাখী। त्रिका.।

**युयुः**। पुं। घोटके। हला.।

**युयुक्षुरः**। पुं। क्षुद्रव्याघ्रे। श.च.।

**युवगण्डः**। पुं। पीगण्डे। त्रिका.। यूनो गण्डस्थव्रणे। ব্রণফোঁড়া। श.र.।

**युवती**। स्त्री। दृष्टार्त्तवायां स्त्रियि। रा.नि.व.१८। प्रियङ्गौ। च.चि.१अ.ब्राह्मरसायने। स्वर्णयूथिकायाम। वै.निघ.। हरिद्रायां। श.च.।

**युवतीष्टा**। स्त्री। स्वर्णयूथिकायाम्। হলদে যুঁই। रा.नि.व.१०।

**युवा (न्)**। पुं। षोड़शमारभ्य पञ्चाशत्पर्यन्तवयस्के। যুবা। रा.नि.व १८।

**युवानपिड़का**। स्त्री। यौवनकृतमुखव्रणे। ব্রণফোঁড়া। "युवानपिड़का यूनां विज्ञेया मुखदूषिका।" मा.नि.। भैष.क्षुद्ररो.चि.।

**युवावस्थः**। पुं। यूनि। रा.नि.व.१८।

**यूः**। स्त्री। मुद्गादिद्विदलधान्यकृतयूषे। ডাইলের যূষ। हे.च.।

**यूकः**। पुं। वकपुष्पवृक्षे। प.मु.। मत्कुणे। উকুণ। जटा.। तत्पर्य्यायाः,—केशकीटः स्वेदजः षट्पदा षट्पदी पालिः पानी वाजाक्रिमिः यूकः बहुपादा कृष्णा केशाश्रया। "तिलप्रमाणसंस्थानवर्णाः केशाम्बराश्रयाः। बहुपादाश्च सूक्ष्माश्च यूका लिक्षाश्च नामतः॥" मा.नि.। कृष्णोदुम्बरे। यमान्यां। वै.निघ.।

**यूकाख्यः**। पुं। लिक्षायां। লিখি। वै.निघ.।

**यूकारी**। स्त्री। लाङ्गलिकायाम्। विषलाङ्गलिया। वै.निघ.।

**यूकावासः**। पुं। आक्षोटवृक्षे। আঁওড়া গাছ। रा.नि.व.९।

**यूथपः**। पुं। सुनिषण्णकशाके। वै.निघ.।

**यूथा**। स्त्री। पाठायां। আকনাদি। वै.निघ.।

**यूथिका**। स्त्री। (Jasminum auriculatum.) स्वनामख्यातपुष्पक्षुपे। জুই। हिं यूथी, स्वर्णयूथी। मं पांड़रोजूइ। कं बिलियमोल्ले। तत्पर्य्यायाः,—गणिका अम्बष्ठा मागधी यूथी प्रहसन्ती शिखण्डिनी वासन्ती बालपुष्पी बालपुष्पिका बहुगन्धा भृङ्गानन्दा। यूथिका श्वेतस्वर्णभेदेन द्विधा। गुणाः—यूथिकायुगलं स्वादु शीतलं शर्कराघ्नं पित्तदाहतृषाघ्नं सर्व्वत्वग्दोषघ्नञ्च। "सितपीतनीलमेचकनाम्न्या कुसुमेन यूथिकाः कथिताः। तिक्तहिमपित्तकफामयज्वरघ्नाः व्रणादिदोषहराः। इति साधारणगुणाः। सर्व्वासां यूथिकानान्तु रसवीर्य्यादिसाम्यता, स्वर्णयूथिकायान्तु सुरूपता सुगन्धता च विशेषतो वर्त्तते। रा.नि.व.१०। "यूथीयुगं हिमं तिक्तं कटुपाकरसं लघु। मधुरं तुवरं हृद्यं पित्तघ्नं कफवातलम्। व्रणास्रमुखदन्ताक्षिशिरोरोगविषापहम्॥' भा.। पाठायां। আকনাদি। रा.नि.व.६। अम्लानके। मे.।



**यूथिकापत्रः**। पुं। तालीशपत्रे। वै.निघ.।

**यूथिकामुकुलानना**। स्त्री। कर्णव्यधनार्थसूचीभेदे। "व्यधने कर्णपालीनां यूथिका मुकुलानना।"

**यूथी**। स्त्री। यूथिकायाम्। श.र.। शुक्लयूथिकायाम्। स्वर्णयूथिकायाम्। वै.निघ.।

**यूनी**। स्त्री। हरिद्रायाम्। युवत्याम्।

**यूपः (कः)**। पुं। प्लक्षवृक्षे। मद.व.।

**यूपद्रुः (मः)**। पुं। खदिरवृक्षे। त्रिका.। रक्तखदिरे। रा.नि.व.८।

**यूपलक्ष्यः**। पुं। पक्षिणि। श.मा.।

**यूषः**। पुं, क्ली। मुद्गादिरसे। ডাল, কলায়াদির ঝোল। "भृष्टमुद्गदलानान्तु पलेकेन विपाचितः। पूतापनीतविदलः तनुयूषः कृताकृतः। वृद्धवैद्याः पलं द्रव्यं ग्राहयन्ति जलाढ़के। भेषजस्यातिबाहुल्यात्कदाचिदुचितम्भवेत्। पेया मण्डादियोगेषु भेषजं यत्प्रकीर्त्तितम्। तत्तथैव प्रयोक्तव्यमरुचिर्न भवेत् यथा॥" तोड़नानन्दोद्धृतनलात्। चतुर्भागाम्बुसाधितनिष्पीड़ितवैदलादिसम्भूतवारि यूष उच्यते। "वैदलान् वितुषान् भृष्टान् चतुर्भागाम्बुसाधितान्। निष्पीड्य तोयमेतेषां संस्कृतं यूष उच्यते॥" प.मु.। "...यूषः किञ्चिद्घनः स्मृतः।" गुणाः—"यूषो बल्यः स्मृतः कण्ठ्यः लघुपाकः कफापहः।" प.प्र.२ख.। विदलादिरन्धनद्रवे। "रन्धनद्रवो यूष।" इति। सा.कौ.। मांसरसे। यूषो बहुविधः वैदलादीनां वैचित्र्यात्। विशेषाः स्वस्वपर्य्याये मृग्याः। पुं। ब्रह्मदारुवृक्षे। श.र.।

**योकम्**। क्ली। यूकावृन्दे। सि.यौ.कृमि.चि.।

**योगः**। पुं। औषधे। द्रव्ये। उपाये। त्रिका.। येन वाक्यं युज्यते स योगः। सु.उ.६५अ.। "यदौषधन्तु प्रथमं यस्य योगस्य कथ्यते। तन्नाम्नैव स योगो हि कथ्यतेऽत्र विनिश्चयः॥" प.प्र.१ख.। वपुस्थैर्य्ये। मे.।

**योगचिन्तामणिः**। पुं। चिकित्सासंग्रहविशेषे श्रीहर्षसूरिकृते।

**योगजम्**। क्ली। अगुरुणि। काष्ठागुरुणि। অগুরু কাষ্ঠ। श.।

**योगतरङ्गिनी**। स्त्री। वैद्यकचिकित्सासंग्रहविशेषे त्रिमल्लभट्टकृते।

**योगनाविकः**। पुं। मत्स्यविशेषे। हारा.।

**योगरङ्गः**। पुं। नागरङ्गवृक्षे। रा.नि.व ११।

**योगरत्नाकरः**। पुं। चिकित्साग्रन्थविशेषे।

**योगराजगुग्गुलुः**। पुं। ऊरुस्तम्भाधिकारे, आमवाते च औषधम्। पाठः—"चित्रकं पिप्पलीमूलं यमानीं कारवीन्तथा। विड़ङ्गान्यजमोदाञ्च जीरकं सुरदारु च। चव्यैलै सैन्धवं रास्नां तथा गोक्षुरधान्यकं। त्रिफलां मुस्तकं व्योषं त्वगुशीरं यवाग्रजं। तालीशपत्रं पत्रञ्च श्लक्ष्णचूर्णानि कारयेत्। यावन्त्येतानि चूर्णानि तावन्मात्रन्तु गुग्गुलुं। सम्मर्द्य सर्पिषा गाढ़ं स्निग्धे भाण्डे निधापयेत्। ततो मात्रां प্রযुञ्जीत यथेष्टाहारवानपि। योगराज इति ख्यातः......॥" চিতামূল, পিপুলমূল, যমান, কৃষ্ণজীরা, বিড়ঙ্গ, বনযমান, জীরা, দেবদারু, চই, এলাইচ, সৈন্ধব, কুড়, রাস্না, গোক্ষুর, ধনিয়া, আমলা, হরীতকী, বহেড়া, মুতা, শুঁট, পিপুল, মরিচ, গুড়ত্বক্, বেণার মূল, যবক্ষার, তালীশপত্র, তেজপত্র প্রত্যেক সমভাগ চূর্ণ সমষ্টি করিবে; সেই চূর্ণসমষ্টির সমান শোধিত মহিষাক্ষগুগগুল। গুগ্গুল ঘৃতের সহিত মাড়িয়া পরে তাহার সহিত চূর্ণ মিশাইবে। মাত্রা॥ তো.। रस.र.। भा.।

**योगवाही (इन्)**। पुं। सर्ज्जिकाक्षारे। पारदे। मधुनि। हे.च.। क्षारे। वै.निघ.।

**योगशतकम्**। क्ली। चिकित्सासंग्रहग्रन्थे लक्ष्मीदासकृते।

**योगसारः (कः)**। पुं। नागरङ्गवृक्षे।

নারেঙ্গা লেবুর গাছ। मद.व.६।

**योगा(गो)रङ्गः**। पुं। नागरङ्गवृक्षे। নারেঙ্গা গাছ। रा.नि.व.११।

**योगिदण्डः**। पुं। वेत्रवंशे। বেউড় বাঁশ। रा.नि.व.७।

**योगो(गि)ष्टम्**। क्ली। शीषधातौ। সীসা। र.मा.। रा.नि.व.१३।

**योगेश्वरी**। स्त्री। वन्ध्याकर्कोटक्याम्। भा.। नागदमन्याम्। নাগদনা। वै.निघ.।

**योग्यम्**। क्ली। पुष्पकासीसे। रा.नि.व.१३। ऋद्धौ। वृद्धौ। अम.। चन्दने। वै.निघ.। स्त्री (ग्या)। ऋद्धौ। रा.नि.व.५। वृद्धौ। गोरोचनायाम्। वै.निघ.।

**योजनगन्धा (न्धिका)**। स्त्री। कस्तूर्य्याम्। मे.। अजयपालः।

**योजनपर्णी**। स्त्री। मञ्जिष्ठायाम्। प.मु.।

**योजनमल्लिका**। स्त्री। आस्फोतायाम्। হাপরমালী। भैष.ज्व.चि.पानीयवटी।

**योजनवल्लिका (ल्ली)**। स्त्री। मञ्जिष्ठायाम्। रा.नि.व.६। वा.सू.१५अ.प्रियङ्ग्वादिव.। "पद्माद्रजी योजनवल्ल्यनन्ता।" सु.सू.३८अ.प्रियङ्ग्वादि.।

**योनलः**। पुं। यावनाले। জনার। हे.च.।

**योनिः**। पुं, स्त्री। स्त्रीचिह्ने। तत्पर्य्यायाः,—भगं वराङ्गं उपस्थः स्मरमन्दिरं मदनालयः मदनायुधः रतिकुहरं रतिगृहं रतिमन्दिरं जन्मवर्त्म अधरं अवाच्यदेशः प्रकृतिः अपथं स्मरकूपः स्मरकूपकः स्मरगृहं स्मरध्वजं स्मरागारं रत्यङ्गं कलत्रं अधः कन्दर्पकूपः कन्दर्पगर्भः कन्दर्पसम्बाधः कन्दर्पसन्धिः स्त्रीचिह्नं प्रजननं पुष्पपथः स्मरच्छत्रं स्मरकूपिका। रा.नि.व.१८। सा तु गर्भस्थायाः सप्तभिर्मासैर्भवति। सुखबोधः। स्वरूपं यथा—"शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्त्ता सा प्रकीर्त्तिता। तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रतिष्ठिता॥" तत्शुभाशुभलक्षणं यथा,—शुभः कमठपृष्ठाभोगजस्कन्धोपमो भगः। वामोन्नतस्तु कन्याजः पुत्रजो दक्षिणोन्नतः॥ आखुरोमा गूढमणिः सुश्लिष्टः संहतः पृथुः। तुङ्गः कमलवर्णाभः शुभाश्वत्थदलाकृतिः॥ कुरङ्गखुररूपो यश्चुल्लिकोदरः सन्निभः। रोमशो विवृतास्यश्च दृश्यनासोऽतिदुर्भगः॥ शङ्खावर्त्तो भगो यस्याः सा गर्भमिह नेच्छति॥" उपस्थे। जले। कारणे। हे.च.। उत्पत्तिस्थाने। सा चतुर्विधा जरायुजाण्डजस्वेदजोद्भिज्जभेदात्। च.शा.३अ.।

**योनिकन्दः**। पुं। स्त्रीरोगविशेषे। निदानादिकं कन्दशब्दे द्रष्टव्यम्।

**योनिदोषः**। पुं। उपदंशे। स्त्रीरोगे। योनिव्यापदि। निदा.।

**योनिभ्रंशः**। पुं। योनिवहिर्गमने। सु.नि.८अ.।

**योनिरञ्जनः**। पुं। योनिदोषभेदे। निदा.।

**योनिरोगः (व्यापत्)**। पुं, स्त्री। उदावर्त्तादिस्त्रीरोगे। निदानं—"प्रवृद्धलिङ्गं पुरुषं यात्यर्थमुपसेवते। रूक्षदुर्बलबालायास्तस्या वायुः प्रकुप्यति। स दुष्टो योनिमासाद्य योनिरोगाय कल्पते। त्रयाणामपि दोषाणां यथास्वं लक्षणे न तु॥ विंशतिर्व्यापदो योनेर्निर्द्दिष्टा रोगसंग्रहे। मिथ्याचारेण ताः स्त्रीणां प्रदुष्टेनार्त्तवेन च। जायन्ते वीजदोषाच्च दैवाच्च शृणु ताः पृथक्॥ सर्व्वलिङ्गसमुत्थाना सर्व्वदोषप्रकोपजा। चतसृष्वपि चाद्यासु सर्व्वलिङ्गोच्छ्रयो भवेत्। पञ्चासाध्या भवन्तीह योनयः सर्व्वदोषजाः॥" सु.उ.३८अ.। नामानि यथा—उदावर्त्ता वन्ध्या विप्लुता परिप्लुता वातला, वातदोषेण। लोहितक्षरा स्रंसिनी वामिनी पुत्रघ्नी पित्तला, पित्तदोषेण। अत्यानन्दा कर्णिनी अचरणा (चरणा वा) अतिचरणा श्लेष्मला श्लेष्मदोषेण। षण्डी अण्डिनी (वा फलिनी) महती सूचीमुखी त्रिदोषिणी, त्रिदोषदोषेण। मा.नि.। अतिचरणा उदावर्त्ता (वृत्ता) जातघ्नी अन्तर्मुखी सूचीमुखी शुष्काख्या वामिनी षण्डसंज्ञा महायोनिः रक्तयोनिः पैत्तिकी श्लैष्मिकी लोहितक्षया परिप्लुता उपप्लुता विप्लुता कर्णिनी सान्निपातिकी चेति। वा.उ.३३अ.। आसां लक्षणानि स्वस्वपर्य्याये द्रष्टव्यानि।

**योनिशूलम्**। क्ली। योनिरोगविशेषे। योनि पीड़ायां। निदा.।

**योनिशूलघ्नी**। स्त्री। शतपुष्पायाम्। শুলূফা। वै.निघ.।

**योनिसंवरणम्**। क्ली। गर्भजन्यरोगे, गर्भसङ्कोचे। तन्निदानलक्षणे यथा,—"वातलान्यन्नपानानि ग्राम्यधर्म्मं प्रजागरं। अत्यर्थं सेवमानायां गर्भिण्यां योनिमार्गतः॥ मातरिश्वा प्रकुपितो योनिद्वारस्य संवृतिं। कुरुते ऊर्द्ध्वमार्गत्वात् पुनरन्तर्गतोऽनिलः॥ निरुणद्ध्याशयद्वारं पीड़यन् गर्भसंस्थितिं। निरुद्धवदनोच्छ्वासो गर्भस्त्वाशु विपद्यते॥ बद्ध्वा सम्बद्धहृदयां नाशयत्यङ्ग गर्भिणीम्। सु.नि.८अ.। योनिसंवरणं विद्याद्व्याधिमेनं सुदारुणम्॥"

**योन्यर्शः**। क्ली। योनिकन्दरोगे। त्रिका.। See कन्दः।

**योषा (षिः)**। स्त्री। हरिद्रायाम्। नार्य्याम्।

**योषिणी**। स्त्री। पीवर्य्याम्। ওলটকম্বল।

**योषित्प्रिया**। स्त्री। हरिद्रायाम्। भा.।

**योषित् (ता)**। स्त्री। हरिद्रायाम्। नार्य्याम्।

**यौगन्धरान्नम्**। क्ली। यावनालकृतान्ने। জনারের ভাত। गुणाः—"यौगन्धरं गुरु घनं कासश्वासगदच्छित्कृत।" वै.निघ.।

**यौतवम्**। क्ली। परिमाणे। अम.।

**यौवनम्**। क्ली। यौवनावस्थायाम्। तच्च पञ्चदशादूर्द्धमुच्यते। "कैशोरमापञ्चदशात् यौवनन्तु ततः परम्।" रा.नि.व.१८।

**यौवनः**। पुं। यावनाले। জনার। प.मु.।

**यौवनकण्टकः**। पुं, क्ली। युवगण्डरोगे। বয়সফোঁড়া। श.मा.।

**यौवनपिड़का**। स्त्री। युवकाले मुखजातपिड़कायाम्। বয়সফোঁড়া। लक्षणं—"शाल्मलीकण्टकप्रख्याः कफमारुतशोणितैः। जायन्ते पिड़का यूनां वक्त्रे या मुखदूषिकाः॥" सु.नि.१३अ.।

---

## र

**रः**। पुं। अग्नौ। तीक्ष्णे।

**रकः**। पुं। सूर्य्यकान्तमणौ। वै.निघ।

**रक्ताणः**। पुं। कोकिलाक्षक्षुपे। কুলেখাড়ার গাছ। रा.नि.व.४।

**रकसा**। स्त्री। क्षुद्ररोगविशेषे, कुष्ठरोगभेदे वा। लक्षणं—"कण्डून्विता या पिड़का शरीरे संस्रावहीना रकसोच्यते सा।" सु.नि.५अ.।

**रक्त(क)म्**। क्ली। हिङ्गुले। रा.नि.व.१३। भा.म.१भ,ज्व.चि.त्रिपुरभैरवरसे। "द्युमणिरक्तकमार्द्रकमर्दितम्।" ताम्रे। रा.नि.व.१३। वङ्गधातौ। र.मा.। रक्तचन्दनभेदे। বকম কাঠ। सिन्दूरे। प.मु.। कुङ्कुमे। पद्मकाष्ठे। रा.नि.व.१२। पद्मे। रा.नि.व.१०। प्राचीनामलके। मे.। रक्तखदिरे। बोले। रक्तपद्मे। वै.निघ.। शरीरस्थसप्तधात्वन्यतमद्वितीयधातौ। रक्त। हिं लहु, खुन। तत्पर्य्यायाः,—रुधिरं असृक् लोहितं अस्रं क्षतजं शोणितं पलङ्कारं रोहितं रङ्गकं कीलालं अङ्गजं रौधिरं स्रजं रसजं रस्यं रसतेजः वासिष्टं प्राणदं मांसकारि त्वग्गुणं शोणं लोहं चर्म्मजं रसभवं। रा.नि.व.१८। रक्तस्वरूपमाह—"रसस्तु हृदयं याति समानमारुतेरितः। रञ्जितः पाचितस्तत्र पित्तेनायाति रक्तताम्। रक्तं सर्व्वशरीरस्थं जीवस्याधारमुत्तमम्। स्निग्धं गुरु चलं स्वादु विदग्धं पित्तवद्भवेत्॥" शार्ङ्ग.पू.६अ। रक्तस्थानम् यथा—यकृत् प्लीहा च रक्तस्य मुख्यस्थानम्। तस्य कर्म्म च जीवनम्। भा.। तत्रस्थमेव शोणितस्थानानामनुग्रहं करोति। सु.सू.२१अ.। तत्र च विस्रताद्रवतारागचलनविलया इति भूम्यादिपञ्चभूतगुणाः सन्ति। शुद्धरक्तलक्षणं—"मधुरं लवणं किञ्चिदशीतोष्णमसंहतं। पद्मेन्द्रगोपहेमाविशशलोहितलोहितं। लोहितप्रभवः शुद्धं तनोस्तेनैव च स्थितिः॥" वा.सू.२७अ.। तस्मिंश्च दुष्टे सति शोथरक्तमण्डलादिबहवो रोगा जायन्ते। वृद्धे च रक्ताङ्गनेत्रताशिरापूर्णतादयो जायन्ते। क्षीणे च तस्मिन् मूर्च्छादयो भवन्ति। रक्तं वातदूषितं फेनिलारुणपरुषरूक्षतनु, पित्तदूषिते पीतहरितनीलश्यावास्वादुविस्रोष्णं, कफदूषिते शीतलबहलस्निग्धादि च भवति। द्विदोषदुष्टं संसृष्टं त्रिदोषदुष्टञ्च पूतिगन्धं भवति। भा.। पुं। लोध्रवृक्षे। प.मु.। कुसुम्भवृक्षे। हिज्जलवृक्षे। रा.नि.व.७।८। रक्तशिग्रौ। रक्तपुनर्नवायाम्। अशोकवृक्षे। रक्तैरण्डे। रक्तरोहीतके। मत्स्यविशेषे। वै.निघ.। सविषमण्डूकभेदे। महाविषवृश्चिकभेदे। मन्दविषवृश्चिकभेदे। सु.कल्प.८अ.। त्रि। रक्तवर्णे। रञ्जिते।

**रक्तकः।** पुं। लोहितवर्णे। मे.। बन्धुजीववृक्षे। বান্ধুলি গাছ। प.मु.। रक्तझिण्ट्यां। मे. रक्तशिग्रुवृक्षे। কাল সজিনা গাছ। प.मु.। रक्तैरण्डवृक्षे। वै.निघ.२भ.जिह्वक.ज्व.चि.। पत्राङ्ग-चन्दनवृक्षे। বকম্। रा.नि.व.१२। क्ली। हिङ्गुलि।

**रक्तकङ्गुः।** पुं। धूनके। वै.निघ.।

**रक्तकण्टा।** स्त्री। विकङ्कतवृक्षे। বঁইচি গাছ। वै.निघ.।

**रक्तकदली।** स्त्री। लोहितकदल्याम्। চাঁপা কলা। वै.निघ.।

**रक्तकन्दः (कः)।** पुं। राजपलाण्डौ। বড় পেঁয়াজ। रक्तपिण्डालुके। লাল আলু। रा.नि.व.७। प्रवाले। हे.च.।

**रक्तकन्दलः।** पुं। रक्तप्रवालद्रुमे। त्रिका.।

**रक्तकमलम्।** क्ली। रक्तवर्णपद्मे। रा.नि.व.१०।

**रक्तकम्बलम्।** क्ली। रक्तवर्णकह्लारे। রক্ত-কম্বল। तत्पर्य्यायाः,—कोकनदं अल्पपत्रं अलि-प्रियं अलोहितं कणकन्दं रक्तवर्णं रक्ताम्भोजं अरुणकमलं चारुनालकं शोणपद्मं रक्तोत्पलं अरविन्दं रक्तवारिजं। तद्गुणाः—कटुतिक्तं मधुर शिशिरं रक्तदोषहरं पित्तकफवातशमनं सन्तर्पणं वृष्यञ्च।

**रक्तकरवीरकः।** पुं। रक्तपुष्पकरवीरवृक्षे। লালকরবী গাছ। मं रक्तकरवीर। कं केंगण-लिगे। हिं लालकनेल। तत्पर्य्यायाः,—रक्तप्रसवः गणेशकुसुमः चण्डीकुसुमः क्रूरः भूतद्रावी रविप्रियः। श्वेतरक्तभेदेनायं द्विविधः। "करवीरः श्वेतपुष्पः शतकुन्दोऽश्वमारकः। द्वितीयो रक्तपुष्पश्च चण्डाती लगुडस्तथा॥ करवीरद्वयं तिक्तकषायं कटुकञ्च तत्। व्रणलाघव-कृन्नेत्रकोपकुष्ठव्रणापहम्॥ वीर्य्योष्णं क्रिमिकण्डूघ्नं भक्षितं विषवन्मतम्॥" भा.। गुणाः—कटुः तीक्ष्णः शोधकः त्वग्दोषव्रणकण्डूकुष्ठघ्नः विषघ्नश्च। रा.नि.व.१०।

**रक्तका।** स्त्री। पानीयामलके। वै.निघ.।

**रक्तकाञ्चनः।** पुं। Bauhinia variagata or B. Purpurea.) Mountain ebony. काञ्चनारवृक्षे। রক্তকাঞ্চন। हिं कच्नार। प.मु.। See काञ्चनः।

**रक्तकाण्डा।** स्त्री। रक्तपुनर्नवायाम्। রক্তপুণ্যে বা গাধাপুণ্যে। रा.नि.व.५।

**रक्तकाष्ठम्।** क्ली। पत्राङ्गचन्दने। বকম কাষ্ঠ। रा.नि.व.१२।

**रक्तकुमुदम्।** क्ली। रक्तकैरवे। লাল হেলা ফুল, লালশুন্দি। जटा.।

**रक्तकुरुण्टकः।** पुं। रक्तझिण्ट्याम्। লাল ঝাঁটী। गुणाः—तिक्तो वर्ण्य उष्णः कटुः शोथघ्नः ज्वरघ्नः, तथा वातरोगं कफं रक्तरोगं पित्तम् आध्मानं शूलं श्वासं कासञ्च नाशयेत्। वै.निघ.।

**रक्तकुसुमः।** पुं। पारिभद्रवृक्षे। পালতে মান্দার গাছ। रा.नि.व.८। धन्वनवृक्षे। ধামনা গাছ। रा.नि.व.९। रक्तकाञ्चने। स्त्री (मा)। दाड़िम्बवृक्षे। वै.निघ.। [ वै.निघ.।

**रक्तकृमिजा।** स्त्री। लाक्षायाम्। লাহা।

**रक्तकेशरः।** पुं। पारिभद्रवृक्षे। रा.नि.व.८। पुन्नागवृक्षे। र.मा.।

**रक्तकैरवम्।** क्ली। रक्तकुमुदे। जटा.।

**रक्तकोकनदम्।** क्ली। रक्तोत्पले। রক্ত-পদ্ম। जटा.। [ नकुल.१०अ.।

**रक्तकोपः।** पुं। शोणितप्रकोपे। रक्तविकारे।

**रक्तखदिरः।** पुं। रक्तवर्णखदिरवृक्षे। রক্ত-বর্ণ খদির গাছ। तत्पर्य्यायाः,—रक्तसारः ससारः ताम्रसारकः बहुशल्यकः याज्ञिकः कुष्ठनोदनः यूपद्रुमः अरखदिरः। गुणाः—कटूष्णः तिक्तः कषायः गुरुः आमवातघ्नः वातरक्तहरः व्रणभूतज्वरघ्नश्च। रा.नि.व.८।

**रक्तखाण्डवः।** पुं। हैमखर्ज्जूरीवृक्षे। वै.निघ.।

**रक्तगतज्वरः।** पुं। रक्तधातुगतज्वरे। लक्षणं यथा—"रक्तनिष्ठीवनं दाहो मोहश्छर्दनविभ्रमौ। प्रलापः पिड़का तृष्णा रक्तप्राप्ते ज्वरे नृणाम्॥" मा.नि.।

**रक्तगन्ध(न्धि)कम्।** क्ली। बोलनामगन्धद्रव्ये। বোল। থুনখারাপী। रा.नि.व.६।

**रक्तगन्धा।** स्त्री। अश्वगन्धायाम्। वै.निघ.। स्वर्णयूथिकायाम्।

**रक्तगर्भा।** स्त्री। नखरञ्जनीवृक्षे। মেহেদী গাছ। वै.निघ.।



**रक्तगुञ्जा।** स्त्री। रक्तवर्णगुञ्जायाम्। See गुञ्जा।

**रक्तगुल्मः।** पुं। आर्त्तवजन्यगुल्मे। निदान लक्षणे यथा—"नवप्रसूताहितभोजना या या चामगर्भं विसृजेदृतौ वा। वायुर्हि तस्याः परिगृह्य रक्तं करोति गुल्मं सरुजं सदाहं। पैत्तस्य लिङ्गेन समानलिङ्गं विशेषणञ्चाप्यपरं निबोध। यः स्पन्दते पिण्डित एव नाङ्गैः चिरात्सशूलः समगर्भलिङ्गः। स रौधिरः स्त्रीभव एव गुल्मो मासे व्यतीते दशमे चिकित्स्यः॥ भा.।

**रक्तगैरिकम्।** क्ली। स्वर्णगैरिके। वै.निघ.।

**रक्तग्रन्थिः।** पुं। रक्तलज्जालौ। লাল লজ্জা-বতী। रक्तजन्यग्रन्थिरोगे। लक्षणं—"स्रवत्यजस्रं रुधिरं प्रदुष्टमसाध्यमेतद्रुधिरात्मकं स्यात्।" सु.नि.११अ.। मूत्रग्रन्थि नाम मूत्राघातविशेषे। "रक्तं वातकफाद्दुष्टं बस्तिद्वारे सुदारुणम्॥ ग्रन्थिं कुर्य्यात् स कृच्छ्रेण सृजेन्मूत्रं तदावृतम्। अश्मरीसमशूलन्तं रक्तग्रन्थिं प्रचक्षते॥" मा.नि.टी.।

**रक्तग्रीवः।** पुं। कपोते। পায়রা। वै.निघ.।

**रक्तघ्नः।** पुं। रोहितकवृक्षे। রোড়া, রয়না গাছ। जटा.। स्त्री (घ्नी)। ग्रन्थिदूर्व्वायाम्। গাঁটিয়া দূর্ব্বা। श.च.।

**रक्तचन्दनम्।** क्ली। (Pterocarpus santalinus.) Red sandal wood. स्वनाम-ख्यातसुगन्धिकाष्ठे। রক্তচন্দন। दा. हिं लाल-चन्दन। तें एर्रगन्धपुचेट्टु। ता. सेन्शाण्डनम्। फा. सण्डलि सुर्ख। आ. सण्डले अह्मर्। तत्पर्य्यायाः,—तिलपर्णं पत्राङ्गं रञ्जनं कुचन्दनं कुसीदं रक्ताङ्गं ताम्रवृक्षः ताम्रसारं ताम्रसारकं चन्दनं लोहितं ताम्राभं लोहितचन्दनं रक्तसारं रक्ताङ्गं क्षुद्रचन्दनं तिलपर्णिका पत्तङ्गं पत्रङ्गं रक्तबीजं। तत्त्रिधा—"आकृष्णमुत्तमं नूनं रक्तश्वेदञ्च मध्यमम्। आरक्तमधमं विद्धि रक्तचन्दनकं त्रिधा॥" शेष.। गुणाः—शीतलं तिक्तं कफपित्त-कासज्वरभ्रान्तिकृमिवमितृष्णाहरम्। रा.नि.व.१२। एतच्चन्दनं कषायपानयोः प्रयोज्यं। तथा कषायलेपयोश्च शस्तम्। वा.सू.१५अ.गुडूच्यादिः। "बालकारक्तचन्दनम्।"

**रक्तचित्रकः।** पुं। (Plumbago rosea or Coccinea. Syn. P. Rosea.) रक्तवर्ण-दण्डपत्रचित्रकक्षुपे। রক্তচিতা। मं रक्तचित्रकु। क केंपिनचित्रमूल। तें एर्रचित्र। ता. शिव-प्पुचित्तिर। तत्पर्य्यायाः,—उषर्बुधः कालः अत्यालः कालमूलः अतिदीप्यः मार्ज्जारः अग्निः दाहकः पाचकः चित्राङ्गः महाङ्गः। गुणाः—स्थौल्यकरः रुच्यः कुष्ठघ्नः रसनियामकः लोहवेधकः रसायनः चित्रकान्तराद्गुणाढ्यश्च। रा.नि.व.६।

**रक्तचिल्लिका।** स्त्री। मधुरवास्तुके। মিঠা বেতো। वै.निघ.।

**रक्तचूर्ण(क)म्।** क्ली। सिन्दूरे। लोहितचूर्ण-मात्रे। पुं। कम्पिल्लके। কমলাগুড়ি। रा.नि.व.१३।

**रक्तजकृमिः।** पुं। रक्तजन्यकृमिरोगे। लक्षणं—"रक्तवाहिशिरास्थानरक्तजा जन्तवोऽणवः। अपादा वृत्तताम्राश्च सौक्ष्म्यात् केचिददर्शनाः। केशादा रोमविध्वंसा रोमद्वीपा उडुम्बराः। षट् ते कुष्ठैककर्म्माणः सहसौरसमातरः॥" मा.नि.।

**रक्तजन्तुकः।** पुं। भूनागे। শীষ। रा.नि.व.१३। लोहितप्राणिमात्रे।

**रक्तजिह्वः।** पुं। सिंहे। श.मा.।

**रक्तझावुकः।** पुं। (Tamarix dioica.) स्वनामख्यातवृक्षे। লাল ঝাউ। हिं लालझाउ। श.चि.।

**रक्तझिण्टी।** स्त्री। रक्तपुष्पझिण्टीक्षुपे। तत्पर्य्यायाः,—कुरवकः शोणझिण्टिका शोण-झिण्टी। अम.। See रक्तकुरुण्टकः।

**रक्ततरम्।** क्ली। स्वर्णगैरिके। वै.निघ.।

**रक्ततुण्डः (कः)।** पुं। सारसपक्षिणि। शुकपक्षिणि। रा.नि.व.१९। (कः) भूनागे। रा.नि.व.१३।

**रक्ततृणम्।** क्ली। तृणविशेषे। वै.निघ.। स्त्री (णा)। गोमूत्रिकातृणे। रा.नि.व.८।

**रक्तत्रिवृत्।** स्त्री। रक्तमूलत्रिवृति। লাল তেউড়ী। मं लोहिड़ी तियर। कं केंपिनेय तियड़े। तत्पर्य्यायाः,—कालिन्दी त्रिपुटा ताम्रपुष्पिका कुलवर्णा मसूरी असिता काक-नासिका। गुणाः—तिक्ता कटूष्णा रेचनी ग्रहणी मलविष्टम्भहरी च। रा.नि.व.६।

**रक्तदला।** स्त्री। चिविल्लिकायां। नखिकायाम्।

रा.नि.व.५ । नलिकानामगन्धद्रव्ये । रा.नि.व.१२ ।

**रक्ताट्टक्** । पुं, स्त्री । कपोते । जागपाग्रश्च ।

**रक्तद्रुमः** । पुं । रक्तबीजासनवृक्षे । पिश्वाल गाछ । रा.नि.व.९ ।

**रक्तधरा** । स्त्री । मांसाभ्यन्तरे द्वितीयायाम् कलायाम् । "मांसस्याभ्यन्तरतस्तस्यां शोणितं विशेषतश्च शिरासु यकृत्प्लीह्नोश्च भवति ।" सु. शा.४अ. ।

**रक्तधातुः** । पुं । गैरिकधातौ । गिरिमाटी । प.मु. । ताम्रे । रा.नि.व.१३ । रक्तवर्णधातुमात्रे ।

**रक्तनाड़ी** । स्त्री । दन्तमूलगतरक्तजनाड़ीव्रण-विशेषे । मा.नि. ।

**रक्तनालः** । पुं । जीवशाकक्षुपे । रा.नि.व.७ । जीवन्त्याम् । क्ली । कह्लारे । वै.निघ. ।

**रक्तनाशकः** । पुं । कुटजवृक्षे ।

**रक्तनासिकः** । पुं । पेचके । श.र. ।

**रक्तनिर्यासः** । पुं । रक्तबीजासनवृक्षे । रा.नि. व.९ । See असनः ।

**रक्तनेत्रः** । पुं । सारसपक्षिणि । कपोते । वै. निघ. । नकुले ।

**रक्तनेत्रत्वम्** । क्ली । रक्तविकारजनेत्ररोगे । निदा. ।

**रक्तपत्रः** । पुं । पिण्डालौ । रा.नि.व.७ ।

**रक्तपत्रा (त्रिका)** । स्त्री । रक्तपुनर्नवायाम् । वै.निघ. । नाकुल्याम् । रा.नि.व.७ ।

**रक्तपदः** । पुं । शुकपक्षिणि । हंसे ।

**रक्तपदी** । स्त्री । क्षुद्रवृक्षविशेषे । लज्जावती । "शमीपत्रा रक्तपदी समाङ्गाञ्जलिकारिका ।" जटा. ।

**रक्तपद्मः** । पुं, स्त्री । रक्तकमले । तत्पुष्पगुणाः —पद्मं कषाय-मधुरं शीतपित्त-कफास्रजित् । राज.५प. ।

**रक्तप(पा)दी** । स्त्री । लज्जालुकायाम् । हंस-पद्यपरनामलज्जालुकायां । रा.नि.व.५ ।

**रक्तपर्णः** । पुं । रक्तपुनर्नवायाम् । वै.निघ. ।

**रक्तपल्लवः (कः)** । पुं । अशोकवृक्षे । रा. नि.व.१० ।

**रक्तपा** । स्त्री । जलौकायाम् । जोँक । मे. ।

**रक्तपाका (की)** । स्त्री । लताबृहतीक्षुपे । र.मा. ।

**रक्तपायी** । स्त्री । जलौकायाम् । श.र. ।

**रक्तपादः** । पुं । शुकपक्षिणि । हे.च. । हंसे । वै.निघ. ।

**रक्तपायिनी** । स्त्री । जलौकायाम् । रा.नि. व.१९ । मत्कुणे । वै.निघ. ।

**रक्तपायी (इन्)** । पुं । मत्कुणे । छारपोका । व्याक. ।

**रक्तपारदम्** । क्ली, पुं । हिङ्गुले । त्रिका. । जटा. । [ वै.निघ. ।

**रक्तपाषाणः** । पुं, क्ली । गिरिमृत्तिकायाम् ।

**रक्तपिण्डम्** । क्ली । जपापुष्पवृक्षे । त्रिका. । रक्तालौ । वै.निघ. । चीनदेशीयगुलाबपुष्पे । श.चि. ।

**रक्तपिण्डकः** । पुं । रक्तवर्णपिण्डालौ । रा. नि.व.७ । जपावृक्षे । त्रिका. ।

**रक्तपिण्डालुः** । पुं । रक्तवर्णपिण्डालौ । लाल छवड़ि आलू । मं रातालु । कं केंपिनहेड़ल । गुणाः—शीतः मधुरः अम्लः श्रमघ्नः दाहपित्तघ्नः वृष्यः गुरुः बलपुष्टिकरश्च । रा.नि.व.७ ।

**रक्तपित्तम्** । क्ली । तन्नामकरोगभेदे । निदानं— "घर्म्मव्यायामशोकाध्वव्यवायैरतिसेवितैः । तीक्ष्णोष्ण-क्षारलवणैरम्लैः कटुभिरेव च । पित्तं विदग्धं स्वगुणैर्विदहत्याशु शोणितम् । ततः प्रवर्त्तते रक्तमूर्द्धञ्चाधो द्विधापि वा । ऊर्द्धं नासाक्षिकर्णास्यै-र्मेढ्रयोनिगुदैरधः । कुपितं रोमकूपैश्च समस्तैस्तत् प्रवर्त्तते ॥" इति निदानम् । "सदनं शीतकामित्वं कण्ठधूमायनं वमिः । लोहगन्धिश्च निःश्वासो भवत्यस्मिन् भविष्यति ॥" पूर्व्वरूपम् । वातिकादि-लक्षणं—"सान्द्रं सपाण्डु सस्नेहं पिच्छिलञ्च कफान्वितं । श्यावारुणं सफेनञ्च तनु रूक्षञ्च वातिकम् । रक्तपित्तं कषायाभं कृष्णं गोमूत्रसन्निभं । मेचकागारधूमाभमञ्जनाभञ्च पैत्तिकम् । संसृष्टलिङ्गं संसर्गात् त्रिलिङ्गं सान्निपातिकम् । ऊर्द्धगं कफ-संसृष्टमधोगं पवनानुगम् । द्विमार्गं कफवाताभ्या-मुभाभ्यामनुवर्त्तते । ऊर्द्धं साध्यमधो याप्यमसाध्यं युगपद्गतं । एकमार्गं बलवतो नातिवेगं नवोत्थितं । रक्तपित्तं सुखे काले साध्यं स्यान्निरुपद्रवम् । एक-दोषानुगं साध्यं द्विदोषं याप्यमुच्यते । यत्त्रिदोषम-साध्यं स्यात मन्दाग्नेरतिवेगवत् ॥" मा.नि. । अत्र



प्रथममपतर्पणम् ऊर्द्धगे रेचनं अधोगे च वमनं शस्तम् । पुं । हारीतपक्षिणि । भा. ।

**रक्तपित्तहा** । स्त्री । ग्रन्थिदूर्व्वायाम् । গেঁটে দূর্ব্বা । श.च. ।

**रक्तपित्तान्तकरसः** । पुं । रक्तपित्ताधिकारे रस. । पाठः—"मृताभ्रं मृततीक्ष्णञ्च माक्षिकं रसतालकं । गन्धकञ्च भवेत्तुल्यं यष्टिद्राक्षामृताद्रवैः । दिनैकं मर्दयेत् खल्ले सिताक्षौद्रसमन्वितम् ॥" मात्रा माषमात्रं । र.सा.सं. ।

**रक्तपोटिकादर्शनम्** । क्ली । रक्तजविकारे । निदा. ।

**रक्तपीतफला** । स्त्री । मधुरविम्बिकायाम् । वै.निघ. ।

**रक्तपुनर्नवा** । स्त्री । स्वनामख्यातपत्रशाकक्षुपे । গাদাপুন্যে मं रक्तघेंटुलि । कं केंपिन वेल्लड़ा-कलु । तत्पर्य्यायाः,—क्रूरा मण्डलगन्धिका रक्तकाण्डा वर्षकेतुः लोहिता रक्तपत्रिका वैशाखी रक्तवर्षाभूः शोफघ्नी रक्तपुष्पिका विकस्वरा विषघ्नी प्रावृष्येण्या सारिणी वर्षाभवः । गुणाः—तिक्ता सारणी शोथघ्नी रक्तप्रदरघ्नी पाण्डुपित्तघ्नी च । रा.नि.व.५ ।

**रक्तपुष्पः** । पुं । रक्तवकवृक्षे । লাল বকফুলের গাছ । र.मा. । रक्त-करवीरवृक्षे । जटा. । रोहितकवृक्षे । श.मा. । दाड़िमवृक्षे । प.मु. । रक्त काञ्चनवृक्षे । बन्धूकवृक्षे । पुन्नागवृक्षे । रा.नि.व.१० । पर्पटके । शाल्मलीवृक्षे । पलाशवृक्षे । पारिभद्रवृक्षे । जवावृक्षे । रक्तार्के । वै.निघ. ।

**रक्तपुष्पकः** । पुं । पलाशवृक्षे । रोहितकवृक्षे । मन्दारवृक्षे । जटा. । पर्पटके । रा.नि.व.५ । शाल्मलीवृक्षे । रक्तार्कवृक्षे । रा.नि.व.८ ।

**रक्तपुष्पा** । स्त्री । शाल्मलीवृक्षे । जटा. । कनक-कदलीवृक्षे । চাঁপাকলা গাছ । प.मु. । नाग-दमन्याम् । नागदना । रा.नि.व.५ ।

**रक्तपुष्पिका** । स्त्री । भूपाटल्याम् । रक्त-पुनर्नवायाम् । रा.नि.व.५ । लज्जालुकायाम् । श.च. । पाटलीवृक्षे । পারুল গাছ । रा.नि.व. १० । मञ्जिष्ठायाम् । लाङ्गलिकायाम् । रक्त-शङ्खपुष्प्याम् । शाल्मलीवृक्षे । वै.निघ. ।

**रक्तपुष्पी** । स्त्री । धातकीवृक्षे । र.मा. । पाटली वृक्षे । जटा. । जवापुष्पवृक्षे । रा.नि.व.१० ।

आवर्त्तकीलतायाम् । रा.नि.व.३ । नागदमन्याम् । रक्तार्के । रक्तपुनर्नवायाम् । वै.निघ. । कोङ्कण-देशीयकरुणीपुष्पवृक्षे । उष्ट्रकाण्डीपुष्पवृक्षे । रा. नि.व.१० ।

**रक्तपूरकम्** । क्ली । वृक्षाम्ले । তেঁতুল । रा.नि.व.६ ।

**रक्तपूर्व्वकः** । पुं । रक्तापामार्गे । वै.निघ. ।

**रक्तपोस्तः** । पुं । (Papaver Rhoeas.) Red poppy. रक्तखस्खसवृक्षे । লাল পোস্ত । हिं लालपुस्ता । तें एर्रगसगसलाचेट्टु । ता. शिगप्पु पोस्तकाचेड़ि । कोषान्तरम् ।

**रक्तप्रतिश्यायः** । पुं । दुष्टरक्तजप्रतिश्यायरोगे । लक्षणम्—"रक्तजे तु प्रतिश्याये रक्तस्रावः प्रवर्त्तते । ताम्राक्षश्च भवेज्जन्तुः उरोघातप्रपीड़ितः । दुर्गन्धो च्छ्वासवदनो गन्धानपि न वेत्ति सः ॥" मा.नि. ।

**रक्तप्रवृत्तिः** । पुं । पित्तजरोगे । भा. ।

**रक्तप्रसवः** । पुं । रक्तकरवीरे । मुचुकुन्दवृक्षे । মুচকুন্দ গাছ । रक्ताम्लाने । রক্ত ঝাঁটী । रा.नि.व.१० ।

**रक्तफलः** । पुं । वटवृक्षे । रा.नि.व.११ । शाल्मलीवृक्षे । रा.नि.व.८ । रक्तापामार्गे । स्त्री (ला) । विम्बीलतायाम् । তেলাকুচা । प.मु. । स्वर्णवल्ल्याम् । শোণালু । रा.नि.व.९ । वार्त्ताकु-वृक्षे । वटवृक्षे । वै.निघ. ।

**रक्तफेनजः** । पुं । फुस्फुसे, वामपार्श्वस्थक्लोम्नि । हे.च. । [ सु.कल्प.८अ. ।

**रक्तबभ्रुः** । पुं । प्राणघाति-महावृश्चिकविशेषे ।

**रक्तबाल(लु)कम् (का)** । क्ली, स्त्री । सिन्दूरे । हारा. । त्रिका. ।

**रक्तबिन्दुः** । पुं । रक्तापामार्गे । रा.नि.व.४ ।

**रक्तबिन्दुच्छदा** । स्त्री । पुत्रदात्र्याम् । शुक्ल-कण्टकार्य्याम् । वै.निघ. ।

**रक्तबीजः** । पुं । दाड़िमवृक्षे । रा.नि.व.११ । रीठाकरञ्जे । রিঠা । रक्तबीजासनवृक्षे । আসন গাছ । रक्तकुलत्थे । वै.निघ. ।

**रक्तबीजका** । स्त्री । तरटीवृक्षे । তরুই গাছ । रा.नि.व.८ ।

**रक्तभस्म** । क्ली । रससिन्दूरादिकरणे । एतत्-साधनप्रणाली र.सा.सग्रहे मृग्या ।

**रक्तमञ्जरः** । पुं । वेतसलतायाम् । चिका. । निम्बवृक्षे । वै.निघ. ।

**रक्तमञ्जरी** । स्त्री । रक्तकरवीरे । वै.निघ. ।

**रक्तमण्डलः** । पुं । मण्डलिसर्पविशेषे । सु.कल्प. ४अ. ।

**रक्तमण्डलिका** । स्त्री । रक्तलज्जालुकायाम् । লাল লজ্জাবতী । वै.निघ. ।

**रक्तमण्डूकः** । पुं । रक्तवर्णमण्डूकजातीयकीटे । तद्दंष्टस्य दंशकण्डूर्भवति पीतफेनागमश्च वक्त्रात् । सु.कल्प.८अ. ।

**रक्तमत्स्यः** । पुं । रक्तवर्णमत्स्यविशेषे । লাল মাছ । तल्लक्षणगुणाः—"यो रक्ताङ्गो नातिदीर्घो न चाल्पो नातिस्थूलो रक्तमत्स्यः स चोक्तः । शीतो रुच्यः पुष्टिकृद्दीपनोऽसौ नाशं धत्ते किञ्च दोषत्रयस्य ॥" रा.नि.व.१७ ।

**रक्तमरिचम्** । क्ली । मरिचभेदे । লঙ্কামরিচ । हिं लालमरिच । वै.निघ. ।

**रक्तमातृका** । स्त्री । रसधातौ । वै.निघ. ।

**रक्तमाद्री** । स्त्री । स्त्रीणां वाधकरोगविशेषे ।

**रक्तमिलातकः** । पुं । रक्ताम्लान-पुष्पवृक्षे । রক্তঝাঁটী । रा.नि.व.१० ।

**रक्तमुखः** । पुं । रोहितमत्स्ये । षष्टिकधान्ये । वै.निघ. ।

**रक्तमूत्रता** । स्त्री । रक्तप्रस्रावरोगे । निदा. ।

**रक्तमूर्द्धा (न्)** । पुं । सारसपक्षिणि । वै.निघ. ।

**रक्तमूलकः** । पुं । देवसर्षपक्षुपे । रा.नि.व.९ ।

**रक्तमूला (ली)** । स्त्री । लज्जालुकालतायाम् । रा.नि.व.५ ।

**रक्तमृत्** । स्त्री । गैरिके । গিরিমাটী । वै.निघ. ।

**रक्तमेहः** । पुं । रक्तस्राविप्रमेहरोगे । लक्षणं—"विस्रमुष्णं सलवणं रक्ताभं रक्तमेहिनः ।" भा. ।

**रक्तमोक्षणम्** । क्ली । जलौकावचारणे । জোঁক ধরান । शोणितबाहुल्यात् बहुविधरोगजनकत्वाच्च स्रावणस्यातीव प्रयोजनं भवति प्रयोजने च सञ्जाते जलौकालाबुकाभिरुपायैः शिरामोक्षैश्च तत्स्रावणं क्रियते । परन्तु कृशातिव्यवायिक्लीवादीनां न शिरामोक्षः कार्य्यः, जलौकावचारणन्तु शस्तम् । विषदुष्टं वातादिदुष्टं वा गोशृङ्गजलौकालाबुभिः शस्तम् । भा. ।

**रक्तयष्टिः (ष्टी)** । स्त्री । लज्जालुकायाम् । मञ्जिष्ठायाम् । प.मु. ।

**रक्तयष्टिका** । स्त्री । मञ्जिष्ठायाम् । रा.नि.व.६ ।

**रक्तयावनालः** । पुं । तुवरयावनाले । লাল জনার । रा.नि.व.१६ ।

**रक्तयोनिः** । पुं । योनिव्यापद्विशेषे । लक्षणम् —"रक्तयोन्याख्यासृग्गतिस्रुते ।" वा.उ.३३अ. ।

**रक्तरङ्गा** । स्त्री । मेन्दीतिख्याते वृक्षे । वै.निघ. ।

**रक्तरजः** । क्ली । सिन्दूरे । वै.निघ. ।

**रक्तरसः** । पुं । रक्तासनवृक्षे । वै.निघ. ।

**रक्तरसा** । स्त्री । रास्नायाम् । वै.निघ. ।

**रक्तरसोनः** । पुं । लोहितरसोने । লাল রশুন । मं लोहिवावोलुरसण । कं केंपिनवेल्लुल्लि । गृञ्जनके । গাজর । तत्पर्य्यायाः,—महाकन्दः पृथुपत्रः स्थूलकन्दः यवनेष्टः । गुणाः—मधुरः कटुः बलकरः । पत्रं तिक्तं । अस्थि सलवणञ्च । रा.नि.व.७ । पत्र मधुरं क्षारं नालो मधुरपिच्छलः कषाय इति । मद.व.७ ।

**रक्तराजालुकम्** । क्ली । रक्तवर्णालुकभेदे । एतच्च किञ्चिदुष्णम् आग्नेयं वातकफहरञ्च । द्रव्यगुणः ।

**रक्तराजिः (जी)** । स्त्री । सर्पिकानामवायव्यकीटविशेषे । सु.कल्प.८अ. ।

**रक्तरेणुः** । पुं । सिन्दूरे । भा. । पलाशकलिकायां । मे. । पुन्नागवृक्षे । रा.नि.व.१० ।

**रक्तरेणुका** । स्त्री । पलाशकलिकायाम् । পলাশকুঁড়ি । श.मा. ।

**रक्तरैवतकः** । पुं । द्वीपान्तरखर्ज्जूरीवृक्षे । रा.नि.व.११ ।

**रक्तरोहितकः** । पुं । (Rheum wightii.) রক্তরোড়া । हिं रक्तरोहिड़ा ।

**रक्तलशुनः** । पुं । रक्तरसोने । লাল রশুন । रा.नि.व.७ ।

**रक्तला** । स्त्री । काकादन्यां । কুঁচ গাছ । मूर्व्वालतायाम् । रा.नि.व.३ ।

**रक्तलोचनः** । पुं । कपोते । हे.च. । भा. ।

**रक्तलोध्रः** । पुं । रक्तवर्णलोध्रवृक्षे ।

**रक्तवटी** । स्त्री । मसूरिकायां । वसन्ते । चिका. ।



**रक्तवरटी** । स्त्री । मसूरिकायाम् । वसन्त । जटा. ।

**रक्तवर्गः** । पुं । दाड़िमकिंशुकलाक्षाहरिद्राद्वारुहरिद्राकुसुम्भपुष्पमञ्जिष्ठाबन्धूकेषु । "दाड़िमकिंशुकं लाक्षा बन्धूकञ्च निशाद्वयम् । कुसुम्भपुष्पं मञ्जिष्ठा इत्येते रक्तवर्गकः ॥" रा.नि.व.२२ ।

**रक्तवर्णः** । पुं । इन्द्रगोपकीटे । লাল আষাড়ে পোকা । रा.नि.व.१९ । गोमेदमणौ । प्रवाले । कम्पिल्लके । वै.निघ. ।

**रक्तवर्त्तकः** । पुं । विष्किरपक्षिविशेषे । লাল বটের । च.सू.२७अ. ।

**रक्तवर्त्मा** । पुं । कुक्कुटे । वै.निघ. ।

**रक्तवर्द्धनः** । पुं । वार्त्ताकौ । श.च. ।

**रक्तवर्षाभूः** । स्त्री । रक्तपुनर्नवायाम् । গাদাপুণ্যা । रा.नि.व.५ ।

**रक्तवल्ली** । स्त्री । पीतपुष्पदण्डोत्पले । र.मा. । मञ्जिष्ठायां । नलुकायाम् । वै.निघ. ।

**रक्तवातः** । पुं । वातरक्तनामरोगविशेषे । यो रोगः रक्तवस्त्रप्रवालहरणादुत्पद्यते । निष्कृतिश्च यस्मात् पद्मरागसहित-सवस्त्र-महिष दानाद्भवति । "रक्तवस्त्रप्रवालानां हारी स्याद्रक्तवातवान् । सवस्त्रां महिषीं दद्यात् पद्मरागसमन्विताम् ॥" कर्म्मविपाकः । नारिकेलमूलं छागीदुग्धेन पीतं वातरक्तं नश्यति । पुराणम् । See वातरक्तः ।

**रक्तवारिजम्** । क्ली । कोकनदे । রক্তপদ্ম । रा.नि.व.१० ।

**रक्तवास्तुकः** । पुं । शोणवास्तुकशाके । লাল বেতো শাক । वै.निघ. ।

**रक्तविकारः** । पुं । रक्तजरोगे । निदा. ।

**रक्तविद्रधिः** । पुं । रक्तजन्यविद्रधौ । लक्षणं —"कृष्णस्फोटावृतः श्यावः तीव्रदाहरुजाकरः । पित्तविद्रधिलिङ्गस्तु रक्तविद्रधिरुच्यते ॥" मा.नि. ।

**रक्तविद्रुमः** । पुं । प्रवाले ।

**रक्तवृन्तकः** । पुं । पुनर्नवायाम् । वै.निघ. ।

**रक्तवृन्ता** । स्त्री । शेफालिकावृक्षे । শিউলি গাছ । प.सु. ।

**रक्तशमनम्** । क्ली । कम्पिल्लके । কমলাগুঁড়ি । वै.निघ. ।

**रक्तशालिः** । पुं, स्त्री । (Oriza sativa.) रक्तधान्ये । দাদখানি মিহি চাউল । प.मु. । तें एर्रनिवर्नेगलधान्यमु । तत्पर्य्यायाः—ताम्रशालिः शोणशालिः लोहितः । गुणाः—सुमधुरः लघुः स्निग्धः बलकरः रुचिकृद्दीपनः मुखजाड्यहरः पथ्यश्च । सर्व्वरोगघ्नः रुच्यः पित्तदाहवातरक्तघ्नश्च । रा.नि.व.१६ । त्रिदोषघ्नः चक्षुष्यः शुक्रलः मूत्रलः तृष्णाघ्नः बल्यः स्वर्य्यः हृद्यश्च । राज. । त्रिदोषघ्नी चक्षुष्या मूत्ररोगहा । अत्रि.१५अ. । वा.सू.६अ. । "रक्तो महान् सकलमः ।" च.द.ज्व.चि. । "पेयां वा रक्तशालीनां पार्श्ववस्तिशिरोरुजि ।" तन्मण्डगुणाः—रक्तशाल्युद्भवं मण्डं मधुरं ग्राहि शीतलं । प्रमेहानश्मरीं हन्ति वातलं पित्तहृद्वरम् ॥" अत्रि. १२अ. ।

**रक्तशालुकः (का)** । पुं, स्त्री । रक्तकमलकन्दे । রক্তপদ্মের গেঁড় । वै.निघ. ।

**रक्तशाल्मलिः** । पुं । रक्तपुष्पशाल्मलिवृक्षे । রক্তশিমুল । वै.निघ. ।

**रक्तशासनम्** । क्ली । सिन्दूरे । हारा. ।

**रक्तशिग्रुः** । पुं । रक्तशोभाञ्जनवृक्षे । লাল সজিনা গাছ । मं रक्तसेगुया । कं केंपिनेयनुग्गि । तत्पर्य्यायाः,—कृष्णजीरकः गर्भपातकः रक्तकः मधुरः बहलच्छदः सुगन्धः केशरी सिंहः मृगारिः । गुणाः—महावीर्य्य. मधुरः सारकः रसायनः शोफाध्मानवातघ्नः पित्तश्लेष्मघ्नश्च । रा.नि.व.७ ।

**रक्तशिम्बी** । स्त्री । शिम्बीभेदे । লাল শিম্ ।

**रक्तशीर्षकः** । पुं । लवणखोव्याम् । प.सु. । सारसपक्षिणि । च.सू.२७अ. ।

**रक्तशृङ्गिकम्** । क्ली । विषे । रा.नि.व.६ ।

**रक्तशेखरः** । पुं । पुन्नागवृक्षे । र.मा. ।

**रक्तश्रीखण्डकम्** । क्ली । रक्तचन्दने । वै.निघ.२भ.वा.व्या.चि,महाराज्ञादौ ।

**रक्तश्वेतः** । पुं । तद्वर्णमहाविषवृश्चिकभेदे । सु.कल्प ८अ. ।

**रक्तष्ठीविसन्निपातः** । पुं । स्वनामख्यातसन्निपातविशेषे । तस्य लक्षणं—"रक्तष्ठीवी ज्वरवमितृषामोहशूलातिसारहिक्काध्मानभ्रमणदवथुश्वाससञ्ज्ञाप्रणाशः । श्यामा रक्ताधिकतररसा मण्डलोत्थानरूपा रक्तष्ठीवी निगदित इह प्राणहन्ता प्रसिद्धः ॥" निदा. ।

**रक्तसंज्ञम्।** क्ली। कुङ्कुमे। त्रिका.।

**रक्तसङ्कोचपिशुनम्।** क्ली। कुङ्कुमे। त्रिका.।

**रक्तसंवरणम्।** क्ली। कृष्णाञ्जने। वै.निघ.।

**रक्तसन्दंशिका।** स्त्री। जलौकायाम्। জোঁক। रा.नि.व.१९।

**रक्तसन्ध्यकम्।** क्ली। रक्तकह्लारे। রক্তকম্বল অম.। रक्तोत्पले। वै.निघ.।

**रक्तसरोरुहम्।** क्ली। रक्तपद्मे। अम.।

**रक्तसर्षपः।** पुं। (Brassica nigra.) रक्तवर्णसर्षपे। রাই বা রক্তসরিষা। हिं लालिराइ, माकड़ाराइ। मं महुरी। कं सासिराइ। ते अवलौ। ता. कडुघो। तत्पर्य्यायाः,—राजी आसुरी रक्तिका रक्तसर्षपः तीक्ष्णगन्धा मधुलिका क्षवः क्षवकः क्षुतकः। गुणाः—कटुः तिक्तः उष्णः वातघ्नः श्लेष्मशूलघ्नः दाहपित्तकरः कफगुल्मक्रिमिव्रणघ्नश्च। रा.नि.व.१६। तत्तैलगुणाः,—तीक्ष्णं शिशिरं केश्यं कण्डूघ्नं त्वग्दोषनाशि वातादिदोषनाशकञ्च। पत्रगुणाः,—कटु स्वादु उष्णं अग्निदीपनं क्रिमिवातकफकण्ठामयहरञ्च।

**रक्तसहा (ह्यः)।** स्त्री, पुं। रक्ताम्लानपुष्पवृक्षे। রক্তপুষ্পঝাঁটী গাছ। रा.नि.व.१०।

**रक्तसारम्।** क्ली। रक्तचन्दने। प.मु.। रा.नि.व.१२। रस.र.च.द.मेह.चि.न्यग्रोधादिपञ्चके। पत्तङ्गचन्दने। बकमकाष्ठे। प.मु.। पुं। अम्लवेतसे। रा.नि.व.६। रक्तखदिरवृक्षे। रा.नि.व.८। सु.चि.९अ.। रक्तबीजासनवृक्षे। रा.नि.व.९। रक्तशिंशपायाम्। वाराहीकन्दे। वै.निघ.।

**रक्तसूः।** स्त्री। शरीरस्थरसधातौ। রসধাতু। रा.नि.व.१८।

**रक्तसौगन्धिकम्।** क्ली। रक्तकह्लारपुष्पे। जटा.।

**रक्तस्थज्वरः।** पुं। रक्तगतज्वरविशेषे। लक्षणं—"रक्तनिष्ठीवनं दाहो मोहश्छर्द्दनविभ्रमौ। प्रलापः पिड़का तृष्णा रक्तप्राप्ते ज्वरे नृणाम्॥" मा.नि.।

**रक्तस्रावः।** पुं। अम्लवेतसे। जटा. नेत्रसन्धिगतरोगे। मिदा.। अश्वस्य रक्तजन्यनेत्ररोगे लक्षणं यथा—"रक्ताभिष्यन्दिनोऽश्वस्य नेत्रं भवति लोहितं। सर्व्वं शिभामर्द्दं वा स्रावरुग्दाहपीड़ितम्। रक्तस्रावोऽथवा यस्य वाजिनो लोचनाद्भवेत्। रक्तस्रावाभिधानन्तु नेत्ररोगं तमादिशेत्॥" ज.द २०अ.।

**रक्तस्रुतिः।** स्त्री। रक्तस्रावे। व्याक.।

**रक्तहरः।** पुं। भल्लातके। ভায়লা। वै.निघ.। त्रि। रक्तघ्नद्रव्यमात्रे।

**रक्ता।** स्त्री। गुञ्जायाम्। কুঁচ। रा.नि.व.३। सु.चि.३७अ., सु.कल्प.५अ.। लाक्षायां। मञ्जिष्ठायां। रा.नि.व.६।२३। शिम्बीभेदे। प.मु.। उष्ट्रकाण्डीनामपुष्पवृक्षे। रा.नि.व.१०। लक्ष्मणाकन्दे। वचायाम्। वै.निघ.। रक्तवर्णशतपद्याम्। লাল কেন্নুই। सु.कल्प.८अ.। कृच्छ्रसाध्यलूताविशेषे। कर्णशिराभेदे। वा.उ.१अ.।

**रक्ताका(ङ्कु)रः।** पुं, क्ली। प्रवालद्रुमे। পলাশ গাছ। रा.नि.व.१३।

**रक्ताक्तम्।** क्ली। रक्तचन्दने। जटा.। [ निघ.।

**रक्ताख्यातः (कः)।** पुं। रक्तापामार्गे। वै.

**रक्ताङ्गम्।** क्ली। रक्तचन्दने। प.मु.। कुङ्कुमे। मे.। पुं। कम्पिल्लके। কমলাগুঁড়ি। प.मु.। प्रवालतरौ। रा.नि.व.१३। মৎকুণ। ছারপোকা। रा.नि.व १९।

**रक्ताङ्गी।** स्त्री। कटुकायां। কটকী। रा.नि.व.६। मञ्जिष्ठायाम्। भा.। जीवन्त्याम्। मे.। नलुकायाम्। वै.निघ.।

**रक्ताञ्जना।** स्त्री। रक्ताञ्जनिकायाम्। রক্তাঞ্জনিশা। च.द.क्षारतैले।

**रक्ताढ़की।** स्त्री। रक्तपुष्पाढ़क्याम। লাল অড়হর। गुणाः—हृद्या बल्या पित्ततापादिहरी च। रा.नि.व १६।

**रक्ताण्डः।** पुं। अश्वस्य अण्डरोगभेदे। ज.द. ५०अ.। See अण्डस्कन्दः।

**रक्तातिसारः।** पुं। सरक्तातिसाररोगे। तस्य सम्प्राप्तिः—"पित्तकृन्ति यदात्यर्थं द्रव्याण्यश्नाति पैत्तिके। तदोपजायते ऽभीक्ष्ण रक्तातीसार उल्वणः॥" मा.नि.।

**रक्ताधारः।** पुं। चर्म्मणि। रा.नि.व.१८।

**रक्तापराजिता।** स्त्री। रक्तपुष्पापराजितायाम्।

**रक्तापहम् (हा)।** क्ली, स्त्री। बोलनामगन्धद्रव्ये। থুনখারাপি। रा.नि.व.६।



**रक्तापामार्गः।** पुं। स्वनामख्यातक्षुपे। লাল আপাঙ্। हिं लालचिरचिरा। मं रक्तलटजीरा। कं वड़ाभाघाड़ा। तें केम्पिगुत्तरणि। तत्पर्य्यायाः,—शिरोवृत्तफलः क्षुद्रापामार्गः आघट्टकः दुग्धिनिका रक्तविट् कल्यपत्रिका। गुणाः—शीतः कटुः कफवातघ्नः व्रणकण्डूविषघ्नः संग्राही वान्तिघ्नश्च। रा.नि.व.४। वातविष्टम्भी कफकृत् शीतलः। भा.पू.१भ.।

**रक्ताब्ज(क)म्।** क्ली। रक्तकमले। वै.निघ.।

**रक्ताभः (भा)।** पुं, स्त्री। रक्तजपायाम्। লাল জবা। इन्द्रगोपकीटे। वै.निघ.।

**रक्ताभिष्यन्दः।** पुं। सर्व्वगतनेत्ररोगभेदे। यथा—"रक्ताश्रुराजी दूषीक-शुक्लमण्डलदर्शनम्। रक्तस्यन्देन नयनं सपित्तस्यन्दलक्षणम्॥" वा.उ. १५अ.।

**रक्ताभ्रम्।** क्ली। रक्तवर्णाभ्रके। লাল অভ্র। रा.नि.व.१३।

**रक्ताम्भोजम्।** क्ली। कोकनदे। রক্তকমল। रा.नि.व.१०।

**रक्ताम्रः।** पुं। कोषाम्रवृक्षे। জলপাই। रा.नि.व.११।

**रक्ताम्लातकः** } **रक्ताम्लानः** } पुं। रक्तझिण्टीक्षुपे। লাল-ঝাঁটী ফুলের গাছ। हिं लालकट्सरैया। मं वाणभाड़। कं वणदगिड़ु। तत्पर्य्यायाः,—रक्तप्रसवः रक्तसहः रागप्रसवः रामालिङ्गनकारकः अपरिम्लानः कुरवकः वधूत्सवप्रसवः सुभगः भ्रमरानन्दः। गुणाः—उष्णः कटुः वातामयशोफघ्नः ज्वरघ्नः आध्मानशूलकासश्वासघ्नः वर्ण्यश्च। रा.नि.व.१०।

**रक्तारिः।** पुं। महाराष्ट्रीक्षुपे। प.मु.।

**रक्तार्कः।** पुं। अरुणार्कवृक्षे। লাল আকন্দ গাছ। तत्पर्य्यायाः,—विश्वीरः सदापुष्पी रूपिका आदित्यपुष्पिका दिव्यपुष्पिका। गुणाः—"अर्कद्वयं शस्त्रवातकुष्ठकण्डूविषव्रणान्। निहन्ति प्लीहगुल्मार्शो यकृच्छ्लेष्मोदरक्रिमीन्॥" मद.व.१। रा.नि.व.१०।

**रक्तार्त्तिः।** स्त्री। शोणितामये। रा.नि व.२०।

**रक्तार्म्म (न्)।** क्ली। नेत्ररोगभेदे। लक्षणं यथा—"पद्माभं मृदु रक्तार्म्म यन्मांसं चीयते सिते।" मा.नि.।

**रक्तार्व्वुदः।** पुं। शुकरोगे। रक्तजन्यार्व्वुदरोगे। See अर्व्वुदः।

**रक्तार्शः।** क्ली। रक्तजन्यगदजरोगे। लक्षणं—"तनु चारुणवर्णञ्च फेनिलञ्चासृगर्शसाम्। कट्यूरुगुदशूलञ्च दौर्व्बल्यं यदि चाधिकम्। तत्रानुबन्धो वातस्य हेतुर्यदि च रूक्षणम्। शिथिलं श्वेतपीतञ्च विट् स्निग्धं गुरु शीतलम्। यदार्शसां घनञ्चासृक् तन्तुमत्पाण्डु पिच्छिलम्। गुदं सपिच्छं स्तिमितं गुरु स्निग्धञ्च कारणम्। श्लेष्मानुबन्धो विज्ञेयस्तत्र रक्तार्शसां बुधैः॥" मा.नि.।

**रक्ता(लता)।** स्त्री। मञ्जिष्ठायां। सु.कल्प.५अ.।

**रक्तालुः।** पुं। (Dioscorea sativa.) Common Yam. रक्तपिण्डालुके। লাল পিণ্ড আলু। हिं रताऊ, रुजगा, रतालु। ता. यामस्कोल्ल। तत्पर्य्यायाः,—रक्तकन्दः रक्तपिण्डकः रक्तपिण्डालुः लोहितः लोहितालुः। गुणाः—शीतलः मधुरः अम्लः श्रम-पित्त-दाहघ्नः वृष्यः बलपुष्टिकरः गुरुश्च। रा.नि.व.७। शालिधान्यविशेषे। प.मु.। [ ३अ.।

**रक्तावसेचनम्।** क्ली। रक्तमोक्षणे। च.चि.

**रक्ताश्वमारपुष्पम्।** क्ली। रक्तकरवीरपुष्पे, রক্তকরবী ফুল। सि.यो.विषमज्वरे। "रक्ताश्वमारपुष्पञ्च" [ कृते शतके।

**रक्ताश्वारिः।** पुं। रक्तकरवीरवृक्षे। रावण-

**रक्तास्रावः।** पुं। रक्तजनेत्रसन्धिरोगे। लक्षणं यथा—"रक्तास्रावः शोणितोत्थः सरक्तं कोष्णं नाल्पं संस्रवेन्नातिसान्द्रम्।" सु.उ.२अ.।

**रक्ताक्षः।** पुं। महिषे। पारावते। चकोरे। मे.। सारसपक्षिणि। रा.नि.व.१९। रोहितमत्स्ये।

**रक्ताक्षी।** स्त्री। गुग्गुलौ। वै.निघ.२भ.असा.चि.।

**रक्तिः।** पुं। अष्टसर्षपमाने। च.कल्प १२अ.।

**रक्तिका।** स्त्री। गुञ्जायाम्। কুঁচ। र.मा.। रा.नि.व.३। राजिकायाम्। रा.नि.व.१६।

**रक्तेक्षणः।** पुं। कपोते। পায়রা।

**रक्तेक्षुः।** पुं। रक्तदण्डेक्षौ। কাজলা আক্। तत्पर्य्यायाः,—सूक्ष्मपत्रः शोणः उत्कटः मधुरः कृस्वमूलः लोहितः लोहितेक्षुः। गुणाः—पाके मधुरः शीतलः मृदुः पित्तदाहहरः वृष्यः तेजोबलवर्द्धनश्च। रा.नि.व.१४।

**रक्तेक्षुशर्करा ।** स्त्री । रक्तेक्षुजातशर्करायाम् । गुणा:—पित्तघ्नी । रा.नि.व.१४ ।

**रक्तैरण्ड: ।** पुं । रक्तवर्णैरण्डवृक्षे । লাল ভেরেণ্ডা । तत्पर्य्याया:,—व्याघ्र: व्याघ्रदल हस्तिकर्ण: रुबु: उरुबुक: नागकर्ण: चञ्चु: उत्तानपत्रक: करपर्ण: पाचन: स्निग्ध: रक्तक: चिरवाख्य: रुक्षैरण्ड: । अयं प्रायेण श्वेतवद्गुण: । विशेषस्तु शोथघ्न: लघु: अरोचकघ्न: कफश्वासघ्न: ज्वरघ्न: रक्तपाण्डुभ्रान्तिनाशनश्च । रा नि.व.८ । "रक्तोरुबुकस्तुवरो रसे कटुर्लघु: स्मृत: । तिक्तो वातकफश्वासकासक्रम्यर्शघ्नहा । रक्तदोषपाण्डुरुजाभ्रान्त्यरोचकनाशन: । प्रायस्त्वन्ये गुणाश्चास्य श्वेतवच्च समीरिता: ॥" वै.निघ. ।

**रक्तैर्वारु: ।** पुं । इन्द्रवारुणीलतायाम् । रा.नि.व.३ ।

**रक्तोच्चटा ।** स्त्री । श्वेतगुञ्जायाम् । भा. ।

**रक्तोत्पलम् ।** क्ली । लघुरक्तपद्मे । कोकनदे । प.मु. । रा.नि.व.१० । सु.सू.३८अ. । गैरिके । पुं, स्त्री (ला) । शाल्मलीवृक्षे । रा.नि.व.८ ।

**रक्तोदर: ।** पुं । रोहितमत्स्ये । महाविष-मध्यविष-वृश्चिकविशेषे । "जन्मैतेषां सर्पकीथात् प्रदिष्टं देहेभ्यो वा घातितानां विषेण । एभिर्दष्टे सर्पवेगप्रवृत्ति: स्फोटोत्पत्ति भ्रान्ति-दाहौ ज्वरश्च ॥ खेभ्य: कृष्णं शोणितञ्चापि तीव्रं तस्मात् प्राणैस्त्यज्यते शीघ्रमेव ॥" सु.कल्प.८अ. ।

**रक्तोपलम् ।** क्ली । गिरिमृत्तिकायाम् । हारा. ।

**रक्तौदनम् ।** क्ली । रक्तशाल्यादिभक्ते । अलक्तकरञ्जितभक्ते । च.द.बाल.चि. ।

**रघुनाथ: ।** पुं । वैद्यविलासनामग्रन्थकारे ।

**रङ्कु: ।** पुं । मत्स्यरङ्के । वै.निघ. । शबलपृष्ठहरिणविशेषे । रा.नि.व.१९ ।

**रङ्गम् ।** क्ली । वङ्गधातौ । রাঙ্ । प.मु. । रा.नि.व.१३ । पुं । टङ्कणे । সোহাগা । रा.नि.व.६ । खदिरसारे । रा.नि.व.८ ।

**रङ्गकम् ।** क्ली । रक्ते ।

**रङ्गकाष्ठम् ।** क्ली । पत्तङ्गे । বকমকাঠ । रा.नि.व.१२ ।

**रङ्गजम् ।** क्ली । सिन्दूरे । र.मा. ।

**रङ्गद: ।** पं । खदिरसारे । रा.नि.व.८ । टङ्कणक्षारे । रा.नि.व.६ ।

**रङ्गदलिका ।** स्त्री । नागवल्लीलतायाम् । व निघ. । [भा. ।

**रङ्गदा ।** स्त्री । स्फटिकायाम् । ফট্কিরি ।

**रङ्गदायकम् ।** क्ली । कङ्कुष्ठे । रा.नि.व.१३ ।

**रङ्गदृढा ।** स्त्री । स्फटिकायाम् । रा.नि.व १३ ।

**रङ्गपत्री ।** स्त्री । नीलीवृक्षे । নীল গাছ । रा.नि व.४ ।

**रङ्गपुष्पी ।** स्त्री । नीलीवृक्षे । रा.नि.व.४ । जवावृक्षे । वै.निघ. ।

**रङ्गबीजम् ।** क्ली । रूप्ये । त्रिका. ।

**रङ्गमाणिक्यम् ।** क्ली । माणिक्यरत्ने । रा.नि.व.१३ ।

**रङ्गमाता (तृका) ।** स्त्री । लाक्षायाम् । লাক্ষা । रा.नि.व.६।२३ । त्रिका. ।

**रङ्गलता ।** स्त्री । ( Helicteres Isora. ) आवर्त्तकीलतायाम् । আৎমোড়া । हिं मरोर फली भेन्दु, कपासी । तें गुवादर्र । बम्. मेरादशिं केवान् । तत्पर्य्याया:,—कल्याणी हंसपदी रक्षनी स्वर्णपत्रिका । गुणा:—अग्निमान्द्ययकृत्प्लीहोदर-बद्धगुदाजीर्णविषमज्वर-पाण्डुकामलाशूलघ्नी । केचित् ।

**रङ्गलासिनी ।** स्त्री । शेफालिकावृक्षे । শিউলি ফুলের গাছ । श.च. ।

**रङ्गबीजम् ।** क्ली । रौप्ये ।

**रङ्गसहश्रम् ।** क्ली । यष्टे । দস্তা । भा. ।

**रङ्गक्षार: ।** पुं । टङ्कणक्षारे । সোহাগার খই । वै.निघ. ।

**रङ्गा ।** स्त्री । जवावृक्षे । জবা গাছ । वै.निघ. ।

**रङ्गाङ्गा ।** स्त्री । फटिकारिकायाम् । ফট্কিরি । रा.नि.व.१३ ।

**रङ्गारि: ।** पुं । करवीरवृक्षे । করবী গাছ । र.मा. ।

**रङ्गिणी ।** स्त्री । शतमूल्याम् । जटा. । कैवर्त्तिकायाम् কেওট্মুতা । रा.नि.व.६ । हरिद्रायाम् । वै निघ. ।

**रङ्गेश्चालुकम् ।** क्ली । स्वनामख्याते आलौ । রাঙা আলু । त्रिका. ।

**रज: ।** पुं । पर्पटके । ক্ষেৎপাব্ড়া । भा.म.१ भ.पित्तश्लम.ज्व.चि. । "पथ्यारेवतरामसेनकरज: ।" भा.म.१भ.ज्वरे कास.चि. । "कलिङ्गद्रुफल रज: ।" वै.निघ.दुर्जलज्व.चि.ज्ञानोदयरसे । क्ली । स्त्रीकुसुमे । श.र. ।



**रज: (स्) ।** पुं, क्ली । स्त्रीपुष्पे । अमरदत्त: । श.र. । "पाचिता: पित्ततापेन रसाद्या धातव: क्रमात् । शुक्रत्वं यान्ति मासेन तथा स्त्रीणां रजो भवेत् ॥" शार्ङ.६अ. । रूषणे । उद्रेके । कालुष्ये । मतिभ्रमे । "रजोरूषणमुद्रेक: कालुष्यं मतिविभ्रम: ।" रा.नि.व.२१ । परागे । मे. ।

**रज:शय: ।** पुं । कुक्कुरे । श.मा. ।

**रज:सारम् ।** क्ली । कर्पूरे । नकुल.१२अ. ।

**रज:सारथि: ।** पुं । वायौ ।

**रजतम् ।** क्ली । रौप्ये । अम. । स्वर्णे । वि.ज्व.चि.ज्वरकुञ्जरपारीन्द्ररसे । हस्तिदन्ते । हे.च. । शुक्लवर्णे । रक्तवर्णे । रक्ते ।

**रजतप्रभ: ।** पुं । सोमलतायाम् । সোমলতা । सु चि.२९अ. ।

**रजतोपमम् ।** क्ली । रौप्यमाक्षिके । वै.निघ. ।

**रजनक: ।** पुं । कम्पिल्लके । কমলাগুঁড়ি । वा.सू.१५अ.श्यामादि: । "शिखरिरजनकच्छिन्नरुहा: करञ्जा: ।" [अ. टी. ।

**रजान: ।** स्त्री । वास्तुके । रात्रौ । हरिद्रायाम् ।

**रजनिपुष्पम् ।** क्ली । हरिद्रापुष्पे । হলুদফুল । रस.र.नागार्ज्जुनचूर्णे ।

**रजनी ।** स्त्री । हरिद्रायाम् । रा.नि.व.६ । सि.यो.पाण्डु.चि. । सु.सू.३८अ.वल्लीपञ्चके । यतुकालतायाम् । रा.नि.व.३ । नीलिन्याम् । নীল । मे. । दारुहरिद्रायाम् । वास्तुके । वै.निघ. । रात्राम् । अम. ।

**रजनीगन्धा ।** स्त्री । (Polianthes tuberosa.) Tuberose. स्वनामख्यातपुष्पवृक्षे । রজনীগন্ধ । हिं गुलशब्भू । भूरिप्र. ।

**रजनीजलम् ।** क्ली । नीहारे । हारा. ।

**रजनीद्वयम् ।** क्ली । हरिद्राद्वये, हरिद्रादारुद्रयो । च द.विषमज्वरे ।

**रजनीपुष्प: ।** पुं । पूतिकरञ्जे । रा.नि.व.९ ।

**रजनीहासा ।** स्त्री । शेफालिकापुष्पवृक्षे । श.र. ।

**रजस्सानु: ।** पुं । मनसि, हृदये । उणा.

**रजस्वर्ण: ।** पुं । पीतधुस्तूरके । वै.निघ. ।

**रजस्वल: ।** पुं । महिषे । त्रिका. । पारदे । वै.निघ. । स्त्री (ला) । जातरजस्कायाम् स्त्रियि । रा.नि.व.१८ । तत्स्वरूपं यथा—"द्वादशाद्वत्सरादूर्द्ध्वमापञ्चाशत्समा: स्त्रिय: । मासि मासि भगद्वारा प्रकृत्यैवार्त्तवं स्रवेत् । आर्त्तवस्रावदिवसादृतु: षोड़शरात्रय: । गर्भग्रहणयोग्यस्तु स एव समय: स्मृत: ॥" रज:स्वलाकृत्यं— "आर्त्तवस्रावदिवसादहिंसाब्रह्मचारिणी । शयीत दर्भशय्यायां पश्येदपि पतिं न च ॥" इत्यादि । भ. । ऋतुस्नानानन्तरमादौ पतिमेव पश्येत् ।

**रज्जु: ।** पुं । केशवेण्याम् । दामनि । দড়ি । मांसरज्ज्वाम् । "पृष्ठवंशस्योभयत्र महत्यो मांसरज्जव: । चतस्रो मांसपेशीनां बन्धन तत् प्रयोजनम् ॥" भा. ।

**रञ्जक: ।** पुं । कम्पिल्लके । কমলাগুঁড়ি । रा.नि.व.१३ । भल्लातकवृक्षे । वै.निघ । तन्नामकजठराग्नौ । तस्य स्थानं यकृत्प्लीह्नोर्मध्यम् । स एवाहाररसं रञ्जयति । सु.सू.२१अ. । क्ली । हिङ्गुले, हिङ्गुलविशेषे । रा.नि.व.१३ । स्त्री (का) । नखरञ्जिन्याम् । মেহেদি গাছ । वै.निघ. ।

**रञ्जनम् ।** क्ली । रक्तचन्दनभेदे । বকম কাঠ । र.मा. । रक्तचन्दने । मद व.१ । हिङ्गुले । रा.नि.व.१३ । स्वर्णे । जातीफले । वै.निघ. । पारदरञ्जनद्रव्ये । तारकर्म्मण्यस्य न तथा प्रयोगो दृश्यते । केवलं निर्म्मलं ताम्रं वापितं रञ्जनेन तु । कुरुते त्रिगुणं जीर्णं लाक्षारससनिभं रसम् ॥" रस.चि.३अ. । पुं । मुञ्जतृणे । মুজ । रा.नि.व.८ । कम्पिल्लके । কমলাগুঁড়ি । वै.निघ. ।

**रञ्जनक: ।** पुं । कट्फलवृक्षे । रा नि.व.९ ।

**रञ्जनकेशी ।** स्त्री । नीलीवृक्षे । वै.निघ. ।

**रञ्जनगण: ।** पुं । रञ्जनद्रव्यवर्गे । "चतुर्विधा हरिद्रा स्यात् पत्तङ्गं रक्तचन्दनं । नीलीकुसुम्भमञ्जिष्ठालाक्षामहद्धि किंशुकम् ॥" रा.नि.व.९ ।

**रञ्जनद्रु: (म:) ।** पु । अच्छुकवृक्षे । আচ্‌ফুলের গাছ । श.चि. । धूनकवृक्षे । वै.निघ. ।

**रञ्ज(ञ्जि)नी ।** स्त्री । गुण्डारोचनिकायाम् । श.च. । नागवल्लीलतायाम् । वै.निघ. । नील्याम् । रा.नि.व.४ । जन्तुकालतायाम् । रा.नि.व.३ ।

मञ्जिष्ठायाम् । शेफालिकायाम् । मे । हरिद्रायाम् । रा.नि.व.६ । पर्पट्याम् । रा.नि.व.१३ ।

**रञ्जनीपुष्पः** । पुं । पूतिकरञ्जे । नाटाकरञ्ज । रा.नि.व.९ ।

**रणः** । पुं । दुन्दामेषे । क्रुञ्चा । वै.निघ. ।

**रणघण्टासमाकृतिः** । पुं । महाशणे । वै.निघ ।

**रणपक्षी** (इन्) । पुं । रणगृध्रे । শ্যেন পাখী । वै.निघ. ।

**रणप्रियम्** । क्ली । उशीरे । रा.नि.व.१२ । पुं । श्येनपक्षिणि । रा.नि.व.१९ ।

**रणमुष्टिः** । पुं । विषमुष्टिक्षुपे । कुचिला इति भाषा । रा.नि.व.४ ।

**रणमूर्द्धजा** । स्त्री । कर्कटशृङ्ग्याम् । रा.नि.व.६ ।

**रणरणः** । पुं । भ्रमरे । मशके । मशा । त्रिका. । (कः) उत्कण्ठायाम् । हे.च. ।

**रणालङ्करणः** । पुं । कङ्कपक्षिणि । কঁক পাখী । रा.नि.व.१९ ।

**रण्डकः** । पुं । अफलवृक्षे । বাঁড়া গাছ । श.च. ।

**रण्डा** । स्त्री । मूषिककर्ण्याम् । अम. । प्र.बृहत् सोमनाथरसे ।

**रतम्** । क्ली । मैथुने । अम. । गुह्ये । मे. ।

**रतकीलः** । पुं । कुक्कुरे । हे.च. ।

**रतज्वरः** । पुं । काके । त्रिका. ।

**रतनारीचः** । पुं । कुक्कुरे । वै.निघ. ।

**रतनिधिः** । पुं । खञ्जनपक्षिणि । श.र. ।

**रतव्रणः** । पुं । कुक्कुरे । त्रिका. । मे. ।

**रतशायी** (इन्) । पुं । कुक्कुरे । हे.च. ।

**रताङ्गी** । स्त्री । कुज्झटिकायाम् । त्रिका. ।

**रतान्दुकः** । पुं । कुक्कुरे । हे.च. ।

**रतार्द्दः** । पुं । कुक्कुरे । श.मा. ।

**रतिः** । स्त्री । प्रीत्याम् । सुरते । गुह्यदेशे । मे. ।

**रतिकुहरम्** । क्ली । भगे । त्रिका. ।

**रतिक्रिया** । स्त्री । मैथुने ।

**रतिगृहम्** । क्ली । भगे । त्रिका. ।

**रतिचर्य्या** । स्त्री । स्त्रीसेवायाम् । वा.उ.४०अ. ।

**रतिमन्दिरम्** । क्ली । योनौ । जटा. ।

**रतिरथः** । पुं । नखे ।

**रतिलक्षणम्** । क्ली । रतिक्रियायाम् ।

**रतिवल्लभमोदकः** । पुं । वाजीकरणाधिकारे औषधम् । पाठः—'शक्राशनस्य बीजानि चूर्णितानि पलाष्टकं । कुडं हविषश्चैव खण्डप्रस्थं प्रगृह्य च । शतपुष्पीरसप्रस्थं प्रस्थं शक्राशनस्य च । गव्यमाजं पयः प्रस्थं दत्त्वा प्रस्थद्वयं पचेत् । धात्रीद्विजीरकं मुस्तं त्वगेलापत्रकेशरं । आत्मगुप्ता चातिबला तालाङ्कुरकशेरुकं । शृङ्गाटकं त्रिकटुकं धन्याकं चित्रकं तथा । पथ्या द्राक्षा च काकोल्यौ खर्ज्जूरं क्षुरकं तथा । कटुका मधुकं कुष्ठं लवङ्गं सारसैन्धवं । यमानिका चाजमोदा जीवन्ती गजपिप्पली । प्रत्येकं कर्षमेकञ्च चूर्णितानि शुभानि च । मधुनः कुडवार्द्धञ्च पाकशेषे तथा क्षिपेत् । मृगाण्डजं सकर्पूरं यथालाभं विनिक्षिपेत् । रतिवल्लभनामायं सेव्यमानो रसायनः ॥'' सिद्धिबीजचूर्णं ८ प. ( मतान्तरे ५ प. ) घृतं ४ प. शर्करा २ श. शतावरीरसः गव्यदुग्धं छागदुग्धं प्र. ४ श. । प्रक्षेपः—आमलकी जीरकं कृष्णजीरकं मुस्ता त्वक् एला तेजपत्रं नागकेशरं कपिकच्छूबीजं (আলকুশীর বীজ) गोरक्षतण्डुला । (গোরক্ষ-চাকুলিয়া) तालास्थिशस्यं कशेरुकं शृङ्गाटकं त्रिकटु धान्यकं चित्रकं ( मतान्तरे ऋषभं वङ्गञ्च ) हरीतकी द्राक्षा काकोली क्षीरकाकोली पिण्डखर्ज्जूरं कोकिलाक्षबीजं कटुकी यष्टिमधु कुष्ठ लवङ्गं सैन्धवं यमानी वनयमानी जीवन्ती गजपिप्पली प्र. २ तो. मधु २ प. । रस.र. भैष. ।

**रतिसत्वरा** । स्त्री । पृक्कायाम् । পিড়িং শাক । श.च. ।

**रतिसाधनम्** । क्ली । शिश्ने । वै.निघ. ।

**रती** । स्त्री । रक्तगुञ्जायाम् । वै.निघ. ।

**रतोद्वहः** । पुं । कोकिले । श.मा. ।

**रत्नम्** । क्ली । हीरके । रा.नि.व.१३ । मुक्तादौ । रत्नानि नव—रत्नं गारुत्मतं (পান্না) पुष्परागः माणिक्यं पद्मरागः इन्द्रनीलः मरकतः गोमेदः (वैदूर्य्यं) मौक्तिकं विद्रुमश्चेति विष्णुधर्म्मोत्तरे । तन्निरुक्तिः—"धनार्थिनो जनाः सर्व्वे रमन्तेऽस्मिन्नतीव यत् । ततो रत्नमिति प्रोक्तम्......॥''



भा.पू. १भ. रत्नव. रत्नसाधारणगुणाः—"रत्नानि भर्च्चितानि स्युर्मधुराणि सराणि च । चक्षुष्याणि च शीतानि विषघ्नानि घृतानि च । मङ्गल्यानि मनोज्ञानि ग्रहदोषहराणि च ।" इति । माणिक्यं तरणेः सुजातममलं मुक्ताफलं शीतगोः, माहेयस्य तु विद्रुमो निगदितः सौम्यस्य गारुत्मतम् । देवेज्यस्य च पुष्परागमसुराचार्य्यस्य वज्रं शनेः, नीलं निर्म्मलमन्ययोर्निगदिते गोमेदवैदूर्य्यके ॥" भा. । तस्य धारणं प्रीतिवर्द्धनम् । सु.चि.२४अ. । "धन्यं माङ्गल्यमायुष्यं श्रीमद्व्यसनसूदनं । हर्षणं काम्यमोजस्यं रत्नाभरणधारणम् ॥" राज.३प. ।

**रत्नकन्दलः** । पुं । प्रवाले । পলা । श.र. ।

**रत्नगर्भपोट्टलिरसः** । पुं । यक्ष्माधिकारे रसः । पाठः—"रसं वज्रं हेम तारं नागं लौहञ्च ताम्रकम् । तुल्यांशं मरिचं देयं मुक्ताविद्रूममाक्षिकं । शङ्खं तुत्थञ्च तुल्यांशं सप्ताहं चित्रकद्रवैः (चार्द्रकद्रवैः) ( शङ्खञ्च तुल्यतुल्यांशं भैष. ) । मर्दयित्वा विचूर्ण्याथ तेन पूर्य्या वराटिकाः । टङ्कणं रविदुग्धेन मुखं लिप्त्वा निरोधयेत् । मृद्भाण्डे ता निरुध्याथ सम्यग्गजपुटे पचेत् । आदाय चूर्णयेत् सर्व्वं निर्गुण्ड्या सप्त भावयेत् । आर्द्रकस्य रसः सप्त चित्रकस्य च विंशतिः (चित्रकस्यैकविंशतिः) । द्रवैर्भाव्यं ततश्चास्य देयं गुञ्जाचतुष्टयम् ॥" र.सा.सं. । भैष. ।

**रत्नगिरिरसः** । पुं । ज्वराधिकारे रसः । पाठः—"सूताभ्रस्वर्णताम्राणि गन्धश्चार्द्धांशलौहकं । लौहार्द्धं मृतवैक्रान्तं मर्द्दयेद्भृङ्गजैर्द्रवैः । पर्पटीरसवत् पाच्यं चूर्णितं भावयेत् पृथक् । शिग्रुवासकनिर्गुण्डी गुडूच्युग्राग्निभृङ्गजैः । क्षुद्रामुण्डीजयन्तीभिर्मुनिब्राह्मीषु तिक्तकैः । कन्याद्याश्च द्रवैर्भाव्यं त्रिभिर्वारं पृथक् पृथक् । ततो लघुपुटे पाच्यं स्वाङ्गशीतं समुद्धरेत् । माषो दत्तः कणाधान्ययुक्तश्चाभिनवज्वरे ॥" রস, অভ্র, স্বর্ণ, তাম্র, গন্ধক প্রত্যেক সমান ; লোহ অর্দ্ধ ভাগ ; বৈক্রান্ত লোহের অর্দ্ধ ভাগ ; ভীমরাজরসে মাড়িয়া পর্প্পটীবৎ পাক করিবে । পরে সজিনাদির রসে ভাবনা দিয়া লঘুপুটে পাক করিবে । रस.चि. ।

**रत्नजातिः** । स्त्री । श्वेत-रक्त-नील-पीतवर्णाः ब्राह्मण-क्षत्रिय-वैश्यशूद्रेषु ।

**रत्ननायकः** । पुं । माणिक्ये । रा.नि.व.१२ ।

**रत्ननिधिः** । पुं । खञ्जनपक्षिणि । त्रिका. ।

**रत्नमाला** । स्त्री । वैद्यकचिकित्साशास्त्रभेदे ।

**रत्नमुख्यम्** । क्ली । हीरके । हे.च. ।

**रत्नराट्** । पुं । माणिक्य । रा.नि.व.१३ ।

**रत्नाङ्गः** । पुं । प्रवाले । रा.नि.व.१३ ।

**रत्नावली** । स्त्री । राधामाधवकृतद्रव्याभिधाने ।

**रत्निः** । पुं, स्त्री । बद्धमुष्टिहस्ते । মুট্‌ম হাত । अम. ।

**रत्यङ्गम्** । क्ली । योनौ । श.र. ।

**रथः** । पुं । तिनिशवृक्षे । रा.नि.व.९ । वेतसवृक्षे । अम. । काये । विश्वः । शकटे । গাড়ি । रथभ्रमणगुणाः—वातकोपनं शरीरदार्ढ्यकरं बल्यम् अग्निवर्द्धनञ्च । राज. ।

**रथचरणः** । पुं । चक्रवाकपक्षिणि । श.र. ।

**रथद्रुः** । पुं । तिनिशवृक्षे । वेतसवृक्षे । अम. ।

**रथपर्य्यायः** । पुं । वेत्रलतायाम् । श.च. । तिनिशवृक्षे । रा.नि.व.९ ।

**रथवृक्षः** । पुं । वृक्षौ । বৃক্ষি ওষধি । वै.निघ. । तिनिशवृक्षे । अम. ।

**रथाङ्गः** । पुं । चक्रवाकपक्षिणि । अम. ।

**रथाङ्गाह्वयनामकः** । पुं । चक्रवाके । अम. ।

**रथाङ्गी** । स्त्री । ऋद्धौ । रा.नि.व.५ ।

**रथाभ्रः** । पुं । वेतसवृक्षे । अम. ।

**रथाभ्रपुष्पः** । पुं । वेतसवृक्षे । अम. ।

**रथावर्त्ती** । स्त्री । स्थलपद्मिन्याम् । वै.निघ. ।

**रथिकः (का)** । पुं, स्त्री । तिनिशवृक्षे । সাদন গাছ । रा.नि.व.९ ।

**रथी** (इन्) । पुं । चक्रवाके । वै.निघ. ।

**रथ्यः** । पुं । अश्वे । अम. ।

**रदः (नः)** । पुं । दन्ते । रा.नि.व.१८ ।

**रदच्छदः** । पुं । ओष्ठे । रा.नि.व.१८ ।

**रदद्रुः** । पुं । अश्मशाखोटवृक्षे । আস্‌শ্যাওড়া ।

**रदनच्छदः** । पुं । ओष्ठे । रा.नि.व.१८ ।

**रदनी** (इन्) । पुं । हस्तिनि । हला. ।

**रदायुधः** । पुं । शूकरे ।

**रदी** (इन्) । पुं । हस्तिनि ।

**रदितम्** । क्ली । सर्पदष्टभेदे । सु.कल्प.४अ. ।

**रन्तिदेवः** । पुं । कुक्कुरे । श.र. ।

**रन्धनम्।** क्ली। पाकवारणे। রান্না। व्याक.।

**रन्धितः।** त्रि। पाचिते। क्ली। कृतरन्धनद्रव्ये। রান্নাজিনিস। तस्य पात्रान्तरे स्थापनविधिः— भक्तं स्वपात्रे स्थाप्य न पात्रान्तरे, घृत कात्र्ष्णायसे पात्रे, मांसं तद्रसञ्च हैमे राजते वा हैमे कांस्यजे वा, पत्रादिशाकं कात्र्ष्णाश्मलौहजे पक्वान्नं पिष्टकादि कांस्यजे काष्ठजे वा, शृतक्षीरं मृण्मये दारुजे वा। पानीयं पायसं तक्रं मृण्मय एव, काचजे स्फाटिके वा राजपाड़वादीन् स्थापयेत् एवं सति तद्द्रव्यं रोगहरं भवेत्। पाकराजः।

**रन्ध्रम्।** क्ली। दूषणे। छिद्रे। मे.। शरीरे रन्ध्राणि नेत्रश्रवणनासानां द्वे द्वे रन्ध्रे भवतः। तथा मुखमेहनपायूनामेकैकमिति नव। दशमञ्च मस्तके। स्त्रीणाञ्च त्रीणि स्तनगर्भमार्गेषु। स च अश्वस्य उदरगह्वरे। ज.द.२अ.।

**रन्ध्रकण्टः (कः)।** पुं। ज्वालाबर्वूरकवृक्षे। रा.नि.व.८। [व.८।

**रन्ध्रपत्रः।** पुं। नले। নল গাছ। रा.नि.

**रन्ध्रबभ्रुः।** पुं। उन्दुरौ। ইন্দুর। त्रिका.।

**रन्ध्रवंशः।** पुं। छिद्रवंशे। ফোঁফরা বাঁশ, বাঁশিনী বাঁশ। तत्पर्य्यायाः,—त्वक्सारः काचकाह्वयः मस्करः वादनीयः शुषिराख्यः। गुणाः—कषायः तिक्तः शीतलः गुल्मघ्नश्च। रा.नि.व.८।

**रन्ध्री** (इन्)। पुं। देवनले। वै.निघ.।

**रभसः।** पुं वेगे। पौर्व्वापर्य्यविचारे। अरुणः।

**रमः।** पुं। रक्ताशोकवृक्षे। मे.।

**रमठम्।** क्ली। हिङ्गुनि। হিঙ্। उणा.।

**रमठध्वनिः।** पुं। हिङ्गुनि। হিঙ্। श.च.। मैथुने।

**रमणम्।** क्ली। पटोलमूले। मे.। जघने। हे.च.। जम्भने। श.र.। पुं। गर्द्दभे। हे.च.। वृषणे। श.च.। महारिष्टवृक्षे। ঘোড়ানিম্। कैटर्य्यनिम्बे। रा.नि.व.९।

**रमणा (णी)।** स्त्री। प्रियङ्गौ। नार्य्याम्।

**रमतिः।** पुं। काके। श.र.।

**रमाप्रियम्।** क्ली। पद्मे। श.च.। पुं। दारुचीन इतिख्याते मिष्टत्वचि। वै.निघ.।

**रमावेष्टः।** पुं। श्रीवासचन्दने। रा.नि.व.१२।

**रम्भा।** स्त्री। कदलीवृक्षे। কলা গাছ। रा.नि.व.११।

**रम्य(क)म्।** क्ली। पटोलमूले। मे.। त्रिका.। सु.सू.१८अ.श्यामादिः। प्रधानधात्री। जटा.। पुं। स्वर्णचम्पकवृक्षे। চাঁপা গাছ। मे.। वकवृक्षे। বকফুলের গাছ। श.च.। त्रि। बलकरे। जटा।

**रम्यकः।** पुं। महानिम्बे। वै.निघ.।

**रम्यकक्षीरः।** पुं। महानिम्बे। ঘোড়ানিম্। रा.नि.व.९।

**रम्यपुष्पः।** पुं। शाल्मलीवृक्षे। শিমুল গাছ। रा.नि.व.८।

**रम्यफलः।** पुं। कारस्करवृक्षे। কুচিলাগাছ। रा.नि.व.९।

**रम्या।** स्त्री। स्थलपद्मिन्याम्। रा.नि.व.५। रात्रौ। मे.। महेन्द्रवारुणीलतायाम्। মাকাল। रा.नि.व.३। लक्ष्मणाकन्दे। वै.निघ.।

**रम्यामली।** स्त्री। भूधात्र्याम्। ভুঁই-আমলা। रा.नि.व.५।

**रराटी।** स्त्री। ललाटे। पुराणम्।

**रल्लकः।** पुं। कम्बले। अम.। प्लक्षवृक्षे। मृगविशेषे। अ.टी.रा.। पक्ष्मणि। सुभूतिः।

**रवणम्।** क्ली। कांस्ये। पुं। उष्ट्रे। हे.च.। कोकिले। उणा.।

**रवथः।** पुं। कोकिले। उणा.।

**रविः।** पुं। अर्कवृक्षे। আকন্দ গাছ। रा.नि.व.१०। ताम्रे। पञ्चामृतरसे। अजीर्णचिन्तामणिदितरसे।

**रविकान्तः।** पुं। सूर्य्यकान्तमणौ। रा.नि.व.१३। सूर्य्यावर्त्तक्षुपे। হুড়হুড়িয়া। वै.निघ.।

**रविकीर्णः।** पुं। अर्कवृक्षे। वै.निघ.।

**रविग्रहः।** पुं। अश्वस्य ग्रहविशेषे। तद्ग्रहाक्रान्तलक्षणं यथा—“उद्वर्त्तिताक्षः खिन्नश्च संग्रहीतहनुश्च यः। कम्पमानश्च यो वाजी स रविग्रहपीड़ितः॥” ज.द.।

**रविजप्रियः।** पुं। नीलकान्तमणौ। वै.निघ.।

**रविजलम्।** क्ली। अर्कमूलरसे। আকন্দ-মূলের রস। वै.संग्रह.पञ्चामृतरसे।



**रविदुग्धम्।** क्ली। अर्कक्षीरे। আকন্দের আঠা। र.सा.सं.त्रैलोक्यचिन्तामणिरसे।

**रविद्रुमः।** पुं। सदापुष्पवृक्षे। আকন্দ গাছ। रा.नि.व.२३।

**रविनाथः।** पुं। बन्धूकवृक्षे। বান্ধুলি গাছ। क्ली। पद्मे। श.च.।

**रविनामकम्।** क्ली। ताम्रे। তামা। वै.निघ.।

**रविपत्रः।** पुं। आदित्यपत्रक्षुपे। আকন্দ গাছ। रा.नि.व.४।

**रविप्रियम्।** पुं। रक्तकमले। ताम्रे। रा.नि.व.१०।१३। पुं। आदित्यपत्रे। আকন্দ গাছ। रक्तकरवीरे। रा.नि.व.४।१०। लकुचवृक्षे। श.मा.। नीलभृङ्गराजे। वै.निघ.।

**रविप्रिया (प्रोता)।** स्त्री। सूर्य्यावर्त्तक्षुपे। হুড়হুড়িয়া। र.मा.।

**रविभक्ता।** स्त्री। सूर्य्यावर्त्तक्षुपे। হুড়হুড়িয়া। र.सा.सं. रसमारणे।

**रविमूलम्।** क्ली। अर्कमूले। আকন্দমূল। र.सा.सं.ज्वरचूड़ामणौ।

**रविरत्न(क)म्।** क्ली। माणिक्ये। মাণিক। रा.नि.व.१३। [१३।

**रविलोहम्।** क्ली। ताम्रे। তামা। रा.नि व.

**रविवल्लभः।** पुं। भृङ्गराजवृक्षे। वै.निघ.।

**रविवल्ली।** स्त्री। आदित्यभक्तायां। হুড়হুড়িয়া। ब्राह्मीक्षुपे। वै.निघ.।

**रविसंज्ञकम्।** क्ली। ताम्रे। श.च.।

**रविसुन्दररसः।** पुं। सर्व्वज्वराधिकारे रसः। “द्विभागतालेन हतञ्च ताम्रं रसञ्च गन्धञ्च समानमात्रम्। विषञ्च सप्त द्विगुणञ्च ताम्रं त्रिसप्तवारञ्च खरातपे हि। विमर्द्य विश्वस्य रसेन चूर्णं गुञ्जैकदत्तं सितया समेतम्......॥” रस कौ.। (समोनमायु। विषं समञ्च द्विगुणञ्च ताम्रं) इति भा. पाठः।

**रविस्पर्शा।** स्त्री। हस्वमेषशृङ्ग्याम्। ক্ষুদ্র মেড়াশিঙে। वै.निघ.।

**रवीन्दम्।** क्ली। पद्मे। धरणिः।

**रवीष्टः।** पुं। नागरङ्गवृक्षे। रा.नि.व.११। स्त्री (ष्टा)। आदित्यभक्तायाम्। হুড়হুড়িয়া। रा.नि.व.४।

**रशः।** पुं। वंशे। ग्रहणी.चि.जातीफलावटी।

**रशना।** स्त्री। जिह्वायाम्। श.र.।

**रशोलः।** पुं। कर्म्मरङ्गवृक्षे। কামরাঙা গাছ। प.मु.।

**रश्मिः।** पुं। पक्ष्मणि। किरणे। मे.।

**रश्मिजातम्।** क्ली। रौप्ये। वै.निघ.।

**रश्मिपतिः।** पुं। आदित्यपत्रक्षुपे। रा.नि.व.४।

**रसम्।** क्ली। बोले। निशादल। रसाञ्जने। रा.नि.व.६। प.मु.। पुं। हिङ्गुले। र.मा.। पारदे। रा.नि.व.१३। शिलारसे। प.मु.। सिन्दूरे। इक्षुरसे। रोगे। वै.निघ.। विषे। रागे। गुणे। मांसद्रवे। अम.। जले। स्वादे। त्रिका.। शुक्रे। अम.। किराततिक्तके। द्राक्षायां। वै.निघ.। शरीरस्थसप्तधातुषु प्रथमधातौ। রসধাতু। तत्पर्य्यायाः,—रसिका स्वेदमाता वपुः स्रवः चर्म्माम्भः चर्म्मसारः रक्तसारः अश्रमातृका आहारसम्भवः तेजःसम्भवः अग्निसम्भवः षड्रसासवः आग्नेयः असृक्करः धातुघनः मूलमहापरः धातुपः भोग्यसम्भवः। रा.नि,व.८। रसस्वरूपं—स चाहारसारभूतः। “आहारस्य रसः सारः।” शार्ङ्ग.पू.६अ.। “सम्यक्पक्वस्य भुक्तस्य सारो निगदितो रसः।” गुणाः—सितः शीतः स्वादुः स्निग्धश्चलश्चेति। तत्कर्म्म—स धमनीर्गत्वा सर्व्वान् धातून् पुष्णाति। तदनु शीतस्निग्धपोषकत्वादिगुणैः शरीरं व्याप्नोति। तस्य स्थानम्—“सर्व्वदेहचरस्यापि स्थानं हृदयमेव च। रसस्तु हृदयं याति समानमरुतेरितः। स तु व्यानेन विक्षिप्तः सर्व्वान् धातून् विवर्द्धयेत्॥” भा.। स्वरसे क्वाथे वा। दृषदि सम्भिन्नद्रवद्रव्ये। रा.नि.व.२०। सि.यो.ज्व.चि.। तत्साधनं यथा —“कुड़वं चूर्णितं द्रव्यङ्क्षिप्तञ्च द्विगुणे जले। अहोरात्रात् स्थितं तस्माद्भवेद्वा रस उत्तमः॥ आदाय शुष्कं द्रव्यं वा स्वरसानामसम्भवे। जलेऽष्टगुणिते साध्यं पादशेषञ्च गृह्यते। निःशेषितञ्चाग्निसिद्धं पलमात्रं रसम्पिबेत्। सितामधुगुड़क्षारान् जीरक लवणन्तथा। घृतं तैलञ्च चूर्णादीन् कोलमात्रान् रसे क्षिपेत्॥” शार्ङ्ग.१अ.। रसनेन्द्रियग्राह्यवस्तुनि, मधुरादौ। মিষ্টাদি রস। स च कालसहायभूमिवियदनिलानलसम्पर्केण परिणामान्तरं प्राप्य षट्प्रकारो भवति। ते च षड्रसाः

द्रव्यमाश्रित्य तिष्ठन्ति—"रसाः स्वाद्वम्ललवणतिक्तोषणकषायकाः। षट् द्रव्यमाश्रितास्ते च यथापूर्व्वं बलावहाः॥" गुणाः—"तत्राद्या मारुतं घ्नन्ति त्रयस्तिक्तादयः कफम्। कषायतिक्तमधुराः पित्तमन्ये तु कुर्व्वते॥" भा.। तत्र पृथिव्यम्बुगुणभूयिष्ठो मधुरः, तोयाग्निगुणभूयिष्ठोऽम्लः, पृथिव्यग्निगुणभूयिष्ठो लवणः, वाय्वग्निगुणभूयिष्ठः कटुकः वाय्वाकाशगुणभूयिष्ठः तिक्तः, क्षित्यनिलगुणभूयिष्ठः कषायः। सु.सू.४२अ.। रसभेदविकल्पाश्च त्रिषष्टिः। सु.उ.६८अ.। सप्तपञ्चाशदिति। च.द.द्रव्यगुणे शिवदासः। "मधुरः कषायस्तिक्ताम्लकश्च क्षारः कटुः षड्रसनामधेयम्। द्वयं द्वयं वातकफप्रकोपनं द्वयं तथा पित्तकरं वदन्ति॥ क्षारः कषायः पवनप्रकोपी मधुरोऽथ तिक्तः कफकोपनश्च। कट्वम्लकौ पित्तविकारकारिणौ कट्वम्लकौ वातशमौ प्रदिष्टौ॥ पित्तस्य नाशी मधुरः सतिक्तः कटुः कषायः शमनः कफस्य। अन्योन्यमेतच्छमनं वदन्ति परस्परं दोषविवृद्धिमन्तः॥ मधुरकटुकावन्योन्यस्य प्रकर्षविधायिनौ, लवणवियुतोऽम्लकः प्रोक्तो विशेषरसानुगः। अविकृतस्तथा तिक्तैर्युक्तः कषायरसो लघुर्भवति सुतरां स्वादुः श्रेष्ठो गुणं करोति तथा। कटुतिक्तकषायाश्च कोपयन्ति समीरणं। कट्वम्ललवणाः पित्त स्वाद्वम्ललवणाः कफम्॥" अथ ये रसा यद्दोषविरुद्धास्तदाह—"समीरणे तु नो देयाः कटुतिक्तकषायकाः। पित्ते कट्वम्ललवणाः स्वाद्वम्ललवणाः कफे॥" अथ ये रसा यद्दोषहराः—"स्वाद्वम्ललवणान् वाते तिक्तस्वादुकषायकान्। पित्ते कफे तिक्त-कटु-कषायान् योजयेद्रसान्॥ मधुराम्लौ क्षारकटुकौ तिक्त-कषायकौ चेत्येतावन्योन्यरसविरोधिनौ भवेताम्॥" अथ मधुररसवीर्य्यम्—"यः स्वादुः श्रमशोषहारिबलकृद्वीर्य्यप्रदः पुष्टिदः, प्रह्लादो रसेन करोति तदनु श्लेष्मप्रवृद्धिं ततः। पित्तानां दमनः श्रमोपशमनो वृष्यो नराणां हितः। क्षीणानां क्षतपाण्डु-नेत्ररुज-संहर्त्ता भवेन्माधुरः॥" अथ तिक्तरसवीर्य्यं—"यस्तिक्तो मधुरात्मकोऽमृतसमः कुष्ठादिदोषापहः, शान्तः सर्व्वरुजापहो भ्रमहरो रुच्यो न संक्लेदनः। जिह्वास्फोटकनाशनोऽथ भवति क्षीणक्षतानां हितो, वक्त्रोल्लासकरः प्रकृष्टकथितो निम्बादिकास्वादकृत्॥" अथ कटुरसवीर्य्यम्—"नेत्रं स्रावयते मुखं विदहते यः कर्णजाड्यं वहन्, वीभत्सं तनुते मुखं विकुरुते पित्तासृजः कोपनम्। अग्निं दूषयते क्षणं विदहते जीर्णो न शस्तो भवेत्, वातानाहरते कफांश्च कटुको दह्यात् महारौद्रकः॥" अम्लरसवीर्य्यम्—"जिह्वाक्लेदं जनयति तथा नेत्रनिम्मीलनञ्च, वीभत्सं वा जनयति सदा वातरोगापहारी। कण्डूकुष्ठक्षतरुजकरो नो हितः शोफिनः स्यादम्लः प्रोक्तो मारुतशमनोऽसृक्प्रकोपं तनोति॥" अथ कषायरसवीर्य्यम्—"जिह्वां कण्ठं ग्रसति नितरां शाङ्कर्ष्यातिसारे, श्लेष्मव्याधेरुपशमकरः श्वासकासापहर्त्ता। हिक्काशूलं हरति नितरां शोधनः स्याद्व्रणानां, प्रोक्तश्चायं समधिकगुणः श्रेष्ठकाषायनामा॥" अथ क्षाररसवीर्य्यम्—"क्षारः क्लेदं जनयति मुखे स्वादुरुष्णो विदाही शूलश्लेष्मारुचिकरतृषामूत्रकृच्छ्रोषणश्च। आनाहञ्चाजनयति पुनर्वह्निसन्धुक्षणः स्यात्, श्रेष्ठः प्रोक्तो रसवरमहान् सर्व्वतो योग्यभूतः॥" अचि.६अ.।

**रसकः।** पुं। निष्क्वाथमांसे। हे.च.। क्ली। स्फटिकाय्यीम्। फट्‌किरि। र.सा.सं. अञ्जनरसे। मांसरसे। च.द.शूल.चि.। खर्परीतुल्यके। वै.निघ. २भ.क्षयचि.नवरत्नराजमृगाङ्के। "खर्परीतुल्यकं तुल्यादन्यत्तत् रसकं स्मृतम्। ये गुणास्तुल्थके प्रोक्तास्ते गुणा रसके स्मृताः॥" भा.पू.१भ. उपरसव.।

**रसकर्पूरम्।** क्ली। (Percloride of mercury.) स्वनामख्यातधातौ। रसकर्पूर। पारदस्य श्वेतभस्मीकरणे। चन्द्रिकाकारः। एतत्साधनप्रणाली—"पिष्टं पांशुपटु प्रगाढ़ममलं वज्राम्बुना नैकशः, सूतं धातुगतं खटीकवलितं तं संपुटे रोधयेत्। अन्तःस्थं लवणस्य तस्य च तले प्रज्वाल्य वह्निं दृढ़ं, घस्रं ग्राह्यमथेन्दुकुन्दधवलं भस्मोपरिस्थं शनैः। तद्वल्लद्वितयं लवङ्गसहितं प्रातः प्रयुक्तं भजेत्॥" र.सा.सं.। गुणाः—फिरङ्गरोगघ्नं दीपनं पुष्टिकरं बलवीर्य्यकारकं कुष्ठघ्नं व्रणघ्नञ्च। द्रव्यगुणः। मतान्तरं यथा—शुद्धसूतं समं कुर्य्यात् प्रत्येकं गैरिकं सुधीः। इष्टिका खटिका तद्वत् स्फटिका सिन्धुजन्म च॥ वल्मीकं क्षारलवणं भाण्डरञ्जकमृत्तिका। सर्व्वाण्येतानि संचूर्ण्य वाससा चापि शोधयेत्॥ एभिश्चूर्णैर्युतं सूतं यावद्यामं विमर्द्दयेत्। तच्चूर्णसहितं सूतं स्थालीमध्ये परिक्षिपेत्॥ तस्याः स्थाल्या मुखे स्थालीमपरां धारयेत् समां। सवस्त्रकुट्टितमृदा मुद्रयेदनयोर्मुखं॥ संशोष्य मुद्रयेद्भूयो भूयः संशोष्य मुद्रयेत्। सम्यक् विशोष्य मुद्रां तां स्थालीचूल्यां विधारयेत्। अग्निं निरन्तरं दद्यात् यावद्दिनचतुष्टयं। अङ्गारोपरि तद्यन्त्रं रचेद्र यत्नादहर्निशं॥ शनैरुद्घाटयेत् यन्त्रमूर्द्ध्वस्थालीगतं रसं। कर्पूरवत् सुविमलं गृह्णीयात् गुणवत्तरं॥ तदेव कुसुम-चन्दन-कस्तुरी-कुङ्कुमैर्युतं खादन्। हरति फिरङ्गं व्याधिं सोपद्रवं सपदि। विदधाति वह्निदीप्तिं पुष्टिं वीर्य्यविपुलं। रमयति रमणीशतकं रसकर्पूरस्य सेवकः सततम्॥"

**रसकल्पलता।** स्त्री। वैद्यकरसग्रन्थे।

**रसका।** स्त्री। क्षुद्रकुष्ठभेदे। लक्षणम्—"कण्डून्विता या पिड़का शरीरे संस्रावहीना रसकोच्यते सा।" सु.।

**रसकेशरम्।** क्ली। कर्पूरे। हारा.।

**रसकेसरी (इन्)।** पुं। अरोचके रसः। पाठः—"रसगन्धौ समौ शुद्धौ दन्तीक्वाथेन मर्द्दयेत्। देवपुष्पं बाणमितं रसपादं तथामृतम्। माषमात्रन्तु सेव्यं नागरेण गुड़ेन वा॥"......रस.कौ.।

**रसक्रिया।** स्त्री। द्रव्यस्य घनीभूतसारकरणे। পাক দ্বারা দ্রব্যের সারকরণ। "क्वाथादीनां पुनः पाकात् घनभावे रसक्रिया। मात्रा रसक्रियायाश्च लिह्यात् पाणितलं बुधः॥" सु.सू. ३६अ.। सु.चि.२१अ.।

**रसखर्परः।** पुं। खर्परधातौ। (कासलक्ष्मीविलासे)।

**रसगतज्वरः।** पुं। रसधातुगज्वरे। लक्षणं—"गुरुता हृदयोत्क्लेशः सदनं छर्द्यरोचकौ। रसस्थे तु ज्वरे लिङ्गं दैन्यं चास्योपजायते॥" मा.नि.।

**रसगन्धः (कः)।** पुं। गन्धके। रा.नि.व.१३। गन्धरसे। बोले। चिका.। क्ली। रसाञ्जने। रा.नि.व.६। [सं.।

**रसगन्धकसम्भूतम्।** क्ली। हिङ्गुले। र.सा.

**रसगर्भम्।** क्ली। रसाञ्जने। भा.म.४भ.नेत्ररो.चि.। हिङ्गुलविशेषे। रा.नि.व.१३।

**रसगुड़िका।** स्त्री। कासाधिकारे रसः। पाठः—"रसभागो भवेदेको गन्धको द्विगुणो भवेत्। त्रिभागा पिप्पली पथ्या चतुर्भागा विभीतका। पञ्चभागा त्वामला च षड्भागा सप्तभागिका। भार्गी सर्व्वमिदं चूर्ण्यं भाव्यं बव्वोलकद्रवैः। एकविंशतिवारञ्च मधुना गुड़िका कृता। विभीतकप्रमाणेन प्रातरेकान्तु भक्षयेत्॥" र.सा.सं.।

**रसघा।** स्त्री। तिक्तगुञ्जाकरञ्जे।

**रसघ्नः।** पुं। टङ्कणे। সোহাগা। रा.नि.व.६।

**रसचन्द्रिकावटी।** स्त्री। शिरोरोगे हिता। पाठः—"त्रैलोक्यविजयावीजं वीजमुन्मत्तकस्य च। कण्टकारीवीजकञ्च ऐञ्जलं वीजमेव च। वीजञ्च वृद्धदारस्य समौ गन्धकपारदौ। आर्द्रकैर्वटिका कार्य्या कलायपरिमाणतः। एषा तोयानुपानेन प्रातः खाद्या हिताशिना... ..॥" र.सा.सं.।

**रसचूड़ामणिः।** पुं। ज्वराधिकारे रसः। पाठः—"सूतभस्म विषं ताम्रं जयपालं सगन्धकं। हेमतैलेन सम्मर्द्द्य ततो लघुपुटं दहेत्। भावयेत् कालकद्रावैरजामहिषमीनजैः। पित्तैः पृथक्सप्तमितं विषधूमेन शोधयेत्। सप्तवारं त्रिवारं वा पश्चादार्द्रेण भावयेत्। रसचूड़ामणिः सिद्धः साक्षात् श्रीभैरवो महान्॥" मात्रा १ र.। आर्द्रकनिम्बुरसाभ्यां सेव्यः। रस.चि.।

**रसजः।** पुं। गुड़े। रा.नि.व.१४। सुराकिट्टे। हे.च.। क्ली। रक्ते। श.च.। रसाञ्जने। वै.निघ.। संग्रहणी.चि,पाठाचू।

**रसजातम्।** क्ली। रसाञ्जने। रा.नि.व,१३।

**रसज्ञा।** स्त्री। जिह्वायाम्। रा.नि.व.१८।

**रसज्येष्ठः।** पुं। मधुररसे। हे.च.।

**रसतालकम्।** क्ली। रसगन्धतालादिकृत-यन्त्र-पक्वौषधभेदे। यथा,—"रसो गन्धस्तालकञ्च रक्तशङ्खीसमागतं, सम्मर्द्द्य सिकतायन्त्रे पचेद्र यामचतुष्टयम्॥ पीताभं जायते पाकाद्र रसतालकसंज्ञितम्। ज्वरघ्नं दीपनं वह्नेर्वीर्य्यस्तम्भनमुत्तमं॥ हन्त्यष्टादश कुष्ठानि द्विविधं वातशोणितं। बल्यमायुष्करं मेध्यं परमेतद्र रसायनम्॥" भै.।

**रसतालेश्वरः।** पुं। कुष्ठाधिकारे रसः। र.सा.सं.।

**रसतेजः (स्)।** क्ली। रक्ते। हे.च.।

**रसदा।** स्त्री। श्वेतनिर्गुण्ड्याम्। শ্বেত নিশিন্দা। वै.निघ.।

**रसदालिका।** स्त्री। पुण्ड्रकेक्षौ। পূঁড়ী আখ্। कारङ्गशालिनामेक्षौ। रा.नि.व.१४।

**रसद्रावी (इन्)।** पुं। मधुरजम्बीरे। মিষ্টনেবু। रा.नि.व.११।

**रसधातुः।** पुं। पारदे। रा.नि.व.१३।

**रसनम्।** क्ली । आस्वादने। रा·नि.व.२०। खपरे। पुं। कफे। तस्य स्थानं कण्ठ', कर्म्म च रसनम्।भा.। स्त्री (ना, नी)। जिह्वायां। रा·नि.व.१८। रास्नायाम्। रा·नि.व ६। वै.निघ·ज्व·चि·अर्कादिः। "अर्कानन्ताकिराततामरलरसना ।" प्रसारण्याम्। सर्पगन्धायाम् ।

**रसनाथः।** पुं । पारदे। रा·नि.व.१२।

**रसनापदम्।** क्ली । नितम्बे । रा·नि·व·१८।

**रसनाभम्।** क्ली । रसाञ्जने। रा·नि.व.१३।

**रसनायकः।** पुं। पारदे। श्र·र·। [त्रिका·।

**रसनालिट् (ह्:)।** पुं । कुक्कुरे। हे.च.।

**रसनिगड़ः।** पुं । रसनिगाड़े, रसनियामक-शृङ्खलरूपौषधे । पाठः—"स्नुह्यर्कसम्भवं चीरं ब्रह्मबीजञ्च गुग्गुलुः। सैन्धवं द्विगुणं सर्व्वं निगड़ोऽयं महोत्तमः॥" ब्रह्मबीजं पलाशबीजं, ब्राह्मीशाक-बीजं वा। द्विगुणमिति रसापेक्षया मिलितं सर्व्वं द्विगुणम्। र·सा·सं.।

**रसनिर्यासः।** पुं । शालवृक्षे। শাল গাছ। वै.निघ·।

**रसनेत्रिका।** स्त्री। मनःशिलायाम्। हे.च.।

**रसनेष्टः।** पुं । इक्षौ। प·मु·।

**रसनेन्द्रियम्।** क्ली। जिह्वायाम्। च·शा·७अ.।

**रसपर्पटिका (टी)।** स्त्री। ग्रहण्याद्यधिकारे औषधम्। पाठः—"याम्लपित्ते विधातव्या गुड़िका च क्षुधावती । तत्र प्रोक्तविधौ शुद्धौ समानौ रसगन्धकौ । सम्मर्द्य कज्जलाभौ तु कुर्य्यात्पात्रे दृढ़ाश्मनि। ततो वादरवह्निस्थलौहपात्रे द्रवीकृतं। गोमयोपरि विन्यस्तकदलीपत्रपातनात्। कुर्य्यात् पर्पटिकाकारमस्य रक्तिद्वयं क्रमात्। रक्तिद्वादशकं यावत् प्रयोगः प्रहराईतः॥"......र·सा·सं.। "मग्नं रसे जयन्त्या पश्चादेरण्डसम्भूते। आर्द्रकरसे च सूतं पञ्चकरसे काकमाच्याश्च। मग्नमुदितानुपूर्व्व्या मर्दनशुष्कं करेण गृह्णीयात्। प्रस्तरभाजनमध्ये शुद्धिरियं पारदस्योक्ता॥ शुकपुच्छसमच्छायो नवनीतसमद्युतिः। मसृणः कठिनः स्निग्धः श्रेष्ठो गन्धक उच्यते। कृत्वा भद्रं गन्धकमतिकुशलः क्षुद्रतण्डुलाकारं। तद्भृङ्गराजरसैरनन्तरं भावयेत् पात्रे। तदनु च शुष्कं कुर्य्यात् धूलिसमानञ्च सप्तधा रौद्रे। तदनु च शुष्कं चूर्णं कृत्वा विन्यस्य लौहिकामध्ये । निर्धूमवदरकाष्ठाङ्गारे न्यस्तं विलाप्य तैलसमं। पात्रस्थितभृङ्गराजरसमध्ये ढालयेन्निपुणः। तस्मिन् प्रविष्टमात्रं कठिनत्वं याति गन्धकाचूर्णं। पुनरपि रौद्रे शुष्कं कैतकरजसा समानतां नीतं। शुद्धे सूते शोधितगन्धकचूर्णेन तुल्यता कार्य्या। तावन्मर्द्दनमनयोर्यावन्न कणोऽपि दृश्यते सूते। पश्चात् कज्जलसदृशं चूर्णं लौहीस्थितं यत्नेन । निर्धूमवदरकाष्ठाङ्गारे न्यस्तं विलाप्य तैलसमं। सद्यो गोमयनिहिते कदलदले ढालयेन्मृदुनि। लौहीस्थितमवशिष्टं कठिनं तन्न गृहीतव्यं। पश्चात् पर्पटरूपा पर्पटिका कीर्त्त्यते लोकैः॥" পারাশোধন—বহ্ন্যাদিদোষবিশুদ্ধ লৌহপাত্রস্থ পারাকে যথাক্রমে জন্তীপাতা, এরণ্ডপাতা, আদার রস, কাকমাচীর পাতার রস ও চিতাপাতার রসে ডুবাইয়া, নিয়ত মাড়িয়া রৌদ্রে শুকাইয়া লইবে। গন্ধক-শুদ্ধি—ঐরূপ শুকপুচ্ছাভ নবনীতাভ, মসৃণ, কঠিন ও স্নিগ্ধ উত্তম গন্ধককে তণ্ডুলের ন্যায় খণ্ড খণ্ড করিয়া ভীমরাজ-রসে ৭ ভাবনা দিয়া শুকাইবে; এবং ধূলিবৎ চূর্ণ করিবে। পরে ঐ চূর্ণ লৌহপাত্রে কুলকাঠের আঙ্গারে গলাইয়া গলাইয়া ভীমরাজরসে ঢালিবে। কঠিন হইলে তুলিয়া শুষ্ক ও চূর্ণ করিবে। এইরূপে শুদ্ধপারদ ও শুদ্ধগন্ধক সমভাগে লইয়া যথাবিধি মর্দ্দন করতঃ নিশ্চন্দ্র কজ্জলি করিবে। পরে ঐ কজ্জলি লৌহপাত্রে কুলকাঠের আঙ্গারে গলাইয়া, তৈলবৎ হইলে গোময়বেষ্টিত কলাপাতের উপর ঢালিয়া গোময়ভরিত কলাপাতার পুঁটুলি দ্বারা চাপিয়া ধরিয়া পর্পটী প্রস্তুত করিবে। পর্পটীর বর্ণ চন্দ্রকের ন্যায় হইলে ঠিক পাক হইয়াছে জানিবে। মাত্রা ২ রতি হইতে এক এক রতি করিয়া দশ রতি পর্য্যন্ত দিবে। পরে ঐ নিয়মে ক্রমে হ্রাস করিয়া আনিবে। भैष·।

**रसपाकजः।** पुं । गुड़े। रा·नि·व,१४।

**रसपाकजः।** पुं । गुड़े।

**रसपारिजातकः।** पुं । वैद्यकरसग्रन्थभेदे ।

**रसपूर्त्तिका।** स्त्री । ज्योतिष्मत्याम् । लता-फट्की। भैष·ज्व·चि·पानीयवटी। पूतिकायाम्। शतावर्य्याम्।



**रसप्रदीपः।** पुं। रामचन्द्रकृते वैद्यकरसग्रन्थे।

**रसफलः।** पुं। नारिकेलवृक्षे। रा·नि·व·२२। आमलकीवृक्षे। वै.निघ·।

**रसबन्धकरः।** पुं । सोमलतायाम्। वै.निघ.।

**रसभवम्।** क्ली । रक्ते। रा·नि·व,१८।

**रसभस्म।** क्ली । पारदभस्मनि। পারাভস্ম। तत्प्रकरणम्—"देवदाली हंसपादी यमचिञ्चा पुनर्नवा। एभिः सूतो विष्टब्धः पुटनान्म्रियते ध्रुवम्॥" र.सा.सं·। रससिन्दूरे।

**रसभावः।** पुं। रसधर्म्मे, स्निग्धतादौ। यथा—"मधुरो लवणाम्लौ च स्निग्धभावास्त्रयो रसाः। वातमूत्रपुरीषाणां प्रायो मोचे सुखा मताः। कटु-तिक्तकषायास्तु रूचभावास्त्रयो रसाः। दुःखा विमोचे दृश्यन्ते वातविण्मूत्ररेतसाम्। मधुरः श्लेष्मलः प्रायो जीर्णाच्छालियवादृते। मुद्गाद्गोधूमतः चौद्रात् सिताया जाङ्गलामिषात्। प्रायोऽम्लः पित्तजननो दाड़िमामलकादृते। अपथ्यो लवणः प्रायः चक्षुष्योऽन्यत्र सैन्धवात्। तिक्तः कटुश्च भूयिष्ठं वृष्यो वातप्रकोपनः। न पटोलकणाशुण्ठीवेत्राग्र-लशुनामृताः॥" राज·४प·।

**रसमञ्जरी।** स्त्री । शालिनाथकृतरसग्रन्थे ।

**रसमञ्जरीभाष्यम्।** क्ली । शेषचिन्तामणि-कृत-रसमञ्जरीभाष्ये ।

**रसमणिः।** पुं । हरिहरकृतरसग्रन्थे ।

**रसमण्डुरम्।** क्ली । परिणामशूले औषधम् । पाठः—"कुड़वं पथ्याचूर्णं द्विपलं गन्धाश्मलौह-किट्टञ्च। शुद्धरसस्यार्द्धपलं भृङ्गस्य केशराजस्य। प्रस्थोन्मितञ्च दत्वा पात्रे लौहे च दण्डसंघृष्टं। शुष्कं घृतमधुयुक्तं मर्दितं स्थाप्यञ्च भाजने स्निग्धे॥" रस·र·। भृङ्गराजकेशराजयोः प्रत्येकं रसप्रस्थम्।

**रसमर्द्दनम्।** क्ली । पारदस्य चूर्णीकरणे मारणे वा। See पारदः।

**रसमाणिक्यम्।** क्ली। कुष्ठाधिकारे औषधम्। पाठा—"तालकं वंशपत्राख्यं कुष्माण्डसलिले क्षिपेत्। सप्तधा वा त्रिधा वापि दध्यम्लेन च वा पुनः। शोधयित्वा पुनः शुष्कं चूर्णयेत्तण्डुलाकृति। ततः शरावके पात्रे स्थापयेत् कुशलो भिषक्। बदरीपत्रकल्केन सन्धिलेपञ्च कारयेत्। अरुणाभमधः पात्र तावज्ज्वाला प्रदीयते। स्वाङ्गशीतं समुद्धृत्य माणिक्याभो भवेद्रसः॥" मात्रा २ र· घृतेन भ्रामरेण वा मधुना सेव्यम्। र.सा.सं.।

**रसमारकद्रव्यम्।** क्ली। See मारकवर्गः।

**रसमारणम्।** क्ली । मारणद्रव्यैः पारदस्य मर्द्दने। र·सा·सं।

**रसमुक्तावलिः।** स्त्री। रसग्रन्थविशेषे।

**रसमूर्च्छनम्।** क्ली। पारदस्य मूर्च्छाकरणे See पारदः।

**रसमैत्री।** स्त्री । मधुराम्लं, लवणाम्लं, कटुतिक्तकं, कटुलवणं, तिक्तलवणञ्चेति सोच्यते।

**रसरञ्जनम्।** क्ली । पारदस्य रक्ततापादने। "गन्धकेन हतं नागं जारयेत्कमलोदरे। एतस्य त्रिगुणं जीर्णं लाक्षाभो जायते रसः॥" रस·चि· ३अ.। [ रसग्रन्थे।

**रसरत्नसमुच्चयः।** पुं । अश्विनीकुमारकृते

**रसरत्नाकरः।** पुं । नित्यनाथकृते रसग्रन्थे।

**रसराजः।** पुं। पारदे । रसाञ्जने । धातु-রসাঞ্জন। रा.नि.व.१३।

**रसराजरसः।** पुं । वातव्याधौ रसः। पाठः—"पलैकं शुद्धसूतस्य व्योमसत्वञ्च कार्षिकं। तदर्द्धं काञ्चनं देयं कन्यारसविमर्दितम्। लौहं रूप्यं सूतं वङ्गं वाजिगन्धां लवङ्गकं। जातीकोषं तथा चीरकाकोलीञ्च तदर्द्धतः। काकमाचीरसैः पिष्ट्वा पञ्चगुञ्जामिता वटी। चीरञ्च शर्करातोयमनुपानं प्रकल्पयेत्॥" রসসিন্দুর ৮ তো. অভ্র ২ তো. স্বর্ণ ১ তো. ঘৃতকুমারীরসে মর্দ্দন। পরে লৌহ, রৌপ্য, বঙ্গ, অশ্বগন্ধা, লবঙ্গ, জৈত্রী, ক্ষীরকাকোলী প্রত্যেক ॥০ তো. কাকমাচী-রসে মাড়িবে। বটী ৫ রতি, অনুপান দুগ্ধ ও চিনির জল। भैष.।

**रसराजशिरोमणिः।** पुं । परशुरामकृते रसग्रन्थे। पाठः—"पलं शुद्धस्य सूतस्य पलं ताम्र-मयस्तथा। अभ्रं नागं पलं वङ्गं पलं गन्धकतालकं। पलं शुद्धविषं चूर्णं सर्व्वमेकत्र कारयेत्। मर्दयेत् काकमाच्याश्च आर्द्रकस्य रसेन च। मात्स्यवाराह-मायूर-च्छाग-माहिषपित्तकैः। मर्दयेत्त्रिभिश्च त्रिकटोरम्बुभिस्तथा। सिद्धोऽयं रसराजेन्द्रः धन्वन्तरिसुसंस्कृतः॥" मात्रा १ र·। अनुपानं तुलसीपत्ररसः। শুদ্ধপারা, তামা, লৌহ, অভ্র, সীস, বঙ্গ, গন্ধক, হরিতাল, বিষ প্রত্যেক

১ প. কাকমাচীরস, আদার রস, পঞ্চপিত্ত ও ত্রিকটুকাথে পৃথক্ পৃথক্ ভাবনা দিয়া বটী করিবে। মাত্রা ১ রতি। অনুপান তুলসী-পাতার রস। र.सा.सं.।

**रसललना**। स्त्री। जिह्वायाम्।

**रसले(लो)हः**। पुं। पारदे। रा.नि.व.१३।

**रसवती**। स्त्री। पाकशालायाम्। রন্ধনশালা। अम.।

**रसवर्णकः**। पुं। दाड़िमपुष्पादिद्रव्यगणे। दाड़िमपुष्पकिंशुकपुष्पलाक्षाबन्धूकपुष्पहरिद्राकुसुम्भपुष्पमञ्जिष्ठासु। "दाड़िमं किंशुकं लाक्षाबन्धूकञ्च निशाद्वयम्। कुसुम्भपुष्पं मञ्जिष्ठा ह्यष्टमी रसवर्णकः॥" रा.नि,व.२२।

**रसवहस्रोतः**। क्ली। रसनायकधमन्याम्। हृदयं मूलं। धमन्यश्च दश। च.वि.५अ.।

**रसविरोधः**। पुं। तिक्तमधुरौ लवणमधुरौ कटुमधुराविति वंरूपविरुद्धरसतायाम्। सु.उ.।

**रसवीर्य्यकृत्**। पुं। सोमलतायाम्। वै.निघ.।

**रसवेधकम्**। क्ली। स्वर्णे। वै.निघ.।

**रसशङ्करः**। पुं। रसग्रन्थभेदे।

**रसशब्दसरणिनिघण्टुः**। पुं। वैद्यकनिघण्टुविशेषे।

**रसशार्दूलः**। पुं। सूतिकोपचारे रसः। पाठः—"अभ्रं ताम्रं तथा लौहं राजपट्टं रसन्तथा। गन्धटङ्गमरीचञ्च यवक्षारं समांशकं। तथाल तालकञ्चैव त्रिफलायाश्च तोलकं। तोलकञ्चामृत ञ्चैव षड्गुञ्जा-प्रमिता वटी। शोषसुन्दरकस्यापि नागवल्ल्या रसेन च। भावयेत् सप्तधा हन्ति ज्वरकासाङ्गसंग्रहम्॥" र.सा.सं.।

**रसशेषः**। पुं। जीर्णेऽपि आहारे कदाचिदाहारसारो रसशेषः। सि.यो.अजीर्ण.चि.।

**रसशेषाजीर्णम्**। क्ली। रसशेषजन्याजीर्णरोगभेदे। See अग्निमान्द्यं।

**रसशोणितसम्भवम्**। क्ली। मांसधातौ। वै.निघ.।

**रसशोधनम्**। क्ली। टङ्कणे। সোহাগা। हे.च.। पारदस्य सीसकादिदोषसंस्करणे। পারাশোধন। तच्च शोधनं बहुविधं रसेन्द्रसारसंग्रहकारेण दर्शितम्। तत्र प्रथमतो द्विधा—"व्याधौ रसायने चैव द्विविधा सा प्रकीर्त्तिता। या शुद्धिः कथिता व्याधौ सा नेष्टा हि रसायने। रसायने तु या शुद्धिः सा व्याधावपि कीर्त्तिता॥" इति। रसग्रहणपरिमाणम् १०० प. ५० प. २५ प. १० प. १ प. ४ वा २ तो. शोधनार्थम् औषधप्रयोगेषु यथालाभं ग्राह्यम्। "कुमारिका चित्रकरक्तसर्षपैः कृतैः कषायैस्त्र्यहतो विमिश्रितैः। फलत्रिकेणापि विमर्द्दितो रसो दिनत्रयैः सर्व्वमलैर्विमुच्यते॥ एवं कदर्थितः सूतः षण्डो भवति निश्चितम......॥" "शुद्धसूतस्य गृह्णीयाद्भिषग्भागचतुष्टयम्। शुद्धगन्धस्य भागैकं तावत् कृत्रिमगन्धकम्। अथवा पारदस्यार्द्धं शुद्धगन्धकमेव हि। तयोः कज्जलिकां कुर्य्यादिन मेकं विमर्द्दयेत्। मृत्तिकां वाससा सार्द्धं कुट्टयेदतियत्नतः। तया वारत्रयं सम्यक्काचकूपीम्प्रलेपयेत्। मृत्तिकां शोषयित्वा तु कूप्यां कज्जलिकाङ्क्षिपेत्। तां कूपीम्बालुकायन्त्रे स्थापयित्वा रसम्पचेत्॥" भा.।

**रससंरक्षणम्**। क्ली। रसस्य शोधनमूर्च्छनबन्धनमारणरूपे कर्म्मचतुष्टये। र.सा.सं.।

**रससंस्कारः**। पुं। वैद्यकरसग्रन्थभेदे।

**रससङ्केतकलिका**। स्त्री। शतद्वयश्लोकात्मकरसग्रन्थे।

**रससङ्ग्रहसिद्धान्तः**। पुं। वैद्यकरसग्रन्थविशेषे।

**रससम्भवम्**। क्ली। रक्ते। वै.निघ.।

**रससारः**। पुं। वैद्यकरसग्रन्थविशेषे। मधुनि। नकुल.१२अ.।

**रससिन्दूरम्**। क्ली। रसगन्धकयोः सिन्दूरीकरणे। রসসিন্দূর। र.चि.२अ.। भा.।

**रससुधाकरः**। पुं। वैद्यकरसग्रन्थविशेषे।

**रससुधानिधिः**। पुं। रसग्रन्थभेदे भोजराजशुक्रकृते।

**रससूः**। पुं। रसधातौ। রস। वै.निघ.।

**रसस्थज्वरः**। पुं। रसगतज्वरे।

**रसस्थानम्**। क्ली। हिङ्गुले। श.च.। रसस्य आधारे। [ चरणे।

**रसस्रावः**। पुं। अम्लवेतसे। वै.निघ.। रस-

**रसा**। स्त्री। मेदायां। प.मु.। रास्नायां। रा.नि.व.६। भा.म.१भ.ज्व.चि.लाक्षातैले। "वासा





रसानिका।" कर्णकज्व.चि.। "कटुकारसाभिः।" शिलारसे। द्राक्षायाम्। काकोल्याम्। श.र.। पाठायां। शल्लकीवृक्षे। जिह्वायां। कङ्गुधान्ये। मे.। आम्रवृक्षे। वै.निघ.।

**रसाखनः**। पुं। कुक्कुटे। श.च.।

**रसाग्रजम्**। क्ली। रसाञ्जने। रा.नि.व.१३।

**रसाग्रम्**। क्ली। रसाञ्जने। पारदे। वै.निघ.।

**रसाङ्गा**। स्त्री। जिह्वायाम्। अलिजिह्विकायाम्। আলজিব।

**रसाङ्कः**। पुं। श्रीवेष्टनामक-सुगन्धकाष्ठे। रा नि.व.१२।

**रसाज्ञानम्**। क्ली। आस्वादाज्ञाने। "भुञ्जानस्य नरस्यान्नं मधुरप्रभृतीन् रसान्। रसना यन्न जानाति रसाज्ञानं तदुच्यते॥" वै.निघ.।

**रसाञ्जनम्**। क्ली। चतुर्विधाञ्जनान्यतमे स्वनामख्यातरसजधातौ। রসাঞ্জন। प.मु.। हिं रसौत्। तत्पर्य्यायाः,—रसगर्भं रसनाभं रसराजः रसाग्रजं रसोद्भवं तार्क्ष्यं तार्क्ष्यशैलं कतकं बाल भैषज्य दार्व्वीक्वाथोद्भवं वर्य्याञ्जनं अग्निसारं। मतान्तरे तद्द्विविधं स्रोतोऽञ्जनं कृष्णपाषाणाकृति धातुद्रव्यम्। अन्यत् दारुहरिद्राक्वाथेन कृत्रिमं पीतलोहितम्। सु.सू.३८अ.अञ्जनादिः, प्रियङ्ग्वादिः। गुणाः,—कटुतिक्तमधुरं शीतलं चक्षुष्यं रक्तपित्तविषच्छर्द्दि-हिक्कागुल्मापस्मारनाशि च। तच्छुद्धिः—"नीलाञ्जनं चूर्णयित्वा जम्बीरद्रवभावितं। दिनैकमातपे शुद्धं भवेत् कार्य्येषु योजयेत्॥" र.सा.सं.। "दार्व्वीक्वाथसमं क्षीरम् पादं पक्त्वा यदा घनं। तदा रसाञ्जनाख्यं तत् नेत्रयोः परमं हितम्। गुणाः—"रसाञ्जनं कटु श्लेष्मविषनेत्रविकारनुत्। उष्णं रसायनं तिक्तं छेदनं व्रणदोषहृत्॥" भा.।

**रसाञ्जनादिचूर्णम्**। क्ली। ज्वरातिसारे औषधम्। पाठः—"रसाञ्जन सातिविषं कुटजस्य फलत्वचं धातकीं शृङ्गवेरञ्च पिबेत् तण्डुलवारिणा॥" শুদ্ধরসাঞ্জন, আতইচ, ইন্দ্রযব, ধাইফুল, শুঁট প্রত্যেক চূর্ণ সমভাগ। रस.र.।

**रसाढ्यः**। पुं। आम्रातकवृक्षे। रा नि.व.११।

**रसाढ्या**। स्त्री। रास्नायां। रा.नि.व.६।

**रसादानम्**। क्ली। रसशोषणे। हे.च.। रसग्रहणे।

**रसाधिकः**। पुं। टङ्कणक्षारे। रा.नि.व.६।

**रसाधिका**। स्त्री। काकोलीद्राक्षायाम्। रा नि.व.११। বেদানা আঙ্গুর।

**रसाधिकारः**। पुं। हरिहरकृते वैद्यकरसग्रन्थे। [ मा.नि.।

**रसानुगः**। त्रि। रसदूषके। रसानुसारिणि।

**रसाभुग्नम्**। क्ली। बोलनामगन्धद्रव्ये। रा. नि.व.६।

**रसाभ्रगुड़िका**। स्त्री। रसायनाधिकारे औषधम्। पाठः—"सहदेवा बला चैव सूर्य्यावर्त्तोऽथ मारिषः। अपामार्गोऽमृता चेति सम्यक् सम्पादयेद्भिषक्। एषां पलानि चत्वारि प्रत्येकं कुट्टयेत्ततः। अथ ऊर्द्ध्वं तद्दत्वा मण्डूरं यत् पुरातनं। गोमूत्रेण पचेत्तावत् यावत् गोमूत्रशोषणम्। तस्मादुद्धृत्य तच्चूर्णं कुर्य्यात् पलचतुष्टयम्। त्रिकटु त्रिफला मुस्ता गुडूची चित्रकं त्रिवृत्। दन्ती विड़ङ्गमेकैकं कर्षमेषान्तु चूर्णयेत्। एकपलीकृतस्याथ वज्रकाभ्रस्य सत्पलम्। वार्य्यन्नाम्भस्त्रिरावस्य वारिपर्णीरसाप्लुतम्। आतपे शोषयेत तीक्ष्णे दिनमेकं सुरक्षया। शूरणस्य रसैः पिष्टा तत्र टङ्कणकस्य च। दत्त्वाष्टौ माषकांस्तत्र पुटपाकेन पाचयेत्। मृण्मये सुदृढ़े पात्रे मृदुना गोमयाग्निना। रसाद्द्वादशमासांश्च कर्षं गन्धकतः पृथक्। रसे मण्डूकपर्ण्याश्च मूर्च्छितौ कज्जलीकृतौ। घृतस्य मधुनश्चापि पृथक् पलचतुष्टयम्। तत्सर्व्वमेकतः कृत्वा स्निग्धे भाण्डे निधापयेत्। ततोऽष्टौ माषकान् खादेद्दश वा द्वादशैव च। कर्षं वापि तथा कुर्य्यात् यथा दोषबलाबलम्॥" रस र.।

**रसाभ्रवटी**। स्त्री। ग्रहण्यधिकारे औषधम्। पाठः—"शुद्धसूतस्य कर्षैकं कर्षैकं गन्धकस्य च। द्वयोः कज्जलिकां कृत्वा तुल्यं व्योम प्रदापयेत्। केशराजस्य भृङ्गस्य निर्गुण्ड्याश्चित्रकस्य च। शोषसुन्दरमण्डूकीजयन्तीन्द्राशनस्य च। श्वेतापराजितायाश्च स्वरसं पर्णसम्भवं। रसतुल्यं प्रदातव्यं चूर्णञ्च मरिचोद्भवं। देयं रसार्द्धभागेन चूर्णं टङ्कणसम्भवम्। संमर्द्य वटिकां कुर्य्यात् कलायसदृशीं बुधः॥" र.सा.स.।

**रसामृतरसः**। पुं। रक्तपित्ताधिकारे रसः। पाठः—"रसस्य द्विगुणं गन्धं माक्षिकञ्च शिलाजतु। गुड़ूची चन्दनं द्राक्षा मधुपुष्पञ्च धान्यकम्॥

कुटजस्य त्वचं वीजं धातकी निम्बपत्रकम्। यष्टीमधुसमायुक्तं मधुशर्करयान्वितम्। विधिना मर्दयित्वा तु कर्षमात्रन्तु भक्षयेत्॥” र.सा.सं.।

**रसाम्लम्।** क्ली। वृक्षाम्ले। रा.नि.व.६। चुक्र-नामककाञ्जिके। रा.नि.व.१५। पुं। अम्लवेतसे। रा.नि.व.६। स्त्री (म्ला)। पलाशीलतायां। रा.नि.व.३।

**रसाम्ल(य)कः।** पुं। तृणविशेषे। श.च.।

**रसायनम्।** क्ली। विषे। रा.नि.व.६। कटिदशी। रा.नि.व.१८। तक्रे। हे.च.। जराव्याधिनाशकौषधे। मे.। “स्वस्थस्यौजस्करं यत्तु तद्‌वृष्यं तद्रसायनम्।” तेन च दीर्घायुष्टादिलाभः। च.चि.१अ.। अपिच “यज्जराव्याधिविध्वंसि भेषजं तद्रसायनम्।” तत्फलं यथा—वयःस्थापनमायुर्मेधाबलकरं रोगापहरणसमर्थञ्च। सु.सू.१अ.। लक्षणं—“देहस्येन्द्रियदन्तानां दृढीकरणमेव च। वली-पलित-खालित्यवर्जनेऽपि च या क्रिया। पूर्व्ववैद्यप्रणीतं हि तद्रसायनमुच्यते॥” वैद्यक-संग्रहः २अ.। अपिच,—“दीर्घमायुः स्मृतिं मेधामारोग्यं तरुणं वयः। देहेन्द्रियं बलं कान्तिं नरोविन्देद्‌ रसायनात्॥ तच्च द्विविधं कुटी-प्रावेशिकम्, वातातपिकञ्च। वा.उ.३९अ.। वंशपत्रहरिताले। वै.निघ.। पुं। विड़ङ्गक्षुपे। मे.।

**रसायनतन्त्रम्।** क्ली। रसायनाधिकारे। “रसायनतन्त्रं नाम वयःस्थापनमायुर्मेधाबलकरं रोगापहरणसमर्थञ्च।” सु.सू.१अ.।

**रसायनफला।** स्त्री। हरीतकीवृक्षे। त्रिका.।

**रसायनवरः।** पुं। शुक्लरसोने। स्त्री (रा)। कङ्गुधान्ये। काकजङ्घायाम्। वै.निघ.।

**रसायनश्रेष्ठः।** पुं। पारदे। रा.नि.व.१३।

**रसायनामृतलौहम्।** क्ली। ज्वरातिसारे लौहम्। पाठः—“कर्षं गन्धकमर्द्धपारदमुभे कुर्य्याच्छुभां कज्जलिम्, त्र्यक्षं त्र्यूषणकञ्च पञ्चलवणात् सार्द्धञ्च कर्षं पृथक्। सार्द्धाक्षं द्विपलं विचूर्ण्य सकलं शक्राशनान्मिश्रयेत्॥” मात्रा शाणमितम्। अनु.काञ्जिकम्। रस.र.। अन्यत् गुल्मे—त्रिफला २श. क्वाथार्थजलं १६ श. शे. ४ श.। जम्बीररसः (গোঁড়ালেবুর রস) १६ प. शर्करा १६ प. एकत्र पक्वा घनीभूते तत्र त्रिफलां त्रिकटु मुस्तां विड़ङ्गं जीरकं कृष्णजीरकं यमानीद्वयं भूनिम्बं त्रिवृत् दन्तीमूलं बिल्वत्वचं सैन्धवम् अभ्रं प्र. चूर्णं २ तो. लौहं २ प. घृतं ४ प. प्रक्षिप्य समालोड्य च स्थाप्यम्। भैष.।

**रसायनी।** स्त्री। गुड़ूचीलतायाम्। काक-माचीक्षुपे। गोरक्षदुग्धायाम्। रा.नि.व.३।४५। मांसरोहिणीभेदे। रा.नि.व.१२। करञ्जभेदे। महाकरञ्ज। रा.नि.व.९। कर्णस्फोटिकायां। কাণছিড়া। प.मु.। शुकशिम्ब्याम्। আলাকুশী। शुक्लत्रिवृतायां। शङ्खपुष्प्यां। नाड्याम्। कन्द-गुड़ूच्यां। मञ्जिष्ठायां। वै.निघ.।

**रसालम्।** क्ली। बोले। भा.। सिह्लके। শিলারস। मे.।

**रसालः (कः)।** पुं। आम्रवृक्षे। रा.नि.व.११।२३। इक्षौ। प.मु.। पुण्ड्रकेक्षौ। रा.नि.व.१४।२३। पनसवृक्षे। কাঁঠাল গাছ। श.र.। कुन्दुरौ। কুন্দুরু তৃণ। रा.नि.व.८। गोधूमे। रा.नि.व.१६।२३। अम्लवेतसे। सिह्लके। শিলারস। वै.निघ.।

**रसालशर्करा।** स्त्री। रसालेक्षुरसकृतशर्करा-याम्। गुणाः—स्निग्धा कान्तिकरी च। रा.नि.व.१४।

**रसालसा।** स्त्री। पुण्ड्रकेक्षौ। गोधूमे। कुन्दुरु-तृणे। नाड्यां। श.च.।

**रसाला।** स्त्री। दधिमिश्रितशर्करा। शिखरि-णीति लोके। प.मु.। तत्साधनविधिः—“वस्त्रे बद्धाथ गलितं दधि द्विप्रस्थमानकम्। तस्मिन् घृतं माक्षिकञ्च प्रत्येकञ्च पलम्पलम्। निक्षिप्य शर्करां तस्मिन् मानिकात्रितयं तथा। नागकेशर-मेलात्वक्पत्रत्वामलसंज्ञकम्। अर्द्धकर्षद्विपोविश्वां मरिचद्विपलं तथा। सर्व्वमेकीकृतं तत्तु भाण्डे कर्पूरवासिते। गृहीत्वा चैव वस्त्रेण सुखच्छन्नाथ गालयेत्। हस्तेनालोड्य यत्नेन सा रसालाभिधा स्मृता। गुणैस्तुल्या मज्जिकायाः शिखरिण्याः स्मृता बुधैः॥” वै.निघ.। दूर्व्वायाम्। विदार्य्याम्। पुण्ड्रकेक्षौ। रसनायाम्। मे.। द्राक्षायाम्।

**रसालाम्रः।** पुं। महाराजाम्रे। रा.नि.व.११।

**रसालिका।** स्त्री। सप्तलायाम्। গাতলা। वै.निघ.।

**रसालिहा।** स्त्री। पृश्निपर्ण्याम्। চাকুলিয়া। श.च.।



**रसाली** (इन्)। पुं। कृष्णचणकक्षुपे। प.मु.। स्त्री (ली)। करङ्कशालिनामेक्षौ। পুঁড়ি ইক্ষু। रा.नि.व.१४।

**रसालोला।** स्त्री। जिह्वायाम्।

**रसालेक्षुः।** पुं। करङ्कशालिनामेक्षौ। रा.नि.व.१४।

**रसावेष्टः।** पुं। श्रीवेष्टनामक-सुगन्धद्रव्ये। रा.नि.व.१२।

**रसाश्वासा।** स्त्री। पलाशीलतायाम्। रा.नि.व.३।

**रसाष्टकम्।** क्ली। महारसाष्टके। पारददरदाभ्रक-कान्तलौह विमल-माक्षिक-वैक्रान्त शङ्खेषु। वै.निघ.।

**रसास्वादी** (इन्)। पुं। भ्रमरे।

**रसाह्वः।** पुं। लवणखोट्याम्। र.मा.। स्त्री (ह्वा)। लाक्षतावर्य्याम्। रास्नायाम्। वै.निघ.।

**रसिकः।** पुं। हस्तिनि। अश्वे। सारस्वतः। सारसपक्षिणि। रा.नि.व.१९। गोधूमे। वै.निघ.। स्त्री (का)। रसालायां। इक्षुरसे। मे.। शरीरस्थ-रसधातौ। रा.नि.व.१८। रसनायाम्। विश्व.। शारिकापक्षिणि। वै.निघ.। त्रि। प्रशस्तरसवति। वा.चि.५अ.।

**रसिकालुः।** पुं। नीलालौ। वै.निघ.।

**रसुनः।** पुं। लशुने। श.च.।

**रसेन्द्रः।** पुं। पारदे। सि.यो.कृमि.चि.। राजमाषक्षुपे। वज्रवटी। प.मु.।

**रसेन्द्रगुड़िका।** स्त्री। कासे यक्ष्मणि वा रसविशेषः। पाठः—“कुमार्य्याः त्रिफलाचूर्णैः चित्रकस्य रसैः क्रमात्। शोधयित्वा पुनाराजी-गृहधूमहरिद्रया। पञ्चेष्टकारजोभिश्चालम्बुषक-रसेन च (वोङ्गापत्ररसेन च इति २यः पाठः)। भृङ्गराजरसेनापि (शृङ्गवेररसेनापि। २यः पाठः) शोधयित्वा पुनः पुनः। प्रक्षालयेत् पुनः पश्चात् क्षामयेद्वसने घने। कर्षद्वयं रसेन्द्रस्य भावयेद्विज-याद्रवैः। शिलायां खल्लयेच्चापि यावत् पिण्डत्व-मागतम्। जलकर्णाकाकमाचीरसाभ्यां भावयेत् पुनः। सौगन्धिकपलं शुद्धमर्द्धं मरिचटङ्कणम्। माक्षिकञ्च शिखिग्रीवमभ्रकं तालकन्तथा। एतांस्तु मिलितान्सर्व्वान् भावयेदार्द्रकद्रवैः॥” मात्रा २ रक्तिः। পারা ৪তো ঘৃতকুমারীরস, ত্রিফলাচূর্ণ, চিতারস, সর্ষপচূর্ণ, ঝুল, হরিদ্রাচূর্ণ, ইষ্টকচূর্ণ, অলম্বুষারস (বা বোণাপত্ররস), ভীমরাজরস (বা আদার রস) দ্বারা যথাক্রমে পৃথক্ মাড়িয়া কাপড়ে ছাঁকিবে। পরে জন্তীপাতার রস, কাণছিঁড়ার রস ও কাকমাচীর রসে পৃথক্ ভাবনা দিবে ও শুকাইবে। পরে ঐ পারা ৮ তো. ভৃঙ্গরাজরসশুদ্ধগন্ধক ৮ তো. মরিচ, স্বর্ণমাক্ষিক, সোহাগার খৈ, তুঁতে, হরিতাল ও অভ্র প্রত্যেক ৪ তো. আদার রসে মাড়িয়া বটী করিবে। মাত্রা ২ রতি। भैष.। रस.र.। द्वितीया वृहत्संज्ञा—“कर्षं शुद्धरसेन्द्रस्य गन्धकस्याभ्रकस्य च। ताम्रस्य हरितालस्य लौहस्य च विषस्य च। मनःशिलायाः क्षारयोः बीजं धुस्तूरकस्य च। मरिचस्य च सर्व्वेषां समं चूर्णम्प्रकल्पयेत्। जयन्ती चित्रकं माणं खण्डकर्णोऽथ मण्डुकी। शक्राशनं भृङ्गराज-श्चैशराजार्द्रसिन्धुकम्। एतेषां स्वरसेनापि कर्षमात्रेण मर्द्दयेत्॥” मात्रा कलायमिता। अनु आर्द्रकरसः। পারা, গন্ধক, অভ্র, তামা, হরিতাল, লৌহ, বিষ, মনছাল, যবক্ষার, সাচিক্ষার, সোহাগার খৈ, শুদ্ধধুতুরার বীজ, মরিচ প্রত্যেক চূর্ণ ২ তো. জন্তী, চিত্রক, মাণ, ঘেঁটকোল, থুলকুড়ি, সিদ্ধি, ভীমরাজ, কেশুত্তে, আদা ও নিশিন্দাপাতা ইহাদের প্রত্যেকের ২ তোলা রসে পৃথক্ ভাবনা দিয়া কলায়পরিমাণ বটী করিবে। অনুপান আদার রস। र.सा.सं.। रस.र.। सा.कौ.। रस.कौ.। भैष.। अन्या स्वल्पसंज्ञा यथा—“कर्षं शुद्धरसेन्द्रस्य स्वरसेन जयार्द्रयोः। शिलायां खल्लयेत्तावत् यावत् पिण्डत्वमाप्नुयात्। जलकर्णा-काकमाचीरसाभ्यां भावयेत् पुनः। सौगन्धिक-पलैर्भृङ्गस्वरसेन सुभावितम्। चूर्णितं रससंयुक्त-मजाक्षीरपलद्वये। खल्लितं घनपिण्डन्तु गुड़ीं स्विन्नकलायवत्...... ॥” শুদ্ধরস ২ তো. জয়ন্তীপত্ররসে ও আর্দ্রকরসে মাড়িয়া ঘন ও পিণ্ড করিবে। পরে কাণছিঁড়া ও গুড়কামাইরসের ভাবনা দিবে; তৎপরে ঐ পারাকে ভীমরাজরসে ভাবিত গন্ধক ১ পলের সহিত মাড়িয়া কজ্জলি করিয়া, ২ প. ছাগদুগ্ধে মাড়িয়া স্বিন্নকলায়বৎ বটিকা করিবে। सा.कौ.। भैष.। रस.कौ.।

**रसेन्द्रचिन्तामणिः ।** पुं । रामचन्द्रकृते प्राचीनरसग्रन्थे ।

**रसेन्द्रवेधकम् ।** क्ली । स्वर्णे । वै.निघ. ।

**रसेक्षुः ।** पुं । पुण्ड्रकेक्षौ । रक्तेक्षौ । रा.नि.व. १४ ।

**रसोत्तमः ।** पुं । मुद्गक्षुपे । रा.नि.व.१६ । पारदे । रा.नि.व.१३ । च.द.व्रणशोथ.चि. । रसाञ्जने । क्ली । घृते । रस.र शा.व्रण.चि. । त्रि । श्रेष्ठरसे ।

**रसोदरम् ।** क्ली । हिङ्गुले । रा.नि.व.१३ ।

**रसोद्भवम् ।** क्ली । हिङ्गुले, तद्विशेषे । रसाञ्जने । रा.नि.व.१३ ।

**रसोद्भूतम् ।** क्ली । रसाञ्जने । रा.नि.व.१३ ।

**रसोनः (कः) ।** पुं । (Allium sativum.) Garlic. स्वनामख्यातकन्दशाके । रशुन । हिं लसून । मं पांढरालसण । कं बिलियबेल्लुल्लि । तें तेल्लवुल्लि । ता. वेल्लइपाण्डु । तत्पर्य्यायाः,— रशुनः महौषधं गृञ्जनं अरिष्टः महाकन्दः कटुकन्दः राहूच्छिष्टः राहुत्सृष्टः म्लेच्छकन्दः भूतघ्नः उग्रगन्धः यवनेष्टः । स द्विधा श्वेतलोहित-भेदात् । सा. गुणाः—अल्परसोनः पित्तशमी गुरुश्च कफवातघ्नश्च । रा.नि.व.७ । श्वेतगुणाः —"रसोन उष्णः कटुपिच्छिलश्च स्निग्धो गुरुः स्वादुरसोऽतिबल्यः । वृष्यश्च मेधास्वरवर्णचक्षु-र्भग्नास्थिसन्धानकरः सुतीक्ष्णः ॥ हृद्रोगजीर्णज्वर-कुक्षिशूलविबन्धगुल्मारुचिकासशोफनुत् । दुर्नाम कुष्ठानिलसादजन्तुकफामयान् हन्ति महारसोनः ॥" इति रक्तरसोनविशेषगुणाः । रा.नि.व.७ । तदुत्पत्तिलक्षणे—"यदामृतं वैनतेयो जहार सुरसत्तमात् । तदा ततोऽपतद्विन्दुः स रसोनो-ऽभवद्भुवि । पञ्चभिश्च रसैर्युक्तो रसेनाम्लेन वर्ज्जितः । तस्माद्रसोन इत्युक्तो द्रव्याणां गुणवेदिभिः । कटुकश्चापि मूलेषु तिक्तः पत्रेषु संस्थितः । नाले कषाय उद्दिष्टो नालाग्रे लवणः स्मृतः । बीजेषु मधुरः प्रोक्तो रसस्तद्गुणवेदिभिः ॥ मद्यं मांसं तथाम्लञ्च हितं लसुनसेविनाम् । व्यायाममातपं रोषमतिनीरम्पयो गुडम् । रसोन-मश्नन् पुरुषस्त्यजेदेतन्निरन्तरम् ॥" भा. । "शीलयेल्लशुनं शीते वसन्तेऽपि कफोल्वणः । घनोदयेऽपि वातार्त्तः सदा वा शीषलीलया ॥" भा. ।

**रसोनपिण्डः ।** पुं । ऊरुस्तम्भाधिकारे औषधं । पाठः—"रसोनस्य पलशतं तिलस्य कुडवन्तथा । हिङ्गु त्रिकटुकक्षारौ द्वौ पञ्च लवणानि च । शतपुष्पा तथा कुष्ठम्पिप्पलीमूलचित्रकौ । अजमोदा यमानी च धान्यकञ्चैव बुद्धिमान् । प्रत्येकन्तु पलञ्चैषां सूक्ष्मचूर्णानि कारयेत् । घृतभाण्डे तथा चैतत् स्थापयेद्दिनषोडश । प्रक्षिप्य तैलमाणिञ्च प्रस्थार्द्धं काञ्जिकस्य च । खादेत्कर्षप्रमाणञ्च तीयं मद्यम्पिबेदनु ॥"...इत्यादि । क्षारौ यवक्षार-सर्ज्जिक्षारौ । यमान्या भागद्वयं । केचिदजमोदा फोफान्दीमिव गृह्णन्ति । माणी पलाष्टकं । रसोनं तिलञ्च निस्तुषङ्कृत्वा पिष्ट्वा चूर्णादिना मिश्रयेत् । अथ भाण्डे कृत्वा आशुधान्यराशौ स्थापयेत् । ত্বক্‌শিক্ত রশুন ১০০ প. নিস্তুষতিল ৩২ তো. হিং, ত্রিকটু, যবক্ষার, সাচিক্ষার, পঞ্চলবণ, শুল্‌ফা, পিঁপুলমূল, চিতামূল, রাঙ্গুনী, যমানী, ধনে' প্রত্যেক চূর্ণ ১ প. ( কিংবা যমানী ২ প. ) তিলতৈল ৮ প. কাঁজি ৮ প. সমস্ত একত্র করিয়া ঘৃতভাণ্ডে ধানের রাশিতে ১৬ দিন রাখিবে। অনুপান ঈষৎ উষ্ণ জল। सा.कौ. । वृहद्यथा—"रसोनस्य शतं शुद्धं तदर्द्धं निस्तुषात् तिलात् । पात्रे गव्यस्य तक्रस्य पिष्टैर्द्रव्यैः समङ्क्षिपेत् । त्रिकटु धान्यकं चव्यं चित्रकञ्जपिप्पली । अजमोदा त्वगेला च ग्रन्थिकञ्च पलांशिकम् । शर्करायाः पलान्यष्टौ पलांशं मरिचस्य च । कृष्णाजाज्याश्च चत्वारि मधुनश्च गुडस्य च । आर्द्रकस्य च चत्वारि सर्पिषोऽष्टौ पलानि च । तिलतैलस्य तावन्ति शुक्तस्यापि च विंशतिः । सिद्धार्थकस्य चत्वारि राजिकायास्तथैव च । कर्षप्रमाणं दातव्यं हिङ्गु लवणपञ्चकम् । एकीकृत्य दृढे भाण्डे धान्यमध्ये निधापयेत् । द्वादशाहात्समुद्धृत्य प्रातः खादेद्यथाबलम्...॥" अनु. सुरासौवीरकादीनि । पाचं १६ श. । রশুন ১০০ প. নিস্তুষতিল ৫০ প. গাওয়া ঘোল ১২৮ প. ত্রিকটু, ধনিয়া, চই, চিতার মূল, গজপিপুল, বনযমানী, গুড়ত্বক্, এলা, পিপুলমূল প্রত্যেক ১ প. শর্করা ৮ প. মরিচ ১ প. কৃষ্ণজীরা ৪ প. মধু ৪ প. আর্দ্রক ৪ প. ঘৃত ৮ প তিলতৈল ৮ প. কাঁজি ২০ প. শ্বেত সরিষা ৪ প. রাইসরিষা ৪ প. হিং ২ তো. পঞ্চলবণ



প্রত্যেক ২ তো. একত্র শুষ্ক করতঃ ঘৃতকুম্ভে রাখিয়া, ধানের মধ্যে ১২ দিন রাখিবে। रस.र. । वातव्याधौ स्वल्पं यथा— शुद्धरसोनं १॥० प. हिङ्गु जीरकं सचललवणं शुण्ठी पिप्पली मरिचम् एषां प्र. १ मा. सर्व्वं विलोड्य स्थापयेत् । सा.कौ. ।

**रसोनाष्टकम् ।** क्ली । वातव्याध्यधिकारे औष-धम् । "रसोनपक्वकन्दस्य गुलिका निस्तुषीकृताः । पाटयित्वा च मध्यस्थं दूरीकुर्य्यात्तदङ्कुरम् । निश्युग्रगन्धनाशाय दध्ना सन्नीय रक्षयेत् । ततः प्रक्षाल्य संशोष्य शिलायाम्परिपेषयेत् । कल्कस्य पञ्चमम्भागं चूर्णमेषां विनिःक्षिपेत् । सौवर्च्चलं यमानीञ्च भर्ज्जितं हिङ्गुसैन्धवम् । कटुत्रिकञ्जीरकञ्च समभागानि चूर्णयेत । तिलतैलञ्च कल्कस्य तुर्य्यांशं तत्र मिश्रयेत् । खादेत्कर्षमितम्प्रातः किंवा दोषाद्यपेक्षया । अनुपानम्प्रकुर्व्वीत वारि च शृतमन्वहम् ॥" भा.म.२भ. ।

**रसोपलम् ।** क्ली । मौक्तिके । त्रिका. ।

**रसौदनः ।** पुं । मांसरसेन सहौदने । स च श्रमादिज्वरे हितः । "श्रमोपवासानिलजे हितो नित्यं रसौदनः । उपवासश्रमकृते ज्वरे वाताधिके तथा । दीप्ताग्निं भोजयेत्प्राज्ञो नरं मांसरसौ-दनम् ॥" च.द.ज्व.चि. ।

**रस्यम् ।** क्ली । मांसधातौ । पत्तलदध्नि । वै.निघ. । रक्ते । श.च. ।

**रस्या (हस्या) ।** स्त्री । रास्नायाम् । रा.नि. व.६ । वा.सू.१५अ. । पाठायाम् । रा.नि.व.४ ।

**रक्षागन्धः (कः) ।** पुं । श्वेताले । गुग्गुले । वै.निघ. ।

**रक्षणा (णो)रकः ।** पुं । मूत्रकृच्छ्ररोगे । श.र. ।

**रक्षणिः (णी) ।** स्त्री । त्रायमाणालतायाम् । रा.नि.व.५ ।

**रक्षा ।** स्त्री । लतुनि (?) । मे. । भस्मनि । श.र. । गोरोचनायाम् । वै.निघ. ।

**रक्षापत्रः ।** पुं । भूर्ज्जवृक्षे । रा.नि.व.९ । क्ली । भूर्ज्जत्वचि । श्वेतसर्षपे । वै.निघ. ।

**रक्षाबीजः ।** पुं । रीठाकरञ्जे । वै.निघ. ।

**रक्षारेणुत्कारः ।** पुं । शुष्कगोमयभस्मचूर्ण-प्रक्षेपे । भा.म.४भ.मसूरिका.चि.शीतलाधिकारे । रक्षारेणूत्कारो हितः ।"

**रक्षिताफलम् ।** क्ली । सर्षपे । वै.निघ. ।

**रक्षोघ्नम् ।** क्ली । काञ्जिके । हे.च. । हिङ्गुनि । रा.नि.व.५ । पुं । भल्लातकवृक्षे । त्रिका. । श्वेतसर्षपवृक्षे । रा.नि.व.१६ । भैष.क्षुद्ररो.चि. । नागरङ्गवृक्षे । मद.व.६ । स्त्री (घ्नी) । वचायाम् । प.मु. ।

**रक्षोभूतः ।** पुं । श्वेतसर्षपवृक्षे । प.मु. ।

**रक्षोहा (न्) ।** पुं । महिषाक्षगुग्गुलौ । रा.नि. व.१२ ।

**राः ।** पुं, स्त्री । काञ्चने । श.र. । अम. ।

**राका ।** स्त्री । दृष्टरजस्कायां कन्यायां । तारा. । पूर्णिमायां । कच्छूरोगे । मे. ।

**रागः ।** पुं । अरोचके योगविशेषे, रागषाड्वे । च.सू.१८अ. । "सिताकचकसिन्धूत्थैः सवृक्षाम्लपरू-षकैः । जम्बूफलरसैर्युक्तो रागो राजिकयान्वितः ॥" सि.यो.अरोच.चि. । अलक्तके । सिन्दूरे । वै.निघ. ।

**रागखा(षा)ड़[ण्ड]वः ।** पुं । खाद्यद्रव्यभेदे । আমের মোরব্বা । तत्करणक्रमः—"आममाम्रं त्वचाहीनं छित्त्वा खण्डितं ततः । आज्यमाज्ये मनागस्त खण्डपाकेऽथ युक्तितः । सुपक्वञ्च समुत्तार्य्य मरीचैलेन्दुवासितं स्थापितं स्निग्धमृद्भाण्डे राग-खाण्डवसंज्ञितः । पुष्टिदो बलदः पित्तवातास्रारुचि-नाशनः । स्निग्धो गुरुस्तर्पणश्च सुस्वादू रागखाण्डवः ॥" द्रव्यगुणः । वा.चि.१२अ. । दाड़िमद्राक्षारसयुक्त-मुद्गयूषे । "स तु दाड़िममृद्वीकायुक्तः स्याद्राग-षाड़वः ।" गुणाः—"रुचिकृल्लघुपाकश्च दोषाणा-मावरोधकृत् ।" राज.३प. ।

**रागचूर्णः ।** पुं । खदिरवृक्षे । मे. । फल्गुचूर्णे । श.र. । लाक्षारसे । रा.नि.व.६ ।

**रागदः ।** पुं । तैरणीक्षुपे । रा.नि.व.४ । लाक्षारसे ।

**रागदालिः ।** पुं । मसूरे । रा.नि.व.१६ ।

**रागट्(छ्)क् ।** पुं । माणिक्ये । रा.नि.व.१३ ।

**रागपुष्पः ।** पुं । बन्धुजीवपुष्पक्षुपे । बान्धुलि गाछ । रक्ताम्लाने । रा.नि.व.१० ।

**रागपुष्पी ।** स्त्री । ओड्रपुष्पवृक्षे । जवा गाछ । रा.नि.व.१० ।

**रागप्रसवः ।** पुं । बन्धुजीववृक्षे । रक्ताम्लानपुष्प-वृक्षे । रक्तझाँटी । रा.नि.व.१० ।

**रागयुक् (ज्)** । पुं । माणिक्ये ।

**रागलता** । स्त्री । उपस्थे ।

**रागषाड़वः** । पुं । दाड़िमद्राक्षारसयुक्तमुद्गयूषे । स तु दाड़िमद्राक्षायुक्तः स्याद्रागषाड़वः ।" तद्गुणाः,—"रुचिकृल्लघुपाकश्च दोषाणामविरोधकृत् ॥" राज.४प. ।

**रागसारा** । स्त्री । मनःशिलायाम् । वै.निघ. ।

**रागसूत्रम्** । क्ली । पट्टवस्त्रे । मे । [ नि.व.६ ।

**रागाङ्गी (ङ्ग्या)** । स्त्री । मञ्जिष्ठायाम् । रा·

**रागी (इन्)** । पुं । तृणधान्यविशेषे । मं नाचणी । कं रविगुचने । तत्पर्य्यायाः—लाञ्छनः लाञ्छनी बहुतरकणिशः गुच्छकणिशः । गुणाः—तिक्तो मधुरः कषायः शीतः पित्तास्रघ्नः बलदश्च । रा.नि. व.१६ । अशोकवृक्षे । वै.निघ. । [ १० ।

**रागी (तरुः)** । पुं । अशोकवृक्षे । रा·नि·व.

**रामोष्टम्** । क्ली । सुगन्धरोहिषतृणे । वै.निघ. ।

**राघवः** । पुं । तिमिङ्गिलमत्स्ये । मे. । बृहदाकारमत्स्यभेदे । राघवबोयाल ।

**राङ्कलः** । पुं । तरुकण्टके । गाछेर काँटा । हारा· ।

**राङ्कवम्** । क्ली । पशुलोमजातवस्त्रादौ । "राङ्कवं मृगलोमजम् ।" अम. ।

**राङ्गणम्** । क्ली । रङ्गणपुष्पे । रङ्गण फूल । गुणाः—रक्तपित्तघ्नम् । राज·५प· ।

**राजकम्** । क्ली । कृष्णागुरुणि । वै.निघ. ।

**राजकदम्बः** । पुं । कदम्बविशेषे । जटा· ।

**राजकन्या** । स्त्री । केवुके । केविकापुष्पवृक्षे । रा.नि.व·१० । वै.निघ·जीर्णज्व·चि.कलिङ्गादिः ।

**राजकर्कटी** । स्त्री । चीनकर्कट्यां । रा·नि·व·७।

**राजकशेरुः (कः)** । पुं । भद्रमुस्तायां । रा. नि.व·६ । [ वै.निघ. ।

**राजकार्श्यः** । पुं । शालवृक्षे । शाल गाछ ।

**राजकाष्ठम्** । क्ली । पत्तङ्गचन्दने । बकम काठ । वै.निघ· ।

**राजकुलकः** । पुं । पटोललतायां । पटोल गाछ । प.मु. ।

**राजकुष्माण्डः** । पुं । वार्त्ताकौ । वेगुन गाछ । जटा· ।

**राजकोलः** । पुं । राजबदरवृक्षे । नारकुले कुल । रा.नि·व·११ ।

**राजकोषातकी** । स्त्री । पीतघोषायाम् । झिंगा । प·मु· । हिं घियातरुइ । तोरइ । मद· । तत्पर्य्यायाः,—हस्तिपर्णिका पीतपुष्पिका धामार्गवः कोशफला महाजाली सपीतकः । गुणाः—शीतला मधुरा कफवातला पित्तघ्नी दीपनी श्वासज्वरकासकृमिघ्नी च । भा.पू·१भ·शा·व. ।

**राजखर्जूरी** । स्त्री । पिण्डखर्जूरे । बड़ पिण्ड खेजुर । तत्पर्य्यायौ—राजपिण्डी नृपप्रिया । गुणाः—शैत्या स्वादे हिमा गुरुः पित्तदाहघ्नी श्वासश्रमघ्नी वीर्य्यकरी च । रा·नि·व.११ ।

**राजगिरा (रिः,री)** । स्त्री । शाकविशेषे । राजशाक । तत्पर्य्यायाः,—राजाद्रिः राजशाकनिका । लघुस्थूलभेदेन द्विधा । गुणाः—रुच्या पित्तघ्नी शीतला च । स्थूला अतिशीतला अतिरुच्या च । रा.नि·व·७ । बृहज्जम्बूवृक्षे । वै.निघ ।

**राजग्रीवः** । पुं । मत्स्यविशेषे । फलूई माछ । तत्पर्य्यायाः,—फलकी चित्रफला राजग्रीवः मदामदः । त्रिका ।

**राजघासः** । पुं । तृणभेदे । कालाकर्पूर, कालघास । गुणाः,—"राजघासतृणपतिः सपित्तानिलदाहनुत् । हरेद् रक्तातिसारञ्च रक्तपित्तमसृग्दरम् । अर्शांसि षड् विधान्येव मूत्रकृच्छ्रञ्च दारुणम् ॥"

**राजचम्पकम्** । क्ली । पुन्नागपुष्पे । पूनाग फूल । सु·सू·३८अ·एलादि· ।

**राजचिह्नकम्** । क्ली । शिश्ने । श·च. ।

**राजजम्बुः (म्बूः)** । स्त्री । महाजम्बूवृक्षे । बड़ जाम गाछ । र·मा· । हिं फलेन्द्रा । तें राचनेरडिचेट्टु । गुणाः—"राजजम्बुफलं स्वादु विष्टम्भि गुरु रोचनम् ।" भा· । पिण्डखर्जूरे । पिण्ड खेजुर । मे ।

**राजजक्ष्मा** । पुं । स्वनामख्यातरोगे । यक्ष्मा रोग, क्षय रोग । निदानम्—"वेगरोधात् क्षयाच्चैव साहसाद्विषमाशनात् । त्रिदोषो जायते यक्ष्मा गदो हेतुचतुष्टयात् ॥" अस्य निरुक्तिः—"वैद्यो व्याधिमता यस्माद्व्याधिर्यत्नेन यक्ष्यते । स यक्ष्मा प्रोच्यते लोके शब्दशास्त्रविशारदैः । राज्ञ



श्चन्द्रमसो यस्मादभूदेष किलामयः । तस्मात्तं राजयक्ष्मेति प्रवदन्ति मनीषिणः । क्रियाक्षयकरत्वाच्च क्षय इत्युच्यते बुधैः । संशोषणाद्रसादीनां शोष इत्यभिधीयते ॥" सम्प्राप्तिः—"कफप्रधानदोषैस्तु रुद्धेषु रसवर्त्मसु । अतिव्यवायिनो वापि क्षीणे रेतस्यनन्तराः । क्षीयन्ते धातवः सर्व्वे ततः शुष्यति मानवः ॥" पूर्व्वरूपं—"श्वासाङ्गसादकफसंस्रवतालुशोषवम्यग्निसादमदपीनसकासनिद्राः । शोषं भविष्यति भवन्ति स चापि जन्तुः शुक्लेक्षणो भवति मांसपरो रिरंसुः । स्वप्नेषु काकशुकशल्लकिनीलकण्ठगृध्रास्तथैव कपयः कृकलासकाश्च । तं वाहयन्ति स नदीर्विजलाश्च पश्येत् शुष्कांस्तरून् पवनधूमदवार्दितांश्च ॥" इति । त्रिरूपक्षयलक्षणं—"अंसपार्श्वाभितापश्च सन्तापः करपादयोः । ज्वरः सर्व्वाङ्गगश्चैव लक्षणं राजयक्ष्मणः ॥" एकादशरूपस्य यथा—"स्वरभेदोऽनिलाच्छूलं सङ्कोचश्चांसपार्श्वयोः । ज्वरो दाहोऽतिसारश्च पित्ताद्रक्तस्य चागमः । शिरसः परिपूर्णत्वमभक्तच्छन्द एव च । कासः कण्ठस्य चोद्ध्वंसो विज्ञेयः कफकोपतः । एकादशभिरेतैर्वा षड्भिर्वापि समन्वितः । कासातिसारपार्श्वार्त्तिस्वरभेदारुचिज्वरैः । त्रिभिर्वा पीड़ितं लिङ्गैर्ज्वरकासासृगामयैः । जह्याच्छोषार्द्दितं... । महाशिनं क्षीयमाणमतीसारनिपीड़ितं । शूनमुष्कोदरञ्चैव यक्ष्मिणं परिवर्ज्जयेत् । ज्वरानुबन्धरहितं बलवन्तं क्रियासहं । उपक्रमेदात्मवन्तं दीप्ताग्निमकृशं नरम् ॥" मा.नि. ।

**राजजीरकम्** । क्ली । C.Tribocularis.) जीरकभेदे । वम्· कुरुचुण्टज । कोषान्तरम् ।

**राजतर(रु)णी** । स्त्री । पुष्पविशेषे, महातरुणीपुष्पवृक्षे । बड़ शेउती । मं राजतरुणी । कं हिरियसेवड़े । तत्पर्य्यायाः,—महासहा वर्णपुष्पः अम्लानः अम्लातकः सुपुष्पः सुवर्णपुष्पः । गुणाः—कषाया कफकरी चक्षुष्या हृद्या सुगन्धिश्च । रा.नि·व.१० ।

**राजतरुः** । पुं । कर्णिकारवृक्षे । छोट शोनालु । रा·नि·व.९ । आरग्वधवृक्षे । बड़ शोनालु । वै.निघ. ।

**राजतालः** । पुं । गुवाकवृक्षे । त्रिका. । नारिकेलवृक्षे । वै.निघ· ।

**राजतालेश्वरः** । पुं । कुष्ठाधिकारे रसः । पाठः—"नागस्य भस्म शाणैकं तोलकं गन्धकस्य च । द्विनिष्कं शुद्धतालस्य समुत्थूतं गवां जलैः । विपचेत् षोड़शगुणैः पात्रे ताम्रमये शनैः । घर्म्मे दिवसं जम्बीरकुमारीवज्रकन्दजैः । रसैर्मर्द्दनस्य चाम्भोभिर्युतं वल्लद्वयं भजेत् ॥" र·सा.सं· ।

**राजतिमिशः** } पुं । चेलाने, सुखाशे । तरमुज । हारा. । त्रिका. ।
**राजतैमिषः**

See कालिन्दः ।

**राजदन्तः** । पुं । दशनानामग्रस्थदन्तचतुष्टये । त्रिका. ।

**राजद्रुमः** । पुं । किरमाले, आरग्वधवृक्षे । शोन्दाल गाछ । हिं घनवहेड़ा । भैष·मु·रो.चि. । सि·यो·च·द·कफारोचक·चि. । "राजद्रुमाम्बु मधुना ।" भा म·४अ.मुख·रो·चि. । 'षष्ट्याह्वराजद्रुमचन्दनैश्च ।"

**राजधत्तू(स्तू)रकः** । पुं । बृहद्धुस्तूरके । रा. नि.व·१० । पीतधुस्तूरवृक्षे । कनकधुतुरा । वै.निघ ।

**राजधान्यम्** । क्ली । राजान्ननामकशालिधान्ये, नृपान्ने । राजभोग हैमन्तिक धान्यविशेष । श्यामाके । श्यामाधान । रा·नि व·६ ।

**राजधु(त्तू)स्तूरकः** । पुं । बृहद्धुस्तूरके । पीतधुस्तूरवृक्षे । रा·नि.व.१० ।

**राजधूर्त्तः** । पुं । पीतधुस्तूरे । वै·निघ. । बृहद्धुस्तूरवृक्षे । तत्पर्य्यायाः,—महाशठः निरूणपुष्पिकः भ्रान्तः पीतधूस्तूरकवृक्षः । रा·नि·व·१० ।

**राजनगः** । पुं । राजगिरिशाके । वै.निघ. ।

**राजनामा (न्)** । पुं । पटोले । रा.नि·व·३ ।

**राजनिम्बुकः** । पुं । निम्बुविशेषे । कागजी नेबु । वै.निघ. ।

**राजनीलम्** । क्ली । मरकतमणौ । श·र. ।

**राजनीलिका** । स्त्री । महानील्याम् । बड़ नील । रा·नि.व.४ ।

**राजन्यः (न्या)** । पुं, स्त्री । राजादनवृक्षे । क्षीरिणी गाछ । जटा. । भा. ।

**राजन्यावर्त्तः (कः)** । पुं । राजावर्त्तमणौ । रा·नि.व·१२ ।

**राजपटोलः** । पुं । मधुरपटोले । र.मा· ।

**राजपटोलिका (ली)।** स्त्री। मधुरपटोल्याम्। रा.नि.व.३।

**राजपट्टः।** पुं, क्ली। कान्तपाषाणे। চুম্বক পাথর। त्रिका.। र.सा.सं.वृहच्चूड़ामणिरसे।

**राजपट्टिका।** स्त्री। चातकपक्षिणि। हारा.।

**राजपत्नी।** स्त्री। पित्तले। वै.निघ.।

**राजपर्णी।** स्त्री। प्रसारण्यां लतायाम्। गन्धभादुलिया। रा.नि.व.५।

**राजपलाण्डुः।** पुं। रक्तपलाण्डौ। ছোট পেঁয়াজ। मं कं रक्तकान्दा, लोहितबीउल्लि, केंपिनउल्लि, यावउल्लि। तत्पर्य्यायाः,—यवनेष्टः राजप्रियः राजेष्टः महाशूलः दीर्घपत्रः रोकः महाकन्दः नृपकन्दः नृपप्रियः नृपाह्वयः नृपेष्टः रक्तकन्दः। गुणाः—शीतलः पित्तघ्नः कफघ्नः दीपनः बहुनिद्राकरश्च। तथाच—"वक्ष्यते नृपपलाण्डुलक्षणं चारतीक्ष्णमधुरो रुचिप्रदः। कण्ठशोषशमनोऽतिदीपनः श्लेष्मपित्तशमनोऽतिबृंहणः॥" रा.नि.व.७। बहुनिद्राकरश्च।

**राजपिण्डा।** स्त्री। पिण्डखर्ज्जूरिकायाम्।

**राजपीलुः।** पुं। महापीलुवृक्षे। रा.नि.व.११।

**राजपुत्रः (कः)।** पुं। चौरिकावृक्षे। महाराजचूतवृक्षे। भा.। रा.नि.व.११।

**राजपुत्रिका।** स्त्री। शरारिपक्षिणि। शराल পাখী। "शरारि-राटि-राडिश्च हापुत्री राजपुत्रिका।" जटा.। शुक्लयूथिकायाम्। पित्तले। वै.निघ.।

**राजपुत्री।** स्त्री। कटुतुम्ब्याम्। তিৎলাউ। रा.नि.व.३।२१। रेणुकायाम्। রেণুক বীজ। रा.नि.व.६।२३। जातीपुष्पवृक्षे। চামেলী ফুলের গাছ। रा.नि.व.१०।२३। राजरीतौ। বেঙাপিতল। रा.नि.व.१३। छुछुन्दर्य्याम्। ছুঁচো। रा.नि.व.१९। वनमल्लिकायाम्। वै.निघ.। मालत्याम्। जटा.।

**राजपुष्पः।** पुं। नागकेशरवृक्षे। নাগেশ্বর গাছ। श.च.। तत्पर्य्यायाः,—चाम्पेयः केशरः नागकेशरः कनकाह्वयः महौषधं राजपुष्पः फलकः खरघातनः।

**राजपुष्पी।** स्त्री। कोङ्कणदेशे करवीरवर्णीनाम्ना ख्याते पुष्पवृक्षे। रा.नि.व.१०। वनमल्लिकायाम्। जातीपुष्पवृक्षे। वै.निघ.।

**राजपूज्यम्।** क्ली। स्वर्णे। वै.निघ.।

**राजप्रियः।** पुं। राजपलाण्डौ। रा.नि.व.७। करुणीपुष्पवृक्षे। वै.निघ.। स्त्री (या)। कोङ्कणदेशे ख्याते करुणीपुष्पवृक्षे। रा.नि.व.१०। तिलवासिनीशाली। रक्तकशाली। रा.नि.व.१६।

**राजफणिज्झकः।** पुं। नागरङ्गवृक्षे। श.मा.।

**राजफलः।** पुं। राजाम्रवृक्षे। राजादनीवृक्षे। থির্নী গাছ। रा.नि.व.११। क्ली। पटोले। त्रिका.। स्त्री (ला)। राजजम्बूवृक्षे। বড় জাম গাছ। रा.नि.व.११।

**राजफल्गुः।** पुं। कर्णोदुम्बरवृक्षे। কাকডুমুর গাছ। वै.निघ.।

**राजबदरम्।** क्ली। रक्तामलके। लवणे। मे.। पुं। उत्तमबदरवृक्षे। নারকুলে, পাটনাই প্রভৃতি বড় ও মিষ্ট কুল। मं राजबोर। कं रायपरलु। तत्पर्य्यायाः,—नृपबदरः नृपश्रेष्ठः राजकोलः राजवल्लभः पृथुकोलः तनुबीजः मधुरफलः। गुणाः—मधुरः शीतः दाहपित्तवातघ्नः वृष्यः वीर्य्यवृद्धिकरः शोषश्रमहरश्च। रा.नि.व.११।

**राजबला।** स्त्री। प्रसारण्याम्। गन्धभादुलिया। रा.नि.व.५।

**राजभक्तम्।** क्ली। नृपभोज्यान्ने पानादौ च। রাজার অন্ন। तत्परीक्षा—"नृपभक्तादवलिं न्यस्तं सविषमश्नन्ति ये। तत्रैव ते विनश्यन्ति मक्षिकावायसादयः। हुतभुक् तेन चान्नेन भृशं चटचटायते। मयूरकण्ठप्रतिमो जायते चापि दुःसहः। दुष्टान्नं विषसंसृष्टं म्रियन्ते जीवजीवकाः। पृषतो विसृजत्यश्रु विष्ठां मुञ्चति मर्कटः॥" सु.कल्प.१अ.।

**राजभट्टिका।** स्त्री। हापुत्रीपक्षिणि। जटा.। "गोभण्डीरं पङ्कीरी हापुत्री राजभट्टिका।

**राजभद्रकः।** पुं। पारिभद्रकवृक्षे। निम्बवृक्षे। कुष्ठे। কুড়। कुन्दुरुके। रा.नि.व.२३। राजार्के। শ্বেত আকন্দ। रा.नि.व.१२।

**राजभावा।** स्त्री। तिलवासिनीशाली। रा.नि.व.१६।

**राजभोगः।** पुं। शालिधान्यविशेषे। রাজভোগ ধান। राजवः।



**राजभोग्यम्।** क्ली। जातीकोषे। জায়ফল। पुं। प्रियालवृक्षे। श.च.। त्रि। राजभोगार्हे।

**राजमण्डूकः।** पुं। महामण्डूके। বড় বেঙ, সোণাবেঙ। रा.नि.व.१९।

**राजमान्यम्।** क्ली। पटोले। वै.निघ.।

**राजमाषः।** पुं। (Vigna catiang. Syn. Dolichos sinensis.) माषविशेषे। বরবটী। हिं लोबिया, रसे, बोड़ा। मं नील उरीद। कं नीलउण्डु। तत्पर्य्यायाः,—वर्व्वटः मरुत्करः द्विजश्रमः नीलमाषः नृपमाषः नृपोचितः सितमाषः। गुणाः—कफपित्तहरः रुच्यः वातलः बलकरश्च। रा.नि.व.१६। "राजमाषः सरो रुच्यः कफशुक्राम्लपित्तकृत्। स स्वादुर्वातलो रूक्षः कषायो विषदो गुरुः॥" च.सू.२७अ.। स श्वेतरक्तकृष्णभेदेन त्रिविधः। एषु यो महान् स एव गुणाधिको ज्ञेयः। भा.पू.१भ.धा.व.। तत्सूपगुणाः—"राजमाषभवः सूपः स्वादूरूक्षः कषायकः। ग्राही गुरुर्वातकरः सान्यकृद्रुचिकारकः॥' द्रव्यगुणः।

**राजमुद्गः।** पुं। मकुष्ठके। ভাল মুগ। हे.च.।

**राजमृगाङ्कः।** पुं। राजयक्ष्माधिकारे रसः। पाठः—"रसभस्म त्रयो भागा भागैकं हेमभस्मकं। मृततास्रस्य भागैकं शिलागन्धकतालकं। प्रति भागद्वय शुद्धमेकीकृत्य विचूर्णयेत्। वराटिका तेन पूर्य्या आजक्षीरेण टङ्कणं। पिष्ट्वा तेन मुखं रुद्ध्वा मृद्भाण्डे तं निरोधयेत्। शुष्कं गजपुटे पाच्यं चूर्णयेत् स्वाङ्गशीतलं। दशपिप्पलिकैः क्षौद्रैः मरिचैर्वा घृतान्वितैः॥" मात्रा ४ गुञ्जा। রস ৩ তো. স্বর্ণ ১ তো. তাম্র ১ তো. শুদ্ধ মনছাল, গন্ধক, হরিতাল প্রত্যেক ২ তো. একত্র চূর্ণ করিয়া বড় বড় কড়ির ভিতর পূরিয়া ছাগদুগ্ধে সোহাগা মাড়িয়া তদ্দ্বারা কড়ির মুখ বন্ধ করতঃ মৃত্তাণ্ডে রুদ্ধ করিয়া গজপুটে পাক করিবে। শীতল হইলে তুলিয়া ১০টী পিপুল বা মরিচ ১০টী, বা ১৯টীর সহিত ঘৃত ও মধু অনুপানে সেব্য। মাত্রা ৪ রতি। र.सा.सं.।

**राजयक्ष्मा।** पुं। See राजजक्ष्मा।

**राजयोग्यम्।** क्ली। चन्दने। वै.निघ.।

**राजरङ्गम्।** क्ली। रजते। श.र.।

**राजराजिका।** स्त्री। राजसर्षपे। রাই সরিষা। रा.नि.व.१६।

**राजराजेश्वररसः।** पुं। कुष्ठाधिकारे रसः। पाठः—"त्रिफला खादिरं सारमस्रुता वागुजीफलं। आतपे मर्द्दयेत् सूतं गन्धकं मृततास्रकं। सुहस्तमर्दितं तालं यावत्तच्च विलीयते। भृङ्गराजद्रवं दत्त्वा दिनमात्रं विमर्द्दयेत्। प्रत्येकं सूततुल्यं स्याच्चूर्णीकृत्य विमर्द्दयेत्। मध्वाज्याभ्यां लौहपात्रे कर्षाभ्यां भक्षयेत्ततः..." र.सा.सं.।

**राजरीतिः।** स्त्री। पित्तलविशेषे। বেঙাপিতল। तत्पर्य्यायाः,—पाकतुण्डी राजपुत्री महेश्वरी ब्रह्मरीतिः ब्रह्माणी कपिला पिङ्गला। गुणाः—तिक्ता शीता लवणरसा शोधनी पाण्डुवातक्रिमिप्लीहपित्तघ्नी च। रा.नि.व.१३।

**राजलक्ष्मीः।** स्त्री। कदलीवृक्षे। কলাগাছ। रा.नि.व.११।

**राजवर्त्तः।** पुं। राजवर्त्तमणौ। हिं रावटी। भा.म.कर्णरो.चि.। "नीलकं राजवर्त्तम्।"

**राजवल्लभः।** पुं। राजाम्रे। খাস আম। राजबदरे। राजादनीवृक्षे। খীর্ণী গাছ। रा.नि.व.११। नारायणदासकृत-द्रव्यगुणग्रन्थविशेषे। ग्रहण्यां रसः। पाठः—'जातीफललवङ्गाब्दत्वगेलाटङ्कणरामठं। जीरकं तेजपत्रञ्च यमानीविश्वसैन्धवं। लौहमभ्रं मृतास्रञ्च रसगन्धकमेव च। मरिचं त्रिफला रूप्यं प्रत्येकं तोलकोन्मितं। धात्रीरसे वटीं कुर्य्यात् द्विगुञ्जाफलमानतः। हन्ति शूलं तथा गुल्ममामवातं सुदारुणम्॥" रस.र.।

**राजवल्ली।** स्त्री। कारवेल्लके। উচ্ছে। हिं करला। र.मा.।

**राजवासनः।** पुं। भृङ्गराजपक्षिणि।

**राजवाहः।** पुं। घोटके। श.च.।

**राजवृक्षः।** पुं। आरग्वधवृक्षे। प.मु.। च.द.। सू.क.चि,परिणामशूले। र.सा.सं.। सु.सू.३६अ.। सु.चि.१०। पियालवृक्षे। मे.। लङ्कास्थायिवृक्षे। लङ्कासीजू। श.च.। भा.योनिरो.चि.। "पथ्यापर्पटराजवृक्षकटुका।" श्योणाकवृक्षे। सा.कौ.र.चि.वज्रमण्डूरे। [ गाछ। श.मा.।

**राजशणः।** पुं। पाट इति ख्यातवृक्षे। পাট

**राजशाकः।** पुं। वास्तूकशाके। বেতো শাক। प.मु.। रा.नि.व.७।

**राजशाकिनी** । स्त्री । राजगिरिनामपत्रशाके । রাজ শাক, বেতো শাক । गुणाः—रुच्या पित्तघ्नी शीतला च । रा.नि.व.७ ।

**राजशालिः** । पुं । राजभोग्यशालिधान्यविशेषे । রাজভোগ হৈমন্তিক ধান্য । प.मु. ।

**राजशिम्बी** । स्त्री । श्वेतशिम्ब्याम् । निष्पावे । वै.निघ. ।

**राजशुकः** । पुं । पक्षिविशेषे । মধনা পাখী । हिं राजशूगा । रा.नि.व.१९ ।

**राजशूकजम्** । क्ली । शालिधान्ये । হৈমন্তিক ধান্যবিশেষ । प.मु. ।

**राजशृङ्गः** । पुं । मद्गुरमत्स्ये । हे.च. ।

**राजसफरः** । पुं । इल्लिषमत्स्ये । हारा. ।

**राजसर्पः** । पुं । सर्पविशेषे । রাজ সাপ । त्रिका. । हे.च. ।

**राजसर्षपः** । पुं । राजिकायां, कृष्णवर्णसर्षपे । রাইসরিষা, কাল সরিষা । हिं राइ । तत्पर्य्यायाः,—राजिका क्षविका सुरी सुक्षकः व्यक्षकः कटुकः चवः क्षुताभिजननः क्षुधाभिजननः कृष्णा तीक्ष्णफला राजी कृष्णसर्षपाख्या । गुणाः—तिक्तः कटुः उष्णः वातशूलघ्नः पित्तदाहजनकः गुल्मकण्डूकुष्ठव्रणघ्नश्च । रा.नि.व.१६ ।

**राजसारसः** । पुं । मयूरे । श.मा. ।

**राजसी** । स्त्री । श्वेततुलस्याम् । वै.निघ. ।

**राजसुषवी** । स्त्री । कारवेल्लभेदे । गंगाकरला । प.मु. ।

**राजसैरेयकः** । पुं । नीलझिण्ट्याम् । वम्. निलाकीरण्टा । वै.निघ. ।

**राजस्कन्धः** । पुं । घोटके । त्रिका. ।

**राजस्वर्णः** । पुं । राजधुस्तूरवृक्षे । कनक-धूतुरा । रा.नि.व.१० ।

**राजहंसः** । पुं । लोहितचञ्चुचरणश्वेतहंसे । রাজহাঁস । अम. । कदम्बवृक्षे । मे. ।

**राजहर्षणम्** । क्ली । तगरपुष्पे । रा.नि.व.१० ।

**राजहासः (कः)** । पुं । मत्स्यविशेषे । কাৎলা মাছ । तत्पर्य्यायाः,—कातरः कातलः राजिवः । श.र. । See कातलः ।

**राजक्षवः (कः)** । पुं । राजसर्षपे । রাই বা কাল সরিষা । रा.नि.व.१६ । तच्छाकगुणाः— "त्रिदोषशमनं लघु । याहि शस्तं विशेषेण वृक्षण-शोविकारिणाम् ॥" च.सू.२७अ. । छिक्किन्याम् । হেঁচেতা । वै.निघ. । दुग्धिकायाम् । च.सू.४अ. । वृंहणी ।

**राजा (न्)** । पुं । छिक्किणीवृक्षे । হেঁচেতা । वै.निघ. ।

**राजाग्रः** । पुं । राजगिरिशाके । वै.निघ. ।

**राजातनः** । पुं । पीतशालवृक्षे । পেয়াশাল । रा.नि.व.११ ।

**राजात्यावर्त्तकः** । पुं । राजावर्त्ते ।

**राजादनः** । पुं । क्षीरिणीवृक्षे । ক্ষীরিণী । किंशुकवृक्ष । पलाशवृक्षे । प.मु. । पीतशालवृक्षे । रा.नि.व.११ । क्ली । पीतशालफले । सु.सू.३८अ.परूषकादिः । किंशुकपुष्पे । मे. । क्षीरिका-फले । খির্ণীফল । प.मु. ।

**राजादनफलः** । पुं । क्षीरिणीवृक्षे । খির্ণী গাছ । वै.निघ. ।

**राजादनी** । स्त्री । (Mimusops hexandra.) स्वनामख्यातस्वादुफलवृक्षविशेषे । खिरणी इति गौर्ज्जरे प्रसिद्धा । খিরণী, ক্ষীরখেজুর । हिं चीरी । रायणी, रेवणी इति महाराष्ट्रादौ । वम्. केर्णी । ता. पल्ल । तत्पर्य्यायाः,—राजफलः राजवल्लभः कपीष्टः क्षीरवृक्षः क्षीरी नृपद्रुमः निम्बबीजः मधुफलः माधवोद्भवः गुच्छफलः भूपेष्टः श्रीफलः दृढ़स्कन्दः क्षीरशुक्लः । गुणाः—मधुरा पित्तघ्नी गुरुः तर्पणी वृष्या स्थौल्यकरी स्निग्धा मेहघ्नी च । रा.नि.व.११ । फलं गुरु स्निग्धं स्वादु कषायञ्च । सु.सू.४६अ. । मधुरं स्वादु च । अत्रि.१७अ. । अपिच,—राजादनः फलाध्यक्षो राजन्या क्षीरिकापि च । क्षीरिकायाः फलं वृष्यं बल्यं स्निग्धं हिमं गुरु । तृष्णामूर्च्छा मद भ्रान्ति क्षय दोषत्रयास्रजित् ॥ भ. । तिल-वासिनीशालौ । रा.नि.व.१६ ।

**राजाद्रिः** । पुं । राजगिरिशाकक्षुपे । वै.निघ. ।

**राजान्नम्** । क्ली । कर्णाटदेशे प्रसिद्धे शालि-धान्यभेदे । রাজভোগ, হৈমন্তিক ধান্যবিশেষ । तत्पर्य्यायाः,—नृपान्नं राजार्हं दीर्घशूककं धान्य-श्रेष्ठं राजधान्यं राजेष्टं दीर्घकुरकं । गुणाः— त्रिदोषघ्नं सुस्निग्धं मधुरं लघु दीपनं बलकृत्



पथ्यं कान्तिदं वीर्य्यवर्द्धनञ्च । तच्च त्रिविध सशूकश्वेतरक्तकृष्णभेदेन, उत्तरोत्तरं रसाधिकञ्च । त्रैविध्याच्च तण्डुला हरितपीतलोहिताः सामान्यतो भवन्ति । गुणेषु पूर्व्वपूर्व्वोत्तराः । सु. सू. । रा. नि.व.१६ ।

**राजाम्रः** । पुं । आम्रविशेषे । म राजांबा । कं रायमचु । तै राचमामिड़िचेट्टु । भा. । तत्पर्य्यायाः,—राजफलः अराम्रः कोकिलानन्दः कोकिलोत्सवः कामेष्टः नृपवल्लभः कामाङ्गः राजपुत्रकः । गुणाः—कोमलाः राजाम्राः— कटूम्लाः पित्तदाहकराश्च । सुपक्वास्ते—स्वादु-माधुर्य्याः बलपुष्टिवीर्य्यप्रदाश्च । तत्फलं त्रिविधं बालमध्यपक्वभेदेन । त्रिष्वेव राजाम्रेषु रसाधिक्य-साम्यं वर्त्तते । गुणाधिक्यन्तु उत्तरोत्तर ज्ञेयम् । किञ्च एषां बालफलं कफवातरक्तश्वासपित्तजनकं । मध्य फलं तादृशमेव. गुणसम्पन्नं दोषबहुलं पर कषायाम्लञ्च । पक्वफलं मधुरं त्रिदोषघ्नं तृष्णादाह-श्रमश्वासारोचकहरं गुरु हिमञ्च । रा.नि.व.१० ।

**राजाम्रातकः** । पुं । राजाम्रातकवृक्षे । वै.निघ. ।

**राजाम्लः** । पुं । अम्लवेतसे । रा.नि.व.६ ।

**राजार्कः** । पुं । श्वेतार्के । শ্বেত আকন্দ । र.मा. । मं मन्दारु । कं मंदारयक्के । गुणाः— कटु-तिक्तोष्णः कफ-मेदो-विषघ्नः वात-कुष्ठ व्रणघ्नः शोथकण्डूविसर्पघ्नः । रा.नि.व.१० ।

**राजार्हम्** । क्ली । अगुरुकाष्ठे । मे । कर्पूरे । कृष्णागुरुकाष्ठे । वै.निघ. । शालिधान्यविशेषे । রাজভোগ ধান । रा.नि.व.१६ । स्त्री (र्हा) । जम्बूवृक्षे । জাম গাছ । रा.नि.व.११ ।

**राजालाबुः** । स्त्री । स्वादुतुम्ब्याम् । মিঠা লাউ । तत्पर्य्यायाः,—तुम्बकः महातुम्बी मिष्टतुम्बी अलावूनी मधरालावूनी भव्यालाबूः शाकालाबूः । गुणाः—गुरुः वृष्या कफपित्तघ्नी च । मद. ।

**राजालुकः** । पुं । महाकन्दे । রশুন । हारा. ।

**राजावर्त्तः** । पुं । स्वनामख्याते उपरत्नभेदे । स्फटिकजातौ । हिं रेवटी । तत्पर्य्यायाः,— आवर्त्तः आवर्त्तमणिः नृपावर्त्तः राजात्यावर्त्तकः । गुणाः—मृदुः शीतलः कटुः स्निग्धः पित्तघ्नः सौभाग्यजनकश्च । लक्षण..."निगदितमसितं मसृणं नीलं गुरु निर्म्मलं बहुच्छायम् । शिखिकण्ठ-समं सौम्यं राजावर्त्तं वदन्ति जात्यमणिम् ॥" रा.नि.व.१३ ।

**राजाहिः** । पुं । द्विमुखसर्पे । রাজ সাপ । तत्पर्य्यायाः,...द्विमुखाहिः विलवासी विषायुधः । त्रिका. ।

**राजाह्वम्** । क्ली । कर्णिकारफले । কনিকা ফল বা চীনের করবী ফল । वा.सू.१५अ. । स्त्री (ह्वा) । राजादनीवृक्षे । श्वेतार्कवृक्षे । वै.निघ. ।

**राजिका** । स्त्री । (Brassica juncea. Syn. Sinapis juncea or Brassica nigra.) श्वेतराजिकायाम् । गौरसर्षपे । শ্বেত রাই । राजसर्षपे । কাল সরিষা, রাই, কৃষ্ণ রাই । मे. । रक्तसर्षपे । রাই । तत्पर्य्यायाः,— राजी आसुरी रक्तिका रक्तसर्षपः तीक्ष्णगन्धा मधूलिका क्षवः क्षवकः क्षुतकः । रा.नि.व.१६ । गुणाः—"राजिका कफपित्तघ्नी तीक्ष्णोष्णा रक्तपित्तकृत् । किञ्चिद्रूक्षाग्निदा कण्डूकुष्ठकोठ-कृमीन् हरेत् । अतितीक्ष्णा विशेषेण तद्वत्कृष्णापि राजिका ॥" भा. । राजिकातैलगुणाः—तीक्ष्णं वातादिदोषघ्नं शीतलं कटु पुंस्त्वघ्नं कैश्यं त्वग्दोष-नाशनञ्च । रा.नि.व.१५ । तत्पत्रगुणाः—कटूष्णं कृमिवातकफघ्नं कण्ठरोगघ्नं स्वादु दीपनञ्च । रा.नि.व.७ । षणरीच्यात्मके माने । "ताभिः षड्भिश्च राजिका ।" प.प्र. । कृष्णोदुम्बरे । केदारे । मे. । क्षुद्ररोगभेदे । ঘামাচি । मा.नि. ।

**राजिकाफलः** । पुं । गौरसर्षपे । শ্বেত সরিষা । रा.नि.व.१६ ।

**राजिकाह्वा** । स्त्री । तन्नामकक्षुद्ररोगभेदे । ঘামাচি । लक्षणं यथा..."घर्म्मस्वेदपरीतेऽङ्गे पिटिकाः सरुजो घनाः । राजिकावर्णसंस्थान-प्रमाणा राजिकाह्वयाः ॥" का.उ.२१अ. ।

**राजिचित्रः** । पुं । राजिमच्छर्पविशेषे । सु. कल्प.४अ. ।

**राजिफला** । स्त्री । चीनकर्कटीलतायाम् रा.नि व.७ ।

**राजिभः** । पुं । दुण्डुभसर्पे । ঢোঁড়াসাপ । वै.निघ. ।

**राजिमत्फला** । स्त्री । मधुकोषातक्याम् । ঝিঙে ধুন্দুল । भा.पु.१भ.शा.व. ।

**राजि(जी)मान्** । पुं । भीमसर्पभेदे । लक्षणं ..."राजीमन्तस्तु राजिभिः । स्निग्धा विचित्र-वर्णाभिस्तिर्य्यगूर्द्ध्वं विचित्रिताः ॥" तेन दष्टस्य

प्रथमे वेगे रक्तं दुष्टं पाण्डुतां गच्छति। द्वितीये अतिगात्रगुरुत्वं। तृतीये दंशविक्लेदादयः। चतुर्थे मस्तकगुरुत्वादयः। पञ्चमे गात्रभङ्गादयः। शेषयोः दर्व्वीकरवत्। वा.उ.३६अ.।

**राजिलः।** पुं। डुण्डुभसर्पे। ঢোঁড়া সাপ। अम.। पटोले। सर्पजातिविशेषे। तद्भेदा यथा... पुण्डरीकराजिचित्राङ्गुलराजिबिन्दुराजिकर्द्दमक-तृणशोषकसंसर्पकश्वेतहनुदर्भपुष्पचक्रकगोधूमक-किक्किसादाश्चेति। वा.।

**राजिलफला।** स्त्री। एर्व्वारुकभेदे। वै.निघ.।

**राजी।** स्त्री। रक्तसर्षपे। রাইসরিষা। रा.नि.व.१६। वै.निघ.२भ.दुर्जलज्व.चि.शुण्ठ्यादि-कल्के। वाकुच्याम्। সোমরাজ। तिक्तपटोले। मत्स्यविशेषे। वै.निघ.।

**राजीफलः।** पुं। पटोललतायाम्। भा.म.१ भ.चित्तभ्रम.ज्व.चि.। "राजीफलैः संयुताः।" तिक्तपटोले। তিৎপলতা। वै.निघ.।

**राजीमती।** स्त्री। लिङ्गनाशरोगस्योपद्रव विशेषे। यथा—"राजीमतीदृङ् निचिता शालि-शूकाभराजिभिः।" वा.उ.१४अ.।

**राजीलः।** पुं। राजसर्षपे। রাইসরিষা। वै.निघ.।

**राजीवम्।** क्ली। पद्मे। प.मु.। रा.नि.व.१०। तन्मूलं शूकरदंष्ट्रे हितम्। पुं। हरिणभेदे। हस्तिनि। चिका.। सारसपक्षिणि। अम.। नादेयमत्स्यविशेषे। मे.।

**राजेन्द्रः।** पुं। राजगिराशाके। वै.निघ.।

**राजेयः।** पुं। पटोले। भा.पू.१भ.शा.व.।

**राजेष्टम्।** क्ली। नृपान्न, राजान्ने। রাজভোগ হৈমন্তিক ধান্যবিশেষ। रा.नि.व.१६। पुं। राजपलाण्डौ। रा.नि.व.७। स्त्री (ष्टा)। कदली-वृक्षे। रा.नि.व.११। पिण्डीखर्ज्जूरे। वै.निघ.।

**राजोद्वेजनसंज्ञकः।** पुं। चवके, भूताङ्कुश-वृक्षे। হেঁচেতা। रा.नि.व.९।

**राज्यक्ता।** स्त्री। पिष्टराजिकादधिलवणमिश्रित-सूक्ष्मालाबूखण्डादिकृते व्यञ्जनविशेषे। রায়তা। "राज्यक्तयातिरोचिन्या पाचन्या तांस्तु भक्षयेत।" भा.।

**राज्ञी।** स्त्री। नील्याम्। নীল গাছ। रा.नि.व.४। कांस्ये। हे.च.। जातीपुष्पवृक्षे। पित्तलीराजसर्षपे। कालसরিষা, রাই। रा.नि.व.१६।

**राटः (ठः)।** पुं। मदनवृक्षे। ময়না গাছ। रा.नि.व.८। र.सा.सं. उदावर्त्तलेपे। वा.उ.२७अ.।

**राटिः (ड़िः)।** पुं। शरारिपक्षिणि। শরাল পাখী। अम.।

**राठपुष्पम्।** क्ली। मदनपुष्पे। वा.उ.२अ.।

**रात्रिः।** स्त्री। हरिद्रायाम्। रा.नि.व.६। वै. निघ.२भ.यक्ष्मी.चि.। रजन्याम्।

**रात्रिकः।** पुं। उष्ट्रधूमकाख्ये उच्चिटिङ्गाख्ये वा वृश्चिकभेदे। "शिरीषपुष्पं सकरञ्जबीजं काश्मीरजं कुष्ठमनःशिलाश्च। एषोऽगदो रात्रिक-वृश्चिकानां संक्रान्तिकारी कथितो जिनेन॥" वा.उ.३७अ.।

**रात्रिजलम्।** क्ली। कुज्झटिकायाम्। श.मा.।

**रात्रिजागरः।** पुं। कुक्कुरे। हे.च.।

**रात्रिजागरदः।** पुं मशके। रा.नि.व.१९।

**रात्रिनामिका।** स्त्री। हरिद्रायाम्।

**रात्रिपुष्पम्।** क्ली। उत्पले। শুন্দিফুল, হেলা ফুল। रा.नि.व.१०।

**रात्रिपुष्पिका।** स्त्री। शुक्लजातीवृक्षे। শ্বেত জাতী গাছ। वै.निघ.।

**रात्रिवियोगी** (इन्)। पुं। चक्रवाके। वै. निघ.।

**रात्रिविश्लेषगामी** (इन्)। पुं। चक्रवाक-पक्षिणि। रा.नि.व.१९।

**रात्रिवेदः (दी(इन्))।** पुं। कुक्कुटे। चिका.।

**रात्रिहासः।** पुं। श्वेतोत्पले। श.र.।

**रात्र्यन्धः।** त्रि। तन्नामकदृष्टिरोगयुक्ते, काकादौ। রাতিকাণা।

**राधवङ्कः।** पुं। करकायाम्।

**राद्धः।** त्रि। भक्ते। हे.च.। क्ली। इत्यन्तरभुक्ते, अन्तरभुक्ते वा। त्रिका.।

**राधा।** स्त्री। विष्णुक्रान्तायां। आमलक्यां। मे.।

**राधामाधवः।** पुं। वेदारत्नावलीकार।

**रामम्।** क्ली। तमालपत्रे। তেজপত্র। रा. नि.व.६। कुष्ठे। কুড়। रा.नि.व.१२। वास्तुके। मे.। पुं। अशोकवृक्षे। पशौ। त्रिका.। श्वेते। मे.। शुक्लवर्णे। कृष्णवर्णे।



**रामकः।** पुं। जलापामार्गे। वै.निघ.।

**रामकन्दः।** पुं। शमीवृक्षे। प.मु.।

**रामकर्पूरकः।** पुं। कत्तृणे। গন্ধতৃণ, রামকর্পূর। श.र.।

**रामकाण्डः।** पुं। रामशरे। रा.नि.व.८।

**रामकोशा(षा)तकी।** स्त्री। महाशुक्ल-कोशातक्याम्। वै.निघ.।

**रामगुवाकः।** पुं। रामपूगवृक्षे। রাম সুপারি।

**रामचन्द्रः।** पुं। रसप्रदीपकारे। रसेन्द्र-चिन्तामणिकारे।

**रामच्छर्द्दनकः।** पुं। मदनवृक्षे। भा.।

**रामजननी।** स्त्री। रेणुकायाम्।

**रामठम्।** क्ली। हिङ्गुनि। হিং। र.मा.। रा. नि.व.६। मदनफले। च.द.वमनाधिकारे। पुं। अङ्कोटवृक्षे। र.मा.। जलापामार्गे। वै.निघ.।

**रामठी।** स्त्री। नाड़ीहिङ्गौ। रा.नि.व.६।

**रामणः।** पुं। पर्व्वतनिम्बवृक्षे, कैटर्य्यनिम्बे। तिन्दुकवृक्षे। रा.नि.व.९।

**रामतरुणी।** स्त्री। तरुणीपुष्पवृक्षे। শেউতী ফুলের গাছ। रा.नि.व.१०।

**रामदूतिका (ती)।** स्त्री। नागदन्त्याम्। नागदना। र.मा.। नागपुष्पाम्। भा.। तुलसी-विशेषे। तत्पर्य्यायाः,—पर्व्वपुष्पी विशल्या नागदन्तिका काण्डनी फणिजम्भका सूक्ष्मपर्णी भरण्याह्वा। श.च.।

**रामपूगः।** पुं। गुवाकवृक्षविशेषे। तत्पर्य्यायाः, कामोनः मुनिपूगः सुवेरटः। चिका.।

**रामभद्रा।** स्त्री। गाम्भारीवृक्षे। वै.निघ.।

**रामलवणम्।** क्ली। शाकम्भरीलवणे। শাস্তর-লবণ। र.मा.।

**रामवल्लभम्।** क्ली। त्वचि। গুড়ত্বক। रा.नि.व.६।

**रामबाणः।** पुं। रामशरे। रा.नि.व.८।

**रामबाणरसः।** पुं। अजीर्णाधिकारे रसः। पाठः—"पारदामृतलवङ्गगन्धकं भागयुग्ममरिचेन मिश्रितं। जातिकाफलमथार्द्धभागिकं तिन्तिडी-फलरसेन मर्दितं। माषमात्रमनुपानयोगतः सद्य एव जठराग्निदीपनः॥" পারা, বিষ, লবঙ্গ, গন্ধক প্রত্যেক ১ তো. মরিচ ২ তো. জায়ফল ॥০ তো. কাঁচা তেঁতুলের রসে ভাবনা। বটী মাষমাত্রা। र.सा.सं.। रस. चि.भा.।

**रामशरः।** पुं। स्वनामख्यातशरतृणे, मुञ्ज-भेदे। रामशपु, सरगोल इति मालवदेशे प्रसिद्धः। রামশর। हिं रामशर, शरपत। तत्पर्य्यायाः,— रामकाण्डः रामेषुः अपर्व्वदण्डः दीर्घः नृपप्रियः। भा.। गुणाः—रसे अम्लकषायः पित्तकृत् वात-कफघ्नश्च। एतन्मूलं ईषदुष्णं रुचिदञ्च। रा.नि.व.८।

**रामशीतला।** स्त्री। आरामशीतलायाम्। পত্রশাকবিশেষ। रा.नि.व.१०।

**रामशे (से) नः (कः)।** पुं। भूनिम्बे। চিরেতা। रा.नि.व.९। भा.म.१भ.चित्तभ्रमज्व.चि.।

**रामा।** स्त्री। गृहकन्यायाम्। ঘৃতকুমারী। रा.नि.व.६। हिङ्गुनि। मे.। हिङ्गुले। श.र.। अशोकवृक्षे। सातलायां। तमालपत्रे। त्राय-माणायाम्। रा.नि.व.२३। गोरोचनायां। रा.नि. व.१२। वासायाम्। गैरिके। श.च.। श्वेत-कण्टकार्य्याम्। रा.नि.व.४। आरामशीतलायां। रा.नि.व.१०।

**रामाटरूषः।** पुं। वासाभेदे। রাম বাসক। भैष.ज्व.चि दार्व्वादौ।

**रामाप्रियः।** पुं। त्वचि, दारुचीनीति प्रसिद्धे वल्कले। वै.निघ.।

**रामालिङ्गनकामः।** पुं। रक्ताम्लानपुष्पवृक्षे। রক্তঝাঁটি। रा.नि.व.१०।

**रामावक्षोजोपमः।** पुं। चक्रवाके। रा. नि.व.९।

**रामावामाङ्घ्रिघातकः।** पुं। अशोकवृक्षे। रा.नि.व.१०।

**रामेषुः।** पुं। रामशरे। रा.नि.व.८।

**रामोदुम्बरिकाफलम्।** क्ली। अञ्जीरफले। वै.निघ.।

**रायणम्।** क्ली। पीड़ायाम्। श.र.।

**रालः।** पुं। (Mimosa rubicaulis.) सर्ज्जतरौ। ধূনোর গাছ। हिं किलि। तैं सर्जरसमु, सर्ज्ज। पञ्जा. राल अर्क्षु। रा.नि. व.९। सर्ज्जरसे। ধূনা। तत्पर्य्यायाः,—शालः शालनिर्य्यासः शालरसः ललनः देवेष्टः शीतलः

बहुरूप: सर्ज्जनिर्य्यास: सर्ज्जरस: सुरभी: यक्षधूप: सुरधूप: अग्निवल्लभ: कल: कलकल: कललज: कलकलोद्भव:। गुणा:—शीतल: स्निग्ध: कषाय: तिक्त: संग्राही वातपित्तघ्न: स्फोटकण्डूतिव्रणघ्नश्च। पानलेपनगुणौ—शीतल: प्रदरघ्नश्च। रा.नि.व. १२। अपिच—"रालो ग्राही हिमस्तिक्त: कषायी ग्राहको हरेत्। दोषास्रस्वेदवीसर्पज्वरव्रणविपादिका:। ग्रहभग्नाग्निदग्धांश्च शूलातिसारनाशन:॥" भा.।

**रालकार्य्य:**। पुं। शालवृक्षे। रा.नि.व.९।

**रालतैलम्**। क्ली। सालवृक्षभव-तैले। গর্জ্জন তৈল। गुणा:—तैलं सर्ज्जरसोद्भूतं विस्फोट-व्रणनाशनम्। कुष्ठपामाक्रिमिहरं वातश्लेष्मामया-पहम्।"

**रालनिर्य्यास:**। पुं। सालवृक्षे।

**रालिका**। स्त्री। धूनके। धूना। वै.निघ. २भ.अ.सा.पथ्यादध्ये।

**रावण:**। पुं। वृक्षविशेषे। वम्. टेँभुरणी। वै. निघ.। अर्कप्रकाशनामवैद्यकग्रन्थकारे।

**राशि:**। पुं। द्रोणपरिमिते माने। प.प्र.१ख.। धान्यादिस्तूपे। कटङ्गो। वृङ्गौ। मात्रायाम्। च.वि.१अ.।

**राषभी**। स्त्री। कपिकच्छ्वाम्। আলাকুশী। वै.निघ.। गर्द्दभ्याम्। श र.।

**राष्ट्रकम्**। क्ली। वैदूर्य्यमणौ। प.मु.।

**राष्ट्रिका**। स्त्री। कण्टकार्य्याम्। प.मु.। वृहत्यां। रा.नि.व.४। र.मा.।

**राष्ट्री**। स्त्री। महाराष्ट्रीलतायाम्। कँाचड़ा। प.मु.। रा.नि.व.२३।

**रास:**। पुं। शृङ्खले। गादा। क्रीड़ायाम्। त्रिका.।

**रासना**। स्त्री। रास्नायां। वै.निघ.कास.चि. त्रिकटुकादिचूर्णे।

**रासभ:**। पुं। गर्द्दभे। गाधा। अम.। (भी) स्त्री। गर्द्दभस्त्रियां। श.र.। [ च.।

**रासभवन्दिनी**। स्त्री। मल्लिकापुष्पवृक्षे। श.

**रास्ना**। स्त्री। (Vanda Roxburghii. Syn. Cymbidium tessaloides.) स्वनामख्यातलताजौषधौ केदारदेशे प्रसिद्धे। रास्ना। हिं रास्ना। तें किरम्मिचक्क। अन्तरदामर। तत्पर्य्याया:,—द्रोणगन्धिका सर्पगन्धा पलङ्कषा सुगन्धमूला सुगन्धा सुरसा गन्धनाकुली नकुलेष्टा नाकुली भुजङ्गाक्षी छत्राकी सुवहा श्रेयसी रसना रसा रसाढ्या रस्या रास्निका अतिरसा मुक्तरसा रक्तरसा। सा त्रिधा—"रास्ना तु त्रिविधा प्रोक्ता मूलपत्रतृणैस्तथा। ज्ञेयौ मूलदलौ श्रेष्ठौ तृणरास्ना च मध्यमा॥" रा.नि.व.६। सु.सू.३७अ. अर्कादि:। वा.सू.१५अ.निरूहणे अर्कादि:। "भार्गी रास्ना वृश्चिकाली प्रकीर्य्या।" च.द.ज्व.चि.। "रास्ना वृक्षादनी दारु।" श्वेतकण्टकार्य्याम्। रा.नि.व.४।

**रास्नागुग्गुलु:**। पुं। वातव्याधौ औषधम्। पाठ:..."रास्नायास्तु पलञ्चैकं कर्षान् पञ्च च गुग्गुलो:। सर्पिषा वटकं कृत्वा खादेद्धन्ति च गृध्रसीम्॥" रस.र.। अन्य: कर्णरोगे—"रास्ना-छिन्नैरण्ड-सुराह्व-विश्वं तुल्यं पुरेणाथ विमर्द्य खादेत्।" भा.।

**रास्नातैलम्**। क्ली। वातव्याधौ तैलम्। पाठ:—"रास्नाशिरीषयष्ट्याह्वशुण्ठीसहचरामृता:। श्योणाकदारुसम्पाका हयगन्धात्रिकण्टका:। एषां दशपलान् भागान् कषायमुपकल्पयेत्। ततस्तेन कषायेण सर्व्वगन्धैश्च कार्षिकै:। दध्यारणाल-माषाम्बुमूलकेक्षुरसै: शुभै:। पृथक् प्रस्थोन्मितै: सार्द्धं तैलप्रस्थं विपाचयेत्।" च.चि.२८अ.।

**रास्नादशमूलम्**। क्ली। वातव्याध्यादौ कषाये। पाठा:—"दशमूलामृतैरण्ड-रास्ना नागर-दारुभि:। क्वाथो रुवुकतैलेन सामं हन्त्यनिलं गुरुम्।" रस.र.।

**रास्नादि:**। पुं। रास्नावृक्षादनीदेवदारुसर-लैलवालुककृतकषाये। स क्षौद्रशर्करायुक्तो वातज्वरे हित:। चद.ज्व.चि.। "रास्नावृक्षादनीदारुसरलं सैलवालुकम्। कषाय: शर्कराक्षौद्रयुक्तो वात-ज्वरापह:।" प्रयोगा.वात.ज्व.चि.। वृक्षादनी वन्दाक: (বান্দরা)।

**रास्नादिलौहम्**। क्ली। राजयक्ष्माधिकारे, श्वासकासे च लौहम्। पाठ:—"रास्नाश्वगन्धाकर्पूर-भेकपर्णीशिलाह्वयै:। त्रिकत्रयसमायुक्तैर्लौहं यक्ष्मा-न्तकं मतम्॥" र.सा.सं.। (रास्नातालीशकर्पूर इति रसको.पाठभेद:।)

**रास्नाद्यं (घृतं तैलञ्च)**। क्ली। वातघ्नौषधम्।



पाठ:—'रास्नाश्वगन्धाकपिकच्छुभूमिकुष्माण्डगोकण्ट-कशालपर्णी। छिन्नारुहैरण्डबलाशताह्वापुनर्नवानां विधिनोद्धृतानाम्॥ प्रत्येकश: पञ्चपलं गृहीत्वा पचेद्घटेऽपां घृतपादशेषे। शतावरीरसं पूतं दत्त्वाच पलषोड़शं। घृतप्रस्थं विपक्तव्यं तैलमेरण्डमेव वा। दत्वाष्टवर्गकल्कञ्च गुग्गुलोर्वा पलाष्टकं। सिद्धं घृतञ्च तैलं वा दद्याद् वातगदातुरे......।" रस.र.।

**रास्नापञ्चक:**। पुं। ऊरुस्तम्भाधिकारे कषाय:। पाठ:—"रास्नां गुड़ूचीमेरण्डं देवदारु महौषधम्। पिबेत् सर्व्वाङ्गके वाते सामे सन्ध्यस्थिमज्जगे।" अत्र भेदार्थमेरण्डतैलं प्रक्षिपन्ति वृद्धा:। रस.र.।

**रास्नासप्तकम्**। क्ली। ऊरुस्तम्भाधिकारे पाचनम्। पाठ:..."रास्नामृतारग्वध-देवदारु-त्रिकण्टकैरण्डपुनर्नवानां। क्वाथं पिबेन्नागरचूर्णमिश्रं जङ्घोरुपृष्ठत्रिकपार्श्वशूली॥" रस.र.।

**रास्निका**। स्त्री। रास्नायाम्। भा.। षड़्विन्दु-तैले। "रास्निकासैन्धवञ्च।"

**राहुच्छत्रम्**। क्ली। आर्द्रके। আদা। रा.नि.व.६।

**राहुरत्नम्**। क्ली। गोमेदके रत्ने। रा.नि.व.१३।

**राहूच्छिष्ट:**। पुं। लशुने। রশুন। त्रिका.।

**राहूत्सृष्ट:**। पुं। रशोने। हारा.।

**राक्षम्**। क्ली। पर्कटीफले। अम.।

**राक्षस:**। पुं। रोहीतकवृक्षे। রোহ়া। वै.निघ.। निशाचर-हिंस्रप्राणिभेदे।

**राक्षसभोजनम्**। क्ली। मांसे। राक्षसग्रहे। वा.उ.।

**राक्षसी**। स्त्री। चण्डायां। चौरनामगन्धद्रव्ये। मे.। मुरामांस्याम्। रस.र.प्रमेह.चि.। दंष्ट्रायाम्। हे.च.।

**राक्षसीकन्द:**। पुं। चण्डालकन्दे। वै.निघ.।

**राक्षा (क्ष्या)**। स्त्री। लाक्षायाम्। গালা। अम.।

**रिङ्ख(ङ्ग)णम्**। क्ली। स्खलने। अम.।

**रिङ्ग(ङ्गि)णी**। स्त्री। सुद्गपर्णीलतायाम्। मुगानी। रा.नि.व.३। कैवर्त्तमुस्तायाम्। কেওট-মূতা। कण्टकार्य्याम्। वै.निघ.श्वास.चि.वासादि-कषाये।

**रिठा (करञ्ज:)**। स्त्री, पुं। रीठाकरञ्जे। রীঠা গাছ। कों रिङ्गी। गुर्ज्ज.अरिठा। वै.निघ.।

**रिपु:**। पुं। चोरनामगन्धद्रव्ये। গেঁটেলা। रा.नि.व.१२। क्रोधादौ। शारीररिपुषट्के।

**रिपुघातिनी**। स्त्री। गुञ्जाविशेषे। हिं कुचाइ। "कुचिका बहुविस्तीर्णा कुञ्चिका रिपु-घातिनी।" श.च.।

**रिबु:**। पुं। रक्तैरण्डे। वै.निघ।

**रिमेद:**। पुं। अरिमेदे। খদিরবিশেষ। रा.नि.व.८।

**रिरी**। स्त्री। पित्तले। हे.च.। [ श.र.।

**रिश्य: (ष्य:)**। पुं। हरिणविशेषे। त्रिका.।

**रिष्ट:**। पुं। रीठाकरञ्जे। রিঠা। रक्तशिग्रुवृक्षे। मे.। श्वेतरसोने। रा.नि.व.७।

**रिष्टक:**। पुं। रक्तशिग्रुवृक्षे। श.र.। अत्रि. २अ.।

**रिक्षा**। स्त्री। लिक्षायां। यूकायां। নিকি, উকুনের ছানা। हे च.।

**रीठा (करञ्ज:)**। स्त्री, पुं। (Sapindus mukorossi or S. Trifoliatus. Syn.S. Setergens or S. Emerginta.) The soapnut tree. स्वनामख्यातोत्तरदेशीय-करञ्जवृक्षे। বড় রিঠা। हिं रीठा। तें रीठा-करञ्जमनेचेट्टु। कुकुड़ुकयलु वम्. रिथा। ता. पोन्नान कोट्टइ। तत्पर्य्याया:,—गर्भपातन: गुच्छक: गुच्छपुष्पक: गुच्छफल: रीठा अरिष्ट: मङ्गल्य: कुम्भवीज: प्रकीर्य्या सोमवल्क: फेनिल:। गुणा:—तिक्त उष्ण: कटु: स्निग्ध: वातघ्न: कफघ्न: कुष्ठकण्डूघ्न: विषविस्फोटघ्नश्च। See अरिष्टक:।

**रीढ़क:**। पुं। पृष्ठास्थनि। পীঠের ডাঁড়া, মেরুদণ্ড। हे.च.।

**रीति: (ती)**। स्त्री। पित्तले। रा.नि.व.१३। लौहकिट्टे। মণ্ডুর। मे.। दग्धस्वर्णादिमले। धरणि:। [ १३।

**रीतिक(ज)म्**। क्ली। पुष्पाञ्जने। रा.नि.व.

**रीतिका**। स्त्री। पित्तले। पुष्पाञ्जने। श.च.।

**रीति(का)कुसुम(पुष्प)म्**। क्ली। पुष्पाञ्जने। रा.नि.व.१०।

**रीतिहेतु:**। पुं। यशदे। দস্তা। भा.।

**रुक्**। स्त्री। कुष्ठौषधौ। কুড়়। मे.। भा.म.१भ.

सन्निज्व.चि.। "मरिच-कच-पथ्यपचा-वचा-रुक्।" व्याधौ। रा.नि.व.२०।

**रुक्का**। स्त्री। सुराविशेषे। "रुक्का सा हृतसारा च।" प.प्र.३ख.।

**रुक्प्रतिक्रिया**। स्त्री। रोगोपशमनोपाये, चिकित्सायाम्। रा.नि.व.२०।

**रुक्मम्**। क्ली। तीक्ष्णलौहे। विदरीति लोके। र.मा.। धुस्तूरे। प.मु.। सुवर्णे। रा.नि.व.१३। पुं। नागकेशरवृक्षे। रा.नि.व.६।

**रुक्मलौहम्**। क्ली। तीक्ष्णलौहे। विदरी। सि.यो. र. पि. चि.खण्डखाद्यलौहे। "पलद्वादशकं ज्ञेयं रुक्मलौहस्य चूर्णितम्।"

**रुक्मवन्ती**। स्त्री। शालिधान्यविशेषे। हैमन्तिक धान्यभेद। गुणाः—"रुक्मवन्ती लघु-रुचि-बल-पुष्टिकरा मता।" अति.१६अ.।

**रुक्मिणी**। स्त्री। स्वर्णक्षीरिण्याम्। शेयाल-काँटा। रा.नि.व.५।

**रुक्सद्म (न्)**। क्ली। मले। कश्चित्।

**रुग्णः**। त्रि। रोगिणि। रा.नि.व.२०।

**रुग्दाहः**। पुं। तन्नामकसन्निपातज्वरविशेषे। लक्षणम्—"प्रलापपरितापनप्रबलमोहमान्द्यभ्रमः, परिभ्रमणवेदनाव्यथितकण्ठमन्याहनुः। निरन्तर-तृषाकरः श्वसनकासहिक्काकुलः, सकष्टतरसाधनो भवति हन्ति रुग्दाहकः॥" वै.निघं.। भा.।

**रुग्मम्**। क्ली। स्वर्णे। शब्दाम्।

**रुच(क)म्**। क्ली। सर्ज्जिक्षारे। साजिमाटि। सौवर्चललवणे। सचललवण। मे.। भा.पू.२भ. अर्शःचि.विड़ङ्गादिचूर्णे। वै.निघ.ग्रहणी-चि. रुच-कादिचूर्णे। मूलके। मूला। गोरोचनायाम्। विड़ङ्गे। हे.च.। लवणे। हारा.। दशनाश्नि।

**रुचकः**। पुं। बीजपूरवृक्षे। मातुलुङ्गवृक्षे। रा.नि.व.११। श्वेतैरण्डे। ज.द.१२अ.। सर्षपे। दन्ते। कपोते। मे.।

**रुचिः (च)**। स्त्री। स्पृहायाम्। अनःश्लक्ष्णेनामपाकात् मुखशोषादिनाशे मुखस्य प्रक्षालने च। रोचा। गोरोचनायाम्। रा.नि.व.१२। क्षुधायाम्। हे.च.।

**रुचिकरः**। पुं। नागरङ्गवृक्षे। नारङ्ग लेबु। वै.निघ.।

**रुचितः**। त्रि। मिष्टवस्तुनि। उणा.।

**रुचिप्रदा**। स्त्री। मधुरबिम्ब्याम्। कुन्दरुकी। वै.निघ.। [भा.।

**रुचिफलम्**। क्ली। अमृतफले। नाशपाति।

**रुचिरम्**। क्ली। मूलके। मूला। रा.नि.व.७। कुङ्कुमे। लवङ्गे। रा.नि.व.१२। रौप्ये। रा.नि.व.१३। पुं। शिग्रुवृक्षे। सजिना गाछ। त्रि। मधुरे। स्त्री। गोरोचनायाम्। रा.नि.व.१२। पालकाप्य(व्य)नामगजवैद्यककारजनन्याम्।

**रुचिरफला**। स्त्री। कुन्दुरी। वै.निघ.।

**रुचिराञ्जनः**। पुं। शोभाञ्जनवृक्षे। शजिना गाछ। रा.नि.व.७।

**रुचिरासुतः**। पुं। पालकाप्य(व्य)नामगज-वैद्यककारे। त्रिका.।

**रुचिष्यम्**। क्ली। पियालबीजे। सौवर्चललवणे। जीरकभेदे। वै.निघ.। त्रि। मधुरे। उणा.।

**रुच्यम्**। क्ली। सौवर्चललवणे। सचल नवण। रा.नि.व.६। पुं। कतकवृक्षे। निर्म्मली गाछ। रा.नि.व.११। शालिधान्यभेदे। रा.नि.व.१६।

**रुच्यकन्दः**। पुं। शूरणे। ओल। रा.नि.व.७। जीरके। शालिधान्ये। वै.निघ.।

**रुच्या**। स्त्री। नालितायाम्। नालितापाता। प.मु.। कृष्णजीरके। रा.नि.व.६।

**रुजा**। स्त्री। मेथिकायाम्। मेति। हे.च.। कुष्ठे। कूड़। रा.नि.व.१२। व्याधौ। रा.नि.व.२०। भङ्गे। मे.। व्यथायाम्।

**रुजाकरम्**। क्ली। कर्म्मरङ्गफले। कामराङ्गा। श.च.। पुं। हिन्तालवृक्षे। हेंताल गाछ। वा.सू.१५अ. वरुणादिः। "बहुलपल्लवदर्भरुजाकराः।" रोगे। हे.च.।

**रुजाप(स)हः**। पुं। धन्वनवृक्षे। धामना गाछ। रा.नि.व.९।

**रुज्या**। स्त्री। खालित्यरोगे। टाक।

**रुणशालिः**। पुं। रक्तशालौ। दादखानि चाउल। रा.नि.व.१६।

**रुणालिः**। पुं। रक्तशालौ। दादखानि। रा.नि.व.१६।

**रुण्डकम्**। क्ली। अगुरुकाष्ठे। वै.निघ.।



**रुण्डी**। स्त्री। कुन्दुरी। कुँदरुकि। रा.नि.व.८।

**रुदथः**। पुं। कुक्कुरे। उणा.।

**रुदन्तिका (न्ती)**। स्त्री। स्वनामख्यातमहा-क्षुपे। रुदन्तीति उत्कलादौ प्रसिद्धा। सं कं अलुगणि, रुदन्ती। तत्पर्य्यायाः,—स्रवत्तोया सञ्जीवनी अमृतस्रवा रोमाञ्चिका महामांसी चणपत्री सुधास्रावी। लक्षणं—"चणपत्रसमं पत्रं क्षुपश्चैव तथाविधः। शिशिरे जलबिन्दूनास्रवन्तीति रुदन्तिका॥" गुणाः—कटुतिक्तोष्णा क्षयघ्नी कृमिघ्नी रक्तपित्तघ्नी मेहघ्नी जराव्याधिहरत्वात् रसायनी च। रा.नि.व.५।

**रुद्धगुदः**। पुं। निरुद्धगुदनामक्षुद्ररोगभेदे। लक्षणम्—"वेगसन्धारणाद्वायुरपानोऽपानसंश्रयम्। अणूकरोति बाह्यान्तर्मार्गमस्य ततः शकृत्। कृच्छ्रान्निर्गच्छति व्याधिरयं रुद्धगुदो मतः।" वा. उ.३१अ.।

**रुद्रः**। पुं। महादेवे। आदित्यपत्रवृक्षे। आकन्द गाछ। रा.नि.व.४।

**रुद्रकः**। पुं। महावकुलवृक्षे। वै.निघ.।

**रुद्रजः**। पुं। पारदे। रा.नि.व.१३।

**रुद्रजटा**। स्त्री। लताविशेषे, ईश्वरीलतायाम्। जटाधारी। जटामङ्गा। तत्पर्य्यायाः,—रुद्रलता रुद्रा रुद्राणी रौद्री सौम्या सुगन्धपत्रा सुगन्धा सुवहा सुपत्रा सुरभिः घना ईश्वरीलता शिवाह्वा पत्रवल्ली महाजटा जटा जटावल्ली जटारुद्रा नेत्रपुष्करा। भा.म.१भ.सन्ततादि.ज्व.चि.माहेश्वर-धूपे। "रुद्रजटा गोशृङ्गं।" गुणाः—कटुरसा श्वासकासहृद्रोगहरी भूतविद्रावणी रक्षोनिवर्हणी च। रा.नि.व.३। मधुरिकायाम्। मौरी। श.टी.भ.।

**रुद्रदारुः**। पुं। तैलदेवदारौ। मलेओ देवदारु। वै.निघ.।

**रुद्रनिर्माल्यम्**। क्ली। शिवनिर्माल्ये, पुष्पादौ। भा.म.१भ.सन्ततादि-ज्व.चि.माहेश्वरधूपे। "वंश-त्वक् रुद्रनिर्माल्यम्।"

**रुद्रपत्नी**। स्त्री। अतसीक्षुपे। मसिना गाछ। र.मा.।

**रुद्रपर्पटी**। स्त्री। कासाधिकारे औषधम्। पाठः—"शुद्धसूतं द्विधा गन्धं द्रवैः पुनः पुनः पचेत्। वातारिराद्रैकं भृङ्गी काकमाची त्रिकर्षिका। दिनैकं मर्दयेत् खल्ले पाचयेत् पर्पटी यथा। द्वयोः पादं मृतं ताम्रं दत्त्वा मृद्वग्निना पचेत्। रक्तवर्णं भवेद् यावत् तावद्दार्व्या प्रचालयेत्। प्रक्षिपेत् कदलीपत्रेऽथवा स्निग्धपुटे पुनः। आच्छाद्य तेन योगेन ततश्चोर्द्ध्व गोमयं। इयं विचूर्णयेत् पश्चात् चूर्णपादं विषं क्षिपेत्......॥" मावा २र.। रस. र.। पाठोऽयं न लगति।

**रुद्रप्रियः**। पुं। वकुलवृक्षे। रा.नि.व.८। राजयक्ष्मणे अष्टमशतके। स्त्री (या)। हरीतक्याम्। श.र.।

**रुद्रभट्टः**। पुं। वैद्यजीवनग्रन्थकारे। सन्निपात-कलिकाकारे। [चि.।

**रुद्रमाल्यः**। पुं। विल्ववृक्षे। वै.निघ.२भ.ज्व.

**रुद्ररेताः (तस्)**। पुं। पारदे। वै.निघ.।

**रुद्रलता**। स्त्री। रुद्रजटायाम्। जटाधारी। रा.नि.व.३। मुक्तावर्चसि। मुक्ताझुरि वा वर्शी।

**रुद्रा**। स्त्री। रुद्रजटायाम्। जटाधारी रा.नि.व.३। नखिकानामगन्धद्रव्ये। रा.नि.व.१२

**रुद्राणी**। स्त्री। रुद्रजटायाम्। रा.नि.व.३।

**रुद्राक्षः**। पुं। स्वनामख्यातवृक्षे। रुद्राक्ष गाछ। तत्पर्य्यायाः,...रुद्राख्यः तृणमेरुः अमरः पुष्पचामरः। क्ली। तत्फले। तत्पर्य्यायाः,... शिवाक्षं सर्व्वाक्षं नीलकण्ठाक्षं हराक्षं भूतनाशन पावनं शिवप्रियं। गुणाः...अम्लमुष्णं वातघ्नं कफनाशनं शिरोवेदनाशमनं रुच्यं भूतग्रहविषनाश-नञ्च। रा.नि.व.११।

**रुधिरम्**। क्ली। कुङ्कुमे। रा.नि.व.१२। च.सू. ४अ.। रक्तधातौ। रक्त। रा.नि.व.१८। रस. कौ.भष.वातरक्तचि.द्वादशायसे। गैरिके। गिरि-माटि। रा.नि.व.१३।

**रुधिरक्षरा**। स्त्री। लोहितक्षरानाम योनि-व्यापदि।

**रुधिराख्यम्**। क्ली। इन्द्रनीलतुल्यमणिभेदे। पुराणम्।

**रुधिराशयः**। पुं। यकृति। प्लीह्नि च।

**रुपिका**। स्त्री। आदित्यपुष्पिकायां। आकन्द र.मा.। अरुणार्कक्षुपे। रक्त आकन्द। प.मु.। श्वेतार्के। भैष.नाड़ीव्रणचि.। सु.चि.१७अ.।

**रुमा**। स्त्री। तन्नामक्षारसमुद्र। मे.।

**लक्ष्मीवान्** । पुं । पनसवृक्षे । কাঁঠাল গাছ । श.मा. । श्वेतरोहितके । শ্বেত রোড়া । रा.नि. व.८ । अश्वत्थवृक्षे । वै.निघ. ।

**लक्ष्मीविलासरसः** । पुं । ज्वरे वातश्लेष्मघ्ने रसः । पाठः—"पलं कृष्णाभ्रचूर्णस्य तदर्द्धौ रस-गन्धकौ । वला नागबलाभीरु-विदारीकन्दमेव च । कृष्णधुस्तूरबीजञ्च गोक्षुरवृद्धदारयोः । बीजं शक्राशनस्यापि जातीकोषफले तथा । कर्पूरञ्चैव कर्षांशं सूक्ष्मचूर्णं पृथक् पृथक् । स्वर्णभस्म चाष्ट-मांशेन स्वर्णं पर्णरसेन च ॥" वटिका क्षिप्र-चणकप्रमाणा । কৃষ্ণাভ্রচূর্ণ ৮ তো. পারা, গন্ধক প্রত্যেক ৪ তো. (মতান্তরে রস ২ তো. গন্ধক ২ তো.) শ্বেত বেড়েলা, গোরক্ষচাকুলিয়ামূল, শতমূলী, ভূমিকুষ্মাণ্ড, কাল ধুতুরার বীজ, হিজলবীজ, গোক্ষুরবীজ, বিজতাড়কের বীজ, সিদ্ধিবীজ, জায়ফল, জয়িত্রী, কর্পূর ইহাদের চূর্ণ প্রত্যেক ২তো. স্বর্ণভস্ম ।০ চারি আনা ; পাণের রসে মাড়িয়া বটী করিবে। মাত্রা সিদ্ধচণকবৎ । মতান্তরে জায়ফল, জয়িত্রী এক এক তো. বীজতাড়ক প্রভৃতির বীজ মিলিত ২ তো. । अन्यो महालक्ष्मीविलासः शिरोरोगे। पाठः—'लौहमभ्रं विषं मुस्तं फलत्रय-कटुत्रयं । धुस्तूरं वृद्धदारञ्च वीजमिन्द्राशनस्य च । गोक्षुरकद्वयञ्चैव पिप्पलीमूलमेव च । एतत्सर्व्वं समं ग्राह्यं रसं धुस्तूरकस्य च । भावयित्वा वटी कार्य्या द्विगुञ्जाफलमानतः ॥" লৌহ, অভ্র, বিষ, মুতা, ত্রিফলা, ত্রিকটু, ধুতুরাবীজ, বীজতাড়কবীজ, সিদ্ধিবীজ, ছোট গোখুরী-বীজ, বড় গোখুরীবীজ, পিপুলমূল সমভাগ। ধুতুরাবীজের রসে ভাবনা দিয়া বটী করিবে। মাত্রা ২ কুঁচ। र.सा.सं. । अन्यः कासे—वङ्गं लौहम् अभ्रं ताम्रं कांस्यं पारदः हरितालं मनःशिला खर्परं प्र. १ प. । केशराजस्य कुलत्थस्य च क्वाथे प्र. दिनत्रयं भावयेत् । एला जातीफलं तेजपत्रं लवङ्गं यमानी जीरकं त्रिफला त्रिकटु तगरं गुड़त्वक् वंशलोचना प्र. २ तो. तेन सह मिश्रयित्वा पूर्व्ववत् भावना देया । मात्रा चणकमिता । भैष. ।

**लक्ष्मीवेष्टः** । पुं । श्रीवेष्टनामसुगन्धद्रव्ये, सरल-निर्यासे । रा.नि.व.१२ ।

**लक्ष्मीश्रेष्ठा** । स्त्री । स्थलपद्मिन्या । वै.निघ. ।

**लागजोरः (कः)** । पुं । शुक्लजीरके । वै.निघ. ।

**लाघरकः** । पुं । हलीमकरोगे । सु.उ.४४अ. ।

**लाघवम्** । क्ली । लघुत्वे । आरोग्ये । रा.नि.व.२० । [ लिङ्गे । त्रिका. ।

**लाङ्गलम्** । क्ली । पुष्पभेदे । तालवृक्षे । मे. ।

**लाङ्गलकः** । पुं । लाङ्गलाकारे भगन्दरच्छेदे । "कुटारच्छिन्नलाकारः पार्श्वद्वये यच्छेदः स सम्पूर्ण-हलाकारः ।" वा.उ.२८अ. । "द्वाभ्यां समाभ्यां पार्श्वाभ्यां छेदो लाङ्गलको मतः ।" सु.चि.८अ. । भा.म.४भ.भगन्दरचि. ।

**लाङ्गलकी** । स्त्री । लाङ्गलीक्षुपे । विष-लाङ्गुलिया । प.मु. । रस.र.अर्श.चि. ।

**लाङ्गलाख्या (ह्वया)** । स्त्री । लाङ्गलिकायां । বিষলাঙ্গুলিয়া। भैष.कुष्ठ.चि. । सु.सू.३६अ. ।

**लाङ्गलिः (लिका, ली)** । स्त्री । लाङ्गली-वृक्षे । বিষলাঙ্গুলিয়া । श.र. । भैष.स्त्रीरोग.चि. । गजपिप्पल्यां । रा.नि.व.२३ । च.द.वा.व्या.पञ्च-गुणातैले । चव्ये । চই । भा.पू.१भ. । महाराष्ट्री-लतायाम् । কাঁচড়াদাম । श.च. । रा.नि.व.४ । सु.सू.३३अ. । पृश्निपर्ण्याम् । চাকুলিয়া । मञ्जिष्ठा-याम् । ऋषभके । कपिकच्छ्वाम् । আলকুশী । वै.निघ. ।

**लाङ्गलिकः** । पुं । स्थावरविषभेदे । हे.च. ।

**लाङ्गलिकी (नी)** । स्त्री । कलिकारिकायां । বিষলাঙ্গুলিয়া । अम. । तत्पर्य्यायाः,—लाङ्ग-लाख्या लाङ्गली गैरी दीप्ता हलिनी गर्भघातिनी अग्निज्वाला अग्निजिह्वा अग्निमुखी अग्निशिखा वह्निशिखा इन्द्रपुष्पा कलिकारी । तद्गुणः,—कुष्ठ-दुष्टव्रणनाशकः । सु.सू.३९अ.कफशोधने ।

**लाङ्गली** (इन्) । पुं । नारिकेलवृक्षे । रा.नि. व.११ । सर्पे । श.च. ।

**लाङ्गलीशाकः** । पुं । जलजशाकविशेषे । কাঁচড়া শাক । तत्पर्य्यायाः,—तोयपिप्पली जलाची पित्तला शारदी । गुणाः—"लाङ्गली कफपित्तघ्नी रुच्या वातविवृद्धिनुत् ।" राज.३प. ।

**लाङ्गुः** । पुं । शिश्ने ।

**लाङ्गु(ङ्गू)लम्** । क्ली । पुच्छे । লেজ । च.टी. । शिश्ने । मे. । पुं । शालिधान्यभेदे ।

**लाङ्गु(ङ्गू)ला (लिका, ली)** । स्त्री । कपि-



कच्छ्वाम् । रा.नि.व.३ । पृश्निपर्ण्याम् । চাকুলিয়া । रा.नि.व.४ । पुं (ली [इन्] ) । ऋषभके । रा.नि.व.५ । वानरे ।

**लाजम्** । क्ली । उशीरे । বেণা । मे. । पुं । आर्द्रतण्डुले । मे. । पुं बहु, स्त्री(जा) । अक्षते । मे. ।

**लाजचूर्णम्** । क्ली । खधिचूर्णे । খৈয়ের গুঁড়া ।

**लाजतर्पणम्** । क्ली । लाजसक्तुकृततर्पणविशेषे । भा.म.१भ.ज्व.चि. । 'दाहवत्यहितं चामं निरन्नं तृष्णयान्वितम् । शर्करामधुसंयुक्तम् पाययेल्लाज-तर्पणम् ॥"

**लाजपेया** । स्त्री । खधिकृतपेयायां । খৈয়ের মণ্ড । वा.चि.१अ. । "लाजपेयां सुखजरां ।" च. द. । गुणाः—"पूर्व्ववच्च कृता लाजपेया लघ्वी स्मृता यतः । गुणैः प्रशस्ता विज्ञेया पूर्व्वोक्ताया गुणाधिका । त्रिकटुसैन्धवैर्लाभिर्युक्तातिगुणदा मता ॥" देहिनः क्षुत्तृषाग्लानिदौर्ब्बल्यकुक्षिरोग-विनाशिनी ॥" राज.३प. ।

**लाजभक्तः** । पुं । खधिभक्ते । गुणाः—"लाज-भक्तो लघुः शीतस्त्वाग्निदीप्तिकरी मधुः । तृष्णी निद्रारुचिकरः कफपित्तविनाशकः । व्रणशोधन-कारी स्यादृषिभिः परिकीर्त्तितः ॥" वै.निघ. ।

**लाजमण्डः** । पुं । खधिमण्डे । খৈয়ের মণ্ড । गुणाः—अग्निजननो दाहतृष्णानिवारणः ज्वराति-सारशमनश्च । श्लेष्मल आमपाचनः मन्दाग्नि-विषमाग्निबालस्थविरयोषितां पेयश्च । राज.३प. ।

**लाजवर्णा** । स्त्री । असाध्यविष-लूताविशेषे । सु.कल्प.८अ. ।

**लाजश(स)क्तुः** । स्त्री । खधिचूर्णे । খৈয়ের ছাতু । शीतवीर्य्या अतः सान्निपातिके न हिता । सि.यो.ज्व.चि. ।

**लाजाः** । पुं बहु । खधिकायां । লাওয়া, খৈ । भृष्टव्रीहिमात्रे । 'ये केचिद्व्रीहयो भृष्टास्ते लाजाः ।' रा.नि.व.१६ । सतुषधान्यानि भृष्टस्फुटितानि लाजानाहुः । भा. । भृष्टधान्येषु । सि.यो.र.पि.चि. सिद्धतमयोगे । च.सू.४अ.छर्द्याम् । गुणाः—"लाजास्तृट्छर्द्यतीसारमेहमेदःकफच्छिदः । कास-पित्तोपशमना दीपना लघवो हिमाः ॥" राज.३प. ।

**लाञ्चुलम्** । क्ली । धान्ये । वै.निघ. ।

**लाञ्छनम्** । क्ली । रागिनामतृणधान्ये । रा.नि. व.१६ । तन्नामकक्षुद्ररोगे । लक्षणं—"कृष्णं सितं वा सहजं मण्डलं लाञ्छनं समम् ।" वा.उ.३१ अ. । चिह्ने । मे. ।

**लाटपत्रः (र्णः)** । पुं । त्वचायाम् । दारु-चिनी । वै.निघ. ।

**लामज्ज(क)म्** । क्ली । उशीरभेदे । शङ्ख-বেণা । सु.सू.३९अ. । च.द.सि.यो.दाह.चि. । "लामज्जेनाथ शुक्लेन चन्दनेनानुलेपयेत् ।" (Andropogon laniger.) The Juncus odoratus, उशीरवत्पीतच्छवितृणविशेषे, सुगन्ध-वीरणे । हिं लामज्जक । तें तेल्लवट्टिवेरु । तत्-पर्य्यायाः,—सुनीलं अमृणालं लवं लघु इष्टका-पथिकं शीघ्रं दीर्घमूलं जलाशयम् । अभावे उशीरं देयम् । भा.म.१भ.ज्व.चि.महालाक्षादितैले । "लामज्जकं चन्दनञ्च ।" च.सू.२५अ. । "लामज्जकं यदा न स्यादुशीरं दीयते तदा ।" गुणाः—हिमं तिक्तं मधुरं वातपित्तघ्नं तृष्णादाहश्रममूर्च्छारक्त-पित्तज्वरघ्नञ्च । रा.नि.व.१२ । अपिच—"लघु दोषत्रयास्रजित् । त्वगामयस्वेदकृच्छ्रदाहपित्तास्र-रोगनुत् ॥" भा. । "दीर्घमूलं दृढं सूक्ष्ममुत्तमं गन्धसंयुतं । देशे साधारणे जातं लामज्जं भद्रकं भवेत् ॥" भैष. ।

**लालनम्** । क्ली । पियालवीजे । वै.निघ. । पुं । मूषिकविशेषे । तद्दष्टे लालास्रावः हिक्का छर्द्दिश्च जायते । सु.कल्प.६अ. । वा.उ.३८अ. ।

**लालसा** । स्त्री । गर्भिणीदोहदे । সাধ । हे.च. ।

**लालसीकम्** । क्ली । पिच्छिले । श.र. ।

**लाला** । स्त्री । मुखस्रावे । লাল । तत्पर्य्यायाः, सृणिका सृणीका स्यन्दिनी द्राविका मुखस्रावः पिच्छिला लसिका लासिका । रा.नि.व.१८ ।

**लालामेहः** । पुं । प्रमेहभेदे । लक्षणं—"लालातन्तुयुतं मूत्रं लालामेहेन पिच्छिलम् । प्रमेहति......॥" निदा. ।

**लालाविषः** । पुं । लूतादौ । हे.च. ।

**लालास्रावः** । पुं । लालाक्षरणे । লালপড়া । ऊर्णनाभौ । মাকড়শা । हे.च. ।

**लालिकः** । पुं । महिषे । हे.च. ।

**लावः (कः)** । पुं । स्वनामख्यातस्थलचरपक्षि-विशेषे । বটের পাখী । त्रिका. । सं लावकी लावुकापेट । तत्पर्य्यायाः,—लघुजङ्गलः [illegible]

लघु: । तत्र्यासगुणाः—पथ्यं ग्राहि लघु च । रा.नि.व.७ । "पथिगास्त महाश्रेष्ठो लावकी आङ्गलात्मक: । संग्राही दीपन: शीत: कषायो मधुरो लघुः । तथा विपाके मधुर: सन्निपातेऽति-पूजित: ॥" अत्रि.२१अ. । अपिच—"लावा विष्किरवर्गेषु ते चतुर्धा मता बुधैः । पांशुली गौरकोऽन्यस्तु पौण्ड्रकी दर्भरक्षणा ॥ लावा वह्निकरा: स्निग्धा ग्रहघ्ना ग्राहिका हिता: । पांशुल: श्लेष्मलस्तेषु वीर्योष्णोऽनिलनाशन: । गौरो लघुतरो रूक्षो वह्निकारी त्रिदोषजित् । पौण्ड्रक: ... मत् ... क्षमघुषातकफापह: । दर्भरोरकपित्तघ्नो हृद्रामयघ्नो हिम: ॥" भा. । जवङ्गो । च.द.वा.व्या.महासुगन्धितैलं ।

**लावण: (णिक:)** । त्रि । लवणसंस्कृते । हे. च. । क्ली । लवणे । र.सा.सं. ।

**लावणिकतैलम्** । क्ली । तैलविशेषे । च.सू. मात्राशितीय अ. ।

**लावण्यम्** । क्ली । लवणत्वे । লোণতা । কান্তী ।

**लावण्या** । स्त्री । ब्राह्मीक्षुपे । वै.निघ. ।

**लावा** । स्त्री । लावपक्षिणि । रा.नि.व.१९ ।

**लावाणक:** । पुं । व्रीहिधान्यभेदे । व्रीहेर्गुण-गुणा: । सु.सू.४६अ. ।

**लाबु: (बू:) (का)** । पुं, स्त्री । अलाब्वाम् । লাউ । श.र. ।

**लास:** । पुं । यूषे । ঝোল । श.च. ।

**लासक:** । पुं । मयूरे । मे. ।

**लासिका** । स्त्री । मुखस्रावे । লালা ।

**लास्फोटनी** । स्त्री । आस्फोटन्याम् । वेध-निकायां । भ.टी.रा. ।

**लाह्वा** । स्त्री । पिचके । वै.निघ. ।

**लाक्षा** । स्त्री । (Coccus lacca.) Lac. स्वनामप्रसिद्धरञ्जकद्रव्ये । লাহা, গালা । हिं लाखी । मं लाख । कं अरगु । तें लत्तुक, लक्क । तत्पर्य्याया:,—राक्षा जतु जतुका जन्तुका याव: अलक्त: अलक्तक: गवधिका खदिरिका रक्ता रक्तमाता दुमामया क्रिमिजा क्रिमिहा द्रुमव्याधि: द्रुमामय: पलङ्कषी मुद्रिणी दीप्ति: गन्धमादिनी नीला कृष्णा पित्तारि नीलिका गाधिका जतुका नीला अलक्तका । फिङ्ग वि.व.चि मञ्जिष्ठी । ,,लाक्षा निश्शाङ्कोऽश्वयष्टि इति । गुणा:—तिक्ता कषाया श्लेष्मपित्तघ्नी विषघ्नी रक्तघ्नी विषमज्वरघ्नी च । रा.नि.व.६ । "लाक्षा च नूतना ग्राह्या मृत्तिकादिविवर्ज्जिता ।" भैष. ।

**लाक्षातरु:** । पुं । पलाशवृक्षे । श.मा. ।

**लाक्षादितैलम्** । क्ली । बालरोगाधिकारे तैलम् । पाठ:—"लाक्षारससमं सिद्धं तैलं मस्तु चतुर्गुणं । रास्नाचन्दनकुष्ठाब्दवाजिगन्धानिशा-युतै: । शताह्वादारुयष्ट्याह्वमूर्व्वातिक्ताहरेणुभि: । बालानां ज्वररक्षोघ्नमभ्यङ्गात् बलवर्णकृत् ॥" महालाक्षादितैलं यथा—"लाक्षारसाढ़के प्रस्थं तैलस्य विपचेद्भिषक् । मस्त्वाढ़कसमायुक्तं पिष्टा चात्र समावपेत् । शतपुष्पां हरिद्राञ्च मूर्व्वां कुष्ठं हरेणुकां । कटुकां मधुकं रास्नामश्वगन्धाञ्च दारु च । मुस्तकं चन्दनञ्चैव पृथगक्षसमानकै: । द्रव्यैरेतैस्तु तत्सिद्धम् अभ्यङ्गान्मारुतापहम् । विषमाख्यान् ज्वरान्सर्व्वानाश्वेव प्रशमं नयेत्...॥" अत्र दोलायन्त्रविधानात् षड्गुणजलेन लाक्षामेक-विंशतिवारान् परिस्राव्य लाक्षारसो ग्राह्य: । कुट्टितलाक्षा ३ श. वारि १८ श. २१ वारान् दोलायन्त्रे परिस्राव्य १६ श. ग्राह्यम् । अथवा लाक्षा ८ श. वारि ६४ श. पक्वा शे. १६ श. ग्राह्यम् । तिलतैलं ४ श. लाक्षारस: क्वाथो वा १६ श. दधिमस्तु १६ श. । कल्कार्थं—शुलुफा हरिद्रा मूर्व्वामूल कुष्ठं रेणुकं कटुकी यष्टिमधु रास्ना अश्वगन्धा देवदारु मुस्तं रक्तचन्दनं प्र. २ तो. पाके सिद्धे कर्पूरं शिलारस: नखी प्र. २ तो. तैलं मिश्रयेत् । रस.र. ।

**लाक्षादिवर्ग:** । पुं । लाक्षारेवतकुटजाश्वमार-कट्फलहरिद्राद्वयनिम्बसप्तच्छदमालत्य: त्रायमाणा चेति । तद्गुणा:—कषायस्तिक्तमधुर: कफपित्तार्त्ति-नाशन: । कुष्ठक्रिमिहरश्चैव दुष्टव्रणविशोधन: ॥ सु.सू.३८अ. । [ ख्यातपुष्पवृक्षे । भा. ।

**लाक्षापुष्पा** । स्त्री । शतपत्राम्, गुलाब इति

**लाक्षाप्रसाद:** । पुं । पट्टिकारोध्रे । শ্বেত লোধ । अम. ।

**लाक्षाप्रसादन:** । पुं । रक्तलोध्रे । अम. ।

**लाक्षारस:** । पुं । लाक्षाजले क्वाथे वा । লাহার রস । सि.यो.य क्ष.चि. चन्दनादितैलं । तत्साधनविधि:—"षड्गुणेनाम्भसा लाक्षा दोलायन्त्रे कृपक्विता । त्रिसप्तधा परिस्राव्य लाक्षारसमिमं विदु: ॥" प.प्र.१ख. ।



**लाक्षावृक्ष:** । पुं । कोशाम्रवृक्षे । জলপাই । रा.नि.व.११ । पलाशवृक्षे । हारा. ।

**लिकुचम्** । क्ली । चुक्रे । চুকাপালঙ্ । रा.नि. व.७ । चुद्रपणसे । ডেলো । वै.निघ. । पुं । लकुचवृक्षे । ডেলো গাছ, মান্দার গাছ । र.मा. । रा.नि व.९ ।

**लिकोच (ठ) क:** । पुं । अङ्कोटवृक्षे ।

**लिक्षा (ख्या)** । स्त्री । केशकीटभेदे । নিকি । श.र. । सूर्य्यकिरणान्तर्गतसूक्ष्मरजश्चतुष्टयमाने । "जालान्तरगते भानौ यच्चाणुदृश्यते रज: । तैश्चतुर्भि-र्भवेल्लिक्षा लिख्याषड्भिश्च माषक: ॥" प.प्र. ।

**लिङ्गम्** । क्ली । शिश्ने । रा.नि.व.१८ । तत्-पर्य्याया:,—मेहनं शिश्न: स्मरस्तम्भ: उपस्थ: मदनाङ्कुश: कन्दर्पमुषल: विषक: शेफ: सेफ: मेढ़्र: लाङ्गु: ध्वज: रागलता व्यङ्ग: लाङ्गुलं साधनं कामाङ्कुश: नागलता नराङ्गं पुंलिङ्गं पुंश्चिह्नं राजचिह्नकं । तत्तु गर्भस्थस्य सप्तभिर्मासैर्भवति । चिह्ने । अम. । लक्षणे । रोगव्यापकहेतौ । "संस्थानं व्यञ्जनं लिङ्गं लक्षणं चिह्नमाकृति: ।" मा.नि. ।

**लिङ्गक:** । पुं । कपित्थवृक्षे । श.च. ।

**लिङ्गजा** । स्त्री । लिङ्गिनीलतायाम् । शिव-लिঙ্গিনী । रा.नि.व.३ ।

**लिङ्गनाश:** । पुं । लिङ्गम् इन्द्रियशक्तिं दृष्टिं नाशयति । नीलिकाकाचापरनामके नेत्ररोग-विशेषे । काचे उपेक्षिते तृतीयं चतुर्थं वा पटलं गते लिङ्गनाशो जायते । তিমির, আন্ধা । हिं नजला । स वातजादिभेदेन षट् । ते च पुनर्वर्ण-भेदेन षड़िति द्वादशधा । लक्षणं—"स एव लिङ्गनाशस्तु नीलिकाकाचसंज्ञित: । वातेन चापि रूपाणि भ्रमन्तीव च पश्यति । आविलान्यरुणाभानि व्याविद्धानीव मानव: ॥" मा.नि. । "तथाप्युपेक्ष-माणस्य चतुर्थं पटलं गत: । लिङ्गनाशं मल: कुर्व्वन् छादयेद्दृष्टिमण्डलम् ॥" तत्र वातेन यथा—"स्पष्टारुणाभां वीक्षीर्णां सूक्ष्मां वा हतदर्शनां । स लिङ्गनाश: ..... ॥" पित्तजे यथा—"अङ्गनीला निरालोका दृक्स्निग्धा लिङ्गनाशत: ।" कफजे यथा—"लिङ्गनाशे तु लक्ष्यते...... । सूक्ष्म: कफो दृष्टिगत: स्निग्धो दर्शननाशन: । विन्दुर्जलस्येव चल: पद्मिनीपुटसंस्थित: । उष्णे सङ्कोचमायाति छायायां परिसर्पति । शङ्खकुन्देन्दु-कुमुदस्फटिकोपमशुक्लिमा ॥" रक्तजे यथा—"लिङ्गनाशेन ताम्रदृक् निष्प्रभा हतदर्शना ।" सन्निपातजे यथा—"संसर्गे सन्निपातेषु विद्यात्सङ्कीर्ण-लक्षणान् ।" कफजं विना लिङ्गनाशान् असाध्यान् विदु: । वा.उ.१२अ. ।

**लिङ्गरोग:** । पुं । उपदंशे । भा. ।

**लिङ्गवर्त्ति:** } **लिङ्गार्श:** } क्ली । शुक्ररोगविशेषे । लक्षणं—"अङ्कुरैरिव सञ्जातैरुपर्य्युपरि सं-स्थितै: । क्रमेण जायते वर्त्ति: ताम्रचूड़शिखोपमा । कोषस्याभ्यन्तरे सन्धौ सर्व्वसन्धिगतापि वा । अवेदना पिच्छिला च दुश्चिकित्स्या त्रिदोषजा । लिङ्गवर्त्ति-रिति ख्याता लिङ्गार्श इति चापरे ॥" मा.नि. ।

**लिङ्गवर्द्धन:** । पुं । कपित्थवृक्षे । श.च. ।

**लिङ्गवर्द्धिनी** । स्त्री । अपामार्गवृक्षे । আপাঙ্ । श.च. ।

**लिङ्गसम्भवा (म्भूता)** । स्त्री । लिङ्गिनी-लतायां । रा.नि.व.३ ।

**लिङ्गालिका** । स्त्री । क्षुद्रमूषके । हारा. ।

**लिङ्गिनी (ङ्गी)** । स्त्री । स्वनामख्यातायां लतायाम् । পঞ্চগুড়িয়া । শিবলিঙ্গিনী । तत्पर्य्याया:,—बहुपत्री ईश्वरी शिवजा शिववल्लिका शिववल्ली स्वयम्भु: लिङ्गजा लिङ्गसम्भूता लैङ्गी चित्रफला चण्डा चाण्डाली देवी अपस्तम्भिनी । गुणा:—कटु: उष्णा दुर्गन्धा रसायनी च । रा.नि.व.३ ।

**लिङ्गी** (इन्) । पुं । हस्तिनि ।

**लिप्त:** । त्रि । विषलिप्ते । विषमाखा । मे. ।

**लिप्तास्यता** । स्त्री । मुखस्य श्लेष्मलिप्ततायां । মুখ চট্চট্ করা । मा.नि. ।

**लिम्पाक:** । पुं । (Citrus acida.) जम्बीर-वृक्षविशेषे । পাতিলেবুর গাছ । गुणा:—सुरभि स्वादु नात्यम्लं भक्तरोचनं हृद्यं छर्द्दिघ्नं वातश्लेष्महरं नातिपित्तकरञ्च । करुणलिम्पाक-गुणा:—'करुणं कफवातास्रमेदोघ्नं पित्तकोपनम् ।' राज.३प. ।

**लि(ली)क्षा** । स्त्री । लिख्यायाम् । লিখি । अम.श.र. । परिमाणभेदे, सर्षपषष्टांशे । श.च. ।

**लीका** । स्त्री । ह्रस्वमूषिकमार्य्याम् । ছোট ইন্দুরমারী । वै.निघ. ।

**…शाविलासरस:** । पुं । अम्लपित्ताधिकारे रस:। पाठ:—"रसो बलिर्व्योम रविश्च लौहं …सम्मौ …मर्दं विमर्द्य । तदल्पदृष्ट' …नेन सम्मर्द्य तस्य च वल्लयुग्मं । हन्त्यम्लपित्तं मधुनावलीढ़'...॥" र.सा.सं. ।

**लुङ्ग:** । पुं । मातुलुङ्गवृक्षे । छोलङ्ग लेबुर गाछ । वै.निघ. ।

**लुङ्गमांसम्** । क्ली । मातुलुङ्गमांसे । वै.निघ. ।

**लुङ्गाम्लम्** । क्ली । मातुलुङ्गाम्ले । र.सा.सं. अम्लवर्ग ।

**लुङ्गुष:** । पुं । मातुलुङ्गवृक्षे । छोलङ्ग लेबुर गाछ । र.मा. ।

**लुण्टक:** । पुं । शाकविशेषे । नटिया शाक । श.च. ।

**लुण्ठनम्** । क्ली । लुठने । लोटा । श.र. ।

**लुण्टाक:** । पुं । काके । त्रिका. ।

**लुण्डिका** । स्त्री । लोमादिगोलके । नुटी । "मेषलोमलुण्डिकया ।" भैष. ।

**लुब्धक:** । पुं । चोरनामगन्धद्रव्ये । गेंठेला । वं.निघ. ।

**लुलाप: (य:)** । पुं । महिषे । प.मु. ।

**लुलाप(य)कन्द:** । पुं । महिषकन्दे । शङ्खालो । रा.नि.व.७ ।

**लुलाप(य)कान्ता** । स्त्री । महिष्याम् । रा.नि.व.१९ ।

**लुषभ:** । पुं । मत्तहस्तिनि

**लूता** । स्त्री । नाडीव्रणरोगे । रा.नि.व.२० । ऊर्णनाभौ । माकड़शा । हिं माकड़ी । तत्पर्य्याया:,—मर्कट: मर्कटक: लूतिका ऊर्णनाभ: शलूक: तन्तुवाय: अष्टपात् भिल्वगु: । एषा विषात्मिका भवति कीटेभ्यश्च घोरा । "कीटेभ्यो दारुणतरा लूता: षोड़श ता जगु: ।" निरुक्ति: —"यस्माल्लूनं तृणस्थामा मुनेः प्रस्वेदबिन्दव: । तस्माल्लूता: प्रभाष्यन्ते संख्यया तास्तु षोड़श ॥" सु.कल्प.८अ. । "अष्टाविंशतिरित्येके ततोऽप्यन्ये तु षड्विंशः । सहस्रमपरे चान्ये वदन्त्यन्ये सहस्रश: । बहुपत्ररूपा तु लूतैकैव विषात्मिका ॥ रूपाणि नामभिस्तस्या दुर्ज्ञेयान्यतिसङ्करा । कृच्छ्रसाध्या पृथग्दोषैरसाध्या निचयेन सा ॥" दंशलक्षणं—

'लूतादंशश्च सर्व्वोऽपि दद्रुमण्डलसन्निभ: । सितोऽसितोऽरुण: पीत: श्यावो वा मृदुरुन्नत: । मध्ये कृष्णोऽथवा श्याव: पर्य्यन्ते जालकावृत: । विसर्पवान् शोफयुतस्ताप्यते बहुवेदन: । ज्वराशुपाकी विक्लेदकोथावदरणान्वित: । क्लेदेन यत् स्पृशत्यङ्ग' तत्रापि कुरुते व्रणम् । श्वासदंष्ट्राशकृन्मूत्रशुक्र-लालानखार्त्तवै: । अष्टाभिरुद्दमत्येषा विषं वक्रैर्विशेषत: । लूता नाभेर्दशत्यूर्द्धम् ऊर्द्ध्वं वाधश्च कीटका: ।" लूतादंश: दिनार्द्धं नैव लक्ष्यते । प्रथमे दिने सूचीव्यधनवत्, द्वितीये उन्नतं पिड़काचितं, तृतीये पुलकरक्तमण्डलातिवेदनारोमकूपस्रावश्च; चतुर्थे महाशोफताप:, पञ्चमे विषकोपजविकार:, षष्ठे मर्म्मव्याप्ति:, सप्तमे च दिने नाश: । चिकित्सा —दंशोद्धारदाहादिकं कार्य्यम् । अगदाश्चात्र पद्मक मन्दर गन्धमादनादयो हिता: । वा.उ.३७ अ. । तदुत्पत्त्यादि यथा—"विश्वामित्रो नृपवर: कदाचिदृषिसत्तमम् । वसिष्ठं कोपयामास गत्वाश्रमपदं किल । कुपितस्य मुनेस्तस्य ललाटात् स्वेदबिन्दव: । अपतन् दर्शनादेवमधस्तात्तीव्रवर्च्चस: । लूने तृणे महर्षीणां धेन्वर्थं सम्भृतेऽपि च । ततो जातास्त्विमे घोरा नानारूपा महाविषा: । अपकाराय वर्त्तन्ते नृपसाधनवाहने । कृच्छ्रसाध्यास्तथासाध्या लूतास्तु द्विविधा: स्मृता: । तासामष्टौ कृच्छ्रसाध्या वर्ज्यास्तावत्य एव तु । त्रिमण्डला तथा श्वेता कपिला पीतिका तथा । आलमूत्रविषा रक्ता कसना चाष्टमो स्मृता । ताभिर्दष्टे शिरोदुःखं सारुः दंशे च वेदना । भवन्ति च विशेषेण गदा: श्लैष्मिकवातिका: । सौवर्णिका लाजवर्णा जालिन्येणोपदी तथा । कृष्णाग्निवर्णा काकाण्डा मालागुणाष्टमी स्मृता: । ताभिर्दष्टे दंशकोथ: प्रवृत्ति: क्षतजस्य च । ज्वरो दाहोऽतिसारश्च गदा: स्युश्च त्रिदोषजा: । पिड़का विविधाकारा मण्डलानि महान्ति च । शोफा महान्तो मृदव: रक्ता: श्यावाश्चलास्तथा ॥" सु.कल्प.८अ. । पिपीलिकायाम् ।

**लूतारि:** । पुं । दुग्धिकायाम् । थिरुइ । रा.नि.व.४ ।

**लूतिका** । स्त्री । लूतायां । माकड़शा । श.र. ।

**लून:** । त्रि । छिन्ने । अम. ।

**लूनक:** । पुं । पशौ ।

**लूमम्** । क्ली । लाङ्गूले । अम. । [ कादौ । हे.च. ।

**लूमविष:** । पुं । पुच्छदंशकप्राणिमात्रे, वृश्चि-



**लेख:** । पुं । तालवृक्षे । प.मु. ।

**लेखनम्** । क्ली । काशीषे । हिरेकस् । लेखनौषधे अनिलानलभूयिष्ठे द्रव्ये । सु. । अथवा, —धातून् मलान् वा देहस्य विशोष्योल्लेखयेच्च यत् । लेखनं तद्यथा क्षौद्रं नीरमुष्णं वचा यव: ।" भा. । भूर्ज्जत्वचि । तालपत्रे । मे. । दुषच्चर्म्मदारणे । तन्नामकाञ्जने । "लेखनञ्चारतीक्ष्णाम्लरसैरञ्जनमुच्यते ।" तीड़. । भा. । पुं । काशतृणे । केशे । रा.नि.व.८ । तन्नामकनिरूहवस्तौ । "त्रिफलाक्वाथ गोमूत्रक्षौद्रक्षारसमायुता: । ऊषकादिप्रतीवापै-र्वस्तयो लेखना: स्मृता: ॥" भा. । त्रि । वान्तिकरे । मे. ।

**लेखनाञ्जनम्** । क्ली । कषायाम्लकटुद्रव्यैरञ्जने । च.द. ।

**लेखनात्मकम्** । क्ली । कतकबीजे । वै.निघ. ।

**लेखनी** । स्त्री । खटिकायाम् । खड़िमाटी । काशतृणे । वै.निघ. । वर्त्ति विशेषे, चन्द्रोदयवर्त्तौ । शङ्खनाभि-मन:शिला-पथ्या-विभीतकमज्जा पिप्पली-मरिच-वचा-कुष्ठश्चेति द्रव्यैः छागदुग्धेन वर्त्ति: । सा.कौ. ।

**लेखनीयवर्ग:** । पुं । चरकोक्ततृतीयदशके । यथा—"मुस्तकुष्ठहरिद्रादारुहरिद्रावचातिविषाकटुरोहिणीचित्रकचिरविल्वहैमवत्य: । इति दशेमानि लेखनीयानि भवन्ति ।" चिरविल्व: करञ्ज: । हैमवती शुक्लवचा । च.सू.४अ. । [ भा. ।

**लेख(ख्य)पत्र:** । पुं । तालवृक्षे । भूर्ज्जवृक्षे ।

**लेखशा (सा)ट: (क:)** । पुं । शेलुवृक्षे । वै.निघ. ।

**लेखार्ह:** । पुं । तालवृक्षभेदे, श्रीताल इति कोङ्कणे प्रसिद्धे । श्रीताल, तेड़ेट् । रा.नि.व.९ ।

**लेख्य:** । पुं । श्रीतालवृक्षे । रोहिण्यादिरोगे । सु.सू.५अ. । त्रि । लेखनीये, लेखनार्हे ।

**लेण्डम्** । क्ली । लण्डायां । न्याड़ । भूरिप्र. ।

**लेनीतक**' । पुं । औत्तरापथिकपाषाणभेदे । स.यो.छर्दि.चि. ।

**लेप: (नम्)** । पुं, क्ली । सुधायाम् । चूण । विश्व. । भोजने । चन्दनादिद्रव्यमर्द्दणे । गायेलेपा । लेपस्त्रिविध:—दोषघ्नो विषहा वर्ण्यश्चेति । पुनश्च तस्य द्वौ भेदौ आलेप: प्रदेहश्चेति । तयोरालेप: पित्तघ्न: आर्द्रमाहिषचर्म्मवच्छीतल: तनुर्विशोषी च । द्वितीय: वातश्लेष्मघ्न आर्द्र: घन उष्णश्चेति । प्रलेपनिषेधो रात्रौ केवलं न पथ्य: । शुष्यमाणञ्च तं न धारयेदिति । तदुक्तं— "दोषघ्नो विषहा वर्ण्यो लेपस्त्वेवं त्रिधा मत: । द्वौ तस्य कथितौ भेदौ प्रलेपाख्यप्रदेहकौ ॥ तमसा पिहितो ह्यूष्मा रोमकूपेषु संस्थित: । विना लेपेन निर्य्याति रात्रौ नालेपयेदत: ॥" गुणा:—"सुशीतो लेपसंज्ञ: स्यादुष्ण: प्रोक्त: प्रदेहक: । प्रलेप: शीतल: प्रोक्त: रक्तपित्तहर: पर: । प्रदेह: कफवातघ्न: पाचन: परिकीर्त्तित: । यदार्द्रं माहिषञ्चर्म्म तत्स्रोत्सेधेन लेपनं । लोमाभिमुखमादेयौ प्रलेपाख्यप्रदेहकौ । अङ्गुष्ठस्य चतुर्भागो मुखलेपो विधीयते ॥ न रात्रौ लेपनं दद्यात् दत्तं निष्पतितं तथा । न च पर्य्युषितं चापि शुष्यमाणं न धारयेत् । न चापि मुखमालिम्पेत् तेन दोष: प्रसिच्यते ॥" सु. । "अपाकि शोथे विषमे गम्भीरे कफवायुना । संयुक्तरक्ते विहितो रात्रौ लेपश्च निश्चितम् ॥ षड्भागा: पैत्तिके स्नेहा: चतुर्भागाश्च वातिके । अष्टभागास्तु कफजे स्नेहमात्रा: प्रदापयेत् ॥" डल्लण: । अथ व्रणात्रेय: । "षोड़शांशं षड्शञ्च चतुर्थांशं प्रदापयेत् । लेपप्रदेहयो: क्षौद्रं विपरीतं क्षिपेत्तिलम् । विकारतत्त्वप्रकृतिप्रमाणे सैन्धवादिके । उपनाहो मतस्तस्मात् यस्मादुपरि बध्यते ॥ स्नेहाम्ललवणं तत्र व्यक्तं कृत्वा विनिक्षिपेत् । विषदोषहरावाद्यौ ततोऽर्थं विधिस्त्वयम् ॥ यस्तु वर्ण्यो न तस्यैषा इति वृद्धपरम्परा ॥" अथ शिरोलेपविधि:—"उक्तानुक्तेषु लेपेषु सर्वेष्वेरण्डपत्रकै: । कुर्य्याद्रात्रौ दिवा स्नान युक्तिरेषा प्रशस्यते ॥" इति लेपविधि: । चन्दनलेपगुणा:— "चन्दनलेपगुणा:—"चन्दनं शीतलं तिक्तं तृष्णादाहास्त्रपित्तजित् ।" अगुरुलेपगुणा:—"अगुरु व्रणजित्तिक्तकटूष्ण कफवातजित् ।" कुङ्कुमलेपगुणा: —"कुङ्कुमम्भोदि वैवर्ण्यकण्डूवातकफापहम् ।" कस्तूरीलेपगुणा:—"कस्तूरी छर्द्दिदौर्गन्ध्यरक्तपित्तज्वरापहा । लताकस्तूरीलेपगुणा:—"लताकस्तूरिका हृद्या शीता तिक्तास्यरोगनुत् । तेजपत्रलेपगुणा:—"पत्रकङ्कफवातार्शोहृल्लासारोचकापहम् ।" कक्कोलादिलेपगुणा:—"कक्कोल: कटुको हृद्य: सुगन्धि: कफवातजित् ।" शट्यादिलेपगुणा: —"शटी वात-कफ-श्वास-कास-ज्वरविनाशिनी ।" "उशीरं स्वेददौर्गन्ध्यदाहपित्तास्त्ररोगजित् । रक्तपित्तहरं बल्यं चक्षुष्यं रक्तचन्दनम् । श्रीवास:

सरलं पूतिः कुन्दुरुग्रन्थिपर्णिकं। शिह्लकः मांसी देवदारु-मुरा मखं। सर्व्वेऽमी परमाः लक्ष्मी-रचीघ्ना ज्वरनाशनाः॥" रात्र.२प.।

**लेपनः**। पुं। सिह्लके। शिलारस। रा.नि.व.१२।

**लेलिहः**। पुं। क्रमौ। पुरीषजक्रिमिविशेषे। च.वि.७अ.।

**लेलीनः (कः)**। पुं। गन्धके। वै.निघ.।

**लेशः**। पुं। स्वल्पे।

**लेहः (नम्)**। पुं, क्ली। आस्वादने। চাটা। रा.नि.व.२०। हे.च.। भोजने। अवलेहे। प.प्र. १ख.। लेहपाकविधिः—"लेहे यत्रास्ति यो भागो निर्द्दिष्टो द्रवकल्कयोः। तत्रापि पादिकः कल्कः द्रवात् कार्य्यो विजानता॥ तुलाद्रव्यं जलद्रोणे द्रोणे द्रव्ये तु सा मता॥ दधी गुड़ः सिता वापि इति सर्व्वत्र निश्चितम्। अवलेहस्य लेह्य तस्य मानं पलद्वयम्॥ सुखमद्यः सुखस्पर्शो गन्धवर्ण-रसान्वितः। पीड़ितो भजते स्वेहं लेहः पाक मुपागतः॥" वा.।

**लेहिनः**। पुं। टङ्कणक्षारे। সোহাগার খই। है.च.।

**लेही**। स्त्री। कर्णपालीरोगे। निदा.।

**लेह्यम्**। क्ली। अष्टविधान्नान्यतमान्ने। रा.नि.व. २०। अमृते। श.मा.। त्रि। लेहनयोग्ये।

**लैङ्गिकी**। स्त्री। वमनविरेचनयोः शोधनविशेषे। च.द.वमनाधिकारे।

**लैङ्गी**। स्त्री। लिङ्गिनीलतायाम्। रा.नि.व.३।

**लोकः**। पुं। प्रसिद्धः, स द्विविधः स्थावरो जङ्गमश्च। "द्विविधात्मक एवाग्नेयः सौम्यश्च पञ्चात्मको वा" इति। सु.सू.१अ.।

**लोककान्ता**। स्त्री। ऋद्धिनामौषधे। रा.नि. व.५। See ऋद्धिः।

**लोकतुषारः**। पुं। कर्पूरे। रा.नि.व.१२।

**लोकनाथः**। पुं। पारदे। वै.निघ.।

**लोकसंज्ञा (ज्ञिका)**। स्त्री। कन्दगुडूच्याम्। रा.नि.व.३।

**लोकस्कन्दः**। पुं। तमालवृक्षे। वै.निघ.।

**लोकहिता**। स्त्री। तुत्थाञ्जने। कुलत्थायाम्। वनमान्द्राम्। रा.नि.व.५।

**लोकेशः**। पुं। पारदे। रा.नि.व.१३।

**लोचकः**। पुं। नेत्रकनीनिकायाम्। कज्जले। कदल्याम्। भ्रुवः शिथिलचर्म्मणि। मे.। मांस-लड्डुके। बदरीवृक्षे। नीलवस्त्रे। निर्मितौ। त्रिका.। अहिनिर्मोके। श.र.।

**लोचकर्कटः**। पुं। लोचमस्तके। अ.टी.स्वा.।

**लोचनम्**। क्ली। नेत्रे। रा.नि.व.१८। जीरके। वै.निघ.। गवाक्षे। वा.उ.२९अ.।

**लोचनहिता**। स्त्री। कुलत्थाञ्जने। रा.नि. व.१३। तुत्थाञ्जने।

**लोच(भ)ना (नी,या)**। स्त्री। महाश्रावणि-कायां। मुण्डीरी। रा.नि.व.५।

**लोचनामयः**। पुं। नेत्ररोगे। त्रिका.।

**लोचमर्कटः**। पुं। मयूरशिखायाम्। कुक्कुरजटा। अ.टी.स्वा.।

**लोचमस्तकः**। पुं। अजमोदायाम्। भा.। मयूरशिखायां। अम.।

**लोचशिरः**। क्ली। अजमोदायाम्। वै.निघ.।

**लोचिका**। स्त्री। लुचीति ख्याते खाद्यद्रव्ये। লুচি। पाकराजेश्वरः।

**लोटा (टिका)**। स्त्री। चुक्रायाम्। চুকা-পালং। वै.निघ.।

**लोठनम्**। क्ली। इतस्ततश्चालने। চালা। লোটা। मा.नि.।

**लोड़ा (णा)**। स्त्री। चाङ्गेर्य्याम्। আমরুল শাক। लोणिकाद्वये। ছোট গুনী বড় গুনী শাক। रा.नि.व.५। क्षुद्रलोणिकायाम्। भा.।

**लोणकम्**। क्ली। लवणे। वै.निघ.।

**लोणत्वणम्**। क्ली। लवणत्वणे। रा.नि.व.८।

**लोणा**। स्त्री। क्षुद्राम्लिकायाम्। लोणिकायाम्।

**लोणाम्ला**। स्त्री। क्षुद्राम्लिकायाम्। থুদে গুনী। रा.नि.व.५।

**लोणारम्**। क्ली। लवणक्षारे। लोणार क्षार इति दाक्षिणात्ये प्रसिद्धम्। লোণার ক্ষার। तत्पर्य्यायाः,—लवणः लवणमदः लवणक्षारः लवणाकरजं लवणोत्थं जलजं। गुणाः—अत्युष्णं तीक्ष्णं पित्तवृद्धिकरं वातगुल्मघ्नं शूलघ्नम् ईषल्लवणञ्च। रा.नि.व.६।

**लोणिका**। स्त्री। लोणीशाके। থুদেগুনী,



বন গুনী। प.मु.। चाङ्गेर्य्यां। আমরুল। भा.पू. १भ.। चुक्रायां। চুকাপালং। वै.निघ.।

**लोणी**। स्त्री। (Portulaca quadrifida. Syn. Meridiana or P. Oleracea.) Indian Purslane. पत्रशाकभेदे। বড় বা বন গুনী, ক্ষুদে গুনী। हिं लुणियाशाक वा लुणिया, खुरका। तें पद्दलकुर। बम्. कुर्फा। ता. कोरिजकीरइ। तत्पर्य्यायौ—लोणा लोणी। बृहल्लोण्यास्तु पर्य्यायः घोटिका। सा द्विधा क्षुद्रा बृहती च। तयोः क्षुद्रा रूक्षा गुरुः वातश्लेष्महरी अर्शोघ्नी दीपनी अम्ला मन्दाग्निहरी च। बृहती अम्ला सरा उष्णा वातकृत् कफपित्तघ्नी वाग्दोषघ्नी व्रणघ्नी गुल्मघ्नी श्वासकासप्रमेहघ्नी शोथे नेत्ररोगे च हिता। भा.पू.१भ.शा.व.।

**लोतः (तम्)**। पु, क्ली। लवणे। नेत्रजल.। त्रिका.। चिह्ने। उणा.।

**लोतनी**। स्त्री। महाश्रावणिकायाम्। বড় থুলকুড়ি।

**लोधः (ध्रः, कः)**। पुं। (Symplocos racemosa.) स्वनामख्यातवृक्ष। লোধ গাছ, লোধ কাষ্ঠ। हिं लोध। तैं तेल्लीटुगचेट्टु। गुर्ज. लादर। तत्पर्य्यायाः,—गालवः तिल्व. साञ्जनः बलिप्रियः वानराघातः लोध्राह्वः बलभद्रः रोध्रः तिलकः तिल्वकः तिल्लतरुः तिल्लो काण्ड-कीलकः काण्डनीलः काण्डनीलकः लोध्रवृक्षः लोध्रकवृक्षः शबरः हस्तिलोध्रकः हेमपुष्पकः शावरकः तिरीटः तिरीटकः रक्तलोध्रस्य पर्य्यायाः, तिरीटः माञ्जनः रक्तलोध्रः तिन्दुकः लत्ताकर्म्मा। श्वेतस्य पर्य्यायाः,—शुक्लः शावरलोध्रः शावरः महालोध्रः। सु.सू.३७अ.लोध्रादिः। च.द.ज्व. चि.लोध्रादिः। "लोध्रोत्पलामृतापद्म।" स द्विविध, वल्कसामान्यभेदात्। तत्र विशिष्टो वल्करोध्र इति। रा.नि.व.६। सा. गुणाः—रोध्रद्वय कषायं शीतलं वातकफरक्तघ्नं चक्षुष्यं विषघ्नञ्च। "रोध्रो ग्राही लघुः शीतश्चक्षुष्यः कफपित्तनुत्। कषायो रक्तपित्तासृग्ज्वरातीसारशोथहृत्॥" भा.।

**लोध्रपुष्पः**। पुं। मधूकवृक्षे। মউল গাছ। वै.निघ.।

**लोध्रपुष्पकः**। पुं। शालिधान्यविशेषे। भा.पू. १भ.धा.व.।

**लोध्रपुष्पिणी**। स्त्री। ह्रस्वधातक्याम्। ক্ষুদ্র ধাই ফুল। वै.निघ.।

**लोध्रबलम्**। क्ली। तन्नामके चक्रपाणिदत्तस्य कुले। त्रि (स्त्री)। तत्कुलसम्भूते। च.द.।

**लोध्रवृक्षः**। पुं। मधूकवृक्षे। रोध्रवृक्षे। वै. निघ.।

**लोध्रादिः**। पुं। पित्तज्वरघ्नकषाये। च.द.पि. ज्व.चि.। "लोध्रोत्पलामृतापद्मशारिवाणां सशर्करः। क्वाथः पित्तज्वरं हन्यात्।"

**लोपाकः**। पुं। शृगालभेदे। स लाङ्गलकशृग-इत्युच्यते। लोआ इति लोके। খ্যাক্‌শিয়াল। सु.चि.८अ.। अथ विलेशयगुणः।

**लोपाकि(शि)का**। स्त्री। धूर्त्तशृगालिकायाम्। খ্যাক্‌শিয়ালী। श.मा.। हारा.।

**लोपाशकः**। पुं। शृगाले। খ্যাক্‌শিয়াল हारा.।

**लोभनम्**। क्ली। मांसे। वै.निघ.।

**लोभ्यः**। पु। हरिताले। वै.निघ.। शिम्बी-धान्यभेदे, मुद्गे। মুগ। हे.च.।

**लोमम्**। क्ली। लाङ्गूले। লেজ। जटा.।

**लोम (न्)**। क्ली। केशे। रोम्णि। রোঁওয়া। अम.। तदुक्तं—"अस्थीनि मलानि लोमानि असंख्यानि भवन्ति हि।" भा.।

**लोमकरणी**। स्त्री। मांसरोहिणीभेदे। रा. नि.व.१२।

**लोमकर्कटी**। स्त्री। अजमोदायाम्। वै.निघ.।

**लोमकर्णः**। पुं। शशके। খরগোষ। हे.च.।

**लोमकूपः**। पुं। त्वग्रन्ध्रे। "सन्ति यावन्ति रोमाणि तावन्तो लोमकूपकाः।" भा.।

**लोमघ्नम्**। क्ली। इन्द्रलुप्तरोगे। টাক্‌পোকা। त्रि। लोमपातने। निदा.।

**लोमद्वीपः**। पुं। शोणितजक्रिमिभेदे। रक्तज-क्रिमि। च.वि.७अ.।

**लोमफलम्**। क्ली। भव्यफले। চাল্‌তা। रा.नि.व.११।

**लोमविध्वंसः**। पु। क्रमौ। क्रिमि। वै.निघ.।

**लोमविषः**। पुं। व्याघ्रादौ। हे.च.।

**लोमशः**। पुं। मध्वालौ। मउ आलू। धातुकाशीषे। "काशीषे तमालपत्रे वा।" च.द.। मेषे। त्रिका.। लोकड़नामविलेशयमृगे। रा.नि.व.१९।

**लोमशकर्णः**। पुं। विलेशयमृगभेदे, शशके। शशक। सु.सू.४६अ.।

**लोमशकाण्डा**। स्त्री। कर्कटिकायाम्। काँकुड़ गाछ। रा.नि.व.७।

**लोमशच्छदः**। पुं। देवताड़वृक्षे। দেশীতাড়া। प.मु.। पीतदेवदाल्याम्। त्रिका.।

**लोमशपत्रा (त्रिका)**। स्त्री। पीतदेवदाल्याम्। वै.निघ.।

**लोमशपर्णिनी**। स्त्री। माषपर्ण्याम्। माषाणी। प.मु.।

**लोमशपुष्पकः**। पुं। शिरीषवृक्षे। रा.नि.व.९।

**लोमशमार्जारः**। पुं। गन्धमार्जारे। गन्धगोকুল। तत्पर्य्यायाः,—पूतिकः मारजातकः सुगन्धी मूलपातनः गन्धमार्ज्जारकः। तन्मुष्कगुणाः—कफवातघ्नः चक्षुष्यः सुगन्धिः वीर्य्यकरः कण्डूकोठघ्नश्च। रा.नि.व.१९।

**लोमशा**। स्त्री। गन्धमांस्यां, सुगन्धजटामांस्यां। गन्धमांসী, सुगन्ध जटामांসী। रा.नि.व.१२। वचायाम्। বচ। काकोल्यां। काँकला। रा.नि.व.२३। मिष्याम्। मउरी। च.सू.३अ.। काकजङ्घायाम्। शुकशिम्ब्यां। महामेदायां। मे.। शणपुष्प्यायाम्। एर्व्वारौ। काँकुड़ गाछ। रा.नि.व.४।७। अतिबलायां। विश्वः।

**लोमशातनम्**। त्रि। लोमनाशके हरितालादौ। तन्त्रम्।

**लोमशी**। स्त्री। कर्कटीविशेषे। वै.निघ.।

**लोमहर्षणम्**। क्ली। रोमाञ्चे।

**लोमहृत्**। पुं। हरिताले। हे.च.।

**लोमा**। स्त्री। वचायाम्। वै.निघ.।

**लोमादः**। पुं। मलजकृमिभेदे। च.वि.७अ.।

**लोमालिका**। स्त्री। शृगालिकायाम्। আলেয়া। খ্যাক্শিয়ালী। त्रिका.।

**लोलजिह्वा**। स्त्री। महाबलायाम्। वै.निघ.।

**लोला**। स्त्री। जिह्वायां। त्रिका.।

**लोलाक्षः**। पुं। अपस्माररोगी। रा.नि.व.२०।

**लोलिका**। स्त्री। हंसीविशेषे। পাতিহাঁস। चाङ्गेर्य्यां। আমরুল। "क्षुद्रदन्तशठाम्लस्ता चाङ्गेरी लोलिका च सा।" जटा.।

**लोलिनी**। स्त्री। नीलगुञ्जायाम्। (विन्दुघृते)।

**लोलिम्बराजः**। पुं। वैद्यजीवनग्रन्थकारे।

**लोष्टम्**। क्ली, पुं। गुड़े। लोष्ठे। ঢেলা। अम.। लोहरजसि। লোহাচুর, मण्डुर। रा.नि.व.१४।

**लोष्टराजः**। पुं। रौप्ये। वै.निघ.।

**लोहम्**। क्ली, पुं। अगुरुणि। काष्ठागुरुणि। रा.नि.व.१२। च.सू.३अ.। सि.यो.यक्ष.चि.। "लोहामृताभयाः।" भा.पु.१भ.चित्तभ्रमज्व.चि.। "लोहताम्रजकैलाभिः।" कांस्यधातौ। কাঁসা। रा.नि.व.१३। रक्तधातौ। रक्त। रा.नि.व.१८। स्वर्णे। मुण्डलौहे। कान्तलौहे। ताम्रे। पित्तले। रौप्ये। शीषके। वङ्गे। अस्त्रे। मे.।

**लोहकण्टकः**। पुं। मदनवृक्षे। श.च.।

**लोहकर्षः (कः)**। पुं। लौहचुम्बके। চুম্বক-পাথর। भा.।

**लोहकान्त(क)म्**। क्ली। कान्तलौहे। ইস্পাৎ। प.मु.। लौहचुम्बके। वै.निघ.।

**लोहकिट्टम्**। क्ली। लौहमले। मण्डुर। रा.नि.व.१३। प्रयोगे तच्च पुराणं ग्राह्यम्। सि.यो. वृहदग्निमुखचूर्णे।

**लोहकीटः**। पुं। मण्डुरे। व.निघ.।

**लोहचूर्णम्**। क्ली। लौहमले। मण्डुर। रा.नि.व.१३।

**लोहजम्**। क्ली। रुक्मलौहे। वर्त्तलौहे। लौहमले। मण्डुर। रा.नि.व.१३। कांस्ये। हे.च.।

**लोहद्रावी (द्रुन्)**। पुं। टङ्कणक्षारे। সোহাগা। रा.नि.व.६। अम्लवेतसे। प.मु.।

**लोहनिर्यासः**। पुं। लौहकिट्टे। मण्डुर।

**लोहपञ्चकम्**। क्ली। स्वर्णरौप्यताम्रवङ्गशीषेषु, स्वर्णरौप्यताम्रत्रपुकान्तलौहेषु वा।

**लोहपालिका**। स्त्री। शालिञ्चशाके।

**लोहपृष्ठः**। पुं। कङ्कपक्षिणि। কাঁক পাখী। अम.। च.सू.२७अ.। [ धान। च.सू.२७अ.।

**लोहवालः**। पुं। शालिधान्यविशेषे। লোহরাজ



**लोहमलम्**। क्ली। लौहकिट्टे। मण्डुर। वै.निघ.।

**लोहमारः (कः)**। पुं। शालिञ्चशाके। प.मु.। त्रिका.। लोहमर्द्दकद्रव्ये। लोहमर्द्दकद्रव्यवर्गो यथा—"त्रिफला त्रिवृता दन्ती कटुकी तालमूलिका। वृद्धदारक उशीर वृषपत्रक चित्रकाः। शृङ्गवेरविडङ्गौ च भृङ्गभल्लातकौषधम्। दाड़िमस्य च पत्राणि शतपुत्री पुनर्नवा। कुठारकाम्रकौ कन्दः तन्वी मेकस्य पर्णिका। हस्तिकर्णपलाशश्च कुलित्थः केशराजकः। माणः खण्डितकणश्च गोजिह्वा लौहमारकः। गिरिशान्तनक प्रोक्तः त्रिफलादिरयं गणः॥" र.सा.सं.।

**लोहराजकम्**। क्ली। रौप्ये।

**लोहलाङ्गकः**। पुं। मदनवृक्षे। वै.निघ.।

**लोहलः**। त्रि। अस्फुटभाषिणि। তোৎলা। अम.।

**लोहवरम्**। क्ली। स्वर्णे। त्रिका.।

**लोहविट् (ष्ठा)**। पुं। लौहमले। मण्डुर। वै.निघ.।

**लोहशुद्धिदः**। पुं। टङ्कणक्षारे।

**लोहश्लेषणः**। पुं। टङ्कणक्षारे। সোহাগা। हे.च.।

**लोहसङ्करम्**। क्ली। वर्त्तलौहे, रुक्मलौहे। रा.नि.व.१३।

**लोहसारः**। पुं। सारलौहे। वै.निघ.।

**लोहसिंहानम् (निका)**। क्ली, स्त्री। लौहकिट्टे। भा.।

**लोहहृत्**। पुं। हरिताले। वै.निघ.।

**लोहाख्यम्**। क्ली। अगुरुकाष्ठे। र.मा.।

**लोहि**। क्ली। शुक्लटङ्कणे। শ্বেত সোহাগা। रा.नि.व.६।

**लोहिका**। स्त्री। लौहपात्रविशेषे। নোয়াড়ি। त्रिका.।

**लोहितम्**। क्ली। रक्तचन्दने। रा.नि.व.१२। सि.यो.षट्कम्बरतैले पत्राङ्गचन्दने। वकमकाष्ठे। तृणकुङ्कुमे, हरिचन्दने। रा.नि.व.१२। कुङ्कुमे। मे.। स्वर्णगैरिके। कृष्णागुरुणि। वै.निघ.। कुसुम्भपुष्पे। पुं। माणिक्ये। पद्मराग। भा.। रक्तपिण्डालौ। লাল আলু। रा.नि.व.७। रक्तचौ। रक्तशालौ। रा.नि.व.१४।१६। पलाण्डौ। प.मु.। रोहितमत्स्ये। मृगविशेषे। श.र.। मसूरे। श.च.। सर्पे। धरणि.। नदभेदे। मे.। रक्तवर्णे। नेत्ररोगभेदे। त्रि। रक्तवर्णे।

**लोहितकम्**। क्ली। पित्तलधातौ। পিতল। रा.नि.व.१३। पुं। माणिक्यभेदे। पद्मराग। हे.च.। शालिधान्यभेदे। सु.सू.४६अ.।

**लोहितकन्दः**। पुं। पलाण्डौ।

**लोहितकुस्तुम्बुरुधान्यम्**। क्ली। तुरवयावनाले।

**लोहितचन्दनम्**। क्ली। रक्तचन्दने। कुङ्कुमे। अम.।

**लोहितजम्**। क्ली। हरिचन्दने।

**लोहितपित्तम्**। क्ली। रक्तपित्ते।

**लोहितपुष्पकः**। पुं। दाड़िमवृक्षे। भा.।

**लोहितपुष्पिका (ष्पी)**। स्त्री। उष्ट्रकाण्डीपुष्पवृक्षे। वम्. উট্কটারা। रा.नि.व.१०।

**लोहितमृत्तिका**। स्त्री। गैरिकमृत्तिकायां। গিরিমাটী। रक्तमृत्तिकायां। লালমাটী। प.मु.।

**लोहितयष्टिका**। स्त्री। मञ्जिष्ठायाम्। सि.यो.च.द.ज्व.चि.षट्कम्बरतैले "लाक्षानिशालोहितयष्टिकाभिः।"

**लोहितलता**। स्त्री। मञ्जिष्ठायाम्। संग्रहः।

**लोहितशालिः**। पुं। रक्तशालौ। দাদখানি ধান, রাঙা ধান। "तेषां लोहितकः श्रेष्ठोदोषघ्नः शुक्रमूत्रलः चक्षुष्यो वर्णबलकृत् स्वर्य्यो हृद्यः श्रमापहः॥ व्रण्यो ज्वरहरश्चैव सर्व्वदोषविषापहः। तस्मादल्पान्तरगुणाः क्रमशः शालयोऽपराः।" रा.नि.व.१६।

**लोहितशिग्रुः**। पुं। रक्तपुष्पशिग्रौ। লাল সজিনা। वै.निघ.।

**लोहितक्षया**। स्त्री। योनिव्यापद्विशेषे। लक्षणं यथा—'वातपित्ताभ्यां क्षीयते रजः। सदाहकार्श्यवैवर्ण्यं यस्यां सा लोहितक्षया।" वा.उ.३३अ.।

**लोहिता**। स्त्री। वराहक्रान्तायाम्। বরাক্রান্তা। श.च.। रक्तपुनर्नवायाम्। रा.नि.व.५। शिम्बीभेदे। मञ्जिष्ठायाम्। लाक्षायाम्। लज्जालुकायां। वै.निघ.। शरीरे तन्नामिका द्वितीया त्वक्। "या लोहिः षोड़शभागप्रमाणा तिलकालकाद्यधिष्ठाना।" सु.शा.४अ.।

**लोहिताङ्गः**। पुं। कम्पिल्लके। कमलागुँड़ि। रा.नि.व.१३।
**लोहिताननः**। पुं। नकुले। নেউল। रा.नि.व.१९।
**लोहिताभः**। पुं। रक्ताभमहाविषवृश्चिकविशेषे। सु.कल्प.८अ.।
**लोहितायः (यसम्)**। क्ली। ताम्रे। তামা। त्रिका.। व्याक.।
**लोहितार्म (न्)**। क्ली। शुक्लभागगतनेत्ररोगे। लक्षणं—"यन्मांसं प्रचयमुपैति शुक्लभागे पद्माभं तदुपदिशन्ति लोहितार्म।" सु.उ.४अ.।
**लोहितालुः**। पुं। रक्तपिण्डालौ। লাল আলু। कोङ्कणे प्रसिद्धे फोण्डालौ। रा.नि.व.७।
**लोहिताक्षम्**। क्ली। तन्नामकसक्थिमर्म्मभेदे। ऊर्द्धमधोवङ्क्षणसन्धेः ऊरुमूले।" सु.शा.६अ.। पुं। दर्व्वीकरजातीयसर्पे। सु.कल्प.४अ.। कोकिले। श.च.।
**लोहितिका**। स्त्री। मञ्जिष्ठायां। রামতরুণী। सु.चि.११अ.।
**लोहितेक्षुः**। पुं। रक्तेक्षौ। কাজলি ইক্ষু। रा.नि.व.१४।
**लोहित्याजः**। पुं। तृणधान्यभेदे। লোহিত শালি। गुणाः—श्यामाकवत्। च.सू.२७अ.।
**लोहिनी**। स्त्री। श्वेतकिणिह्याम्। वै.निघ.।
**लोही (हिन्)**। पुं। रोहितकवृक्षे।
**लोहोच्छिष्टम्**। क्ली। लौहकिट्टे। वै.निघ.।
**लोहोत्तमम्**। क्ली। स्वर्णे। हे.च.।
**लोहोत्थम्**। क्ली। मण्डूरे। वै.निघ.।
**लौहः**। पुं, क्ली। (Ferrum.) Iron. स्वनामख्यातधातौ। লোহা। हिं लोहा। तें इनमु। मुण्डतीक्ष्णभेदेन सामान्यतस्तद्द्विविधं। तयोर्मुण्डस्य पर्य्यायाः,—मुण्डं मुण्डायसं दृषत्सारं शिलात्मजं अश्मजं कृष्णलोहं धारं कृष्णायसं। तीक्ष्णस्य पर्य्यायाः,—तीक्ष्णं शस्त्रं शस्त्रायसं पिण्डं पिण्डायसं शठं आयसं निशितं तीव्रं खड्गं मुण्डजं अयः चित्रायसं चीनजं। लौहस्य गुणाः—लौहं तिक्तं सरं शीतं मधुरं तुवरं गुरु। रूक्षं वयस्यं चक्षुष्यं लेखनं वातलं जयेत। कफं पित्तं गरं शूलं शोथार्शःप्लीहपाण्डुताः। मेदोमेहकृमीन् कुष्ठं तत्किट्टं तद्वदेव हि॥" इति। लौहमष्टधा क्रौञ्च(काञ्चि)कालिङ्गकलिभद्रवज्रपाण्डिनिरङ्गकान्तभेदेन गुणाः—"सामान्याद्द्विगुणः क्रौञ्चः कालिङ्गोऽष्टगुणस्ततः। कलेः शतगुणं भद्रं भद्राद्वज्रं सहस्रधा। वज्रात् शतगुणं पाण्डि निरङ्गं दशभिर्गुणैः। ततः कोटिसहस्रैर्वा कान्तलौहं महागुणम्॥" रस.चि.६अ.। दोषाः—"गुरुता दृढ़तोत्क्लेदः कश्मलं दाहकारिता। अश्मदोषः सुदुर्गन्धो दोषाः सप्तायसस्य तु॥" इति। असंस्कृतलौहदोषाः—"षण्ढत्वकुष्ठामयमृत्युदं भवेत् हृद्रोगशूलौ कुरुतेऽश्मरीञ्च। नानारुजानाञ्च तथा प्रकोपं करोति हृल्लासमशुद्धलौहम्।" तत्सेवने निषेधः। "कुष्माण्डं तिलतैलञ्च माषान्नं राजिकान्तथा। मद्यमम्लरसञ्चापि त्यजेल्लौहस्य सेवकः॥" लौहशोधनादिपरिभाषा—"शुद्धार्थं त्रिफला लौहात् कर्त्तव्या द्विगुणा सदा। चतुर्गुणं फलात्तोयमर्द्धभागावशेषितम्। एष एव विधिर्नित्यं चालनेऽपि प्रशस्यते। वधार्थं त्रिफला ग्राह्या लौहान्नित्यं चतुर्गुणाः। तोयमष्टगुणन्तत्र चतुर्भागावशेषितम्। भानुपाकार्थमिच्छन्ति त्रिफलामयसा समाम्॥" प.प्र.। लौहमारणम्—"शुद्धं लौहभवं चूर्णं पातालगरुड़ीरसैः। मर्दयित्वा पुटेद्वह्नौ दद्यादेवं पुटत्रयं। पुटत्रयं कुमार्य्याश्च कुठारच्छिन्नकारसैः। पुटषट्कं ततो दद्यादेवं तीक्ष्णमृतिर्भवेत्॥" अन्यच्च—"क्षिपेच्च द्वादशांशेन दरदं तीक्ष्णचूर्णतः। मर्द्दयेत् कन्यकाद्रावैर्यामयुग्मं ततः पुटेत्। एवं सप्तपुटैर्मृत्युं लौहचूर्णमवाप्नुयात्॥" इत्यादि। "लौहवत् सप्तधा तप्ता लौहपत्री तलाग्निना। गोमूत्रे शुद्धिमायाति निषिक्ता स्वविधानतः॥" शा.कौ.। मृतलौहलक्षणम्—"लौहगूथसमाकारः स्पर्शग्राह्यः प्रतीयते। यदा लौहस्तदा ज्ञेयः सुमृतो वैद्यसत्तमैः॥" संग्रहः। लौहोत्पत्तिः—"पुरा लोमिनदैत्यानां निहतानां सुरैर्युधि। उत्पन्नानि शरीरेभ्यो लौहानि विविधानि च॥" भा.पू.१भ.धा.व.। लौहसंस्कारः। स त्रयोदशविधः। शाणिघर्षणम् उद्वर्त्तनम् अम्लभावनम् आतपशोषः निषेकः मारणं दलनं चालनं सूर्य्यपाकः स्थालीपाकः चूर्णन पुटपाकः पाकनिष्पत्तिश्च। "स्यात् षोड़शगुणं तोयमष्टभागावशेषितम्। अन्यानि यानि वस्तूनि योक्तव्यानि पुटादिषु॥ तानि लौहसमान्याहुर्जलं प्रागेव कीर्त्तितम्। लभ्यते स्वरसो येषां तेषां क्वाथोऽत्र नेष्यते॥ त्रिफला-



व्यतिरिक्तैश्च मतमेतत् पतञ्जलेः। एष एव विधिर्नित्यं चालनेऽपि प्रशस्यते॥ लौहवत् त्रिफला व्योम्नि त्रिफलावत् पयो मतम्। प्राक्कीर्त्तित जलञ्चात्र मृदुमध्यादिभेदतः॥ मृदुमध्यकठोरत्वात् क्वाथ्यद्रव्यं त्रिधा मतम्। क्वाथ्यद्रव्यानुसारेण देयं स्थाप्यं जलं त्रिधा॥" पतञ्जलिश्चाह सामान्यपरिभाषां लौहमारणार्थम्। "द्विगुणा त्रिफला लौहात् फलात् षोड़शिकं जलम्। अष्टभागावशिष्टन्तु मारणे जलमिष्यते॥ समा च त्रिफला ग्राह्या जलञ्चाष्टगुणन्तथा। वधार्थं स्थापयेत्तोयं तस्याद्धं वस्त्रशोधितम्। वधार्थेन समं ग्राह्यं पाकार्थञ्च समं फलम्। अष्टभागावशिष्टञ्च पाकार्द्धं जलमिष्यते॥ एवं जलं फलं प्रोक्तं यथासङ्ख्येन योजयेत्॥" अथ लौहपाकलक्षणमाह। तदुक्तं पतञ्जलिना। "तावल्लौहं पचेद्वैद्यो यावद्दर्व्व्या गालितम्। समुद्रं जायते व्यक्तं न निःसरति स्पन्दिभिः॥" अन्यच्च—"अङ्गुलिभ्यां दृढ़ं घृष्टं यदा चूर्णत्वमागतम्। तदा सिद्धं विजानीयाल्लौहं लौहविदां वरः॥ अञ्जनाभं घनं स्निग्धं सूक्ष्मामूलमलेपनम्। अक्लिन्नमम्भसि क्षिप्तं सम्यक्पक्वस्य लक्षणम्॥ मन्दमाहुरथो लौहमलस्याखिललक्षणम्। अतिपाकेन तज्ज्ञेयं खरमुज्झितलक्षणम्॥" अमोघवत्सं चोक्तं। "पाकास्तु त्रिविधाः प्रोक्ता मृदुमध्यमतीक्ष्णकाः। वैविध्यात् सर्व्वधातूनां पित्तानिलकफात्मनाम्॥ दर्व्वीमाश्लिष्यते यत्तत् स्वे स्खलति वा नवा। मृदुपाकं विजानीयात् पित्ते तद्दीत्य योजयेत्॥ सिकतापुञ्जोपमं यत्तु सुषिरेण समन्वितम्। तदयः खरपाकं स्यात् श्लेष्मन्येव प्रकीर्त्तितः॥ एकैकगुणयोगित्वात् न तदिच्छन्ति तद्विदः। सर्व्वप्रकृतिसेव्यत्वान्मध्यमं बहुपूजितम्। गुड़ादिः प्रविशेद्व यत्र तत्र पाकोऽस्य मुद्रया॥" कान्तलौहे। तीक्ष्णलौहे। रा.नि.व.१३।२३। मण्डूरे। कांस्ये। अगुरुणि। অগুরু কাষ্ঠ। रा.नि.व.२३। [वै.१३।
**लौहकान्तकम्**। क्ली। कान्तलौहे। रा.नि.
**लौहकिट्टम्**। क्ली। मण्डूरे। प.मु.।
**लौहजम्**। क्ली। वर्त्तलौहे। বিদ্রী। रा.नि.व.१३। मण्डूरे। र.मा.।
**लौहदाहः**। पुं। अश्वस्य वायुप्रकोपादौ दग्धलौहशलाकया दाहकरणे। ज.द.१४अ.।
**लौहपत्री**। स्त्री। लौहचटकायां। লোহার চটী। शा.कौ.लौहमारणे।
**लौहपुरीषम्**। क्ली। लौहमले, मण्डूरे।
**लौहभाण्डः**। पुं। अश्मभाले। হামানদিস্তা। श.च.। क्ली। लौहनिर्म्मितभाण्डे।
**लौहभूः**। स्त्री। लौहपात्रविशेषे। श.च.।
**लौहभेकीवीजम्**। क्ली। रसजारणवीजभेदे। रस.चि.३अ.।
**लौहमलम्**। क्ली। लौहकिट्टे। मण्डूरे। रा.नि.व.१३। सु.सू.३८अ.त्रप्वादि.।
**लौहविशुद्धिदः**। पुं। टङ्कणक्षारे। সোহাগা। र.सा.सं. टङ्कणशुद्धौ।
**लौहसारः**। पुं। सारलौहे।

---

# व

**वः**। पुं। वायौ। बाहौ। व्याघ्रे। वस्त्रे। शालूके। (त्रि.) बलवति।
**वंशः**। पुं। (Bambusa arundinacea) स्वनामख्यातपत्रशाकवृक्षे। বাঁশ। हिं बाँश। मं वेलु। तें वेदुरु, वेन्नेमुक, वेन्नशॆणि, वेत्तु। वम. माण्डगय। ता. मन्गिल। तत्पर्य्यायाः,—त्वक्सारः कर्म्मारः त्वचिसारः तृणध्वजः शतपर्व्वा यवफलः वेणुः मस्करः तेजनः किलाटी पुष्पघातकः दृढ़त्तृणः क्षिप्तुपर्व्वा वम्भः सुपर्व्वः तृणकेतुकः कण्टालुः कण्टकी महाबलः दृढ़काण्डः दृढ़ग्रन्थिः दृढ़पत्रः धनुर्द्रुमः धानुष्यः। स द्विधा सामान्यो रन्ध्रवंशश्च। गुणाः—उभावेव कषायौ ईषत्तिक्तौ शीतलौ मूत्रकृच्छ्रप्रमेहार्शोदाहपित्तास्रघ्नौ च। रन्ध्रवंशस्तु विशेषेण दीपनोऽजीर्णघ्नः रुच्यः पाचनः हृद्यः शूलघ्नश्च। रा.नि.व.७। तत्करीरगुणाः—"करीरो वंशजो रुक्षः वातपित्तकरः कटुः। स कषायो विदाही च श्लेष्मघ्नः पाकतः कटु॥" राज.३प.। सर्ज्जवृक्षे। শাল গাছ। रा.नि.व.

इत्त्वौ। रा.नि.व.१४। पृष्ठास्थि। পিঠের দাঁড়া। त्रिका.।

**वंशकः।** पुं। इक्षुविशेषे। শামশাড়া আখ। गुणाः—शीतलः मधुरः स्निग्धः पुष्टिकरः श्लेष्मलः सारकः अविदाही गुरुः हृद्यः सलवणश्च। सु.सू. ४५अ.। क्षुद्रमत्स्ये। বাঁশপাতা মাছ। क्ली। अगुरुकाष्ठे। हारा.।

**वंशकञ्जम्।** क्ली। कृष्णागुरुकाष्ठे। वै.निघ.।

**वंशकफम्।** क्ली। शाल्मलीतूलके, वंशतूले वा। यच्चार्द्देव वायुना नीतं नभसि उड्डीयते। हारा.।

**वंशकरीरः।** पुं। वंशाङ्कुरे। বাঁশের কোঁড়। तत्पर्य्यायाः,—करीरं वंशाग्रं यवफलाङ्कुरः। गुणाः—"तत्करीरः कटुः पाके रसे रूक्षो गुरुः सरः। कषायः कफकृत् स्वादुर्विदाही वातपित्तलः॥" भा.।

**वंशकर्पूरः (रोचना)।** पुं, स्त्री। वंशरोचनायाम्। বংশলোচন। रा.नि.व.६।

**वंशकारः।** पुं। गन्धके। वै.निघ.।

**वंशकुटजा।** स्त्री। कृष्णकुटजे। वै.निघ.।

**वंशजः।** पुं, क्ली। वेणुयवे। বাঁশের চাউল। रा.नि.व.१६। अगुरुकाष्ठे। स्त्री (जा)। वंशरोचनायाम्। বংশলোচন। श.र.। "वंशजा बृंहणी वृष्या बल्या स्वाद्वी च शीतला। तृष्णाकासज्वरश्वासक्षयपित्तास्रकामलाः। हरेत् कुष्ठं व्रणं पाण्डुं कषाया वातकृच्छ्रजित्॥" भा.।

**वंशतण्डुलः।** पुं। वेणुयवे। বাঁশের চাউল। रा.नि.व.६।

**वंशतैलम्।** क्ली। अर्शश्चिकारोगे तैलम्। "कटुतैलमर्शश्चिघ्नं मूत्रे वंशफलैः शृतम्।" रस.र.।

**वंशत्वक् (च्)।** स्त्री। वंशत्वचि। বাঁশের নৌল। तद्गुणः—रजःस्रावकारित्वम्।

**वंशदला।** स्त्री। वंशपत्रतृणे। বাঁশপাতা ঘাস। रा.नि.व.८।

**वंशदूर्व्वा।** स्त्री। कटुकायाम्। कट्की। शतपर्व्वायाम्। দূর্ব্বাবিশেষ। किंशुकायाम्। रा.नि.व.२३।

**वंशधान्यम्।** क्ली। वेणुयवे। বাঁশের চাউল। तच्च देशभेदाद्बहुविधं। रा.नि.व.१६। [रा.नि.व.१४।

**वंशनेत्रम्।** क्ली। इक्षुमूले। আখের চক্ষু।

**वंशपत्रः।** पुं। नले। নল। रा.नि.व.७।

**वंशपत्रकः।** पुं। श्वेतेक्षौ। रा.नि.व.१४। वंशकमत्स्ये। বাঁশপাতা মাছ। श.मा.। देवनले। वै.निघ.। क्ली। वंशपत्रहरिताले। हे.च.।

**वंशपत्रिका (त्री)।** स्त्री। वेणुदले। বাঁশের পাতা। सा.कौ.सर्व्वज्वरहरलौहे। वंशपत्राकारतृणे। বাঁশপাত ঘাস। मं वेणुपत्री। कं बिदिरयेले। तत्पर्य्यायाः,—वंशदला जीरका जीर्णपत्रिका। गुणाः—मधुरा शीतला पित्तघ्नी रक्तदोषहरी रुच्या पशुदुग्धवर्द्धिनी च। रा.नि.व.८। नाड़ीहिङ्गुति ख्याते हिङ्गुभेदे।

**वंशपीतः।** पुं। कणगुग्गुलौ। रा.नि.व.१२।

**वंशपुष्पा।** स्त्री। सहदेवायां। रा.नि.व.४।

**वंशपूरकम्** / **वंशमूलम्** } क्ली। इक्षुमूले रा.नि.व.१४।

**वंशवीजः।** पुं। वेणुयवे। বাঁশের চাউল। रा.नि.व.१६।

**वंशयवः।** पुं। वेणुयवे। বাঁশের চাউল। तद्बीजगुणाः—"तद्यवास्तु सरा रूक्षाः कषायाः कटुपाकिनः। वातपित्तकरा उष्णा बद्धमूत्राः कफापहाः।" रा.नि.व.१६।

**वंशरोचना।** स्त्री। (The manna of the bambu. वंशपर्व्वमध्यजातनीलाभधवलपदार्थे। বংশলোচন। तें तवक्षीरि। तत्पर्य्यायाः,—त्वक्क्षीरा तुगा तुगाक्षीरी शुभ्रा वंशजा वंशी वंशक्षीरी वंश्यं क्षीरिका त्वक्क्षीरी शुभ्रा वैणवी त्वक्सारा कर्म्मरी श्वेता वंशकर्पूररोचना वंशोद्भवा तुङ्गा पिङ्गा रोचनिका वंशशर्करा। गुणाः—रूक्षा कषाया मधुरा हिमा श्वासकासघ्नी रक्तशुद्धिकरी तापघ्नी पित्तोद्रेकशमनी च। रा.नि.व.६। अपिच...वंशजा बृंहणी वृष्या बल्या स्वाद्वी च शीतला। तृष्णा-कास-ज्वर-श्वास-क्षय-पित्तास्र-कामलाः। हरेत् कुष्ठं व्रणं पाण्डुं कषाया वातकृच्छ्रजित्। भा.।

**वंशवर्द्धिनी।** स्त्री। वंशलोचनायाम्। वै.निघ.।

**वंशविदलः।** पुं। वंशकृतसन्दंशिकायाम्। বাঁশের চিম্টা। सु.चि.२७अ.।

**वंशव्यजनवायुः।** पुं। वंशकृततालवृन्तवायौ। বাঁশের পাখার বাতাস। गुणाः—"वंशव्यजनजो



वातः रूक्षोष्णो वातपित्तदः।" राज.२प.।

**वंशशर्करा।** स्त्री। वंशेक्षुकृतशर्करायाम्। শামশাড়ার চিনি। गुणाः—चक्षुष्या बल्या सुमधुरा रूक्षा च। रा.नि.व.१४। वंशरोचनायाम्। रा.नि.व.६।

**वंशशलाका।** स्त्री। वीरणमूले। বেণার মূল। वंशनिर्म्मितशलाकायां। हे.च.।

**वंशक्षीरी।** स्त्री। वंशलोचनायां। रा.नि.व.६।

**वंशाङ्कुरः।** पुं। वंशकरीरे। বাঁশের কোঁড়। रा.नि.व.७।

**वंशाग्रम्।** क्ली। वंशाङ्कुरे। বাঁশের কোঁড়। वै.निघ.।

**वंशान्तरः।** पुं। नलाख्यतृणे। নল, খাগড়া। रा.नि.व.८।

**वंशावलेखः।** पुं। वंशत्वचि। বাঁশের ত্বক্। सु.चि.८अ.।

**वंशास्थि।** क्ली। मर्कटास्थनि। वै.निघ.।

**वंशाह्वः।** पुं। वेणुयवे। रा.नि.व.१६।

**वंशिकः।** पुं, क्ली। कृष्णेक्षौ। কাজলি ইক্ষু। वै.निघ.। अगुरुकाष्ठे। अम.। स्त्री (का)। पिप्पल्याम्। वै.निघ.।

**वंशी।** स्त्री। वंशलोचनायां। वै.निघ.२भ.संग्रहणी.चि.जातीफलादिचूर्णे। वंशे। कर्षचतुष्टये। ८ तो.। रा.नि.व.२१। त्रसरेणुमाने। "त्रसरेणुस्तु पर्य्यायनाम्ना वंशी निगद्यते।" भा.।

**वंशोद्भवा।** स्त्री। वंशरोचनायाम्। वै.निघ.र.पि.चि.वासाखण्डे।

**वंश्यम्।** क्ली। वंशलोचने। वै.निघ.२भ.क्षय.चि.सूर्य्यप्रभावट्याम्।

**वकः।** पुं। अगस्तिवृक्षे। বকফুলের গাছ। हिं वासना। मं अगस्ता। तें अविसि। ता. अगति। तत्पर्य्यायाः,—शिववल्ली पाशुपतः एकाष्ठीलः वकः वसु वसुकः वसुहट्टः वसूकः वकपुष्पः शिवप्रियः शिवमल्ली काकनामा काकशीर्षः स्थूलपुष्पः सुपूरकः रक्तपुष्पः मुनितरुः अगस्तिः अगस्त्यः वङ्गसेनः वङ्गसेनः शीघ्रपुष्पः मुनिद्रुमः मुनिपुष्पः व्रणारिः दीर्घफलकः वक्रपुष्पः सुरप्रियः शिरःपीड़ः सुव्रतः शिवाङ्कः शिवेष्टः शिवाह्लादः शाम्भवः क्रमपूरकः रविसन्निभः। तु श्वेत-पीत-नील-लोहित रक्तपुष्पभेदेन चतुर्व्विधः। तेषां सा. गुणाः,—"वकोऽतिशिशिरस्तिक्तो मधुरो मधुगन्धकः। पित्तदाहकफश्वासश्रमहारी च दीपनः॥ अपिच—"अगस्तिः पित्तकफजित् चातुर्थकहरोहिमः। रूक्षो वातकरस्तिक्तः प्रतिश्यायनिवारणः॥ वकोऽनुष्णः कटुस्तिक्तः कफपित्तविषापहः। योनिशूलतृषादाहकुष्ठशोथासनाशनः॥" भा.। ततपुष्पगुणाः,—"अगस्तिकुसुमं शीतं चातुर्थकनिवारकं। नक्तान्ध्यनाशनं तिक्तं कषायं कटुपाकि च। पीनसश्लेष्मपित्तघ्नं वातघ्नं मुनिभिर्मतम्॥" शुक्लजातीयजलचरपक्षिविशेषे। বক পাখী। तस्य मांसं भक्षणात् गुरु। रा.नि.व.१७। वातघ्नं स्निग्धं सृष्टमलं वृष्यं रक्तपित्तहरं हिमञ्च। राज.३प.। See प्लवः।

**वकचिञ्चिका।** स्त्री। मत्स्यविशेषे। हारा.।

**वकपुष्पः (ष्पा, ष्पी)।** पुं, स्त्री। अगस्तिवृक्षे। বাসনা ফুলের গাছ। श.र.। क्ली। वकपुष्पे।

**वकाची।** स्त्री। वकचिञ्चिकामत्स्ये। हारा.।

**वकु(कू)लः।** पुं (Memusops Elegni) स्वनामख्यातवृक्षे। বকুল গাছ। हिं वकुल, मौलसरी। तें पोगड़चेट्टु। उत्. वउड़कुड़ि। वम्. वकुली। दा. घोलसरी। ता. मोगदम्। तत्पर्य्यायाः,—केशरः केसरः सिंहकेशरः वकूलः वरलब्धः सीधुगन्धः मकुलः मुकूलः स्त्रीमुखमधुः दोहलः मधुपुष्पः सुरभिः भ्रमरानन्दः स्थिरकुसुमः शारदिकः करकः विशारदः गूढ़पुष्पकः धन्वी मदनः मद्यामोदः चिरपुष्पः। गुणाः—शीतलः हृद्यः विषदोषहरः मधुरः कषायः मदाढ्यः हर्षदश्च। तस्य क्षीराढ्यं सुरभि शीतलं मधुरं स्निग्धकषायं मलसंग्राहि च। इति त्वक्फलपुष्पगुणाः। रा.नि.व.१०। "वकुलस्तुवरोऽनुष्णः कटुपाकरसो गुरुः। कफपित्तविषश्वित्रकृमिदन्तगदापहः॥" भा.। "मधुरश्च कषायश्च स्निग्धं संग्राहि वाकुलं। स्थिरीकरञ्च दन्तानां विशदं फलमुच्यते॥" सु.सू.४६अ.।

**वकुलपुष्पम्।** क्ली। वकुलकुसुमे। अम.।

**वकुला।** स्त्री। कटुक्यां। कट्की। रा.नि.व.६।

**वकुली।** स्त्री। काकोल्यां। কাঁকলা। श.च.।

**वकुशः।** पुं। पर्णमृगभेदे।

**वकेरुका।** स्त्री। बलाकायां। मे.।

**वर्त्ततीक्ष्णम्** । क्ली । वृत्तलौहे । विद्‌ग्नी । रा.नि.व.१३ ।

**वर्त्तनम्** । क्ली । परिवर्त्तने । भा.म.३म,अम. चि. । विवृत्तस्य वर्त्तुलीकरणकर्म्मणि । अल्पकम्पन कर्म्मणि । सु.सू.७म. । जीवने । मे. । पुं । वामने । मे. । [ पेषणि । ग्र.र. ।

**वर्त्तनी** । स्त्री । तर्कुपीठिकायाम् । त्रिका. ।

**वर्त्तलो(लौ)हम्** । क्ली । लौहविशेषे, वृत्त-लौहे । विद्‌ग्नी । वम्. पञ्चरसलौह । तत्पर्य्याया:, —वर्त्तकं वर्त्ततीक्ष्णं लोहसङ्करं नीलकं नीलजं नीलुलौहं । गुणा:—कटु तिक्तं शीतलं कफदाह-पित्तघ्नं मधुरं पित्तदाहश्रमनञ्च । रा.नि.व.१३ ।

**वर्त्ति:** । स्त्री । दशायाम् । বাতি, শল্তে । प.प्र. । नेत्राञ्जनशलाकायां । सि.यो.अ.श्वा.चि. । गात्रानुलेपने । मे. । गुदमार्गप्रवेश्यौषधभेदे ।

**वर्त्ति(र्त्ती)क:** । पुं । वन्यचटके, वर्त्तिक-पक्षिणि । हिं वटेर गुड़गुड़ । अम. । च.सू.२७अ. । वातचटके । বাবুই । हिं वगेरि । तत्पर्य्याया:, —वर्त्तिनी वर्त्तिका वर्त्तक: वर्त्ती वर्त्तीक: गाञ्जिकाय: । "वर्त्तीको वर्त्तिकश्चैवस्ततोऽन्या-वर्त्तका: स्मृता: ।" गुणा:—"वर्त्तीकोऽग्निकर: शीतोज्वरदोषत्रयापह: । सुरुच्य: शुक्रदो बल्यो वर्त्तिकोऽल्पगुणस्तत: ॥" भा. ।

**वर्त्तिका**
**वर्त्तिनी** } स्त्री । पिष्टकविशेषे । च.चि.२अ. । तित्तिरपक्षिणि । वै.निघ. । वर्त्तक-पक्षिणि । বটের পাখী । अम. । पक्षिविशेषे, वनचटकायाम् । বাবুই পাখী, তালচটা । त्रिका. । च.सू.२७अ. । गुणा:—"वर्त्तिका मधुरा रुक्षा कफमारुतनाशिनी ।" राज.३प. । मेष-शृङ्ग्याम् । अजशृङ्ग्याम् । তীৎপুঞ্জী । प.मु. । रा.नि.व.९ ।

**वर्त्ति(र्त्ती)र:** । पुं । कपिञ्जलसदृशपक्षिणि, तित्तिरपक्षिणि । च.सू.२७अ. ।

**वर्त्ती** । स्त्री । वर्त्तिकायाम् । বাতি । प.प्र. । लेपनचूर्णे । पुं (इन्) । वनचटके । वै.निघ. ।

**वर्त्तुलम्** । क्ली । गृञ्जने । गाजर इति भाषा । रा.नि.व.७ । गुण्ठहृणे । वै.निघ. । पुं । कलाय-भेदे । গোটূল কলায়, মটর । हिं केराव । श. मा. । टङ्कणक्षारे । मणिभेदे । व.निघ. ।

**वर्त्तुलफलम्** । क्ली । कालिङ्गफले । তরমুজ । वै.निघ. ।

**वर्त्तुली** । स्त्री । गजपिप्पल्याम् । रा.नि.व.६ ।

**वर्त्म** (न्) । क्ली । नेत्रपक्ष्मणि । मे. ।

**वर्त्मकर्दमम्** । क्ली । नेत्रवर्त्मगतरोगविशेषे । लक्षणं—"क्लिन्नं पुन: पित्तयुक्तं विदहेच्छोणितं यदा । तदा क्लिन्नत्वमापन्नमुच्यते वर्त्मकर्दमम् ॥" सु.उ.३अ. ।

**वर्त्मकुन्द:** । पुं । अश्वस्य नेत्ररोगभेदे । लक्षणं— "चक्षुषी यस्य वाहस्य पूयस्रावी विजायते । वर्त्मकुन्द इति ख्यातस्तस्य कुर्य्यात् क्रियामिमाम् ॥" ज.द. ।

**वर्त्मनिमेष:** । पुं । नेत्रवर्त्मगत रोगविशेषे । तल्लक्षणं यथा,—निमेषिणी: शिरा वायु: प्रविष्टो सन्धिसंश्रया: । चालयत्यक्षिवर्त्मानि निमेष इति तद्विदु: ॥" मा.नि. ।

**वर्त्मबन्ध: (क:)** । पुं । नेत्रपक्ष्मगतरोगे । लक्षणं यथा—"कण्डूमताल्पतोदेन वर्त्मशोफेन यो नर: । न समं छादयेदक्षि भवेद्बन्ध: स वर्त्मन: ॥" सु.उ.३अ. । [ निघ. ।

**वर्त्ममाक्षिकम्** । क्ली स्वर्णमाक्षिके । वै.

**वर्त्मराग:** । पुं । नेत्रपक्ष्मगतरोगे । निदानादि —"पृथग्दोषा: समस्ताश्च यदा वर्त्मव्यपाश्रया: । शिरा व्याप्यावतिष्ठन्ते वर्त्मस्वधिकमूर्च्छिता: । विवर्द्ध्य मांसं रक्तञ्च तदा वर्त्मव्यपाश्रयान् । विकारान् जनयन्त्याशु......॥" ते च बहुविधा: यथा—उत्सङ्गिनी कुम्भीका पोथक्य: वर्त्मशर्करा अर्शोवर्त्म शुष्कार्श: अञ्जनिका बहलवर्त्म वर्त्मबन्धक: क्लिष्टवर्त्म कर्दमवर्त्म श्यावर्त्म प्रक्लिन्नवर्त्म अक्लिन्न-वर्त्म वाताहतवर्त्म वर्त्मार्बुदं निमेषिणी शोणितार्श: लगण: विषवर्त्म पक्ष्मकोपश्चेति । सु.उ.३अ. । "सर्व्वरोगनिदानोक्तैरहितै: कुपिता मला: । अक्षि-चुष्यविशेषेण प्राय: पित्तानुसारिण: । शिराभि-रूर्द्ध्वं प्रसृता नेत्रावयवमाश्रिता: । वर्त्मसन्धिं सितं कृष्णं दृष्टिं वा सर्व्वमक्षि वा । रोगान् कुर्य्यु:...॥" वर्त्मरोगा: चतुर्विंशति:—कृच्छ्रोन्मील: निमेष: वाताहतं कुम्भीसंज्ञा पित्तोत्क्लिष्टं पक्ष्मशात: पोथकी कफोत्क्लिष्टं लगण: उत्सङ्गाख्या रक्तोत्क्लिष्टम् अधिमांसम् अञ्जननामिका विषवर्त्म उत्क्लिष्टवर्त्म श्याववर्त्म क्लिष्टवर्त्म सिकतावर्त्म कर्दमवर्त्म बहलवर्त्म अलजी कुकूणक: पक्ष्मरोध:



अर्बुदश्चेति । एषु कृच्छ्रोन्मीलनाख्यो भेषजै: साध्य: । निमेषवाताहते अर्शश्च वर्ज्यम् । पक्ष्मरोधो याप्य: । शेषानेकोनविंशतिविधान् शस्त्रेणोपाचरत् । तेषु पक्ष्मसदनं कुट्टयेत् सूचीकूर्चेन अर्व्वुदं वृद्धिपत्रेण लगणादीनि व्रीहिमुखेन पोथक्यादय: कुकूणकान्ता: एकादश विलेख्या: । उत्क्लिष्टचतुष्टयं यथा—पित्तोत्क्लिष्टं कफोत्क्लिष्टं रक्तोत्क्लिष्ट-मुत्क्लिष्टवर्त्म चेति । वा.उ.९अ. । एषां लक्षणानि पर्य्यायेषु मृग्याणि । अश्वस्य नेत्रवर्त्मगतरोगे । ज.द.३०अ. ।

**वर्त्मशर्करा** । स्त्री । नेत्रवर्त्मगतरोगविशेषे । लक्षणं—"पिड़काभि: सुसूक्ष्माभिर्घनाभिरभिसंवृता । पिड़का या खरा स्थूला सा ज्ञेया वर्त्मशर्करा ॥" सु.उ.३अ. ।

**वर्त्मार्व्वुदम्** । क्ली । नेत्रवर्त्मगतरोगभेदे । लक्षणं—"वर्त्मान्तरस्थं विषमं ग्रन्थिभूतमवेदनम् । विज्ञेयमर्व्वुदं पुंसां सरक्तमवलम्बितम् ॥" सु.उ.३अ. ।

**वर्द्धम्** । क्ली । शीषके । हे.च. ।

**वर्द्ध: (क:)** । पुं । ब्राह्मणयष्टिकायाम् । বামন-হাটী । जटा. । अम. ।

**वर्द्धनम्** । क्ली । छेदने । मे. । पुं । पक्षोखद्वचे । वम्. पखोड़ा । कों पाचवंद । दन्तमूलगतखलो-वर्द्धनसंज्ञकमुखरोगे । लक्षणं यथा—"मारुते-नाधिको दन्तो जायते तीव्रवेदन: । वर्द्धन: स मतो व्याधिर्जाते रुक् च प्रशाम्यति ॥" सु.नि.१६अ. । स्त्री (नी) । सम्मार्ज्जन्याम् । ঝাড়ন । हे.च. ।

**वर्द्धमान:** । पुं । एरण्डवृक्षे । अम. । वै.निघ. २भ.ज्व.चि.रसपर्पटी । श्वेतैरण्डे । रा.नि.व.८ । सु.कल्प.७अ. । मधुरमातुलुङ्गे । पशुभेदे । शरावे । मे. ।

**वर्द्धमानक:** । पुं । एरण्डवृक्षे । मधुरमातुलुङ्गे । वै.निघ. । शरावे । अम. ।

**वर्द्धमानपिप्पली** । स्त्री । योगविशेषे । "त्रिवृद्धा पञ्चवृद्धा वा सप्तवृद्धाथवापि वा । गव्यक्षीरेण संपिष्टा पिबेद्दशदिनानि च । तथैवाप-नयेदेता एवं विंशतिवासरान् । पिबतां ज्वरशान्ति: स्यात् पाण्डुरोगश्च शाम्यति...... ॥" रस.र. ।

**वर्द्धमानसट्टकम्** । क्ली । सट्टकभेदे । यथा— "सान्द्रं दधि गृहीत्वा तु किञ्चिन्मण्डं च मन्थयेत् । शर्करा मरिचं शुण्ठी पिप्पली जीरचूर्णकं । निक्षिप्य च यथायोग्यं हस्तेनालोड्य यत्नत: । वस्त्रेण गालयेत् तस्मिन् पक्वदाड़िमबीजकं । निक्षिप्य सिद्धमेतत्तु सट्टकं वर्द्धमानकम् । गुरु दीप्तिकरं रुच्यं बलदं तृप्तिकारकं । कफवातञ्च पित्तञ्च श्रमं ग्लानिं तृषां जयेत् ॥" वै.निघ.द्रव्य.गु. । [ ११ ।

**वर्द्धमाना** । स्त्री । मधुरबीजपूरके । रा.नि.व.

**वर्द्ध्रम्** । क्ली । चर्म्मणि । চাম্ড়া । उणा. । स्त्री (ध्री) । चर्म्मरज्वाम् । अम. ।

**वर्प:** । पुं । रूपे । उणा. ।

**वर्म्म:** । पुं । पर्पटके । ক্ষেৎপাপড়া । भा.म.१ भ.ज्व.चि.विश्वादियोगे । "विश्वावर्म्मविभावरीयुग-वरा ।"

**वर्म्मकण्टक:** । पुं । पर्पटके । ক্ষেৎপাপড়া । रा.नि.व.५ ।

**वर्म्मण:** । पुं । नागरङ्गवृक्षे । त्रिका. ।

**वर्म्मि: (र्म्मी[इन्])** । पुं । नादेयमत्स्यविशेषे । বাইণ মাছ । गुणा:—"वर्म्मिमत्स्यो गुरुर्वृष्य: कषायो रक्तपित्तहा ।" राज.३प. । अपिच,— "वर्म्मिमत्स्यो हरेद्वातं पित्तं रुचिकरो लघु: ।" भा. ।

**वर्म्मूष:** । पुं । मत्स्यविशेषे । বামিরুষ মাছ । गुणा:—"वर्मूषो वातहा स्निग्धो ग्राही दोषविना-शन: ।" राज.३प. ।

**वर्य्या** । स्त्री । भुक्ताढ़क्यां । টৌঙর কলায় । प.मु. । आढ़क्याम् । রহর । रा.नि.व.१६ । युवतीस्त्रियाम् ।

**वर्य्याञ्जनम्** । क्ली । रसाञ्जने । वै.निघ. ।

**वर्व्वट: (टी)** । पुं, स्त्री । स्वनामख्यातकलाये । बर्बटी । उत्. बरगुड़ि । त्रिका. । See राजमाष: ।

**वर्व्वणा** । स्त्री । नीलमक्षिकायाम् । अम. ।

**वर्व्वर:** । पुं । मत्स्यविशेषे । तल्लक्षणं यथा— "पृष्ठे कुब्जो कण्टको दीर्घतुण्ड: सर्पाभो य: सोऽप्ययं वर्व्वराख्य: ।" गुणा:—वाताटोपकर: जड़: बल्य: स्निग्ध: दुर्जर: वीर्य्यवर्द्धनश्च । रा.नि. व.१७ । स्वनामख्यातकण्टकवृक्षे । বাবলা গাছ । हिं बावल । गुणा:—कषायोष्ण: कफकासघ्न: आमरक्तातिसारघ्न: पित्तार्शोघ्नश्च । रा.नि.व.८ । कृष्णार्ज्जके । কাল বাবুই । हिं कालीबाबरी तत्पर्य्याया:,—सुमुख: गरघ्न: कृष्णवर्व्वरक:

सुकन्दज: गन्धपत्र: पूतगन्ध: सवाहक: । गुणा:—कटु: उष्ण: सुगन्धि: वान्तिविसर्पविषघ्न: त्वग्दोषघ्नश्च । रा.नि.व.१० । वैजयन्तीतुलसीवृक्षे । नखीनामगन्धद्रव्ये । व्याघ्रनखे । नखी । वै.निघ. । क्ली । बोलनामगन्धद्रव्ये । रा.नि.व.६ । हिङ्गुले । रा.नि.व.१३ । सिन्दूरे । वै.निघ. । पीतचन्दने । गुणा:—शीतलं तिक्तं कफपित्तवातघ्नं कण्डूकुष्ठ-व्रणघ्नं रक्तशोधकञ्च । रा.नि.व.१२ ।

**वर्व्वरक:** । पुं । विन्ध्योत्तरप्रसिद्धे नदे । तज्जलं शीतजलवद्गुणम् । रा.नि.व.१४ । क्ली । वर्व्वर-चन्दने । स्त्री (का) । भार्ग्याम् । वामनहाटी । वै.निघ. ।

**वर्व्वरगन्ध:** । पुं । श्वेतरक्तमिश्रचन्दनविशेषे । वर्व्वरगन्धेति भाषा । বর্ব্বর চন্দন । तत्पर्य्याया:,—वर्व्वरीत्थं श्वेतवर्व्वरकं शीतं सुगन्धि: पित्तारि: सुरभि: । गुणा:,—शीतस्तिक्त: वातपित्तकफकुष्ठ-कण्डूव्रणनाशक: रक्तसंशोधकश्च । वै.निघ. ।

**वर्व्वरा (री)** । स्त्री । भार्ग्याम् । वामनहाटी । कर्णस्फोटायाम् । কাণছিড়া । वै.निघ. । वन-तुलस्याम् । বাবুই তুলসী । तत्पर्य्याया:,—असुरसा वर्व्वी कवरी तुङ्गी खरपुष्पा अजगन्धिका अजगन्धा कवरा खरपुष्पिका । सा त्रिधा कृष्णशुक्लवटपत्रभेदेन । सा. गुणा:—वर्व्वरीतितयं रूक्षं शीतं कटु विदाहि च । तीक्ष्णं रुचिकरं हृद्यं दीपनं लघुपाकि च । पित्तलं कफवातास्र-दद्रुक्रिमिविषापहम् ॥" भा. । शाकविशेषे । पुष्पविशेषे । मे. । मक्षिकाभेदे । श.र. ।

**वर्व्वराह्वयम्** । क्ली । वर्व्वरचन्दने । वै.निघ. ।

**वर्व्वरीक:** । पुं । बोले । वै.निघ । भार्ग्याम् । वामनहाटी । उणा. । तुलसीभेदे । বাবুই তুলসী । श.च. । महाकाले । মাকাল । हे.च. ।

**वर्व्वरीगन्धा** । स्त्री । कर्णस्फोटायाम् । वन-तुलस्याम् । वै.निघ. ।

**वर्व्वरोत्थम्** । क्ली । वर्व्वरचन्दने । শ্বেত রক্ত চন্দন । वै.निघ. ।

**वर्व्वी** । स्त्री । वर्व्वरिकायाम् । বাবুই তুলসী । श.च. ।

**वर्व्वूर: (क:)** । पुं । (Acacia arabica.) The Babhul tree. वर्व्वूलवृक्षे । বাবলা গাছ । हिं बाबुल । तें नल्लतुम्ब-नल्लतुम्म । वम्, रीमकड़ि । बाभूल । उत्, गइडा । द्रा. कलिक्कि-कर । तत्पर्य्याया,:—युगलाक्ष: कण्टालु: तीक्ष्ण-कण्टक: गोशृङ्ग: पङ्क्तिवीज: दीर्घकण्टक: कफान्तक: दृढ़वीज: अजभक्ष: । गुणा:—कषाय उष्ण: कफकासघ्न: आमरक्तातिसारपित्तदाहार्शो-घ्नश्च । रा.नि.व.८ ।

**वर्ष:** । पुं, क्ली । वृष्टौ । वत्सरे । अम. ।

**वर्षकरी** । स्त्री । झिल्ल्याम् । हे.च. ।

**वर्षकाली** । स्त्री । जीरके । वै.निघ. ।

**वर्षकेतु:** । पुं । रक्तपुनर्नवायाम् । रा.नि.व.५ । शुक्लपुनर्नवायाम् । वै.निघ. ।

**वर्षणम्** । क्ली । वर्षोपले । त्रिका. । वृष्ट्यां । वृष्टि । श.र. ।

**वर्षपाकी (इन्)** । पुं । आम्रातकवृक्षे । हे.च. ।

**वर्षपुष्पा** । स्त्री । महाबलायां । रा.नि.व.४ ।

**वर्षप्रिय:** । पुं । चातकपक्षिणि ।

**वर्षवर:** । पुं । नपुंसके, षण्ढे । খোজা । अम ।

**वर्षा** । स्त्री । कृष्णजीरके । रा.नि.व.६ । मद व. २ । स्वनामख्याते ऋतौ (नित्यबहु.) । বর্ষাকাল । तत्पर्य्याया:,—प्रावृट् प्रावृट् प्रावृषा घनकाल: घनाकर: मेघागम: जलदागम: जलार्णव: चातकानन्द: वर्षी तपात्यय: । नभोनभस्यौ सिंह-कन्ये वा वर्षा: । "सिंहकन्ये स्मृता वर्षा: ।" वर्षागुणा:—"शीता विदाहिन्यो वह्निमान्द्यानिल-प्रदा: ।" भा. ।

**वर्षाघोष:** । पुं । महाभेके । বড় ব্যাং, সোণা ব্যাং । रा.नि.व.१९ ।

**वर्षाङ्गी** । स्त्री । पुनर्नवायाम् । श.र. ।

**वर्षाप्रिय:** । पुं । चातकपक्षिणि । त्रिका. ।

**वर्षाभव:** । पुं । पुनर्नवायां रक्तपुनर्नवायाम् । रा.नि.व.५ ।

**वर्षाभू:** । पुं । भेके । अम. । भूलतायाम् । কেঁচো । मे. । इन्द्रगोपकीटे । আষাঢ়ে পোকা । रा.नि.व.१९ । स्त्री । पुनर्नवायां । रा.नि.व.५ । भेकपत्न्यां । रक्तपुनर्नवायां । प.मु. । श्वेत-पुनर्नवायां । च.द.ज्व.चि.शीतद्रतैले । "वृश्चीरश्च वर्षाभू: ।"

**वर्षाभूशाक:** । पुं । पुनर्नवाशाके । শ্বেত-পুন্না শাক । मं घेण्टुल । कां बेल्लड़किलु । गुणा:—कफाग्निमान्द्यवातघ्न: रुच्यतर: गुल्मप्लीहशूलघ्नश्च । रा.नि.व.७ ।



**वर्षाभ्वी** । स्त्री । पुनर्नवायाम् । भेकपत्न्याम् ।

**वर्षामद:** । पुं । मयूरे । शब्दकल्प. । [शब्दकल्प. ।

**वर्षाश्म:पारणव्रत:** । पुं । चातकपक्षिणि ।

**वर्षाल:** । पुं । स्पृक्कायाम् । পিড়িং । वै.निघ.

**वर्षालङ्कायिका** । स्त्री । स्पृक्कायां । পিড়িং শাক । अ.टी.भ. ।

**वर्षावती** । स्त्री । भूकीटविशेषे । ইন্দ্রগোপ কীট । भेकपत्न्याम् । अम. । पुनर्नवायाम् । अमरमाला ।

**वर्षावसान:** । पुं । शरत्काले । रा.नि.व.२१ ।

**वर्षाहिक:** । पुं । निर्विषसर्पभेदे । হেলে সাপ । सु.कल्प.४अ. । [राममण्डूरे ।

**वर्षाह्वा** । पुं । पुनर्नवायाम् । च.द.शूल चि.

**वर्षोपल:** । पुं । मेघोद्भवशिलायां । अम. ।

**वर्ष्मम्** । क्ली । शरीरे । द्विरूपकोष: । [अम. ।

**वर्ष्म (न्)** । क्ली । शरीरे । रा.नि.व.१८ । प्रमाणे ।

**वर्ह:** । पुं, क्ली । मयूरपुच्छे । अम. । ग्रन्थिपर्ण-भेदे । গেঁটেলা । भरत: । पत्रे । श.र. ।

**वर्हणम्** । क्ली । तगरपुष्पे । তগরপাদুকা । पिण्डीतगरे । रा.नि.व.१० । पत्रे । श.र. ।

**वर्हनेत्रम्** । क्ली । मयूरपुच्छचन्द्रके । ময়ূর-পুচ্ছের চাঁদ । वै.निघ. ।

**वर्हपुष्प:** । पुं । शिरीषवृक्षे । रा.नि.व.९ । नीलझिण्ट्याम् । নীলঝাঁটী । रा.नि.व.१० । ग्रन्थिपर्णे । গেঁটেলা । वै.निघ. ।

**वर्हभार:** । पुं । मयूरपुच्छे । वै.निघ. ।

**वर्हि:** । पुं । चित्रकवृक्षे । अम. । अग्नौ । मे. । मयूरे । वै.निघ. । पुं, क्ली (स्) । दर्भे । कुशे । त्रिका. । ग्रन्थिपर्णे । গেঁটেলা । श.र. ।

**वर्हिकुसुमम्** । क्ली । ग्रन्थिपर्णपुष्पे । গেঁটেলা । श.च. ।

**वर्हिचूड़: (ड़ा)** । पुं, स्त्री । ग्रन्थिपर्णभेदे । वै.निघ. । मयूरशिखायाम् । रा.नि.व.५ ।

**वर्हिजङ्घ:** । पुं । पृथुशिम्बश्योणाके । শোণা গাছ । रा.नि.व.९ । स्त्री (ङ्घा) । पीतरोध्रे । वै.निघ. ।

**वर्हिण:** । पुं । मयूरे । अम. । क्ली । तगरे । पिण्डीतगरे । वै.निघ. ।

**वर्हिपित्तम** । क्ली । मयूरपित्ते ।

**वर्हि(र्हि:)पुष्प:** । पुं । शिरीषवृक्षे । रा.नि.व.९ । नीलझिण्ट्याम् । रा.नि.व.१० । क्ली । ग्रन्थिपर्णविशेषे । अ.टी.भ. ।

**वर्हिशिख:** । पुं । स्थौणेयके । গাঁটিয়ালা । रा.नि.व.११ । स्त्री (खा) । लघुधातक्यां । ছোট ধাইফুল । भा.म.३भ.मू.घा.चि. । मयूरशिखा-याम् । वै.निघ. ।

**वर्हिष्ठम्** । क्ली । बालके । বালা । प.मु. । भा. ।

**वर्ही (इन्)** । पुं । कुक्कुट्यां । प.मु. । मयूरे । अम. ।

**वलम्** । क्ली । व्यायामगम्यशक्तौ । सु.सू.१०अ. ।

**वलभ:** । पुं । सौम्यकीटभेदे । सु.कल्प.८अ. ।

**वलयम्** । क्ली, पुं । करभूषणे । বালা । अम. । पुं । तन्नामककण्ठगतरोगे, गलगण्डरोगे । लक्षणं—"वलास एवायतमुन्नतञ्च शोफं करोत्यन्नगतिं निवार्य । तं सर्व्वथैवाप्रतिवार्य्यवीर्य्यं विवर्ज्जनीयं वलयं वदन्ति ॥" सु.नि.१६अ. ।

**वलवती** । स्त्री । सूक्ष्मेलायां । रा.नि.व.६ ।

**वला** । स्त्री । (Sida cordifolia.) वाट्या-लके । বাড়িয়ালা । हिं खिरिहिटा, वरिआरि, सहदेवी, ककहिया, गुल्शकरी । तत्पर्य्याया:, वाट्यालक: बलिनी समङ्गा ओदनिका ओदनी भद्रा भद्रोदनी खरकाष्ठिका कल्याणिनी भद्रवला मोटा पाटी वलाढ्या शीतपाकी वाटिका वाटी वाट्या वाट्यालो निलया । बला चतुर्धा—बला अतिबला महाबला नागबला चेति । सा. गुणा:—"बलाचतुष्टयं शीतं मधुरं बलकान्तिकृत् । स्निग्धं ग्राहि समीरास्रपित्तास्रक्षतनाशनम् । बलामूलत्वचश्चूर्णं पीतं सक्षीरशर्करम् । मूत्रातिसारं हरति दृष्टमेतन्न संशय: । हरेन्महाबला कृच्छ्रं भवेद्वातानुलोमनी । हन्यादतिबला मेहं पयसा सितया समम् ॥" भा. । श्वेतवाट्यालके । रा.सा.सं. । सु.सू.३९अ संशोधने । च.सू.४अ.वल्य. व. । च.द.ज्व.चि. । "काकजङ्घा बला श्यामा ।" वा.पि.ज्व.चि, । "निदिग्धिका बला रास्ना ।" गोरक्षाम् । গোরক্ষচাকুলিয়া । च.स.४अ. वृंहणे ।

**वलाकः** । पुं । वकजातौ । भ. । स्त्री (का) । क्षुद्रवकपक्षिणि । च.सू.२७अ. ।

**वलात्रयम्** । क्ली । श्वेतबला पीतबला नागबलासु । গোরক্ষচাকুলিয়া, শ্বেত বেড়েলা, পীত বেড়েলা । च.द.वा.व्या.चि. । "वाजिगन्धा बलाश्लिष्टः ।" वै.निघ २भ.वा.व्या.चि.महाराश्नादौ ।

**वलाद्वयम्** । क्ली । बलातिबलयोः শ্বেত বেড়েলা, গোরক্ষচাকুলিয়া । च.द.यक्ष्म.चि. विन्ध्यवासियोगे । वातघ्नमेतत् । "दशमूलं बलाद्वयम् ।" वा.सू.१५अ.भद्रदार्व्वादिः । सु.सू.३९अ.

**वलाहकः** । पुं । मेघे । मुस्तके । अम. । दर्वीकरसर्पविशेषे । सु.कल्प.४अ. ।

**वलिः** । पुं । गन्धके । प.म. । स्त्री । वलयौ । मा.नि.अर्शः.चि. । मांसलोलतायाम् । वै.निघ. ।

**वलिग्रहः** । पुं । अश्वस्य ग्रहविशेषे । लक्षणं यथा—"स्तम्भाद्यो मुच्यते शीघ्रैस्तथा वालैः खुरैरपि । वलिग्रहगृहीतोऽसौ स्तब्धकर्णशिरोधरः ॥" ज.द. ५७अ. ।

**वलित्रयम्** । क्ली । प्रवाहिणी संवरणी विसर्जनी चेति त्रिविधगुदस्थवली । मा.नि.अर्शःचि. । "विद्याद्गुदवलित्रये ।"

**वलिरः** । त्रि । केकरे । अम. ।

**वली** (इन्) । पुं । कफे । रा.नि.व.२१ ।

**वली** । स्त्री । मांसलोलतायाम् । रा.नि.व.१८ ।

**वलूकम्** । क्ली । पद्ममूले । पुं । पक्षिभेदे । उणा. ।

**वल्कम्** । क्ली । वृक्षत्वचि । গাছের ছাল । मे. । शल्के । আঁইষ । श.र. । पुं । पट्टिकारोध्रे । रा.नि.व.६ ।

**वल्क(ल)तरुः** । पुं । पूगवृक्षे । গুবাকগাছ । रा.नि.व.११ ।

**वल्क(ल)द्रुमः** । पुं । भूर्ज्जवृक्षे । रा.नि.व.९ ।

**वल्कपत्रः** । पुं । हिन्तालवृक्षे । হেঁতালগাছ । रा.नि.व.९ ।

**वल्कलम्** । क्ली । दारुचिनीति ख्याते गन्धद्रव्ये । দারুচিনি । रा.नि.व.६ । च.द.खदिरवल्याम् । वै.निघ.२भ.मधुरत्व.चि.मधुकादिकषाये । लोध्रे । च.सा.चि.जम्ब्वादिचूर्णे । पुं । दाड़िमवृक्षे । रा.नि.व.४ । लोध्रवृक्षे । तरुत्वचि । বাকল । अम. ।

**वल्कला** । } **वल्का** । } स्त्री । शुक्लपाषाणभेदे । শ্বেত পাথরকুচা । रा.नि.व.५ । तेजोवत्याम् । তেজবল । वै.निघ. ।

**वल्कली** (इन्) । पुं । श्वेतरोध्रवृक्षे । वै.निघ. ।

**वल्कलोध्रः** । पुं । पट्टिकारोध्रे । रा.नि.व.६ ।

**वल्कवान्** । पुं । मत्स्ये । त्रिका. ।

**वल्किलः** । पुं । कण्टके । श.र. ।

**वल्की** (इन्) । पुं । विभीतकवृक्षे । वै.निघ. ।

**वल्कुतम्** । क्ली । वल्कले । श.च. ।

**वल्गुः** । पुं । छागे । मे. ।

**वल्गुकम्** । क्ली । चन्दने शब्दकल्पे धनञ्जयः ।

**वल्गुजम् (जा)** । क्ली, स्त्री । सोमराज्याम् । সোমরাজ । रा.नि.व.४ । चि.क्रा.का.१अ. ।

**वल्गुपत्रः** । पुं । वनमुद्गे । মুগানী । श.च.

**वल्गुपोदकी** । स्त्री । राजशिराशाके । वै.निघ. ।

**वल्गुला (ली)** । स्त्री । सोमराज्याम् । সোমরাজ । रा.नि.व.२३ । मतुदपक्षिविशेषे । रा.नि.व.१९ । सु.सू.४६अ. । [ পোকা । हे.च. ।

**वल्गुलिका** । स्त्री । तैलपायिकायां । তেলা-

**वल्भनम्** । क्ली । भक्षणे ।

**वल्मि(ल्मी)कः** । पुं, क्ली । कृमिशैलके । উইঢিপি । अ.टी.भ. । श.र. । क्षुद्ररोगभेदे । लक्षणम्—"पाणिपादतले सन्धौ ग्रीवायामूर्द्धजत्रुणि । ग्रन्थिर्वल्मीकवद्यस्तु शनैः समुपचीयते ॥ तोदक्लेदपरीदाहकण्डूमद्भिः व्रणैर्वृतः । व्याधिर्वल्मीक इत्येष कफपित्तानिलोद्भवः ॥" सु.नि.१३अ. ।

**वल्मीकमृत्तिका** । स्त्री । कृमिशैलकमृदि । উই মাটী । र.सा.सं.रसकर्पूरे ।

**वल्मीकशीर्षम्** । क्ली । स्रोतोऽञ्जने । ত্রক্ত সুর্মা । रा.नि.व.१३ ।

**वल्मीकसम्भवा** । स्त्री । अलाबूविशेषे । नागश्वतुम्बी । मदनपालः ।

**वल्मीकिः** । पुं । वल्मीके । श.मा. ।

**वल्मीकूटम्** । क्ली । वल्मीके । हे.च. ।

**वल्यः** । पुं । तार्क्ष्ये । क्ली । त्वचि । গুড়ত্বক্ । रा.नि.व.६ । स्त्री (ल्या) । पातालगरुड़ीलतायाम् । त्रि । बलकरे ।



**वल्यावर्त्तः** । पुं । मत्स्यभेदे । বেলে মাছ । तन्मांसगुणाः,—"वल्यावर्त्तस्तु संग्राही कफपित्तविनाशनः ।" भा. ।

**वल्लः** । पुं । रक्तिकात्रयमाने । लीलावती । गुञ्जाद्वयमाने । प.प्र. । सार्द्धगुञ्जायाम् । राजनिघण्टुः । शस्यविशेषे । सल्लकीवृक्षे । वात्यालके । বেড়েলা । वै.निघ.२भ.चयरो.चि.लक्ष्मीविलासतैले । [ ११ ।

**वल्लकिः (की)** । स्त्री । सल्लकिवृक्षे । रा.नि.व.

**वल्लगुवाकपूगम्** । क्ली । कोङ्कणदेशीयपूगफलविशेषे । গুবাকবিশেষ । रा.नि.व.११ ।

**वल्लभः** । पुं । सुलक्षणाश्वे । कृष्णागुरुणि । राजशिम्ब्याम् । भा.पू.१भ.धा.व. । वैद्यवल्लभनामग्रन्थकारे ।

**वल्लभी** । स्त्री । मेथिकायाम् । वै.निघ. ।

**वल्लभेन्द्रः** । पुं । वैद्यचिन्तामणिग्रन्थकारे ।

**वल्लरम्** । क्ली । कृष्णागुरुणि । रा.नि.व.१२ । मञ्जर्य्याम् । श.र. ।

**वल्लरिः (री)** । स्त्री । चित्रकमूले । रा.नि.व.६ । मञ्जर्य्यां । अम. । मेथिकायाम् । মেথি । प.मु । रा.नि.व.६ । वचायां । वै.निघ. । लतायाम् ।

**वल्लवः** । पुं । पाचके । त्रिका. ।

**वल्लिः** । स्त्री । लतायाम् । अ.टी.भ. ।

**वल्लिकण्टकारिका** } **वल्लिकण्टारिका** } स्त्री । अग्निदमनीक्षुपे । শোলা । रा.नि.व.४ ।

**वल्लिका** । स्त्री । वृत्तमल्लिकायाम् । বেলফুল । रा.नि.व.१० । उपोदक्याम् । পুঁই । वै.निघ. ।

**वल्लि(ल्ली)जम्** । क्ली । मरिचे । रा.नि.व.६ । वै.निघ.ज्व.चि. । सप्तद्वे पुनर्नवादिः । चय.चि. चयकेशरीरसे । [ २अ. ।

**वल्लिजविषम्** । क्ली । पुष्पविषभेदे । सु.कल्प.

**वल्लि(ल्ली)दूर्व्वा** । स्त्री । मालादूर्व्वायाम् । শ্বেত দূর্ব্বা । मं पादरीहरियारी । विलियकन्ती । गुणाः—मधुरा तिक्ता शीता पित्तघ्नी कफवान्तिदाहतृष्णाघ्नी च । रा.नि.व.८ ।

**वल्लिशाकटपोतिका** । स्त्री । मूलपोतिकायाम् । কচি মূলা । रा.नि.व.७ ।

**वल्लि(ल्ली)शू[सू]रणः (णा)** । पुं, स्त्री । चत्यम्लपर्ण्यां । रा.नि.व.३ ।

**वल्ली** । स्त्री । कैवर्त्तिमुस्तायाम् । কেওটমুতা । रा.नि.व.३ । अजमोदायां । রাঙ্কুনী । मद.व.२ । चव्ये । চই । रा.नि.व.६ । अग्निदमन्याम् । শোলা । कृष्णापराजितायाम् । वै निघ. । कुष्माण्डादिलतायां । मे. । [ सू.१६अ. ।

**वल्लीकर्णः** । पुं । समविषमाल्पपालिकर्णे । सु.

**वल्लीखदिरः** । पुं । आरवनामखदिरभेदे । गुणाः—तिक्तः कटुः उष्णः कषायः अम्लरसः श्वासकासघ्नः पित्तरक्तविदोषघ्नश्च । वै.निघ. ।

**वल्लीगड़ः** । पुं । मत्स्यविशेषे । বেলে মাছ । বেলে গুড়গুড়ি । गुणाः—"वल्लीगड़ो लघूष्णोऽनभिष्यन्दी मलत्करः ।" राज.३प. ।

**वल्लीपञ्चमूलम्** । क्ली । लतापञ्चमूलं । विदारीसारिवारजनीगुड़ूच्योऽजशृङ्गी चेति । सु.सू. ३८अ. । एतत्तु कफनाशनं प्रशस्तम् । च.प्र.३ख. । सु.चि.१७अ. । [ निघ. ।

**वल्लीपलाशकन्दा** । स्त्री । भूमिकुष्माण्डे । वै.

**वल्लीफलम्** । क्ली । कर्कटिका दोलताफले । सु.चि.१४अ. । [ रा.नि.व.११ ।

**वल्लीबदरी** । स्त्री । भूबदर्य्याम् । মেটোকুল ।

**वल्लीमुद्गः** । पुं । मकुष्ठके । মুগানী । रा.नि.व.१६ । महाशालभेदे । है.निघ. ।

**वल्लीवृक्षः** । पुं । महासर्जवृक्षे । শাল গাছ । रा.नि.व.९ ।

**वल्लुरः** । पुं । ऋषभके । प.मु. । क्ली । मञ्जर्य्याम् । निर्ज्जलस्थाने । हे.च. ।

**वल्लूरम्** । क्ली । आतपादिना शुष्कमांसे । अम. । मांसे । भेष.बाल.चि. । च.सू.५अ. । शूकरमांसे । मे. । पुं । ह्रस्ववृत्तसमोभयपालिकर्णबन्धने । सु.सू.१६अ. । ऊषरभूमौ । हे.च. । स्त्री (रा) । शुष्कमांसे । शूकरमांसे । त्रिका. ।

**वल्वजा** । स्त्री । अश्वगन्धायाम् । मद.व.१ । धात्रीवृक्षे । আমলাগাছ । हारा. । प्रसारिण्याम् । গন্ধভাদুলিয়া । रा.नि.व.५ ।

**वल्वकम्** । क्ली । वास्तुकभेदे । प.मु. ।

**वल्वजः** । पुं । उलूपे । উলু খড় । हे.च. । च.चि.५अ । अम. ।

**वल्वजा** । स्त्री । तृणविशेषे । উলুবিশেষ । हिं साबे वागे । गुणाः—मधुरा शीतला पित्त-

दाहतृषाहरी वातकोपना रुच्या कण्ठशोधनी च। रा.नि.व.८।

**वब्बू(ब्बो)लः**। पुं। वर्व्वूरवृक्षे। বাবলা গাছ। तत्पर्य्यायगणाः,—"वब्बूलः किकिरातः स्यात् किंकिराटः सपीतकः। स एव कथित सजङ्घेराभा षट्पदमोहिनी॥ वब्बूलः कफनुद् ग्राही कुष्ठ-क्रिमिविषापहः॥" भा.।

**वब्बूलनिर्य्यासः**। पुं। वर्व्वूरवृक्षनिर्य्यासे। বাবলার আঠা। तद्गुणाः,—वब्बूलस्य तु निर्य्यासो ग्राही पित्तानिलापहः। रक्तातिसार-पित्तास्रमेहप्रदरनाशनः। भग्नसन्धानकः शीतः शोणितस्रुतिवारणः। [ मे.।

**वशा**। स्त्री। वन्ध्यायाम्। বাঁজা। करिण्यां।

**वशाव्यकः**। पुं। शिशुमारे। শুশোক। श.र.।

**वशा(सा)पायी** (इन्)। पुं। कुक्कुरे। श.मा.।

**वशाचारः**। पुं। चारे। र.मा.।

**वशिका**। स्त्री। अगुरुणि। श.च.। [ निघ.।

**वशिजाता**। स्त्री। पुत्रदात्रीलतायाम्। वै.

**वशिनी**। स्त्री। शमीवृक्षे। শাঁই গাছ। वन्दायाम्। পরগাছা। श.च.। लज्जालुकायाम्।

**वशिरम्**। क्ली। सामुद्रलवणे। रा.नि.व.६। पुं। गजपिप्पल्याम्। प.मु.। भा.म.१भ.। चव्ये। চই। रा.नि.व.६। च.द.अश्मरीचि.ऊषकादौ। मर्कटसंज्ञकतृणजातौ। अपामार्गे। আপাঙ। रा.नि.व.४। सु.चि.७अ.। रक्तापामार्गे। भा.पू.१भ.। सूर्य्यावर्त्तभेदे। শ্বেত হুড়হুড়ে। डल्वणः। भैष.अम्लपि.चि.वृहत्क्षुधावतीगुट्यां। च.द.शूल.चि, रामसण्डूरे। वचायां। বচ। श.च.।

**वशिष्ठः**। पुं। वशिष्ठीनामग्रन्थप्रणेतरि।

**वशीकरणम्**। क्ली। मणिमन्त्रौषधैरायत्ती-करणे।

**वशीरः**। पुं। गजपिप्पल्यां। जटा.। चविकायां। চই। अपामार्गे। আপাঙ। वै.निघ.।

**वश्यम्**। क्ली। लवङ्गे। श.च.।

**वश्या**। स्त्री। नीलापराजितायाम्। मद.व.१। गोरोचनायाम्। वै.निघ.। [ सु.८अ.।

**वश्यात्मा** (न्)। त्रि। वशीकृतचित्तेन्द्रिये। च.

**वषट्फलम्**। क्ली। कक्कोले। रा.नि.व.१२।

**वसनम्**। क्ली। तेजपत्रे। रा.नि.व.६। स्त्री (नी)। पीतकार्पासे। वै.निघ.।

**वसनाह्वयः**। पुं। तेजपत्रे।

**वसन्तः**। पुं। ऋतुभेदे। বসন্তকাল। तत्पर्य्यायाः,—पुष्पसमयः सुरभिः मधुः माधवः फल्गुः ऋतुराजः पुष्पमासः पिकानन्दः कान्तः कामसखः फाल्गुनानुजः। स च फाल्गुनचैत्रात्मकः। "वसन्तः कुम्भमीनयोः।" मधुमाधवौ वसन्त इति केचित्। गुणाः—"वसन्ती मधुरः स्निग्धः श्लेष्मवृद्धिकरश्च सः।" भा.। अतिसारे। श.र.।

**वसन्तकः**। पुं। पृथ्विव्यिश्योणाकभेदे। সোণা-বিশেষ। रा.नि.व.९।

**वसन्तकुसुमः**। पुं। वृक्षविशेषे। বসন্তফুলের গাছ। "वसन्तकुसुमः शेलुश्ययितोद्विजकुत्सितः।" श.मा.।

**वसन्तकुसुमाकरः**। पुं। वाजीकरणे प्रमेहाधिकारे च रसः। पाठः—"पृथक् द्वौ हाटकं चन्द्रं त्रयी वङ्गाहिकान्तकम्। चत्वारः शुद्धमभ्रञ्च प्रवालमौक्तिकन्तथा। भावना गव्यदुग्धेन भावनेक्षुरसेन च। वासालाक्षारसोदोच्यरम्भाकन्द-प्रसूनकैः। शतपत्ररसेनैव मालत्याः कुसुमोदकैः। पश्चान्मृगमदैर्भाव्यं सुगन्धिरससम्भवैः। गुञ्जाद्वयमिदं सेव्यं सितामध्वाज्यसंयुतम्...॥" कुङ्कुमोदकैः इति द्वितीयः पाठः। रस र.। "द्विभागं हाटकं चन्द्रम्" इति र.सा.सं.पाठः। हाटकं स्वर्णं। अहिः शीषकं। रम्भाकन्दप्रसूनकैः रम्भामूलरसः पुष्परसैश्च। शतपत्ररसेन पद्मपुष्परसेन। সোণা ২ ভ. রূপা ২ভ. (মতান্তরে কর্পূর), বঙ্গ শীষা এবং লৌহ প্রত্যেক ৩ ভ অভ্র, প্রবাল, মুক্তা প্রত্যেক ৪ ভ. একত্র করিয়া দুগ্ধ, ইক্ষুরস, বাসকছালের রস, লাহার কাথ, বালার কাথ, কলার এঁটের ও মোচার রস, পদ্মের রস, মালতীফুলের রস বা কাথ ও মৃগনাভির কাথে যথাক্রমে ভাবনা দিবে। মাত্রা ১ র.।

**वसन्तघोषी** (इन्)। पुं। कोकिले। वै.निघ.।

**वसन्तजा**। स्त्री। वासन्तीलतायां। शुक्ल-यूथिकायाम्। वसन्तीवृक्षे। ছোট বাসক। रा.नि.व.१०।



**वसन्ततिलकः**। पुं। वाजीकरणाधिकारे रसः। पाठः—"हेम्नो भस्मकतोलकं घनयुगं लौहात्त्रयः पारदाश्चत्वारो नियतास्तु वङ्गयुगलं चैकीकृतं मर्दयेत्। मुक्ताविद्रुमयो रसेन समता गोक्षुरवासेक्षुणा सर्व्वं वन्यकरीषकेण सुदृढातमं पचेत् सप्तधा। कस्तूरीघनसारमर्दितरसः पश्चात् सुसिद्धो भवेत्......।" रस.र.। रसा.सं.। স্বর্ণ ১ তো. অভ্র ২ তো. লৌহ ৩ তো. পারা ৪ তো বঙ্গ ২ তো. মুক্তা ২ তো. প্রবাল ২ তো.। क्ली। पुष्पभेदे।

**वसन्तदूतः**। पुं। आम्रवृक्षे। रा नि.व.११। कोकिले। रा.नि.व.१९। स्त्री (ती)। पाटलवृक्षे। পারুল গাছ। रा.नि.व.१०।२३। "पाटला वसन्तदूती।" डल्वणः। पुष्पवृक्षविशेषे, गणि-कारीति नाम्ना कोङ्कणे प्रसिद्धे। रा.नि.व.१०। कोकिलायाम्। रा.नि.व.१९। माधवीलतायां। रा.नि.व.२३।

**वसन्तद्रुः**। पुं। आम्रवृक्षे। त्रिका.।

**वसन्तपुष्पः**। पुं। धूलीकदम्बे। रा.नि.व.९।

**वसन्तमण्डनम्**। क्ली। सिन्दूरे। रक्तरज्ञे। वै.निघ.।

**वसन्तललना**। स्त्री। शुक्लयूथ्याम्। শ্বেত যূঁই। वै.निघ.।

**वसन्तव्रतः**। पुं। मसूरके। वै.निघ.।

**वसन्तार्त्तः**। पुं। विभीतकवृक्षे। वै.निघ.।

**वसन्तोत्सवमण्डनम्**। क्ली। हरिताले। वै.निघ.।

**वसा**। स्त्री। मेदायाम्। रा.नि.व.५। मांस-रोहिण्यां। मेदोधातौ। रा.नि.व.१८। शुद्धमांस-भवस्नेहे। চর্বী। भा.४भ.दारीचि.। सु.शा.४अ.। "शुद्धमांसस्य यः स्नेहः सा वसा परिकीर्त्तिता। मेदसः स्वयमाणस्य स्नेहो वा कथिता वसा॥" गुणाः— वसा मज्जा च वातघ्नौ बलपित्तकफप्रदा। शौकरी माहिषी वा सा वातला श्लेष्मवर्द्धिनी। सार्पनाकुलगौधेया लेपने व्रणकुष्ठहा॥" मत्स्यशिशु-मारमकरग्राहादीनां वसाप्येवं। सा विसर्पहरा हृद्या कुष्ठरोगविनाशिनी च। अत्रि.१४अ.।

**वसाढ्यः**। पुं। शिशुमारे। শুশুক। त्रिका.।

**वसादनी**। स्त्री। पीतशिंशपायाम्। वै.निघ.।

**वसामेहः**। पुं। वातजन्यप्रमेहरोगे। तत्र रोगी वसातुल्यं मेहति। सु.नि.६अ.।

**वसारोहम्**। क्ली। छत्रिकायाम्। কোঁড়ক-ছাতা। हारा.।

**वसिरम्**। क्ली। सामुद्रलवणे। धरणिः। गजपिप्पल्यां। अ.टी.। सु.सू.३८अ.।

**वसिरः**। पुं। सूर्य्यावर्त्तक्षुपे। হুড়হুড়ে। अपामार्गे। सु.सू.३८अ.वीरतर्व्वादिगणे। च.सू.४अ.। रक्तापामार्गे। भा.। मर्कटपिप्पलीनामतृणजातौ, अपामाग इति प्रसिद्धिः। डल्वणः। वारिनिम्बे। जलनिम्। कोषान्तरम्।

**वसी** (इन्)। पुं। जलनकुले। ধেড়ে।

**वसु**। क्ली। रत्ने। धने। अम.। हाटके। स्वर्णे। विश्व.। चारनृत्तिकायाम्। সোরা। औषधे। वै.निघ.। वृद्धौषधे। मे.। जले। उष्णे। पुं। वकवृक्षे। अम.। श्वेतरक्तवस्तुके। শ্বেত রক্ত বাসনা। रा.नि.व.५। श्वेतार्के। वै.निघ.। पीतमुद्गे। हे.च.। अग्नौ। रश्मौ। त्रि। मधुरे। शुष्के। हे.च.। स्त्री। ऋद्धौ। वृद्धौ। श.र.।

**वसुकम्**। क्ली। शाम्भरलवणे। अम.। पांशु-लवणे। रा.नि.व.६। कृष्णागुरुणि। रा.नि.व.१२। चारलवणे। भा.पू.२भ.। वकपुष्पे। वास्तूकशाके।

**वसुकः**। पुं। स्वनामख्यातक्षुपे। বাসনা গাছ। स च श्वेतरक्तपुष्पभेदात् द्विविधः। सा. गुणाः—कटुः तिक्त उष्णः पाके शीतलः अजीर्ण-गुल्मघ्नश्च। तयोः श्वेतो रसायनः। रा.नि.व.५। तच्छाकगुणाः—कफाग्निमान्द्यवातहरः रुच्यतरः गुल्मप्लीहशूलघ्नश्च। रा.नि.व.७। च.द.दूषकादौ। सु.चि.७अ.। अर्कवृक्षे। सु.सू.३८अ.। च.सू.४अ.। रक्तार्के, मन्दारार्के। रा.नि.व.१०। पीतमुद्गे। वै. निघ.। वकपुष्पवृक्षे।

**वसुकोदरम्**। क्ली। तालीशपत्रे। रा.नि.व.६।

**वसुचारुकम्**। क्ली। स्वर्णे। वै.निघ.।

**वसुच्छिद्रा**। स्त्री। महामेदायां। रा.नि.व.५।

**वसुद्रुमः**। पुं। उदुम्बरवृक्षे। যজ্ঞডুমুর। वै.निघ.।

**वसुधा (खर्जूरिका)**। स्त्री। भूखर्जूरि-कायां, खर्जूरीवृक्षे। ছোট খেজুর গাছ। रा.नि.व.११।

**वसुधांशुः** । पुं । पांशुलवणे ।
**वसुश्रेष्ठम्** । क्ली । रूप्यधातौ । रा.नि.व.१३ ।
**वसुस्थितिः** । स्त्री । निर्गुण्डीवृक्षे । वै.निघ. ।
**वसुहट्टः (कः)** । पुं । वकवृक्षे । प.मु. । श.मा. ।
**वसूच्चारः** । पुं । मृत्तिकालवणे । वै.निघ. ।
**वसूकम्** । क्ली । वकपुष्पे । हि.की. । साम्भर-
लवणे । हे.च. ।

**वसूत्तमम्** । क्ली । रौप्ये । वै.निघ. ।
**वस्कयनीत्क्षीरम्** । क्ली । प्रवृद्धवत्सायाः क्षीरे ।
বেঁড়োগাইয়ের দুধ । सु.चि.१अ. । गुणाः—
त्रिदोषघ्नं तर्पणं बलकृत् । भा. ।
**वस्कराटिका** । स्त्री । वृश्चिके । हारा. ।
**वस्तः** । पुं । छागे । छागल ।
**वस्तकम्** । क्ली । कृत्रिमलवणे ।
**वस्तपयः** । क्ली । छागदुग्धे
**वस्तमूत्रम्** । क्ली । छागमूत्रे ।
**वस्तान्त्री** । स्त्री । छागलान्त्रीवृक्षे । तत्पर्य्यायाः,
—वृषगन्धाख्या वृषपत्रिका मेषान्त्री अजान्त्री
वृषगन्धा । तद्गुणाः—कटुः कासघ्नी वीजप्रदा
गर्भकरनी च ।

**वस्ताम्बु** । क्ली । छागीमूत्रे ।
**वस्तिः** । पुं । वस्तिश्चर्म्मपुटकः तत्कृतत्वादास्था
पनानुवासने उच्यते । नाभेरधोभागस्थमूत्राशये,
मूत्राशयपुटके । रा.नि.व.१८ । मूत्राशश्च । सु.सू.
९अ. । वस्तिकर्म्मणि वस्तिद्वारेण दानाद्वस्तिरिति
संज्ञा । स द्विविधः—अनुवासनो निरूहश्च । तयोः
स्नेहद्रव्यैर्वस्तिरनुवासनं, मात्रावस्तिरेव नामभेदः ।
See अनुवासनम् । कषायक्षीरतैलैर्निरूहः,
निरूह एवास्थापनमुच्यते । दोषाणां स्वस्थान-
स्थापनादास्थापनसंज्ञा । निरूहवस्तिः कारणान्तरे-
र्बहुप्रकारः । वस्तिर्हि नानाविधद्रव्यसंयोगाद्दोषाणां
संशोधन-संशमन-संग्रहणानि करोति । यथा—
क्षीणशुक्रं वाजीकरोति कृशं बृंहयति स्थूलं
कर्षति चक्षुः प्रीणयति वलीपलितमुपहन्ति वयः
स्थापयति शरीरोपचयं वर्णबलमारोग्यम् आयुषः
परिवृद्धिञ्च करोति वस्तिः सम्यगुपासितः । तथा
ज्वरातीसारवातव्याधिमात्रशर्करार्बुदादिविविधरोगेषु
प्रयुज्यते । तत्र सांवत्सरिकाष्टद्विरष्टवर्षाणां षड्-
द्वादशाङ्गुलप्रमाणानि कनिष्ठिकानामिकामध्यमा-
ङ्गुलिपरिणाहानि अग्रेऽर्द्धाङ्गुलार्द्धतृतीयाङ्गुलच्छिद्र-
विष्टकर्णिकानि कङ्कश्येनवर्हिणपक्षनाडीतुल्यप्रवेशानि
मुद्ग-माष-कलाय-मात्रस्रोतांसि विदध्यान्नेत्राणि
इत्यादि । सु.चि.३५अ. । वस्तिदोषाः यथा—बहुलता
अल्पता सच्छिद्रता प्रक्षीर्णता दुर्बद्धतेति पञ्च ।
पुनः स वस्तिः त्रिविधः—कर्म्मवस्तिकालवस्तिप्रयोग-
वस्तिभेदेन । तत्र कर्म्मवस्तिः ३०, कालवस्तिः १५,
प्रयोगवस्तिश्च ८ । एषां विशेषाः पर्य्याये मृग्याः ।
च.सिद्धि.१अ. । वस्त्यावगाहकालमात्रा यथा—
"दक्षजानुकुरावर्त्तं कुर्य्याच्छोटिकया युतम् ।
निमेषोन्मेषकालो वा एषा मात्रा मता बुधैः ।
वस्त्यावगाहनाभ्यङ्गकार्य्ये योग्यतमा मता ॥"
अथावगाहे यथा—"रोमान्तेष्वनुकूपेषु स्थित्वा
मात्राशतत्रयम् । ततः प्रविशति स्नेहश्चतुर्भिर्गच्छति
त्वचं । पञ्चभिश्च भजेद्रक्तं षड्भिर्मांसमप्यपद्यते ।
मेदःस्थाने सप्तशतैरष्टभिश्चास्थिषु व्रजेत् । नव-
भिर्याति मज्जानं ततो मात्रां न कारयेत् । ततस्तु
हरते रोगान् वातपित्तकफोद्भवान् ॥"
**वस्तिकर्म्म (न्)** । क्ली । वस्तिदानकार्य्ये ।
**वस्तिकर्म्माढ्यः** । पुं । अरिष्टकवृक्षे । ভূরিঠা ।
"अरिष्टो वस्तिकर्म्माढ्यो वेणीरः फेनिलः सुखः ॥"
श.च. ।

**वस्तिकुण्डलिका** । स्त्री । मूत्राघातरोगभेदे ।
तन्निदानादि——"द्रुताध्व-लङ्घनायासै-रभिघातात्
प्रपीड़नात् । स्वस्थानाद्वस्तिरुद्वृत्तः स्थूलस्तिष्ठति
गर्भवत् । शूलस्पन्दनदाहार्त्तो विन्दुं विन्दुं स्रवत्यपि ।
पीड़ितस्तु सृजेद्धारां संस्तम्भोद्वेष्टनार्त्तिमान् ।
वस्तिकुण्डलमाहुस्तं घोरं शस्त्रविषोपमम् । पवन-
प्रबलं प्रायो दुर्निवारमबुद्धिभिः ॥" मा.नि. ।
**वस्तिमलम्** । क्ली । मूत्रे । हे.च. ।
**वस्तिवातः** । पुं । स्वनामख्यातवातव्याधौ ।
लक्षणं—"मारुतेऽनुगुणे वस्तौ मूत्रं सम्यक् प्रवर्त्तते ।
विकारा विविधाश्चापि प्रतिलोमे भवन्ति हि ॥"
मा.नि. । सा. चिकित्सा—"बलामूलत्वचश्चूर्णं
ससितं कर्षसम्मितं । पिबेत् कुड़वदुग्धेन मुहुमूत्रव-
शान्तये ॥"
**वस्तिशीर्षम्** । क्ली । देहप्रत्यङ्गविशेषे । বস্তির
উপরিভাগ । च.शा.७अ. ।
**वस्तिशूलम्** । क्ली । वस्तिवेदनायाम् । निदा. ।
**वस्तिशोधनम्** । क्ली । मदनफले । वस्तिशोधके
द्रव्यमात्रे । वै.निघ. । पुं । मदनवृक्षे । रा.नि.व.८ ।



**वस्तु** । क्ली । द्रव्ये । त्रिका. ।
**वस्तुकम्** । क्ली । वास्तुकशाके । श.र. ।
**वस्तूकी** । स्त्री । श्वेतचिल्लीशाके । रा.नि.व.७ ।
**वस्त्याशयः** । पुं । मूत्राशये ।
**वस्त्रम्** । क्ली । तेजपत्रे । रा.नि.व.६ । वाससि ।
কাপড় । अम. ।
**वस्त्रधारणम्** । क्ली । वस्त्रपरिधाने । निर्म्मल-
वस्त्रधारण-गुणाः—"काम्यं यशस्यमायुष्यमलक्ष्मीघ्न
प्रहर्षणम् । श्रीमत्पारिषदं शस्तं निर्म्मलाम्बर-
धारणम् ॥" राज.२प. ।
**वस्त्रपञ्जरः (लः)** । पुं । कोलकन्दे । रा.नि.
व.७ ।
**वस्त्रभूषणः** । पुं । पटवासे । रत्नाञ्जने । वे.
निघ. । साकुरुण्डवृक्षे । रा.नि.व.६ । स्त्री (णा) ।
मञ्जिष्ठायां । रा.नि.व.६ ।
**वस्त्ररङ्गा** । स्त्री । वोवर्त्तिकायां । रा.नि.व.२ ।
**वस्त्ररञ्जकः (नः)** । पुं । कुसुम्भवृक्षे । रा.
नि.व.१० ।
**वस्त्ररञ्जिनी** । स्त्री । मञ्जिष्ठायाम् । वै.निघ. ।
**वस्त्ररागधृत्** । पुं । नीलकाशीषे । नील
হীরাকস্ । वै.निघ. ।
**वस्त्रोद्धरणम्** । क्ली । सुश्रुते वस्त्रबन्धनेन जलस्याशु
शीतलकरणार्थं घटस्याधोमुखरक्षणरूपोपाये ।
सु.सू.४५अ. ।
**वस्नम्** । क्ली । वसायाम् । চর্বি । रा.नि.व.१८ ।
चर्म्मणि । श.चो.रा. । वसने । विश्व. ।
**वस्न(स्न)सा** । स्त्री । वसायाम् । रा.नि.व.१८ ।
शरीरान्तःशिरादौ । स्नायौ । त्रिका. । अम. ।
**वहः** । पुं । घोटके । के. । वृषस्कन्धे । अम. ।
**वहलगन्धम्** । क्ली । सम्बरचन्दने । रा.नि.व.१२ ।
**वहलचक्षुः** । पुं । मेषशृङ्ग्याम् । মেড়াশিঙে ।
प.मु. ।

**वहलत्वचः** । पुं । श्वेतलोध्रे । रा.नि.व.६ ।
**वहलपल्लवः** । पुं । शोभाञ्जनवृक्षे । সজিনা
গাছ । वा.सू.१५अ.वरुणादौ । "वहलपल्लवदर्भ-
रुजाकराः ।"
**वहलवर्त्म** । क्ली । नेत्रवर्त्मगतरोगविशेषे ।
तल्लक्षणं यथा,—"वर्त्मोपचीयते यस्य पिड़काभिः
समन्ततः । सवर्णाभिः स्थिराभिश्च विद्याद्बहल
वर्त्म तत् ॥" मा.नि. ।
**वहला** । स्त्री । शताह्वायां । शुल्फा । रा.नि.
व.४ । स्थूलैलायां । ছোট এলাচ । भा. सितोप-
लादिलेहे ।
**वहा** । स्त्री । गन्धरास्नायां । प.मु. ।
**वहिःकुटीचरः** । पुं । कर्कटे । त्रिका. ।
**वहिःपरिमार्ज्जनः** । त्रि । वहिः स्पर्शमा-
त्रित्य तैलाभ्यङ्गादिभिः यो देहं मार्जयति । च.सू.
११अ. ।
**वहिरङ्गः** । पुं । शरीरावयवे ।
**वहिरिन्द्रियम्** । क्ली । चक्षुःकर्णादिवाह्ये-
न्द्रियेषु—चक्षुःकर्णनासाजिह्वात्वक्षु, वाक्पाणिपायु-
पादोपस्थेषु च ।
**वहिर्वेगज्वरः** । पुं । ज्वरभेदे । लक्षणं—
"सन्तापोऽभ्यधिको वाह्यस्तृष्णादीनाञ्च मार्दवम् ।
वहिर्वेगस्य लिङ्गानि सुखसाध्यत्वमेव च ॥" च.
चि.३अ. ।

**वहिस्सरः** । पुं । कर्कटे । हे.च. ।
**वहुप्रजः** । पुं । शूकरकन्दे । पिण्डसार । प.मु. ।
**वहुरसः** । पुं । इक्षौ । आक् ।
**वहुलवहुरसः** । पुं । इक्षौ । वा.सू.१५अ.
श्यामादिवर्गे । "वहुलवहुरसस्तीक्ष्णश्चात्फलानि ।"
**वहेडुकः** । पुं । विभीतकवृक्षे । रा.नि.व.११ ।
**वह्निः** । पुं । चित्रकवृक्षे । रा.नि.व.६ । र.चि.
३अ. । "वह्निरेकः शम्भुरेकः ।" भल्लातकवृक्षे ।
निम्बुकवृक्षे । रा.नि.व.११ । शुक्लदर्भे । रा.नि.व.८ ।
अग्नौ ।
**वह्निकरी** । स्त्री । धातकीवृक्षे । धाइफुल ।
श.र. ।

**वह्निकाष्ठम्** । क्ली । दाहागरुणि । रा.नि.व.
**वह्निगन्धः** । पुं । राले । धुनो, রজন । श.र. ।
**वह्निगर्भः** । पुं । वंशे । श.र. ।
**वह्निगर्भा** । स्त्री । शमीवृक्षे । श.च. ।
**वह्निचक्रा** । स्त्री । कलिकारीवृक्षे । ঈশ-
লাঙ্গলা ।

**वह्निजिह्वा** । स्त्री । लाङ्गलिकायाम् । विष-
लाङ्गलिया । र.मा. । भा. ।

**वह्निज्वाला ।** स्त्री । धातकीवृक्षे । रा.नि.व. ६ । लाङ्गलिकायाम । विषलाङ्गुलिया । वै निघ. ।

**वह्निदग्धम् ।** क्ली । अग्निदग्धरोगे । निदा. ।

**वह्निदमनी ।** स्त्री । अग्निदमनीक्षुपे । শোলা । रा नि.व.४ ।

**वह्निदीपकः ।** पुं । कुसुम्भवृक्षे । श.र. ।

**वह्निदीपिका ।** पुं । अजमोदायाम् । वनयमानी । रा.नि.व.६ ।

**वह्निनामा (न्) ।** पुं । चित्रकवृक्षे । र.मा. । भल्लातकवृक्षे । प.मु. ।

**वह्निनिर्मथना ।** स्त्री । अग्निमन्थवृक्षे । আগন্ত । वै.निघ. ।

**वह्निनी ।** स्त्री । जटामांस्यां । र.मा. ।

**वह्निपुष्पा (ष्पी) ।** स्त्री । धातकीवृक्षे । रा. नि.व.६ ।

**वह्निभूतिकम् ।** क्ली । रौप्ये । वै.निघ. ।

**वह्निभाग्यम् ।** क्ली । घृते । श.च. ।

**वह्निमथनः (ना) ।** पुं, स्त्री । अग्निमन्थवृक्षे । গণিরি । वै.निघ. ।

**वह्निमन्थः ।** पुं । गणिकारिकायां । গণিরি । प.मु. ।

**वह्निमारकम् ।** क्ली । जले । श.च. ।

**वह्निमुखी ।** स्त्री । लाङ्गलिकायाम् । विषलाङ्गुलियां । वै.निघ. ।

**वह्निरुचिः ।** स्त्री । महाज्योतिष्मतीलतायाम् । বড় লতাফট্কী । वै.निघ. ।

**वह्निलोह(क)म् ।** क्ली । कांस्ये । কাঁসা । रा.नि.व.१३ ।

**वह्निवल्ला ।** स्त्री । लाङ्गलिकायाम् । विषलाङ्गुलियां । भा. ।

**वह्निवर्णम् ।** क्ली । रक्तोत्पले । श.च. ।

**वह्निवल्लभः ।** पुं । सर्ज्जरसे, धूनके । ধূনো । त्रिका. ।

**वह्निबीजः ।** पुं । निम्बुकवृक्षे । লেবুর গাছ । रा.नि.व.११ । क्ली । स्वर्णे । हे.च. । निम्बूफले । रा.नि.व.११ ।

**वह्निशिखम् ।** क्ली । कुसुम्भपुष्पे । अम. । कुङ्कुमे । रा.नि.व.१२ । स्त्री (खा) । कलिकारीवृक्षे । विषलाङ्गुलियां । धातक्याम् । रा.नि व.४ ६ । फलिन्यां । प्रियङ्गु । धरणिः । जलपिप्पल्याम् । गजपिप्पल्याम् । वै.निघ. ।

**वह्निशिखरः ।** पुं । लोचमस्तके । वनयमानी । कुङ्कुमे । रुद्रजटायां । श.र. ।

**वह्निसंज्ञकः ।** पुं । चित्रकवृक्षे । চিতা গাছ । अम. । [ वायौ ।

**वह्निसखः ।** पुं । जीरकवृक्षे । रा.नि.व.६ ।

**वह्निसम्भूतम् ।** क्ली । स्वर्णे । वै.निघ. ।

**वक्षः (स्) ।** क्ली । वक्षःस्थले । तच्च हृदयोपरिकण्ठाधोभागे । বুক । रा.नि.व.१८ । क्रोड़े । কোল । अम. ।

**वक्षणम् ।** क्ली । वक्षसि । श.च. ।

**वक्षोजम् ।** क्ली । स्तने । रा नि.व.१८ ।

**वक्षोजोपमः ।** पुं । चक्रवाके । চকা । वै.निघ. ।

**वक्षोरुहः ।** पुं । स्तने । त्रिका. ।

**वांशी ।** स्त्री । वंशलोचनायां । বংশলোচন । प.मु. । भा.उ.वाजी । "वांशी वरी वानरी ।" च.द.यक्ष्म.चि.सर्पिर्गुड़े ।

**वाः (र्) ।** क्ली । जले । अम. ।

**वाःकिटिः ।** पुं । शिशुमारे । শুশুক । व्याक. ।

**वाकुचिका ।** स्त्री । वाकुच्याम् । শাকুচ, সোমরাজ । वै.निघ.२भ.अभिन्यासज्व.चि. ।

**वाकुची ।** स्त्री । (Psoratea corylifolia.) The plant serratula anthelmintika. सोमराजीक्षुपे । শাকুচ, সোমরাজ । हिं वाव्ची, वुकची । मं वाउची । कं वाउचिगे । बम्. वांवची । ता. वोगिविट्टुलु । गुणाः—कटुतिक्तोष्णा क्रिमिकुष्ठकफघ्नी त्वग्दोषविषकण्डूतिखर्ज्जूघ्नी च । रा.नि.व.४ । वातकफकुष्ठत्वग्दोषघ्नी । राज. । मधुरा तिक्ता कटुपाका रसायनी विष्टम्भघ्नी हिमा रुच्या सरा श्लेष्मास्रपित्तनुच्च । तत्फलं पित्तलं कटु कुष्ठकफानिलघ्नं केश्यं त्वच्यं क्रिमिश्वासकासशोथपाण्डुहृच्च । भा. । तत्शाकगुणाः—तिक्तं शीतलं कटुपाकरसं कफपित्तहरञ्च । च.सू.२७अ. ।

**वाकुचीभेदः ।** पुं । सोमराजीविशेषे । तत्पर्य्यायगुणाः,—"श्विवारि-र्वाकुचीभेदः कुष्ठदोषत्रयास्रजित् । वातरक्तहरोलेपात् सिध्म-श्वित्रविनाशनः ॥" भा. ।



**वाकुलम् ।** क्ली । वकुलफले । राज. ।

**वाक्का ।** स्त्री । प्रत्युदपक्षिविशेषे । च.सू.२७अ. ।

**वाक्यदोषः ।** पुं । न्यूनताधिक्यादौ । वाक्यदोषो नाम—"यथा खलु अस्मिन्नर्थे न्यूनमधिकमनर्थकमपार्थकमविरुद्धञ्चेति ।" च.वि.८अ. ।

**वाक्यप्रशंसा ।** स्त्री । अन्यूनतादौ । वाक्यप्रशंसा नाम यथा—"यद्वाक्यम् अन्यूनमनधिकमनपार्थकमविरुद्धमधिगतपदार्थञ्च तद्वाक्यमननुयोज्यमिति प्रशस्यते ।" च.वि.८अ. ।

**वाक्यशेषः ।** पुं । "येन पदेनानुक्तेन वाक्यं समाप्यते । सु.उ.६५अ. ।

**वाक्शल्या ।** स्त्री । कुटुम्बिनीक्षुपे । वै.निघ. ।

**वागरः ।** पुं । वृके । हे.च. ।

**वागुजारलः ⎫ वागुज्जालः ⎭** पुं । नादेयमत्स्यभेदे । बम्. वागूसमत्स्य । सु.सू.४६अ. ।

**वागुजी ।** स्त्री । सोमराज्याम् । সোমরাজ । प.मु. । र.सा.सं.महामृत्युञ्जयरसे ।

**वागुणः ।** पुं । कर्म्मरङ्गवृक्षे । কামরাঙা গাছ । श.मा. । क्ली । कर्म्मरङ्गे ।

**वागु(ग्गु)लिकः ।** त्रि । राज्ञां ताम्बूलदातरि । हारा. ।

**वागुशः ।** पुं । वागुज्जालमत्स्ये । वै.निघ. ।

**वाग्गुदः ।** पुं । पक्षिविशेषे । त्रिका. । তরুকুণি পাখী ।

**वाग्गुलिः ।** पुं । ताम्बूल्याम् । हारा. ।

**वाग्दलम् ।** क्ली । ओष्ठाधरौ । त्रिका. ।

**वाग्विलासी (इन्) ।** पुं । कपोते । পায়রা । वै.निघ. ।

**वाचः (चा) ।** पुं, स्त्री । मत्स्यविशेषे । বাচা মাছ । गुणाः—"वाचः स्वादुर्गुरुः स्निग्धः श्लेष्मघ्नो वातपित्तजित् ।" राज.३प. ।

**वाचनम् (कम्) ।** क्ली । प्रहेणकाख्यपिष्टकभेदे ।

**वाचस्पतिवल्लभः ।** पुं । पुष्परागमणौ । পোখ্রাজ । भा. ।

**वाजम् ।** क्ली । घृते । अन्ने । जले । यज्ञे । मेघ । पुं । पक्षतौ । मे. । [ शृगा. ।

**वाजशाकः ।** पुं । पट्टशाके । পাটশাক ।

**वाजिः ।** पुं । अश्वे । वै.निघ. ।

**वाजिकरी ।** स्त्री । अश्वगन्धायाम् । वै.निघ. ।

**वाजिकर्णः ।** पुं । अश्वकर्णशाले । পীত শাল । भैष.सु.गो.चि. ।

**वाजिखुरा ।** स्त्री । कृष्णापराजितायां । কাল অপরাজিতা । वै.निघ. ।

**वाजिगन्धा ।** स्त्री । अश्वगन्धायां । रा.नि.व. ४ । सु.चि ३७अ. ।

**वाजिदन्तः (कः) ⎫ वाजिदन्ता(न्ती) ⎭** पुं, स्त्री । वासकवृक्षे । प.मु. । रा.नि.व.४ । अम. । [ त्रिका ।

**वाजिनम् ।** क्ली । आमिक्षायां । ছানার জল ।

**वाजिनामा ।** स्त्री । अश्वगन्धायाम् । वै.निघ. ।

**वाजिनी ।** स्त्री । अश्वगन्धायाम् । रा.नि.व.४ । घोटक्याम् । भा. ।

**वाजिपुत्री ।** स्त्री । सल्लकीवृक्षे । वै.निघ. ।

**वाजिपृष्ठः ।** पुं । अम्लानवृक्षे । রক্ত ঝাঁটী । श.च. । [ कुष्माण्डे । वै.निघ. ।

**वाजिप्रियः (या) ।** पुं, स्त्री । यवे । भूमि-

**वाजिभक्षः (क्ष्यः) ।** पुं । चणके । ছোলা । रा.नि.व.१६ । मुद्गे । वै.निघ. ।

**वाजिभोजनः ।** पुं । मुद्गवृक्षे । মুগকলায়ের গাছ । रा.नि.व.१६ ।

**वाजिमन्थः ।** पुं । चणकवृक्षे । मुद्गवृक्षे । वै.निघ. ।

**वाजिमान् (त्) ।** पुं । पटोले ।

**वाजिविष्ठा ।** स्त्री । अश्वविष्ठायाम् । तद्रसनस्य हिक्काहरम् रक्तरोधकञ्च ।

**वाजी (इन्) ।** पुं । वासायाम् । বাসক । श.र. । पक्षिणि । अश्वे । अम. । त्रि । शुक्रयुक्ते । भैष. ।

**वाजीकर(ण)म् ।** क्ली । वीर्य्यवर्द्धनद्रव्ये । तल्लक्षणं—यद्द्रव्य पुरुषं वाजिवत् सुरतक्षमं करोति तद्वाजीकरणमुच्यते । यद्द्रव्य पुरुष [illegible] वाजीकरणमुच्यते ... ।" भा उ.

१अ. । "येनमानी यदौचित्याद्वाजीवात्यर्थवेगवान्। नारीस्तर्पयते तेन वाजीकरणमुच्यते ॥" सु.चि. २६अ. । "तत्राव्याजिनान्वेष्टव्यं पुरुषेण धर्म्मार्थ-प्रीतियशोऽधीनत्वात् ।" अट्ठक्तं—"वाजीकरण मन्विच्छेत् पुरुषो नित्यमात्मवान्। तदायत्तौ हि धर्म्मार्थौ रतिश्च यश एवच। पुत्रस्यायतनं ह्येतद्, गुणाश्चैते सुताश्रयाः। वाजीकरणमग्र्यञ्च जैव स्त्री या प्रहर्षिणी ॥" च.चि.२अ. । तन्नामकाष्टमतन्त्रे। तत्राल्पदुष्टविशुष्कचौणरेतसामाप्यायनप्रसादोपचय-जननिमित्तं प्रहर्षजननार्थञ्च । सु.सू.१अ. । अपिच—"चौणानाञ्चाल्पवीर्य्याणां वृंहणं बलवर्द्धनं। तर्पणं समधातूनां वाजीकरणमुच्यते ॥" वैद्य. सं.२अ. ।

**वाजीकरी** । स्त्री । अश्वगन्धायाम् । गद.व.१ ।

**वाटिका** । स्त्री । वाट्यालके । বেড়েলা । श.र. । हिङ्गुपत्राम् । श.च. ।

**वाटी** (इन्) । पुं । इत्कटवृचे । ইৎকড় । प.मु. । पुं, स्त्री । वाट्यालके । বেড়েলা । रा.नि. व.४ । श.र. । जलचरपचिविशेषे । च.सू.२७अ. । हिङ्गुपत्राम् । श.च. । [ र.मा. ।

**वाटीदीर्घः** । पुं । इत्कटक्षुपे । ইৎকড় ।

**वाट्यम् (ट्या)** । क्ली, स्त्री । वाट्यालके । বেড়েলা । र.मा. । वै.निघ.२भ.चन्दनादितैले ।

**वाट्यकम्** । क्ली । भृष्टयवे । श.च. ।

**वाट्यपुष्पम्** । क्ली । चन्दने । कुङ्कुमे । वै.निघ. ।

**वाट्यपुष्पिका (ष्पी)** । स्त्री । वाट्यालके । বেড়েলা । र.मा. । बलायाम् । च.सू.४अ. । पीतबलायां । পীত বেড়েলা । च.शा.८अ. ।

**वाट्यमण्डः** । पुं । निस्तुषदरदलितयवे । चतुर्गुणवारिसाधिते यवमण्डे । च.द.ग्रहणीचि. आयामकाञ्जिके । शूल.चि. । गुणाः—"वाट्यमण्डो विबन्धघ्नः शूलानाहविनाशनः । रोचनो दीपनो हृद्यः पित्तश्लेष्मानिलापहः ॥" राज.३प. ।

**वाट्यायनी** । स्त्री । श्वेतवाट्यालके । শ্বেত বেড়েলা । च.सू.४अ. । [ श.र. ।

**वाट्यालः** । पुं । वाट्यालके । বেড়েলা ।

**वाट्यालकः** । पुं । पीतपुष्पबलायाम् । পীত বেড়েলা । भा. । बलायाम् । বেড়েলা । र.मा. । च.द.[illegible]चि. ।

**वाट्याल(लि)का** । स्त्री । लघुवाट्यालके । ছোট বেড়েলা । महाबलायाम् । বড় বেড়েলা । वै.निघ. ।

**वाट्याला (ली)** । स्त्री । लघुवाट्यालके । श.र. । महाबलायाम् । वै.निघ. ।

**वाट्याह्वम्** । क्ली । पुष्करमूले । वै.निघ. ।

**वाठः** । पुं । मदनफलवृचे ।

**[वा]ड़वाग्निरसः** । पुं । स्थौल्याधिकारे रसः । पाठः—"शुद्धसूत समङ्गन्धं ताम्र तालं समं समं । अकचीरैर्दिनं मर्द्यं चौद्रं लेह्यं द्विगुञ्जकम् ।" रस.र. ।

**वाणः** । पुं । भद्रमुञ्जे । अम. । शरतृणे । শর গাছ । रा.नि.व.८ । गोस्तने । मे । पौतझिण्ट्यां । प.मु. । शरपुङ्खायाम् । বননীল । भै.ष.कुष्ठ.चि. । षड्‌बिन्दुतैले ।

**वाणपुङ्खा** । स्त्री । शरपुङ्खायाम् । বননীল । रा.नि.व.४ ।

**वाणा (णी)** । स्त्री । नीलझिण्ट्यां । प.मु. । शरपुङ्खायां । বননীল । च.द.व्रण.शो.चि. ।

**वाणाह्वम्** । क्ली । नीलकमले । उत्पले । रा. नि.व.१० । स्त्री । (ह्वा) चुद्रशणपुष्पिकायाम् । ক্ষুদ্র অতসী । रा.नि.व.४ । शुक्लतृणे । वै.निघ. ।

**वातः** । पुं । पञ्चभूतान्तर्गतचतुर्थभूते । বাতাস । रा.नि.व.२१ । पूर्व्वादिदिग्भववायौ । प्राचीवातादि-प्रकृतिगुणाः—"शीतोऽतिमाधुर्य्यगुणः प्रयुक्तो वात-प्रकोपो बलकृद्विशेषात् । वाताधिकानां व्रणशोषि-णाञ्च प्राचीप्रवृत्तः पवनो न शस्तः ॥ किञ्चित् सतिक्तो मधुरान्वितः स्यात् कफः समीरोद्भवरोग-कारी । सुशीतलः शोफवतां व्रणानां शस्तो न चाग्नेयसमीरणश्च ॥ तिक्तः कषायो मधुरोऽतिमन्दः सुगन्धसंशीतगुणैः प्रकृष्टः । वदन्ति संज्ञा मलया-निलेति प्रकृष्टरामाजनचित्तहारी ॥ मनोभवस्य प्रकरो मरुत्स्यात् कफोद्भवः सम्भवति प्रचारः । न चातिशीतो न तथोष्णको वा शुभश्च याम्यप्रभवः समीरः ॥ रुचौणवातप्रशमः समीरः कटूष्णपित्ता-स्त्रजि दोषकारी । प्रशोषणो देहबलस्य वायुः कफान्वितो नैरृतिकः समीरः ॥ अथातिरूक्षो मरुतः प्रशस्तः करोत्यवाच्यास्तु दिशः प्रवृत्तः । वायुस्तथोदीरति रक्तपित्त शस्तो व्रणानां कफशोषिणां वा ॥" "वायव्यजातो मरुतः प्रशस्तः



कषायसंशुष्कगुणप्रसन्नः । करोति वातस्य वशं नराणां शस्तो न निन्द्यो व्रणशोषिणाञ्च ॥ स्वादुः कषायश्च कफप्रकोपो वायुः कुवेरस्य दिशः प्रवृत्तः । करोति मेघागमनं जलस्य शीतो न चोष्णो न च निन्द्य एषः ॥ शीतोऽतिगौल्यः कफवातकोपम् करोति चैशानदिशः प्रवृत्तः । शस्तश्च नासौ व्रणशोफकासचये तथा श्वासविकारिणाञ्च ॥" अथ वस्त्रादिवातगुणाः—"वस्त्रं नानाविधं चर्म्मवैणवं तालवृन्तकम् । उशीरं शिखिपिच्छन्तु प्रत्येकेन गुणोत्तमाः ॥ वस्त्रप्रवृत्ता मरुतो न शस्ता व्रणशोषिणां । रक्तवासस उत्पन्नं विशेषेण तु वर्जयेत् ॥ करोति कफरक्तस्य कोपनं बहुरोगकृत् । श्रमग्लानिपिपासासु तन्द्रानिद्राकरो भृशम् ॥ वैणवं व्यजनं तन्द्रानिद्राकरणमेव च । रूक्षश्चातिकषायश्च स च वातप्रकोपनः ॥ कांस्यपात्रमरुद्रुक्षः सोष्णो वातस्य शान्तिकृत् । दाहश्रमघ्नः स्वेदघ्नो निद्रासौख्यकरो नृणाम् ॥ तालपत्रस्य रम्भाया दलस्य व्यजनं हिमम् । मधुरातिश्रमघ्नं स्यादार्द्रत्वात् कफकोपनं । निद्राकरं प्रीतिकरं शोकरोग-विकारहं । दाहपित्तश्रमग्लानिनाशनं भ्रमशान्ति-कृत् ॥ उशीरमूलरचितं व्यजनं शिखिपिच्छकैः । व्यजनेन सुगन्धः स्यात् मन्दशीतगुणात्मकः । ग्लानिमूर्च्छाभ्रमशोषविसर्पविजर्दपहा । इति पञ्चविधो वायुरुपायेन कृतो नृणाम् ॥" इति त्रयोदशवात-गुणाः—"हेमन्ते पूर्व्वकृद्वायुराग्नेयः शिशिरे मरुत् । वसन्ते दक्षिणो वायुर्ग्रीष्मे नैरृतकस्तथा ॥ वर्षासु पश्चिमो वायुर्वायव्यः शरदि स्मृतः । हेमन्ते शिशिरे चैव कथितश्चोत्तरोऽनिलः ॥ वर्षाऽह्नः परतो वदन्ति निपुणास्तस्मिन्निशीथे शरत् । प्रोक्तः शैशिरिकस्ततो हिमऋतुः सूर्य्योदयादग्रतः ॥ मध्याह्ने च तथा वदन्ति निपुणा ग्रीष्मो ऋतुः स्यात्ततो वासन्तः कथितो ऋतुस्तु मुनिभिः पूर्व्वापराह्णे सदा ॥ कार्त्तिके मार्गशीर्षे वा मासे चाषाढ़संज्ञके । ऋतुसन्धौ च हेमन्ते सविषः स्यात्तु मारुतः ॥" अत्रि.५अ. । वायुरोगे, वातव्याधौ । ते च शिरग्राहादयोऽशीतिः । प्रस्यन्दनोद्वहनपूरण-विरेकधारणलक्षणशरीरस्थसञ्चालनकधातौ ॥ स "दोषधातुमलादीनां नेता शीघ्रः समीरणः । रजोगुणमयः सूक्ष्मो रूक्षः शीतो लघुश्चलः ॥" भा. । "देहे विचरतस्तस्य लक्षणानि निबोध मे । दोष धात्वग्निसमतां सम्प्राप्तिं विषयेषु च । क्रियाणामानु लोम्यञ्च करोत्यकुपितोऽनिलः । यथाग्निः पञ्चधा भिन्नो नामस्थानात्मकर्म्मभिः । भिन्नोऽनिलस्तथा ह्येको नामस्थानक्रियामयैः । प्राणोदानौ समानश्च व्यानश्चापान एव च । स्थानस्था मारुताः पञ्च यापयन्ति शरीरिणम् ॥" सु.नि.१अ. । स मतान्तरे दशविधः । यन्मते नागकूर्म्मकृकलदेवदत्तधनञ्जया इति अधिकाः पञ्च प्राणादयश्च पञ्च इति दश वायवः । नागादयः प्राणादीनां संज्ञान्तरमिति सुखबोधः । तेषु प्राणोवायुः हृदयान्तरस्थ ऊर्द्ध्व गमनशीलः, रूक्षः, अन्नप्रवेशकश्च । अपानो गुदादिमध्यस्थः, अधोगमनशीलः, मलमूत्रोत्सारकः, लघुश्च । समानो नाभिमण्डलस्थः, रसधातु-सञ्चालकः, अन्नस्य पाचकः, शीतलश्च । उदानः कण्ठस्थानः, ऊर्द्धमुत्क्रमणशीलः, वाक्प्रवर्त्तकः, खरश्च । व्यानः सर्व्वशरीरव्यापी, निमेषादि-प्रवर्त्तकः, सूक्ष्मश्च । नाग उद्गारप्रवर्त्तकः । कूर्म्मः नेत्रोन्मीलनकः । कृकलः क्षुधाजनकः । देवदत्तो जृम्भाप्रवर्त्तकः । धनञ्जयः सर्व्वशरीर-व्यापी । भा. । शिष्टं वातप्रकोपादि प्रकोपशब्दे मृग्यम् ।

**वातकः** । पुं । अश्मनपर्णीवृचे । বিজসার । गोकर्णीम् । अपराजिता । अम. ।

**वातकण्टकः** । पुं । वातव्याधिविशेषे । लक्षणं —"रुक् पादे विषमे न्यस्ते श्रमाद्वा जायते यदा । वातेन गुल्फमाश्रित्य तमाहुर्वातकण्टकम् ॥" मा.नि. । "रक्तावसेचनं कुर्य्यादभीक्ष्णं वातकण्टके । पिबेदैरण्डतैलं वा दहेत् सूचीभिरेव च ॥" सु.नि.१अ. ।

**वातकफज्वरः** । पुं । वायुश्लेष्मजन्यज्वरे । लक्षणं—"स्तैमित्यं पर्व्वणां भेदो निद्रागौरवमेव च । शिरोग्रहः प्रतिश्यायः कासः स्वेदाप्रवर्त्तनं । सन्तापो मध्यवेगश्च वातश्लेष्मज्वराकृतिः ॥" मा.नि. ।

**वातकर्म्म** (न्) । क्ली । अपानवायुनिःसरणे । पर्दने । बराहपु. ।

**वातकासः** । पुं । वायुजन्यकासरोगे ।

**वातकी** । स्त्री । शेफालिकावृचे । रा.नि.व.४ । पुं (न्) । वातरोगिणि । अम. ।

**वातकुण्डलिका** । स्त्री । मूत्राघातरोगे । निदानादि—"रौच्याद्वेगविघाताद्वा वायुर्वस्तौ सवेदनः । मूत्रमाविश्य चरति विगुणः कुण्डली-कृतः । मूत्रमल्पाल्पमथवा सरुजं सम्प्रवर्त्तते ।

